# प्रकाशकस्य निवेदनम्



अस्य मीमांसाकोशस्य प्रणेतारो गुरुचरणाः केवलानन्दस्वामिनो मुद्रणं प्रकाशनं चापरिसमाप्यैव इममशाश्वतं लोकं विहाय ब्रह्मभावं गताः। परन्तु कोशरचना च स्वहस्तेनैव तैः परिसमाप्तिं नीता करुणापरवशैः। मुद्रणं प्रकाशनं च निर्वर्तनीयमस्माभिस्तदनुगृहीतैरेव। चतुर्थोऽयं भागस्तेषां समक्षमेव प्रारब्धमुद्रणस्तेषां प्रथमवार्षिक्यां पुण्यतिथावद्य प्रकाश्यते। ये के चावशिष्टा भागाः सन्ति तान् प्रतिवर्षं क्रमेण मुद्रयित्वा प्रकाशयितुमिच्छामः। एतेषां संपादनं मुद्रणं प्रकाशनं च प्रादेशिकराज्यानां भारतीयसंघराज्यस्य च तथा जनानां च द्रव्यसाहाय्येनैव संपन्नं भवेत्, नान्यथा। गुरुचरणैस्तु अन्तिमोच्छ्वासपर्यन्तं जनकारुण्यवशादिदं कार्यं स्वतपःप्रभावेण संपादितमस्ति। तदेतदृणमस्माभिरपाकर्तव्यं भवति विद्यावृद्धिकामैः। प्रादेशिकराज्यानि भारतीयसंघराज्यं च विद्याप्रणयिनो जनाश्च ऋणस्यापाकरणे द्रव्यादिसाहाय्यं करिष्यन्तीत्याशास्महे।

अस्मत्संपादनकार्यधुरीणैः श्रीरङ्गनाथशास्त्रिभिर्गुरुचरणपरिचर्यापरैरेतत्संपादनं निर्वर्तितमिति सप्रमोदमत्र निर्दिशामः।

अधिकरणादिसंख्या— चतुर्थेऽस्मिन् भागे भाष्याधिकरणानि १४३, संकर्षाधिकरणानि ३७, केवलानन्दीवृत्त्यधिकरणानि १७२, तौतातिताधिकरणानि १६, न्यायाः २७९, लघुसिद्धान्ताश्च ३८४० भवन्ति।

अथ प्रथमभागमारभ्य भाष्याधिकरणानि ५९९, संकर्षाधिकरणानि १८४, केवलानन्दीवृत्त्यधिकरणानि ४५६, तौतातिताधिकरणानि ३६, न्यायाः ९०५, लघुसिद्धान्ताश्च १३१६३ इति।

फाल्गुनः शुक्लः ७
शके १८७७

लक्ष्मणशास्त्री जोशी, तर्कतीर्थः
अध्यक्षः प्राज्ञपाठशालामण्डलस्य
मुख्यसंपादकश्च धर्मकोशस्य

# अनुक्रमणिका

# ग्रन्थादिसंक्षेपाक्षराणि तद्विवरणं च ।

अद्वैत— अद्वैतसिद्धिः श्रीमधुसूदनसरस्वतीप्रणीता मोहमय्यां निर्णयसागरे १९१७ सने मुद्रिता ।

आचारमयूखः— श्री. ज. र. घारपुरेसंपादितः, मुंबई ।

आभरणम्— शांकरशारीरकभाष्यस्य टीका । अध्याय-पाद-सूत्राङ्काः । क्वचित् तृतीयोऽङ्कः अधिकरणस्य ।

उद्योतः— व्याकरणमहाभाष्यस्य टीका ।

उपदेशसाहस्री— श्रीशंकराचार्यप्रणीता । रामतीर्थः टीकाकारः । प्रकरणश्लोकाङ्कौ । गद्यं पद्यं च ।

ऋजु— ऋजुविमला नाम शाबरभाष्यव्याख्यानरूपायाः प्राभाकरीयबृहत्याः टीका श्रीशालिकनाथप्रणीता । चौखम्बासीरीज् १९२९ सने मुद्रिता ।

ऋसं— ऋग्वेदसंहिता । मण्डलम्, सूक्तम्, ऋक् इत्यङ्कत्रयम् ।

ऐआसा— ऐतरेयारण्यकस्य सायणभाष्यम् ।

ऐब्रा— ऐतरेयब्राह्मणम् । पुण्यपत्तनस्थानन्दाश्रमे १९३० सने मुद्रितम् । अध्यायः, खण्डः, सूत्रं इत्यङ्कत्रयम् ।

ऐब्रासा— ऐतरेयब्राह्मणस्य सायणभाष्यम् । अध्याय-खण्ड-सूत्राणामङ्काः । आनन्दाश्रमे १९३० सने मुद्रितम् ।

कणिका— न्यायकणिका विधिविवेकस्य टीका वाचस्पतिमिश्रप्रणीता । काशी मेडिकल्हॉल-मुद्रणालये १९०७ सने मुद्रिता ।

कल्पतरुः— भामत्याः टीका । अमलानन्दसरस्वतीप्रणीतः, १९१७ सने मोहमय्यां निर्णयसागरे मुद्रितः । अध्यायः, पादः, सूत्रं इत्यङ्कत्रयम् ।

कस्तूरि— कस्तूरिरङ्गाचार्यविरचिता जैमिनिसूत्रवृत्तिः । सन १९०८ सने मैसूरनगरे मुद्रिता । सा च भाट्टदीपिकापुस्तके एव मुद्रिता ।

कासं— काठकसंहिता ।

कु., कुतूहलम्— अध्वरमीमांसाकुतूहलवृत्तिः श्रीवासुदेवदीक्षितविरचिता । श्रीरङ्ग-वाणीविलासे मुद्रिता । अध्यायः, पादः, अधिकरणम्, सूत्रं इत्यङ्कचतुष्टयम् ।

के— केवलानन्दसरस्वती । तत्कृता जैमिनिसूत्रवृत्तिश्च ।

कै. उ— कैवल्योपनिषद् ।

कैयटः— व्याकरणमहाभाष्यस्य टीका प्रदीपः नाम । काश्यां मुद्रितः ।

**कौ., कौस्तुभः**— मीमांसाकौस्तुभः खण्डदेवप्रणीतः । चौखम्बायां १९३९ सने मुद्रितः । अध्यायः, पादः, अधिकरणम्, सूत्रं इत्यङ्कचतुष्टयम्, पृष्ठाङ्कश्च ।

**कौषीतकिब्राह्मणम्**— पुण्यपत्तने आनन्दाश्रमे १९११ सने मुद्रितम् ।

**चतुर्ग्रन्थी**— महामहोपाध्यायश्रीअनन्तकृष्णशास्त्रिभिः प्रणीता न्यायामृत– अद्वैतसिद्धि– न्यायामृततरङ्गिणी– लघुचन्द्रिकाणां चतुर्णां ग्रन्थानां निष्कर्षरूपा ।

**चन्द्रिका**— अद्वैतसिद्धेः टीका ब्रह्मानन्दी नाम । निर्णयसागरे मुद्रिता ।

**जै**— जैमिनिकृतद्वादशलक्षणी । अध्यायः, पादः, अधिकरणम्, सूत्रं इत्यङ्कचतुष्टयम् ।

**जैब्रा**— जैमिनीयब्राह्मणम् ।

**टुप्**— टुप्टीका नाम वार्तिकं कुमारिलभट्टप्रणीतम्, पुण्यपत्तने आनन्दाश्रमे शाबरभाष्येण सह १९३३ सनादौ मुद्रितम् ।

**तत्त्वप्रकाशिका**— परिभाषेन्दुशेखरटीकायाः मूलेः टीका । २००२ संवति काश्यां मुद्रिता ।

**तन्त्ररत्नम्**— टुप्टीकायाः पार्थसारथिमिश्रप्रणीता टीका । लिखिता । अध्यायः, पादः, अधिकरणम्, सूत्रं चेति अङ्कचतुष्टयम् ।

**तैसं**— तैत्तिरीयसंहिता । काण्डम्, प्रपाठकः, अनुवाकः इत्यङ्कत्रयम् ।

**तौता**— तौतातितमततिलकः भवदेवप्रणीतः मीमांसासूत्रवृत्तिरूपः अधिकरणरचनात्मकः । काश्यां मुद्रितः ।

**दमी**— दत्तकमीमांसा श्रीनन्दपण्डितकृता ।

**द्रू०**— द्रष्टव्यम् ।

**धर्मसिन्धुः**— श्रीकाशीनाथोपाध्यायविरचितः ।

**निर्णयसिन्धुः**— श्रीकमलाकरभट्टविरचितः ।

**न्या. माला**— न्यायरत्नमाला पार्थसारथिमिश्रप्रणीता, चौखम्बायां मुद्रिता ।

**न्यायनि**— न्यायनिर्णयः नाम शांकरशारीरकभाष्यस्य टीका आनन्दगिरिप्रणीता । अध्याय– पाद– सूत्राङ्काः ।

**पराक्रमः**— उपक्रमपराक्रमः अप्पय्यदीक्षितप्रणीतः । लिखितः । पत्रम्, पृष्ठं इत्यङ्कद्वयम् ।

**परि**— परिभाषा । क्रमाङ्कः ।

**परिभाषेन्दुः**— परिभाषेन्दुशेखरः नागेशप्रणीतः । काश्यां २००२ संवति मुद्रितः ।

**परिमलः**— भामत्याष्टीकायाः कल्पतरोः टीका । अप्पय्यदीक्षितविरचितः । मोहमय्यां निर्णयसागरे १९१७ सने मुद्रितः ।

**पा०**— पाणिनिः व्याकरणाचार्यः प्रसिद्धः । अध्यायः, पादः, सूत्रं चेति अङ्कत्रयम् ।

**पुरुषार्थचिन्तामणिः**— श्रीविष्णुभट्टविरचितः । मोहमय्यां मुद्रितः ।

**पृ**— पृष्ठम् ।

**प्र. पञ्चिका**— प्रकरणपञ्चिका श्रीशालिकनाथप्रणीता । काश्यां विद्याविलासयन्त्रालये १९०४ सने मुद्रिता ।

**प्र. वि**— प्रभाकरविजयः नन्दीश्वरविरचितः । कलकत्तायां १९२६ सने मुद्रितः ।

**बाल**— बालमीमांसाप्रकाशः शंकरभट्टप्रणीतः । काश्यां विद्याविलासमुद्रणालये १९०२ सने मुद्रितः ।

**बिन्दुः**— न्यायबिन्दुः तत्सद्गुणारव्यवैद्यनाथप्रणीतः, मुंबई गुजरातीमुद्रणालये १९१५ सने मुद्रितः ।

**बृहती**— शाबरभाष्यस्य प्रभाकरमतानुसारिणी टीका । नव्यप्राभाकरमतमत्र । चौखम्बायां १९२९ सने मुद्रिता ।

**ब्रसू**— ब्रह्मसूत्रम् । अध्यायः, पादः, सूत्रं इत्यङ्कत्रयम् । अङ्कचतुष्टये सति तृतीयोऽङ्कः अधिकरणस्य ।

**भा**— शाबरभाष्य आनन्दाश्रमे मुद्रितम् । अध्यायः, पादः, अधिकरणम्, सूत्रं इत्यङ्कचतुष्टयम् । क्वचित् पृष्ठाङ्कः अधिकः ।

**भाट्ट**— भाट्टदीपिका नव्यमीमांसकखण्डदेवप्रणीता । मैसूर १९०८ सने मुद्रिता । अध्यायः, पादः, अधिकरणमिति अङ्कत्रयम् ।

**भाट्टालङ्कारः**— मीमांसान्यायप्रकाशस्य अनन्तदेवविरचिता टीका ।

**भामती**— श्रीवाचस्पतिमिश्रप्रणीता शांकरशारीरकभाष्यस्य टीका । मुंबई निर्णयसागरे १९१७ सने मुद्रिता ।

**भाष्यम्**— शाबरभाष्यम् ।

**भूतिः**— परिभाषेन्दुशेखरस्य टीका श्रीतात्याशास्त्रीपटवर्धनप्रणीता । काश्यां २००२ संवति मुद्रिता ।

**मणि**— भाट्टचिन्तामणिः गागाभट्टविरचितः । तर्कपादमात्रम् । चौखम्बायां १९०० सने मुद्रितः ।

**मण्डन**— मण्डनमिश्रकृता मीमांसाऽनुक्रमणी चौखम्बायां १९२९ सने मुद्रिता, मण्डनाचार्यश्च ।

**मिताक्षरा**— याज्ञवल्क्यस्मृतिटीका श्रीविज्ञानेश्वरविरचिता ।

**मीको**— मीमांसाकोषः ।

**मीन्या**— मीमांसान्यायप्रकाशः श्रीआपदेवप्रणीतः । चौखम्बायां १९२० सने मुद्रितः ।

**मुरारिः**— अङ्गत्वनिरुक्तिकर्ता । आनन्दाश्रमीये मीमांसादर्शने तृतीये भागे अन्ते १९३१ सने मुद्रिता ।

**याज्ञ**— याज्ञवल्क्यस्मृतिः । अध्यायः, श्लोकः इति द्वौ अङ्कौ ।

**रत्न**— तन्त्ररत्नम् । पार्थसारथिमिश्रप्रणीतम् । टुप्टीकावार्तिकस्य टीका । लिखिता । अध्यायः, पादः, अधिकरणम्, सूत्र इत्यङ्कचतुष्टयम् ।

**रत्नमाला**— न्यायरत्नमाला पार्थसारथिमिश्रप्रणीता । चौखम्बायां मुद्रिता ।

**रत्नाकरः**— न्यायरत्नाकरः श्लोकवार्तिकस्य टीका पार्थसारथिमिश्रप्रणीता । चौखम्बायां १८९८ सने मुद्रितः ।

**रसायनम्**— विधिरसायनं अप्पय्यदीक्षितप्रणीतम् । चौखम्बायां १९०१ सने मुद्रितम् ।

**रहस्य**— भाट्टरहस्यं श्रीखण्डदेवप्रणीतम् । शाब्दबोधविषयकम् । काञ्चीनगरे मुद्रितम् ।

**वा**— तन्त्रवार्तिकं आचार्यकुमारिलभट्टविरचितं शाबरभाष्यस्य विवरणात्मकम् । पुण्यपत्तने आनन्दाश्रमे भाष्येण सह १९२१ सने मुद्रितम् ।

**वि** — जैमिनीयन्यायमालाविस्तरः सायणमाधवाचार्यप्रणीतः । पुण्यपत्तने आनन्दाश्रमे १९१६ सने मुद्रितः । अध्यायः, पादः, अधिकरणं चेति अङ्कत्रयम् ।

**विवि**— विधिविवेकः मण्डनाचार्यप्रणीतः । काश्यां मेडिकल्हॉलमुद्रणालये १९०७ सने मुद्रितः ।

**वृ**— मीमांसासूत्रवृत्तिः सुबोधिनी नाम रामेश्वरसूरिविरचिता । काश्यां मेडिकल्हॉलमुद्रणालये १९२१ सने मुद्रिता ।

**वैजयन्ती**— महादेवकृता सत्याषाढश्रौतसूत्रवृत्तिः । पुण्यपत्तने आनन्दाश्रमे १९०७ सने मुद्रिता ।

**वैद्यनाथः**— शाबरभाष्यीयतर्कपादस्य टीकाकारः । आनन्दाश्रमे १९२९ सने मुद्रिता वैद्यनाथी नाम ।

**वैद्यनाथी**— वैद्यनाथकृता शाबरभाष्यस्य टीका ।

**वैया. भू**— वैयाकरणभूषणसारः ।

**वै. सार. कारिका**— वैयाकरणभूषणसारस्था कारिका ।

**व्यवहारमयूखः**— श्री. ज. र. घारपुरेप्रकाशितः ।

**शंकर**— शंकरभट्टकृतः मीमांसासारसंग्रहः । काश्यां विद्याविलासमुद्रणालये प्रकरणपञ्चिका-पुस्तकान्ते १९०४ सने मुद्रितः ।

**शब्दकौस्तुभः**— भट्टोजीदीक्षितप्रणीतः ।

**शांभा**— शांकरं भाष्यम् । अध्यायः, पादः, सूत्रं इत्यङ्कत्रयम् । चतुरङ्कत्वे तु तृतीयोऽङ्कः अधिकरणस्य ।

**शा**— शास्त्रदीपिका पार्थसारथिमिश्रप्रणीता । निर्णयसागरे १९१५ सने मुद्रिता । अध्यायः, पादः, अधिकरण चेति अङ्कत्रयम् ।

शेखर— परिभाषेन्दुशेखरः नागेशप्रणीतः । काश्यां २००२ संवति मुद्रितः भूत्यादिसहितः ।

श्राद्धमयूखः— श्री ज. र. घारपुरेप्रकाशितः ।

श्रीकर— ब्रह्मसूत्रभाष्यकारः शैवमतानुसारी ।

श्लोवा— श्लोकवार्तिकं आचार्यकुमारिलभट्टविरचितम् । तर्कपादः । चौखम्बायां १८९८ सने मुद्रितम् ।

संस्कारकौस्तुभ— श्रीअनन्तदेवविरचितः निर्णयसागरे मुद्रितः ।

संकर्ष— संकर्षकाण्डम् । भास्करभट्टप्रणीता भाट्टचन्द्रिका भाट्टदीपिका वा वृत्तिः । काश्यां मेडिकलहॉलमुद्रणालये १८९४ सने मुद्रिता ।

संक्षेपशारीरकम्— रामतीर्थकृतटीकासहितम् । अध्यायः, श्लोकः इति अङ्कद्वयम् ।

संग्रहः— न्यायसंग्रहः । लिखितः ।

सत्या. श्रौ— सत्याषाढीयं श्रौतसूत्रम् । आनन्दाश्रमे १९०७ सने मुद्रितम् ।

सना. ध. प्र.— सनातनधर्मप्रदीपः । श्रीकुरुन्दवाडकरमहाराजप्रेरितैः म. म. अनन्तकृष्णशास्त्रिभिः प्रणीतः ।

समयमयूखः— श्री ज. र. घारपुरेसंपादितः, मुंबई ।

साहस्री— भुवनेशलौकिकन्यायसाहस्री । मुंबई वेङ्कटेश्वरे १८३० शके मुद्रिता । साहस्र्यां यो न्यायक्रमाङ्को निवेशितः स एवास्माभिः प्रदर्श्यते ।

सि. कौ.— सिद्धान्तकौमुदी ।

सिद्धान्तदर्शनम्— निरञ्जनभाष्यसमेतम् । आनन्दाश्रमे १९०७ सने मुद्रितम् ।

सिद्धिव्याख्या— अद्वैतसिद्धेः टीका ।

सु., सुधा— न्यायसुधा तन्त्रवार्तिकस्य टीका । भट्टसोमेश्वरविरचिता राणकापरपर्याया चौखम्बायां मुद्रिता ।

सोम— मयूखमालिका नाम शास्त्रदीपिकायाः टीका अर्थवादाधिकरणमारभ्य संपूर्णा ।

# शुद्धिपत्रकम्

| पृष्ठम् | स्तम्भः | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|---|
| १८०७ | २ | शीर्षणि | पवित्रण | पवित्रेण |
| १८०८ | १ | ,, | होम दिगवि | होमे दिग्वि |
| १८२४ | २ | ५ | अपाणर्येषु | अपणार्येषु |
| १८५१ | १ | १ | ।१७॥ | ।१८॥ |
| १८६३ | ,, | १२ | श्रुतिमता | श्रुतिमूता |
| १८७२ | २ | १८ | ।१३॥ | ।१२॥ |
| १९०७ | १ | ७ | तुरादामा | तुराहानमा |
| १९२७ | ,, | २९ | तानिर्देशः | तानिर्देशः |
| ,, | २ | ३० | ममत्वात् | समत्वात् |
| १९३९ | ,, | २१ | णाम्याम् | णाम्याम् |
| २००० | १ | १७ | * दण्ड | ‡ दण्ड |
| ,, | ,, | २६ | वृवण | वहण |
| २०१३ | २ | १४ | होमी | होमी |
| २०२९ | १ | १२ | तानि | तति |
| २०६६ | २ | ११ | समिधे | सामिधे |
| २०६९ | १ | ३४ | हविकृ | हविष्कृ |
| २०७७ | ७ | १ | राभिताब्ध | राभित्यब्ध |
| २०९३ | १ | २० | ‡ अयनेषु | अयनेषु |
| २१२७ | ,, | १२ | मौञ्जन | भौजन |
| २१४६ | २ | ८ | ‿ रुषा | पुरुषा |
| ,, | ,, | १६ | व ऽन्य | चाऽन्य |
| २१५३ | १ | १ | द्रव्यं | * द्रव्यं |
| २२०५ | ,, | ९ | शामेदः | प्रानभेदः |
| २२८४ | ,, | ११ | प्रयोगचन | प्रयोगवचन |
| २२९५ | २ | ३१ | निलो | नीलो |
| २३११ | १ | २५ | प्रदुनाय | प्रद्युताय |
| २३३६ | २ | १६ | परत्व | परत्व |
| २३६० | १ | १ | कथकारं | कथंकार |
| २३७१ | ,, | ८ | चद्रोदये | चन्द्रोदये |

ॐ ज्योतिष्टोमे तृतीयसवने एव आज्येन व्याघारणम् ॥

'निष्यान् व्याघारयति' इति विधाय 'तृतीय आज्येन' इति विधिनोपसंहारात् तृतीयसवने एव व्याघारणम्। इति प्राप्ते, सामान्यविधिना अनुसवनं व्याघारणं विहितम्। तत्र तार्तीयमेव 'तृतीये' इत्यनूद्य आज्यलक्षणगुणमात्रविधिः। कालद्रव्योभयनियमे वाक्यभेदापत्तेः। मंकपं. ३।२।१७.

ॐ ज्योतिष्टोमे तृतीयसवने एव षोडशिनो ग्रहणम् ॥ अन्तरागर्भिणी।

तृतीयसवने वचनात् स्यात्। १०।५।११। ४४ ॥

भाष्यम्— अथेदानीमेतत् चिन्त्यते। अस्ति ज्योतिष्टोमः। तत्र श्रूयते 'यः षोडशी गृह्यते, इन्द्रियमेव वीर्यमात्मन् धत्ते' इति। तत्र संशयः किं सवनेसवने ग्रहीतव्यः, उत तृतीयसवने इति। किं प्राप्तम्? सवनेसवने इति। कुतः? प्रतिसवनं हि श्रूयते गृह्णाति षोडशिनमिति। शब्दलक्षणे च कर्मणि शब्दो नः प्रमाणम्। तस्मात् सवनेसवने षोडशी गृह्यते इति। एवं प्राप्ते, ब्रूमः। तृतीयसवने स्यादस्य ग्रहणमिति। कुतः? वचनात्। भवति हि वचनम्। 'तृतीयसवने आग्रयणाद् गृह्णाति षोडशिनम्' इति। वचनं नः प्रमाणम्। तस्मात्तृतीयसवने ग्रहीतव्यः इति। अथ यदुक्तम्, प्रतिसवनं षोडशिग्रहणमिति। तृतीयसवनग्रहणस्तुत्यर्थं तत्। कथम्? 'प्रातःसवने ग्राह्यः। तेजो वै प्रातःसवनम्। तेजस एव वज्रं निर्मिमीते। माध्यंदिने सवने ग्राह्यः। ओजो वै माध्यंदिनं सवनम्। ओजस एव वज्रं निर्मिमीते। तृतीयसवने ग्राह्यः। पशवो वै तृतीयसवनम्। पशुभ्य एव वज्रं निर्मिमीते। यत् प्रातःसवने गृह्णीयाद्वज्र उत्तरे सवने व्यतिरिच्येत। यन्माध्यंदिने, मध्यतो यज्ञं निहन्यात्। तृतीयसवने ग्राह्यः। तत् सर्वेषु सवनेषु गृह्णाति. न पूर्वे सवने आर्तिं नीतः' इति।

शा— किं पुनः कारणम् अन्तराचिन्तायाः? (प्राभाकरोक्तं कारणमाशङ्क्य निरस्यति–) मूलाधिकरणसिद्धान्ते कालोपलक्षणत्वम् उक्थ्यस्य स्यादिति, स्थिते च तस्मिन् पूर्वयोः सवनयोः ग्रहणमाशङ्कितुमशक्यम्, तयोरुक्थ्याभावात्। तस्मात् मध्ये चिन्तितम् इति केचित्। तदयुक्तम्। एवमपि पूर्वपक्षं समाप्य कर्तव्येयं चिन्ता स्यात्, न मध्ये। किञ्च 'प्रातःसवने ग्रहीतव्यः' इत्यादिवचनात् अस्य सवनत्रये ग्रहणमाशङ्क्यते। न च वचनस्य परिपन्थी संभवति। तस्मात् यद्यपि पूर्वयोः सवनयोः उक्थ्याभावात् तदुत्तरकालता न संभवति, तथापि वचनबलात् ग्रहीतव्यः। कालवचनं तु तार्तीयसवनग्रहणाभिप्रायं भविष्यति। (पराभिमानं दूषयति–) विद्यते च पूर्वयोरपि सवनयोः उक्थम् (पूर्वयोरपि सवनयोः कल्प्यमोक्थ्यस्य सद्भावः। सम्भवेन अन्तराचिन्ताप्रयोजकमाह–) तस्मात् विचित्रगतिः सूत्रकारः चिन्तान्तरमध्येऽपि प्रसङ्गात् चिन्ताऽन्तरं कृतवान् इत्येव वक्तव्यम्।

वि— 'सवनेषु तृतीये वा स, प्रयोक्त्या भवेत् त्रिषु।. द्वे निन्दित्वा तृतीयस्य विधेस्तत्रैव गृह्यताम् ॥'

भाट्ट— इदमधिकरणं सूत्रकारेण पूर्वाधिकरणपूर्वपक्षमध्ये कृतमपि व्याख्यासौकर्याय पृथङ् निरूप्यते। षोडशियागाभ्यासः किं नियमेन सवनत्रये स्यात्, उत पक्षे तृतीयसवने एवेति चिन्तायाम्, 'सवनेसवने गृह्णाति' इति शाखान्तरवचनेन अनन्यदोषभूतेन सवनत्रयेऽपि तावत् प्राप्तः इत्यविवादमेव। अतश्च तदेकवाक्यतया 'प्रातःसवने ग्राह्यः तेजो वै प्रातःसवनं तेजस

एव वज्रं निर्मिमीते, माध्यंदिने सवने प्राह्न, तेजो वै माध्यंदिनं सवनं तेजस एव वज्रं निर्मिमीते, तृतीयसवने प्राह्नः पशवो वै तृतीयसवनं पशुभ्य एव वज्रं निर्मिमीते। यत् प्रातःसवने गृह्णीयात् उत्तरे सवने व्यतिरिच्येत, यन्माध्यंदिने तन्मध्यतो वज्रं निहन्यात्, तृतीयसवने प्राह्न, तत्सर्वेषु सवनेषु संस्थाति, न पूर्वे सवने आर्तिं नीतः' इति शाखाऽन्तरवचनेऽपि सवनत्रये एव विधीयते। प्राह्नः इति कृत्यप्रत्ययस्य सर्वत्र श्रवणेन 'साम्ना स्तुवीत' इतिवत् नामभिव्याप्याभावात्, ध्वजकरावये इव मीमांसापदाश्रवणेन तदर्थं व्यादानकल्पनाऽनुपपत्तेश्च। वर्तिल्पतागुन्यायेन एकवाक्यतालाभार्थे पूर्वस्य विधेरर्थवादत्वं प्रकल्प्य तार्तीयसवनिकस्यैव विधित्वकल्पना तु विधिभेदेऽपि प्राप्ताऽस्तौकवाक्यतालाभस्य अविशिष्टत्वात् कल्पापादकत्वाच्च न शङ्क्या। इति प्राप्ते, पूर्वसवनविन्दापूर्वकतृतीयस्तुतेः तन्मात्रविधिपरत्वावगमात्, पूर्वविधिद्वयस्यापि वर्तिल्पतागुन्यायेन पदैकवाक्यतालाभार्थं तच्छेषत्वस्यैव कल्पनात्, शाखाऽन्तरैकवाक्यत्वाभावेऽपि श्रुतिविरोधात्, विकल्पस्य पक्षमुख्यत्वेन अदोषत्वात्। अथवा शाखाया तार्तीयसवनिक एव विधिः, सवनत्रयसद्भावस्तु प्रत्यापित्वम्। न च पूर्वयोः सवनयोः उभयपरमावस्थाभावः, सवनत्रयेऽपि तदभावात् तस्मात्।

मण्डन— 'प्राह्नस्तृतीये सवने स नूनम्।' सः षोडशी।

शंकर— 'तृतीयसवने [illegible] च।' १०.

※ ज्योतिष्टोमे तृतीयसवने त्रिर्धिष्ण्यविहरणम्॥

* धिष्ण्याग्नी सवनभेदेन त्रीणि विहरणानि। वाय्वादिषु 'अङ्गारैर्द्वे सवने विहरन्ति शकलैस्तृतीयम्' इति गुणविधयः। चतुर्थस्य गुणविधेरभावादस्ति चतुर्थं विहरणम्। इति प्राप्ते, अग्निष्टोमसाम प्रकृत्य 'धिष्ण्यान् ज्योतिष्मतः कुर्यात्' इति विधेश्चतुर्थविहरणसिद्धिः। ■ न 'अग्नीन् ज्योतिष्मतः कुरुत' इति प्रैषोत्तरमेव तृतीयसवने विहृतानामेवाग्नीनां भस्मापनयनेन समिन्धनरूपमेव ज्योतिष्मत्त्वमिति गम्यम्। धिष्ण्याग्नीनां महाग्नीनामिव जागरणाभावेन तदनुपपत्तेः। अत एव 'एतावन्तो वा अग्नयः' इत्यादिना त्रिसंख्याविहरणानुसंख्याकथनं संगच्छते। चतुर्थविहरणाभावे सप्तन्यूनताऽऽपत्तेः। तन्नेत्यम्। षड्धिष्ण्याना मार्जालीयस्य च चतुर्वार विहरणात् अष्टाविंशतिः। ग्रामित्र औदुम्बराश्च पशुभेदात् नवसप्तः। निर्मन्थ्याश्चत्वारः। आग्नीध्रीयेण सह सप्ताधिकः पञ्चेति। संकर्ष. १।२।१६.

※ ज्योतिष्टोमे तृतीयसवने सौम्यचर्वादौ हविष्कृदाह्वाने पुनर्न कर्तव्यम्। पत्नीसंयाजपर्यन्तं पत्न्याः निवृत्त्यभावात्। चि. १२।२।४. ※ ज्योतिष्टोमे त्रिवृद्बहिष्पवमानमिति बहिष्पवमानशब्दः नामधेयम्, न गुणविधिः। भा. १।४।२।३.

※ ज्योतिष्टोमे दक्षिणाऽन्तर्गतगोष्वेव द्वादशशतसंख्यानिवेशः। दक्षिणाऽधिकरणम्॥

द्रव्यविधिसंनिधौ संख्या तेषां गुणत्वात् स्यात्। १०।३।११।३९॥

भाष्यम्— अस्ति ज्योतिष्टोमः 'ज्योतिष्टोमेन स्वर्गकामो यजेत' इति। तत्र एवमाम्नायते 'गौश्च अश्वश्च अश्वतरश्च गर्दभश्च अजाश्च अवयश्च व्रीहयश्च यवाश्च तिलाश्च माषाश्च, तस्य द्वादशशतं (११९) दक्षिणा' इति। तत्र संशयः किमेकैकस्य गवादेर्द्रव्यस्य द्वादशशतम्, उत एकस्य द्रव्यस्य। यदा एकस्य तदा किमनियमः यस्यकस्यचित्, उत गवाम्। अथवा सर्वेषामेकैकजातीयस्य संख्या, उत एकजातीयस्य। यदा एकजातीयस्य तदा किमनियमः यस्यकस्यचित्, उत पशूनाम्। यदा पशूनां तदा किमनियमो येषांकेषांचित्, उत गवाम्। इत्येते पक्षा भविष्यन्ति।

किं तावत् प्राप्तम्? द्रव्याणां विधीयमानानां संनिधौ केषां द्रव्याणाम्? गवादीनाम्। कि विधीयमानानाम्? दक्षिणार्थकत्वे। तेषां समाम्नातं, 'तस्य द्वादशशतं दक्षिणा' इति। तेषां गवादीनामेकैकस्य संख्या स्यात्। कुतः? गुणतः संख्या विधीयते, गवादीनि प्रधानतः। कथम्? नैषामभिसंबन्धः क्रियते, द्वादशशतं स्यादिति। कथं तर्हि? द्वादशशतं दद्यादिति। एवं तावद्ग्रहणमर्थवद्भवति। इतरथा तदनर्थकं वा अनुवादो वा स्यात्।

एकवचनमपि पक्षतापेक्षं लक्षणया अनूद्येत । प्रधानसंनिधौ च गुणः श्रिष्यमाणः प्रतिप्रधान मिध्येतेति । अस्ति च एतया संख्यया प्रयोजनम् । गवादीनि द्रव्याणि द्वादशसंख्यानि कर्तव्यानि । तत्र न गम्यते विशेषः । किमेतत्संख्यं कर्तव्यम्, किं नेति । यदेव द्रव्यं नैतत्संख्यं स्यात्, तत् प्रति श्रुतिर्बाध्येत । तस्मादेकैकमेतया संख्ययेति ।

टुप्—— दक्षिणाप्रसङ्गेन इदम् ( अधिकरणम् ) आगतम् । ( तेन प्रासङ्गिकी संगतिः ) । अथवा प्रकृतौ निर्णीतायां विकृतौ दक्षिणाविचारः ( दक्षिणाबाधप्रकारविचारः ) पुरस्तात् वर्तिष्यते [उदाहरणमाक्षिपति—] ननु 'तस्य नवतिशतं स्तोत्रीयाः' इत्यस्य ( वाक्यस्य ) अर्थवादत्वेन शेषभूता गवादयः । कथम् ? 'तस्य नवतिशतम् ( १९० ) स्तोत्रीयाः' इत्यभिधाय आह ( तासां मध्ये ) याः अशीतिशतम् ( स्तोत्रीयाः ) ताः षट्त्रिंशिनः [ षट्त्रिंशदक्षराः ] विराजः, षट् ऋतवः, ऋतुष्वेव विराजः प्रतितिष्ठन्ति [ ६×६ = ३६ ] इत्येवं विराट्संस्तुतिस्तासाम् ( स्तोत्रीयाणाम् ) । ततः पश्चादाह 'अथ याः ( परिशिष्टाः ) दश ( स्तोत्रीयाः ), एषा या आत्मन्दा ( आत्मप्रतिष्ठापनी ) विराट्' इति ता दश ( स्तोत्रीयाः ) गवादिभिः ( दशभिर्द्रव्यैः ) स्तूयन्ते । तस्मात् ( अर्थवादत्वात् ) इदम् ( छान्दोग्यस्थम् ) अनुदाहरणम् । किं तत् ( तर्हि उदाहरणम् ? ), भाल्लवेये यदि ईदृशं वाक्यम्, तत् उदाहरणम् । कृत्वाचिन्ता वा । अथवा उदाहरणमेवेदम् [ छान्दोग्यस्थम् ] । 'तस्य द्वादशशतम्' इति ( वाक्ये ) यदि तस्य इति ऋतुविशेषणं स्यात्, अप्रकृतिविशेषकत्वमनर्थकं स्यात् । गवादयस्तु यद्यपि अर्थवादत्वेनोक्ताः, तथापि विपरिवर्तमानाः, त एव तच्छब्देन संबध्यन्ते ( तस्य द्रव्यस्य द्वादशशतं दक्षिणा इति । यदेव तच्छब्दनिर्दिष्टं तस्य संख्या । तच्छब्दपरामर्शस्तु कस्येति चिन्त्यते । पूर्वपक्षमाह— ) एकैकस्य गवादेर्द्रव्यस्य संख्यया संबन्धः । कुतः ? तच्छब्देन गवादयः सर्वे परामृश्यन्ते, पष्ठ्या तेषामेव गुणभूता संख्या विधीयते । ननु गवादिभिः (बहुभिः) संबन्धे तेषाम् इति बहुवचनं प्राप्नोति । उच्यते । गवादयोऽत्र ( संख्यां प्रति ) प्रधानभूताः ( तच्छब्देन ) उद्दिश्यन्ते, उद्दिश्यमानस्य च संख्या न विवक्ष्यते ग्रहस्येव । अथवा तत्संबन्धोऽयम्, या दक्षिणा, तस्य द्वादशशतमिति । एवमपि ( यद्यपि दक्षिणा प्रति गवादेर्विधानम्, तथापि ) संख्या गुणभूता द्रव्याणि प्रति ( षष्ठ्यन्तस्य ) शब्दस्य सामर्थ्यात् ।

**समत्वात्तु गुणानामेकस्य, श्रुतिसंयोगात् ॥ ४० ॥**

भाष्यम्— तुशब्दः पक्षं व्यावर्तयति । तस्येतस्य द्वादशशतमिति, नैतदेवम् । एकस्य कस्य चित् द्वादशशतं स्यात् । कुतः ? समत्वाद् गुणानाम् । गवादयोऽपि हि दक्षिणासंबद्धाः, वस्त्राण्यपि । न गवादीनां संख्या विधीयते । दक्षिणा तु संख्याविशिष्टा चोद्यते, न गवादयः । कुतः ? संख्याया दाक्षिण्येन अनभिसंबन्धे सति अनियतसंख्यानां गवादीनां दक्षिणासंबन्धेन आनर्थक्यमेव संख्यायाः स्यात् । संख्येयसामानाधिकरण्याच्च तच्छब्दस्य बहुवचनं प्रसज्येत । गवादिषु तस्य द्वादशशतमिति नैकवचनं न स्यात् । तस्मात्सन्यस्य कस्यचित् परिक्रयणाभावस्य द्रव्यस्य एतया संख्यया युक्तायाः एतत्संख्यः परिक्रयः कृतो भवति । तस्मादेकस्य संख्या, नैकैकस्य । एवम् एकवचनश्रवणं युक्तरूपं भविष्यति । ननु लक्षणत्वात् तस्यशब्दस्य अविवक्षितं वचनम् । उच्यते । अविवक्षितेऽपि वचने या संख्याऽनूद्यते, तेन वचनेन भवितव्यम् । यथा लक्षणयेनापि उच्यमाने ब्राह्मणजातीयो न हन्तव्य इति, न द्विवचनान्तेन निर्देशो भवति 'ब्राह्मणौ न हन्तव्यौ' इति । आह । जात्याख्यायामेकस्मिन् बहुवचनं भवति । बहुषु वा एकवचनं भवति, न तु एकस्मिन् बहुषु च द्विवचनं भवति । तेन अत्र बहुवचनान्तेन निर्देशः, एकवचनान्तेन वा बहुषु निर्देशो भवति । अत्रोच्यते । जात्याख्यायामेतदेवं भवति । न च तच्छब्देन जातिरभिधीयते । संनिहितव्यक्तिवचन एष भवति । तस्मादेकस्य कस्य चित् संख्येति ।

टुप्—— ननु गुणभूता संख्या द्रव्याणि प्रति । कुत, ? वाक्यभेदप्रसङ्गात् । ( तथाहि, ) बहूदुच्चरितः तस्ये-

तिशब्दः यदि दक्षिणायां विधीयेत, तं प्रति संख्या च ( षष्ठ्या ) विधीयेत, ततो वाक्यभेदः। अथापि वाक्यभेदमङ्गीकृत्य तच्छब्दस्य ( तदुद्देशेन ) संख्या विधीयते, तथापि दक्षिणायाः ( संख्या ) अनङ्गम् ( स्यात्, तां प्रति ) अविधीयमानत्वात् 'तदेकत्वमयज्ञाङ्गमिति चेत्' ( ४।१।५।११ ) ( इत्युक्तत्वात्। कथम्? ) तत्संबन्धेऽपि गवादयः ( स्वरूपेणैव ) संख्यानुरक्ताः ( न तु संख्या दक्षिणाऽनुरक्ता )। तत्र वाक्यभेदाख्यो दोषः ( तदेकत्वम् इत्यत्र ) उक्तः, ते इहापि भवेयुः। तस्मात् गवादयः, संख्या, तच्छब्दश्च ( इति त्रितयमपि दक्षिणां प्रति विधीयते )। तच्छब्दस्य द्रव्यपरत्वाद् आत्माख्यायाम् इत्येतदपि न लभ्यते।

यस्य वा संनिधाने स्यात्, वाक्यतो ह्यभिसंबन्धः। ४१ ॥

भाष्यम्—इदं पदोत्तरं सूत्रम्। यदा एकस्य संख्यासंबन्धः, तदा अनियमः, यः कश्चित्, निशेषाभावादिति। एवं प्राप्ते, ब्रूमः। यस्य वा संनिधाने स्यात्। यस्य शब्दस्य संनिधाने संख्याशब्द उच्चरितः, सोऽर्थः संख्याविशिष्टः प्रतीयेत। अनन्तरमुच्चरितेन हि सह एकवाक्यता भवति। कुतः? अनन्तरसंबद्धं हि विशेषणविज्ञानं विशेष्टुं शक्नोति, नहि व्यवहितम्। व्यवहिताश्च गवादयो माषैः। वाक्यं च प्रकरणाद्बलीयः। तस्मात् माषाः संख्यया संबध्येरन्निति।

टुप्—यस्य वा संनिधाने। ( अन्यतीत एतद् एकस्य संख्येति। वस्तु ) यस्यानन्तर्यविधिरिति, तत्र, माषा दक्षिणायाः अनन्तराम् ( पूर्वोपस्थानेन ) विपरिवर्तन्ते। ( अतः ) ते एव ग्राह्याः। गवादयस्तु न विपरिवर्तन्ते व्यवहितत्वात्।

असंयुक्ता तु तुल्यवदितराभिर्विधीयन्ते, तस्मात् सर्वाधिकारः स्यात्। ४२ ॥

भाष्यम्—तुशब्दः पक्षं व्यावर्तयति। माषाः संख्यायुक्ता इति, नैतदेवम्। सर्वव्यापिनी संख्या स्यात्। सर्वैर्गवादिभिः संपद्येत। असंयुक्ता केवलैर्माषैः संख्या। तुल्यवत् इतराभिर्दक्षिणाश्रुतिभिः माषाः श्रूयन्ते। कथम्? तिलाश्च माषाश्चेति चशब्देन तिलैः सहिता माषा इति गम्यते। गवादिभिः सहिताना संख्यासंबन्धः। चशब्दश्रुतिः अर्थान्तरसंबन्धमेवाऽऽह। चशब्दश्रवणस्य एतत् सामर्थ्यम्। यस्मात् चशब्दः परं उच्चार्यते, तस्य अर्थान्तरसंबन्धं श्रुत्यैवाह, न वाक्येन। यदि हि वाक्येन स्यात् पुरस्तादपि उच्चार्यमाणः एतमर्थं कुर्यात्। संख्या तु वाक्येन संबध्यते। यदि च पूर्वं न चार्थः अवकल्पेत, चशब्दश्रवणमनर्थकं स्यात्। नहि असौ उत्तरकाले संबध्यते संख्यासंबन्धे अभिनिर्वृत्ते। 'इस्य द्वादशशतं वा' इति अस्य एव अवगम्येत 'द्वादशशतम् अन्यच्च किञ्चित्' इति। न च तत् अन्यत् किञ्चित् उच्चार्यते। तस्मात् पूर्वं चयोगः, पश्चात् संख्यासंबन्धः। समर्थतराणि समानविभक्तीनि, दुर्बलो विविभक्तिः ( भिन्नविभक्तिकः ) अपि च समानविभक्तीनि समर्थतराणि। तेषां हि आनुकूल्या वृत्तिः, विलम्बिता विविभक्तीनाम्। स्वार्थे समानविभक्तीनि समर्थतराणि प्रथमाऽन्तानि भवन्ति। परपदार्थे षष्ठ्यन्तो विनियुङ्क्ते। तस्मात् समुच्चितानि वा इतरेतरयुक्तानि वा संख्येयानि संख्यया संबध्यन्ते। समाहारो वा एषां संख्यया युक्तः। तस्मात् सर्वैः संख्या संपादयितव्या। किमेवं भविष्यति? संख्यासंबन्धे न कश्चित् विशेषो भविष्यति। विनिगमनाया हेत्वभावे यमेव संख्यासंबन्धो बध्येत, तमेव प्रत्ययो बाध्येत। तस्मात् गवादिराशिः माष्यस्य पत्या संपाद्येतेति।

टुप्—( न केवलं माषैः संबन्धः, किन्तु ) सर्वसंपादिनी संख्या। कुतः? चशब्दश्रवणात् [ तिलाश्च माषाश्च तस्य इति ]। चशब्दो माषाणां परः श्रूयमाणः द्रव्यान्तरसहितान् माषान् कथयति। यथा महतिरथ्यपत्योः भिन्नार्थयोरपि सतोः पूर्वं प्रत्ययोच्चारणे यदि प्रकृतेः ( सकाशात् ) स्यात्, ततो न किञ्चित् गम्येत भवेत्। विशिष्टक्रमको तु तौ प्रत्याययतः, एवमिहापि ( चशब्दः परस्तादेवोच्चार्यमाणः स्वार्थपर्यन्तसंबन्धित्वेन प्रतिपादयति )। अपि च प्रथमाविभक्तियुक्तानि स्वार्थे एवोच्चार्यमाणानि सामानाधिकरण्यं प्रतिपद्यन्ते ( तस्मात् चशब्दश्रुतेः सामानाधिकरण्याच्च मिथःसंयुक्तानां गवादीनां पश्चात् संख्यायोगः इति सर्वसंपादिनी संख्या )।

असंयोगाद् विधिश्रुतावेकजातीयाधिकारः स्यात्, रूप्याकोपात क्रतोः । ४३ ॥

भाष्यम्— नैतदस्ति सर्वसंपादनीया संख्येति । असंयोगात् विधिश्रुतौ, सर्वसंपादने संबन्धो नास्ति । न श्रूयते गवादिराशेः संख्या भवतीति । न गवादिराशिः शब्देन निर्दिश्यते, यः सर्वनाम्ना प्रतिनिर्दिश्येत । गवादयस्तु शब्देनोक्ताः । तेन ते सर्वनाम्ना प्रतिनिर्देशमर्हन्ति । न चात्र गवादीनां प्राधान्यमित्युक्तम् । दाक्षिण्येन हि संख्या सम्बध्यते, इति संख्याविशेषण सर्वनामशब्दः संख्या विशेषणमुपादीयते । तत्रैकवचनं विवक्षितमेव । तत्रैषां नानाजातीयानां निर्दिष्टानाम् अन्यतमत्मेकं प्रति निर्देशेन संख्याविशेषणमुपादीयते । तस्मात्तासां नानाजातीयानां निर्दिष्टानामेकं स्यात् । स एकजातीय एव भवति । तस्मात् एकजाताधिकारः इति सूचितम् । किमेवं भविष्यति ? एवमेकश्रुतिर्न कोपिता भविष्यति । इतरथा तावदेन द्रव्यम भवन्ती श्रुतिविरोधमनुवर्तती, अश्रुतिविरोधकरी प्रकरणवशेन क्रतोः कल्पिता भविष्यति, तस्य क्रतोर्द्वादशशतं दक्षिणा, इति । तस्मादेकजातीयस्य द्वादशशतं दक्षिणेति ।

टुप्— एकेन ( द्रव्येण ) संख्या संबध्यते । कुतः ? संख्या दक्षिणां प्रति विधीयते, गवादयस्त्वनूद्यन्ते । ततः किम् ? तच्छब्देन प्रकृतं ( द्रव्यं संख्या विशेषणतया ) संबद्धमेकजातीयम्, एकसंख्याविशिष्टम् ( द्रव्यम् ) दक्षिणां प्रति विधीयते । तेन द्वादशशत-संख्याविशिष्टमेकराश्यात्मकम् ( कृत्वा दक्षिणायाम् ) प्रतीत्यम् । न च गवादीनां कल्पनान्तरभूतं किञ्चिद्दियते, यत् सर्वनाम्ना प्रतिनिर्दिश्येत । ननु विद्यते एव समुदायः । भवत्वसौ वस्तुतः, तथापि न गवादीनां समुदायः शब्देनोच्यते गवादिशब्दव्यतिरिक्तेन, यः सर्वनाम्ना प्रतिनिर्दिश्येत । ( तस्मात् गवादीनामेव परामर्शः, तथापि नियमो वक्तव्यः । तत्र महोपकारत्वात् अप्रतिपिद्धत्वात् मुख्यत्वाच्च गवामेव परामर्शः इति तासामेव संख्या ) ।

शब्दार्थश्चापि लोकवत् । ४४ ॥

भाष्यम्— अपि च लोकवदेतद् द्रष्टव्यम् । लोके हि निर्विशेषिते संख्याशब्दे उच्चरिते, एकजातीये प्रत्ययो भवति । कुतः ? अन्यथा व्यवहारानुपपत्तेः । अस्ति एकस्मिन् जातिविशेषे, सर्वैरन्यैः सह परार्धसंख्या निविष्टा । परार्धस्य च अवान्तरसंख्याभिः संव्यवहारः क्रियते । येषांकेन केनचित् संबन्धः, तेषां तमेक मवच्छिन्नमपेक्ष्य संख्या निविशते । स तत्रैकः संबन्धी वक्तव्यः, प्रकृतो वा ग्रहीतव्यः । अर्थाद्वा य आपद्येत, स उपादेयः । इह च प्रकृता नानाजातीयाः । तेषामन्यतमः संख्यया सम्बद्धः स्यादिति । यथा शतमाभ्या वीययामिति, एकजातीयानां शतम्, न भिन्नजातीयानाम् । यथा द्रव्य गुणः कर्म अवयव इत्येवमादीनाम् ।

स्या पशूनामुत्पत्तितो विभागात् । ४५ ॥

भाष्यम्— एकजातीयस्य संख्या इत्येतत् समधिगतम् । सा पशूनाम्, उत माषाणामिति । अनियमे प्राप्ते, उच्यते । सा पशूनामिति । कुतः ? उत्पत्तितो विभागात् । औत्पत्तिकेन विभागेन पशवः संव्यवहारेषु साध्यन्ते । पञ्चभिरश्वैः क्रीतः, पञ्चभिर्गोभिः क्रीत इति । न व्रीह्यादीनाम् औत्पत्तिकेन विभागेन व्यवहारेषु संख्या एकीर्यते । निबद्धाभिप्राया मानाभिप्राया वा भवति । नहि भवति पञ्चभिर्माषैः क्रीत इति । पञ्चभिर्माषाणामाढकैर्द्रोणैर्वा कुडवैर्वा खारीभिर्वेति भवति । तत्र, आढकादिभिरनुचार्यमाणे, शक्नुयादेव याज्ञवल्क्यपरिपूर्णप्रमाणम् मर्थस्य कस्य चित् । अथ माषाणामपि औत्पत्तिकेन विभागेन कस्मादिह परिक्रयो न क्रियते इति । अत्रोच्यते । मूल्यस्य यतः परिक्रये निवेश उच्यते, द्वादशशतं दक्षिणेति । न च द्वादशशतं व्रीह्यादिबीजानां भृतित्वेन ऋत्विजाम् अवकल्पते । भिन्नैः प्रकारैर्भृतिर्भवति, व्यापारतः फलतो वा जनत इति । व्यापारतस्तावन्न माषबीजानां द्वादशशतं भृतिः । कर्म कुर्वाणा हि कर्मकराः पादिकमपि अहर्लभन्ते । फलानुरूपं नैव ज्ञायते । वचनं तु भृतौ सत्या परिमाणविशेषपरं भवति । यत्र हि पादिकमपि अहर्न लभ्यते, न सा दक्षिणा भवति । नहि सा तस्मिन् कर्मणि दत्तं करोति । स्नेहाद्वा अन्येन वा प्रकारेण कृत्स्नमहः कर्म कुर्यात्, न व्रीहीणां द्वादशशतेन प्रोत्साहितः । आह । ॥ कस्मिन् पक्ष्ये निदर्शनाया

संख्यैक्यनियमेन पशवो नैनत् नस्येत्यनन्वयात् । एकत्वेऽप्यत्र यत्किञ्चिन्मात्रा वा गाव एव वा ॥ यत्किञ्चिन्नियमाभावान्मात्राः सन्ति हि, तत्त्वतः । मात्रा निराकृता गावः प्राधान्याच्चोपकारतः ॥ तस्मैतिप्रकरणाद् गोद्रव्ये न युक्तः प्रकृतः क्रतुः । संख्याऽन्तरं चेद् विकृतौ स्याद् यथा सहस्रमित्ययम् ॥' विकृतिषु यत्र गोदक्षिणायाः संख्याऽन्तरं श्रुतम्, तत्र अस्याः संख्यायाः बाधो विचारफलम् ।

भाट्ट-- ज्योतिष्टोमे 'गौश्चाश्वश्चाश्वतरश्च गर्दभश्चाजाश्चावयश्च व्रीहयश्च यवाश्च तिलाश्च माषाश्च तस्य द्वादशशतं दक्षिणा' इति श्रुतम् । तत्र द्वादशशतसंख्या क्व निविशते इति चिन्तायाम् 'ऋत्विग्भ्यो दक्षिणां ददाति' इत्यनेन विहितं दक्षिणादानमनूद्य 'तस्य द्वादशशतम्' इत्यनेन तच्छब्दोपस्थापितगवादिसर्वद्रव्योद्देशेन 'पयो व्रतं ब्राह्मणस्य' इतिवत् द्वादशशतसंख्याविधानात् उद्देश्यसाहित्यस्य चाविवक्षितत्वात् प्रत्येकं सर्वद्रव्येषु निवेशः । गवादिद्रव्याणां च दक्षिणात्वम् 'गौश्चाश्वश्च' इतिवाक्ये दक्षिणापदानुषङ्गेण बोध्यम् । यद्यपि च तन्त्ररत्नकारोक्तरीत्या छन्दोगानाम् 'गौश्चाश्वश्च' इति वाक्यम् 'तस्य नवतिशतम् (१९०) स्तोत्रीयाः' इत्येतदर्थवादान्तर्गततया अन्वयसम्भवाभावात् न गवादीनां दक्षिणात्वविधायकम्, तथापि आध्वर्यवे अनन्यशेषतया समाम्नातेन दृष्टेनैव पोडशद्रव्ययुक्तवाक्येन (तच्छाखीये पाठदोष सन्ति) गवादिविधानं द्रष्टव्यम् । अथवा अस्तु दक्षिणादानानुवादेनैव संख्याविधिः, तथा च सर्वेष्वेव 'सायो यथावतः' इतिवत् दक्षिणाद्रव्येषु निवेशः । 'तस्य' इति प्रकरणप्राप्तक्रतुसम्बन्धानुवादकमिति प्रथमः पक्षः । द्वितीयस्तु न तावत् दक्षिणोद्देशेन संख्याविधिः, तस्येत्यस्य वैयर्थ्यापत्तेः । नापि द्रव्योद्देशेन, द्रव्याणां बहुत्वेन वाक्यभेदापत्तेः । पक्षद्वयेऽपि 'गौश्चाश्वश्च' इत्यनेन दक्षिणापदानुषङ्गेण गवादीनां दक्षिणात्वविधाने वाक्यभेदापत्तेश्च । तस्मादेकवाक्यत्वानुरोधेन गवादिद्रव्याणि द्वादशशतसंख्या चेत्युभयविशिष्टदक्षिणादानविधानम् । 'ऋत्विग्भ्यो दक्षिणां ददाति' इत्यनेन च ऋत्विगुद्देशेन विनियोगः । तत्र सप्तानां पार्ष्ठिकान्वयत्वेनाया द्रव्यवृत्तित्वबोधे समुदितानामेव द्रव्याणां चशब्दयोगेन दक्षिणादाने करणत्वप्रतीतेः समुदितद्रव्यवृत्तित्वाभावात् सर्वप्रयोगा संख्येति पक्षः । एवं सति तस्येत्येकवचनान्तपदवैयर्थ्यापत्तेः एकद्रव्यवृत्तित्वविशिष्टा संख्या यवादिसमुदितद्रव्याणि चेत्युभयविशिष्टदक्षिणादानविधानावगतेः एकद्रव्यवृत्तित्वमेव तस्याः । अत एव तस्येत्येकवचनं गवादिद्रव्यसमाहाराभिप्रायमित्यपि अपास्तम्, समाहारवृत्तित्वस्य न्यायादेव प्राप्तौ तस्येत्यस्य वैयर्थ्यापत्तेः, समाहारस्य अशाब्दत्वेन परामर्शानुपपत्तेश्च । शब्दान्तरस्य प्राचां मते सुबन्तान्वयानुपपत्तेश्च न संख्याऽन्वयविरोधः । स्वमते तु पार्ष्ठिकः, पदद्वये लक्षणया वा संख्याऽन्वयो बोध्यः । तदपि चैकं द्रव्यम् आनन्त्यान्मात्रा एवेति तृतीयः । माषादिधान्यानां लोके आढकादिपरिमाणान्तरापेक्षयैव संख्याव्यवहारदर्शनात् तावताऽपि भूतिलाभाभावाच्च पशुरूपद्रव्यस्यैव तच्छब्देन परामर्शोपपत्तेः तत्रापि गौरवाधिक्यात् अश्वानामेवेति चतुर्थः । सिद्धान्तस्तु– 'न केसरिणो ददाति' इत्यनारभ्याधीतवचनेन लौकिकाश्वदानवत् सामान्यतो विहितेऽपि यज्ञाश्वविषये स्वेच्छाप्रवृत्तिः, तत्रापि निषेधावगतेः, अश्व चानिषिद्धगवादिविधानेनाप्युपपत्तेः, अश्वं महोनारकमुख्यगोमात्रविषयत्वमेव । अत एवैकोऽश्वादिर्देय एव । स्वबाधस्तु कपिञ्जलाधिकरणन्यायेन त्रयः । माषादीनां परिमाणं प्रमाणान्तरात् स्वेच्छया वा अवधेयम् । सर्वथा गवामेव द्वादशशतम् । अत एव विकृतौ सहस्रदक्षिणायां सहस्रसंख्यायाम् 'सहस्रमश्वरश्च गौः' इति निर्देशोऽपि संगच्छते । अत एव सहस्रादीनां गोवृत्तित्वप्रतिपादकन्यायैव विदेश्याप्रसंगतिरपि संगच्छते ।

मण्डन— 'शतं गवामेव तु दक्षिणासु ।'

शंकर— 'स्याद् द्वादशशतं गवाम् ।'

● ज्योतिष्टोमे दक्षिणा नियमः । दक्षिणाधिकरणम् । मी. ४।४।५।८–११. ● ज्योतिष्टोमे दर्शपूर्णमासविकारेषु यजमानभागातिदेशः । संकर्ष. २।२।४. ● ज्योतिष्टोमे 'दशापवित्रेण ग्रहं संमार्ष्टि' अथ संमार्गः ग्रहेष्वेव, न चमसेषु प्रवर्तते । मी. ३।१।८।१६–१७, ● ज्योति-

ष्टोमे 'दशापवित्रेण ग्रहं संमार्ष्टि' इति। तत्र सर्वेषामेव ग्रहाणां संमार्जनं कर्तव्यं नैकस्यैव। ग्रहम् इत्येकत्वमविवक्षितम्। ३।१।७।१३–१५. * ज्योतिष्टोमे दिग्विभागः श्रुतः प्राचीनवंशविधेः अर्थवादः। वि. ३।४।१६, * ज्योतिष्टोमे दीक्षणीयाऽऽदीष्टीनाम् आदौ आरम्भणीयेष्टिर्न कर्तव्या आरम्भाख्यप्रारब्धेषात्। १०।८।१२

※ ज्योतिष्टोमे दीक्षणीयेष्ट्या दीक्षासिद्धिः, न तु दण्डादिमात्रेण. अतः दीक्षणीयाऽन्ते दीक्षितधर्मानुष्ठानम्॥

पर्णावेदनाद् दीक्षितः स्यात्, सर्वदीक्षाऽभिसंबन्धात्। ५।३।१२।२९॥

भाष्यम्— ज्योतिष्टोमे श्रूयते 'आग्नावैष्णवमेकादशकपालं निर्वपेद्दीक्षिष्यमाणः' इति। तथा 'दण्डेन दीक्षयति, मेखलया दीक्षयति, कृष्णाजिनेन दीक्षयति' इत्येवमादि। तत्र संदेहः किं सर्वैर्दीक्षितो भवति, अथवा इष्ट्यन्ते दीक्षितः इति। किं तावत् प्राप्तम्? सर्वैरिति। कुतः? दीक्षाऽभिसंबन्धात्। दीक्षासंबन्धो भवति, दण्डेन दीक्षयति, दीक्षामस्य करोतीत्यर्थः। यदीष्ट्यन्ते दीक्षितः स्यात् कथमस्य दण्डेन दीक्षां कुर्यात्। तेन इष्ट्या न दीक्षितः। न चास्य इष्ट्यन्ते दीक्षितशब्दं पश्यामः। आवेदने तु तस्य दीक्षितशब्दः। तस्मात् तावति दीक्षितः स्यात्। न च संभवति समुच्चये विकल्पो न्याय्यः। पक्षे बाधः स्यात्। तत्र प्रयोगवचनो बाध्येत। तस्माद्विशेष्यपि दीक्षासंबन्धवाक्येषु प्रयोगवचनेन सह एकवाक्यत्वात् इत्यावेदनकाले दीक्षितः स्यात्।

टुप्— 'दण्डेन दीक्षयति' दण्डेन दीक्षां निर्वर्तयति इति (तृतीयानिर्देशात्) दीक्षाऽर्थः (दण्डः)। आग्नावैष्णवोऽपि वाक्येन (दीक्षिष्यमाणपदसमभिव्याहारेण दीक्षाऽर्थः। तस्मात् सर्वान्ते दीक्षितः)। यदि हि आग्नावैष्णवेन दीक्षितः स्यात् (ततः) 'दण्डेन दीक्षयति' इति नोच्येत। तस्मात् न च तावता दीक्षितः (किन्तु सर्वान्ते)। न च (दण्डादीनां) विकल्पः। (कुतः?) दीक्षितत्वं नाम न दृष्टम्। तत्र यावत् (साधनम्) आम्नायते, तावता दीक्षितो भवति (नैकदेशेन)। आह, करणविभक्तिनिर्देशात् इतरेतरनिरपेक्षाणां दीक्षाकरणता अवगम्यते यथा व्रीहीणां (यवनिरपेक्षाणां पुरोडाशकरणता)। तेषां (व्रीहीणां) दृष्टोपकारित्वात् विकल्प इति चेत् तन्न, व्रीहियवसमुच्चयेन (अपि) शक्यते पुरोडाशो निर्वर्तयितुम्। (तेन दृष्टोपकारित्वं विकल्पे कारणम्। किं तर्हि?) करणविभक्तिस्तु यवनिरपेक्षाणां पुरोडाशप्रकृतिद्रव्यत्वं प्रतिपादयति। सा वाक्येन समुच्चये (बाधेत, इति विकल्पः)। एवमिहापि (दण्डादीनां प्रत्येकं करणविभक्तिनिर्देशात् विकल्पः स्यात्)। उच्यते (विषम उपन्यासः)। अथ पुरोडाशप्रकृति-(द्रव्य-)त्वेन एकं (प्रकृति-)द्रव्यम् आकाङ्क्षितम्। तत्र (व्रीहिभिः इति) करणविभक्त्या नियतता कृता (व्रीहिभिरेव यवैरेव वा इति)। दण्डादीनां तु अनवगत तादर्थ्यम् (दण्डेन इत्यादिना) करणविभक्त्या (अपूर्वम्) क्रियते। तच्च तादर्थ्यम् अदृष्टविषयमिति सर्वैः क्रियते। (तथापि कथं समुच्चयः, तत्राह—) अतः प्रयोगवचनेन सर्वे उपसंह्रियन्ते (समुच्चिताः)।

इष्ट्यन्ते वा, तदर्थो अविरोधार्थसंबन्धात्। ३०॥

भाष्यम्— इष्ट्यन्ते वा दीक्षितः स्यात्। तदर्था हि सा, दीक्षाऽर्था। कथम्? दीक्षिष्यमाणस्य अदीक्षितस्य सा भवति। यदि तस्या उत्तरकाले दीक्षितः, एवं सा दीक्षिष्यमाणस्य। तस्मादाग्नावैष्णवसमाप्तौ भवति तदा दीक्षितः इति। दीक्षाकारणे पदार्थे निर्वृत्ते निर्वृत्ते दीक्षितः स्यात्। वाक्ये हि निरपेक्षं दीक्षितः इति दर्शयति। यत्तु दीक्षासंबन्धो दण्डेन दीक्षयतीति, कथं न दीक्षितत्वे स्यादिति। दण्डेनैनं दीक्षितं संपादयतीत्यवगम्यते। यत्तु, अनन्तरं दीक्षितशब्दो नास्तीति, न शब्दस्य अप्रयोगः अर्थाभावे हेतुः। सत्यपि अर्थे तदभावात् प्रयुज्यते शब्दः। अन्तेन च दीक्षितः इत्यवगम्यते वाक्येन 'आग्नावैष्णवमेकादशकपालं निर्वपेद्दीक्षिष्यमाणः' इति। यच्च आवेदनकाले दीक्षितशब्द इति, इष्ट्यन्तेऽपि दीक्षितत्वस्यावो अविरुद्धः। प्रयोगवचनश्च अविरुद्धः। यत एवं दीक्षाकारणम्-येर्दीक्षितं संपादयन्ति इति गम्यते।

टुप्—दीक्षितत्वं नाम संस्कारः । संस्कारश्च क्रियाजन्यः । न च दण्डादीनां क्रियात्वम् । अथोच्येत, क्रियां साधयन्तो दण्डादयः संस्कारार्थाः ( भवन्तु । उत्तरमाह— ) समर्पणादिकायाः क्रियायाः अश्रवणात् न ज्ञायते कां क्रियां साधयन्तः संस्कारार्थतां प्रतिपद्यन्ते ( दण्डादयः इति ) । अतो द्रव्यमात्राणाम् ( क्रियारूपाभावात् ) अनर्थकत्वमेव ( वाक्यार्थस्य ) स्यात् । ( किञ्च ) दीक्षिष्यमाणः इति यो दीक्षामाप्तुमिच्छति, तस्य दीक्षणीया उपायत्वेन विनीयते ( नान्यथा ) । यथा स्वर्गस्य अग्निहोत्रम् । ( समाख्यानं च तद्वत् इति सूत्रार्थमाह— ) यदि न अनयैव दीक्षा क्रियते, ततः अस्याः ( दीक्षणीया इति ) समाख्या युज्यते (नान्यथा) । तस्मात् ( निरपेक्षा— ) वाक्यसंयोगात् ( समाख्यानाच्च ) दीक्षणीययैव दीक्षितत्वं जन्यते । ( इष्ट्यन्ते वा इति सूत्रार्थं संक्षिपन् लक्षणसंबन्धं चिन्तायाः दर्शयति— ) इष्ट्यन्ते अग्निहोत्रादीनि न कार्याणि इत्ययं क्रमलक्षणसंबन्धः ।

समाख्यानं च तद्वत् ॥ २१ ॥

भाष्यम्— इतश्च पश्यामः इष्टिर्दीक्षणार्था, इष्ट्यन्ते च प्रवृत्तिरिति । कस्मात् । समाख्यानं च तद्वदिति भवेत् न्याय उपदिष्टः । कथम् ? दीक्षणीयेति तादर्थ्यंकरी समाख्या भवति यथा स्नानीयम्, भोजनीयं चेति । तस्माच्च पश्यामः इष्टिर्दीक्षणार्था, इष्ट्यन्ते च प्रवृत्तिरिति ।

शा— ' निरपेक्षेव वाक्येन दीक्षाऽर्थेष्टिर्विधीयते । दण्डादिरक्रियात्वं ( दण्डादि तु अक्रियात्वं इति पदच्छेदः ) तद्रूपज्ञानतयोच्यते ॥ ' ( इति सिद्धान्तः ) ।

सोम—यथा वचनमात्रात् नैमित्तिकम् एवमिष्टिमात्रात् न दीक्षितत्वमिति प्रत्यवस्थानात् संगतिः । सूत्रार्थस्तु— सर्वैः इष्टिदण्डादिभिः दीक्षाऽभिनिर्वर्तनात् आवेदनात् परेण आवेदनादनन्तरं दीक्षितः स्यात् । ' पञ्चमी द्वितीया ' ( पा० २।३।२९ ) इत्यत्र ' पञ्चम्यपि दृश्यते ' इति कल्पयित्वा ' परेण आवेदनात् ' इति प्रयोगः समर्थनीयः इति पूर्वपक्षे । दण्डादिवर्जिते दीक्षितधर्माः इति सिद्धान्ते इति ।

वि— ' इष्टिदण्डादिभिर्दीक्षा किं वेष्ट्यैव, क्रितोऽग्निमः । , ( किंवा इष्ट्यैव इत्यन्तेन संशयः । उक्तितोऽग्निमः इति पूर्वः पक्षः ) । युक्तः परस्तर इष्ट्यैव दण्डादेर्व्यञ्जकत्वतः ॥ '

भाट्ट— ' आग्नावैष्णवमेकादशकपालं निर्वपति दीक्षिष्यमाणः ' इति दीक्षणीयेष्टेस्तावद्दीक्षाऽर्थत्वं लृट्प्रत्ययस्य क्रियाऽर्थायां क्रियायामुपपदे विहितस्य श्रवणादवगम्यते । ' दण्डेन दीक्षयति , मेखलया दीक्षयति , कृष्णविषाणया दीक्षयति ' इत्यादिना तृतीययैव दण्डादीनां दीक्षार्थत्वम् । न च दण्डादीनामभिव्यक्त्यर्थत्वम्, दीक्षाऽभिव्यक्तेरश्रुतत्वात् अनेकेषु दीक्षयतिपदेषु तल्लक्षणायां प्रमाणाभावाच्च । किञ्च अदृष्टरूपयमनियमपरिग्रहानुकूल्ययोग्यतारूपायाः दीक्षायाः अभिव्यक्तिर्न साक्षादनुमित्यात्मिका, दण्डादीनां व्यभिचरितत्वात् । नापि स्मरणात्मिका, संस्कारस्य प्रागभावात् । अस्तु वा दीक्षणीयाया एव दीक्षोत्पादकत्वम्, तथापि न तदन्ते दीक्षितधर्मा यमनियमादयः । यत्र ' दीक्षितोऽयं , दीक्षितमावं वद , सत्यमेव वद माऽनृतम् ' इत्याद्यावेदनप्रैषणदण्डादिदानोत्तरमेव यमनियमपरिग्रहविधानात् । इतरथा आवेदनस्य अदृष्टार्थत्वापत्तेः । अत एव यमनियमपरिग्रह एव दीक्षेति पार्थसारथिलेखनमप्यपास्तम् । आवेदनप्रैषे दीक्षासंक्रमोत्तरकालं यमनियमपरिग्रहाभिधानात् स्वयमेव दीक्षाया अदृष्टस्य चाभिधानाच्च । अतो दण्डादीनामपि दीक्षाऽर्थत्वात् सर्वान्ते सा । न चैवं नैरपेक्ष्यश्रवणात् विकल्पापत्तिः, अदृष्टार्थत्वापत्तिः एकप्रयोगविधिपरिग्रहेण समुच्चयावगतौ अवान्तरकार्ये नैरपेक्ष्योपपत्तेः । इति प्राप्ते, दीक्षणीयावाक्ये ' दीक्षिष्यमाणः ' इति लृट्प्रत्ययश्रवणेन तस्या दीक्षाऽर्थत्वं तावदवगतम् । दण्डादीनां हि निजन्तदीक्षयतिपदश्रवणात् दीक्षाऽर्थत्वमवगम्यते, अपितु तदनुकूलव्यापारार्थत्वमेव प्रथममवगम्यते, पश्चात्तु तत्संभवात् प्रयोज्यव्यापाररूपदीक्षाऽर्थत्वं दण्डेन पचं पाचयतीत्यादिवत् कथञ्चित्कल्प्येत । न च सौमारणतदीक्षणीययैव कृतार्थत्वात् न दीक्षायाः दण्डादिजन्यत्वकल्पना-

ऽर्थः । सिद्धरूपत्वाच्च दण्डादीनां न क्रियात्वाप्यत्वज्ञानमन्तरेण दीक्षाऽर्थत्वज्ञानसंभवः । न च प्रथमाद्यमत-प्रयोजकव्यापारार्थत्वमेव ' यज्ञेन कारयति ' इत्यादिवत् तदर्थत्वमस्तु इति वाच्यम् । तथात्वे साक्षाद्दीक्षणीयाऽर्थस्वाङ्गीकारे अदृष्टार्थत्वापत्तेः । वस्तुतः दीक्षायाः फलीभूतयमनियमपरिग्रहोपयोगिदीक्षितत्वज्ञानजनकतयैव दीक्षणीयाऽर्थत्वं दीक्षाऽर्थत्वमेव वा अङ्गीकर्तुमुचितम्, 'अगन्म' इति मन्त्रस्य यागफलप्रकाशकतया यागाङ्गत्वमिव । अत एव परम्परासम्बन्धस्य संनिधिविषयैव प्रोक्षोपपत्तेर्नक्षणाऽपि । ज्ञानजनकत्वं च स्मारकविधया । तत्सम्बन्धस्य मानान्तरोद्गमनाभेऽपि विध्यन्यथाऽनुपपत्त्यैवावगमात् स्मारकत्वोपपत्तिः । तत्वद्विध्यन्तरैरेव च दण्डादीना धारणकण्डूयनादिरूपक्रियाविधानात् नाक्रियाऽऽविष्टाना स्मारकत्वसंभव इति शङ्कनीयम् । अत एव तत्क्रिया-ऽर्थानामपि एषां दीक्षाऽभिव्यञ्जकत्वमपि आनुषङ्गिकम् । अत एव दण्डादीनां दीक्षाऽभिव्यक्तौ समुच्चयः । अत इष्ट्यन्ते एव दीक्षा, तदन्ते एव दीक्षितधर्माः ' दीक्षितो न जुहोति, न दीक्षितस्यान्नमदनीयात् ' इत्यादयः । न चैवम् आवेदनवैयर्थ्यमभिव्यक्तिवैयर्थ्यं चेति वाच्यम् । तद्विध्यन्तरानन्तरभावेन तत्प्रेषपठितधर्माणामेव प्रवृत्तेरप्रतीतेः ।

मण्डन—' दीक्षितो दीक्षणीयान्ते । '

शंकर—' इष्ट्यन्ते दीक्षितस्य ते । ' धर्माः ।

● ज्योतिष्टोमे दीक्षा अपवर्गेण कर्तव्या, तुल्यापवर्गेण । अङ्गगुणविरोधन्यायः । भा. १२।२।९।२५, ● ज्योतिष्टोमे दीक्षा दक्षिणाश्च प्रधानार्थाः एव । दीक्षादक्षिणान्याय. । ३।७।५।११. ● ज्योतिष्टोमे दीक्षासु पावनमन्त्रेषु अन्यतराकाङ्क्षया आनुपूर्व्येण पूरणम् । वि. २।१।१७. ● ज्योतिष्टोमे 'दीक्षासु यूप छिनत्ति क्रीते वा राजनि' । भा. ११।३।३।३, ● ज्योतिष्टोमे दीक्षासु यूपभावापकर्षः । ५।१।१४।२७, ● ज्योतिष्टोमे दीक्षाकालं रात्रिभागग्रहणमाम्नातम् । तत् यज्ञाङ्गानां रक्षणार्थं अप्रमादार्थं किंवा अदृष्टार्थम् । १२।१।८।१७.

● ज्योतिष्टोमे दीक्षापरिमाणविचारः । अत्र कुतूहलम् । भाष्यकारोक्तरीत्या द्वादशाहपरिमाणस्यैव ज्योतिष्टोमे नित्यत्वेन प्राप्तत्वे सिद्धान्तसूत्रमिदम् ' दीक्षापरिमाणे यथाकाम्यमविशेषात् ' इति । प्रकरणाविशेषात् अन्यतमेन अन्यतमोपकारासंभवात् दीक्षापरिमाणे यथाकाम्यं कामचारः स्यात् । सूत्रान्तरं च अधिकरणान्तरसिद्धान्तपर व्याख्येयम् । तथाहि ' द्वादशाहस्तु लिङ्गात् स्यात् ' द्वादशाहे किं दीक्षापरिमाणाना विकल्पः, किंवा द्वादश दीक्षा एव नियता. इति विशये प्रकृतिवत् विकल्पे प्राप्ते, उच्यते । लिङ्गात् द्वादशाहपरिमाणमेव स्यात् । यत्र हि एवं श्रूयते ' षट्त्रिंशदहो वा एष यद् द्वादशाह ' इति । द्वादशाहे उपसदः सुत्याश्च द्वादश । यदि दीक्षाश्च द्वादश स्युः, तदा षट्त्रिंशत् इत्यनुवादोऽवकल्पेत । तस्मात् द्वादशाहपरिमाणमेव तत्र नियम्यते । तथा दीक्षामि. इति दीक्षाबहुत्वमुक्त्वा तद्वाक्यशेषे ' द्वाभ्यां लोमावद्यति, द्वाभ्यां त्वचम्, द्वाभ्यामसृक्, द्वाभ्यां मांसम्, द्वाभ्यामस्थि, द्वाभ्यां मज्जानम् ' इति षण्णां द्विकानाम् अनुक्रमणात् उपक्रमगतं बहुत्वं द्वादशत्वे व्यवस्थाप्यते । तस्मात् द्वादशैव द्वादशाहे दीक्षा इति । वस्तुतस्तु द्वादशाहे ' द्वादश रात्रीर्दीक्षितः स्यात् ' इति वचने सत्यपि पूर्वपक्षानुत्थितेः. यथाभाष्यमेकाधिकरणतयैव व्याख्येयम् । न च प्रकृतौ द्वादशाहपरिमाणस्य नित्यत्वे ' द्वादश रात्रीः ' इत्यतिदेशप्राप्तानुवादः, न वचनात् इति वाच्यम् । वार्तिककृन्मते प्रकृतौ विकल्पेन प्राप्तत्वात् द्वादशाहपरिमाणे नियमविधित्वात् । भाष्यकृन्मतेऽपि अत एव ' दीक्षाभि ' इत्यर्थवादार्थतया प्राप्तार्थस्यानुवादस्य विधित्वाविरोधात् । न च भाष्यकारमतमयुक्तमिति वाच्यम् । सत्यम् । यदि ' एका दीक्षा ' इत्यादयोऽपि विधयः स्युः । तेषु हि न विधिः श्रूयते । किन्तु कल्प्यः । तथापि एकस्यैव कल्पनीयविधिकल्पनायां नानेकत्र, वाक्यभेदप्रसङ्गात् । अतो ' द्वादश दीक्षाः ' इत्यत्रैव स कल्प्यते । यथा श्रुति वैश्वानरद्वादशकपालेषु अष्टाकपालादिश्रवणवत् एकादिश्रवणानाम् अनुवादतया स्तावकत्वसंभवात् न एकादिवाक्ये स कल्प्यते, द्वादशत्वश्रवणानर्थक्यप्रसङ्गात् । अत एव ' एकं वृणीते, द्वौ वृणीते, त्रीन् वृणीते ' इति वाक्ये ' त्रीन् वृणीते ' इत्यत्रैव विधिः कल्प्यते इत्युक्तम् । तत्र च द्वादशाह-

परिमाणमेव नित्यम् इति भाष्यकारमतमनवद्यमित्याहुः। कल्पसूत्रेषु ■ एकादिदीक्षाविषयः शाखान्तरमूलकः। इति। कु. ६।५।८।२८-२९.

* ज्योतिष्टोमे 'दीक्षितो न ददाति' इत्यादिवाक्यं पुरुषार्थदानादेः प्रतिषेधकं पर्युदासो वा। भा. १०।८।७।१२-१५.

■ ज्योतिष्टोमे दीक्षितस्य संकल्पितप्रयाणसमाप्तिपर्यन्तम् आदौ सकृदेव प्रयाणमन्त्रपाठः॥

प्रयाणे त्वाऽर्थनिर्वृत्तेः। ११।४।१८।९१॥

भाष्यम्—दीक्षितस्य प्रस्थितस्य प्रयाणमन्त्रः 'भद्रादभि श्रेयः प्रेहि' इति। तत्र विचार्यते किं विश्रामे विश्रामे पुनःपुनः प्रतिष्ठमानो मन्त्रं प्रयुञ्जीत, उत सकृदेव आद्यामिति। विशेषाग्रहणात् प्रतिप्रस्थानम्। इति प्राप्ते, उच्यते। प्रयाणे तु आ अर्थनिर्वृत्तेः। अर्थप्रयाणमुद्दिश्य प्रतिष्ठते। आ अर्थनिर्वृत्तेः तस्य प्रस्थानाभिसंकल्पः। तस्मात् सकृदेव प्रयोक्तव्यः।

सोम—विशेषाग्रहणात् उत्थानात् संगतिः। सूत्रे आ अर्थनिर्वृत्तेः इति च्छेदः।

वि—'प्रयाणे प्रत्यहं मन्त्रो भिन्नो नो वा, ऽत्र भिन्नता। प्रयाणभेदाद् भिन्नो, नो प्रत्यैक्याद्धा निवृत्तिता॥' १९.

भाट्ट— तथैव दीक्षितस्य यज्ञदेशतः भूतिवनन-प्रयाणार्थे 'भद्रादभि श्रेयः प्रेहि' इति मन्त्रोऽपि मध्येमध्ये विश्रम्य पुनःपुनः प्रयाणेऽपि नावर्तनीयः। प्रतिकाशङ्का तु पूर्वं स्वापादिभेदनिश्चयाभावात् युक्तं वक्तव्यम्, प्रकृते ■ तन्निश्चयसत्त्वे भेदोऽस्त्येवेति।

मण्डन—'प्रयाणे च सकृन्मन्त्रः।' १९.

शंकर—'प्रयाणाङ्ग मनुसन्धान्।' सकृत्। १९.

* ज्योतिष्टोमे 'दीर्घसोमे संतृन्द्यात् धृत्यै' इति। अग्निष्टोमभिन्नेषु उक्थ्यादिषु अधिषवणफलकयोः संतर्दनं कार्यम्। अग्निष्टोमश्च ■ दीर्घसोमः। संतर्दनाधिकरणम्। चि. ३।३।१६, * ज्योतिष्टोमे 'देवमनुष्या दिशो व्यभजन्त' इत्ययं दिग्विभागः प्राचीनवंशस्तुतये अर्थवादः। ३।४।६, ज्योतिष्टोमे द्वादशोपसत्ता श्रुता अहीनस्यैव, न ज्योतिष्टोमस्य साह्नस्य। ३।३।१३.

■ ज्योतिष्टोमे द्वादशशतगोरूपदक्षिणा सदस्यसहितेभ्यः षोडशभ्यः ऋत्विग्भ्यो विभज्य देया॥

तत्र दानं विभागेन, प्रदानानां पृथक्त्वात्। १०।३।१२।५०॥

भाष्यम्— ज्योतिष्टोमे गवादयो दक्षिणा। तत्रैषोऽर्थः समधिगतः गवा संकल्पयेति। अथेदानीमिदं संदिह्यते किं यस्य यावान् भाग आभजति, स्वयमेव यजमानेन विभज्य तस्य तावान् कल्पयितव्यः, उत परिषदैव विभज्यते इति। किं प्राप्तम्? अनियमः, विभज्याविभज्य वा दातव्यम्। एतावद्धि श्रूयते दातव्यमिति। न विभज्याविभज्य वेति। तस्मादनियम इति। एवं प्राप्ते, उच्यते। विभज्य दातव्यमिति। दातव्यस्यैव तत् रूपं यत् स्वपरित्यागेन परस्वत्वापादनम्। तच्च यजमानेन स्वयं कर्तव्यम्। तस्मात् स्वयं प्रयोगे स्यादिति। यो यस्यांश आभजति, स तस्मै अनिर्दिष्टो, न शक्यते तेन संबन्धयितुम्। तेन यस्मै निर्दिशति स दानमभिनिर्वर्तयति। यजमानेन च दानं निर्वर्तयितव्यम्। तस्मात् यजमानो विभज्य निर्दिशेत्। प्रदानानां पृथक्त्वात्। भवति विभागे न शक्यः स्वेन भावेन संबन्धः कर्तुम्। तस्मात् विभज्य दक्षिणा दातव्येति।

टुप्— 'तत्र दानं विभागेन, प्रदानानां पृथक्त्वात्'। इदमपि (अधिकरणम्) उत्तरविवक्षाऽर्थम्। स्थिते एतस्मिन् विभागे नियमादयो भविष्यन्ति। (पूर्वपक्षमाह-) 'ऋत्विग्भ्यो दक्षिणां ददाति' इति अर्थविशेषणविशिष्टो ददातिर्विधीयते। ऋत्विग्भ्य इति चतुर्थ्यन्तः शब्दः। चतुर्थी च संप्रदाने। संप्रदानं च कारकम्। कारकं च क्रियायां गुणभूतम्। तत्र (गुणभूतानामविवक्षा विवक्षितबहुत्वस्यासत्त्वात् सर्वप्रदानक्रियैकं दानं कर्तव्यमिति) अविभज्य दानं प्राप्नोति, विभागस्य अचोदितत्वात्। (अतश्च अनियम इति)। उच्यते। ददातिरयम् (विधीयते)। ददातेश्च स्वस्वत्वनिवृत्तिः परस्वत्वापादनं च रूपम्। तेन एकैकं प्रति स्वस्वत्वनिवृत्तिः परस्वत्वापादनं च कर्तव्यम्। यदि समुदायमङ्गीकृत्य परित्यजेत्, तथा सति त्याग एव (केवलः) कृतो भवति, न ददातिः। तस्मात् विभज्य दानम्।

तदस्ति। येन अन्वाहार्यविभागो समुदितत्वयुक्तिर्न पुरस्क्रियेत। एवं च सर्वत्र बहुवचनबलात् समुदितेभ्य एव दाने प्रसक्ते 'तृप्तो वो विश्ववेदा विभजतु' इति मन्त्रवर्णबलात् 'आग्नीध्रे ददाति, होत्रे उद्गात्रे' इत्यादिप्रमाणबलाच्च समर्थत्वे विभज्यैव दानम्।

मण्डन— 'विभज्य दानं दक्षिणायाः।'

शंकर— 'विभज्य दक्षिणा देया।'

ज्योतिष्टोमे द्वादशशतदक्षिणायाः अर्धिनः तृतीयिनः पादिनः इति समाख्याऽनुरोधेन विभागः कर्तव्यः॥

समं स्यादश्रुतत्वात्। १०।३।१२।५२॥

भाष्यम्— ज्योतिष्टोमे समाम्नायते 'गौश्चाश्वश्चाश्वतरश्च' इति। तत्रायमर्थः समधिगतः विभज्य दातव्यमिति। इदमिदानीं सन्दिह्यते किं समो विभागः, उत कर्मकृतं वैषम्यम्, उत शब्दकृतमिति। किं प्राप्तम्? समो भागः स्यात्, अश्रुतत्वाद्विशेषस्य। यत्र विशेषो न श्रूयते, तत्र समो विभागो भवितुमर्हति। कथमिव? एकस्मै सर्वं दातव्यं प्राप्नोति, यदि अपरस्मै दातव्यं न भवति। तत्र यावति एकस्मै दीयमाने नान्यः संविभज्यते, तावदस्मै एकस्मै न दातव्यम्। अविशिष्टं दातव्यम्। एवमेकैकस्मै। तस्मात् विशेषाश्रवणात् समं देयमिति।

टुप्— समं स्यादश्रुतत्वात् इति प्रथमसूत्रपाठेन विभागोपोद्घातकं च।

अपि वा कर्मवैषम्यात्। ५४॥

भाष्यम्— अपि वेति पक्षव्यावृत्तिः। न समं स्यात्। कर्मकृतं वैषम्यं भवेत्। यो बहु कर्म करोति, तस्मै बह्वी भृतिर्दीयते। तस्मात् कर्मानुरूप्येण वैषम्यमिति।

अतुल्याः स्युः परिक्रये, विषमाऽऽख्या विधिश्रुतौ, परिक्रयाश्च कर्मण्युपपद्यन्ते, दर्शनाद्विशेषस्य तथाऽभ्युदये। ५५॥

भाष्यम्— न चैवदस्ति कर्मकृतं वैषम्यमिति। किं तर्हि? उपकारकृतम्। स उपकारः श्रुत्या विज्ञायते। तस्माच्छ्रुतिकृतं वैषम्यम्। येन आतुल्याः परिक्रये भवेयुः। विषमा हि एषामाख्या। केचिदर्धिनः, केचित् तृतीयिनः, केचित् पादिनः। येषामर्धं ते अर्धिनः। कथं च तेषामर्धं भवति? यदि तेभ्योऽर्धं दीयते। एवं तृतीयिनः पादिन इति च दीक्षाविधिश्रुतौ समाख्यायन्ते। सा परिक्रयात् कर्मकृते वैषम्ये नोपपद्यते। क्व पुनरयं विशेषो दृश्यते? अभ्युदये। अभ्युदयः इति अभ्युदयफलम्। ऋद्धिफलं द्वादशाहं ब्रूमः। 'अध्वर्युर्गृहपतिं दीक्षयित्वा ब्रह्माणं दीक्षयति, तत उद्गातारम्, ततो होतारम्। ततस्तं प्रतिप्रस्थाता दीक्षयित्वा अर्धिनो दीक्षयति, ब्राह्मणाच्छंसिनं ब्रह्मणः, प्रस्तोतारमुद्गातुः, मैत्रावरुणं होतुः। ततस्तं नेष्टा दीक्षयित्वा तृतीयिनो दीक्षयति, आग्नीध्रं ब्रह्मणः, प्रतिहर्तारमुद्गातुः, अच्छावाकं होतुः। ततस्तमुन्नेता दीक्षयित्वा पादिनो दीक्षयति, पोतारं ब्रह्मणः, सुब्रह्मण्यमुद्गातुः, ग्रावस्तुतं होतुः। ततस्तमन्यो दीक्षयति, ब्रह्मचारी वाऽऽचार्यप्रेषितः' इति अर्धिनः, तृतीयिनः, पादिनः इति द्वादशाहे अनुवादः। यदि प्रकृतौ यथासमाख्यम् अंशविभागाः, ततो द्वादशाहे दर्शनमुपपद्यते। तस्मात् अर्धादिभिः समाख्यानात् समाख्याश्रुतिकृतं वैषम्यं भवितुमर्हतीति।

सोम— पूर्वाधिकरणे विभागे प्रतिपादिते तद्विशेषजिज्ञासयैव इदं चिन्त्यते इति संगतिः।

वि— 'स विभागः समो नो वा, विशेषाश्रवणात् समः। वैषम्यं स्याद् यथाऽऽशयम्, मैवं तत् स्यात् समाख्यया॥'

भाट्ट— विभागोऽपि अवधि नियामके सर्वत्र समानः एव। प्रत्यक्षानुरूप्यादिनियामकसत्त्वे तदानुरूप्येण। सोमे समस्तदीक्षाक्रमविधायके वाक्ये 'अर्धिनस्तृतीयिनः पादिनः' इति श्रुतसमाख्याबलात् तत्कल्पनीयविभागेन प्रतिप्रस्थात्रादिप्राधान्येन अर्धादिसमाख्यायाः यौगिकत्वसिद्धत्वाच्च मुख्यानां यो विभागः (१२-१२ गावः), तदर्धं प्रतिप्रस्थात्रादीनामर्धिनाम् (६-६ गावः), तृतीयांशः तृतीयिनां नेष्ट्रादीनाम् (४-४ गावः), चतुर्थांशः (३-३ गावः) पादिनामुन्नेत्रादीनामित्येवं क्रमेण बोध्यः। अयं च द्वादशशता-

वषट् करोति वि होते सोमपीथेन ऋध्यन्ते' इति निन्दाऽर्थवादेन सोमनिषेधस्यापि उपपन्नत्वादाज्येन सह विकल्पः। तृतीयसवने त्वाज्यनिधिर्नियमार्थः। संकर्ष. २।२।१८.

* ज्योतिष्टोमे पृष्ठानि स्तोत्राणि इति पृष्ठशब्दः नामधेयम्, न गुणविधिः। भा. २।४।२।३. * ज्योतिष्टोमे 'प्रउगं शंसति, निष्केवल्यं शंसति, आज्यैः स्तुवते, पृष्ठैः स्तुवते' इति स्तुतशस्त्रयोः प्रधानकर्मत्वमेव, न गुणकर्मत्वम्। प्रधानकर्मत्वेऽपि अपूर्वजनकत्वमस्त्येव। स्तुतशस्त्राधिकरणम्। वि. २।१।५. * ज्योतिष्टोमे प्रतिपदोः 'युवं हि स्थः, एते असृग्रम्' इत्यनयोः यजमानद्वित्वबहुत्वसंबन्धिन्योः कुलाययागे सत्रे च उत्कर्षः। द्वित्वबहुत्वाधिकरणम्। भा. ३।३।५। १७–१९. * ज्योतिष्टोमे प्रवर्ग्ये प्रकृत्य श्रूयते 'न प्रथमयज्ञे प्रवृञ्ज्यात्' इति। अयं प्रवर्ग्यनिषेधः अनूचानव्यतिरिक्तकर्तृके अग्निष्टोमप्रथमप्रयोगे एव। प्रथमयज्ञः अग्निष्टोमः। 'अग्निष्टोमे प्रवृणक्ति' इति विधिः। विधिनिषेधयोरधिकारिभेदेन व्यवस्था। तथा च श्रूयते 'कामं तु योऽनूचानः स्यात् तस्य प्रवृञ्ज्यात्' इति। वि. ३।३।१७, * ज्योतिष्टोमे प्रातःसवने ऐन्द्रवायवादयो ग्रहाः, माध्यंदिने मरुत्वतीयादयः, तृतीयसवने च आदित्यादयः। ग्रहधर्मास्तु सवनत्रयेऽपि कर्तव्याः। ३।६।१९, * ज्योतिष्टोमे प्रातःसवने गायत्रं साम। बहिष्पवमाने त्रिवृत् स्तोमः, आज्येषु पञ्चदशः स्तोमः, ऐन्द्रवायवादयो ग्रहाः। माध्यंदिने च पवमानसूक्तानि त्रीणि, तदुत्तर पृष्ठस्तोत्राणि चत्वारि। तेषु सप्तदशः स्तोमः। २।४।३, * ज्योतिष्टोमे प्रातःसवने बहिष्पवमानेन स्तोष्यमाणा ऋत्विजः शालायाः बहिः प्रसर्पन्ति 'अध्वर्युं प्रस्तोता संतनुयात्, प्रस्तोतारमुद्गाता, उद्गातारं प्रतिहर्ता, प्रतिहर्तारं ब्रह्मा, ब्रह्माणं यजमानः, यजमानं प्रशास्ता' इति पुरतो गन्तुः कच्छं गृहीत्वैव (इह तु याज्ञिकानां रूढिः। स्पर्श एव तु विहितः) पृष्ठतोऽन्यो गच्छति इति पिपीलिकापङ्क्तिवत् प्रसर्पणम्। तत्रापच्छेदः स्पर्शनाशः विच्छेदः न केनापि कर्तव्यः। ६।५।१७, * ज्योतिष्टोमे 'प्रायणीयस्य निष्काले उदयनीयमनुनिर्वपति' निष्कासे निर्वापोऽयमर्थकर्म न कर्मान्तरं नापि प्रतिपत्तिः। भा. ११।२।१६।६६–६८. * ज्योतिष्टोमे प्रायणीये अदितिदेवताकचरावपि प्रदेयधर्मा न कर्तव्याः। आदित्यपयोऽधिकरणम्। वि. ९।४।१०.

सू. ज्योतिष्टोमे प्रायणीया पूर्वशंय्वन्ता, आतिथ्या च पूर्वेडाऽन्ता॥

प्रतिषेधार्थवत्त्वाच्चोत्तरस्य परस्तात् प्रतिषेधः स्यात्। १०।७।१३।४०॥

भाष्यम्— इदमेवोदाहरणम् 'शंय्वन्ता प्रायणीया संतिष्ठते, न पत्नीः संयाजयन्ति' इति। 'इडाऽन्ता आतिथ्या संतिष्ठते, नानुयाजान् यजति' इति। तत्र द्वौ शयू, द्वे इडे इति। तत्रायमर्थः सांशयिकः किं परेण शंयुना शंय्वन्ता संतिष्ठते, उत पूर्वेण। एवं किं परया इडया इडाऽन्ता संतिष्ठते, उत पूर्वेणेति। किं प्राप्तम्? पूर्वाभ्यां संस्थितिः स्यादिति। कुतः? पूर्वाभ्यामपि संस्थापयता श्रुत्यर्थः कृतो भवतीति। कृते च शब्दार्थे कस्मादुत्तरान् पदार्थान् कुर्यादिति। उच्यते। उत्तराभ्यामपि संस्थापयन् शब्दार्थमेव करोति। तत्र अप्रमाणं पूर्वाभ्यां संस्थापयन् शब्दार्थं परिच्छिन्द्यात्। शब्दार्थं परिच्छेत्स्यामः। यदि उत्तराभ्यामपि संस्थापयेत्, शास्त्रो बाध्यति, अतस्ताभ्यां संस्थापयन् भूयांसमुपकारं लप्स्यते। तस्मादनियमः, पूर्वाभ्यामुत्तराभ्यां वेति। एवं प्राप्ते, ब्रूमः। उत्तराभ्यामिति। कुतः? प्रतिषेधार्थवत्त्वात्। तदेव पत्नीसंयाजस्य अनुयाजस्य च प्रतिषेधोऽर्थवान् भवति, यदि उत्तराभ्यां न संस्थाप्येत, नैव पत्नीसंयाजानुयाजौ प्राप्नुतः। तस्मादुत्तराभ्यामिति। ननु च प्रतिषेधस्य नित्यानुवादत्वमुक्तम्। उच्यते। न तथा गतौ सत्यां न्याय्यम्। तस्मान्न पूर्वाभ्यामिति। उच्यते। लिङ्गमेतदुपदिष्टम्। न च लिङ्गं साधकं भवति। प्राप्तिरुच्यतामिति। परोऽपि हि लिङ्गस्य अर्थवत्ता स्यात्। अत्रोच्यते। इयं प्राप्तिः, यदा विशेषो नावगम्यते, संयुज्यते यस्या अङ्गरीतेः, सा शंय्वन्ता। एवम् इडाऽन्ता। सैषा अङ्गरीतिर्विधीयते शंय्वन्ता, इडाऽन्ता च। सा च विधीयमाना अन्यान्यङ्गानि परिवर्तते। कथम्? शंय्वन्तया अङ्गरीत्या, इडाऽन्तया च संस्थि-

मानया एकवाक्यतायां च सत्याम् अभ्यात्यङ्गानि प्राप्य-द्रक्ष्यन्ते । अनाकाङ्क्ष्यमाणानि च नैकवाक्यतां यान्ति । अतः अप्राप्तानीति गम्यते । ननु एवं सति पूर्वाभ्यां शंय्विडाऽन्तता न कंचिदर्थम् अभ्यधिकं साधयतीति । उच्यते । नैष दोषः । नहि तस्यार्थे पृथग् वाक्यम्, यस्यानर्थक्यं परिजिहीर्ष्यते । अस्य वाक्यस्य उत्तरान्तता प्रयोजनम् । तस्माद् उत्तराभ्यां संस्था स्यादिति ।

टुप्— शंय्वन्तता अङ्गरीतिर्विधीयते । सा च (कल्पनोपकारा विधीयमाना) आज्यभागवत् निराकाङ्क्षी-करोति प्रायणीयाम् । तस्यां च ( विधीयमानायाम् ) द्वे शंय्वन्ते ( अविशेषेण ) परिप्लवेते । तत्र पूर्वस्याम् ( शंय्वन्ततायाम् ) गृह्यमाणायामुत्तरस्य शंयोः प्राक् ये पदार्थाः कर्तव्या आम्नाताः, ते बाध्येरन् । उत्तरस्यां तु ( गृह्यमाणायां ) न किंचित् बाधितं भवति, शब्दार्थश्च संपादित एव । पत्न्यनुयाजप्रतिषेधार्थवत्त्वं च ( एवं सति भविष्यति । इतरथा अनुवादमात्रमनर्थकं स्यात् ) प्रतिपत्तिश्चानुवादः ।

प्राप्तेर्वा पूर्वस्य वचनादतिक्रमः स्यात् । ४१ ॥

भाष्यम्— नैतदस्ति, उत्तराभ्यां शंय्विडाभ्यां संतिष्ठते इति । पूर्वाभ्यामेव । कुतः ? नेह शंय्वन्तताया अङ्गरीतेर्भावो विधीयते, इडाऽन्तायाश्च । किं तर्हि ? एषा निर्धीयते । शंय्विडाऽन्ता संतिष्ठते । प्रवर्तमाना शंय्विडाऽन्ता च सता संतिष्ठते, न प्रवर्तते । तिष्ठत्येव पर्यंन्तु संतिष्ठतीत्युच्यते । तत्र पूर्वाभ्यामुत्तराभ्यामिति विरोधे अवगम्यमाने पूर्वाभ्यां च न प्रवर्तेत उत्तराभ्यां च । तदेव तत्र पूर्वाभ्यामेव संस्थाने कृतं भवति । प्रतिषेधश्च नित्यानुवाद इत्युक्तम् ।

टुप्— ' प्राप्तेर्वा पूर्वस्य वचनादतिक्रमः स्यात्' ( इति लिखिते सूत्रम् ) । नात्र अङ्गरीतिर्विधीयते । किं तर्हि ? संपूर्वस्तिष्ठतिः । एवं ( धात्वर्थविधानात् ) भूयर्थः अनुगृहीतो भविष्यति । इतरथा शंय्वन्तकाः प्रायणीयायाश्च तदन्त्यं कर्तुं भविष्यति स्यार्थेन, तत्र अत्यन्तं वाक्यं स्यात्, निर्विषयाऽपि श्रुतिः उत्सृज्येत ( नहि तदा धात्वर्थस्य विधानम्, न च तस्य अन्यत्र, नापि तत्र अन्यस्य । तेन संतिष्ठतिरेव उपरमाभिको विधीयते ) । संतिष्ठतिविधाने ( च ) चोदकः अङ्गानि प्रापयति ( एव ) । तत्र ( एवं सति ) पूर्वा शंय्वन्ततां अति-क्रम्य यो गच्छेत्, तेन आगमो बाधितः स्यात् (तस्मात् पूर्वेणैव शंयुना शंय्वन्तता, ततः परेषां बाधः) ।

प्रतिषेधस्य त्वरायुक्तत्वात्, तस्य च नान्य-देशत्वम् । ४२ ॥

भाष्यम्— इतश्च पूर्वाभ्यां ( शंय्विडाभ्यां ) परं न कर्तव्यमिति । कुतः ? त्वरायुक्तो हि प्रतिषेधोऽर्थ-वादः । कथम् ? 'देवासुराः संयत्ता आसन् । ... देवाः सम्यत्यागतान्, अर्धमसुराः । तदसुरैः सह मनुष्य-मानं देवानपाक्रामत् । ते प्रायणीयं निरवपन् । तत् संस्थितमासीत्, अथासुराः पराभवन्, ततो यज्ञदायते इति । तदेतं कृत्वा त्वरितमाद्रियन्ते ' इति । तथा 'आतिथ्यं निरवपन्, तदिडाऽन्तमासीत्, अथासुराः पराभवन्, ततो यज्ञदायते इति । तदिडाऽन्तामेव कृत्वा त्वरितमाद्रियन्ते ' इति । त्वरायुक्तश्च पूर्वमपेक्षते नोत्तरम् । तस्मात् नान्यो देशः प्रतिषेधस्य । तस्मात् पूर्वाभ्यामेव शंय्विडाभ्यां परं न कर्तव्यमिति ।

सोम— पूर्वोक्तसूत्रस्याक्षेपात् संगतिः ।

सूत्रार्थस्तु— पत्नीसंयाजानुयाजप्रतिषेधार्थत्वात् उत्तरस्य शंय्विडस्य परस्तात् यद् कर्तव्यं तस्य प्रतिषेधः स्यात् इति ।

वि— 'तत्रैव शंय्विडे पूर्वे परे वा स्तोऽथवा । परे एवाऽन्ता पूर्वे एवा, ऽऽद्यो द्विविधश्रुतेः ॥ निषेध-स्यार्थवत्त्वाय परे एवा, ऽनुवादतः । पूर्वोक्तमवगम्यतां याति पूर्वे एवाविरोधतः ॥'

भाट्ट— प्रकृतौ द्वौ शंयू पत्नीसंयाजाना पुरस्तादेकः परस्तादपरः । तथा इडे अपि अनूयाजाना पुरस्तादेका पश्चादपरा । तत्र पूर्वाभ्यां प्रायणीयातिथ्ययोः शंय्विडा-ऽन्तता, उतोत्तराभ्यामिति संदेहे, 'सर्वमिदं पत्नीय-समुच्चयति' इतिवत् अत्र प्रायणीयाऽऽत्यनुवादेन शंय्विडाऽन्ताङ्गरीतिमात्रविधानात् तस्याश्च कल्पनोपकार-कतया आज्यभागवत् चोदकप्राप्तिनिरपेक्षतया तदुपरि-तनाङ्गनिवृत्तिरर्थसिद्धा । अत एव संतिष्ठतिरर्थमात्रानुवादः साधुत्वार्थः । तत्र च तद्गुणसंविज्ञानबहुव्रीहिणा शंय्विडा-

ऽन्तपदार्थविधानात् पूर्वशंय्विडोत्तरपदार्थानामपि तत्र शंय्विडाऽन्तत्वाविरोधेन विधानावगतेः तदुत्तरभाविनामेव निवृत्तिः । अत एव पत्नीसंयाजादीनामपि उत्तरशंय्विडापूर्वभाविपदार्थत्वात् परिसंख्याऽर्थो 'न पत्नीः संयाजयन्ति' इत्यादिः तत्पर्युदासविधया शंय्विडाऽन्तत्वविरोधेनान्यथाऽऽपन्नं सत् अर्थवान् । अतः पत्नीसंयाजानुयाजवर्जम् उत्तरशंय्विडाऽन्तं सर्वं कार्यम् । इति प्राप्ते, नात्र शंय्विडाऽन्तात्पूर्वोत्तरविधिः । तथात्वे धात्वोः अत्यन्तपाराध्यापत्तेः । अपितु शंय्विडाऽन्तत्वे निमित्ते प्रायणीयाऽऽद्युद्देशेन प्रयोगोपरमरूपा संस्थैव धात्वर्थो विधीयते । पत्नीयजनवाक्येषु तु पर्वाभिकरणे निमित्ते प्रयोगोपरमरूपोत्सर्गविधाने यागस्यापि अकरणापत्तेः तत्र त्यागरूपोत्सर्गानुवादेन पर्वाभिकरणान्तत्वरीतिविधानमेवाश्रितम् । प्रकृते तु प्रायणीयविधिलिप्सया प्रयोगोपरमाधेय शंय्विडाऽन्तत्वे निमित्ते विधानात् पूर्वयोरपि शंय्विडयोः कृतयोर्निमित्तस्य संजातत्वेन कर्तव्य एवोपरमः । पत्नीसंयाजादिप्रतिषेधस्तु नित्यानुवादत्वेन अर्थवादमात्रम्, औचित्येन शंय्विडाऽन्तानुगुण्यर्थं न विरुध्यते । अतः पूर्वाभ्यामेव शंय्विडाऽन्तता ।

मण्डन— 'पूर्वशंय्वोरपरमो भवेः स्यात् ।'

शंकर— 'साऽन्तता पूर्वतो भवेत् ।'

॥ ज्योतिष्टोमे प्रायणीया शंय्वन्तैव आतिथ्या च इडाऽन्तैव ॥

शंयुविडान्तत्वे विकल्पः स्यात्, परेषु पत्न्यनुयाजप्रतिषेधोऽनर्थको हि स्यात् । १०।७।१२।३८॥

भाष्यम्— ज्योतिष्टोमे श्रूयते 'शंय्वन्ता प्रायणीया संतिष्ठते, न पत्नीः संयाजयन्ति' इति । 'इडान्ता आतिथ्या संतिष्ठते, नानुयाजान् यजति' इति । तत्र संशयः प्रायणीया किं शंय्वन्ता कृत्स्नसंस्था वा, उत शंय्वन्तैव । तथा आतिथ्या किमिडान्ता कृत्स्नसंस्था वा, उत इडान्तैव । किं प्राप्तम् ? शंय्विडान्तत्वे विकल्पः स्यादिति । कुतः ? पत्न्यनुयाजस्य प्रतिषेधात् । 'शंय्वन्ता संतिष्ठते' इति तावत् व्यक्तमेव वचनम् । अपरमपि वचनम्, न पत्नीः संयाजयन्ति इति । यदि शंय्वन्तैव नित्यम्, पत्न्यनुयाजप्रतिषेधोऽनर्थकः स्यात् । तस्मात् पत्न्यनुयाजप्रतिषेधेन कृत्स्नसंस्थानमुच्यते । कथम् ? प्रायणीयायां पत्नीसंयाजान् केवलान् न करोति, नान्यं न करोतीति । तथा आतिथ्यायामनुयाजान् केवलान् न करोति, नान्यं न करोतीति ; अकर्तव्यपरिसंख्यानार्थमेव इदं भिन्नमेव वाक्यद्वयं पूर्वाभ्यां वाक्याभ्यामिति ।

नित्यानुवादो वा कर्मणः स्यादशब्दत्वात् । ३९॥

भाष्यम्— न ह्येतदस्ति, विकल्प इति । एक एव कल्पः शंय्विडाऽन्तत्वम् । तत्र हि विस्पष्टं वचनम् । द्वितीयः कल्पो नास्त्येव । नहि तस्य वचनमस्ति । न च पत्न्यनुयाजप्रतिषेधः कृत्स्नसंस्थानवाचकम् । किं तर्हि ? नित्यानुवादः । नित्यप्राप्तमनुवदति । यथा 'नान्तरिक्षे न दिवि अग्निश्चेतव्यः' इति । पूर्वाभ्यां सह एकवाक्यत्वेप अनयोः 'शंय्वन्ता प्रायणीया संतिष्ठते, न पत्नीः संयाजयन्ति' इति । तथा 'इडाऽन्ता आतिथ्या संतिष्ठते, नानुयाजान् यजति' इति । अत्र पदलाघवेन स्तुतिः । ननु प्रतिषेधवचनः कृत्स्नसंस्थानं वदेत्, स एव हि श्रुतस्वार्थाभ्योऽर्थो दोषः, स एव अश्रुतकल्पनायाम् । तस्मात् शंय्विडाऽन्तत्वमेव स्यादिति ।

शा— 'वाक्यभेदो हि न न्याय्यो विकल्प-श्चाष्टदोषभाक् । त्रिदोषा परिसंख्या च तस्मात् स्तुत्यैकवाक्यता ॥' तस्मात् नियमेन शंय्विडाऽन्ते एव प्रायणीयाऽऽतिथ्ये ।

सोम— यथा अनुवादस्य आनर्थक्यात् निषेधवचनं परिसंख्यापकम्, एवम् 'न पत्नीः संयाजयन्ति' इत्यादिकमपि इत्युत्थानात् संगतिः । सूत्रे आनर्थक्यं स्यात् कृत्स्नसंस्थाविधिप्रभावे पत्नीयाजनिषेधवचनम् अनुवादमात्रमनर्थकं स्यात् इत्यर्थः ।

वि— 'प्रायणीयाऽऽतिथ्ययोः किं विकल्पः शंय्विडाऽन्तयोः । नियमो वा, विकल्पः स्यान्निषेधपरिसंख्यया ॥ शंय्विडाऽन्तत्ववाक्याभ्यां नियमो विधिमात्रतः । नित्यानुवादो नञ्वाक्यं दोषबाहुल्यमन्यथा ॥'

भाट्ट— ज्योतिष्टोमे 'शंय्वन्ता प्रायणीया संतिष्ठते, न पत्नीः संयाजयन्ति' 'इडाऽन्ता आतिथ्या संतिष्ठते, नानुयाजान् यजति' इति श्रुतम् । तत्र किं प्रायणीयाऽऽतिथ्ययोः शंय्विडाऽन्तत्वं नियतम्, उत पक्षे पत्नीसंयाजा-

प्रयाजवर्जे कृत्स्नसंख्यत्वमपीति चिन्तायाम्, आघाराज्याभ्यां दर्विहोमाऽन्तत्वे विहिते तदुत्तरभाव्यङ्गपरिसंख्याऽवगतेः सर्वेषां तेषामकरणे प्राप्ते, पत्नीसंयाजानुयाजमाने अकरणपुनःश्रवणं तद्भिन्नाङ्गेषु सूक्तवाकशंयुवाकादिषु अकरणपरिसंख्याऽर्थम्। अतश्च तेषामपि पक्षे करणम्। इति प्राप्ते, अकरणवोधकनानावाक्य अन्यथात्वेन आम्नायपरिसंख्यायायोगात् नामपरिसंख्याया च नैदोष्यापत्तेः अष्टदोषदुष्टविकल्पापत्तेश्च दर्विहोमाऽन्तत्वमेव नियतम्। एवं च 'न पत्नीः संयाजयन्ति' इत्यादेर्नित्यानुवादत्वाद्दिना तदेकवाक्यत्वेनैव उपपत्तेर्न वाक्यभेदाङ्गीकारोऽपि।

मण्डन—'कर्णवमात्विष्वनिडाऽन्तमेव।' १९.

शंकर—'दर्विडाऽन्तादि नित्यं स्यात्।' १९.

* ज्योतिष्टोमे प्रायणीयाऽऽदिषु दैष्टिकं जागरणं दीक्षाजागरणादन्यकाले पृथक् कर्तव्यम्। जागरणन्यायः। वि. १२।१।८.

ज्योतिष्टोमे प्रायणीयाऽऽदिषु दार्शिकं व्रत नानुष्ठेयं प्रसङ्गात् सिद्धेः॥

तथा व्रतमुपेतत्वात्। १२।१।११।२०॥

भाष्यम्—तथैव दर्शपौर्णमासिकं व्रतं चोदकप्राप्तं तथैव न क्रियते, यथा अन्वाधानम्, उपेतत्वात्। न ह्युपेतमनपवृज्य शक्यं पुनरुपेतुम्। अनाशस्य हि प्रापणमुपगमनम्। तत् प्राप्तस्य न शक्यम्।

निमित्तविघाताच्च। २१॥

भाष्यम्—'अग्ने व्रतपते व्रतं चरिष्यामि' इति चरतो वचनं विप्रतिषिद्धं वर्तमानस्य भविष्यत्त्वः।

सत्यवदिति चेत्। २२॥

भाष्यम्—अथ मन्यसे कस्मान्न भवति। यथा सत्यवचनं व्रतं पुरुषधर्मत्वादनुवर्तमानमपि दर्शपूर्णमासयोः पुनरुपेयते इति। स्थितया प्रतिज्ञया सूत्रेण चोदयति।

न, संयोगपृथक्त्वात्। २३॥

भाष्यम्—नैतदनेन तुल्यम्, संयोगपृथक्त्वात्। अत्र पुरुषसंयोगः कर्मसंयोगश्च। पुरुषार्थमुपेतं कर्मणि पुनरुपेयते। इह तु संयोगपृथक्त्वात् सोमार्थमुपेतमैष्टिकार्थे पुनरुपेयते इति। नेह पुनरुपगमनेनार्थः। यत् सोमार्थे तदेवेतरत्र प्रसङ्गात् कार्यं साधयति। तदिहापि तदेव साधयिष्यति। साधयेत्, यदि कर्मार्थता तस्य ज्ञाता भवेत्। सा त्विहैव ज्ञाप्यते। ऐष्टिकानां तु प्रकृतौ ज्ञाता। तस्मात् सत्यवदित्यदृष्टान्तः। कर्माङ्गत्वज्ञानस्य तु प्रयोजनं प्रायश्चित्तविशेषस्तृतीयेऽध्याये व्याख्यातः।

दी—प्रकृतं व्रतोपायनं कर्तव्यं नेति विचारे, कर्तव्यमिति प्राप्ते, सोमार्थेऽपि तेनैव व्रतेन सत्यवदनब्रह्मचर्यादिसंकल्परूपेण भावनायाः अविशिष्टेन प्रसङ्गात् सिद्धेः, न पुनरुपायनं कर्तव्यम्।

सोम—अन्वाधानस्य दृष्टार्थत्वात् अकर्तव्यत्वेऽपि व्रतोपायनस्य अदृष्टार्थत्वात् कर्तव्यम्, इत्युपिपत्तेः संगतिः।

वि—'व्रतोपायनमेष्टव्यं न वा, चोदकतोऽस्ति तत्।, उपेतस्यापरित्यागे विरोधान्नास्ति तत् पुनः॥'

भाट्ट—दर्शपूर्णमासयोरेव 'अग्ने व्रतपते' इति मन्त्रेण व्रतग्रहणमाम्नातम्। व्रतं नाम सत्यवदनब्रह्मचर्यादिसंकल्परूपम्। सत्यवदनं हि 'न वै सत्यमेव वदेत्' इति प्रातस्ये विहितम्, स इति प्रकृतवानेन क्रतुप्रयुक्तपुरुषधर्मः। अत एव 'नानृतं वदेत्' इति शुद्धक्रतुधर्मत्वात् संयोगान्तरम्। अन्यतरेणान्यतरस्य वैयर्थ्यशङ्का तु वाच्याऽन्तरीयत्वादपास्ता। एवम् 'स ब्रह्मचारी अमधुमांसाशी स्यात्' इति ब्रह्मचर्यनियमोऽपि ज्ञेयः। स्त्र्युपगमनमांसप्रतिषेधस्तु वाक्याऽन्तरीयः इति न विरोधः। तदिदमपि व्रतं धोमादेष्टिपशुभादिषु न कार्यम्, दीक्षणीयोत्तरं सोमार्थे कृतेनैव दीक्षारूपव्रतग्रहणेन आऽवभृथमविशिष्टेन प्रसङ्गसिद्धेः। न चैष्टिकसौमिकव्रतकरणयोः विजातीयत्वादुपग्रहणयोः कथं प्रसङ्गः, विजातीययोरपि तन्त्रेण परिपालितयो विजातीयादृष्टजनकत्वोपपत्तेः। अत एव सत्यवदननियमादिपरिपालनस्य तन्त्रत्वेऽपि सोमार्थे कृतेनैव संकल्पेन तत्कार्यसिद्धेः न पृथक्संकल्पकरणम्, सकृत् संकल्पितस्य पुनःसंकल्पवैयर्थ्यात्, प्रवृत्तवर्तमानदशायां 'व्रतं चरिष्यामि' इति मन्त्रलिङ्गानुपपत्तेश्च। न च यावज्जीवं पुरुषार्थे सत्यवदननियमसंकल्पे कृतेऽपि यथा दर्शपूर्णमासज्योतिष्टोमादौ पुनः संकल्पकरणम्, तथा

सोमार्पितया कृतेऽपि तत्संकल्पे तदुद्देश्यादिषु पुनस्तत्संकल्पकरणे न विरुध्यते इति वाच्यम् । पुरुषार्थतया कृतस्यापि संकल्पस्य क्रत्वर्थतया पुनःकरणे बाधकाभावात्, सत्यवदननियमादावेऽपि ब्रह्मचर्यादिसाधारणस्वसामान्यसंकल्पे बाधकाभावाच्च । प्रकृते तु सामान्यसंकल्पस्यैव कृतत्वात् इष्टयाद्यर्थे पुनःकरणे विरुद्धमिति विशेषः । न च एवमपि सोमार्थस्य व्रतस्य कर्तृसंस्कारद्वारा अङ्गप्रधानसाधारणतया इष्ट्याद्यङ्गत्वस्यापि सत्वात् महावेदिवदीपदेशिकेन व्रतसंकल्पेन ऐष्टिकस्य बाध एव स्यात् न प्रसङ्गः इति वाच्यम् । 'दीक्षाः सोमस्य' इति वचनेन यमनियमपरिमितरूपव्रतसंकल्परूपायाः दीक्षायाः प्रधानमात्रार्थत्वेन अङ्गसाधारण्याभावात् । अतो युक्त एव प्रायणीयाऽऽदिषु प्रसङ्गः । दीक्षणीयायां तु सोमार्थव्रतसंकल्पस्य दीक्षणीयोत्तरत्वात् प्रसङ्गानुपपत्तेर्युक्तो ऐष्टिकव्रतसंकल्पादिकर्षौ । बोधायनादयस्तु तस्यामपि तौ नेच्छन्ति ।

मण्डन-- 'सोमाङ्ग इष्टौ न पुनर्व्रतप्रसङ्गः ।'

शंकर-- 'तथा व्रतोपायनं च ।' १२.

० ज्योतिष्टोमे फलचमसः ( क्षत्रियवैश्ययोः ) । फलचमसाधिकरणम् । भा. ३।५।१६।४०-५१. ■ ज्योतिष्टोमे बहिष्पवमानं नाम स्तोत्रं प्रातःसवने । वि. १।८।३.

■ ज्योतिष्टोमे बहिष्पवमाने ( उद्गात्रादेः ) अपच्छेदे प्रायश्चित्तम् । अपच्छेदः विच्छेदः । भा ६।५।१७-२१। ४९-५६, ० ज्योतिष्टोमे 'बार्हद्गिरं ब्राह्मणस्य ब्रह्मसाम कुर्यात्, पार्थुरश्मं राजन्यस्य, रायोवाजीयं वैश्यस्य' । अत्र अभीवर्तो ब्रह्मसाम इति नित्यार्थम् । इतराणि तु नैमित्तिकानि । ( ब्रह्मसाम ब्राह्मणाच्छंसिशस्त्रार्थं साम ) । ४।१।२।४.

■ ज्योतिष्टोमे बृहतीपिठरपङ्क्त्योरेव प्रग्रथनेन संपादिते वार्हते तृचे रौरवयौधाजयसाम्नोर्गानम् ॥

प्रागाथिकं तु । ९।२।६।२५ वर्णकं २ ॥

भाष्यम्— एवं वा । अस्ति ज्योतिष्टोमः 'ज्योतिष्टोमेन स्वर्गकामो यजेत' इति । तत्र 'त्रिच्छन्दा आवापो माध्यंदिनः पवमानः पञ्चसामा, काकुभमहीयवे गायत्रे तृचे गायत्रः, रौरवयौधाजये बार्हते तृचे, औशनमन्त्यं त्रिष्टुप्सु' इति । यदेतत् रौरवं यौधाजयं च द्वे सामनी, तयोः पूर्वा बृहती 'पुनानः सोम धारयापो वसानो अर्षसि । आ रत्नधा योनिमृतस्य सीदस्युत्सो देव हिरण्ययः ॥' इति । उत्तरा विष्टारपङ्क्तिः 'दुहान ऊधर्दिव्यं मधु प्रियं प्रत्नं सधस्थमासदत् । आपृच्छ्यं धरुणं वाज्यर्षसि नृभिर्धूतो विचक्षणः ॥' ( इति ) तत्र संशयः किमन्ययोः उत्पत्तिबृहत्योः आगमं कृत्वा समासु गानं कर्तव्यम्, उत याऽसौ पूर्वा बृहती उत्तरा च विष्टारपङ्क्तिः, तयोः प्रग्रथनेन तृचकर्म कृत्वा बृहतीकारं गानं कर्तव्यमिति । किं प्राप्तम् ? अन्ये बृहत्यौ आगमयितव्ये इति । कुतः 'एवमृचामुत्पत्तिरर्थवती भविष्यतीति । एवं प्राप्ते ब्रूमः । प्रागाथिकं तु । तुशब्दः पक्षं व्यावर्तयति । प्रागाथिकं सामगानं कर्तव्यं नोत्पत्तिबृहत्यौ आगमयितव्ये । प्रकृतयोरेव ग्रथनं कर्तव्यम् । एवं हि स्मरन्ति 'बार्हतः प्रगाथः' इति । उत्पत्तिबृहत्योरानीयमानयोः प्रगाथो न स्यात् । स्मृतिर्बाध्येत । तस्मात् प्रकृतयोः ग्रथनं कर्तव्यमिति ।

स्वे च । २६ ॥

भाष्यम्-- एवं च स्वे छन्दसि प्रकृते गानं भविष्यति । न प्रकृतहानम् अप्रकृतप्रक्रिया । तस्मादपि नान्ये बृहत्यौ आगमयितव्ये इति ।

प्रगाथे च । २७ ॥

भाष्यम्— एवं च प्रगाथशब्द उपपन्नो भविष्यति । स हि प्रकर्षे गानस्य भवति । प्रकर्षश्चेह पुनः पादे उपादीयमाने भवति । तस्मादपि नान्यबृहत्यौ उपादातव्ये इति ।

लिङ्गदर्शनाच्च्यतिरेकाच्च । २८ ॥

भाष्यम्-- व्यतिरेकेण च लिङ्गं दर्शयति । किं लिङ्गं भवति ? एवमाह, 'षट्त्रिष्टुभो माध्यंदिनं सवनम्' इति । कथं कृत्वा लिङ्गम् ? यदि ग्रथनेन बृहतीकारं गानं क्रियते, ततः सर्वस्मिन् सवने षट् ऋचः समाम्नाताः, ताः षट्त्रिष्टुभो भवन्ति । इतरथा उत्पत्तिबृहत्योः आनीयमानयोः अभ्यधिका भवेयुः । तदिदं निर्दिश्यते 'गायत्रामहीयवे गायत्रे तृचे गायत्रः' ताः षड् गायत्र्यः । 'रौरवयौधाजये बार्हते' ता अपि षड् बृहत्यः । 'औशनमन्त्यं त्रिष्टुप्सु'

ता अपि तिस्रस्त्रिष्टुभः । अथ होतुः पृष्ठे बृहति गर्भंकृते वा मरुद्दशस्तोमे क्रियमाणे पञ्च बृहत्यो भवन्ति । द्वादश च ककुभः । कथम् ? एषा हि तत्र विष्टुतिः 'पञ्चभ्यो हिं करोति स तिसृभिः, स एकया, स एकया । पञ्चभ्यो हिं करोति स एकया, स तिसृभिः, स एकया । सप्तभ्यो हिं करोति स एकया, स तिसृभिः, स तिसृभिः' इति । तत्र बृहतीभिस्तिसृभिः प्रथमम् एकया च ककुभा पुनश्च एकया ककुभा । ततः पुनरेकया बृहत्या तिसृभिः ककुब्भिः, एकया च ककुभा । एवं चतस्रो बृहत्यः षट्ककुभः । ततः पुनरेकया बृहत्या, पुनश्च तिसृभिः ककुब्भिः, पुनश्च तिसृभिः ककुब्भिः इति । एवं पञ्च बृहत्यः द्वादश ककुभः इति । ताभिश्च बृहतीभिः सह एकादश बृहत्यो भवन्ति । तत्र, पञ्च गायत्रीणां चतस्रो गायत्र्यः द्वादशभिः ककुब्भिः द्वादश बृहत्यो भवन्ति, एवं त्रयोविंशतिर्बृहत्यः । ततो वामदेव्ये सप्तदश गायत्र्यः, पावमानीभ्यां द्वाभ्यां गायत्रीभ्याम् अवशिष्टाभ्यां सह एकोनविंशतिगायत्र्यो भवन्ति । ततो नौधसकालेययोः एकत्र सप्तदश बृहत्यः, एकत्र सप्तदश, तत्र चतुस्त्रिंशत् । पूर्वोक्ताभिः त्रयोविंशत्या बृहतीभिः सप्तपञ्चाशत् बृहत्यो भवन्ति । याश्च एकोनविंशतिगायत्र्यः, ताश्च सप्तपञ्चाशता गायत्र्यादेः सह सप्तपञ्चाशत् बृहत्यः सप्तपञ्चाशत् त्रिष्टुभो भवन्ति । पावमानीभिः त्रिष्टुब्भिः सह षष्टित्रिष्टुभः इति सिद्धं भवति ।

अथ बृहद्रथंतरयोः समानककुभोत्तमः क्रियते, तयो याः सवने समाम्नाताः, न ताः षष्टिर्भवन्ति । ये ते द्वे सवने ककुभौ असमाम्नाते आनीयेते नयोर्वृहदकृत्वः प्रयोगः । तेन सा षष्टिः पूर्यते । याश्च ऋचः सवने समाम्नाताः, ता इह सवनशब्देनोच्यन्ते, न कर्मणि सवनशब्दप्रयोग. । तत्र हि त्रिषु सवनेषु बहवः त्रिष्टुभो भवेयुः । न षष्टित्रिष्टुभो माध्यंदिनं सवनमिति । तस्मात् याऽसौ पूर्वा बृहती उत्तरा च विशारपङ्क्तिः, तत्र प्रयत्नं कृत्वा गातव्यमिति ।

टुप्—'षष्टित्रिष्टुभो माध्यंदिनं सवनम्, (इत्येतत् दर्शनं प्रयत्ने अवकल्पते, नोत्पत्तिबृहत्योः आनयने) । 'न अत्र कर्मणि सवनशब्दः' ('न कर्मणि सवनशब्दप्रयोगः' इति तु भाष्यवाक्यं दूरस्थम् । तत् व्याचष्टे–) यदि कर्मणि (कर्माङ्गभूतासु ऋक्षु) सवनशब्दः (वर्तेत) तथा सति (सवनशब्दस्य सवनत्रयवाचित्वात्) ज्योतिष्टोममात्रे बहुनः न माध्यंदिनेन (शब्देन) विशेषः श्रूयते । तत्र अयं प्रयोगः (एव) न स्यात् ('षष्टित्रिष्टुभो माध्यंदिनं सवनम्' इति, बह्वीनां त्रिष्टुभां भावात्) । यदि सवनशब्दो न कर्मणि (वर्तते किन्तु लक्षणया सवनाङ्गभूतासु ऋक्षु), तथा सति (त्रिष्टुप्शब्दस्य सवनशब्देन) सामानाधिकरण्यमुपपद्यते । यदि च (त्रिष्टुप्शब्दस्य) लक्षणया कर्मणि सवनशब्दः (वर्तेत षष्टित्रिष्टुप्संबन्धि माध्यंदिनं सवनमिति) तथा सति आग्नेयीने शैत्रे औद्गात्रे च बहवः त्रिष्टुभो भवेयुः (माध्यंदिने सवने), तथा सति 'षष्टित्रिष्टुभो माध्यंदिनं सवनम्' इति (प्रयोगः) न स्यात् । (तस्मात् याः सामवेदे माध्यंदिनप्रकरणे समाम्नाता ऋचः तदभिप्रायमिदं वचनम्) । अपिच 'षष्टित्रिष्टुभो माध्यंदिनं सवनम्' इति सवनशब्दः (कर्माङ्गभूतासु) ऋक्षु ध्रुवमात्रः आम्नातासु (एव) वर्तते । यदि च उत्पत्तिबृहत्यौ आनीयेयाताम्, (ततः) दाशतयीभ्यः आगमः स्यात्, (तत्र) तयोः प्रकरण-संबन्ध. कर्तव्यः । न च प्रमाणमस्ति । प्रगाथसामर्थ्याच्च अवश्यं प्रयत्नं कार्यम् । तथा उत्पत्तिबृहत्योः आनीय-मानयोः 'षष्टित्रिष्टुभ.' इति असंबद्धम् (स्यात्,) प्रगाथवचनं च (असंबद्धं स्यात्) ।

सोम—माध्यंदिनसवने पवमानस्तोत्रमेकं, चत्वारि पृष्ठानि इत्येवं पञ्च स्तोत्राणि । तत्र पवमानः पञ्चदश-स्तोमः, पृष्ठानि सप्तदशस्तोमकानि । तथाच ज्योतिष्टोमेऽ... । तासां काश्चित् पठिताः, काश्चित् प्रग्रथन-लब्धाः काश्चिदभ्यासलब्धाः । तत्र द्वादश ककुभः अष्टाविंशत्यक्षराः, त्रयोविंशतिर्गायत्र्यः चतुर्विंशत्यक्षराः, पञ्च-चत्वारिंशत् बृहत्यः षट्त्रिंशदक्षराः, तिस्रः त्रिष्टुभः चतुश्चत्वारिंशदक्षराः । तेन द्वादशापि ककुभः द्वादशभि-र्गायत्रीभिः संयोजिताः सत्यः द्वादश त्रिष्टुभः संपद्यन्ते । एवं च विरहा अष्टौ गायत्र्यः अवशिष्टाः । अत्रशिष्टाः पञ्चदश गायत्र्यः, तासां पञ्चचत्वारिंशत् पादाः ।

एवमाद्याभिः तिसृभिः त्रिष्टुब्भिः षष्टिस्त्रिष्टुभः। तदेतत् लिङ्गं प्रग्रथने एवोपपद्यते। अन्यथा पवमाने अन्यासां बृहतीनाम्, होतुः पृष्ठे च अन्यासां ककुभां दाशतयीभ्यः समानयने षष्टिसंख्यानुपपत्तेः। अत्र हि न 'षष्टिस्त्रिष्टुभो माध्यंदिनं सवनम्' इति यथाश्रुतं सामानाधिकरण्यमुपपद्यते, बाधात्। अतो जघन्यमाध्यंदिनसवनपदे एव लक्षणामङ्गीकृत्य माध्यंदिनसवनाङ्गभूता याः सामवेदे समाम्नाताः, ताः षष्टिः इत्यर्थावगतेः दाशतयीभ्यः समानयने लिङ्गानुपपत्तिः" इत्युक्तं तत् लक्षणाया आश्रयणकाले लाघवात् माध्यंदिनसवनस्तोत्रीयाणामेव लक्षणात् आनीतानामपि तासामुपपत्तेः उपेक्षितम्।

मण्डन—' नोत्तरेऽपि बृहती । ' १.

शंकर—' योन्याद्ययुक्तेषु च । ' प्रगाथः स्यात् । १.

॥ ज्योतिष्टोमे बृहद्रथंतरयोः स्वयोन्युत्तराप्रग्रथनेन संपादितयोः ककुभोरपि गानम् ॥

प्रागाथिकं तु । ९।२।६।२५ ॥

भाष्यम्— ज्योतिष्टोमे श्रूयते 'बृहत् पृष्ठं भवति' 'रथंतरं पृष्ठं भवति' इति। रथंतरस्य योनिर्बृहती 'अभि त्वा शूर नोनुमोऽदुग्धा इव धेनवः। ईशानमस्य जगतः स्वर्दृशमीशानमिन्द्र तस्थुषः ॥' (इति)। उत्तरा पङ्क्तिः 'न त्वावाँ अन्यो दिव्यो न पार्थिवो न जातो न जनिष्यते। अश्वायन्तो मघवन्निन्द्र वाजिनो गव्यन्तस्त्वा हवामहे ॥' (इति)। बृहतो योनिर्बृहत्येव 'त्वामिद्धि हवामहे साता वाजस्य कारवः। त्वां वृत्रेष्विन्द्र सत्पतिं नरस्त्वां काष्ठास्वर्वतः ॥' (इति)। उत्तरा पङ्क्तिरेव 'स त्वं नश्चित्र वज्रहस्त धृष्णुया महः स्तवानो अद्रिवः। गामश्वं रथ्यमिन्द्र सं किर सत्रा वाजं न जिग्युषे ॥' इति। तत्रोभयत्र छन्दस्कं (भिन्नच्छन्दस्कं) गानमाम्नायते 'न वै बृहद्रथंतरे एकच्छन्दसी यत् तयोः पूर्वा बृहती ककुभावुत्तरे' इति। तत्रायमर्थः प्रागाथिकं किमन्ये उत्पत्तिककुभौ आगमय्य गातव्यम्, उत यासौ पूर्वा बृहती उत्तरा च पङ्क्तिः, तयोः प्रग्रथनेन तृचत्वं कृत्वा ककुबुत्तरयोः गानं कर्तव्यमिति। किं प्राप्तम्? उत्पत्तिककुभौ आगमयितव्ये इति। कुतः। प्रत्यक्षायां ककुभाम् उपरितनयोः भविष्यति, यदि ताः ककुप्कार्ये प्रयुज्यन्ते। आह, ननु वाक्यस्तोमे तासामर्थवत्त्वं भविष्यति। उच्यते। सत्यम् अर्थवत्ता तत्र भविष्यति, ककुप्कार्यार्थताऽपि तु गम्यते। सा नाप्रयोगे स्यादिति। एवं प्राप्ते, ब्रूमः। प्रागाथिकं तु। तुशब्दः पक्षं व्यावर्तयति। प्रागाथिकं तद्गानं कर्तव्यमिति। यासौ पूर्वा बृहती उत्तरा च पङ्क्तिः, तयोः प्रग्रथनं कर्तव्यम्। एवं हि स्मरन्ति। 'काकुभः प्रगाथः' इति। आह, ननु ककुभि असत्यां 'काकुभः' इति न प्राप्नोतीति। उच्यते। 'तन्देवम्' इति, 'तत्र भवः' इति वा न दोषः।

टुप्— 'एवं हि स्मरन्ति काकुभः प्रगाथः' इति। एतदयुक्तम्। बार्हत एवायं प्रगाथः छन्दोगैः स्मर्यते। अतो भ्रान्त्या परिशोधनावरिष्ठा।

स्वे च। २६ ॥

भाष्यम्— एवं च स्वे छन्दसि गानं कृतं भवति। उत्तरापाठेन हि अर्थैषा पङ्क्तिरपि तृचकर्मणि। तत्र प्रकृतगानगमकत्वमपि च न कृतं भविष्यति। तस्मादपि तयोः प्रग्रथनं कर्तव्यमिति।

प्रगाथे च। २७ ॥

भाष्यम्— एवं चात्र प्रगाथशब्द उपपन्नो भवति। प्रकर्षं हि प्रशब्दो द्योतयति। प्रकर्षेण यत् गानं स प्रगाथः। कश्च प्रकर्षः? यत् किंचित् पुनर्गीयते। तस्मादपि प्रकृतयोः प्रग्रथनं कर्तव्यमिति।

लिङ्गदर्शनाव्यतिरेकाच्च। २८ ॥

भाष्यम्— अव्यतिरेकेण च दर्शनं लिङ्गं दर्शयति। कथमिदम् अव्यतिरेकेणेति। यत् प्रकृतयोरेव प्रग्रथनमुपपद्यते, न प्रकृतव्यतिरेकेणेति। किं लिङ्गं भवति? एवमाह, 'एषा वै प्रतिष्ठिता बृहती या पुनःपदा, यत् पादं पुनरारभते, तस्मादेषा मानस्यमपि हि करोति' इति। पुनःपादारम्भः प्रग्रथने उपपद्यते, नान्यथा। तस्मात् यासौ पूर्वा बृहती, उत्तरा च पङ्क्तिः, तयोः प्रग्रथनेन तृचत्वं कृत्वा ककुबुत्तरयोः गानं कर्तव्यमिति।

सोम— प्रग्रथनप्रकारस्तु, 'अभि त्वा ... तस्थुषः' इति पठितायां बृहत्यां प्रथमतो रथंतरं गेयम्। सैका स्तोत्रीया। ततः 'ईशानमिन्द्र तस्थुषः' इति पादं पुनरादाय 'न

त्वावाँ अन्यो दिव्यो न पार्थिवो न जातो न जनिष्यते' इत्युत्तरस्या अर्धेन सह गातव्यम्, सा त्रिपदा अष्टाविंशत्यक्षरा ककुप् द्वितीया स्तोत्रीया। ततः 'न जातो न जनिष्यते' इति पादं पुनरादाय 'अश्वायन्तो मघवन्निन्द्र वाजिनो गव्यन्तस्त्वा हवामहे' इति उत्तरस्या अवशिष्टेन सह गाने अपरा ककुप् संपद्यते, सा तृतीया स्तोत्रीया। एवं बृहत्यपि योज्यम्।

वि— 'रथंतरे ककुप् भाव्या अन्त्या वा, उऽयोऽर्थवत्त्वतः। पुनःपदात्सिद्ध्यादेरन्त्योऽर्थोऽन्त्य पीत्यतास्।।'

भाट्ट— ज्योतिष्टोमे बृहद्रथंतरे सामनी बृहत्योरुत्पन्ने। तयोस्ततप्रकृतये एकैकस्य एकैका पङ्क्तिच्छन्दस्का उत्तरा। तत्रेदं वचनम् 'न वै बृहद्रथंतरमेक छन्दः, यत् ययोः पूर्वा बृहती, ककुभावुत्तरे' इति। तत्र किं पङ्क्तिच्छन्दस्कानुत्तरा परित्यज्य द्वेऽपि ककुभौ दाशतयीभ्य. समानेतव्ये, उत बृहतो पैत्रिम् उत्तरा च पङ्क्तिं प्रत्यय ककुभावुत्तरे संपादनीये इति चिन्तायाम्, प्रथमेन मुख्यककुप्संपत्तावात् अक्षरसाम्यमात्रेण मुख्यककुप्-शब्दस्य गौणत्वापत्तेः अप्रत्योत्तराक्षरस्यैव असंनिधानत्वं परित्यज्य कालक्षणा योऽन्युत्तरकालक्षणा वा मध्ये कृत्य ककुप्-विध्यौ होतारात् स्वाभाविककभोरेव आनयनम्। एवं च मुख्यपूर्वमानत्वपरिरिपि। इति प्राप्ते, नन्वत्र 'पाद पुनरायपते' इत्यस्य वैयर्थ्यापत्तेः। ककुप्पदमेव गौणमङ्गीकृत्य उत्तरोद्देशेन ककुप्त्वविधानात् तयैव प्रथमेन ककुप्संपादनम्। एवं वैदिकाना प्रवचनसाम्य आर्हतमाध्यमाप्ता उत्तराग्रन्थे पङ्क्तेः पाठस्य उपनो मतहि। तुवनोत्पत्तिः वाताविधिपिन्त्या यथा अनुपपत्तोऽपि न दुष्यति। प्रथमेन च आला बृहती महत् पठित्वा तस्या अन्त्यपादेन सह द्वितीयाया अर्धर्चं पठित्वा तदन्त्यपादेन सह द्वितीयान्त्यापेत्वपठनरूपं बोध्यम्। तेन द्वितीया ककुप् भवतीत्यस्यैव। अत्रापाः सम्बिद्यासत्त्वेऽपि अहरान्तरान्तर दोषः।

मण्डन— 'प्रत्ययेनोत्तरा ककुप्।' ८.

शंकर— 'पूर्वाभ्योः प्रमयः स्यात्।' ८.

* ज्योतिष्टोमे मध्यानुवाकः ग्रहणावेक्षणभक्षणेषु यथालिङ्गं विनियोक्तव्यः, न तु कृत्स्नो भक्षणे एव। मा. ३।२।१।२५-२६, * ज्योतिष्टोमे भक्षानुवाके गायत्रच्छन्दस इत्युच्यते। स मन्त्रांशः अनेकच्छन्दस्केऽपि स्यात्। ३।२।१८।४२-४३, * ज्योतिष्टोमे भक्षानुवाके मन्त्रादिः भक्षयामीत्यन्तः एक एव मन्त्रः, न तु गुप्यत इत्येवमन्तः। स च भक्षणे। ३।२।१०।२७, * ज्योतिष्टोमे भक्षमन्त्रः ऐन्द्रेषु मौन्द्रेषु च, न तु अनैन्द्राणाममन्त्रकं भक्षणम्, नापि यथादैवतमूहः। इन्द्रपीतपदं सवनविशेषणम्। १०।३।११।१८-२९, ३९,४४.

**ज्योतिष्टोमे भृतिविनर्तं सोमक्रयश्च नित्यौ।।**

**वाच्यकयणमविद्यमाने लोपयत्। ३।८।७।२६।।**

भाष्यम्— इदं समाम्नायते ज्योतिष्टोमे 'द्वादश शतीर्दक्षिणा भृति यन्तीत' इति (द्वादशदिनानि सोमयागोपयुक्तं नानाविध द्रव्यं याचनेन संपादनीयम् इति)। तथा 'सोमं क्रीणाति' इति। तत्र संदेहः किं यस्य न विद्यते भृतिः, तेन अनितव्य, यस्य च न विद्यते सोमः तेन क्रेतव्यः, उत उभयथाऽपि सति च असति च। किं प्राप्तम्? याच्याकयणम् अविद्यमाने भृतिसोमे न स्यात्। कस्मात्? द्रव्यसंभवार्थं याच्याकयणमर्थवत् भविष्यति। तत् विद्यमाने अनर्थकम्। अनर्थकं च उक्तमपि न कर्तव्यम्। तस्मात् अविद्यमाने भवेत्। लोकवत्। यथा यस्य लोके नास्ति द्रव्यम्, स याचते क्रीणाति च। एवमिहापि द्रष्टव्यम्।

टुप्— 'नेत्तु द्रव्य विधत्ते' (इत्यनेन न्यायेन व्याख्याता।) द्रव्योपादानार्थत्वात् द्रव्यं चिकीर्षितम्। तद् तत्पूर्वं अविद्यमाने च। इति पूर्वपक्षः।

**नियतं वाऽर्थवत्त्वात् स्यात्। २७।।**

भाष्यम्— नियत वा याच्याकयणम्। तद् विद्यमाने अविद्यमाने च द्रव्ये स्यात्। एवं याच्याक्रयणमर्थवत् भवति। ज्योतिष्टोमयुक्त हि तत् श्रूयते, न द्रव्ययुक्तम्। तच्च नित्यं ज्योतिष्टोमस्य। नैव वचनं भवति 'यदा द्रव्यं नास्ति तदा कर्तव्यम्' इति। ज्योतिष्टोमस्य च नित्यमङ्गत्वम्, द्रव्याभावे निमित्त-

मुक्तम् इति परिकल्प्येत। कल्पनाया शब्दो बाध्येत। अतो वाग्व्याकरणसंस्कृत द्रव्यम् इहोपयोक्तव्यम्। अन्यथा वैगुण्य भवति। तस्मात् सति च असति च द्रव्ये वाग्व्याकरणमनुष्ठातव्यमिति। अथ यदुक्त लोकवदिति, लोके कर्म अर्थलक्षण भवति, न शब्दलक्षणम्। यथा अर्थ, तथा क्रियते, न यथा शब्द। वेदे तु शब्देनैव अर्थे. अवगम्यते, तथैव अनुष्ठेयमिति। तस्मात् विद्यमानेऽपि कर्तव्यम्।

टुप्—प्रकरणाम्नानात् अपूर्वप्रयुक्त दक्षिणित्त च इति उत्तर. ( पक्ष )।

सोम—इहापि सामान्यश्रुते. विशेषेषु अविरोधात् विशेषविषयत्वम् इति प्राप्तस्यानुवाद स्मरति। अथ मार्गेनमेन द्रव्यमपूर्वं साधयति, नान्यत् इति नियम.।

वि—'वाग्व्याकरणमभावे स्यो विद्यमानेऽपि वा, ऽस्मिन् प्रत्यापत्त्या, दपूर्वार्थं कुर्यात् तौ प्रयत्नतापि॥' ( कयो अभावे इति पक्षेत )।

भाट्ट—'दीक्षितो भृति वन्वीत' इति वाग्व्य यत्नापि दक्षिणादानार्थ द्रव्यमर्जित नेनापि कार्या, न त्वविद्यमानद्रव्येणैव। नित्यवत्श्रवणेन सर्वदैव क्रतुना अपूर्वेण च मनुसन्धात्। न च अस्याः द्रव्याप्तिद्वारा द्रव्यसंस्कारकत्वात् द्रव्यसत्त्वे च तत्साधनोपायवैयर्थ्यात् असत्यपि निमित्तश्रवणे प्रयोजनवत्त्वादेव साकाङ्क्षविधिन्यायेन नियमविधित्वोपपत्तिरिति वाच्यम्। अना काङ्क्षितविधानस्य फलवत्सन्निधावफलं तदङ्गमिति न्यायेन शेषत्वात् प्रकृते चाविद्यमानद्रव्यपक्षे द्रव्यप्राप्तिरूपफलवत् विद्यमानद्रव्यपक्षेऽपि तत्फलत्वाविशेषात् फलाभावेन दोषाभावात्, वाग्व्याप्तद्रव्यस्यैव क्रत्वपूर्वेण ग्रहणात् नियमो यस्ते। एव विद्यमानेऽपि सोमे कर्मण्यावश्यकत्वम्। ६.

मण्डन—'वाग्व्याकृती द्रव्यभावेऽपि कार्ये।' ८.

शंकर—'नियो वाग्व्यायो सोमे।' ८.

* ज्योतिष्टोमे 'मा ऽ भ्रात नवनाम्' इतिस्वरेण तत्प्रथनमवरुद्धम्। मु पृ ११८०. * ज्योतिष्टोमे माध्यन्दिनपवमानोत्तर च चारि पृष्ठान्यपि भवन्ति अभि त्वा शूर, कया नश्चित्र, को दस, तरोभिर्वो इति। तानि च क्रमेण रथन्तर–वामदेव्य–नौधस–कालेयसामभि गीयन्ते। वि १।४।२, * ज्योतिष्टोमे मुष्टीकरणवाङ्नियमौ सर्वयागाङ्गम्। आनन्तर्याधिकरणम्। ३।१।१४. * ज्योतिष्टोमे मैत्रावरुणाय दण्डदान संस्कारकर्मकर्म, न प्रतिपत्ति। दण्डदानन्याय। भा ४।२।६।१६—१८.

## ज्योतिष्टोमे मैत्रावरुणादिग्रहेषु श्रयणार्थेषु पयआदिषु प्रदेयधर्मा न कर्तव्या॥

श्रयणानां त्वपूर्वत्वात् प्रदानार्थे विधानं स्यात्। ९।४।१२।४५॥

भाष्यम्— ज्योतिष्टोमे श्रूयते 'पयसा मैत्रावरुणं श्रीणाति, सक्तुभिर्मन्थिनम्, धानाभिर्हारियोजनम्, हिरण्येन शुक्रम्, आज्येन पात्नीवतम्'। तत्र संशयः किं श्रयणानां प्रदेयधर्मा भवन्ति, उत नेति। कुतः संशयः? यदि प्रदेयानि श्रयणानि, तत एषु प्रदेयधर्मा भवन्ति, अथ न प्रदेयानि, न भवन्तीति। किं प्राप्तम्? प्रदेयानि प्रदेयधर्मैः संबध्येरन्निति। श्रयणाद्धि पय जायते पयोमिश्रश्च सोमो भवति, सोमे च हूयमाने पयोऽपि होमेन संबध्यते। यदि पयोमिश्रश्च सोमो भवति, तत्र सोमस्य पयसा मिश्र्यमाणस्य न कश्चिदुपकार पश्याम। सोमस्य तूपकारी भवति निर्वृत्तिर्नाम। यदि होमेन संपत्स्यते इति मिश्रणमभिप्राय, तत एव कारक मिश्रण हृतेनोपकारेण। श्रुतो हि गुणवान् याग. प्रत्यक्ष पयसा निर्वर्त्यते इति। सोमोपकार कल्प्य स्यात्। तस्मात् पयसा सोमो मिश्र्यते। मिश्रित प्रयोगवचनेन कथं संबध्यते इति। न च प्राकृत मिश्रण केनचित् द्रव्येण प्राप्तम्, येनेद द्रव्यान्तर पयो विधीयते इति अपूर्वं यान् सोमस्य। तस्मात् प्रदानार्थस्य पयसो विधान स्यात्। प्रदेयपयोधर्माश्चात्र कर्तव्या इति।

गुणो वा, श्रयणार्थत्वात्। ४६॥

भाष्यम्— वाशब्द पक्ष व्यावर्तयति। गुणभूत पय स्यात् सोमस्य, न प्रदेयद्रव्यम्। प्रदेयत्वेन अश्रवणात्। सोमार्थेन च श्रुत गत्।

अनिर्देशाच्च। ४७॥

भाष्यम्—न होमेन पयोवचनो वा अस्य संबन्ध। अनिर्देश पदार्थत्वात्। न च प्रत्यक्षेणापि पयस्यागे वाग्निर्वृत्ति पयसा। प्रत्यक्षदेवतावाचको हि त्यागो

यागः । चात्र पयसो देवतासंबन्धः । मैत्रावरुणं ग्रहं गृह्णातीति वचनम्, न मैत्रावरुणं पय इति । तस्मात् देवोपकाराभावात् अदृष्टः सोमश्रिणे सोमसंस्कारो-ऽभ्युपगम्यते । तस्माच्च प्रदेयधर्मैः संबध्यते इति ।

श्रुतेश्च तत्प्रधानत्वात् । ४८ ॥

भाष्यम्— इतश्च सोमार्थं पयः । कुतः ? श्रुतिर्हि सोमप्रधाना भवति । द्वितीयाविभक्तिः श्रूयते । तस्मात् श्रपणेन सोमः प्रधेक्ष्यते इति ।

अर्थवादश्च तदर्थवत् । ४९ ॥

भाष्यम्— अर्थवादश्च श्रपणस्य सोमार्थत्वे भवति । 'स मित्रोऽब्रवीत्, पयसैव मे सोमं श्रीणन्' इति । नहि भवति पयो मे दद्युरिति । कथं तर्हि ? सोमं पयसा संस्कुर्युरिति । तस्मादपि सोमार्थं श्रपणम् ।

संस्कारं प्रति भावाच्च तस्मादप्यप्रधानं स्यात् । ५० ॥

भाष्यम्— संस्कारं प्रति श्रपणवचनं भवति । यत्र संस्काराः श्रूयन्ते, तत्रेदं श्रूयते पयसा मैत्रावरुणं श्रीणातीत्येवमादि । तस्मात् संस्कारप्राये श्रवणात् श्रपणमपि संस्कार एवेति गम्यते । भवति हि प्रायोवृत्त्या तद्बुद्धिः । यथा अध्यायाये लिखितः अप्रमः इति गम्यते । तस्मात् प्रदेयधर्मैर्न संबध्यते इति ।

शा— 'द्वितीयया प्रधानत्वं सोमस्यात्राव-गम्यते । तृतीयया च तादर्थ्यं पयसः प्रतिपाद्यते ॥ श्रुते चाहष्टसंस्कारकल्पना नैव दुष्यति । तस्मात् प्रदेयधर्माणां न पयःप्रभृतौ क्रिया ॥' १२.

सोम— पशुकामस्यले पशोः प्रदेयधर्माभावेऽपि श्रपणेषु तद्धर्मप्राप्तिः इत्युक्तिवत् संगतिः । सूत्रार्थस्तु— श्रपणानां पयःप्रभृतीनां प्रदानार्थं विधानं स्यात् । न चात्र प्रकृतितः प्राप्तं श्रपणमनूद्य पयःप्रभृतेर्द्रव्यस्य विधानमित्युपपत्तिरस्ति सोमयागस्यापूर्वत्वात् इति ।

वि— 'श्रिणे पयआदीनां सोमधर्मा न वा, ऽग्रिमः । प्रदत्वं गेल्ना, न्मैवं संस्काराय्येरतः श्रुतेः ॥' १२.

भाट्ट— सोमे 'पयसा मैत्रावरुणं श्रीणाति, सक्तुभि-र्मन्थिनम्' इत्यादौ तृतीयया पयःप्रभृतीनां श्रयणं प्रति गुणत्वावगमात् सत्यपि सोमसंसर्गे देवतासंबन्धाभावेन प्रदेयत्वानुपपत्तेः, न प्रदेयधर्मा क्रयादयः । न च प्रयाजशेषन्यायेन श्रपणस्य सोमसंस्कारकत्वे अदृष्टार्थत्व-प्रसङ्गात् पयःसंस्कारकत्वावगतेः, तदन्यथाऽनुपपत्त्या यागे तस्य विनियोगस्यावेन प्रदेयत्वावगतिः । पयःसंस्कार-कत्वेऽपि अदृष्टार्थत्वस्य तुल्यत्वात् उत्पत्तिशिष्टसोमाव-रोधे पयसो निवेशानुपपत्तेश्च । विवादस्थपयश्चिकरण-न्यायेन तृतीयाऽऽदो लक्षणया प्रमाणाभावाच्च । प्रयाज-शेषवत् उपयुक्तत्वाभावेन अस्मदुक्तप्रयाजशेषन्याया-भावाच्च । तस्मान्नात्र प्रदेयधर्माः । ११.

मण्डन— 'श्रपणं स्यादधर्मकम् ।'

शंकर— 'प्रदेषु श्रयणे वथा ।' न प्रदेयता । १२.

• ज्योतिष्टोमे 'य एव विद्वान् षोडशिनं गृह्णाति' । अत्र षोडशी ग्रहः राजन्यार्थं प्रकृतौ एव । 'अग्निष्टोमे राजन्यस्य गृह्णीयात्' । स नायम् अत्यग्निष्टोमः इत्युच्यते । नापवाद अग्निष्टोमः अत्यग्निष्टोमश्चाति । वि. १०।५।१। स च उक्थ्यग्रहणोत्तमाग्रयणपात्रात् ग्राह्यः । १०।५।१०। स च तृतीयसवने एव ग्राह्यः, न पूर्वसवनयोः । १०।५।११, • ज्योतिष्टोमे यजमानस्य एव पय । तस्मै तु मतः । ३।३।१४, • ज्योतिष्टोमे यजमानस्य संस्कारा वपनादयो नाङ्गार्थाः, किन्तु ग्रहैः होमहोमरूपमुख्यार्थाः । ३।७।२. • ज्योतिष्टोमे यज्ञायज्ञीये गिरापदस्य इरापदेन बाधः । भा. ९।२।१८।५०–५३, • ज्योतिष्टोमे यज्ञा-यज्ञीये गिरापदस्थानापन्ने इरापदे गानं कर्तव्यम् । ९।२।१९।५४–५८. • ज्योतिष्टोमे 'यद्याशिष्यावा गर्हि-सदुपसदा तदग्नीषोमीयस्य च' इति । तत्र आतिथ्योप-सदग्नीषोमीयात्मपोऽपि बर्हिषः प्रयोजनः । वि. ४।२।१३. • ज्योतिष्टोमे 'यदि कामयेत वर्षेत् पर्जन्यः इति, नीचैः सदो मिनुयात्' इति कामः याजमानः एव, नार्त्विजः । वचनात्तु ऋत्विजामपि स्यात् यथा 'उद्गाता आत्मने वा यजमानाय वा यं कामं कामयते, तमागायति' (बृ. १।३।२८) इति । भा. ३।८।५।१३–१४. • ज्योतिष्टोमे 'यदि रथंतरसामा सोमः स्यादैन्द्रवायवा-ग्रान् ग्रहान् गृह्णीयात्, यदि बृहत्सामा शुक्राग्रान्, यदि जगत्सामा आग्रयणाग्रान्' अनेन ज्योतिष्टोमे एव इद-स्तोत्रे रथंतरसामत्वे ऐन्द्रवायवाग्रत्वम्, बृहत्सामत्वे

यजमानेन धारणसंभवात् पदार्थानुसमय एव। अन्यत्रापि तावत् अतिरिक्तपदार्थानां प्रत्येकमेवानुसमयः।

मण्डन— 'क्रमः परिव्याणयुतेऽञ्जनादौ।'

शंकर— 'यूपानैक्येऽञ्जनादिषु।' काण्डानुसमयः।

❀ ज्योतिष्टोमे रशना द्वितीयाऽपि यूपार्था। वि. ४।४।९, ❀ ज्योतिष्टोमे राजन्यार्थं गृह्यमाणः षोडशिग्रहः उक्थ्येभ्यः परस्तात् अस्तमयकाले गृह्यते 'समयाध्युषिते सूर्ये षोडशिनः स्तोत्रमुपाकरोति'। ५।२।१८, ❀ ज्योतिष्टोमे राजन्यवैश्ययोः फलचमसः सोमभक्षयोः। फलचमसाधिकरणम्। ३।५।१९.

☒ ज्योतिष्टोमे रात्रिशयनकृत्स्ननिद्रार्थम् आदौ सुकृदेव मन्त्रः अवान्तरनिद्राभेदेऽपि, एवं नदीतरणे अभिवर्षणे अमेध्यदर्शने च॥

स्वप्ननदीतरणाभिवर्षणामेध्यप्रतिमन्त्रणेषु चैवम्। ११।४।१७।५० ॥

भाष्यम्— ज्योतिष्टोमे स्वापार्थो मन्त्रः 'त्वमग्ने व्रतपा असि' इति। तत्रैव नदीतरणार्थः 'देवीरापः' इति। तथा अभिवृष्टस्य 'उन्दतीरोजो धत्ते' इति। अमेध्यप्रतिमन्त्रणश्च 'अबद्ध चक्षुः' (अबद्धं मनो दरिद्रं चक्षुः) इति। स यदा पुनः प्रतिबुद्धः स्वपिति, अनेकस्रोतसं वा नदीं तरति, सततेन वा अभिवृष्यते, अनेकं अमेध्यमेककाले पश्यति, तत्र चिन्ता किं मन्त्राभ्यावृत्तिः, अथवा सकृदेव प्रयोगः इति। तत्र विशेषग्रहणात् आवृत्तौ प्राप्तायामुच्यते। स्वप्नादिषु चैवम्, यथा कण्डूयने सकृत् प्रयोगः इत्यर्थः। कृत्स्नां रात्रिमधो उद्दिश्य स्वप्नमन्त्र प्रयुङ्क्ते, नैका निद्राम्। तथा सर्वस्रोतांसि तितीर्षुः, सर्वाभिवर्षणानि, सर्वामेध्यानि च। युगपत् सर्वेषामुपगमात् तत्र न गृह्यते विशेषः। तस्मात् अनावृत्तिर्मन्त्रस्य।

सोम— स्वप्नादीनां भेदात् आनन्तर्येण विशेषग्रहणात् भेदः इति मन्त्रानं प्रति पूर्वोक्तातिदेशात् संगतिः। एकस्मिन् देशे अनेकामेध्यदर्शने 'अबद्धं मनः' इति मन्त्रः, देशान्तरे तु आवृत्तिः इति फलितः चिन्त्यः।

वि— 'स्वप्नादिमन्त्र आवर्त्यो नो वा, ऽऽद्यो-ऽसकृत्तरायतः। कृत्स्नोद्देशप्रवृत्तत्वान्निमित्तभेदतः सकृत्॥' १८.

भाट्ट— सोमे स्वापार्थो मन्त्रः 'त्वमग्ने व्रतपा असि' इति। संपूर्णां रात्रिं निद्रामुद्दिश्यैव मन्त्रपाठात्, सकृत्पठितमन्त्रजन्यस्मृतविच्छेदाच्च मध्येमध्ये प्रतिबुध्य पुनःपुनः स्वापेऽपि सकृदेव मन्त्रः। तथा 'देवीरापः' इति नदीतरणमन्त्रोऽपि स्रोतोभेदेऽपि सकृदेव। तथा अभिवृष्टे 'उन्दतीः' इति मन्त्रः वर्षधाराभेदेऽपि सकृदेव। तथा 'अबद्ध मनो दरिद्र चक्षुः' इत्यमेध्यदर्शने प्रतिमन्त्रणमन्त्रोऽपि युगपदनेकामेध्यदर्शने न भिद्यते।

मण्डन— 'मन्त्रः स्वप्नादिके सकृत्।' १८.

शंकर— 'स्वप्नाद्यावेवमेव च।' सकृत्। १८.

❀ ज्योतिष्टोमे वपनादिसंस्काराः याजमानाः, वचनविशेषात्तु ऋत्विजामपि। वपनाधिकरणम्। भा. ३।८।२।३–८. ❀ ज्योतिष्टोमे वरणकाले 'ऋत्विग् करुपायो दक्षिणाः' इति ऋत्विजां गणः। वि. १०।२।१०, ❀ ज्योतिष्टोमे वरणकाले सोमाभिधानं क्रियते 'ज्योतिष्टोमेनाग्निष्टोमेन सोमेन रथंतरपृष्ठेन यथा द्वादशशतदक्षिणेनाहं यक्ष्ये, तस्य त्वमुद्गाता भव' इत्यादि। १०।२।११. ❀ ज्योतिष्टोमे धर्मैर्होमो धर्मेणैव। भा. १०।८।८।१९, ❀ ज्योतिष्टोमे वषट्कर्तुः प्रथमभक्षः प्रकरणे। ३।५।१३।३६–३९

☒ ज्योतिष्टोमे वषट्कारेऽपि पृथक् सोमभक्षकारणम्॥

वषट्काराच्च भक्षयेत्। ३।५।१०।३१ ॥

भाष्यम्— अथ किं समाख्यैव एका भक्षकारणम्। नेति ब्रूमः। वषट्काराच्च भक्षयेत्। वषट्कारश्च भक्षणे निमित्तम्। कथम्? वचनात्। एवं हि श्रूयते 'वषट्कर्तुः प्रथमभक्षः' इति। भक्षणस्य अप्राप्तत्वात् न प्राथम्यविधानार्थ एव शब्दः प्राथम्यविशिष्टं भक्षणमेव विदधाति इति।

भा— इदमपरं वचनम् 'वषट्कर्तुः प्रथमभक्षः' इति। तत् वषट्कार निमित्तीकृत्य प्राथम्यविशिष्टं

भक्षणं विधत्ते, उत भक्षणमनूद्य प्राथम्यमात्रं विधत्ते इति विचारः। किं प्राप्तम्? 'न चेदन्येन शिष्टः' (१।४।६।९) इति (न्यायेन) कथञ्चित् अनुवाद्यत्वे संभवति विशिष्टविधानानुपपत्तेः, प्राथम्यस्य च अप्राप्तत्वात् तदनुवादेन भक्षविधानार्थमवश्यं, एवं वचनं भवति 'यो वषट्कर्तुर्भक्षः, स प्रथमः' इति। ननु च अप्राप्तत्वात् भक्षोऽपि अनुवदितुं न शक्यते (उत्तरम्—) समाख्यया प्राप्तत्वात् अनुवादो गम्यते। अस्ति हि तस्य (वषट्कर्तुः) समाख्यया चमसेषु भक्षः, स शक्यः अनुवदितुम्। तेषां च (चमसिनां मध्ये) यो यदा वषट् करोति, स तदा प्रथमो भक्षयेत्। तत्र ग्रहेषु स्यात्, ग्रहेषु चमसान्तरेषु च प्राप्त्यभावात् अनुवादो नोपपद्यते इति। नैष दोषः। नहि अवश्यं यदेव सर्वत्र प्राप्तम्, तदेव अनुवदितव्यम्, सर्वानुवादानां यथासंभवं प्राप्त्यपेक्षत्वात्। न च ग्रहचमसान्तराणां वषट्कर्तृभिः अभक्ष्यमाणानां किञ्चित् सिध्यति। प्रतिपत्तिरिति चेत् (प्रतिपत्तिर्न सिध्यति इति शङ्का), वेदविहितप्रतिपत्त्यभावे लौकिकप्रतिपत्तिसिद्धेः। समाख्यानिमित्तद्वारेण (अनन्तराधिकरणे, होमाभिषवरूपेण) वा भक्षोपपत्तिः। अथोच्यते, समाख्यया निराकृता प्राप्तिः न शक्यते श्रौतप्रवर्तिन्या श्रुत्या अनुवदितुम्। अतः प्राप्त्यभावेनापि श्रुतिः प्रवर्तमाना यत्र यत्र वषट्कृतम्, तत्र तत्र अविशेषेण विधास्यति इति। तदयुक्तम्। तत्र हि संनिकर्षविप्रकर्षौ अपेक्ष्येते, यत्र विरोधः कश्चित्। इयं तु श्रुतिः अनेकार्थविधिक्लेशभयात् (श्रूयमाणविधिना प्राथम्यविशिष्टभक्षान्तरविधाने विशेषणविधानार्थं विध्यन्तरकल्पनात् क्लेशः) यथाकथञ्चिदपि प्राप्तुकामं भक्षं प्रतीक्षते। यदा 'केन चिदपि प्रमाणेन नास्ति प्राप्तिः' इति अवगम्यते, तदा विशिष्टविधानमङ्गीकरोति। तथाच प्रकरणादिप्रमाणानुवादेन श्रुत्यैव गुणाः विधेयाः स्युः। तस्मात् प्राथम्यमात्रनिमित्तत्वात् न वषट्कारो भक्षकारणम्। इति प्राप्ते, उच्यते। 'समस्तार्थाद् विनिष्कृष्य नैकांशोऽनूद्यते यतः। व्यञ्जयन् नेन सर्वोऽयमपूर्वोऽर्थो विधीयते॥' यथैव 'स्पष्टैः शिरस्कृतं भवति' इत्यत्र न अङ्गानि अनूद्य शिरो विधीयते, किं तर्हि पूर्वनिष्पन्नः समासार्थो विशेषो भवति, तथा इहापि परिपूर्णस्य पदस्य पदान्तरयोगात् एकदेशानिष्कर्षे च सामर्थ्याभावात् अशक्यमेव अनुवदितुम् 'यो वषट्कर्तुर्भक्षः' इति। नहि प्राक् समासाद् भक्षस्य वषट्कर्तृसंबन्धो युक्तः, सापेक्षत्वे सति समासानुपपत्तेः। ननु च 'भवति वै प्रधानस्य सापेक्षस्यापि समासः' इति सत्यपि वषट्कर्तृसंबन्धे समासः अवकल्पिष्यते। भवेदेवमेवम्, यदि भक्षः एकैकः सापेक्षः स्यात्, [illegible] तु प्राथम्यमपि वषट्कर्तृसंबन्धित्वात् सापेक्षम्। नहि प्राथम्यस्य भक्षो निमित्तम्, किं तर्हि वषट्कर्तृत्वम्, अतो 'वषट्कर्तुः प्रथमः' इत्येवं संबन्ध आपद्येत। तत्र विध्युद्देशसामञ्जस्यं स्यात्। 'यो वषट्कर्तुर्भक्षः' इति चानूद्यमाने विशिष्टानुवाददोषः, भक्षमात्रेण वषट्कर्तृत्वानाक्षेपात्। वषट्कर्तृत्वस्य च नियमाऽन्तरेणापि अनैकान्त्यात्। अन्यतरानुवादे तु सर्वभक्षाणां प्राथम्यं विधीयेत, सर्ववषट्कर्तृव्यापाराणां च। तच्चाशक्यं कर्तुम्। अतो वषट्कर्तृप्राथम्यविशिष्टापूर्वभक्षविधानमेवैतत्। तयोश्च परस्परनियमात् अन्यतरसमानविषयत्वम्। अतो यावति विषये वषट्कारः, तावत्येव प्रथमभक्षः। कथं पुनः वषट्कारो निमित्तभूतः सन् उपादीयते, कथं च अनुपादीयमानस्य नियमः अवकल्प्यते? उच्यते। 'नियमः सर्वथा तावदेककर्मनिमित्तकः। उपादानानुपादाने न विशेषः प्रतीयते॥' न च वषट्कर्तृत्वमनुपादेयम्। नहि अत्र यदिशब्दवत् सम्यगादिकृतं निमित्तत्वम्। किं तर्हि वषट्कर्तरि क्रियाऽङ्गत्वेन उपादीयमाने अर्थात् निमित्तत्वं भवति। तस्माददोषः। ननु च 'तस्मादेकं साम तृचे क्रियते स्तोत्रीयम्' इति समासस्यापि कथमनूद्य निष्पन्नविधानं दृष्टम्, तथा प्राथम्यविधानमपि भविष्यति। न। तत्रापि समासार्थस्यैव विधानाभ्युपगमात्। सर्वस्तोत्रसाम्ना हि तृचा एकोद्दीयन्ते। तत्र यदि एकत्वं समासार्थो न प्राप्तः स्यात्, ततः सर्वविधिर्भवेत्। सर्वत्र च क्रमः शाखाचोदनयैव पाठक्रमेण च प्राप्ता दृश्यन्ते। तेन 'न चेदन्येन शिष्टः' (१।४।६।९) इत्येवं न विधीयन्ते। 'वषट्कर्तुः

प्रधानहविर्धामेव कृते । भा. ३।७।३।७,८, ● ज्योतिष्टोमे वैश्वदेवो ग्रहोपनिर्वर्त्यते । तत्र सर्वदेवता इज्यन्ते । तन्मध्ये अग्निदेवता अपि । १२।१।१२।२६.

ज्योतिष्टोमे वैसर्जनादिहोमेषु आज्यमेव, न सोमः ॥

' वैसर्जनानि जुहोति ' इत्यादिभिर्विहितानां होमिकानां वैसर्जनहोमानां द्रव्याकाङ्क्षत्वात् प्रकृतः सोम एव बहर्थत्वात् नियम्यते । इति प्राप्ते, सोमद्रव्यस्य कतिपयदार्थेषु आहत्यविधानेन तद्भिन्नेषु तदभावव्यञ्जनात् आज्यस्यैव होमाश्रो इमि.ध्येन निर्देशेन तस्य अभाविरुद्धत्वे प्राप्ते', ' आज्यं हविरनादेशे ' इति स्मृत्या अनुप्रसङ्गाज्येनैव ते होमा भवेयुः । अत एव धिष्ण्यव्याघारणसंतापेन ' आज्येन पात्नीवतं श्रीणाति ' इत्यत्र आज्यस्य सिद्धवत्कृत्य अनुवाद उपपन्नः । संकर्ष. १।२।१०.

● ज्योतिष्टोमे ' व्रतं कृणुत ' इति मन्त्रः पयःपानरूपव्रतसंपादनप्रैषे अन्वितः, न तु वाग्विमोके । ' व्रतं कृणुतेति वाचं विसृजति ' इति तु वाग्विसर्गकाले प्रैषपाठः इति कालो विधीयते । कि. १।२।४.

ज्योतिष्टोमे शालामुखीयादेव आग्नीध्रप्रणयनम् ॥

आग्नीध्रीयाग्नेरपि पशुत्वादिहोमाधिकरणत्वेन आहवनीयकार्यत्वाभावात् औत्तरवेदिकादेव तस्य प्रणयनम् । इति प्राप्ते, शालामुखीयादेव प्रणयनम् । ' अग्निप्रथमाः प्राञ्चोऽभिप्रव्रजन्ति सोमप्रथमा वा ' इति श्रुतौ प्राच्य इति प्रागग्निमुख्येन गमनविधानात् । ' अग्नीषोमाभ्यां प्रणीयमानाभ्यामनुब्रूहि ' इत्यत्र द्वाविंशतस्य अग्निप्रणयनसोमशालाप्रणयनयो. साहित्यस्य चानुरोधेन शालामुखीयसमीपवर्तिसोमशाला इव तदन्तर्गतेन एव अग्नेः प्रणयन गार्हपत्याधानकत्वादेव आग्नीध्रीयस्यापि आहवनीयैकदेशत्वमेवेति न तस्य होमाधिकरणत्वभङ्गः । औत्तरवेदिकाग्निप्रणयनोत्तरमपि आग्नीध्रीयप्रणयनसत्त्वम् आहवनीयादस्य इह उत्पादेन आहवनीयात् इत्युपादानवेनोक्तिः । ' एषोऽत ऊर्ध्वम् ' इति स्मृतिरपि आग्नीध्रीयप्रणयनोत्तरकालपरेति तु भाष्यम् । संकर्ष १।२।१८.

● ज्योतिष्टोमे ' शुक्रामान् ग्रहान् गृह्णीयादभिचरतः, मन्थिग्रान् गृह्णीयादभिचर्यमाणस्य ' अत्र शुक्रादीनां न धाराग्रहत्वम् । तथा चापकर्ष एव शुक्रादीनाम् । नि. १०।५।१९ । स चापकर्षो धाराग्रहादौ न तु सर्वादौ । १०।५।२० । ग्रहणापकर्षवत् सादनस्याप्यपकर्षः । १०।५।२१ । सादनापकर्षेऽपि प्रदानस्य नापकर्षः । १०।५।२२, ● ज्योतिष्टोमे शुक्राग्रत्वं बृहत्सामत्वे ' यदि बृहत्सामा शुक्राग्रान्' ग्रहान् गृह्णीयात् । २।३।१. ● ज्योतिष्टोमे षोडश कर्तारो वरीतव्याः । तावत्कर्तृकश्च सोमः स्यात् । भा. ३।७।९।२१-२४, ● ज्योतिष्टोमे षोडशी तृतीयसवने एव ग्राह्यः । १०।५।११।४४. ● ज्योतिष्टोमे षोडशी श्रुतः अग्निष्टोमे एव निषिध्यते, न विकृतौ । वि. १०।८।९, ● ज्योतिष्टोमे षोडशिग्रहस्य प्रातरग्निहोत्रप्रभृति धर्मिहोमानामनुष्ठानम् । ६।५।१४, ● ज्योतिष्टोमे संतर्दनं श्रुत संस्थासु अहीनेषु सत्रेषु च निषिध्यते, न प्रकृतौ । वा. १।३।११।१४-२१

ज्योतिष्टोमे ' न वैष स्यात् ' इति प्राशहितवादः ॥

' यस्यैष धिष्ण्यो विह्रियते सोऽनुध्यायति ' इत्यादिना ' यजमान वा एतद्विकर्षन्ते यदाहवनीयात् पशुश्रपण हरन्ति, स वैष स्यान्निर्मन्थ्यं वा कुर्याद् यजमानस्य सात्मत्वाय ' इत्यन्तेन पशुश्रपणार्थोऽग्निर्निरूप्यते । तत्र स वैष स्यात् इत्यनेन आहवनीय एवोच्यते । ' यजमानो वा आहवनीयः ' इत्युपक्रान्तत्वेन तस्यैव बुद्धिस्थत्वात् । इति प्राप्ते, प्राजहित एव तत्पदेनोच्यते, निर्मन्थ्येन सह तुल्यकोटिकविकल्पोक्तिसामर्थ्यात् । सर्वत्र कोटिद्वये साधारणधर्मावश्यकत्वात् । प्राजहितस्यापि कल्पनस्यत्वेन लौकिकनिर्मन्थ्यसाम्यात् । वैदिकनिर्मन्थ्य एव वा स्याल्लौकिकनिर्मन्थ्यो वेति तदर्थात् । आहवनीयहरणे यजमानस्यैव विकर्षणं स्यादिति निश्चित्य यजमानस्य आत्मत्वाय निधीयमानस्य अग्नेः आहवनीयादितिरव्यापकस्याभावाच्च । अन्येनान्यस्य सात्म्यसंभवात् । तस्मात् प्राजहितस्यैवायं वादः । संकर्ष, ३।२।२१.

* ज्योतिष्टोमे सत्यवचनादिव्रतेन दार्शिकं व्रतं प्रसङ्गसिद्धम् । वि. ११।१।११, * ज्योतिष्टोमे सदसो मीयमानादौ पुत्रादिकामस्य यजमानी, न तु आर्त्विजी । काण्डार्थाधिकरणम् । तथाकामाधिकरणम् । ३।८।६, * ज्योतिष्टोमे छदोमण्डपोपस्थाने प्रकृत्या ऐन्द्या ऋचा कर्तव्यम्, न तु दाशतयीक्षया कयाचित् । आग्नेयीन्यायः । ६।२।८, * ज्योतिष्टोमे समन्तपदग्रहणादि सोमभक्षणानयनस्य न प्रयोजकम् । अशाभक्षन्यायः । ४।१।१०, * ज्योतिष्टोमे मर्वस्वदक्षिणाऽपि द्वादशशतेनानमनाभावे दातव्या । ६।७।९, * ज्योतिष्टोमे सवनीयपशौ अनुयाजाः पञ्चकम् । तैषा च 'आग्निमारुतादूर्ध्वमनुयाजैश्चरन्ति' इति उत्कर्षः । ४।१।१५, * ज्योतिष्टोमे सवनीयपशुपुरोडाशानां सवनीयपशोरन्यप्रधानत्वात् पशुः अङ्गी, पुरोडाशास्तु अङ्गम् । तेन आग्निमारुतादूर्ध्वमुत्कृष्टैरपि पशुधर्मानूयाजैः प्रातःसवनिकपुरोडाशार्थानूयाजानामपि प्रसङ्गसिद्धिः । १२।२।१२, * ज्योतिष्टोमे सवनीयपुरोडाशानां पाशुकतन्त्रेण प्रसङ्गसिद्धिः । सवनीयादिन्यायः । भा. १२।२।१२। १०–१२, * ज्योतिष्टोमे सवनीयपुरोडाशानां सवनसम्बन्धानां कालभेदेनानुष्ठानभेदात् तदीयस्विष्टकृदाह्वानमन्त्रस्य आवृत्तिः । वि. ११।४।२१, * ज्योतिष्टोमे सवनीयपुरोडाशेषु अनूयाजैः सह पिष्टलेपफलीकरणहोमयोर्नोत्कर्षः । ५।१।१५.

* ज्योतिष्टोमे आदनसंमार्गादयो ग्रहधर्माः सवनत्रयेऽपि कर्तव्याः । ग्रहधर्माधिकरणम् । वि. २।६।९. * ज्योतिष्टोमे सुत्या पर्वणि, दीक्षणीयेष्टिस्तु ततः पूर्वम् अपर्वणि कर्तव्या । अङ्गगुणविरोधन्यायः । भा. १२।२।१।२९, * ज्योतिष्टोमे सुब्रह्मण्याऽऽह्वानार्थे निगदे 'इन्द्रागच्छ, हरिव आगच्छ, मेधातिथेर्मेष, वृषणश्वस्य मेने, गौरावस्कन्दिन्, अहल्यायै जार' इत्यादिर्मन्त्र ऐन्द्रः । विकृतौ तु अग्निष्टुति आग्नेयी सुब्रह्मण्या यजति । तेन तत्र 'अग्न आगच्छ' इति ऊहः कर्तव्यः समवेतार्थत्वात् । 'हरिवः, मेधातिथेर्मेष॰' इत्यादौ तु नोहः असमवेतार्थत्वेऽपि स्तुतिपरत्वात् । याज्ञिकास्तु 'अग्न आगच्छ रोहिताश्व बृहद्भानो धूमकेतो जातवेदो विचर्षणे' इति ऊहं कुर्वन्ति । ९।१।१६।४४.

※ ज्योतिष्टोमे सोमेन धिष्ण्यव्याघारणं परिप्लुपात्रेण ॥

'शृतेन जुहोति' इत्यत्र प्रकृतधर्मस्येव धिष्ण्यानां व्याघारणेऽपि प्रकृतत्वात् ग्रहचमसान्यतरस्मिन् करणत्वेन प्राप्ते, 'द्रोणकलशात् परिप्लवया रसानमादाय सव्यङ्ङासीनो धिष्ण्यान् व्याघारयति' इति श्रुतौ आदानकरणत्वेन उपस्थितायाः परिप्लवाया एव व्याघारणेऽपि करणत्वम् । अन्यथा परिप्लवयामादानस्य अदृष्टार्थत्वापत्तेः । संकर्ष. ३।२।१९.

* ज्योतिष्टोमे 'सोमेन यजेत' अत्र यजतिः अपूर्वस्य कर्मणो विधायकः न तु 'ऐन्द्रवायवं गृह्णाति' 'मैत्रावरुणं गृह्णाति' इत्यादीनां कर्मणां समुदायस्यानुवादकः । भा. २।२।६।१७–२०, * ज्योतिष्टोमे 'सोमेन यजेत' 'दाक्षिणानि जुहोति' 'हिरण्यमात्रेयाय ददाति' इत्यत्र भविधान्तम् अपूर्वभेदः । २।२।१।१.

※ ज्योतिष्टोमे सोमस्य मानमुपावहरणं च वाससा कर्तव्ये ॥

वाससि मानोपावहरणे प्रकृतौ सोमस्य वचनात् । १०।६।२०।७७ ॥

भाष्यम्— ज्योतिष्टोमे मानोपावहरणे समाम्नाते । तत्र संशयः किं यत्रकचिद् मानं येनकेनचित् उपावहरणं कार्यम्, उत वाससि मानं वाससा च उपावहरणमिति । किं प्राप्तम् ? अर्थात् यत्रकचिद् मानम्, येनकेनचिद् उपावहरणम् । एवं चानियमे लाघवं प्रयोगमात्रभावश्च भविष्यतीति । एवं प्राप्ते, ब्रूमः । वाससि मानम्, वाससा चोपावहरणं कार्यम् । कुतः ? वचनात् । वचनमिदं भवति । 'वाससि मिनोति, वाससा चोपावहरति' इति । वचनस्य सामर्थ्यांनियम्येत । अथवा, नैवात्र संशयः । वचनात् वाससि मानम्, वाससा चोपावहरणम् । एवं प्राप्तमुत्तरविवक्षया कीर्त्यते विरोधं चिन्तयितुम् । यस्य प्राप्तमुत्तरविवक्षया कीर्त्यते, न तत्र पूर्वोत्तरपक्षाभ्यां प्रयोजनमिति ।

सोम— प्रासिद्धत्वादेव न पृथक् संगतिः ।

वि— 'उपावहरणं मानमपि कार्यमुत वाससि ।,
क्वापि स्यात् मंत्रुताभावाद्, वचनाद् वाससोभयम् ॥'

भाट्ट— ( २०-२१-२२ इति त्रीण्यपि भाष्यस्थानि अधिकरणानि अत्र एकीकृतानि इति ज्ञेयम् ) ज्योतिष्टोमे 'वाससि मिनोति, वाससा चोपावहरति' इति वचनात् सोममानोपावहरणे वाससाधनके । अह-र्गणे च प्रत्यहं सोमोपावहरणार्थं वाससोभेदः स्यात् । हविर्धानशकटे हि स्थापितः सोमः यावत् एकाहः पर्याप्तः, तावत् प्रत्यहं वाससा उपावहर्तव्यः । अवशिष्टश्च शकटे एव वाससा उपनद्धः स्थाप्यः । तस्मात् इह अर्थात् वाससोऽन्तरं प्रत्युत्तमात् उपादेयम्, उत्तमे तु प्रकृतिवत् मानवाससैव । न च प्रत्युत्तममपि एकमेव मानवस्त्रात् भिन्नं वस्त्रमुपादाय तेनैव प्रत्यहमुपावहरणं कर्तव्यमिति वाच्यम् । उपावहरणवस्त्रस्य मानवस्त्रे दानविधानात् । तस्य च मैत्रावरुणदण्डदानन्यायेन ( ४।२।६ ) प्राप्तसोमीयाऽनुमुचनमात्रानुगुणतादृक्कालत्वेन प्राप्यहिकत्वावच्छेदाभावात् । वस्त्रान्तराण्यपि च न मानकाले एव उपादेयानि । प्रकृतौ हि सोमार्थं क्रयकालीनमानवाससैव उपनद्धस्य अभिषवबेलायां तेनैव वाससा उपावहरणं श्रुतम्, न तु स एव वासोर्थः अतश्चेह मानकाले तादृशग्रहणे प्रमाणाभावात् उपावहरणकाले एव तदुपादानम् । आर्थिकस्यापि वस्त्रैकत्वस्य बाधात् अध्यायोपयोगिता ।

मण्डन— 'मानोपावहरणे वस्त्रे ।'

शंकर— 'मानाहृती वाससा स्तः ।' २१.

• ज्योतिष्टोमे सोमालाभे पूतीकाः आदाराः फाल्गु नानि वा प्रतिनिधिः । तत्र सोमस्य पूतीकादीनां च न वैकल्पिकत्वम् । किंतु प्रतिनिधित्वनियमः पूतीकादीनाम् । वि. ६।३।१३, • ज्योतिष्टोमे सोमक्रयः अजा-हिरण्यादिभिः दशभिर्द्रव्यैः क्रियते । १२।४।३, • ज्योतिष्टोमे सोमद्रव्यस्य अर्थापत्त्या प्राप्तिकप्राप्तस्य 'सोमेन यजेत' इति नियमविधिः । ४।२।९. • ज्योतिष्टोमे सोमग्रहणे 'अनड्वाहौ युनक्ति' इति द्विवचनं विवक्षितमेव । भा. ४।१।५।११-१६.

• ज्योतिष्टोमे सोमभक्षः अनुज्ञापूर्वकः एक-पात्राणामेव ॥

तदेकपात्राणां समवायात् । ३।५।१७।४३ ॥

भाष्यम्— इदं संदिह्यते किं यः कश्चित् अनुज्ञाप-यितव्यः, उत समानपात्रः इति । अविशेषाभिधानात् यः कश्चित् । इति प्राप्ते, उच्यते । नन् खलु अनुज्ञापनमेकपात्राणां स्यात् । कुतः ? अनुज्ञापनमिह भक्षम् । अनुज्ञापनस्य च एतत् रूपम्, यत् अन्येन कर्तव्यम् अन्यश्चिकीर्षेत्, सः 'अनुमन्यस्व' इति ब्रूते, सहभोजनादि वा आचरितुकामः विज्ञप्त्यस्य अनुकूलयति ( इति ) । तदेतत् नानापात्रेषु नैव संभवति । नहि तत्र अन्येन कर्तव्यम् अन्यो वा चिकीर्षति, सहभोजनादौ वा पदार्थे संमानयति । एकपात्रे तु सोमे साधारणे संस्कर्तव्ये, न्यायेन समो विभागः प्राप्नोति । तत्र अविभज्य पीयमाने कदाचित् अन्येन पातव्यम् अन्यः पिबेत् । तत्र अनुज्ञापनं संभवति 'त्वया अर्धं पातव्यं मया अर्धम्, कश्चित् मयाद् अभ्यधिकं न्यूनं वा पिबेयम्, तद् अनुज्ञातुमर्हसि' इति । 'एकपात्रे वा पानं त्वया सह आचरन् अहं तत्र विचरणाय अर्हः' । इति संभवति अनुज्ञापना । तस्मात् एकपात्रेष्वेव एतत् स्यादिति ।

वा— यदि एतदत्यन्ताप्राप्तं विधीयेत, ततो यतः-कुतश्चित् प्रार्थ्येत । लौकिकमेव तु एतद्विधीयते । तत्र यादृशे विषये प्राप्तिः, सा न निवार्यते । समानपात्राणां तु 'समं स्यादश्रुतत्वात्' इत्यनेन न्यायेन समविभागे सति देवदत्तस्य अनुज्ञाप्य कार्यम् । तत्रापि सोमेन अनुच्छिष्टत्वे तत्कृते चाहत्वदोषाभावे, प्रत्यक्षेणैव सहभोजनात् अप्रीत्युत्पत्तेरुपपत्तेः । अतोऽनुज्ञाऽवसरो भवति । तस्मादेकपात्राणामिति ।

सोम— प्रकृतानुष्ठानविषयत्वात् संगतिः । सूत्रार्थस्तु— तत् अनुष्ठानम् एकपात्राणामेव स्यात् । तत्रैव प्रयोजनसंभवात् इति ।

वि— 'उपहानमतोपपन्नमुत स्यादेकपात्रिणाम् ।, सदाप्रेनोपायः स्याद्, दर्शावियादितोऽन्तिमः ॥'

भाट्ट—सेयमनुज्ञा यत्र एकस्मिन्नेव पात्रे भक्षपङ्क्तिः तत्रैव आद्या दृष्टार्थतालाभात्, भागाधिक्यादिप्रसङ्ग-निमित्तकलहशङ्कानिवृत्त्यर्थत्वात्। उपायान्तरेणापि क्वचि-न्निवृत्तौ अस्य नियमविधित्वात्। अन्यस्यानुज्ञाने तु अदृष्टार्थत्वमपूर्वनिमित्तं दोषः। अत एव यत्र एकस्मिन् पात्रे एक एव भक्षयिता, तत्र नैव अनुज्ञाग्रहणम्। एवं अन्तिमस्यापि भक्षयितुर्न अनुज्ञाग्रहणं प्रयोजनाभावात्। याज्ञिकास्तु आचरन्ति। ११.

मण्डन—'समपात्रेष्वनुज्ञाप्यः।'

शंकर—'पात्रैक्ये चोपहूतता।'

ज्योतिष्टोमे सोमभक्षे अनुज्ञायाः याचने दाने च अर्थानुसारेण मन्त्रक्रमः॥

तत्रार्थात् प्रतिवचनम्। ३।५।१६।४२॥

भाष्यम्—एतदाम्नातम् 'उपहूत उपह्वयस्व' इत्यनेन अनुज्ञापयेत् इति। अथ प्रतिवचने सन्देहः किं लौकिकं प्रतिवचनम्, उत एतदेवेति। किं प्राप्तम्? एतत् वैदिकं प्रश्ने विनियुक्तम्। लौकिकमन्यत् प्रतिवचनं भवितुमर्हति। एवं प्राप्ते, ब्रूमः। तत्र एत-देव प्रतिवचनमिति। ननु प्रश्नलिङ्गमेतत् उपह्वयस्व इति। उच्यते। यत् अस्य पूर्वम् 'उपहूतः' इति प्रतिवचनस्य समर्थम्, तत् प्रतिवचनकार्ये भविष्यति। आह, विपरीतमेतत् समाम्नानम्। पूर्वं हि प्रश्नेन भवितव्यम्, ततः प्रतिवचनेन। उच्यते। अर्थात् पूर्वं प्रतिवचनकार्ये भविष्यति। अर्थो हि क्रमात् बलीयान् इति।

वा—वचनम् इति वा पाठः (सूत्रे)। समस्तमेव, प्रश्नप्रतिवचनयोरेकत्र वा लौकिकः प्रयोगः। इति प्राप्ते, उच्यते। अर्थक्रमेण पाठक्रमं बाधित्वा 'उपहूतः' इत्येतत् अभ्यनुज्ञाया प्रयोक्तव्यः।

सोम—मन्त्रेण अनुज्ञाने उक्ते तत्र मन्त्रविभाग-विचारात् संगतिः। सूत्रार्थस्तु—तत्र 'उपहूत उप-ह्वयस्व' इत्यत्र। प्रतिवचनं अर्थात् सामर्थ्यानुरोधात् 'उपहूतः' इत्यनेन कर्तव्यमिति।

वि—'उपहूयस्वोपहूत इत्यशेषो द्वयोर्भवेत्। अनुज्ञाऽनुज्ञापनयोरथवाऽस्यो विभज्यते॥, विभागकरणा-भावाद्दोषश्चे, न लिङ्गतः। उपह्वये त्वनुमतावनुज्ञाने तयेतरः॥'

भाट्टमन्थो गतः पूर्वाधिकरणे।

मण्डन—'प्रत्युक्तिः पूर्वमन्त्रभाक्।'

शंकर—'तन्मन्त्रस्य विभागः स्यात्।'

ज्योतिष्टोमे सोमभक्षे होमाभिषवौ समुचितौ कारणम्॥

होमाभिषवाभ्यां च। ३।५।११।३२॥

भाष्यम्—अपरमपि कारणं होमाभिषवौ। कथम्? 'हविर्धाने ग्रावभिरभिषुत्य आहवनीये हुत्वा प्रत्यञ्चः परेत्य सदसि भक्षान् भक्षयन्ति' इति। न तावदेष क्रमो विधीयते होमे निर्वृत्ते ततो भक्षणमिति। भक्षणस्य अप्राप्तत्वात्। द्वयोश्च क्रमयोर्विधानात्, अभिषुत्य हुत्वेति वाक्यं भिद्येत। अर्थेन च प्राप्तत्वादस्य क्रमस्य। नहि अकृते प्रयोजने कश्चित् प्रतिपादनमर्हति। न च भक्षणाद्भावेन होमाभिषवौ चोद्येते अभिषवस्य होमार्थत्वात्, होमस्य च फलार्थत्वात्। तस्मात् होमाभिषवयोः कर्तृणां भक्षणं विधीयते। ये अभिषुण्वन्ति जुह्वति च, ते भक्षयन्तीति।

वा—किं एतावद्भिरेव निमित्तैर्भक्षः? नेत्युच्यते। होमाभिषवाभ्यामपरो भक्षः। कथम्? एवं हि आह 'हविर्धाने ग्रावभिरभिषुत्य आहवनीये हुत्वा प्रत्यञ्चः परेत्य सदसि भक्षान् भक्षयन्ति' इति। तत्र होमाभिषवौ तावत् सन्तुष्टौ प्राप्तौ न विधीयेते। दीक्षावाक्यवत् ('अध्वर्युर्यजमानं दीक्षयित्वा ब्रह्माणं दीक्षयति' इत्यादि-वाक्यवत्) क्रमार्था श्रुतिः इति चेत्, तन्न नास्ति। अर्थादेव अस्य क्रमस्य सिद्धत्वात्। नहि हुतस्य अभिषवः संभवति, न च भक्षितस्य होमः। आहवनीयदेशाच्च सदः (द्वितीयान्तमिदम्) आगच्छतः स्वयमेव प्रतिपद्यन्ते। होमादीनां च सदसि भक्षयन्ते' अवश्य परङ्कारसमाख्या-निमित्तभक्षार्थं सदः (सदसि इत्यर्थः) होमा आनेतव्याः। अध्वर्युणा च उपहवो दातव्यः। तेन सदसि इत्यनूद्यते।

येनैव तु भक्षणमत्र विधीयते। तत्र हुत्वा अभिषुत्य इत्येतदुपादानस्य एतत् प्रयोजनम्, कथं नाम तत्समानकर्तृको भक्षः सिध्येदिति। नहि निर्ज्ञातप्रयोजनयोः होमाभिषवयोः भक्षणाङ्गत्वं संभवति। भक्षस्य च सोमपदार्थत्वप्रतिपत्तिरूपत्वमेव इति नाङ्गत्वार्थमितरसंबन्धश्रवणम्। अतश्च अर्थात् होमाभिषवयोः निमित्तत्वं ज्ञातम्। अतो होमाभिषवकारी अपि सोमं भक्षयेदिति।

वि—'आहुया-वषट्-वषट्कारा एव किं भक्षयेयुः। किंवाऽभिषवहोमौ च, तथाप्युक्ता दिशा ॥, हविर्धानेऽभिषुत्याथ हुत्वा सदसि भक्षयेत्। इति श्रुतावनयोः च भक्षहेतू यथेतरे ॥' (हेतु इत्येकवचनमापत्यकम् 'इति हेतुत्वमुक्तवे' इति कल्पतरुकारवत्)।

भाट्ट— इदमपरं भक्षस्य निमित्तम् 'हविर्धाने ग्रावभिरभिषुत्याहवनीये हुत्वा प्रत्यञ्चः परेत्य सदसि भक्षान् भक्षयन्ति' इति। अत्र हविर्धानादीनां सर्वेषां गुणानां विध्यन्तरात् अर्थाच्च प्राप्तत्वात् येनैव होमाभिषवसमानकर्तृकत्वं भक्षमात्रे अप्राप्तं विधेयम्। यद्यपि च हारियोजनादौ होमाभिषवसमानकर्तृत्वमपि नाप्राप्तम्, तथापि भक्षानुवादे वाक्यभेदप्रसक्तेः, तस्य विधेयत्वम्। सा च न पूर्वविहितभक्षेषु, सर्वत्र तत्तन्निमित्तविशेषविहितकर्मान्तरत्वप्रसङ्गात्। अतश्च होमाभिषवसमानकर्तृकं भक्षणान्तरमेवेह विधीयते, कर्तृत्वगुणात् तेषेन वा अदेश्यवत् वषट्कारभक्षस्येव प्रयोगभेदमात्रम्। न च तत्र नियामकाभावः, प्राथम्येन तत्प्रत्यासत्तिनो वषट्कारवाक्ये नियामकत्वात्। प्राथम्यस्यापि प्रयोगान्वये तु कर्मान्तरमेव इति ध्येयम्। अत्र च होमे अभिषवसमानकर्तृकत्वस्य आध्वर्यवसमाख्याबलादेव प्राप्ते प्रधानान्वयस्य अभ्यर्हितत्वाच्च भक्षे एव अभिषवसमानकर्तृकत्वं होमसमानकर्तृकत्ववत् विधीयते। होमाभिषवयोश्च सत्यप्रत्यक्षत्वात् वषट्कारवदेव अर्थनिमित्तत्वम्। तयोः समुच्चितयोर्निमित्तता इति षष्ठे (६।४।७) वक्ष्यते। अतश्च यो यद्ग्रहस्य होमाभिषवोभयकर्ता अध्वर्युः प्रतिप्रस्थाता अन्यो वा ग्रहे चमसे वा, ■ तत्र भक्षयेत्।

मण्डन—'होमाभिषवकर्ता च।' भक्षयेत्।

शंकर—'होमश्चाभिषवश्चापि।' भक्षयेयुः।

स्वज्योतिष्टोमे सोमभक्षनिमित्तानां समुच्चयः ॥

प्रत्यक्षोपदेशाच्चमसानामव्यक्तः शेषे। ३।५।१२।३३ ॥

भाष्यम्— इदं श्रूयते 'प्रैतु होतुश्चमसः, प्र ब्रह्मणः, प्रोद्गातॄणाम्' इति। तत्र संदेहः चमसेषु होमाभिषवयोः कर्तारो वषट्कर्तारश्च किं भक्षयेयुः, उत नेति। किं प्राप्तम्? न भक्षयेयुः। प्रत्यक्षोपदेशाच्चमसानां चमसिनः प्रति 'प्रैतु होतुश्चमसः' इत्येवमादिभिर्विशिष्टवचनैः, होमाभिषवादिकारिणा सामान्यवाक्येन 'यः सोमो भक्षणेन संस्कर्तव्यः, ■ चमसेषु चमसिभिः' इति। अथेदानीमन्यनिमित्त क्व भविष्यति? अव्यक्तः सामान्यनिमित्तः। क्व, शेषे भविष्यति, यत्र न चमसिनः।

वा— अथ यत्र निमित्तसंपातो भवति, तत्र किमन्यनिमित्तको भक्षः समुच्चीयते, अथ विकल्पते, अथवा बाध्यते इति। तुल्यार्थत्वात् विकल्पप्राप्तौ अभिधीयते। प्रैतु होतुरित्यादिना विशेषवचोबलात् अविशेषप्राप्तं होमाभिषवादिवद् ग्रहेषु चरितार्थं शक्यं बाधितुम्। अतः शेषे तत् स्यादिति। (अनेन भाष्यं व्याख्यातम्)।

स्याद्वा, कारणभावादनिर्देशश्चमसानां कर्तुस्तद्वचनत्वात्। ३४ ॥

भाष्यम्— स्याद्वा चमसेषु वषट्कर्त्रादीनां भक्षः। प्राप्नोति हि तेषां तत्र कारणम्। न च प्रतिषिध्यते। ननु चमसिनां प्रत्यक्षोपदेशात् निवर्तेरन्। उच्यते। अनिर्देशश्चमसानां कर्तृस्तद्वचनत्वात्। प्रैतु होतुश्चमसः इत्येवमादयः शब्दा न शक्नुवन्ति वषट्कर्त्रादीन् प्रतिषेद्धुम्। उद्देशारो हि ते, न प्रतिषेद्धारः। तस्मात् वषट्कर्त्रादयोऽपि चमसेषु भक्षयेयुः।

वा— स्याद्वा प्राप्तिनिमित्तत्वात्। वषट्करणादिनिमित्ते सति प्रत्यक्षोपदेशेनैव वषट्कारादिष्वपि तेन प्राप्तिः। न च तस्य सामान्येन प्रवृत्तिः। वषट्कृतेषु सोमेषु विशेषरूपेणैव प्रत्यक्षशिष्टत्वात्। काम ■ समाख्या विप्रकृष्टत्वात् दुर्बला स्यात्। साऽपि तु अनवकाशत्वात् अवश्यमङ्गीकर्तव्या। तथा सति च प्राप्तिभाजेऽन्यो व्याप्रियते, नान्यन्निवर्तते। संभवति हि सावयवस्य द्रव्यस्य अनेकेनापि

भक्षणम्, विशेषतस्त्रिकद्रुकस्य सोमस्य । श्रूयते च 'अल्पं भक्षयेत्' इति । न च निःशेषभक्षणे अल्पत्वमव-कल्पते । सशेषे च प्रतिपत्त्यपेक्षित्वे, भवति भक्षान्तर-स्यावकाशः । तस्मात् समावेशः कर्तव्य इति ।

चमसे चान्यदर्शनात् । ३५ ॥

भाष्यम्— चमसे च अन्यान्भक्षिणो दर्शयति । 'चमसांश्चमसाध्वर्यवे प्रयच्छति । तान् स वषट्कर्त्रे हरति' इति । यदि हि स्वभागो वषट्कर्त्रे ह्रियते । तेन बहुहरणदर्शनं नावकल्पते, यदि वषट्कर्त्रादयो न चमसेषु भक्षयेयुः । तस्मात् भक्षयन्तीति ।

सोम— प्रासङ्गिकी संगतिः । सूत्रार्थस्तु— चमसाना चमसिनः प्रत्यक्षतो विशेषतः उपदेशात् तेन बाधितः अप्रत्यक्षः सामान्यविषयत्वात् चमसविषयत्वेन अप्रवृत्तः वषट्कारादिनिमित्तको भक्षः चमसव्यतिरिक्ते स्यात् इति ।

वि— 'हेतुद्वये विकल्पः किं बाधो वाऽथ समुच्चयः ।, आद्यात् विकल्पो बाध्यता चावकाशः समाख्यया ॥, नैव बाधनिकं बाध्यं भक्षणेऽत्र विभागतः । सिद्धे विकल्पो नो युक्तः स्वीकार्योऽतः समुच्चयः ॥'

भाट्ट— अथ यत्र एकस्मिन् पात्रे अनेकेषां भक्ष-कर्तृणाम्, एकस्मिन् कर्तरि वा अनेकेषां वषट्कारहोमाभि-षवसमाख्याऽऽदिकारणानां समवायः, तत्रैकशेषप्रतिपत्ति-मैत्यात्तद्बाधा विकल्पे, प्रत्यक्षविहितानामपि वषट्कारादि-भक्षाणां सामान्यविहितत्वात् कल्प्यत्वाऽपि समाख्यया विशेषविहिता प्रमेयत्वात्र्न्यायेन बाधात् ग्रहविषयत्वाव-गतेर्भिन्नविषयत्वे वा प्राप्ते, 'अल्पं भक्षयति' इति वचनेन कृत्स्नस्य शेषस्य एकमक्षणप्रतिपादकत्वाभावात् एकेन भक्षणेन प्रतिपादितेऽपि शेषे अवशिष्टशेषस्य भक्षणान्तरेण प्रतिपत्तिसंभवात्, प्राबल्यविशेषात् समुच्चयः । ननु एवं कर्तृभेदेन अनेकेषां भक्षाणां पृथगनुष्ठानेन समुच्चयोपपत्तावपि, यत्र एकस्मिन्नेव कर्तरि कारणा-नेकत्वम्, तत्र प्रयोगविध्यवगताशीघ्र्यापेक्षत्वात् तन्त्रो-पपत्तेर्न पृथगनुष्ठानेन समुच्चयः । वस्तुतस्तु समाख्यया अध्वर्युयजमानचमसाध्वर्युचमसेषु कारणान्तरेण एतत्कर्तृक-भक्षस्य अप्राप्तत्वात् विधायकश्रुतिकल्पकत्वेऽपि होतृ-चमसेषु वषट्कर्तृत्वेनैव तेषां तत्र भक्षस्य प्राप्तत्वात् कल्पप्रवृत्तिनिमित्ततया न विधिकल्पकत्वावकाशः । एवं हारियोजनेऽपि येषां कारणान्तरेण न भक्षप्राप्तिः, तत्प्राप्तिफलक एव सर्वत्यविधिरिति न तत्रापि कारणद्वयस्य एकस्मिन् कर्तरि समवायः इति चेन्न, मैत्रावरुणादिहोत्र-कचमसेषु वषट्कारात् तेषामिव होतुरपि वषट्कर्तृत्वात् होतृचमससाधारण्येन च अध्वर्योरपि होमाभिषवकर्तृत्वात् होत्रादीनामपि तद्भक्षणप्राप्तेः, विशिष्य तत्तच्चमसः इत्येवंविधसमाख्यायाः तत्तत्कर्तृकभक्षणान्तरविधिमन्तरेण अनुपपत्तेः । अत एव तन्त्रानुष्ठाने विधिफलाभावेन तन्त्रत्वमपि न । न चैवमपि एकस्मिन्नेव कस्मिंश्चिद्-ध्यासे समाख्यानिमित्तभक्षकरणमेव समाख्योपपत्तौ न चमसाध्वर्य्वभ्यासे तदापत्तिः, समाख्यावाक्यस्य श्रुतौ अविशेषात् प्रकृतापूर्वसाधनचमसस्थसोमसंस्कारार्थत्वेन तत्तत्कर्तृकभक्षस्य विधेयत्वेन सर्वत्रैव चमसाध्वर्य्वभ्यासे तत्प्राप्तेः । अतः सर्वत्रैव एकपात्रे कर्तृभेदे इव एककर्तरि कारणभेदेऽपि युक्तो भक्षणस्य पृथगनुष्ठानेन समुच्चयः । हारियोजने तु माऽस्तु समुच्चयः । यथाशिकानुष्ठानं चेत्तर्हि तेनास्तु सः । १०.

मण्डन— 'परस्य चमसेऽपि तौ ।' होमाभि-षवकर्तारौ ।

शंकर— 'समुच्चयो भक्षणानाम् ।'

* ज्योतिष्टोमे सोमभक्षणे अनुवषट्कारदेवता अग्निः नोपलक्षणीयः । अनुवषट्काराधिकरणम् । वि. ३।२।१६.

ज्योतिष्टोमे सोमविक्रयी ऋत्विग्भ्यो भिन्नः ॥

विक्रयी त्वन्यः कर्मणोऽचोदितत्वात् । ३।७। १५।३१ ॥

भाष्यम्— अस्ति सोमविक्रयी । तत्र संदेहः स किम् अध्वर्य्वादीनामन्यतमः, उत एभ्योऽन्यः इति । किं प्राप्तम् ? तेषां संकीर्तनात् तेषामन्यतमः । इति प्राप्ते, उच्यते । विक्रयी त्वन्यः स्यादिति । विक्रयो न चोद्यते, क्रयश्चोद्यते, तत्र अर्थात् विक्रयः । ज्योतिष्टोमस्य च

पदार्थान् कर्तुम् अध्वर्य्वादयः उत्पाद्यन्ते । न तु विक्रयो ज्योतिष्टोमस्य श्रूयते । तस्मात् आध्वर्य्वादीनां अन्यतमः इति ।

वि— ' सोमविक्रय्येक एषु न वा, वरणवर्जनात् । एकः, ऋत्विग्धर्मा नास्ति विक्रयस्येति मिथते ॥ '

भाट्ट— सोमविक्रयी तु अन्य एव । वरणादिकं हि ऋत्विग्भ्यः सदङ्गपदार्थकरणाय पुरुषानुपादाय क्रियते । विक्रयस्तु अविहितत्वात् विहितक्रयान्यथाऽनुपपत्त्या आवश्यकोऽपि दोषत्वीकारेण रागतः प्रवृत्तपुरुषकर्तृकविक्रयोपजीवनेनापि क्रयसिद्धेः साधनाय अनाप्तम् । अतस्तत्र पुरुषान्तरमासेः अन्य एवेति ।

मण्डन— ' विक्रयी प्रकृतेभ्योऽन्यः । '

शंकर— ' सोमविक्रय्यन्य इष्टः । '

ज्योतिष्टोमे सोमशेषभक्षविधानात् अस्ति सोमभक्षः ॥

सोमेऽवचनाद् भक्षो न विद्यते । ३।५।६।१९॥

भाष्यम्— ज्योतिष्टोमे समामनन्ति सोमान् । तेषु संदेहः किं तदा शेषे भक्षयितव्यः, उत नेति । किं प्राप्तम् ? सोमे भक्षो न विद्यते । कस्मात् ? अवचनात् । न ह्यस्मिन्नपि वचने अभ्यनुज्ञातं भक्षणम् । तस्मात् सोमशेषो न भक्षयितव्यः इति ।

वा— ऐन्द्रवायवे तावत् विशिष्टविधानादपि भक्षो भवेत् । अथैतस्मिन्नन्यस्मिन्नपि चमसस्थे सोमे संदेहः किं भक्षोऽस्ति नेति । तथापि ' सर्वतः परिहारमाश्विन भक्षयति ' इत्यादिषु ऐन्द्रवायवन्यायेन एव स्यात् । इदं तु सर्वथा तत्रापि विचार्यते, किं प्राप्ते भक्षे विशेषणमात्रं वचनेन विधीयते, उत विशिष्टविधानमेवेति । कश्चात्र विशेषः । स यदि वाचनिकः, ततो यावद्वचनमेव कर्तव्यः, अथ अन्यतः, कुतश्चित्, तत् एकदेशस्यापि लिङ्गं स्यादीपुरोडाशन्यायेन समभक्षो भविष्यति । अथ-चैष पक्षः शोभन्ते । किमन्यार्थदर्शनानां प्राप्त्यपेक्षत्वात् अविधानाच्च नैव भक्षः, उत प्राप्त्यभावात् अन्यार्थदर्शनान्येन वचनीकृत्य यावद्वचनं भक्षः, उत वषट्काराहोमाभिषवनिमित्तोऽपि भक्ष इति । किं प्राप्तम् ? आदरणार्थं समाश्रीयमाणेभक्षणमावरणम् यथा होमशेषोगात् शेष एव नास्ति, कुतः पुनर्भक्ष इति । न चात्र प्रकृतितः प्राप्तिः, न च प्रत्यक्षोपदेशः । योऽप्युपदेश इव, सोऽपि अन्यपरत्वात् असमर्थः । तस्मान्नास्ति भक्ष इति ।

स्याद्वाऽन्यार्थदर्शनात् । २० ॥

भाष्यम्— भवेद्वा भक्षः । अन्यार्थं हि वचनं ( सर्वतः परिहारविधानार्थम् । सर्वतः परिहारो नाम समस्तस्य समन्तात् चमसस्य प्रदक्षिणीकरणम् ) भक्षं दर्शयति । ' सर्वतः परिहारमाश्विनं ( ग्रहं ) भक्षयति ' ' भक्षिताप्यायितान् ( भक्षितान् आप्यायितांश्च ) चमसान् दक्षिणस्यानसोऽवलम्बे ( अनसः ईशायाम् ) सादयन्ति ' इति । तावति भक्षणे एवं-जातीयका भक्षविशेषाः समञ्जन्ति ।

वा— यदि अन्यार्थदर्शनानि भवेयुः, ततोऽन्यथापि प्राप्तिः स्याद् वचनानि स्वेतानि । तस्माद्यथोपदेशं भक्षोऽयं अन्यथेति ।

वचनानि त्वपूर्वत्वात्, तस्माद् यथोपदेशं स्युः । २१ ॥

भाष्यम्— ननु दर्शनमिदम्, प्राप्तिर्वक्तव्या । उच्यते । वचनानि तर्हि भविष्यन्ति । ' सर्वतः परिहारमाश्विन भक्षयति । तस्मात् सर्वा दिशः शृणोति ' इति विशिष्टं भक्षणं विधीयते । अपूर्वत्वात् भक्षानभ्यासो नावकल्पते । अपि चैवम् अपूर्वमर्थं विदधतः अर्थवत्ता भविष्यति । तस्मात् यत्रैव विशिष्टं भक्षणं श्रूयते तत्रैव भवति, नातिप्रसज्यते ।

शा— तदिदं अत्रप्रभृति होमाभिषवाभ्यां च इत्येवमन्तम् एकमधिकरणम् ( १९-२२ सू ) । तत्र ' भक्षणं नास्ति सोमस्य निःशेषं हूयते यतः । शेषे सत्यपि नैवात्र भक्षणं विध्यभावतः ॥ ' इति पूर्वः पक्षः । ( प्रामाकरमतमनूद्य निरस्यति— ) यत्तु जलबिन्दुनिपातमात्रेण शास्त्रार्थस्य कृतत्वात् न अशेषहोमः इत्याह, तस्य सोमस्य शादत्वपि तथैव स्यात्, तत्राप्युपात्ते च चोदनस्य शेषः स्यात् । अथ शेषकार्यवशात् शिष्येत, तथा तेषामपि प्रयोजनत्वात् शेषाद्य-दोषाभावादावपि स्विष्टकृदादावपि हविस्त्यागः स्यात् । तस्मात् अशेषत्वादभक्षणम् ( पूर्वपक्षे ) ।

सोम— वचनात् ऐन्द्रवायवस्य द्विर्भक्षणम् इत्युपवर्णनापरिहारः अनुपपन्नः, सोमभक्षणस्यैव अभावात् इति भयस्थानात् संगतिः। सूत्रे अवचनात् इति छेदः।

वि—'सोमेऽभक्षो भक्षो वा, न भक्षो मद्धोमनः।, भक्षोक्तेरस्ति दोषोऽस्य भक्षोऽपूर्वस्त्रोषिडाद्॥'

भाट्ट— ज्योतिष्टोमे उत्पत्तिशिष्टोऽपि सोमः अभिषवादिसंस्कारविधिवशात् रसप्रकृतिः। रस एव तु मदजनकत्वादिपाननिवृत्तिः, इन्द्राग्न्यादिदेवतासंबन्धात् हविः इति सर्वं एव स्यात्। अत्र च 'अल्पं जुहोति' इति वचनेन अल्पोद्देशेन प्रक्षेपरूपयागविधिः श्रवणात्। तत्र च 'ग्रहैर्जुहोति' इत्यादिना पात्रविधिरिति स्थितिः। अतः शेषत्वात् भक्षण तत्प्रतिपत्तिः। तत्प्रमाणं च समाख्या वचनं च। तत्र समाख्या तावत् 'प्रैतु होतुश्चमसः प्र ब्रह्मणः' इत्यादिका वेदे, याज्ञिकानां होतृचमसः इत्यादिका। भक्षणार्थस्य चमेर्धातोः अधिकरणवाचके औणादिके असच्प्रत्यये कृते चमसशब्दनिष्पत्तिः। सोमश्चम्यते अस्मिन् इति व्युत्पत्त्या सोमभक्षणसाधनपात्रगतैः तत्समाख्याकल्पितश्रुत्या होत्रादिकर्तृकभक्षणस्य सोमप्रतिपत्त्यर्थत्वसिद्धिः। यदि तु उणादयः अव्युत्पन्ना इति पक्षाश्रयणम्, तदा चमसशब्दस्य पात्रे रूढत्वेन योगतयैव होतृचमसादिशब्देभ्यो भक्षणकर्त्रादिसंबन्धेनैवेति तथा भक्षणसिद्धिरविरुद्धा। अतश्च होतृब्रह्मोद्गातृयजमानमैत्रावरुणब्राह्मणाच्छंसिपोतृनेष्ट्राग्नीध्राच्छावाकग्रावस्तुत्संज्ञकानां समाख्यया भक्षः। यद्यप्यध्वर्योः तत्रापि स्ववमसे। वचनं तु अग्रे निरूपयिष्यते।

मण्डन— 'ज्योतिष्टोमेऽस्ति भक्षणम्।'

शंकर— 'सोमे भक्षो भवत्येव।'

* ज्योतिष्टोमे सौत्येऽहनि वैकल्पिकी पयसोपस्थितिनी समाम्नाता। भाट्ट. ७।४।२. * ज्योतिष्टोमे सोमसाम नित्यं नैमित्तिकं काम्यं चेति त्रेधा। तत्र षोडशिसंस्थायां 'गौरिवीतं षोडशिसाम भवति' इति नित्यतया विहितम्। उक्थ्यस्तोत्राणां मध्यमं महासाम। अतिरात्रसंस्थायां नैमित्तिकम्। षोडशिसंस्थायामेव च पुनः काम्यमपि। वि. २।२।१३, * ज्योतिष्टोमे सौमिकवेदिः सर्वाङ्गप्रधानार्था, न तु प्रधानार्थैव। विकार्यादिकरणम्। ३।७।३, * ज्योतिष्टोमे सोम्यचरोः सवनीयपुरोडाशानां च ऐष्टिकैः पात्रैर्होमः, सौमिकैः पात्रैर्न प्रणालसिद्धिः। 'प्रवृत्तौ न' इति त्रिन्दौ अधिकरणम्। १२।१।४, * ज्योतिष्टोमे सोम्यचर्वादिषु हविष्कृदाह्वानं न कर्तव्यम्। १२।२।४, * ज्योतिष्टोमे स्तोत्रशस्त्रे प्रधानकर्मणी, न देवतासंस्कारके। स्तुतशस्त्राधिकरणम्। २।१।५, * ज्योतिष्टोमे स्तोमाश्चत्वारः— 'त्रिवृत्, पञ्चदशः, सप्तदशः, एकविंशः' इति। ४।४।१२. * ज्योतिष्टोमे स्त्रीद्वितीयस्य एकस्यैव पुंसः अधिकारः न तु द्वयोः पुंसोः। आधानाधिकरणम्। भा. ६।१।५।२२–२३, * ज्योतिष्टोमे स्वप्नार्थो मन्त्रः 'त्वमग्ने व्रतपा असि' इति। स यदा पुनः प्रतिबुद्धः स्वपिति तदापि नावृत्तिर्मन्त्रस्य। कृत्स्ना रात्रिमुद्दिश्य असौ स्वप्नाकर्षं प्रयुङ्क्ते। ११।४।१७।५०, * ज्योतिष्टोमे हविर्धानमण्डपावेरुपघाते प्रकृता या चित् वैकल्यादिः कङ्क्षु आत्मा। वि. ३।२।८, * ज्योतिष्टोमे हविष्कृत्–अधिषवेप–पुरोऽनुवाक्या–मनोतानां प्रतिपद्य कालभेदे आवृत्तिः। भा. ११।४।२०।५७–५९, * ज्योतिष्टोमे 'हस्तावनेनिक्ते' इति हस्तावनेजनं कृत्स्नप्रकरणार्थम्, न तु उभयाविस्तरणार्थमेव। ३।१।१४।२८–२९. * ज्योतिष्टोमे होत्रकचमसभक्षमन्त्रेषु मित्रावरुणादिभिः मद्र इन्द्रोऽपि उपलक्षणीयः। वि. ३।२।१२.

* ज्योतिष्टोमे होमाभिषवौ सहितौ एवं भक्षनिमित्तम्॥

होमाभिषवभक्षणं च तद्वत्। ३।४।७।२४॥

भाष्यम्— ज्योतिष्टोमे श्रूयते 'हविर्धाने ग्रावभिरभिषुत्याहवनीये हुत्वा प्रत्यञ्चः परेत्य सदसि भक्षान् भक्षयन्ति' इति। तत्र अनेन वचनेन अभिषव उक्तो यजतिना होमः। तौ अत्र विधीयेते। न च ययोः क्रमः। अर्थादेव हि स प्राप्तः। तस्मादेककर्तृकं होमाभिषवाभ्यां भक्षणं विधीयते। अभिषवे कृते होमे च तत्कर्तृभिर्भक्षयितव्यमिति। तत्र एष संदेहः, किमुभय यः कुर्यात् स एव भक्षयेत्, उतान्यतरेणापि भक्षयितव्यमिति। किं प्राप्तम्? होमाभिषवभक्षणं च तद्वत्। तद्वदेव स्यात्, यस्तु हविर

र्थ्यम्। कथम्? नैतदेवं संबध्यते, अभिषुत्य ततो हुत्वा ततो भक्षयेदिति। नानेन अभिषवस्य होमस्य च क्रमः कीर्त्यते, अभिषुत्य ये जुह्वति, ते भक्षयन्तीति। वाक्यभेदो हि स्यात्, अभिषुत्य भक्षयन्ति, हुत्वा भक्षयन्तीति। तस्मात् होमाभिषवयोः परस्परेण सम्बन्धो नास्तीति एकेनापि भक्षणं संबध्येत, अपरेणापि अभिषुत्य भक्षयन्तीति। तस्मादन्यतरेण निमित्तेन भक्षणं भवतीति।

टुप्—( हविर्धाने ग्रावभिरभिषुत्य इत्यादि वाक्यम् अभिषवहोमसमानकर्तृकभक्षणविधायकमिति तृतीये [ ३।५।११।३२ ] साधितम्, इह च तदेव उपोद्घातत्वेन स्मारयति— ) तत्रापि पदार्थाभिधाने ( यद्यपि सर्वे पदार्थाः होमाभिषवक्रमप्रत्याम्नानादयः अभिधीयन्ते तथापि ) होमाभिषवयोः क्रमो न विधीयते ( होमाभिषवौ तत्क्रमश्च न विधीयन्ते इत्यर्थः ), अर्थप्राप्तत्वात्। ( यजतिना होमः इति भाष्यम् आक्षिपति— ) ननु यागहोमयोर्भिन्नत्वात् होमो विधीयते। उच्यते। वाक्यान्तरेण ( यद् ग्रहान् जुहोति इत्यादिना ) विहितत्वात् अविधेयः। ( तदसि भक्षयन्ति इत्यपि अविधेयम् अर्थप्राप्तत्वात् ) तेनास्य ( सोमरूपस्य ), प्रत्यक्त्वमपि ( अविधेयम् अर्थप्राप्तत्वात् )। यदि ' हुत्वा प्रत्यञ्च परेत्य ' इति क्रमो विधीयेत, ( तदाह— ) होमोत्तरकाल भक्षणम्, होमोत्तरत्वम् ( एव ) प्रत्यक् गमनम्। उभयस्य ( अभिषवस्य होमस्य प्रत्यग्गमनस्य च ) क्रमो न विधीयते। ( पारिशेष्यात् ) अतः अभिषवकर्तुः होमकर्तुश्च विधीयते। ( पूर्वपक्षमाह— ) कर्तृसंस्कारत्वात् भक्षस्य ( कर्तृगत ) साहित्यम् अविवक्षितम् ( उद्देश्यगतत्वात् )। ननु अभिषुत्य इति ( अपि ) साकाङ्क्षत्वात् उत्तरेण ( हुत्वा इत्यनेन ) क्त्वाऽन्तेन सह संबध्यते ( एवं च हुत्वा इत्यनेनापि अभिषवसमानकर्तृकहोमाभिधानात् ) उभयविशिष्टेन कर्त्रा संबन्धात् भक्षस्य न एकक्रियाकर्तृभेदः। उच्यते। नास्ति क्त्वाऽन्तानां परस्परसंबन्धः। कुतः? यतः अभिषुत्य इति ( अपि ) साकाङ्क्षम्, उत्तरमपि क्त्वाऽन्तत्वादेव साकाङ्क्षम् ( न च साकाङ्क्षयोर्मिथः संबन्धो युक्तः )। तस्मात् यत् निराकाङ्क्षीकरणसमर्थम् ( आख्यातम् ) तदेव ( द्वयमपि ) अभिलषति ( इति ) सर्वान्वयेन ( भक्षयन्ति इत्यनेन द्वयोरपि ) संबन्धः। एवं ( तयोरपि आख्यातेन ) चेत् ( संबन्धः, तथा सति ) अभिषुत्य ( भक्षयन्ति ) हुत्वा भक्षयन्ति इति नास्ति ( होमाभिषवयोः परस्पर ) संबन्धः। अन्यथेन ( परस्पर ) संबन्धे क्रियमाणे वाक्यभेदः ( स्यात् )। तस्मात् एकैकेन भक्षणम् इति पूर्वः पक्षः।

उभाभ्यां वा, नहि तयोर्धर्मशास्त्रम्। २५ ॥

भाष्यम्— उभाभ्यां वा निमित्ताभ्यां भक्षयेत्। न भक्षणं होमाभिषवयोर्धर्मो विधीयते। किं हि स्यात्? यदि तयोर्धर्मो विधीयेत, ततो होमाभिषवौ प्रधानमिति भक्षणं गुणः प्रतिप्रधानं भिद्येत। अथ पुनरुभाभ्यां निमित्ताभ्यां भक्षणं विधीयते, तस्मिन् विहिते एकोऽर्थो विहितो भवति, तेनैकं वाक्यम्। तदेतावति पर्यवसितं भवति, अभिषुत्य हुत्वा भक्षयन्तीति। तदेतद्वाक्यान्तरं वाक्यं हुत्वा भक्षयन्तीति। न च महावाक्ये सति अवान्तरवाक्यं प्रमाणं भवति, पदान्तरस्य बाधनात्। यथा ' नोद्यन्तमादित्यमीक्षेत ' इति प्रतिषेधो गम्यते महावाक्यात्, अवान्तरवाक्यात् ईक्षणविधानम्। तस्मात् अन्यतरनिमित्तं भक्षणमश्रुतम्। महावाक्यात् इदमवगम्यते, द्वे निमित्ते भक्षणस्येति। भक्षणं चान्यथा कुर्वन् श्रुतं परित्यजेत्। तस्मादुभाभ्यां निमित्ताभ्यां भक्षणमिति।

टुप्— भक्षस्य द्रव्यसंस्कारत्वेन विधिना कर्तृगुणभावः। तस्मात् ( कर्तुः गुणभूतत्वेन उपादेयत्वात् ) समवक्रियायोगिता विवक्षिता। अत उभयनिमित्तो भक्षः।

व्या— ' उद्देश्यत्वान्न साहित्यं तयोः शक्यं विवक्षितुम्। ततः प्रत्येकमेताभ्यां भक्षणं प्रतिभूयते ॥ ' अतः प्रत्येकमेव निमित्तम्। उच्यते। ' निमित्तत्वे भवेद्द्वयोर्नैकस्य निमित्तता। होमाभिषवकर्ता तु भक्षाङ्गत्वेन चोद्यते ॥ ' अतो येन उभयमनुष्ठितम्, स एव भक्षयेत्।

र्दिग्धम् । अथवा सामान्य तस्मिंश्च विशेषे अन्यस्मिंश्च इत्येवं संदिग्धम् । तत् सामान्यविधानं विशेषविधौ न स्यात् । किं कारणम् ? अन्याय्यत्वाद् विकल्पस्य । कथमन्याय्यो विकल्पः ? अत्रोच्यते । यदि कर्माद्यधिकरणता सर्वेषु होमेषु श्रूयते, सा पक्षे न भवति इति विकल्पमाश्रयता प्रमाणापेक्षा कल्पयितव्या । अथ कर्माद्यधिकरणता एषु न श्रूयते, ततः पक्षे सा भवति इति प्रमाणापेतैव । कर्मग्रहणं च श्रूयमाणमविवक्षितं स्यात् । अथोच्येत अर्थात् पक्षे भावः, स चार्थो होमनिर्वृत्तिः आहवनीयेनेति, तन्न । यदि होमनिर्वृत्तिमात्रं कर्तव्यम्, तत आहवनीयेनापि अर्थात् सिध्येत् । इह तु कर्माद्यधिकरणताऽपि विधीयते । सा आहवनीये उपादीयमाने नोपसंह्रियेत । अनुपसंहारे च प्रयोगवचनो बाध्येत ।

अत्रोच्यते । यद्यपि कर्माद्यधिकरणताऽपि विधीयते होमे, गुणभूतत्वात् होमं समीचीनं करोतीति । तदनुपसंहारेऽपि न दोषः । अधिकरणान्तरेण समीचीनो भविष्यतीति । तस्मात् विकल्प एवेति । नैतदुच्यते । कर्मादिहोमसंबन्धोऽत्र विधीयते । स च प्रधानभूतः, न होमः । तस्मिन् अनुपसंह्रियमाणे, न यथाभूतं कृतं स्यात् । अत्रोच्यते । संबन्धेऽपि विधीयमाने द्वयं विधीयते एकं साध्यम्, एकं साधनम् । यत् साध्यम्, तत् प्रधानम् । स च होमः । तस्मात् विकल्पः । एकस्मिन्नपि च श्रूयमाणे अवश्योपादातव्यो भवति होमः । होमश्चेत्, आहवनीयः प्राप्नोत्येवेति । तन्न । आहवनीयस्य अनङ्गत्वात् । कथमनङ्गत्वम् ? विशेषेषु अप्राप्तेः । कथमप्राप्तिः ? कर्माद्यधिकरणतायाः तस्याम् आहवनीयाधिकरणतायाश्च करणं च प्रति असंभवात् । यदि कर्माद्यधिकरणमिति शक्यते, न तदाहवनीयाधिकरणं शक्यं ज्ञातुं कर्तुं वा । आह । यथा शक्यते तथा कर्तव्यम्, इत्यास्थातार्थो भविष्यति । तस्मात् कर्मादि बाधित्वा आहवनीयो भविष्यतीति । उच्यते । स्यादेतदेवं यदि कर्मादिबाधामन्तरेण आहवनीयोपदेशो नावकल्पेत । द्वेधा हि शक्यते कर्तुं कर्मादि बाधित्वा, परिहृत्य वा । तत्र बाधाया 'कर्मणि' इति प्रत्ययः अपद्धोता यो भवति । तस्माद् परिहारः श्रेयानिति ।

आह, परिहारेऽपि 'आहवनीये भवति' इति प्रत्ययः अपह्नूयेत । अपह्नोष्यामहे, भवति आहवनीयप्रत्ययः । असावश्योऽसौ कर्तुमित्यपि किं न भवति । अशक्यं न करिष्यते । आह, योऽयं सामान्यप्रत्यय उच्यते स सर्वेषु विशेषेषु नार्यमाणश्रुतिः । एवं चेत् कर्मादिहोमेषु चान्यत्र च तेन आहवनीयो विहितः । तत्र यो कर्मादिहोमे आहवनीयप्रत्ययः, न शक्यः परिहर्तुम् । अतो कर्मादिहोमं बाधित्वा भवतीत्येतेति । अत्रोच्यते । नैतदेवम् । नहि सामान्यवाची शब्दो विशेषानभिवदति । यदि चाभिवदेत्, अवजाते यदि नावकल्पेत, पूर्वदर्शनाभावात् । सामान्ये च दृष्टपूर्वत्वात् अवकल्पते । तस्मान्न सामान्यं विशेषानभिवदति । तस्मान्न कर्मादिहोमे आहवनीयप्रत्ययः । अभिवदन् वा न मुख्यया वृत्त्या अभिवदेत् । कथं तर्हि ? लक्षणया । लक्षणा च श्रुत्या बाध्येत । तस्मात् कर्मादिहोमे श्रुत्या कर्मादिषु प्राप्तेषु अशक्य आहवनीयो विधातुं कर्तुं चेति । आह । ननु विपरीतमपि एतत् स्यात्, आहवनीये प्राप्ते कर्मादिविषयो न शक्य इति । भवेदेवम्, किन्तु विशेषे कर्मादिप्रत्ययः श्रौतः, आहवनीयप्रत्ययो लाक्षणिकः । तत्र श्रुतिप्रत्ययो बलीयानित्युक्तम् । ननु सामान्येऽपि आहवनीयप्रत्ययः श्रौतः । उच्यते । कर्मादिप्रत्ययोऽपि सामान्ये श्रौतः । होमे हि स विशिष्टे विधीयते, न अहोमे एतत् विशेषयति । तस्मात्कर्मादिहोमं वर्जयित्वा अन्येषु होमेषु आहवनीयः करिष्यते इति ।

टुप्— ( सतो नन्वयन्तः । इदानीं प्रासङ्गिकत्वा-न्यात् सामान्यस्य विशेषेण सापेक्ष्यते ) ननु अदृष्टा-र्थत्वात् यदाहवनीययोः न विकल्पः, न बाध्यबाधकभावः ( किन्तु समुच्चय एव विरोधाभावात् तेन अनारभ्याधि-करणम् ) । कथम् ( अदृष्टार्थता ? उत्तरम्— ) याग आधारं नाक्षिपति, विनाऽप्याधारेण सिध्यमान-त्वात् । यदि च (आधारम्) आक्षिपेत्, (तथा सति) आहवनीयो नियम्येत । यथा 'आग्नेयोऽष्टाकपालो भवति' इति ( अष्टाकपालेन यत्किञ्चित् प्रकृति- ) द्रव्यमाक्षिप्तम्, तत्र व्रीहयो नियम्यन्ते । इह ( तु ) आधारः वचनसामर्थ्यात् विधीयते ( न आक्षिप्तो

नियम्यते । तेन अदृष्टार्थता ) । तस्मात् यथा प्रयाजाः ( अदृष्टेन उपकुर्वन्तः ) नोपहोमादिभिः ( सह ) विकल्प्यन्ते, न च बाध्यबाधकभावः । एवमिहापि ( पदाहवनीययोः ) । तथा च न देवताऽग्निशब्दक्रियाणां प्रतिनिधिः इत्युक्तम् ( ६।३।८।१० ) । ( दृष्टार्थत्वे हि स्यादेव प्रतिनिधिः ) । तेन प्रतिनिधिप्रकरणन्याये स्थिते ( ६।३।४।१३-१७ ) ( समुच्चयस्यैव युक्तत्वात् ) कथमिदम् ( अधिकरणं ) आरभ्यते । उच्यते, सत्यम् । ' आग्नेयोऽष्टाकपालो भवति ' इति ( अनेन ) यथा द्रव्याक्षेपः, तथा न ( यागेन ) आक्षिप्त आहवनीयः, तथापि न अनाकाङ्क्षितः संबध्यते । ( तथाहि ) ' यदाहवनीये ' इति ( सप्तम्यन्तम् ) साकाङ्क्षम्, ' जुहोति ' इति ( अनेन ) निराकाङ्क्षीक्रियते, जुहोति इत्यपि ( साकाङ्क्षम् ) आहवनीयेन ( निराकाङ्क्षीक्रियते ) । यदि ( हि अत्र ) आकाङ्क्षा न स्यात् ( तथा सति ' यदाहवनीये जुहोति ' इति ) संबन्ध एव न स्यात् ( तेन आधाराधेयत्वेन आकाङ्क्षावशात् संबन्धः । ततः ) स च ( आहवनीयः ) विधीयमानः ( होमस्य ) दृष्टेनैव उपकरोति, द्रव्यस्यान्यस्य आधारतां प्रतिपद्यते । ( तेन दृष्टार्थयोरपि पदाहवनीययोः आधारत्वात् तस्य च दृष्टत्वात् न समुच्चयः इति । दृष्टार्थतां मत्वा चोदयति ) एवं वर्ण्यमाने विकल्पौ बाधविकल्पौ, प्रतिनिधिस्तु प्राप्नोति ( दृष्टार्थत्वात् ) द्रव्यान्तरवदिति । उच्यते । युक्तं द्रव्यान्तरेषु । तत्र ( हि ) ' आग्नेयोऽष्टाकपालो भवति ' इति यागः फले चोदितः । ( तत्र ) यदा व्रीहयो न सन्ति प्रक्रान्ते कर्मणि, तदाऽपि यागचोदना ( फलनिर्वृत्त्यर्थम् ) द्रव्यमाक्षिपति । ( इति चाक्षेपे युक्तः प्रतिनिधिः ) । यदा तु ( प्रक्रान्ते कर्मणि ) आहवनीयो नास्ति, तदा ( यागचोदना ) नाक्षिपत्याहवनीयम् ( विनाऽपि तेन यागस्योपपत्तेः ) । तेन नाहवनीयस्य प्रतिनिधिः । ननु अनेन न्यायेन ( यागचोदनया अनाक्षिप्तत्वात् न प्रतिनिधिः इति ) देवतायाः प्रतिनिधिः प्राप्नोति ( यागेन आक्षिप्तत्वात् ) । तत्र ( केचित् ) वर्णयन्ति । सादृश्येन प्रतिनिधिः । यदि ( मुख्य- )देवताशब्दो न स्मर्येत ( तत्तुल्य ) सादृश्यमेव न शक्यते ( इत्यशक्यत्वात् प्रतिनिधिः ) । अथ ( तु ) स्मर्येत ( तथा सति तस्मै मुख्यो ) स एवोच्चारणीयः ( न प्रतिनिधिरिति । इदं मतं दूषयति– ) एवं वर्ण्यमाने यदा व्रीहयो नष्टाः प्रक्रान्ते कर्मणि ( तत्र ) वचनसामर्थ्यात् यागः अवश्यं समापनीयः, न च व्रीहीन् स्मरति, तेषां चास्मरणात् न शक्नोति सादृश्यं सम्पादयितुम्, ईदृश्यामवस्थायां यागो नैव कार्यः । न च ईदृशी अवस्था नास्ति इति ( प्रत्यक्षत्वात् ) कदाचित् विद्यते (चित्तभ्रमेण) । तस्मात् ( सादृश्याभावात् देवतायाः प्रतिनिधिर्नास्ति इति ) एतदयुक्तम् । तेन अन्या उपपत्तिः ( देवतायाः प्रतिनिध्यभावे ) वक्तव्या । सा च षष्ठे वर्णिता ( ६।३।५ अधिकरणे) । ( प्रकृतमुपसंहरति– ) तेन (अदृष्टार्थत्वात् ) आहवनीयस्य ( यागचोदनया ) अनाक्षेपात् प्रतिनिधित्वेन नेदं विरुद्धम् । अपि च आहवनीयः पदनिरपेक्षः सप्तम्या आधारत्वं प्रतिपद्यते, पदमपि आहवनीयनिरपेक्षम्, (तस्मादपि असमुच्चयः) । यथा ' व्रीहिभिः ' इति ( करण- )विभक्तिः व्रीहीन् यवनिरपेक्षान् प्रतिपादयति यागसाधनत्वेन, तथा 'यवैः' इति । तत्र यः समुच्चयं कुर्यात्, नासौ पुरोडाशं न निर्वर्तयति ( शक्यो हि मिश्रैरपि पुरोडाशो निर्वर्तयितुम् ) किन्तु वाक्येन योऽर्थः प्रतिपादितः ( नैरपेक्ष्यरूपः ) तं बाधेत ( तेन शब्दादेव तत्र विकल्पः, न वस्तुस्वभावात् ) । एवमिहापि ( अपि च व्रीहियवाभ्याम् ( मिश्राभ्यामपि ) पुरोडाशो निर्वर्त्यते (एव), न (तु) प्रत्यक्षविरोधः ( कश्चिदस्ति ) । पदाहवनीययोस्तु समुच्चये ( सति ) पदे वा आहवनीयो निक्षिप्येत, आहवनीये वा पदम् । यदा आहवनीयः (पदे निक्षिप्तः होमस्य ) अधिकरणम् ( भवति ) तदा पदमधिकरणं न स्यात् । एवं पदेऽपि ( होमाधारे वक्तव्यम् ) तस्मात् न वस्तुतो न शब्देन पदाहवनीययोः समुच्चयो घटते ।

उदाहरणे चोद्यते । 'पदे जुहोति' 'वर्त्मनि जुहोति' इति जुहोतिश्रवणं तुल्यमाहवनीयपदयोः । एवमत्रापि होमसामान्येव अन्यत्रापि तदेव । तस्मादत्र ( सामान्यविशेषभावाभावात् ) बाध्यबाधकभावो न घटते । अन्यत्तु

इत्यधिकं गौरवम् । तथापि तस्य विधिवाक्येनैव शब्दिस्पृष्टिगतत्वात् प्राबल्यम् । अत्र हि पदविशिष्टो विजातीयहोमः एव विधीयते । अतश्च पदस्य उत्पत्तिशिष्टत्वादपि प्राबल्यम् । यद्यपि च वाक्यान्तरेण होमप्राप्तिर्भवेद् तथापि तन्मात्रानुवादेन प्राकरणिकवाक्येन पदविधानात्, प्राकरणिकत्वादपि तस्य प्राबल्यम्, निरवकाशत्वादपि च सत् । अतश्च आहवनीयः सामान्यविहितः उत्पत्तिशिष्टः अनारभ्यविहितः सावकाशश्चेति दुर्बलः । अतो वस्तुतः तच्छास्त्रं पदहोमातिरिक्तविषयमेव । भ्रान्तिमात्रं तु एतत् वाक्यादर्शनजनितम्, तद्वाक्यदर्शने सति बाध्यते इत्यलङ्कुदापादितः ।

एवं विशेषविधिना सामान्यविधिवत् सामान्यनिषेधोऽपि बाध्यते इति बोध्यम् । अत एव ' न हिंस्यात् ' इति निषेधो विहितहिंसायां न प्रवर्तते, तस्य विहितातिरिक्ते सावकाशत्वात् । ननु निषेधस्य संकोचे प्रमाणाभावः, तेन हिंसामात्रस्य पापसाधनत्वावगतावपि विधिना वैधहिंसायां स्वर्गस्य उपकारात् हि साधनत्वावगतौ बाधकाभावात् । नहि अनर्थसाधनत्वावगतौ प्रवर्तनाविषयत्वं विरुध्यते । श्येनयागे फलाद्देशावस्थायां स्वर्गादौ रागमात्रेण प्रवृत्त्युपपत्तेः । अत एव लौकिकहिंसायामपि शत्रुवधार्थं च बलवद्द्वेषाभावदशायां तत्प्रतिषेधे रागोत्कटत्वमात्रेण दृश्यते एव प्रवृत्तिः । सर्वत्रैव हि प्रवर्तनायास्तद्विषये यागादौ प्रवृत्तौ यो रागोत्कटत्वविषयः स्वर्गादिः तत्साधनत्वमात्रमनुमीयते । निषेधेन च स्वविषये हिंसादौ प्रवृत्तौ यो द्वेषोत्कटत्वविषय पापादिः, तत्साधनत्वमात्रमनुमीयते । रागद्वेषयोरुत्कटत्वं तु जन्मान्तरीयकर्मवशात् कादाचित्कमिति । अत्र विधिनिषेधयोर्विषयः । तद्व्यापारभूतयोश्च पापसाधनत्वस्वर्गसाधनत्वयोः तात्कालिकसुखदुःखसाधनत्ववत् नैव कश्चिद्विरोधः । अतो दैवतायत्वादिप्रयुक्तहिंसायाः यद्यपि प्रत्यवायसाधनत्वे अनूपकारभूतादिसाधनत्वाविरोधात् न निषेधस्य तद्व्यतिरिक्तविषयत्वम् । यत्रापि नित्यपशुयागस्थले अकरणे प्रत्यवायश्रवणात्, तत्रापि करणे स्वल्पः प्रत्यवायः अकरणे भूयान्, इत्येवं कल्पनात् प्रवृत्त्युपपत्तेः न कोऽपि विरोधः । अत एव ' अन्येनैव ■ संसिध्येद् ब्राह्मणो नात्र संशयः । कुर्यादन्यन्न वा कुर्यान्मैत्रो ब्राह्मण उच्यते ॥ ' इति मनुस्मृतौ ( २।८७ ) जपादिप्रशंसाऽप्युपपद्यते । मैत्रः हिंसादिरहितः । अत एव साङ्ख्यानाम् अयमेव सिद्धान्त इति चेत् । सत्यम् अयमभिप्रायो जैमिनिव्यासप्रभृतीनाम्, ' धर्मेण पापमपनुदति ' ' धर्मनिःश्रेयसके धर्मे यस्मादभ्युदयः परः । न हि धर्मादृतेऽन् किञ्चित् पापं नरकं क चित् ॥ ' ' नहि कल्याणकृत्कश्चित् दुर्गतिं तात गच्छति । ' ' धर्मः प्रज्ञां वर्धयति क्रियमाणः पुनःपुनः ॥ वृद्धप्रज्ञस्ततः पश्चात् पापं नारभते नरः । धर्मनिर्धूतपापानां संसिध्यन्ति मनोरथाः ॥ अधार्मिकाणां पापानामाशु पश्यन् विपर्ययम् ॥ ' इत्याद्यनेकुवद्ग्रुतिश्रुतिस्मृतिपुराणेतिहासवचनात् पापजनकत्वमात्रं धर्मत्वम्, पापजनकत्वमात्रं चाधर्मत्वं प्रतीयते । अत एव कौशिकेयाविके: यथाक्रमं विधिनिषेधस्थले तत्र लिङ्वाच्यत्वमपि अङ्गीक्रियते । अतश्च विधिस्थले प्रवर्तनया इष्टसाधनत्वानुमानवत् तेन पापजनकत्वस्याप्यनुमानात् अविशेषेण निषेधः तद्व्यतिरिक्तविषयः एव पापजनकत्वं कल्पयन् तदतिरिक्तविषयः संकुच्यते, इति निषेधेऽपि विशेषविधिना सामान्यनिषेधस्य संकोचात्मको बाधः । विशेषनिषेधेन परं सामान्यविधेर्न संकोचः, अपितु विकल्पः इत्युक्तम्, न तु वैपरीत्येऽपि । अत एव न्यायसूत्रं ' अनुदयिति चेत न्यायात् ' ( १।१।२९ मनू. ) इति ।

मण्डन—' होमेऽपि बाधते सर्वं । ' ९.

शंकर—' बाधो विशेषात् सामान्यस्य । ' १०.

● ज्योतिष्टोमादौ कामिविधये ' अग्नीषोमीयस्य पशुपुरोडाशमनु देवसुवां हवींषि निर्वपति ' एषामष्टानां हविषां पुरोडाशधर्मैः प्रवृत्तिसिद्धिः, न तु हविषां स्वधर्मानुष्ठानम् । वि. १२।३।१२.

■ ज्योतिष्टोमादिषु पयोव्रतादीनि नित्यानि ॥ तथा भक्ष्यपानाच्छादनसंकल्पहोमद्वेषम् । ६।८।८। २८ ॥

भाष्यम्— ज्योतिष्टोमे श्रूयते ' पयो व्रतं ब्राह्मणस्य, यवागू राजन्यस्य, आमिक्षा वैश्यस्य ' इति । तथा दर्शपूर्णमासयोः श्रैतः ' नैशमीशासनस्य, इध्माबर्हिरसमादय,

स्रुवं च स्रुचश्च सम्मृड्ढि, पत्नीं संनह्याज्येनोदेहि' (आज्येन उदेहि) इति । यथा वाजपेये श्रूयते, 'दर्भमयं वासो भवति' इति । पशौ संज्ञपनहोमः, 'यत्पशुर्मायुमकृतोरो (अकृत उरः) वा पद्भिराहते, अग्निर्मा तस्मादेनसो विश्वान्मुञ्चत्वंहसः' इति । तथा 'योऽस्मान् द्वेष्टि यं च वयं द्विष्मः' इति वचनम् । एतान्युदाहरणवचनानि । तेषु संदेहः किं यस्यापरं भोजनं न विद्यते, पयो भक्षयेत् यजमानः पत्नी वा, उत विद्यमानेऽपीति । तथा, यः अप्रेषितः प्रैषार्थं न प्रतिपद्यते, स प्रेषितव्यः, उत प्रतिपद्यमानोऽपीति । तथा, यस्य सूत्रमयं वासो नास्ति, स दर्भमयं परिदधीत, उत विद्यमानेऽपीति । तथा, यस्य पशुर्मायुं कुर्यात्, उरो वा पद्भिर्हन्यात्, स एतेन मन्त्रेण जुहुयात्, उतान्योऽपीति । तथा यो द्वेष्टि यश्च विद्वेषेण च द्विष्यते, स एव मन्त्रं ब्रूयात् योऽस्मान् द्वेष्टीति, उताद्विषद् अद्विष्यमाणश्चापीति । समाधिरणातिदेशोऽयम् । तत्र यः पूर्वस्मिन्नधिकरणे पूर्वः पक्षः, स पूर्वः पक्षः । यस्तत्र सिद्धान्तः, स इह सिद्धान्तः । अविद्यमाने कुर्यादिति पूर्वः पक्षः । नियतं चाऽर्थकत्वादित्युत्तरः । स एवात्र न्यायः यः पूर्वत्र ।

वि— 'अयथाभावेऽथ भावेऽपि पयोभक्षणयो, ऽनियमः । निमित्ते सत्यनुष्ठानात्, नियमात्पयो-ऽन्तिमः ॥' ७.

भाट्ट— एवं पयोव्रतस्यापि विद्यमाने अवितमावेऽपि भक्ष्यान्तरे स्यात् । 'अग्नीदग्नीन् विहर' इति च प्रैषः अन्यतोऽनवबुद्धे अवबुद्धेऽपि स्यात् । बुद्धेऽप्यर्थे एतद्दोषजन्यनियमादृष्टसिद्ध्यर्थं प्रैषावश्यकत्वात् । अत एव नैगमन्यदोषानुविनैव फलसिद्धिरिति कल्पनमपि प्रामाणिकम् । प्रैषमहत्त्व च मन्त्रमात्रोपलक्षणम् । तथा दर्भमयं वासो वाजपेये वासोऽन्तरसत्त्वेऽपि परिधेयमेव । तथा 'यत् पशुर्मायुमकृतोरो वा पद्भिराहते । अग्निर्मा तस्मादेनसो विश्वान्मुञ्च त्वंहसः ॥' इति मन्त्रेण विहितस्य संज्ञपनहोमस्यापि पशुयागे नित्यं करणम् । न च संज्ञपनहोमस्य मान्त्रवर्णिकशब्दकरणादिजन्यदोषनिघातार्थत्वमनीतेः तदनुरोधेन मायुशब्दाद्यशब्दकरणादावेव होम इति वाच्यम् । शब्दादिकरणस्य दोषजनकत्वे प्रमाणाभावेन मान्त्रवर्णिकफलकल्पनाऽनुपपत्तेः । एतद्धेतुनैव दोषकल्पने गौरवाच्च । किञ्च नात्र शब्दादिकरणादेव दोषः, अपितु तदनुकूलप्रयत्नरूपात् आख्यातार्थात्, तस्य च प्रतिबन्धकत्वात् शब्दाद्यनुत्पत्तावपि उत्पत्यावश्यकत्वेन संज्ञपनहोमस्य नित्यत्वम् । तथा 'योऽस्मान् द्वेष्टि यं च वयं द्विष्मः' इति मन्त्रोऽपि द्वेषाभिभवत्वे असत्त्वे वा सर्वदैव प्रयोक्तव्यः । न च मन्त्रलिङ्गवशेन प्रकरणसंकोचः, परकर्तृकद्वेषस्य अयोग्यत्वेन तदभावनिश्चयायोगात् । स्वनिष्ठद्वेषविषयस्य अन्ततः पापादेरपि संभवेन मन्त्रलिङ्गाविरोधात् । ७.

मण्डन— 'भक्षप्रैषाच्छादनाद्यं च नित्यम् ।' १.

शङ्कर— 'द्वेष्येष्वप्यपि च ।' नित्यम् । १.

* ज्योतिष्टोमादिषु 'य एवं विद्वान् अग्निं चिनुते' इत्यनेन गुणविधिः । अनियमश्च फलवाक्यवचनः, न तु फलवचनः । न चेदं यागान्तरम् । भा. २।२।१०।२१–२२.

ज्योतिष्टोमोत्कर्षे प्रतिहोमा नानुष्ठेयाः । विस्तारे तु ज्योतिष्टोमे अवभृथोत्कर्षे दीक्षाया अनुवृत्तत्वात् होमादिनिषेधानुवृत्त्या प्रतिहोमाभावः ॥

तत्र प्रतिहोमो न विद्यते, यथा पूर्वेषाम् । ६।५।११।४० ॥

भाष्यम्— तत्र उत्कृष्यमाणे ज्योतिष्टोमे, अहुतेषु होमेषु किं परिसंख्याय होमाः कर्तव्याः, उत नेति । प्राप्तम् परिसंख्याय होमाः क्रियेरन् । किं कारणम् ? अवश्यकर्तव्यतया हि ते विहिता होमाः । अतिपन्ना अपि कर्तव्या एव । तथापि एषामवश्यकर्तव्यता अनुग्रहीता भविष्यति । प्रधानमात्रं तु विलयम्, नात्र कालानुरोधः कर्तव्यः, नदीवेगप्रख्यत्वात् । यद्यपि अतिक्रान्ताः कालाः, (तथापि) अतिक्रान्तानां परिसंख्याय प्रधानान्यपि कर्तव्यानि । यथा अवश्यकर्तव्यं मुक्तिमृतकदानादि यदि अतिक्रान्तं भवति, तत् परिसंख्याय क्रियते, एवमिदमपीति । एवं प्राप्ते, ब्रूमः । तत्र प्रतिहोमो न विद्यते, यथा पूर्वेषाम् । कर्तव्यमहीना कुर्यात्, नाकर्तव्यम् । अकर्तव्यार्थेषु, प्रतिषिद्धत्वात् । यथा

पूर्वेषामसति कालातिक्रमे अकृताना [illegible] प्रतिहोमः, एवमेषामपीति ।

कालप्राधान्याच्च । ४१ ॥

भाष्यम्—कालप्राधान्यं च भवति, निमित्तत्वेन तस्य श्रुतत्वात् । तदभावे विहितमेव न भवति । प्रधानमाश्च यद्यपि नियम्येत, तथापि निमित्ते काले । स च नदीवेगस्थानीयः कालः अतिक्रान्तः । अतो न प्रतिहोमः कर्तव्य इति ।

सोम—अवभृथोत्कर्षे माऽस्तु अग्निहोत्रानुष्ठानम्, तथापि प्रतिहोमः कर्तव्यः इति प्रत्यवस्थानात् संगतिः । अतिपन्नस्य प्रतिकृष्य होमः प्रतिहोमः । भवनाथस्तु प्रतिहोमो वा प्रायश्चित्त वा यथाश्रुति कर्तव्यमिति पूर्वपक्षतात्पर्यमाह । सूत्रार्थस्तु—तत्र पुरुषापराधात् अवभृथोत्कर्षे पुरुषापराधप्रभृति अवभृथपर्यन्तकालेषु प्रतिहोमो न क्रियते यथा पुरुषापराधात् पूर्वेषां दीक्षाकालस्थानां राहत् इति ।

वि—'दीक्षाऽनुवृत्तौ कर्तव्यः प्रतिहोमो न वाऽग्निमः । पूर्वोक्तात्, न तथाप्यस्य दीक्षाया अनपवादात् ॥'

भाट्ट—दीक्षाया सत्या सोमाङ्गत्वेन अग्निहोत्रप्रतिषेधेऽपि अग्निहोत्रकाले दीक्षितमिपन्न कर्तुमशक्यत्वे काले तदकरणनिमित्तप्रत्यवायस्य अवश्यकत्वात्, तत्परिहारार्थं गौणकाले प्रायश्चित्तपूर्वकं कार्य एव अग्निहोत्रहोमः । दैवाद्यकृतदीक्षोत्कर्षे तु सुतराम् । इति प्राप्ते, यावज्जीवादिवाक्ये कालावच्छिन्नस्य जीवनादेर्निमित्तत्वम्, इत्यविवादम् । तेषां च न तत्पकालस्य श्रुतिन्यादिना तदैवैतावच्छेदकत्वं गौरवात्, अपितु शब्दतोऽर्थतो वा यो निषिद्धः कालः, तद्भिन्नकालत्वेन । सायमादिकालविधेर्हि नियमविधित्वात् तदितरकालनिवृत्तिगर्भत्वे । एवं श्रुतित्यादिना अश्रुतिकालादिनिवृत्तिरपि । निषेधोऽपि चात्र न विधेयक्रियाङ्गभूत एव विवक्षितः, अपितु अन्याङ्गभूतोऽपि, अविशेषात्, तस्मिन् सति विधेयक्रियाया अकरणस्य तत्रापि आवश्यकत्वाच्च । अतश्च यथैव पर्वपर्णनापि मोदेशेनेन अवरुद्धस्य न प्रत्ययस्य धमप्रयोजकत्वम्, तस्मिन् सति तस्य कर्तुमशक्यत्वात् । अत एव न तदभावकृतं वैगुण्यमपि । एवं सोमाङ्गभूतेनापि निषेधेन अवरुद्धस्य दीक्षाकालावच्छिन्नजीवनस्य नैमित्तिकानुष्ठापकत्वानुपपत्तेः न तदकरणे प्रत्यवायादि । अतः अपशुकामस्यैव चमसे अधिकारवत् अदीक्षितस्यैव अग्निहोत्रादौ अधिकारो निषेधपक्षेऽपि फलितो भवति । यदा तु 'दीक्षितो न जुहोति' इत्यस्य अग्निहोत्रादिविध्येकवाक्यतया पर्युदासत्वमङ्गीक्रियते, तदा स्पष्ट एव दीक्षितस्य तत्र अनधिकारः । अतश्च मुख्यकाले अनधिकारात् गौणकाले करणमनाशङ्क्यम् । एवं दैवादिना अवभृथोत्कर्षेऽपि दीक्षावतस्य कथमपि अविरोधात् मुख्यकाले अनधिकारस्य तुल्यत्वेन गौणकाले न प्रतिहोमकरणम् । १२.

मण्डन—'नात्र लोपे पुनः क्रिया ।' अत्र अवभृथोत्कर्षे दीक्षानियमानुवृत्तौ ।

शंकर—'प्रतिहोमस्तत्र नास्ति ।'

* ज्योतिष्टोमगतस्तोकथ्यादिस्तोत्राणामतिदेशः शाखोक्थ्यादिषु सोमगणेषु । भा. ८।३।५।१०-११.

* ज्योतिष्टोमगतौदुम्बरीसर्ववेष्टनस्मृतिः न सर्वांशे प्रमाणम् । वि. १।३।२.

* ज्योतिष्टोमगतपयोव्रतादीनां क्रत्वर्थता । पयोव्रताधिकरणम् । भा. ४।३।१४।८-९. * ज्योतिष्टोमधर्मातिदेशः विश्वजिति अभिजिति गवयादे च । वि. ८।१।१. * ज्योतिष्टोमप्रकृतित्वं सर्वसोमानाम् । सु. पृ. ९११. * ज्योतिष्टोमप्रकरणम् अग्निष्टोमसंस्थासाधारणम्, उक्थ्यादिसर्वसंस्थासाधारणम् । वि. ३।६।१६, * ज्योतिष्टोमप्रकरणे दीक्षणीयाऽऽदय उपदिष्टाः, ते सदङ्गम् । ७।१।१, * ज्योतिष्टोमविकारो वाजपेयः । ३।७।२३, * ज्योतिष्टोमशब्दः ऐन्द्रवायवादिसोमयाग-दीक्षणीयाऽऽदीष्टि-अग्नीषोमीयादिपशुरूपसर्वयागसाधारणोऽपि ज्योतिष्टोमनाम्ना सोमयागानामेव फलसंबन्धावगमात् सोमयागानामेव प्राधान्यम्, इतरे पशवश्चाङ्गानि । ४।४।१२. * ज्योतिष्टोमशब्दस्य सोमयागपरत्वम् अर्थवादसामान्यादीनम् । सु. पृ. ६६, * ज्योतिष्टोमसमाप्तिः उदयनीयया । पृ. १५२१. * ज्योतिष्टोमीयकर्मसु

स्वरनिवेशक्रमः। प्रथमं तावत् दीक्षणीयायाः याजुर्वेदिकत्वात् शाखाया यथाश्रुतं प्रथमम्, तत्र चोदकप्राप्तेन प्राक् स्विष्टकृतः प्रथमस्थानेन, मध्यमेन इडायाः, शेषं तृतीयस्थानेन इत्यनेन बाध्यते। तदपि 'यावत्या वाचा कामयेत' इत्यनेन बाध्यते। यद्यपि उभयोरपि वाचनिकत्वं विशेषविषयत्वं च तुल्यं यत्किञ्चिच्छन्दस्त्व प्राप्तिस्वरूपेणैव अशेषपदार्थगामित्वात्, तथापि यत्किञ्चित्त्वस्य शाखाश्रयत्वात् निरवकाशेन 'यावत्या' इत्यादिस्वरेणैव बाधो युक्तः। तथाच दीक्षणीयादिशब्दाना प्रधानगामित्वात् सम्भावे एव 'यावत्या' इति स्वरः, अङ्गेषु तु यत्किञ्चिच्छब्दप्रापितोपांशुत्वमेव भवति। 'उच्चैः प्रवर्ग्येण' इति च्चस्तु तृतीयानिर्देशात् प्रवर्ग्यकरणकप्रधानाऽन्यविषया प्रवर्ग्यस्यार्थे, न तु दीक्षणीयावाद्नियमवत् प्रधानमात्रार्थः। एवं च यत्किञ्चिदित्यनेनैव उपांशुत्वे प्राप्ते 'उपांश्वसत्यस्' इति दीक्षणीयासत्यस्तुत्यर्थो नित्यानुवादः इति। सोम. ६।१।३ पृ. ५८९.

ॐ ज्योतिष्मतीष्ट्यधिकरणम्। दर्शपूर्णमासार्थोद्धृताग्निनाशे ज्योतिष्मतीष्टेर्नानुष्ठानम्॥

प्रासङ्गिके प्रायश्चित्तं न विधाने परार्थत्वात् तदर्थे हि विधीयते। ९।४।६।२८॥

भाष्यम्— अथाग्निहोत्र 'य एवं विद्वानग्निहोत्रं जुहोति' इति। तत्रेदमाम्नायते 'अग्नये ज्योतिष्मतेऽष्टाकपालं निर्वपेत् यस्याग्निरुद्धृतोऽहुतेऽग्निहोत्रे उद्वायेत्' इति। यदि दर्शार्थेन पौर्णमासार्थेन वा अग्निरुद्धृत. अहुते अग्निहोत्रे उद्वायेत् किं ज्योतिष्मती कर्तव्या नेति। किं प्राप्तम्? कर्तव्येति। कुतः? समासनं हि निमित्तम्, भवितव्यं नैमित्तिकेनेति। आहितो उद्धृतः, अहुते अग्निहोत्रे उद्वातः, एतावच्च निमित्तं ज्योतिष्मत्याः। तस्मात् सा कर्तव्येति। न चात्र शब्दोऽस्ति, अग्निहोत्रार्थम् उद्धृते उद्वाते कार्येति। तस्मादपि कर्तव्या। एवं प्राप्ते, ब्रूमः। प्रासङ्गिके एवंलक्षणे अग्नौ अनुगते प्रायश्चित्तं न कर्तव्यम्। परार्थे हि उद्धरणं पुत्र दर्शपूर्णमासार्थम्। अग्निहोत्रार्थे चोद्धृते व्यापन्ने तदाम्नातम्। तस्माच्च कर्तव्यम्। आह, ननूक्तं नास्त्यत्र शब्दः अग्निहोत्रार्थमुद्धृते अनुगते प्रायश्चित्तमिति। अत्रोच्यते। यद्यपि नास्ति एवंजातीयकः शब्दः तथापि अग्निहोत्रार्थमेव उद्धृते अनुगते प्रायश्चित्तं गम्यते। कथम्? अग्निहोत्रप्रकरणे एतदाम्नातमिति। आह, अग्निहोत्रप्रकरणे आम्नानात् तस्योपकारकमिति गम्यते, नाग्निहोत्रविशिष्टमुद्धरणम्। स्वार्थे हि सर्वं क्रियते न परविशेषणार्थेन। अत्रोच्यते। अग्निसंबद्धमेतद् प्रायश्चित्तमुच्यते नोद्धानसंबद्धम्। कुत एतदेवम्? यदि उद्वानसंबद्धं भवेत् उद्वानस्यानङ्गत्वात् नैतदुद्वानार्थमिति गम्यते। प्रकृतेनाग्निहोत्रेण प्रयोजनेन संबध्यते। अग्निद्वारेण पुनः श्रुत्यादग्नेः तेनैव प्रायश्चित्तस्य प्रयोजनसंबन्धः। तेनैवम् उद्धृतो व्यापन्नो भवति, यदि स प्रयोजनं नाभिनिर्वर्तयति। तत्र अग्निहोत्रार्थस्योद्धरणस्य अग्निहोत्रनिर्वृत्तिः प्रयोजनम्। दर्शपूर्णमासार्थस्य दर्शपूर्णमासनिर्वृत्तिः। उद्धृतं चानुगतं स्वस्मै प्रयोजनाय अयोग्यं प्रायश्चित्तेन योग्यं क्रियते। तत्र योग्यं कुर्वन् प्रायश्चित्तम्, अग्निहोत्रस्योपकरोति। यस्तु उद्धृतः दर्शपूर्णमासप्रयोजनः, तं योग्यं कुर्वन् नाग्निहोत्रस्योपकुर्यात्। यस्तु अग्निहोत्रार्थमुद्धृतः तं योग्यं कुर्वन् अग्निहोत्रमुपकरोति। तस्मादग्निहोत्रार्थमुद्धृते प्रायश्चित्तम्। कथं पुनर्गम्यते अग्निना प्रायश्चित्तस्य संबन्धः, नोद्वानेनेति। अग्निविशिष्टेन उद्वानेन संबन्धः इति श्रुत्या गम्यते। उद्वानपरीतेन अग्निना इति वाक्येन। श्रुतेः वाक्याद् बलीयस्त्वात् उद्वानसंबन्धः प्राप्नोतीति। उच्यते। उद्वानसंबन्धस्य अपरिहार्यत्वात्, यस्योद्वायात् इति अविवक्षितमेव प्राप्नोति। अदृष्टार्थत्वाच्च प्रत्याकाङ्क्षितेन संबन्धः। तत् उद्वानपरीतेऽग्नौ प्रायश्चित्तेन संबध्यमाने व्यापत्तौ सत्याम् आकाङ्क्षितेन संबन्धो दृष्टार्थता च। तस्मात् उद्वानपरीतोऽग्निः प्रायश्चित्तेन संबध्यते इति। दर्शपूर्णमासार्थमुद्धृतः यत्रानुगच्छति तत्राग्निहोत्रस्य परकीयोऽग्निर्व्यापन्नः, परकीयं चोद्धरणमिति तत्र प्रायश्चित्तं न स्यात्। अपि च लिङ्गं भवति। किमिति? यस्याग्निरुद्धृतः अग्निहोत्रे इत्यनुवादः। विधौ हि एतस्मिन् सति वाक्यभेदप्रसङ्गः। यदि अग्निहोत्रप्रयोजनमुद्धरणम्, तत्. अग्निहोत्रप्रयोजनमिति विवक्षायाम्, अहुते अग्निहोत्रे

इति वचनमनुपपत्तिमुपपद्यते । तस्मादपि अग्निहोत्रप्रयोजने उद्धृते अनुगते प्रायश्चित्तं भवितुमर्हति इति । किं तर्हि तदा कर्तव्यम् ? अविशेषविहितम् अग्नेरग्नये संस्पर्शात् इति ।

टुप्— दर्शार्थे अग्नौ उद्धृते अनुगते ( ज्योतिष्मती ) इष्टिः कर्तव्या न वेति ( चिन्त्यते ) । कुतः संशयः ? ( उत्तरम्— ) वाक्यात् पदाद्वा । ( वाक्यशब्देन निमित्तसंबन्धिनैमित्तिकविधायकं कृत्स्नं वाक्यमुच्यते, तदेकदेशो निमित्तप्रतिपादकं पदमुच्यते । तत्र वाक्यात् संशयमाह— ) किमुद्धानम् अग्निविशिष्टं निमित्तम्, अथवा अग्निः उद्धानविशिष्टः इति । ( अग्नेरेव उद्धानमेव निमित्तम् इति पूर्वपक्षमागत्य सिद्धान्तमाह— ) तत्र उद्धाने निमित्ते आश्रीयमाणे सत्तया ( अग्नौ उद्धायमानेन उद्धान— ) क्रिया निमित्तं स्यात् । आग्नेयेकदेशे ( अपि ) वर्तमाना ( क्रिया निमित्तं स्यात् ) पदाद्वावत् । न च कालान्तरेषु अग्निपुरुषेषु कदाचित् ( अपि ) उद्धानं नास्ति इति अविशेषणमेव ( उद्धानं स्यात् ) । अग्निस्तु ( भवति ) निमित्तम् ( उद्धान— ) विशेष्यः । स कदाचित् ( एव उद्धानक्रियया व्याप्यते ) इति युक्ता निमित्तता । ( एवं पदात् संदेहं तत्र सिद्धान्तश्चोक्तः । अथ वाक्यात् संदेहमाह— ) वाक्येनापि ( संशयः । तथाहि, ) अपूर्वं चेदं कर्म, ( तत् किं ) प्रकरणात् अग्निहोत्रस्य उपकुर्वत् ( अग्निविशिष्ट— ) उद्धाननिमित्तकम् आरादुपकारकं प्रयाजवत् स्यात् । ( किमिति आरादुपकारकमित्यत आह— ) नहि विशेष्यगतस्य अग्नेः तत् ( संस्कारकं ) भवितुमर्हति । सामवायिकं वा लिङ्गकृदत् वाक्येन आन्यर्थम् । ( कथं साद्गुण्यमित्याह— ) विशेष्यः प्रधानं तदा अग्निः, ( अतः ) शक्यः ( उभयेनापि ) संस्कर्तुम् उद्धानेन इष्ट्या च । ( किमुद्धानं निमित्तम् आरादुपकारिका इष्टिः, उत अग्निः उद्धानविशिष्टो निमित्तम्, संनिपातिका इष्टिः इति ) एवं संदेहे, उद्धानं निमित्तमारादुपकृतिः । दर्शार्थेन कर्मणा इति पूर्वः पक्षः । ( एवं संदेहे इत्यारभ्य एव पाठः आनन्दाश्रमीये । लिखिते तु असमीचीनं नवमतृतीयचतुर्थपादयोर्गलितमेव । अन्यत्र तु ' एवं संदेहे उद्धानं निमित्तं श्रौतत्वात् नैमित्तिकम् आरादुपकृत्ति आरादुपकारकम् । अतो दर्शार्थेऽपि उद्धृते अग्नौ कर्म इदं भवेत् इति पूर्वः पक्षः' इति पाठः ) । 'आरादुपकारकेभ्यः सामवायिकानि गरीयांसि' इति उद्धानस्यारात् अग्निहोत्रार्थस्य आहवनीयस्य उपस्पर्शम् इति सिद्धान्तः ।

शा— किं प्राप्तम् ? 'उद्धायेदिति लिङ्श्रुत्या धात्वर्थस्य निमित्तताम् । यदल्पमेनु वाक्येन तस्मादारादुपक्रिया ॥' इति प्राप्ते, ब्रूमः । 'उद्धानस्याभियुक्तस्य नित्यत्वान्न निमित्तता । न च तत्राग्निना व्याप्तिः कदाचिदपि विद्यते ॥' तस्मात् दर्शार्थेन अग्नौ उद्धृते उद्धाने नैतत् प्रायश्चित्तम् । ९।४।७.

सोम— उदयसिद्धयर्थमभिप्रेपगतवदाना अवान्तरकार्यं प्रस्तुतमिति व्यवच्छेदात् इष्टेः किमपूर्वं कार्यम्, उत अग्निसंस्कारः इति निरूपणात् संगतिः इति तन्त्ररत्ने ।

वि—'ज्योतिष्मती भवेन्नो वा दर्शार्थोद्धृतलोपने ।, निमित्तसत्त्वात्स्या, साग्निहोत्रार्थोद्धृतिवर्जनात् ॥' इति ।

भाट्ट— अग्निहोत्रे 'अग्नये ज्योतिष्मते पुरोडाशमष्टाकपालं निर्वपेत् यस्याग्निरुद्धृतः अहुते अग्निहोत्रे उद्वायेत्' इति श्रुतम् । तत्र किमिदं प्रायश्चित्तं दर्शार्थं प्रणीतस्याग्नेः अग्निहोत्रकाले उद्धाने भवति, नेति चिन्तायाम्, यच्छब्दसमभिव्याहृतेन लिङा पदश्रुत्या निमित्तत्वमुद्धानस्य प्रतीयते । न च तदुद्धानमात्रस्य नाशापरपर्यायस्य संभवति, यत्किंचिन्नाशस्य सर्वदा सत्त्वेन कादाचित्कत्वस्याप्यनिमित्तत्वस्यासंभवात् । अतो हविरार्त्यन्यायेन ( ६।७।९ ) प्रतियोगिताऽन्वयेन अग्निविशेषणम् । तत्रापि च अग्नेरव्ययत्वो नाशस्य सर्वदा सत्त्वात्, अग्नित्वावच्छिन्नप्रतियोगिताकनाशाप्रसिद्धेः अग्नित्वावच्छिन्नप्रतियोगिताकनाशस्य च कदाऽप्यसंभवात् अवश्यं कल्पयमानाग्निहोत्रप्रयोजकोपयोग्यग्नित्वावच्छिन्नप्रतियोगिताकनाशस्यैव प्रकरणादिना निमित्तत्वावसायात् तत्प्रयोगोपयोगपर्यवसाने एव इदम् । अतएवं वाक्यार्थो भेदन्होमादावपि वक्तव्यः एव, प्रकृतप्रयोगोपयोगिकालानाद्यस्यैव निमित्तत्वात् । अतएव इदं आरादुपकारकं अग्निहोत्राङ्गम् । अस्तु वा नष्टस्याग्नेः कथाद्वाकाङ्क्षायां वैगुण्यपायेन पदा-

न्तरश्रवणात् अस्य अग्निहोत्रापेक्षितातदृष्टरूपाप्युपकारकत्व-प्रसङ्गात् ईतिपरोपकारकत्वमेव । भेदनहोमस्य दृष्टरूप-पशाल्मनकत्वस्य बाधितत्वात् आरादुपकारकत्वमिति विशेषः । अत एव अभ्युद्धरणमयोजनाभावात् अग्नि-होत्रे हुते एतत्प्रायश्चित्तनैमित्तिकत्वाद् : 'अहुते अग्निहोत्रे' इत्यनुवादः । भेदनहोमस्तु यागान्तरार्थे निष्पत्तेऽपि उद्धा-रणात् पूर्वं भवत्येवेति विशेषः । दर्शस्य दर्शार्थं प्रणीत-स्यापि अग्नेः अग्निहोत्रोपयोगित्वात् निमित्तउभयार्थयोः उभयोरपि तत्रैव तदर्थं कर्तव्यैव इष्टिः । न च तथापि दर्शादौ वैधसमन्त्रकोद्धरणाभावात् उद्धृताग्निनाशा-भावेन निमित्ताभावः, उद्धृतत्वस्य हविष्मत्त्ववत् अग्निविशेषणत्वेन अविवक्षितत्वात् । इति प्राप्ते, नात्र उद्धृतत्वं तद्विशेषणम्, करिष्यमाणप्रयोगोपयोगि-उद्धरणावच्छिन्नप्रतियोगिताकविनाशत्वेन निमित्तत्वात् । वैधस्यैवोद्धरणस्य निमित्तकोटिप्रवेशाच्च नातिप्रसङ्गः । उद्धृतश्चाग्निरेव इति अग्निपदं नित्यानुवादः । इतरथा अग्न्यन्तरपक्षे उद्धृतत्वाभावात् उद्धृतः इत्यस्य व्यभिचारानु-वादत्वापत्तेः । गार्हपत्याग्निनाशेऽपि ज्योतिष्मतीष्ट्या-पत्तेश्च । अतश्च दर्शार्थं प्रणीतेनैव अग्निहोत्रानुष्ठानात् उद्धरणस्य प्रसङ्गसिद्धार्थतया लोपेन निमित्ताभावादेव न नैमित्तिकानुष्ठानम् । अपितु अन्वाहिताग्निनाशप्रायश्चित्त-मेव । अत्र च पूर्वपक्षे उद्धृताग्न्यभावमात्रेण अन्यथा-त्वात् मन्त्रोहप्रसक्तेः, सिद्धान्ते तदभावात् संगतिः ।

मण्डन— 'अग्निहोत्रार्थोद्धृते यदिः ।'

शंकर— 'ज्योतिष्मत्यग्निधीरिका ।'

● ज्योतिषस्य वैदिककर्मप्रयोगोपयोगितिथ्यादिज्ञान-द्वारा वेदोपकारकत्वम् । मणि. ६.५.

• ज्वलितं न हिरण्यरेतसम्, चयमास्कन्दति भस्मनां जनः ।' इति न्यायः । ( भारविः २।२० ) जनः प्रदीप्तमग्निं नाक्रमितुं शक्नोति भस्मनां चयं कामं आस्कन्दति । तस्मात् पुरुषेण तेजस्विना भाव्यम्, न मृदुनेति न्यायार्थः । साहस्री. ९६८.

● 'ज्वालादेरपि नाशित्वं नैव सिद्धं प्रतिक्षणम् । रूपतोऽवयवानां च यान्ति देशान्तरं लघु ॥ श्लो. वा. शब्दाधिकरणे ( १।१।६ ) ४३४ ॥ प्रसूतं वर्तिदेशे हि तैलवर्त्यादि विच्छिन्नम् । तत्र यावद् प्रत्यपूर्वं ताव-ज्ज्वालेति गम्यते । ४३५ ॥ ततोऽपि यः प्रतिमस्य भाति तद् स्यात् प्रमाणकम् । ततः परं तु यद् भाति, तद् योऽस्य्वसावधार्यते । ४३६ ॥ उत्तराग्रपदे उद्दे मार्गे, पूर्वे न याति च । यथोत्तरे प्रियुज्यन्ति पूर्वे यान्ति तथा तथा । ४३७ ॥' ● ज्वालादीनां नित्यत्वे स्थिरत्वे अङ्गीक्रिय-माणे अनुमानविरोधः । ज्वालायाः प्रमाणदर्शितस्य तेजोऽवयवानां विशरणमाम्यते । विशीर्णावयवश्च अव-यवी विनष्टः पुनरस्त्येव च ज्वालान्तरस्य उत्पादनात् इत्यनुमानेन ज्वालादीनां अनित्यमवसीयते इत्यनुमान-विरोधात् भेदाग्रहणनिबन्धन एव एकत्वभ्रमः, न प्रत्यभिज्ञा । ऋजु. पृ. ११२

---

## ट.

ॐ टिट्टिभन्यायः । अयं पञ्चतन्त्रे विवृतः । तथाहि, कस्य चित् टिट्टिभाख्यपक्षिणोऽण्डानि स्थानस्थानि समुद्रः स्ववीचिभिः अपजहार । ■ च पक्षी स्वचञ्चुकेनैनं शोष-यिष्यामीति प्रवृत्तो भार्यादिभिर्बन्धुभिः वार्यमाणोऽपि नोप-रराम, प्रत्युत नारदं अपि रुरे । तेन पक्षनोत्पतनाभ्यां बहुधा क्लिश्यतः सर्वानस्त्येक्ष्य कृपाकुलं नारद समीपे गरुडं प्रेषयामास । ततस्तत्पक्षपातेन क्षुभ्यन् समुद्रो भीतोऽण्डा-न्याहृत्य पक्षिणे ददाविति । तथा च यथा टिट्टिभाख्यस्य पक्षिणो गरुडसाहाय्यसम्पादनं तथा कस्यचिदेकाकिनोऽ-प्यतिदुर्लभस्यापि वस्तुनस्तस्य दैवानुग्रहात् सुखेन लाभो भविष्यतीति । साहस्री. ११०.

ॐ टिट्टिभाण्डन्यायः । टिट्टिभन्यायार्थक एवायम् । संग्रहः.

---

## ण.

● णमुल् धातुसंबन्धविहित. 'अग्निकामं जुहोति' इत्यादौ विनियोक्त्रीं श्रुतिं भट्टसोमेश्वरमते । नित्याऽ-न्वयसमभिव्याहारे एव णमुलादेः साधुता, यथा क्रिया-योगे एव प्रादेरुपसर्गता । अग्निक्रमणविधिरसमर्थातिकेऽपि ( ३।२।१०।१९-२० ) अग्निक्रमणं प्रकृतक्रिया-मात्राङ्गं होमाङ्गमेव वा इति भाष्यकृन्मते संशयमुक्त्वा

संयुक्तभवणात् तमाक्षिप्य तद्धेतु वदता 'कर्मणः अमूर्तत्वात् वाक्येन च संबन्धोपादानात्' इति वाक्यीयमद्रव्यमुक्तम्, न श्रौतम्। तन्त्रसिद्धान्तेऽपि 'सर्वथा तावत् अभिक्रामं न क्रियाऽन्तरमन्तरेण निराकाङ्क्षी भवति' इत्येवोक्तम्, न 'क्रियान्तरं श्रुतीति' इति। तथा यावज्जीवाधिकरणवार्तिके (२।४।१।१–७) यावत्पदाख्यातश्रुतिद्वयसंभवो मन्यते, भवतन्तु अत्र लक्षणादूरता भवेत् इति यावज्जीवपदश्रुतिभ्यामेव निमित्तत्वसिद्धान्तः उपपादितः, न तु णमुल्श्रुत्येति। बाल. पृ. ४५,४६. ● णमुलादिवत् णमुलक्षणेन निमित्तत्वाभिधानात्। भाट्ट. ४।१।२. ● णमुल्प्रत्ययार्थौ भावनान्वयी। मणि पृ ११३.

● णिच्प्रत्ययः। स्वतन्त्रस्य कर्तुः प्रयोजके हेतुसंज्ञकेऽपि कर्तरि प्रयोजकव्यापार इति स्वातन्त्र्यलक्षणकर्तृत्वसद्भावात्, तत्र च हेतुत्वविवक्षाया प्रयोजकत्वलक्षणाद्धेतुत्वस्य, प्रयोजकव्यापारार्थे च तत्समर्थाचरणं विना प्रयोजकत्वायोगात्, हेतुमन्तं तत्समर्थाचरणाख्यं प्रयोजकव्यापारं वक्तुम् 'हेतुमति च' इतिसूत्रविहितः णिच्–प्रत्यय उत्पद्यते। सु. पृ. १५०४.

● ण्वुल्प्रत्ययः 'तुमुन्ण्वुलौ क्रियायां क्रियार्थायाम्' (पा० ३।३।१०) इति विहितः विनियोक्त्री श्रुतिः 'याजको याति' इत्यादौ इति भट्टसोमेश्वरः। पार्थसारथिमते तु तत्र वाक्यीयो विनियोगो न श्रौतः। बाल. पृ. ४६,४७.

---

त.

● तक्रकौण्डिन्यन्यायः। अन्यथा 'ब्राह्मणेभ्यो दधि दीयतां तक्रं कौण्डिन्याय' इत्यत्र तक्रदानेन दधिदानस्य बाधो न स्यात्, तद्दानोत्तरं तत्पूर्वं वा तद्दानस्य चारितार्थ्यसंभवात् (न्यायर. पृ. २४१)। "नैवेतद् आज्ञापयति, नापि धर्मसूत्रकाराः पठन्ति 'अपवादैः उत्सर्गाः बाध्यन्ताम्' इति। तथापि 'सर्वेभ्यो ब्राह्मणेभ्यो दधि दीयताम्, तक्रं कौण्डिन्याय' इति सत्यपि संभवे तक्रदानं दधिदानस्य निवर्तकं भवति" इत्युक्तम् ('विप्रतिषेधे परं कार्यम्' इति सूत्रे भाष्ये) (भूतिः २४१)।

'इकोऽच्चारणसामर्थ्यात्' इत्यस्य तक्रकौण्डिन्यन्यायेन तद्बाधात् इत्यर्थात्। (भूतिः पृ. २७६)। वार्तिककारमते तक्रन्यायासत्त्वेन। भाष्यमते तक्रन्यायेन अपवादत्वेऽपि। (भूतिः पृ. २०२)। तत्र (अनड्वान् इत्यत्र) आम् इत्यविकारसामर्थ्यात् (नुना आमः) बाधाभावः। उपजीव्यविरोधाच्च आकारमुपजीव्य जायमानो नुम् कथं तद्बाधकः स्यात्। एवं च सामर्थ्यादत्र तक्रकौण्डिन्यन्यायाप्रवृत्त्या न विरोधः, नापि तत्त्वविसंवादः। (तत्त्वप्रकाशिका पृ. २०१).

तक्रकौण्डिन्यन्यायेन द्वितीयकक्षकीयेन तदप्राप्तियोग्ये अचारितार्थ्ये सति इतो चारितार्थ्यं इत्यनेन बाधस्वीकारे (एकाचः इत्यस्य) 'ईद्यतेः' 'हन्तेर्हिंसायाम्' इत्यादिभिर्द्विर्वचनापत्तिः। (भूतिः पृ. २३९)।

तक्रन्यायेन हि विशेष्यविशेषणदलप्रविष्टयावत्पदार्थसंकुचितव्याप्यताऽवच्छेदकरूपावच्छिन्नातिरिक्तत्वेन संकोचः (मतान्ति योतस्य) आपादकः। (भूतिः पृ. २३९)।

'क्वचिदपवादविषयेऽपि०' इत्यत्र अपवादशब्दस्य बाधकपरत्वेऽपि अन्यत्र अपवादशब्दः तक्रकौण्डिन्यन्यायरूपयेनन्नाप्राप्तेति न्यायपर एव इति केचित्। तन्न शोभनम्। (भूतिः पृ. २४४)।

तक्रकौण्डिन्यन्यायस्य अनित्यत्वेन। (तत्त्वप्रकाशिका पृ. ७६).

● तक्रकौण्डिन्यन्यायः। अयं सामान्यशास्त्रस्य विशेषशास्त्रेण बाधे एव प्रवर्तते। यथा 'ब्राह्मणेभ्यो दधि दीयतां तक्रं कौण्डिन्याय' इत्यत्र कौण्डिन्यस्यापि ब्राह्मणत्वात्। साहस्री. २२२. ● तक्रकौण्डिन्यन्यायः। क्तस्य भूतार्थेभ्यो विशिष्य वर्तमानार्थे वार्तिकविधानात् तक्रकौण्डिन्यन्यायेन भूतार्थत्वबाधः स्यात् इति न च वाच्यम्। परिमल. १।१।१ पृ. २. ● तक्रकौण्डिन्यन्यायः। 'दधि ब्राह्मणेभ्यो दीयतां तक्रं कौण्डिन्याय' इति। अत्र ब्राह्मणजातिर्दध्युद्देशेन तदुपलक्षितास्तु व्यक्तिरूपं यावद्वाचा कौण्डिन्ये तूक्ता व्यक्तिः। तत्र परं दधिदानं अपवर्त्य (ब्राह्मणदधान्यजातिगन्धित्वेन तदुद्देशेन विधीयमानं तक्रतैकम्) कौण्डिन्ये प्राप्नोति तत् तक्रेण

( व्यक्तिविशेषोद्देशेन विधीयमानेन श्रौतेन ) तक्रदानेन विरोधात् बाध्यते । टुप्. १०।८।१।१ पृ. २०५७. ● तक्रकौण्डिन्यन्यायः । 'ननु चाकृतिपक्षेऽपि व्यक्तावेव क्रियाक्रिये । शब्दार्थे संभवाच्चेन किमर्थेयं विचारणा ॥ यद्यप्येवं न भेदोऽस्ति वेदार्थकरणे नृणाम् । दधि विप्रेभ्य इत्यादौ फलं लोके भविष्यति ॥ व्यक्तिपक्षे विकल्पः स्यात् कौण्डिन्ये दधितक्रयोः । सामान्यवाक्यदौर्बल्यात् तक्रमेवेतरत्र तु ॥' वा. १।३।९।३३ पृ. ३०७, ● तक्रकौण्डिन्यन्यायः । नहि एकस्यैव अवस्तुनः किञ्चित् प्रति सद्भावः, किञ्चित् प्रति असत्त्वमिति युज्यते । तेन 'दधि ब्राह्मणेभ्यो दीयतां तक्रं कौण्डिन्याय' इत्यादौ प्रतिब्राह्मणं शास्त्राभावात् एक शास्त्रम् । तत्र यदि समालोचनेन कौण्डिन्ये नास्ति इत्यवधार्यते, ततो माठरादिष्वपि अप्रवृत्तिः । अथ तेष्वस्ति, ततः कौण्डिन्येऽपि भवितव्यम् । अथ 'तं प्रति नास्ति, इतरान् प्रति अस्ति' इत्येतदपि एकवस्तुनि विप्रतिषेधादेव्यमाणकम् । न चात्र प्रतिपत्तृभेदो विद्यते, येन संबन्धग्रहणाग्रहणवत् अविरोधः स्यात् । न च सकृद्ग्रहणमात्रात् शास्त्रभेदोऽवगम्यते, येन 'अन्यथैव आवयम् अन्यथा चासाम्' इत्यभिधीयेत । व्यक्तिपक्षे च कदाचिदेतद्भवेत्, आकृतिपक्षे तु नित्यैकत्वात् युगपदेकमेव शास्त्रं प्रवर्तते । तस्मात् शास्त्रान्तर अनन्यतानि दृष्ट्वा मृगतृष्णाऽऽदिवदेव सामान्यापहारबुद्धेः 'मयेयं भ्रान्तिः पूर्वैरवधिमतारिकल्पनया जाता' इत्यवबध्यति । तस्मात् माठरादिप्रसिद्धेनागमस्यातोऽपि कौण्डिन्यबुद्धिः भ्रान्तिरिति निश्चित्य फलनिवृत्त्यानुपदमर्थं बाधितं मन्यते । १।३।७।१५ पृ. ८६०-६१ ● तक्रकौण्डिन्यन्यायः । यतो भवन्त्येवंविधेषु 'ब्राह्मणेभ्यो दधि दीयतां तक्रं कौण्डिन्याय' इति । तत्र तक्रविधिर्न दधिविधिमपेक्षते प्रवर्तितुम्, इह तु ( मन्त्रेषु येषामहं करोमि नानुयाजेषु इत्यत्र ) प्राप्तिपूर्वकत्वात् प्रतिषेधस्य येयजामहस्य चान्यतोऽप्राप्तेः तद्विधेयेन निषेधशास्त्रौ तद्विधिरपेक्षणीयः । भामती. १।३।२५।२६ ब्र. सू. ● तक्रकौण्डिन्यन्यायः । यथा 'दधि ब्राह्मणेभ्यो दीयतां तक्रं कौण्डिन्याय' इति । तत्र ब्राह्मणशब्देन ब्राह्मणजातिः वर्णवाच्या, कौण्डिन्ये व्यक्तिरेव । न च कौण्डिन्ये सामान्यं विद्यते । ( तदेवाह- ) न च कौण्डिन्ये वस्तु विद्यते अवान्तरसामान्यम्, यत् प्रत्यक्षेण दृष्ट्वा शब्दः प्रवर्तेत । तस्मात् कौण्डिन्यशब्देन विशेष एवोच्यते । अपिच वाक्यार्थे पदवचनमिदम् ( कुण्डिनस्यापत्यं गोत्रं इति ) । शब्दार्थश्चेत् न सामान्यं प्रत्याययति । तस्माद्विशेष एव शब्देनोच्यते । तत्र चानन्तरे एव कार्यम्, इतरस्मिन् सामान्येन । विशेषः प्रकरणादिभिरवच्छेत्तव्यः । तस्मात्तत्र विप्रकर्षः । इह तु संनिकर्षः । अनेन न्यायेन विशेषभूतेन गार्हपत्येन ( पत्नीसंयाजेषु ) आहवनीयो बाध्यते । टुप् १०।८।८।१६ पृ. २०७२-७३. ● तक्रकौण्डिन्यन्यायः । 'व्यवहारा हि दृश्यन्ते सामान्यार्थनिबन्धनाः । दधितक्रादिदानादौ कौण्डिन्यब्राह्मणादिषु ॥' विशेषेण हि सामान्यस्य बाधमाश्रित्यो ब्राह्मणशब्दस्य सामान्यवाचित्व मन्यन्ते । रत्नाकर. श्लोवा. वनवादे १५.

Ⅱ तक्षाधिकरणम् । तक्षस्मृतिः । तक्षशास्त्रम् । गृहनिर्माणादि लौकिक कर्म प्रारब्धं सत् समापनीयमेवेति न नियमः ॥

लोके कर्माणि वेदवत् ततोऽधिपुरुषज्ञानम् । ६।२।४।१७ ॥

भाष्यम्— येन किंचित् वस्तुपकान्तं भवति वाच्छेद्रथो वा । वीता अस्य फलेच्छा, अवाप्नोति वा फलम् । तत्र संदेहः किं तेन नियोगतः परिसमापयितव्यम्, उत इच्छया उत्स्रक्ष्यतीति । किं प्राप्तम् ? लोके कर्माणि एवजातीयकानि उपक्रम्य परिसमापयितव्यानि । यथैव वैदिकानि, तथैव तानि नियोगतः परिसमापनीयानि । कुतः ? ततोऽधिपुरुषज्ञानम् । अतः तत्पुरुषज्ञानं भवितुमर्हति । कुतः ? शास्त्रात् । आम्नायते हि तथा शास्त्रम् । अत्रापि देवतक्षायाः अङ्गीक्रियते पूर्वेभ्यो दिशि एता देवता इतरस्तु एता इति । यथा शास्त्रवते देवतायाचारे उपक्रम्य अपरिसमाप्यमाने शिष्टविगर्हणम्, एवमिहापि भवितुमर्हति ।

चि. ११।३।४. ● लक्षणादीनामनुज्ञानं नास्ति साधन्के दृष्टेष्वाल्ययम् । भा. १०।२।३२।३१-७२.

● तडागं खनितव्यं इत्यादिस्मृतिः धर्मे प्रमाणम् । भा. १।३।१।१-२ पृ. १६०, ● तडागानि परोप कारय, न धर्मायेत्यवगम्यते (परोपकारस्य न धर्मत्व वा । के. ) । १।३।२।२ पृ. १६६.

● 'तण्डुलान् पिनष्टि' इति पेषणस्य नियमविधि, नानुवादः दर्शपूर्णमासयोः । भा. ४।२।११।२६, ● तण्डुलेषु प्रकृतव्रीहियवान्यतरनियमस्य निवेशो बाधः । १०।२।१।७०. ● तण्डुलवापमन्त्रे धान्यशब्दस्योहः (श्यामाकायने)। मासस्य पेषणार्थमधिवापोऽस्तीति । पूर्वपक्षियम् । घू. ९।२।१३।२७-३८ वर्णकं २. ● तण्डुलनिर्वृत्तिपर्यन्तमवहननमभ्यसितव्यम् । यदि सकृदेव मुसलस्य उद्यमननिपतने कृत्वा तण्डुला भवेत, तत् कार्यं तथैव निर्वर्तेत । भा. ११।१।५।२७. ● तण्डुलपेषणं गुणकर्म, तण्डुलाः संस्कार्याः । चि. २।१।४. ● तण्डुलप्रक्षालननिनयनान्तेन कृष्णाजिनास्तरणादिना अनुक्रमः नानाबीजेषु । भा. ५।२।७।१३-१५.

**तण्डुलभक्षणन्यायः** । लाइली. ११६ । दिव्यविशेषोऽयम् । तथाह मिताक्षरायां पितामहः (२।११३) 'तण्डुलानां प्रवक्ष्यामि विधिं भक्षणचोदितम् । चौरे तु तण्डुला देया नान्यस्येति विनिश्चयः ॥ तण्डुलान् कारयेत् शुक्लान् शालेर्नान्यस्य कस्यचित् । मृन्मये भाजने कृत्वा आदित्यस्याग्रतः शुचिः ॥ (देव-) स्नानोदकेन संमिश्रान् रात्रौ तत्र स्थापयेत् । प्राङ्मुखोपोषितं स्नातं शिरोरोपितपत्रकम् । (देवशर्मनापत्रं यस्य शिरसि स्थापितं तादृशम् ) । तण्डुलान् भक्षयित्वा (चर्वणात् गिरेत्) तु पत्रे निष्ठीवयेत् ततः । पिप्पलस्य तु नान्यस्य अभावे भूर्ज एव तु । लोहितं यस्य दृश्येत हनुस्थानु शीर्यते । गात्रं च कम्पते यस्य तमशुद्धं विनिर्दिशेत् ॥' इति । के.

**तदापीतेः संसारव्यपदेशात्** (४।२।८ ब्र. सू.) इति न्यायात् वक्ष्यमुदाहरूपं आत्मनः उत्क्रान्त्युपाधिभूतं लिङ्गं शरीरान्तरसंचारि अङ्गीकर्तव्यम् । (तत् तेजआदि भूतसूक्ष्मं आ अपीतेः आ संसारमोक्षात् अवतिष्ठते, 'योनिमन्ये प्रपद्यन्ते' इत्यादिना संसारस्य मोक्षात् प्राक् व्यपदेशात् इति न्यायसूत्राक्षरार्थः)। पञ्चीकरणवार्त्तिकाभरणं ६.

**तदिष्टं विदुषां लोके समासव्यासधारणम्** । संक्षेपप्रदर्शनपूर्वकविस्तरवचनं व्याख्यातुः प्रतिपादनसौकर्यं श्रोतुश्च प्रतिपत्तिसौकर्यं प्रयोजनं 'तदिष्टं विदुषा०' इति न्यायेन स्पष्टम् । सु. पृ. ५४१.

**तदुपहूत उपहूतयस्वेत्यनेनानुज्ञापयेल्लिङ्गात्** । ३।५।१५।४१ ॥

सिद्धान्तसूत्रम् । ज्योतिष्टोमे सोमशेष. अनुज्ञावेन भक्षयितव्य इत्युक्तं पूर्वाधिकरणे । तत् अनुज्ञापनं किं लौकिकेन वाक्येन वैदिकेन वा इति संदेहे उच्यते । 'उपहूत., उपहूयस्व' इत्यनेन वैदिकमन्त्रेण तत् सोमभक्षणं अनुज्ञापयेत् । लिङ्गात् मन्त्रलिङ्गात् । मन्त्रे अनुज्ञापनलिङ्गं स्पष्टम् । के.

**तदेकपात्राणां समवायात्** । ३।५।१७।४३ ॥

सिद्धान्तसूत्रम् । ज्योतिष्टोमे सोमभक्षणे अनुज्ञापनं अनुज्ञानं च कर्तव्यमित्युक्तं प्राक् । तत् अनुज्ञापनं एकपात्राणामेव स्यात् । एकेनैव पात्रेण यदा अनेके भक्षयन्ति तदेव कर्तव्यमापतति । समवायात् अनेकेषां एकत्र सहसंबन्धात् । लोके सहभोजनादि आचरितुकामः चित्तमन्यस्यानुकूलयति । अत्रापि एकपात्रे सोमे पीयमाने कदाचिदन्येन पातव्यमन्यः पिबेत् । तत्रानुज्ञापनं संभवति । त्वया अर्धं पातव्यं मया अर्धम्, कदाचिदहं अभ्यधिकं न्यूनं वा पिबेयं तदनुज्ञातुमर्हसीति । एकपात्रे वा पानं त्वया सह आचरामि तत्र चित्तप्रसादनं कर्तव्यं इति संभवति अनुज्ञापनम् । तस्मात् एकपात्रेष्वेव पिबत्सु एतत् स्यात्, न भिन्नपात्रेषु । एकं पात्रं येषां पिबतां एकपात्राः ऋत्विजः इति बहुव्रीहिः । के.

**तद् गुणात्तु विधीयेरन्नविभागाद् विधानार्थे, न चेदन्येन शिष्टाः** । १।४।६।९ ॥ (इति न्यायः)।

"यदाग्नेयोऽष्टाकपालोऽमावास्यायां पौर्णमास्यां चाच्युतो भवति" इति तत्र आग्नेयः किं गुणविधि',

कर्मनामधेयं चेति विचारे सिद्धान्तमाह । तत् इति पृथक् पदम् । तुशब्दश्चार्थे । तत् यागादि कर्म गुणाश्च याग-विशेषणभूता देवताऽऽदयः युगपत् विधीयेरन् उप-दिश्येरन् । कुतः ? विधानार्थे लिङ्प्रत्यये अविभागात् विशेष्यविशेषणविधिविभागाभावात् द्रव्यविधिः देवता-विधिः इति वा विशेषाभावात् । कस्य चिदन्येन विधाने तु अविभागेन विधानं न स्यात् । तदाह न चेत् अन्येन शिष्टाः विहिताः स्युः इति । अन्येन विधानाभावे तु एकेनैव लिङा अविभागेन विधानं स्यात् । तस्मात् आग्नेयशब्दः अग्निदेवतारूपगुणविशिष्टकर्मविधानार्थत्वात् गुणविधिरेव न कर्मनामधेयम् । अविभागात् इत्यनेन आग्नेयविशिष्ट-वाक्यभेदपरिहार उक्तः । न चेत् इत्यादि तु गौरवलक्षण-वाक्यभेदपरिहारः । तथाच वार्तिकम्— 'न चेदन्येन शिष्टाः स्युर्यागाः शब्देन केनचित् । ते गुणाश्चोपदिश्येरन् विधिना ह्यविभागतः ॥' इति । के.

* तद् गुणास्तु इत्यगुणविधिपरे वाक्ये भवति अनेकगुणविधानमित्युक्तम् । भा. १।२।३।४ पृ. ५९२.

* तद् गुणास्तु विधीयेरन्० इत्यनेन न्यायेन देवता-तद्धितेनैव देवतोद्देशपूर्वकद्रव्यत्यागरूपोत्सर्गविधिसिद्धिः । सु पृ. १४१.

※ तद् गुणास्तु विधीयेरन्नविभागाद् विधानार्थे, न चेदन्येन शिष्टाः । १।४।७९ ॥

'यदाग्नेयोऽष्टाकपालोऽमावास्यायां च पौर्णमास्यां चाच्युतो भवति' इत्येवमादयः श्रूयन्ते । तत्र संदेहः, किं आग्नेयः अग्नीषोमीयः इत्येवमादयः गुणविधयः, कर्म-नामधेयानि इति । अत्र प्रभाकरेण संगतिलोभाद्विथ-मधिकरणमुपवर्णितम्, 'यदाग्नेयोऽष्टाकपालो भवति' इत्यत्र भवत्यर्थः प्रतीयते । न चासौ विधिविषयः, पुंव्यापाररूप-त्वाभावात् । विधिविषयश्च नामावच्छिन्नो गुणावच्छिन्नो वा विधीयते, अतो गुणविधिनामधेयत्वयोरसंभवात् तृतीयप्रकाराभावाच्च अप्रतिपादकतया अप्रामाण्यं आग्ने-यादिचोदनानामिति पूर्वपक्षः । सिद्धान्तस्तु यथाभाष्य-मेवेति । तदिदमसंगतम्, वक्ष्यमाणपूर्वपक्षन्यायेन नामधेयत्वेनैव प्रामाण्योपपत्तेः । अप्रामाण्यपक्षोऽयं पक्षप्रदर्शनमात्रेणैवेति यथावार्तिकमेवाधिकरणं प्रस्तूयते । सिद्धेषु नामधेयेषु इदानीं तदपवादः क्रियते । अत्रायं पूर्वपक्षिणोऽभिसंधिः ; 'यदाग्नेयोऽष्टाकपालो भवति' इत्यत्र अष्टाकपालः स्वतो भवति इति वाक्यार्था-संभवात् भावना तावदवश्यं कल्पनीया । अष्टाकपालस्य च अपुरुषार्थत्वेन भाव्यत्वानर्हत्वात् अक्रियात्मकत्वेन च फलसाधनत्वासंभवात् फलभावनाऽनुरञ्जकक्रियाकल्पनायां क्रमपठितवाक्याऽनुवाक्यासमर्पिताग्निदेवताबलेन अष्टा-कपालद्रव्यकयागरूपैव क्रिया कल्प्यते । सा च द्रव्य-देवताविशिष्टा पञ्चमलकारेण विधीयते । न च स्वशाखो-पात्ताग्नेयतद्धितस्यैव देवतासमर्पकत्वम्, अग्निं त्वा, अग्नेर्जातः, अग्नये हिव. इति विभिन्नगता ऽभावेन तस्य संदिग्धार्थत्वात् । मन्त्रस्य स्वतुल्यार्थप्रकाशकत्वेना-संदिग्धार्थत्वात् मन्त्रादेव देवताप्राप्तिः । तथा च आग्नेयपदं तत्प्रख्यन्यायेन नामधेयमेवेति ।

तथा 'अग्निहोत्रं जुहोति' इत्यग्निहोत्रपदम् । इत्येवं प्राप्तेऽभिधीयते । भवेदेव यदि अत्र आग्नेय-पदं स्वशाखापाठ्यपुरोडाशमानाधिकरण्य असंदिग्धदेवताऽ-भिधायितद्धितान्तं प्रथममेव न श्रूयेत । न चास्य संदिग्धार्थत्वम्, विधेयीभूताकाङ्क्षितदेवतापरत्वे सति अनाकाङ्क्षितानुवाद्यार्थत्वस्यासंभवात् । ततो देवतातद्धि-तान्ताग्नेयपदादेव प्रथमं द्रव्यदेवतासंबन्धानुमितयागविधेः सिद्धत्वात् न तदवधीरणेन चरमभाविवाक्यान्तरमान्त्र-वर्णिकदेवताकल्पनया यागविधानमभिश्रित्य अनन्यथासिद्धस्य आग्नेयपदस्य नामधेयत्वाभ्युपगमनमुक्तमिति । अग्निहोत्रादे तु यथा चतुर्थीसमासस्य विधेयीभूतदेवतापरत्वम्, तथा सप्तमीसमासस्यापि विधेयीभूतहोमाधारपरत्वात् यदिग्धा-त्वमेव । न चात्रापि 'यदाहवनीये जुहोति' इत्यनारभ्याधीतवाक्येनैव आधारप्राप्तेः असंदिग्ध एव चतुर्थीसमास इति वक्तव्यम् । आहवनीयाग्निमात्रप्रत्य-प्रतिपादनेनैव निर्व्युपपत्तौ तेनावश्यं संदेहःयुदासार्थं प्रकरणानुसंधानं वक्तव्यम् । तत्र च मन्त्रवर्णादेव देवतायाः प्राप्तत्वात् भवतु अग्निहोत्रपदं नामधेयम् । न त्विह प्रथममेव देवतातद्धितविहितबलेन निःसंदिग्ध-देवताभावावगमादिति । प्रयोजनम्— पूर्वपक्षे आग्नेय-शब्दस्य कर्मवाचनत्वात् 'आग्नेयं चतुर्धा करोति'

इत्याग्नेयकर्मण एव चतुरावृत्तत्वम् । सिद्धान्ते तु आग्नेयपदस्य गुणवचनत्वात् आग्नेयपुरोडाशादीनां चतुर्धाकरणमिति । सूत्रं तु विधानार्थे तद्धितान्ते आग्नेयपदे अविभागात् तद्विनाभूतत्वात् इन्द्रदेवतासंबन्धाद्याग्नेयत्वं धर्मे गुणाश्च अग्निपुरोडाशादयो विशिष्टविधिना विधीयन्ते । तत्र धर्मो गुणाः ( च ) न चेदन्येन शिष्टाः विहिता स्युः । लौगा.

● 'सत्रित्वं सत्रिकीर्षो हि' ( सत् नित्यम् ) ( ६।३।४।२७ ) । यत् सत्त्रहोमधर्मासंभवे विकल्पात् होमधर्माननुपादयेत्, तत् पूर्वोक्तगतात् इति । वक्ष्यति हि 'सत्रित्वम्' इति । पा. ६।६।१५।४०.

● तत् प्रकरणे यत् तत्संयुक्तमविप्रतिषेधात् । ३।४।२।६ ॥ प्रकरणे यत् मनुष्यसंयुक्तं कर्म तत्र निषीतं निनिवीते, न शुद्धे प्रकृते कर्मणि, सर्वेषां श्रुतिप्रकरणसमाख्यानामविरोधात् शुद्धप्रकृतकर्मनिषेधे श्रुतिविरोधापत्तेः इत्येवं व्याख्यातं मत् इत्यव्याहारेण सूत्रकारस्य ( द्र. पृ. १२४८ ) तात्पर्यान्तरेण मनुष्यप्राधान्यमुक्तम् । पृ. १२४९.

सू तत् प्रकृत्यर्थं यथाऽन्येऽनारभ्यवादाः । ३।६।५।१४ ॥

अनारभ्य विहितमाधानं किं प्रकृत्यर्थम्, किंवा सर्वकर्मार्थम् इति सन्देहे पूर्वपक्ष सूत्रेणाह । तत् आधानं प्रकृत्यर्थं दर्शपूर्णमासार्थमेव । कर्मान्तरे तु पुनःपुनः कार्यम् । यथा अन्ये अनारभ्यवादाः 'यस्य पर्णमयी जुहूर्भवति' इत्येवमादयः प्रकृत्यर्थाः, तथा अनारभ्य विहितमाधानमपि प्रकृत्यर्थमेव ।

सर्वार्थं वाऽऽधानस्य स्वकालत्वात् । १५ ॥

पूर्वपक्षस्य निरासार्थो वाशब्दः । न प्रकृत्यर्थमेव आधानम्, किन्तु सर्वार्थं सर्वकर्मार्थम् । आधानस्य स्वकालत्वात् । स्वः स्वीयः कालो यस्य तत् स्वकालम् । आधानस्य स्वातन्त्र्येण कालो विहितः वसन्तादिः कृत्तिकाऽऽदीनि च नक्षत्राणीति । यदि प्रकृत्यर्थं स्यादाधानम्, तदा द. प्रकृतेः काल. स एवास्यापि कालः स्यादिति न स्वातन्त्र्येण विहितः स्यात् । स्वकालत्वात्तु नेदं प्रकृत्यर्थम् । तस्मात् सर्वार्थम् । आधानमन्यार्थम्, अग्निश्च सर्वार्थः इति आधानार्थेव सर्वार्थत्वमुक्तं वेदितव्यम् । के.

सू 'तद्यथा आम्रे फलार्थे निमित्ते छाया गन्ध इत्यनूत्पद्येते एवं धर्मं चर्यमाणं अर्था अनूत्पद्यन्ते' इत्यापस्तम्बोक्तन्यायात् स्वर्गार्थमनुष्ठीयमानेषु क्रतुषु, तत्प्रयोगमध्ये सम्पादितानुपेयैः कैश्चन पदार्थैः अयत्नेन नान्तरीयकतया सिध्यन्तु फलेषु । परिमलः, १।३।१६।४१ ब्र. सू.

● 'क्वोऽहं सोऽस्मी, [illegible] होम' इत्युपनिषच्छ्रुतेः ब्रह्मणः सर्वविधप्राकृत्यावगतिः । द्र. पृ.१०१०.

सू तत् सर्वार्थमनादेशात् । ४।३।६।१३ ॥

'नित्यः पूर्वेगुः करोति' 'यः सहस्रायुर्दे स विश्वजिता यजेत' इत्यादिकं कर्म किं सर्वं फलं साधयति एकमेव वा किञ्चित् साधयति इति विचारे पूर्वपक्षमाह । तत् विश्वजिद्विश्वजित् कर्म सर्वार्थं सर्वं च तं अर्थं च सर्वाणि स्वर्गप्रतिष्ठाप्रजाऽऽरोग्यादिकं साधयति अनादेशात् फलविशेषादेशाभावात् । विशेषाभावे च सामान्यपक्षपातात् ।

एकं वा चोदनैकत्वात् । १४ ॥

सूत्रेण पूर्वपक्षे प्राप्ते सिद्धान्तयति । वाशब्दः पूर्वपक्षव्यावृत्त्यर्थः । न सर्वं फलं साधयति विश्वजिदादि कर्म । किन्तु एकं फलं किञ्चित्साधयति । चोदनैकत्वात् 'यजेत' 'करोति' इति चोदनाया एकत्वात् । एकेन फलेन एकस्याश्चोदनाया निराकाङ्क्षत्वे सति न सा अपरेण फलेन संबन्धमर्हति । तस्मात् एकदा निमित्तेकमेव फलं साधयति । के.

सू तत् सर्वार्थमविशेषात् । ३।३।१४।३५ ॥

पौष्णं पेषणं प्रकृतौ श्रूयमाणं विकृतौ नेयमित्युक्तम् । तत् पेषणं च पूषदेवताकं सर्वार्थं चरौ पशौ पुरोडाशे च स्यात् । अविशेषात् पौष्णे चरौ एव इत्यादि विशेषस्य अनुक्तत्वात् । अथ वा 'अदन्तको हि' इति हेतुनादस्य सर्वत्र अविशेषात् । तस्मात् सर्वत्र पेषणं कर्तव्यम् इति पूर्वः पक्ष. ।

चरौ वाऽर्थोक्तं पुरोडाशेऽर्थविप्रतिषेधात् पशौ न स्यात् । ३६ ॥

पूर्वपक्षं वाशब्देन व्यावर्तयन् सिद्धान्तमाह । पौष्णं पेषणं चरौ एव विधीयते । पुरोडाशे ■ अर्थोक्तं अर्थेन प्रयोजनेन पुरोडाशनिष्पादनेन उक्तं प्राप्तमेव । नहि पेषणं विना पुरोडाशस्य निष्पत्तिर्भवति, इति न तत्र विधानम्। अर्थसिद्धं तत् तत्र । अथ पशौ यद्यपि न अर्थसिद्धम्, तथापि पशौ पेषणं न स्यात् । अर्थविप्रतिषेधात् हृदयाद्याकाररूपस्य अर्थस्य विप्रतिषेधात् पेषणेन विनाशप्रसङ्गात् । तस्मात् पेषणं चर्वर्थमेव, न सर्वार्थम ।

चरावपीति चेत् । ३७ ॥

पौष्णं पेषणं हृदयाकाराद्यर्थविनाशप्रसङ्गात् पशौ न कर्तव्यं चेत् तर्हि चरौ अपि न स्यात् । नेत्यनुवर्तते । अन्योन्यासंश्लिष्टावयवविशदपाको हि चरुर्भवति, पेषणे तु तदभावः प्राप्तः । इति चेत् पूर्वपक्षी ब्रूयात् ।

न, पक्तिनामत्वात् । ३८ ॥

पौष्णे चरौ पेषणे कृतेऽपि न अर्थविप्रतिषेधः । चरुशब्दस्य पक्तिनामत्वात् । तण्डुलप्रकृतिकत्व– अनवस्रावितत्वोभयविशिष्ट–अन्नलक्षणपक्वरूपा या पक्तिः तस्याः नाम चरुरिति । पूष्णश्च अदन्तकत्वात् पेषणेन विशदत्वस्य बाधेऽपि न दोषः । तस्मान्नार्थविप्रतिषेधः । तस्मात् पौष्णचर्वर्थं पेषणम्, न सर्वार्थमिति सिद्धान्तः । के

■ तत् सर्वत्राविशेषात् । ३।४।१३।३४ ॥

तत् सोमेन्द्रचरुरूपं कर्म सोमवामन्यायादि क्रियमाण यथैव आर्त्विजे याजमाने च वमने स्यात् । अविशेषात् विशेषस्य 'अमुष्य वमने प्रायश्चित्तम्' इति अश्रवणात् । इति पूर्व पक्षः ।

स्वामिनो वा, तदर्थत्वात् । ३५ ॥

पूर्वपक्षव्यावृत्त्यर्थो वाशब्दः । स्वामिनो यजमानस्य सोमवमने सोमेन्द्रश्चरुः स्यात् न ऋत्विजो वमने । तदर्थत्वात् यजमानार्थत्वात् कर्मणो यत्र सोमो वम्यते । तस्मात् याजमाने वमने सोमेन्द्रश्चरुः इति सिद्धान्तः ।

लिङ्गदर्शनाच्च । ३६ ॥

'सोमपीथेन वा एष व्यृध्यते यः सोमं वमति' इति लिङ्गस्य दर्शनात् याजमाने सोमवमने सोमेन्द्रश्चरुः स्यात् । व्यृध्यते इति स वचनेन यस्य सोमपानात् ऋद्धिः समृद्धिः प्रार्थनीया । तद्वैगुण्याच्च व्यृद्धिराशङ्क्यते । विगता ऋद्धिः व्यृद्धिः ऋद्ध्यभावः हानिः । स्वामिन एव च तदुभयमपि, इति तस्यैवेष्टिः । के.

■ तानि द्वैधं गुणप्रधानभूतानि । २।१।३।६॥

अवगतमेतत् भावशब्दाः प्रधानकर्मणो वाचका इति । बहुप्रकाराश्च भावशब्दाः यजति ददाति जुहोति इत्येवंप्रकाराः, अवहन्ति दोग्धि पिनष्टि विलापयति इत्येवमादयश्च । तेषु संदेहः किं सर्वे प्रधानकर्मणः अभिधायकाः, उत केचित् गुणकर्मणः इति । भावार्थेभ्य अपूर्वमिति व्युत्पादिते सर्वेषामेव आख्यातपदानां भावार्थत्वाविशेषात् सर्वेभ्य एव अपूर्वप्रसक्तौ इदानीं तदपवादार्थं गुणप्रधानविवेकः क्रियते । तत्राय पूर्वपक्षिणोऽभिसन्धिः— यथा यजति ददाति जुहोतीत्यादिषु भावना मान्य अपूर्वमेव धात्वर्थस्य संनिधिवशाद् यजति प्रयोजनतया साध्यम्, तथा अवहन्ति दोग्धि पिनष्टि विलापयतीत्यादिष्वपि भावनासाध्यम् अपूर्वमेव धात्वर्थस्य प्रयोजनतया साध्यं युक्तम् । अतः सर्वेषामेव प्रधानकर्मत्वमविशेषात् । ननु 'व्रीहीनवहन्ति' इत्यादिषु द्वितीयाश्रुत्या व्रीह्यादीनामेव समभिव्याहृतावघातादिक्रियाऽपेक्षया प्राधान्यमवगम्यते । अतः तत्र कर्मणः प्राधान्यमेव । नैवम्, लोकवेदयो- द्वितीयायाः प्राधान्याभिधानव्यभिचारात् । तथाहि, लोके तावत् 'उपाध्यायाय गां ददाति' इत्यादिषु अनीप्सितकर्मण्यपि द्वितीया दृश्यते एव । तथा वेदेऽपि सक्तूनाहुतैकपालादिषु, 'सक्तून् जुहोति' 'एककपाले जुहोति' इत्यादिषु द्वितीया श्रूयते एव । न च सक्त्वादीनां प्राधान्यमस्ति । अतो नात्र द्वितीयाश्रुत्या व्रीह्यादीनां प्राधान्यमवगम्यते इति । न च वाच्यम्, वैगुण्यरूपदृष्टोपकारद्वारेण सामवायिकत्वे संभवति यागादिवत् अपूर्वद्वारेण आरादुपकारकत्वमयुक्तमिति । यतो वैगुण्यार्थत्वेन अवघातविधौ सति दृष्टार्थत्वं सामवायिकत्वं च भवति, नियमस्य अप्राप्तविषयत्वात् । न च प्रमाणा-

न्तरविषयवैतुष्योपायो विधिः संभवति इति दृष्टार्थत्वमेव। न च नियमस्य अप्राप्तत्वात् नियमार्थोऽयं विधिरिति वक्तव्यम्, नियमस्याश्रुतत्वात्। नहि अत्र नियमाभिधायकः कश्चिच्छब्दः श्रूयते। किन्तु वैतुष्योपायत्वेन अवघातस्य शासनात् उपायान्तरनिवृत्तिरूपो नियमो अर्थलभ्यः। तथा च सति शब्दान्तरेण परिसंख्यैव उक्ता भवेत्। सा च त्रिदोषत्वात् अयुक्तेति प्रधानकर्मत्वमेव। अथोच्यते, न वयं नियमस्य शाब्दत्वं अन्यनिवृत्तिरूपत्वं वा ब्रूमः। किं तर्हि? लोकप्राप्तस्यैव अपूर्वसाधनताज्ञापनम्। तच्च अस्य निवृत्तिफलत्वात् नियम इत्युच्यते। तदेव अवघातस्य अपूर्वसाधनत्वमभिमतं यत् विधिज्ञाप्यं किं प्रयाजादिवत् साक्षादेव अपूर्वजनकत्वम्, अपूर्वीय वैतुष्यजनकत्वं वा? न तावत् साक्षात्, सिद्धान्तिना तदनभ्युपगमात्। नापि अपूर्वीय व्रीहिवैतुष्यजनकत्वम्, तस्यापि लोकत एव प्राप्तत्वात्। अथैवं सति लोकानुसारेण दलनादेरपि अपूर्वसाधनत्वप्राप्तौ विधिरिति चेत् नैतत्, तथा सति परिसंख्याऽऽपत्तेर्नियमाविधित्वम्। तस्मात् प्रयाजादिवत् अपूर्वार्थत्वमेव अवघातादीनामिति। एवं च सति 'यदेकस्मादपूर्वं तदेतस्य तदर्थम्' इति न्यायेन व्रीह्यादिद्रव्याणां अवघातार्थत्वात् सर्वेषामेव आख्यातानां प्रधानकर्माभिधायित्वम्, तच्च अपूर्वमेव प्रयोजनमिति। एवं प्राप्ते, अभिधीयते। भवेदेतदेव यदि उभयमत्र द्रव्यं क्रिया च विधीयते। तदा हि दृष्टेन प्रयोजनाभावात् द्रव्यस्य दृष्टक्रियानिष्पादकत्वेनैव प्रयोजनाकाङ्क्षानिवृत्तिः। कर्मणस्तु दृष्टासंभवात् अदृष्टार्थत्वमेव कल्प्यते इति युक्तम्। यदा तु वाक्यान्तरप्रतिपादितप्रयोजनं द्रव्यमुपात्तम्, तदा कर्मणोऽपि तदपेक्षितदृष्टोपकारनिर्वर्तनेनैव प्रयोजनवत्त्वात् नादृष्टकल्पनायां प्रमाणमस्ति। इहापि 'व्रीहीनवहन्ति' इत्यादौ 'व्रीहिभिर्यजेत' इत्यादिवाक्यप्रतिपादितप्रयोजनमेव व्रीह्यादिद्रव्यमुपात्तम्, तथा विधीयमानस्य अवघातादिकर्मणोऽपि तदपेक्षिततण्डुलादिरूपदृष्टोपकारनिर्वर्तनेनैव प्रयोजनवत्त्वात् नादृष्टकल्पनायां प्रमाणमस्ति। तदुक्तम्—

'नामाख्यातार्थसंबन्धे यदक्लृप्तं प्रयोजनम्।
तस्यादृष्टार्थता युक्ता, नेतरस्याप्रमाणिका॥'

इति॥ (शा. दी. ४०६)। न च एवं यदि अवघातादेर्दृष्टवैतुष्योपायत्वस्य प्राप्तत्वात् न तदर्थतया विधेर्नैयर्थ्यमिति वक्तव्यम्। यतो व्रीहीणां तण्डुलादिनिर्वृत्तिद्वारेण यागसाधनत्वात् तण्डुलनिर्वृत्तिरूपार्थाक्षेपेण अवघातस्यार्थप्राप्तिर्वक्तव्या। न च श्रौते विधौ सति आक्षेपः संभवति। तेन आक्षेपात् प्रागेव श्रौतस्य विधेः प्राप्तविषयत्वम्। न च विनापि विधिना प्राप्तत्वात् किं विधिनेति विधेर्नैयर्थ्यम्, अप्राप्तांशपूरणेनैव अर्थवत्त्वात्। तथाहि, नित्यभूता खलु प्राप्तिः विधितोऽवगम्यते, आक्षेपतश्च पाक्षिकी। अन्यस्यापि वैतुष्योपायस्य आक्षेपाविरोधात्। तेन यस्मिन् पक्षे नावघातप्राप्तिः तत्पक्षपूरणेन अपूर्वोपयोगितया विधेः साफल्यमिति। अयमेव च नियमपरिसंख्ययोर्भेदः यत् पक्षप्राप्तविषयत्वात् नियमविधेः अप्राप्तांशपूरणमेव फलम्, अर्थादन्यनिवृत्तिः। परिसंख्यायां तु युगपदुभयप्राप्तेः अप्राप्तांशपूरणाभावात् अन्यनिवृत्तिरेव विधेः फलमिति। एष च नियमविधिप्रकारः 'व्रीहिभिर्यजेत' इत्यत्र द्रव्यविधावपि ऊहनीयः। ननु अत्र किम् अवघातादिजन्यं अदृष्टमस्ति न वा? न तावन्नास्ति, अदृष्टमन्तरेण नियमानुपपत्तेः। अथास्ति, तदा संमार्गादिवत् अवघातादेरपि अदृष्टार्थत्वात् नास्त्यधिकरणभेद इति। नहि अवघातादेः अदृष्टार्थत्वे विधानमनुष्ठानं वा, किन्तु दृष्टोपायत्वात् विधिः अपेक्षितव्रीहिवैतुष्यार्थमेव। तस्य च अप्राप्तांशपूरणेन यत् अवघातादेर्नियमानुष्ठानजनितमदृष्टम्, तदनुपपत्तौ तण्डुलादिगतमदृष्टं कल्प्यमानम् 'न निमित्ते विधिरपश्रयते' इति न्यायेन न दृष्टार्थत्वं बाधितुमधिकरोति। संमार्गादिषु तु विध्यपेक्षितदृष्टाभावात् अदृष्टार्थत्वेन विधानमिति भेदः। यत्तु द्वितीयायाः प्राधान्यं व्यभिचरतीत्युक्तम्, तदनन्तराधिकरणे परिहरिष्यामः। इह पुनः अद्वितीयान्तानामपि बहूनाम् 'प्रयाजशेषेण हवींष्यभिघारयति' 'मैत्रावरुणाय दण्डं प्रयच्छति' 'अग्नेस्तृणान्यपचिनोति' 'तप्ते पयसि दध्यानयति' इत्येवमादीनामपि उदाहरणत्वात् वाक्यान्तरप्रयोजनद्रव्यसंबन्धेन दृष्टोपकारदर्शनमेव प्रमाणमिति। तदुक्तम् 'यैर्द्रव्यं न चिकीर्ष्यते तानि प्रधानभूतानि द्रव्यस्य गुणभूतत्वात्' 'यैस्तु द्रव्यं चिकीर्ष्यते

  तानि द्वैधं

गुणस्तत्र प्रतीयेत तस्य द्रव्यप्रधानत्वात्' (सू. २।१।७-८) इति। अतो द्रव्यगुणत्वात् एवमादीनां नापूर्वमेदः इति। प्रयोजनम्- पिष्टलौ प्रैयङ्गवे चरौ अतिदेशप्राप्तः अवघातो व्रीहिद्रव्ये एव कर्तव्यः, प्रधानश्रुतद्रव्यादङ्गद्रव्यस्य अबाधकत्वात्। अतिदिष्टप्रयाजाज्यवदिति पूर्वः पक्षः। तदुक्तम् 'प्रधाने हि श्रुतं द्रव्यं नाङ्गद्रव्यस्य बाधकम्। प्रयाजेष्वाज्यवत् तेन हन्त्यौ स्याद् व्रीहिसाधनम्॥' इति। ('प्रयाजेष्वाज्यवचनेन' इति सूत्रे वा. पृ. ४०७)। सिद्धान्ते तु (प्रयोजनं-) प्रियङ्गूनामेव कार्यान्तरोपयुक्तत्वेन संस्कार्यत्वात् तासामेवावघातः इति। तदुक्तम् 'प्रधानोपयिकं द्रव्यं संस्कारैरपि युज्यते। तेन हन्त्यादिभिः सर्वैः संस्कर्तव्याः प्रियङ्गवः॥' इति। (वा. पृ. ४०७)। तथा मकुष्ठावपि प्रयोजनानि, अदृष्टार्थत्वे सति सर्वौषधिके कृष्णलचरावद्वत् सकृदेवावघातः कर्तव्यः। एवं यवप्रयोगेऽपि अवघातार्थं व्रीह्य उपादातव्याः। तथा प्रधानद्रव्यवैगुण्यं उपायान्तरेणापि कर्तव्यं इति पूर्वः पक्षः। सिद्धान्ते तु तण्डुलनिर्वृत्तिपर्यन्तं अवघातोऽभ्यसितव्यः। यवप्रयोगे तु यवा एव अवहन्तव्याः। प्रकृतद्रव्यवैगुण्यं च नोपायान्तरेण कर्तव्यमिति। सूत्रं तु-आख्यातानि द्वैधं द्विप्रकारं विभागकारीनि कानि चित् गुणकर्मणः, कानि चित् प्रधानकर्मण इति।

यत्तु केनापि गुरुमतमजानता तन्मतमवघातगुणत्वस्य दूषितम्, तदुपहासास्पदम्। तथाहि, स खलु एवमाह 'अन्यनिष्ठो हि भावार्थो न विधिविषयः, नापूर्वविषय इत्यर्थः। अन्यनिष्ठत्वं च भावार्थस्य अवगतापूर्वसाधनद्रव्यप्रयोजनत्वम्। तथा अवघातप्रोक्षणादिषु विद्यते इति तेषामपूर्वविषयत्वाभावात् गुणकर्मत्वमेव। अनन्यनिष्ठस्तु भावार्थोऽपूर्वविषय एव। अनन्यनिष्ठत्वं च भावार्थस्य अवगतापूर्वसाधनद्रव्यप्रयोजनत्वमेव। तच्च प्रयाजानुयाजादिषु विद्यते इति तेषां प्रधानकर्मत्वमेव।' इति। चैवम्भूते प्रधानकर्मत्वे सुवर्णभरणदानाध्ययनादीनि व्यभिचारस्थानानि भवन्ति, सर्वेषामेव अनारभ्याधीतत्वेन अपूर्वसाधनद्रव्यप्रयोजनत्वाभावात्। नापि 'यस्य पर्णमयी जुहूर्भवति' इतिवत् अपूर्वसंबन्धिद्रव्यप्रयोजनत्वावगतिः, सुवर्णादीनां व्यभिचरितक्रतुसंबन्धित्वात् अपूर्वोपायत्वानुपस्थितेः, द्वितीयादनीप्सितकर्मण्यपि नानुपपत्ता। एवं च सति अवघातादिषु अन्यनिष्ठत्वेन भावार्थस्य अपूर्वविषयत्वासंभवात् विषयस्य च पूर्वविशेषावगतिहेतुत्वात् विधिशब्देन अपूर्वं प्रतीयमानं कुतमेव मनुते इति युक्तम्। प्रयाजादिषु तु अपूर्वसाधनद्रव्यप्रयोजनत्वानवगमे विषयभावस्य उक्तत्वात् गुणप्रधानविषयापूर्वत्वावगतिरिति। न चैवं सति अवघातादीनां अपूर्वाविषयत्वात् अविधेयत्वमिति वाच्यम्। नहि अपूर्वविषयत्वं विधेयत्वम्, किन्तु अपूर्वसिद्ध्यर्थमुपादीयमानत्वम्। तच्च अवघातादिष्वपि अविशिष्टमेवेति। यदा यत् तत्सिद्ध्यर्थमुपादीयते, तत् विधेयमिति तन्त्रे व्यवहार इति। सर्वं चैतत् अवद्विमतिभिः तत्त्वतो निरूप्यमाणं असमन्वताभिन्नमेव। अपूर्वाभिधानाभिधेययोः परं विशेषः। अपूर्वाभिधानं न अपूर्वाधिकरणे एव निराकृतम्। अलं अभिप्रायक्षप्रतिक्षेपमात्रपरतयेति। तौतातु.

**१ तानि द्वैधं गुणप्रधानभूतानि। २।१।३।६॥**

तानि अपूर्वबोधकानि आख्यातानि द्वैधं द्वेधा द्विप्रकाराणि। कानिचित् गुणभूतानि कानिचित् प्रधानभूतानि चेति। विहितकर्मणो गुणप्रधानत्वद्वारा आख्यातानां द्विविधत्वं ज्ञेयम्।

**यैर्द्रव्यं न चिकीर्ष्यते तानि प्रधानभूतानि, द्रव्यस्य गुणभूतत्वात्। ७॥**

प्रधानकर्मणा लक्षणमुक्त्वा तद्वाचकानां प्रधानभूतानामाख्यातानां लक्षणमवाह। यैः प्रयाजादिभिः आज्यादि द्रव्यं दृष्टधर्मवत्तया न चिकीर्ष्यते नोत्पादयितुमिष्यते, तानि कर्माणि प्रधानभूतानि। द्रव्यस्य आज्यादेः प्रयाजादिदृष्टकार्यनिर्वर्तकतया गुणभूतत्वात् प्रयाजादिनिरूपितं गुणत्वं प्राप्तत्वात्। तथा च तादृशप्रधानकर्मविधायकानि आख्यातानि प्रधानभूतानि इत्यर्थः।

**यैस्तु द्रव्यं चिकीर्ष्यते गुणस्तत्र प्रतीयेत, तस्य द्रव्यप्रधानत्वात्। ८॥**

गुणकर्मणो लक्षणमुक्त्वा तद्द्वारा गुणभूतानामाख्यातानां लक्षणं बोधयति। तुशब्दः प्रधानकर्मादिवैलक्ष-

प्रयोजनं तु पूर्वस्मिन् पक्षे प्रैयङ्गवेऽपि चरौ व्रीहयः उत्पाद्या अवघातार्थत्वेन, सिद्धान्ते नोत्पाद्याः ।

वा—यैः पुनः द्रव्यं उत्पाद्यते यथा आधानेन अग्नयः आप्यन्ते क्रियन्ते वा, यथा वरणेन ऋत्विजः संस्क्रियन्ते, यथा अवहन्तिना व्रीहयः, पेषणेन तण्डुलाः ( तण्डुलपिष्टानि ) । तानि गुणभूतानि प्रयोजनवद्द्रव्यसंस्कृतेः ईप्सितत्वात् । यदा ( तु ) दृष्टार्थमदृष्टार्थं च अन्यथाऽपि तुरयवत् अनुष्ठीयेत, तदा किं प्रयोजनं चिन्तायाः । तदुच्यते । प्रैयङ्गवेऽपि चरौ अतिदेशप्राप्तो व्रीहिसाधनक एव अवहन्तिः कर्तव्यः पूर्वपक्षे । कुतः ? 'प्रधाने हि श्रुतं द्रव्यं नाङ्गद्रव्यस्य बाधकम् । प्रयाजेज्याज्यवत् तेन हन्तौ स्याद् व्रीहिबाधनम् ॥' सिद्धान्ते तु बाध्यन्ते । कुतः ? 'प्रधानौपयिकं द्रव्यं संस्कारैरपि युज्यते । तेन हन्त्यादिभिः सर्वैः संस्कर्तव्याः प्रियङ्गवः ॥' ननु च पूर्वपक्षेऽपि प्रधानमयुक्तव्रीह्यवघातेन प्रकृतौ अप्रयोजकत्वात् प्रैयङ्गवे चरौ प्रधानेन अगृह्यमाणान् व्रीहीन् अवघातो न लभते । नैतदेवम् । 'तुल्यो हि व्रीहिसंबन्धः शास्त्राद् यागावघातयोः । याजिनं ज्यादि तुल्यं च नाप्रयोजकलक्षणम् ॥' 'व्रीहिभिर्यजेत' 'व्रीहीनवहन्ति' इति तुल्ये चोदने, तत्र एवं प्रयोजिका इयं न इति नास्ति विशेषहेतुः । न च वाजिनादिवत् अवहन्तेः अनुनिष्पादित्वम् । न च पदकर्मवत् (एकहायन्याः सप्तमपदगत) परप्रयुक्तप्रकृतैकत्वपर्यधीनमिदाकाङ्क्षत्वम् । न च एकदेशद्रव्यत्वश्रुतार्थादिवत् । नापि 'पुरोडाशकपालेन' इतिवत् अर्थाभिधानकर्मत्वम् । तस्मात् अवहन्तिरपि प्रयोजकः । न च अस्मिन् पक्षे नियोगतो यागार्था एव व्रीहयः अवहन्तव्याः, लौकिकैरपि कर्मसिद्ध्यविशेषात् । न चात्र प्रकृतग्रहणे प्रमाणम्, प्रकरणस्य अविशेषकत्वात् । न च गतिकारात् विशेष. 'कृत्येषु नाधिकारः स्यात्' इति न्यायात् । ( नैराकाङ्क्ष्ये अधिकारस्य नयमाधिकरणसूत्रे विशेषकत्वनिरासात् न प्रकृतग्रहणे प्रमाणमित्यर्थः । सु. पृ. ८२६ ) । संस्कारपक्षे तु लौकिकानामानर्थक्येन ( आनन्दाश्रमीये तु आनर्थक्ये न इति मुद्रितम् । वयं तु तृतीयान्तं पठामहे ) अदृष्टार्थत्वात् अपूर्वसाधनविशेषणत्वेन कथञ्चित् प्रकृतग्रहणं क्लेशेन भविष्यति । न च आरादुपकारकत्वे अवहन्तेः यागस्येव लौकिकैः साध्यमानस्य किञ्चिदानर्थक्यं इति श्रौतत्वात् व्रीहिमात्रग्रहणमेव युक्तम् । (स्वयं प्रयोजनान्तरमाह—) धर्ममात्रं च तदा अवहन्तिः सर्वौषधावहन्तियत् सकृदेव च कर्तव्यः, न च तण्डुलनिर्वृत्तेः । प्रधानव्रीहीणां च दलनादिभिरपि तण्डुलीभावः स्यात् । सांनाय्ययोर्पांशुयाजाद्यङ्गमपि चास्य प्रकरणाविशेषात् तथा भवति, इति तद्विकारेष्वपि प्रयोक्तव्यः इत्यादीनि प्रयोजनानि । ( धर्मि प्रयोजनान्युक्तानि । आदिशब्दात् यवपक्षेऽपि व्रीहीणामेव अवघातः, यवानामेव न इति प्रयोजनद्वयम् । सु. पृ. ८२६ ) ।

शा— आरम्भभेदानुसारिपूर्वभेदानुसरणं कर्तव्यं इति स्थितम् । तस्यापवादः क्रियते ।

सोम— भावार्थाधिकरणेनैव अस्य संगतिः । सूत्रार्थस्तु— तानि आरभ्यन्तानि गुणकर्मप्रतिपादकानि प्रधानकर्मप्रतिपादकानि इत्येवं द्वैधं द्विधा इति ।

वि— 'अवघातादिनाऽपूर्वमुत्पाद्य विद्यते न वा ।, यजत्यादिवदत्रैव चाक्यतेऽपूर्वमन्यथा ॥, दृष्टे तुषविमोके तु नापूर्वं कल्पतामतः । स्याद् यजत्यादिवैषम्यं नियमापूर्वकृद् भवः ॥'

भाट्ट— 'व्रीहीनवहन्ति' इत्यादौ पूर्ववदेव अवघातस्य फलभावनाकरणत्वविवादम् । तत्र फलं न व्रीहयः, अभावत्वात् । नापि वैतुष्यम्, तत्त्वनकत्वस्य लोकसिद्धत्वेन अविधेयत्वात् । नापि पक्षे दलनादेरपि अर्थप्राप्तत्वेन तद्व्यावृत्तिफलको नियमः, तस्यापि वैफल्यात् । न च तस्यादृष्टार्थत्वम्, अदृष्टस्य आवश्यकत्वे नीयते शब्दावगतादेव तत्करणौचित्यात् । अतोऽदृष्टार्थमेव अवघातः । तदपि नादृष्टं न व्रीहिनिष्ठम्, तत्त्वानन्विता भवि आत्मत्वेन समवायिकारणत्वात् । अतः पूर्ववदेव व्रीहय एव अवघातार्था इति व्रीहिविशिष्टोऽवघात एव अदृष्टार्थपाकादुपकारकत्वेन विधीयते । इति प्राप्ते, दृष्टे संभवति अदृष्टस्य अन्याय्यत्वात् वितुषीभाव एव अवघातफलम् । न च तस्यार्थपादेव प्राप्तत्वेन विधिवैयर्थ्यम्, दलनाद्युपायान्तरव्यावृत्तिफलक-

नियमस्यैव अवघाताभिन्नस्य व्यापारार्थं विधेयत्वात् । अत एव कृष्णलचरौ अवघाताभावे तस्य लोपः । वस्तुतस्तु व्रीहेरवघातस्यैवाक्षेपतः पूर्वमप्राप्त्या वितुषीभावार्थं विधेयत्वम् । अतश्च आक्षेपप्रतिबन्धात् दलनादिव्यावृत्तिफलको नियमः फलम् । वैतुष्यस्य च दलनेनापि जायमानत्वात् । वैयर्थ्यशङ्का तु अवघातादेव व्रीहिनिष्ठादृष्टस्यापि उत्पत्तिकल्पनान्निराकर्तव्या । तददृष्टस्य च जनकत्वमात्रं लाघवात् कल्प्यते, न तु प्रयोजकत्वमपि, दृष्टरूपे वैतुष्ये एव तत्कल्पनात् । अतः कृष्णलचरौ वैतुष्याभावे तल्लोपः । आर्थिकविध्यन्तरकल्पनात् एकस्य द्वितीयस्यैव वा जन्यदृष्टस्य नानेकोद्देश्यता । तच्चादृष्टस्य च वितीयादिधर्मिग्राहकप्रमाणेन व्रीह्यादिनिष्ठत्वस्यैव अवगतेः तत्त्वेनैव समवायिकारणता, नात्मत्वेन । अतश्च अवघातस्य अदृष्टवितुषीभावोभयद्वारा अपूर्वसाधनीभूतव्रीह्युद्देशेन विधानात् सिद्धं संस्कारकर्मत्वम् । प्रयोजनं यागार्थव्रीह्यपेक्षया व्रीह्यन्तरमवघातार्थमुपादेयं पूर्वपक्षे, सिद्धान्ते नेति ।

मण्डन— ' संस्कारकमैव किलावघातः । '

शंकर— ' आख्यातदेयमिदं नः । ' ४. ' प्रधानं कर्म यक्ति मत् । ' ५. ' गुणकर्मापरं यक्ति । ' ६. ( पञ्चमषष्ठाभ्यां द्विविधकर्मस्वरूपकथनमुक्तम् ) ।

* भावार्थाधिकरणे अपूर्वं सिद्धम्, धात्वर्थस्य अपूर्वजनकत्वे प्रयाजादेस्तदर्थत्वमिति च, तदपवादार्थं तानिद्वैधाधिकरणम् । मी. २।१।४।७. * तानिद्वैधाधिकरणे दृष्टोपकारकं गुणकर्म, अदृष्टोपकारकं प्रधानकर्म इत्युक्तम् । कु. * तत्रापि अपूर्वप्रयुक्तत्वे अपूर्वार्थत्वमवघातादेर्मन्त्राणां च न प्रयाजादिवददृष्टद्वारा, तानिद्वैधमन्त्राधिकरणादौ निरस्तत्वात्, किन्तु व्रीह्यादिद्वारा । सोम. ९।१।१.

सू० नैं सर्वार्था प्रयुक्तत्वादभयश्च स्वकालत्वात् । ३।७।१९।३९ ॥

भाट्टदीपिकायां कुतूहले च ' अभयश्च स्वकालत्वात् ' इति सूत्रं पृथक्त्वेन गृहीत्वा अन्तरागर्भिणीन्यायेन अधिकरणान्तरमेव उक्तम् । पूर्वपक्षं उभयत्र गृहीत्वा सिद्धान्तवचनेनैव च तत् स्वीकृतम् । वार्तिककारैरपि ' अधिकरणान्तरसूत्रोक्तन्यायप्रतिपादितानुमितपूर्वपक्षः सिद्धान्त एवायं सूत्रवाक्यभेदेनोच्यते ' इत्युक्तम् । परन्तु सूत्रभेदेन इत्यनुक्त्वा सूत्रवाक्यभेदेन इत्येवोक्तम् । तेन भाट्ट-कु-वत् भिन्नं सूत्रं वार्तिककारा न मन्यन्ते । भाष्येऽपि ' अभयश्च सर्वार्था इति सम्भिन्नमेतत् ' इत्युक्त्या सिद्धान्तत्वमेव तस्य सूत्रवाक्यस्य स्वीकृतम् । उत्तरसूत्रेण अग्निविषये किमपि नोक्तं इत्यतो च तदनुसारेण युक्ततर । परंतु ' अभयश्च स्वकालत्वात् ' इति वाक्यस्य भिन्नसूत्रत्वं भाष्यवार्तिककारौ नानुमन्येते ।

ज्योतिष्टोमे ये ऋत्विजः स्वामिनश्च दक्षाः इत्युक्ताः ते सर्वे सर्वार्थाः स्युः । यागकर्मसु यो यत् कर्तुमिच्छति शक्नोति च, स तत् कुर्यात् । न तु तत्र काचिद् व्यवस्था । कुतः ? प्रयुक्तत्वात् प्रतिक्रतुं यागकर्मसु योजितत्वात् । इति पूर्वः पक्षः । अत्र सिद्धान्तः उत्तरसूत्रे भविष्यति ' तत्संयोगात् कर्मणः ' इत्यत्र । अथ अन्तरागर्भिणीन्यायेन अग्निविषयं सिद्धान्तमाह— ' अभयश्च स्वकालत्वात् ' इति । अत्र उत्सूत्रः पूर्वपक्षः— ' अग्नयः आहवनीयादयः न सर्वार्थाः, किन्तु प्रकृत्यर्था एव । विकृत्यर्थत्वस्यापि स्वीकारे तु प्रकृतिवद्विकृतिः इति चोदकेनापि प्राप्त्या द्विरुक्तत्वदोषः ' इति । एवं प्राप्ते, उच्यते । अग्नयश्च सर्वार्थाः प्रकृतिविकृतिरूपसर्वकर्मार्थाः । कुतः ? स्वकालत्वात् वसन्तादिः ऋतुः कृत्तिकादीनि नक्षत्राणि च आधीना स्वः कालः । स्वीयः कालो येषामाधानार्थं विहितः ते स्वकालाः अग्नयः । नहि तेषामाधानं कंचित् यागमात्रमनिकृत्य विहितम् । स्वकालत्वात् अग्नयः सर्वार्थाः इति सिद्धान्तः ।

तत्संयोगात् कर्मणो व्यवस्था स्यात् संयोगस्यार्थवत्त्वात् । ४० ॥

पूर्वसूत्रेण पूर्वपक्षे प्राप्ते सिद्धान्तसूत्रमिदम् । तत्संयोगात् अध्वर्युहोत्रादिविशिष्टपुरुषैः विशिष्टकर्मणः संयोगात्, समाख्याऽऽदिभिः तादृशस्य संयोगस्य ज्ञातत्वात् व्यवस्थैव, नान्यथा । एवं संयोगस्य कर्मपुरुषसंयोगस्य अर्थवत्त्वात् सफलत्वसिद्धेर्व्यवस्थैव । अन्यथा अव्यवस्थया हि संयोगो निष्फलः स्यात् । आध्वर्यवसमाख्यं

कर्म अध्वर्युणैव कर्तव्यम्, न होत्रा नोद्गात्रा । होत्र-समाख्यं याज्यानुवचनादि कर्म होत्रैव कर्तव्यम्, नाध्वर्युणा नोद्गात्रा । स्तोत्रगानरूपमौद्गात्रसमाख्यं कर्म उद्गात्रा कर्तव्यम्, नाध्वर्युणा न होत्रा इति सा व्यवस्था ।

अत्र सुधा— तैः ऋत्विग्भिः कर्मणः संयोगात् यथासमाख्यं व्यवस्था स्यात् । अनधिगतसंभवे विकल्पापादकाध्यवस्थितसामान्यशास्त्रयोगेन लिङ्गप्रकरणापेक्षितव्यवस्थासमर्पकतया हौत्रादिसमाख्याऽऽकपस्य हौत्रर्त्विक्संयोगस्य तद्विरोधाभावेन श्रुतिकल्पकत्वोपपत्तेः विनियोगापवाद्यैकत्वात्—इति । फे.

॰ 'तमध्यापयीत' इति संनिविधिविदितोपनीतकर्तृकव्यानुवादः । यद्वा अध्ययनाध्यापनयोः प्रयोजकव्यापाराविषयतया उपगमनाध्ययनविधिः । मणि. पृ. ४.

‡ 'तं यथायथोपासते तदेव भवति' इति न्यायेन उत्कृष्टब्रह्मोपासनात् उत्कृष्टमेव फलं मोक्षाख्यं भवत्येव । श्वेताश्व०भाष्यम् १।७.

‡ 'तेनोत्पन्नविनष्टस्याप्यारम्भकत्वमपि हि' इति न्यायः । ननु आश्रयाश्रितत्वेऽपि क्रियायाः क्षणिकत्वेन उत्पन्नमात्रविनाशिन्याः 'तेनोत्पन्न०' इति न्यायेन अपूर्वारम्भकत्वं न संभवति इत्याशङ्क्य । सु. पृ. ६०५.

॰ 'तेन सूनं क्रियते' इति 'स्रुवेण जुहोति' इति विधेः अर्थवादः । वि. १।२।६. ॰ 'तस्मात् एतं ग्राम तृप्ते क्रियते क्लोपीयम्' इत्यत्र ननु अर्थवाक्यानामपि फलमनूद्य विधिविधानं दृष्टम् । न । तत्रापि समासार्थस्यैव विधानाभ्युपगमात् । के. ॰ 'तस्मात् काले एव दद्यात् काले न दद्यात्' अयं अध्यनुवादरूपः प्रतिषेधः । ( समृद्धिकाले दातव्यम् । दारिद्र्ये तु न दातव्यम् इत्यर्थः । ) बाल. पृ. २२ ॰ 'तस्मात् स्वाध्यायोऽध्येतव्यः' इति अनारभ्य विधीयते । शा. ३।८।८।१८.

‡ तस्माऽऽग्रयणाद् ग्रहणम् । १०।५।१०।४२॥

षोडशी ग्रहः उक्थ्याग्रयणाभ्यां पात्राभ्यां सहैवान ग्रहीतव्यः, उत आग्रयणादेव इति विचारे सिद्धान्तेनोच्यते । तस्य षोडशिनो नाम ग्रहस्य आग्रयणात् पात्रात् ग्रहणं कर्तव्यम् । 'आग्रयणाद् गृह्णाति षोडशिनम्' इति वचनात् । वचनात् इति पदं उत्तरसूत्रात् आनुरा अपकृष्यते ।

उक्थ्याच्च वचनात् । ४३ ॥

षोडशिनो ग्रहस्य आग्रयणात् पात्रात् उक्थ्याच्च पात्रात् ग्रहणं कर्तव्यम् । 'आग्रयणाद् गृह्णाति षोडशिनम्' इति 'उक्थ्याद् गृह्णाति षोडशिनम्' इति च वचनात् । इति पूर्वः पक्षः ।

अनभ्यासे पराक्शब्दस्तादर्थ्यात् । ४५ ॥

ननु तर्हि आग्रयणात् उक्थ्याच्च पात्रात् अभ्यासेन षोडशी ग्रहः पृथक् ग्राह्यः इति चेत्तत्राह । कुतः ? 'यत् पराञ्चमुक्थ्याद्गृह्णाति षोडशिनम्' इति वचनात् । पराक्शब्दः अनभ्यासे वर्तते । तादर्थ्यात् पराक्शब्दस्य तदर्थत्वावगमात् 'पराचीः सामिधेनीरन्वाह' अनभ्यस्ता इति गम्यते । एवं पराक्त्वात् पात्रद्वयात् अभ्यासेन पृथक् ग्रहणं नोपपद्यते । तस्मात् उक्थ्याग्रयणाभ्यां पात्राभ्यां सकाशात् सकृदेव षोडशी ग्राह्यः । इति पूर्वपक्षः ।

उक्थ्यविच्छेदवचनत्वात् । ४६ ॥

इतश्च षोडशी ग्रहः उक्थ्यात् आग्रयणाच्च ग्राह्यः । 'विच्छिन्दन्ति वा एतदुक्थ्यम्, यदुक्थ्यानि षोडशिनं च ततः प्रणयन्ति' अतः उक्थ्यात् प्रणयन्ति इति प्रणयतिना संबन्धात् विच्छेदं उक्थ्यस्य पात्रस्य अपादानत्वं दर्शयति । तस्मात् उक्थ्यात् आग्रयणाच्चेति उभाभ्यां षोडशी ग्रहीतव्यः ।

आग्रयणाद्वा, पराक्शब्दस्य देशवाचित्वात् पुनराधेयवत् । ४७ ॥

वाशब्दः पूर्वपक्षं व्यावर्तयति । षोडशी ग्रहः आग्रयणादेव पात्रात् ग्राह्यः, न उक्थ्यपात्रात् । 'यत् पराञ्चमुक्थ्याद्गृह्णाति षोडशिनम्' इति पराक्शब्दस्य देशवाचित्वात् कालवाचित्वात् इत्यर्थः । उक्थ्यादनन्तरं षोडशी ग्राह्यः इत्युक्ते उक्थ्यस्य अपादानत्वं नास्ति । तस्मात् उक्थ्यादनन्तरं आग्रयणात् षोडशी ग्राह्य इत्येव । पुनराधेयवत्, यथा 'पराञ्चमन्वाधेयात् पुनरादधाति' इति कालसंयोगे पञ्चमी नापादाने, एव-

सिद्धापि । तस्मात् षोडशी आग्रयणादेव ग्राह्यः इति सिद्धान्तः ।

विच्छेदः स्तोमसामान्यात् । ४८ ॥

– यदुक्तं पूर्वपक्षिणा ' विच्छिन्दन्ति इव वा एतदुक्थ्यम्, यदुक्थ्यानि षोडशिनं च तत. प्रणयन्ति' इति विच्छेदवचनात् उक्थ्यस्य अपादानत्वमिति, तत्र । विच्छेदः स्तोमसामान्यात् उक्तः । उक्थ्यग्रहाणामपि एकविंशस्तोमकाः षोडशिग्रहोऽपि तादृश. । एवमेकविंशस्तोम सामान्यात् षोडशिग्रहस्यापि उक्थ्यविच्छेदत्वेन उत्प्रेक्षा कृता । उक्थ्यविच्छेदो नाम प्रचारकाले त्रीन् उक्थ्यग्रहान् प्रणयन्ति तदनन्तरं षोडशिनं प्रणयन्ति इति । ' ततः प्रणयन्ति ' इत्यपि पञ्चमी नापादाने, किन्तु कालार्थ एव, ततः उक्थ्यप्रणयनादनन्तरं षोडशिनं प्रणयन्ति इति । तस्मात् आग्रयणादेव षोडशिनो ग्रहण नोक्थ्यादपि इति सिद्धान्तः । के.

■ तस्योपदेशसमाख्यानेन निर्देशः । ३।७ २०।४१ ॥

पूर्वाधिकरणे स्फाभिरादानामभिधा समाख्याऽऽदिना तत्तु यागकर्मसु संयुक्तत्वदानात् व्यवस्था इत्युक्तम् । तदपवादार्थमिदं सिद्धान्तसूत्रम् । तत्र आध्वर्यवादिसमाख्यातस्य कर्मणोऽपि । उपदेशसमाख्यानेन तदेशेन ' तस्मान्मैत्रावरुणः प्रेष्यति च अनु चाह ( अन्वाह च) ' ' प्रतिप्रस्थाता मन्थिनं जुहोति ' इत्यादिना, वेदीं पोता इत्यादिना समाख्यानेन च निर्देशो भवति । तेनापि विशेषस्य शक्या । लोकस्य निर्देशस्य अपवादार्थता सूत्रेऽस्मिन् उक्ता ।

अत्र सुधा—'कर्मणामुक्ता आध्वर्यवादिसमाख्यानात् क्वचिदपि काले समावेशत्वात् सर्वत्र अप्रामाण्यापत्ते. विशेषसमाख्यया बाधायोग्यमाशङ्क्य मैत्रावरुणादिवाक्येन प्राप्तस्य अवदानाङ्गीकारं यत स्वीकरणीयानि इतिवत् भूम्ना आध्वर्यवादिसमाख्याप्रवृत्तनैकान्तिकेन परिहर्तुमस्य आध्वर्यवादिसमाख्यातस्यापि कर्मण. यथा मैत्रावरुणोपदेशेन कर्मान्तरोपदेशत्वान्येभ्य. कर्मभ्य निष्कृष्य कर्मान्तरदेशना, तदा विशेषविषयत्वात् संकोचवृत्तिना समाख्यानेन विशेषाख्या शून्येभ्यः कर्मभ्य. निष्कृष्य कर्मान्तरदेशना इत्येवं उपदेशोक्तिः इति । अत्र वार्तिकं (३।३।७।१४ सूत्रे ) समाख्ययोस्तु विरोधे सामान्यविशेषसमाख्ययो. सूत्रकृद् एव बाधो भविष्यति ' तस्योपदेशसमाख्यानेन निर्देशः ' इति । अत्र सोमनाथी – तस्योपदेशेन वचनेन विशेषसमाख्यानेन निर्देशो निष्कर्षः अपवाद इति यावत् । प्राभाकरैरिदं सूत्र सामान्यसमाख्यायाः वचनविशेषसमाख्याभ्यां बाधयुत्पादनार्थं अधिकरणान्तरत्वेन व्याख्यातम् । तदनुपपन्नम् । समाख्याया. वचनापेक्षया सामान्यस्य विशेषापेक्षया च दुर्बलत्वस्य अन्यत्र सिद्धत्वेन पूर्वपक्षानुत्थानात् । तस्मात् प्रकृताधिकरणशेषभूतमेवेदम् । सोम. ३।७।१९.

तद्वच्च लिङ्गदर्शनम् । ४२ ॥

यागीयकर्मसु आध्वर्यवादिसमाख्यया अध्वर्य्वादीनां व्यवस्थया नियम इत्युक्ते तदपवादतया उपदेशसमाख्याभ्यां विशेषनियमः इति उक्ते सिद्धान्ते हेत्वन्तरपर सूत्रम् । तत्र आध्वर्यवादिसामान्यसमाख्यायत् पोत्रीयादिविशेषसमाख्यायाश्च ' यत्र होतुः प्रातरनुवाकमनुब्रुवतऽउपशृणुयात् ' इति लिङ्गं होत्रे प्रातरनुवाके समाख्यया प्राप्त होतार दर्शयति । तथा 'उद्गीथ उद्गातॄणाम्, ऋचः प्रणव उक्थशंसिनाम् ( होतॄणां उद्गीथ· ), प्रतिगरोऽध्वर्यूणाम् ( उद्गीथ. )' । तथा ' यो वाऽध्वर्योः स्वं वेद स्ववानेव भवति, एतद्वा अध्वर्यो. स्व, यदाश्रावयति' इति च लिङ्गं तत्तत् कर्मणि तत्तदृत्विजं विशेषतो दर्शयति । तस्मात् विशेषसमाख्यया विशेषतो ऋत्विजां कर्मसु व्यवस्थया नियमः ।

अत्र सुधा—यथा आध्वर्यवादिसमाख्यानात् कर्मणः अध्वर्य्वादिकर्तृव्यवस्था, यथा च विशेषसमाख्यानेन कर्मान्तरदेशना तथा लिङ्गदर्शनं ( विशेषतो नियामकम् ) इति । के

● ०तस्यतस्योपदिश्येत ( ३।३।३।६ ) । यद्यपि ' आश्विनं ग्रहं गृहीत्वा ' इत्यनेन इयमपि प्रात सवन आश्विनग्रहोत्तरकालत्व च विधीयेत, तथापि त्रिवाक्यस्य एकवाक्यानुसारात् ' तस्यतस्योपदिश्येत ' इत्येतशापत्तिर्नास्ति । शा. ३।६।७।२२ पृ १०४७.

॥ तस्य धेनुरिति गवां प्रकृतौ विभक्तं चोदितत्वात् तत्सामान्यात् तद्विकारः स्याद् यथेष्टिर्गुणशब्देन । १०।३।१४।५६ ॥

* 'अथैष भूर्भुवस्वेदः त्रिवृदेव सर्वः, तस्य विश्वजितः सोऽजीया धेनुर्दक्षिणा' इति भूनाम एकाहः क्रतुः श्रुतः। तत्र 'तस्य धेनुर्दक्षिणा' इत्यनुषङ्गः। येयं 'तस्य धेनु.' इति धेनुः श्रुता, सा प्राकृतीनां दक्षिणानां मध्ये गवामेव निवर्तिका, नाश्वादीनाम्। प्रकृतौ दक्षिणात्वा विभक्तं यथा स्यात्तथा चोदितत्वात् गौर्दक्षिणा, अश्वो दक्षिणा, अश्वतरो दक्षिणा इति प्रत्येकं दक्षिणात्वमुक्तम्। अत्र भूनाम्नि क्रतौ गवामेव धेनुत्वं विशेष उच्यते गौरेव धेनुर्नान्या। एवं च तत्सामान्यात् गोत्वसामान्यात् धेनुः तद्विकारः गोविकारः स्यात् अधेनूनां गवां बाधः स्यात्। यथा इष्टिः ऐष्टिको विध्यन्तः गुणशब्देन 'सौर्यं चरुं निर्वपेत्' इति निर्वापशब्देन नियम्यते तद्वत्। तस्मात् ज्योतिष्टोमगताः सर्वा दक्षिणाः भूनाम्नि क्रतौ स्युः, गावस्तु धेनवः दुग्धदाः स्युः इति विशेषः। इति पूर्वः पक्षः। अथवा 'तस्य धेनुः' इत्येकवचनात् ज्योतिष्टोमिकीनां सर्वासां गवां स्थाने एका धेनुर्दक्षिणा अश्वादयस्तु यथाप्रकृति इति पूर्वः पक्षः।

सर्वस्य वा क्रतुसंयोगादेकत्वाद् दक्षिणार्थस्य, गुणानां कार्यैकत्वादर्थे विकृतौ श्रुतिभूता स्यात्, तया समवायाद्धि कर्मभिः । ५७ ॥

भूनाम्नि क्रतौ विहिता या धेनुर्दक्षिणा, सा सर्वस्य क्रतुदाक्षिण्यस्य निवर्तिका। क्रतुसंयोगात् 'तस्य धेनुर्दक्षिणा' इति अनुषङ्गयुक्तवाक्ये तस्येत्युक्तस्य कृत्स्नस्य क्रतोः धेनुर्दक्षिणया संबन्धात्। ज्योतिष्टोमे तावत् गवाश्वादीनां विलक्षणानामपि द्रव्याणां समुदाये एव एकं दक्षिणात्वम्, न तु प्रत्येकं पृथक् दक्षिणात्वम्, गौश्च अश्वश्च इति चकारमिश्रशब्दैः सर्वेषां समुदायमुद्दिश्य एकदक्षिणात्वविधानात्। तादृश्या दक्षिणायाः प्राकृत्याः भूनाम्नि विकृतौ विहितया एकया धेन्वा बाधः। एकत्वं दक्षिणार्थस्य, दक्षिणाया योऽर्थः प्रयोजनं ऋत्विगानमनं तस्य एकत्वम्, न नानात्वम्। गुणानां च कार्यैकत्वात्, दक्षिणाया ये गुणाः गवाश्वादयः विलक्षणास्तेषामपि कार्यैकत्वात्, दक्षिणास्वरूपकार्यैकत्वात् विकृतौ भूनाम्नि क्रतौ अर्थे ऋत्विगानमनरूपे श्रुतिभूतम् 'तस्य धेनुर्दक्षिणा' इति श्रुतिविहितं धेन्वेकत्वं समर्थं स्यात्। तथा धेनुदक्षिणया हि यस्मात् कर्मभिः साकमृत्विजां समवायात् संबन्धात् तस्मात् धेनुः सर्वस्य क्रतुदाक्षिण्यस्य बाधिका।

चोदनानामनाश्रयाल्लिङ्गेन नियमः स्यात् । ५८ ॥

'तस्य धेनुः' इति सूत्रे 'यथेष्टिर्गुणशब्देन' इति विकृतीष्टिदृष्टान्तः पूर्वपक्षिणा प्रदर्शितः तस्य वैषम्यमाह सिद्धान्ती। चोदनानां सौर्यादिविकृतीष्टिचोदनानाम् अनाश्रयात् अनाश्रयणात् अस्वीकारात् प्रत्यक्षोपदिष्टधर्मविशेषाभावात् निर्वापलिङ्गेन प्रकृतीष्टिविध्यन्तस्य नियमः स्यात् इति युक्तम्। भूनाम्नि क्रतौ तु गवादीनामेकं कार्यं दक्षिणात्वम्, तस्मिंश्च श्रुतिभूता एका धेनुः चोदकप्राप्ता सर्वा दक्षिणा निवर्तयितुमर्हति। तस्मात् एका धेनुः कृत्स्नां प्राकृतीं दक्षिणां निवर्तयति इति सिद्धान्तः। के.

* 'तस्य धेनुरिति गवां प्रकृतौ विभक्त-(क्तं) चोदितत्वात् सामान्यात् (तत्सामान्यात्) तद्विकारः स्याद् यथेष्टिर्गुणशब्देन।' 'एष भूर्भुवस्वेदः त्रिवृदेव सर्वः तस्य विश्वजितः सोऽजीया धेनुर्दक्षिणा' इत्युदाहृत्य किं धेनुर्गवां निवर्तिका, उत कृत्स्नाया दक्षिणायाः इति संदेहे 'यच्चान्यवेदः प्राथम्यमित्याद्युद्देश्यलक्षणम्' इत्यनेन न्यायेन दक्षिणासंबन्धे प्रथमं गवादीनामुपादानेन उद्देश्यत्वमाश्रित्य उद्देश्यगतस्य च संख्याकारकस्यापि साहित्यस्य अविवक्षितत्वात् प्रत्येकं दक्षिणात्वप्रतीतेः गौर्वेकार्थसमवेतदोग्ध्रीत्ववाचिना धेनुशब्देन गवामेव दोग्ध्रीणां निवृत्तिप्रतीतेः एकवचनेन च द्वादशशतसंख्यानिवृत्तिप्रतीतेः यथा 'सौर्यं चरुं निर्वपेत्' इति निर्वापशब्दगुणशब्देन ऐष्टिको विध्यन्तो नियम्यते, तथा धेनुशब्देन गोमात्रनिवृत्तेः नाश्वादिनिवृत्तिः इति पूर्वपक्षयित्वा कृत्स्नाया दक्षिणाया निवृत्तिः इति सिद्धान्तितम्। मु. ई. ८३५.

● तस्य निमित्तपरीष्टिः । १।१।३।३ ॥

चोदनालक्षणसूत्रेण धर्मार्थाभ्यां वेदार्थस्वरूपम्, तत्र च प्रमाणं प्रतिज्ञातम् । तत्र किं स्वरूपं तावत् भेदाभेदरूपेण कथ्यताम्, उत प्रमाणप्रतिज्ञायां हेतुः इति संशये प्रधानत्वात् स्वरूपस्य, तदेव भेदाभेदाभ्यां कथनीयम् । इति प्राप्ते, भेदाभेदनिर्णयस्य अनपेक्षत्वरूपप्रेक्षत्वात् प्रामाण्ये हेत्वनपेक्षत्वं अधुना वक्तव्यमिति सूत्रेण कथ्यते । तस्मात् अनपेक्षत्वरूपप्रामाण्यहेत्वभिधानाय तत्कथन सूत्रेण क्रियते । ऋजु पृ. ३२.

■ तस्य निमित्तपरीष्टिः । १।१।३।३ ॥

अनेन सूत्रेण धर्मप्रमाणपरीक्षाप्रतिज्ञा कृता । तस्य धर्मस्य यानि निमित्तानि ज्ञापकानि प्रमाणानि, तेषां परीष्टिः पर्येषणा सम्यक् परीक्षा 'करिष्यते' इति शेषः । के.

● तस्य निमित्तपरीष्टिः । धर्मे वेदः प्रमाणं इत्युक्तम् । तत् संभवति न वा इति परीक्षा प्रत्यक्षादीनां धर्मप्रामाण्यासंभवनिरूपणद्वारा क्रियते इत्यर्थः । मणि. पृ. ११.

● 'तस्य व्रतम्' इत्युपक्रम्य 'नोद्यन्तमादित्यमीक्षेत' इति श्रूयते । व्रतमिति धर्मनाम । टुप्. १।१।५।२०.

■ तेषामर्थेन संबन्धः । ३।१।४।७ ॥

दर्शपूर्णमासयोः निर्वापप्रोक्षणावहननादयः औषधधर्माः, उपवनविलापनग्रहणासादनादयः आज्यधर्माः, धारादोहनकालापाकरण तथा प्रस्तावन इत्यादयः सांनाय्यधर्माः श्रुताः । ते किं सर्वे सर्वत्र कर्तव्याः, उत ये यदर्थवन्तः ते तत्र कर्तव्याः इति विचारे सिद्धान्तमाह । तेषां अवहननादीनां धर्माणां अर्थेन प्रयोजनेन संबन्धः स्यात् । यस्य यत्र प्रयोजनसाधकत्वं स तत्र कर्तव्यः इति ।

विहितस्तु सर्वधर्मः स्यात्, संयोगतोऽविशेषात् प्रकरणाविशेषाच्च । ८ ॥

उक्तं सिद्धान्तं तुशब्देन व्यावर्तयन् पूर्वपक्षमाह । अपूर्वसाधनोद्देशेन यः कश्चित् धर्मो विहितः, स सर्वोऽपि सर्वधर्मः, औषधाज्यसांनाय्यानां सर्वेषामेव धर्मः स्यात् । संयोगतः अपूर्वसंयोगस्य अविशेषात् समानत्वात्, प्रकरणाविशेषाच्च दर्शपूर्णमासप्रकरणपाठस्य समानत्वाच्च ।

अर्थलोपादकर्म स्यात् । ९ ॥

एतं पूर्वपक्षं निराचष्टे । आज्यधर्माणामुत्पवनादीनां औषधे सांनाय्ये च, औषधधर्माणां अवहननादीनां आज्ये सांनाय्ये च, सांनाय्यधर्माणां धारापाकरणादीनां आज्ये औषधे च अर्थलोपात् अर्थस्य दृष्टस्य फलस्य लोपात् अभावात् अकर्म अक्रिया स्यात् । ते सर्वत्र न कर्तव्याः । किन्तु यत्र यस्य दृष्टं फलं तत्रैव स कर्तव्यः ।

फलं तु सह चेष्टया, शब्दार्थोऽभावाद् विप्रयोगे स्यात् । १० ॥

ननु अवघातादीनां आम्नाये विधिनत्वात् अदृष्टप्रयोजनं कल्प्यताम् इति चेत् तत्राह । तुशब्दः आशङ्कानिरासं सूचयति । चेष्टया अनुष्ठानेन सह सहितं तदव्यवहितोत्तरकाल फलं वैतुष्यादि उपलभ्यते । यदा चेष्टया अवघातादिक्रियया सह श्रुतेषु व्रीह्यादिषु वैतुष्यादि फलं दृष्टार्थे उपलभ्यते । तथा च दृष्टे संभवति नादृष्टकल्पना । दृष्टस्य फलस्य विप्रयोगे अनुपलब्धौ अभावात् दृष्टफलस्य अभावनिश्चयात् शब्दार्थः विधिसामर्थ्यः अदृष्टोपकारः स्यात् । प्रकृते तु दृष्टस्य सत्त्वात् नादृष्टकल्पना । ननु प्रकरणाविशेषात् सकलानामवघातादीनां सर्वप्रयोजकत्वं स्यात् इति चेत् तत्राप्याह । 'विप्रयोगे अवान्तरापूर्वस्याभावे सति, परमापूर्वस्य च धर्मस्य स्वरूपावच्छेदकाभावात् शब्दार्थः व्रीह्यादिधर्मस्य आज्यादिष्वपि धर्मः स्यात् संभाव्येत परमापूर्वसाधनत्वाविशेषात् । न चैवमस्ति । किन्तु चेष्टया अवघातादिक्रियया सह श्रुतेषु व्रीह्यादिषु तण्डुलनिष्पत्तिरूपावान्तरापूर्वं नाम फलमस्ति ।' इति कुतूहलम् । के.

● तेषामर्थाधिकरणम् । व्रीहीनवहन्तीत्यत्र व्रीहिपदस्य अपूर्वसाधनमात्रपरत्वेऽपि व्रीहिजातस्य आज्यसांनाय्यसाधारण्यम्, तत्रावघातस्य पक्षेऽपि प्राप्तिभावेन अत्यन्ताप्राप्तविधानतो विधित्वापत्ते इति व्रीहियवमात्रविषयत्वे नियमविधित्वं वक्तव्यत्वादाभितम् । किञ्च तत्रैवाधिकरणे व्रीहिकाभ्या वैतुष्यार्थं अवघातः

अपेक्षित: नाज्यसानाय्ययोः इत्यपेक्षितविधेः अनपेक्षितविधानदौर्बल्यन्यायेनापि अवघातस्य औषधद्रव्यमात्रशेषत्वं दर्शितम् । वाक्यदोषानुग्रहः अभ्युच्चयमात्रे इति तत्रैव स्फुटम् । पराक्रमः. ४०।७–४१।१.

☒ तेपामर्थाधिकरणम् । व्रीहिन्यायः । दर्शपूर्णमासयो. व्रीहि–आज्य–सानाय्यधर्माः व्यवस्थिता एव, न संकीर्णा भवन्ति ॥

तेपामर्थेन संबन्धः । ३।१।४।७ ॥

भाष्यम्— स्तो दर्शपूर्णमासौ 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' इति । तत्र श्रूयन्ते धर्माः निर्वपणं प्रोक्षणं अवहननमित्येवमादय औषधधर्माः । तथा उत्पवनविलापनग्रहणासादनादय आज्यधर्माः । तथा शाखाऽऽहरणम्, गवां प्रस्थापनम्, गवां प्रस्तावनमित्येवमादयोऽपि सानाय्यस्य । तेषु संदेहः किं सर्वे, औषधे आज्ये सानाय्ये च कर्तव्याः, उत ये यत्र क्रियमाणा अर्थवन्तः ते तत्र कर्तव्या इति । ननु नैयुक्ताः (उद्देश्यविशेषसंयुक्ताः) एवैते श्रूयन्ते । यथा 'व्रीहीनवहन्ति' 'तण्डुलान् पिनष्टि' इति । बाढं संयुक्ताः । अवघातादयस्तु पदार्था विधीयन्ते श्रुत्या । वाक्येन एषां व्रीह्यादिवियोगः । अतोऽस्ति संशयः । किं तावत् प्राप्तम् ? तेपामर्थेन संबन्धः । अर्थेन प्रयोजनेन । ये यत्र क्रियमाणाः प्रयोजनवन्तः, ते तत्र कर्तव्याः । प्रथमादय आज्यसानाय्ययोः अनुपकारका इति न तत्र करणीयाः । एवमुत्पवनादय औषधसानाय्ययोः, शाखाऽऽहरणादय आज्यौषधयोः । ननु श्रूयन्ते सर्वे सर्वत्र । एतदेव न जानीमः श्रूयन्ते, न श्रूयन्ते इति । तत् निराकरिष्यामः । यद्यपि श्रूयेरन् तथापि अनुपकारकत्वान्नैव कर्तव्या भवेयुः ।

पा—उक्तः संदेहः सविषयश्च शेषः । इदानीं 'कथं च विनियुज्यन्ते' इत्ययमंशो विचार्यते । तत्र त्रिषु अधिकरणेषु क्रमेण संस्कारद्रव्यगुणानां विनियोगः कथ्यते । तत्रापि किल प्रथमे लिङ्गेन, द्वितीये वाक्येन, तृतीये श्रुत्या विनियोग इति केचित । तत्तु आचार्या नेच्छन्ति । यद्यपि अत्र विविधप्रमाणव्यापारपरामर्शः, तथापि श्रुतिविनियोगः एतस्मिन् पादे, लिङ्गादिविनियोगस्तु द्वितीयपादात् प्रभृति भविष्यतीत्युक्तम् । औषधधर्मा इत्याद्यपि एतदधिकरणभाष्यमपि सिद्धान्ताभिप्रायेणोक्तम् । 'ननु संयुक्ता एवैते' इति सिद्धान्तवादी श्रुतिबलेन संशयमाक्षिपति । यतः पुनः पदान्तरसंबन्धकृतं व्रीह्यादिसंबन्धं शब्दावघातविधिना बाध्यमानं मन्यमानः आह— 'अवघातादयस्तु पदार्था विधीयन्ते श्रुत्या' इति तदेतदयुक्तमिव । कुतः ? 'प्रयुज्यते पदं किञ्चिद् विना नहि पदान्तरात् । वाक्याधिकरणे चोक्ता श्रुतिबाधप्रतिक्रिया ॥' नहि व्रीह्यादिभिः संबध्यमाना अवघातादयः नावघातादयो भवन्ति । यदि हि एवं भवेयुः, ततः श्रुतिविरुद्धत्वात् वाक्यं बाध्येत । अत्र पुनः केवलानामेव अवघातादीनामनुष्ठातुमशक्यत्वात् अवश्यमेव संबन्धव्यापारः कार्यः । नहि भयान्धोऽपि अवघातादयः केवलाः क्रियन्ते । तत्र प्रकरणमन्यद्द्रव्यमात्रसंबन्धः कल्प्यान्तरेण कल्प्येत । अथापि किञ्चिदध्याहृत्य संबन्धः क्रियते, तथापि क्लेशः । अथ आरादुपकारकत्वेन प्रधानसंबन्धः इष्यते, तथापि विप्रकर्षः । अथ तु नैव केनचित् संबध्यते, ततो विध्यानर्थक्यप्रसङ्गः । तस्मात् असदेतत् । तेन एव व्याख्येयम्—'वाक्यभेदवदेकत्वसंदेहाभाव सत्ययः । परमाधान्तरापूर्वप्रयुक्तत्वकृतो ह्यसौ ॥' नैव अत्र अयं पूर्वपक्षहेतुः 'अवघातादयः पदार्थाः स्वतन्त्राः श्रुत्या विधीयन्ते, वाक्येन व्रीह्यादिभिः संबध्यन्ते, तच्च श्रुत्या बाध्यते । तस्मात् केवलविधानात् किं सर्वार्थाः, किंवा दृष्टोपकारसामर्थ्येन यथासंयोगमेव भवन्ति' इति । किं तर्हि ? 'विधीयन्तेऽवघातादिः श्रुत्या व्रीह्यादिसंगताः । व्रीहित्वाद्यर्थवत्ता स्यात्र निष्फलत्वेन नेष्यते ॥' यदि हि एषा यथाश्रुतव्रीह्याद्यर्थत्वमध्यवसीयते, ततः संयुक्तत्वात् सर्वे सर्वत्र न प्राप्नुयुः । यदि पुनः नवमाद्यधिकरणन्यायेन ('व्रीह्यादिस्वरूपस्य अवघातादिव्यतिरेकेणापि सिद्धत्वात् तदर्थत्वे विध्यानर्थक्यापत्तेः लक्षणया अपूर्वसाधनत्वावच्छिन्नोद्देशेन विधीयन्ते' इत्यनेन) व्रीहित्वं व्रीहित्वं सङ्कुच्य अपूर्वसाधनत्वेन संबध्यन्ते । तत्र प्रकरणापेक्षापूर्वसाधनत्वस्यागम्यत्वात् वाक्यगम्यमिति मन्यमानः आह (भाष्यकारः)

मपि अविशिष्टम्। यत्तु विशिष्टं व्रीहित्वादि, तत् लक्षणामात्रोपयिकत्वात् अनियामकम्। यदपि कारककार्यं लक्ष्यते, तदपि सर्वेषां प्रदेयत्वात् अविशिष्टम्। तस्मात् अपूर्वसंबद्धं अप्रदेयं अप्रकृतापूर्वसाधनं च वर्जयित्वा सर्वे सर्वत्र कर्तव्याः। यो हि अर्थात् प्राप्नोति इति, अचोदितः सन् सामर्थ्येन, लौकिकप्रयोजनेन वा यः प्राप्नोति, स तदभावेन व्यवतिष्ठते। अथवा यत्र पूर्वतरप्राप्तप्रयोजनद्वारेण धर्माः प्राप्नुवन्ति, न च धर्मेभ्य एव प्रयोजनकल्पना यथा विकृतिषु, तत्र शब्दार्थत्वं भवेत्। अत्र पुनः प्रकृतौ उपदेशेन प्राक् प्रयोजनेभ्यः स्वरूपमात्रेण कल्पयिष्यमाणप्रयोजनाः धर्मा विधीयन्ते। तेन नैषा वचनव्यक्तिः 'यत्र प्रयोजनं तदर्थे' (इति)। किं तर्हि? 'यदैते तत्र दृष्टमदृष्टं वा प्रयोजनम्' इति। तस्मात् सर्वधर्माः।

अर्थलोपादकर्म स्यात्॥९॥

भाष्यम्— नैतत्, सर्वे सर्वत्र करणीया इति। ये यत्र नोपकुर्वन्ति, न ते तत्र क्रियामर्हन्ति इत्युक्तमेव। ननु विधानसामर्थ्यात् सर्वे सर्वत्रोपकरिष्यन्ति। नेति ब्रूमः।

वा— दृष्टार्थलोपात् शास्त्रार्थलोपाद्वा इति निगदव्याख्यातं भाष्यम्।

फलं तु सह चेष्टया, शब्दार्थोऽभावाद् विप्रयोगे स्यात्॥१०॥

भाष्यम्— नास्ति विधानम्, येन सर्वे सर्वत्र उपकुर्वन्ति। न च प्रत्यक्षादिभिः उपकारोऽवगम्यमानः। अर्थापत्तिरपि नियोगतः तत्रैव भवेत्, यत्रैव शब्देन चोदना भवति, नान्यथा। यदि च प्रथनादीनां आज्यसान्नाय्ययोः अनुपकुर्वतामपि तत्प्रकरणे समाम्नायः अनुपपन्नो भवेत्, ततः अर्थात् अदृष्ट उपकारः कल्प्येत। ते तु अवश्यं समाम्नानीयाः ओषध्यर्थम्। फलं हि सह चेष्टया अवहननादिकया अवगम्यते तुषविमोचनादि। प्रयोजनं न तेन, न तस्मात् ऋते पुरोडाशः सिध्यति। सति चास्मिन् अर्थवान् प्रकरणे समाम्नायः। अर्थवति तस्मिन् नादृष्टकल्पनायां प्रमाणमस्ति इत्यतो न शक्यं कल्पयितुम्। यदि च तण्डुलादिनिष्पादनं दृष्टमभविष्यत्, ततो विप्रयोगे तण्डुलादीनामभावात् उपकारस्य शब्दार्थमात्रं दृष्टोपकारानपेक्षं कर्तव्यम्, इति आज्यसान्नाय्ययोरपि क्रियमाणानां अदृष्टमभविष्यत्। तस्मात् न प्रथनादयः सर्वत्र। एवं उत्पवनादयः शाखाऽऽहरणादयश्च। तस्मात् सर्वे सर्वत्र कर्तव्याः। प्रथनादयो नाज्यसान्नाय्ययोः, औषधे एव ते। उत्पवनादयः आज्यस्य, नौषधसान्नाय्ययोः। शाखाऽऽहरणादयश्च सान्नाय्यस्य, नाज्यौषधयोः इति सिद्धम्।

वा— यदुक्तं अदृष्टकल्पनात् नैव इतरत्रापि अर्थलोप इति, तत्राभिधीयते। 'यत्राहत्य विधीयेरन् साक्ष्येऽपि प्रथनादयः। अदृष्टार्था भवेत्तत्र दृष्टार्था वा न भवेद्यदि॥' आम्नानान्यथाऽनुपपत्त्या हि अदृष्टं कल्प्यते। तच्च आम्नानमन्यथैव दृष्टार्थतया उपपन्नमित्यर्थापत्तेरसंभवः। तत् दर्शयति। अवघातादीनां अनुष्ठानसहितं फलं व्रीहिषु दृश्यते, अन्यत्र चेष्टामात्रम्। न च सफलेनाऽनुष्ठानसंभवे निष्फलानुष्ठाने विधिः पुरुषं नियोक्तुं शक्नोति, न च तेन अभियुज्यमानः फलकल्पनानिमित्तं लभते। तत् इतरेतराश्रयं भवति फलात् विधिः, विधेश्च फलमित्यभ्युपगमात्। 'नह्यन्वेकमपि स्पष्टं प्रसिद्धं व्रीहिषु द्वयम्। अन्योन्यनिरपेक्षं च प्रत्यक्षमुपलभ्यते॥' यथा उत्पवनादीनामाज्यसान्नाय्ययोः इति योजनीयम्। तथाहि, 'योऽर्थः प्रत्यक्षदृष्टोऽपि क्रतुना पुरुषेण वा। नापेक्ष्येतोपकाराय सोऽप्राप्तो, न स्वयं तथा॥' अवघातादिनिर्वर्त्यो हि तुषकणविप्रमोचनादिः अर्थः पुरोडाशसिद्धिं प्रति षड्भिरपि व्रीहि–पुरोडाश–क्रतु–अपूर्व–अध्वर्यु–यजमानैः अपेक्षितः। नहि तस्मादृते व्रीहिभिः यष्टुं पुरोडाशो वा निर्वर्तयितुं शक्यतेति। तत् दर्शयति (भाष्यम्,) 'प्रयोजनं च तेन' इति। 'विप्रयोगे तु दृष्टस्य फलस्य तदभावजा। तेषां शब्दार्थमात्रत्वात् स्याददृष्टार्थकल्पना॥' ततश्च अवघातः आज्यसान्नाय्ययोरपि स्यात्। सति तु दृष्टे फलनिराकांक्षत्वात् यथार्थमेव व्यवस्थासिद्धिः। तथाहि, 'क्वचिद् दृष्टनिराकाङ्क्षः क्षीणार्थोपनिपातिकः।

नादृष्टार्थोऽपि सोऽन्यत्र शक्यः कल्पयितुं विधिः ॥'

अथवा, तत्र एते सर्वत्र विहिता भवेयुः, यदि परमापूर्वप्रयुक्ताः सर्वापूर्वप्रयुक्ता वा स्युः। तदा च एवं ते भवेयुः, यदि भिन्नानि व्रीह्यादिकर्मापूर्वाणि (आग्नेयादिजन्योत्पत्त्यपूर्वाणि) न स्युः, यदि च एषाम् (उत्पत्त्यपूर्वाणाम्) प्रयोजकशक्तिर्न स्यात्। तानि तु प्रयोजकशक्तिमन्ति प्रतिकर्मभिन्नानि विद्यन्ते। तत्र भेदस्तावत् अपूर्वाधिकरणे (२।१।२।२) साधितः। यद्यपि च एषां साक्षात्फलत्वम्, तथापि स्वरूपसिद्ध्यन्यथाऽनुपपत्त्यैव प्रयोजकत्वं भविष्यति। न च निष्फलानि। तस्मात् निष्फलत्वात् अप्रयोजकं भवति, यत् अत्यन्तनिष्फलं तन्निरपेक्षम् (अङ्गनिरपेक्षम्) वा द्रव्यपाकादि स्वरूपवत् तत्त्वात्मकम्। आग्नेयाद्युत्पत्त्यपूर्वाणि तु परमापूर्वसिद्ध्यङ्गत्वात् पारम्पर्येण फलवन्ति। न च धर्मेभ्यः प्राक् सिद्धानि निर्ज्ञातोपायपरिमाणानि वा। तस्मात् आत्मलाभार्थमेव प्रयुज्यन्ते। यत्र येषु धर्मेषु विधीयमानेषु अपूर्वमुपतिष्ठते, तत् तेषां प्रयोजकं भवति, न यत्किञ्चित्। व्रीह्यादिशब्दैश्च स्वकर्मसाध्यमेव केवलं अपूर्वमुपस्थाप्यते नान्यत्, असंबन्धात्। अतश्च अवघातादयः तदेव एकमपूर्वं प्राप्य अर्थवन्तो जाताः न परमापूर्वं कर्मान्तरापूर्वं वा अपेक्षन्ते। तद् दर्शयति। यस्मात् अवहननादि येषां सह श्रुतेषु व्रीह्यादिष्वेव स्वापूर्वसाधनद्वारेण विधेः पर्यवसानं दृश्यते। तस्मात् नान्यत्र संक्रान्तिः। यदि तु तत्र अपूर्वं न स्यात्, ततः अर्थात् अदृष्टं कल्प्येत, व्रीह्यादिशब्दैः अनुपस्थापितोऽपि उपकारः प्रयोजकः कल्प्येत। अस्ति तु तत्।

सूत्रमपि एवम्— विप्रयोगे कण्डनादिनिष्पाद्यस्य अपूर्वस्य प्रयोजनाभावात् सांनाय्यादिसंबन्धोऽपि व्यवहितपरमापूर्वद्वारेण कर्मान्तरापूर्वद्वारेण वा शब्दार्थः स्यात्। प्रत्यासन्नापूर्वसद्भावे तु न शब्दः तावन्तं खेदं सहते। तस्मात् अप्रयोजकः सांनाय्यादिसंबन्धः। एवं तर्हि आग्नेयाद्यपूर्वसंबन्धाविशेषात् श्रुपाद्दीनामप्रयाजादयः प्राप्नुवन्ति। नैष दोषः, कारकान्तरत्वेन तेषामलक्षितत्वात्। यथैव हि प्रदेयत्वाविशेषेऽपि सांनाय्यादेः अपूर्वान्तरसाधनत्वात् अप्रतीतिः, एवं एकापूर्वसंबन्धेऽपि व्रीहित्वैकार्थसमवेतप्रदेयत्वकारकत्वाभावात् श्रुपादीनामप्रवणम्। यत्तु तस्मिन्नेव अपूर्वे समानकारकत्वेन उपकरिष्यति, तस्य भविष्यन्त्येव धर्माः यथा यवानाम्। सर्वं चैतत् नवमे विस्तरेण वक्ष्यामः।

न्या—'एकमेव फलापूर्वं फलस्यैकस्य सिद्धये। कल्प्यं नान्यानि धर्माणां तादर्थ्यात् संकरो भवेत्॥' अत्राभिधीयते। सन्ति तावत् अवान्तरापूर्वाणि। कुतः? 'आग्नेयादिकर्माणि विभक्तानि, तैर्विना। संहत्य परमापूर्वं जनयन्ति स्वरूपतः॥' तस्मात् यथाप्रयोगं व्यवस्था।

सोम— स्वरूपशास्त्रानन्तरं प्रासङ्गिकोऽयं विचारः। सूत्रार्थस्तु— तेषां संस्काराणां अर्थेन स्वप्रयोजकापूर्वेण व्यवस्थया संबन्धः इति।

वि— 'श्रुत्या व्रीह्यादिरूपाद्यधर्माः सार्वत्रिकाः। व्यवस्थिता वा, साकल्यं फलापूर्वेण संगतेः॥, अवान्तरापूर्वसंबन्धात् साक्षात् तैरेव संगतौ। श्रुत्या व्यवस्थापितास्ते सा हि प्रकरणोत्तमा॥' सा श्रुतिः प्रकरणात् प्रबला बलिष्ठा।

भाट्ट— तदेवमङ्गत्वे निरूपिते श्रुत्यादीनि षट् प्रमाणानीत्युक्तम्। तत्र श्रुतिर्नाम अङ्गत्वघटकीभूतोद्देश्यत्वकृतिकारकत्वयोरन्यतरस्य प्राधान्येन वाचकः शब्दः। स च द्वितीयातृतीयाविभक्तिरूपः। कृदन्तस्थले निष्ठान्तादिश्चाङ्गत्वार्थं प्राधान्येनेति। तत्र कारकत्वविशिष्टत्वाविशेषेण प्राधान्येन कारकत्वाभिधानाभावात्। अत एव 'प्रोक्षिताभ्यामुलूखलमुसलाभ्यामवहन्ति' 'अरुणो यशस्वत:' इत्यादौ यावदीयः एव विनियोगः, न श्रौतः। अत्र द्वितीया उद्देश्यत्वपरा सती प्रोक्षणादेरङ्गत्वे हेतुः। यद्यपि ईप्सितत्वाख्याया उद्देश्यतायाः प्राधान्यासत्त्वाद्द्वितीयावाच्यत्वाभावात् तथापि न मुख्या श्रुतिः। अपितु भाक्त एव तत्र श्रुतिव्यवहारः, ईप्सितत्वे लक्षणाऽङ्गीकारात्। अतश्चोद्देश्यतापदमपि नैव लक्षणे देयम्। एवं वचनादनामि कारकत्वघटकत्वाभावात्

श्रुतित्वव्यवहारो भाक्त एव । एवं यत्रापि विभक्त्या लक्षणयैव कारकान्तरप्रतिपादनम्, तत्रापि वाक्येन एव विनियोगः, न श्रौतः । एवं समानपदश्रुत्यादिष्वपि द्रष्टव्यम् । तदेवं श्रुतेर्विनियोजकत्वे तद्भूमाधिकरणेनैव सिद्धे अधुना गौणमुख्यसाधारणश्रुतिविनियोगोपयोग्युद्देश्यतावच्छेदकविचारः क्रियते ।

दर्शपूर्णमासयोः 'व्रीहीनवहन्ति' 'आज्यमुत्पुनाति' इत्यादयः आज्यौषधसान्नाय्यसंमिश्रिनः संस्काराः श्रुताः । तेषु किं सर्वसाधारणमवघातविधौ उद्देश्यतावच्छेदकम्, उत आज्यादिव्यावृत्तम् ? एवमन्यत्रापीति विचारः । तत्र न तावत् श्रुत व्रीहित्वादिकमेव उद्देश्यतावच्छेदकम्, आनर्थक्यापत्तेः । अवघातप्रोक्षणादिव्यतिरेकेणापि व्रीहित्वावच्छिन्नादेर्विद्यमानत्वात् यवेषु अनापत्तेश्च । अतो नवमाद्याधिकरणन्यायेन व्रीहित्वाविवक्षया अपूर्वसाधनत्वलक्षणाया आवश्यकत्वात् । तत्र फलव्याप्तत्वात् एकत्वात् आरादुपकारकेषु सन्निपत्योपकारकशक्तिमत्त्वाच्च परमापूर्वस्य साधनत्वमेव उद्देश्यतावच्छेदकत्वेन लक्ष्यते । अस्ति च आग्नेयादेः तत्रापि साधनता । अत एव न यागनियमन्यायोऽपि । अतश्च उद्देश्यतावच्छेदकस्य सर्वसाधारणत्वात् आज्यादिष्वपि अवघातादेः संकरः । न च प्रतिनियतनिर्देशात् व्यवस्था । यथात्वे व्रीहित्वाविविक्षाया आवश्यकत्वेन नीवारादिषु अनापत्तेः । इति प्राप्ते, यद्यपि विधिः अविशेषप्रवृत्तः स्यात्, तथापि स्वार्थत्वे नियमविधित्वापत्त्यनुरोधेन विशेषे व्यवस्थाप्यते, किन्तु यदा सोऽपि विशेषप्रवृत्तः एव । व्रीह्यादिपदे प्रत्यासत्त्या आग्नेयाद्युत्पत्त्यपूर्वसाधनत्वस्यैव लक्ष्यत्वात् । तस्यापि अनिर्धारितप्रकारत्वेन धर्मप्रयोजकत्वोपपत्तेः आनर्थक्याभावेन तदतिक्रमकारणाभावात्, परस्परं फलवत्त्वात् । अतो व्रीहिपदेन व्रीहित्वव्याप्तानि यानि आग्नेयादीनि सौमीयेन्द्राग्नोत्पत्त्यपूर्वाणि, तन्निष्ठकार्यता निरूपितसाधनतासमानाधिकरणकार्यतानिरूपितस्वदेवताकृतिभूततण्डुलरूपव्यापारकसाधनतासामान्यात्मकत्वेनैव उद्देश्यतावच्छेदकत्वेन विवक्षितत्वात् नाज्यादिषु अतिप्रसङ्गः । अत्र च अपूर्वभेदस्य एकानुगमाभावेऽपि एकप्रयोगाद्वानात् वाक्यभेदः । तत्साधनता एव च विवक्ष्यन्ते, न तु साधनतावच्छेदकादीन्यपि । तेन यागत्वपुरोडाशत्वव्रीहित्वाद्यभावेऽपि न क्षतिः । यथा च व्रीहियवयोः कारणताभेदेऽपि यवसाधारण्यम्, तथा कौस्तुभे विस्तरः । तत्तत् नवमादौ चोपपादयिष्यते ।

मण्डन—'व्रीह्यादेरवघातादि ।'

शंकर—'अवघातादेर्न संकरः ।'

● आज्य–औषधि–सान्नाय्यधर्माणामुभयत्रापूर्वप्रयुक्ततया यथायोग व्यवस्था तृतीय-( ३।१।४ )सिद्धान्तमङ्गीकृत्य, अपूर्वसाधनत्वस्य स्रुवादिष्वपि सत्त्वात् अतिप्रसङ्गमाशङ्क्य निराक्रियते इति 'तेषामर्थाधिकरणेन' अपि अयमर्थः सूचितम् । सोम. ३।१।५. ● 'तेषामर्थेन संबन्धः' इत्यादिभिः त्रिभिरधिकरणैः संस्कारद्रव्यगुणानां श्रुतेर्विनियोगेन व्यवस्था अभिहिता । कु. ३।१।७।१३. ● तेषामर्थाधिकरणे ( ३।१।४।७–१० ) संस्कारविनियोगः कथ्यते । स च लिङ्गेन इति केचित् । वस्तुतस्तु श्रुत्यैव । वा. ३।१।४।७ पृ. ६६५. ● आरण्यस्यापूर्वत्वेन कथ प्रति करणत्वाभावेन, 'तेषामर्थेन संबन्धः' इत्यधिकरणे 'विहितस्तु सर्वधर्मः स्यात् संयोगतोऽविशेषात्' इति पूर्वपक्षसूत्रोक्तन्यायेन ( प्रकृतापूर्वसाधनं वर्जयित्वा सर्वत्र सर्वे धर्माः संबध्यन्ते ) प्रकृतापूर्वसाधनस्यैवमात्रे विधेयो युज्यते । कु. ३।१।४।१२ पृ. १५२. ● यत्र तु व्रीहियवादिवाक्ये कारणताद्वयं प्रमाणसिद्धम्, तत्रैव पर आग्नेयाद्यैकात्म्यकल्पनं इति तेषामर्थाधिकरणे वक्ष्यते । भी. ३।१।४।१ पृ. ६७. ● व्रीहियवादिवैकल्पिकसाधनस्थले व्यभिचारपरिहाराय आग्नेयत्वोपांशुयाजत्वादिव्याप्यो धर्मोऽस्तीति तेषामर्थाधिकरणे ( ३।१।४।७–१० ) कौस्तुभे उक्तम् । भाट्ट. ५।४।४. ● व्रीहिभिर्यजेत इति वाक्यान्तरे यद्यपि प्रकृतिस्पष्टा अपूर्वसाधनम्, तत्र अवघातपर्यवसानेन आशङ्कयं तेषामर्थाधिकरणोपदर्शिता प्रत्यासत्तिबलेन अवान्तरापूर्वप्रयुक्तत्वाद्वा न सार्वत्र्यम् । सोम. १।१।१. ● न तावत् सर्वोपादानधारवेना अन्यार्थत्वमपाकृत्य स्वार्थत्वं व्रीहिं परम्, व्रीह्यादिपदेन प्रत्यासत्त्या तेषामर्थाधिकरण-

इति । निमित्ते च संपन्ने नैमित्तिकोऽर्थः कर्तव्यो भवति । तस्मादागतेऽऽगते काले प्रयोगः कर्तव्यः ।

तथाहि लिङ्गदर्शनम् । २९ ॥

भाष्यम्-- 'अथ वा एष स्वर्गाल्लोकाच्छिद्यते यो दर्शपूर्णमासयाजी सन् पौर्णमासीममावास्यां वाऽतिपातयेत्' इति (लिङ्गम्) आगतेऽऽगते काले प्रयोगं दर्शयति ।

सोम-- सूत्रार्थस्तु-- तेषां कालानामौत्पत्तिकत्वात् कर्मोत्पत्तिनिमित्तत्वात् कालस्य पुनःपुनरागमेन कर्माणि प्रवर्तेरन् इति ।

' वि-- ' सकृत्कृतिरनावृत्तिर्दर्शादेः, शास्त्रार्थतः । सकृत् स्यात्, कालसंयुक्तत्वादावृत्तितोऽन्तिमः ॥'

भाट्ट-- कालत्वाविशेषेण निमित्तत्वावगमस्य मेऽक्षेपेऽपि यदा कालार्वच्छिन्नस्य निमित्तस्य पुनःसन्निपातः, तत्र नैमित्तिकावृत्तिः, इतरथा स्वोत्पत्तौ अवच्छेदकत्वरूप-निमित्तत्वानुपपत्तेः । अत एव यत्र तद्भिन्नेन निमित्ते कालमात्रस्यावृत्तिः, तत्र न नैमित्तिकावृत्तिः, यथा एकस्मिन्नेव वसन्ते पराद्धौ । अत्र च पूर्वपक्षस्य अति-तुच्छत्वात् सूत्रद् भूयोपदेश इति मन्तव्यम् ।

मण्डन-- ' दर्शादिकाले च पुनःपुनः स्यात् । '

शंकर-- ' जीवनेऽपीज्ये कर्म । '

* ' अग्निहोत्रं जुहुयात् स्वर्गकामः ' ' यावज्जीवं दर्शपूर्णमासाभ्यां यजेत ' इत्यत्र जीवन कालवत्पौर्ण-मास्यादिकालावच्छिन्नं निमित्तं इति ' तेषामौत्पत्तिक-त्वात् ' इत्यधिकरणे स्पष्टीभविष्यति । कु. २।४।१।२.

* तेषामौत्पत्तिकत्वाधिकरणन्यायस्तु ' निमित्तावृत्तौ नैमित्तिकानामपि आवृत्तिः ' इति । श्री०

* तेषाम् (त्रयोदशानामधिकरणानां मध्ये) 'चत्वारः अपोद्वाधिकाः प्रथमाः' । अयं कर्मतो व्यवस्थायाः प्रतिषेधः । बाल. पृ. १४-१५.

⌘ तेषां तु वचनाद् द्वियज्ञवत् सहप्रयोगः स्यात् । १०।२।१३।४२ ॥

'सत्राद्दुदवसाय पृष्ठशमनीयेन ज्योतिष्टोमेन सहस्र-दक्षिणेन यजेरन्' इति श्रुतम् । तेषां सत्रकर्तृणामुदव-सानीयकर्तृणां वा उदवसानीयस्य प्रयोगः सहप्रयोगः स्यात्, संहत्य संभूय प्रयोगः स्यात्, 'यजेरन्' इति बहुवचनात् । द्वियज्ञवत् यथा । 'एतेन राजपुरोहितौ सायुज्यकामौ यजेयाताम्' इति द्विवचनात् द्वाभ्यां संहत्य कुलायस्यज्ञः क्रियते यद्वत् । द्वयोः यज्ञः द्वियज्ञः । तस्मात् पृष्ठशमनीयः सर्वैः संभूय कर्तव्य इति पूर्वः पक्षः ।

एकैकशस्त्वविप्रतिषेधात् प्रकृतेश्चैकसंयोगात् । ४४ ॥

सुगमः पूर्वपक्षं व्यावर्तयति । उदवसानीयं सोमं न संहत्य प्रयुञ्जीरन् किन्तु एकैकशः । अविप्रति-षेधात् । उदवसानेन हि पुरुषा लक्ष्यन्ते ये सत्राद्दुदव-स्यन्ति । तत्र च एकोऽपि उदवसाता भवति । ये चोदवसानलक्षिताः तेषां यागः, इति एकैकस्यापि यागो विहितो भवति । न च केनचित् प्रतिषिध्यते । प्रकृतेश्च प्रकृतिभूतस्य ज्योतिष्टोमस्य च एकेनैव कर्त्रा संयोगात् एककर्तृकत्वात् विकृतिभूतस्य उदवसानीयस्यापि एक-कर्तृकत्वनिश्चयात् । तस्मादुदवसानीयः सोमः एकै-केनैव कर्तव्यः न सर्वैः न द्वाभ्यां संहत्य इति सिद्धान्तः । ४२ सूत्र पूर्वपक्षः, ४४ सूत्र सिद्धान्तः । ४३ सूत्रेण तु अन्तरागामिणी इति ज्ञेयम् । के.

* तेषां यत्नो विशेषः स्यात् । ३।८।१०।२२ ॥ न च आत्मनैवात्मानं (मैत्रावरुणः) नियोक्तुमर्हति इति परेण विनियोक्तव्यः । [illegible] च ' तेषां यतो० ' इत्येव विज्ञायते । शा. ३।३।७।१४ पृ. ८४७, * सोमयागेष्वपि ' प्रैषेषु पराधिकारात् ' इत्येवं निवर्त-मानः (यजेतिशब्दः) ' तेषां यतो० ' इत्येव मैत्रा-वरुणेषु । ३।७।२३।५४.

⌘ तस्मिंस्तु शिष्यमाणानि जननेन प्रवर्तेरन् । ६।२।६।२२ ॥

' गुरुरनुगन्तव्यः अभिवादयितव्यश्च ' ' शुद्धयाः प्रत्युत्थेयः संगन्तव्यश्च ' इत्यादयः यावन्तः पदार्थाः प्रत्युपस्थितनियमाश्च आचाराः इत्येतानि तस्मिन् पुरुष-सामान्ये शिष्यमाणानि विधीयमानानि, जननेन जन्मनैव निमित्तेन प्रवर्तेरन् । तत्र जातमात्रस्याधिकारः, न तु उपनयनप्रतीक्षा । तस्मात् बालेऽपि पदे पदार्थाः अनुष्ठेयाः

विधाय आम्नातिविधिपरे वाक्ये 'घृतेन द्यावापृथिवी आपृणेथामिति अन्तरा कर्णौ जुहोति आ मूलाद्दन्ववस्रावयति, भूमिगते स्वाहा करोति' इति । सौमिको यदि विध्यन्तो वषट्कारस्ततो भवेत्, न स्वाहाकारः । तस्मादपूर्वत्वम् । चशब्दः पूर्वहेतुसमुच्चयार्थः । औदुम्बरीशाखायाः कर्णयोर्मध्ये आज्यं होतव्यम् । हुतमाज्यं यथा शाखाद्वारा भूमौ गतं स्यात्, तथा जुह्वो होतव्यम् । भूमिगते वाज्ये सति स्वाहाकारः पठनीयः, न तु प्रागेव होमकाले इति श्रुत्यर्थः ।

उत्तरार्थस्तु स्वाहाकारो यथा साप्तदश्यं, तन्नाधिप्रतिषिद्धा पुनः प्रवृत्तिर्लिङ्गदर्शनात् पशुवत् । १४ ॥

दर्विहोमे सोमविध्यन्तो नास्तीत्यत्र सिद्धान्तिना लिङ्गदर्शनमुक्तम्, तत्परिहरति पूर्वपक्षी । तुशब्दः सिद्धान्तपक्षव्यावृत्त्यर्थः । स्वाहाकारः उत्तरार्थः वषट्कारप्राप्तौ जुह्वतिहोमादिप्रदानार्थः विकृत्यर्थः । यथा साप्तदश्यमनारभ्याधीतं सामिधेनीसाप्तदश्यं प्रकृतिं गच्छति । तत्र प्राकरणिकेन पाञ्चदश्येन बाधितं सत् विकृतिषु गतम् । तथैव 'स्वाहाकारेण वषट्कारेण वा देवेभ्यो हविः प्रदीयते' इति अनारभ्याधीतः स्वाहाकारः दर्शपूर्णमासौ सोमं च प्रकृतिं निविविक्षुः वषट्कारेणोपरुद्धः तदन्ये सोमवर्जे अन्यानि प्रधानानि उपसंक्रामति । तत्र एवं सति औदुम्बरीहोमादौ सौमिकविध्यन्तस्य प्रवृत्तिः अविप्रतिषिद्धा न विरुद्धा । पुनःशब्दः अनर्थकोऽत्र इति भाष्यम् । लिङ्गदर्शनात् पशुवत् । यथा पशुसामिधेनीसाप्तदश्ये पशौ प्रवासादिलिङ्गदर्शनात् दर्शपूर्णमासधर्मप्रवृत्तिः न विरुद्धा, साप्तदश्यस्य नानिकत्वात् । तद्वत् औदुम्बरीहोमे प्रासङ्गिकत्वात् स्वाहाकारं प्रति लिङ्गदर्शनात् न सौमिकधर्मप्रवृत्तिर्विप्रतिषिध्यते ।

अनुत्तरार्थो वाऽर्थवत्त्वादनर्थकत्वाद्धि प्राकृतस्योपरोधः स्यात् । १५ ॥

दर्विहोमे सोमविध्यन्तः, स्वाहाकारस्तु उत्तरार्थः इति पूर्वपक्षी यदाह तत्रेदमाह । वाशब्दः पूर्वपक्षव्यावृत्त्यर्थः । स्वाहाकारः अनुत्तरार्थः न उत्तरार्थः न वषट्कारप्रसङ्गनार्थः । प्रकृतावेव नारिष्ठहोमेषु पार्वणहोमेषु अर्थवत्त्वात् सफलत्वात् स्वाहाकारस्य । यदि प्रकृतौ स्वाहाकारः सार्थको न स्यात् तर्हि तेन अनर्थकत्वात् निराकाङ्क्षत्वेन बलवत्त्वात् प्राकृतस्य सौमिकस्य वषट्कारस्य सावकाशस्य उपरोधः स्यात् बाधः स्यात् । परन्तु न स्वाहाकारस्य आनर्थक्यम् । तस्मान्नोत्तरार्थः । अनुत्तरार्थत्वाच्च दर्विहोमानां सोमपूर्वत्वाभावे 'भूमिगते स्वाहा करोति' इति लिङ्गं भवत्येव ।

न प्रकृतावपीति चेत् । १६ ॥

पूर्वपक्षी आह । प्रकृतावपि दर्शपूर्णमासयोरपि विकृताविव नारिष्ठहोमादौ निवेशो न संभवति । तथापि अविशेषेण विहितो वषट्कार एव प्राप्नोति । स्वाहाकारः पाठप्राप्तः वषट्कारस्तु विहितः । विधिश्च पाठात् प्रबलः । तस्मात् स्वाहाकार उत्तरार्थ एव भवति विकृत्यर्थः ।

उक्तं समवाये पारदौर्बल्यम् । १७ ॥

तत्राह सिद्धान्ती । स्वाहाकारस्य नारिष्ठहोमादौ वषट्कारेण न बाधः । अत्र हि वाक्यप्रकरणयोः संनिपातः । प्रकरणेन नारिष्ठहोमेषु वषट्कारः प्राप्तः, नारिष्ठहोममन्त्रैः एकवाक्यत्वात् स्वाहाकारो वाक्येन प्राप्तः । एवं वाक्यप्रकरणयोः संनिपाते प्राप्ते उक्तं समवाये पारदौर्बल्यं श्रुतिलिङ्गसूत्रे तृतीयाध्याये । वाक्यं प्रकरणात् बलीय इति तत्रोक्तम् । तस्मात् स्वाहाकारस्य प्रकृतौ निवेशात् न विकृत्यर्थः । ततश्च दर्विहोमो न सोमविकृतिः ।

तद्योदना वेष्टेः प्रवृत्तत्वात् तद् विधिः स्यात् । १८ ॥

दर्विहोमेषु नारिष्ठहोमविध्यन्तः अस्तु इति पक्षान्तरमाह । वाशब्दः सोमविध्यन्तस्य अपूर्वतायाः च व्यावर्तयति । इष्टेः दर्शपूर्णमासयोः संबन्धिनी तद्योदना जुहोतिचोदना नारिष्ठचोदना, सर्वेष्टिषु सर्वप्रधानेषु च प्रवृत्तत्वात् तत् तत्र शाखाहोमे विधिः स्यात्, विधीयते इति विधिः, विधीयमाना स्यात् विहिता स्यात् । शाखाहोमे दर्शपूर्णमासगतनारिष्ठचोदना प्रवर्तते अन्यत्र प्रवृत्तत्वादित्यर्थः ।

शब्दसामर्थ्याच्च । १९ ॥

दर्विहोमेषु नारिष्ठहोमविध्यन्तः भवेत् इति पक्षान्तरे हेत्वन्तरमाह । चकारः समुच्चये । शब्दस्य सामर्थ्ये

इति पूर्वः पक्षः । तुशब्दः पक्षान्तरव्यावृत्त्यर्थः । तस्मिन् मन्वादिग्रन्थे इति तु सुबोधिनी ।

अपि वा वेदतुल्यत्वादुपायेन प्रवर्तेरन् । २३ ॥

पूर्वपक्षं सूत्रेण प्राप्तं अपि वा इतिशब्देन निरस्यन् सिद्धान्तमाह । उपायेन उपनयनेन सह एते धर्माः प्रवर्तेरन्, वेदतुल्यत्वात् विधायिकायाः स्मृतेः । वैदिकाश्च पदार्था उपनयनोत्तरकालं भवन्ति । स्मार्ताश्चैते वैदिका एव । तस्मात् उपनीतस्यैते धर्माः, नानुपनीतस्य । के.

☞ तस्मिन् पेषणमनर्थलोपात् स्यात् । १० । १।१२।५२ ॥

तस्मिन् पूर्वसूत्रोक्ते सौर्ये चरौ पेषणं स्यात् । अनर्थलोपात् अर्थलोपाभावात् देवतार्थप्रदानाभावरूपप्रयोजनलोपाभावात्, पेषणे कृतेऽपि देवतायै दातुं शक्यत्वात् । इति पूर्वः पक्षः ।

अक्रिया वाऽपूपहेतुत्वात् । ५३ ॥

सौर्ये चरौ पेषणस्य अक्रिया न क्रिया न कर्तव्यता । पेषणस्य अपूपहेतुत्वात् । अपूपे पुरोडाशे कर्तव्ये तस्य हेतुः पेषणम् । चरौ तु न स्यात् । अन्तरूष्मपक्वविशदतण्डुलरूपो हि चरुः । पेषणे कृते तु विशदता न स्यात्, नष्टतिः स्यात् । तस्मात् चरौ कर्तव्ये न पेषणमिति सिद्धान्तः । के.

☞ तस्मिन् विदिते सर्वं विदितं भवतीति न्यायः । अयं श्रीमच्छङ्कराचार्यैः श्रीगङ्गाधरस्य मुण्डकोपनिषद्भाष्यामुदाहृतः । अयमर्थः—'विदुषो ब्रह्मविदः समीपे गत्वा स्वस्य सर्वज्ञतासिद्ध्यै बहु पृष्टवान् । तत्र, तस्मिन्विदिते सर्वं विदितं भवतीति न्यायेन भगवत्यपि ज्ञाते सर्वं ज्ञातं भवति ' इत्युक्तमिति । साहस्री. ५८९.

☞ तस्मिन् संस्कारकर्म शिष्टत्वात् । १२।४।९। २८ ॥

तस्मिन् पूर्वपक्षोक्ते न्यस्तो पृषाज्यान् प्राकृत् चणकादिभक्षणपात्रात् मुत्यान्, प्रदाय्यान् दावाग्नेर्वा आहृत्य उत्तरो साधिते अग्नौ संस्कारकर्म आधानादयः संस्काराः कर्तव्याः । यतः सर्वकर्मार्था संस्काराः शिष्टाः विहिताः, इतरो च उख्ये एताभ्यो सर्वकर्माणि क्रियन्ते । तस्मात् उख्ये आधानिकाः संस्काराः कर्तव्याः इति पूर्वः पक्षः ।

स्थानात्तु परिलुप्येरन् । २९ ॥

आधानसंस्कृतस्य नित्याग्नेः स्थाने अप्रसंस्कृतः उख्योऽग्निः श्रुतः । एतस्मात् स्थानात् उख्येऽग्नौ संस्काराः परिलुप्येरन् । न कर्तव्याः । इति सिद्धान्तः । तुशब्दः पूर्वपक्षव्यावृत्त्यर्थः । के.

☞ तस्मिन् सोमः प्रवर्तेताव्यक्तत्वात् । ८ । ४।४।१० ॥

दर्विहोमः सोमविकारो वा अपूर्वो वेति विचारे पूर्वपक्षमाह । तस्मिन् दर्विहोमे सोमः प्रवर्तेत सौमिको विध्यन्तः स्यात् । अव्यक्तत्वात् । अव्यक्तचोदनः सोमः, ' श्रिये जुहोति ' इत्यादिर्दर्विहोमोऽपि अव्यक्तचोदनः । चोदनासामान्यात् सौमिको विध्यन्तः । अव्यक्तत्वं च विधिवाक्ये द्रव्यदेवताराहित्यम् ।

न वा स्वाहाकारेण संयोगाद् वषट्कारस्य च निर्देशात्, तन्त्रे तेन विप्रतिषेधात् । ११ ॥

वाशब्दः पूर्वपक्षं व्यावर्तयति । न दर्विहोमे सौमिको विध्यन्तः । 'पृथिव्यै स्वाहा अन्तरिक्षाय स्वाहा ' इति स्वाहाकारेण संयोगात् । सौमिके तु तन्त्रे वषट्कारस्य निर्देशात् । सोमे हि वषट्कारो भवति, दर्विहोमे तु स्वाहाकारो विधाने । एवं सति सौमिके तन्त्रे स्वीकृते तेन वषट्कारेण स्वाहाकारस्य विप्रतिषेधात् विप्रतिषेधप्रसङ्गात् न सौमिको विध्यन्तो दर्विहोमे । किन्तु अपूर्वोऽयम् । ' तन्त्रेतेन विप्रतिषेधात् ' इति मुद्रिते पाठः । एतेन स्वाहाकारेण वषट्कारस्य विप्रतिषेधात् न तत्र सौमिको विध्यन्त इति तदर्थः ।

शब्दान्तरत्वात् । १२ ॥

दर्विहोमः अपूर्व एव न सोमविकार इति सिद्धान्ते हेत्वन्तरमाह । यजतिशब्दोऽयं यजतिशब्दः सोमयागः । शब्दान्तरं अन्यः शब्दः जुहोतिः । यजतिचोदनः सोमः, जुहोतिचोदनो दर्विहोमः । तस्मात् अपूर्वो दर्विहोमः ।

लिङ्गदर्शनाच्च । १३ ॥

दर्विहोमे न सौमिको विध्यन्तः, किन्तु अपूर्वत्वमित्यत्र लिङ्गस्य दर्शनं भवति । औदुम्बरीहोमे स्वाहाकारे

विधाय आज्यविधिपरे वाक्ये 'घृतेन द्यावापृथिवी आपृणेथामिति अन्तरा कर्णौ जुहोति आ मूलादन्ववस्रावयति, भूमिगते स्वाहा करोति' इति । सोमिको यदि विध्यन्तो वषट्कारस्ततो भवेत्, न स्वाहाकारः। तस्मादपूर्वत्वम् । चशब्दः पूर्वहेतुसमुच्चयार्थः । औदुम्बरीशाखायाः कर्णयोर्मध्ये आज्यं होतव्यम् । हुतमाज्यं यथा शाखाद्वारा भूमौ गतं स्यात्, तथा भूमौ होतव्यम् । भूमिगते चाज्ये सति स्वाहाकारः पठनीयः, न तु प्रागेव होमकाले इति सूत्रार्थः ।

उत्तरार्थस्तु स्वाहाकारो यथा साम्नवस्यं, तथाविप्रतिषिद्धा पुनः प्रवृत्तिर्लिङ्गदर्शनात् पशुवत् । १४ ॥

दर्विहोमे सोमविध्यन्तो नास्तीत्यत्र सिद्धान्तिना लिङ्गदर्शनमुक्तम्, तदविद्दन्ति पूर्वपक्षी । तुशब्दः सिद्धान्तपक्षव्यावृत्त्यर्थः । स्वाहाकारः उत्तरार्थः वषट्कारशून्यौदुम्बरीहोमादिप्रदानार्थः विकृत्यर्थः । यथा सामद्वयमनारभ्याधीतं यामिधेनीसामद्वयं प्रकृतिं गच्छति । तत्र प्राकरणिकेन पाठद्वयेन बाधितं तत् विकृतिषु गच्छति । तथैव 'स्वाहाकारेण वषट्कारेण वा देवेभ्यो हविः प्रदीयते' इति अनारभ्याधीतः स्वाहाकारः दर्शपूर्णमासौ सोमं च प्रकृतिं विविक्षुः वषट्कारेणोपरुद्धः तद्वर्जं सोमवर्जं अन्यानि प्रदानानि उपसंक्रामति । तत्र एवं सति औदुम्बरीहोमादौ सौमिकविध्यन्तस्य प्रवृत्तिः अविप्रतिषिद्धा विरुद्धा । पुनःशब्दः अनर्थकोऽत्र इति भाष्यम् । लिङ्गदर्शनात् पशुवत् । यथा श्रुतसामिधेनीसामद्वये पशौ प्रयाजादिलिङ्गदर्शनात् दर्शपूर्णमासधर्मप्रवृत्तिः विरुद्धा, सामद्वयस्य वाचनिकत्वात् । तद्वत् औदुम्बरीहोमे वाचनिकत्वात् स्वाहाकारं प्रति लिङ्गदर्शनात् न सौमिकधर्मप्रवृत्तिर्विप्रतिषिध्यते ।

अनुत्तरार्थो वाऽर्थवत्त्वादनर्थकत्वाद्धि प्राकृतस्योपरोधः स्यात् । १५ ॥

दर्विहोमे सोमविध्यन्तः, स्वाहाकारस्तु उत्तरार्थः इति पूर्वपक्षी यदाह तन्नेत्याह । वाशब्दः पूर्वपक्षव्यावृत्त्यर्थः । स्वाहाकारः अनुत्तरार्थः न उत्तरार्थः न वषट्कारशून्यप्रदानार्थः । प्रकृतावेव नारिष्ठहोमेषु पार्वणहोमेष्वर्थवत्त्वात् सफलत्वात् स्वाहाकारस्य । यदि प्रकृतौ स्वाहाकारः सार्थको न स्यात् तदा तेन अनर्थकत्वात् निरवकाशत्वेन बलवत्त्वात् प्राकृतस्य सौमिकस्य वषट्कारस्य मानवासस्य उपरोधः स्यात् बाधः स्यात् । परन्तु न स्वाहाकारस्य आनर्थक्यम् । तस्मान्नोत्तरार्थः । अनुत्तरार्थत्वाच्च दर्विहोमानां सोमपूर्वत्वाभावे 'भूमिगते स्वाहा करोति' इति लिङ्गं भवत्येव ।

न प्रकृतावपीति चेत् । १६ ॥

पूर्वपक्षी आह । प्रकृतावपि दर्शपूर्णमासयोरपि विकृताविव नारिष्ठहोमादौ निवेशो न संभवति । तत्रापि अविशेषेण निवृत्तो वषट्कार एव प्राप्नोति । स्वाहाकारः पाठमात्रः वषट्कारस्तु विहितः । विधिश्च पाठात् प्रबलः । तस्मात् स्वाहाकार उत्तरार्थ एव भवति विकृत्यर्थः ।

उक्तं समवाये पारदौर्बल्यम् । १७ ॥

तत्राह सिद्धान्ती । स्वाहाकारस्य नारिष्ठहोमादौ वषट्कारेण न बाधः । अत्र हि वाक्यप्रकरणयोः संनिपातः । प्रकरणेन नारिष्ठहोमेषु वषट्कारः प्राप्तः, नारिष्ठहोमगतैः एकवाक्यत्वात् स्वाहाकारो वाक्येन प्राप्तः । एवं वाक्यप्रकरणयोः संनिपाते प्राप्ते उक्तः समवाये पारदौर्बल्यं श्रुतिलिङ्गसूत्रे तृतीयाध्याये । वाक्यं प्रकरणात् बलीय इति तत्रोक्तम् । तस्मात् स्वाहाकारस्य प्रकृतौ निवेशात् स न विकृत्यर्थः । ततश्च दर्विहोमो न सोमविकृतिः ।

तच्चोदना वेष्टेः प्रवृत्तत्वात् तद् विधिः स्यात् । १८ ॥

दर्विहोमेषु नारिष्ठहोमविध्यन्तः अस्तु इति पक्षान्तरमाह । वाशब्दः सोमविध्यन्तपक्षं अपूर्वपक्षं च व्यावर्तयति । इष्टेः दर्शपूर्णमासयोः संबन्धिनी तच्चोदना जुहोतिचोदना नारिष्ठचोदना, सर्वेष्टिषु सर्वपशुतन्त्रेषु च प्रवृत्तत्वात् तत् तत्र वास्तुहोमे विधिः स्यात्, विधीयते इति विधिः, विधीयमाना स्यात् विहिता स्यात् । वास्तुहोमे दर्शपूर्णमासगतनारिष्ठचोदना प्रवर्तेत अन्यत्र प्रवृत्तत्वादित्यर्थः ।

शब्दसामर्थ्याच्च । १९ ॥

दर्विहोमेषु नारिष्ठहोमविध्यन्तः स्यात् इति पक्षान्तरे हेत्वन्तरमाह । चकारः समुच्चये । शब्दस्य सामर्थ्ये

चोदनासामान्यम् । 'यदेकया जुहुयात् दर्विहोमं कुर्यात्' इति जुहोतिचोदना दर्विहोमे, 'नारिष्ठान् जुहोति' इति जुहोतिचोदना नारिष्ठेषु । इति चोदनासामान्यरूपात् शब्दसामर्थ्यात् नारिष्ठधर्मप्राप्तिः दर्विहोमेषु ।

लिङ्गदर्शनाच्च । २० ॥

दर्विहोमेषु नारिष्ठविध्यन्तः स्यात् इति पक्षे हेत्वन्तरमाह । चकारः समुच्चये । नारिष्ठहोमप्रकृतिकत्वं दर्विहोमानामित्यत्र लिङ्गं दृश्यते । अग्निहोत्रे श्रूयते 'यदि कीटोऽवपद्येत अन्तःपरिधि निनयेत्' इति । तथा चयने श्रूयते 'अन्तर्वेदि तिष्ठन् सावित्राणि जुहोति' इति । परिधयो वेदिश्च अङ्गप्रधानापेक्षात् नारिष्ठहोमाङ्गम् । यदि नारिष्ठधर्माः दर्विहोमेषु प्रवर्तेरन् तदा एतत् लिङ्गदर्शनमुपपद्येत । तस्मात् नारिष्ठविध्यन्तो दर्विहोमेषु स्यात् ।

तस्याभावस्य हेतुत्वाद् गुणार्थे स्याददर्शनम् । २१ ॥

दर्विहोमेषु नारिष्ठविध्यन्तः इति पक्षमत्र सूत्रैः प्राप्तं परिहरति । प्रकृतिबुद्धिस्थाः त्र्यम्बकाः प्रतिनिर्दिश्यन्ते । तत्र त्र्यम्बकेषु नारिष्ठधर्माणां इध्माबर्हिःप्रयाजादीनां अभावः अप्रतिष्ठितत्वस्य हेतुत्वेन उपदिश्यते, 'अप्रतिष्ठिता वै त्र्यम्बका इत्याहुः, नेध्माबर्हिः संनह्यते, न प्रयाजा इज्यन्ते, नानुयाजा इज्यन्ते, न सामिधेनीरन्वाह' इति । यदि च नारिष्ठहोमाः प्रवर्तेरन् ततः इध्माबर्हिषोः सामिधेनीनां च त्र्यम्बकेषु भाव एव स्यात् तथाच तदभावः असत्त्वात् हेतुत्वेन न युज्येत । त्र्यम्बकाश्च दर्विहोमाः । तस्मात् अभावस्य हेतुत्वात् गुणार्थे नारिष्ठहोमार्थे नारिष्ठधर्मप्राप्त्यर्थं यदुक्तं लिङ्गदर्शनम्, तत् अदर्शनं स्यात् । अयुक्तं दर्शनं अदर्शनम् । असिद्धं वा दर्शनं अदर्शनम् । 'यदि कीटोऽवपद्येत अन्तःपरिधि निनयेत्' इति अग्निहोत्रे परिधिः, 'अन्तर्वेदि तिष्ठन् सावित्राणि जुहोति' इति सावित्रहोमे वेदिः इति दर्विहोमे नारिष्ठधर्मप्राप्तौ लिङ्गमुक्तं तन्न युज्यते इत्यर्थः । तस्मात् नारिष्ठहोमविध्यन्तो दर्विहोमेषु नास्ति ।

विधिरिति चेत् । २२ ॥

अग्निहोत्रादौ अन्तःपरिधिनिनयनादि यत् लिङ्गदर्शनमुक्तं तत्रेदम् । त्र्यम्बकेषु इध्माबर्हिःप्रयाजादीनां यः प्रतिषेधः स नारिष्ठहोमप्रकृतिकत्वात् त्र्यम्बकेषु प्राप्तानां इध्मादीनां प्रतिषेधको विधिः स्यात् । प्रतिषेधश्च प्राप्तिं दर्शयन् नारिष्ठविकृतित्वमेव त्र्यम्बकानां साधयति । तस्मात् दर्विहोमेषु नारिष्ठधर्मप्राप्तौ यत् लिङ्गमुक्तम् 'यदि कीटोऽवपद्येत' 'अन्तःपरिधि निनयेत्' 'अन्तर्वेदि तिष्ठन् सावित्राणि जुहोति' इत्यादि, तत् युक्तमेव ।

न वाक्यशेषत्वाद्, गुणार्थे च समाधानं, नानात्वे नोपपद्यते । २३ ॥

त्र्यम्बकेषु 'नेध्माबर्हिः संनह्यते, न प्रयाजा इज्यन्ते' इत्यादिः नारिष्ठहोमविकृतित्वेन प्राप्तानामिध्माबर्हिरादीनां प्रतिषेधको विधिरिति शङ्कां तृतीयपक्षोक्तां परिहरति । न प्रतिषेधको विधिरुच्यते, वाक्यशेषत्वात् । 'आदित्यं घृते चरुं निर्वपेत् पुनरेत्य गृहेषु' इत्यस्य विधेः 'अप्रतिष्ठिता वै त्र्यम्बका नेध्माबर्हिः संनह्यते' इत्यादिवाक्यं वाक्यशेषः अर्थवादः । त्र्यम्बकेषु उत्पन्नस्य दोषस्य परिहारार्थं 'आदित्यं घृते चरुम्' इति आदित्येष्टिः विधीयते । एवं आदित्येष्टेः गुणार्थे स्तुत्यर्थे इध्माबर्हिरादिवाक्ये सति उत्पन्नदोषस्य समाधानं निराशः उपपद्यते । नानात्वे वाक्यभेदे स्वीकृते तु नोपपद्यते प्रतिषेधवाक्यम् । तस्मात् इध्माबर्हिरादिप्रतिषेधवाक्यस्य आदित्येष्टिविधिवाक्येन एकवाक्यतैव स्वीकार्या । तस्मात् नासौ विधिः । सर्वथाऽपि दर्विहोमेषु नारिष्ठविध्यन्तो नोपपद्यते ।

सुबोधिन्यां तु — न विधिः, किन्तु आदित्ययागवाक्यशेषत्वात् अर्थवादत्वात् । गुणार्थे उक्तवाक्यस्य गुणविध्यर्थत्वे उक्तरूपं समाधानं नानात्वेन नानावाक्यत्वेन वक्तुमुपपद्यते शक्यते । यदि इध्माबर्हिषोः अभावस्याप्रतिषेधपरमेव इदं वाक्यमिति वदेत्, तर्हि इध्माबर्हिर्निषेधकवाक्यमेकम्, 'न प्रयाजाः' इत्येकम्, 'नानुयाजाः' इत्येकम्, 'आदित्यं चरुं निर्वपेत्' इत्येकं इति नानावाक्यानि स्युः । इति व्याख्यातम् ।

कुतूहले तु 'न वाक्यशेषत्वाद् गुणार्थेऽर्थसमाधानं नानार्थे नोपपद्यते' इति सूत्रपाठः । व्याख्या च — 'नेध्माबर्हिः' इत्यादि न प्रतिषेधविधिपरम्, आदित्यचरुविधेर्वाक्यशेषत्वात् । अतो गुणार्थे नारिष्ठहोमार्थे चोदनासामान्यादिध्माबर्हिरादौ प्रतिषेधविधौ इति प्राप्तम् । अर्थ-

समाप्तं नेध्माबर्हिरिति वाक्यार्थपर्यवसानं नोपपद्यते। तथात्वे च नानार्थे आदित्यचरुस्तुतौ प्रतिषेधविधौ च अर्थद्वयापनं स्यात्, तच्च नोपपद्यते अनेकार्थतादोषात् इति।

- येषां वाऽपरयोर्होमस्तेषां स्यादविरोधात्। २४॥

दर्विहोमेषु कस्य विध्यन्तः इति विचारे चतुर्थं पक्षमं पक्षमाह। वाशब्दः पक्षत्रयं व्यावर्तयति। न सोमविध्यन्तः नापूर्वत्वं न नारिष्ठहोमविध्यन्तः किन्तु येषां यागानां अपरयोः अग्न्योः गार्हपत्यदक्षिणाग्न्योः होमाः, तेषां यागानां पत्नीसंयाजानां पिष्टलेपफलीकरणहोमयोर्वा विध्यन्तः स्यात् दर्विहोमेषु। अविरोधात् नारिष्ठहोमप्रवृत्तौ यो विरोधः उक्तः, स नास्ति। अपरयोर्होमाश्च जुहोतिचोदना एव। तस्मात् संपत्नीयहोमः प्रकृतिर्दर्विहोमानाम्।

तत्रौपधानि चोद्यन्ते, तानि स्थानेन गम्येरन्। २५॥

दर्विहोमे संपत्नीयहोमविध्यन्त इत्युक्तं चतुर्थं पक्षं प्रतिषेधति। न संपत्नीयविध्यन्तः संभवति। कस्मात् तत्र दर्विहोमे क्वचित् औपधानि चोद्यन्ते। अष्टकासु यागात् पुरोडाशाः, करम्भपात्राणि तण्डुलाः इत्येवमादीनि। तानि स्थानेन गम्येरन् आज्यस्थानापत्त्या आज्यधर्माः प्राप्येरन्, ते च न शक्याः अनुष्ठातुम्। याज्यानुवाक्ये अपि मन्त्रान्तरेण निवर्त्येते, वषट्कारश्च स्वाहाकारेण। तस्मात् संपत्नीयविध्यन्तः। 'स्थानेन' इति कुतूहलपाठेऽपि आज्यस्थानापत्त्या इत्येवार्थः।

लिङ्गाद्वा शेषहोमयोः। २६॥

'येषां वाऽपरयोर्होमः०' (८।४।४।२४) इत्यत्र यौ पक्षावुक्तौ। तत्र चतुर्थः पक्षः 'तत्रौपधानि०' इति पूर्वोक्तसिद्धेन सूत्रेण परिहृतः। इदानीं पञ्चमं पक्षं स्वातन्त्र्येण उपक्षिपति। शेषहोमयोः दाक्षिणाग्निकयोः पिष्टलेपफलीकरणहोमयोः प्रवृत्तिः स्यात् दर्विहोमेषु। लिङ्गात् औपधसामान्यरूपात् प्रकृतिलिङ्गात्, विरोधस्य चाभावात्। तस्मात् शेषहोमविध्यन्तो दर्विहोमेषु। वाशब्दश्च शेषहोमयोर्वा इत्यन्वयः। तेन च चतुर्थपक्षनिरासः।

प्रतिपत्ती तु तौ भवतस्तस्मादतद्विकारत्वम्। २७॥

दर्विहोमेषु शेषहोमविध्यन्तः स्यात् इति पञ्चमं पक्षं प्रसक्तं निरस्यति। तुशब्देन पक्षव्यावर्तनम्। तौ पिष्टलेपफलीकरणहोमौ शेषहोमौ प्रतिपत्ती भवतः प्रतिपत्तिकर्मरूपौ प्रज्ञायेते। दर्विहोमास्तु प्रधानकर्माणि। यद्यपि औपधधर्माः शक्याः कर्तुम्, तथापि प्रतिपत्तित्वात् अप्रयोजकास्ते निर्वपणादीनाम्। तस्मान्न शेषहोमविध्यन्तः। एवं च न सोमविध्यन्तः, न नारिष्ठहोमविध्यन्तः, न संपत्नीयहोमविध्यन्तः, नापि शेषहोमविध्यन्तः किन्तु दर्विहोमा अपूर्वा इति सिद्धान्तः।

सन्निपाते विरोधिनामप्रवृत्तिः प्रतीयेत, विध्युत्पत्तिव्यवस्थानादर्थस्यापरिणेयत्वाद्, वचनादतिदेशः स्यात्। २८॥

दर्विहोमेषु अपूर्वत्वपक्षः सिद्धान्तितः। तत्र सामान्यतो न्यायं प्रतिपादयन् उपसंहरति। विरोधिनां प्रवृत्तिबाधकानां लिङ्गानां संनिपाते समवाये सति नारिष्ठधर्मादीनां अप्रवृत्तिः न प्रवृत्तिः प्रतीयेत। विध्युत्पत्तिव्यवस्थानात्। विधीनामुत्पत्तिः पाठः। स च व्यवस्थितः। केचित् दर्शपूर्णमासयोः पठ्यन्ते केचित् सोमे। तादृशस्य व्यवस्थितस्य अर्थस्य अपरिणेयत्वात्। यत्र पठितास्ततोऽन्यत्र परिणेतुं न शक्यन्ते, प्रकरणावरुद्धत्वात्। एवं विध्युत्पत्तिव्यवस्थानात् अर्थस्य अपरिणेयत्वात् विरोधिनामप्रवृत्तिः प्रतीयेत। क्वचित् तु वचनात् अतिदेशः स्यात् दर्विहोमानाम्। यथा वाजपेयाप्रयोगे ऋदाहकर्मसु। वचनाभावे तु अपूर्वत्वमेव दर्विहोमानाम्। इति सिद्धान्तः। के.

* 'तेष्वदर्शनात् विरोधस्य' तेषु लौकिकेषु पदार्थेषु विरोधस्य अदर्शनात् (वैदिकी पदार्थप्रसिद्धिः) 'लोकसिद्धिं व्यतिक्रम्य साऽऽत्मानं नैव विन्दति'। वा. १।३।८।१ पृ. २२२. * तेष्वदर्शनाद्विरोधस्य समा विप्रतिपत्तिः स्यात्। १।३।४।८॥ तेषु आचारेषु स्मृतिमूलश्रुत्यनुमानात् प्राक् विरोधस्य अदर्शनात् प्रतिष्ठितेषु सापाधीनत्वात् आचाराणां बलीयस्त्वमेव शाव गुक्तम्। तदनङ्गीकारे पर समा (तुल्या) विप्रति-

पत्तिः ( विकल्पः ) स्मृत्याचारयोः स्यात्, न तु आचारस्य दौर्बल्यम् । सु. वृ. २१२.

तेष्वदर्शनाद् विरोधस्य समा विप्रतिपत्तिः स्यात् । १।३।४।८ ॥

'यवमयश्चरुः' 'वाराही उपानहौ' 'वैतसे कटे प्राजापत्यान् संचिनोति' इति तत्रतत्र श्रुतम् । तत्र यवशब्दं केचिद् दीर्घशूकेषु सस्येषु प्रयुञ्जते, केचित् प्रियङ्गुषु । वराहशब्दं केचित् सूकरे, केचित् कृष्णशकुनौ काके । वेतसशब्दं केचित् वञ्जुले प्रयुञ्जते, केचित् जम्ब्वाम् । तत्र अनुष्ठाने निश्चितं किं ग्राह्यमिति विचारे पूर्वपक्षमाह । तेषु यवादिशब्दार्थेषु उभयत्र प्रयोगस्य प्रामाणिकत्वेन विरोधस्य अदर्शनात् उभेर विप्रतिपत्तिः विकल्पः स्यात् । विकल्पेन उभावपि अर्थौ ग्राह्यौ ।

शास्त्रस्था वा, तन्निमित्तत्वात् । ९ ॥

पूर्वपक्षं वाशब्देन निरस्यन् सिद्धान्तमाह । शास्त्रस्था शास्त्रे वर्तमाना या शिष्टा प्रतिपत्तिः प्रतीतिः सैव स्वीकार्या स्यात् । तन्निमित्तत्वात् वैदिकशब्दार्थज्ञानस्य निमित्तं यस्मात् वेद एव । तन्निमित्तत्वात् वेदनिमित्तकत्वात् वैदिकशब्दार्थज्ञानस्य । वेदश्च वाक्यशेषगतप्रामाणिकयवमय-करम्भपात्रवाक्यशेषपरत्वेन उपलभ्यः 'यत्रान्या ओषधयो म्लायन्ते, अथैते मोदमाना इवोत्तिष्ठन्ति' इति दीर्घ-शूकान् यवान् दर्शयति । तस्मात् यवा दीर्घशूका एव । 'तस्माद् वराहं गावोऽनुधावन्ति' इति सूकरे वराह-शब्दं दर्शयति । न हि कृष्णशकुनौ गवामनुधावनं संभवति इति । 'अप्सुजो वेतसः' इति वेतसं वञ्जुलं दर्शयति । जम्बूस्तु स्थले गिरिकरीषु च । तस्मात् न विकल्पः । अथवा ये शास्त्रस्थाः तेषां प्रतिपत्तिः प्रमाणम् । के शास्त्रस्थाः ? शिष्टाः । श्रुतिस्मृत्यर्थविषयत्वे शिष्टानां निमित्तम् । अत्र पक्षे शास्त्रस्थाः इति पुंलिङ्गं बहुवचनान्तं पदम् । पूर्वत्र तु स्त्रीलिङ्गमेकवचनं इति भेदः, शेषं समानम् । के

तेष्वदर्शनाद् विरोधस्य समा विप्रतिपत्तिः स्यात् । १।३।४।८ ॥

'यवमयश्चरुः' 'वाराही उपानहौ' 'वैतसे कटे प्राजापत्यान् संचिनोति' इति यववराहवेतसशब्दान् समामनन्ति । तत्र केचित् दीर्घशूके यवशब्दं प्रयुञ्जते, केचित् प्रियङ्गुषु । वराहशब्दं केचित् सूकरे, केचित् कृष्णशकुनौ ( काके ) । वेतसशब्दं केचित् वञ्जुले, केचित् जम्ब्वाम् । तत्र उभयथा शब्दार्थावगमात् विकल्पः इति । अत्र तंत्रनिर्णेयात् प्रभाकरेण भाष्य-कारीयो विकल्पशब्दः अनवधारणपरो व्याख्यातः । एवं हि मन्यते, निरपेक्षशास्त्रद्वयविहितयोर्हि व्रीहियवयो-र्विकल्पो भवति । इह 'यवमयश्चरुर्भवति' इत्येक-मिदं वाक्यं न अनावृत्तं दीर्घशूकप्रियङ्गूभयार्थ-विधायकं संभवति । आवृत्तौ च वाक्यभेदापत्तिः । न चैकस्य मुख्यत्वम्, अपरस्य गौणत्वमिति निर्धारयितुं शक्यते, विनिगमकप्रमाणाभावात् । न च वाक्यशेषो विनिगमनाप्रमाणम्, 'यवमयश्चरुर्भवति' इत्यत्र वाक्यशेषस्य अभावात् । किन्तु आम्नायान्तरे वारुण-प्राघासिकयवमयकरम्भपात्रविधिशेषोऽयं अर्थवादः । वार्तिककारमते तु यवमयीभिरद्भिः औदुम्बर्याः ओषधे-र्निर्वचनाय 'यत्रान्या ओषधयो म्लायन्ते अथैते मोदमाना इवोत्तिष्ठन्ति' इति । तेन यस्मिन्नेव अर्थे श्रूयते, तस्मिन्नेव यागे वाक्यशेषोऽयं यवशब्दस्य दीर्घशूकपरत्वे विनिगमनाप्रमाणम्, न तु अन्यत्रापि । इत्यतः अत्र अनध्यवसायात् अप्रामाण्यमिति । ( प्राभाकरव्याख्यानं दूषयति— ) तदयुक्तम् । तत्यागप्रदीपन्यायेन विकल्पेनैव प्रामाण्योपपत्तौ अप्रामाण्यापादकस्य अनध्यवसायस्य अनवसरात् । इति पल्लिजिदेवन् । इति यथाभाष्यमेव तात्पर्यवर्णनं प्रस्तूयते ।

श्रुतिविरोधाविरोधयोः स्मृतीनामप्रामाण्यं प्रामाण्यं च निरूप्य इदानीं देशभेदेन आर्यम्लेच्छयोः नानाऽर्थविष-यकैकशब्दप्रयोगरूपव्यवहारविप्रतिपत्तौ कथमिति निरूप्यते । अत्रायं पूर्वपक्षिणोऽभिसंधिः । यववराहवेतसशब्देषु देशभेदेन नानाऽर्थप्रसिद्धेषु तत्क्रत्वायेन विनिगमना-प्रमाणाभावात् विकल्प एवेति । न च यवादिपदावृत्तिरूप-वाक्यभेदप्रसङ्गात् न विकल्पः संभवति इति वक्तव्यम् । अगत्या वाक्यभेदस्यापि अभ्युपगन्तुमुचितत्वात् । यथा 'यस्य हवींषि नरयेयुर्दुष्येयुरवहरेयुर्वा आग्नेयेन ता देवताः परिसंख्याय यजेत' इति प्रतिनिर्दिष्टं आग्नेयविध्यावृत्ति-

प्रियदाथपि प्रयोगदर्शनात् अर्थापत्त्या तत्रापि शक्तिः कल्पनीया इति वक्तव्यम् । यतः तत्सिद्धिन्यायेनैव (१।४।१२।२३-१) गौणत्वावगमेनैव प्रियदौ प्रयोगस्य अन्यथासिद्धत्वेन अर्थापत्तेः परिक्षयादिति । वीवा.

* तस्यै शूर्तं इति मन्त्रे 'तस्मै शूर्तं' इत्यादिः ऊहः न कर्तव्यः सायणके त्रिकाण्डमण्डने । भा. ९।१।१५। ४२-४४ वर्णक २.

☸ तस्या यावदुक्तमाशीर्ब्रह्मचर्यमतुल्यत्वात् । ६।१।५।२४ ॥

स्त्रीपुंसयोः कर्मणि सहाधिकारः इत्यवगतम् । तत्र यावत् यागे तदन्यतमं कर्म याजमानं नाम, तत् सर्वं पत्न्याः न भवति । न तत्राधिकारः पत्न्याः । किन्तु आशीः आशीर्वाचका मन्त्राः (वार्तिके तु आशीः-शब्देन केवलमधुवचनादयः संस्कारा उच्यन्ते इत्युक्तम्) 'आयुर्दा अग्नेऽस्यायुर्मे देहि' इत्यादयः, ब्रह्मचर्यं च, यच्च 'पत्नीं संनह्यति' 'पत्नीं वाचयति' इत्यादि पत्नीमधिकृत्य यावदुक्तम्, तत् सर्वं पत्न्या कर्तव्यम्, नेतरत् । पत्न्याः यजमानेन अतुल्यत्वात् । अतुल्या हि स्त्री पुंसा । यजमानः पुमान् विद्वांश्च । पत्नी स्त्री विद्यारहिता च । तस्मात् तस्याः पत्न्याः यावदुक्तं आशीः ब्रह्मचर्यं च, तत्रैवाधिकारः । इति सिद्धान्तः । के.

☸ तासामग्निः प्रकृतितः प्रयाजवत् स्यात् । ३।६।६।१६ ॥

पवमानेष्ट्यर्थः अग्निः किमाधानपवमानेष्टिसंस्कृतः स्यात्, केवलाधानसंस्कृतो वा इति संदेहे पूर्वः पक्षः । एकादशसूत्रस्थस्य इष्टिप्रयोगस्य दर्शन तासामिति सर्वनाम । तासां पवमानेष्टीनामधिकरणं योऽग्निः, स प्रकृतितः स्यात् । दर्शपूर्णमासरूपप्रकृतौ यावत् अग्निः केवलेन आधानेन पवमानेष्टिभिश्च संस्कृत एव भवति । विकृतिश्च प्रकृतिवत् भवति इति, प्रकृतौ यादृशोऽग्निः, तादृश एव प्रकृतितः प्राप्तोऽग्निः तासामिष्टीनां स्यात् । प्रयाजवत्, यथा प्रकृतौ प्रयाजा भवन्ति इति पवमानेष्टिष्वपि प्रकृतिवद्भावात् प्रयाजा भवन्ति, तद्वत् अग्निरपि इति । प्रयाजा इव प्रयाजवत् प्रथमान्तात् वतिरत्र ।

न वा तासां तदर्थत्वात् । १७ ॥

आधानपवमानेष्टीनामग्निः पवमानेष्टिसंस्कृतः स्यात् इति पूर्वपक्षस्य निराकरणार्थो वाशब्दः । न पवमानेष्टीनामग्निः पवमानेष्टिसंस्कृतो भवति, किन्तु केवलाधानसंस्कृत एवाग्निः तासाम् । कुतः ? तासां पवमानेष्टीनां तदर्थत्वात् अग्न्यर्थत्वात् अग्निसंस्कारार्थत्वात् । पवमानेष्ट्यर्थे पवमानेष्टिकरणे तु अनवस्था स्यात् । तस्मात् पवमानेष्टीनामग्निः केवलाधानसंस्कृत एव स्यात् इति सिद्धान्तः । के.

● 'तस्यां तु स्यात् प्रयाजवत्' इत्येतदधिकरणन्यायेन पवमानहविःसंस्कृताग्निसाध्यत्वं तासां (पवमानेष्टीनां) अस्ति नास्ति इति विचारः । ना. ३।६।६।१६.

☸ तस्यां तु स्यात् प्रयाजवत् । १०।२।४।६ ॥

तस्यामारम्भणीयायां आरम्भणीया भवितुमर्हति । पुरोडाशस्य अर्थद्वयमित्यर्थः । आरम्भणीयया यथा प्रयाजा गच्छन्ति तद्वत् । आरम्भणीयार्थे आरम्भणीया स्यात् । यथाशक्ति आवृत्तिः इति नानवस्था । इति पूर्वः पक्षः ।

न वाऽङ्गभूतत्वात् । ७ ॥

न वा इति पूर्वपक्षः प्रतिषिध्यते । न स्यात् आरम्भणीयायामपि आरम्भणीया । अङ्गभूतत्वात् दर्शपूर्णमासयोरङ्गभूता हि सा । अङ्गभूतस्य च प्रधानारम्भेणैव सिद्धिः (दर्शपूर्णमासप्रयोगात् बहिर्भूतैषा नारम्भणीया इति स्थितिः) । तस्मात् आरम्भणीयार्थे नारम्भणीया इति सिद्धान्तः ।

एकवाक्यत्वाच्च । ८ ॥

दर्शपूर्णमासयोरङ्गत्वेन विहितारम्भणीयत्वेन विधायकमेकमेव वाक्यम् 'आग्नावैष्णवमेकादशकपालं निर्वपेद् दर्शपूर्णमासावारप्स्यमानः' इति । न द्वितीयमस्ति । तस्मात् आरम्भणीयार्थे आरम्भणीया न कर्तव्या इति सिद्धान्तः । के.

☸ तदन्तापकर्षे स्यात् इत्यनेन न्यायेन प्रयाजापकर्षे आघारादीनां यथा अपकर्षः, (अनेन न्यायसारार्थः उक्तः । तदन्तं प्रयाजान्तम् ।) तथा अभिषेकापकर्षे विदेवनादीनामपकर्षः इति पूर्वः पक्षः । रत्न. ५।२।१०।२१.

* तदन्तानां प्रयाजान्तानां सामिधेन्याघारसहितानामपकर्षः अग्नीषोमीये पशौ । ( एवं अनुयाजाना स्वीष्टकृत्सूक्तवाकादिसहितानामुत्कर्षः सवनीये पशौ ) । भा. ५।१।१२।२३–२४.

तदन्तापकर्षन्यायः । तदादितदन्तन्याय एवायम् । ५।१।१२।२३–२४.

* अध्वरकल्पायाम् ' पुरा वाचः प्रवदितोर्निर्वपेत् ' अत्र सर्वनिर्वापापकर्षे तदन्तापकर्षन्यायेन निर्वापान्तपदार्थानां सर्वप्रयोगीयाणां तन्त्रेण करणम्, इति प्राप्ते...। भाट्ट. ११।२।६. * ' दीक्षासु यूपं छिनत्ति ' इत्यपकृष्यमाणं आग्नीषोमीयादीन् अपकर्षति तदन्तापकर्षन्यायात् इति प्राप्ते । चिन्द्र. ५।१।१४. * राजसूये अभिषेचनीयदशपेयौ । तत्र अभिषेचनीयसोमक्रयकाले दशपेयसोमक्रयः प्रतिकृष्यते । स च प्रतिकृष्यमाणः तदन्तापकर्षन्यायात् ततः प्राचोऽपि पदार्थानपकर्षति इति प्रारम्भसाम्यात् उभयोः समानतन्त्रत्वम्, इत्यादि प्राप्ते । भाट्ट ११।२।१३. * तदन्तत्वतदादित्वनियामकः पूर्वोत्तरपदार्थयोः क्रम एव । तेन ज्योतिष्टोमे अग्नीषोमीयपशौ प्रयाजान्तानामपकर्षः, सवनीये च अनुयाजान्तानामुत्कर्षः । सोम. ५।१।१२.

तदभावो नाडीषु तच्छ्रुतेरात्मनि च । ( ३।२।२।७ ब्र. ) इति न्यायेन समर्थ्यमाना प्रत्यगात्मनो विशुद्धिः । ( तदभावः तयोः जाग्रत्स्वप्नयोरभावः नाडीषु चकारात् पुरीतति आत्मनि च सर्वत्र संपन्नो भवति । कुतः ? तच्छ्रुतेः ' आसु तदा नाडीषु सृप्तो भवति ' ' पुरीतति शेते ' ' य एषोऽन्तर्हृदय आकाशः, तस्मिन् शेते ' इति श्रुतिभ्यः इति अक्षरार्थः । ) सं. शारीरके सप्तमोऽध्यायः ३ श्लो. १२०.

तदभिन्नाभिन्नस्य तदभिन्नत्वमिति न्यायः । यथा सर्पेण सहादिदेवानामीश्वराभिन्नत्वात् तदभिन्नत्वे अन्योन्यमप्यभेद इति भावः । साहस्री. ७१.

तदभ्यासः समासु स्यात् । ९।२।४।२१ ॥

अग्निष्टोमे एकं साम तृचे प्रयुज्य परिसमाप्तं गेयमुक्तम् । अथ समानच्छन्दस्के वा तृचे गेयम्, अनियमो वेति विचारे सिद्धान्तमाह । तदभ्यासः प्रत्यृचं तस्य साम्नः अभ्यासः समासु समानच्छन्दस्कासु तिसृषु ऋक्षु कर्तव्यः स्यात्, न समासु विषमासु वा अनियमेन । तृचे इति हि त्रित्वसंख्यावधारणम् । संख्याव्यवहारश्च समाने कस्मिंश्चिदाश्रीयमाणे भवति । तस्मात् समानच्छन्दस्के तृचे अभ्यासः ।

लिङ्गदर्शनाच्च । २२ ॥

अग्निष्टोमे प्रत्यृचं परिसमाप्य गेयं साम समानच्छन्दस्कास्वेव तिसृषु ऋक्षु गेयं इत्यत्र लिङ्गस्य दर्शनं भवति ' स्वाद्या सक्थ्य अवधीयते इत्याहुः, यद् बृहत् गायत्रीषु क्रियते ' इति । ' त्वामिद्धि हवामहे ' इति एकस्मिन्दशाक्षरायामृचि उत्पन्नं बृहत् साम गायत्रीषु चतुर्विंशत्यक्षरासु गातव्य इति यत्, तत् स्वाद्या अल्पपरिमाणया सक्थ्य ऊरुः अधिकपरिमाणः पाकार्थं अवहितः स्यात् तद्वत् भवेत् । नहि अल्पे महान् अवस्थातुं शक्नोति इति हि तत्रोक्तम् । तस्मात् विषमच्छन्दस्कासु साम न गेयमिति सिद्धं भवति । जै.

तदभ्यासः समासु स्यात् । ९।२।४।२१ ॥

अथ अत्रैव ' तदभ्यास० ' इत्यादिभिश्चतुर्भिः सूत्रैर्वर्णकान्तरम् । भाष्यीये वर्णकान्तरे तु ' मैत्रोक्षाभिकरणम् ' इत्यत्र द्रष्टव्यम् । द्वादशाहे चतुर्थेऽहनि मैत्रोक्षं नाम साम ' विश्वाः पृतना अभिभूतरं नरम् ' इत्येतस्यां अतिजगत्यामुत्पन्नम् । उपरि द्वे ऋचौ तु ' नेमिं नमन्ति चक्षसा ' इति ' मन्दी रैभासो अस्वरन् ' इति च बृहत्यौ । अयं तृचो विषमच्छन्दस्को भवति । तत्र विचार्यते किमन्ये द्वे अतिजगत्यौ कुतश्चिदुपादाय समास्वेव मैत्रोक्षं गातव्यम्, किंवा विषमास्वेवेति । तत्र पूर्वपक्षमाह । तदभ्यासः तस्य मैत्रोक्षसाम्नः अभ्यासः समासु स्यात् । विश्वाः पृतना इत्येका स्वीया अतिजगती, अन्ये च द्वे अतिजगत्यावेव दाशतयीभ्य आगमय्य तासु तिसृषु समासु मैत्रोक्षं गातव्यमिति ।

लिङ्गदर्शनाच्च । २२ ॥

' अतिजगतीषु स्तुवन्ति ' इति बहुवचनरूपस्य लिङ्गस्य दर्शनात् समास्वेव । इति पूर्वः पक्षः ।

नैमित्तिकं तूत्तरत्वमानन्तर्यात् प्रतीयेत । २३ ॥

तुशब्देन पूर्वपक्षं निरस्य सिद्धान्तमाह । उत्तरग्रन्थे पाठनिमित्तात् आनन्तर्यात् बृहद्रथन्तरयोरेव उत्तरत्वं स्यात्, तच्च श्रौतपाठनिमित्तेन नैमित्तिकम् । तदेव प्रतीयेत । नच द्वे अतिजगत्यौ कुतश्चित् आगमयितव्ये, पाठश्रुतेर्बलीयस्त्वात् । तस्मात् त्रैशोकस्य विषमत्वेव गानम् ।

ऐकार्थ्याच्च तदभ्यासः । २४ ॥

ननु यदि त्रैशोकं विषमच्छन्दके तृचे गीयेत, तदा तृचे इति संख्यावाचकः शब्दः अनुपपन्नः स्यात् इति चेन्न । ऐकार्थ्यात् एकदेवताप्रकाशकत्वात् एकार्थत्वात् छन्दोभेदेऽपि तृचशब्दस्योपपत्तिः । ननु तथापि ‘अतिजगतीषु स्तुवन्ति’ इति अतिजगतीशब्दस्य बहुवचनं नोपपद्यते इति चेत्, तत्राह तदभ्यासः इति । ‘एकविंशः षोडशी’ इति षोडशिनि सर्वाण्येव स्तोत्राणि एकविंशानि भवन्ति, तत्र त्रैशोकेऽपि सामनि सप्तकृत्वः अभ्यस्यमाने योनिभूता एकाऽपि सती अतिजगती बहुत्वमापद्यते । एवं सति अतिजगतीषु इति बहुवचनमुपपद्यते एव । तस्मात् अतिजगत्योः अन्यतो नागमः । किन्तु त्रैशोकं विषमत्वेव गेयमिति सिद्धान्तः । पै.

८ तदर्थशास्त्रात् । १।२।४।२१ ॥

अथेदानीं किं विवक्षितवचना मन्त्राः, उत अविवक्षितवचना इति विमर्शप्रकाशनेन पक्षे कल्पयन्ति, तत उदाहरणमाश्रित्येति । अत्र प्रभाकरेण सौमिलेनात् इत्यनुपपत्तेर्गौणमधिकरणम्—‘ उरु प्रथ उरु प्रथस्वेति पुरोडाशं प्रथयति ’ इत्यत्र ‘ उरु प्रथा उरु प्रथस्व ’ इति मन्त्रस्य यदि अर्थो विवक्षितः, तदा तत्सामर्थ्यादेव लिङ्गात् पुरोडाशप्रथने तस्य विनियोगसिद्धेः ‘ पुरोडाशं प्रथयति ’ इति तदर्थशास्त्रमविवक्षितार्थं स्यात् । अथ तदर्थशास्त्रं विवक्षितार्थम्, तदा मन्त्रस्य अविवक्षितार्थता, इति परस्परव्याघातात् अप्रामाण्यं चोदनाया । इति पूर्वः पक्षः । सिद्धान्तस्तु, किञ्चित्करस्य किञ्चित्कार्ये किञ्चित्-क्रियाद्वारेण विनियोगो भवति । यथा अवघातस्य किञ्चित्करस्य किञ्चित्कार्ये व्रीहौ द्वितीयाऽभिधेय प्रत्यक्षगितास्यकिंशाद्वारेण । तेन यत्र यत्तत् त्रितयं श्रुतितोऽवगम्यते, तत्र श्रुतित एव विनियोगावगमो भवति । इह पुनः ‘ इति पुरोडाशं प्रथयति ’ इति श्रुतौ इतिकरणेन किञ्चित्करो मन्त्रः प्रतीयते । पुरोडाशं प्रथयेत् इति पुरोडाशप्रथनं किञ्चित्कार्यं प्रकाशनं च किञ्चित् क्रियाविशेषः श्रुतेः । प्रतीयते तु मन्त्रस्य अभिधानसामर्थ्यरूपात् लिङ्गात् अभिधायकस्य मन्त्रस्य किञ्चित्करता । अभिधेयस्य च प्रथनस्य किञ्चित्कार्यता, अभिधानस्य च प्रकाशनरूपस्य किञ्चित्क्रियात्वमिति । तेन मन्त्रलिङ्गादेव त्रितयोपस्थितेः मन्त्रलिङ्गमेव पुरोडाशप्रथने मन्त्रविनियोजकम् । तथा च सति ‘पुरोडाशं प्रथयति’ इति श्रुतिः अनुवादिकैव । यत्र तु श्रुत्यैव त्रितयोपस्थितिः यथा ‘ ऐन्द्र्या गार्हपत्यमुपतिष्ठते ’ इति ऐन्द्रीमन्त्रस्य किञ्चित्कार्यता, तत्पूर्वस्य विधेः प्रकाशनार्थत्वात् प्रकाशनस्य किञ्चित्क्रियात्वमिति, तत्र श्रुतिरेव विनियोजिका । न च इह मन्त्रलिङ्गस्य विनियोजकत्वात् श्रुतेर्वैयर्थ्यम्, अभिधेयकार्यप्रतिपादनेनैव प्रयोजनवत्त्वात् । नहि तदनेन अभिधेयकार्यप्रतिपादनात् अन्यत् प्रयोजनमस्ति । अनुवादेऽपि तत् अन्यथात्वमेव इति न परस्परव्याघातात् अप्रामाण्यं चोदनाया इति ।

तदेतदसङ्गतम् । परस्परव्याघातहेतोः अभावेन पूर्वपक्षाभावात् । तुल्यबलयोर्हि व्याघातो भवति । मन्त्रस्य तु सामर्थ्यद्वारेण परपरीक्षः मुख्या विनियोगः । तदर्थशास्त्रे तु श्रुतिरूपतया स्वत एव विनियोजकम् । तदेव प्रत्यक्षश्रुतियुक्तात् मन्त्रस्य अविवक्षितार्थत्वेन । पूर्वपक्षोक्तः परस्परव्याघातस्तु कुतः । न च वाच्यम् ‘ यद्यपि अध्यापनविधिप्रयुक्तमध्ययनम्, तथापि नान्तरीयकतया गम्यमानस्वार्थस्यापि अन्तरङ्गतया अध्येतृभिरापर्यन्तस्तात्पर्यमपेक्षितस्य अध्यापनविधिना विवक्षितत्वात् कृत्स्नस्यैव मन्त्रस्य विवक्षितार्थत्वेन भवति व्याघातः ’ इति, निर्णयमन्त्रे ‘ देवस्य त्वा सवितुः प्रसवे ’ इत्यादीनामविवक्षितार्थानामपि दर्शनात् । न च तेषामर्थवाद्त्वम्, विध्येकवाक्यताया असम्भवात् । यथा च तेषामुच्चारणं कुम्भादिपदानां चोच्चारणं प्रयोगसमवेतार्था-

भावेन अदृष्टार्थम्, तथा तदर्थशास्त्रेण तादर्थ्यपरिच्छेदात् अत्रापि अदृष्टार्थमेव मन्त्रोच्चारणमिति युक्तम्। भवतु वा मन्त्रस्य विवक्षितार्थत्वे तत्कारित एव मन्त्रविनियोगः, तथापि तदर्थशास्त्रस्य न अविवक्षितार्थत्वम्। यतः अर्थवादाधिकरणे एव प्रतिपादितं यत् 'विधिप्राप्तप्रयाजस्यानुवादकस्यापि अर्थवादस्य अध्ययनविधिवशात् अनुवादकत्वेनैव विवक्षितार्थत्वम्' (इति)। अतः गुणत्वन्यायगत्या तेनैव गतत्वात् तुल्यार्थयोः मन्त्रतदर्थशास्त्रयोः अन्यतरस्य अनुवादकत्वेन विवक्षितार्थत्वे सति यदेतत् व्याघाताभिधानम्, तत् पूर्वापरानवहितस्यैव इति परिच्छिन्नं मतम्। इति यथावार्तिकमेव इदमधिकरणं वर्णनीयम्।

अर्थवादानां विधेयस्तुत्युपयोगद्वारेण प्रामाण्ये निरूपिते सति इदानीं मन्त्राणां विहितार्थप्रकाशनोपयोगद्वारेण प्रामाण्ये प्रतिपादयितव्ये किं विवक्षितार्था मन्त्राः, उत अविवक्षितार्था इति निरूप्यते। तत्रायं पूर्वपक्षिणोऽभिसंधिः। न तावत् विहितार्थप्रकाशनेन मन्त्राणां क्रतूपयोगः संभवति, ब्राह्मणादिभिरपि तदुपपत्तौ मन्त्रवैयर्थ्यात्, विपरीतत्वाच्च। अर्थे हि प्रथममवगते तद्वाचकशब्दस्मरणं भवति। स चेदर्थः प्रथममवगत एव, किं मन्त्रेण। न च 'मन्त्रस्मारितानुष्ठितेनैव क्रतूपकारः सिध्यति' इति नियमः संभवति, यतो विवक्षितार्थत्वे सति मन्त्राणां अवघातादिवत् नियमादृष्टकल्पनोपपत्तिः। न च एवमर्थो विवक्षितः, तदर्थशास्त्रविरोधात्। यदि हि 'उरु प्रथा उरु प्रथस्व' इति मन्त्रो विवक्षितार्थः स्यात्, तदा तदभिधानसामर्थ्यादेव पुरोडाशप्रथने विनियोगसिद्धेः 'अनेन मन्त्रेण पुरोडाशं प्रथयति' इति विनियोगश्रुतिः अनर्थिका भवेत्। तेन एतद्गम्यते 'नैव मन्त्रा विवक्षितार्थाः' इति। तदुक्तं भाष्ये (१।२।४।३१ पृ. १४५) 'सामर्थ्येन वाक्येन नीयते, पुनरभिध्या न भवति' इति। किञ्च क्वचित् मन्त्रलिङ्गविपरीतेऽर्थे श्रुत्या विनियोगो दृश्यते यथा ऐन्द्रीमन्त्रस्य गार्हपत्ये। तदपि मन्त्रस्य विवक्षितार्थत्वे न घटेत। एवं निर्वपणे देवस्य त्वा इत्यादिपदानां प्रयोगासमवेतार्थानां अवश्यमविवक्षितार्थत्वं वक्तव्यम्। तथा हुमादिपदानां च अर्थाभावात् अविवक्षितार्थत्वं सिद्धमेव। तेन यत्रापि अर्थोऽवगम्यते, तत्रापि अनुष्ठेयस्मृतेः अन्यतः सिद्धत्वेन उक्तत्वात् अविवक्षितार्थत्वं सिद्धमेव मन्त्राणामिति। अतः प्रकरणपठितानामनारभ्याधीतानां च मन्त्राणां यथासंभवं श्रुतिवाक्यप्रकरणादिभिर्विनियुक्तानां प्रमाणविधिना स्वरूपमेव अङ्गीकृतम्। तच्च स्वरूपं आकाङ्क्षारूपत्वात् यद्यपि न इतिकर्तव्यतात्वमभियुक्ते, तथापि स्वरूपाङ्गत्वार्थं अवश्यापेक्षोच्चारणक्रियाद्वारेण कारकत्वेनैव स्वीक्रियते। उच्चारणं दृष्टासंभवात् अदृष्टार्थमेव प्रयाजादिवदिति। ननु अपेक्षितार्थावबोधार्थः अध्ययनविधिः कृत्स्नस्याध्यायस्यैव विवक्षितार्थत्वमापादयन् मन्त्रस्य अविवक्षितार्थत्वे विरुध्येत। नैवम्। हुमादिवत् स्वाध्यायविधानादिदृष्टार्थमेव अध्ययनोपपत्तेः। अथवा मन्त्रभागेऽपि अपेक्षितार्थावबोधार्थ एव अध्ययनविधिः। मुख्यार्थत्वं हि शब्दानामौत्सर्गिकम्। तदनुपपत्तौ लाक्षणिकस्यापि शाब्दत्वं भवति। तत् अत्रापि तदर्थशास्त्रादिभिः मुख्यार्थत्वानुपपत्तेः प्रतिपादकत्वेन मुख्यार्थसंबद्धं स्वरूपमेव मन्त्रा लक्षयन्ति। तस्य स्वरूप दृष्टासंभवात् उच्चारणद्वारेण अदृष्टेन उपकारेण क्रतौ उपयुज्यते इति भवति अत्रापि अध्ययनविधेः अपेक्षितार्थावबोधपरत्वम्। ननु भिन्नयोर्हि लक्ष्यलक्षणभावो भवति यथा धात्वर्थवादयोः। इह तु तदेव मन्त्रस्वरूपं लक्ष्यं लक्षकमिति स्वात्मनि वृत्तिविरोधात् न संभवति। नैवम्। मन्त्राणामपि उभयरूपस्वीकारात्। यथा हि अस्य प्रमाणत्वं रूपम्, तथा प्रमेयत्वमपि अस्य अस्त्येव। तेन प्रमाणत्वेन रूपेण लक्षकत्वम्, प्रमेयत्वेन च लक्ष्यत्वं इति किमनुपपन्नम्। एतेन 'शब्दाशब्दयोः अनन्वयात् कथमशब्दस्य गम्यता शब्दतद्गामिनोऽन्वय' इत्येतदपि प्रत्युक्तम्। एकस्यैव मन्त्रस्य प्रतिपाद्यप्रतिपादकरूपेण लक्षणया शाब्दत्वस्य उक्तत्वात् इत्येतत् तदर्थशास्त्रादिभिः अविवक्षितार्थत्वेन मन्त्राणामदृष्टार्थत्वेन। इत्येवं प्राप्ते, अभिधीयते।

**अविशिष्टस्तु वाक्यार्थः। ३२॥**

अयमभिप्रायः। भवेदेवं यदि मन्त्राणामविवक्षितार्थत्वं भवेत्। तथाहि, अध्ययनविधिना हि पृथगधीताना

मन्त्राणां क्रतुमध्यपाठं चाध्ययनं विधीयते ; न तत्र स्वरूपज्ञानार्थत्वम्, मन्त्रसमाम्नायगतेनैव पाठेन तस्य सिद्धत्वात् । तेन क्रतुप्रयोगज्ञापनार्थमेव तत् इति निश्चीयते । क्रतुप्रयोगश्च तेषां प्रशाजादिवाक्यवत् नार्थसमर्पणेन, निवृत्तव्यापाराणां तदर्थस्य विधिवाक्यादेवावगतेः । अतः स्वरूपेणैव तेषां क्रतूपयोगो वक्तव्यः । तच्च स्वरूपं स्वयमक्रियात्वात् यद्यपि नेतिकर्तव्यतारूपेण प्रकरणेन गृह्यते, तथापि कारकत्वेन रूपेण प्रहीतुं शक्यते एव । किं कुर्वतस्तस्य कारकत्वमित्यपेक्षायाम्, 'यत् श्रनुयात्' इति दृष्टार्थस्यानुसंधाने कारकार्थप्रतीतिः तत्कार्यमुपलभ्यते । अनुष्ठेयविहितपदार्थस्मरणं च प्रयोगविधिरपेक्षते । मन्त्रावयवार्थश्च प्रतीतः सन् पदार्थद्वारेणापि शक्नोति तत् स्मारयितुम्, इति विहितपदार्थस्मरणफलत्वाद् अर्थज्ञानमेव कुर्वतां भवति प्रकरणेन कारकतया ग्रहणम् । तेन उच्चारणमेव एषां स्वरूपाभिव्यक्त्ये प्रयोगकाले अवश्यकरणीयम्, न तु प्रयाजादिवाक्यानामपि प्रकरणग्रहणम्, तेषां स्वरूपस्याग्रहणादिति विशेषः । यदि तु स्मृतिफलमपेक्षित दृष्टमर्थज्ञानं नोपलभ्येत, तदा केवलाददृष्टकल्पनायामुच्चारणक्रियैव अस्य कारकत्वं भवेदपि, सति तु परंपरयाऽपि दृष्टलाभे नादृष्टकल्पना उपपत्तिमती इति विवक्षितार्था एव मन्त्रा इति । न च ध्यानादिभिरपि स्मरणोपपत्तौ मन्त्रवैयर्थ्यम्, नियमादृष्टेनैव अर्थवत्त्वात् । यथा हि प्रकारान्तरेणापि वैतुष्यसिद्धौ नियमार्थः अवघातादिविधिः अर्थवान् भवति, तथा अयमपि इति नानुपपन्नम् । अतः विवक्षितार्थत्वान्मन्त्राणां न स्वाध्यायविध्यादार्थं मन्त्राध्ययनम् । नापि मुख्यार्थानुपपत्त्या लक्षणया स्वरूपपरत्वम् । किं तर्हि ? मन्त्राध्ययनं अपेक्षितवाक्यार्थावबोधार्थमेव । ननु कथं तर्हि सिद्धान्तेऽपि अशाब्दस्य मन्त्रस्य अनुभावनया सम्बन्धः ? तत्र केचित् शाब्दत्वसिद्ध्यर्थं सिद्धान्तेऽपि लक्षणया स्वरूपपरत्वं वदन्ति, तदयुक्तम् । मुख्यार्थपरित्यागेन तत्संबद्धोपादानार्थान्तरकल्पना हि लक्षणा इति लक्षणान्तरम् । न चात्र पूर्वपक्षाभिमते इव सिद्धान्तेऽपि मुख्यार्थपरित्यागोऽस्ति, निरस्तिताऽर्थत्वान्मन्त्राणाम् । किंतु प्रयोगभावना अनुष्ठेयस्मृतिमन्तरेण

अनुपपद्यमाना प्रकरणाम्नातमन्त्रार्थं स्वकाय स्मृतिसाधनं मन्त्रमेव स्मृतिहेतुतया अङ्गीकुरुते । तत्र मन्त्रस्य अशाब्दत्वे न संभवति इति तदर्थं श्रुतार्थापत्त्या तत्परशब्दकल्पनमेव उचितम् । विश्वजिदादौ इव उत्पादकत्वेन स्वर्गादेः स्वर्गस्य तत्परशब्दकल्पनेन, इति नानुपपन्नम् । न च तदर्थशास्त्रादिभिः अविवक्षितार्थत्वम्, तदर्थशास्त्रस्यैव अभावात् ; तत्र 'बर्हिर्देवसदनं दामि' इत्यादौ तावत् तत्संभावनैव न संभवति । यद्यपि तत्संभावना समस्ति अग्न्याधानमन्त्रेषु, तथापि न श्रुतेर्मन्त्रविनियोजकत्वम् । किं तर्हि ? सामर्थ्यतो मन्त्राः तदाधाने प्राप्ताः 'स्रा चतुर्भिरादत्ते' इति श्रुत्या चतुःसंख्याऽपि आदाने विहिता । तयोश्च एकस्यामक्रियायाऽन्वये सति अरुणैकहायनीन्यायेन परस्परनियमे सति 'चतुर्भिरेव चतुर्भिर्मन्त्रैः आदानं कर्तव्यम्' इति वाक्यार्थः संपद्यते । तेन चतुःसंख्याश्रवणं तत्र गुणार्थमेव । तदुक्तं सूत्रकारेण 'गुणार्थेन पुनःश्रुतिः' इति । एवम् 'इमामगृभ्णन् रशनामृतस्येत्यश्वाभिधानीमादत्ते' इत्यादौ च मन्त्रस्य सामर्थ्यतः गर्दभरशनायामपि प्राप्तिर्भवत्येव । तथापि लिङ्गविनियोगस्य श्रुत्यनुमानेन विप्रकृष्टत्वात् 'इत्यश्वाभिधानीमादत्ते' इति प्रत्यक्षश्रुतिबलादेव मन्त्रस्य अश्वरशनायां विनियोगात् मन्त्रप्रकाशिनो नैराकाङ्क्ष्ये जाते न लिङ्गद्वारेण सामान्यश्रुतिकल्पनम् । अतः प्रत्यक्षश्रुतिरेव मन्त्रविनियोजिकेति । किन्तु विनाऽपि विधिना प्राप्यतः किं विधिना इति प्रयोजनपर्यनुयोगे गर्दभरशनायामपि मन्त्रप्रसक्तौ तन्निवृत्तिरेव प्रयोजनम् । तदुक्तं प्रदाविकरणे 'रूपप्रकरणद्वारा श्रुतिर्यावत् प्रकल्प्यते (यावत् कल्प्यते इति मूले) । तावत् प्रत्यक्षया श्रुत्या विधिः शीघ्रं समाप्यते ॥ अप्राप्तविधिरेवायमतो मन्त्रस्य निश्चितः । परिसंख्या फलेनोक्ता न विशेषपुनःश्रुते ॥ प्रयोजनं विधेः किं स्यादस्येति तु निरूपणे । न गर्दभाभिधानीत फलमन्यन्निवर्तनात् ॥' इति (भा. १।२।७।१४ पृ. ७८१) । तदुक्तं सूत्रकृता 'परिसंख्या' (इति) । 'उरु प्रथा उरु प्रथस्वेति पुरोडाशं प्रथयति, यज्ञपतिमेव तत् प्रथयः पशुभिः

प्रथयति ' इत्यत्र तु पुरोडाशप्रथनमेव अप्राप्तं विधीयते । न च पुरोडाशान्यथाऽनुपपत्त्या प्राप्तत्वात् प्रथनमविधेयम्, अप्रथितेनापि त्वग्विशेषवशात् पिष्टनिष्पत्तिदर्शनात् । प्रथनविधौ तु तस्य अवश्यकर्तव्यत्वात् तत्रास्यापि लिङ्गतः तत्प्रकाशकत्वं भवति । उदाहरणान्तराणि भाष्यवार्तिकयोरेव सुगमानीति नेह प्रदर्श्यन्ते । यत्र पुनः श्रौतविनियोगवशादेव मन्त्रस्य तत्प्रकाशनसामर्थ्यं वृत्त्यन्तरेणापि कल्पनीयम्, तत्रैव श्रुतेर्विनियोजकत्वम् । यथा ' ऐन्द्र्या गार्हपत्यमुपतिष्ठते ' इति, ' धान्यमसि धिनुहि देवान् इति हविः सन्दूरनावपति ' इत्यादौ । निर्वापमन्त्रादौ तु देवस्य त्वादिपदानां प्रकाशयितव्यार्थेऽपि दृष्टार्थस्याभावत्वेन एवंभूतार्थप्रकाशनेनैव स्मारितानां विधेयार्थानामनुष्ठानमभ्युदयाय इति नियमादृष्टमेव अत्रापि दृष्टानुरोधात् कल्पनीयम् । यथा प्रोक्षिताभ्यामेव उलूखलमुसलाभ्यामवहननेन वितुषीकृतैर्व्रीहिभिः निष्पादितः पुरोडाशः अपूर्वसाधनं इति प्रोक्षणमपि नियमादृष्टापादितम्, तथेहापि । तेन हुमादीनामेव परं अर्थाभावेन अविवक्षितार्थत्वात् अदृष्टार्थमेव विनियोगः स्वाध्यायग्रहणार्थं स्वाध्यायविधिना पाठः न तु अन्यथापीति ।

ननु भवतु विवक्षितार्थत्वम्, प्रामाण्यं तु कथम्, विध्युद्देशावगतार्थानुवादेन अनधिगतार्थगन्तृत्वाभावात् । नैवम् । नहि प्रतिवेदवाक्यं अनधिगतार्थगन्तृत्वरूपं प्रामाण्यं व्युत्पादनीयम् । ' य एवं विद्वान् पौर्णमासीं यजते ' ' य एवं विद्वानमावास्यां यजते ' इत्यादौ अनुवादरूपत्वेन तदभावात् । किं तर्हि ? धर्मप्रमित्युपयोगित्वम् ( व्युत्पादनीयम् ) । तच्च परम्परया विधायकस्येव मन्त्रस्यापि इति किमनुपपन्नम् ।

प्रयोजनम् — यदि अविवक्षितार्था मन्त्राः, तदा ध्यानादिभिरेव सम्भृतानामनुष्ठानम् । अथ विवक्षितार्थाः, तदा मन्त्रस्मारितानामेवेति । सूत्रं तु — नहि लौकिकवाक्यानां मन्त्रवाक्यानां च कश्चित् विशेषोऽस्ति, येन प्रतीयमानोऽप्यर्थो न विवक्ष्यते इति । ' यो नाम कश्चिदिह संकलितं प्रमेयं ग्रन्थान्तरे लिखति वा वदति स्वयं वा । मत्कृतामननुकीर्त्य, स कीर्तिलोपात् निःसंतति-

जैगति जन्मशतानि भूयात् ॥ ' इति बालवल्लभीभुजङ्गापरनाम्नो भवदेवस्य कृतौ तौतातितमततिलके प्रथमस्याध्यायस्य द्वितीयः पादः । तौता.

**तदर्थशास्त्रात् । १।२।४।३१–१, वि. ३१ ॥**

मन्त्राः अविवक्षितवचनाः उच्चारणमात्रेण उपकुर्वन्ति इति पूर्वपक्षे प्रथमं हेतुमाह । तदर्थशास्त्रात् मन्त्रानर्थक्यम् । तस्य मन्त्रस्य योऽर्थः स तदर्थः । तदर्थे शास्त्रं तदर्थशास्त्रं तस्मात् । अग्निचयने अन्वारम्भणार्था मन्त्राश्चत्वारः पठिताः । ते च लिङ्गादेव आदाने प्राप्ताः वचनेन विधीयन्ते ' तां चतुर्भिरभ्रिमादत्ते ' इति । वचनेन विशेषतो विधानात् मन्त्रा अविवक्षितार्था इति ज्ञाप्यते । एवम् ' इमामगृभ्णन् रशनामृतस्य ' इति मन्त्रस्य ' इमामगृभ्णन् रशनामृतस्येत्यश्वाभिधानीमादत्ते ' इति शास्त्रं विधायकम् । मन्त्रादेव प्राप्ते किं पुनर्विधानेन ? । एवम् ' उरु प्रथस्वोरु ते यज्ञपतिः प्रथताम् ' इति मन्त्रस्य विनियोजकं शास्त्रम् ' उरु प्रथस्वेति पुरोडाशं प्रथयति, यज्ञपतिमेव तत् प्रथयति ' इति । तदिदं मन्त्राणां विवक्षितार्थत्वे लिङ्गादेव विनियोगसिद्धेः अनर्थकम् । तस्मात् अविवक्षितार्था मन्त्रा इति पूर्वः पक्षः ।

अत्र सुधायाम् ' तदर्थशास्त्रवाक्यनियमबुद्धशास्त्राविद्यमानवचनाचेतनार्थबन्धनार्थविप्रतिषेधस्वाध्यायवदवचनाविज्ञेयानित्यसंयोगाम्नातानर्थक्यम् ' इति सूत्रं निवेशितम् । ' ग्रन्थान्तरेष्वदर्शनेऽपि सूत्रं तद्विदिसूत्रवत् ( १।४।२३ ) । व्याख्याने स्पष्टतोऽकारि भाष्यकारादिभिस्त्विदम् ॥ ' इति चोक्तम् । तेन आनन्दाश्रमीयभाष्यपुस्तकमुद्रणमनुसृत्य खण्डशो गृहीत्वा व्याख्यातमस्माभिः । सूत्रस्वरूपविषये अधिकं तु अस्मदीये मीमांसादर्शने प्रकृतपद्यमप्रथमखण्डटिप्पण्यां द्रष्टव्यम् ।

**वाक्यनियमात् । ३१–२, वि. ३२ ॥**

पूर्वपक्षे द्वितीयं हेतुमाह । पदसमूहात्मकमन्त्रवाक्यस्य पदक्रमनियमादपि लिङ्गात् नार्थप्रकाशनार्थत्वं मन्त्राणाम् । व्युत्क्रमेण पाठेऽपि अर्थप्रकाशनसंभवात् । अदृष्टार्थत्वे तु यथाक्रममेव प्रयुक्तात् अदृष्टमुत्पद्यते नान्यथा, इति क्रमनियमः अर्थवान् । वाक्यनियमान्मन्त्रानर्थक्यं इत्यन्वयः ।

बुद्धशास्त्रात् । ३१-३, वि. ३३ ॥

तृतीयं हेतुमाह । बुद्धशास्त्रात् मन्त्रानर्थक्यम् । बुद्धस्य शास्त्रान्तरेण ज्ञातस्यैवार्थस्य विषये शासनात् साधनात् संप्रैषविधानात् 'अग्नीदग्नीन् विहर' इति । बुद्धबोधनं च व्यर्थम् । तस्मादविवक्षितार्था मन्त्राः ।

अविद्यमानवचनात् । ३१-४, वि. ३४ ॥

चतुर्थं हेतुमाह । अविद्यमानवचनान्मन्त्रानर्थक्यं अविद्यमानस्य वचनात् प्रतिपादनात् यज्ञे साधनभूतः पदार्थः मन्त्रेण प्रकाशयितव्यः । न च कश्चित् तादृशोऽस्ति पदार्थः, यादृशं मन्त्रोऽभिवदति 'चत्वारि शृङ्गा त्रयो अस्य पादा' इत्यादिः । नहि चतुःशृङ्गं त्रिपादं द्विशिरस्कं सप्तहस्तं किञ्चित् यज्ञसाधनमस्ति । तदत्र अभिधानार्थः किमभिदध्यात् । उच्चारणार्थत्वे तु अवकल्पते ।

अचेतनार्थबन्धनात् । ३१-५, वि. ३५ ॥

पञ्चमं हेतुमाह । अचेतनार्थबन्धनान्मन्त्रानर्थक्यम् । अचेतने अर्थस्य बन्धनात् संबन्धकरणात् प्रतिपादनात् 'ओषधे त्रायस्वैनं' इति 'शृणोत ग्रावाणः' इति च । ग्रावाणोऽचेतनाः कथं नाम शृणुयुः । उच्चारणार्थे तु नैष दोषो भवति ।

अर्थविप्रतिषेधात् । ३१-६, वि. ३६ ॥

षष्ठं हेतुमाह । अर्थविप्रतिषेधान्मन्त्रानर्थक्यम् । मन्त्रप्रतिपाद्यस्य अर्थस्य विप्रतिषेधात् विरोधात् । 'अदितिर्द्यौरदितिरन्तरिक्षम्' इति । अदितिरेव द्यौः, सैव अन्तरिक्षं इति को जातु भद्ध्यात् । एवम् 'एको रुद्रो न द्वितीयोऽवतस्थे' इत्युक्त्वा 'सहस्राणि सहस्रशो ये रुद्रा अधि भूम्याम्' इत्याह । तदपि व्याहतेयम् ।

स्वाध्यायवदवचनात् । ३१-७, वि. ३७ ॥

सप्तम हेतुमाह । स्वाध्याये इव स्वाध्यायवत् । अवचनात् वचनाभावात् । यथा स्वाध्यायकाले शेमियो शाखिर अवहनन करोति । माणवकः अवहन्तिमन्त्रमधीते । नाशौ तेन मन्त्रेण तदभिधानमभ्यस्यति । अक्षरानुपूर्व्या अवधारणे एव यतते । येन च नाम प्रयोजनं तदभ्यसितव्यम् । अत उच्चारणाभ्यासात् उच्चारणेन प्रयोजनं इत्यवगच्छामः ।

अविज्ञेयात् । ३१-८, वि. ३८ ॥

अष्टमं हेतुमाह । विज्ञातुं योग्यः शक्यो वा विज्ञेयः । विज्ञातुमशक्यः अविज्ञेयः । केषाञ्चिन्मन्त्राणां अर्थो विज्ञातुमेव न शक्यते । यथा 'सृण्येव जर्भरी तुर्फरीतू' 'इन्द्रः सोमस्य काणुका' 'आमुदात् चेत्यविकायाद् दुश्चा' इत्यादिः । उच्चारणार्थत्वे तु न दोषः । अविज्ञेयान्मन्त्रानर्थक्यं इत्यन्वयः ।

अनित्यसंयोगान्मन्त्रानर्थक्यम् । ३१-९, वि. ३९ ॥

नवमं हेतुं प्रतिपादयन् पूर्वपक्षप्रतिज्ञामुक्त्वा उपसंहरति । केषुचिन्मन्त्रेषु अनित्यानां पदार्थानां संयोगः श्रूयते । यथा 'किं ते कृण्वन्ति कीकटेषु गावः' इति । कीकटा नाम जनपदाः । नैचाशाखं नाम नगरम् । प्रमगन्दो नाम राजा । यदि अभिधानार्थाः प्राक् प्रमगन्दात् नायं मन्त्रो भूतपूर्वः इति गम्येत । अविवक्षितार्थत्वे तु न दोषः । तस्मात् मन्त्रानर्थक्यं मन्त्राणामानर्थक्यं अर्थशून्यत्वम् । उच्चारणमात्रेण तु यागोपकारकत्वं तेषाम् । इति पूर्वपक्षः । संक्षेपोऽत्र प्रतिपाद्यप्रतिपादकभावरूपः संबन्धः ।

अविशिष्टस्तु वाक्यार्थः । ३२ ॥

उच्चारणमात्रेण यागस्योपकुर्वन्तो मन्त्राः अविवक्षितार्थाः इति नवभिर्हेतुभिः प्राप्तं पूर्वपक्षं तुशब्देन निरस्यन् आह सिद्धान्ती । वाक्यार्थः वाक्यतः प्रतीयमानः क्रियाकारकसंबन्धः लोके वेदे च अविशिष्टः न भिन्नः, किन्तु समान एव । स यथैव लोके विवक्षितः तथैव वेदेऽपि भवितुमर्हति । मन्त्राणां यज्ञाङ्गप्रकाशनमेव प्रयोजनम् । तस्मादनर्थका मन्त्राः । इति सिद्धान्तः ।

गुणार्थेन पुनःश्रुतिः । ३३ ॥

अभ्यादानमन्त्रविषयकपूर्वपक्षशङ्कां सिद्धान्ती निराचष्टे । अभ्यादानमन्त्रस्य चतुर्णां लिङ्गादेव विनियोगे सिद्धे 'चतुर्भिरादत्ते' इति पुनःश्रुतिः गुणार्थेन चतुष्ट्वसंख्यारूपगुणलाभप्रयोजनाय । पाठादेव चतुष्ट्वसिद्धौ 'चतुर्भिः' इति वचनं समुच्चयसिद्ध्यर्थम् । अन्यथा विकल्पः स्यात् । गुणार्थो वा इत्यपि पाठः । अर्थस्तु न भिन्नः ।

परिसंख्या । ३४ ॥

अश्वाभिधानीमन्त्रविषयकपूर्वपक्षशङ्कां सिद्धान्ती निरस्यति । ' इमामगृभ्णन् रशनामृतस्येत्यश्वाभिधानी-मादत्ते ' इति परिसंख्या । मन्त्रलिङ्गेनैव रशनाऽऽदाने प्राप्तस्य मन्त्रस्य विधानं यदभवत्तदा मन्त्रस्य परि-संख्यार्थम् । इति न तदर्थशास्त्रवैयर्थ्यम् ।

अर्थवादो वा । ३५ ॥

' उरु प्रथा उरु प्रथस्वेति पुरोडाशं प्रथयति ' इति मन्त्रविधिवाक्ये पूर्वपक्षिणा पुनरुक्तता दोषो दत्तः, तन्निरासार्थं सिद्धान्तसूत्रमिदम् । ' यज्ञपतिमेव तत् प्रथयति ' इत्यर्थवादः, तदर्थे पुनरुक्तिः । वाशब्दः शङ्कानिरासमूचकः । तथा च न तदर्थशास्त्रवैयर्थ्यम् ।

अविरुद्धं परम् । ३६ ॥

मन्त्राणां निवताक्षरवदपमत्वेन अनर्थकत्वं इति पूर्वपक्षिणा यदुक्तम्, तन्निरसनार्थं सूत्रम् । परं द्वितीय-सूत्रोक्तं मन्त्रेषु क्रमविशिष्टाक्षरपदाम्नानं मन्त्राणां सार्थक-मपि नियमादृष्टकल्पनया पूर्वपक्षिणाऽपि स्वीकर्तव्यतया अविरुद्धं न विरुद्धम् । तस्मात् नानर्थका मन्त्राः ।

संप्रैषे कर्मगर्हाऽनुपालम्भः संस्कारत्वात् ।३७॥

बुद्धशास्त्रात् इति सूत्रोक्तां पूर्वपक्षशङ्कां सिद्धान्ती निराकरोति । " केयं संप्रैषे ' अग्नीदग्नीन् विहर ' इत्यत्र बुद्धबोधनासंभवात् अभिधानकर्मगर्हा अभिहिता, साऽपि अनुपालम्भः । संस्कारकार्यत्वात् " ( शा. ) ।

शास्त्रनियमेऽपि ' अग्नीदग्नीन् विहर ' इत्यत्र संप्रैष-मन्त्रे पुनर्ज्ञापनरूपकर्मणः गर्हा निन्दा अभिहिता अनु-पालम्भ, अदोषः । संस्कारार्थत्वात् अदृष्टार्थत्वात् इति यावत् ।

अभिधानेऽर्थवादः । ३८ ॥

अविद्यमानवचनात् इति सूत्रेण अचेतनार्थबन्धनात् इति सूत्रेण च कृतस्य आक्षेपस्य निरासार्थं सिद्धान्त-सूत्रम् । अभिधाने अभिधीयते अनेन इत्यभिधानम् ' चत्वारि शृङ्गा ' इति मन्त्र. । तस्मिन् विद्यमानः पद समूहः अर्थवादः, गौण्या वृत्त्या रूपकेण स्तुतिपरः । तस्मात् तस्य अप्रामाण्यम् । एवम् ' ओषधे त्रायस्वैनम् ' ' शृणोत ग्रावाणः ' इत्यत्रापि अचेतनानां चेतनत्वारोप्य चेतनत्वस्य अभिधाने प्रतिपादने सति ते वाक्ये अर्थ-वादः यज्ञसाधनस्तुतिः । ' ओषधे त्रायस्वैनम् ' इति, प्रातरनुवाकस्तुत्यर्थम् ' शृणोत ग्रावाणः ' इति ।

गुणादविप्रतिषेधः स्यात् । ३९ ॥

अर्थविप्रतिषेधात् इति सूत्रोक्तां पूर्वपक्षशङ्कां सिद्धान्ती परिहरति । ' अदितिर्द्यौरदितिरन्तरिक्षम् ' इत्यत्र अवि-प्रतिषेधः स्यात् विप्रतिषेधः विरोधो नास्ति । गुणात् गुणवादात् ' त्वमेव माता च पिता त्वमेव ' इतिवत् गुणार्थत्वात् न दोषः ।

विद्याऽवचनमसंयोगात् । ४० ॥

स्वाध्यायवदवचनात् इति सूत्रोक्तां पूर्वपक्षशङ्कां सिद्धान्ती अपाकरोति । विद्यायाः अर्थज्ञानस्य अवचनं अनभ्यासः मन्त्राणामनर्थकतायाः लिङ्गं न भवति । असंयोगात् लौकिकाध्ययनादिक्रियायाः यज्ञसंयोगाभावात् । किंच अर्थयोगात् अध्ययनरूपसंयोगं विनाऽपि कर्मकालि-कस्य अर्थज्ञानस्य सुकरत्वात् । दुर्ज्ञेयत्वात्तु अभ्यासः । तस्मात् दोष. ।

विवाहकाले संनिहितस्यापि लौकिकाध्ययनरूपस्य अर्थस्य यत् मन्त्रेण अवचनं अनभिधानम्, तत् तस्य कर्मानङ्गत्वात् युक्तम् । ( सु. इ. ११० )

सतः परमविज्ञानम् । ४१ ॥

अविज्ञेयात् इति सूत्रोक्तां पूर्वपक्षशङ्कां निराकर्तुं सिद्धान्तसूत्रम् । परं इत्यस्यार्थं युक्तमित्यर्थे । ' सृण्येव जर्भरी तुर्फरीतू ' इत्यादौ सतः विद्यमानस्यापि अर्थस्य शास्त्राभ्यासाभावात् अविज्ञानमस्पष्टत्वं युक्तम् । निगम-निरुक्तव्याकरणादिना तु तदर्थो ज्ञातुं शक्यः ।

उक्तश्चानित्यसंयोगः । ४२ ॥

अनित्यसंयोगात् इति सूत्रेणोक्तां पूर्वपक्षशङ्कां सिद्धान्ती दूषयति । नेऽयं कीकटप्रमगन्दनैचाशाखादिभिः अनित्यैः संयोगः मन्त्रार्थपक्षे लिङ्गत्वेन कथितः, सः अस्माभिः उक्तः निरस्तः ' परं तु श्रुतिसामान्यमात्रम् ' इत्यत्र ।

लिङ्गोपदेशश्च तदर्थवत् । ४३ ॥

मन्त्राणां विवक्षितार्थत्वे लिङ्गमाह सिद्धान्ती । चकारः पूर्वपक्षबाधके समुच्चयार्थः । ' आग्नेया

आग्नीध्रमुपतिष्ठते ' इत्यादौ आग्नेय्यादिविशेषणोपादानेन मन्त्राणां अग्निदेवताप्रकाशकत्वेन लिङ्गेन उपदेशः विधिः तत् मन्त्रजातं अर्थवत् सार्थकं इति गमयति । अविवक्षितार्थत्वे तु तल्लिङ्गनिर्देशः अनुपपन्नः स्यात् । तस्मात् मन्त्राः विवक्षितार्थकाः इति सिद्धान्तः ।

तदर्थवत् । तेषामर्थः तदर्थः । सः अस्ति अस्य इति तदर्थवत् । इदं उपदेशस्य विशेषणम् । सामान्ये नपुंसकत्वम् । " तेषां मन्त्राणां अर्थः यथा अस्ति तथा लिङ्गोपदेशो भवति ।" इति सुधा. पृ. ११२.

ऊहः । ४४ ॥

मन्त्रा विवक्षितार्था इत्यत्र सिद्धान्ते लिङ्गान्तरमाह । ऊहः तत् मन्त्रजातं अर्थवत् विवक्षितार्थकं इति गमयति । तत् अर्थवत् इति पूर्वसूत्रादनुवर्तते । ' न पिता वर्धते न माता ' इति अध्रिगुप्रैषे माऋपितृशब्दयोः द्विवचनान्तत्वेन ऊहो निषिद्धः । तच्च मन्त्राणां सार्थकत्वे लिङ्गम् । निरर्थकत्वे तु ऊहस्य अप्रसक्तत्वेन निषेधो व्यर्थ एव स्यात् ।

विधिशब्दाश्च । ४५ ॥

मन्त्रा विवक्षितार्था इति सिद्धान्ते लिङ्गान्तरमाह । विधिः ब्राह्मणानि च तत्तत् पर्यायैः अवयवान्वाख्याननिर्वचनादिभिश्च अर्थप्रकाशनपरत्वं दर्शयति इति वार्तिकम् । विधिशब्दाश्च विवक्षितार्थानेव मन्त्रान् अनुवदन्ति । ' शतं हिमाः, शतं वर्षाणि जीव्यासमित्येव तदाह ' इत्यादयः । इति भाष्यम् । सर्वथा विवक्षितार्था मन्त्रा इति सिद्धान्तः । के.

● तदर्थशास्त्रवत्त्वलक्षणस्य दोषस्य परिहारकं मन्त्राधिकरणे गुणविधिरूप परिसंख्यारूप अर्थवादरूप बोधकम् । सु पृ. ७८५.

● तदर्थशास्त्रन्यायः । मन्त्राधिकरणमिदम् । भा. १।२।४।३१-४५ ● यदेव ' ऐन्द्र्या ' इत्युक्तम्, तदेव तदर्थशास्त्रन्यायेन इन्द्रव्यतिरिक्तः कोऽपि उपस्थातव्यः, स च लिङ्गसामर्थ्येन्द्रविरोधी इत्येतत् प्रतीयते । वा. ३।२।७।१४ पृ. ८३८.

ॐ तदष्टसंख्यं श्रवणात् । ४।१।१७।४६ ॥

दर्शपूर्णमासयो. 'अष्टावुपभृति गृह्णाति' इति श्रूयते । पूर्वपक्षसूत्रमिदम् । तच्छब्देन ' औपभृतं तथेति चेत् ' इति सूत्रस्थं औपभृतं निर्दिश्यते । तत् औपभृतमाज्यं अष्टसंख्यमेव हविः स्यात्, न चतुर्गृहीतत्वम् । श्रवणात् अष्टौ इति अष्टत्वश्रवणात् ।

अनुग्रहाच्च जौहवस्य । ४७ ॥

पूर्वपक्षी युक्त्यन्तरमेव निरूपयते । जुह्वां भवं जौहवम्, तस्य जौहवस्य आज्यस्य औपभृतेन आज्येन अनुग्रहात् अनुग्रहकरणात् प्रयाजहोमेषु सहायकरणात् हेतोः चतुर्गृहीतत्वमपि उक्तम् । न च तावता अष्टत्वनिरासः शक्यः । तस्मात् उपभृति अष्टसंख्यमेव आज्यम् ।

द्वयोस्तु हेतुसामर्थ्यं श्रवणं च समानयने । ४८ ॥

सिद्धान्तयति । तुशब्दः पूर्वपक्षव्यावृत्त्यर्थः । नेदं अष्टसंख्यमेकं हविः, किन्तु एकं चतुर्गृहीतं हविः पुनरपरमपि चतुर्गृहीतम् । एवं द्वयोरेव चतुर्गृहीतयोः हेतुसामर्थ्यं भवति, एव हेतुः समर्थितो भवति । आतिथ्याया. ' चतुर्गृहीतान्याज्यानि भवन्ति ' इत्युक्त्वा ' प्रयाजानुयाजान् यक्ष्यन् भवति ' इति हेतुरुपन्यस्तः । अष्टस्वपि अनुयाजेषु प्रयाजानेवौपभृतं भवेत्, यदा त्वष्टधेयता गुणभूता, न तदा द्वयोश्चतुर्गृहीतयोः सतोरपि ' चतुर्गृहीतान्याज्यानि ' इति आज्येषु बहुवचनमुपपद्येत । तस्मैतस्य हेतोः सामर्थ्यं द्वयोरेव चतुर्गृहीतयोर्भवति, न तु अष्टगृहीते एकस्मिन् ।

ननु तर्हि ' अष्टौ उपभृति ' इति अष्टत्वश्रवणं कथम् ? उच्यते । श्रवणं च समानयने । समानयने उपभृति आज्यग्रहणे अष्टत्वस्य श्रवणमुपपद्यते । अष्टगृहीत हि ग्रहणे चतुर्गृहीत च होमे । ' चतुर्गृहीतं जुहोति ' इति सर्वहोमेषु अनारभ्य उच्यते । तस्मादष्टत्वश्रवण मदोषः । उपभृति द्वे चतुर्गृहीते एव, तत्र एकं चतुर्गृहीत प्रयाजार्थम्, अपरमनुयाजार्थम् । के.

ॐ तदागमे हि तद् दृश्यते इति न्याय. । पश्वेकत्वाधिकरणस्थ सूत्रम् । भा. ४।१।५।१५.

( हि यस्मात् तदागमे तस्य एकवचनान्तस्य शब्दस्य आगमे सति तत् एकत्व दृश्यते ' पशुमालभ ' इत्यत्र (

'पशू आनय' इत्यत्र तु एकवचनापगमे एकत्वं न दृश्यते। तस्मादेकवचनस्य एकत्वमर्थः। इत्यर्थः)। * 'न केवलं एतावेव अन्वयव्यतिरेकौ यौ परस्परपरित्यागेन लक्ष्येते, तस्मिन्नेव हि पदे 'तदागमे हि तद् दृश्यते' इत्यनेन न्यायेन विवेकोऽवधार्यते। शा. ४।१।१।१ पृ. ३८१.

अत्र सुधा— धात्वपरित्यागेऽपि प्रत्ययश्रवणकाले धातुश्रवणाभावेऽपि भावनाप्रतीतेः, धातुश्रवणकाले च प्रत्ययश्रवणाभावे तदप्रतीतेः इत्येतत् 'तदागमे हि०' इति न्यायेन निर्णीतं भविष्यति इति। पृ. ५६७. * तदागमे हि दृश्यते इति न्यायः। यथा दृश्यते हि तैलादौ अनुद्भूतस्पोद्भूतस्पर्शतेजोऽवयवागमे संतापोपलब्धिरिति तद्धर्म एव न तैलादिधर्मः, तथा जाग्रदादौ दुःखो यथा दुःखादयो दृश्यन्ते, सुषुप्त्यादौ तस्मिन्नसौ नोपलभ्यन्ते अतस्तद्धर्मा एव नात्मधर्माः, सुषुप्तावपि उपलब्धिप्रसङ्गात् इति। साहस्री. २७९. * आख्यातशब्दैव भावना, न धातुवाच्या, प्राधान्येन प्रतीयमानस्य व्यापारस्य धात्वर्थत्वायाः 'तदागमे हि दृश्यते' इति न्यायविरुद्धत्वात् इति मीमांसकाः। भूषणसारः। अत्र दर्पण. 'पशुना यजेत' इति श्रूयते। तत्र एकवचनोपात्तमेकत्वं यागे विशेषणम्, उत प्रकृत्यर्थे इति संशये पशुपदार्थस्य यागं प्रति गुणत्वात् संभावितवाक्यप्रकरणेन प्रधानावृत्तौ प्रधान(त्व)मङ्गापेक्षया वाक्यद्गुणं प्रधानात्वेसंयोगात्, एकत्वनिमित्तशोर्निधाने तु एकत्वस्य पशुविशेषणतया यागाङ्गत्वाभावात् तदविवक्षितमेव स्यात् इत्यर्थकेन 'तथैकत्वमपशाब्दमर्थस्य गुणभूतत्वात्' इति सूत्रेण पूर्वपक्षिते 'शब्दवत्तूपलभ्यते तदागमे हि दृश्यते तस्य ज्ञानं यथाऽन्येषाम्' इति सिद्धान्तसूत्रम्। शब्दवत् शब्दवाच्य यथा भवति तथोपलभ्यते। एकत्वं हि यतस्तदागमे एकवचनसद्भावे दृश्यते। अतस्तस्य प्राधान्येन प्रतीतिः। यथान्येषां अवघातादीनामित्यर्थः। इति। * तदागमन्यायः नाम अन्वयव्यतिरेकौ। यस्मिन् सति यत् ज्ञायते असति च न ज्ञायते स तस्यार्थः। रामौ इत्यत्र विसर्गो न श्रूयते एकत्वं च न ज्ञायते, रामः इत्यत्र विसर्गः श्रूयते एकत्वं च ज्ञायते इति सुप्प्रत्ययविसर्गस्य एकत्वमर्थः। रामौ इत्यत्र औकारस्य द्वित्वमर्थः। एवं यूपः कूपः सूपः इत्यादौ द्रष्टव्यम्। के. * तदागमन्यायः। पर्यवेक्षत्वाधिकरणे। शा. ४।१।५।११–१६. * यत्र अनेकार्थप्रतीतिः, तत्र तदागमन्यायाविघातात्। सु. पृ. ५६८. * अनेकात्मकात् शब्दात् अनेकार्थबोधने सिद्धे 'यदागमे योऽर्थः, स तस्य इत्यवधार्यते' इत्यनेन अनेकशब्दोच्चारणात् अनेकार्थप्रतीतौ कस्य शब्दस्य कोऽर्थः इति विवेकमात्रस्य तदागमन्यायात्मकान्वयव्यतिरेकाधीनत्वात्। 'नान्वयव्यतिरेकाभ्या मपूर्वोऽप्यर्थोऽवगम्यते। संकीर्णेऽवगते त्वर्थे ताभ्यां शक्तिर्निगम्यते॥' सु. पृ ५६८

§ 'तदादि याऽभिसंबन्धात् तदन्तमपकर्षे स्यात्' (५।१।१२।२४) इति न्यायेन 'स (निर्वापः) प्रतिकृष्यमाणः तत्र प्राग्भाविनामङ्गानां प्रतिकर्षे वर्तेत' (पूर्वपक्षे इदम्)। भा. ११।२।४।१९.

* 'तदादि या०' इति पाञ्चमिक सूत्रम्। तत्र 'अङ्गानां मुख्यकालत्वात् यथोक्तमुत्कर्षे स्यात्' इति पूर्वपक्षसूत्रात् उत्कर्षपदं अनुषञ्जनीयम्। ततश्च आभिमानिकतापूर्व्यमित्यादौ उत्कर्षे तदादि स्यात्। तिष्ठन्तं पशुं प्रयजन्ति इत्यादौ अपकर्षे च तदन्तं स्यात् इति तदर्थः। सोम. ११।२।१. * 'तदादि या०' इति ये यथाहोमोत्तरकालाः पदार्थाः तत्संनिपातिनो वा, तन्मात्रस्योत्कर्षो भवेत्, न प्राग्भाविनामुपाकरणादीनाम्। भा. ३।६।७।२२ पृ. १०४७. * 'आभिमानिकतापूर्व्यमनुयाजेभ्यश्च' इत्ययमपि पाञ्चमिक एव अनुयाजानामुत्कर्षः। तेषां हि 'अहेस्तृतीयसवने' इत्यग्रसारोत्कर्षादिव तृतीयसवनसंबन्धे प्राप्ते (तदादि याऽभिसंबन्धात् इति न्यायात्) प्रदेशविशेषमात्रं गुणेन विधीयते। भा ११।२।२।१२. * केवलपरित्यागोत्कर्षादेव तदादि या० इत्येन उपाकरणोत्कर्षसिद्धेः। भा. ३।६।७।२२ पृ. १०४८. * तदादिपदार्थानुष्ठानक्रमस्य कल्पनात् सकलानामेव पदार्थानां चोदकेन अतिदेशात् मुख्ये सति पूर्वपदार्थेनोत्तरस्य बुद्धौ अनुपस्थापितत्वात् तस्यानुष्ठानं न स्यात्। तस्मात् 'प्रधानान्तस्य अङ्गसमूहस्य

अपकर्षः।' इति ( तदादि वाऽभिसंबन्धादिति ) न्यायशरीरम्। तस्मात् अत्रह्मादरदर्शा भोजनपूर्वमाग्न्याधान-होमदेवतार्चनवैश्वदेवादपकर्षस्य भोजनापकर्षविधायकवाक्यविषयतामपि दर्शयति। पुरुषार्थचिन्तामणौ एकादश्याम् पृ. २११–१२. * वाजपेये 'तान् पर्यग्निकृतानुत्सृजन्ति, ब्रह्मसाम्न्यालभते'। अत्र आलम्भोत्कर्षमात्रं विधीयते। तदा च तदुत्तराङ्गानामुत्कर्षः 'तदादि वा॰' इति न्यायादेव लभ्यते। तेनात्र आरण्यन्यायाऽसंभवात् न पर्यग्निकरणान्तानामङ्गानामावृत्तिः। भाट्ट. ११।४।११.

* तदादीनामुत्कर्षः अनुयाजादीनामुत्कर्षः। ज्योतिष्टोमे अग्नीषोमीये पशौ अनुयाजप्रभृतिसूक्तवाकशंय्वादीनामुत्कर्षः। भा. ५।१।१२।२३–२४.

* प्रकृतिप्राप्तो धर्म उत्कृष्यमाणः तदादयुत्कर्षं करोति नापूर्वः इति केचित्। तदयुक्तम्। 'कृतदेशात्तु पूर्वेषाम्' (५।१।१०।२१) इत्यत्र अप्राकृतानामपि विदेवनादीनामपकर्षवर्णनेन 'तथाऽपूर्वे' (५।१।१६। २९) इत्यस्य विशिष्टविषयत्वव्याख्यानात्। वा. ३।६।७। २२ पृ. १०४८.

♔ तदादितदन्तन्यायः। तदादितदन्तोत्कर्षापकर्षन्याय.। तदाद्युत्कर्षतदन्तापकर्षन्यायः। तदाद्युत्कर्ष-न्यायः। तदन्तापकर्षन्याय.। अनुयाजाद्युत्कर्षप्रयाजान्तापकर्षाधिकरणम्। 'तदादि वाऽभिसंबन्धात्' इति न्यायः॥

अङ्गानां मुख्यकालत्वाद् यथोक्तमुत्कर्षे स्यात्। ५।१।१२।२३॥

भाष्यम्— ज्योतिष्टोमे श्रूयते 'आग्निमारुतादूर्ध्वमनुयाजैश्चरन्ति' इत्युत्कर्षः। तथा अग्नीषोमीये पशौ 'तिष्ठन्त पशुं प्रयजन्ति' इत्यपकर्षः। तत्र संदेहः किमुत्कर्षे अनुयाजमात्रमुत्कृष्यते अपकर्षे च प्रयाजमात्रम्, उतोत्कर्षेऽनुयाजादि अपकर्षे च प्रयाजान्तमिति। किं तावत् प्राप्तम्? यावदुक्तमुत्कर्षापकर्षयोः स्यात्। कुतः? अङ्गानां मुख्यकालत्वात्। एवमन्येषां प्रधानकालता भविष्यतीति। तत्र सहत्वस्य प्रापकः प्रयोगवचनोऽनुग्रहीष्यते।

- टुप्— प्रयाजानुयाजानाम् (यथासंख्यम्) अपकर्षोत्कर्षौ विहितौ। ('तिष्ठन्तं पशुं प्रयजन्ति' इति अपकर्षः। 'आग्निमारुतादूर्ध्वमनुयाजैश्चरन्ति' इति उत्कर्षो विहितः।

तत्र) तावन्मात्रम् (प्रयाजमात्रमनुयाजमात्रं च) अपकृष्यते उत्कृष्यते च, उत तदन्तं तदादि वा (इति संदेहे) तावन्मात्रमिति प्राप्तम्। कुतः? प्रधानार्थानि हि अङ्गान्यपेक्ष्यन्ते। तत्र वचनात् यस्यापकर्षः (उत्कर्षः, उत्कर्षो वा) तावन्मात्रमेव अपकृष्येत (उत्कृष्येत वा)। अवशिष्टं प्रधानास्यैव (प्रधानासत्त्यनुग्रहायैव इति शेषे) यथाऽवस्थितम्। (यथाप्राप्त्यैवावस्थितम् इति शेषे)।

तदादि वाऽभिसंबन्धात् तदन्तमपकर्षे स्यात्। २४॥

भाष्यम्— तदादि उत्कर्षे, तदन्तमपकर्षे गम्येत। कुतः? अभिसंबन्धात्। यदनुयाजानां परस्तात् समाम्नायते, तत् प्रधानादनन्तरं प्रयोगवचनेन प्राप्तं साचिव्यपरसामर्थ्यादनुयाजेभ्यः परस्तात् क्रियते। तथा यस्ततः परः, स ततः परस्तात्। एवमेक उत्कृष्यमाणः सर्वं गुणकाण्डमुत्कर्षति। तथा अपकृष्यमाणोऽपकर्षतीति।

टुप्— पूर्वः पदार्थः (आघारादिः) उत्तरस्य (प्रयाजादेः) उपस्थापकः प्रकृतौ (दृष्टः)। तेन इहापि (विकृतौ) तथैव प्राप्नोति (येन कृत्स्नैव आघार प्रयाजाः कार्याः, कृत्स्नैव अनुयाजान् सूक्तवाकप्रकरणम्। यत्तु प्रधानापत्तिः प्रयोगवचनात् प्राप्नोतीति, तत्राह–) प्रयोगवचनो हि य. प्रधानार्थं प्रापयति, स. (प्रकृतिवत् एव प्रयाजेभ्यः पुरस्तात् अनुयाजेभ्यश्च परस्तात् कार्यत्वेन–) अङ्गभूतस्वरूपाणाम् (आघारसूक्तवाकादीनाम्) यादृशी प्रधानापत्तिः, तादृश्येव निराकाङ्क्षीभवति, न तु अन्यादृशीं (प्रधानापत्तिम्) शक्नोति कल्पयितुं प्रकृताभावेन।

वा— 'श्रुतोत्कर्षापकर्षाभ्यां वचनस्योपपत्तितः। न तदन्ततदादीनां भवेतामप्रमाणता॥ प्रधानसंनिधिश्चैते नाधिनो न भविष्यति। ऊर्ध्वपूर्वपदार्थानामेवं प्राप्तेऽभिधीयते॥ पूर्वेणोपस्थितं कार्यमुत्तरं कर्म चोदकात्। प्राप्तं तदन्यथाभावे क्रमलोपाद्विलुप्यते॥' तस्मात् तदादीनामुत्कर्षः, तदन्तानां चापकर्षः।

* 'तदुक्ते श्रवणात्' इति सूत्रकारेणोच्यमानं तेनैव समर्थयिष्यामहे, यथा देवतोद्देशेन स्वत्वत्यागमात्रं यागः, देवतोद्देशपूर्वकमग्नौ स्वत्वत्यक्तद्रव्यप्रक्षेपो जुहोतिः। इति। या. ३।४।१४।४१ पृ. ९८१.

तदुत्पत्तेस्तु निवृत्तिस्तत्कृतत्वात् स्यात्। ९।२।१३।४० ॥

चातुर्मास्येषु पाशुकेषु मध्यमे पर्वणि 'परिधौ पशुं नियुञ्जीत' इति श्रूयते। तत्र परिधौ यूपधर्माः कर्तव्या न वेति विचारे पूर्वाधिकरणाक्षेपेण पूर्वपक्षमाह। तदुत्पत्तेः तस्य परिधेः आहवनीयपरिधानार्थत्वेन उत्पत्तेः परिधौ यूपधर्माणां निवृत्तिः स्यात् प्राप्तिर्न स्यात्। यूपधर्माणां तत्कृतत्वात् पशुबन्धनापूर्वप्रयुक्तत्वात् परिधेश्च तत्राहत्वात्। तस्मात् परिधौ यूपधर्मा न स्युः इति पूर्वः पक्षः।

आवेशयेरन् वाऽर्थवत्त्वात् संस्कारस्य तदर्थत्वात्। ४१ ॥

पूर्वपक्षं वाशब्देन निरस्यन् सिद्धान्तमाह। परिधौ यूपधर्मा आवेशयेरन् निवेशयेरन् क्रियेरन्। परिधौ यूपधर्माणामर्थवत्त्वात्। पशुबन्धनोपकारसाधने हि यूपधर्मा विधीयन्ते। मध्यमस्थूलपरिधिरपि पशुबन्धनोपकारसाधनम्। पशुबन्धरूपस्य अर्थस्य प्रयोजनस्य परिधौ अपि सत्त्वात्। संस्कारस्य यूपधर्मात्मकस्य परिधिसंस्कारस्य तदर्थत्वात् पशुबन्धनार्थत्वात्। तस्मात् परिधौ यूपधर्माः परिधिव्यक्तिसंस्काराः कर्तव्याः। उच्छ्रयणतक्षणादयस्तु न कर्तव्याः। इति सिद्धान्तः।

आख्या चैवं तदावेशाद् विकृतौ स्यादपूर्वत्वात्। ४२ ॥

परिधौ मध्यमे स्थूले यूपधर्माः कर्तव्या इत्युक्तम्। ननु एवं सति 'यूपायाज्यमानायानुब्रूहि' इत्यत्र 'परिधयेऽज्यमानायानुब्रूहि' इत्यूहोऽपि कर्तव्यः स्यात्। नेत्याह। नोहितव्यो भविष्यति। तदावेशात् यूपधर्मावेशात् परिधौ, एव आख्या च यूप इत्येव आख्याऽपि स्यात्। अपूर्वत्वात् यूपशब्दस्य संस्कारार्थत्वात् परिधावपि यूपशब्दो भवितुमर्हति। तथा च यथापठित एव प्रैषमन्त्रो भविष्यति नोहिष्यते। विकृतौ च विकृतावपि चातुर्मास्यपर्वणि प्रकृताविव परिधौ यूपशब्दो भविष्यति। अपूर्वत्वात् तदावेशाच्च एवं विकृतौ च आख्या स्यात् इत्यन्वयः। चकारो भिन्नक्रमः विकृतौ इत्यस्यानुपरिष्टात् संबध्यते विकृतौ अपि इत्यर्थः। तस्मात् परिधौ यूपधर्माः कर्तव्याः। इति सिद्धान्तः। के.

तदुत्सर्गे कर्माणि पुरुषार्थाय, शास्त्रस्यानतिशङ्क्यत्वान्न च द्रव्यं चिकीर्ष्यते, तेनार्थेनाभिसंबन्धात् क्रियायां पुरुषश्रुतिः। ४।१।३।३ ॥

'नेक्षेतोद्यन्तमादित्यम्' इत्यादीनि प्रजापतिव्रतरूपाणि कर्माणि क्रत्वर्थानि इति उक्ते पूर्वपक्षे सिद्धान्तसूत्रम्। तदुत्सर्गे इति तच्छब्देन पूर्वप्रकरणोक्ता प्रीतिर्निर्दिष्टा। नेक्षेत इत्यस्य नञः पर्युदासार्थकत्वं गृहीत्वा धातुना अन्वयः कर्तव्यः। एवं च नेक्षेत इत्यस्य अनीक्षणसंकल्पं कुर्यात् इत्यर्थः। तथा च तदुत्सर्गे तस्याः प्रीतेः उत्सर्गे अभावेऽपि कर्माणि अनीक्षणसंकल्पादीनि पुरुषार्थाय स्युः, न क्रत्वर्थाय। शास्त्रस्य पुरुषार्थताबोधकस्य 'तस्य व्रतम्' इत्यस्य अनतिशङ्क्यत्वात् अतिशङ्कनीयत्वाभावात्। शास्त्रे शङ्कनीयत्वाभावादित्यर्थः। ननु एवं पुरुषार्थत्वे फलकल्पनागौरवं प्रसज्येत इति चेन्न। शास्त्रस्य अनतिशङ्क्यत्वात्। एतावता हैनसाऽयुक्तो भवति इति वाक्यस्य 'एतावता अनीक्षणसंकल्पादिना हेतुना, एनसा पापेन अयुक्तो वियुक्तो भवति' इति पापक्षयलक्षणफलबोधकस्य वर्तमानापदेशरूपस्यापि अतिशङ्क्यत्वाभावात्। ननु अनीक्षणस्य पुरुषार्थत्वेऽपि क्रत्वर्थत्वमपि स्यादिति चेत् तत्राह- न च द्रव्यं चिकीर्ष्यते इति। द्रव्यं क्रतुसंबन्धि अनीक्षणादिभिः कर्मभिः न चिकीर्ष्यते न कर्तुमिष्यते न संस्क्रियते। ननु नेक्षेत इत्यस्य आख्यातस्य कर्तृवाचकत्वाभावेन पुरुषस्य उपस्थितेरभावात् कथमनीक्षणस्य पुरुषार्थत्वबोध इति चेत् तत्राह- तेनेत्यादि। तेन पुरुषार्थेन व्रतेन अनीक्षणेन पुरुषस्य भावनाऽऽक्षिप्तस्य अभिसंयोगात् कर्तृत्वेन संबन्धात् क्रियायामनीक्षणसंकल्परूपायां उपक्रमयता 'तस्य व्रतम्' इति तच्छब्दरूपा पुरुषस्य श्रुतिः उपपद्यते। तस्मात् प्रजापतिव्रतानि पुरुषार्थानि।

' अविशेषात्तु शास्त्रस्य यथाश्रुति फलानि स्युः । ४ ॥

पूर्वपक्षसूत्रम् । यदि प्रजापतिव्रतानि पुरुषार्थानि, तर्हि 'सगिधो भवति' इत्यादेः शास्त्रस्य प्रजापतिव्रतशास्त्रेण अविशेषात् तद्वदेव सगिधादौ अपि यथाश्रुति 'यत् प्रयाजानुयाजा इज्यन्ते वर्म वा एतद् क्रियते' इत्यादिश्रुत्यनुसारेण फलानि स्युः । न चेत्, न प्रजापतिव्रतान्यपि पुरुषार्थानि इति स्वीकार्यम् ।

अपिवा कारणाग्रहणे तदर्थमर्थस्यानभिसंबन्धात् । ५ ॥

' नोद्यन्तमादित्यमीक्षेत ' इत्यादीनि प्रजापतिव्रतानि न क्रत्वर्थानि किंतु पुरुषार्थानि इति प्रतिपादनार्थं सिद्धान्तसूत्रमिदम् । अपिवा इति पूर्वपक्षव्यावृत्तिः । कारणाग्रहणे प्रजापतिव्रतानां क्रत्वर्थत्वे प्रकरणादिलक्षणकारणस्य प्रमाणस्य अग्रहणे ग्रहणाभावे दर्शनाभावे सति तदर्थं पुरुषार्थमेव तद् व्रतजातं स्यात् । प्रमाणाभावाच्च प्रजापतिव्रतरूपस्य अर्थस्य क्रतुना अनभिसंबन्धात् संबन्धाभावात् । तस्मात् तानि पुरुषार्थान्येव, न क्रत्वर्थानि ।

तथा च लोकभूतेषु । ६ ॥

सिद्धान्तसाधकं सूत्रम् । लोकभूतेषु लोकसिद्धेषु कर्मसु प्रयोजनवत्सु उक्तेषु तत्संनिधौ यत् फलेन असंयुक्तं श्रूयते, तद् तदङ्गं विज्ञायते । 'स्नानं कुरु पाकं कुरु' इत्युक्ते स्नानं पाकार्थं इति ज्ञायते । केवलम् 'स्नानं कुरु' इत्युक्ते स्वतन्त्रकर्मत्वेन स्नानं ज्ञायते । तथा च लोकभूतेषु कर्मसु तथा ज्ञानात् प्रजापतिव्रतानि पुरुषार्थान्येव । के.

० तदेकदेशाग्रहणे आदितः प्रवृत्तिः । ( द्यावापृथिव्यैकैककपाले अष्टाकपालस्य प्रथमकपालत्रिष्वन्तस्य प्रवृत्तिः, आश्विनद्विकपाले आदिमकपालद्वयविष्वन्तस्य प्रवृत्तिः इतिरीत्या आदितः प्रवृत्तिः, अन्त्यस्य लोपः इत्यर्थः ) । चि. १०।५।१.

▪ तदेकदेशभूतं तद्ग्रहणेन गृह्यते इति न्याय. । तद्यथा– गङ्गा यमुनां प्रविष्टा, अनेका नद्यः गङ्गायमुनाग्रहणेन गृह्यन्ते, तथा देवदत्तस्य गर्भो देवदत्तग्रहणेन गृह्यते । 'यस्मात् प्रत्ययविधिः' (पा० १।४।१३) इति सूत्रभाष्ये अयं न्याय उक्तः । सांहसी. ६२९.

▪ ' तत्कर्मोपार्जितैस्तैस्तैः क्रियमाणेषु कर्मसु । कर्तृता यजमानानामृत्विक् परशुकर्मवत् ॥' इत्यात्मवादोक्तन्यायवार्तिकात् शरीरात्मनोः स्वस्वामिभावव्यवस्थानात् व्यवस्था । ( श्लोवा. आत्मवादे ७९ । स्वैस्तैः इत्यत्र श्रैतैः इति मूले पाठः ) । मु. पृ. १२०.

▪ ' तत्काल त्वावर्तेत, प्रयोगतो विशेषसंयोगात्' ( ११।३।११।२२ ) इति न्यायेन पञ्चदशरात्रे, ' या तावत् वसतीवरीग्रहणोत्तरकाला सुब्रह्मण्या, सा प्रतिदिवसं क्रियते ' । टुप्. ११।३।७।२२.

▪ तत्काल त्वावर्तेत, प्रयोगतो विशेषसंयोगात् । ११।३।११।२४ ॥

पूर्वाधिकरणे उपसत्कालीनसुब्रह्मण्याविषये उक्तम्, तद्वैलक्षण्यार्थमसूत्रम् । तत्काला प्रयोगकाला सुत्याकाला च सुब्रह्मण्या प्रत्यहमावर्तेत द्वादशाहे । प्रयोगतः प्रयोगेण विशेषतः संयोगात् ' अद्य सुत्यामागच्छ ' इति हि पठ्यते । तस्मात् आवृत्तिः इति सिद्धान्तः ।

अप्रयोगाङ्गमिति चेत् । २५ ॥

पूर्वपक्षी आह । सुत्याकालीना सुब्रह्मण्या अप्रयोगाङ्गं प्रयोगस्य अङ्गं न भवति । तस्मात् सा तन्त्रं स्यात् । ' अद्य सुत्यामागच्छ ' इत्यत्र ' अद्य ' इति अनक्षम, ' सुत्यामागच्छ ' इति तु तन्त्रेऽपि अबाधितम् ।

स्यात् प्रयोगनिर्देशात्, कर्तृभेदवत् । २६ ॥

सिद्धान्ती आह । सुब्रह्मण्यायाः स्यात्भेदः । प्रयोगनिर्देशात् ' अद्य सुत्यामागच्छ ' इति सुब्रह्मण्यामन्त्रे प्रयोगस्य निर्देशात् । प्रयोगस्य च प्रत्यहं भेदात् । कर्तृभेदवत्, साकमेधेषु दक्षिणे उत्तरे च विहारे कर्तृभेदे सति उत्तरविहाराङ्गानि देशभेदात् दक्षिणे विहारे नोपकुर्वन्ति, एवं प्रकृतेऽपि कालभेदात् पूर्वप्रयोगस्था सुब्रह्मण्या प्रयोगान्तरे नोपकरिष्यति । तस्मादावृत्तिः ।

तद्भूतस्थानादग्निवदिति चेत्, तदपवर्गस्तदर्थत्वात् । २७ ॥

पूर्वपक्षी शङ्कते । सुब्रह्मण्यायाः आवृत्तिर्न कर्तव्या । कुतः । तद्भूतस्थानात् । तेन तन्त्रत्वेनैव सुब्रह्मण्या-

कारणे । इदानीं किं सुत्याकालीनामङ्गानां नवनीतम्, उत सर्वेषामिति विचार्यते । तत्र पूर्वपक्षसूत्रमिदम् । अग्निष्टोमे तावत् अग्नीषोमीयसवनीयानुबन्ध्याः त्रयः पशवो विहिताः(?) । ते च श्येने चोदकेन प्राप्ताः । परन्तु ' सह पशूनालभते ' इति विशेषविधानात् तेषां साहित्यं भवति । तच्च साहित्यं सवनीयपशुकाले एव भवति । सवनीयपशुश्च सुत्यादिने भवति इति तत्रैव साहित्यम् । इदं साहित्यदर्शनमेव सूत्रोक्तं लिङ्गदर्शनम् । तत्काले श्येनकाले श्येनप्रधानकाले अर्थात् सुत्याकाले यानि श्येनाङ्गानि, तेष्वेव हविर्नवनीतं स्यात् । यथा पशुसाहित्यं सुत्याकालीनम्, तथा नवनीतमपि सुत्याकालीनम् ।

सर्वेषां वाऽविशेषात् । ४१ ॥

सिद्धान्तयति । न सुत्याकालीनानामेव अङ्गानाम्, किन्तु सर्वेषां असुत्याकालीनानामपि अङ्गानां स्यात् । वाशब्दः पूर्वपक्षनिरासार्थः । सर्वेषां कुतः । अविशेषात् विशेषप्रमाणाभावात् । सुत्याकालीनपशुसाहित्यरूपस्य सामान्यतोदृष्टरूपस्य लिङ्गस्य ' हविर्नवनीतमाज्यं भवति ' इति वाक्येन बाधितत्वात् । तस्मात् श्येने सर्वेषामङ्गानां आज्यस्थाने हविर्नवनीतं स्यात् ।

न्यायोक्ते लिङ्गदर्शनम् । ४२ ॥

अथ सिद्धान्ती सूत्रे । लिङ्गदर्शनं न्यायोक्ते न्यायगम्ये अर्थे बाधकं भवति । प्रधानप्रत्यासत्तिरूपात् पशुसाहित्य सुत्याकालत्वम् इति लिङ्गदर्शनं क्रमानुग्रहेण न्यायेन सिद्धे इति भवेत् । परन्तु नायं न्यायः हविर्नवनीते संभवति, प्रधानप्रत्यासत्तेरनपेक्षणात् । तस्मात् श्येने हविर्नवनीतं सुत्यातदितरकालीनसर्वाङ्गार्थमिति सिद्धान्तः । के.

तत्क्रतुस्तद्भवति इति न्यायस्य व्यभिचार शङ्क्यते । ( क्रतुः संकल्पः । सः क्रतुः यस्य सः । यो यस्य संकल्पं तत्र करोति स. तद्रूप. भवति इति तत्क्रतुन्यायादेव तदर्थः । ) । ४।३।६।१५ प्रभू.

तत्क्रतुन्यायः । ( ४।३।६।१५ प्रभू. ) एते च तत्तोपासने विशेषाणामनुवितर्नाये एव तत्क्रतुन्यायेन प्रत्यक्षश्रुतिविशेषविदां प्रवेशानाम् । निर्विशेषविदां तु न प्रवेशे । ( क्रतुः संकल्पो ध्यानमिति पर्यायः ।

जीवः इह जन्मनि यादृशं संकल्पं तात्पर्येण करोति, जन्मान्तरे तादृशं फलं लभते इति न्यायार्थः) । आभरणं. ३।३।१५।२६ प्रभू. ० अष्टानां वस्वादीनाम्, सवितृदेवतासम्पादीनां न सन्ति एकोपासनात् वह्न्यादिशरीरप्राप्तिफलकानि उपासनानि । तेषु यानि शरीरान्तरेऽप्यनुवर्तमानानि इन्द्रियाणि तान्येव तत्क्रतुन्यायादुपासनीयानि । परिमलः. २।४।२।१ प्रभू. ० सिद्धान्ते प्रतीकोपासकव्यतिरिक्तेषु तत्क्रतुन्यायात् विशेषसिद्धिः । न्यायनि. ४।३।६।१५ प्रभू.

तद्गुण उपलभ्यते इति न्यायः । अयं ' उच्चैस्तराम् ' ( पा० १।२।२९ ) इति सूत्रमहाभाष्ये उक्तः । ' तद्यथा द्वयोः रक्तयोर्वस्त्रयोर्मध्ये शुक्लं वस्त्रं तद्गुणमुपलभ्यते । बदरपिटके रिक्तको लोहकंसः तद्गुण उपलभ्यते ' इति । ( तस्य गुण इव गुणो यस्य स तद्गुणः ) । माहसी. ६१७.

तद्गुणसारत्वात् इति न्यायः ( २।३।२९ प्रभू. ) । अणुं विहाय केवलस्य जीवस्य व्यपदेशस्य तद्गुणसारत्वादिति न्यायसिद्धत्वात् । ( तस्याः बुद्धेः गुणाः इच्छाद्वेषादयः. सारः प्रधानं यस्य आत्मनः संसारित्वे संभवति, स तद्गुणसारः । आत्मनः तद्गुणसारत्वात् संसारित्वव्यपदेशः इति न्यायसूत्रार्थः. ) । आभरणं. ४।२।३।८ प्रभू.

तद्भद्गणाद्वा स्वधर्मः स्यादधिकारसामर्थ्यात् सहाङ्गैरव्यक्तः शेषे । ३।७।२३।५१ ॥ इति न्यायः ।

पूर्वाधिकरणसूत्रे अव्यक्तनिर्देशयुक्तसाग्निचयनकर्मधर्मपरामर्शेन सत्यपि चोदकप्राप्तानि अङ्गानि अविहत्य, वैकृतश्येनवचनप्रवृत्तेः अपिकारणं चोदकनिरोधं समभिवेत्य, प्रकृतवचनेन प्राकृतधर्मग्रहणात् भावनानां च धर्माणां चोदकप्राप्त्यैव नानाविकृतिषु अनाक्षेप इतः सत्रीयचोदकप्राप्तानामविकृतिषु पूर्वः श्येनादिः स्यात् । यत्तु तद्गणादिः सामान्यमात्रानिदेशात् अव्यक्तः कर्मा, स केवले प्रकृतधर्मेष्वनिर्देशः तत्तद्विशेषान्तरे अङ्गे श्येनादे भविष्यति इति विचारयिष्यते । सु.

'सप्रतिकाभावे भूतपूर्वगतिः' इति परिभाषा । ( शेखर. पृ. २७४ )

* तत्त्वेन अपरिज्ञातोऽर्थः अनुष्ठीयमानः विहन्ति अनुष्ठातारम् । ज्ञात्वा अनुष्ठितः निःश्रेयसेन संयुनक्ति । बृहती. पृ. १५.

* तद्देशानां वा संघातस्याचोदितत्वात् । ९।१।६।२५ ॥

'एतया वा एषा यज्ञस्य, तस्मात् यत्किञ्चित् प्राचीनमग्नीषोमीयात् तेनोपांशु चरन्ति' इत्युदाहृत्य, यज्ञभागधर्मो वा एतदुपांशुत्वम्, पदार्थधर्मो वा इति संविग्धे, यज्ञस्य फलत्वेन धर्मप्रयुक्तसामर्थ्यात् 'यज्ञस्य यत् प्राचीनम्' इति व्यवहितेनापि यज्ञशब्देन प्राचीनशब्दस्य अन्वयप्रतीतेः श्रुत्या च प्राग्देशवाचिनः प्राचीनशब्दस्य लक्षणया तद्देशपदार्थपरत्वायोगात् यज्ञभागधर्मत्वम् (इति) पूर्वपक्षयित्वा, प्राचीनशब्दस्य वीप्सा किञ्चिदिति किञ्चिच्छब्दसमभिव्याहृतयच्छब्दान्वयात् वीप्सायाश्च बहुविषयत्वेन एकस्मिन् देशे अनुपपत्तेः लक्षणया अग्नीषोमीयप्राग्देशपदार्थपरत्वस्यैव न्याय्यत्वात् पदार्थधर्मता इति सिद्धान्तयितुम् 'तद्देशानाम्' इति सूत्रे अङ्गप्रधानसंघातस्य यज्ञशब्दवाच्यत्वाभावात् तादृशप्रधानसंघातापेक्षया च प्राग्भाविनः अङ्गजातस्य यज्ञावयवत्वायोगेन प्राचीनयज्ञशब्दान्वयेऽपि अवयवव्यतिरेकजनितयज्ञपदानुपपत्तेः तद्देशस्थितस्य उपांशुत्वस्य अचोदितत्वात् न यज्ञभागधर्मता इति वक्ष्यते । सु. पृ. ७३०.

* तन्निर्धारणानियमाधिकरणे ( ३।३।१७।४२ ) पुरुषार्थत्वमङ्गोपास्तीनामुक्तम् । इह मन्त्रादि पुरुषार्थत्वे समुच्चये मान नेत्युच्यते । न्यायनि. ३।३।३६।६१ भा.. * तन्निर्धारणानियमाधिकरणे उद्गीथादिदृष्टीनां कर्माङ्गत्वाभावात् कर्मसु नियम इत्युक्तम् । आभरणं ३।३।३६।६१ न. सू., * कर्माङ्गसमभिव्याहृतपर्णतादिविषयकमिद वाक्यं ( यदेव विद्यया करोति- इति वाक्यम् ) तन्निर्धारणानियमाधिकरणे दर्शितम् । ४।१।५।६ ब्रह्.

§ विद्ये चोपास्तीनामृत्विक्फलत्वे तन्निर्धारणानियमन्यायेन स्वतन्त्रफलत्वसिद्धिः । न्यायनि. ३।४।४६ ब्र. सू. । तन्निर्धारणानियमसूत्रदृष्टेः पृथक् हि प्रतिबन्धः फलम् । ३।३।४२ ब्रस्. । यानि उद्गीथादिकर्मगुणयाथात्म्यनिर्धारणानि प्रणवः रसतमः आप्तिः समृद्धिः इत्येवमादीनि, नैतानि नित्यवत् कर्मसु नियम्येरन् । तद्दृष्टेः तस्य अनियतत्वस्य दृष्टेः श्रुतौ दर्शनात् 'तेनोभौ कुरुतो यश्चैतदेवं वेद, यश्च न वेद' इति । उपासनस्य कर्मणः सकाशात् पृथक् फलं हि यस्मात् उपलभ्यते अप्रतिबन्धः कर्मफलसिद्धेः प्रतिबन्धाभावजननं सा समृद्धिः अतिशयविशेषश्च कश्चित् । इति न्यायसूत्रार्थः । के.

§ तन्न्यायत्वाददृष्टोऽप्येवम् । १२।३।१।२३ ॥

यो मन्त्रो मन्त्रसमाम्नाये यैस्वर्येण दृष्टः तस्य तथैव प्रयोगः । यस्तु तत्र न दृष्टो ब्राह्मणेन च भाषिकेण स्वरेणोपदिष्टः, यथा 'इं दै प्रोद्दीद् वानस्पत्योऽसीति' इति तत्र कः स्वरः स्यात् ? उच्यते । तन्न्याय स्यात् योऽसौ न्याय उक्तः 'मन्त्रोपदेशोऽयं तद्रूपवाच्छब्दस्य' इति ( ११ सूत्रे ) तेनैव न्यायेन मन्त्राम्नाये अदृष्टोऽपि मन्त्रः मन्त्रोपदेशविषयत्वात् प्रावचनेनैव स्वरेण प्रयोज्यः । इति पूर्व. पक्षः ।

तदुत्पत्तेर्वा प्रवचनलक्षणत्वात् । २४ ॥

नैतत् । तदुत्पत्तेः तस्मिन् ब्राह्मणे मन्त्रस्य उत्पत्तेः प्रवचनलक्षणत्वात् प्रवचनमेव लक्षणं यस्य मन्त्रस्य स प्रवचनलक्षणः, तद्भावात् । भाषिकस्वर एव तस्य प्रवचनस्वरः । तस्मात् ब्राह्मणोत्पन्नानां मन्त्राणां भाषिकेण स्वरेण कर्मणि प्रयोगः इति सिद्धान्तः । के.

§ तत्परातत्परविरोधे तत्परं बलवत् । ( सविशेषवस्तुपरत्वा निर्विशेषपरत्वं प्रकाराः च पदनामानां बहुत्वेऽपि ब्रह्मणो निर्विशेषत्वमेवेत्यर्थः ) इति न्यायः नियामकः । ( तत्परस्य अतत्परस्य च वाक्ययोर्विरोधे तत्परं बलवत् अतत्परस्य तु अन्यथा नयनम् इत्यर्थः ) । न्यायनि. ३।२।५।१४ ब्रसू.

* तत्पुरुषः समासः अन्तोदात्तः । वि. ३।२।११. * तत्पुरुषात् कर्मधारयो बलीयान् इति निषादस्थपत्यधिकरणन्यायः । बाल. पृ. ९३. * तत्पुरुषात् बहुव्रीहेः तत्परमहीयान्मित्यन्द्रपीताधिकरणे इत्याचार्योदयः । मणि. पृ. ८४६, * तत्पुरुषात् । अधिकरणतत्पुरुषात् समानाधिकरणतत्पुरुषो ज्यायान् यथा निषाद-

अग्निकार्यत्वं प्रवृत्तिविशेषकरत्वं चानुरुद्धं भवति इति गुणविधानमेवेति । एवं प्राप्ते , अभिधीयते । भवेदेवं यदि अग्निहोत्रपदं अग्नये होत्रमस्मिन् इति व्युत्पत्त्या चतुर्थीसमासेनैव परिनिष्ठितं स्यात् , किन्तु अग्नेर्होत्रम् , अग्नौ होत्रम् , इति षष्ठीसप्तमीसमासयोरपि संभावितत्वात् संदिग्धार्थमग्निहोत्रपदं न विधेयीभूताग्निदेवतासमर्पकं भवति । संभवति तु कुण्डलिकात्मत्वात् प्राप्तमग्निदेवताभूतं प्रवृत्तिनिमित्तीकृत्य होमविधौ नामधेयीभवितुम् , इति तदर्थं वाक्यान्तरमपेक्षते । अस्ति च मन्त्रवाक्यं वाक्य-विनियुक्तम् ' अग्निर्ज्योतिर्ज्योतिरग्निः स्वाहेति सायं जुहोति ' इत्यग्निदेवतासमर्पकम् । अतस्तत्प्राप्तमेवाग्निं निमित्तीकृत्य अग्निहोत्रपदं नामधेयमिति तदवच्छिन्न एव होमो विधीयते, न त्वन्यः गुणो विधीयते । ननु पूर्वपक्षी प्रातर्होमे गुणविधिं मन्यते दर्विहोमे वा । प्रातर्होमे तावत् मन्त्रवर्णादग्निदेवताप्राप्तिर्न सिद्धान्तिनोऽभिमता निर्देवताकत्वप्रसङ्गात् । नापि दर्विहोमे , तस्य दूरस्थत्वेन मन्त्रसंबन्धाभावात् । अतः कथं तत्प्रख्यशास्त्रबलेन अग्निहोत्रपदस्य नामत्वमिति । उच्यते । न वयं यत्र पूर्वपक्षवाद्यभिमतो गुणविधिः , तत्रासौ अन्येन प्राप्त इति , किन्तु यस्य गुणस्य उपादानसामर्थ्यात् धात्वर्था-नुरक्तत्वे विधिः, अतो धात्वर्थविधानेव शास्त्रान्तर-प्राप्तोऽपि । नामप्रवृत्तिनिमित्ततयैनानुवदितुं शक्यते , किं श्रुतिपरित्यागेनेति । अयमेव तन्त्रवार्तिकाशयार्थः । तदुक्तम् ' विधित्सितगुणप्राप्तिशास्त्रमन्यद् यतस्त्विह । तस्मात् तत्प्रापणं व्यर्थमिति नामत्वमिष्यते ॥ ' इति ( वा. पृ. ३३४ । ' प्राप्ति शास्त्र ' इति वार्तिके पाठः ) । अत एव नायं गुणविशिष्टहोमविधिः । तदुक्तम् ' विधीयतां विशिष्टं चेत् कर्मोत्पत्त्यैव विकल्प्यते । न चेदन्येन शिष्टाः स्युस्तत्प्रख्यं चेति चोत्तरम् ॥ ' ( वा. पृ. ३३५ ) । अतः ' अग्नि-होत्रं जुहोति ' इत्येतद्वाक्यं नामावच्छिन्नकर्मोत्पादकमेव , न तु प्रातर्होमे , न च दृष्टदर्विहोमे , नापि विशिष्ट-विधिना देवताविधायकमिति । न च ' यदग्नये च ' इति वाक्यद्वयमेव होमविधायकमिति वाच्यम् । असंदिग्धा-नन्यलभ्यगुणविशिष्टत्वेन विशिष्टविधियोग्यत्वेऽपि होमविधान-



संभवात् । किन्तु अग्निहोत्रवाक्यप्राप्तहोमानुवादेन गुण-विधायकमेव । तत्रापि प्राप्ते कर्मणि अनेकगुणविधाना-संभवात् अग्निसूर्ययोश्च मन्त्रवाक्यप्राप्तत्वात् सायंप्रातः-कालयोश्च ' सायं जुहोति ' ' प्रातर्जुहोति ' इति वाक्यद्वय-लभ्यत्वात् प्रजापतिरेव एको देवतात्वेन वाक्यद्वये विधीयते , अन्यत् सर्वमनूद्यते इति ।

तथा ' आघारमाघारयति ' इत्यत्रापि आघार्यते इति व्युत्पत्त्या आघारणयोग्यं अनिर्दिष्टविशेषं गव्यादि द्रव्यमेव प्रतीयते । अतः संदिग्धार्थमाघारपदं अग्नि-होत्रपदमिव नोपांशुयाजविषयीभूताघारद्रव्यविशेषसमर्पकं संभवति । द्रव्यविशेषावगत्यर्थं च प्रकरणनिरोधगो ' उपलूषन् अभिघारयन् आज्यस्यैव यजन् ' इति वाक्य-बलेन ' सर्वस्मै वा एतद्यज्ञाय गृह्यते यद् ध्रुवायामाज्यम् ' इत्यनेन वा विशेषप्राप्ती तस्यामेव असंदिग्धार्थोऽप्य वाचकत्वेऽपि उपांशुयाजे द्रव्यविशेषप्राप्ते, एतद्विधानं अर्थादेव संदिग्धार्थत्वादेव आघारपदस्य आघार्यद्रव्य-विशिष्टमाघारणं विधीयते इति संभवति । तथा ' चतुर्गृहीतं वा एतदभूत् तस्याघारमाघार्य ' इत्यनेनैव आज्यद्रव्यप्राप्तेः तद्विधानवैयर्थ्यं च । तदुक्तम् ' विधित्सितगुणप्राप्ति ' इति । संभवति च आघारणाकारः इति आघारशब्दस्य कर्मनामधेयत्वम् । अतः तदवच्छिन्नमपि कर्मैव विधीयते । तस्य कर्म ' इन्द्र ऊर्ध्वोऽध्वर इत्याघारमा-घारयति ' इति मन्त्रविनियोगप्रदर्शनात् लब्धेन्द्रदेवता-संबन्धम् । तथा चतुर्गृहीतवाक्यप्राप्तद्रव्यसंबद्धं सत् समस्तमेव आघारनामधेयं दर्शपूर्णमासाङ्गमिति अवधार्यते इति ।

प्रयोजनम्—पूर्वपक्षे प्रातर्होमस्य दर्विहोमस्य वा अग्निदेवतात्वम् । सिद्धान्ते नेति । सूत्रं तु— तत्प्रख्यं तत्प्रापकं अग्निहोत्रपदेन आघारपदेन च यद्विधानं तद्विधायकमिति यावत् । अन्यशास्त्रं शास्त्रान्तरं चेदस्ति तेनानयोर्नामधेयत्वमेवेति । तौता. १।४।४।४.

तत्प्रख्यं चान्यशास्त्रम् । १।४।३।४ ॥

' अग्निहोत्रं जुहोति ' ' आघारमाघारयति ' इति अग्निहोत्रशब्दः आघारशब्दश्च किं गुणविधिः , उत कर्मनामधेयमिति विचारे सिद्धान्तमाह । विधेयतया स्तो

सर्वदार्विहोमेषु अविदितदेवताकेषु विधास्यति वाक्यसामर्थ्यात् । तथा आघारयते इति आघारः इति क्षारणसमर्थं द्रव्यं आज्यपयःप्रभृति अभिधीयते । तच द्वितीयानिर्देशात् क्षारणक्रियासंस्कार्यत्वेन अप्यवसीयमानं अनुपयुज्यमानसंस्कारानुपपत्तेः प्रयोजनमपेक्षते । धर्ममात्रं चास्य क्षारणं शब्दार्थमात्रापवर्गित्वात् नाशेषक्षारणं करोति । कस्मिन् देशे केन किं कर्तव्यम् । इति भवत्यपेक्षा । लोकेऽपि च द्रवद्रव्याणां क्वचित् पानादौ उपयोक्ष्यमाणानां दैव क्षारणसंस्कारं कुर्वन्ति । तेन अभिधानसामर्थ्यपूर्वीकृत्य अध्याहृतफलवत्समस्त्य संस्कार्यं द्रव्यं कर्मनामाभिलषति । प्रकरणवशेन दर्शपूर्णमासप्रधानानि उपपद्यते । तथापि च आग्नेयादीनां विहितद्रव्यकत्वात् उपांशुयाजः केवलः साकाङ्क्षः इति तादर्थ्यं प्रतिपद्यते । आह च 'श्रुतसंस्कारसंबन्धं मुख्यैर्दर्व्यासमागमम् । अन्यथा तदयोग्यत्वात् प्रकृतैरपीति संगतिम् ॥' अथवा यत् 'करोति' इति प्रत्ययार्थमात्रं साकाङ्क्षत्वादेव उपांशुयाजभावनामनूद्य आघारद्रव्ये वाक्येन विधीयमाने तत्प्रख्यत्वादेव धात्वर्थः प्राप्तः अनूद्यते । प्रोक्षणस्येव वा तस्य क्षरणात्मकत्वे विद्यते क्षरणसमर्थेऽप्याज्यपयःप्रभृतिविधिं मन्यते । न च धात्वर्थादेव सिद्धेः नाम्ना प्रयोजनम् । न च संस्कारकर्माणि क्वचित् नामवन्ति दृश्यन्ते ।

'श्रुत्यैव गुणो विधीयते' इति ( भाष्यम् ) । द्वितीयाश्रुत्यैव संस्कार्यत्वात् अव्यक्तं क्वचित् अस्य गुणत्वमित्ययमभिप्रायः । अत्रोच्यते । 'विधित्सितगुणत्वापि शास्त्रमन्यद् यतस्तव । तस्मात् तत्प्रापणं व्यर्थमिति नामत्वमिष्यते ॥' ( तन्त्रवार्त्तिके— ) अत्र गद्यम्, 'सायंहोमे यदि भूयादाघारे च परो विधिम् । ततः शास्त्रान्तरप्राप्तेर्विधिः स्याद्निष्प्रयोजनः ॥ यदा त्वदेवते होमे देवताविधिरुच्यते । द्रव्यं चोपांशुयाजस्य तदा तत्प्रख्यता कथम् ॥' उच्यते । 'विधिश्चेदग्निहोत्रं स्यात् ततोऽस्य विपर्ययेण । निवेशः प्रकृते वा स्याद् गुणेऽप्रकृतेऽपि वा ॥ अग्निहोत्रेण संबन्धे श्रुतेऽन्येन प्रयत्नतः । अग्निहोत्रपदे स्पष्टमनुवादत्वलक्षणम् ॥ अनूद्यापि धात्वर्थं गुणः सर्वो विधीयते । न चानुवादः प्रकृतात् कर्मणोऽन्यत्र लभ्यते ॥ प्रकृतं चेदनूद्यायं गुणो होमे विधीयते । तत्र तत्प्रख्यताऽन्यत्र न विधित्सापरिग्रहात् ॥ न च धात्वनुवादोऽत्र कथञ्चिदुपपद्यते । प्रकृताप्रकृताभावात् तस्मात् कर्म विधीयते ॥ सायमूर्ध्वादिसंयुक्तैर्गुणो वाक्यैर्विधीयते । शुद्धं न श्रूयते कर्म प्रकृतं नास्ति तेन तत् ॥ दूरस्थस्यानुवादश्च व्यवधानान्न युज्यते । तस्य शुक्लावनारोहात् कौण्डपायिनहोमवत् ॥ विधीयतां विशिष्टं चेत् कर्मेत्येवं विकल्प्यते ( अन्यथा पूर्वपक्षो स्यादिति भावः ) । न चेदन्येन शिष्टाः स्युस्तत्प्रख्यं चेति चोत्तरम् ॥ न चतुर्थीसमासस्य लक्षणं चात्र विद्यते । न च तेन विना शक्या देवताविधिकल्पना ॥ यः कश्चिदेव संबन्धः षष्ठीवत्तु ततो भवेत् । अनुवादेऽन्यतः सिद्धे कथ्येताप्यथवा सवत् ॥ विधानेऽप्यत्र संबन्धो भवेत् परपदार्थयोः । प्रत्यक्षेऽपि तेनैव वह्निनैव विधीयते ॥ एकदेशेऽपि च ज्ञानान्नानुवादोऽवगच्छति । आघारस्यापि संबन्धः क्लेशेनोपांशुकर्मणा ॥ सामानाधिकरण्यं च नाध्यासेनेह कर्मणः । विस्पष्टं द्रव्यनामत्वं न चाऽऽघारस्य गम्यते ॥'

वा— अथोच्यते 'वाक्यार्थो न विधातव्यो धात्वर्थविधिसंभवे । पदान्तरं न चानन्यगतिनामत्वसंभवात् ॥' (प्रभाकरास्तु—"प्रवृत्तिहेतुभूतकार्याभिधाने लिङादीनां व्युत्पत्तिः । प्रवृत्तिहेतुत्वं च निष्कामभर्योऽपि, कार्यसामान्यज्ञाने प्रवृत्त्यदर्शनात् । एवं च विशेषतः कार्यप्रतिपत्त्यर्थं अवच्छेदकापेक्षायां धात्वर्थः अवच्छेदकतया संबध्यते । यद्यपि धात्वर्थः साक्षात् कार्यमवच्छेत्तुं न क्षमते, तथापि 'यागकृतिसाध्यमपूर्वम्' इत्येवं कृत्यवच्छेदद्वारा कार्यं अपूर्वमवच्छेत्तुं शक्नोति, इति धात्वर्थः अवच्छेदकत्वेन संबध्यते । अवच्छेदकत्वमेव विषयत्वम्, इति धात्वर्थस्य यागादेः लिङाद्यर्थे कार्ये प्रतिसंबन्धिकतया विषयत्वेनान्वयः । तथा कार्ये कृतिसाध्यं भाव्यं इति पर्यायः । तस्य भाव्यस्यापूर्वस्यानुष्ठाता या कृतिः, सा भावने उच्यते ।

सा च क्रियात्वात् करणत्वेनैवानुपपन्ना, इति श्रुति-साध्यत्वस्य कार्यस्य स्वनिष्पत्तये स्वसाधनार्थेन्द्रियश्रुति-रूपभावनानुगुणेन करणापेक्षायां धात्वर्थ एव तत्रानु-पस्थितेन करणतयाऽपि संबध्यते । यदुद्देश्यस्वरूपनि-ष्पाद्यं हि करणम् । संभवति च धात्वर्थस्य अपूर्वो-द्देश्यत्वस्वरूपस्तिसाध्यस्य करणत्वमिति । तस्मात् धात्वर्थो विषयतया करणतया च अन्वीयते" इति वदन्ति ।

तन्मतं निरस्यति—) एतेन (धात्वर्थस्य करणतया साध्य-तया चान्वयनिरसनेन) ये धात्वर्थस्य विषयतया करण-त्वेन चान्वयं मन्यन्ते, ते निरस्ताः । विषयभूतेन हि कथं करणवाचिनां नामधेयानां सामानाधिकरण्यम् ? आर्थिकेन करणत्वेन सामानाधिकरण्यमिति चेत्, साध्यत्वमपि तर्हि आर्थिकमस्ति, इति गुणविधिरपि विनैव मत्वर्थलक्षणतया, विना च वैरूप्येण स्यात्, इति समस्त-मेव नामधेयप्रतिपादनमनुपपन्नं स्यात् (यद्यपि तन्मते करणत्वमौपादानिकम्, न त्वार्थिकं इत्यस्ति वैषम्यम्, तथापि करणत्वं विना अनुपपद्यमानो विधिरेव साध्यत्वं विना करणत्वानुपपत्तेः साध्यत्वमपि आक्षिपेत्, । नि साध्य-त्वमपि औपादानिकं स्यात्, इति साम्यमिति भावः )। अथ विषयत्वद्वारेण करणपर एव शब्दः ततः अन्य-परेण शब्देन तदाक्षेपत्वेनोपात्तं विषयत्वं न शब्दार्थः स्यात्, अतत्परत्वात् (शब्दान्तराधिकरणे नैमित्तिकस्य शब्दार्थत्वानुपपादनात् विशेषणत्वात्)। अथ शब्द एव प्रथम विषयतया अभिधाय पुनः करणतयाऽपि अभिधत्ते, कथं सकृदुच्चरितो द्विरभिदध्यात्, अभिधाने वा साध्यत्व-मपि पुनरभिदधीत, नहि नियामकमस्ति 'द्विरेवाभिधत्ते, न त्रिः' इति, 'सकृत् प्रवृत्तायाः किमवगुण्ठनेन' इति न्यायात् । ततश्च गुणविधिरपि स्यात् इत्युक्तम् । अतः करणत्वेनैवान्वयो वाच्यः, न विषयत्वेन इत्यास्तां तावत् ।

कथं द्वितीयाश्रुतिनिर्देशः ('आघारमाघारयति' 'अग्निहोत्रं जुहोति' इत्यत्र) इति वक्तव्यम् । तदुच्यते । अस्ति तावदार्थिकं धात्वर्थस्य साध्यत्वम्, अन्यथा तस्य करणत्वानुपपत्तेः । अतः साध्यत्वसाधनत्वयोद्वयोः एकार्थ-समवायात् साध्यताभिधायिनी द्वितीया साधनतयैव लक्षयन्ती धातुसामानाधिकरण्यं प्रतिपद्यते इत्यविशेषः ।"

सोम— इह गुणविधित्वेऽपि न वाक्यभेदः इत्यु-पपादनात् संगतिः । सूत्रार्थस्तु— तस्य विधित्सित-गुणस्य प्रख्यं प्रापकं अन्यत् शास्त्रं यत्र, तदपि नामधेयं स्यात् इति ।

वि—'अग्निहोत्रं जुहोत्याघारमाघारयतीत्यम् । विधेयो गुणपर्यवसानशाहोऽपि स्यात् कर्मनामनी ॥, अग्नये होत्रमथेति बहुव्रीहिरसोऽन्ततः । गुणो विधेयो नामत्वे कथं न स्यात् तदप्युते ॥, इष्टिकयाऽऽघारमाघारयतीयुक्ता द्वितीयया । आघारैर्यामि होत्रेति यौगिके कर्मनामनी ॥ अग्निर्ज्योतिरिति प्राप्तो मन्त्राद् देवतया गुणः । चतुर्गृहीतवाक्योक्तं द्वितीयावर्शिष्यं गतिः ॥ नामाविते हि धात्वर्थे करणार्थं ततोऽस्य ता । साधनां बर्हिषि संस्कारो नैतदाश्रया क्रियालतः ॥'

भाट्ट—इह रूढाना यौगिकानां वा संभवत्प्रामिकानाम् 'अग्निहोत्रं जुहोति' 'आघारमाघारयति' 'समिधो यजति' इत्यादौ अग्निहोत्रादिपदानां गुणविधानम्, कर्मनामधेयत्वं वेति विचारात्, यद्विहगुणविधिलनैव युक्तम् । न च वाक्यभेदः, विधेयानेकत्वाभावात् । अग्निहोत्रपदे 'अग्नये होत्रमस्मिन्' इति व्युत्पत्त्या उपलक्षणार्थः अग्निर्देवता विधीयते ; न च 'यदग्नये च प्रजापतये च सायं जुहोति' इत्यनेन तस्याः प्राप्तत्वविधानम्, तत्राग्नेः गुणोपादानेन विधिकर्मान्तरविधेयत्वसंभवत्वात् एतद्वाक्यविहितकर्मणि तदप्राप्तेरभावात् । अतो यत्र दर्शहोमादौ आग्नेयो मन्त्रः पठितः, तद्दर्शहोमानुवादेन देवतासामानेन विधीयते । न च तेन तत्प्राप्तिसंभव., मान्त्रवर्णिकविधेः अकल्पनीय-त्वात् । विशिष्टकर्मान्तरं वा । आघारपदेऽपि द्वितीयान्ता-घारपदेन क्षरणसाधनाज्यादिद्रव्यमभिधीयते । धातुना क्षरणरूपः संस्कारः तदुद्देशेन विधीयते, अविनियुक्तस्य संस्काराभोगात् । प्रकरणकल्पितवाक्येन उपांशुयाजाङ्गतया द्रव्यस्य विधीयते । 'चतुर्गृहीतं वा एतदभूत्, तस्याघार-माघार्य' इत्यनेन प्रधानाङ्गभूतचतुर्गृहीतविशेषणमर्पणम् । तथा आघारपदं द्रव्यपरम्, [redacted] नामधेयम् । इति प्राप्ते, मन्त्रवर्णेनस्यविधिनैव प्राप्तिसंभवे अस्य पूर्वप्रवृत्तविधि-

वैफल्यापत्तेः । अभ्युदयशिरस्कत्वस्य च संभवति प्रथमविध्यापादकपाठत्वेनैवो अभ्यास्यत्वात् न तावत् दर्वीहोमानुवादेन देवताविधिः । नापि विशिष्टकर्मान्तरविधिः 'अग्निर्ज्योतिर्ज्योतिरग्निः स्वाहा' इति वचनेन विनियुक्तमन्त्रवर्णेनैव देवताप्राप्तेः । 'यदग्नये च प्रजापतये च सायं जुहोति, यत् सूर्याय च प्रजापतये च प्रातः' इत्यत्र सायंप्रातःकालीनदेवतासमुच्चयविशिष्टप्रजापतिमात्रविधानम् । अत एव यथैव केवलदेवत्याग्न्यादिवत्केवलज्योतिर्देवताकम्, तथा 'अग्निर्ज्योतिर्ज्योतिः सूर्यः स्वाहेति सायं जुहोति, सूर्यो ज्योतिर्ज्योतिरग्निः स्वाहेति प्रातः' इति भिन्नलिङ्गकमन्त्रवर्णात् भिन्नाणामपि तत् ( देवतात्वम् )। ततश्च 'यदग्नये च' इति वाक्यस्याग्निसूर्यपदं सायंप्रातःकालीनदेवतालक्षकम् । सायंप्रातःकालपदं तात्पर्यमात्रकम् । चशब्दोपस्थितसमुच्चयस्य प्रजापतौ अन्वयस्य निपातोपसर्गार्थत्वेन व्युत्पन्नत्वात् न विधेयानेकता । अतश्च अग्निदेवतावादिना अग्निहोत्रहोमे प्राप्तत्वात् अग्निहोत्रहोमे 'अग्नेर्होत्रः' इति व्युत्पत्त्या नामधेयम् । एतत्प्रकारेऽपि उपांशुयाजे 'सर्वस्मै वा एतद् यज्ञाय गृह्यते, यद् ध्रुवायामाज्यम्' इत्यनेनैव द्रव्यस्य प्राप्तत्वात् प्रयाजोद्देशेन संस्कारविधाने द्वितीयविधिप्रकारापत्तेः प्राप्तत्वात् भावव्युत्पन्नमाघारपदं नामधेयम् । विधेयश्च धातुलक्ष्यो होम एव । 'इन्द्र ऊर्ध्वोऽध्वर इत्याघारमाघारयति' इति मान्त्रवर्णिकेन्द्रदेवतायाः, 'चतुर्गृहीतं वै' इत्यनेन द्रव्यस्य च लाभात् । एवं समिदादिष्वपि वक्ष्यते । सर्वत्र द्वितीया करणत्वलक्षणार्था इति न विरोधः ।

मण्डन— 'अग्निहोत्रवदं नाम ।'

शंकर— 'तत्प्रख्यन्यायतो नाम ।' ४.

* तत्प्रख्यन्यायस्तु कर्मान्तरसिद्धपूर्वतरकर्मणः सैमव-अपि तन्तः पूर्वमनुपस्थितेन नामधेयत्वबोधकः । कौ. २।२।८।२१ पृ. २५०, * एकदेशप्रवृत्तिनिमित्तेनापि तत्प्रख्यन्यायेन नामधेयत्वोपपत्तिः वैश्वदेवाधिकरणे वक्ष्यते । १।४।४।४ पृ. २१०, * 'न प्रवृत्तिनिमित्तमपि तत्प्रख्यन्यायेन संपादनीयम्' इति नियमः किंतु तत्र सहकारिसहकृतस्य शुद्धस्य वा गुणविध्यसंभवसंपादकत्वमात्रम् । १।४।११।१४ पृ. २५१, * नामधेयत्व च ( वैश्वदेवशब्दस्य ) उत्पत्तिशिष्टगुणावरोधसहकृतेन तत्प्रख्यन्यायेन गुणविध्यसंभवसंपादनद्वारा स्वापादितप्रवृत्तिनिमित्तसंपादनद्वारा वा अवगन्तव्या, न तु शुद्धेन तत्प्रख्यन्यायेनैव । १।४।११।१४ पृ. २५०, * ( 'विश्वदेवशब्दस्य कर्मणामपि देवताविशेषरूढिं परित्यज्य विश्वशब्दस्य सर्वशब्दपर्यायत्वाङ्गीकारेण प्रकृतसर्वविषयत्वमात्रात् देवशब्दस्य च देवतापरत्वमङ्गीकृत्य प्रकृताग्न्यादिसर्वदेवतावत्त्वस्यैव अष्टस्वपि यागेषु प्रवृत्तिनिमित्तत्वमङ्गीक्रियते' इति पक्षे ) तावत्यं तत्प्रख्यन्यायस्य नामत्वपर्यवसानव्यापारोऽभ्युपगन्तव्यः । १।४।११।१४ पृ. २५१, * न च सत्राया अपि प्रकृते ( समित् तनूनपात् इ० ) तत्प्रख्यन्यायसिद्धत्वेन अभ्यासस्य यागविध्यधीनत्वाभावात् इति वाक्यम् । प्रकृतोदाहरणेऽपि तत्प्रख्यस्य (तत्प्रख्यन्यायस्य) गुणविधिमात्रप्रतिबन्धकत्वात् । २।२।२।२ पृ. १५०. 32614

* तत्प्रख्यन्यायस्वरूपम्— 'वाक्यार्थो ■ विधातव्यो धात्वर्थविधिसंभवे' इति । शा. १।४।४.

* तत्प्रख्यन्यायस्वरूप 'विधिविहितगुणतापि शास्त्रमन्यद् यतस्त्विह । तस्मात् तत्परं व्यर्थमिति नामत्वमिष्यते ॥' इति । वा. १।४।३।४ पृ. ३३४.

( अथ ये पदार्थाः तत्प्रख्यन्यायेन साध्यन्ते, ते पदार्थाः वर्णक्रमानुसारेण स्थूलाक्षरैर्निर्दिश्यन्ते । न तु बिन्दूनामाद्याक्षरक्रमेण )।

* 'अथैषोऽग्निमग्निहोत्रेणानुयन्ति' अत्र अग्निपदस्य कर्मपरत्वं गम्यते । अस्ति च आहवनीयप्राप्त्या तत्प्रख्यन्यायः । पूर्वपक्षे । कौ. २।३।१०।२१ पृ. ९५, * अग्निशुत्पदम् 'आग्नेयीषु स्तुवते' इति वचनात् अग्निदेवत्यमन्त्रसाध्यस्तोत्राङ्गकत्वात् तत्प्रख्यन्यायेन नामधेयम् । २।२।१२।२६ पृ. २७८.

* तत्प्रख्याधिकरणे अग्निहोत्रस्य अग्निपूर्वमात्रप्रधानदेवत्यत्वस्य निरूपितत्वात् । कु. ३।४।२।११, * तत्प्रख्यन्यायेन अग्निहोत्रादिशब्दाः नामधेयानि । १।४।१२। १५. * 'अग्निहोत्रं जुहोति' इत्यस्योत्पत्तिविधित्वम् 'दध्ना जुहोति' इत्यादीनां च गुणविधित्वमुक्तमिति चेत् सत्यम् । अग्निहोत्रं जुहोतीत्यत्र यद्यपि रूपं

श्रुतिषु सर्वासु अनाकारमेव ब्रह्मावधार्यते न पुनर्विपरीत मिति। शांभा. ३।२।५।१४ मसू.

* तत्प्रयुक्तत्वं तत्प्रयोजनकत्वम्। मु पृ. १३७९.

* तत्प्रवृत्तिर्गणेषु स्यात् ( ८।१।८।१५ ) इति अष्टमाधिकरणे प्राजापत्येषु एकादशिनीविध्यन्तातिदेशस्य वक्ष्यमाणत्वात् तस्य न्यायस्य विषयागविधकत्वात्। सु पृ. ८१३.

¶ तत्प्रवृत्तिर्गणेषु स्यात् प्रतिपशुयूपदर्शनात्। ८।१।८।१५ ॥

ऐकादशिनेषु पशुषु प्रत्येकं भिन्नो यूपो भवति। गणाः अथ पशुगणा विचिन्त्यन्ते। ' वसन्ते लम्भमाम् त्रीन् यूपानालभते ' इति ' मैत्रं श्वेतमालभेत वारुणं कृष्णमपां चौषधीनां च सन्धौ अन्नाद्यकामः ' इति नैवमादयः। अत्रापि ' यत् त्रिषु यूपेषु आलभेत बहिर्धा अस्मात् इन्द्रियं वीर्यं दध्यात्, भ्रातृव्यमस्य जनयेत्, एकयूपे आलभेत ' इति यूपभित्त्व प्रतिषिध्य एकं यूपं चोदना विदधाति। अन्यत्र तु पशुगणेषु प्रतिपशु यूपो भिद्यते। चोदनान्यामपि यूपभेदस्य प्राप्तिर्दर्शितैव। तथा च पशुगणेषु ऐकादशिनेषु च प्रतिपशु यूपभेदः इत्यत्र लिङ्गम्। एष च प्रतिपशु ये यूपाः ते प्रतिपशुयूपाः। प्रतिपशुयूपानां दर्शनं प्रतिपशुयूपदर्शनम्। प्रतिपशुयूपदर्शनात् लिङ्गात् गणेषु पशुगणेषु तत्प्रवृत्तिः तस्य ऐकादशिनपशुविध्यन्तस्य प्रवृत्तिः स्यात्। एवं च पशुगणानां ऐकादशिनाः पशवः प्रकृतिः। के.

■ तत्प्रवृत्त्या तु तन्त्रस्य नियमः स्याद्, यथा पाशुकं सूक्तवाकेन। १२।२।१५।३५ ॥

तस्य प्रवृत्त्या आग्रयणे द्यावापृथिव्यस्यैककपालस्य यत् प्रस्तरं बर्हिः, तस्य प्रवृत्त्या वैश्वदेविकस्य तन्त्रस्य नियमः स्यात्। यथा पाशुकं तन्त्रं सूक्तवाकेन सूक्तवाकस्य प्रैषेण वैशेषिकेण ' अग्र गुनागुनी यजमानः ' इत्यनेन नियतं तद्वत्। तस्मात् आग्रयणे द्यावापृथिव्यमेव तन्त्रं स्यात् इति पूर्वः पक्षः।

न वाऽविरोधात्। ३६ ॥

आग्रयणे वैश्वदेविकस्य तन्त्रस्य द्यावापृथिव्येन तन्त्रेण न नियमः स्यात्। वाशब्दः पूर्वपक्षव्यावृत्त्यर्थः। भवि रोधात् सपुष्पबर्हिषु धर्मः इतरेषामपि हविषां नैव विरुद्धः। तेन नासौ वैशेषिकः। तस्मात् तेन इतरेषां नियमः इति सिद्धान्तः।

अशास्त्रलक्षणत्वाच्च। ३७ ॥

आग्रयणे द्यावापृथिव्ये एककपाले 'सपुष्पं बर्हिः' न शास्त्रलक्षणं किन्तु चोदकप्राप्तम्। शास्त्रं लक्षणं प्रापकं प्रमाणं यस्य तत् शास्त्रलक्षणम्। तदभावः अशास्त्रलक्षणम्। अशास्त्रलक्षणत्वात् न तेन वैश्वदेविकैककपालस्य तन्त्रस्य नियमः। चकारः समुच्चयार्थः। ऐन्द्राग्नैककपालस्यापि संभवात् इति। तस्मात् द्यावापृथिव्यानुरोधेन न वैश्वदेविकतन्त्रस्य नियमः इति सिद्धान्तः। के.

* तद्भूतानामित्यत्र ( १।१।७।२५ ) न पदानां समुदायः प्रमापकः इत्युक्तम्। भा. ५।१।४।५, * तद्भूतानामित्यत्र पदार्थो वाक्यार्थस्य मूलम्, नास्य पृथक् सिद्धिरस्ति इत्युक्तम्। १०।७।१।२१ * तद्भूतानां क्रियार्थेन समाम्नाय इत्यत्र वेदर्थे येषां शब्दानामौत्पत्तिकः संबन्धः, तेष्वर्थेषु वर्तमानानां शब्दानां सर्वकारकान्वितक्रियारूपवाक्यार्थे प्रमाणत्वोक्त्या प्रत्येकश्रुतिरूपाणां पदकारकविभक्त्यात्मकानां शब्दानां प्रकृतिप्रत्ययात्मस्वरूपे क्रियाऽन्वितकारकरूपे चार्थे प्रामाण्याभिधानात् लिङ्गस्य विनियोजकत्वं सिद्धम्। सु. पृ. ११९०.

* तद्भूताधिकरणम्। वाक्याधिकरणमिदम्। भा. १।१।७।२४–२६. * तद्भूताधिकरणेन सूत्रप्रपञ्चितेन करणासंभवात् धर्मप्रमितिर्नाकि चोदनानामाशङ्क्य पदार्थैकवाक्यप्रतिपादकत्वेन चोदनाप्रामाण्यमेवोपपादितम्। वाल. पृ ७ * श्रुतेर्विनियोजकत्वे तद्भूताधिकरणेनैव सिद्धः। भाट्ट. ३।१।४ पृ. १८६. * तद्भूताधिकरणे आम्नायवििशिष्टभावनारूपक्रियाप्रतिपादकत्वेन प्रामाण्यस्य स्थापितत्वात् (आम्नायस्य)। कौ. १।२।१।१ पृ. ६. * तद्भूताधिकरणे आम्नायस्य वेदस्य क्रियाऽर्थत्वात् किं केन कथं इत्येवं पत्तसाधनेति कर्तव्यताकामगादधिकारविशिष्टपुरुषप्रवृत्तिरूपभावनाप्रतिपादनार्थत्वावधारणात्। कु. १।२।१।१. * तद्भूताधिकरणे

पदार्थानेकत्वात् पदद्वयस्य च पदार्थातिरिक्तैकार्थवाचितायाः निरस्तत्वात् पदद्वयपरत्वानुदाहार्यत्वञ्च । सु. पृ. ६८४. ● तद्भूताधिकरणे श्रुतिवाक्ययोः अविरुद्धत्वमुक्तम् ( श्लोवा. १।१।७।२४७-२४८ ) ( तथा श्रुतिप्रकरणयोरविरोधः ) । वा. ३।२।८।२१ पृ. ७७५. ● तद्भूताधिकरणे श्रुतिवाक्ययोः क्रियाऽन्वयबोधकत्वप्रतिपादनात् । वी. ३।१।४।७. ● यत्तु 'अवस्थादिपरः प्रत्ययोऽपि भावनां वहति' इति, तुल्यं धातुप्रत्ययपदयोरप्येतत्, क्वचित् व्यभिचारस्य चोक्तमुक्तं तद्भूताधिकरणे । वा. २।१।१।१ पृ. ३८१, ● यत्तु नित्यमेव व्यक्त्याकृत्योरविभागः तस्मात् व्यक्तिरभिहिता सती शक्नोत्येव आकृतिं गमयितुम् । तदुक्तं तद्भूताधिकरणे 'यस्य तु पदस्य योऽर्थोऽभिधेयत्वेन आश्रितः, तस्य तत्परिहारसंभवात् तदव्यभिचारार्थान्तरं लाक्षणिकत्वेन अभ्युपगन्तव्यमिति' ( इदं पूर्वपक्षे ) । २।३।३।१० पृ. ३०१, ● श्रुतिवाक्ययो तद्भूताधिकरणे स्वरूपेण विनियोजकत्वस्य उक्तत्वात् । वी. ३।१।४।१२ पृ. १२९. ● सैन्धवग्रहणमनपेक्ष्यैव आकाङ्क्षादिमतां पदार्थानां वाक्यार्थप्रतीतिजनकत्वसंभवेन समूलत्वात् अस्ति प्रामाण्यं इत्येवं तद्भूताधिकरणे स्थापितेः... । सोम. १।२।१. ● यत्तु 'संबोधने तूशनसस्त्रिरूपं सान्तं तथा नान्तमथाप्यदन्तम् । माध्यन्दिनिर्वष्टि गुणं त्विगन्ते नपुंसके व्याघ्रपदां वरिष्ठ ॥' इत्याद्यन्वाख्यानविधानम्, 'सम्बुद्धौ च' 'न ङिसम्बुद्ध्योः' इति तद्भूताधिकरणोक्तेन न्यायेन स्वरूपाणां सान्तनान्तादिरूपाणां भेदात् अविरुद्धम् । ■ पु ३२३.

● यथा भावनाऽन्वयात् प्राक् कस्यचित् वाक्यार्थान्वयो न संभवति, तथा 'तद्भूताधिकरणोक्तेन मार्गेण' इत्यादिवार्तिकेन ( ३।३।५।१६ पृ. ८०२ ) उक्तम् । सु पृ. ७७०.

● तद्भूताधिकरणवार्तिके 'अयमेव विशेषश्च कथ्यते पदवाक्ययोः । यथैवाकाङ्क्षानुबन्धे प्रकृतिप्रत्ययार्थयोः । ( वाक्याधिकरणे ) ३५५ ॥ दृष्टा यथा हि साकाङ्क्षा. पदार्थाः केवलाः क्वचित् । स्वातन्त्र्येण गृहीताश्च विशिष्टार्थावबोधकाः । ३५६ ॥ प्रकृतिप्रत्ययौ नैव कदाचिदुपलक्षितौ । ( कदाचिदपि लक्षितौ इति मूले पाठः ) ३५७ ॥' इति वैषम्यस्य उक्तत्वात् न वाक्यभागपदार्थवत् पदभागप्रकृतिप्रत्ययार्थानामपि आकाङ्क्षादर्शनपूर्वकान्वयावगतिः । सु. पृ. १४०६, ● तद्भूताधिकरणवार्तिके सर्वेषां कारकाणां स्वव्यापारेषु कर्तृत्वस्य उक्तत्वात् । पृ. १४५३.

※ तद्देशानां कर्मणोऽभ्यासः इति न्यायः । पशुसोमाधिकरणस्य सूत्रमिदम् । मी. २।२।६।१९. ● तद्देशानां कर्मणोऽभ्यासः ( २।२।६।१९ ) इत्यनेन न्यायेन यागाभ्यासमात्रात् प्रकृतिभेदोऽवगति । सु पृ. ९४४.

※ तन्मध्यपतितस्तद्ग्रहणेन गृह्यते इति न्यायः वैयाकरणानाम् । प्रत्याहार उदाहरणम् । तथा दीक्षणीयायां मारुतयो आग्नाविष्णवोन्तरा गम्यस्थाः सर्वा देवतास्तृप्यन्ति । ऐत्ब्रा. १।१।३. ● तन्मध्यपतितस्तद्ग्रहणेन गृह्यते । ९० परि० । 'तदेकदेशभूतं तद्ग्रहणेन गृह्यते' इति येन विधिरिति सूत्रे भाष्ये पाठः । शेखरः । तन्मध्यपतितन्यायस्य तत्तद्धर्मारोपप्रयोजकत्वम् । तथापि स्वरूपाग्राहकत्वाभावः । भूतिः परि० १२ । ● तन्मध्यपतितं तद्ग्रहणेन गृह्यते । तदर्थस्यैक वाक्यत्वावगमात् बोधकत्वमात्रपरत्वम् । तस्य च तन्मध्यपतित विषयौ इत्येतदपि लाक्षणिकम् । कल्पतरु. ३।३।२३।१४ प्रभृ. ● स्थानिवद्भावेनैव तन्मध्यपतितन्यायेन तदनुवृत्तेन कार्यसङ्गमनात् अकृत्रिमपक्षे कार्यं स्यात. ( निर्दिश्यमानस्यादेशा भवन्ति इति ) । शेखरः पृ. ७२ । ( नेदमदसोरकोः इत्यत्र- ) तन्मध्यपतितन्यायेन अकज्विशिष्टे पद शास्त्रविषयतायाः पर्याप्त बोधत्वेन तत्र निर्दिश्यमानत्वसत्त्वात् । ( भूति पृ. ७२ ) । 'अन्ताद्यन्तौ'तिसूत्रे अन्तग्रहणेन तन्मध्यपतितन्यायेन आद्यन्तग्रहणे सिद्धे तदैयर्थ्यापत्तिः स्यात् । ( भूति. पृ. ७२ ) । तन्मध्यपतितन्यायतोऽपि निर्दिश्यमानत्वमस्ति इत्यत आह ■ 'किमः कः' ( पा० ७।२।१०३ ) इति कादेशविधानमेव । अत एव 'किम, कादेशविधानं साकच्कार्थं' इति भाष्य संगच्छते । तत्त्वप्रकाशिका पृ. ७८. ● हिनस्ति—अत्र अम् तन्मध्यपतितस्तद्ग्रहणेन गृह्यते इति न्यायात् धातुग्रहणे नकारेकारः

उदात्तः । ततः परस्य स्वरितत्वम् । सि. कौ. धातुस्वरेषु सुबोधिनी ॥ तद्विशेषोद्देश्यतानिरूपितविधेयता-ऽऽश्रयतन्मध्यपतितस्यैव तद्‌ग्रहणेन ग्रहणम्, न तु तन्मध्यपतितत्वमात्रेण । अन्यथा जनं जरतीति जनयः इत्यत्र नशब्दस्य जरा इत्येतदक्षरद्वयमध्यपातित्वेन जराशब्दग्रहणेन ग्रहणापत्तौ जरसादेशापत्तेः । अत एव 'अन्तात्यन्त' इति सूत्रे (पा० ३।२।४८) अत्यन्तग्रहणं चरितार्थम् । अन्यथा अन्तग्रहणेन तन्मध्यपतितन्यायेन अत्यन्तग्रहणे सिद्धे तद्‌ग्रहणवैयर्थ्यापत्तेः । भूतिः पृ. ७२. ॥ तन्मध्यपतितन्यायस्य लोकसिद्धत्वप्रतिपादकेन गर्भिणीभ्यो गर्भो गर्भिणीग्रहणेन गृह्यते, गङ्गास्थो घटो गङ्गाग्रहणेन गृह्यते इत्यादिलौकिकव्यवहारप्रदर्शनपरेण भाष्यग्रन्थेन पतितपदस्वारस्येन च उक्तन्यायेन तत्तत्सोपरसत्ताकः तन्मध्यपतित एव तद्‌ग्रहणेन गृह्यते, न तु तदुद्देश्यतानिरूपकोऽपि । भाष्योक्तलौकिकव्यवहारे उद्देश्यताया अप्रवेशात् । इत्यादि केचित् । भूतिः पृ. ७३-७४, ॥ तन्मध्यपतितन्याये तन्निष्ठोद्देश्यताया अपर्याप्ताया उद्देश्यताऽवच्छेदकतावारणविषयताया वा ग्रहणेन उक्तसूत्रस्य (अन्तात्यन्त० ३।२।४८) चारितार्थ्यात् । इत्यादि केचिदाहुः । पृ. ७३. ॥ पूर्वोत्तरसाहचर्यविधाभावाद्वर्णानात् तन्मध्यपातिनोऽप्यपि तद्ग्रहणम् । न्यायनि. ३।३।२९ अम्.

※ तद्युक्तं च कालभेदात् । १०।१।८।२७॥

सोमे दीक्षाकाले रात्रिजागरणमाम्नातं दर्शपूर्णमासयोरपि औपवसथ्ये अहनि एकोपाधाम्नातम् । तत् प्रणीतास्वपि चोदकेन प्राप्यते । तेषां तन्त्रमध्यपातात् दीक्षाकालेन जागरणेन प्रसङ्गसिद्धौ प्राप्तायां सिद्धान्त उच्यते । तद्युक्तं दीक्षायुक्तं च जागरणं न दार्शिकं प्रसज्यते । कालभेदात् । यदि तावत् पशूनां रक्षणाय अप्रमादार्थं ततो दीक्षाकालेषु रक्षितेषु नेतराणि रक्षितानि भवन्ति इति तद्रक्षणार्थं प्रणीतासऽऽदिषु उपवसथकाले भेदेन कर्तव्यम् । अथापि अदृष्टार्थम्, तथापि औपवसथ्ये गार्हिभिता, इति निमित्तप्राप्तौ नैमित्तिकं कर्तव्यम् । तस्माद्भेदेन कर्तव्यं इति सिद्धान्तः । के.



॥ तद्युक्ते तु फलश्रुतिरक्ष्मस्याद् गर्भेभिकीर्षा स्यात् । (३।७।३।९) इत्यत्र 'षट्‌त्रिंशत्प्रक्रमा प्राची' इत्यादिवाक्यविहिता वेदिः दाक्षुसोमयागार्थत्वेनोक्ता । सु. पृ. ६३६.

※ तद्वचनाद् विकृतौ यथाप्रधानं स्यात् । ५।१।१०।१७ ॥

अध्वरकल्पायामिष्टौ 'आग्नावैष्णवमेकादशकपालं निर्वपेत् अभिचरन्, सारस्वत्याज्यभागा स्यात्, बार्हस्पत्यश्चरुः' इति हविस्त्रयं श्रूयते । तत्र बार्हस्पत्यस्य आग्नेयविकारस्य धर्माः पूर्वं कर्तव्याः, उत उपांशुयाजविकारस्य सारस्वतस्य इति विचारे पूर्वपक्षमाह सूत्रम् । विकृतौ अध्वरकल्पायां धर्मानुष्ठानं यथाप्रधानं प्रधानक्रममनुसृत्य स्यात् । तद्वचनात् तस्य प्रधानक्रमस्य वचनात् । प्रत्यक्षः प्रयोगवचनः चोदकात् बलवान् इति भावः । तथा च आदौ सारस्वतस्य पश्चात् बार्हस्पत्यस्येति पूर्वः पक्षः ।

विप्रतिपत्तौ वा प्रकृत्यन्वयाद् यथाप्रकृति । १८ ॥

पूर्वपक्षं वाशब्देन निरस्य सिद्धान्तमाह । विप्रतिपत्तौ मुख्यक्रमस्य अङ्गक्रमस्य च विरोधे सति यथाप्रकृति प्रकृतिमनतिक्रम्य धर्माः कर्तव्याः । प्रकृत्यन्वयात् प्रकृतौ तथैव अन्वयात् सम्बन्धात् । तस्मात् आदौ बार्हस्पत्यस्य आग्नेयविकारस्य, पश्चात् सारस्वतस्य उपांशुयाजाज्यविकारस्य । चोदकः प्रयोगवचनाद् बलवत्तर इति भावः । के.

※ तद्‌द्रव्य देवतायां स्यात् । १०।८।१६।४९ ॥

दर्शपूर्णमासयोः उपांशुयाजे यद्वत् हविर्द्रव्यवत् देवतायामपि यथाक्रमतः स्यात् । 'तावद्गतामग्नीषोमौ' इति वाक्यं तु पुराकल्पसम्बन्धोऽर्थवादः न विधिरूपः । इति पूर्वः पक्षः ।

यान्त्रीणां वा, प्रकरणात् । ५० ॥

उपांशुयाजे न देवताया अनियमः सर्वथा । किन्तु प्रकरणात् याज्ञीया दर्शपूर्णमासतन्त्रभावात् देवताना-मन्यतमा स्याद् देवता । इति सिद्धान्तः । वाशब्देन पूर्वपक्षनिरासः । के.

● 'संदर्धे देवताया स्यात्' इत्यादि विचार्य 'विष्णुर्वा०' इत्यादिना मान्त्रवर्णिकत्वं जैमिनिराह- विपश्चित् । या. २।२।४।१० पृ. ४९५.

※ तद्वत् सवनान्तरे ग्रहाम्नानम् । ३।६।९। ३८ ॥

अग्निष्टोमे प्रातःसवने ऐन्द्रवायवमैत्रावरुणादयः दश सोमग्रहा आम्नाताः, माध्यंदिने सवने शुक्रामन्थिनौ आग्रयणः इत्यादयः एकादश ग्रहाः, तृतीयसवने च आदित्यः आग्रयणः इत्यादयः पञ्च ग्रहाः । ग्रहधर्माश्च ग्रहे सादनं दशापवित्रेण संमार्जनमित्यादयः प्रातःसवने एव आम्नाताः । तत्र माध्यंदिनीयेषु तार्तीयसवनीयेषु ग्रहेषु ग्रहधर्मा भवन्ति न वा इति संदेहे, भवन्ति इति सिद्धान्तप्रतिपादनार्थं सूत्रमिदम् । सवनान्तरे प्रातःसवनात् अन्यत् यत् माध्यंदिनं तृतीयं च सवनम्, तत्रापि यत् ग्रहाणामाम्नानम्, तत् तद्वत् प्रातःसवनीयग्रहाम्नानवत् ग्रहधर्मविशिष्टमेव ज्ञेयम् । प्रकरणाविभागात् इति हेतुपदं पूर्वसूत्रादनुवर्तते । सवनत्रयगतानामेव ग्रहाणामग्निष्टोम-प्रकरणं समानम् । तस्मात् ग्रहधर्माः सर्वग्रहार्थाः । 'तद्वत् दोहधर्मवत् सवनान्तरेऽपि ग्रहाम्नानं ग्रहधर्माम्नानं सर्वार्थम्' इति तु कुतोचिन्त्या व्याख्यातम् । के.

● तद्वर्जं तु वचनप्राप्तेः ( ३।६।१।३ ) । अनारभ्यविधिना विकृतिष्वपि प्राप्तिरग्न्यादिधर्मैः तद्वर्जं प्रकृतिविकृत्यर्थं वे द्विरुक्तत्वप्रसङ्गस्य असिद्धत्वमिति भाष्टा । सु. पृ. १२७७.

● तद्विकारत्वं नाम तद्धर्मग्राहित्वम् । के.

● तद्विशिष्टशब्दे तद्विशिष्टाभिधानं हेतुः । तेन लक्षणाऽवच्छेदकेऽपि लक्षणा इति नव्याः । भाषि. पृ ७६.

※ तत्प्रख्यं च । १।४।५।५ ॥

'अथैष श्येनेनाभिचरन् यजेत' 'अथैष संदंशेनाभिचरन् यजेत' 'अथैष गवाऽभिचरन् यजेत' इति समाम्नायते । तत्र गुणविधिः कर्मनामधेयमिति संदेहः । उद्भिदधिकरणे चित्राधिकरणे च सांविज्ञानिकानां नामधेयत्वं निरूप्य पुनः यौगिकानामेव उदाहरणविशेषे गुणविधित्वाशङ्का निराकृत्य इदानीं सांविज्ञानिकानामुदाहरणविशेषे गुणविधित्वाशङ्का निराक्रियते । अथायं पूर्वोत्तरपक्षोऽभिप्रायः । यथा 'पञ्चदशान्याज्यानि' इत्यत्र सांविज्ञानिकानामपि आज्यादिपदानां 'आज्यैः स्तुवते' इति प्राप्ते स्तोत्रे पञ्चदशसंख्याविधाने, तथा आज्यद्रव्यविधाने च वाक्यभेदापत्तिभिया नामधेयत्वम् । इह तु श्येनादिवाक्यैः प्राप्ते कर्मणि अनेकगुणविधानाभावात् श्येनपक्षिविशिष्टेन कर्म अभिचाररूपे फले विधीयते । न चैवं सति 'श्येनवता यागेन अभिचारं भावयेत्' इति वाक्यार्थाभिव्यक्तेः मत्वर्थलक्षणादोषः, यागनामधेयत्वेऽपि श्येनशब्दस्य प्रवृत्तिनिमित्तत्वात् मत्वर्थलक्षणादोषेण लक्षणादोषस्य समत्वात् । किञ्च मत्वर्थलक्षणा हि मत्वर्थस्य पदात्प्रत्यक्षयन्या, यतो वाक्यवेलायां मत्वर्थलक्षणा भवन्ती न श्येनपदस्य श्रौतस्वार्थपरित्यागेन अर्थान्तरपरत्वमापादयति, किन्तु स्वार्थापरित्यागेनैव तद्वत्तामात्रं बोधयति । नामलक्षणा तु पदार्थबोधवेलायामेव श्येनसादृश्येन सदृशे कर्मणि अर्थान्तरे पदं प्रवर्तयन्ती श्रौतार्थपरित्यागेन मत्वर्थलक्षणातो जघन्येति । तदुक्तम्

'मत्वर्थो वाक्यवेलायामेकभाव्यवशाद्भवेत् ।
इयार्थं पदवेलायां गृह्यमाणोऽतिदुर्बलः ॥'

( भा. पृ. ३१६ ) । एवं च सति प्रसिद्धार्थत्वं अधिकार्थत्वं प्रवृत्तिनिमित्तत्वं नानुरुद्धं भवति इति गुणविधानमेव । इत्येवं प्राप्ते, अभिधीयते । भवेदेवं विशिष्टविधिना श्येनस्य गुणविधानं यदि सादृश्यप्रतिपादकस्यार्थवादस्योपपत्तिर्न भवेत् । एवं खलु अर्थवादः श्रूयते 'यथा वै श्येनो निपत्यादत्ते एवमयं द्विषन्तं भ्रातृव्यं निपत्यादत्ते यमभिचरति श्येनेन' इति । अत्र हि विधेयस्य श्येनसादृश्येन स्तुतिरवगम्यते, भेदाधिष्ठानं च सादृश्यम् । न च पक्षिरूपश्येनविधाने भेदाभावात् सादृश्यनिबन्धना स्तुतिः संभवति । तदुक्तम् 'विधेयं स्तूयते वस्तु भिन्नयोपमया सदा । नहि तेनैव तस्यैव स्तुतिस्तद्वदितीष्यते ॥' इति । ( वा. पृ. ३३६ ) । संभवति तु श्येननामधेययागविधाने पक्षिरूपश्येनसादृश्येन स्तुतिः । एतदेवार्थवादोपदर्शितं निपत्यादानरूपं सादृश्यं नामधेयप्रवृत्तिनिमित्तं च । अत एवात्र सादृश्यलक्षणा भेदानुमि(म)कत्वात् मत्वर्थलक्षणातो

स्वरूपतो जघन्याऽपि भवन्ती न दोषमावहति। किञ्च गुणविधाने सति न केवलं मत्वर्थलक्षणा, किन्तु अर्थवादोपदर्शितसादृश्यनिबन्धनस्तुतिसिद्धये काल्पनिकं भेदमाश्रित्य मत्वर्थलक्षणाऽपि अवश्याङ्गीकरणीया। अतो नामधेयत्वमेवेति।

एवम् 'संदंशेनाभिचरन् यजेत' इत्यत्रापि सादृश्यप्रतिपादकोऽर्थवादः श्रूयते 'यथा संदंशेन दुरादानमादत्ते' इति। एवम् 'गवाऽभिचरन् यजेत' इत्यत्रापि श्रूयते 'यथा गावो गोपायन्ति' इति तेन एतयोरपि कर्मनामधेयत्वमेवेति।

प्रयोजनम्— पूर्वपक्षे श्येनपक्षिणा यागो निर्वर्तयितव्यः, सिद्धान्ते तु अतिदिष्टद्रव्येणेति।

सूत्रं तु 'तद्व्यपदेशम्' तेन प्रसिद्धेन श्येनादिना सादृश्यनिबन्धनोऽर्थवादे व्यपदेशो यस्य तदपि कर्मनामधेयमिति। तौता. १।४।५।५.

तद्व्यपदेशं च। १।४।५ ॥

'श्येनेनाभिचरन् यजेत' 'संदंशेनाभिचरन् यजेत' 'गवाऽभिचर्यमाणो यजेत' इति श्रूयते। श्येनः संदंशः गौः इति पदं किं गुणविधायकं कर्मनामधेयं वा इति विचारे सिद्धान्तमाह। 'नामधेयं स्यात्' इति 'अभ्यासकम्' इति चानुवर्तते। यस्मात् तद्व्यपदेशं अभ्यासकम्, तस्मात् नामधेयं स्यात् इत्यन्वयः। 'यथा वै श्येनो निपत्याऽऽदत्ते एवमयं द्विषन्तं भ्रातृव्यं निपत्यादत्ते यमभिचरति श्येनेन' इत्यत्र 'श्येनेन अभिचरन्' इति निर्दिष्टस्य श्येनपदार्थस्य 'यथा श्येनो निपत्य आदत्ते' इति श्येनः पक्षी उपमानतया निर्दिष्टः। एवम् 'संदंशेन यजेत' इति निर्दिष्टस्य संदंशपदार्थस्य 'संदंशेन दुरादानमादत्ते' इति वाक्ये आहारग्राहकः आयसः संदंशः (चिमटा इति भाषा) उपमानमुपात्तम्। एवम् 'गवा यजेत' इति गोपदार्थस्य 'यथा गावो गोपायन्ति' इति वाक्ये गौः उपमानत्वेनोपात्तः। 'सादृश्यमुपमा भेदे' इति च आलंकारिकैः उपमा भेदघटिता उक्ता। तस्मात् उपमेयभूताः श्येनसंदंशगोपदानि कर्मनामधेयमेव न गुणविधायकम्। इत्याशयार्थस्तु तस्मात् निपेत येन अभिमनात् श्येनादेः व्यपदेशः भेदेनाभिधानं यस्मिन्, तत् तद्व्यपदेशं शास्त्रे अन्यत् विद्यते। तस्मात् श्येनादिपदं कर्मनामधेयम्। इति।

अत्र सुधा— सौत्रं तच्छब्दं यस्मिन् गुणोपदेशे श्येनत्वस्थानिर्दिष्टविधित्सितगुणपरामर्शिनमभिप्रेत्य निशब्दं च भेदवाचिनमङ्गीकृत्य तेन विधित्सितेन श्येनादिरूपेण गुणेन भिन्नार्थतया व्यपदेशः संकीर्तनं न यस्य श्येनादिपदस्य तदपि नामधेयं इति नामधेयपदानुवृत्त्या सूत्रं योजितम् इति।

श्येननामधेयेन संदंशनामधेयेन गोनामधेयेन च यागेन भावयेत इति श्रुतिवाक्यार्थः। के.

तद्व्यपदेशन्यायः। श्येनसंदंशादिपदं यागविशेषनामधेयम्॥

तद्व्यपदेशं च। १।४।५ ॥

भाष्यम्— 'अथैष श्येनेनाभिचरन् यजेत' 'अथैष संदंशेनाभिचरन् यजेत' 'अथैष गवाऽभिचरन् यजेत' इति समाम्नायन्ते। तत्र गुणविधिः, कर्मनामधेयमिति संदेहः। प्रसिद्ध्यादिभिः पूर्वपक्षः उद्भिदादीनामिव। ते तु उद्भिदादयः क्रियानिमित्ताः शक्नुवन्ति यागं वदितुम्। इमे पुनः जातिनिमित्ता न शक्नुवन्ति। तेन गुणविधयः इत्येवं प्राप्ते। एवं प्राप्ते, ब्रूमः। तद्व्यपदेशं च। तेन श्येनादिना प्रसिद्धेन यस्य व्यपदेशः, तत् कर्मनामधेयम्। श्रुतिर्हि नामधेयत्वे, लक्षणा गुणविधौ। यत्तु जातिशब्दा इमे न यागमभिवदन्तीति, सादृश्यव्यपदेशात् अभिवदिष्यन्ति। एवं हि व्यपदेशो भवति, 'यथा वै श्येनो निपत्यादत्ते, एवमयं द्विषन्तं भ्रातृव्यं निपत्यादत्ते यमभिचरन्ति श्येनेन' इति। निपत्य आदत्ते इत्यनेन सादृश्येन श्येनशब्दो यागे, यथा सिंहो देवदत्तः इति। तस्मात् कर्मनामधेयम्। संदंशे 'संदंशेन यथा दुरादानमादत्ते' इति, गवि 'यथा गावो गोपायन्ति' इति। तस्मात् संदंशशब्दोऽपि कर्मनामधेयं गोशब्दोऽपि।

वा— 'अथैष ज्योतिः' इत्यादिरनुदाहरणम्। तेषां तृतीयानिर्देशाभावात् गुणविधित्वानुपपत्तेः। तेऽपि च शाखान्तरेषु यदा तृतीयानिर्देशं प्रतिपद्यन्ते, तदा

विचार्यन्ते । अथवा प्रथमानिर्देशेन द्रव्यपरौ मत्वर्थप्रत्ययौ पश्चात् तत्सामानाधिकरण्याच्च संपद्येते, इति एतेऽपि उदाहरणमेव । तत्र तैरेव प्रसिद्ध्यादिभिर्गुणविधिः । न चात्र कर्मणि प्रवृत्तिनिमित्तं किञ्चिदस्ति । मत्वर्थोपादानेन कर्मणि प्रवृत्तौ च मत्वर्थलक्षणा गौणता स्यात् । तत्र वर मत्वर्थलक्षणा । तावती हि प्रकीर्णा अन्यत्वविनाभावात् स्वसाध्यां क्रियां अवक्लेदेन प्रतिपादयति विनैव मत्वर्थेन । किञ्च 'मत्वर्थो वाक्यवेलायामेकवाक्यवशाद् भवेत् । स्वार्थः पदवेलायां गृह्यमाणोऽतिदुर्बलः ॥' गुणविधिपक्षे हि स्वार्थपरित्यागेनैव श्येनपदं तदनन्तरमुत्तरकालं लक्षयति । आरम्भोत्पत्तिकाले तु स्वार्थेनैव निर्युज्यते । गवतस्तु श्येनार्थानुपयोगात् आदित एव तादर्थ्यविवक्षया पदं प्रवृत्तमित्युपगमात् श्रुतिबाधप्रसङ्गः । तदुच्यते 'विधेयं स्तूयते वस्तु भिन्नयोपमया सदा । नहि तेनैव तस्यैव स्तुतिस्तद्वदितीष्यते ॥' श्येनादिनामधेयेषु हि 'यथा वै श्येनो निपत्य आदत्ते, एवमयमपि' इत्युपगमात् न स्तुतिर्दर्शने । तथा च विधीयमानस्य भवितव्यम् । गुणविधाने च श्येनद्रव्यं विधीयते, इति तदेव स्तोतव्यम् । न च तस्य आत्मनैव उपमान युक्तम् । भगोऽपीव आत्मत्वेन युक्तो स्तुतिर्भवति आनन्त्याद्व्यभिचरितत्वात् । यथा 'रामरावणयोर्युद्धं रामरावणयोरिव' इति । भवति हि लोके व्यावर्णितः अपमाऽऽदिगत्वमेवसाधितः प्रत्ययमपि स्तुतिः संभवति, भेदे न युक्ता । (श्रुतिर्हि नामधेयत्वे, लक्षणा गुणविधौ इति भाष्य गम्यगुणार्थमनुपपद्यमिति मत्वा अन्यथा व्याचष्टे—) नामधेयत्वे तु यागदैवस्य द्रव्यश्येनोपमोपपत्तेः आञ्जस्यम् । इतरथा हि द्वौ मत्वर्थप्रत्ययौ कल्पयितव्यौ, काल्पनिकश्च भेदः इति गौरवम् । न च यागस्तुत्या तद्धितद्रव्यस्तावकत्वमाकल्प्यते, याग विधेः अनिराकृतत्वात् । अभिधेयगता हि स्तुतिः अन्यत्र संचार्येत, यागस्तु स्वयमेव विधिभाक् अत इति न द्रव्यं स्तूयते विधीयते वा । पुनरपि च यागेन द्रव्यलक्षणात् विप्रकृष्टता, तदभिव्याहाराच्च द्रव्यवदेव यागस्तवनत्वं मुख्यम् । विधौ च तत्र लक्षणा, मतानुवादे । गुणवचने स्याश्च मतुब्लोपः स्मर्यते (तदस्यास्त्यस्मिन् इति पाणिनिसूत्रे 'गुणवचनेभ्यो मतुपो लुक्' इति वार्तिकम्) न द्रव्यवचनेभ्यः । इतरथा तु पदान्तरस्य परत्र प्रयोगात् स्वयमेवोपजायते । मत्वर्थलक्षणा च स्वयं कल्पनीया, स्तुतस्तु मत्वर्थः 'यथा वै श्येनः' इत्यादिना । पूर्वोक्ताश्च षट्सु पाठार्थमन्यपदिष्टकर्माश्रयो दोषा वक्तव्याः ।

शा— इह रूढशब्दा एव वाक्यभेदरहिताः तद्व्यपदेशस्य उदाहरणम् । (अत्र तद्व्यपदेशशब्दः औत्सानुकरणम् । सूत्रे च तच्छब्देन 'यस्मिन् गुणोपदेशः' इति प्रकृतो गुणो निर्दिश्यते । वि–शब्दश्च मिथ्यार्थकः । ततश्च तस्मात् विधेयत्वाभिमतात् गुणात् व्यपदेशः भेदेन निर्देशः) । ५.

सोम— सूत्रार्थस्तु— तस्य गुणस्य व्यपदेशो यस्मिन् श्येनादिपदे, तदपि नामधेयं स्यात् इति ।

वि— 'श्येनेनाभिचरन् यजेतेति श्रुतो गुणः । विधीयते पक्षिरूपो नाम उभय कर्मणः ॥, श्येनेनेति गुणः काम्यः सौमिकः सोमबाधया । न विभावद् वाक्यभेदो लक्षेष्वनुग्रहः ॥, यथा वै श्येन इत्युक्ता गुणमात्रोपमेयता । नैकस्मिन् तेन गौण्याऽस्य वृत्त्या स्यात् कर्मनामता ॥' ५.

भाट्ट— 'श्येनेनाभिचरन् यजेत' इत्यादौ पूर्वोक्तबाधकाभावात् प्रसिद्धेः श्येनादिपदानां गुणविधिरेव । प्रकृतसोमयागाश्रितो गुणः फलोद्देशेन विधीयते विशिष्टकर्मान्तरं वा । शेषम् 'यथा वै श्येनो निपत्यादत्ते, एवमयं द्विषन्तं भ्रातृव्यं निपत्यादत्ते' इत्यर्थवादे स्वार्थैव स्तोत्रमात्रत्वानुपपत्तिः, तस्मान्निर्णीतविध्युद्देशेन उपसंहारस्यार्थवादस्य अन्यथा नेयत्वात् । 'ते सद्भिन्नाः वद्भिन्नाः' इत्यादिवत् अनन्वयालङ्कारस्य अभेदे अनुगुणत्वात् । इति प्राप्ते, नायमनन्वयालङ्कारः । तथात्वे सर्वेषामर्थवादपदानामुपमानान्तराभावलक्षणत्वापत्तेः । तदर श्रुतोऽनुग्रहस्यैव न्याय्यत्वात् उपक्रमस्थे एकस्मिन् पदे रूपकविधया लुप्तोपमानविधया वा गौणीं वृत्तिमङ्गीकृत्य नामधेयं न द्वितीयविधिप्रकारापादकं युक्तमाश्रयितुम् । अर्थवादस्तु रूपकालङ्कारोपमानिषेधतात्पर्यकत्वोपपादनार्थे. सत् विनैव लक्षणा पूर्णोपमानविषया विधेययाग-.

स्तुत्यर्थो न विरुध्यते । तदिदं चतुर्भिरेव प्रकारैः सर्वत्र नामत्वमिति । ५.

मण्डन— ' नाम श्येनपदं पुनः । '

शंकर— ' एवं तद्व्यपदेशतः । ' नाम । ५.

* तद्व्यपदेशं च इत्यधिकरणे ' यथा वै श्येनो निपत्यादत्त एवमयं द्विषन्तं भ्रातृव्यं निपत्यादत्ते यमभिचरति श्येनेन ' इत्यर्थवादः इत्युक्तम् । बाल. पृ. ५८. * अर्थवादानां प्रशंसनार्थपरत्वाभावे ' तद्व्यपदेशं च ' इत्यधिकरणविरोधः । तत्र वाक्यविशेषसिद्धा गौणी वृत्तिरभिन्ना नामधेयत्वव्यवस्थापनात् । कु. १।२।१।१८. * ' आग्नेयोऽष्टाकपालोऽमावास्यायाम् ' इत्यादौ विशिष्टविध्यङ्गीकारेण वाक्यभेदाभावात् तद्व्यपदेशन्यायस्य शङ्कितुमप्यशक्यत्वात् । कौ. १।४।७।९.

* तच्छब्दः । यच्छब्दतच्छब्दौ उद्देश्यप्रतिनिर्देशकौ । या. ६।८।३।१५. * तच्छब्दस्य पूर्वपरामर्शित्वम् । भाट्ट ४।१।१०. * तच्छब्दार्थे स्ववाक्योपस्थित यच्छब्द एव नियमेन अपेक्षते ' येन कर्मणा ईर्त्सेत् तत्र जयान् जुहुयात् ' इत्यादौ तथैव व्युत्पत्तिदर्शनात् । न तु तच्छब्दोऽपि । अतश्च तच्छब्दस्य स्ववाक्योपस्थितमात्र परामर्शित्वनियमाभावः । कौ. १।१।७।१४ पृ. २५८.

* तत्संनिधेर्गुणार्थेन पुनःश्रुतिः (२।२।५।१६)। इयत्र उपवद्श्रुतौ संभवदनुवादस्य कर्मणः विधेयत्वनिर्देशात् ( सोमेन यजेत इति ) सोमवाक्ये यागविधिः । सु. पृ. ७९०. * साम्पाय्यप्रकृतिः प्रकरणान्तरत्वात् विना फलादीनां भेदकत्वमुक्तमपि ■ इदं ' तत्संनिधेर्गुणार्थेन पुनःश्रुतिः ' इत्यादौ । या. २।२।१३।२६.

* ' तत्संप्रयोगे पुरुषस्येन्द्रियाणां बुद्धिजन्म तत् प्रत्यक्षम् ' ( १।१।४ सूत्रं ) । यद्विषयं विज्ञानमुत्पद्यते तेनैव इन्द्रियसंप्रयोगे इन्द्रियाणां वा पुरुषस्य बुद्धिर्जायते तत् सत् प्रत्यक्षम् । यथा ' इदम् ' इति विज्ञानम् । यत्तु अन्यसंप्रयोगे शुक्तिकासंप्रयोगे अन्यविषयं रजतग्राहि विज्ञानमुत्पद्यते न तत् प्रत्यक्षम् । किं तर्हि सत्यमेव । कथं पुनरवगम्यते ' इदमन्यसंप्रयोगे, इदं नान्यसंप्रयोगे ' इति । शुक्तिका हि संप्रयुक्ता । अतः शुक्तिकाविषयमेव इदमपि ज्ञानम्, यतो रजतमिति शुक्तिकामेव व्यपदिशति । यस्मात् शुक्तिकासंप्रयुक्ते चक्षुषि ' रजतसंनिकृष्टं मे चक्षुः ' इति मन्यते । ( तत्संप्रयोगे–सत्संप्रयोगे इति, सत् प्रत्यक्षं–तत् प्रत्यक्ष इति मतभेदेन पाठभेदः ) । ऋजु. पृ. ४६.

❀ तत्संयोगात् क्रतुस्तदाख्यः ( २।३।१०।२१ ) इति न्यायेन अग्निचित्यग्नेरेव चिनोत्यर्थत्वात् ( तेन चयनसंस्कृतेन वह्निना संयोगात् क्रतुः यागः तदाख्यः अग्निशब्दवाच्यः इति न्यायसूत्राक्षरार्थः ) । सकर्प. ३।१।५.

* तत्संस्तवाच्च । ३।४।१७।४९ ॥ चतुर्धाकृत पुरोडाशविभागस्य परिक्रयत्वसंस्तवनादपि परिक्रयार्थता ; इति पूर्वपक्षः । सु. पृ. १५४४.

❀ तत्सामान्यादितरेषु तथात्वं इति न्यायः । औदुम्बराधिकरणसूत्रावयवोऽयं न्यायत्वेन व्यवह्रियते । तैः ' अप्सुयो वेतसः ' इत्यादिभिः स्तुतिवादैः सामान्यात् सादृश्यात् ' औदुम्बरो यूपो भवति ' इत्यादिष्वपि इतरेषु वाक्येषु तथात्वं स्तुतिपरत्वं प्राप्नोत्यत इति न्यायाक्षरार्थः । के. १।२।२।२१. * ' तत्सामान्यादितरेषु तथात्वम् ' इति न्यायेन गदितेषां ( मन्त्रविधानां ) ' वायुर्वै क्षेपिष्ठा ' इत्याद्यर्थवादानां न स्वार्थपरत्वम्, किन्तु अहःस्वार्थलक्षणया केवलविधेयस्तुतिपरत्वं इति प्रच्छन्नबौद्धाः केचिन्मीमांसकंमन्याः संगिरन्ते । कु. १।२।२।१८ पृ. ३०. * चित्रेष्ट्यादौ सद्यः पश्वादिफलादर्शनेन, ' स एष यज्ञायुधी यजमानः अञ्जसा स्वर्गं लोकं याति ' इत्यनेन सशरीरस्वर्गप्राप्तिकथनस्यापि प्रत्यक्षविरोधादप्रामाण्यम्, ततश्च ' तत्सामान्यात्॰ ' इति न्यायेन सर्वासामेव चोदनानामप्रामाण्यमिति प्राप्ते । भाट्ट. १।१।४

❀ तत्सामीप्यात्ताच्छब्द्यमिति न्यायः । गङ्गायां घोषः, कूपे गर्गकुलमित्यादिषु स्पष्टोऽयं न्यायः । ( तस्य गङ्गापदार्थस्य प्रवाहस्य सामीप्यात् तीरस्य ताच्छब्द्यं गङ्गापदबोध्यत्वम् । सः गङ्गाशब्दः यस्य तीरस्य, स तच्छब्दः, तस्य भावः ताच्छब्द्यम् ) । माइसी. ४८६.

तद्गुणसंबन्धः प्रतीयते । इह तु यजमानः प्रस्तरः, यजमान एककपालः इति कीदृशो गुणसंबन्धः प्रतीयते ? तत्सिद्धिकर इति । यथैव हि आत्मनः कार्यसिद्धिं करोति । अन्योऽपि यस्तस्य कार्यसिद्धिं करोति, स तस्मिन्नुच्चरिते हृदयमागच्छति यथा राज्ञः पत्तिगणक इति । पत्तिगणको राज्ञः कार्यं साधयति । स राजशब्दे उच्चरिते प्रतीयते । एवमिहापि यजमानकार्यं प्रस्तरैककपालौ साधयतः, तौ यजमाने प्रतीते प्रतीयेते । तस्मात् तौ यजमानशब्देन प्रत्याय्येते, कथं स्तुतौ स्यातां यदि पं उपरिष्टात्ते सर्वदोषे ऽपीति । तस्मादेवंजातीयका अर्थवादाः, न विधय इति ।

या— तत्सिद्धिः । अर्थवादप्रसङ्गात् तदुपकारिगुणवादविधि( वादावधि )लक्षणं तत्र नोक्तम्, इदानीमभिधीयते । ननु च तत्रैव ' रूपात् प्रायात् ' ' दूरभूयस्त्वात् ' (१।२।१।११–१२) इति निमित्तं कथितम् । सत्यं कथितम्, न तु लक्षणत्वेन । कथं तर्हि ? इह निदर्शनम्, तत्र उदाहृतार्थवादलक्ष्यविषयव्यवहारार्थं नीतम् । अत्र तु सर्वगौणवृत्तीनां लक्षणमुच्यते । ननु च सहचरणस्थानादीनि अन्यान्यपि अक्षपादप्रभृतिभिः गौणनिमित्तानि उक्तानि ( न्यायदर्शन २।२।६० ' गौणवृत्तिनिमित्तानि ' इति हिन्दी द्रष्टव्यम् ) । लोके च दृश्यते ' यष्टीः प्रवेशय ' ' मञ्चाः क्रोशन्ति ' ' राजभटेन अमुको राजा जितः ' इति । तानि उपसंहर्तव्यानि । लिङ्गसमवायेनैव उपसंहृतानि इति केचित् । तानि समवेतेतरसम्बन्धवत् हि यष्टिसहचरितादिप्रत्ययो भवति । अथवा गौण्याः वृत्तेः इह निमित्तमभिधीयते, न लक्षणायाः । किञ्च अनयोः ( गौणीलक्षणयोः ) भेदोऽपि अस्ति ? बाढमस्ति । कुतः ? ' अभिधेयाविनाभूते प्रवृत्तिर्लक्षणेष्यते । लक्ष्यमाणगुणैर्योगाद् वृत्तेरिष्टा तु गौणता ॥ ' तत्र यथैव आकृतिवचनः शब्दः तदव्यभिचारित्वात् व्यक्तिं लक्षयति, तथैव यष्टिमञ्चादयः तत्संबद्धपुरुषलक्षणार्थाः भवन्ति । ' अग्निर्माणवकः ' इति तु न अग्न्यविनाभावेन माणवकः प्रतीयते, किं तर्हि ? ' वह्नित्वलक्षितादर्थाद् यत् पैङ्गल्यादि गम्यते । तेन माणवके बुद्धिः सादृश्यादुपजायते ॥ ' सर्वत्र च तत्सिद्धिकरत्वे इत्येव प्रत्ययस्तौ यजमानादिशब्दानां वृत्तिः, इति ते उदाहृताः । अत्रापि च सामानाधिकरण्यात् एकतरस्य नामधेयत्वम्, निमित्ताभावात् अनेकशक्तिकल्पनाभयाच्च तदनुपपत्त्या कार्यलक्षणाद्वार प्रयोजनपरत्वेन गुणविधित्वम्, अन्यतरो वा तदुभयात् अर्थवादत्वमिति त्रय एव पक्षाः ।

तत्र गुणविधिवादी मन्यते । न तावत् प्रस्तरयजमानयोः इतरेतरसमभिव्याहारेण स्तुतिः प्रतीयते । न च स्तोतुमपि परशब्दः परत्र वर्तते । न च प्रवृत्तिनिमित्तमस्ति । न च स्तुतस्य प्रयोजनं अन्यत् कार्यलक्षणात् । तस्मात् ' यो होता सोऽध्वर्युः ' इत्यादिवत् अन्यतरः कार्यलक्षणार्थः । तत्रापि ' मुख्यं वा पूर्वचोदनात् ' ( ११।१।८।२३ ) इति यजमानशब्दः स्वार्थवृत्तः, प्रस्तरशब्दः स्रुग्धारणादिकार्यलक्षणार्थः, इति गुणविधिः । अत्रोच्यते । ' न तावत् कार्ययोर्भिन्नमेकत्वाप्युपपद्यते । विरोधाद् यजमानस्य प्रहरणादेरचोदना ॥ ' एककालत्वात् ' सूक्तवाकेन प्रस्तरं प्रहरति ' इति यजमाने प्रह्रियमाणे ( अग्नौ प्रक्षिप्ते ) सर्वतन्त्रविलोपप्रसङ्गः । तस्मात् एकवाक्यगतोत्तरसाधनसर्वहोमविधिस्तुत्यर्थः संवादः । कथं पुनः परशब्दस्य परत्र सामानाधिकरण्यम्, किमाश्रया वा स्तुतिरिति । यजमानो हि सर्वाभ्यर्हितः, तद्धास्यात् कर्तिव. तथापि प्रस्तरः सादयितव्यः, स्वर्णत्वेन संस्तुते च आहवनीये उक्ते यजमानः आरोपितो भवति एककपालेन अप्रच्छिन्नेन इति स्तुतिः । गुणाच्च शब्दवृत्तिः । ' कथं अगुणवचनः ' इति ( भाष्ये ) वाचकत्व अभ्युपेतं मन्यमानस्य प्रश्नः । सिद्धान्तस्तु—अजहत्स्वार्थाः सर्वाः शब्दवृत्तयः, पूर्वशक्त्यनुसारसंभवे शक्त्यन्तरकल्पने प्रमाणाभावात् । प्रभविष्यन्ति चात्र सिंहत्वावगतव्यक्त्युपस्थापितप्रसङ्गकारिन्यायनेकधर्मप्रत्ययात् देवदत्तप्रत्ययः, इति पूर्वैव शक्तिनिमित्तम्, इति न संज्ञापदेशुत्वेन व्यवहारोच्छेदकारणं प्रसिद्धहानाप्रसिद्धकल्पन आश्रयणीयम् । अन्येषां तु दर्शनम्, सर्वे एव हि सिंहादिशब्दाः जातिगुणक्रियासमुदायवाचिनः समस्तार्थासंभवे देवदत्तादिषु कतिपयगुणक्रियायोगात् उपचर्यन्त इति । तत्राभिधीयते । समुदायार्थवाचित्वे नैकदेशो भवेद् गतिः । शवशब्दान् पञ्चा-

शब्दमुख्यरूपेण गम्यते ॥ ' भवति तु जातिमात्रे दृष्टेऽर्थे क्रियागुणप्रत्यक्षत्वेऽपि प्रयोगः । प्रत्ययश्च मुख्यात्मनैव, न देवदत्तादिष्विव सिंहशब्दात् अपचरितः । सामान्यचोदिता च आकृत्यधिकरणविद्या वाच्येव । क्रियागुणानां च आनन्त्यात् न शक्यः प्रतिव्यक्ति संबन्धः अनुभवितुम् । ' एकस्यामेव च व्यक्तौ बाल्यादिषु गुणक्रियाः । अन्याश्चान्याश्च शक्यन्ते नाभिधातुमसंगतेः ॥ ' न च असामान्यात् सामान्यं शक्यते कल्पयितुम्, कालान्तरेऽपि क्वचित् कासांचित् अदर्शनात् । ' तत्र सिंहत्वमेवास्तां व्यवच्छेदकरं भवेत् । तथानभिहितं नैवमुक्तं चेत्सान्यचोदिता ॥ ' नहि अनभिहितं सिंहार्थं गुणक्रियाणां व्यवच्छेदकरं भवति, अप्रतीतेः । अभिहितं चेत्तु प्रत्ययादेव अशेषगुणक्रियाऽवगमात् अभिधानवाक्यलक्षणः, इति समुदायशब्दिनां पक्षदोषेषु न गौणत्वसंभवः ।

कश्चित् पुनराह ' समारोपितशब्दार्थो गौणः ' इति । तस्य एतन्मतम्, न कथंचन परशब्दः तथा आत्मा स्वनिबन्धनभूतया विना अत्यन्तानभिधेयक्रियागुणमात्रद्वारेण अन्यत्र वर्तितुमर्हति । न च सिंहशब्देन अप्रवर्तमानेन ' सिंहो देवदत्तः ' इति सामानाधिकरण्यप्रयोगो घटते । कथं तर्हि ? ' अर्थेष्वर्थान्तरात्मानमध्यारोप्योपपादितम् । वाच्यमासाद्य शब्दानां स्वयमेव प्रवर्तनम् ॥ ' सिंहादिशब्दाः क्रियागुणदर्शनेन हि देवदत्तादयः सामस्त्यपरिकल्पनया शब्दार्थं आपद्यन्ते । ततश्च स्वार्थे एव शब्दः प्रयुज्यते । न चैतावता मुख्य- ( मुख्यत्व- ) प्रसङ्गोऽर्थस्य, अध्यारोपितत्वात् । यत्र तु स एव अर्थो न समारोप्यते, तत्र मुख्यः इत्यदोषः । तदेतदयुक्तमुच्यते ; न, [illegible] प्रमाणगमनात् । तथाहि, ' असंकीर्णस्वभावं सद् यत्तु वस्त्वन्तरात्मना । आरोप्यतेऽभिधानार्थं कथं न भ्रान्तिवर्तितः ॥ ' यदा तावत् भ्रान्त्या मृगतृष्णायां तोयमध्यारोप्य शब्दं प्रयुङ्क्ते, तदा उभयोः मुख्यार्थाध्यवसानरूपेण तोयप्रतीतेः भ्रान्तिमुख्यत्वम् । ( भ्रान्त्या अध्यवसितो मुख्यः भ्रान्तिमुख्यः इति शाकपार्थिवादिवत् मध्यमपदलोपी समासः । सु. पृ. ५०१ ) ।

अथापि वक्ता विवेकी सन् इतरवञ्चनार्थं प्रयुङ्क्ते, ( अत्र आनन्दाश्रमीये चौखम्बीये च ' इतरवचनार्थं ' इत्येव पाठः, तथापि सुधायां ' श्रोतृप्रतारणाय ' इति ' श्रोतृवञ्चनार्थेनैव ' इति च स्पष्टत्वात् ' इतरवञ्चनार्थं ' इत्येव पाठो निश्चीयते ) श्रोता च न विविनक्ति (विचिर् पृथग्भावे रुधादिः) तदाऽपि एकस्य विवेकेन अध्यारोपाभावात्, इतरस्य भ्रान्त्या अध्यवसानात् ( अत्र आनन्दाश्रमीये ' इतरस्यान्त्याध्यवसानात् ' इति, चौखम्बीये च ' इतरस्य अन्त्याध्यवसानात् ' इति संधिमकृत्वा मुद्रितम् । तथापि सुधायां 'ननु द्वयोः श्रोतुरेव वा भ्रान्तौ आरोपाभावेऽपि भ्रान्त्या प्रतारणार्थेन वा परशब्दस्य एव प्रयोगोपपत्तेः ' इत्युत्तरावतरणोल्लेखनात् ' इतरस्य भ्रान्त्या अध्यवसानात् ' इत्येव वार्तिकपाठो निश्चीयते ) नैकमपि प्रति गौणत्वोपपत्तिः । यदा तु द्वावपि अभ्रान्तौ, तदा उभयोः सादृश्यादिनिमित्तान्तर्गीतत्वस्यार्थाध्यवसानात् आरोपाभावः । ( सादृश्ये आदित्यदोलादौ वा सादृश्यहेतुः गुणयोगः निमित्तं यस्य तस्यार्थस्य [ प्रतिपत्त्यर्थस्य ] तस्य परत्र परशब्दप्रवृत्तौ निमित्तत्वेन अध्यवसानात् नारोपकल्पना युक्ता इत्यर्थः । सु पृ. ५०१ ) तथाहि ' द्वावपि प्रतिपद्येते सिंहपुंसोर्विविक्तताम् । नाध्यारोपयितुं शक्तिस्तेनैकस्यापि विद्यते ॥ ' यथैव हि अवदातानामर्थानां तिक्तमधुरादीनां न कथंचिदपि प्रतीत्यभावात् परस्पराध्यारोपणम्, एवं शब्दानामपि विवेकज्ञानां नोपपद्यते । नहि अर्थाध्यवसानात् अन्यादृशं नाम ज्ञानं शब्दहेतुकं भवतीति । किंच ' शब्द एव यदा तावन्निमित्तो न वर्तते । बुद्धिर्दुर्ललिता (स्वच्छन्दा) यत्र भवेत्तत्रियता कथम् ॥ ' ' न च अर्थरहिता बुद्धिः आत्माकारमात्रमनुभवन्ती जायते ' इत्युक्तं शून्यवादे । अपि च 'पूर्वानुभूत एवार्थः स्मर्यते प्रथमं पदात् । तेन मुख्ये प्रतीतेऽर्थे कथमध्यारोपो भविष्यति ॥ '

सर्वथा तावत् अयं गौणमुख्यविभागः श्रोतृसामर्थ्यविशेषावधारणे व्याप्रियते । ते च पदवेलायां अनध्यारोपितस्वार्थवृत्ति एव सिंहादिपदमभ्यवधाय देवदत्तादिपदसामानाधिकरण्यान्यथाऽनुपपत्त्या गौणतां कल्पयन्ति ।

तत्र चैषां स्वयमनारोप्यैव सिंहत्वं तत्सादृश्यादिप्रतीतिर्भवति । सा च किं शब्दात् अथ अर्थात् इति अभिन्धुता अन्वयव्यतिरेकाभ्यां आकूल्यांकरकन्यायेन अर्थात् इति निश्चयो जायते । कथम् ? 'सिंहशब्दे ह्यनुक्तेऽपि सिंहार्थात् सदृशे मतिः । जायते, न त्वबुद्धेऽर्थे सिंहशब्दे श्रुतेऽपि नः ॥' यदा च श्रोतृणां स्वयमध्यारोपाभावः, तदा वक्तर्यपि नैव प्रयोगमेवं कल्पना भवति यथा 'नूनमनेन सिंहत्वं अध्यारोपितम्' इति । कथं तर्हि ? 'सिंहस्याविनाभूतानेकक्रियागुणसमुदायः अनेन विवक्षितः, शब्दगौरवभयात् न भेदमभिधानैर्ब्रवीति' । न चास्य समस्तस्य किंचिदेक वाचकं पदमस्ति, तेन अविनाभावितया कथं नु सिंहत्वात् गम्यतेतिर्भवेत् इति तत् तावदभिधीयते । अतः स्वतया शब्दशक्त्या पुंसा व्यवहारः, न तद्दर्शन शब्दस्यान्तरोपमान इति । किंच 'यदध्यारोपेन वक्तॄणां गौणी वृत्तिः प्रकल्प्यते । येन सा न कथंचित् स्यादध्यारोपयितुर्विना ॥' तस्मात् गुणप्रवृत्तिप्रयोजनः गौणः इत्येव लक्षणं न्याय्यं नान्यथा । ( गुणयोगनिमित्ताया: शब्दप्रवृत्तेः गौणत्वेन इष्टत्वात् वाच्यगुणानां प्रभूतानामर्थान्तरे वृत्तियोगः प्रयोजनं प्रवृत्तौ निमित्तं यस्य, स गौणः ( प्रयोजनशब्देन प्रयुज्यते अनेन इति व्युत्पत्त्या निमित्तमुक्तम् ) ।

ननु एवं सति खपुष्पादीनां स्वार्थाविनाभूतगुणाभावात् गौणप्रयोगाभावप्रसङ्गः ( तथा च अध्यासिः ) । सांख्यादिकल्पितप्रधानादिनिषेधे च बौद्धादेः विना अध्यारोपेण प्रयोगासंभवः । अनभ्युपगमे हि प्रतिषेधानर्थक्यम्, अभ्युपगते तद्विरोधः स्यात्, अध्यारोपितनिषेधे [illegible] अदोषः इति ) अत्राभिधीयते । नैवायं दोषः । कुतः ? 'शाश्वते खपुष्पत्वागत् कथमवस्तुनि । प्रज्ञातगुणसत्ताकमध्यारोप्येत वा न वा ॥' ( गुणो रूपं सत्ता च प्रज्ञाते यस्य इति विग्रहः ) । यत्तावत् 'खपुष्पस्थानीय आत्मा' 'खपुष्पं भवसिद्धान्तः' इत्यादिप्रयोगः, तत्र कथम् खपुष्पं अन्यत्र क्वचित् सिंहवत् अवधारितं यदध्यारोप्येत, तेन खपुष्पस्वरूपमेव तावत् अध्यारोपात्मकमभ्युपगन्तव्यम् । न च एतस्य लोके गौणत्वप्रतीतिः, मुख्यार्थान्तराभावात् । प्रथमप्रतीतत्वात् हि खपुष्पादिस्वरूपं न मुख्यत्वात् व्यपैति ( कथमसतो मुख्यत्वमिति चेत्, तुल्यमिदं गौणत्वेऽपि । यत्र तु अध्यारोप्यते, स गौणः, न यः अध्यारोप्यते । खपुष्पं च आरोप्यमाणं विषयान्तराभावात् स्वरूपेण अध्यारोप्यते [illegible] । तत्र एतत् स्यात्, विद्यमानघटादिरूपं तत्र अध्यारोप्यते, ( विद्यमानस्य घटादेः यत् तद्रूपम्, तत् तत्र खपुष्पादौ आरोप्यते ) न गौणत्वमिति । तदयुक्तम्, खपुष्पादौ तद्रूपप्रत्ययानुत्पादात् । अवश्यं हि यादृक् प्रयोगकाले अर्थः अनुभूतः, तादृक् उत्तरकालं प्रतीतव्यम् । न च शशविषाणादयः सद्रूपेण अनुभूतपूर्वाः । न च अर्थान्तरसद्रूपग्रहणेन खपुष्पादेः संबन्धो लभ्यते । ययोः तदवयवयोः अर्थसंबन्धः अनुभूतः, तयोर्नैव गौणत्वम्, मुख्यात्मना अवबोधात् । कथं तर्हि 'शशविषाणं नास्ति' इत्युच्यते ? ( सद्रूपत्वेन अप्रतीतस्य अप्रसक्तत्वात् निषेधो न युज्यते ) । यदि सद्रूपेण, न प्रतीतपूर्वम् । तद्रूपप्रतीतस्य वा कथमत्यन्तप्रतिषेधोपपत्तिः ? पश्य 'अन्यत्र ज्ञातसद्भावः पदार्थोऽन्यत्र धार्यते । न त्वेकत्रैव सद्रूपमसद्रूपं च गम्यते ॥' तेनैव अध्यारोप्यते इति चेत् ( येन कारणेन एकत्र यन्नाधुना सदसत्त्वे विरुध्येते, तेनैव कारणेन तद्रूपस्य आरोप्यते ), न । अध्यारोप्यस्यापि एवमेव प्रदेशान्तरसद्भावाधीनत्वात् । न च अन्यसद्भावेन अन्यस्य अध्यारोपः सिध्यति, अनेकान्तात् । कथं कूपसद्भावेन तोयस्याध्यारोपः इति चेत्, प्रदेशान्तरे तोयसद्भावप्रतीतेर्गम्यम् । कथं तर्हि शशविषाणं नास्तीति प्रयोगः ? पूर्वमेव अभावे अवगते नास्तिशब्दः अनुवादकः इति केचित् ( शशविषाणशब्देनैव अभावस्यावगमात् नास्तिशब्दस्य अनुवादकोपपत्तिः इति ) । अथवा सामान्येन प्रागभावादिषु नास्तिशब्दः प्रवर्तमानः शशविषाणशब्देन विशेष्यते, न शशविषाणम्, अव्यभिचारात् तेन इत्यदोषः । अथवा, येन अवगतार्थौ गृहीतौ, समासाच्च राजपुरुषादिवत् सामान्यतोदृष्टेन पदार्थसंसृष्टिः प्रसक्ता, न च कदाचित् शशः शृङ्गसहितत्वेन अवधारितपूर्वः, तस्य एतद्

इत्यादौ आरोपेणापि गौणी दृष्टा, तथापि सादृश्यमात्रेणापि उपमालङ्कारस्थले सा अनुभूयमाना नापह्नोतुं शक्या। अतश्चोभयसाधारण्येन स्वशक्यसमवेतवत्ता गौणी वृत्तिः। समवेतत्वरं च कचिदारोपितत्वसंबन्धेन, कचिच्च स्वसमानजातीयगुणवत्तासंबन्धेनेति भेदः। अत्र सिंहपदेन शक्त्या सिंहोपस्थित्यनन्तरं लक्षणया क्रूरत्वोपस्थितिरिति ग्राह्यः। वस्तुतस्तु — एकसंबन्धिस्मरणेन अपरसंबन्धि स्मारकविधयैव तदुपस्थितिः। गौणीशानकार्यतावच्छेदकं च निरुक्तोभयविषयसंबन्धान्यतरसंबन्धेन स्वशक्यसमवेतधर्मप्रकारकत्वेवदज्ञविशेषकशान्दत्वमिति न क्रूरत्वादीनाम-शाब्दत्वप्रसङ्गः। न च गौण्या लक्षणातो न भेदः, स्वशक्यवृत्तिगुणानामेव यत्र संबन्धेन रूपेण बोधः तत्र लक्षणा, क्रूरत्वादिना बोधे तु गौणीति तयोर्भेदात्। ते च गुणाः षड्विधाः— कचित्तत्सिद्धिः तत्कार्यकारित्वं यथा यजमानपदे। यजमानो यथा स्वकार्यकर्ता, तथा प्रस्तरोऽपीति। एष च गौणीलक्षणया प्रस्तरस्तुतिः। एवमन्येऽपि पञ्च गुणा अग्रिमसूत्रैः द्रष्टव्याः। १३.

मण्डन— ' प्रस्तरे यागुणान् गुणात्। '

शंकर— ' तत्सिद्धेर्गौणता क्वचित्। ' १३.

• अर्थवादानामनन्यार्थपरत्वाभावे तत्सिद्ध्यधिकरणाविरोधः, तत्र यजमानशब्दस्य क्रतुनिर्वर्तकत्वगुणयोगात् गौण्या वृत्त्या प्रस्तरे वृत्तेरर्थवत्सापनात्। क्षु. १।२।१।१८ पृ. ३१.

[illegible] तत्सिद्धिजातिसारूप्यप्रशंसाभूमलिङ्गसमवाया इति गुणाश्रया. । १।४।१३।२३ ॥

( तत्रादौ तत्सिद्ध्यधिकरणम्। ) 'यजमानः प्रस्तरः' ' यजमान एककपालः ' इत्येवमादि समाम्नायते। तत्र संदेहः ' यजमानः प्रस्तरः ' इति किमेष गुणविधिः किमर्थवादः इति। तथा ' यजमान एककपालः ' इति। अत्र प्रभाकरेण संगतिलोभात् सर्वैश्चेन्मार्थवादोदाहरणेषु इदमधिकरणमुपवर्णितम्— 'यजमानः प्रस्तरः' इत्यादिषु न तावत् यजमानकार्ये प्रस्तरविधिः, चेतनकार्येषु अचेतनस्यायोग्यत्वात्। नापि प्रस्तरकार्ये यजमानविधिः, स्रुगादिपदार्थासादनावरुद्धे तस्मिन् सकलयजमानकर्मलोपप्रसङ्गात्। अतो नायं गुणविधिः। नाप्यर्थवादः, यजमान शब्दस्य प्रस्तरे प्रस्तरशब्दस्य च यजमाने प्रवृत्तिनिमित्ताभावेन स्तुत्यर्थासंभवात्। न च गुणयोगः प्रवृत्तिनिमित्तम्, एतदधिकरणपूर्वपक्षे गौणशब्दप्रयोगाक्षेपात्। अतः प्रतिभासमानहेतुत्वात् एवमादेरप्रामाण्यमेव इति पूर्वपक्षः। सिद्धान्तस्तु यथाभाष्यमेवेति। तदिदमनुपपन्नम्, वक्ष्यमाणपूर्वपक्षप्रकारेण गुणविधित्वेन प्रामाण्योपपत्तेः, इति यत्किंचिदेतत्। इति यथावार्तिकमेवाधिकरणं प्रस्तूयते। पूर्वमर्थवादपादे स्तुत्यर्थं परत्र परशब्दप्रयोगस्य प्रवृत्तिनिमित्तं अर्थवादप्रामाण्यप्रतिपादनपरतयाऽभिहितम्। इदानीं पूर्वाधिकरणोक्तगुणविधिप्रतियोगिकार्थवादप्रतिपादनप्रसङ्गेनाभिधीयते। अत्रायं पूर्वपक्षिणोऽभिसंधिः। ' यजमानः प्रस्तरः ' इति सामानाधिकरण्यं शब्देन प्रतीयते। न चैतन्नामधेयत्वेनोपपद्यते, उद्भिदादिपदवत् प्रवृत्तिनिमित्ताभावात्। नाप्यर्थवादत्वेन, नहि प्रवृत्तिनिमित्तं विना परत्र परशब्दः आम्नातुं प्रयुज्यते। नापि गुणयोगः प्रवृत्तिनिमित्तम्, यजमानशब्दस्य गुणानभिधायकत्वात्। न च गुणानभिधानेऽपि अग्निशब्दस्येव माणवके गौणत्वमिति वाच्यम्। सर्वगौणशब्दानामेव गौणत्वस्य एतदधिकरणसुत्थापनात्। अतः सामानाधिकरण्योपपत्तये अन्यतरस्य कार्यलक्षणापरत्वं वक्तव्यम्। तत्र ' मुख्यं वा पूर्वचोदनाल्लोकवत् ' ( १२।२।८।२३ ) इति न्यायेन ' यो होता सोऽध्वर्युः ' इतिवत् यजमानशब्दस्य मुख्यत्वात् अनुपजातविरोधित्वाच्च स्वार्थपरत्वम्, प्रस्तरशब्दस्य जघन्यत्वात् विरोधाच्च कार्यलक्षणापरत्वम्। तथा सति अगोचरत्वात् प्रवृत्तिविशेषकरत्वाच्च प्रस्तरशब्दलक्षितकार्ये यजमानो विधीयते एव, होत्रध्वर्युकार्ये। न चैवं सति सकलयजमानकार्योच्छेदप्रसङ्गः, सदस्यादिप्रतिपुरुषद्वारेणैव यजमानकार्योपपत्तेः। इत्येवं प्राप्ते, अभिधीयते। भवेदेवं यदि प्रस्तरकार्ये यजमानविधिरुपपद्येत। न चासौ उपपद्यते, सकलयजमानकर्मलोपप्रसङ्गात्। नापि सदस्यादिप्रतिपुरुषद्वारेण यजमानकर्मानिरोध इति वाच्यम्। ' सूक्तवाकेन प्रस्तरं प्रहरति ' ' एककपालं सर्वहुतं करोति ' इति प्रस्तरैककपालयोः आहवनीये प्रक्षेपश्रुतेः यजमानस्य आहवनीये प्रक्षेपे सति यजमानधर्मलोपस्य तदवस्थत्वात्। किंच ' यजमानः प्रस्तरः '

इत्यत्र न तावद्विधिः श्रूयते, न च 'यो होता सोऽध्वर्युः' इत्यादिरिव गत्यन्तरासंभवेन कल्पयितुं शक्यते, 'प्रस्तरमुत्तरं बर्हिषः सादयति' 'एककपालं सर्वहुतं करोति' इत्येतद्विधिशेषत्वेन अर्थवादत्वेनैव गतिसंभवात्। एवं च सति एकवाक्यत्वेनैवोपपत्तेः वाक्यभेदोऽपि न भविष्यति। न च प्रवृत्तिनिमित्तं विना यजमानशब्दः परत्र कथं प्रयुज्यते इति वाच्यम्। गुणयोगस्यैव प्रवृत्तिनिमित्तत्वात्। ननु गुणोऽपि न कश्चित् साधारणो यजमानशब्देनाभिधीयते इत्युक्तम्। सत्यम्। लक्षणया स्वामित्वेऽर्थे संबन्धोपस्थितये ऽर्थे शब्दो विपर्यासीकरोति, यथा गङ्गाशब्दः स्वार्थसंबद्धमेव तीरम्। गौणः पुनः अभिधेयार्थसंबन्धलक्षितगुणयोगेनैवार्थान्तरं यथा 'अग्निर्माणवकः' इति। तदुक्तम् 'अभिधेयाविनाभूते प्रतीतिर्लक्षणोच्यते (प्रवृत्तिर्लक्षणेष्यते इति मूले पाठः)। लक्ष्यमाणगुणैर्योगाद् वृत्तेरिष्टा तु गौणता ॥' (वा. पृ. ३५४) इति। गुणश्चात्र यजमानप्रस्तरैककपालयोः यागप्रयोगसिद्धिकरत्वमेव। अनेन गुणयोगेन प्रस्तरैककपालयोः स्तुतिरित्यर्थवादत्वमेवेति। तदुक्तं सूत्रे 'तत्सिद्धिः' इति।

तथा 'आग्नेयो वै ब्राह्मणः' 'ऐन्द्रो राजन्यः' 'वैश्यो वैश्वदेवः' इत्यत्र तद्धितान्तस्य आग्नेयादिपदस्य यथाकथंचिन्मुख्यत्वेनापि (पुस्तकान्तरे पाठान्तरम्—मुख्या भावनाऽपि) ब्राह्मणादिपदसामानाधिकरण्यासंभवात्। 'अग्निर्ब्राह्मणः, इन्द्रो राजन्यः, वैश्यो विश्वे देवाः' इत्यादयोऽप्युदाहरणम्। न तु तद्धितान्तपदानि। अत्रापि पूर्ववदेव ब्राह्मणादिकार्ये गुणविधान इति पूर्वः पक्षः। सिद्धान्तस्तु अचेतनस्य ब्राह्मणादिकार्यकरणासंभवात् अर्थवादत्वेनोपपत्तेः ब्राह्मणादिसंबन्धिविध्येकवाक्यतया गुणवादेनार्थवादत्वमेव। प्रवृत्तिनिमित्तं ■ गुणः, अग्निब्राह्मणयोरेकस्मात् प्रजापतेर्मुखादुत्पत्तिः, इन्द्रराजन्ययोः बाहुभ्यामुत्पत्तिः, विश्वदेववैश्ययोः मध्यमप्रदेशादुत्पत्तिः। तदुक्तं सूत्रे 'जातिः' इति।

तथा 'यजमानो यूपः' 'आदित्यो यूपः' इत्यत्रापि एकवाक्येन न लक्षितत्वेऽर्थे गुणविधिः, किन्तु यूपविध्येकवाक्यतया गुणवादेनार्थवादत्वमेव। प्रवृत्तिनिमित्तं च गुणः यूपस्य यजमानेन सहोर्ध्वत्वं आदित्येन सह तेजस्वित्वमिति। तदुक्तं सूत्रे 'सारूप्यम्' इति।

तथा 'अपशवो वा अन्ये गोअश्वेभ्यः पशवो गोअश्वाः' 'अयज्ञो वा एष योऽसामा' 'असत्रं वा एतद् यदच्छन्दोमम्' इति। अत्र पशवादिशब्दलक्षितं कार्यं नञा निषिध्यते इति पूर्वपक्षी मन्यते। तदयुक्तम्, पश्वादिकार्यस्य निषेद्धुमशक्यत्वात्। द्विविधं हि तस्य कार्यम्, प्रमाणान्तरसिद्धं दोहादि वैधं च यागादि। तत्र प्रमाणान्तरसिद्धं तद्विरोधादेव न निषेध्यम्। नापि वैधम्, आख्यातयोगिनञ्शब्दाश्रवणात्। आख्यातयोगे हि नञ् निषेधको भवति। न च 'अपशवः' इत्यत्र आख्यातं श्रूयते, येन षोडशिग्रहणाग्रहणवत् विकल्पो भवेत्। तेन गवाश्वविध्येकवाक्यतया अर्थवाद एवायम्। तथा च सति 'पशवो गोअश्वाः' इत्यत्र पशुशब्दः प्राशस्त्यं लक्षयित्वा प्राशस्त्यलक्षितगुणयोगेन गवाश्वसामानाधिकरण्यो भवति 'पशवो गोअश्वाः' इति। तादृशमेव च पशुशब्दं पश्वन्तरेषु सामानाधिकरण्येन तथैव गवाश्वप्राशस्त्यावगमहेतुं प्रयुज्य गवाश्वयोः प्राशस्त्यातिशयख्यापनार्थं नञा तदभावः प्रतिपाद्यते 'अपशवो वा अन्ये गोअश्वेभ्यः' इति अप्रशस्ताः इत्यर्थः। तदुक्तम् 'गवाश्वादिगतां पूर्वमुपादाय प्रशस्तताम्। तदभावोऽन्यपश्वादौ नञ्समासेन कथ्यते ॥' (वा. पृ. ३६२) इति।

इदं त्विह विवेक्तव्यम्। द्विविधो हि गौणः शब्दो भवति, यत्र परशब्दः परत्र प्रयुज्यते तत्र साधारणमेव गुणं निमित्तीकृत्य प्रवर्तते यथा 'अग्निर्माणवकः' इति। यत्र पुनः सामान्यवाची शब्दो विशेषशब्दसमानाधिकरणः प्रयुक्तः सन् अनर्थको भवति, तत्र तद्गतमेव गुणं लक्षयित्वा तत्सामानाधिकरण्यं प्रतिपद्यते यथा 'वसिष्ठो ब्राह्मणः' इति। तद्वदिहापि पशुशब्द इति। किंचान्यत्र प्रथमपक्षे गतिक्रियादयो गुणाः प्रवृत्तिनिमित्तानि, इह तु प्रशंसैव गुणः प्रवृत्तिनिमित्तम्। फलं च तदेवेत्येतदपि विवेक्तव्यमिति। तदुक्तं सूत्रे 'प्रशंसा' इति।

(तथा) 'सृष्टीरुपदधाति' इति विधिरनुवाद इति संदेहः। 'सृष्टाभिरेति चिनुते' इत्यभिख्यानार्थे-

इष्टकाचयनं प्रकृत्य श्रूयते 'सृष्टीरुपदधाति' इति। अत्र यद्यपि 'उपदधाति' इत्युपधाने विधिः श्रूयते, तथापि तस्येष्टकोपधानरूपस्योपधानस्य चयनाक्षेपलभ्यत्वात् सृष्टिपदार्थसंक्रान्तो विधिः सृष्टिपदेन च 'तद्वानासामुपधानो मन्त्रः' (पा० ४।४।१२५) इत्यनुशासनात् सृष्टिपदवन्मन्त्रोपधेया इष्टका उच्यन्ते। न च तासां मन्त्रसंबन्धात् प्राक् सृष्टिपदवाच्यत्वेन प्रसिद्धिरस्ति, ततश्च प्राप्ताप्राप्तविवेकेन विशेषणीभूतमन्त्रविधिरेवायमिति पूर्वः पक्षः। सिद्धान्तस्तु—न चैतत् संभवति, तथा सति इष्टकोपधानमात्रोद्देशेन सृष्टिपदवन्मन्त्रविधाने लिङ्गप्रकरणविनियोज्यानां सृष्टिपदरहितानां मन्त्राणामानर्थक्यप्रसङ्गात्। न च गत्यन्तरं नास्ति, बहवो हि मन्त्राः सृष्टिपदवन्तः एव श्रूयन्ते, तथान्येषामपि तदन्तर्गतत्वात् सृष्टिशब्देन सृष्ट्यसृष्टिपदवन्मन्त्रोपधेयेष्टकानुवादेन अर्थवादत्वेनैवोपपत्तेः। दृश्यते चैवं लोकेऽपि ब्राह्मणभूयस्त्वेन ब्राह्मणाब्राह्मणग्रामस्य ब्राह्मणग्राम इति श्रुतिः।

तदेतत् यथाभाष्यमधिकरणं वार्तिककारपादा नानुमन्यन्ते। विध्येकदेशो हि अर्थवादो भवति। न चात्र विधिः कश्चित् संनिहितोऽस्ति। प्रकृतचयनविधेरपि अनेकवाक्यान्तरव्यवहितत्वेन अस्य तदेकदेशत्वाभावात्। तेनोपधानमेवात्र विधीयते। सृष्टिपदेन च सृष्ट्यसृष्टिपदवन्मन्त्रोपधेयेष्टकाप्रतिपादनं तु स्तुत्यर्थं प्रथनविधाविव 'उरु प्रथा उरु प्रथस्व' इति मन्त्रकीर्तनम्। न च चयनार्थाक्षिप्तोपधानं न विधीयते इति वाच्यम्। आक्षेपात् प्रागेव श्रौतत्वेन मन्त्रप्रविधिना तद्विधानात्। न च विनापि विधिना प्राप्त्यनः किं विधिनेति वाच्यम्। यतो विधाने सति आध्वर्यववेदविहितत्वेन अध्वर्युकर्तृकत्वनियमसिद्धेः। तदुक्तम् 'प्राप्नुवत्यपि वक्तव्या पुनरेवंविधा क्रिया। आध्वर्यवसमाख्यानं तथा हि प्रतिपद्यते॥' (वा. पृ. २६४)। अन्यथ विस्तरभिया नाभिहितम्। तदुक्तं सूत्रे 'भूमा' इति।

तथा 'प्राणभृत उपदधाति' 'अज्यानीरुपदधाति' इति। अत्रापि पूर्ववत् इष्टकाचयनमेव प्रकृत्य श्रूयते 'प्राणभृत उपदधाति' इति। तत्र किमयं विधिरुतार्थवाद इति संशय्यते। तत्र पूर्वपक्षी मन्यते, 'सृष्टीरुपदधाति' इत्यत्र सृष्टिपदवन्मन्त्राणां बहुत्वात् तन्मध्यवर्तिनामसृष्टिपदवतामपि भवतु स्तुत्यर्थमुपादानम्, इह तु एकस्यैव मन्त्रस्य स्तुत्यर्थमुपादानं इति पूर्वोक्तेन पूर्वपक्षन्यायेन मन्त्रगुणविधानमेव इति पूर्वपक्षः। सिद्धान्तस्तु पूर्ववदेव। तत्र लिङ्गप्रकरणविनियोज्यानां बहूनां मन्त्राणामानर्थक्यप्रसङ्गात् न गुणविधित्वम्, किन्तु छत्रिन्यायेन एकदेशसंबन्धिनाऽपि लक्षितसमुदायगुणयोगेनैव समुदायिषु प्राणभृच्छब्दप्रवृत्त्युपपत्तेः पूर्ववदर्थवादत्वमेव इति। तदेतदपि वार्तिककारपादा नानुमन्यन्ते। संनिहितविध्यभावेनार्थवादत्वाभावादेव। तेनात्रापि उपधानमेव विधीयते, मन्त्रकीर्तनं प्रथनन्यायेन अर्थवादार्थमेवेति।

इदं त्विह वक्तव्यम्— 'सृष्टीरुपदधाति' 'प्राणभृत उपदधाति' इत्युदाहरणद्वयेऽपि लक्षितसमुदायगुणयोगेन समुदायिष्वविशेषात्र सृष्टिप्राणभृच्छब्दार्थयोः भूयस्त्वाल्पत्वेन समुदायिषु प्रवृत्तिनिमित्तकृतः कश्चिद् विशेषोऽस्ति इति विचारद्वयमनर्थकमेवेति। अत्रोच्यते। गौणो हि शब्दः परत्र वर्तितुं पलक्षयति, स एव गुणः तत्प्रवृत्तौ निमित्तम्। 'सृष्टीः' इति चात्र बहुत्वाक्षेपादेव समुदायोऽवगम्यते, एकदेशाकारान्नियतावच्छेदेन समुदायावयवानामेव द्वित्वबहुत्वादिसंख्यायोगात्। अतोऽत्र नार्थान्तरे वर्तितुं कश्चित् समुदायो निमित्तम्, किन्तु समुदायगतं सृष्टीनां बहुत्वमेव। तत्र यथा केवलसृष्टिसमुदाये बहुत्वमस्ति, तथा सृष्ट्यसृष्टिसमुदायेऽपीति। तेन तत्पदवतामन्येषां च समुदायगतं बहुत्वं लक्षितं समुदायान्तरे प्रवृत्तौ निमित्तमिति। बहुवचनं चात्र 'सृष्टीः' इति समुदायस्यैकत्वेऽपि समुदायान्तर्गतसृष्ट्यसृष्टिसमुदायिबहुत्वापेक्षया, यथा दर्शपूर्णमासशब्दयोः समुदायिवचनत्वेऽपि तदन्तर्गतसमुदायद्वयापेक्षया 'दर्शपूर्णमासाभ्यां यजेत' इति द्विवचनान्तत्वम्। 'प्राणभृत उपदधाति' इत्यत्र (बहुवचनं) तु प्राणभृन्मन्त्रस्यैकत्वात् एकस्मिन् बहुवचनानुपपत्त्या स्वसमवेतं समुदायं लक्षयति, स च समुदायः प्राणभृदप्राणभृत्समुदायिषु अविशिष्टः इति समुदायमेव निमित्तीकृत्य समुदायिषु प्रवर्तते, इति प्रवृत्तिनिमित्तभेदादेवोदाहरणद्वयार्थवत्त्वमिति। अत्र च प्राणभृ-

च्छन्दस समुदायद्वारेण समुदायिविषयत्वात् समुदायस्य च प्राणभृदप्राणभृत्साधारणत्वात् प्राणभृच्छन्दस गौणत्वेऽपि स्वार्थापरित्यागः । एवं दक्षिपदस्यापि समुदायविषयत्वात् स्वार्थापरित्याग एव ।

प्रयोजनं— सप्राणभृल्लिङ्गैरेवोपधानं कर्तव्य यदि पूर्वः पक्षः, यदि सिद्धान्तः सूत्रस्थप्राणभृदप्राणभृन्मन्त्रैरिति । तत्सिद्ध्यादिषु पक्षोक्तमेव प्रयोजनमूहनीयमिति । उक्तं सूत्रे 'लिङ्गसमवायात्' इति । प्राणभृदप्राणभृन्मन्त्रलिङ्गसमवायात् समुदायिप्रतीतिरित्यर्थः । गौता.

* तत्सिद्धिपदेनैव ( सूत्रेण ) अग्न्याद्यपराख्याना गुणप्रवृत्तिनिमित्तकथनात् । कौ. ११४।२४। १४ पृ २८०.

* तत्सिद्धिपैटिका पारिभाषिकार्थविशेषपरः शब्दोऽयम् । 'तत्सिद्धि–जाति–सारूप्य–प्रशंसा–भूम–लिङ्गसमवाया इति गुणाश्रयाः' इत्येक सूत्रं ( ११४।२३ ) 'तत्सिद्धिपैटिका' इत्युच्यते । अत्र योगविभाग कृत्वा पदविवरणेषु षट् गौणवृत्तिनिमित्तानि उक्तानि इति पैटिका इत्युच्यते । के.

* गौण्याः वृत्तेर्निमित्तप्रतिपादनद्वारा गौणीवृत्तिलक्षणं अनेन ( तत्सिद्धि– ) सूत्रेण अभिधीयते । कौ. ११४।१३।२३ पृ. २६८, * वैश्वानराधिकरणव्युत्पादितगुणवृत्तेः आक्षेपसमाधानार्थत्वं अस्य सूत्रस्य ( तत्सिद्धिसूत्रस्य ) । ११४।१३।२३ पृ. २६८. * तत्सिद्धिसूत्रे सिद्धे गौणे तन्निमित्तभेदः स्वार्थापरित्यागवृत्तिं च व्याख्यात इति अर्थं ( ३।२।१।१–२ ) अर्थात् विचारः पूर्वं प्रत्येतव्यः । वा ३।२।१।१ पृ. ७४६. * लक्षणागौण्योः तत्सिद्धिसूत्रे अर्थान्तरशक्तिपूर्वत्वस्य कल्पप्रमाणत्वेन । कौ. १।३।८।२४ पृ.११०. * तत्सिद्धिसूत्रोक्तैः सह नव गौणपक्षा द्रष्टव्याः । ( गौणीवृत्तिः इतिशब्दे द्रष्टव्यम् ) । वा. ३।२।१।१ पृ. ७४९.

* तत्सिद्धिसूत्रसिद्धाया गौण्याः पूर्वे. गुणवादसूत्रे स्वानुपयोगप्रकथनात् न पौनरुक्त्यम् ( गुणवादसूत्रेण तत्सिद्धिसूत्रस्य ) । कौ १।४।१३।२३ पृ.२६९.

* तत्स्थानापन्नः तत्कार्यं लभते इति न्यायः । अयं 'स्थानिवदादेशोऽनल्विधौ' ( पा० १।१।५६ ) इतिसूत्रस्य महाभाष्ये ध्वनितः । तद्यथा– 'लोके यो यस्य प्रसङ्गे भवति, लभतेऽसौ तत्कृतानि कार्याणि । तद्यथा उपाध्यायस्य शिष्यो याज्यकुलानि गत्वा अग्रासनादीनि लभते' इति । साहस्री. ४१८.

* तत्स्थानापन्नः तद्धर्मं लभते' इतिन्यायेन गवामयने द्वादशाहधर्मस्य द्वादशोपसत्ताया लाभः, न चोदकप्राप्तेन । सु. ७।८।३।१६. * तत्स्थानापन्नो तद्धर्मकाम. । इतिन्यायसिद्धं स्थानिवत्सूत्रम् । मूदि. पृ. २११.

* 'तद्धेतोरेव अस्तु ( तत् मध्ये किं तेन ) इति न्यायः । इष्टसाधनत्वादिज्ञानानां कार्यताज्ञानहेतुत्वकल्पने 'तद्धेतोरेवास्तु' इतिन्यायात् प्रवृत्तिं प्रति तेषामेव कारणत्वं युक्तम् । इति चेत् न । मणि. पृ. ८४. * 'तद्धेतोरेव अस्तु हेतुत्वं मध्ये किं तेन' । अनुभवस्मरणाभ्यामेव अविविक्ताभ्यां 'इदं रजतम्' इति विशिष्टाभिलापादिव्यवहारो जायते, न विशिष्टज्ञानात् 'तद्धेतोरेव०' इतिन्यायात् । शारीरकभाष्यवार्तिकम् १११, * 'तद्धेतोरेव अस्तु हेतुत्व मध्ये किं तेन' इतिन्यायात् प्रवृत्त्यादिव्यवहारसिद्धौ न तदर्थं अधिष्ठानज्ञानेनैव विशिष्टज्ञानकल्पने प्रमाणमस्ति इति अख्यातिवादिनः । पृ २०. * तद्धेतोरेव तदस्तु किं तेनेति न्यायः । तस्य कपालस्य हेतोर्मृदादेरेव तत् घटादिकारणत्वमस्तु किं तेन अन्तर्गडुना कपालादिरूपकार्येणेत्यर्थः । साहस्री. २९. * परे तु तात्पर्यज्ञानस्य न हेतुत्वमभिधानवति तज्ज्ञानासंभवात् । आवश्यकप्रकरणसमभिव्याहारादिना तज्ज्ञानसंभवे 'तद्धेतो.' इति न्यायेन तस्य वैयर्थ्यात् ... इत्याहुः । मणि पृ. ६९.

* ततोऽपि यावदुक्तं स्यात् । १०।७।१०।३४।। बहुगोधीये ततः आज्यभागविधानानन्तरं यावत् उक्तम् 'अग्नये समवद्यति' 'इडामुपह्वयति' इति तावदपि स्यात्, न केवलं आज्यभागान्तम् । इति सिद्धान्तः । के

* ततश्चावचनं तेषामितरार्थं प्रयुज्यते । ९।२।१२। ३७ ॥ भक्षस्य चोदितत्वात् भक्षाभिपदस्य च तत्प्रकाशनसामर्थ्यात् । आद्यन्तपदसंदंशपतितेतरपदानामनन्यगामित्वात् 'ततश्च०' इतिवत् भक्षणादीनामपि चोदितभक्षविशेषणत्वेन एकप्रधानार्थानामेकवाक्यत्वात् तत्रैव विनियोगः । या. ३।२।१।२५.

* ततःशब्दोऽपि पश्चात्समासमाह, नानन्तर्यम् । वा. ५।१।१।१ पृ. १२८९.

ﷺ 'तथाचोदितसमासं चोदिताभिधानात्' ( अर्थाभिधान० ९।१।१२।२६ ) इत्यनेन न्यायेन 'दाक्षाह' इत्यादीनामपि चोदितभक्षविशेषणीभूतभक्षणाद्यभिधानद्वारा भक्षाभिधानार्थमावगमः । सु. पृ. ११२४। न्यायरूपस्य सूत्रस्याकार्यस्तु — दर्शपूर्णमासयोः 'देवस्य त्वा' इत्यादौ निर्वापमन्त्रे वर्तमानाः सवितृप्रसवप्रभृतयः किं कर्मसमवेतार्थाभिधायकाः ततश्च विकृतौ ऊहितव्याः, अथवा न इति संदेहे पूर्वपक्षत्वेन निषिध्यते प्राप्ते सिद्धान्तकथनार्थः सूत्रशेषोऽयम् । तत्र दर्शपूर्णमासयोः सवितृविशेषताकं मन्त्रं अचोदितं न चोदितम्, तस्मात् असमासम्, मन्त्रे चोदितस्य अर्थस्य अभिधानात् । कर्मसमवेतो हि मन्त्रः कर्मसमवेतार्थस्यैवाभिधायकः । सवितृप्रसवादिशब्दाः न तादृशाः इति । के.

ﷺ तत्रान्यानृत्विजो वृणीरन् । १०।२।१४।४३॥

'सप्तादशसाय पुरुहमनीयेन ज्योतिष्टोमेन सहस्रदक्षिणेन यजेत' इति विहिते तत्र उद्वसानीये सोमे सहयजेभ्यः अन्यान् ऋत्विजः वृणीरन् वृणीत । एकयजमानक एवायं यागः तत्र ये केऽपि ऋत्विजो वरीतव्याः न कश्चित्तत्र नियमः । इदं अन्तर्गमिणी अधिकरणम् । सिद्धान्तः उक्तः । के.

ﷺ मंत्रार्थात् कर्तृपरिमाणं स्यादनियमोऽविशेषात् । ३।७।९।२१॥

यागकरणार्थं ऋत्विजः परिक्रेतव्या इत्युक्तम् । ते कति परिक्रेतव्या इति विचारे पूर्वपक्षसूत्रम् । ज्योतिष्टोमादिकं कर्म अन्येन कर्तव्यं इति सिद्धे सति इति पक्षान्तरार्थः । मंत्रात् कर्मकार्यानुसारेण कर्तॄणां परिमाणं संख्या नियमा स्यात् । किंवा अविशेषात् संख्याविशेषस्य अनुक्तत्वात् अनियमः स्यात् न कश्चित्तत्र नियमः । द्वौ वा एक एव वा परिक्रेतव्यः इति । अत्र सोमनाथी— तत्र कर्मान्तरसद्भावे सति यावद्भिस्तत्र प्रयोगकार्यं निर्वर्त्येत तावन्तः इति कार्यतः कर्तॄणां परिमाणं स्यात्, न तु एतावन्तः इति नियमः, विशेषानवगमात् इति । अत्र कुतूहलम्—तत्र कर्मान्तरसमावेशे सिद्धे सति, अर्थात् इतिकर्तव्यताऽल्पत्वबहुत्ववशात् कर्तृसंख्या, विशेषस्य अनवगमात् । इत्येकः पूर्वपक्षः । अथ द्वितीयः पक्षः— अविशेषादनियमः स्यात् । एकस्यैव कर्मान्तरस्य समावेशेऽपि परिक्रयविधिसिद्धेः एकमेव कर्मान्तरमिति ।

अपि वा श्रुतिभेदात् प्रतिनामधेयं स्युः । २२ ॥

पूर्वपक्षनिरासार्थः अपिशब्दः । ऋत्विजो श्रुतिभेदात् नामधेयभेदात् प्रतिनामधेयं ऋत्विजः स्युः । नामधेयंनामधेयं प्रति प्रतिनामधेयम् । यावन्ति नामधेयानि तावन्तो वरीतव्याः तत्र तत्र यागे यथायथम् । तत्र सर्वाणि नामधेयानि सन्दर्शयाम, यान् पुरोऽध्वर्युर्विभजति, प्रतिप्रस्थाता मन्थिनं जुहोति, नेष्टा पत्नीमभ्युदानयति, उन्नेता चमसाननुनयति, प्रस्तोता प्रस्तौति, उद्गाता उद्गायति, प्रतिहर्ता प्रतिहरति, सुब्रह्मण्यः सुब्रह्मण्यामाह, होता प्रातरनुवाकमनुब्रूते, मैत्रावरुणः प्रेष्यति चानुचाह, अच्छावाको यजति, ग्रावस्तुत् ग्रावस्तोत्रीयामन्वाह । एवं ब्रह्मा ब्राह्मणाच्छंसी पोता आग्नीध्रः सदस्यश्च । एवं षोडश नामधेयानि । तेन सप्तदश ऋत्विजः सोमे वरीतव्याः । अग्निहोत्रे एकः, दर्शपूर्णमासयोश्चत्वारः, चातुर्मास्येषु पञ्च इत्यादि । तथा च ऋत्विजां वरणे नियमोऽस्ति ।

एकस्य कर्मभेदादिति चेत् । २३ ॥

ननु एक एव अन्यः परिक्रेतव्यः । अध्वर्य्वादिनामधेयभेदस्तु हविर्निर्वपणं मन्थिहोमः इत्यादीनां कर्मणां भेदात् उपपद्यते । यथा च एकस्यापि कर्मभेदेन भिन्ननामधेयत्वात् एक एव परिक्रेतव्यः इति चेत् ।

नोत्पत्तौ गुरुत्वात् । २४ ॥

पूर्वसूत्रोक्तशङ्कानिरासार्थं सिद्धान्तसूत्रमिदम् । न एकस्य अनेकनामधेयसंबन्धः । कुतः । उत्पत्तौ उत्पत्तिविधौ एव हि यस्मात् पुरुषाणां कर्तृत्वं अध्वर्युः होता

अर्थात् प्रयाजप्रतिषेधः स्यात् । तस्मात् औपभृतं जौहवार्थम् । इति चेत् । उभयार्थं सर्वं औपभृतम्।

स्याज्जुहूप्रतिषेधान्नित्यानुवादः । ४५ ॥

सिद्धान्ती आह । स्यात् औपभृतं प्रयाजानुयाजोभयार्थमेव । 'यदुपभृति गृह्णाति, अनुयाजेभ्यस्तत्' इति तु नित्यानुवादः । जुहूप्रतिषेधात् । उभयस्मिन् औपभृते जौहवे च उभयार्थे प्राप्ते, जौहवम् 'प्रयाजेभ्यस्तत्' इत्यनेन अनुयाजेभ्यः अर्थात् प्रतिषिद्धम्, नौपभृतम् । यदा औपभृतस्य 'प्रयाजानुयाजेभ्यस्तत्' इति वाक्यान्तरेण उभयार्थता तदा 'अनुयाजेभ्यस्तत्' इति अनुयाजार्थताश्रवणं नित्यानुवादो भवितुमर्हति, न शक्नोति प्रयाजार्थतां प्रतिषेद्धुम् । जुहूशब्देन सूत्रे लक्षणया जौहवाज्यं गृह्यते । तस्य अनुयाजेभ्यः सकाशात् अर्थात् प्रतिषेधः । तस्मादौपभृतमुभयार्थम् । के.

तत्रैकत्वमयज्ञाङ्गभूतमर्थस्य गुणभूतत्वात् । ४।१।५।११ ॥

'अग्नीषोमीयं पशुमालभेत' इति पश्वालम्भो विहितः । तत्र श्रुते वाक्ये यत् पशौ या पशु एकत्वं श्रुतम्, तत् यागाङ्गभूतं यतस्य आलम्भसाधितस्य अङ्गभूतं न भवति । अविवक्षितमित्यर्थः । अर्थस्य प्रकृत्यर्थस्य पशोः आलम्भगुणभूतत्वात् एकत्वस्य च पश्वङ्गत्वात्, एकत्वं आलम्भस्य आलम्भोपलक्षितस्य यागस्य वा अङ्गम् । अतो विवक्षितम् । तस्मात् द्वौ बहवो वा पशव आलब्धव्याः इति पूर्वः पक्षः ।

एकश्रुतित्वाच्च । १२ ॥

पूर्वपक्षे हेत्वन्तरपरं सूत्रम् । 'यदि सोममपहरेयुः एकां गां दक्षिणां दद्यात्' इत्यत्र यदि प्रत्ययोक्तमेकत्वं विवक्षितं स्यात्, तदा 'एकाम्' इति विशेषणं व्यर्थं स्यात् । तेन ज्ञायते प्रत्ययोक्तमेकत्वं अविवक्षितमिति । अतः 'पशुम्' इत्यत्रापि प्रत्ययोक्तमेकत्वं अविवक्षितमिति । एका इति श्रुतिः विशेषणशब्दः यस्य सः 'गाम्' इति शब्दः । तस्य भावः एकश्रुतित्वम् । 'स्त्रियाः पुंवत्०' (पा० ६।३।३४) इति पुंवद्भावः । 'एकां गाम्' इत्यत्र एकश्रुतित्वस्य विद्यमानत्वात् सूत्रे च तद्भावात् एकत्वमविवक्षितमिति भावः । 'अश्रुतत्वाच्च' इति कुतूहलपाठे तु यथा 'एकां गाम्' इत्यत्र एकामिति विशेषणं श्रुतं तथा पशुमित्यत्र न श्रुतं इति प्रत्ययोक्तमेकत्वं अविवक्षितमित्यर्थः ।

प्रतीयत इति चेत् । १३ ॥

सिद्धान्ती शङ्कते । 'गामानय' इत्युक्ते यथा एकैव गौरानीयते गामिति प्रत्ययेन हि एकत्वं प्रतीयते इति । तथा 'पशुम्' इत्यत्रापि एकत्वं प्रतीयते, प्रतीयमानत्वाच्च विवक्षितमिति मन्तव्यमिति चेत् ।

नाशब्दं तत्प्रमाणत्वात् पूर्ववत् । १४ ॥

पूर्वपक्षी उत्तरं ब्रूते । नायं आपत्तिः । एकत्वस्य प्रतीयमानत्वेऽपि अशब्दमेकत्वम् । नास्ति तात्पर्येण प्रतिपादकः शब्दो यस्य तत् एकत्वमशब्दम् । यत्र तात्पर्यम्, स शब्दार्थः सशब्दो नाम । न चेदमेकत्वं सशब्दं किन्तु अशब्दम् । तत्प्रमाणत्वात् सः शब्दः न्यायोपेतः प्रमाणं यस्य तादृशत्वात् । स शब्दार्थो विवक्षितो भवति यो न्यायोपेतशब्दप्रमाणकः । एकत्वं च न तथा । पूर्ववत् यथा लोके 'पूर्वो धावति' इत्युक्ते अपरोऽपि कश्चित् धावतीति प्रतीयते । प्रतीयमानोऽपि न नाम अपरो विवक्षितो भवति । एवं 'पशुम्' इत्यत्र प्रतीयमानमपि एकत्वं शब्दतात्पर्यविषयः इति प्रतीयमानमपि न विवक्षितम् । अशब्दं इत्यत्र अशाब्दं इति सुबोधिन्यां पाठः । अर्थस्तु न भिन्नः । शब्दस्य विषयः शाब्दम्, न शाब्दं अशाब्दमिति तु समासः ।

शब्दवत्तूपलभ्यते, तदागमे हि तद् दृश्यते तस्य ज्ञानं, यथाऽन्येषाम् । १५ ॥

'अग्नीषोमीयं पशुम्' इत्यत्र एकत्वमविवक्षितमिति सूत्रैः पूर्वपक्षे प्राप्ते सिद्धान्तयति । तुशब्दः पूर्वपक्षव्यावृत्त्यर्थः । शब्दोऽस्यास्ति प्रतिपादकः इति शब्दवत् । उपलभ्यते प्रतीयते । एकत्वं पशौ शब्दवत् उपलभ्यते शब्देन प्रतीयते । हि यस्मात् तदागमे एकवचनात्मकस्य शब्दस्य आगमे सति तत् एकत्वं दृश्यते 'पशुमानय' इत्यत्र । 'पशू आनय' इत्यत्र तु एकवचनानागमे एकत्वं न दृश्यते । तस्मात् तस्य एकत्वस्य ज्ञानं एकवचनप्रत्ययात् भवत्येव । यथा अन्येषां शब्दानाम् । 'अश्वमानय' इत्युक्ते अश्वः प्रतीयते न गौर्वा उष्ट्रो वा ।

'गामानय' इत्युक्ते गौः प्रतीयते नाश्वो नोष्ट्र इत्यादि। एकवचनश्रुत्या एकत्वं पशो श्रूयते, वाक्येन तु तत् पशौ विधीयते इति न श्रुत्या वाक्यबाधो विरोधाभावात्। तस्मात् विवक्षितमेकत्वम्। तस्मात् अग्नीषोमीयः पशुः एक एवालब्धव्यः।

तद्वच्च लिङ्गदर्शनम्। १६ ॥

सिद्धान्ते हेत्वन्तरपरं सूत्रम्। चकारः हेत्वन्तरसमुच्चयार्थः। यद्वत् शब्देन एकत्वोपक्रमः एकत्वविवक्षासाधकः, तद्वत् लिङ्गदर्शनमपि एकत्वविवक्षासाधकम्। तथाहि 'कर्णा याम्याः, अवलिप्ता रौद्राः, नभोरूपाः पार्जन्याः, तेषामैन्द्राग्नो दशमः' इति। कर्णाः छिन्नकर्णाः पशवः याम्या यमदेवताकाः। अवलिप्ताः गर्वयुक्ताः पशवः रुद्रदेवताकाः। नभोरूपाः नीलवर्णाः पशवः पर्जन्यदेवताकाः। तेषामुक्तानां पशूनां दशमः ऐन्द्राग्नः इन्द्राग्निदेवताको भवति। एवमेते दश पशवः अश्वमेधे विधीयन्ते। अत्र कर्णाः अवलिप्ताः इत्यादिबहुवचनं त्रित्वपर्यवसायि यदि विवक्षितं भवेत्, तदैव ऐन्द्राग्नस्य दशमत्वं सिध्येन्नान्यथा। तथा च यथा तत्र त्रित्वं विवक्षितम्, तथा अग्नीषोमीयेऽपि एकत्वं विवक्षितमिति भवति लिङ्गदर्शनं साधकम्।

तथा च लिङ्गम्। १७ ॥

यथा 'अग्नीषोमीयं पशुम्' इत्यत्र एकत्वं विवक्षितम्, तथा 'वसन्ते प्रातराग्नेयीं कृष्णग्रीवामालभते, ग्रीष्मे माध्यन्दिने संहितामैन्द्रीम्, शरद्यपराह्णे श्वेतां बार्हस्पत्याम्' इत्युक्त्वा 'गर्भिण्यो भवन्ति' इत्युक्तम्। गर्भश्च स्त्रीणां गुणः। तथा च स्त्रीत्वरूपं लिङ्गं एकत्ववत् विवक्षितं भवति। एवम् 'अथ ऋषभो पुंगिवेश्च पुरुषः, ते प्राजापत्याः' इत्यत्र 'मुष्करा भवन्ति' इति मुष्करस्य पुंगुणस्य दर्शितत्वात् पुंस्त्वं विवक्षितम्। एवं एकत्वविवक्षायां स्त्रीत्वं पुंस्त्वं च दृष्टान्ततया लिङ्गदर्शनमेव। चे.

● 'तथैकत्वमस्याङ्गमर्थस्य गुणभूतत्वात्' इत्यधिकरणे पश्वेकत्वस्य विवक्षा व्यवस्थापयिष्यते। पश्वेकत्वाधिकरणम्। कु. ३।१।७।१५. ● तथैकत्व ●। न च विशिष्टद्रव्यविधिपरत्वने इति वक्तव्ये 'अथैकत्वमस्याङ्गभूतम्' इति। वा. १।४।२।३ पृ. २३०। द्रव्यविशेषणानां विधेयांशत्वं वक्ष्यते। २।२।१२।२७ पृ. ५५९.

■ तत्र तत्त्वमभियोगविशेषात् स्यात्। (१।३।८।२७)। ये शास्त्रस्थाः शिष्टाः तेषा प्रतिपत्तिर्वैदिकी (शब्दे) नेतराऽपि। अनेकशक्तिकल्पनाऽऽदिदोषचतुष्टयप्रसङ्गात्। न च नियमकाभावः 'तत्र०' इतिन्यायेन अभियोगानभियोगयोः (यत्नप्रमादप्रयत्नमानत्वयोः) एव नियामकत्वात्। श्री. १।३।४।९ पृ. ५९.

■ तत्र दानं विभागेन प्रदानानां पृथक्त्वात्। १०।३।१२।५० ॥

ज्योतिष्टोमे द्वादशाधिकशततसंख्या गावो दक्षिणा दातव्या। तत्र यद्ये विभागेन दानं स्यात् यजमानेन दक्षिणा विभज्य षोडशभ्य ऋत्विग्भ्यो दातव्या। असति विभागे न शक्यः ऋत्विजा स्वेन भागेन संग्रहः कर्तुम्। प्रतीयते येभ्यस्ते प्रदानाः प्रतिग्रहीतारः ऋत्विजः। तेषां पृथक्त्वात् दानमपि पृथक्पृथगेव विभज्य कर्तव्यम्। तस्मात् दक्षिणा विभज्य दातव्या।

परिक्रयाच्च लोकवत्। ५१ ॥

सिद्धान्ते हेत्वन्तरमाह। परिक्रयाच्च विभज्य दातव्यम्। परिक्रयार्थं दानं न धर्ममात्रम्। परिक्रयार्थं च भर्मा भृत्येव भृतः परिक्रेतव्यम्। लोकवत्। यथा लोके पञ्चशतमनिभ्यो भृतीयते, तत्र कण्डनादिः इत्यमिना सह पणन्ते, तेभ्यः स्वामी विभज्य निर्दिशति इदं युष्मभ्यम्, इदं युष्मभ्यमिति। तस्मात् यजमानेन स्वयं विभज्य दक्षिणा दातव्या, न तु परिषदा। इति सिद्धान्तः।

विभागं चापि दर्शयति। ५२ ॥

सिद्धान्ते अपरं हेतुमाह। अपि च विभागं दर्शयति श्रुतिः– 'युयो वो विभावेदा विभजतु' इति विभागमन्त्रस्थानत् पठ्यते। किञ्च 'कृष्णाजिनेन वित्रस्य दक्षिणा ददाति' 'आग्नीध्राय ददाति' 'ब्रह्मणे ददाति' 'प्रस्तोतृभ्यो ददाति' 'होत्रे ददाति' 'नेष्ट्रे ददाति' 'हविर्धाने आसीनेभ्योऽध्वर्युभ्यो ददाति' 'अन्तःसदसि आसीनेभ्यो यथाश्रद्धं प्रसर्पकेभ्यो ददाति'

इति । तस्मात् स्वयं विभज्य यजमानेन दातव्यम्, न परिषदा । इति सिद्धान्तः । के.

तत्र प्रतिहोमो न विद्यते, यथा पूर्वेषाम् । ६।५।११।४०॥

ज्योतिष्टोमे कुतश्चित् कारणात् दीक्षाकालवृद्धौ अग्निहोत्रहोमाकरणमपि कर्तव्यमिति पूर्वाधिकरणे उक्तम् । यावता होमकालानामकरणस्य वृद्धिः तावतः परिसंख्याय दीक्षाविमोकानन्तरं होमकरणे प्राप्ते अन्तरिता होमाः प्रतिहोमा नाम कर्तव्या न वा इति विचारे उच्यते । तत्र दीक्षाकाले उत्कृष्यमाणे प्रतिहोमो न विद्यते, प्रतिहोमाः न कर्तव्याः इत्यर्थः । यथा पूर्वेषां दीक्षाकालीनानां प्रतिषिद्धानां होमानां प्रतिहोमा न भवन्ति प्रतिषिद्धत्वात् तथा दीक्षावृद्धावपि अकृतानां होमानां प्रतिहोमा न भवन्ति । कर्तव्यं अकृत्वा तत्समाधानार्थं पुनःकरणम् । दीक्षाकाले तु अकर्तव्या एव होमाः । तस्मात् तेषां कर्तव्यता नास्त्येव इति सिद्धान्तः ।

कालप्राधान्याच्च । ४१ ॥

ज्योतिष्टोमे अवभृथानुत्कर्षकालीनानामग्निहोत्रहोमानां यथा प्रतिहोमा न भवन्ति तथा अवभृथोत्कर्षकालीनानामपि प्रतिहोमा न भवन्ति इति सिद्धान्ते युक्त्यन्तरमाह । 'सायं जुहोति, प्रातर्जुहोति' इति विहितस्य कालस्य प्राधान्यात् जीवतोऽपि सायमादिकालातिरिक्ते काले नाधिकारः, एवमवभृथोत्कर्षेऽपि दीक्षितत्वात् अनधिकारः । तस्मात् दीक्षावृद्धिकालीनानामपि होमानां न प्रतिहोमाः इति । के.

'तत्र प्रयोगबाहुल्यात् तद्विशेषेषु सत्स्वपि । प्रयोगान् परसामान्ये सति चाऽप्यप्रयोगतः ॥ सास्नाद्येकार्थसंबन्धिगोत्वमात्रस्य वाचकः । गोशब्द इति विज्ञानमन्वयव्यतिरेकजम् ॥' इत्यनेन न्यायेन अन्वयव्यतिरेकाभ्यामपि गोत्वस्यैव गोशब्दवाच्यता अवसीयते । सु. पृ. २६८.

तत्र विप्रतिषेधाद् विकल्पः स्यात् । ६।५।१८।५१ ॥

'यदि उद्गाताऽपच्छिद्येत अदक्षिणो यज्ञः संस्थाप्यः । अथान्यं आहृत्य, तस्मै तद् दद्यात् यत् पूर्वस्मिन् दास्यन् स्यात् । यदि प्रतिहर्ताऽपच्छिद्येत, सर्वस्वं दद्यात्' इति । यदि उद्गातुः अध्वर्युणा सह अपच्छेदः स्यात् तदा प्रवृत्तो यज्ञः दक्षिणादानरहित एव समापनीयः । पुनश्च सद्यः तमेव यज्ञं कुर्यात्, तत्र च सा दक्षिणा द्वादशशतरूपा दातव्या । अथ यदि प्रतिहर्त्रा प्रस्तोत्रा सह अपच्छेदः कृतः स्यात् तदा तस्मिन्नेव यज्ञे यजमानेन सर्वस्वदक्षिणा दातव्या न केवलं द्वादशशतपरिमाणा इति उदाहृतश्रुतेः तात्पर्यम् । इमे द्वे प्रायश्चित्ते परस्परं विरुद्धे । अथ यस्मिन् यागे उद्गातुः प्रतिहर्तुश्च अपच्छेदौ युगपत्संजातौ तत्र तन्निमित्तकयोः प्रायश्चित्तयोः विप्रतिषेधात् परस्परं विरोधात् एकस्मिन् यागे कर्तुमशक्यत्वात् विकल्पः स्यात् । यजमानेच्छया अन्यतरत् कर्तव्यम् । इति सिद्धान्तः ।

प्रयोगान्तरे वोभयानुग्रहः स्यात् । ५२ ॥

पूर्वोक्तं सिद्धान्तपक्षं वाशब्देन निरस्यन् आह, विकल्पो न भवति । समुच्चय एव कर्तव्यः । परन्तु प्रायश्चित्तयोः परस्परं विरोधात् समुच्चयो न संभवति एकस्मिन् प्रयोगे, इति कृत्वा प्रयोगद्वयं कर्तव्यम् । एकस्मिन् प्रयोगे एकं प्रायश्चित्तम्, प्रयोगान्तरे च अपरं प्रायश्चित्तमिति उभयानुग्रहः उभयोः प्रायश्चित्तयोः अनुग्रहः स्यात् । तथापि प्रथमप्रयोगे द्वितीयप्रयोगोपयुक्तं द्रव्यं परिशेष्य सर्वस्वं देयम् । द्वितीये तु प्रयोगे द्वादशशतमिति । इति पूर्वः पक्षः ।

न चैकसंयोगात् । ५३ ॥

अग्निष्टोमे उद्गातृप्रतिहर्तृभ्यां द्वाभ्यामपि अपच्छेदे यौगपद्येन कृते परस्परविरुद्धमपि प्रायश्चित्तद्वयं प्रयोगभेदेन कर्तव्यं इति पूर्वपक्षं सूत्रेण प्राप्तं चशब्देन निरस्यन् तत्र हेतुमाह । न प्रयोगभेदेन प्रायश्चित्तद्वयं कर्तुं शक्यम् । एकसंयोगात् एकेनैव प्रयोगेण सह सर्वस्वदाक्षिण्यस्य अदक्षिणत्वस्य च संयोगात् संयोगस्य श्रवणात् । प्रयोगभेदे तु एकसंयोगो न स्यात् । तस्मात् न प्रयोगभेदेन प्रायश्चित्तद्वयानुष्ठानं संभवति । किन्तु ऐच्छिको विकल्प एवेति सिद्धान्तः । के.

■ तत्र सर्वेऽविशेषात् । ४।३।११।२७ ॥

'सर्वेभ्यो दर्शपूर्णमासौ' 'सर्वेभ्यो ज्योतिष्टोमः' इति यत् दर्शपूर्णमासादेः सर्वकामफलकत्वमुक्तम्, तत् किं सकृत्प्रयोगे, उत पर्यायेण इति विचारे पूर्वपक्षसूत्रमिदम् । तत्र दर्शपूर्णमासाख्ये ज्योतिष्टोमाख्ये च कर्मणि सकृत् प्रयुक्ते सर्वे कामा भवेयुः यौगपद्येन । अविशेषात् विशेषस्य अनुक्तत्वात्, 'सर्वेभ्यः' इति सर्वशब्दप्रयोगात् ।

अथ द्वितीयं वर्णकम् । तत्रार्थं पूर्वपक्षसूत्रार्थः । सौर्यादिषु काम्येषु कर्मसु ये ब्रह्मवर्चसादयः कामाः श्रुताः ते सर्वे तत्र परलोके स्युः नेह लोके । स्वर्गेण अविशेषात् । यथा स्वर्गः इह लोके न लभ्यते तथा ब्रह्मवर्चसादयोऽपि इह नोपलभ्यन्ते । तस्मात् आमुष्मिकाः कामाः इति ।

योगसिद्धिर्वाऽर्थस्योत्पत्त्यसंयोगित्वात् । २८ ॥

सिद्धान्तयति । वाशब्दः पूर्वपक्षं व्यावर्तयति । सकृत्प्रयोगे न सर्वकामावाप्तिः किन्तु पर्यायेण । योगः संबन्धः, स च पौर्वापर्येण पर्यायो विवक्षितः । योगेन पर्यायेण सिद्धिः तत्तत्फलस्य लाभः स्यात् । एकेन प्रयोगेण एकस्य फलस्य सिद्धिः, अपरेण अपरस्य फलस्य, इति पर्यायेण सर्वकामावाप्तिः । अर्थस्य फलस्य उत्पत्त्यसंयोगित्वात् । युगपत् सर्वे कामाः उत्पत्त्या असंयोगिनः, उत्पत्त्या संयोगः संबन्धः न संभवति । सर्वेषां युगपदुत्पत्तिर्न संभवतीत्यर्थः । उत्पत्त्या संयोगः उत्पत्तिसंयोगः, सोऽस्यास्ति इति उत्पत्तिसंयोगि, न उत्पत्तिसंयोगि, असंयोगि, तस्य भावः, तस्मात् । अथवा उत्पत्तौ उत्पत्तिविधौ असंयोगित्वात् सर्वेषां कामानां संबन्धो नास्ति, न श्रुतः इत्यर्थः । तस्मात् कामानां पार्थक्यम् ।

द्वितीयवर्णके तु एतत्सूत्रार्थं इत्थम् । काम्यानां कर्मणां ये ब्रह्मवर्चसादयः कामाः, ते स्वर्गवत् इह लोके नोपलभ्यन्ते तस्मात् मरणोत्तरमेव अन्यजन्मन्येव ते लभ्यन्ते इति पूर्वसूत्रेण पूर्वपक्षे प्राप्ते सिद्धान्तः । योगस्य फलसंबन्धस्य प्रतिबन्धकाभावे इहैव सिद्धिः । अर्थस्य फलस्य तु उत्पत्त्या वर्तमानजन्मना असंयोगित्वात् संबन्धस्य अनुक्तत्वात् सति प्रतिबन्धे अन्यजन्मन्यपि काम्यं फलं लभ्यते । इति । मे.

■ तथाऽन्तःक्रतुप्रयुक्तानि । ६।२।९।३० ॥

दर्शपूर्णमासयोः 'भिन्ने जुहोति' 'स्कन्ने जुहोति' इति श्रुतम् । यथा सायंप्रातरादिकाले आगते आगते अग्निहोत्रहोमादि आवर्तते, तथा अन्तःक्रतु क्रतुमध्ये प्रयुक्तानि भेदनहोमादीन्यपि प्रतिक्षणं भेदनच्छेदनादौ निमित्ते नैमित्तिको होमोऽपि आवर्तनीयः इति सिद्धान्तः । अतिदेशाधिकरणम् । अन्तःक्रतुयुक्तानि इति सुबोधिन्याम्, अन्तःक्रतुसंयुक्तानि इति कुतूहले च पाठः । अर्थस्तु न भिन्नः । के.

■ तथाऽपूर्वं इति न्यायः । वेदिकरणन्यायोऽयम् । भक्तार्थस्तु अचिरादेव द्रष्टव्यः । भा. ५।१।१६।२९. ● अभिषेकमात्रस्यापकर्षः, न तु तदन्यस्य 'तथाऽपूर्वं' इति न्यायात् । (विवेचनायुक्तस्य सूत्रस्य अभिषेचनीयाङ्गस्य अभिषेकस्य अपकर्षे तन्त्रोऽयम्) । रत्न. ५।३।१०।२१. ● 'स्वदेशात्तु पूर्वेषाम्' इत्यत्र अग्राकृष्यमाणानामपि त्रिदेवनादीनां अपकर्षवर्णनेन 'तथाऽपूर्वम्' इत्यस्य विशिष्टविषयत्वव्याख्यानात् । पा. ११।७।२२ पृ. १०४८.

■ तथाऽपूर्वम् । ५।१।१६।२९ ॥

दर्शपूर्णमासयोः वेदिः हविरभिवासनोत्तरकाले समाम्नाता । सा अमावास्यायां प्रतिकृष्यते 'पूर्वेद्युरमावास्यायां वेदिं करोति' इति । सा अपकृष्यमाणा ततोऽर्वाचीनान् पदार्थान् अपकर्षति न वेति विचारे प्रयोगवचनात् अपकर्षति इति पूर्वः पक्षः । तत्र सिद्धान्तयति अतिदेशेन । पूर्वं उत्कर्षाभाव उक्तः, अत्र तु अपकर्षाभाव इति तु विशेषः । पूर्वं प्रकृतिपूर्वकं विकृतिरित्यर्थः । पूर्वं न भवति इति अपूर्वं प्रकृतिभूतं कर्म अमावास्या । यथा अमावास्यायां वेदिः तथा पूर्वोक्तमपकृष्यमाणवद् अर्वाचीनान् पदार्थान् नापकर्षति । तस्मात् हविरभिवासनान्ताः पदार्था न प्रतिकृष्यन्ते । वेदिमात्रं अपकृष्यम् । हविरभिवासन हविषः पुरोडाशस्य दर्भैः अभितो ज्वलद्भिः उल्मुकैः परितपनम्, उपरि तृणादेः आच्छादनं च । तत्तो वेदिकरणम् । मे.

सू तथाऽभिघारणस्य । १०।३।१०।३८ ॥

श्यामाकाग्रयणे 'वासो दक्षिणा' व्रीह्याग्रयणे च 'वत्सः प्रथमजो दक्षिणा' इति श्रूयते । तयोश्च वासोवत्सयोः अन्वाहार्यधर्माः कर्तव्याः, पाकस्तु न कर्तव्य इत्युक्तम् । तथा पाकवत् अभिघारणस्य अकर्तव्यता । अप्रकारितत्वात् अन्येन कारितत्वात् अप्रयुक्तत्वात् इति पूर्वसूत्रादनुवर्तनीयम् । भक्षणीयस्य स्वादुतासंपादनार्थं हि अभिघारणं भवति, वासोवत्सयोस्तु भक्ष्यत्वमेव नास्तीति अभिघारणमपि न कर्तव्यमिति सिद्धान्तः । के.

सू तथाऽभिधानेन । ३।७।४।८ ॥

अन्तरागाभिमर्शनस्याधिकरणस्य पूर्वपक्षसूत्रमिदम् । पूर्वसूत्रात् संयोगात् इतिपदम्, पूर्वतरसूत्रात् प्रधानस्य इति पदं चानुवर्तते । 'चतुर्होत्रा पौर्णमासीमभिमृशेत्, पञ्चहोत्रा अमावास्याम्' इति विषयवाक्यम् । 'पृथिवी होता' इत्यादिर्मन्त्रः चतुर्होता नाम । 'अग्निर्होता । अश्विनाऽध्वर्यू' इत्यादिर्मन्त्रः पञ्चहोता नाम । पौर्णमास्यमावास्याशब्दाभ्यां तत्तद्यागगतं प्रधानहविर्गृह्यते । चतुर्होतृमन्त्रेण पौर्णमासीगतप्रधानहविषः अभिमर्शनं हस्तेन स्पर्शनं कर्तव्यम् । पञ्चहोतृमन्त्रेण अमावास्यागतप्रधानहविषः अभिमर्शनं कर्तव्यमिति विषयवाक्यार्थः । इदमभिमर्शनं किं प्रधानमात्रस्य, उत अङ्गप्रधानानामिति संशये अभिमर्शनं प्रधानस्यैव नाङ्गानाम् । तथाशब्देन पूर्वसूत्रसूचिता वेदिर्दृष्टान्तिता । वेदिवत् अभिमर्शनमपि प्रधानस्यैवेत्यर्थः । कुतः ? प्रधानस्येति पदं आवर्तनीयम् । प्रधानस्य अभिधानेन पौर्णमासी अमावास्या इति प्रधानस्यैवाभिधानात् इत्यर्थः ।

गुणाभिधानात् सर्वार्थमभिधानम् । १० ॥

अभिमर्शनं प्रधानस्यैवेति प्राप्ते सिद्धान्तयति । 'पौर्णमासीमभिमृशेत्, अमावास्यामभिमृशेत्' इति अभिधानं सर्वार्थं साङ्गप्रधानार्थम्, न प्रधानमात्रार्थम् । कुतः ? गुणाभिधानात् । 'पौर्णमासीम्, अमावास्याम्' इति द्वितीयाऽन्तेन साङ्गप्रधानानां संस्कार्यत्वमुक्त्वा अभिमृशेत् इति अभिमर्शनस्य गुणस्य अभिधानात् । तस्मात् अभिमर्शनं सर्वार्थमिति सिद्धान्तः । अत्र सप्तमनवमाभ्यां सूत्राभ्यां एकमधिकरणं तृतीयम्, अष्टमदशमाभ्यां न चतुर्थमधिकरणं इति विभागो द्रष्टव्यः । के.

सू तथाऽवज्वलनम् । १०।२।१२।६० ॥

दर्शपूर्णमासयोः अवज्वलनं पुरोडाशस्य उपरिपाकार्थत्वात् क्रियते । सौर्ये चरौ तु तथा अभ्यूहवत् न कर्तव्यम् । चरौ हि उपरि पाको नावश्यकः । इति सिद्धान्तः । के.

सू तथाऽवभृथः सोमात् (७।३।४।१३) इति न्यायः । सूत्रार्थस्तु अधुनैव भविष्यति । के. * 'तथाऽवभृथः सोमात्' इति सप्तमाधिकरणे वरुणप्रघासौमिकावभृथभावनाधर्मातिदेशाविरोधात् कारणत्वेन वा अवभृथस्य अतिदेशायोगेऽपि स्वशब्देनोपदिष्टस्य स्वधर्मसंनिधापकत्वात् काम्ययुगाश्रयभूताग्निहोत्रादिवत् अतिदेशनिमित्तमभिप्रेत्य अवभृथनाम्नः अतिदेशकत्वोक्त्युपपत्तेः । सु. पृ. ९९५.

सू तथाऽवभृथः सोमात् । ७।३।४।१३ ॥

वरुणप्रघासेषु 'वारुण्या निष्कासेन तुषैश्च अवभृथं यन्ति' इति श्रूयते । अत्र दार्शपूर्णमासिके चोदकप्राप्ते अपां न्युब्जने तुषनिष्कासविधिः, किंवा सौमिकादवभृथात् धर्मातिदेशः इति विचारे सिद्धान्तमाह । यथा पवहात् पृष्ठानामतिदेशः, तथा सोमात् अवभृथः अवभृथधर्माः वारुणप्राघासिके अवभृथे अवभृथनाम्ना अतिदिश्यन्ते, अवभृथशब्दसामान्यात् ।

प्रकृतेरिति चेत् । १४ ॥

वरुणप्रघासेषु 'वारुण्या निष्कासेन तुषैश्च अवभृथं यन्ति' इत्यत्र प्रकृतेः दर्शपूर्णमासरूपायाः सकाशात् चोदकप्राप्ते अपां न्युब्जने अवभृथाख्ये निष्कासतुषरूपस्य गुणस्य विधिः स्यात् इति पूर्वः पक्षः । इति चेत् ।

न, भक्तित्वात् । १५ ॥

पूर्वपक्षिणा यदुक्तं तन्न, भक्तित्वात् । दर्शपूर्णमासयोः योऽयमपां न्युब्जनेन प्रणीतानिनयनम्, तत्र अवभृथत्वं भक्त्या उक्तम्, प्रशंसावादोऽयम् 'एष वै दर्शपूर्णमासयोरवभृथः' इति । नास्ति तु दर्शपूर्णमासयोरवभृथः । तस्मात् सौमिकादेवावभृथात् वारुणप्राघासिके अवभृथे केषांचिद्धर्माणामतिदेशः ।

■ तत्र सर्वेऽविशेषात् । ४।३।११।२७ ॥

'सर्वेभ्यो दर्शपूर्णमासौ' 'सर्वेभ्यो ज्योतिष्टोमः' इति यत् दर्शपूर्णमासादेः सर्वकामत्वमुक्तम्, तत् किं सकृत्प्रयोगे, उत पर्यायेण इति विचारे पूर्वपक्षसूत्रमिदम् । तत्र दर्शपूर्णमासाख्ये ज्योतिष्टोमाख्ये च कर्मणि सकृत् प्रयुक्ते सर्वे कामा भवेयुः यौगपद्येन । अविशेषात् विशेषस्य अनुक्तत्वात्, 'सर्वेभ्यः' इति सर्वशब्दप्रयोगात् ।

अथ द्वितीयं वर्णकम् । तत्रायं पूर्वपक्षसूत्रार्थः । सौर्यादिषु काम्येषु कर्मसु ये ब्रह्मवर्चसादयः कामाः श्रुताः ते सर्वे [illegible] परलोके स्युः नेह लोके । स्वर्गेण अविशेषात् । यथा स्वर्गः [illegible] लोके न लभ्यते तथा ब्रह्मवर्चसादयोऽपि इह नोपलभ्यन्ते । तस्मात् आमुष्मिकाः कामाः इति ।

योगसिद्धिर्वाऽर्थस्योत्पत्त्यसंयोगित्वात् । २८ ॥

सिद्धान्तयति । वाशब्दः पूर्वपक्षं व्यावर्तयति । एकप्रयोगे न सर्वकामावाप्तिः किन्तु पर्यायेण । योगः संबन्धः, स च पौर्वापर्यरूपः पर्यायो विवक्षितः । योगेन पर्यायेण सिद्धिः तत्तत्कामस्य लाभः स्यात् । एकेन प्रयोगेण एकस्य फलस्य सिद्धिः, अपरेण अपरस्य एकस्य, इति पर्यायेण सर्वकामत्वम् । अर्थस्य फलस्य उत्पत्त्यसंयोगित्वात् । युगपत् सर्वे कामाः उत्पत्त्या असंयोगिनः, उत्पत्त्या संयोगः संबन्धः न संभवति । सर्वेषां युगपदुत्पत्तिर्न संभवतीत्यर्थः । उत्पत्त्या संयोगः उत्पत्तिसंयोगः, सोऽस्यास्ति इति उत्पत्तिसंयोगि, न उत्पत्तिसंयोगि, उत्पत्त्यसंयोगि, तस्य भावः, तस्मात् । अथवा उत्पत्तौ उत्पत्तिविधौ असंयोगित्वात् सर्वेषां कामानां संबन्धो नास्ति, न श्रुतः इत्यर्थः । तस्मान्न कामानां साहित्यम् ।

द्वितीयवर्णके तु एतत्सूत्रार्थं इत्थम् । काम्यानां कर्मणां ये ब्रह्मवर्चसादयः कामाः, ते स्वर्गवत् इह लोके नोपलभ्यन्ते तस्मात् मरणोत्तरमेव अन्यजन्मन्येव ते लभ्यन्ते इति पूर्वपक्षेण पूर्वपक्षे प्राप्ते सिद्धान्तः । योगस्य फलसंबन्धस्य प्रतिबन्धकाभावे इहैव सिद्धिः । अर्थस्य फलस्य तु उत्पत्त्या वर्तमानजन्मना असंयोगित्वात् संबन्धस्य अनुक्तत्वात् सति प्रतिबन्धे अन्यजन्मन्यपि काम्यं फलं लभ्यते । इति । के.

■ तथाऽन्तःक्रतुप्रयुक्तानि । ६।२।९।२० ॥

दर्शपूर्णमासयोः 'भिन्ने जुहोति' 'स्कन्ने जुहोति' इति श्रुतम् । यथा सायंप्रातरादिकाले आगते आगते अग्निहोत्रहोमादि आवर्तते, तथा अन्तःक्रतु क्रतुमध्ये प्रयुक्तानि भेदनहोमादीन्यपि प्रतिप्रति भेदनस्कन्दनादौ निमित्ते नैमित्तिको होमोऽपि आवर्तनीयः इति सिद्धान्तः । अतिदेशाधिकरणम् । अन्तःक्रतुयुक्तानि इति सुबोधिन्याम्, अन्तःक्रतुप्रयुक्तानि इति कुतूहले च पाठः । अर्थस्तु न भिन्नः । के.

■ तथाऽपूर्वं इति न्यायः । वेदिकरणन्यायोऽयम् । अस्यार्थस्तु अधिकरणे द्रष्टव्यः । भा. ५।१।१६।२९. ● अभिषेकमात्रस्यापकर्षः, न तु तदन्यस्य 'तथाऽपूर्वं' इति न्यायात् । (विदेवनादुत्तरं राजसूये अभिषेचनीयाङ्गस्य अभिषेकस्य अपकर्षं उक्तोऽयम्) । तन्त्र. ५।२।१०।२१. ● 'कृतदेशात्तु पूर्वेषाम्' इत्यत्र अप्राकृतत्वमपि विदेवनादीनां अपकर्षवर्णनेन 'तथाऽपूर्वम्' इत्यस्य विशिष्टविषयत्वप्रकाशनात् । वा. ३।६।७।२२ पृ. १०४८.

■ तथाऽपूर्वम् । ५।१।१६।२९ ॥

दर्शपूर्णमासयोः वेदिः हविरभिवासनोत्तरकाले समाम्नाता । सा अमावास्यायां अपकृष्यते 'पूर्वेद्युरमावास्यायां वेदिं करोति' इति । सा अपकृष्यमाणा ततोऽर्वाचीनान् पदार्थान् अपकर्षति न वेति विचारे प्रयोगवचनात् अपकर्षति इति पूर्वः पक्षः । तत्र सिद्धान्तयति अतिदेशेन । पूर्वं तत्कर्षाभाव उक्तः, अत्र तु अपकर्षाभाव इति तु विशेषः । पूर्वं प्रकृतिपूर्विका विकृतिरित्यर्थः । पूर्वं न भवति इति अपूर्वं प्रकृतिभूतं कर्म अमावास्या । लक्षणया अमावास्यागता वेदिः तथा पूर्वोक्तप्रकारेण अर्वाचीनान् पदार्थान् नापकर्षति । तस्मात् हविरभिवासनान्ता पदार्था न प्रतिकृष्यन्ते । वेदिमात्रं अपकृष्टव्यम् । हविरभिवासनं हविषः पुरोडाशस्य दर्भैः अभितो ज्वलनं उल्मुकैः परितपनम्, उपरि साङ्गारस्य भस्मनः अभ्यूहनं च । ततो वेदिकरणम् । के.

**तथाऽभिघारणस्य । १०।३।१०।२८ ॥**

श्यामाकाग्रयणे 'वासो दक्षिणा' व्रीह्याग्रयणे च 'वत्सः प्रथमजो दक्षिणा' इति श्रूयते । तयोश्च वासो-वत्सयोः अन्वाहार्यधर्माः कर्तव्याः, पाकस्तु न कर्तव्य इत्युक्तम् । तथा पाकवत् अभिघारणस्य अकर्तव्यता । अनन्वारित्वात् अन्नेन कारितत्वात् अन्नयुक्तत्वात् इति पूर्वसूत्रादनुवर्तनीयम् । भक्षणीयस्य स्वादुतासंपादनार्थं हि अभिघारणं भवति, वासोवत्सयोस्तु अन्नत्वमेव नास्तीति अभिघारणमपि न कर्तव्यमिति सिद्धान्तः । के.

**तथाऽभिधानेन । ३।७।४।८ ॥**

अन्तरागभिर्णीत्यधिकरणस्य पूर्वपक्षसूत्रमिदम् । पूर्वसूत्रात् संयोगात् इतिपदम्, पूर्वतरसूत्रात् प्रधानस्य इति पदं चानुवर्तते । 'चतुर्होत्रा पौर्णमासीमभिमृशेत्, पञ्चहोत्रा अमावास्याम्' इति विषयवाक्यमत्र । 'पृथिवी होता' इत्यादिर्मन्त्रः चतुर्होता नाम । 'अग्निर्होता । अश्विनाऽध्वर्यू' इत्यादिर्मन्त्रः पञ्चहोता नाम । पौर्णमास्यमावास्याशब्दाभ्यां तत्तद्यागगतं प्रधानहविर्गृह्यते । चतुर्होतृमन्त्रेण पौर्णमासीगतप्रधानहविषः अभिमर्शनं हस्तेन स्पर्शनं कर्तव्यम् । पञ्चहोतृमन्त्रेण अमावास्या-यागगतप्रधानहविषः अभिमर्शनं कर्तव्यमिति विषय-वाक्यार्थः । इदमभिमर्शनं किं प्रधानमात्रस्य, उत अङ्ग-प्रधानानामिति संशये अभिमर्शनं प्रधानस्यैव नाङ्गानाम् । तथाशब्देन पूर्वसूत्रसूचिता वेदिदृष्टान्तता । वेदिवत् अभिमर्शनमपि प्रधानस्यैवेत्यर्थः । कुतः ? प्रधानस्येति पदं आवर्तनीयम् । प्रधानस्य अभिधानेन पौर्णमासी अमावास्या इति प्रधानस्यैवाभिधानात् इत्यर्थः ।

**गुणाभिधानात् सर्वार्थमभिधानम् । १० ॥**

अभिमर्शनं प्रधानस्यैवेति प्राप्ते सिद्धान्तयति । 'पौर्णमासीमभिमृशेत्, अमावास्यामभिमृशेत्' इति अभिधानं सर्वार्थं साङ्गप्रधानार्थम्, न प्रधानमात्रार्थम् । कुतः ? गुणाभिधानात् । 'पौर्णमासीम्, अमावास्याम्' इति द्वितीयाऽन्तेन साङ्गप्रधानानां संस्कार्यत्वमुक्त्वा अभि-मृशेत् इति अभिमर्शनस्य गुणस्य अभिधानात् । तस्मात् अभिमर्शनं सर्वार्थमिति सिद्धान्तः । अत्र सप्तमनवमाभ्यां सूत्राभ्यां एकमधिकरणं तृतीयम्, अष्टमदशमाभ्यां च चतुर्थमधिकरणं इति विभागो द्रष्टव्यः । के.

**तथाऽवज्वलनम् । १०।१।११।६० ॥**

दर्शपिण्डपितृयज्ञे अवज्वलनं पुरोडाशस्य उपरिपाकार्थत्वात् क्रियते । सौर्ये चरौ तु तथा प्रत्यूहवत् न कर्तव्यम् । चरौ हि उपरि पाको नावश्यकः । इति सिद्धान्तः । के.

**तथाऽवभृथः सोमात् (७।१।७।११) इति** न्यायः । सूत्रार्थस्तु अधुनैव भविष्यति । के. * 'तथा-ऽवभृथः सोमात्' इति अस्माधिकरणे वक्ष्यमाणसौमिका-वभृथभावनाधर्मातिदेशाविरोधात् करणत्वेन वा अवभृथस्य अतिदेशायोगेऽपि स्वशब्देनोपदिष्टस्य स्वधर्म-संनिधापकत्वात् काम्यगुणाश्रयभूताग्निहोत्रादिवत् अति-देशनिमित्तमभिप्रेत्य अवभृथनाम्नः अतिदेशकत्वोपपत्तेः । सु. इ. ९५५.

**तथाऽवभृथ. सोमात् । ७।३।४।१२ ॥**

वरुणप्रघासेषु 'वारुण्या निष्कासेन तुषैश्च अवभृथं यन्ति' इति श्रूयते । अत्र दार्शपौर्णमासिके चोदकप्राप्ते अपां न्युब्जके तुषनिक्षेपविधिः, किंवा सौमिकादवभृथात् धर्मातिदेशः इति विचारे सिद्धान्तमाह । यथा पशुदान् पृतनामतिदेशः, तथा सोमात् अवभृथः अवभृथधर्मः वारुणप्रघासिके अप्सु कर्मणि अवभृथनाम्ना अतिदिश्यते, अवभृथशब्दसामान्यात् ।

**प्रकृतेरिति चेत् । १४ ॥**

वरुणप्रघासेषु 'वारुण्या निष्कासेन तुषैश्च अवभृथं यन्ति' इत्यत्र प्रकृतेः दर्शपूर्णमासरूपायाः सकाशात् चोदकप्राप्ते अपां न्युब्जके अवभृथाख्ये निष्कासतुष-रूपस्य गुणस्य विधिः स्यात् इति पूर्व. पक्षः । इति चेत् ।

**न, भक्तित्वात् । १५ ॥**

पूर्वपक्षिणा यदुक्तं तन्न, भक्तित्वात् । दर्शपूर्णमासयोः योऽयमपां न्युब्जकः प्रणीतानिनयनम्, तत्र अवभृथत्वं भक्त्या उक्तम्, प्रशंसावादोऽयम् 'एष वै दर्शपूर्ण-मासयोरवभृथः' इति । नास्ति तु दर्शपूर्ण-मासयोरवभृथ. । तस्मात् सौमिकादेवावभृथात् वारुण-प्रघासिके अवभृथे धर्मातिदेशः ।

तथैकार्थविकारे प्राकृतस्याप्रवृत्तिः, प्रवृत्तौ हि विकल्पः स्यात् । १०।७।१८।६१ ॥

सोमापौष्णयागे 'औदुम्बरो यूपो भवति' इति श्रूयते। तत्र एकार्थविकारे एकार्थभावो विकारश्च एकार्थविकारः, औदुम्बरस्य खादिरेण सह एकः समानोऽर्थः फलं पशुबन्धनम्, विकारश्च खादिरादिविकारकत्वम् औदुम्बरः। तस्मिन् एकार्थविकारे यथा पूर्वाधिकरणे यथा प्राकृतस्य प्रत्यक्षवेदस्य अप्रवृत्तिः, तद्वत् सोमापौष्णे औदुम्बरे प्रवृत्ते सति प्राकृतस्य खादिरादेः अप्रवृत्तिः न प्रवृत्तिः। प्रवृत्तौ हि यस्मात् विकल्पः स्यात् चोदकप्राप्तस्य प्रत्यक्षश्रुतस्य च। न चैतन्न्याय्यम्। तस्मात् प्राकृतस्य न प्रवृत्तिः। इति सिद्धान्तः।

यावच्छ्रुतीति चेत् । ६२ ॥

पूर्वपक्षी ब्रूते। यावच्छ्रुति स्यात्। 'औदुम्बरो यूपो भवति' इति वैकृती श्रुतिः, 'प्रकृतिवत्' इति च चोदकश्रुतिः। इति यावत्यः श्रुतयः, तावन्तो यूपाः इति अव्ययीभावः समासः। तथा च श्रुतिद्वयानुसारेण औदुम्बरखादिरयोः समुच्चयः स्यात् उभयस्मिन् सह नियुज्यतां पशुः। इति चेत्।

न, प्रकृतावसम्बन्धात् । ६३ ॥

सिद्धान्ती आह। नैतदेवम्। प्रकृतौ औदुम्बरस्य असम्बन्धात्, विकृतौ च खादिरस्य असम्बन्धात्। न समुच्चयः। अविद्यमानो विभाजकः शब्दो यस्य तत् अशब्दम्, तादर्थ्यात् विभाजकशब्दाभावात्। तस्मात् वैकृतेन औदुम्बरेण प्राकृतस्य यूपान्यस्य बाधः। फे.

तथा कामोऽर्थसंयोगात् । ३।८।५।१२ ॥

ज्योतिष्टोमे 'यदि कामयेत वर्षेत् पर्जन्य इति नीचैः सदो मिनुयात्' इति श्रूयते। पर्जन्यवर्षणेच्छायां सदोनामकं मण्डपं शाला नीचैः कर्तव्या इति तदोक्तम्। सोऽयं पृष्टे. कामः ऋत्विजः स्यात्, कामयेत इत्यस्य कर्ता ऋत्विक् स्यात् आध्वर्यवसमाख्यानात्। अध्वर्युवेदे हि तदुक्तम्। इति उत्पन्ने पूर्वपक्षे प्राप्ते, सिद्धान्तसूत्रमिदं अतिदेशकम्। यथा तपोवत् कामोऽपि न ऋत्विग्गामी किन्तु यजमान एव स्यात्। कुतः? अर्थसंयोगात् अर्थस्य फलस्य यजमानेन संबन्धात्। तथा च यदि कामयेत यजमानः, ततः अध्वर्युः नीचैर्मिनुयात् इति वैयधिकरण्येनापि उपपत्तौ एकवाक्यत्वम्। स्वामिनि कामयमाने यदि अध्वर्युः स्वाम्यर्थं कामयेत इति सामानाधिकरण्येनापि एकवाक्यता संभवति। तस्मात् कामोऽपि यजमान एवेति सिद्धान्तः।

अत्र सुधा— सदोमानस्य आध्वर्यवत्वेऽपि तदाश्रितगुणावच्छिन्नायाः भावनायाः स्वाम्युपकारार्थत्वात् मात्राधितत्वसामर्थ्यात् लिङ्गात् स्वाम्युपकारार्थत्वावगतेः तस्यैव कामित्वावगमात् समाख्यायाश्च प्रधानभूतकर्तृनियामकत्वायोगात् न भावनाकर्ता नियम्यते इति।

व्यपदेशादितरेषां स्यात् । १४ ॥

ज्योतिष्टोमे 'यदि कामयेत' इत्यादिवाक्योक्तः कामः यजमानः इति पूर्वसूत्रेण सिद्धान्ते उक्ते क्वचित् तदपवादः अनेन सूत्रेण उच्यते। 'उद्गाता आत्मने यजमानाय वा यं कामं कामयते तमागायति' इति यजमानात् पृथक् 'आत्मने' इति पदेन ऋत्विजो व्यपदेशः। तत्र तादृशात् व्यपदेशात् इतरेषां यजमानादन्येषां ऋत्विजामेव कामः स्यात्। तादृशव्यपदेशाभावे तु यजमान एव कामः इति सिद्धान्तः। फे.

* 'तथा कामः' इत्यधिकरणे अङ्गानामृत्विक्कर्तृकत्वं न चिन्तितं किन्तु तद्भिन्नोपास्तीनामित्यर्थः। कल्पतरुः ३।४।१३।४४ मग्. * तथाकामाधिकरणम्। आशीरधिकरणम्। काम्याधिकरणं द्रष्टव्यम्। भा. ३।८।५।१३-१४.

तथा च लिङ्गम् । ३।१।६।१७ ॥

इदं सूत्रं पूर्वाधिकरणशेषत्वेन व्याख्याय अधिकरणान्तरत्वेनापि भाष्ये व्याख्यातम्। तत्र अधिकरणान्तरत्वेन अत्र व्याख्यायते। ग्रहैकत्वाधिकरणातिदेशोऽयम्। चशब्दः शङ्कानिरासार्थः। यथा एकत्वम् लिङ्गमपि विवक्षितमेव। 'वसन्ते प्रातराग्नेयीं कृष्णग्रीवामालभते' एवं ग्रीष्मे शरदि चेति तिस्रो गा विधाय वाक्यशेषे 'गर्भिण्यो भवन्ति' इत्युक्तम्। गर्भश्च स्त्रीत्वलिङ्गम्। तथा 'अथ ऋषभो वृष्णिर्वस्तः पुरस्ते प्राजापत्याः'

इति विभाग वाक्यशेषे 'मुष्करा भवन्ति सेन्द्रियत्वाय' इत्युक्तम्। मुष्करश्च पुंस्त्वलिङ्गम्। ('ऊष-सुषि-मुष्क-मधो रः' पा० ५।२।१०७ मत्वर्थीयो रः। ऊषरम् इ०। 'मुष्कः अण्डः मुष्करः' इति कौमुदी। मधोः रः इति पदच्छेदः। मधुरः।) तेन तत्र स्त्रीत्वं पुंस्त्वं च विवक्षितमिति निश्चयः। के.

※ तथा च सोमचमसः। १०।३।१९।६८ ॥

ऋतपेये श्रूयते 'औदुम्बरः सोमचमसो दक्षिणा, स प्रियाय सगोत्राय ब्रह्मणे देयः' इति। अयं सोमचमसः ब्रह्मसंयोगात् ब्रह्मभागस्य निवर्तकः, न कृत्स्नक्रतु-दक्षिणायाः। तथा यथा 'सप्तमुद्गाने' इति उद्गातृ-संयोगात् स्रक् उद्गातृभागमात्रस्य निवर्तिका तद्वत्। इति पूर्वः पक्षः।

सर्वविकारो वा, क्रत्वर्थे प्रतिषेधात् पशूनाम्। ६९ ॥

ऋतपेये दक्षिणात्वेन श्रूयमाणः सोमचमसः न केवलं ब्रह्मभागस्य निवर्तकः इति वाशब्देन पूर्वपक्षं व्यावर्तयति। सोमचमसः सर्वविकारः कृत्स्नायाः क्रतु-दक्षिणायाः निवर्तकः। क्रत्वर्थे दाने पशूनां प्रतिषेधात् लिङ्गात्। एवमाम्नायते 'ऋतं वै सोमः अनृतं पशवः, यत् पशून् दद्यात् सोऽनृतं कुर्यात्, औदुम्बरः सोम-चमसो दक्षिणा'। अत्र पशुदानप्रतिषेधः सोमचमसो विधीयते। सोमचमसदानेन पशवो न दीयन्ते इति गम्यते। ब्रह्मभागमात्रस्य निवर्तकत्वे सति अन्येभ्यः पशवो दीयेरन् तेन अनृतं स्यात्। तस्मात् कृत्स्नायाः निवर्तकः।

ब्रह्मदानेऽविशिष्टमिति चेत्। ७० ॥

ऋतपेये 'ऋतं वै सोमः पशवोऽनृतम्, यत् पशून् दद्यात् सोऽनृतं कुर्यात्, औदुम्बरः सोमचमसो दक्षिणा' इत्यर्थवादे 'यत् ब्रह्मणे पशून् दद्यात्' इति पशूनां ब्रह्मदाने प्रतिषेधेऽपि अविशिष्टं पशुप्रतिषेधानुवादः समान एव। तस्मात् ब्रह्मणे पशवो न देयाः किन्तु सोमचमस एव इति सोमचमसः ब्रह्मभागस्यैव निवर्तकः इति स्वीकारेऽपि पशुप्रतिषेधोपपत्तेः। सोमचमसः ब्रह्म-भागस्यैव निवर्तकः न तु कृत्स्नदक्षिणायाः इति चेत् पूर्वपक्षी ब्रूयात्।

उत्सर्गस्य क्रत्वर्थत्वात्, प्रतिषिद्धस्य कर्म स्यात्, न च गौणः प्रयोजनमर्थः स दक्षिणानां स्यात्। ७१ ॥

ऋतौ माध्यंदिने सवने बर्हिषि यावद्दीयते सा सर्वा एका दक्षिणा। 'सोमचमसो दक्षिणा' इत्युक्तत्वात् ऋतपेये सा सर्वा दक्षिणा सोमचमस एव। तथा च उत्सर्गस्य दानस्य सोमचमसदानस्य क्रत्वर्थत्वात् सर्वक्रतु-दक्षिणादानार्थत्वात् सोमचमसः कृत्स्नक्रतुदक्षिणायाः निवर्तको भवति। यदि तु ब्रह्मणोऽन्येभ्यः पशवो दीयेरन् तदा 'यत् पशून् दद्यात्, सोऽनृतं कुर्यात्' इति प्रति-षिद्धस्य पशुदानस्य कर्म स्यात् तस्मात्तन्न कर्तव्यम्। किञ्च यो ब्रह्मभागो न सा दक्षिणा, किन्तु दक्षिणावयवः कश्चित्। अवयवे निविशमानो दक्षिणाशब्दो गौणः स्यात्। न च स गौणोऽर्थः दक्षिणानां प्रयोजनं स्यात्। सोमचमसस्य प्रयोजनं दक्षिणानिवृत्तिः। सर्वेषां ऋत्विग्भागानमनं दक्षिणानां प्रयोजनं न ब्रह्मभागानमनम्। तस्मात् सोम-चमसः कृत्स्नक्रतुदक्षिणाया निवर्तकः न तु ब्रह्मभाग-मात्रस्य। इति सिद्धान्तः।

यदि तु ब्रह्मणस्तदूनं तद्विकारः स्यात्। ७२ ॥

पूर्वपक्षस्य प्रयोजनमाह। यदि तु सोमचमसः ब्रह्मणः भागस्यैव निवर्तकः स्यात्, तदा तदूनं तेन ब्रह्मभागेन ऊनं न्यूनं दक्षिणाद्रव्यं तद्विकारः सर्वक्रतुदक्षिणायाः विकारः बाधकः स्यात् ब्रह्मभागं वर्जयित्वा इतरेभ्य ऋत्विग्भ्यः इतरा सर्वा दक्षिणा दातव्या स्यात्। ब्रह्मणे तु सोमचमसमात्रम्।

सर्वं वा पुरुषापनयात्, तासां ऋतुप्रधानत्वात्। ७३ ॥

सिद्धान्तप्रयोजनमाह। सर्वं वा ऋतुदाक्षिण्यं सोम-चमसेन निवर्त्यते, पुरुषापनयात् सर्वेभ्यः पुरुषेभ्यः दक्षिणायाः अपनयात्। कुतः? तासां दक्षिणानां सर्वेषां-मृत्विजां आनमनेन क्रतुप्रधानत्वात् क्रतूपकारकत्वात्। आनता हि ऋत्विजः क्रतुं साधयन्ति। तस्मात् सर्व-दक्षिणास्थाने एकः सोमचमस एव देयः। सोऽपि च ब्रह्मणे एव नान्यस्मै इत्येव। सर्वेऽपीतरे ऋत्विज-

दानेन यजमानेन कर्तव्या । इद सूत्रद्वयमधिकरणान्तरत्वेनापि अग्रे व्याख्यास्यते च–अध्यायप्रकरणे । के.

तथा द्रव्येषु गुणश्रुतिरुत्पत्तिसंयोगात् । ४।२।१०।२५ ॥

अधिकरणातिदेशोऽयम् । 'वायव्यं श्वेतमालभेत' इत्यादौ वायव्यपशुप्रभृतिष्वपि द्रव्येषु 'श्वेतम्' इत्यादिगुणश्रुतिः गुणस्य प्रतिपादिका श्रुतिः नियमार्था । वायव्य पशौ श्वेते श्वेतमिश्रे च गुणे प्राप्ते श्वेतश्रुतिः श्वेतं गुणं नियमयति । उत्पत्तिसंयोगात् उत्पत्तिविधावेव श्वेतगुणस्य विशेषणतया वायव्येन पशुना संबन्धात् संबद्धतया ज्ञानात् । 'उत्पद्यते कर्म अनेन इति बाहुलकात् करणे क्तिन् । तथा उत्पत्त्या क्रियोत्पादकद्रव्येण गुणानां तत्परिच्छेदकतया संयोगात्' इति कुतूहलम् । श्वेतगुणः अनूद्यते इति पूर्वः पक्षः, विधिरिति सिद्धान्तः । के.

तथा निर्मन्थ्ये । १।४।९।१२ ॥

यथा प्रोक्षणीशब्दवत् निर्मन्थ्ये निर्मन्थ्यशब्देऽपि यौगिकार्थं ज्ञेयम् । निर्मथ्यते निर्मथ्य उत्पाद्यते योऽग्निः निर्मन्थ्य इति योगः । तथा च 'निर्मन्थ्येनेष्टकाः पचन्ति' इति निर्मन्थ्यशब्दः न संस्कारनिमित्तकः न जातिशब्दः, किन्तु यौगिक इति सिद्धान्तः । के.

तथा निर्मन्थ्ये । १।४।१०।१२ ॥

'निर्मन्थ्येनेष्टकाः पचन्ति' इति संस्कृते दर्शनात् संस्कारशब्दो निर्मन्थ्यः इति । असंस्कृतेऽपि दृश्यते 'निर्मन्थ्यमानय पक्ष्यामहे' इति । निर्मन्थनयोगात् पूर्ववत् यौगिकत्वमिति स्थितम् । अत्राप पूर्वपक्षिणोऽभिसंधिः । निर्मन्थ्यशब्दोऽयं याज्ञिकैः संस्कृते प्रयुज्यते । [illegible] नाय संस्कारवचनः, असंस्कृतेऽपि क्वचिद्दर्शनात् । नापि यौगिकः । निर्मन्थनभवो हि निर्मन्थ्यः । स च नवनीतादावपि अविशिष्टः, तेषामपि निर्मन्थनभवत्वात् । न चात्र प्रोक्षणीतुल्यत्वम् । तत्र योगस्य घृतादिसाधारण्येऽपि स्त्रीत्वान्यथानुपपत्त्या प्रोक्षणीशब्दस्य स्त्रीलिङ्गनित्य बहुवचनान्ताप्शब्दसमानाधिकरणप्रयोगतया यत्तु सर्वविषयत्वम् । इह तु तृतीयान्तस्य 'निर्मन्थ्येन' इति पदस्य अग्निरजीवादिसाधारणत्वात् नाग्निवचनत्वनिर्णयः संभवति इति जातिवचनत्वमेव । इत्येवं प्राप्तेऽभिधीयते । भवेदेवं यदि अत्राग्निप्रतीतिर्न्यतो न भवेत् । एवं हि श्रूयते 'निर्मन्थ्येनेष्टकाः पचन्ति' इति । तेन योगस्य साधारण्येऽपि पाकसमर्थिन्याहारात् अत्रापि अग्निविशेषप्राप्तौ यौगिकत्वमेव । प्रयोजनं– संस्कारवचनत्वे संस्कृतेनाग्निना इष्टकाः पक्तव्याः । जातिवचनत्वे अग्निमात्रेण । यौगिकत्वे तु अचिरनिर्मथितेन । अत्र यद्यपि सूर्यकान्तादिनिवर्तकतयाऽपि निर्मन्थ्यशब्दस्यार्थवत्त्वात् नाचिरनिर्मथितत्वलाभः, तथापि पाकक्लेशप्राप्तेऽग्नौ मथनस्य पाकाङ्गत्वेन लोहितोष्णीषवत् विधानेन अङ्गानां मुख्यदेशकालकर्तृकत्वात् अचिरनिर्मथितत्वप्राप्तिरिति । तदुक्तम् 'पाकेनाग्नेरुपात्तत्वात् तद्विशेषपरा (विशेषणस्य इति मूले पाठः) श्रुतिः । तच्च पाकाङ्गभूतत्वात् तद्देशादौ करिष्यते ॥' (वा. पृ. ३८५) इति । सूत्रं तु– यथा प्रोक्षणीशब्दस्य यौगिकत्वम्, तथा निर्मन्थ्येऽपीत्यर्थः । तौता.

'तथा पश्वङ्गमेकत्वं पशुश्रुत्या प्रतीयते । समानप्रत्ययश्रुत्या यत्राप्यस्या क्रियाऽङ्गता ॥' इति न्यायात् चमसैकत्वं न चमसस्याङ्गं पश्वेकत्वमिव पशोः । तेन चमसार्थत्वात् न चमसैकत्वं चमसस्थानापन्नेऽपि दोहेऽने प्राप्नोति । बाल पृ. १६९.

तथाप्राप्त्यनुवाद. इति न्यायः ॥ (तथापदं प्रतिपदेन समस्तम् ।) न च यत्र स्थितस्यापि मन्त्रस्य विधित्सितानुग्रेयप्रकाशकतया तदनुवादकरूपस्य तदुपसंहारत्वम्, तथात्वे 'यथाप्राप्त्यनुवादः' इति न्यायेन पुरोवादानुवादयोः पुरोवादस्य प्रबलतया उपक्रमस्य प्राबल्यमापत्तेः । (अत्र यथाप्राप्त्यनुवाद. इति पाठः स्यादिति भाति । के.) । पराक्रमः ४३।२.

तथा फलाभावात् । १।२।१।२ ॥ यथाभूतं मुखशोधादि अनन्तरकृत्यत्वेन कीर्त्यते तथाभूतस्य अभावात् ('शोभतेऽस्य मुखं य एवं वेद' इत्यादौ श्रुते.) आनर्थक्यं इति सूत्रयोजना । सु. पृ. १५.

तथा भक्ष-प्रैष-आच्छादन-सूक्तहोम-द्वेषम् । ६।८।८।२८॥

अधिकरणातिदेशोऽयम् । यथा ज्योतिष्टोमे धनवताऽपि जनयाचना स्वीयसोमरक्षाऽपि च सोमक्रयस्य कर्तव्यम्,

तथा भक्षादिकमपि क्रत्वर्थत्वात् नियतं कर्तव्यम् । तत्र ज्योतिष्टोमे दीक्षासु 'पयो व्रतं ब्राह्मणस्य, यवागू राजन्यस्य, आमिक्षा वैश्यस्य' इति विशिष्टं भक्षणमुक्तम् । यस्यापि चापर भोक्ता विद्यते, सोऽपि क्रत्वर्थत्वात् यथाश्रुतेन भक्षयेत् । तथा दर्शपूर्णमासयोः 'प्रोक्षणीरासादय इध्माबर्हिरुपसादय स्रुवं च स्रुचश्च सम्मृड्ढि पत्नीं संनह्य आज्येन उदेहि' इति प्रैषम्, प्रैषार्थं जानतोऽपि कुर्वे उच्चार्यः । वाजपेये यस्य कार्पाससम्भवं वासो विद्यते सोऽपि आच्छादनं दर्भमयं वासः परिदधीत । पशौ यस्य पशुः वासिते शब्दं न कुर्यात् चरणैर्वा न हन्यात् तस्यापि 'यत्पशुर्मायुमकृतोरो वा पद्भिराहते । अग्निर्मा तस्मादेनसो विश्वान्मुञ्चत्वंहसः ॥' इति मन्त्रेण मायुसहोमं जुहुयात् । तथा यो न द्वेष्टि कंचन, यं च न द्वेष्टि कश्चन, सोऽपि 'योऽस्मान् द्वेष्टि यं च वयं द्विष्मः' इति द्वेषमन्त्रं ब्रूयात् क्रत्वर्थत्वात् । इति सिद्धान्तः । भक्षश्च प्रैषश्च आच्छादनं च संज्ञहोमश्च द्वेषश्च ( द्वेषमन्त्रश्च ) तेषां समाहारः । नपुंसकत्वमेकवद्भावश्च । के.

॥ 'तथा भक्ष०' इत्यधिकरणे मायुःकरणाभावेऽपि 'यत् पशुर्मायुमकृत०' इतिमन्त्रेण संज्ञहोमः नित्य एव कार्यः इत्युक्तम् । वाजसनेयिना तु मते पशुना मायुःकरणे एव ( दीर्घशब्दकरणे एव ) नैमित्तिक एव होम इति । बाल पृ ६५.

॥ तथा युक्तं चानीप्सितम् । ( पा० १।४।५० तया ईप्सिततमवत् क्रियया युक्त अनीप्सितमपि कारकं कर्मसंज्ञं स्यात् । 'ग्रामं गच्छन् तृणं स्पृशति' ) इति स्मृतिस्तु लाघवानिवयोगमनुकूलानाधानार्था । अन्यथा लाघवात् 'ग्राम्यं कर्म' इति स्मरणापत्तिः । सु. पृ. ६२९.

॥ तथा यूपस्य वेदिः । ३।७।८।१३ ॥

ज्योतिष्टोमे अग्नीषोमीये पशौ यूपो यदा निखातव्यो भवति तत्रोक्तम् 'अर्धमन्तर्वेदि मिनोति अर्धं बहिर्वेदि' इति । यूपावटस्य अर्धो भागः महावेद्याः अन्तर्भागे, अर्धो भागश्च बहिर्भागे यथा स्यात् तथा खातव्यः, तत्र च यूपो निखातव्यः इति वाक्यस्य यथाश्रुतोऽर्थः । तत्र हि यूपाङ्गभावेन वेदेरुपदेशोऽयं किंवा देशलक्षणार्थं उपदेश' इति विचारे पूर्वः पक्षः । यथा दीक्षादक्षिणं प्रधानस्य इति पूर्वाधिकरणे उक्तम्, तथा वेदिर्महावेदिः यूपस्य अङ्गं वेदितव्यम् । तथा च यूपाङ्गभावेन वेदेरुपदेशोऽयमिति पूर्वः पक्षः ।

देशमात्रं वाऽशिष्येणैकवाक्यत्वात् । १४ ॥

पूर्वपक्षं निरस्य 'अर्धमन्तर्वेदि, अर्धं बहिर्वेदि' इति समाम्नानमपि वाक्याभ्यां मध्यदेशो लक्ष्यते नाङ्गाङ्गिभावो लभ्यते इति सिद्धान्तकथनार्थं सूत्रमिदम् । अत्र मात्रशब्दः अवधारणार्थः । वाशब्दः पूर्वपक्षव्यावृत्त्यर्थः । शासु अनुशिष्टौ इति कर्मणि क्यप्प्रत्यये शिष्यते इति शिष्यं इति शिष्यपदं निष्पन्नम् । न शिष्यं विधेयं यस्य तत् अशिष्यम् 'अर्धं बहिर्वेदि' इति वाक्यम् । तेन अशिष्येण सह 'अर्धमन्तर्वेदि' इत्यस्य एकवाक्यत्वात् एकवाक्यत्वसंभवात् मध्यदेशविधानमेतत् इति गम्यते । अन्तर्वेदिदेशयोर्द्वयोरपि विधौ वाक्यभेदः स्यात् । संभवति चैकवाक्यत्वे वाक्यभेदस्य अन्याय्यत्वम् । तथा च संधिदेशविधानमेतत् । अशिष्येण इति सूत्रपदं गृहीत्वा व्याख्यानमिदम् । किंवा शिष्येण इत्येव पदच्छेदः । शिष्येण शासितव्येन विधेयेन देशेन 'अर्धमन्तर्वेदि, अर्धं बहिर्वेदि' इत्यस्य एकवाक्यत्वं भवति । तस्मात् देशलक्षणा इति व्याख्येयम् ।

अत्र सुधा—मध्यदेशस्य लक्षणीयत्वात् कृत्स्नस्य च यूपस्य मध्यपरत्वात् अन्तर्देशमात्रे बहिर्देशमात्रे वा कृत्स्नस्य अमेयत्वात् शब्दद्वयेन कृत्स्नमध्यदेशस्य लक्षणा इति देशमात्रपदार्थः । पशुबन्धनकृतार्थतया अन्यार्थत्वेन अशिष्येण यूपेन सह वेद्याः, कर्माधिकरणकृतार्थतया च अन्यार्थत्वेन अशिष्यया वेद्या सह यूपस्य एकवाक्योपादानाभावात् संयोगात् इति सिद्धान्तहेतूक्त्यर्थः अशिष्येणेति सूत्रावयवः । अत्र च उत्तराधिकरण सिद्धान्तसूत्रे वक्ष्यमाणः कृतार्थसंयोगाख्यः देशलक्षणहेतुः अत्रापि योजनीयः । 'दर्शपूर्णमासौ इष्ट्वा सोमेन यजेत' इत्यादिषु कृतार्थसंयोगेषु कैमर्थ्याकाङ्क्षाद्वारेण अङ्गोपदेशायोगात् कालोपदेशवत् अत्र देशोपलक्षणमपि युक्तम् । विधित्वस्य अनुवादत्वस्य च अनुपपत्तेः अपाददेन 'अर्धं बहिर्वेदि' इत्यनेन एकवाक्यत्वस्य प्रतीयमानस्य अयोगप्रसङ्गात् इति आशयरूपेण अशिष्येण इति सूत्रावयव-

व्याख्यार्थं अयेत्यादि भाष्यम्। पञ्चदशदोषसाम्यनिरासार्थं देशलक्षणायां शिष्येव एकवाक्यत्वात् इति वाक्यप्रश्लेष-शून्यमूत्रावयवव्याख्याऽर्थं 'अर्धमन्तर्वेदि' इत्यादि भाष्यं इति। के.

• 'तथा यूपस्य वेदिः' इत्यधिकरणे 'अर्धमन्तर्वेदि अर्धं बहिर्वेदि' इति समुदायेन देशविशेषो लक्ष्यते इति भाष्यवार्तिकादिषु ध्वनितम्। (पूर्वेदिन्यायः।) मु. १।२।१।७.

※ तथा व्रतमुपेतत्वात्। १२।१।११।२०॥

सोमे दीक्षणीयाऽऽदिषु दार्शपूर्णमासिकं व्रतं चोदकप्राप्तं न कर्तव्यं तथा अग्न्यन्वाधानवत्। उपेतत्वात् दीक्षार्थमुपेतमेव। उपेतस्य अनपवृक्तस्य पुनरुपादानं न शक्यम्। तस्मान्नास्ति पृथक् व्रतं इति सिद्धान्तः।

विप्रतिषेधाच्च। २१॥

सोमे दीक्षणीयाऽऽदिषु दार्शिकं व्रतं न कर्तव्यम्। सोमार्थेस्य व्रतस्य उपेतत्वात्। पुनरुपादाने सति 'अग्ने व्रतपते व्रतं चरिष्यामि' इति वदतो वचनं विप्रतिषिद्धम्। तथा च मन्त्रविप्रतिषेधात् पुनर्व्रतं न कर्तव्यम्।

सत्त्ववदिति चेत्। २२॥

पूर्वपक्षी शङ्कते। सत्त्ववत् यथा सत्यवचनं व्रतं पुरुषधर्मत्वात् अनुवर्तमानमपि दर्शे पुनरुपेयते तद्वत् प्रायणीयाऽऽदिषु स्यात् इति चेत्।

न, संयोगपृथक्त्वात्। २३॥

सिद्धान्ती दृष्टान्तवैषम्यमाह— न चैतत् तुल्यम्। संयोगपृथक्त्वात्। तत्र पुरुषसंयोगः कर्मसंयोगश्च पृथक् भवति इति पुनरुपेयते। अत्र तु यत् सोमार्थं तदेव इतरत्र प्रसङ्गात् कार्यं साधयति। तस्मात् सत्यवत् इति दृष्टान्तो विषमः। ततश्च पुनर्व्रतं नानुष्ठेयं इति सिद्धान्तः। के.

※ तथा स्याद्ध्वरकल्पायां, विशेषस्यैककालत्वात्। ११।२।४।२०॥

अध्वरकल्पायां नाम इष्टौ तथा अग्नीषोमीये पशौ इव अङ्गानां प्रसङ्गः कल्प्येत स्यात्। विशेषस्य अङ्गविशेषस्य निर्वापस्य एककालत्वात् 'पुरा वाचः प्रवदितोः निर्वपेत्' इति एककाले श्रवणात्। तस्मात् सर्वेषामङ्गानां तन्त्रं इति पूर्व. पक्षः।

इष्टिरिति चैकवच्छ्रुतिः। २१॥

अध्वरकल्पायाः यद्यपि प्रातः मध्यंदिने सायं इति यागत्रयम्, तथापि 'सैषाऽध्वरकल्पा नामेष्टिः' इति एकवत् एकत्वेन श्रुतिः श्रवणं भवति। तत् अङ्गानां तन्त्रे उपपद्यते। तस्मात् तन्त्रम्। इति पूर्वपक्षे हेत्वन्तरमुक्तम्।

अपि वा कर्मपृथक्त्वात्, तेषां च तन्त्रविधानात्, साङ्गानामुपदेशः स्यात्। २२॥

सिद्धान्तयति। अपिवाशब्देन पक्षव्यावृत्तिः। आग्नावैष्णवसारस्वतादीनां कर्मणां पृथक्त्वात्, तेषां च कर्मणां प्रातः मध्यंदिने सायं इति नानाकालेषु तन्त्रस्य अङ्गकलापस्य विधानात् साङ्गानामेव त्रयाणां यागानां उपदेशः स्यात्। तस्मात् तन्त्रम्।

समानानुपूर्वीकयोः पौर्वापर्यविषयोः सूत्रयोः समानप्रकाशनार्थः। विषयभेदात्तु भेदः।

प्रथमस्य वा कालवचनम्। २३॥

यदुक्तं विशेषस्यैककालत्वात् इति तत्राह। प्रथमस्य प्रातःकालीनस्य कर्मणः यो निर्वापः, तस्यैतत् कालवचनं 'पुरा वाचः प्रवदितोर्निर्वपेत्' इति। न द्वितीयतृतीययोर्यागयोः। तस्मात् तन्त्रभेदः सिद्धान्तः।

फलैकत्वादिष्टिशब्दो यथाऽन्यत्र। २४॥

यदुक्तं 'इष्टिरिति' इति तत्राह। इष्टिशब्दः एकवचनान्तः फलैकत्वात्, फलैकत्वेन कर्मैकत्वात्। यथा अन्यत्र सर्वपृष्ठेष्टिः. मृगारेष्टिः. इत्यादौ। तद्वत् अत्र अपि इति। तस्मात् अध्वरकल्पायां प्रातरादिकालभेदेन कर्तव्यानां त्रयाणामपि यागानामर्थे अङ्गानां भेदेनानुष्ठानम्। इति सिद्धान्तः। के.

※ तथा स्वामिनः फलसमवायात्, फलस्य कर्मयोगित्वात्। ६।३।७।२१॥

यथा देवताग्निशब्दक्रियाणां न प्रतिनिधिः तथा स्वामिनः यजमानस्यापि न प्रतिनिधिः। फलसमवायात् स्वामिन एव कर्मणः फलेन समवायात् संबन्धात्, फलस्य कर्मयोगित्वात् फलं कर्मणा युज्यते। यः कर्म

कुर्यात् तस्य फलम् । यदि च यजमानस्य पत्न्यसंभवः, तदा यजमानेनैव सर्वं याजमानं कर्तव्यम् । न प्रतिनिधिना । तस्मात् स्वामिनो न प्रतिनिधिः इति सिद्धान्तः । अथ कुतूहलम् । कस्तुवस्तु प्रवाहविधिसामर्थ्यादेव प्रवसति यजमाने भवति अन्यस्य प्रतिनिधानम् । हविस्त्यागो हि स्वाहाकारान्ते वषट्कारान्ते वा । तत्काले च हविस्त्यागो न प्रवसता यजमानेन स्वयं कर्तुं शक्यः । विदेशस्थस्य तस्य तत्कालज्ञानासंभवात् । अतः अन्येनैव कारयितव्यः । प्रतिनिधीयमानश्च यजमानाज्ञया शक्नोति हविस्त्यक्तुम् 'अग्नय इदं न ममाजमानस्य' इति । यस्य च द्रव्यमुत्सृज्यते तस्यैव फलसंयोगः इति न प्रतिनिधीयमानस्य स्वामित्वमापाद्यम् । तदुक्तमभियुक्तैः 'संनिधौ यजमानः स्यादुद्देशत्यागकारकः । असंनिधौ तु पत्नी स्यात् पुत्रादिर्वा तदाज्ञया ॥' इति । बोधायनश्चाह 'पुत्रो वाऽन्तेवासी वा योऽन्यं कर्मणे स्यात् तं तत्र प्रेष्येत्' इति । अधिकरणं तु कार्यान्तरव्यापृते यजमाने वेदितव्यमिति । अत एव कुतूहलकारोऽपि ( अस्मिन्नेव सूत्रे ) 'यदा द्रव्यपरित्यागं कृत्वा अन्यत्र व्यापृतो भवति, तत्र यानि कार्याणि, तेषु अध्वर्युरेव प्रतिनिधिरनेन कर्ता ।' इति । के०

● तद्धितः देवताविधाने चतुर्थीतः प्रबलः 'देवतासंगतिः श्रुत्या तद्धितान्तात् प्रतीयते । चतुर्थ्यन्तात्तु वाक्येन पदद्वयसमीपतः ॥' वैश्वदेवी इति हि श्रुत्यैव देवतासंबन्धः प्रतीयते, इतरत्र तु वाजिभ्यो वाजिनं इति पदद्वयसामीप्याद् गम्यते । वा. ३।१।९।२१ पृ. ५३३. ● तद्धितः साकाङ्क्षान्न नोत्पद्यते । भा. ५।४।६।२१. ● तद्धितेन चतुर्थी बाध्यते देवताविधौ, यथा वैश्वदेवी इति तद्धितेन आमिक्षाया विश्वेदेवैः संबन्ध बोधयता वाजिभ्य इति चतुर्थी वाजिनस्य विश्वेदेवैः संबन्धं बोधयन्ती । बाल. पृ. १४४. ● 'तद्धितेन चतुर्थ्या वा मन्त्रवर्णेन चेष्यते । देवतासंगतिस्तत्र दुर्बलं तु परं परम् ॥' वा. २।२।६।२३ पृ. ५११. ● तद्धितेन देवताऽव्यपदेशमते तद्धितचतुर्थीमन्त्रवर्णानां देवताऽव्यपदेशमानानां मध्ये जघन्येन मन्त्रवर्णेन देवताकल्पनं युक्तम् । सु. पृ. ४६१. ● तद्धितेन देवतानिर्देशः हविष्कृतिलिङ्गम् । बाल. पृ. ११९. ● तद्धितेन देवताविधिः अपूर्वविधिः । बाल. पृ. २२, ● तद्धितेन द्वितीया बाध्यते । मुख्यमुदाहरणम् । पृ. १४४. ● देवतातद्धितेनैव देवतोद्देशपूर्वकद्रव्यत्यागरूपोत्सर्गविधिसिद्धिः 'तद्गुणात्तु विधीयेत' ( १।४।६।९ ) इत्यनेन न्यायेन । सु. पृ. ९४१, ● तद्धितस्य मन्त्रवर्णाद्दौर्बल्यं ( देवताविधौ ) । पृ. ४७२, ● तद्धितस्य संनिहितद्रव्यमात्राभिधाने न शक्तिः कल्प्या, संनिहितद्रव्यस्य प्रकृत्यर्थेन अविशेषणात्, निर्विशेषस्य च सर्वपदार्थसाधारण्येन अनुपयोगितया अनभिप्रेतत्वात्, आज्यादिविशेषणस्य उपपदार्थविशेषणस्याभावात् । पृ. ८२९.

● समर्थानां हि स उच्यते सापेक्षं चासमर्थं भवतीति तद्धितान्तेन निरपेक्षाग्निदेवत्येन ( आग्नेय ) द्विदेवत्यस्याभिधानम् । ( अग्नीषोमीयः ऐन्द्राग्नः ) । भा. ३।१।२५।२८. ● तद्धितान्तत्वात् देवताप्रत्ययान् परस्य भारप्रत्ययस्य संबन्धवाचित्वम् । सु. पृ. ८३८.

● तद्धितान्तपदोपात्तविधिना देवता, द्रव्यम्, संबन्धः, भावना, धात्वः इति– सर्वमन्यत् अर्थादाक्षिप्यमाणं न वाक्यं भिनत्ति । वा. २।४।६।१ पृ. १४२.

● तद्धितार्थः । त्वतल्प्रत्ययवाच्यानां घटत्वं पटत्वं इत्यादौ घटत्वेन घटत्वादिकमर्थः । घटत्वं च घटेतरासमवेतत्वे सति घटनिष्ठान्योन्याभावप्रतियोगिताऽवच्छेदकत्वे सति समवेतत्वम् । संसर्गः समभिव्याहारलभ्यः । सत्वं इत्यादौ एकदेशे लक्षणा । तत्र तद्धितार्थसमवेतत्वाभावविशेषः । एवं मनोयत्वं इत्यमपि । एवमन्यत्राप्यूह्यम् । केचित्तु भाववाच्यप्रत्ययस्य धर्मत्वेन धर्मे शक्तिः । धर्मत्वं आधेयत्वं शक्यताऽवच्छेदकम् । शक्यताऽवच्छेदकं तु तत्तद्व्यक्तित्वम्, न भावप्रत्ययत्वम् । घटत्वं इत्यादौ घटधर्मः इति बोधः । 'घटे घटत्वं नास्ति' इत्यत्र तु नञर्थस्य घटत्वप्रकृतिकविशिष्टभावप्रत्ययार्थे धर्मे अन्वयः, भावप्रत्ययसमभिव्याहृतनञः प्रत्ययार्थमात्रवृत्तित्वविशिष्टप्रतियोगिताकाभावबोधकत्वव्युत्पत्तेः । एवं समासघटकभावप्रत्ययेऽपि नीलघटत्वमित्यत्र नीलघटधर्मः इति बोधः । समासोत्तरभावप्रत्ययस्य प्रकृत्यर्थवृत्तिविशिष्टधर्मबोधकत्वव्युत्पत्त्या न सत्त्वेऽपि नीलो-

स्पत्वं इति बोध इत्याहुः। अन्ये तु कृत्तद्धितसमासोत्तरभावप्रत्ययस्य पदार्थताऽवच्छेदकद्वयसामानाधिकरण्ये शक्तिः, लोके पाचकत्वं औपगवत्वं नीलोत्पलत्वं इत्यादौ, वेदे च वैश्वदेवीत्वं निषादस्थपतित्वं इत्यादौ पाककृद्विपुरुषयोः, उपगुसन्तानापत्यत्वयोः, नीलत्वोत्पलत्वयोः, विश्वदेवदेवताकत्वामिक्षात्वयोः, निषादत्वस्थपतित्वयोश्च सामानाधिकरण्यस्य विशेषणतया भानात् इति आहुः। अन्ये तु सामानाधिकरण्यस्य उत्तरपदार्थताऽवच्छेदकविशेषणतया भानम्। सामानाधिकरण्यमात्रे शक्तिः। प्रत्ययानां प्रकृत्यर्थान्वितस्वार्थबोधकत्वनियमात्, प्रत्ययार्थप्राधान्यनियमस्य भावप्रत्ययार्थातिरिक्तसमासातिरिक्तपरत्वात्। तेन नीलत्वसमानाधिकरणमुत्पलत्वं इति बोधः (नीलोत्पलत्वम् इत्यत्र) इत्याहुः। परे तु नीलादिपदस्य तत्समनियते लक्षणा, अभेदः संसर्गः, नीलरूपसमवाय्यमिथःसमवेतोत्पलत्वं इति बोध इत्याहुः। वैश्वदेवी इत्यादितद्धितस्य दैवतात्वविशिष्टे सर्वनामार्थे शक्तिः। सर्वनामार्थश्च बुद्धिस्थप्रकारविशेषावच्छिन्नं पयआदि। एवं च प्रातिपदिकार्थविश्वदेवानां दैवतात्वे, देवतात्वस्य च निरूपकत्वेन सर्वनामार्थद्रव्यविशेषणत्वेन अन्वयः। सर्वनामार्थस्यैकदेशान्वयेऽपि न दोषः। आमिक्षापदे तु प्रकारविशेषोपस्थापने तद्धितस्य तात्पर्यग्राहकत्वं इति प्राञ्चः। केचित्तु तद्धितस्य सर्वनामार्थे शक्तिः, देवतात्वे तु निरूढलक्षणा। तद्धितस्य प्रत्ययानां आश्रयवाचिनां कृतामिव विश्वदेवप्रातिपदिकार्थस्य लक्षितदेवतात्वे अन्वयः व्युत्पत्तिवैचित्र्यात् इत्याहुः। अन्ये तु तद्धितार्थो द्रव्यविशेष एव। दैवतात्वं तु प्रातिपदिकार्थतद्धितार्थयोः संसर्ग इत्याहुः। परे तु देवतात्वमेव तद्धितार्थः, सर्वनामार्थस्य व्यक्तिन्यायेन बाधः इत्याहुः। अपरे तु तद्धितेन अनिर्धारितविशेषद्रव्यसामान्यप्रतीतेः न द्रव्यविशेषवाचित्वम्, किंतु आमिक्षापदादेव विशेषनिर्णयः इत्याहुः। मणि. पृ. १६१–१६२. ● तद्धितार्थेन साकाङ्क्षस्य सम्बन्धः, एवं समासेऽपि। भा. २।२।१७।४१.

● तद्धितदेवतावेधिः सर्वज्येष्ठः। सर्वजघन्यश्चान्तर्नालिकदेवताविधिः। पा. १।४।६।९ पृ. ३४१.

● तद्धितद्वितीययोर्विप्रतिपत्तौ तद्धितः समर्थो द्वितीया वा इति संदेहः ऐन्द्याधिकरणे (३।२।२।३)। सु. पृ. १०८७.

● तद्धितनिर्देशेन हि प्रातिपदिकार्थस्य संख्याविशेषाभिव्यक्तिर्भवति। प्रातिपदिकार्थानन्वयासंभवात् एकवचनान्तेन निर्देशो भवति। या. ३।२।१५।३७. ● तद्धितनिर्देशे देवानां दैवतत्वं श्रुत्या। भा. २।२।१।२३.

● तद्धितप्रत्ययावृत्तिलक्षणो वाक्यभेदः। बाल. पृ. १८१.

● तद्धितवत् समासस्य सापेक्षेषु अप्रवृत्तेः। भा. ३।२।१७।४१.

● ये हि विभक्तिवाच्या अर्था भवन्ति, तद्विभक्तिसमर्थेभ्य एव तेभ्यः तद्धितविधानं दृश्यते 'तदर्हति, तेन क्रीतं, तस्मै हितम्, तत आगतः, तस्यापत्यम्, तत्र भवः' इति। वा. २।१।८।१० पृ. ४९२.

● तद्धितश्रुतेः कारकगुणनिर्धारीयसी इति 'ऐन्द्रा गार्हपत्यम्' इत्यत्र मन्त्रस्य गार्हपत्याङ्गत्वमेव, नेन्द्राङ्गत्वम्। शेषमेकार्थ इदम्। कौ. १।१।७।१४ पृ. १५०.

● तनुगिरा उष्णिक्। पादेषु अक्षराणि ११।११।६ उदा. प्र वो योधे भृगवाणे (ऋग्. ११।१२०।५)। के.

● तनूनपान्नराशंसौ राजन्य–अत्रि–वध्र्यश्व–वसिष्ठ–शुनक–कण्व–कश्यप–संकृतिभिन्नाः। (एषां द्वितीयः प्रयाजः तनूनपात्। राजन्यादीनां नराशंसः)। भा. ६।६।१।१.

☸ तन्तुन्यायः। अयं समुदायस्य कार्यसाधकत्वविवक्षया प्रवर्तते। यथा तन्तवः सूत्राणि बहूनि मिलितानि भारं धारयन्ति, तथा महान्तोऽपि मिलिताः स्वकार्यं साधयन्तीति भावः। साहस्री. १३४.

☸ तन्तुपटन्यायः। तार्किकमते तन्तुनाशेऽपि पटनाशः, यथा जीवन्मुक्तिः। अयं कारणनाशे कार्यनाश इत्यस्यापवादः। संग्रहः.

● (तन्त्रं नाम) तन्त्रं तत्, यत्र सकृत् कृतं सर्वेषामुपकरोति। यत्र तु अन्यार्थेन अङ्गेन अन्यस्योपकारः तत्र प्रसङ्गः। रत्न. १२।१।७।२४. ● तन्त्र

तन्यते विस्तार्यते बहूनामुपकारो येन सकृत्प्रवर्तनेन, तदिदम् । यथा बहूनां ब्राह्मणानां मध्ये कृतः प्रदीपस्तेषामुपकरोति । वि. ११।१।१. ● तन्त्रं द्विधा भवति प्रत्येकं वा समुदाये वा वाक्यपरिसमाप्तौ श्रास्त्रातगुणत्वप्राधान्यापेक्षया । के. ● तन्त्रं प्रसङ्गश्च । 'साधारणं भवेत् तन्त्रं परार्थे त्वप्रयोजकः । एवमेव प्रसङ्गः स्याद् विद्यमाने स्वके विधौ ॥' (इति भाष्योक्तलक्षणश्लोकस्यायमर्थः—) यत् अङ्गमनुष्ठीयमानं अगृह्यमाणविशेषत्वात् अनेकोपकारसाधारणम्, तत्र तन्त्रम्, यथा आग्नेयादिषु प्रयाजादेः । यत्तु अनुष्ठीयमानं परार्थत्वेन गृह्यमाणविशेषत्वेऽपि परस्योपकारकम्, तत्र परार्थोपजीवी प्रयोजकः यदा वाजिनग्रहोपयागादिकं दध्यानयनकपालादेः । यत्र तु स्वविधेः प्रयोजकत्वशक्तिसद्भावेऽपि परार्थोपजीवनम्, तत्र प्रसङ्गः इत्यर्थः । एवं च 'परार्थे त्वप्रयोजकः' इत्यत्र स्वविधेः प्रयोजकत्वशक्त्यभावे इत्यर्थात् लभ्यते इति बोध्यम् । मीस. १२।१।४. ● तन्त्रं साधारणो धर्मग्रामः । यथा दर्शपूर्णमासयोः आज्यभागादिः पूर्वः, स्विष्टकृदादिः उत्तरः । भा. १२।१।१।१.

● तन्त्रं साधारणो धर्मग्रामः । ■ येषां प्रधानानां तानि तन्त्रीणि प्रधानानि । भा. १२।१।२।१.

( यत् तन्त्रेण क्रियते, तस्य वा तन्त्रं तत् वर्णक्रमेणोच्यते । तन्त्रं न इति तु ततः परं निर्देक्ष्यते ) ।

● तन्त्रं अग्न्याधानं सर्वकर्मणि । भा. ११।१।११।२६. ● तन्त्रं अङ्गानि पौर्णमास्या अमावास्या प्रधानानां एककालसंयोगात् । टुप्. ११।४।७।११. ■ तत्र अभिवर्षणमन्त्रः 'उन्दतीरोजो धत्ते' इति ज्योतिष्टोमे संतानेनाभिवर्षणस्थले । भा. ११।४।१७।५०, ● तन्त्रं अमेध्यप्रतिमन्त्रणमन्त्र. ( 'अब्दं चक्षुः' इति ) ज्योतिष्टोमे एकदा अनेकामेध्यदर्शने । ११।४।१७।५०, ● तन्त्रं अवघातमन्त्रस्य 'अव रक्षो दिवः सपत्नं वध्यासम्' इति दर्शपूर्णमासयोः मुसलप्रहारानेकत्वेऽपि । ११।४।१२।४२, ● तन्त्रं आघारादीनामङ्गानां दर्शपूर्णमासयोः, न प्रतिप्रधानं भेदः । ११।१।१०।५८–६७, ● तन्त्रं उपसत्कालीनं सुब्रह्मण्याह्वानं अहर्गणे । ११।३।१०।२१, ● तन्त्रं उद्वासनं राजसूये नानाबीजेष्टौ । ५।२।६।१३–१५, ● तन्त्रं कण्डिका राजसूये एकस्मिन् । ११।४।२।४–७, ● तन्त्रं कण्डूयनमन्त्रः ( 'कृषिषु स्थामकृषे' इति ) युगपद् अनेकाङ्गकण्डूयनेऽपि । ११।४।१६।४८–४९. ● तन्त्रं कर्तारः राजसूये इति भाष्यान्तरम् । सति संभवे त एव कर्तार इति वार्तिकम् । के ११।४।२।४–७. ● तन्त्रं कर्तृणां होतृ-आग्नीध्र-ब्रह्मणाम् । विहारद्वये वरुणप्रघासेषु, अध्वर्युप्रतिप्रस्थात्रोस्तु वचनाद्भेदः । भा. ११।३।१०।४४–४८, ● तन्त्रं कुम्भीशूलवपाश्रपणीनां ऐकादशिनेषु भिन्नदेवताकेष्वपि पशुषु सजातीयेषु । ११।८।९।२१–१६.

● तन्त्रं कुम्भीशूलवपाश्रपणीनां वाजपेयगतप्राजापत्यपशुयागादिश्रपणार्थम् ॥

पशुगणे कुम्भीशूलवपाश्रपणीनां प्रभुत्वात् तन्त्रभावः स्यात् । ११।४।८।३३ ॥

भाष्यम्— वाजपेये प्राजापत्येषु पशुषु कुम्भ्याः शूलस्य वपाश्रपण्याश्च तन्त्रभावः स्यात्, विभुत्वात् । विभवत्येका कुम्भी सर्वपशूनामवदानानां श्रपणे, शूलं हृदयानाम्, वपाश्रपणी वपानाम् । तस्मात् तन्त्रं स्युः ।

सोम— पात्रयोः कार्यसिद्धेः दृष्टार्थस्य कुम्भ्यादेर्नतन्त्रता इत्युचितैः संगतिः । न चैकदेवत्यत्वेऽपि अवदानादेः क्रमानुष्ठानाय असंकरस्यापेक्षितत्वात् कथं तन्त्रत्वमिति वाच्यम् । पक्षप्रमाणरेखा चिह्नकरणेनापि तत्सिद्धेः ।

वि— 'प्राजापत्येषु कुम्भ्यादेर्भेदो नो वा, ऽस्य भेदनः । भेदो, मैवं विशेषाश्रपणादौ प्रभुत्वतः ॥'

भाट्ट— एकदेवत्येषु एकजातीयेषु च प्राजापत्यादिपशुषु प्रयोगविध्यवगतश्रपणादियौगपद्यानुरोधेन कुम्भीशूलवपाश्रपणीनां महत्परिमाणाङ्गीकारेण तन्त्रमेव श्रपणादि । नहि तेषां प्रकृतौ कश्चित् परिमाणविशेष उपात्तः, येन तल्लिप्सया कुम्भ्यादिभेदोऽङ्गीक्रियेत ।

मण्डन— 'कुम्भ्येका पशुभेदेऽपि ।'

शंकर— 'कुम्भ्यादेश्च पशुष्विदम् ।' तन्त्रम् ।

● तन्त्रं दीक्षा पृथक्कालत्वात् द्वादशाहे । ( दीक्षावत् इति भाष्यम् ) । भा. ११।३।१०।२१, ● तन्त्रं देव-

कालकर्तारः दर्शपूर्णमासादिप्रधानेषु । ११।२।१।१-२, ४-७, ● तन्त्र देशकालकर्तारः दर्शपूर्णमासयोः अङ्गेषु । ११।२।२।३, ८-११, ● तन्त्रं नदीतरणमन्त्रो 'देवीराप' इति ज्योतिष्टोमे अनेकस्रोतस्कनदीतरणस्थलेऽपि । ११।४।१७।५०, ● तन्त्रं प्रयाणमन्त्रः 'महादपि श्रेयः प्रेहि' इति एकार्थनिर्वृत्यर्थे । ११।४।१८।५१, ● तन्त्रं (प्रयोगः) मिलं ब्राह्मणादिकर्तृकाणा अवेष्टेः राजसूयात् । ११।४।३।६-१२, ■ तन्त्रं यूपः ज्योतिष्टोमे पशुनवार्थः । ११।३।३।३-४, ● तन्त्रं यूपाहुतिः यूपैकादशिन्याम्, आन्तिकदेशस्य अविवक्षितत्वात् । ११।२।७।२६-२९, ● तन्त्र यूप संस्कारा‍णा पशुनवार्थे ज्योतिष्टोमे । ११।३।४।५-७, ● तन्त्र वरणं सर्वकर्तॄणा राजसूये । इति भाष्यमतम् । प्रतिकर्म पृथक् वरणं इति वार्तिकमतम् । ११।४।२।४-७, ● तन्त्र वसाहोमस्य एकदेवताकमन्थाणे । ११।२।५।२४, ● तन्त्र वेदिप्रोक्षणमन्त्रः ('वेदिरसि बर्हिषे त्वा' इति) नि: प्रोक्षणेऽपि । ११।४।२५।४६-४७, ● तन्त्र शेषकार्याणा सर्वयुक्तायाम् । २।५।४।१६-१७, ● तन्त्र (प्रयोगः) सवनीयपशोः सवनीयपुरोडाशेषु प्रसज्यते, न तु विकल्पः । ११।१।१२।३।१०-२१, ● तन्त्र स्वप्नार्थमन्त्रः ('स्वमसे मत्या असि' इति) एकस्या रात्रौ अवान्तरनिद्राभेदेऽपि । ११।४।२७।५०, ● तन्त्र स्वरु पशुनवार्थे अग्निष्टोमे । ११।३।५।८-१२.

(यत् या यस्य या यत्र न तन्त्रम्, तदिदानीं निवेद्यते)

● तन्त्र न अङ्गानि अनुकवेयफलाना प्रधानानां त्रिसंयुक्तद्वये, राजसूये । भा ११।४।१।१-३, ● तन्त्रं न अङ्गानां चातुर्मास्यगतवरुणप्रघासेषु दक्षिणोत्तरविहारयो क्रियमाणेषूभयोः, किंतु पृथगनुष्ठानम् । ११।२।९।३५-४३, ● तन्त्रं न अङ्गानां दर्शपूर्णमासचातुर्मास्यादिषु तत्तद्व्याप्त्यप्रयोगानुरोधात् । ११।२।३।१२-१८, ● तन्त्रं न अङ्गानां द्वादशाहे प्रधानैः सह स्थालानाम् । ११।४।६।२२-२६, ● तन्त्र न अङ्गानां मातरादिभेदेन क्रियमाणानां त्र्यणात्रयाणां प्रधानानामयें कालभेदात् अध्वरकल्पायाम् । ११।२।४।१९-२३, ● तन्त्रं न अङ्गाना राजसूये अवेष्टिषु । ११।४।३।८-१०, ● तन्त्रं न अग्निषु वाजपेये क्रतुपशुषु प्राजापत्येषु च कालभेदात् । ११।४।२०।५४-५६, ● तन्त्र न अभिषेचनीयदशपेययोः राजसूये । ११।२।१४।५७-६२, ● तन्त्रं न अवहननमन्त्रस्य नानाबीजेष्टौ प्रतिबीजं राजसूये । ११।४।१३।४२, तन्त्रं न आग्नेय पशुद्वयप्रदानयोः । ११।१।११।६८-७१, ● तन्त्र न आज्यग्रहणमन्त्रस्य आज्यग्रहणेषु प्रतिग्रहणम् । ११।४।१४।४४-४५, ● तन्त्रं न उखा पञ्चशारदीये अहीने पञ्चसु संवत्सरेषु, अक्षवाक्ये कर्मशेषप्रतिषेधविधानात् । ११।२।१३।५४-५६, ● तन्त्रं न उपरवमन्त्र, किंतु प्रत्युपरवमन्त्रसमावृत्तिः ज्योतिष्टोमे । ११।४।११।५२-५३, ● तन्त्र न ऐन्द्रवायवस्य भक्षे ज्योतिष्टोमे । ३।५।५।१८, ● तन्त्र न कपालचतुष्कस्य अश्वप्रतिग्रहेष्टया प्रतिपुरोडाशम् । ११।४।११।३९-४१, ● तन्त्र न कर्मणा कालभेदात् । ११।२।४।२२.

■ तन्त्रं न कुम्भीशूलवपाश्रपणीनां नानाजातीयेषु पशुषु पाकवैषम्यात् ॥

जात्यन्तरेषु भेदः स्यात् पक्तिवैषम्यात् । ११।४।१०।४० ॥

भाष्यम्— ऐकादशिनेषु (पशुषु) नानाजातीयेषु कुम्भ्यादीना भेदः स्यात् पक्तिवैषम्यात् । (अत्र पाठान्तरम्— अस्ति सौत्रामणी, तत्र आश्विनो धूम्र, सारस्वतो मेषः, ऐन्द्र ऋषभः इत्येवंविधाः पशवः सन्ति । तेष्वपि तत्त्वभाव प्रभुत्वात् प्रसङ्गः अपोद्यते । सौत्रामण्या एवं नानाजातीयेषु कुम्भ्यादीना भेदः स्यात्, पक्तिवैषम्यात् इति) । विषमा हि पक्तिः आजानां आविकानां च मांसानाम् । यावता कालेन आजानि पच्यन्ते, तावता आविकानि विलीयन्ते । तत्र अवदानसंभेदो भवति । तस्मात् पात्रभेदः स्यात् ।

वृद्धिदर्शनाच्च । ४१ ॥

भाष्यम्— वृद्धिश्च सौत्रामण्यां शूलानां गोऽजाविषु दृश्यते 'शूलैश्च मानरेण च अवभृथमभ्यवयन्ति' इति । तस्मादपि भेदः ।

सोम— एकस्यामपि जातौ बाल्ययौवनस्थाविरत्व-वशेन यत्र पक्तिवैषम्यम्, तत्र कुम्भ्यादिभेद एव न्यायसाम्यादिति ध्येयम्।

वि— 'भिन्नजातिषु कुम्भ्यादेस्तन्त्रं भेदोऽथवा, ऽपिमः। पूर्ववत्, पाकवैषम्ये साहित्यासंभवाद् भिदा॥'

भाट्ट— एकदेवत्येष्वपि यत्र पाकवैलक्षण्यापादकं जात्यन्तरम्, तत्र सद्यःश्रपणे स्त्रीपशावविना विलीनत्वापत्तेः, चिरपाकिनो अपक्वत्वापत्तेः, पृथगेव कुम्भी श्रपणं च। एवं हृदयशूलेऽपि। अत एव सौत्रामण्यां 'शूलैर्मांसैरेण श्रपयन्ति' इति लिङ्गम्। वपाश्रपणी तु एकैव। यस्मा एव वपायाः पाको भुक्तः तस्या एव तद्गात्रोपपत्तेः। अस्तु वा तत्रापि भेदः। तेन पृथक् पशूनां एकदेवत्येषु तन्त्रत्वानम्, भिन्नदेवत्येषु तु भेदेन।

मण्डन— 'जातिभेदे पृथक् कुम्भी।'

शंकर— 'जातिभेदे पशोर्भेदः।' ११.

* तन्त्रं न निर्वापमन्त्रस्य दर्शपूर्णमासयोः प्रतिमुष्टि निर्वापे। भा. ११।४।१४।४४–४५, * तन्त्रं न पत्नी-संयाजाना चातुर्मास्यगतवरुणप्रघासेषु। ११।२।११। ४९–५०, * तन्त्रं (प्रयोगः) न पवमानहविषां त्रयाणां आधाने, ब्रह्मवर्चसकामस्य तु तन्त्रप्रयोगः। ११। ४।४।१३–१४, * तन्त्रं न पुरोऽनुवाक्ययोः कृष्णग्रीवयोः प्रथमतृतीययोः। ११।४।२०।५४–५६, * तन्त्रं न प्रतिप्रस्थातृमन्त्राणां चातुर्मास्यगतवरुणप्रघासेषु अध्वर्यु-मन्त्रैः। १२।१।९।१८, * तन्त्रं न मनोतामन्त्रस्य कृष्ण-ग्रीवयोः। ११।४।२०।५४–५६, * तन्त्रं न गवानुत्य-गताग्नावैष्णवादीनां पृथग्दक्षिणायुक्तानाम्। ११।८।१। १–३, * तन्त्रं न लवनमन्त्रस्य दर्शपूर्णमासयोः दर्भ-लवने। ११।४।१४।४४–४५, * तन्त्रं न वसाहोमाना भिन्नदेवताके पशुगणे। ११।२।६।२५, * तन्त्रं न सुब्रह्म-ण्याऽऽह्वानस्य सुत्याकालभिन्नस्य अहर्गणे द्वादशाहादौ। ११।३।११।२२–३२, * तन्त्रं न स्तम्बयजुषः दर्श-पूर्णमासादौ वेदिस्तरणे प्रतिवाद्य। ११।४।१४।४४–४५, * तन्त्रं न हविष्कृदाह्वानस्य सवनीयपुरोडाशेषु ज्योतिष्टोमे। ११।४।२०।५४–५६.

* तन्त्रेण इतिकर्तव्यता भविष्यति एकस्मिन् फले चोदितानाम्। टुप्. ११।८।५।१७. * तन्त्रेण देवता-होमः स्विष्टकृदिडाभक्षणे च एकदेवत्यपशुगणे। भाट्ट-५।२।६. * तन्त्रेण प्रयोगो दीक्षोपसदां दक्षिणैक्यात्। टुप्. ११।४।५।१८, * तन्त्रेण प्रयोगो योऽस्यार्थं कामयमानः सवेष्टिं करिष्यति तस्य। ११।४।३।९. * तन्त्रस्य (प्रयोगस्य) पशुपुरोडाशीयस्यैव आनुनिर्वाप्येषु प्रसङ्गः अग्निचयनादौ। भा. १२।१।३।३–८,

* तन्त्रावापौ एकादशाध्यायार्थः। के.

* एकवाक्यचोदितानां एकदेशकालकर्तृकत्वे एक-तन्त्रत्वं भवति। यथा दर्शपूर्णमासयोः, यथा च चित्रायामिष्टौ। भा. १२।१।१।१. * तन्त्रत्वे नास्ति आवृत्तिः, आवापस्तु आवृत्तिः। के.

सू तन्त्रन्यायः। दर्शपूर्णमासादिगताग्नेयादीनां समुचितानां एकः स्वर्गः फलम्॥

प्रयोजनाभिसंबन्धात् पृथक् सतां ततः स्यादेककर्म्यमेकशब्दाभिसंयोगात्। ११।१।१।१॥

भाष्यम्— दशमेऽध्याये बाधाभ्युच्चयलक्षणं वृत्तम्। इदानीमेकादशे तन्त्रावापलक्षणं निर्वर्तयिष्यामः। तत्र यत् सकृत्कृतं बहूनामुपकरोति तत् तन्त्रमित्युच्यते यथा बहूनां ब्राह्मणानां मध्ये कृतः प्रदीपः। यत्तु आवृत्त्योप-करोति स आवापः यथा तेषामेव ब्राह्मणानामनुलेपनम्। श्लोकमपि उदाहरन्ति 'साधारणं भवेत् तन्त्रम्, परार्थे त्वप्रयोजकः। एवमेव प्रसङ्गः स्याद् विद्यमाने स्वके विधौ॥' इति। साधारणं भवेत् तन्त्रं इति उक्तार्थम्। परार्थे त्वप्रयोजकः इति, यः परार्थमुत्पन्नः, तदर्थमेव च अनुष्ठीयमानः परस्य उपकरोति, स परः तस्य अप्रयो-जकः, यथा पशुयागार्थो यागार्थमुत्पन्नः, तदर्थेनैव च अनुष्ठीयमानः लोहितशकृत्कर्मणोरपि उपकरोति इति। एवमेव प्रसङ्गः स्यात्। अयं तु (प्रसङ्गे) विशेषः, विद्यमाने स्वके विधौ इति। यद्यपि अस्य अन्यो विधि-र्विद्यते, परार्थविधिना तु कृतार्थत्वात् न क्रियते, यथा प्रयाजाः पशोरपि चोदकेन प्राप्ताः, पशुपुरोडाशस्यापि। पश्वर्था एव तु कृताः पशुपुरोडाशस्य उपकुर्वन्ति इति न पुनः तदर्थं क्रियन्ते।

प्रकृतमिदानीमुच्यते । तन्त्रावापलक्षणं प्रतिज्ञातम् । तदुच्यते । दर्शपूर्णमासयोः प्रधानानि आग्नेयादीनि । तेषां स्वर्गः फलं श्रूयते 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' इति । स किं तेषां तन्त्रेण भवति, उत भेदेनेति । एवं चातुर्मास्यादिष्वपि द्रष्टव्यम् । ननु च नैवात्र स्वर्गः फलं श्रूयते । स्वर्गकामपदेन तावत् पुरुषोऽभिधीयते, यजेतेत्यनेनापि यागाभिनिर्वृत्तिः, तयोर्वाक्येन संबन्धः । केनेदानीं फलमुच्यते । अनेनैव स्वर्गकामपदेन इत्याह । ननु पुरुषस्यार्थे वक्ता । न खलु कश्चित् पुरुषः स्वर्गकामो नाम अस्ति । ननु च यस्य स्वर्गे कामः, स स्वर्गकाम इति । एतदेव न जानीमः, कस्य स्वर्गे काम इति । य एव हि स्वर्गकामः स एव अस्वर्गकामो भवतीति । एवं तर्हि कालोपदेशोऽयं भवति । यदा स्वर्गकामः, तदा यजेतेति । अत्रापि न कश्चित् कालविशेषोऽस्ति, यस्मिन् नियमेन स्वर्गकामः स्यात् । सर्वेषु कालेषु सर्वे कामा अनियमेन उत्पद्यन्ते । अत्र न कश्चित् कालविशेषः अनेन शक्यते व्यपदेष्टुम् । एवं तर्हि नैवायं पुरुषोपदेशः, नापि कालोपदेशः । किं तर्हि । फलकामो निमित्तम् । स्वर्गविषये कामे उत्पन्ने यजेतेति । यथा कपाले नष्टे यजेतेति । अस्य पक्षस्य सूत्रेणैव परिहार उक्तः । 'फलकामो निमित्तमिति चेत् न नित्यत्वात्' (६।२।२।१०-११) इति । नित्यान्यग्निहोत्रादीनि कर्माणि । तानि यदि निमित्ते विधीयन्ते, नित्यत्वमेषां विहन्येत । तत्र नित्यत्वचोदना यावज्जीविकाद्या उपरुध्येरन् । लिङ्गानि च, 'एष वा एष स्वर्गाल्लोकाच्च्यवते यो दर्शपूर्णमासयाजी सन् पौर्णमासीममावास्यां वाऽतिपातयेत्' इत्येवमादीनि । परिशेषात् फलसंयोगः एवायम् । कथं पुनरनेन शक्यते फलं विधातुम् । तदुच्यते । स्वर्गकामो यजेतेति, यदि वा स्वर्गकामो यागस्य उपदिश्यते, यथा लोहितोष्णीषाः प्रचरन्ति । यदि वा यागः स्वर्गकामाय यथा मलिनः स्नायात्, बुभुक्षितोऽश्नीयादिति । तत्र यदि स्वर्गकामः कर्मणे उपदिश्यते, उपदिष्टोऽपि न प्रवर्तेत । को हि परार्थे प्रयासमातिष्ठेत् । तथा धर्मचोदना अनर्थिकैव भवति । अथ यागः स्वर्गकामार्थः, यतोऽसौ पुरुषस्योपकरोति, तं पुरुषः स्वार्थेन करोतीति । तथा कर्मचोदना अर्थवती भवति । अपि च यागविधौ श्रुत्यर्थः परिगृहीतो भविष्यति, स्वर्गकामविधौ वाक्यार्थः । तस्मात् यागः स्वर्गकामस्योपकारकः । स्वर्गकामस्य अनेक उपकारः पशुपुत्रग्रामान्नाद्यादिलक्षणः । स यदि पुत्रान्नाद्यादीनामन्यतमं करोति, ततः स्वर्गकामशब्दः अविवक्षितार्थः पुरुषमात्रवचनो भवति । तथा च आनर्थक्यमेव । अनन्तरेणापि हि तद्वचनं पुरुषमात्रं आख्यातादेव गम्यते । तस्मात् यागात् स्वर्गो भवतीति ।

तत्र अनेककर्मसंनिपाते दर्शपूर्णमासादिषु भवति संशयः । किं तन्त्रं एषां फलम्, उत भेदेनेति । किं प्राप्तम् । भेदेनेति । किं कारणम् । इमानि आग्नेयादीनि प्रधानानि परस्परानपेक्षाभिः चोदनाभिः पृथग्भूतानि उत्पन्नानि पृथगेव फलमाकाङ्क्षन्ति । तत्संनिधौ स्वर्गादि फलं श्रूयमाणं भेदेन आकाङ्क्षितत्वात् भेदेनैव संबध्यते । तस्मात् प्रतिप्रधानं फलभेद इत्येवं प्राप्तम् । एवं प्राप्ते, इदमारभ्यते । प्रयोजनाभिसंबन्धात् पृथक् सतां ततः स्यादेककर्म्यमेकशब्दाभिसंयोगात् । पृथग्भूतानामपि एतेषां आग्नेयादीनां ततः स्यात् ऐककर्म्यम् । कुतः । प्रयोजनाभिसंबन्धात् । प्रयोजनं फलम् । तत् प्रति एतेषां समेतानां संबन्धात् संयोगात् इत्यर्थः । ऐककर्म्ये सति, कथमुपदेशः अत्र फलमुच्यते क्रियते इति । तत् येनाभेदेन तानि एककर्माणि, तेषां भाव ऐककर्म्यम्, एककर्मत्वमित्यर्थः । कथं पुनरवगम्यते समेतानामाग्नेयादीनां फलेन योग इति, एकशब्दाभिसंयोगात् । य एषां समुदितानां एकः शब्दो वाचकः, तेन एतानि अभिधाय फलसंबन्धः श्रुतः 'दर्शपूर्णमासाभ्यां स्वर्गकामः' इति । अतः समुदितेभ्यः फलं गम्यते, न भेदेन । यथा 'ग्रामेण स्वदपानः सेव्यः' 'ग्रामेण तडागः खेय' इति ग्रामशब्देन समुदायवचनेन संयुज्य कूपो विधीयमानः समुदितैः पुरुषैः एकः गम्यते, न प्रतिपुरुषं कूपभेदः, एवमिहापि ।

टुप्— दशमेऽध्याये बाधाभ्युच्चयौ वृत्तौ । तत्र अभ्युच्चयो नाम न किंचित् वस्त्वन्तरं ( [illegible] ) विद्यते । किंतु उपहोमैः अनूयाजा न बाध्यन्ते इति बाधाभावमात्रं अभ्युच्चय इत्युच्यते । अस्मिंश्च दशमे

षोडशमासानां प्रत्यक्षविहितानां च पदार्थानां इयत्ता चिन्तिता । इह तु ( इदानीम् ) एकादशे इयत्ताविशेषश्चिन्त्यते । यत्र भूयो यागाः ( प्रधानभूताः ) श्रूयन्ते, तत्र सेयमियत्ता किं तन्त्रेण ( भवति ), उत आवृत्त्या इति । ननु दशमानन्तरं अङ्गानां तन्त्रावापचिन्ता युक्ता, नेषा ( एव दशमे ) इयत्ताऽवधारणात् । प्रथमे चाधिकरणे फलं चिन्त्यते, तत्र इयत्ता न भवति । तस्मात् तस्य दशमेन नास्ति संबन्धः । ( तथाहि, ) किं एकैकस्य फलं उत संहतानाम्, इति कीदृशः दशमसंबन्धः ( स्यात् ) । उच्यते । यदि समुदितानामेकं फलम्, ततः तन्त्रावापचिन्ता घटते । अथ एकैकस्य फलम्, ततः तन्त्रं नास्त्येव ( अर्थान्तरवत् भेद एव स्यात् ) तस्मात् ( उपोद्घातरूपं ) प्रथमाधिकरणमारभ्यते तन्त्रावापसिद्धये । द्वितीयादीन्यपि ( तत्– ) प्रसङ्गेन ( आरभ्यन्ते ) किं संहतानि अङ्गानि एकं उपकारं कुर्वन्ति, उत निरपेक्षाणि इति । अथवा तन्त्रावापसामान्येन प्रथममधिकरणं चिन्त्यते । ( भाष्यकारेण सोमं विचारमुपक्रम्य चोदितं ननु नैवात्र स्वर्गः फलं श्रूयते इति, तस्यार्थमाह– ) 'यजेत' इत्यनेन आक्षिप्तः कर्ता, स विशेष्यते स्वर्गकामशब्देन ( पुरुषवचनेन ), यथा 'राजा राजसूयेन यजेत' इति ( राजा इति विशेषणम् ) । विशेषणं च ( कामः राजत्ववत् ) कर्माङ्गं भवति इति । ( इत्थमाध्यमार्गमाह– ) एवं च ( कर्तृविशेषणत्वे अभ्युपगम्यमाने ) यदि स्वर्गं ( एव कश्चित् ) नित्यं कामयते, नान्यानि ब्रह्मवर्चसादीनि, तथा सति असाधारणत्वात् विशेषणमवकल्पते ( स्वर्गमेव यः कामयते इति ) । न च ईदृशः कश्चिदस्ति । यदि वा ( कश्चित् ) स्वर्गं न कदाचित् कामयते, तथापि त ( मस्वर्गकामं ) अपेक्ष्य विशेषणं घटते स्वर्गकाम एव यः इति । किंतु ईदृशोऽपि नास्ति, यो न कदाचित् स्वर्गं कामयते । अथोच्येत, ( स एव ) यस्यां वेलायां स्वर्गकामः ( स्वर्गमेव कामयते ) तस्यां वेलायां दर्शपूर्णमासादीनि करिष्यति ( तेन कालद्वारेण विशेषणत्वं युज्यते ) । एतदपि न घटते । यावत् ( पुरुषः ) साङ्गं प्रधानं निर्वर्तयति, तावत् अनेके कामा उत्पद्यन्ते ( दीर्घकाले ) । यदि च शुद्धमेव स्वर्गं कामयेत, तथा ( सति संपन्नौ ) यथाश्रुतौ दर्शपूर्णमासौ कृतौ स्याताम्, नेतरथा । न च ईदृशः कश्चित् विद्यते ( यो यावत्प्रयोगं स्वर्गमेव कामयते ) । तस्मात् कालद्वारेण विशेषणं न घटते ।

( भाष्यकारेण 'फलकामो निमित्तं भवतु' इत्याशङ्क्य नित्यानित्यसंयोगविरोधात् परिहारोऽभिहितः, तमाक्षिपति– ) योऽयं नित्यानित्यविरोध उक्तः, स नोपपद्यते । कथम् ? यस्मात् ( मते ) स्वर्गकामशब्देन फलमभिधीयते, तस्यापि नित्यानित्यविरोधो भवत्येव । ( तथाहि, ) दर्शपूर्णमासौ यावज्जीवं कर्तव्यौ स्यातां, पुनः कामेन कर्तव्यौ इति ( विरोधात् ) न कश्चित् निमित्तेन ( फलस्य ) विशेषोऽस्ति । न च ईदृशो नित्यानित्यविरोधो भवति । ( कथम् ? ) आग्नेयादय उत्पन्नाः, तेषामुत्पत्तिवचने न नित्यत्वमवगम्यते, न काम्यत्वम् । ते तु ( स्वरूपमात्रेण ) विपरिवर्तमानाः एकेन वाक्येन यावज्जीवं प्रति विधीयन्ते, अपरेण स्वर्गम् । न च यावज्जीव–स्वर्गकामचोदनयोः परस्परापेक्षा विद्यते । येन ये एव यावज्जीविके ( प्रयोगे ) कर्तव्याः, ते एव काम्येऽपि कर्तव्या इति ( अवगमात् विरोधः स्यात् ) । तस्मात् काम्यनित्याभ्याम् ( अन्योन्यमनपेक्षमाणाभ्याम् ) उत्पत्तिः अपेक्षितव्या ( इत्यविरोधः । तस्मात् अयुक्तमिदं नैमित्तिकत्वनिराकरणम् ) । तेन तर्हि अन्यथा ( नैमित्तिकत्वनिराकरणं ) वर्ण्यते । स्वर्गकामशब्देन निमित्तं नाभिधीयते । सप्तम्यन्तेन निमित्तमुच्यते यथा 'भिन्ने जुहोति' इति, यद्वृत्तेन वा 'यस्योभयम्' इति । न चात्र सप्तम्यन्तः, न च यद्वृत्तेन युक्तः । तस्मात् ( निमित्तानभिधायित्वात् ) अनेन स्वर्गं कामयमानः पुरुषः अभिधीयते । ( तथापि पूर्वोक्तेन न्यायेन पुरुषपक्षत्वानुपपत्तेः विशेषणपरत्वमेव ) । स च पुरुषः किं साध्यत्वेन स्वर्गं कामयते, उत साधनत्वेन इति । द्विप्रकाराऽपि कामना अस्ति । यदि अयं साधनत्वेन स्वर्गमिच्छति, तथा सति ( पूर्वोक्तेन न्यायेन विशेषणपरत्वे स्थिते स्वर्गकामाधिकरणपूर्वपक्षन्यायात् ) प्रीतिविशिष्टेन द्रव्येण साध. साधनीय. ( भवति ) तदा च

न कश्चित् शब्दोऽस्ति, येन फलमभिधीयेत । यो हि अयं स्वर्गकामशब्दः, स साधनवचनः । ( न फलवचनः इति– ) अनेनापि प्रकारेण सामानाधिकरण्यमभिहितम् ( फलाभावेन तत्साध्यचिन्ताऽनुपपत्तेः ) ।

इदं तु पक्षे निराकृतम् । स्वर्गस्य साधनत्वेन न कामना । किं कारणम् ? सर्वो हीदं कामयन्ते, स्वर्गो मे स्यादिति । साध्ये मुख्या कामना, साधने तु मान्तरीयकी, साधनेन विना साध्यासम्भवात् । तस्मात् साधने या कामना, सा गौणी । अपि च 'यजेत' इति भावनावचनः श्रुत्या पुरुषार्थमाक्षिपति । स च आक्षिप्तः स्वर्गस्य प्रथमं पूरयति । यदि च स्वर्गो यागेन पूर्वेण, तदा चोदितमपि यागं न कश्चित् कुर्यात् । तस्य विधिर्व्याहन्येत । तस्मात् स्वर्गः साध्यत्वेन काम्यते, तेन स्वर्ग-योपायः आक्षिप्तः । तथोपायत्वेन यागो विधीयते ।

अत्र ( भाष्य– ) अथ य एषां समुदितानां एकः शब्दो वाचकः, तेन एतानि अभिधाय फलसंबन्धः कृतः दर्शपूर्णमासशब्देन इति । ( भाष्यं विवृणोति– ) "य एषां समुदितानाम्" इति, येषां ? आग्नेयादीनाम् । एष शब्दो वाचकः इति दर्शपूर्णमासशब्दः इत्यर्थः । तेन एतानि अभिधाय इति दर्शपूर्णमासशब्देन अभिधाय । फलसंबन्धः कृतः इति ।" तदयुक्तम् । स दर्शपूर्णमासशब्दः समुदायवचनः । यदि समुदायवचनः स्यात् तथा सति समुदायो न द्रव्यम्, न देवता, न क्रिया । किं तर्हि ? गुणोऽसौ । तस्य गुणत्वात् यागेन ( क्रियारूपेण ) सामानाधिकरण्यं न स्यात् । अस्ति च सामानाधिकरण्यं 'दर्शपूर्णमासाः यागाः' इति । तस्मात् समुदायिवचनोऽयम् ।

'एकशब्दाभियोगात्' ( बोधं पदम् ) इत्येतदन्यथा वर्ण्यते । भावयेत् । किम् ? स्वर्गम् । केन ? यागेन करणेन दर्शपूर्णमाससंज्ञकेन । स्वर्गः प्रधानभूतः, यागसाधनम् उपादीयमानम् । तस्मात् तेषां इतरेतरयोगो विवक्षितः ।

शेषवद्वा प्रयोजनं प्रतिकर्म विभज्येत । २ ॥

भाष्यम्— नावश्यमेतत्, यत् समुदायशब्देन संयुज्यमाने तत् समुदितानामेव भवतीति । भेदेनापि किंचित् भवति । यथा 'गणाय स्नानम्, गणानुलेपनम्' इति, अनुलेपनादिशेषो गणशब्देन समुदायवचनेनापि संयोज्य उक्तो न समुदायेन संबध्यते । येन सर्वे समुदायिनः । प्रतिपुरुषं हि स्नानादि आवर्तते । अतः शेषवद्वा फलं भिद्येत, पृथक्त्वात् कर्म स्यादिति, अभेदेऽपि अत्र हेतुः समुदायशब्दसंयोगः । तस्मादेतदन्यथा वक्तव्यम्, यथैव विवृतं इति ।

अविधानात्तु नैवं स्यात् । ३ ॥

भाष्यम्— सोऽयमुच्यते । नात्र यागमुद्दिश्य फलं विधीयते, स्वर्गेण यागं कुर्यादिति । किं तर्हि ? फलमुद्दिश्य यागो विधीयते । स्वर्गं यागेन कुर्यादिति । किं कारणम् ? या अत्र विधायिका विभक्तिः यजेतेति, सा यागं श्रुत्या विदधाति, फलं वाक्येन विदध्यात् । न च श्रुत्या संभवति वाक्यार्थो ग्राह्यः, श्रुत्यर्थस्य मुख्यत्वात् । किं पुनः स्यात् यदि फलं विधीयेत ? फले विधीयमाने यागपदार्थोऽनूद्येत । यदि द्वयोर्विधीयमानयोः संबन्धोऽस्ति । अनुवादश्च संनिहितानाम् आग्नेयादीनां स्यात् । तानि च परस्परनिरपेक्षाणि मिथो विभक्तानि उत्पन्नानीति विभागेनैव तैः फलं संबध्येत । अथ पुनर्यागार्थे विधीयमाने, आग्नेयादयो यागाः शब्देन समुदायवचनेन फलनिर्वृत्तौ साधनत्वेन चोद्यन्ते । चोदितानां समुदितानां गुणः संनिधानविशेषात् यो गम्यते, स विवक्षितो भवति । अविवक्षायां कारणाभावात् । यदि यागा विधीयन्ते, दर्शपूर्णमासशब्देन विशेष्टुं न शक्यन्ते । नहि विधीयमानस्य विशेषणं भवति । यत् कारणम् । विशेषणमपि अविधीयमाने न भवति । न च द्वयोर्विधीयमानयोः परस्परसंबन्धो भवति । किं पुनरत्र विशेषणेन कार्यम्, शक्यते ह्यसंयतामाग्नेयादीनां संनिधौ श्रवणात् दर्शपूर्णमासाभ्यां यजेतेति यजतिशब्दः समुदायवचनः इति । किमर्थं तर्हि दर्शपूर्णमासशब्दः ? अनर्थकश्च नित्यानुवादमात्रम् । यथा, 'इन्द्रेण देवेन वृत्रम्' 'इष्ट्वाऽऽतिथ्या संतिष्ठते नानुयाजान् यजति' इति । अथवा, वाक्यार्थस्यैव अत्र विचारे न्याय्यम् । श्रुत्यर्थे हि विधीयमाने दर्शपूर्णमासशब्दोऽनर्थक एव आपद्यते । वाक्यार्थे तु दर्शपूर्णमासशब्दो विशेषणेन

अर्थवान् । यजतिरपि भावनाविधानार्थं प्राप्तोऽपि पुनः श्रूयते । प्रासिश्च दर्शपूर्णमासशब्दस्य यागवचनत्वादिति न किञ्चिदनर्थकम् । तस्मादेष पक्षो ज्यायान् ।

टुप्—अत्र (भाष्य-) ग्रन्थः । विशेषणमपि अविधीयमानं न भवति । न च द्वयोर्विधीयमानयोः परस्परेण संबन्धो भवति इति । अयुक्तमिदं दूषणं अरुणादीनामपि अयं दूषणप्रकारः स्यात् यथा भवता वर्णितम् । (अपि च अनवकाशमिदं चोद्यं इत्याह-) यदीयाश्च अयमेव न्यायः (समनयमायोक्तः) यत् 'भावनया सर्वेषां संबन्धः' इति । (कथं तर्हि यागविशेषणता अत आह-) इतरेतरसंबन्धस्तु (अपेक्षयानीयत्) आर्थः । अत्र (सोऽपि परिहार-) ग्रन्थः किं पुनरत्र विशेषणेन कार्यं यागवा रूपवतामाग्नेयादीनां संनिधौ अरूप 'दर्शपूर्णमासाभ्यां यजेत' इति यजतिशब्दः समुदायवचनः इति तद् (अपि) अयुक्तम् (एव) । यथैव आग्नेयादीनां द्रव्यदेवतेन रूपवत्त्वम्, एवं प्रयाजादीनामपि । तत्र (अपि हि) न कश्चित् क्वचे विशेषो विद्यते, न च संनिधाने । तस्मात् (भवति विशेषणे) प्रकृतत्वाविशेषात् सर्वेषामेव फले विधानं स्यात् । यदपि च (अत्र अपरितोषात् अथवा इत्यादिना परिहारान्तरमुक्तम्, ) दर्शपूर्णमासाभ्यां स्वर्गं इति संबन्ध इति, एतदपि भावार्थाधिकरणे निराकृतं (नहीत्यादिना) यागः एव फले विधीयते । तस्मात् भावना (एव) उभयविशेषणविशिष्टा विधीयते ।

शेषस्य हि परार्थत्वाद् विधानात् प्रतिप्रधानभावः स्यात् । ४ ॥

भाष्यम्— यत्तु दोषवदिति, दोषस्यानुलेपनादेः परार्थेन विधानम्, पुरुषसंस्कारकत्वेन । एवं दृष्टार्थो भवति । अन्यथा, अदृष्टं कल्पयितव्यं स्यात् । तत्र यागः पुरुषप्रधानार्थो भवति । यश्चोपि च संबन्धात् पुरुषान् संस्कर्तुम् । अदृष्टं वा कल्प्यताम्, दृष्टं वेति । दृष्टं संस्कारः कल्पयितुं न्याय्यम् । तस्मात् पुरुषप्रधानार्थो यागः । न च स्पर्शो कार्येण संबध्यते । किं तर्हि ? पुरुषः । तथा प्रकृतसमानमेति । यदा तु द्वावेव पुरुष-लक्षणार्थमुच्येते, न तदा आनयनेन संबध्येते, इति । एवमिहापि न याग कार्येण संबध्यते, किंतु पुरुषा एव कार्येण संबध्यन्ते । तस्मादनुलेपनादि प्रतिप्रधानं भिद्यते ।

शा— दशमेऽध्याये कामानुरूपचिन्तया विकृतिषु अङ्गपरिमाणं चिन्तितम् । अतिदेशविचारश्च सप्तमादिभिः दशमपर्यन्तैः समाप्तः । संप्रति उपदेशातिदेशसाधारण्येन प्रयोगपरिमाणं परिमाणप्रसङ्गात् एकादशे तन्त्रावापचिन्तया चिन्त्यते । तदिह एकप्रयोगवचनचोदितानां एककालानां सहत्वकारिणां बहूनां कर्मणां साधारणाङ्गभाजां अङ्गानुष्ठानं किं तन्त्रेण भवति, उत आवृत्त्या इति चिन्ता लक्षणार्थः । प्रथमं तावत् उपोद्घातत्वेन संहत्यकारित्वं प्रतिपाद्यते । तत्र 'परस्परानपेक्षाणामुत्पन्नानां फलार्थिनाम् । चोद्यमानं फलं तेषामेकैकस्यावधार्यते ॥ तेषां ह्युद्दिश्यमानत्वात् साहित्यं न विवक्षितम् । तस्मात् प्रत्येकमेव स्यादिति प्राप्तेऽभिधीयते ॥ आग्नेयादिकमुद्दिश्य फलं नत्पुपदिश्यते । तत उद्दिश्यमानत्वात् तेषामेकैकशः फलम् ॥ कामिनं तु यदोद्दिश्य कर्मणां चोदना, तदा । तेषां विधीयमानानां सहभावो विवक्षितः ॥'

सोम—सूत्रार्थस्तु- पृथुगुत्पन्नानामपि तेषां हेतोः ऐककर्म्यं एकप्रयोजनत्वं स्यात् । कुतो हेतोः ? एक शब्दाभिसंबन्धेन कामाभिसंयोगे युगपत् प्रयोजनागमनात् इति ।

वि—'षड्यागानां फले स्वर्गः प्रत्येकं तन्त्रतोऽथवा ।, आद्यः पृथक् फलार्थित्वम्, न तद्वत्र फलोक्तितः ॥'

भाट्ट— तदेवं दशभिरध्यायैः प्रकृतौ विकृतौ च अनुष्ठेयपदार्थेषु अवगतेषु, अधुना तेषां प्रयोगविषयगतानुष्ठानक्रमं निरूप्यते । प्रयोगविधिर्हि सामपदानभावनायाः फलार्थमेकेन वाक्येनानुष्ठानं बोधयन् एकवाक्योपादानात् साहित्यं बोधयति । तच्च असति बाधके एकप्रयोगत्वेन कल्प्यते । अत एव अनेकोद्देशेन एकानुष्ठानं तन्त्रम् । अत एव न प्रयाजादिप्रसङ्ग., तत्र प्रयाजादीनां एककरणेऽपि पशुपुरोडाशादीनामुद्देश्यत्वाभावात् । दधिपयोयागयोरपि अवान्तरकार्यस्यैव उद्देश्यस्य अनेकत्वात्प्राप्तिः । अत एव तत् त्रिमातीयविषयं तन्त्रातीयविषयं चेत्यन्यदेतत् । एकजातीयगतिप्रयोगस्यैव

आग्नेयादिभिन्नोद्देशेन समुत्पन्नानुष्ठानात्, विजातीययोर्दधिपयोयागयोरपि तत्त्वाच्च। तदुपोद्बलकत्वेन च दर्शपूर्णमासाद्यनेकप्रधानस्थले किं तद्यागेभ्योऽप्येका फलव्यक्तिः, उत तत्तद्यागेभ्यो भिन्नभिन्नं फलमिति चिन्तनीयम्। फलव्यक्तिभेदे हि तेषामेकप्रयोगविधिपरिग्रहासंभवात् न तन्त्रप्रसंगः। तत्र तत्तदुत्पत्तिवाक्येषु तत्तद्यागानां निरपेक्षसाधनत्वेन विहितत्वात् तदनुवादेन विधीयमानः फलान्वये फलैकत्वः अनुवाद्ययागगतसाहित्यस्य अविवक्षितत्वात् प्रत्येकमेव विज्ञायते। अतश्च तत्तदुत्पत्तिवाक्येभ्य एव तेषां प्रयोगविधिः। 'पौर्णमास्यां पौर्णमास्या यजेत' इत्यादौ च पौर्णमास्येककालमात्रविधिः। तेन सामान्यविहितपूर्वाङ्गादिवाक्यवाक्येन एकत्वादेव तथा इष्टिमयं कार्यम्। इति प्राप्ते, तदुत्पत्तिवाक्येषु उपस्थानामपि फलान्वये फलत्वैकत्वविधानेन विनियोगविधिपरत्वात्, विनियोगविधिविषयतया फलोद्देशेन यागानामेव विधेयत्वावगतेः, तद्विशेषणीभूतस्य साहित्यस्य तन्त्राभिधानावगतस्य विवक्षितत्वात् सर्वेभ्य एकैव फलव्यक्तिः। सर्वेषां तस्यां दण्डचक्रादिवत् समुच्चयेन कारणत्वोपपत्तेः। अतश्च तेषां वक्ष्यमाणविधया एकप्रयोगविधानत्वादपि कल्पनेर्युक्तं तन्त्रत्वम्। किंचैवं 'पौर्णमास्यां पौर्णमास्या' इत्यादिवाक्यवैयर्थ्यापत्त्या युगपत् षड्यागसाध्यफलोच्चारणेऽन्वये प्रमाणाभावेन एकस्यां पौर्णमास्यां यागत्रयकरणानुपपत्तेः। अस्मन्मते तु अस्य एकप्रयोगविधानार्थत्वेन वक्ष्यमाणत्वात् नैयर्थ्यम्। अतः फलवाक्ये एकफलत्वसिद्धि प्रति यागा दण्डचक्रादिवत् समुच्चयावगमात् वक्ष्यमाणरीत्या प्रमाणाभावात् एकप्रयोगोपपत्तेर्युक्तमेव विजातीयदधिपयोयागादीनां तन्त्रत्वम्। सजातीयाज्यभागादीनां च आग्नेयादिभेदेऽपि तन्त्रत्वम्।

मण्डन— 'प्रत्या यजीना फलस्यैकमेव।'

शंकर— 'अङ्गवीर्ये फलं सह।'

● दण्डपर्वणि तु पूर्वदिने पितृयज्ञीयचरुश्रपणादिसकलेतिकर्तव्यताकं श्राद्धं परदिने तु पितृयज्ञः, कालभेदेन तन्त्रन्यायअप्रवृत्तेः। समयमयूखः पृ. ७९.

● तन्त्रप्रसङ्गौ उपदेशातिदेशकारणौ। सोम. ७।१।१.

● तन्त्रविकल्पः यथा 'तन्त्रं वा वैश्वदेविकम्' मातामहश्राद्धे। (याज्ञ. ११२२८)। वाक्. पृ. १६३.

● तन्त्रविपर्यकं अधिकं किञ्चित् 'एकादशाप्यार्थः' इत्यत्र वक्ष्यमाणग्रन्थे द्रष्टव्यम्। चि.

● यदीयतन्त्रमध्ये अर्थान्तरं ■ तन्त्री। यथा सवनीयपशुतन्त्रे सवनीयपुरोडाशा यजन्ति इति सवनीयपशुतन्त्री। चि. १२।२।१२.

## तन्त्रिसमवाये चोदनातः समानानामेकतन्त्र्यमतुल्येषु तु भेदो, विधिप्रक्रमताद्र्थ्यात्, ताद्र्थ्ये श्रुतिकालनिर्देशात्। १२।१।१।१ ॥

'अग्नीषोमीयस्य वपया प्रचर्य अग्नीषोमीयं पशुपुरोडाशमेकादशकपालं निर्वपति' इत्युक्तस्य पशुपुरोडाशस्य अङ्गानि किं पशोः पृथक् कर्तव्यानि, उत पशोरङ्गान्येव तस्यापि उपकुर्वन्ति प्रसङ्गेनेति विचारे पूर्वपक्षमाह। तन्त्रं साधारणो धर्मः। स येषां ते तन्त्रिणः प्रधानानि। तन्त्रिसमवाये तन्त्रिणां प्रधानानां समवाये एककालकर्तृत्वे, चोदनातः समानानां एकचोदनाचोदितानां ऐकतन्त्र्यं एकतन्त्रत्वं भवति। यथा दर्शपूर्णमासयोः। अतुल्येषु तु भिन्नचोदनाचोदितेषु तु भेदः स्यात् तन्त्रस्य। यथा प्रकृते 'अग्नीषोमीयं पशुमालभेत' इति पशुश्चोदितः, 'अग्नीषोमीयस्य वपया प्रचर्य अग्नीषोमीयं पशुपुरोडाशमेकादशकपालं निर्वपति' इति पुरोडाशो विहितः। तस्मादत्र न एकतन्त्रत्वम्। विधिप्रक्रमताद्र्थ्याद् विधिविधानं अङ्गानां प्रयोगः। तस्य प्रक्रमः तदर्था प्रवृत्तिः। विधिप्रक्रमस्य ताद्र्थ्यं विज्ञायते अयं पश्वर्थो विधिप्रक्रमः न पुरोडाशार्थ इति। कथं ताद्र्थ्यं श्रुतिकालनिर्देशात्। श्रुत्या तत्र कालो निर्दिश्यते अग्नीषोमप्रणयनादनन्तरं पशोः कालः, वपाप्रचारात्पूर्वं पुरोडाशस्य कालः इति। अतः तस्य पृथक् तन्त्रं कर्तव्यं इति पूर्वः पक्षः।

गुणकालविकाराच्च तन्त्रभेदः स्यात्। २ ॥

अपिच पाशुकाः प्रयाजानुयाजाः गुणतः कालतश्च विकृताः। पशौ प्रयाजा एकादश पुरोडाशे पञ्च, पशौ अनुयाजा एकादश, ते च पृषदाज्येन इज्यन्ते। पुरोडाशे त्रयः, ते च आज्येन इज्यन्ते इति गुणेन विकारः। पशौ तिष्ठति पाशुका प्रयाजा इज्यन्ते 'तिष्ठन्त पशुं प्रयजन्ति'

इति वचनात्। पुरोडाशे तु आरब्धे हविषि प्रयाजा इज्यन्ते। इति कालेनापि विकारः। एवं पशौ पशुपुरोडाशे च गुणेन कालेन च विकारः। तस्मात् तन्त्रस्य भेदः स्यात्। इति पूर्वपक्षे हेत्वन्तरमुक्तम्।

तन्त्रमध्ये विधानाद् वा मुख्यतन्त्रेण सिद्धिः स्यात्, तन्त्रार्थस्याविशिष्टत्वात्। ३ ॥

पशुत-पुरोडाशयोः तन्त्रभेदः स्यात् इति पूर्वपक्षं सूत्रद्वया प्राप्तं वाशब्देन परिवर्त्यन् सिद्धान्तमाह। मुख्यतन्त्रेण पशुतन्त्रेण पुरोडाशतन्त्रस्य सिद्धिः स्यात्। कुतः? तन्त्रमध्ये विधानात् पाशुकस्य तन्त्रस्य मध्ये पुरोडाशस्य विधानात्। 'अग्नीषोमीयस्य वपया प्रचर्य अग्नीषोमीयं पशुपुरोडाशमेकादशकपालं निर्वपेत्' इति। तथा च तन्त्रार्थस्य अविशिष्टत्वं भवति। तन्त्रस्य अर्थः तन्त्रार्थः अङ्गकृत उपकारः। सोऽयं अविशिष्टः अभिन्नः पशोः पुरोडाशस्य च। पशोरङ्गानि पुरोडाशस्य संनिहितानि। तस्मात् ऐकतन्त्र्यम्।

विकारश्च न भेदः स्यादर्थस्याविकृतत्वात्। ४ ॥

यदुक्तं पूर्वपक्षिणा गुणकालविकाराच्चेत्यादि तत्राह सिद्धान्ती। विकारात् भेदो न स्यात्। अर्थस्य अर्थः अङ्गजनित उपकारः, तस्य अविकृतत्वात् विकृतत्वाभावात्। पशोः पुरोडाशस्य च प्रकृतिवत् क्रियन्ते अङ्गानि। तस्मात् पशौ कृतान्येव पुरोडाशेऽपि उपकुर्वन्ति। गुणकालविकारेऽपि न तन्त्रभेदः इति सिद्धान्तः।

एकेषां चासमाप्तत्वात्। ५ ॥

पुरोडाशोदकशासमापितानामङ्गानां मध्ये केषांचित् अभ्युद्धरणस्य अनीषापनस्य इति एकेषां केषांचित् अङ्गानां पुनः कर्तुमशक्यत्वात् प्रयाजादीनामपि एकतान्त्र्यम्। इति सिद्धान्तस्थयः।

एकाभिपच दर्शनम्। ६ ॥

पशोः पशुपुरोडाशस्य च एकमपि दर्शयति 'मध्येऽशेरपनाहुवीं जुहोति पुरोडाशाहुतीः पशाहुतीश्च' इति। तेन नाप्युदाहरणस्य भेदः। यथा एकाग्नेः एकाप अग्नेः दर्शनं तथा प्रयाजादीनामपि दर्शनं प्रत्येतव्यम्। तस्मात् पशुक तन्त्रं पुरोडाशे प्रसज्यते इति सिद्धान्तः। फे.

● तन्त्रीगानेऽपि गानशब्दः, शारीरी गीतौ च। मा. १०।४।५।८–९.

● तपः अनशनरूपं याजमानं ज्योतिष्टोमे। 'उर्वे ऋत्विज उपवसन्ति' इति वचनात् क्वचित् ऋत्विजामपि। मा. ३।८।३।९–११.

अपश्च फलसिद्धित्वाल्लोकवत्। ३।८।३।९ ॥

ज्योतिष्टोमादौ 'ब्राह्मणो नाश्नाति' 'न्यह नाश्नाति' इति तपः श्रूयते। तत् तपः आध्वर्यवे वेदे उत्पन्नत्वात् समाख्यया आध्वर्यवम्, इति ह सूत्रे पूर्वपक्षे प्राप्ते सिद्धान्तयति। संस्कारवत् तपश्च याजमानमेव। कुतः? फलसिद्धित्वात्। फलस्य सिद्धिर्यस्मात् तत् कायशोषणात्मकानशनरूपं तपः फलसिद्धि, तस्य भावः फलसिद्धित्वं तस्मात्। दुःखभोगादानद्वारा पापनाशनेन फलसाधकत्वात् फलस्य च यजमानगामित्वात्। लोकवत् लोके कृच्छ्रानुष्ठान यथा तद्वत्। लोके यथा दर्पणस्य मालिन्यनिरासेन प्रतिबिम्बदर्शनक्षमता भस्मघर्षणमापद्यते तद्वत् इति वा।

वाक्यशेषश्च तद्वत्। १० ॥

कायशोषणार्थानशनरूपं तपः ज्योतिष्टोमे याजमानं नार्त्विजं इति सिद्धान्ते हेत्वन्तरं सूत्रम्। फलसिद्धित्वरूपो हेतुः यथा तपसो याजमानत्वसाधकः तद्वत् वाक्यशेषश्च तपसो याजमानत्वसाधकः। 'यदा वै पुरुषे न किंचन अन्तर्भवति, यदाऽस्य कृष्णं चक्षुषो नश्यति, अथ मेध्यतम' इति तपोविधेर्वाक्यशेषः तपसो याजमानत्वं गमयति। मेध्यः यागार्हः, मेध्यतमः अतिशयेन यागं कर्तुमर्हः अनशनेन अर्हो भवति यजमानः। तस्मात् याजमानं तपः।

वचनादितरेषां स्यात्। ११ ॥

अनशनरूपं तपः याजमानमेव इति पूर्वेण सूत्रद्वयेन उक्तम्। अत्र तृतीयसूत्रे तु क्वचित् अपवाद उच्यते। 'ऋत्विज उपवसन्ति' इति वचनात् तु यजमानात् इतरेषां ऋत्विजामपि अनशनरूपं तपः स्यात्। वचनाभावे तु याजमानमेव तपः इति सिद्धान्तः।

गुणत्वाच्च वेदेन न व्यवस्था स्यात् । १२ ॥

ज्योतिष्टोमे उक्तं व्रतदानरूपं तपः समाख्यानात् आध्वर्यवं इति यत् पूर्वपक्षिणा उक्तं तन्निरासार्थं तृतीयाधिकरणस्य इदमन्तिमं सूत्रम् । अध्वर्योः परिक्रीतत्वेन गुणत्वात् तपसश्च फलसाधनत्वेन प्रधानभूतयजमानगामित्वात् वेदेन आध्वर्यवेदेन आध्वर्यवसमाख्यया व्यवस्था न स्यात् । तस्मात् तपो नाध्वर्यवं किन्तु याजमानमेव । ( इदं सूत्रं अधिकरणान्तरपरमपि ) । पै.

● 'तपश्च फलसिद्धित्वात्' ३।८।२।९ इत्यधिकरणे ज्योतिष्टोमे 'द्व्यहं नाश्नाति' इत्यादि तपः कायशोषणं कर्म आध्वर्यवं इति पूर्वः पक्षः, याजमानं इति सिद्धान्तः । तपसः प्रतिबन्धनिवृत्तिरूपादृष्टफलार्थत्वे संभवति नापूर्वरूपादृष्टसंस्कारार्थत्वं कल्पनीयमिति । परिमल. ३।४।३३।४४ मस्. ● तपः दोषनिर्घातं करोति । एवं हि दुःखदानात् अधर्मस्य कार्यविरोधिनः तपसा अपनयनम् । भा. ३।८।३।९. ● तपः मानिकुत्सप्रतिबन्धकपापनाशकं कर्म । वि. ३।८।४. ● तपः संस्कारवत् यजमानस्य फलप्रतिग्रहणयोग्यत्वं करोति । भा. ३।८।२।९.

■ तपोऽधिकरणम् । उपवासाध्यायः । उपवासरूपं तपो याजमानं नार्त्विजम् ॥

तपश्च फलसिद्धित्वाल्लोकवत् । ३।८।३।९ ॥

भाष्यम्— तपः श्रूयते– 'द्व्यहं नाश्नाति, त्र्यहं नाश्नाति' इति । तत्र संदेहः किमार्त्विजं तपः, याजमानमिति । किं प्राप्तम् ? समाख्यानात् आर्त्विजं तपः इति प्राप्तम् । एवं प्राप्ते, ब्रूमः । याजमानं तपः इति । कुतः ? फलसिद्धित्वात् । फलसिद्ध्यर्थं तपः । तत्र सिद्धस्य याजमानं फलं सिध्यति । कथमेतदवगम्यते ? दुःखं हि तपः । दुःखं चाधर्मफलम् । अधर्मो धर्मफलस्य प्रतिबन्धको भवति । अश्रेयस्करो हि सः । तस्मिन् सति न श्रेयो भवितुमर्हति । तस्मात् सोऽपनेतव्यः । फलोपभोगेन च विनाश्येते धर्माधर्मौ । तस्मात् दुःखफलोपभोगाय अधर्मः भूयते । एतेन दुःखं तपसा दयितव्यमिदं तदिति एषं इत्यर्थं भवति, नाहं कस्यचिदन्यम् । तेन फलोपभोगेन क्षीणे अधर्मे अप्रतिबद्धो धर्मः फलं दास्यतीति । फलसिद्धिश्च यजमानस्य कर्तव्या, नर्त्विजाम् । तस्माद्याजमानं तप इति ।

बा— तपसो दुःखकरत्वात् कर्त्रा गुणभूतः समाख्यया नियम्यते इत्याशङ्कां निवर्तयति । यस्मात् इदमपि संस्कारवत् फलप्रतिग्रहणयोग्यत्वं करोति । यजमानस्य च योग्यत्वं अप्रतिबद्धं कर्तव्यं न ऋत्विजः, तस्मात् याजमानम् । योग्यता च सर्वत्रैव द्विप्रकारा, दोषापनयनेन गुणान्तरोपजननेन वा भवति । तत्र संस्काराः गुणान्तरं उपजनयन्ति, तपश्च दोषनिर्घातं करोति । यो हि ज्योतिष्टोमादि करोति, तस्य एतस्मिन् अस्मिन् अन्यस्मिन् वा जन्मनि विहिताकरणप्रतिषिद्धसेवानिमित्ता दोषाः सन्ति । ते च अनपनीताः क्रतुविपरीतस्वफलोपभोगदानात् अत्यन्तातिगुणस्यापि क्रतोः फलं प्रतिबध्नन्ति । सोऽयं क्रतुफलप्रतिबन्धहेतुं निवर्तयितुमपेक्षते । तत्र प्रकरणश्रुतस्यैव तपसः अवश्यं क्रतुं प्रति कथंचित् उपकारकत्वं कल्पयितव्यम् । तत्र अपेक्षितनिर्वर्तनयोग्यत्वैः दोषप्रतिबन्धकत्वमेव न्याय्यम् । एवं हि दुःखदानात् अधर्मस्य कार्यविरोधिनः तपसा अपनयनम् । यथैव प्रायश्चित्ताचरणात् दुःखेन अल्पेनापि सता महते दुःखान्तराय प्रवृत्तः सन् अधर्मः विनाश्यते इति वचनात् गम्यते, तथैवात्र द्रष्टव्यम् । यानि तु अकर्माङ्गभूतान्येव तपांसि श्रूयन्ते फलसंबद्धानि वा, तेषां फलसाधनस्य अपरस्य अभावात् प्रतिबन्धनिराकरणापेक्षा नास्ति, इति स्वार्थमेव कल्प्यते । यानि तु प्रायश्चित्तरूपाणि, तेषां दोषापहारमात्रमेव फलम्, इति न सर्वत्र एकरूपत्वं अध्यवसातव्यम् ।

वाक्यशेषश्च तद्वत् । १० ॥

भाष्यम्— एवमेव अयं वाक्यशेषोऽपि द्योतयति 'यदा वै पुरुषे न किंचन अन्तर्भवति, यदा अस्य कृष्णं चक्षुषो नश्यति, अथ मेध्यतमः' इति । 'यदा अनशनः, तदा मेधार्हः' इति । मेधश्च यज्ञः । यज्ञश्च त्यागः । त्यागं कर्तुमर्हः तपसा क्रियते, इति वाक्यशेषो भवति । त्यागी च यजमानः । तस्मात् याजमानं तपः इति ।

बा— मेधार्हत्ववाक्यशेषस्य अमुमेवार्थं द्योतयति ।

१।३।९. * यत्र पयसि दध्यानयनं आमिक्षा प्रयोजयति, न वाजिनं चातुर्मास्येषु वैश्वदेवे। भा. ४।१।९।२२–२४.

✽ तप्तपरशुग्रहणन्यायः। तप्तं परशुं अश्वत्थपत्रैः सप्तभिःसप्तभिः संहिताभ्यां हस्ताभ्यां उद्धृत्य सप्तपदानि गत्वा त्यजेत्। दाहस्फोटाद्यभावे शुद्धिः अन्यथा बन्धः इति व्यवहारे दिव्यविशेषः। तदिदं तप्तपरशुग्रहणं छान्दोग्योपनिषदि षष्ठाध्याये षोडशे खण्डे पठितम्। के.

✽ तप्तभ्राष्ट्रतिलन्यायः। तद्यथा तप्ते भ्राष्ट्रे तिलाः प्रक्षिप्ताः मुहूर्तमपि नावतिष्ठन्ते, एवं प्रकृत्यन्तरेऽपि। अत्र न्यायः 'स्थानेऽन्तरतमः' पा० १।१।५० इति सूत्रभाष्ये स्पष्टः। साहस्री. ५९८.

✽ तप्तमाषोद्धरणन्यायः। दिव्यविशेषोऽयम्। तथाहि 'सौवर्णे राजते वाऽपि ताम्रे वा षोडशाङ्गुलम्। चतुरङ्गुलखातं तु मृन्मयं वाऽथ मण्डलम्॥ ( पञ्चल पात्रम् )। पूरयेत् घृततैलाभ्यां विंशत्या तु पलैस्तु तत्। सुवर्णमाषकं तस्मिन् सुतप्ते निक्षिपेत् ततः॥ अङ्गुष्ठाङ्गुलियोगेन उद्धरेत् तप्तमाषकम्। कराग्रं यो न धुनुयाद् विस्फोटो वा न जायते। शुद्धो भवति धर्मेण निर्विकारकराङ्गुलिः॥' उद्धरेत् इति पाणावुल्लेखनमात्रम्। मिताक्षरा २।११३.

* तम. द्रव्यं इति मीमांसकाः। मणि. पृ. २१.

✽ तमोदीपन्यायः। तथाहि 'अज्ञानं ज्ञानमिच्छेद्यो मानेनात्यन्तमूढधीः। स तु नूनं तमः पश्येद्दीपेनोत्तमतेजसा॥' इति वेदान्तसिद्धान्तमुक्तावली। साहस्री. ६६१

✽ तमःप्रकाशन्यायः। भावानुपमर्दोपमर्दकभावे स्पष्टः। प्रकाशः तमसः उपमर्दकः। साहस्री. ४०१.

* तमोवादः न किल अन्धकारो नाम तत्त्वतोऽस्ति, तेजसाभावो वा। तथाहि, तद् द्रव्यादीनामन्यतममेव भवेत्। तैरेव विश्वस्य संग्रहात्। तत्र द्रव्यत्वे तमः पृथिव्यादीनामन्यतममन्यद् वा? न तावदन्यतमम्। क्षितिसलिलयोस्तु चतुर्दशगुणेषु, तेजसि च एकादशगुणे, मातरिश्वनि च नवगुणे, मनसि च अष्टगुणे, नभसि च षड्गुणे दिक्कालयोश्च पञ्चगुणयोरविनाशिनोः अनन्तर्भावात्। अन्तर्भावे वा तावद्गुणत्वप्रसङ्गान्निर्गुणत्वापत्तेश्च। नापि द्रव्यान्तरम्, निर्गुणस्य तस्यानुपपत्तेः। नीलोत्पलपलाशश्यामलं उपलभ्यमानं महत् तमो न निर्गुणम्। अतो द्रव्यान्तरमिति चेत्? न। कृष्णरूपस्य गन्धादेः कार्यद्रव्यवर्तिनः महाभूतस्य तदभावे अभावात्। तथा च निखिलगुणविरहिणो न द्रव्यत्वम्। गुणकर्मसामान्यभावोऽपि अनाश्रयस्य न संभवति। न च पृथिव्यादिद्रव्यमस्याश्रयः, तदाश्रयत्वे तद्गुणानां तत्सहचरितानां उपलब्धिप्रसङ्गात्। न चास्य तमस उपलब्धिरुपपद्यते। उपलम्भकाभावात्। न चेन्द्रियमात्रमेव तमो लोचनं गोचरयति। तदभावे तदनुपलब्धिप्रसङ्गात्। अस्ति च निमीलितलोचनस्यापि 'तमः पश्यामि' इत्यभिमानः। ज्ञानादीनां गोचरस्तमः इति स्वीयः। मनोऽपि च आन्तरगोचरनियतं बहिरवतरति इन्द्रियान्तरापेक्षं दुर्बलं एव। न च कारणाभावे कार्यमुत्पत्तुमर्हति। तस्य आकस्मिकत्वेन कादाचित्कत्वानुपपत्तेः। तस्मात् तमो नाम किंचिदपि वस्तु। नास्ति तत्स्थानम्। अत एव तमस्तमालनीलमुररम्यामहे इत्यभिमानो लौकिकानां आलोकादर्शने। सोऽयं विभ्रमः। एवमभावदर्शने तद्व्यवहारश्च विभ्रम एवेति भावः।

प्रतीयते तावत्तमः तमालमालासदृशामम्। न चाप्रमितावेव प्रमितिविभ्रमसंभवः। न चास्य बाधकमस्ति प्रमाणम्। न च तदभावे प्रतीयमानमपह्नवमर्हति, अतिप्रसङ्गात्। न च तमसि प्रमाणानुपलब्धेः प्रमा प्रथमा नाप्यपह्नोतुमुचिता, रूपाद्युपलब्धेरपि तत्प्रसङ्गात्। नहि तत्प्रमाणमिन्द्रियाद्युपलभ्यते। रूपाद्युपलब्धिलिङ्गकमनुमानं अस्योपलब्धिरिति चेत्? न, इहापि समानत्वात्। ननु चक्षुरादिगोचरत्वमस्योक्तम्। यदि परमस्तु तमसि समस्तजनसाक्षात्कारास्पदे प्रमितिकार्यदर्शनात् प्रमाणान्तरमनुपलब्धपूर्वमपि, न पुनस्तस्य अत्यन्तोऽनुपलम्भात् स्पष्टदृष्टकार्यविपर्ययो युज्यते। अस्तु वा चक्षुरेवास्य कारणम्। न च निमीलिताक्षस्य पटलपटो वा तत्रास्ति, अपि तु पिहितम्। कथं तर्हि पिहिते घटादाविव चाक्षे तमसि प्रवर्तते इति चेत्? मा प्रवर्तिष्ट। नच्छिद्रम्। परिच्छेत्स्यति हि तच्छाया पक्ष्मणोः पटस्य वा अत्यासन्नामपि विभ्रान्तौ पटलपक्ष्मणी सिद्धवत्तौ तमसेऽयं चक्षु,

न तु पटलावरणी। आलोकाप्यायितं तत् पृथिव्यादिग्रहे प्रभवति, न तु तच्छायया तद्विरोधिन्या केवलस्येव तत्र सामर्थ्यात्। कार्यदर्शनोन्नेयत्वात्तस्य सूक्ष्ममपि चेपीकतूलादि चक्षुराच्छादकमात्रं अनुभूयमानमतिमहत् अनवधि चकास्ति तथेयमपि। न च अन्धानामिव गोलावयववत् गोलकाविधाने तत्कार्योपलम्भसंभवः। तद्भावे वा वस्तुपरम्भकान्तरकल्पना इत्युक्तम्। कृतमत्यनर्दन्यादीना तमः। ननु द्रव्यमेव, कालिमगुणशालित्वात् रूपवत्त्वाच्च। तथाहि, कालिमैव अस्य रूपमुपलभ्यते। अतेजसोरिव श्वेतिमा। एवं संख्या अपि एकत्वादिका परिमाणम्, तद् चतुर्विधम्। पृथिव्याद्यणूनामिव तमोऽणूनामप्यनुमानात्। पृथक्त्वसंयोगविभागपरत्वापरत्वसंस्काराश्च पञ्चविधमपि कर्म अभ्युपगमीक्ते यथाह भगवान् वार्तिककारः। (कुमारिलभट्टाचार्यात् अन्ये) 'ननु नाभावमात्रस्य तमस्त्वं वृद्धसंमतम्। छायायाः कार्ष्ण्यमित्येवं पुराणे भूगुणश्रुतेः॥' भूगुणस्य कार्ष्ण्यस्य छायायां द्रव्यान्तरश्रुतेः इत्यर्थः। 'दूरासन्नप्रदीपादिदेहचेष्टाऽनुसारिणी। आसन्नदूरदीपादिमहदल्पचलाऽचला॥ देहानुवर्तिनी छाया न वस्तुत्वादिना भवेत्॥' इति। न च पृथिव्यादीनामन्यतमम्। न तावत् कृष्णरूपस्य तमसः तोयादिभावसंभवः। तोयतेजसोः सितत्वात्, एवं पवनादीनां चारूपत्वात्। न च परोपधानात् कालिन्दीसलिलस्येव तमसः कालिमेति साम्प्रतम्। अनुपहितस्य कदाचिदपि स्वाभाविकरूपान्तरशालिनोऽनुपलब्धेः, क्षेत्रसमुद्धृतस्यैव कालिन्दीवारिणः स्वभावस्वच्छधवलस्य। नापि पार्थिवं तमः। तद्गुणानां गन्धादीनामभावात्। ननु तथैव गन्धादिप्रयासं कृष्णमपि रूपं तन्निवृत्तौ असदित्युक्तम्। तर्हि पवने अनुष्णाशीतस्पर्शः असन्नेव? गन्धादिप्रयासस्य तस्य पृथिव्यामुपलब्धेः, पवने च तेजसमभावात्, पाकजस्य स्पर्शस्य गन्धादिव्याप्तत्वम्। अयं तु अपाकजः स्पर्शो वायवीयः इति चेन्न, इहापि साम्यात्। नहि तमसोऽपि कालिमा पाकजः। प्रत्यक्षं चोभयत्रापि समानम्। तमःपरमाणवश्च पार्थिवादिपरमाणव इव द्व्यणुकादिक्रमेण महान्तं तमोऽवयविनं पार्थिवमिवारभन्ते। तच्च रूपविशेषे सति अनेकद्रव्यत्वात् महत्त्वाद्वा चाक्षुषमिति न तदुत्पत्त्यनवक्लृप्तिः। न च तस्य दिवारम्भासंभवः, शाश्वतिकविरोधे सति तेजसि, न जातु स्पर्शवद्वेगवन्मुद्गरादिघाते परिपन्थिनि कुम्भारम्भाय भवन्ति मृदवयवाः बिभ्रति वा कुम्भमारब्धमिति। अत एव हि दिवाऽपि निरस्ततेजसि गिरिगुहायामारभन्ते एव।

स्यादेतत्। न तामसाः परमाणवोऽवयविनमारभन्ते, स्पर्शविरहात् मनोव्योमवत्। न च आरम्भे रूपवत्त्वं प्रयोजकम्, अरूपाणामपि पवनपरमाणूनां स्पर्शवद्द्रव्यारम्भदर्शनात् अस्पर्शानां च आत्ममनसां तदभावात्। तत् किमत्र भवतां तमःपरमाणवः सन्ति न वा? सन्ति चेत् कथं तदवयविनामभावः? तद्भावलक्षणत्वात् परमाणुभावस्य। असत्त्वे वा तमःपरमाणूनां कथं न हेतोराश्रयासिद्धिः? हेतोः स्पर्शस्य असद्रूपत्वात्। असदाश्रयत्वमदोष इति चेन्न। तुच्छस्य अहेतुत्वात् कल्पनाऽऽरोपितधर्माधिकस्य च वस्तुनः असाधकत्वात्। न जातु समारोपितधूमभावा मिहिका कृशानुसाधनं भवति। प्रामाणिकस्य तु अभावस्य भावानिरूपणप्रकारेण प्रयोगात्। तमःपरमाणुषु अवश्यं आश्रयासिद्धतया भवत्यसिद्धिः, न तु स्वतः अप्रसिद्धस्य सत्तामपि परप्रसिद्धौ साधनाङ्गत्वम्, स्वयमप्रतीतस्य परप्रत्यायनानर्हत्वात्। यथोक्तम् 'योऽपि तावत्पराऽसिद्धः स्वयंसिद्धोऽभिधीयते। भवेत्तत्र प्रतीकारः स्वतोऽसिद्धे तु का क्रिया॥' इति। अपि च अस्पर्शत्वं द्रव्यानारम्भकत्वेन न स्वाभाविकः संबन्धो मनसः शक्यो निश्चेतुम्, तेऽर्थस्य उपाधेर्विधानात्, धर्माधर्मनिमित्तत्वाद् विश्वस्य पैनिर्माणस्य। साक्षात् पारम्पर्येण च सर्वं कार्यजातं भोगसाधनं सत् तन्निर्माणं स्यात्। न च मनोऽवयविनः शरीरतया विषयतया वा भोगसाधनता संभवति। इन्द्रियानधिष्ठानतया देहभावाऽभावात् अपार्थिवस्य च तद्भावानभ्युपगमात्। विषयभावस्तु अननुभूयमानत्वात् अनुपपन्नः। इन्द्रियभावस्तु अणुत्व एव मनसः। तमसस्तु रूपवतो विषयभावेन भवति भोगसाधनत्वमिति न वैषम्यम्। परममहता पुनः व्योमअसमवायिकारणसंयोगविरहात् अधिकपरिमाणकार्यद्रव्यानुपपत्तेश्च कारणसमानन्यूनपरिमाणकार्यादर्शनाच आधिक्या-

योगाच परममहत्त्वस्याघाताच न स्वसमवायिद्रव्यारम्भकत्वमिति सोऽप्यनुपाधिः । न चोपाधिकः संबन्धः अनुमानाङ्गम् । मा भूद् व्याप्यादर्शनाद् अवयुद्धवनतद्भावस्य अनुमाने शिष्यस्य । न च अनन्यथासिद्धे नीलरूपप्रकारानुभवे परिपन्थिनि स्फुरति प्रत्यक्षे, अचिरविषयं अनुमानमुदेतुमुत्सहते । मा भूत् अनुष्णत्वं तैजसो द्रव्यत्वात् पृथिव्यादिवत् इत्यनुमानम् । द्रव्यान्तरस्य च द्रव्यान्तराश्रयत्वं दृष्टम्, तथा आकरजस्य तेजसः सुवर्णादेः पार्थिवद्रव्योपष्टम्भः, अन्यथापतनादि न भवेत् गुरुत्वाभावात् । यथा च अभिजातमहानीलादिमणिसमाश्रयं तेजः । न च तद्वदेतत् भ्रमणवतैव इति सांप्रतम् । तेजसस्तदाश्रयस्यान्ततः पद्मरागादिगतस्यापि कदाचिन्मात्रया रूपप्रकाशकत्वापत्तेः, तमसस्तु तद्विपरीतत्वात् । तस्मात्तमो द्रव्यान्तरमपि पृथिव्याद्यनुमिमासति, तेजसश्च विनङ्क्ष्यति । तदपगमे च पृथिव्यादिभ्यः पुनः प्रभविष्यति चतुष्कात् । अपवरकप्रविष्टस्य कतिपयालोकावयवसंसर्गविरहेऽपि तमसि सान्द्रताऽऽभासो भ्रमः, इन्द्रियोपहतेः कान्तपरिपाकवशात् । तदपहतिविगमे तु यथावत् पश्यति अपवरकवर्तिनः पदार्थान्, अतएव च तत्र छायाम् । सा च नान्धा पिदधे पदार्थान्, न तेजसा विरोधिता । न चालोकाभावमात्रं तम इति सांप्रतम्, तस्य नीलत्वानुपपत्तेः आमूलानवलोकितालोकस्य च तमःप्रत्ययानुपपत्तिप्रसङ्गात् । तथा च परिस्पन्दादयस्तद्दर्शिनः अवगम्यमानाः कथंचित् क्लेशेन व्याख्यातुमर्हन्ति । तस्मात् प्रत्यक्षसिद्ध अवति बाधकं द्रव्यान्तरमेकादशं तमो नवानुमं चेति सिद्धम् । 'आदावौ दर्शनं छाया न चाभावोऽस्मृतौ गतेः । रूपादुपायसद्भावाद् द्रव्यं द्रव्यान्तरानुगम् ॥' इति संग्रहश्लोक. । अलं वा नैयायिकैर्विवादेन । आलोकाभाव एव तमः । कणिका. पृ. ७३-७९.

※ तरक्षडाकिनीन्यायः । तरक्षुः भाषाया 'तरस' इति व्याघ्रविशेषे डाकिनीवाहने प्रसिद्धः । तरक्षे डाकिनी तरक्षडाकिनी । डाकिनी तु श्रीमहाकालीगणविशेषः । यथा तरक्षस्था डाकिनी भयङ्कररूपिणी नानाविधभयंकरकर्माणि करोतीति प्रसिद्धम्, तथा महतोऽपि योग्यमिति । साहस्री. ७८९.

※ तरतमभावापन्नं फलं तरतमभावापन्नसाधनायत्तमिति न्यायः । यथा विचारपटुत्वेन यावद्यावत् विवेकदार्ढ्यं भवति तावत्तावत् प्रमयैधिर्यं जायते इति भावः । साहस्री. ३८६.

* तरसमयाः सवनीयपुरोडाशा एव, न तु सर्वे पुरोडाशाः वाजपेयामयने । भा. ३।८।२३।४२-४४.

※ तरुबीजन्यायः । तरोर्बीजं बीजाच्च अन्यस्तरुः इति जन्यजनकभावः सदातनः प्रसिद्धः, तद्वदन्यदपि । के.

* तर्कः क्वचित् व्याप्तिग्रहे व्यभिचारशङ्कानिवर्तकः । व्याप्यारोपेण व्यापकारोपद्वारा अनिष्टप्रसञ्जनं तर्कः । तथाहि, वह्निविरहेऽपि धूमः स्यात् इत्याशङ्का कार्यकारणभावग्रहप्रधानाद्विवर्तते । तथापि 'अहेतुको भवतु' इत्याशङ्का तु 'धूमार्थं वह्निनियमत उपादाने प्रवृत्तिर्न स्यात्' इति व्याघातेन निरसनीया । यत्र स्वत एव शङ्का नावतरति, न तत्र तर्कापेक्षा इति दिक् । मणि. पृ. २४. * तर्कः । विधिवाक्यैरैकार्थ्यसूचो बाधकतर्कः क्वचित् । 'व्रीहीनवहन्ति' 'तण्डुलान् पिनष्टि' अत्र अवघाततपेषणे अपूर्वजनके, विहितधर्मत्वात् यज्ञादिवादित्येवम् । अनुमाने गुणविशेषचूर्णत्वयोर्दृष्टप्रयोजनयोः लोकसिद्धत्वेन तादर्थ्ये अवघातपेषणयोर्विधिर्व्यर्थः स्यात् इति विपक्षे तर्कः । पूर्वपक्षोऽयम् । वि. २।१।३.

※ तर्काप्रतिष्ठानात् इति न्यायः । 'नाप्रतिज्ञितवर्णेन तर्केणार्थस्य निश्चयः' इति न्यायार्थः । यथा हि पुराणेषु पञ्चाशत्कोटियोजनं भूगोलविस्तारं इत्यादि यदुक्तम्, तत् प्रकृतन्यायेन समाधेयं इति शंभनाथमतमीमांसायां बोध्यमिति । (तर्काप्रतिष्ठानात् इति तु २।१।११ ब्रह्मसूत्रम् इति बोध्यम्) । इदं च भीष्मपर्वणि ५।१२ टीकायाम् । साहस्री ७८५

* तर्कपादः नाम प्रथमाध्यायस्य प्रथमः पादः पूर्वमीमांसायाम् । उत्तरमीमांसायां तु द्वितीयाध्यायस्य द्वितीयः पादः । के. * तर्कपादे त्रिवर्गवादमन्त्रनामधेयात्मकवेदस्य सामान्यतः प्रामाण्यम्, तेषां च विनियोगस्य प्रामाण्यं चार्चितम् । कु. १।३।१।१.

* तलवकारादिशाखाभेदाः सामवेदे । तेषु गीतिहेतवः अक्षरविकारादयो विलक्षणाः । ते चानुष्ठाने विकल्प्यन्ते, न तु समुच्चीयन्ते । वि. १।२।७.

* तवैप्रत्ययः कृत्यार्थः विधिः । यथा 'अन्वेतवै' अन्वेतव्यं इत्यर्थे । बाल. पृ. ४०.

* तव्यः प्रत्ययः शब्दभावनावाचकः तत्त्वेन । चि. २।१।१ वर्णके ९. * तव्यः विधायी श्रुतिः । या. ३।१।७।१३ पृ. ७००.

* तव्यान् भोज्यान् पदार्थान् । इति सोमेश्वरः । 'पृथीपादिस्थाणमानाय तव्यान्' । बाल. पृ. ५८.

☒ तस्करस्य पुरस्तात्कष्टे सुवर्णमुपेत्य सर्पाङ्गो-द्घाटनं प्रतिभातीति न्याय. । स्पष्टः । अयं स० ६० सं० जैमिनीये विस्तृतः । साहस्री. ७२२.

* ताण्ड्यके सर्वशाखागतज्योतिष्टोमानुवादेन प्रागवविधानात् नहि तत्रावरुणापि ज्योतिष्टोमस्यो-पस्थितिर्यस्य नियमः स्यात् । भा. २।४।१।२९.

* तात्पर्यं च शब्दगत एव धर्मविशेषः । तद्-ग्राहकश्च अध्ययनविध्यादिरेव । भाट्ट. १।१।७. * तात्पर्यं तु तत्प्रतीतीच्छया वक्तुः अनुसंहितत्वम् । तत्र पदार्थे-तात्पर्यनिश्चयः संसर्गतात्पर्यनिश्चयश्च तादृशशाब्दबोधे हेतुः संदेहे शाब्दबोधानुदयात्, तात्पर्यभ्रमे च आहार्य-शाब्दबोधोदयात् । शुकवाक्ये वेदवाक्ये च ईश्वरतात्पर्य-ग्रहेण शाब्दबोधः अध्यापकतात्पर्यग्रहेण वा । न च प्रकरणादिकमेव तत्तच्छाब्दबोधे हेतुः, न तु तात्पर्यज्ञानं इति वाच्यम् । अननुगतप्रकरणादिज्ञानानां हेतुत्वे गौरवात् । केचित्तु तात्पर्यज्ञानं नानार्थकनानार्थ-स्थलीयशाब्दे हेतुः, न [illegible] शाब्दबोधमात्रे गौरवात् । एवं च सैन्धवपदजन्यनानार्थोपस्थितिकालीनतत्पदजन्यलवणा-दिशाब्दबोधे तात्पर्यज्ञानं कारणम् । न चैवं गौरवम्, एवंशब्दे तत्तच्छब्दत्वावच्छिन्ने तत्तत्तात्पर्यज्ञानानां अनन्तकार्यकारणभावापेक्षया लघुत्वात् इत्याहुः । परे तु तात्पर्यज्ञानस्य न हेतुत्वं संभवति तज्ज्ञानारम्भ-कात् । आवश्यकप्रकरणसमभिव्याहारादिना तज्ज्ञानोद्भवे 'तद्धेतोः' इतिन्यायेन ( तद्धेतोरेव अस्तु हेतुत्वम्, मध्ये किं तेन ) तस्य वैयर्थ्यात् । अतो नैयायिकानां शाब्दबोधे लौकिक-लाक्षणिक-नानार्थस्थलीयशाब्दबोधे च न तात्पर्यज्ञानं हेतुः इत्याहुः । मणि. पृ. ६१. * तात्पर्येणा-भिधानं नाम प्राधान्येनाभिधानम्, न शेषित्वेन । चा. ३।४।४।१९ पृ. १०२. * तात्पर्यात् लक्षणा-सिद्धिः । शा. १।२।१ पृ. ६. * तात्पर्ये हि श्रुतिः, न श्रुतेस्तात्पर्यम् । गौणत्वाविशेषेऽपि ( वारुण्या निष्कासेन तुषैश्चावभृथं चरन्ति इत्यत्र अवभृथपदे ) तात्पर्यात् इति कर्मान्तरे गौणत्वं संभवति । सोम. ७।३।४. * तात्पर्यावधारणं विना लाक्षणिकशब्दप्रयोगः । सु. पृ. ७३७. * तात्पर्यावधारणस्य व्यापारस्य सर्वत्र भावात् । सु. पृ. १०४५.

☒ तात्स्थ्यात् ताच्छब्द्यं इति न्यायः । अयं 'पुंयोगादाख्यायाम्' (पा० ४।१।४८) इतिसूत्रमहाभाष्ये अभिहितः । तद्यथा 'मञ्चाः हसन्ति, गिरिर्दह्यते' इति । ( यस्मिन् तिष्ठति तत्स्थः, तस्य भावः तात्स्थ्यम् । [illegible] शब्दः यस्य बोधकः सः तच्छब्दः, तस्य भावः ताच्छ-ब्द्यम् । मञ्चस्थाः पुरुषाः मञ्चशब्देन बोध्यन्ते । गिरि-शब्देन गिरिस्था वृक्षा बोध्यन्ते ) । साहस्री. ४८४.

* तादर्थ्ये किंचित् कुर्वतः, नान्यथा । ( तस्मै इति तदर्थः, तस्य भावः तादर्थ्यम् । यः यस्य किंचिदु-पकरोति, स अर्थः तत्र भवतु शक्यते इति । ) । कु. पृ २११ * तादर्थ्ये तदधीनविधिविषयत्वम् । सु. पृ. १३७१. * तादर्थ्ये चतुर्थी 'धनलाभाय राजसेवा' 'कुण्डलाय हिरण्यम्' इत्यादौ । तथा च फलं गम्यते । ( कुं॰ गवादिरक्षस्य यवभादेः अवयवस्य प्राप्त्यै कुटुम्बस्य उपयुज्यते इत्यर्थः ) । वि. २।२।२. * तादर्थ्ये सति, यथा संभवति तथा कार्यं कल्पनीयम् । कुतूनी. [illegible] ११३.

* तादर्थ्योपकारयोर्भेदोऽस्ति अस्ति ? पादमस्ति । 'अनुकुर्वन्नपीष्टो हि तादर्थ्यव्यपदेशभाक् । उपकुर्वन्नपि त्वन्यस्तादर्थ्ये इति नोच्यते ॥' उद्देशमात्रेण तावत् तादर्थ्य-सिद्धिः । सा चोपकार्योपकारकयोस्तुल्या तथापि मशकार्थो धूमः इत्यपकारिण्यपि प्रयुज्यते । तयोरकुर्वत्यपि प्रसक्ति-व्यपदेशकयोर्नं तादर्थ्येन व्यवह्रियते । नहि कश्चिदपि शालिकुल्यास्थमुदकं पिबन् मदर्थमेताः प्रणीता इत्यध्य-वस्यति । तस्मादन्यत् तादर्थ्यं अन्यश्चोपकार इति

विज्ञायते। या. ३।१।२।२ पृ. ६५७–५८, * तादर्थ्य-प्रतिपादनरूपेण शेषस्य विनियोजकानि श्रुत्यादीन्येव इति तद्विवेकार्थं लक्षणमारभ्यम्। ३।१।२।२ पृ. ६५८.

■ ताद्धर्म्यात्ताच्छब्द्यमिति न्यायः। तद्यथा-जटिनं यान्तं ब्रह्मदत्त इत्याह। ब्रह्मदत्ते यानि कार्याणि, जटिन्यपि तानि क्रियन्ते अतो जटी ब्रह्मदत्तः इत्युच्यते इति। साहस्री. ४८५.

* तान' एकश्रुतिः प्रचयः इति पर्यायाः। उदात्ता-दिभ्यो भिन्न एवायं स्वरः। चि. ९।२।८ वर्णके ३. * तानस्वरेण जपन्यूङ्खसामवर्जं यज्ञकर्मणि प्रयोगः। तानः एकश्रुतिः। भा. ९।२।८।२९–३० वर्णके ३.

* तामरसशब्दस्य कमलार्थेषु काश्मीरेषु प्रसिद्धः। म्लेच्छेषु तु 'पद्मं' इत्यर्थः प्रसिद्धः, स ग्राह्यः। आर्यप्रसिद्धिविरोधस्य अदृष्टत्वेन ईदृशे विषये म्लेच्छ-प्रसिद्धेरपि आदरणीयत्वात्। चि. १।३।६.

* ताम्बूलादनम्। सर्ववर्णेषु परस्परस्पृष्टताम्बूलादन उदीच्यानां दाक्षिणात्यानां च अनाचारः। वा १।३।३।७ पृ. २०४.

* तार्किका. ज्ञानस्य प्रामाण्यमप्रामाण्यं च परतः ज्ञायते इति वदन्ति। वैद्यनाथः १।१।२।२ पृ. १४.

* तार्तीयसवनिकपुरोडाशेषु पयोभेदेन हविष्कृ-दाह्वानाभाव (ज्योतिष्टोमे)। भा. १२।२।४।१२–१३.

* तार्प्यं वासः घृताक्तः कम्बल.। तम्महामते यजमानः परिधत्ते, अहत च वासो द्वितीय परिधत्ते। चि. १०।४।८। घृताक्तं वास' तार्प्यं इति। सोम. १०। ४।७. * तार्प्यादिभिः उपदिष्टे. यद महाव्रते प्रकृता-हतवाससः समुच्चय.। भा. १०।४।७।१३–१५.

■ तालसर्पन्याय'। यथा सर्पदष्टसमये ऊर्ध्व-गुरैस्तालफलप्राप्तिः, सर्पोऽपि विदारणात्तन्मोह्यं सर्पस्य स्तनाद्यादेति प्रसिद्धमिति तथा प्रकृतेऽपि। साहस्री. ११२.

* तिङ्। सुप्तिङ्भ्यां शक्तिमद्द्रव्यकारकपक्षेऽपि भावस्य निष्कृष्य शक्तिमात्रं अभिधेयत्वेष्टव्यम्। वा ३।४।४।१३ पृ १३४. * तिङन्त एव एकपदरूपा विनियोक्त्री श्रुतिः, उपश्लेषलक्षणा नाम। बाल. पृ.४१.

* तिङन्तेन क्रिया उच्यते। भा. २।२।५।१४. * तिङ्निपातोभयाभिहितकर्तृत्वकर्मत्वयोः प्रथमा। रहस्य. पृ. ६४–६६. * तिङ्प्रत्ययावृत्तिलक्षणो वाक्यभेदः। बाल. पृ. १८१.

* तिथिर्नाम (चन्द्रस्य एकैककलावर्धनावच्छेदकः कालः। चन्द्रस्य द्वादशांशभोगपर्याप्तः कालो वा। के.)। 'अमा षोडशी' (मीको. भागः १ पृ. ५११) इत्यत्र द्रष्टव्यम्। भाट्ट. ६।४।७.

* तिमिरं नाम नेत्ररोगविशेषः, येन एकः सन्नपि चन्द्रादिः अनेको दृश्यते। भाषायां अयं रोगः 'मोति-बिन्दु' इति उच्यते। के.

* तिर्यञ्चोऽपि कामयन्ते सुखम्। एवं हि दृश्यते, घर्मोपतप्ता. छायामुपसर्पन्ति, शीतेन पीडिता आतपम्। भा. ६।१।२।४–५, * तिर्यञ्चः आसन्न फलं चेतयन्ते न कालान्तरफलं प्रार्थयन्ते। ६।१।२।४, * तिरश्चां वैदिके कर्मणि नाधिकारः। ६।१।२।८–९। असामर्थ्यात् अविद्यत्वात् अब्रह्मत्वाच्च। भाट्ट. * तिरश्चां श्रुतार्थापत्तिः कदाचिदपि नास्ति शब्दव्युत्पत्तिविरहात् तस्याः। ऋजु. पृ. ८९.

■ तिर्यगधिकरणम्। अधिकारो नास्ति तिरश्चां देवानामृषीणां वनस्पतीनां च कर्मसु ॥

फलार्थत्वात् कर्मणः शास्त्रं सर्वाधिकारं स्यात्। ६।१।२।४ ॥

भाष्यम्— इदमामनन्ति 'दर्शपूर्णमासाभ्यां स्वर्ग-कामो यजेत' 'ज्योतिष्टोमेन स्वर्गकामो यजेत' इत्येव-मादि। तत्र संदेहः. किं यावत् किंचित् सत्त्वं तत् सर्व-मधिकृत्य एतदुच्यते, उत समर्थमधिकृत्येति। किं प्राप्तम्? सर्वाधिकार. अविशेषात्। ननु पशवो न किंचित् कामयन्ते कथं तेषामधिकारः स्यात्। उच्यते। मा भूदचेतनानाम्। तिरश्चस्तु अधिकृत्य यजेत इति ब्रूयात्। ननु तिर्यञ्चोऽपि न किंचित् कामयन्ते। नेति ब्रूमः। कामयन्ते सुखम्। एवं हि दृश्यते घर्मोपतप्ताः छायामुपसर्पन्ति, शीतेन पीडिता आतपम्। आह, ननु तिर्यञ्च आसन्न फलं चेतयन्ते, न कालान्तरफलं प्रार्थ-यन्ते। कालान्तरफलानि च वैदिकानि कर्माणि। उच्यते।

कालान्तरेऽपि फलं कामयमाना लक्ष्यन्ते। शुनः चतुर्दश्यामुपवसतः पश्यामः। श्येनांश्च अष्टम्याम्। न चैषा व्याध्याशङ्का, नियतनिमित्तत्वात्। नानाऽऽहाराणामपि तस्मिन् काले दर्शनात्। समानाहाराणामपि अन्यस्मिन् काले अदर्शनात्। लिङ्गानि च वेदे भवन्ति 'देवा वै सत्रमासत' इत्येवमादीनि देवतानां ऋषीणां वनस्पतीनां अधिकारं दर्शयन्ति। ननु कार्त्स्न्येन विधिमुपसंहर्तुं न शक्नुवन्ति इत्यनधिकृताः। उच्यते। यागं कर्तुं शक्नुवन्ति केचित्। तस्मात् यजेत इत्येवमादीनि अधिकरिष्यन्ति शक्नुवतः। विष्णुक्रमादिवचनानि तु अशक्तान् नाधिकरिष्यन्ति। तत्र यः अनुपविष्टविष्णुक्रमादिकः स केवलं यागं करिष्यति, फलस्य दोषः। द्रव्यपरिग्रहोऽपि देवग्रामः, हस्तिग्रामः, ऋषभस्य ग्रामः इत्युपचारस्त् अस्त्येवेति। तस्मात् अमनुष्याणामपि शक्नुवतां अधिकार इति।

**कर्तुर्वा श्रुतिसंयोगाद् विधिः कार्त्स्न्येन गम्यते। ५॥**

भाष्यम्— वाशब्दः पक्षं व्यावर्तयति। न चैतदस्ति तिर्यगादीनामपि अधिकार इति। कस्य तर्हि? यः समर्थः कृत्स्नं कर्म अभिनिर्वर्तयितुम्। न चैते शक्नुवन्ति तिर्यगादयः कृत्स्नं कर्माभिनिर्वर्तयितुम्। तस्मात् यथा न दुरवस्थाभ्युपायः कर्म इति। कथं यो न शक्यते कर्तुम्, सः अभ्युपायः स्यादिति।

**न देवानां देवतान्तराभावात्।** नहि आत्मानमुद्दिश्य त्यागः संभवति। त्यागे यागो न स्यात्।

**न ऋषीणां आर्षेयाभावात्।** न भृग्वादयो भृग्वादिभिः सगोत्रा भवन्ति। न चैषां सामर्थ्यं प्रत्यक्षम्।

टुप्— द्रव्यपरिग्रहाभावात् असामर्थ्यात् देवादीनामनधिकारः। मनुष्येषु याचनविष्णुक्रमणावेक्षणेषु असमर्थो नाधिक्रियते। कुतः? इतिकर्तव्यतायो याचनादीनां प्रधानभावात् फलार्थत्वा। तैर्विना फलमेव नास्ति। न च भृग्वादयो भृग्वादिसगोत्राः इति अयुक्तम्। अनादिर्हि कालः अस्माकम्। न देवानां देवतान्तराभावात् इति, येषां शब्द एव देवता तेषामपि अयुक्तो ग्रन्थः। (शक्यते हि इन्द्रेणापि इन्द्रशब्दोच्चारणेन हविस्त्यक्तुम्। तस्मादर्थमेव देवतामभिप्रेत्य एतद् भाष्यमिति)।

भाष्यम्—अपि च तिर्यञ्चो न कालान्तरफलेनार्थिनः (जन्मान्तरीयफलेन इत्यर्थः) आसन्नं हि ते कामयन्ते। ननु च उक्तं कालान्तरफलार्थिनः तिरश्चः पश्यामः शुनः श्येनान् चतुर्दश्यामष्टम्यां चोपवसत इति। उच्यते। न जन्मान्तरफलार्थिन उपवसन्ति। कथमवगम्यते? वेदाध्ययनाभावात्। ये वेदमधीयते ते एतद्विदुः इदं कर्म कृत्वा इदं फलममुत्र प्राप्नोतीति। न चैते वेदमधीयते। नापि स्मृतिशास्त्राणि। नापि अन्येभ्योऽवगच्छन्ति। तस्मान्न विदन्ति धर्मम्। अविद्वांसः कथमनुतिष्ठेयुः। तस्मान्न धर्मायोपवसन्ति इति। किमर्थं तर्हि एषामुपवासः? उच्यते। रोगादरुचिवशात्। कथं पुनर्नियते काले रोगो भवति? उच्यते। नियतकाला अपि रोगा भवन्ति यथा तृतीयकचातुर्थकाविति। तस्मात् मनुष्याणामधिकार इति। न च तिरश्चां द्रव्यपरिग्रहः। नहि एते द्रव्यं स्वेच्छया उपयुञ्जाना दृश्यन्ते। तस्मात् अनीशानाः धनस्य। यत्तु देवग्रामो हस्तिग्राम इति, उपचारमात्रं तत्। तस्मादपि न तिरश्चामधिकार इति। यानि पुनः लिङ्गानि 'देवा वै सत्रमासत' इत्येवमादीनि, अर्थवादास्ते विधिप्ररोचनार्थाः। विद्यते हि विधिरन्यस्तेषु सर्वेषु। न च विधेः विधिना एकवाक्यभावो भवति वचनव्यक्तिभेदात्। स्तुतिस्तु सा। इत्थं नाम सत्राण्यासितव्यानि, यत् कृतकृत्या अपि आसते देवाः, आसन्नचेतना अपि तिर्यञ्चः, अचेतना अपि वनस्पतयः। किमङ्ग पुनर्विद्वांसो मनुष्या इति। ननु विष्णुक्रमादिषु अनधिकृताः केवलं यागं करिष्यन्ति, नैवम्। गुणा यागं प्रति उपदिश्यन्ते, न कर्तारं प्रति। तेन यागमात्रे क्रियमाणे वैगुण्यं इति न फलसंबन्धः स्यात्। कथं पुनः यागं प्रति उपदिश्यन्ते इति चेत्, इतिकर्तव्यताकाङ्क्षस्य यागवचनस्य अन्तिकाद् उपनिपतिताः शक्नुवन्ति निराकाङ्क्षीकर्तुम्। इतरथा हि कर्तॄन् अधिकुर्वत्सु गुणवचनेषु अनिवृत्ताकाङ्क्षं फलवचनं अनर्थकमेव स्यात्। अनुपपन्नश्च फलवचनमनिष्पन्नं। तत्र साकाङ्क्षत्वात् वाक्यमुपरोत्स्यते। अथ एतदेव वाक्यं समर्थानां सगुणं कर्म विधास्यति

असमर्थाना विगुणं इति, तत्र । तदनुष्ठाने उभयशक्तिविरोधात् वाक्यं भिद्येत । शास्त्रं हि तत् विकर्तव्यतां प्रति । तस्मात् शास्त्रयोगोपदेशः स इति निरङ्गयागोपदेशाभावः । तस्मात् मनुष्याणामेवाधिकारः इति । प्रयोजनं पश्चोक्तं केचिदाहुः । सहस्रसंवत्सरं कर्म न नियोगतो दिवसेषु कल्पयितव्यं इति पूर्वपक्षे सदायुषां देवादीनां संभवात् इति, सिद्धान्ते असंभवात् इति दिवसेष्वेव कल्पयितव्यं इति । तत्तु उपरिष्टाद् व्याख्यास्यामः ( ६।७।१२ ) ।

शा— 'तत्र प्रधानवाक्येन सर्वेषामधिकारधीः । जायते, तदङ्गेनाङ्गवाक्यानामुपवर्णनम् ॥' अत्रोच्यते 'नैयाग्न्यावेक्षणादीनां पुरुषं प्रति चोदना । यतोऽसमर्थस्तत्कृत्स्नं कर्म कृत्वाऽधिकारभाक् ॥ पशुं प्रति विधिस्तेषां यादृशं तं च शक्नुयात् । कृत्वा फलमवाप्नोति ततोऽन्यस्यानधिक्रिया ॥' अतः समर्थानामेवाधिकारः ।

सोम— अनपादन्याविविचारवत् देवतातिर्यगधिकारविचारः समर्थितफलकाभावात् अनुष्ठानविशेषफलकाभावेऽपि न्यायव्युत्पादनात् अत्र प्रवर्तितः इति ध्येयम् ।

वि— 'अन्यादेरसमौ नो वा, स्वर्गेच्छुत्वात् स विद्यते । प्रधानोक्त्यनुसारेण यथाशक्त्यङ्गवर्णनम् ॥, नैयाग्न्यावेक्षणादीनां पुरुषं प्रति चोदना । क्रतुं प्रति विधित्वस्याभावादक्षमाधिकारिता ॥'

भाट्ट— सिद्धे अधिकारे स केषामिति चिन्त्यते । तत्र स्वर्गकामत्वाविशेषात् चेतनमात्रस्याधिकारः । न च तिरश्चां स्वर्गादिकामनाऽसंभवः, परकीयेच्छाया अप्रत्यक्षत्वेन तदभावनिश्चयानुपपत्तेः । श्येनादीनां अदृष्टप्रयासादिदर्शनेन तदनुमानाच्च । न च शाङ्गकाद्यसामर्थ्यात् अनधिकारः, शक्यमात्रस्यैव करणोपपत्तेः । इति प्राप्ते, भावनायां भगवत्यनन्तरं पश्चात् विधिबलेन अधिकारिकल्पनात् पूर्वोक्तन्यायाङ्गप्रधानानुष्ठानसमर्थ एवाधिकारी । अतश्च असमर्थत्वात् अविद्यत्वात् अदृष्ट्यत्वात् न तिरश्चामधिकारः । विष्णुक्रमणाद्यसमर्थत्वाच्च न पङ्ग्वन्धबधिरमूकादीनाम् । देवादीनां तु विग्रहाद्यभावादेव अधिकारः । ऋष्यादीनां तु अनार्षेयत्वात् ऋषिकारस्य प्रवरवरणादौ करणान्तरस्यापि संभवात् अधिकारोऽस्त्येवेति भाष्योक्तं अनधिकारप्रतिपादनं अनादरणीयम् ।

मण्डन— 'मनुष्योऽत्राधिकारभाक् ।'

शंकर— 'तिर्यगादेर्नाधिकारः ।'

● तिर्यगधिकरणे अङ्गानुसारेण प्रधानवाक्यार्थबोधः आश्रितः । कु. ३।४।२१।१२. ● तिर्यगधिकरणे गन्धर्वादीनां अधिकारो निराकृतोऽपि सहस्रसंवत्सरे सत्रे श्रुतिबलात् स्वीकार्य इति पूर्वपक्षः । भाट्ट. ६।७।१९. ● तिर्यगधिकरणे देवानां अनधिकारसाधनम् । सकर्ष. ४।३।७. ● तिर्यगधिकरणे प्रधानवाक्यजनितविशेषप्रत्ययवशादेव सर्वाङ्गोपसंहारसमर्थस्याधिकारः उक्तः । सोम. ६।१।२. ● तिर्यगधिकरणे यथानुष्ठेयवर्गमधिकारः स्यादिति । रत्न. ६।१।१।१. ● नित्यनैमित्तिकानां कर्मणां काम्यवत् सर्वाङ्गोपसंहारेणैव प्रयोगः । एकादशे सर्वाङ्गानां साहित्येन तदुपकारजनकत्वस्य स्थापयिष्यमाणत्वात् तिर्यगधिकरणे यथाविनियोगं अधिकारकल्पनस्य स्थितत्वाच्च । भाट्ट. ६।३।१. ● सूत्रकारस्य देवताविग्रहादिकमभिमतं वार्तिककाराभिमतं चेति षष्ठे तिर्यगधिकरणे प्रपञ्चयिष्यते । कु. १।२।४।४२.

● तिर्यगादिप्रतीतिषु शब्दद्रव्यात्तु इन्द्रियस्य अर्थे एव सामर्थ्यमवधृतम् । ऋजु. पृ. ८९.

● 'तिरश्चीनो विततो रश्मिरेषामधः स्विदासी३दुपरि स्विदासी३त् ॥' ऋग्. १०।१२९।५ पूर्वार्धः । इति एषां कवयो मनीषा इति पूर्वस्यामृचि निर्दिष्टानां कवीनां रश्मिः तिरश्चीनो विततः । [illegible] अधः आसीत्, उत उपरि इति विकल्पयोगात् प्लुत्या च संशयः । गु. पृ. ६७३.

● तिलतण्डुलन्यायः । यथा तिलतण्डुलमानयेत्युक्ते असंसृष्टानि भिन्नानि तण्डुलानि चानीतानि भवन्ति, संसृष्टान्यपि तिलतण्डुलानि वा आनीतानि भवन्ति, तथा प्रकृतेऽपीति । साहस्री १२६.

● तिष्ठन् याज्यामन्वाह अत्र स्थानगुणविधिः । वि. १०।४।२२.

● 'तिस्रः आहुतीर्जुहोति' इत्यादौ संख्यया कर्मभेदः । संख्याऽधिकरणम् । भा. २।२।७।२१. ● 'तिस्र एव साह्नस्योपसदः द्वादशाहीनस्य' इति वाक्ये त्रित्वमेव सर्वदोषरहितत्वात् विधीयते, द्वादशत्वं तु अहीनसंबन्धिवाक्यान्तरादेव प्राप्तं औचित्यरूपेण अस्य स्तुत्यर्थं निर्धारादिवत् अनूद्यते । वा. ३।३।८।१६. ● तिसृषु प्रत्येकं गीयमानं साम समाप्त्यैव गेयम् । भाट्ट. ९।२।४. ● तिस्रधन्वदानं चयनस्यैवाङ्गं न क्रतोः । संकर्ष. १।१।६.

● 'तीर्थे स्नाति' इति तीर्थविशेषणं सुखावतरत्वात् दुःखावतरह्रदादि व्यावर्तयति । वा. ३।४।५।१४. ● 'तीर्थे स्नाति' इति धर्मः क्रत्वर्थः ज्योतिष्टोमे । भा. ३।४।५।१४–१५. ● तीर्थसत्त्वम्— तथा तीर्थशब्दः तीर्थमात्रवचनः सन् तीर्थविशेषं धर्मसाधनं कदाचिद् ब्रूते 'तीर्थयात्रां गतः' इति । भा. ७।३।८। २१ । अत्र ब्रूमः । तीर्थशब्दोऽपि तीर्थमात्रमेव ब्रूते 'तीर्थयात्रां गतः' इति तु उक्ते कानिचित्तीर्थानि अनुक्रान्तानि, यतोऽसौ तद्विशिष्टार्थो विज्ञायते । यत्र तु केवलः प्रयुज्यते तत्र तीर्थमात्रमेव ब्रूते । यथा तीर्थे स्नाति, तीर्थेनैव समानाना भवति इति । ७।३।८।२१.

● 'तुग्रो ह भुज्युमश्विनोदमेघे रयिं न कश्चिन्ममृवाँ अवाहाः । तमूहथुर्नौभिरात्मन्वतीभिरन्तरिक्षप्रुद्भिरपोदकाभिः ॥' ऋसं. १।११६।३ । अस्य एवमाख्यायिकारूपत्वम् । हे अश्विनौ तुग्रो नाम कश्चिद् राजा भुज्युनामानं स्वपुत्रं उदमेघे समुद्रे अवाहाः वाहयामास इति लिङा लिटो भवन्ति इति प्रथमपुरुषार्थमध्यमः । प्रतिषिद्धोननार्थो हकारः । तत्परस्य उपमार्थत्वात् यथा कश्चित् ममृवान् मरणासन्नः रयिं धनं समुद्रे वाहयति इति दृष्टान्तः । तं भुज्युं आत्मन्वतीभिः दृढाभिः वान्तरिक्षप्रुद्भिः आकाशगामिनीभिः अपोदकाभिः निर्जलाभिः नौभिः युवां ऊहथुः समुद्रात् उद्धारयामासथुः इति । मु. पृ. ८०२.

● तुमुन् प्रत्ययः 'तुमुन्ण्वुलौ क्रियायां क्रियार्थायाम्' इति (पा० ३।३।१०) विहितः विनियोक्त्री श्रुतिः इति मण्डनमिश्रमते । पार्थसारथिमते तु नासौ श्रुतिः । (क्रियार्थायां क्रियायामुपपदे भविष्यति अर्थे धातोः एतौ स्तः । कृष्णं द्रष्टुं याति, कृष्णं दर्शको याति) । बाल. पृ. ४५–४६.

● तुलोन्नमनन्यायः । एकस्य शिरसः उन्नमनार्थेन व्यापारेण इतरशिरसः अवनमनमपि भवति । तद्वत् । संग्रहः.

● तुलायष्टिन्यायः । यथा तुलायष्टिः स्तोकेनोन्नतिमयाति, स्तोकेनावनतिम् । एवं पक्षगतोऽपि स्तोकेनोन्नतिमयाति, स्तोकेनावनतिं याति । साहस्री. ६२४.

● तुल्यं च सांप्रदायिकम् । १।२।१।८ ॥

प्रमादपाठत्वशङ्कानिराकरणार्थं वचनागमलक्षणहेतुसमुच्चयार्थः चशब्दः । 'अथवा' इत्यादिना (वार्तिके) 'विधिना त्वेकवाक्यत्वात्' इत्येतदेव सूत्रं प्रमादपाठत्वाशङ्कानिराकरणेऽपि योजितम् । विध्येकवाक्यत्वेन स्तुत्यर्थतया अर्थवत्त्वावगमात् प्रमादपाठत्वनिराकरणे एव हेत्वन्तरसमुच्चयार्थः तुल्यं च इति चशब्दः । सु. पृ. ५२.

● तुल्यः सर्वेषां पशुविधिः प्रकरणाविशेषात् । ३।६।७।१८ ॥

अग्निष्टोमे त्रयः पशवः अग्नीषोमीयः सवनीयः अनुबन्ध्यश्चेति । तत्र सुत्यादिनात् अव्यवहिते प्राचीने औपवसथ्याख्ये दिने अग्नीषोमीयः पशुरनुष्ठीयते । तत्रैव च उपाकरणादयः पशुधर्मा अपि आम्नाताः । तत्रैव च धर्मोक्तेः प्राक् 'आग्नेयः पशुरग्निष्टोम आलभ्यः' इत्यादिना सवनीयाः पशवोऽपि आम्नाताः । सवनीयानुष्ठानं तु सुत्यादिने । अनुबन्ध्यस्तु अवभृथान्तेऽनुष्ठीयते । तत्र उपाकरणादयो ये पशुधर्मा विहिताः, ते त्रयाणामपि पशूनामर्थे विधीयन्ते, उत अग्नीषोमीयसवनीययोरेवार्थे, किंवा अग्नीषोमीयस्य एकस्यैवार्थे इत्येतेषु चोद्यकेनैव स्युः इति । तत्र प्रकृतेन प्रथमसूत्रेण भाष्ये पक्षः उपन्यस्तः । प्रकरणाविशेषात् इति हेतोरावृत्त्या च द्वितीयोऽपि पक्ष उपन्यस्त इति केचित् । यथाश्रुतभाष्येण तु सूत्रेण प्रथमः पक्षः, उत्तरसूत्रं द्वितीयः पक्षश्च उपन्यस्त इति स्पष्टम् । वार्तिककारेण तु उत्तरसूत्रं प्रथमः पक्षः, सूत्रेण तु द्वितीयः पक्ष इति प्रतिपादितम् । वयं यथाश्रुतग्रन्थानुसारेणैव उपन्यस्यामः । सूत्रस्थः पशुशब्दः

लक्षणया पशुधर्मान् बोधयति । अथवा विधित्सितेन पश्वर्थे विधीयन्ते इति उपाकरणादिः पशुधर्मो बोध्यते । तथा च पशुविधिः उपाकरणादिः पशुधर्मः सर्वेषां त्रयाणामपि पशूनां तुल्यः स्यात् । प्रकरणाविशेषात् अग्निष्टोमप्रकरणस्य पशुत्रयेऽपि समानत्वात् । तस्मात् पशुत्रयार्थो धर्मविधिः इति प्रथमः पूर्वपक्षः ।

स्थानाच्च पूर्वस्य । १९ ॥

उपाकरणादयः पशुधर्माः त्रयाणामेव पशूनामर्थे स्युः इति प्रथमः पूर्वपक्षः पूर्वसूत्रेणोक्तः । तत्र विशेषमुक्त्वा द्वितीयः पक्षः अनेन सूत्रेणोच्यते । प्रकरणात् स्थानाच्च अनुष्ठानसादेश्याच्च पशुधर्माः पूर्वस्य प्रथमस्य अग्नीषोमीयस्यैव भवेयुः । अनुबन्ध्यायाः अग्निष्टोमप्रकरणत्वेऽपि स्थानाभावात् न तत्र पशुधर्मा विधीयन्ते इति स्पष्टम् । यद्यपि सवनीयस्य समानदेशत्वं कथंचित् संभवति तथापि नानुष्ठानसादेश्यं इति न तस्यापि ते धर्माः, किंतु अग्नीषोमीयस्यैवेति । सिद्धान्तपक्षोऽयम् ।

श्वस्त्वेकेषां तत्र पुनःश्रुतिर्गुणार्था । २० ॥

उपाकरणादयः पशुधर्माः अग्नीषोमीयस्यैव न तु सवनीयस्यापि इति यदुक्तं तदयुक्तम् । कथम्? श्वस्तु एकेषाम् । तुशब्दः अग्नीषोमीयात् विशेषद्योतनार्थः । एकेषां केषांचित् शाखिनां मते श्वः औपवसथ्यात् अग्नीषोमीयपशुदिनात् उत्तरदिने विधीयते 'आश्विनं ग्रहं गृहीत्वा, त्रिवृता (त्रिगुणया रशनया) यूपं परिवीय (वेष्टयित्वा) आग्नेयं सवनीयं पशुमुपाकरोति' इतिवचनेन । तस्मात् पशुधर्माः सवनीयस्य भवितुं नार्हन्ति । ननु तर्हि औपवसथ्येऽहनि सवनीयपश्वाम्नानश्रुतिः किमर्था? उच्यते । तत्र सवनीयपश्वोः श्वोविधाने सति पुनःश्रुतिः, सवनीयस्य प्राक्श्रुतिः, औपवसथ्येऽहनि श्रुतिः, गुणार्था । निन्दाद्वारा 'वपया प्रातःसवने चरन्ति पुरोडाशेन माध्यंदिने अङ्गैस्तृतीयसवने' इत्यनेन एकवाक्यतां गता वपाप्रचाररूपगुणस्य विधानार्था भवति । निन्दाश्रुतिश्च सवनीयात् पश्चात् संकीर्त्य 'यथा वै मत्स्योऽविदितो जनमवधुनुते, एवमेतेऽप्रज्ञायमाना यजमानमवधून्वते' इति पठिता । यथा वै खिल जलस्थश्चपलो मत्स्यः विचरन् जनैः अनवधारितस्थितिः प्रेक्षकजनमवधुनुते 'किमितो गतः किंवा गतः' इति संदेहे स्थिरति, तथा 'एते पशवः क्रियन्ताम्, एभिः कथं सवनानि पशुमन्ति भवन्ति' इति निर्णयाभावेन संशयमुत्पादयन्ति इति निन्दाश्रुत्यर्थः । एषा निन्दाश्रुतिः औपवसथ्येऽहनि श्रुताऽपि ततः उत्कृष्टा सती 'वपया प्रातःसवने चरन्ति' इति श्रुत्या एकवाक्यतां गता वपाप्रचाररूपगुणविधाने शेषभूता भवति । तेन ज्ञायते पशुधर्माः अग्नीषोमीयस्यैव न तु श्वोविहितस्य सवनीयस्येति । एकेषां शाखिनां सवनीयपशुः श्वः विधीयते । तत्र एवं सति पुनःश्रुतिः गुणार्था वपाप्रचाररूपगुणविधानशेषः इति सूत्रस्य तात्पर्यम् ।

तेनोत्कर्षस्य कालविधिरिति चेत् । २१ ॥

एकोनविंशविंशसूत्राभ्यां सिद्धान्तपक्षः उक्तः । पुनः पूर्वपक्षोपन्यासार्थं सूत्रमिदम् । अग्निष्टोमे औपवसथ्येऽहनि सवनीयपश्वोः आम्नानात् तत्रैव च उपाकरणादीनां पशुधर्माणामुक्तत्वात् ते पशुधर्माः सवनीयस्य पशोरेव स्युः, किंतु तत्रैव पठितस्य अग्नीषोमीयस्य सवनीयस्य चेति उभयोः स्युः । ननु तर्हि 'आश्विनं ग्रहं गृहीत्वा त्रिवृता यूपं परिवीय आग्नेयं सवनीयं पशुमुपाकरोति' इति वाक्यं व्यर्थमिति चेत् । उच्यते । तेन गुणेन वपाप्रचाररूपेण सवनीयः पशुः द्वितीये सुत्यादिने उत्कृष्टः उत्कर्षं प्रापितः । तस्य च वपाप्रचारेण उत्कृष्टस्य पशोः कालस्य अनियमे प्राप्ते 'आश्विनं ग्रहं गृहीत्वा' इत्यादिना वाक्येन कालविधिः कालविशेषस्य विधानं क्रियते, तेन वाक्येन नियतः काले विधीयते । तथा च कालविशेषविधानार्थं तद्वाक्यम्, न अन्ये इत्यर्थः । पशु उपाकरणम्, यूपे नियोजनम्, शामित्रशालायां नयनम्, संज्ञपनम्, विशसनम्, वपोद्धरणं इत्यादयः पशुधर्माः सवनीयस्यैव । इति चेत् ।

नैकदेशत्वात् । २२ ॥

नायं कालविधिः । न वा वपाप्रचारस्य उत्कर्षः नापि तेन पशोरुत्कर्षः । वपाप्रचारस्य उत्कर्षेऽपि वपायाः एकदेशत्वात् वपाश्रपणादीनाम् उत्तरेषामङ्गानाम् उत्कर्षः स्यात्, तथापि वपाप्रचारात् प्राक्तनानाम् उपाकरणादि-वपोद्धरणान्तानाम् उत्कर्षो नैव स्यात् । 'आश्विनं ग्रहं गृहीत्वा' इत्यादिना वाक्येन तु उपाकरणादीनां सर्वेषामेव

अङ्गाना सुत्यादिने अनुष्ठानं विहितम् । तस्मात् औपवसथ्ये अहनि आम्नाताः उपाकरणादयः पशुधर्माः न सवनीयस्य भवितुमर्हन्ति, किंतु अग्नीषोमीयस्यैव । सवनीये तु चोदकेन प्राप्नुवन्ति ।

अर्थेनेति चेत् । २३ ॥

पूर्वपक्षिणः शङ्का । ननु उपाकरणस्य 'आश्विनं ग्रहम्' इत्यनेन सुत्यादिने उत्कर्षे विहिते तदादिसहितस्य सर्वस्यैव सवनीयपशोः. अर्थेन अर्थादेव उत्कर्षः सिद्धो भवति । एष च 'आश्विनं ग्रहम्' इति सवनीयस्य पशोः कालविधिः संभवति । 'मुष्टिना पिधाय वपोद्धरण आसीत आ वपाहोमात्' इति श्रूयते । न च पूर्वेद्युः वपोद्धरण मुष्टिना पिधाय सुत्यादिने प्रातःसवनपर्यन्तं आसीनेन अवस्थातुं शक्यते । अवश्यमाहारविहारादयः कर्तव्याः । तथा च उपाकरणादयः सर्वे धर्मा उत्कर्षेण सुत्यादिनस्थस्य सवनीयपशोरेव धर्माः स्युः न पूर्वदिनस्थस्य अग्नीषोमीयस्य पशोः । इति चेत् ।

न, श्रुतिविप्रतिषेधात् । २४ ॥

'मुष्टिना पिधाय वपोद्धरणं, आसीत आ वपाहोमात्' इति श्रुत्या यदि विरोधो भवेत् तदा अर्थेन उत्कृष्टस्य कालविधिः संभाव्येत, न तु श्रुत्या विप्रतिषेधोऽस्ति । श्रुतिविप्रतिषेधात् तु न कालविधिः । श्रुत्या विप्रतिषेधः श्रुतिविप्रतिषेधः, न श्रुतिविप्रतिषेधः अश्रुतिविप्रतिषेधः । अश्रुतिविप्रतिषेधात् श्रुतिविप्रतिषेधाभावात् न कालविधिः । औपवसथ्येऽहनि उपाकरणादीनि वपाहोमपर्यन्तानि अङ्गानि कृतानि स्युः वपाप्रचारश्च श्वः सुत्यादिने प्रातःसवने करिष्यते तदा, यद्यपि पशुयागपर्यन्तं शमिता वपोद्धरणस्थानं मुष्टिना पिधाय आसितु न शक्नुयात् ततश्च 'मुष्टिना पिधाय' इत्यनया श्रुत्या विप्रतिषेधः विरोधः स्यात् । परन्तु तृणमुष्टिना पर्णमुष्टिना वा पिधाय शमिता श्वः वपाप्रचारपर्यन्तं उदासीनः स्यात् इति शक्यते कर्तुम्, तदा च न श्रुतिविरोधः । तदा च न अर्थेन उत्कृष्टस्य कालविधिः । ततश्च उपाकरणादीनि सर्वाण्येव अङ्गानि श्वः सुत्यादिने एव कर्तव्यानि । एवं च पशुधर्माः सर्वे न सवनीयस्य पशोः, किंतु अग्नीषोमीयस्यैव इति सिद्धान्ती ।

स्थानात्तु पूर्वस्य, संस्कारस्य तदर्थत्वात् । २५ ॥

सिद्धान्ती एव ब्रूते । तुशब्दः सवनीयार्थत्वनिरासाय । स्थानात् समानदेशात् उपाकरणादयो धर्माः पूर्वस्य अग्नीषोमीयस्यैव भवन्ति । उपाकरणादिरूपस्य संस्कारस्य तदर्थत्वात् पशुयागार्थत्वात् । एते धर्माः पशुयागप्रयुक्ताः न ज्योतिष्टोमप्रयुक्ताः । तस्मात् अग्नीषोमीयधर्मा इति पूर्वोक्तोपसंहारः ।

लिङ्गदर्शनाच्च । २६ ॥

सिद्धान्ते हेत्वन्तरपरं सूत्रम् । अग्निष्टोमे औपवसथ्ये अहनि आम्नाताः पशुधर्माः तस्मिन्नेव अहनि आम्नातस्यापि सवनीयस्य पशोर्न भवन्ति किंतु अग्नीषोमीयस्यैव इत्यस्मिन्नर्थे 'वपया प्रातःसवने चरन्ति, पुरोडाशेन माध्यंदिने सवने, अङ्गैस्तृतीयसवने' इति सुत्यादिने पशुपुरोडाशरूपलिङ्गं दृश्यते । पुरोडाशयागो हि देवतासंस्कारार्थः । स च अग्नीषोमावेव संस्कर्तुं शक्नोति नान्यम् । तस्मात् पुरोडाशदर्शनात् लिङ्गात् अग्नीषोमीयस्यैव पशुधर्माः सवनीयस्य तु अतिदेशेन स्युः ।

अचोदना गुणार्थेन । २७ ॥

ननु सवनीये पशौ पशुपुरोडाशदर्शनं उपाकरणादिधर्माणां अग्नीषोमीयार्थत्वे लिङ्गं भवितुं नार्हति पुरोडाशस्य छिद्रापिधानार्थत्वात् न्यूनतादोषनिरासार्थत्वात् इति । तस्मात् गुणार्थेन छिद्रापिधानार्थेन पशुपुरोडाशस्य अचोदना न चोदना सा. । छिद्रापिधानवाक्यं तु अर्थवादः । तस्मात् पशुधर्मा अग्नीषोमीयार्था एव । के.

¶ तुल्यो हि व्रीहिसंबन्धः शास्त्राद् यागावघातयोः (वा. २।१।३।८) इति वार्तिकोक्तन्यायेन आरादुपकारिणा अङ्गेन प्रधानप्रयुक्तत्वग्रहणस्य निरस्तत्वात् । ('व्रीहिभिर्यजेत' 'व्रीहीनवहन्ति' इति तुल्ये चोदने, तत्र इयं प्रयोजिका, इय न इति नास्ति विनोपहेतुः । इति वार्तिकेनैव न्यायाद्वयों व्याख्यातः) । सु. पृ. ६३८.

※ तुल्ययोः एकदेशो यत्कृष्टे ( अन्यत्र नीते ) नूनं अपरोऽपि एकदेशः उत्कृष्यते इति न्यायः । श्रुतिसंयोगात् पौर्णमास्याः 'यदेवादः पौर्णमसं हविः' इति । यावद्वचनं वाचनिकम् । तत्र न न्यायः क्रमते 'तुल्ययोः एकदेशो०' इति । भा. ५।४।४।११.

● तुल्यानां च तुल्यवदनुक्रमणं भवति, यथा 'देवा ऋषयो गन्धर्वास्तेऽन्यत आसन्, असुरा रक्षांसि पिशाचास्तेऽन्यत आसन्' इति । भा. ४।४।७।१९ । अतुल्यानामपि तुल्यवदनुक्रमणं भवति, यथा 'देवा मनुष्याः पितरस्तेऽन्यत आसन्' इति । ४।४।७।१८. ● तुल्यानां तु यौगपद्यं इत्यधिकरणे अङ्गस्वरूपानन्यत्वा वक्ष्यते । तस्माच्च प्रधानप्रयोगानन्यत्वमन्तरेण कश्चिदेः अर्थाश्रिता प्रधानप्रयोगतन्त्रता । तु. पृ. ७११.

● तुल्येषु नाधिकारः स्यात् ( २।१।५।१९ ) इत्यत्र नैराकाङ्क्ष्ये सति अतोंकोपकारस्य वक्ष्यमाणत्वात् । कौ. २।१।४।८ पृ. ७०, ● तुल्येषु नाधिकारः स्यात् इति गुणत्वे तुल्येषु एकत्र संनिधिः कापरत्र विशेषको न स्यात्, विनिगमनाविरहात् इति वक्ष्यते । कु. २।२।६।१७.

※ तुल्येषु नाधिकारः स्यात् इति न्यायात् । न च ( प्रकरणस्य ) अधिकारात् विशेषः । ( ये एव व्रीहयो भक्तार्थाः, ते एव कर्मार्थाः, न पृथक् केचित् कर्मार्था नाम । इति भाष्येण न्यायाक्षरार्थो व्याख्यातः ) । वा. ३।१।१।१८. ● नहि अग्निहोत्रपदस्य अग्निहोत्रप्रवृत्तस्य अनपेक्षत्वे सति अधिकाराख्यप्रकरणमात्रेण संकोचो युक्तः, तुल्येषु नाधिकारः स्यात् इति न्यायात् । कौ. ३।३।१३।२६ पृ. २८९.

● तुल्यार्थानां समुच्चयो न क्वचित् इष्टः । वा. ३।६।११६।४२ पृ. १०६४.

※ तुल्यायव्ययन्यायः । एकेन व्यापारेण आयव्ययौ यथोऽपि तुल्यो भवति, तद्वत् एकेन व्यापारेण यत्र लाभालाभौ समौ प्रसक्तौ तत्राय प्रवर्तते । संग्रहः.

● तुल्यकार्यं तुल्यबाधीयं च तुल्यस्य बाधकं भवति । ( परिभाषा ) । वा. १।५।२०।५२.

■ तुल्यबलप्रेषणन्यायः । यथा लोके द्वयोस्तुल्यबलयोरेकः प्रेष्यो भवति । स तयोः पर्यायेण कार्यं करोति । यदा तमुभौ युगपत्प्रेषयतो नानादिक्षु च कार्ये भवतः, तत्र यद्यसौ अविरोधार्थी भवति, उभयोर्न करोति । किं पुनः कारणमुभयोर्न करोति, यौगपद्यासंभवादित्यादिकम् 'अन्तादिवच्च' पा० ६।१।८५ इति सूत्रभाष्ये स्पष्टम् । साहस्री. ८३५.

● तुल्यसंख्याकानां धर्मविरोधे प्रथमस्यैव धर्मा अनुष्ठेयाः । वि. १२।२।८.

● तुषाः चाल्यमानामिक्षामिक्षासक्ष चातुर्मास्यप्रकरण-प्रयासावभृथस्य द्रव्यं न पुरोडाशाः । भा. ७।३।५।१६.

● तुषोपवापः अवघातकालीनः न कपालोपाधाना-सादनयोः प्रयोजकः, निर्वपणकालीनस्तु कपालधारणस्य प्रयोजकः, उपादानस्य तु न योऽपि प्रयोजकः । कपालं तु न तुषोपवापप्रयुक्तम्, नापि श्रपणप्रयुक्तम् । भाट्ट. ४।१।११, ● तुषोपवापः कपालस्य उत्पत्तेः उपादानस्य पालनस्य च अप्रयोजकः । बाल पृ. १०६, ● तुषोपवापः कपालस्य स्वाङ्गभूतस्यापि अप्रयोजकः । पृ. १०७, ● तुषोपवापः पुरोडाशकपालेन कर्तव्यः 'रक्षसां भागोऽसि' इति मन्त्रेण । तत्र कपालस्य तुषोपवापो न प्रयोजकः, किंतु श्रपणमेव । तथा च पुरोडाशाभावेन कपालाभावेऽपि चरौ तुषोपवापः कर्तव्य एव केनचित् साधनेन, न तु कपालेन । वि. ४।४।१।११. ● तुषोपवापः । 'पुरोडाशकपालेन तुषानुपवपति' इत्यत्र तु पुरोडाशार्थतया उपादानमेवाभिप्रेत्य भूतप्रयोगोपपत्तिः । सोम. १०।२।२७. ● तुषोपवापः पुरोडाशस्यैव प्रयोजकः, न तदुत्पत्तिकालस्यापि । बाल पृ. १०७. ● तुषोपवापं प्रति कपालस्य शेषत्वेऽपि प्रयुक्तत्वं नास्ति । वि. ४।१।२.

● तुषोपवापन्यायः । पुरोडाशकपालन्यायः । दर्शपूर्णमासयोः कपालं न तुषोपवापप्रयुक्तम् । भा. ४।१।१२।२६.

● तुषोपवापवाक्येऽपि करणतानियमस्य कपालसंस्कारत्वापत्तेः एकत्वाविवक्षापत्तिः । भाट्ट. ४।१।१४.

● तुषोपवापविधिः पुरोडाशकपालं न प्रयुङ्क्ते । भाट्ट. ४।१।११.

● तुषकणादिप्रमोचनादिरर्थैः अवघातादिनिर्वर्त्यैः पुरोडाशसिद्धिं प्रति पद्भिरपि व्रीहि–पुरोडाश–कतु–

अपूर्व-अध्वर्यु-यजमानैः अपेक्षितः । नहि अहाहते ग्रीहिनिर्वपं पुरोडाशो वा निर्वर्तयितुं शक्यते । शा. ३।१।४।१० पृ. ६६९

■ तुषकण्डनन्यायः । यथा तुषस्य धान्यत्वचः निस्तुषीकरणमुलूखलादिना व्यर्थम्, तथा प्रकृतेऽपि । साहस्री. ४०९.

● तुषनिष्कासद्रव्यकर्त्वं वरुणप्रघासवत्प्रयस्य । निष्कासवत्तुषन्यायः । भा. ७।३।५।१७.

ꣻ तुष्यतु दुर्जनः इति न्यायः । यत्र प्रतिवादिना युक्त-पक्षं दुष्टमपि वादिना प्रौढवादेन अङ्गीकृत्यापि दूषणान्तरं दीयते, तत्रास्य प्रवृत्तिः । साहस्री. १८१. ● तुष्यतु दुर्जनः इति न्यायेन अपशब्दज्ञानस्य विपरीतत्वमात्रेण अधर्मसाधनत्वमभ्युपगम्य । उद्योतः. भा० १।१।१ पृ. ३१.

● तूपरः अश्वमेधे स्तनीयः पशुर्द्वितीयः । तस्य वङ्क्रयः षड्विंशतिः । भा. ९।४।२।१७.

● तूष्णीं अवशिष्टनिर्वापः अर्धनिर्वापे चन्द्राभ्युदये सति । भा. ६।५।५।१८-२०

● तूष्णीहोमः । अग्निषु आहितमात्रेषु पवमानेष्टिभ्यः प्राक् ये अग्निहोत्रहोमाः क्रियन्ते सायंप्रातः गौणाग्निहोत्र-रूपाः न तूष्णीं होमः । भा. ५।३।९।२८. ● तूष्णीहोमः अग्न्यर्थः पवमानहविर्वत् आहवनीये एव प्रवर्तते । रत्न. ५।३।९।२१-२५. ● तूष्णीहोमः आधानाङ्गभूतः । भाट्ट. ५।३।९. ● तूष्णीहोमः न मुख्याग्निहोत्रम्, किंतु अपूर्वं कर्मान्तरम् । (आधाने द्वादशसु रात्रिषु मुख्याग्नि-होत्रानुष्ठानात् प्राक् अयं क्रियते) । सोम. १०।३।२५. ● तूष्णीहोमे अग्निहोत्रधर्मा नाम्ना प्राप्यन्ते यथा कुण्डपायिनामयने इति केचिदाहुः । तदयुक्तम् । 'तूष्णीं होतव्य' इत्यनेन कर्म विधीयते । तस्मिंश्च विधिवाक्ये अग्निहोत्रशब्दो नास्ति येन धर्मातिदेशको भवेत् । तूष्णीहोमः अग्निसंधुक्षणार्थं क्रियते । एतदतो भवति, अग्न्यर्थो होम इत्यवगम्यते योऽग्निहोत्रशब्दः वाक्ये अर्थवादत्वेन प्रवृत्तः स योगेन प्रवर्तते अग्नये होत्रमिति । अतो योगस्य विद्यमानत्वात् अस्ति नामधेयम् । नाम-धेयाभावाच अतिदेशो नास्ति । टुप्. ५।३।५।२१.

● तूष्णीहोमे अग्निहोत्रधर्माः प्राप्यन्ते न वेति विचारे न प्राप्यन्ते, अत्राग्निहोत्रशब्दस्य यौगिकत्वात् नामधेयत्वा-भावेन अतिदेशकत्वाभावात् । रत्न. ५।३।९।२१-२५. ● तूष्णीहोमप्रसंगार्थो अग्निहोत्रनिगादः । भा. १०।८।५।८.

● तृचाः— सर्वस्तोत्रसाम्नां हि तृचाः एवोपादीयन्ते । वा. ३।५।१०।३१. ● तृचे आद्ये एव गानं एकत्रिके स्तौ माध्यंदिनपवमानस्तोत्रे । भा. १०।५।२।७-९, ● तृचे आनुष्टुभे अनुष्टुब्गायत्रीद्वयप्रग्रथनेन संपादिते स्वाराश्यान्यौगवसाम्नोर्गानम् । ९।२।३।२५-२८ वर्णकं ३, ● तृचे कर्तव्यमपि गानं प्रतृचं परिसमापयितव्यम् । ९।२।३।१०, ● तृचे गानं रथन्तरादिसाम्नाम् । १०।६। ३।१-२

ꣻ तृचे गेयं साम प्रत्यृचं समापनीयम् ॥
तृचे स्याच्छ्रुतिनिर्देशात् । ९।२।३।१४ ॥

भाष्यम्— ज्योतिष्टोमे समाम्नायते 'तस्यैकं साम तृचे क्रियते स्तोत्रीयम्' इति । अत्रायमर्थः सांशयिकः किं तिसृषु ऋक्षु ग्यासस्य गानं कर्तव्यम्, उत प्रत्यृचं समाप्य गानं कर्तव्यमिति । किं प्राप्तम् ? व्यासस्येति । कुतः ? श्रुतिनिर्देशात् । एवं श्रूयते 'एकं साम तृचे क्रियते' इति । तस्मिन् क्रियमाणे, तिसृणामृचां गुणभूता निर्वर्त्या श्रूयते । तत्र यदि एकस्यामृचि उपक्रम्य तस्यामेव एतत् परिसमापयेयुः, न तिसृणामपि साधनं अस्य क्रियमाणस्य परिच्छिन्द्युः, एकर्चसाधन-परिच्छिन्नं क्रियमाणं स्यात्, तत्र श्रुतिर्बाध्येत । तद्यथा 'अयं घटः त्रिषु ब्राह्मणेषु स्थाप्यताम्' इत्युक्ते व्यासस्य स्थाप्यते, न पर्यायेण, एवमिहापि द्रष्टव्यम् । ननु पर्यायेऽपि एवंजातीयकः शब्दो भवति यथा 'त्रिषु गृहेषु देवदत्तो भुङ्क्ते' इत्युक्ते न यौगपद्यमव-गम्यते । पर्यायेणापि भुञ्जाने सत्येष वादः, एवमिहापि पर्यायेण प्राप्नोतीति । अत्रोच्यते । न तत्र त्रित्वस्य भुजिं प्रति उपदिश्यते, येन एतदेवं भवति, तत्र गृहशब्देन संबध्यते, त्रिषु गृहेषु, न द्वयोः एकस्मिन् वा इति । यदा भुजिं प्रति उपदिश्यते (उपदिश्येत), तदा यौगपद्येन भोजयितव्य । इह तु त्रित्वस्य क्रियते

इत्यनेन संबध्यते, एवं सति क्रियाया निर्देशो विहिता भवति । तत्र स्वपदगतस्य किंचित् विधायकत्वेन विहितं भवति । इतरथा ऋचः संख्यायाश्च संक्रमस्य पदान्तरगतेन शब्देन यावता सम्बध्येत, तथा अर्थविप्रकर्षः स्यात् । तस्मात् सामनिर्वृत्तिं प्रति निर्देशः उच्यते । आह, ननु त्रिसंख्या ऋक्शब्देनैव सह संबध्यते । अन्यथा अपति सामर्थ्ये समासः एव न स्यादिति । अत्रोच्यते । न भूयो न संबध्यते इति, संबध्यते एव, समासश्च भवति । स तु समासशब्दः सामनिर्वृत्तौ उपदिश्यते इति । [redacted] त्रिशब्दस्य ऋक्शब्दस्य च अर्थौ निर्वृत्तौ उपदिष्टौ भवति । ऋचि साम निर्वर्तयितव्यम्, एवं सा: तिस्र ऋचो भवन्ति, न न्यूनाः इति । इतरस्मिन् पक्षे अभ्यासः निर्देश्यता संबध्येत, तत्र साम क्रियते इति लक्षणा स्यात्, अभ्यासनिर्वृत्तौ सामनिर्वृत्तिशब्दो भवेत् । तस्मात् व्यासज्य गानं कर्तव्यम् ।

टुप्—ननु 'तृचे वा लिङ्गदर्शनात्' (१०।६।१।२) इति दशमे तिसृषु ऋक्षु साम गेयं इत्येतत् स्थापितम् । आद्यस्ये चाधिकरणे संस्कारकर्म साम इति स्थितम् । प्रतिसंस्कारं च संस्कारावृत्तिः, इत्यतः व्यासज्य गानपक्षो नैवोपपद्यते । उच्यते । दशमे हि एवं चिन्ता तृचे साम गेयम्, न द्वयोः एकस्यां वेति । इह (तु) तृचगाने स्थिते, किं प्रत्यृचम्, उत व्यासज्य इति । यदुक्तं प्रत्यृचं गानं सिद्धमिति (प्रतिप्रधानं गुणावृत्तिः इति न्यायात्) भुत्वा व्यामवाय पश्यमानः पूर्वपक्षमारभते । 'एकं साम तृचे क्रियते' इति अयं (कृञ्-) धातुः सामान्यवचनः विशेषधातुना निराकाङ्क्षीक्रियते । तस्मादयं निराकाङ्क्षीकर्तव्यः । साम चात्र द्वितीयासंयोगात् ईप्सितम् । तस्मात् तेन निराकाङ्क्षीक्रियते सामान्यम् । धातुविशेषस्थानीयं सामजातम् । तस्य धातुविशेषस्थानीयस्य निर्वर्तकत्वेन तृचो विधीयते । एवं करोतिः अभूतप्रादुर्भाववचनः अनुगृहीतो भविष्यति । इतरथा यत् साम ऋचं संस्कुर्यात्, तत् तृचे इति अभ्यासलक्षणा प्राप्नोति करोतेः । अथवा अन्यः श्रुतिप्रकारः । यदि ऋगनुवादेन तृचो विधीयते, तथा सति एकः (तृचः इत्यत्र त्रिशब्दोऽसन्निहितः) विधीयमानत्वात् गुणभूतः, शब्दगुणेन च प्रधानभूतः । अपरः (ऋक्शब्दार्थः) उद्दिश्यमानत्वात् प्रधानभूतः, शब्दगुणेन च अगुणभूतः । तयोः सापेक्षत्वात् असमासः स्यात् । तृचे इति च समासः । तस्मादपि च धात्वर्थे किंचित् विधेयम् । अपि च अस्या व्याख्यानं तृचस्य प्रतिपाद्यते । तत्र यदि एकस्यां साम आधीयेत, तथा सप्तमी बाध्येत तिसृषु श्रुता ।

शब्दार्थत्वाद् विकारस्य । १५ ॥

भाष्यम्—इतश्च पश्यामः तृचे व्यासज्य साम गातव्यमिति । कुतः ? शब्दार्थोऽयं सामसंज्ञको विकारः ऋचो गुणभूत इत्यर्थः । स यदि व्यासज्य क्रियते, बहून्यक्षराणि अविकृतानि भवन्ति । तत्रायं चोदकः अनुगृहीष्यते । तस्मात् व्यासज्य गातव्यम् ।

दर्शयति च । १६ ॥

भाष्यम्—'ऋक् सामोवाच मिथुनं संभवावेति । सोऽब्रवीत्, न वै त्वं मदात्मसि जायायै, वैवो मम महिमेति । ते द्वे भूत्वोचतुः । सोऽब्रवीत् । न युवां मयात्र स्थो जायायै, वेदो मम महिमेति । तास्तिस्रो भूत्वोचुः, मिथुनं संभवामेति । सोऽब्रवीत्, संभवामेति । तस्मादेकं साम तृचे क्रियते स्तोत्रीयम्' इति । नैका स्तोत्रीया साम्नः संभवति, नापि द्वे तिस्रः संभवन्तीति व्यासज्य गानं दर्शयति ।

वाक्यानां तु विभक्तत्वात् प्रतिशब्दं समाप्तिः स्यात्, संस्कारस्य तदर्थत्वात् । १७ ॥

भाष्यम्—तुशब्दः पक्षं व्यावर्तयति । वाक्यानि विभक्तानि त्रीणि एतानि, याः तिस्रः ऋचः । तत्र एकैका ऋक् कृत्स्नेन परस्मापेक्ष काञ्चित् स्तुतिं अभिनिर्वर्तयति, न ऋगन्तरेण सह कंचिदर्थं संनोति । तत्र साम ऋचः संस्कारकाणि निर्वर्तयन्त्याः गुणभावं गच्छत् माहात्म्यं करोति । तत्र यदि व्यासज्य गीयेत, न ऋचः स्तुतिं नाभिनिर्वर्तयन्त्याः साम उपकारकं स्यात् । नहि तामपयन. साम भवतीति । न च ऋक्समुदायेन कश्चिदर्थः भूयते, यत्र सामसंबद्धा स्तुतिं कुर्यात् । ऋक् स्तुतिं करोति, सा न सामसंबद्धा । यः ऋक्समुदायः सामसंबद्धः, स स्तुतिं न करोति । तत्र प्रत्यृचं गानं परि-

समाप्ते क्रियमाणे साम्यता शब्देन स्तुतिः कृता भवति। साम्नसंस्कारस्य स्तुतिभावनाऽर्थत्वात् प्रत्यृचं परिसमाप्तं गानं कर्तव्यं इति।

टुप्‌— प्रत्यृचं वा गेयम्। कुतः? सा स्तोत्र साधनतया विहिता। सा स्वर वर्णानां संस्कार अभिधानेन आकाङ्क्षति। अत्र साम नियम्यते संस्कारकत्वेन। तस्मात् साम स्वरसंस्कारद्वारेण स्तोत्रेण संबध्यते, यथा ऋग्गुणः। 'एकं साम तृचे क्रियते' इति निर्दिष्टे साम्नि संस्कारके गुणवाक्यमिदम्। तत्र यः अभ्यासो गुणः, स विधीयते। यत् साम्ना ऋचं संस्कुर्यात् इत्यनूद्यते 'वासिष्ठ.' इति विधीयते। व्यासस्य गाने (पुनः) साम्ना न (स्तोत्रसाधनं) ऋक् संस्क्रियेत ऋगेकदेशः संस्क्रियेत। न च ऋगेकदेशः स्तुतिं करोति। न च ऋगेकदेशस्य स्तोत्रीयेण संस्कारः अपेक्षितः, ऋचः एव स्तुतिसाधनत्वात्। तस्मात् व्यासस्य गाने (रथंतर पृष्ठं भवति, बृहत्पृष्ठीयेन स्तुवीत इत्यादि-) कृत्स्नं वाक्यं अनर्थकं स्यात्।

तथा चान्यार्थदर्शनम्। १८॥

भाष्यम्— अन्यार्थमपि वाक्यं एतमर्थं दर्शयति। 'अष्टाक्षरेण प्रथमायामृचि प्रस्तौति, द्व्यक्षरेण उत्तरयोः' इति प्रस्तावमेवं दर्शयति। यथा 'एका वाऽस्य उत्तमा स्तोत्रीया, तामुद्गृह्य उद्गायेत्' इति उद्गीथमेव दर्शयति। तस्मादपि प्रत्यृचं गानं कर्तव्यमिति। अर्धर्चप्रगीतेष्वपि कृत्स्नैव गानं कर्तव्यम्। अपरिपूर्णं तत् वाक्यं अर्धर्चे भवति, ऋचि तु परिपूर्णं इति। पादप्रगीतेषु पादे एव गानं कर्तव्यमिति। पादे एव हि तत् परिपूर्णं वाक्यम्, यथा गोष्ठ. वासिष्ठ. इति। एवं यावति परिपूर्णं वाक्यम्, तावति साम परिसमापयितव्यम्। क्वचित् पादेऽपि पूर्णं वाक्यम्, ऋच्यपि, क्वचिदर्धर्चेऽपि परिपूर्णम्। यत्र यथा परिपूर्णम्, तत्र तथा गातव्यमिति।

टुप्‌— पादप्रगीतेषु पादे एव गानं कर्तव्यम्। पादे एव हि तत् परिपूर्णं वाक्यं यथा गोष्ठः वासिष्ठ. इति। एतद्युक्तं भाष्यम्। कथम्? ऋचि एव एते सामनी (गोष्ठवासिष्ठे) उत्पन्ने, न पादे ('परीतो षिञ्चता सुतं' इत्यस्मिन्, न तु 'सोमो य उत्तमं हविः' इत्यादिपादान्तरेषु। इदं गोष्ठे सामनि)। समाना गीतिः इति वचनात् त्रिषु पादेषु न गीयते। (किंतु प्रथमे पादे इव इतरेषु पादेषु गीयते)। यथा 'तेभ्यो दश प्राचीः' इति मन्त्रे ('नमो रुद्रेभ्यो ये पृथिव्या' इत्यादिमन्त्रत्रये अनुषङ्गेण साधारणं 'तेभ्यो दश प्राचीः' इत्यादि सकृदेव आम्नायते तद्वत्)। अपिच प्राष्ठो-त्पादाः (अपि गीतेः) पादे एव अनुक्रमणम्, छान्दोग्ये नैव दृश्यते ऊहे (ऊहग्रन्थे) इति।

अनवानोपदेशाच्च तद्वत्। १९॥

भाष्यम्— अनवानोपदेशश्च तद्वत् युक्तो भविष्यति। यथा अस्माभिर्न्याय उपदिष्टः। अनवानं गायतीति शक्यते अनवानं प्रत्यृचं परिसमापयितुम्। न हि तिसृषु व्यासस्य शक्यते। अपिच, स्वाध्यायकाले प्रत्यृचं गानं परिसमापितम्। स्वाध्यायकाले चाभ्यासः, प्रयोगकाले कथं प्रयुतः स्यादिति। तस्मात् प्रयोगकाले प्रत्यृचं गानं कर्तव्यम्, यतः स्वाध्यायकाले यथाभ्यासो युक्तः। तस्मादपि प्रत्यृचं गेयमिति।

अभ्यासेनेतरा श्रुतिः। २०॥

भाष्यम्— अथ यदुक्तम् 'तस्मादेकं साम तृचे क्रियते' इति। तासु अभ्यासेन इतरा श्रुतिर्द्रष्टव्या। पर्यायेणेत्यर्थः। यदि अत्र ऋक् सामनिर्वृत्यर्थं उपादीयते। तस्माच्च प्रत्यृचमिदं वक्तुं सामनिर्वृत्तिसाधनीभूता-सूक्तं त्रिशब्दः परिच्छेत्स्यतीति। साम स्तोत्रस्य गुणभूतं निर्दिश्यते, 'रथंतर पृष्ठं भवति' 'बृहत् पृष्ठं भवति' इत्येवमादि। तत्र प्रत्यृचं न्यायेन गानं प्राप्तम्। न साम-निर्वृत्त्या संख्या संबध्यते। किं तर्हि? ऋग्भिः। तत्र अन्यथा नावकल्पते इत्यभ्यासो लक्ष्यते तिसृषु अन्य-त्रिभ्यं साम्नेति। यथा त्रिषु कुलेषु देवदत्तो भोज-यितव्य. इति। यदा त्रिसंख्या कुलैः संबध्यते, तदा अभ्यासो लक्ष्यते। एवमिहापि द्रष्टव्यम्। तस्मात् प्रत्यृचं परिसमाप्तं गानं कर्तव्यमिति।

वा— 'साम क्रियत इत्येवं सामनिर्वृत्ति-रुच्यते। तामुद्दिश्य ऋचां त्रित्वमङ्गत्वेन विधी-यते॥' तस्मात् व्यासस्य गेयम्। इति प्राप्ते, उच्यते। 'स्तोत्रीयस्य हि साम्नोऽत्र पृथक्संबन्ध उच्यते।

इतरा ' एकं साम तृचे ' इति श्रुतिः अभ्यासेन स्यात् । प्रत्यृचं समाप्यमानस्य सप्तसंख्यस्य गानस्य अभ्यासो भवति, तेन पुनःपुनर्गानेन च श्रुतिः उपपद्यते । अनन्यसाधुश्रुतिस्तु बलीयसी, इतरा श्रुतिस्तु अभ्यासपरत्वेनापि उपपन्नत्वात् दुर्बला । तस्मात् प्रत्यृचं गानं परिसमाप्य कर्तव्य इति सिद्धान्तः । के.

• तृचशब्दः समानच्छन्दसि समानदैवत्यके च अविशेषतः भवति इत्युक्तम् । भा. १०।४।२६।४८, • तृचशब्दं एकं कंचित् सामान्यविशेषमाश्रित्य उपचरन्ति । १।२।४।२४ वर्णक १.

• तृणारणिमणिन्यायः । तृणं प्रसिद्धम्, अरणिस्तु ' निर्मन्थ्यदारुणि त्वरणिर्द्वयोः ' इति कोशादग्निसिद्ध्यर्थं निर्मन्थनीये काष्ठविशेषे वर्तते, मणिस्तु अग्निनिर्माणप्रद-सूर्यकान्तपदवाच्यादमविशेषो गृह्यते अरणिवदग्न्युत्पादकत्वात् । एवस्तृणारणिमणिन्यायेन हेतुत्वाज्ञ व्यभिचार इत्यादि । तत्र तार्णवह्निं प्रति तृणस्य, आरणवह्निं प्रति मन्थस्य, माणिक्यवह्निं प्रति मणेश्च कारणत्वम् । न तु वह्नित्वाव-च्छिन्नं प्रति तृणादेः कारणत्वं परस्परव्यभिचारात्, एवं तत्र कार्यकारणभावत्रयम्, कार्यतावच्छेदकं कारणता-वच्छेदकं च नाना तत्रास्य प्रवृत्तिः । साहस्री ४२१.

• तृणारणिमणिन्यायेन घेनिपादिनामपि समु-च्चयस्याविरोधात् । संकर्ष. ४।३।३. • अङ्गानां प्रत्येक-मुपदानां प्रत्येकमेव प्रयोजनाकाङ्क्षावत्त्वेन विनियोगविधि-कल्पनात् तथापि एकस्य प्रधानस्य एकस्मिन्नेव अपूर्व-काराख्ये फले सर्वेषामङ्गानां तत्र साहित्याकल्पनात् विकल्पेनैव तृणारणिमणिन्यायेन कारणता । भाट्ट. ११।१।२. • तत्प्रकर्षे निरपेक्षत्वात् तत्प्रकर्षार्थानां एकफलभावनाकरणत्वाङ्गत्वेन विकल्पोपपत्ते एककाली यस्येत्यादौ तृणारणिमणिन्यायेन सकलजन्यत्वोपपत्ते. तद्वैजात्यकल्पनाऽभावात् अपि लाघवम् । कौ. २।२।१।१ पृ १३९.

• तृणजलायुकान्यायः । स्थूलदेहनाशेऽपि कर्माणि भावयद् वासनात्मकं लिङ्गं न नश्यति, किंतु देहान्तरं प्रविशति तृणजलायुकान्यायेन । तथा च बृहदारण्यके– ' तद्यथा तृणजलायुका तृणस्यान्तं गत्वा अन्यमाक्रम-माक्रम्यात्मानमुपसंहरति ' इति । मोक्षधर्मे नीलकण्ठः अ. २०२ श्लो. १९.

• तृणजलौकान्यायः । यथा तृणजलौका तृणान्तर-माश्रित्य पूर्वतृणं त्यजति, तथा जीवः स्वाविद्यादिभि-र्देहान्तरं निश्चित्यैव पूर्वं देहं त्यजतीति भाव. । साहस्री. १०.

• तृणप्रत्ययस्य बर्हिःशब्दो निमित्तं न तृणशब्द-प्रत्ययस्य । भा. ३।२।१।१ पृ. ७४९.

• तृणप्रासनेन । अन्तु तृणप्रासनेन अवस्थये विहि-तेन प्राकृताङ्गान्तराणां न बाधः । भा. १०।३।११-१२.

• तृतीये अध्याये ' अथातश्शेषलक्षणमिदमिहोक्तं शेष-लक्षणम् । ' वा. ३।१।१।१ पृ. ६४७. • तृतीये अध्याये कः शेषः केन हेतुना शेषः, कथं च विनियुज्यते इति, श्रुत्यादीनि च विनियोगे कारणानि इति वक्ष्यते । तेषां च बलाबलमुक्तम् । एतत् तात्पर्येण अन्यत् उपोद्घातादिना । भा ३।१।१।१. • तृतीये अध्याये गौण-मुख्यसाधारण्येन अङ्गत्वमेव निरूप्यते ( तृतीयाध्यायार्थः गौणमुख्यसाधारण्येन अङ्गत्वमेव ) । भाट्ट ३।४।८. • तृतीये अध्याये विनियोगरूपा विधेरवस्था निरूपिता । कणिका पृ ४१२. • तृतीये अध्याये शेषशेषिभाव अभिधीयते । चि. उपक्रमे ३।१।१.

• तृतीये सवने अंशुरेक. अभिषूयते । तस्य प्रमाणं च नाम्नातम् । तं अनेकवर्णं स्थूलपर्वाणं च अधीयते ( दीर्घसोमे ) । भा. ३।३।१२।३१, • तृतीये सवने आदित्योऽश्नन्ति शतनीयपद्यो. । ११।२। १३।१४. • तृतीये सवने आर्भवपवमान । तत्र पञ्च-सूक्तेषु नव सामानि गीयन्ते । ' स्वादिष्ठया मदिष्ठया ' ( सामसं. ६८९ ) इति तिस्रो गायत्र्यः, तत्र गायत्रं संहितं च साम गेयम् । ' पुरोजिती वो ' ( सामसं. ६९७ ) इति अनुष्टुप् गायत्र्यौ च, तत्र श्यावाश्वं आन्धी-गवं च साम गेयम् । ' इन्द्रमच्छ सुता ' ( सामसं. ६९४ ) इति तिस्र उष्णिहः तत्र सफं साम गेयम् । ' पवस्व मधु-मत्तमः ' ( सामसं. ६९२ ) इति ककुभवृहत्यौ, तत्र पौष्कलं साम गेयम् । ' अभि प्रियाणि पवते ' ( सामसं. ७०० ) इति तिस्रो जगत्य , तत्र काव्यं साम गेयम् ।

वि. १।२।६ वर्णकं ३, * तृतीये सवने आर्भवपवमाने श्यावाश्व-आन्धीगवयोः साम्नोः अनुष्टुभा गायत्रीभ्यां च प्रथिते तृचे गानम्, न तु उत्तरयोरनुष्टुबानयनम् । ९।२।७ वर्णकं ३. * तृतीये सवने एव ज्योतिष्टोमे षोडशी ग्राह्यः, न सवनेसवने । भा. १०।५।२२।४८, * तृतीये सवने द्वादशकपालः सवनीयपुरोडाशः व्यूढे ■ एकादशकपालः । १०।६।२६।८८. * तृतीये सवने धिष्ण्यव्याघारणे आज्यविधिर्नियमार्थः शेषेण नेति । संकर्ष. १।२।२८. * तृतीये सवने यज्ञायज्ञीयं नाम स्तोत्रम् । तस्याश्रयः यज्ञायज्ञा वो इत्यादिः बृहतीस्तो-बृहतीरूपः प्रगाथः । एकविंशः स्तोमः । के. * तृतीये सवने सवनीयपुरोडाशेषु सौम्ये चरौ आश्विने द्विकपाले च सवनीयपशवर्थे हविष्कृत् प्रवृत्तसिद्धा, भेदेन नाह्वातव्या । भा. १२।२।४।१२-१३. * तृतीये सवने मूर्धस्तमयात् प्राचैव उक्थ्यशस्त्रयो शस्यन्ते तेभ्यः परस्तात् षोडशी निहितः । षोडशिस्तोत्रोपाकरणे च 'समयाध्युषिते सूर्ये षोडशिनः स्तोत्रमुपाकरोति' इति कालविशेषो विहितः । परंतु दैवादुक्थ्योत्कर्षे जाते सस्तोत्रस्य षोडशिग्रहस्यापि उत्कर्ष एव कर्तव्यः । वि. ५।१।१८. * तृतीये सवने सौगन्धिकेन आम्यञ्जने अञ्जनाभ्यञ्जने नाम स्तो । भा. १०।४।६।१०.

* तृतीयाध्यायार्थः. 'श्रुतिलिङ्ग च वाक्यादिविरोध-प्रतिपत्तयः । अनारभ्योक्ति, बह्वर्थत्वाद्यथो अष्टपादगाः ॥' १ श्रुतिविचारः, २ लिङ्गविचारः, ३ वाक्यप्रकरणादि-विचारः, ४ श्रुत्यादे. परस्परविरोधवद्बलाबलम्, ५ प्रति-पत्तिकर्माणि, ६ अनारभ्याधीतानि, ७ बहुप्रधानोपकारक-प्रयाजादीनि, ८ याजमानानि इति । वि. प्रस्तावना १५. * तृतीयाध्यायसिद्धं क्रत्वर्थपुरुषार्थत्वं उदाहरण-विशेषनिष्ठतया प्रयोक्तृत्वसिद्ध्यर्थं चतुर्थे विचार्यते । भाट्ट. ४।१।१.

■ तृतीयसवने वचनात् स्यात् । १०।५।२२। ४४ ॥

षोडशी ग्रहः तृतीयसवने एव ग्राह्यः स्यात् वचनात्, न सवनेसवने । एवं ह्याह, 'यत् प्रातःसवने गृह्णीयात् गर्भं स्रवेत् सवने व्यतिरिच्येत, यन्माध्यंदिने मध्यतो गर्भं निर्हन्यात्, तृतीयसवने ग्राह्यः तत् सर्वेषु सवनेषु गृह्णाति, न पूर्वे सवने माति भीतः' इति । तस्मात् तृतीयसवने एव षोडशी ग्राह्यः । इति सिद्धान्तः । " तैत्तिरीयके तु 'सवनेसवनेऽभिगृह्णाति' इति वचनात् विकल्प. " इति कुतूहलम् । इदमन्तरामर्थ्यधिकरणम् । के.

* तृतीया करणवाचिनः प्रातिपदिकात् भवति । भा. १।४।२।२ पृ. ३२४. * तृतीयायाः करणत्वे एव शक्तिः । कर्मत्वे तु 'तृतीया च होश्छन्दसि' (पा० २।३।३ जुहोतेः कर्मणि तृतीया स्यात् द्वितीया च) इत्यनुशासननिष्ठा लक्षणा । भाट्ट. ५।१।२.

* तृतीयाऽर्थः । कर्तृत्वं करणत्वं च तृतीयार्थः 'कर्तृकरणयोस्तृतीया' इति सूत्रात् (पा० २।३।१८) (कर्तृत्वविवक्षया 'कर्तृत्व' इति बिन्दौ द्रष्टव्यम् । करणत्वविवक्षया 'करणत्व' इति बिन्दौ द्रष्टव्यम्) । अत्र कर्तृत्वकरणत्वयोः साक्षात् भावनायां संबन्धात् तदर्थक-तृतीया कारकविभक्तिः । भावनाभिन्नपदार्थान्वय्यर्थिका (अन्वयी अर्थो यस्याः) उपपदविभक्तिः । मणि. पृ. १३२, १३३.

'सहयुक्तेऽप्रधाने' (पा० २।३।१९) साहित्य-युक्ताप्रधानवाचकशब्दसमभिव्याहृततृतीयायाः निरूपित-त्वमर्थः । शिष्येण सहागतो गुरुः शिष्यनिरूपित-साहित्यविशिष्टगुरुकर्तृकं आगमनं इति बोधः । एवं च तृतीयार्थस्य भावनाऽन्वयाभावात् उपपदविभक्तिः । मणि. पृ. १३३. 'सहयुक्तेऽप्रधाने' एवं 'वाक-सार्थ-संयोगेऽपि' इत्यनुशासनेन पुत्रेण सहागतः पिता इति तृतीया । अत्र च पुत्रस्य अप्राधान्यं न क्रियाऽनन्वयि-त्वेनैव 'सहैव दशभिः पुत्रैर्भारं वहति गर्दभी' इत्यादिवत् । अपि तु यस्य क्रियासंबन्धः शाब्दः तत् प्रधानम्, यस्य तु आर्थः तस्य अप्राधान्यम् । अत एव पुत्रेण सह इत्यत्र पुत्रस्यापि आगमनप्रतीतिः । अत्र न सहशब्दयोग एव विवक्षितः 'वृद्धो यूना' (पा० १।२।६५) इति सूत्रेऽपि तृतीयादर्शनात् । अत एव साहित्यमत्र तृतीयाऽर्थः । सहशब्दः क्वाचित्कः तात्पर्य-ग्राहकः । तदन्वयस्तु स्वनिरूपकक्रियाश्रयत्वसंबन्धेन क्रियायामेव । साहित्यं च 'सहैव दशभिः पुत्रैः' इत्यादौ

तत्काले विद्यमानत्वात् । पुत्रेण सहागतः इत्यादौ च एकक्रियाऽन्वयित्वं इत्यादि योग्यताऽनुसारेण बोध्यम् । रहस्य. पृ. ९९–१००.

'येनाङ्गविकारः' (पा० २।३।२० ) विकारयुक्ताङ्ग-वाचकशब्दसमभिव्याहृतात् तृतीया संबन्धे । यथा अक्ष्णा काणः इति । अत्र अक्षिसंबन्धिकाणत्वविशिष्ट इत्यर्थः । अत्र च अक्षिनिष्ठकाणत्वस्य परम्परासंबन्धेन चैत्रे प्रकारता । मणि. पृ. ११३. 'येनाङ्गविकारः' इत्यनुशासनात् येन अङ्गेन विकृतेन अङ्गिनो विकारो लक्ष्यते ततस्तृतीया स्यात् इत्यर्थकात् 'अक्ष्णा काणः' इत्यादौ तृतीया । अत्र च अक्षिपदं चक्षुर्गोलकपरम्, वृत्तित्वं तृतीयाऽर्थः, काणपदं चक्षुरुपघातवद्गोलकपरम् । चक्षुर्गोलकवृत्तिचक्षुरुपघात-वद्गोलकवान् इति बोधः । तृतीयाऽर्थवृत्तित्वस्य तेन संबन्धेन भानत्वायामन्वयात् । रहस्य. पृ. १००.

'इत्थंभूतलक्षणे' (पा० २।३।२१ ) इत्थंभूतलक्षणे तृतीया । इत्थंभूतलक्षणत्वं ज्ञापकत्वम् । 'जटाभिस्तापसः' इत्यत्र जटाज्ञाप्यतपोवान् इत्यर्थः । अत्र ज्ञाप्यत्वस्य तपोविशिष्टे अन्वयः । अन्यथा एकदेशे अन्वयापत्तेः । मणि. पृ. ११३. 'इत्थंभूतलक्षणे' इत्यनुशासनात् जटाभिस्तापसः इत्यादौ तृतीया । अत्र लक्षणत्वापरपर्यायं ज्ञाप्यत्वं तृतीयार्थः । जटाज्ञाप्यतापसत्ववान् इत्यर्थः । लक्षणत्वं च विशेषणोपलक्षणसाधारणम् । तेन, दण्डेन तापसः इत्यादि साधु । रहस्य. पृ. १००.

'संज्ञोऽन्यतरस्यां कर्मणि' (पा० २।३।२२) संपूर्वस्य ज्ञाधातोः कर्मणि तृतीया द्वितीया वा स्यात् । मात्रा मातरं वा संजानीते । मातृविषयकपूर्वस्मरणादिप्रकारकज्ञानवान् इत्यर्थः । अत्र मातृपदार्थस्य पूर्वानुभवप्रकारकज्ञानक्रियायां अन्वयात् पूर्वस्मरणक्रियाऽन्वय आर्थिकः । फल-जनकज्ञानान्वयो वा । तेनात्र उपपदविभक्तित्वम् । मणि. पृ. ११३.

'हेतौ' (पा० २।३।२३ ) हेत्वर्थे तृतीया । पुण्येन दृष्टो हरिः । अत्र तृतीयाऽर्थस्य सहकारित्वस्य दर्शने अन्वयः । पुण्यसहकृतेन्द्रियजन्यं दर्शनम् । मणि. पृ ११३. तच्च (हेतुत्वं) यद्यपि कारणत्वमेव, तथापि द्रव्यादिनिरूपितत्वघटितधर्मेण क्रियाऽन्वयि हेतुत्वं यथा दण्डेन घटः इत्यादौ । घात्वर्थनिरूपितत्वेन संसर्गेण क्रियाऽन्वयि तु करणत्वं इति विशेषः । अत एव हेतुत्वे लक्षणा । अथवा धात्वर्थोपाधिकिरूपकारणत्वे शक्तिः, तदतिरिक्ते घात्वर्थोपाधौ लक्षणा इति पृथगनुशासनम् । फलादिसाधारणं च तत् यथा अध्ययनेन वसति । तादर्थ्यमत्र तृतीयाऽर्थः । रहस्य. पृ. १००.

'अकर्तर्यृणे पञ्चमी' (पा० २।३।२४ । कर्तृवर्जितं यत् ऋणं हेतुभूतं ततः पञ्चमी स्यात् ) शतेन बद्धः शताद्बद्धः । अत्र शतस्य ऋणनिपातद्वारा बन्धन-क्रियायामन्वयात् उपपदविभक्तित्वम् । शताभिन्नऋणजन्य-बन्धनवान् इति बोधः । मणि. पृ. ११४.

'षष्ठी हेतुप्रयोगे' (पा० २।३।२६ हेतुशब्दप्रयोगे) हेतौ द्योत्ये षष्ठी एव न तृतीया । अध्ययनस्य हेतोर्वसति । अध्ययनाभिन्नहेतुको निवासः । मणि. पृ. ११४.

'सर्वनाम्नस्तृतीया च' (पा० २।३।२७ सर्वनाम्नः हेतुशब्दस्य च प्रयोगे हेतौ द्योत्ये तृतीया षष्ठी च ) । कस्य हेतोः, केन हेतुना वसति । मणि. पृ. ११४.

'अशिष्टव्यवहारे दाणः प्रयोगे चतुर्थ्यर्थे तृतीया वाच्या' इति वार्तिकात् तृतीया । यथा दास्या संयच्छते, ददातीत्यर्थः । शिष्टव्यवहारे तु 'भार्यायै संयच्छति' । रहस्य. पृ. १०१.

तृतीयायाः अनुशासनानुरोधेन लाक्षणिकार्था अनु-संधेयाः । तथाहि 'प्रकृत्यादिभ्य उपसंख्यानम्' इति वार्तिकात् प्रकृत्या चारुः, प्रायेण याज्ञिकः, गोत्रेण गार्ग्यः, समेन एति, द्विद्रोणेन धान्यं क्रीणाति, सुखेन याति इत्यादौ करणातिरिक्तार्थान्तरलक्षणा । प्रकृतिपदेन हि स्वाभाविकी सामग्री उच्यते । तज्जन्यचारुत्ववानित्यर्थः । न चैवं करणत्वस्यैव तृतीयाऽर्थत्वात् पृथगनुशासन-वैयर्थ्यम्, करणत्वस्य तत्त्वेन (स्वरूपेण) तृतीयार्थत्वमङ्गी-कृत्य तदुपपादनात् । अत एव तृतीयाऽर्थस्य जन्यत्वा-अवच्छेदकत्वाद्यनुत्तिसंबन्धेन आक्षिप्तक्रियायामन्वयः ।

प्रायेण याज्ञिकः– प्रायःशब्दस्य अवच्छेदकावच्छिन्न-त्वादित्यविशिष्टबाहुल्यं अर्थः । तृतीयाया अवच्छिन्नत्व-मर्थः । तथा च किंचिन्न्यूनबाहुल्यावच्छिन्नयज्ञविद्या-संबन्धवान् इत्यर्थः ।

गोत्रेण गार्ग्यः— गोत्रशब्दस्य संबन्धविशेषवाचित्वेन गोत्रत्वपरत्वमङ्गीकृत्य गोत्रत्वावच्छिन्नगर्गसंबन्धवान् इत्यर्थः। तृतीयाया वा अभेदार्थकत्वमङ्गीकृत्य गोत्रा भिन्नगर्गसंबन्धवान् इत्यर्थः। अस्मिन् पक्षे गोत्रत्वं तृतीयाऽर्थः, अवच्छिन्नत्वं संसर्गः, गोत्रवृत्तिगोत्रत्वा-वच्छिन्नसंबन्धवान् इत्यर्थः। अनयैव च रीत्या समयत्वेन स्ववान् इत्यादिप्रयोगा उपपादनीयाः।

धान्येन धनी इत्यादौ तु तृतीयाऽर्थाभेदेन धान्यत्वस्य धने अन्वय इति विशेषः। धनसंबन्धं प्रति धान्यस्य करणत्वादेव वा तृतीया इति कौस्तुभे स्पष्टम्।

समेन याति इत्यत्र अवच्छिन्नत्वं तृतीयाऽर्थः। समदेशावच्छिन्ना गमनभावना इत्यर्थः।

द्विद्रोणेन धान्यं क्रीणाति— द्वयोर्द्रोणयोः समाहारः द्विद्रोणम्, पात्रादित्वात् स्त्रीत्वाभावः। परिमितत्वं तृतीयाऽर्थः। द्रोणद्वयपरिमितं धान्यं क्रीणाति इत्यर्थः। करणत्वेनापि अन्वयसंभवेऽस्मिन् परिमितत्वेन बोधार्थं पृथगनुशासनम्।

सुखेन याति— इत्यादौ सुखपदं दुःखाभावपरम्। तृतीयाऽर्थश्च प्रयोजकत्वम्। तच्च प्रतियोगित्वानुवादकत्व-रूपम्। तथा च दुःखाजनकं यानमित्यर्थः। रहस्य. पृ. ९७–९८.

'दिवः कर्म च' (पा० १।४।४३) इति सूत्रेण दिव्धात्वर्थस्य साधकतमं कर्मसंज्ञं स्यात्, चकारानुरोधेन स्वरितत्वानुगतेः पूर्वसूत्रस्थकरणशब्दानुवृत्त्या करणसंज्ञं च इत्यर्थकेन साधकतमस्यैव संज्ञाद्वयकरणात् अक्षैः अक्षान् वा दीव्यति इति प्रयोगद्वयम्। अत्र पणपूर्वका-क्षनाभ्यन्क्रियायाः धात्वर्थत्वात् तन्निष्ठाया मुख्यमेव करण-त्वम्। तत्र च द्वितीया लाक्षणिकी। पृ. ९८.

'अपवर्गे तृतीया' (पा० २।३।६) इति सूत्रेण फलप्राप्तिरूपापवर्गे द्योत्ये कालाध्वनोः अत्यन्तसंयोगे तृतीया स्यात् अन्यथा द्वितीया इत्यर्थकेन 'मासेना-धीतोऽनुवाकः' इत्यत्र तृतीयया फलप्राप्तिर्द्योत्यते। रहस्य. पृ. ९९.

* तृतीयाऽर्थः सर्वोऽपि शक्यलक्ष्यसाधारण- पूर्वोक्तदेव लिङ्गानन्त्वमिपदोपात्तमानताम् भुताया गम्यमानाया वा अन्वेति इति बोध्यम्। यथा शतेन वत्सान् पाययति पयः— शतेन परिच्छिन्नानित्यर्थः, परिच्छेदं प्रति तस्य करणत्वात्। अत्र गम्यमानत्वं अध्याहृतपदेन बोध्यम्। अत एव दधा इत्यत्र ■ नानुमेया (क्रिया), अत इति निपातेनैव 'साध्यं नास्ति' इत्यर्थकेन साधनक्रियाया उपात्तत्वात्। अव्ययार्थश्च विभक्तिमात्रे बोध्यः। रहस्य. पृ. १०१। नवीनतार्किकास्तु प्रकृत्यर्थनिरूपितजन्यत्वमेव तृतीयाऽर्थः। तस्य च आश्रयतया धात्वर्थेऽन्वय इत्याहुः। तन्न। अनुशासनाभावे प्रमाणाभावात्। न च 'परशुना छिनत्ति न दात्रेण' इत्यादौ दात्रजन्यत्वाभावस्य क्रियाया बोधानापत्तिः, निरूपकतासंबन्धेन परशुनिष्ठकरणत्वस्य, निरूपकतासंबन्धावच्छिन्नप्रतियोगिताकदात्रनिष्ठकरणत्वा-भावस्य च क्रियायां बोधेन अर्थात् जन्यत्वाभावबोधोप-पत्तेः। अत. प्रचुरप्रयोगाविशेषाद् कर्तृत्वकरणत्वयोः उभयोरपि तृतीयायाः शक्तिः। बोध्यताऽऽदिरूपतात्पर्य-ग्राहकानुरोधेन च विशेषनिर्णयः। पृ. ९७.

* तृतीयाऽऽदौ (विभक्तौ) जातेरेव संख्या-कारकान्वयः, अन्यत्र तु लिङ्गव्यक्तेः जातिव्यक्त्योश्च न वैशिष्ट्यावगाही एको बोधः, किंतु बोधद्वयं शक्तिलक्षणा-जन्यमिति आकृत्यधिकरणे अभिहितम्। कौ. २।१।२।५ पृ. २९.

* तृतीयाकृतमेव 'सूक्तवाकेन प्रस्तरम्' इत्यत्र उभयोः प्रयोजनवत्त्वाविशेषे केवलतृतीयाकृतमेव सूक्त-वाकस्य प्रस्तरप्रहरणाङ्गत्वम्। वा. ३।१।४।१२ पृ. ४१३.

* तृतीयाश्रुत्या ऐन्द्र्याः करणत्वम्। भा. ३।३।७। १४ पृ. ८२५.

* तृतीयिन ऋत्विजः तृतीयांशभाजः। द्वादश गावः पूर्णा दक्षिणा, तत्तृतीयोंऽशः चतस्रो गावः। तृतीयो-ऽस्ति येषां दक्षिणायाः, ते तृतीयिनः। नेष्टा— अध्वर्यु-गणस्थः, अग्नीध्— ब्रह्मगणस्थः, अच्छावाकः— होतृगणस्थः, प्रतिहर्ता— उद्गातृगणस्थश्च इति चत्वारः तृतीयिनः। के. १०।३।१३।५५.

* तृप्यन्तो भक्षणे 'मन्द्राभिभूतिः' इत्यादिः भक्ष-याम्यन्तः एक एव मन्त्रः न तु विभागः। ज्योतिष्टोमे। वि. ३।२।१०.

● 'तृप्तिकामः पचेत्' इत्यत्र प्रत्ययार्थकार्यत्वस्य प्रकृत्यर्थे पाके अन्वयः । इति गुरवः । मणि. पृ. ८४.

● तृप्तिप्रकाशनमन्त्रस्य प्रथमन्त्रैकवाक्यता । वि. ३।२।१०.

● तृप्तिप्रसादौ देवताऽशिल्पसाध्यौ 'तृप्त एवैनमिन्द्रः प्रजया पशुभिस्तर्पयति' इति, इति चेन्न । अर्थवादानां स्वार्थे तात्पर्याभावात् । वि. ९।१।४.

● तेजस्कामेष्टिः कर्मान्तरम् 'आग्नेयमष्टाकपालं निर्वपेद् रुक्कामः' । वि. २।३।१२.

● तेजःसंस्तयो ब्राह्मणस्य । ( तेजसा संस्तवः तेजःप्रलयः ) । भा. ६।८।२।१४.

● तेपाना. तपः कुर्वन्तः । तथा इत्यर्थः । के.

● तैत्तिरीयाः कारीरीवाक्यानि अधीयानाः भूमौ भोजनमाचरन्ति अपरे शाखिनो नाचरन्ति । भा. २।४।२।८ पृ. ६६२. ● तैत्तिरीयैरेव आपस्तम्बीयबौधायनीये धर्मगृह्यसूत्रे प्रतिपन्ने । भा. १।३।७।१५ पृ. २४४.

● तैत्तिरीयकं शाखान्तर यजुर्वेदगतम् । तैत्तिरीयकस्य अवान्तरभेदः षड्विधः सूत्रभेदस्य षट्संख्यत्वात् बौधायनीयं आपस्तम्बीयं सत्याषाढीयं वैखानसीयं भारद्वाजीयं वाधूलं चेति । के. ● तैत्तिरीयकवाक्यापेक्षया तमिष्टयजुः प्रतिपन्निरेव । भा. ३।५।१६, ● तैत्तिरीयशाखावाक्येन काम्यपशुप्रसक्तिः दाशुः सिद्धा । मैत्रायणीयानां तु प्रतिषिद्धिः । ३।७।२१।२१ पृ. १६९.

● तैलपानवदेतद्भविष्यति । यथा तैलपानं घृतपानं वा भक्तितेऽपि सति कालान्तरे मेधास्मृतिबलपुष्ट्यादीनि फलानि करोति । भा. ७।१।१।९ । अत्र भू. तैलपानस्यापि ॥ कालान्तरे फलं भवति । धातुसाम्य तस्य फलं तच्च तत्कालमेव । बच पल बलपुष्ट्यादि, तत् सम्यगाहारपरिणामाद्भवति । ७।१।१।७.

● तोयशब्दः । 'बिन्दौ च समुदाये च तोयशब्दो यथेष्यते' । या. ३।२।१।२९ पृ. ७७०.

● त्यजेः विभागानुकूलो व्यापारो वाच्यः । रहस्य. पृ. ११४.

● त्यजेदेकं कुलस्यार्थे इति न्यायः । यत्रोभय कोटिकयोः एकत्र बह्वर्थहानिः द्वितीयस्वीकारे तु एकार्थहानिः, तत्र द्वितीयः पक्षः स्वीकार्यं इति भाव. । साहस्री. १८८.

● 'आचारवत्त्वाद्विज्ञात्' इत्यधिकरणे बहूनामनुग्रहाय 'त्यजेदेकं कुलस्यार्थे' इति न्यायेन आचारग्रहाय श्रुतिरेका अन्यथा नीयते, बहुत्वाच्च अन्याय्यत्वात् इति वाचितम् । पराग्न्यः. ५५।१. ● बहूनामह्नामनुग्रहाय ऐन्द्री गुणसाम्या कार्या 'त्यजेदेकं कुलस्यार्थे' इति न्यायेन बहुत्वमपि प्राबल्यकारणम् । नि. १२।२।७. ● यत्र तु कपर्दनिपातः ■ अन्यतरेण कृतार्थं.नात् अवश्यमेवैके अन्यतरस्मिन् भूयसामनुग्रहो युक्तः । 'त्यजेदेकं कुलस्यार्थे' इतिवत्, विधिप्रत्ययः परित्यज्यते । केवलप्रकृतिप्रयोगाभावात् तदनुग्रहार्थप्रयोजनाल्लब्धविधिन्यानुवादेन प्रवर्तते । या. ११२।११० पृ. ११६.

● त्यागः च देवता च जुहोतिलक्षे आहवियया आराद्द्रुपकारको प्रक्षेपेण सह समप्रधानौ वा । प्रक्षेपो होमाख्यमेव । भाट्ट. ४।१।७. ● त्यागश्च यागः । भा. ३।८।३।१०, ● त्यागः न मम इति शब्दयते विदेशस्थेनापि कर्तुम् । ३।८।७।१६, ● त्यागः नाम मनसा क्रियते । १०।२।१७।४७. ● त्यागः यथेष्टविनियोग्यत्वरूपस्वत्वनिवृत्तिरूपः । सु. पृ. १५३४, ● त्यागः होमकालीनः 'न मम' इति स्वार्थविनियोगार्हताख्यस्वत्वनिवृत्त्यात्मकः । सु. पृ. १९२५. ● त्यागे आवाहनादिनिगदेषु अग्नीषोमीयपशौ पशुपुरोडाशयाज्याविष्टकृयागे, निर्गुणस्यैवात्रेव विधानम् । भा. १०।४।१८।१६-३७.

● त्यागांशः प्रकरणात् प्रयाजादिवत् आराद्दुपकारकः । एतावान् विशेषः यत् परप्रयुक्तद्रव्यदेवतोपजीवित्वेन प्रतायात् परप्रयुक्त्यभावे स्वातन्त्र्येण तत्तद्द्रव्यदेवताऽऽक्षेपकत्व नास्ति । भाट्ट. ४।१।७, ● त्यागांशः. यागहोमादौ आराद्दुपकारकः, न तु द्रव्यदेवताऽऽदौ संनिपत्योपकारकः । ४।१।७, ● त्यागांशस्य विशेष्यतया प्रतीतस्य प्रक्षेपाङ्गत्वे प्रमाणाभावः । ४।१।७.

● त्यागातिरिक्त ऋत्विकर्म । आध्वर्यवादिकरणम् । भा. ३।७।८।१८-२०.

● त्यागादौ विधिगतस्यैव देवताशब्दस्य उच्चारण नियमः । विधिशब्दाधिकरणम् । भा. १०।४।१२।२३.

■ स्नात्वा दुस्तटिनी नदी इति न्यायः । यथा दुस्तटिनी नदी पतनभयात् स्नाने वर्जनीयैः अन्यथा स्नातनं भवत्येव, एवं दुष्पुरुषसङ्गोऽपि अवश्यमेव त्याज्यः इति । साहस्री. १२२.

* त्रयस्त्रिंशः स्तोमः अतिरात्रे बहिष्पवमाने काम्यो विहितः ' त्रयस्त्रिंशेन प्रतिष्ठाकामम् ' इति । वि. ५।३।४, * त्रयस्त्रिंशः स्तोमविशेषः अहरात्रे तृतीये-ऽहनि । ७।३।१०. * ' त्रयस्त्रिंशेन ( अतिरात्रेण ) प्रतिष्ठाकामम् ' अनाम्नानेन संख्यापूरणे समाम्नायपाठक्रमा-देव ता ऋचः आवर्तयितव्याः, न स्वनियमेन । भा. ५।१।६।११. * त्रयस्त्रिंशे अतिरात्रे विहितानां अष्टानां सूक्तानां पर्यासोत्तरस्थैव निवेशो न प्राक् बहिष्पवमाने । वि. ५।१।८, * त्रयस्त्रिंशे अतिरात्रे त्रिवृत्स्तोमके साम्नामागमेन वृद्धिर्न त्वभ्यासेन । १०।५।६, * त्रय-स्त्रिंशान्तः पृष्ठ्यः षडहः । त्रिवृत्–पञ्चदश–सप्तदश–एकविंश–त्रिणव–त्रयस्त्रिंशस्तोमैः क्रमेण युक्तानि षट् अहानि तत्र । अयं गवामयने पूर्वे पक्षसि कार्यः । १०।६।९.

* त्रयस्त्रिंशत. ( देवानाम् ) पात्नीवतभक्षणे अनुप-लक्षणम् । भा. ३।२।१५।३७.

* त्रयी इति वेद शब्दः ऋग्यजुस्सामसु प्रसिद्धः । भा १।३।१५. * त्रयी हि वैतानिककर्माधिकारे प्रवर्तते, तत्प्रसङ्गात् अवैतानिकं किंचिदुच्यते । शा. ७।४।२ पृ. ५४७. * 'त्रयीमार्गस्य सिद्धस्य ये त्वत्यन्त-विरोधिनः । अनिराकृत्य तान् सर्वान् धर्मशुद्धिर्न लभ्यते ॥' वा. १।३।२।८ पृ. १९४. * त्रयीविदः । वेदत्रयविदि त्रयीविच्छब्दप्रयोगात् त्रयीशब्दस्य च 'त्रयीविदो विदुः । ऋचः सामानि यजूंषि' इति समभि-व्याहारात् ऋग्यजुःसामविषयत्वावगतेः । मु. पृ. १५०४. * त्रयीविद्यः, त्रयी यस्य विद्या स त्रयीविद्यः, यस्त्रीन् वेदानधीते एवं सम्पद्यते । भा. ३।७।२।६.

* ' त्रयोदशरात्रमृद्धिकामा उपेयुः ' । तत्रैतत् । तत्र सत्रभूतद्वादशाहधर्मातिदेशः । वि. ८।२।५. * त्रयोदशरात्रादीनि रूपाणि आसनोपायिचोदनत्वात् । तत्र सत्रभूतद्वादशाहधर्मातिदेशः । भा. ८।२।५।१७.

* त्रायन्ते अपद्धानानुकूलरक्षणमर्थः । मणि. पृ. १४०.

■ त्रिंशच्च परार्थत्वात् । ३।२।१५।३७॥

ज्योतिष्टोमे पात्नीवतस्य ग्रहस्य याज्यायां ' ऐभिरग्ने सरथं ' इत्यस्यां ' पात्नीवतस्त्रिंशतं त्रींश्च देवान् ' इति तृतीयचरणः । एतदुक्तानां त्रयस्त्रिंशतो देवानां उपलक्षणं पात्नीवतग्रहशेषभक्षणमन्त्रे कर्तव्यं इति पूर्वपक्षे ऽस्मिन् सूत्रे सिद्धान्तमाह । त्रिंशत् च त्रयस्त्रिंशत् देवा अपि न्यायवत् नोपलक्षयितव्याः । परार्थत्वात् याज्यायां त्रय स्त्रिंशतां निर्देशस्य स्तुत्यर्थत्वात् । अग्नेः स्तुत्यर्थः तन्नि-र्देशः । इयं महानग्निः सर्वान् देवान् स्वकीयेन भागेन मादयति इति । तस्मात् पात्नीवतभक्षमन्त्रे त्रयस्त्रिंशतो नोपलक्षणीयाः । के.

■ त्रिंशदधिकरणम् । पात्नीवतभक्षणे त्रयस्त्रिंशतो नोपलक्षणं ज्योतिष्टोमे ॥

त्रिंशच्च परार्थत्वात् । ३।२।१५।३७ ॥

भाष्यम्— तस्मिन्नेव पात्नीवते मन्त्रः ( याज्या ) ' ऐभिरग्ने सरथं याह्यर्वाङ् नानारथं वा विभवो ह्यश्वाः । पत्नीवतस्त्रिंशतं त्रींश्च देवाननुष्वधमा वह मादयस्व ॥ ' इति । तत्र संदेहः किं त्रयस्त्रिंशतो देवानामुपलक्षणं कर्तव्यम्, उत नेति । किं प्राप्तम् । त्रयस्त्रिंशत देवान् उप-लक्षयेत् । कथम् ? पीयते हि सोमः त्रयस्त्रिंशद्भिः देवैः । एवं हि अग्नि अशीत् भक्षयिष्यति ' आ याहि अग्ने अर्वाचीन त्रयस्त्रिंशता देवैः सह, समानं रथमधिष्ठाय नानारथैर्वा । विभवन्ति हि ते अश्वाः । तदिदं अनु-ष्वधं आवह, त्रयस्त्रिंशत पत्नीवतो देवानागमय तर्पय च ' इति । अत हि अग्निं अशीत् भक्षयिष्यति त्रयस्त्रि-शतो देवाना सूक्ते, इति गम्यते । पत्नीवानभाक्तः गम्यः तत्परः सोमः । तस्मादुच्यते त्रयस्त्रिंशद्देवा उपलक्षयितव्या इति । ननु चोदनायां पत्नीवान् केवलोऽपि देवतात्वेन श्रूयते । सत्यम्, चोदनायां पत्नीवान् देवतात्वेन श्रूयते, न तु देवतान्तरं निषिध्यते । किमतो यद्येवम् ? एतदतो भवति, मान्त्रवर्णिकाः त्रयस्त्रिंशद्देवाः अविरुद्धाः चोदनायां प्रतीयन्ते इति । एवं प्राप्ते, ब्रूमः । न त्रयस्त्रिंशद्देवा उपलक्षयितव्या इति । नात्र मन्त्रे अग्नि-रूपता परिवेष्टा वा तर्पयिता वा अपेक्ष्यते । नात्र

इति मुख्यमेवोच्येत, ततः प्रतारणमेव स्यात् । अथ तु त्वमेवात्र दाता स्वामी, न वयं स्वामिनः इत्येतत्परं भवति, यथा लोके कश्चित् उच्येत ‘ किं त्वयि भवति निमन्त्रिते, त्वयैवान्ये निमन्त्रणीयाः ’ इति ततो वाक्यं संबद्धं भवति । चोदितकरणाच्च दृष्टार्थं भवति । माद-यस्व इत्यपि मुख्यस्य मद्व्यापभावात् एतेभ्यः इत्येतत् लक्षयति । वाक्यमपि अग्नेः दृष्टार्थमेव इति संप्रदान-लक्षणार्थं विज्ञायते । विस्पष्टं च तद्धितेन यत् अन्य-निरपेक्षमवगतं तत् मन्त्रानुरोधेन बाधितं न स्यात् । कथं पुनः ‘ पात्नीवतं ’ इति चोदिते अग्निर्देवता अवगम्यते, न पुनः त्रयस्त्रिंशद्देवता स्यात् ? अत आह ( भाष्य-कारः ) पत्नीवांश्च अग्निरिह गृह्यते न त्रयस्त्रिंशत्, अग्ने पत्नीवन् इति सामानाधिकरण्यदर्शनात् । ननु त्रिंशता-ऽपि सह सामानाधिकरण्यमस्ति, ‘ पत्नीवतस्त्रिंशतम् ’ इति । सत्यमस्ति । तथापि अत्र अग्निः पत्नीवान् गम्यते । तद्धितनिर्देशेन हि प्रातिपदिकार्थस्य संख्या-विशेषाभिव्यक्तिर्भवति । तत्र प्रातिपदिकार्थानन्यथा-संभवात् एकवचनान्तेन विग्रहो भवति, पत्नीवान् देवता अस्य इति । त्रिंशच्च नित्यं बहुवचनान्तः । तस्मात् तेऽप्युद्दिष्टाः इति देवतात्वाभाव इति ।

सोम— पूर्वातिदेशात् संगतिः । प्रयोजनं— पूर्वपक्षे ‘ पत्नीवद्भ्य इदं न मम ’ इत्युद्देश्यत्यागः, सिद्धान्ते तु ‘ पत्नीवते इदं न मम ’ इति ।

वि— ‘ पत्नीवन्तस्त्रयस्त्रिंशद्देवाह्वान् मादयेत्यमी । स्युर्वा न वा, याज्यमोक्तेर्देवत्वादुपलक्षणम् ॥, एकोऽ-ग्निर्वंशमानेन मादितोऽन्ये तु वह्निना । अतोऽग्निरेव देव-त्वामान्येषामुपलक्षणम् ॥ ’

भाट्ट— याज्यामन्त्रे त्रयस्त्रिंशतां देवतानां पत्नी-वच्छब्दसामानाधिकरण्यात् अग्निवत् निर्दोषत्वोपपत्तेः मद्भक्षणाच्च पात्नीवतस्य देवतात्वानगमात् तेषामपि उप-लक्षणं मन्यते । ( सिद्धान्तस्तु ) अग्नीत्सदृश ग्नाप्यता ते अग्निदेवेन सह मादयन्तु, यजमानस्तु अग्नये एव ददाति इत्यवगमात् अग्नेरेव देवतात्वम्, न त्रयस्त्रिंशताम् । एवं च पात्नीवतं इति तद्धितोऽपि भवति बहुवचन-ग्राहकप्रमाणे एकवचनेनैव विगृहीतो भवति इत्यपि लाघवम् । अतो नोपलक्षणीयास्ते ।

मण्डन— ‘ नैव त्रयस्त्रिंशदिहोपलक्ष्याः । ’

शंकर— ‘ त्रयस्त्रिंशादपीष्टाः । ’ नोहेरन् स्यादेव ।

● त्रीणि आर्षेयाणि यः संपादयितुं शक्नोति सः अधिक्रियते । चतुरार्षेयस्यापि त्रित्वसंपादने अस्ति सामर्थ्यम् । टुप्. ६।१।११।४१. ● ‘ त्रीन् परिधीन् ’ इति मन्त्रः अपूर्वप्रयुक्तः, न तु परिधित्रित्व-प्रयुक्तः । इति सकृदेव पठनीयः दर्शपूर्णमासयोः । भा. ९।१।५।११–१९.

‖ त्रयाणां द्रव्यसंपन्नः कर्मणो द्रव्य-सिद्धत्वात् । ६।१।८।३९ ॥

द्रव्यभिन्नाना त्रयाणां वर्णानां कर्माधिकारः इति पूर्वा-धिकरणे साधितम् । तेषामपि त्रयाणां वर्णानां मध्ये यो द्रव्यसंपन्नः स्यात् तस्यैव कर्माधिकारः, न दरिद्रस्य । कर्मणः द्रव्यसिद्धत्वात् । कर्म हि द्रव्येण सिद्धं भवति । द्रव्यशून्यः कर्म कर्तुं न शक्नोति । इति पूर्वः पक्षः ।

अनित्यत्वात्तु नैवं स्यादर्थाद्धि द्रव्यसंयोगः । ४० ॥

निर्धनस्य अग्निहोत्रादिकर्मसु नाधिकार इति पूर्वपक्षं सूत्रेण प्राप्त तुशब्देन निरस्यन् सिद्धान्तमाह । एवं अद्रव्यस्य नाधिकार इति यदुक्तं तन्न । कुतः ? अनित्य-त्वात् निर्धनत्वस्य । नहि जात्या कश्चित् अद्रव्यो नाम । अस्त्युपायो येन द्रव्यवान् भवति । हि यस्मात् अर्थात् जीवनार्थे द्रव्यसंयोगो भविष्यत्येव । तथा च जीवनार्थं द्रव्यलाभाय प्रयत्ने कृते तत्र पर्याप्तधनो भवति अग्नि-होत्रादि कर्मापि करिष्यति । तस्मात् अद्रव्यस्यापि कर्मा-धिकारः । के.

● ‘ त्रयाणां हविषां स्विष्टकृते न समवद्यति ’ लोपे धर्मे वाचिते । संकर्ष. १।४।२.

● ‘ त्रिः प्रथमामन्वाह त्रिरुत्तमाम् ’ इति त्रिरभ्यासः सामिधेन्योः प्रथमोत्तमयोः स्थानधर्मः, न रूपधर्मः । ( या कापि ( प्रथमा सामिधेनी स्यात्, तां त्रिरनुब्रूयात्, न तु ‘ प्र वो वाजा ’ इत्यामेवेत्यर्थः ) । भा. ९।१।५।४२.

¥ त्रिः प्रथमां त्रिरुत्तमामन्वाह इति न्यायेन परिधानीयायास्त्रिरावृत्तिः ( प्रथमा ऋचं त्रिवारं अनुवचनं कर्तव्यं उत्तमायाः अन्तिमायाश्च ऋचः त्रिः अनुवचनं कर्तव्यम् । इति वाक्यार्थः । परिधानं यया क्रियते सा अन्तिमा, ऋक् परिधानीया नाम ) । ऐतासा. १७।५।१३.

¥ त्रिकस्तृचे धुर्ये स्यात् । १०।५।३।१०॥

एकत्रिके क्रतुविशेषे त्रिकः स्तोमः धुर्ये धुरि साम्नि गायत्र्यानविशेषात्मके तृचे स्यात्, न तु एकस्यामृचि । धुर्ये इत्येकवचनं सामान्याभिप्रायम् । सर्वाण्येव धूर्यासानि तृचेषु स्युः । इति पूर्वः पक्षः ।

एकस्यां वा, स्तोमस्यावृत्तिधर्मत्वात् । ११ ॥ -

एकत्रिके क्रतौ धूर्यासानि एकस्यां एकैकस्यां ऋचि अभ्यासेन त्रिस्सम्पाद्यानि स्यात्, न तृचेषु । स्तोमस्य आवृत्तिधर्मत्वात् । 'आवृत्तं धूर्षु स्तुवते' 'पुनरावृत्तं पृष्ठैरुपतिष्ठते' इति आवृत्तिधर्मो उक्तः । तस्मात् धुरि साम ऋचि गेयम्, न तृचे । के.

● त्रिकस्तोमपूर्त्यर्थं एकत्रिके क्रतौ एकस्या एव ऋचस्त्रिरभ्यासेन । भा. १०।५।३।१०-११.

● त्रिकपालं वैष्णवम् । भा. १०।५।२।१२, ● त्रिकपाले वैष्णवे आग्नेयाष्टाकपालगतप्रथमकपालमन्त्रविषयः । १०।५।२।१२-३, ● त्रिकपाले वैष्णवे राजसूयगतपूर्वमिश्रपुरोडाशे ... सौमिकाज्यतिष्ठेहिराज्येनावदानत्वो धर्मानतिदिशति । ७।३।६।१७.

● त्रिणवः स्तोमः अतिरात्रे पवमाने काम्ये विहितः 'त्रिणवेनौजस्कामम्' । वि. ५।३।४, ● त्रिणवः ( त्रि. नव - ३×९ = २७ ) स्तोमविशेषः अतिरात्रे पञ्चमेऽहनि । ७।३।१०. ● त्रिणवे अतिरात्रे आगमेन संख्यापूरणं पाठक्रमेणैव ऋच आगमयितव्याः । भा. ५।२।६।१३. ● त्रिणवे अतिरात्रे विवृद्धानां षण्णां तृचानां पर्यासोत्तरं निवेशो न प्राक्, बहिष्पवमाने । वि. ५।३।४, ● त्रिणवे अतिरात्रे त्रिवृत्स्तोमके सामावापेन वृद्धिः न त्वभ्यासेन । १०।५।६.

¥ त्रिदशामरत्वन्यायः । भविष्यमाणानामपि त्रिदशानां ( देवानां ) दीर्घकालजीवित्वमात्रेण यथा अमराः निर्जराः इति व्यपदेशः तथान्येषां इत्यर्थः । समन्द्र. ● अन्तवत्त्वेऽपि मुक्ताकल्पेषु वाग्न्यादिस्वकार्यापेक्षया अधिककालावस्थायित्वाभिप्रायेण अनन्तत्वव्यपदेशः इति त्रिदशामरत्वन्यायेन , तदन्यथानुपपन्ने 'उपरमेऽङ्कोति-वान्तवत्त्वदोषपरिहारालाभात् । ( आधाराकलिहात् ११२।८।२२ अनु. ) । पराक्रमः ।

● त्रिपुटी च ज्ञान-ज्ञातृ-विषयरूपा ज्ञाने । मणि. पृ. १८.

● त्रिप्रवरस्यैव दर्शपूर्णमासादिकर्माधिकारः । एकार्षेयस्य, द्व्यार्षेयस्य, पञ्चार्षेयस्य च नास्त्यधिकार इति जैमिनेर्मतम् । अस्ति तेषामप्यधिकार. इति भाष्यकारमतम् । पञ्चार्षेयेणापि त्रय एव प्रवरा उच्चार्या इति मतान्तरम् । के. ६।१।११।४३.

● त्रिरात्रः अहीनविशेषः । तत्र अहीनद्वादशाहधर्मातिदेशः । वि. ८।३।५, ● त्रिरात्रस्य मध्यमेऽहनि षोडशी ग्रहो गृह्यते । 'मध्यमेऽहस्त्रिरात्रस्य' । १०।५।१, स चाग्रयणपात्रात् उत्पादनतर ग्राह्यः । १०।५।१०, स च तृतीयसवने एव ग्राह्यो न पूर्वयोः सवनयोः । १०।५।११. ● त्रिरात्रे-गर्गत्रिरात्रे आज्यदोहसामगानकाले लौकिकाक्षरैरेव वरनिधनम्, न वैदिकाक्षरैः । भा. ७।३।१२।१०, ● त्रिरात्रे द्वादशाहस्य आद्यानामेव त्रयाणामह्नां त्रिरात्रस्यातिदेशः, न तु येषाञ्चित् त्रयाणाम् । १०।५।११।१-६.

¥ त्रिवत्सश्च । १०।३।१६।६०॥

साद्यस्के सोमे साण्डः त्रिवत्सः सोमक्रयणः । प्रकृतितश्च चोदकप्राप्तानि क्रयद्रव्याणि 'अजया क्रीणाति, हिरण्येन क्रीणाति, वस्त्रेण क्रीणाति, अश्वयेन क्रीणाति, वाससा क्रीणाति' इत्येवमादीनि । तत्र त्रिवत्सः प्रत्यक्षः क्रीणातिना सम्बध्यते चोदकप्राप्तं तु आनुमानिकम् । तस्मात् त्रिवत्सः चोदकप्राप्तस्य कृत्स्नस्य क्रयार्थस्य निवर्तकः । एको पक्ष इतिवत् इति चकारार्थः । सिद्धान्त इत्योनः ।

तथा च लिङ्गदर्शनम् । ६१ ॥

साद्यस्के सोमे साण्डेन त्रिवत्सेन सोमक्रयणेन चोदकप्राप्तानि सर्वाणि सोमक्रयद्रव्याणि बाध्यन्ते इत्यत्र

लिङ्गदर्शनं तथा च भवति । अपरस्मिन् सायस्के 'स्त्री गौः सोमक्रयणी, म्लावृत्ता लेया स्पर्धा' इत्युक्तम् । तत्र यतः स्त्री गौः निखिलसोमक्रयसाधनं बाधित्वा सर्वस्थाने स्थिता, अतः स्पर्धा फलतो निवृत्तः इति तदर्थः । तथा च इतरसाद्यस्के यथा स्त्री गौः सर्वबाधिका, तथा प्रथमे साद्यस्के षाण्डो गौः निखिलक्रयसाधनबाधकः इति लिङ्गदर्शनमुक्तम् । के.

✱ त्रिवत्साः पिशङ्गाः । इष् ११।२।१३।५४.
✱ त्रिवत्सेन षाण्डेन साद्यस्के सोमक्रयार्थे विहितेन प्राकृतसर्वक्रयद्रव्यस्य बाध. । भा. १०।३।१६।६०–६१.
✱ त्रिवत्से सर्वक्रयद्रव्यस्थानापन्ने यथा आरुण्यस्य निवेशः तथा कौस्तुभे द्रष्टव्यम् । भाट्ट. ३।१।६ पृ. ९९९.

✱ त्रिवत्साधिकरणम् । साद्यस्के त्रिवत्सेन षाण्डेन सोमक्रयणेन प्राकृतस्य कृत्स्नस्य क्रयसाधनस्य बाधः ॥

त्रिवत्सश्च । १०।३।१६।६० ॥

भाष्यम्— इद साद्यस्कंसमाम्नातं चिह्नम् । अथापि करणान्तरं प्रस्तूयते । अस्ति साद्यस्के 'षाण्डस्त्रिवत्सः सोमक्रयणः स्पर्धमानानाम्' इति । सन्ति क्रयार्थानि द्रव्याणि चोदकप्राप्तानि 'अजया क्रीणाति, हिरण्येन क्रीणाति, ऋषभेण क्रीणाति, अश्वतरेण क्रीणाति, वाससा क्रीणाति' इत्येवमादीनि । तत्र संशयः किं त्रिवत्सः ऋषभस्य निवर्तकः, अथवा सर्वेषां क्रयार्थानां द्रव्याणामिति । किं प्राप्तम् ? ऋषभस्य निवर्तक इति । कुतः ? पुंस्त्वात् । पुंस्त्वेन सामान्येन पुंसोऽसौ विधीयते । कुतः पुंस्त्वम् ? षाण्डश्रवणात् । तस्मात् ऋषभस्य निवर्तक इति ।

एवं प्राप्ते, ब्रूमः । त्रिवत्सश्च । किम् ? कृत्स्नस्य क्रयार्थस्य निवर्तकः इति । प्रत्यक्षः स क्रीणातिना संबध्यते, तेन चोदकप्राप्तं निवर्तयति । तस्मात् कृत्स्नस्य क्रयार्थस्य निवर्तक इति ।

तथा च लिङ्गदर्शनम् । ६१ ॥

भाष्यम्— एवं च कृत्वा लिङ्गं दर्शयति । किं लिङ्गं भवति ? एवमाह । अपरस्मिन् साद्यस्के 'स्त्री गौः सोमक्रयणी म्लावृत्ता लेया स्पर्धा' इति । यदि सर्वस्य क्रयार्थस्य निवर्तिका स्त्री गौः, तत एव एकाकिनी तेन सह स्पर्धिष्यते इति । इतरथा सर्वस्य अनिवर्तिकाया सद्वस्य स्पर्धा भवेत् । तत्रास्या वर्तमानाया स्पर्धायाम्, म्लावृत्ता लेया स्पर्धा, इति नोपपद्यते । तस्मात् सर्वस्य निवर्तिकेति । त्रिवत्सोऽपि तत्समानश्रुतिः । सोऽपि च सर्वस्य निवर्तक इति ।

एवं वा । यदि त्रिवत्सः सर्वेषां निवर्तकः, तदा सं अप्रबाध्यमाना साद्यस्कान्तरे स्त्रीगवी श्रूयमाणा केवला स्यात् । तत्र 'म्लावृत्ता लेया स्पर्धा' इति दर्शनमुपपद्यते । इतरथा हि केवलस्य ऋषभस्य अपवाधितात् त्रिवत्सं निवर्तयन्ती सहमप्यपनिता स्पर्धेतापि । तत्र 'म्लावृत्ता लेया स्पर्धा' इति वचनं नावकल्पते । अतः कृत्स्नस्य क्रयुदक्षिण्यस्य निवर्तकत्रिवत्स इति ।

सोम— त्रिवत्सश्च कृत्स्नस्य निवर्तकः इति सूत्रार्थः ।

वि— 'त्रिवत्सेनर्षभो बाध्यः कृत्स्नं वा क्रय-साधनम् ।, ऋषभ. पुंस्त्वात्, न क्रयोद्देश-विधानतः ॥' क्रयसाधन कृत्स्न बाध्यम् ।

भाट्ट— साद्यस्के 'त्रिवत्सः षाण्डः सोमक्रयणः' इत्यत्र 'कर्तव्य.' इति क्रियापदाध्याहारापत्त्यभावे तदुपात्तभावनाया अप्राप्तत्वात् त्रिवत्सत्वस्य तावत् विधेयत्व-मावश्यकम् । तत्र यदि तावत् क्रियोद्देशेन विधीयते, तदा ऋषभादिपुंस्त्वेव अजादिषु स्त्रीष्वपि प्रसक्तौ षाण्ड-शब्दस्य अप्रयुक्तानुवादत्वापत्तेः, विशिष्टोद्देशे च वाक्य-भेदात् षाण्डानुवादेनैव त्रिवत्सत्वविधिः । तत्र च 'ऋषभेण क्रीणाति' इत्यनेन क्रये अपि प्राप्तत्वात् सोमक्रयणः इत्यनुवादमात्रम् । न च षाण्डस्य अग्नीषोमीयादावपि सत्त्वेन तत्र त्रिवत्सत्वप्रसक्ते. तस्यापि अप्रयुक्तानुवादत्वा-पत्ति, आवश्यके अन्यतरस्य अप्रयुक्तानुवादत्वे षाण्ड-स्यैव तदौचित्यात् । अतश्च सर्वत्रैव त्रिवत्सत्वविधानान्न कस्यापि द्रव्यस्य अनिवृत्तिः । इति प्राप्ते, न क्रियोद्देशेन त्रिवत्सत्वमात्र विधीयते, येन षाण्डादिपदस्य अप्रयुक्ता-नुवादत्वापत्तिः । अपि तु त्रिवत्सत्वपुंस्त्वैकत्वविशिष्टद्रव्या-न्तरस्यैव क्रियोद्देशेन विधिः त्रिवत्सत्वादिकस्य करणान्तर-मेव वा एकप्रसरताभङ्गभयात् द्रव्यपरिच्छेदद्वारा विधानात् अवान्तरभेदः । अतश्च पुंस्त्वेन स्त्रीत्वस्यापि बाधात्

स्यात्' इति सूत्रेण सिद्धान्तं वदता उपपादयिष्यते । सु पृ. २१७. * 'त्रिवृदग्निष्टोमः' इत्यादौ स्तोत्रविशेषोपस्थापकप्रकृतिलिङ्गाभावात् अविशेषात् सर्वस्तोत्रेषु त्रिवृदन्वयः । स्तोम १०।६।७. * त्रिवृदग्निष्टोमः । यत्र त्रिवृत्संख्या स्तोमविषया एव नियम्यते, न साधनमात्रे । भा. १०।६।७।२२-२३.

* त्रिवृदादयः चत्वारः स्तोमाः अग्निष्टोमे विधन्ते त्रिवृत् पञ्चदश, सप्तदशः एकविंश इति । वि. ५।३।१९.

[illegible] त्रिवृच्छब्दार्थभवत्वाधिकरणम् ॥

अथवा त्रिवृच्छब्दस्यार्थविचारः एवात्र लोकवेदयोर्विप्रतिपत्तौ निरूप्यते । अत्रायं पूर्वपक्षिणोऽभिसन्धिः, त्रिवृच्छब्दो हि लोके 'त्रिवृद्रज्जु, त्रिवृद् ग्रन्थिः' इति त्रिगुणरज्ज्वादौ प्रसिद्धः । वेदे तु 'त्रिवृद्बहिष्पवमानम्' इत्युक्त्वा तृचत्रय समनुक्रान्तम् । तृचत्रयस्थ स्तोत्रीयऋक्त्रयवचनः । तेन वेदे स्तोत्रीयानवकवचनस्त्रिवृच्छब्दः प्रतीयते । तथा चरुशब्दश्च लोके स्थालीवचनः प्रसिद्धः । वेदे तु 'आदित्यः प्रायणीयश्चरुः' इति विधाय 'अदितिमोदनेन' इति वचनात् याज्ञिकप्रसिद्धेश्च अनवस्त्राविताग्तरूष्मपक्वौदनवचनः चरुशब्दो विज्ञायते । एवं 'आश्ववालः प्रस्तरः' इत्यत्रापि लोकप्रसिद्ध्या अश्ववालः तुरगकेशः प्रतीयते । वेदे तु काशेषु अश्ववालशब्दप्रसिद्धिः । एवं हि श्रूयते 'यज्ञो वै देवेभ्योऽश्वो भूत्वाऽपाक्रामत्, सोऽपः प्राविशत्, स वालधौ गृहीतो वालमभोचत्, ते वालाः काशाः गताः' इति । तेन लौकिकवैदिकप्रयोगविप्रतिपत्तौ विनिगमनाहेत्वभावात् विकल्प एवेति । [illegible] च लोकप्रसिद्धेर्धर्मं प्रति अनङ्गत्वात् वेदप्रसिद्धास्वीकारः एव युक्तः, पदार्थावधारणे विशेषाभावात् । तदुक्तं 'नैतदेवं पदार्थेषु नहि वेदो विशिष्यते । अदृष्टार्थे तु वाक्यार्थे लोकात् स व्यतिरिच्यते ॥' इति । (भा. पृ. २२२) । अथवा लौकिक्येव बलीयसी । सा हि वेदनिरपेक्षैव प्रवर्तते । वेदप्रसिद्धिस्तु वाक्यशेषगतलोकप्रसिद्धपदसमभिव्याहारसापेक्षा । तेन लोकप्रसिद्धेर्बलीयस्त्वात् [illegible] लोकविरोधः, तत्र भवतु वैदिकार्थस्वीकारः, लोकाविप्रतिपत्तौ तु लोकप्रसिद्धार्थस्वीकार एव । यथा सति अर्थवादस्यापि 'आदित्यो वै यूपः' 'यजमानः प्रस्तरः' 'स्वर्गो लोक आहवनीयः' इतिवत् गौण्या वृत्त्या लौकिकार्थप्रशंसापरत्वमेवेति । तथा चाज्यस्मृत्यादिप्रसिद्धिरपि एतत्पक्षानुगुणा । यदाह 'कार्पासमुपवीतं स्याद् विप्रस्योर्ध्ववृतं त्रिवृत् ।' (मनु. २।४४) 'त्रिवृता ग्रन्थिनैकेन' इति च ॥ (मनु. २।४३) न च लोकप्रसिद्धस्य त्रिवृच्छब्दस्य बहिष्पवमानसामानाधिकरण्यासंभवेन वैदिकार्थपरिग्रहः इति वाच्यम् । यतः स्तोत्रीयानवकवचनत्वेऽपि बहिष्पवमानस्तोत्रस्य तत्साध्यत्वात् सामानाधिकरण्यानुपपत्तेस्तदवस्थत्वात् । अथ तत्र कार्यकारणयोरैक्योपचारात् सामानाधिकरण्यम्, तदत्रापि त्रिगुणयज्ञोपवीतस्यापि 'यज्ञोपवीतिना कर्म कर्तव्यम्' इत्यधिकारहेतुत्वात् कार्यकारणभावोपपत्तेः नानुपपन्नम् । तेन उक्तन्यायेन लोकप्रसिद्धेर्बलीयस्त्वात् लौकिकार्थपरिग्रह [illegible] । अथ प्रसिद्धितुल्यत्वात्, तदा लौकिकार्थस्यापि वेदविरोधाभावेन विप्रतिपत्तौ सत्यां विकल्प एवेति ।

एवं प्राप्ते, अभिधीयते । भवेदेवं यदि अत्र लौकिकवैदिकपदार्थयोस्तुल्यत्वं भवेत् । अपूर्वसिद्ध्यर्थं हि वेदार्थानुष्ठानम् । तत्र वाक्यार्थवत् पदार्थोऽपि यत्र वेदेनैव प्रतिपादितोऽस्ति, तत्र वैदिकपदार्थानुष्ठानादेव अपूर्वसिद्धिः । अन्यथा वेदस्य तत्पदार्थप्रतिपादनवैयर्थ्यप्रसङ्गात् । यत्र पुनर्वैदिकः पदार्थो नास्ति, तत्र लौकिकपदार्थानुष्ठानादेव अपूर्वसिद्धिर्वेदानुमतेति युक्तम् । तत्र 'त्रिवृद्बहिष्पवमानम्' इत्युक्त्वा तृचत्रयानुक्रमणं तदेव अर्थवद्भवति, यदि लौकिकपदार्थपरित्यागेन स्तोत्रीयानवकवचनः त्रिवृच्छब्दः. अन्यथा अध्ययनविध्यननुमतो भवेत् । तेन यद्यपि तृचत्रयानुक्रमणं नास्ति 'त्रिवृदग्निष्टोमः' इत्यादौ, तथापि स्तोत्रीयानवकवचनः त्रिवृच्छब्दो विज्ञायते । न चेदर्थ संभवति ।

यद्यपि 'अक्षस्तोमः' इत्यादौ समुदायवचनं स्तोमशब्द, तथापि 'पञ्चदशः स्तोमो भवति' इति वेदे श्रवणात् डट्प्रत्ययान्तस्य च पञ्चदशशब्दस्य व्याकरणानुशासनेन याज्ञिकप्रसिद्धेश्च स्तोत्रीयासमुदायवचनत्वात् तत्समानाधिकरणोऽयं स्तोमशब्दः स्तोत्रीयासमुदायवचनो विज्ञायते । एवं 'त्रिवृदग्निष्टोमः' इत्यादौ त्रिवृत्समभिव्याहारात् स्तोत्रीयासंख्यार्थत्वमेवेति अनुसन्धेयम् । न च मनुवचन-

त्वात्' इति सूत्रेण सिद्धान्तं वदता उपपादयिष्यते । सु वृ. २१७. ● 'त्रिवृदग्निष्टोमः' इत्यादौ स्तोत्रविशेषोपस्थापकप्रकृतिलिङ्गाभावात् अविशेषात् सर्वस्तोमेषु त्रिवृत्त्वान्वयः । सोम. १०।६।६. ● त्रिवृदग्निष्टोमः । अत्र त्रिवृत्संख्या स्तोमविषया एव नियम्यते, न साधनमात्रे । भा. १०।६।७।२२-२३.

● त्रिवृदादयः चत्वारः स्तोमाः अग्निष्टोमे विद्यन्ते त्रिवृत् पञ्चदशः सप्तदशः एकविंश इति । वि. ५।३।१५.

## ॥ त्रिवृच्चर्वश्वशालाधिकरणम् ॥

अथवा त्रिवृच्चर्वश्वशालादिशब्दा एवाम लोकवेदयोर्विप्रतिपत्तौ निरूप्यन्ते । अत्रायं पूर्वपक्षिणोऽभिसन्धिः, त्रिवृच्छब्दो हि लोके 'त्रिवृद्रज्जुः, त्रिवृद् ग्रन्थिः' इति त्रिगुणरज्ज्वादौ प्रसिद्धः । वेदे तु 'त्रिवृद्बहिष्पवमानम्' इत्युक्त्वा तृचत्रये समनुगानात् तृचत्रयस्य स्तोत्रीयनवकवचनः । तेन वेदे स्तोत्रीयानवकवचनस्त्रिवृच्छब्दः प्रतीयते । तथा चरुशब्दश्च लोके स्थालीवचनः प्रसिद्धः । वेदे तु 'आदित्यः प्रायणीयश्चरुः' इति विधाय 'अदितिमोदनेन' इति वचनात् वाक्यप्रसिद्धेश्च अनवस्रावितान्तरूष्मपक्वौदनवचनः चरुशब्दो विज्ञायते । एवं 'आश्वबाल प्रस्तर.' इत्यत्रापि लोकप्रसिद्ध्या अश्ववालः तुरगकेशः प्रतीयते । वेदे तु काशेषु अश्ववालशब्दप्रसिद्धिः । एव हि श्रूयते 'यज्ञो वै देवेभ्योऽश्वो भूत्वाऽपाक्रामत्, सोऽपः प्राविशत्, स वालधी गृहीतो वाल्यनमोनत्, ते वाला: काशता गता' इति । तेन लौकिकवैदिकप्रयोगविप्रतिपत्तौ विनिगमनाहेत्वभावात् विकल्प एवेति । न च लोकप्रसिद्धेर्थं प्रति अनन्यत्वात् वेदप्रसिद्धार्थस्वीकारः एव युक्तः, पदार्थावधारणे विशेषाभावात् । तदुक्तं 'नैतदेवं पदार्थेषु नहि वेदो विशिष्यते । अदृष्टार्थे तु वाक्यार्थे लोकात् स हातिरिच्यते ॥' इति । ( वा. पृ. २९२ ) । अथवा लौकिकत्वेन बलीयसी । सा हि वेदनिरपेक्षैव प्रवर्तते । वेदप्रसिद्धिस्तु वाक्यशेषगतलोकप्रसिद्धपदसमभिव्याहारसापेक्षा । तेन लोकप्रसिद्धेर्बलीयस्त्वात् यत्र लोकाविरोधः, तत्र भवतु वैदिकार्थस्वीकारः, लोकविप्रतिपत्तौ तु लोकप्रसिद्धार्थस्वीकार एव । तथा सति अर्थवादस्यापि 'आदित्यो वै यूपः' 'यजमानः प्रस्तर.' 'स्वर्गो लोक आहवनीयः' इतिवत् गौण्या वृत्त्या लौकिकार्थप्रशंसापरत्वमेवेति । तथा शास्त्रसमन्वादिप्रसिद्धिरपि एतत्पक्षानुगुणा । यदाह 'कार्पासमुपवीतं स्याद् विप्रस्योर्ध्ववृतं त्रिवृत् ।' ( मनु. २।४४) 'त्रिवृता ग्रन्थिनैकेन' इति च ॥ ( मनु. २।४३)

न च लोकप्रसिद्धस्य त्रिवृच्छब्दस्य बहिष्पवमानसामानाधिकरण्यासंभवेन वैदिकार्थपरिग्रहः इति वाच्यम् । यतः स्तोत्रीयानवकवचनत्वेऽपि बहिष्पवमानस्तोत्रस्य तत्साध्यत्वात् सामानाधिकरण्यानुपपत्तेस्तदवस्थत्वात् । अथ तत्र कार्यकारणयोरेकत्वोपचारात् सामानाधिकरण्यम्, तदत्रापि त्रिगुणयज्ञोपवीतस्यापि 'यज्ञोपवीतिना कर्म कर्तव्यम्' इत्यधिकारहेतुत्वात् कार्यकारणभावोपपत्तेः नानुपपन्नम् । तेन उक्तन्यायेन लोकप्रसिद्धेर्बलीयस्त्वात् लौकिकार्थपरिग्रह एव । अथ प्रसिद्धितुल्यत्वम्, तदा लौकिकार्थेष्वपि वेदविरोधाभावेन विप्रतिपत्तौ समत्वात् विकल्प एवेति । एवं प्राप्ते, अभिधीयते । सत्येवं यदि अत्र लौकिकवैदिकपदार्थयोस्तुल्यत्वं भवेत् । अपूर्वसिद्ध्यर्थं हि वेदार्थानुष्ठानम् । [illegible] वाक्यार्थवत् पदार्थोऽपि यत्र वेदेनैव प्रतिपादितोऽस्ति, तत्र वैदिकपदार्थानुष्ठानादेव अपूर्वसिद्धिः । अन्यथा वेदस्य तत्पदार्थप्रतिपादनवैयर्थ्यप्रसङ्गात् । यत्र पुनर्वैदिकः पदार्थो नास्ति, तत्र लौकिकपदार्थानुष्ठानादेव अपूर्वसिद्धिर्वेदानुमतेति युक्तम् । तदत्र 'त्रिवृद्बहिष्पवमानम्' इत्युक्त्वा तृचत्रयानुक्रमण तत्रैव आम्नास्यति, यदि लौकिकपदार्थपरिग्रहेण स्तोत्रीयानवकवचन. त्रिवृच्छब्दः अत्र अवचनविध्यनुमतो भवेत् । तेन यथापि तृचत्रयानुक्रमणं नास्ति 'त्रिवृदग्निष्टुदग्निष्टोम.' इत्यादौ, तथापि स्तोत्रीयानवकवचनः त्रिवृच्छब्दो विज्ञायते । न चैतत् संभवति ।

यद्यपि 'अग्निष्टोमः' इत्यादौ समुदायवचन स्तोमशब्द, तथापि 'पञ्चदश. स्तोमो भवति' इति वेदे श्रवणात् दशत्वावान्तरस्य च पञ्चदशशब्दस्य व्याकरणानुशासनेन पञ्चिप्रसिद्धेश्च स्तोत्रीयासमुदायवचनत्वात् तत्समानाधिकरणोऽयं स्तोमशब्द. स्तोत्रीयासमुदायवचनो विज्ञायते । एवं 'त्रिवृदग्निष्टुदग्निष्टोमः' इत्यादौ त्रिवृत्समभिव्याहारात् स्तोत्रीयानवकार्थत्वमेवेति नानुपपन्नम् । न च मनुवचन-

विरोधः, मनुवचनस्यापि लौकिकप्रयोगान्तर्निविष्टत्वेन अविरोधकत्वादिति । तदुक्तं 'त्रिवृच्छब्दः प्रयुक्तो य स्तोत्रीयानवकं प्रति । कस्तं शक्तस्ततोऽन्यत्र नेतुं जन्मशतैरपि ॥' इति । ( बा. पृ. २२३ )। यत्र पुनर्वेदप्रसिद्धार्थपरिग्रहो न संभवत्येव, यथा 'त्रिवृता यूपं परिवीय आग्नेयं सवनीयं पशुमुपाकरोति' इत्यादिषु, तत्र लोकप्रसिद्धार्थस्वीकार एव न्याय्यः, न तु अन्यथापि इति । एवं चर्वादिशब्दानामपि उक्तन्यायेन वेद-प्रसिद्धार्थस्यैव अपूर्वसिद्ध्युपायत्वम्, न लौकिकस्य । तथाच 'आदित्यः प्रायणीयश्चरुः' 'आदित्याः प्रस्तरः' इति विधाय 'अदितिमोदनेन' इति, 'ये यागाः कपाला यस्ताः' इति च ओदनकपालयोः स्तुत्यवगमात् विधिस्तुत्योश्च समानविषयत्वनियमात् तयोरेव चरु प्रस्तरशब्दार्थ-त्वम् । न च गौणत्वाश्रयणेन लोकप्रसिद्धस्थालीपुरग-वादस्तुतिरेवेयम् 'आदित्यो वै यूपः' 'यजमानः प्रस्तरः' 'स्वर्गो लोक आहवनीयः' इतिवत् भविष्यतीति वक्तव्यम् । यतो गत्यन्तरासंभवेन हि तत्र तथा आश्रि-तम् । न हि आदित्यादीनां यूपादिरूपत्वं संभवति । इह पुनरोदनस्य यागसाधनत्वसंभवात्, कपालस्य च प्रस्तर-रूपत्वसंभवात् वाक्यशेषात् तदर्थनिर्णय एवेति । तदुक्तं 'अर्थवादवशाऽप्यत्र प्रतिपत्तिर्बलीयसी । तद्गुणाभ्यामृते नास्य तथाप्यस्ति प्रयोजनम् ॥' इति । ( बा. पृ. २२३ )। न च 'संदिग्धेषु वाक्यशेषान्निर्णयः' इत्यनेन तुल्यार्थत्वम्, यतो तत्र हि शब्दार्थसंदेहे वाक्यशेषान्निर्णीयते, तत्र तन्न्यायविषयत्वमेव । इह पुनर्लोकवेदयोः त्रिवृदादिपदेषु अर्थद्वयस्य असंदिग्धत्वेन लौकिकस्यार्थस्य वैदिकेनार्थेन बाध एव, न विकल्प इति व्युत्पाद्यते । अतो न तुल्यार्थत्वमिति । तदुक्तं 'लौकिकी प्रतिपत्तिर्हि स्वार्थे निराशङ्का स्थिता । वैदिक्यपि तथा स्वार्थे बाध्यते न विपर्ययात् ॥' इति । ( बा. पृ. २२४ )। प्रयोजनम्—पूर्वपक्षे विकल्पेन लौकिक-वैदिकार्थोपादानं यदि पूर्वपक्षः । सिद्धान्ते तु लौकिकार्थ-बाधेन वैदिकार्थोपादानमेवेति । सूत्रं तु शास्त्रस्थैव प्रतिपत्तिर्बलीयसी, धर्मस्य अपूर्वात्मनः तन्निमित्तत्वात् शास्त्रनिमित्तत्वादिति । टीका.

¶ त्रिवृच्चर्वाद्यर्थाधिकरणम् । ( १।३।४।९ सूत्रे ) लोकशास्त्रप्रदेशयोर्विरोधे बलाबलविचारः ॥

वा— 'त्रिवृच्चर्वाश्वबालादेर्लौकिकोऽन्योऽर्थः प्रती-यते । वेदे तदभियुक्तैश्च तस्मादन्यो विलक्षणः ॥ तत्र किं तुल्यकल्पत्वात् पदार्थे लोकवेदयोः । मता विप्रतिपत्तिः स्यादथवैका बलीयसी ॥ लोके तावत् त्रिवृच्छब्दस्त्रिगुणत्वस्य वाचकः । त्रिवृद्रज्जुस् त्रिवृद् ग्रन्थिर् वेदे तु नवके स्थितः ॥' त्रिवृत् बहिष्पवमाने इत्युक्तास्तृचेषु नवसु ऋक्षु इति स्तोत्रीया-स्वृङ्नवकवचन एव त्रिवृच्छब्दो विज्ञायते ।

'तथाऽयं चरुशब्दोऽपि लोके स्थालीनिबन्धन । याज्ञिकानां च वेदे च प्रसिद्धस्त्वोदनं प्रति ॥' अनवस्राविताऽन्तरूष्मपक्वौदनवचनो हि याज्ञिकानां चरु-शब्दः प्रसिद्धः । तथा वेदेऽपि 'आदित्यः प्रायणीयः पयसि चरुः' इति विहिते पश्चाच्छ्रुतात् 'अदिति-मोदनेन' इति वचनाच्च ओदनवचनत्वं ज्ञातम् ।

एवं 'आश्ववालः प्रस्तरः' इति अश्ववालीयशब्दगतः प्रस्तरः लोकप्रसिद्ध्या विज्ञायते । वैदिकवाक्यशेषात्तु काशेषु अश्ववालप्रसिद्धिः । एवं हि श्रूयते 'यज्ञो वै देवेभ्योऽश्वो भूत्वाऽपाक्रामत् सोऽपः प्राविशत्' 'स वालेभ्यो गृहीतः स यस्मात् मुक्त्वा विवेश ह । ते वालाः काशाः यतः काशोऽयं प्रस्तरस्तु तैः ॥'

'पैलक्ष्यौ विधृती ये च ते इत्यश्ववालिके । लोके सिद्धे तथा वेदे काशानामेव मूलके ॥ यव-मादिषु सर्वेषु प्रतिपत्तिविपर्यये । प्रतिपत्तेः समा-नत्वाद्विकल्पो हि प्रसज्यते ॥' ननु च लोकप्रसिद्धेः धर्मं प्रति अनङ्गत्वात् वेदप्रसिद्धिरेव ज्यायसी । 'वैरा-ग्येयं पदार्थेषु नहि वेदो विशिष्यते । अदृष्टहेतु-वाक्यार्थे लोकात् स हातिरिच्यते ॥ तस्मादुभय्यपि त्वेषा प्रतिपत्तिः समा भवेत् । यदि वा पूर्वभावि-त्वात् लौकिक्येव बलीयसी ॥' वेदनिरपेक्षा हि लोकप्रसिद्धिः आत्मानं लभते । वैदिकी पुनः लोक-प्रसिद्धपदान्तरसमानाधिकरण्येन सिध्येत् 'तत्र लोका-विरुद्धा या वैदिकी सैव गृह्यते । लोकसिद्धिं व्यति-क्रम्य साऽऽत्मानं नैव विन्दति ॥' 'लोकदर्शन-

द्विरोधस्य' इति तेषु लौकिकेषु पदार्थेषु अदर्शनात् विरोधस्य अर्थवादानां च अन्यपरत्वेन गुणवादमात्रत्वात्। आदित्ययूप–यजमानप्रस्तर–स्वर्गाह्वनीयादिवचनवत् कथमपि प्ररोचनाक्षेपत्वात्, ...दन्यव्यापाररहित-वाक्यं न पदार्थप्रतिपत्त्यङ्गत्वमभ्युपगम्यते। तदाश्रयणे च विधिविरोधप्रसङ्गात् तेष्वेव वा दर्शनात् विरोधस्य इत्यभिप्रायः। तथा शास्त्रस्थमन्वादिप्रसिद्धिरपि असत्यलक्षणगुणैव। यथा आह 'कार्पासमुपवीतं स्याद् विप्रस्योर्ध्ववृतं त्रिवृत्।' (मनु. २।४४) 'त्रिवृता ग्रन्थिनैकेन' (मनु. २।४२) इति। तस्मात् ममाऽपि तावत् भवतु। इति प्राप्तेऽभिधीयते। 'शास्त्रस्था प्रतिपत्तिर्या सैवात्र ज्यायसी भवेत्। धर्मस्य तन्निमित्तत्वात् ससाधनफलात्मनः॥ अर्थवादकृताऽप्यर्थप्रतिपत्तिर्बलीयसी। तदाश्रयत्वादृते चान्यत् तस्या नास्ति प्रयोजनम्॥ गौणो वा यदि वा मुख्यो वेदेनाश्रीयते हि यः। स धर्मसाधनत्वेन पदार्थोऽध्यवसीयते॥ त्रिवृच्छब्दः प्रयुक्तो यः स्तोत्रीयानवकं प्रति। धर्मत्वं वाच्यमानोऽन्यत्र नेतुं जन्मशतैरपि॥' तेन यत्र 'त्रिवृद्भिः होमः' इति श्रूयते, तत्र तेनैवार्थेन भवितव्यम्। यद्यपि स्तोमशब्दो यद्यपि ब्राह्मणस्तोम इत्यादिषु समुदायमात्र-वचनत्वेन प्रसिद्धः, तथापि 'त्रिवृदेव स्तोमो भवति' 'पञ्चदशः स्तोमो भवति' इति वेदे श्रवणात् 'स्तुतेश्च मानं स्तोमः' इति याज्ञिकस्मरणात्, तथा 'स्तोमे डविधिः पञ्चदशाद्यर्थः' (पा० ५।१।५७ सूत्रे वार्तिकं तस्य परिमाणम् इत्यनुवर्तते। स्तोमे स्तुतेः परिमाणे वाच्ये संख्याशब्दात् डप्रत्ययो भवति। डित्वं टिलोपार्थम्) इति व्याकरणशास्त्रप्रसिद्धेः अवश्यमेव त्रिवृदादिषु लोकप्रसिद्धिरतिक्रमणीया। यत्तु मनुवचनम्, तत् समयाभावात् बलवत्त्वेनापि मुच्यते। यद्वा तत्रापि नवतन्तुकमेव त्रिवृच्छब्दात् प्रतीयते। तथा स्वारसिकत्वमपि इति। यद्वा यज्ञोपवीते नवके दृष्टः, तथाऽत्र स्तोत्रीयागतेऽपि, इति यत्रैव तु संभवः, तत्रैव तत्प्रसिद्ध्यनुपाती स्मरति। यत्र तु संख्यान्तरविषयत्वम्, तत्र 'वैदिकोऽपि गौणो यस्मात् लौकिको वा मुख्यः' इति वाक्ये विषये मुख्यार्थत्वात् लौकिकप्रसिद्धिरेव ग्रहीतव्या इत्युत्तरसूत्रे वक्ष्यामः 'चोदितं तु प्रतीयेताविरोधात्' इति।

तथा चरुशब्दोऽपि अन्यान्यनेकार्थाभिधानप्रतिबद्धशक्तित्वात् एकत्र नियम्यमानो याज्ञिकवेदप्रसिद्धिभ्यामोदनविषय एव भवति।

आश्वबालैक्षवीशब्दौ तु यदि तावत् वैदिकप्रयोगलब्धसमुदायप्रसिद्धित्वेन लौकिकीं अवयवप्रसिद्धिं जहीतः, ततः सिद्धमेव शास्त्रस्थप्रतिपत्तिबलीयस्त्वम्। अथापि श्येनवदनुपमितप्रसिद्धत्वेनवाग्ने गौण्या वृत्त्या आसप्रसिद्धिः 'समानमितरत् श्येनेन' इत्यादिभिस्त्वाश्रीयते, तथापि शास्त्राश्रितत्वात् धर्मं प्रति बलीयस्त्वम्। 'अथापि शब्दगौणत्वं तथापि बलवत्तरम्। स्वतन्त्रस्य हि वेदस्य दृष्टं चेन्न निवार्यते॥ गौणं लाक्षणिकं वाऽपि वाक्यभेदेन वा स्वयम्। वेदो यमाश्रयत्यर्थं को नु तं प्रतिकूलयेत्॥' न चात्र 'संदिग्धेषु वाक्यशेषात्' इत्येतेन तुल्यार्थत्वम्, प्रतिपत्तिद्वयस्यापि असंदिग्धत्वात्। 'लौकिकी प्रतिपत्तिर्हि स्वार्थे निःसंशया स्थिता। वैदिक्यपि तथा स्वार्थे बाधतेऽतो विपर्ययात्॥ तस्माच्छास्त्रस्थितैवैका प्रतिपत्तिर्बलीयसी। न समा मुख्यतामार्थैर्निरूढैः समसंकीर्तैः॥' इति।

शा — 'पदार्थपदसम्बन्धे तुल्यत्वं लोकवेदयोः। अदृष्टसाधनत्वे हि लोकाद् वेदोऽतिरिच्यते॥ वाक्यैकत्वं विधिस्तुत्योर्विपर्ययकथादृते नहि। तेनात्र वाक्यशेषस्था प्रतिपत्तिर्बलीयसी॥'

सि— 'लौकिको वाक्यशेषो वाऽर्थे त्रिवृदादेः, समस्ततः। उभौ, विध्यर्थवादैकवाक्यत्वावन्निवहान्तिम.॥'

भाट्ट— त्रिवृच्चरुश्वबालादिशब्देषु यत्र लोकवाक्यशेषयोः अर्थविप्रतिपत्ति, तत्र पदपदार्थसम्बन्धे लोकात् वेदस्याधिक्ये प्रमाणाभावात् तुल्यत्वम्। इति प्राप्ते, विध्यैक्यस्याभावेऽपि विधिस्तुत्योः एकवाक्यताऽनुपपत्तेः विधि. वाक्यशेषस्यैव शक्तिग्राहकत्वं अनुमन्यते। अतश्च लौकिकप्रमाणावगतेऽर्थे अनेकशक्तिकल्पनाभिया न शक्तिः, अपि तु लक्षणादिनैव बोधः। अत एव यत्र वाक्यशेषो नास्ति तत्रापि त्रिवृदादिपदार्थो वैदिक एव ग्रहीतव्यः

इति वक्ष्यते । अतश्च त्रिवृच्छन्दस्य स्तोमगतत्र्यवयवत्वकं शक्यम्, न तु त्रैगुण्यम् । चरुशब्दस्य ओदनः, न स्थाली । अश्ववालशब्दस्य काशाः नाश्ववालाः । २।३।४ पृ. ४४.

शंकर— ' त्रिवृत्पर्यादिविन्तनम् । ' कृतम् ।

• त्रिवृत्पर्यायाध्यायाधिकरणे चरुशब्दस्य ओदनपाचित्व वाक्यशेषात् , न तु लोकप्रसिद्ध्या स्थालीवाचकत्वं लोकप्रसिद्धेर्लाक्षणिकत्वेनापि उपपत्तेः इत्यस्यार्थस्य विचारितस्य प्रयोजनं मायोपयोगित्वया कथ्यते । भाट्ट. १०।१।१०. • त्रिवृच्छन्दस्तु नृत्यवयवानुगमनात् स्तोमीयानवकत्वापित्वेन त्रिवृत्पर्यायाध्यायाधिकरणे व्यापित: । कौ. २।४।३।२ पृ. २८१.

• त्रिवृत्पर्यायाध्यायाधिकरणन्यायस्वरूपम् ' लोकप्रसिद्धापेक्षया वाक्यशेषस्य बलवत्त्वम् ' । इति । भाट्ट. १०।१।१०.

• अर्थवादानां अवयवार्थपरत्वाभावे त्रिवृत्पर्यायाधिकरणविरोधः । तत्र वाक्यशेषेण अवयवपरतायाः व्यवस्थापनात् । कु. १।२।१।१८.

• त्रिवृत्त्वं अग्निष्टुति श्रुतं स्तोमान्तरगतस्तोमप्रमाणबाधकम् । भा. १०।६।७।२२–२३.

• त्रिवृत्पञ्चदशादीनि ज्योतिःशब्देन उक्तानि । वचनमात्रेणापि शब्दो भवति, विशेषतो लक्षणायाम् । भा. ४।४।१२।४०.

• त्रिवृत्पानीयविरेचनम् । ' मत्स्यचर्मेव स्यात् त्रिवृत्पानविरेकवत् ' । ( त्रिवृत् नाम ओषधिः तत्पाने पीते विरेको भवति इति वैद्यकम् । ) । श्लोवा. चित्राक्षेपपरिहारे १९.

• त्रिवृच्छब्दः अन्यत्र स्तोमविषये दृश्यते । यथा ' त्रिवृत् बहिष्पवमानः ' इति । अत्र स्तोमविषयता परिच्छिन्ना । एवं ' त्रिवृदग्निष्टोमः ' इत्यत्रापि । भा. १०।६।७।२३, • त्रिवृच्छब्दः लोके त्रिलक्षणे प्रयुक्तः । यथा त्रिवृत् रज्जुः, त्रिवृत् मणिः इति । १०।६।७।२९. • त्रिवृच्छब्दस्य त्रैगुण्य लोकसिद्धोऽर्थः । ' त्रिवृत् बहिष्पवमानम् ' इति श्रुतौ तु कल्प्यमानेषु त्रिषु सूक्तेषु अर्थस्मिलाका बहिष्पवमानामवयवोऽभिधान-

प्रमाणा ' उपास्मै ' इत्यादीनां ऋचा नवकमर्थः । नि. १।३।९ वर्णके ३.

• त्रिवृत्स्तोमः त्रिवृदग्निष्टोमे कृत्स्ने क्रतौ भवति । भा. १०।६।६।१९. • त्रिवृत्स्तोमस्य उद्यती नाम विष्टुतिः । तत्र ब्राह्मणवाक्यमेवम्– ' तिसृभ्यो हिंकरोति स प्रथमया , तिसृभ्यो हिंकरोति स मध्यमया , तिसृभ्यो हिंकरोति स उत्तमया , उद्यती त्रिवृतो विष्टुतिः ' इति । सूक्तत्रयपठितानां नवानामृचां गानं त्रिभिः पर्यायैः कर्तव्यम् । तत्र प्रथमे पर्याये त्रिषु सूक्तेषु आद्या तिस्र ऋचः, द्वितीये पर्याये मध्यमाः, तृतीये पर्याये च अन्तिमाः । तिसृभ्य इति तृतीयार्थे पञ्चमी । हिंकरोति गायतीत्यर्थः । वि. १०।५।३, • त्रिवृत्स्तोमे ऊर्ध्वगानम् । ऊर्ध्वगानं नाम आवृत्तिं विना ऋचां पाठक्रमेण गानम् । ९।३।८.

• ' त्रिपाहस्तं तृतीयम् ' त्रिष्वाननिष्कीत इति अग्नौ नैमित्तिकमेव, न नित्यम् । भा. ४।३।१।४.

• त्रिष्टुप् । पादेषु अक्षराणि ११।११।११।११ उदा० कस्य नूनं कतमस्य । ( ऋसं. १।२४।१ ) । के. • त्रिष्टुप्शब्दो द्रव्यवचनः ( शब्दो द्रव्यमिति मीमांसकमतम् ) । संकर्ष. ४।१।१२.

• त्रिसंयुक्ते पूर्वे वीरजनन मतम् । पश्चात्तर पशुजननं मतम् । राजसूये । तत्र ' आग्नावैष्णव एकादशकपाल, ऐन्द्रावैष्णवश्चरुः, वैष्णवस्त्रिकपालः, वामनो दक्षिणा ' इति पूर्वम् । ' सोमापौष्ण एकादशकपाल , ऐन्द्रापौष्णश्चरु , पौष्णश्चरुः, श्यामो दक्षिणा ' इति उत्तरम् । भा. ११।४।१।३, • त्रिसंयुक्तयोर्द्वयोः अङ्गानि न तन्त्रम् । राजसूये । ११।४।१।१–३, • त्रिसंयुक्ते पूर्वे राजन्यप्रमाने यो जैमानिकमाकाङ्क्षात् सौमिकादिप्ययोजितजैधानशब्दो धर्माभ्यतिदिशति । ७।३।६।१७.

• त्रैधातवीयेन । ' देवताभ्यो वा एष आवृश्च्यते यो यक्ष्ये इत्युक्त्वा न यजते , त्रैधातवीयेन यजेत ' । इत्यमिष्टि. प्रायश्चित्तरूपा । नि. ६।३।१२, • त्रैधातवीये ' यवमयो मध्यम.' पुरोडाशः । तत्र व्रीहियवयोर्विकल्प. । १०।७।२६.

* त्रैधातवीया दीक्षणीया अश्वमेधे । तत्र ज्योतिष्टोमीयदीक्षणीयाजन्याप्रत्यभावात् न तत्स्वरानिवेशः, किंतु उपांशुत्वमेव काम्यत्रैधातवीयाधर्मः अतिदिश्यते । वि. ९।१।१२ वर्णकं २. * त्रैधातवीया द्विविधा स्वतन्त्रा काम्या, अश्वमेधगता च । उभयोरपि प्रयोगः समान एव । उपांशुत्वं तत्र स्वरः । भाट्ट. ९।१।१२ पृ. ४६. * त्रैधातवीयायां अश्वमेधीयदीक्षणीयाया आग्नावैष्णवपूर्वकत्वाभावात् 'यावत्या वाचः कामयेत तावत्या' इत्यादिधर्मः न प्रवर्तते इति भाष्यमतम् । मन्मतेऽस्तु उपांशुत्वं प्रवर्तते । सोम. ९।१।१२. * त्रैधातवीयाया पुरोडाशभेदेऽपि एकदेवतात्वम् । संकर्ष. २।२।१४. * त्रैधातवीयाया सहस्रं दक्षिणा । भा. १०।३।८।२३, * त्रैधातव्यायां 'प्रथमयो मध्यमः' इति मध्यमपुरोडाशे यवमयत्वस्य नियमविधिः । १०।७।१६।५१-५७, * त्रैधातव्याया दाक्षिणेत्वाभावः । १०।८।३।१७.

* त्रैधातव्यानिषयकं अधिकरणं अश्वमेधीयत्रैधातव्याविषयकं इत्यादिविन्दौ ( मी. को. ७४६ पृष्ठे ) द्रष्टव्यम् । के.

* त्रैवर्णिकः कश्चित् निषादानामधिपतिः संभवति, तथापि 'निषादस्थपतिं याजयेत्' इत्यत्र निषादस्थपतिर्न त्रैवर्णिकः । वि. ६।१।१३, * त्रैवर्णिकः कश्चित् 'रथं करोति' इति व्युत्पत्त्या रथकारः स्यात् । 'वर्षासु रथकार आदधीत' इत्यत्र तु रथकारः संकीर्णजातिविशेष एव गृह्यते । ६।१।१२. * त्रैवर्णिकस्य प्रतिपदं शिल्पोपजीवित्वम् । भा. ६।१।१२।४६. * त्रैवर्णिकानां कामनयाकरणं नित्यम्, न काम्यम् । वि. ६।२।११, * त्रैवर्णिकानामेव अध्ययनविधिः न शूद्रस्य । ६।१।७, * त्रैवर्णिकानामेव यागाधिकारः, न शूद्रस्य । ६।१।७. * त्रैवर्णिकानां सोम-विद्यायाः नियमं न ब्राह्मणानामेव ! भा. ६।२।१।११. * त्रैवर्णिकभिन्नस्य निषादस्य रौद्रयागेऽधिकारः । मृ. ६।१।१२।५१-५२. * विद्याऽधीना त्रैवर्णिकविषयत्वानियमात् वसाम्यानां ऋतूनां त्रैवर्णिकविषयत्वनियमः । सु. पृ. ११४१.

* त्रैशोकं साम द्वादशाहे चतुर्थेऽहनि । तस्य योनिः 'त्रिशाः पृतनाः' ( सामसं. २७०,९३० ) इति अतिजगती । उत्तरे च ऋचौ 'नेमिं नमन्ति' ( ९३१ ) 'अभु रेभासो' ( ९३२ ) इति बृहत्यौ । एतास्वेव त्रैशोकं गातव्यं विषमास्वेव । वि. ९।२।५ वर्णकं २.

ॐ त्रैशोकाधिकरणम् । द्वादशाहमध्यपृष्ठ्यषडहे चतुर्थेऽहनि त्रैशोकं साम उत्तराग्रन्थपठितयोर्बृहत्योरेव गेयम्, न तु अतिजगत्यां आनेये ॥

तद्भ्यासः समासु स्यात् । ९।२।५।२१ वर्णकं २ ॥

भाष्यम्—एवं वा अस्ति द्वादशाहः, 'द्वादशाहेन प्रजाकामं याजयेत्' इति । तत्र चतुर्थेऽहनि त्रैशोकं नाम साम, अतिजगत्यामुत्पन्नम् । अतिजगती 'त्रिशाः पृतनाः अभिभूतर वर सजूस्तश्चुरिन्द्रं जजनुश्च राजसे । क्रत्वा वरिष्ठं वर आमुरिमुतोग्रमोजिष्ठं तवसं तरस्विनम् ॥' ( सामसं. ९३० ) । उत्तरे द्वे बृहत्यौ । तयोः पूर्वा 'नेमिं नमन्ति चक्षसा मेषं विप्रा अभिस्वरा । सुदीतयो वो अद्रुहोऽपि कर्णे तरस्विनः समृक्वभिः ॥' ( सामसं. ९३१ ) उत्तरा 'समु रेभासो अस्वरन्निन्द्रं सोमस्य पीतये । स्वर्पतिं यदी वृधे धृतव्रतो ह्योजसा समूतिभिः ॥' ( सामसं. ९३२ ) इति । तत्र एषोऽर्थः सांशयिकः किमन्ये अतिजगत्यौ उपादाय समासु गेयम्, उत ये एव वे उत्तरे बृहत्यौ, एते एव उपादाय विषमास्वेव गातव्यमिति । किं प्राप्तम् ? संशयविकेषौ ( संशयः द्विधा प्राप्तः । आधिक्यम् । विक्षेपः अवयवस्य न्यूनत्वम् ) मा भूतां इति अन्ये उत्पत्तिजगत्यौ उपादाय एतत् साम समास्वेव अभ्यसितव्यं इति ।

लिङ्गदर्शनाच्च । २२ ॥

भाष्यम्— लिङ्गं खल्वपि अस्मिन्नर्थे दर्शयति 'अतिजगतीषु स्तुवन्ति' इति । किं लिङ्गम् । अतिजगतीषु इति बहुवचनम् । तस्मात् अन्ये अतिजगत्यौ उपादातव्ये इति ।

नैमित्तिकं तूत्तरात्वमानन्तर्यात् प्रतीयेत । २३ ॥

भाष्यम्— नैमित्तिकं तु उत्तरात्वं आनन्तर्यात् उत्तरापाठनिमित्तं आनन्तर्यं सति प्रतीयेत । पुनर्निर्देशात् प्रतीयते इति । प्रकृतत्वात् उत्तरे बृहत्यौ एवं अनुप्रदीप्येते । तस्मात् नान्ये आदातव्ये इति ।

ऐकार्थ्ये च तदभ्यासः । २४ ॥

भाष्यम्— एवं च समानदेवताके त्रैशोके कृते, इति तृचशब्दोपचारो युक्तो भविष्यति । तस्मादपि नान्ये उपादातव्ये इति । अथाह, अथ यदुक्तम् "अतिजगतीषु स्तुवन्ति' इति शब्दोपचारात् अतिजगती बहुत्वं दर्शयति इति, तत् परिहर्तव्यम् । अत्रोच्यते । तदभ्यास एव द्रष्टव्यः षोडश्यभ्यासः । 'एकविंशः षोडशी' इति एकविंशतिकृत्वः षोडशिनि अभ्यस्यमाने त्रैशोकाभ्यासः । तत्र सकृत्सकृतः अतिजगत्या अभ्यस्यमानया 'अतिजगतीषु स्तुवन्ति' इति वचनं उपपत्स्यते इति ।

टुप्— ( अत्र भाष्यं— ) 'एकविंशतिकृत्व षोडशिनि अभ्यस्यमाने त्रैशोकस्य अभ्यासः' इति । एतदयुक्तम् । नहि द्वादशाहे षोडशिनः एकविंशतिकृत्वः प्रयोगः । किं तर्हि सकृदेव प्रयोगः । तस्मात् ( अस्य भाष्यस्य ) अन्यो वाच्योऽर्थः । 'एकविंशः षोडशी' इति ( वचनात् ) सर्वस्तोत्राणि षोडशिनि एकविंशानि भवन्ति । ( तत्र आगमेन संख्यापूरणं पवमानेष्वेव । स्तोत्रान्तरेषु तु अभ्यासेनैव ) तत्र एकविंशतिसंपत्तये ( प्रगाथस्य अभ्यस्यमाने तत्रापरस्य ) त्रैशोकस्य सकृत्सकृत् अभ्यासः । तस्मिन्नभ्यस्यमाने बह्व अतिजगत्यो भवन्ति । एवं सति अतिजगतीबहुत्वं भविष्यति ।

सोम— 'समासु गानम्' इत्यस्यात्र अपवादात् संगतिः ।

वि— 'त्रैशोकेऽतिजगत्यौ द्वे आनेये गीयतेऽथवा । बृहत्यौ, सदिमः साम्या, शौचवृक्षश्रुतेर्बलात् ॥' ( त्रैशोके साम्नि समासु गातव्ये सति द्वे अतिजगत्यौ द्वादशवीभ्यः आनेये, अथवा तत् उत्तरयोर्बृहत्योरेव गीयते इति संशयः ) ।

भाट्ट— एव वा द्वादशाहे षष्ठस्याह्न चतुर्थमहः 'एकविंशः षोडशी वैराजं साम' इत्याम्नातम् । अत्र प्रकृतिप्राप्तगर्भस्तोत्रेषु एकविंशः स्तोमः, षोडशिग्रहणम्, पृष्ठस्तोत्रे च वैराजं साम, इत्यनेकगुणविशिष्टं कर्म विहितम् । तत्र च 'त्रैशोकं नाम ब्रह्मसाम अतिजगतीषु स्तुवीत' इति ब्राह्मणच्छंदिस्तोत्रे त्रैशोकं साम विहितम् । तच्चातिजगत्या सुपपन्नम्, उत्तराग्रन्थे चोत्तरे द्वे बृहत्यौ, तत्र संवत्सरद्वारायैवुत्तराग्रन्थपठितयोरपि उत्तरयोः वाचस्तोमादौ सार्थकत्वमङ्गीकृत्य अतिजगत्यवेन द्वे द्वादशवीभ्यः समानीय समास्वेव गानम् । न चानीतानामङ्गत्वे प्रमाणाभावः । न्यायसकृत्तृचत्वनिर्देशेय नियामकत्वात् । न च प्रकरणेन न्यायबाधः, 'अतिजगतीषु स्तुवीत' इति अतिजगतीबहुत्वविधिना न्यायस्योत्तीर्णत्वात् । न च मान्त्रक्योगानुवादेन त्रैशोकातिजगतीबहुत्वयोर्विधाने वाक्यभेदः, अतिदेशप्रवृत्तेः पूर्वमस्य प्रवृत्त्या विशिष्टस्तोत्रविधानुपपत्तेः । अत एव 'यज्ञोन्तम्' इति सामान्यवचनं सामान्यविषयम् । इति प्राप्ते, यद्यपि समानातिरिक्तस्तोत्रे एकविंशस्तोमानुरोधेन सकृदभ्यासस्यावश्यकत्वात् एकस्या अप्यतिजगत्याः सकृत्सकृत् आवृत्तेर्बहुत्वस्य प्राप्तत्वात् अनुवादोपपत्तेः अस्य सामसामान्यविधिपरत्वात् उत्तराग्रन्थपठितबृहतीपक्षानुरोधेन न्यायस्यैव बाधात् संशयमपि स्वीकृत्य बृहत्योरेव गेयम् ।

मण्डन— 'अभ्यासेनातिजगती ।'

शंकर— 'त्रैशोकं विषमासु तु ।'

* त्रैशोकसामगानं अभ्यस्यमानयापातिजगत्याम् । वि. ९।२।९ वर्णकं २

* त्रैस्वर्यादीनां समाम्नानं अर्थाभ्यासनार्थम् । भा. १।२।८।३१ वर्णकं ३.

* स्वष्टी. अग्निपाशीनैः स्विष्टकृद्यागः ज्योतिष्टोमेऽग्नीषोमीये पशौ । भा. १०।७।३।१०–११. * 'स्वष्टीः स्विष्टकृतं यजति' इत्यत्र चाङ्गानि अनूद्य भिन्न विधीयते । किं तर्हि पूर्वनिष्पन्नः समासार्थो विधेयो भवति । पा. १०।७।१०।३१ पृ. १००७.

* स्वनीका गवामयने चोदकेन प्राप्ता । त्रीणि अनीकानि अग्राणि ऐन्द्रवायव–शुक्र–आग्रयणरूपाणि यस्याः क्रियायाः सा स्वनीका । तथा संवत्सरे आग्रयणीयोदयनीयमध्यवर्तीनि अहानि पूरितव्यानि । पूरणं स्वस्थानविवृद्धया, [illegible] तु इन्द्रकल्पितवत् अनुवृत्त्या । भा. १०।५।२५।८२–८७. * स्वनीका गवामयने प्रत्यक्षेण वाक्येन विधीयते । यदि चोदकेन प्राप्यते तथा सत्येते दोषा भवेयुः । टुप्. १०।५।२५। ८९ पृ. १९८१. * स्वनीका ज्योतिष्टोमे । तत्र ऐन्द्र-

वायव्याग्राणां शुक्रानाम्नायाश्च पुनःश्रवणं न परिसंख्यातुं नार्थवादार्थम्, किन्तु समानविध्यर्थम्। भा. १०।५।२३। ७७–७८. ❀ त्र्यनीका । त्रयाणामनीकानां समाहारः त्र्यनीका । द्विगौ अजादेराकृतिगणत्वात् टाप् । यद्यपि नवसु अहःसु नव सन्ति अग्राणि, तथापि त्रयाणां ऐन्द्रवायवाग्रशुक्राग्राग्रयणाग्रत्वानां त्रिरभ्यासात् नकारं इति युक्तः त्र्यनीकाव्यवहारः । अनीकं अग्रम् । सोम. १०।५।२३. ❀ त्र्यनीका द्वादशाहे मयूखे। द्वितीये पञ्चमे अष्टमे चाहनि ऐन्द्रवायवाग्रम्, तृतीये षष्ठे नवमे चाहनि शुक्राग्रम्, चतुर्थे सप्तमे एकादशे चाहनि आग्रयणाग्रं इति त्र्यनीका । वि. १०।५।२६.

☒ त्र्यनीकायां न्यायोक्तेष्वाम्नानं गुणार्थं स्यात् । १०।५।२३।७७ ॥

द्वादशाहे द्वितीयादिषु दशमवर्जं नवसु अहःसु त्र्यनीका उक्ता। द्वितीयेऽहनि च पञ्चदशपञ्चाहत्वात् रथंतरसामत्वेन ऐन्द्रवायवाग्रता प्रकृतित एव चोदकेन प्राप्ता । तृतीयेऽहनि च षडहद्वितीयाहत्वात् बृहत्सामत्वेन शुक्राग्रता प्रकृतित एव चोदकेन प्राप्ता । एवं सति पुनःश्रवणं किमर्थमिति विचारे पूर्वपक्षमाह । द्वादशाहे त्र्यनीकाया न्यायोक्तेषु चोदकप्राप्तेषु ऐन्द्रवायवाग्रादिषु पुनः आम्नानं पुनःश्रवणं चतुर्थेऽहनि उक्तस्य आग्रयणाग्रत्वस्य गुणार्थं स्तुत्यर्थं स्यात् नानुवदितुं न परिसंख्यातुम् ।

अपि वाऽहर्गणेष्वग्निवत् समानविधानं स्यात् । ७८ ॥

पूर्वपक्षं व्यावर्तयितुं अपिवाशब्दः । अहर्गणेषु नवानामपि अह्नां समानविधानं प्रतिपादयितुं पुनःश्रवणं स्यात्, नार्थवादार्थम् । अग्निवत् । यथा अग्निचयनं अग्निष्टोमे वाक्यान्तरेण सिद्धेऽपि 'अथातोऽग्निमग्निष्टोमेनैवानुयजति तमुक्थ्येन तमतिरात्रेण' इत्यादिवाक्ये अग्निष्टोमप्रदर्शनं उक्थ्यादिना समानविधानार्थम्, तद्वत् । तथात्र गर्गत्रिरात्रादिषु द्वितीयाद्यहःसु बृहत्सामत्वाभावेऽपि शुक्राग्रतायनुष्ठानं स्फुटं । के.

❀ त्र्यनीकायां प्रथमद्वितीययोः अह्नोः ऐन्द्रवायवाग्रत्व-शुक्राग्रतयोः पुनःश्रवणात् समानविधित्वम् । भा. १०। ५।२३।७७–७८, ❀ त्र्यनीकायां प्रथमद्वितीययोः अह्नोः ऐन्द्रवायवाग्रत्वशुक्राग्रतयोः पुनःश्रवणस्य अनैमित्तिकत्वार्थता ( द्वादशाहे ) । १०।५।२३।७७–७८.

☒ त्र्यनीकाऽधिकरणम् । कर्मभूयस्त्वाधिकरणन्यायः । गवामयने त्र्यनीकायाः स्वस्थानविवृद्ध्या अभ्यासः ॥

ऐकादशिनवत् त्र्यनीकापरिवृत्तिः स्यात् । १०।५।२५।८३ ॥

भाष्यम्— द्वादशाहे समाम्नायते 'ऐन्द्रवायवाग्रौ प्रायणीयोदयनीयौ, दशमं चाहः, अथैतेषां नवानामह्नामैन्द्रवायवाग्रं प्रथममहः, अथ शुक्राग्रम्, अथाऽऽग्रयणाग्रम् । अथैन्द्रवायवाग्रम्, अथ शुक्राग्रम्, अथाऽऽग्रयणाग्रम् । अथैन्द्रवायवाग्रम्, अथ शुक्राग्रम्, अथाऽऽग्रयणाग्रम्' इति । तत् गवामयने चोदकेन प्राप्तम् । तत्र बहूनि त्र्यनीकानि परिवर्तयितव्यानि । तदर्थमयमभ्यासः । अथेदानीमभ्यासे संदेहः किं दण्डकलितवदभ्यासः कर्तव्यः, उत स्वस्थानविवृद्धिरिति । कथं दण्डकलितवत् स्यात्, कथं वा स्वस्थानविवृद्धिरिति । यदि अहानभिप्रायः तत आद्येषु नवस्वहःसु परिसमाप्तेषु शिष्टेष्वपि त्र्यनीका चोदकः प्रापयतीत्युपस्थितमिदं भवति 'ऐन्द्रवायवाग्रं प्रथममहः, अथ शुक्राग्रम्' इति । तेष्वपि नवसु परिसमाप्तेषु पुनरिदमेवोपतिष्ठते, ऐन्द्रवायवाग्रं प्रथममहरिति । एवं दण्डकलितवदावृत्तिः । अथ अहरभिप्रायो नास्ति, ततः प्रायणीयोदयनीययोरन्तरे नवभिरनीकैः पूरितमिति गवामयनेऽपि नवभिरनीकैः पूरयितव्यं स्यात् । तत्र पूर्वे पुनरावृत्तिर्नास्तीति दण्डकलितवत् स्यात् । न च वृद्ध्या विना तदन्तरे पूर्यते इति स्वस्थानविवृद्धिरागतेति । किं पुनः प्राप्तम् ? दण्डकलितवदावृत्तिरिति । तन्नेत्युच्यते अहरधिकारोऽस्ति । एवं हि आम्नायते 'ऐन्द्रवायवाग्रं प्रथममहः, अथ शुक्राग्रम्'। प्रकृतत्वादहरिति गम्यते । तस्मादहरधिकारः । अतोऽयमभ्यासो दण्डकलितवदावृत्तिरिति । आवृत्तिन्यायानां दण्डकलितं न्याय्यम् । तथा क्रमानुग्रहो भवति । यथा, कश्चिदुच्यते अनुवाकाः पठ्यतामिति । दण्डकलितवत्तौ पठ्यते, क्रमानुग्रहः । एवमिहापि द्रष्टव्यम् ।

यथा अस्मिन्नेव गवामयने एकादशिनी अभ्यस्यमाना दण्डकलितवदभ्यस्यते, न स्वस्थानविवृद्धवेति ।

स्वस्थानविवृद्धिर्वाऽह्नामप्रत्यक्षसंख्यत्वात् ॥८४॥

भाष्यम्— स्वस्थानविवृद्धिर्वा, न दण्डकलितवदावृत्तिः । तदेदं वर्ण्यते, नाहरधिकार इति । कुतः ? अह्नामप्रत्यक्षसंख्यत्वात् । अन्यथा अह्नां संख्या भवाना मह्नामिति । ऐन्द्रवायवाग्रमिति च विधीयमानमिति । कथमहर्न विधीयते इति ? वाक्यभेदप्रसङ्गात् । ऐन्द्रवायवाग्रं प्रथमं भवति, तथाहः, नाहःसंघातः, इति वाक्यं भिद्येत । तस्मादनुरावमामनहर्ग्रहणम् । एवं चेत् क्रमानुग्रहाय स्वस्थानविवृद्धिराश्रयणीया । आग्रयणाग्रान् कृत्वा ऐन्द्रवायवाग्राः कर्तव्या इति ।

टुप्— अतः परं त्र्यनीकाऽधिकरणं व्याख्यायते (इति मुद्रिते । 'अत. परं त्र्यनीकालिङ्गदर्शनाधिकरणं व्याख्यायते' इति तु लिखिते । तन्त्रान्ते तु नैतत् किमपि गृहीतम् । 'त्र्यनीकाग्रग्रहादिक्रमाधिकरणं' इति तु तन्त्रान्ते पङ्क्तिः ) । प्रथमस्य ग्रहमात्रस्य ऐन्द्रवायवाग्रता विधीयते । कुतः ? ग्रहस्य फले चोदितत्वात् । अहनि इत्ययमर्थो लभ्यते एव (यज्ञमात्रो हि अहःसम्बन्धः, इति तद्ग्रहणमनुवादः ) । यदि च अहरिति विवक्ष्येत (ततो विशिष्टानुवादात्) वाक्यं भिद्येत । निष्फलानि च तानि (अहानि ) ।

पृष्ठ्यावृत्तौ चाग्रयणस्य दर्शनात् त्र्यहशिरो, परिवृत्तौ पुनरैन्द्रवायवः स्यात् । ८५ ॥

भाष्यम्— इतश्च पश्यामः, स्वस्थानविवृद्धिरिति । कुतः ? उत्तरस्मिन् पक्षसि पृष्ठ्यावृत्तौ आग्रयणाग्रताया दर्शनं भवति त्र्यहशिरोऽहनि । कथम् ? 'जगतीं वै छन्दांसि प्रत्यवरोहन्ति, आग्रयणं वै ग्रहाः, बृहत् पृष्ठानि, त्र्यहशिरः स्तोमाः' इति । तदेतत् स्वस्थानविवृद्धौ अवकल्पते, न दण्डकलितवदावृत्तौ । कथम् ? पूर्वस्मिन् पक्षसि त्र्यनीका त्रिः परिवर्तते ; तस्मिन्नावृत्तेष्वाग्रयणाग्रेषु परिसमाप्यते । उत्तरमपि पक्षो व्यावृत्तमिति कृत्वा आग्रयणाग्रेणारभ्यते । तत्र पञ्चमे नवमभागे त्र्यहशिरसमहरिति कृत्वा तदाग्रयणाग्रं भवति । तथैतद्दर्शनमुपपद्यते । दण्डकलितवदावृत्तौ तस्यां तदैन्द्रवायवाग्रं स्यात् । कथम् ? विषुवत आरभ्य नवैरहोभि संकल्प्यमानेषु पूर्वस्मिन् पक्षसि चत्वारि परिशिष्यन्ते । तत्र सप्तमे ऐन्द्रवायवाग्रता, शुक्राग्रो विषुवान्, आग्रयणाग्रः प्रथमः स्वरसामा, ततो विश्वजिदिति त्र्यनीका समाप्ता । त्र्यहशिरसमहरैन्द्रवायवाग्रं प्राप्नोति । तत्रैतद्दर्शनं विरुध्यते । तस्मात् स्वस्थानविवृद्धिरिति ।

टुप्— यस्य दण्डकलितवत् आवृत्तिः, तस्य एतत् ( त्र्यहशिरो अहनि आग्रयणाग्रता— ) दर्शनं नोपपद्यते । कथं ? अस्मिन् ( हि ) गवामयने अशीतिशतं (१८० अहानि ) पूर्वे पक्ष. । एवं उत्तरे (अपि पक्ष. । मध्ये विषुवान् अधिकमहः ) तत्र पूर्वपक्षसि ( प्रथम तावत् ) त्र्यनीका निविशते । ( त्रयाणामनीकानां समाहारः त्र्यनीका त्रिफलावत् । अजादेराकृतिगणत्वात् द्विगोरपि टाप् प्रत्ययः । अनीकमनीकशब्दः ) । सा ( च तत्र ) निविशमाना अशीते द्वे अहनी वर्जयित्वा भवति । ( कुतः ? ) तयोः ऐन्द्रवायवाग्रतायाः प्रत्यक्षाम्नानात् । शिष्टेषु ( च ) अहःसु निविशमानायाः ( एकोनविंशतिवारमावृत्तायाः ) सप्त ( अहानि ) परिशिष्यन्ते । [illegible] सप्तमे ऐन्द्रवायवाग्रता ( भवति ) । तस्मिंश्च ( सप्तमे अहनि ) पूर्वे पक्षः समाप्तम् ( त्र्यनीका तु अपरिसमाप्ता (द्वयोरवशिष्टत्वात्) । सा च (अवश्यं) परिसमापनीया । ततः ( अष्टमः ) विषुवान् शुक्राग्रः । ततः ( नवमे भवति ) प्रथमः स्वरसामा आग्रयणाग्रः, द्वितीयः स्वरसामा ऐन्द्रवायवाग्रः, तृतीयः स्वरसामा शुक्राग्रः, ततो विश्वजित् आग्रयणाग्र., ततः ( पृष्ठ्य ) षडहः आवृत्तः प्रयुज्यते । तस्य आवृत्तस्य प्रथम त्र्यहशिरसमहः ( भवति ) तत् ऐन्द्रवायवाग्रं प्राप्नोति । ( इति ) एवं ( इदं ) दर्शनं नोपपद्यते ( पूर्वपक्षसि ) दण्डकलितवदावृत्तौ, ( स्वस्थानविवृद्धौ तु उपपद्यत इति ) ।

यदिदं व्याख्यानं भाष्यकारेण कृतम्, इदं नोपपद्यते । कथम् ? अस्मिन् ( हि ) गवामयने त्र्यनीका ( प्रत्यक्षेण ) चोदकेन प्राप्यते ( न नामधेयात्, नापि प्रत्यक्षवचनात् आग्रयणाग्रने । ततः— ) विश्वजिति नामधेयेन आग्रयणाग्रता प्राप्नोति । 'पृष्ठ्य षडहः' इति (अपरो) नामधेयेनैव ( प्रसिद्ध— ) षडहत्वेऽपि स्वी ( एव )

एवमिहापि ऽयनीका नामधेयगतं बाधिकैव निविशते यथा अवच्छेदे पूर्वनैमित्तिकं उत्तरेण (नैमित्तिकेन) विरोधे (सति) बाध्यते। अथवा (नास्याः पश्चात्ता हीनत्वं) यदा (हि) यागः फले चोदितो भवति, तदा (एव) धर्मानाकाङ्क्षति (नोत्पत्तिक्षणे) एतस्यां (लब्धफलकत्वेन धर्माकाङ्क्षा–) अवस्थायां किं चोदकेन धर्माः, उत नामधेयेन इति चिन्तायां (अवयवान्वेन) नामधेयेन धर्मप्राप्तिः (भवति)। तच (नामधेयं) लक्षणया धर्मप्राप्तिं करोति। ऽयनीका तु शब्दत् न लक्षणया (आश्रयणापत्ताऽऽक्य–) धर्मप्राप्तिं करोति, (किंतु) उपदेशेनैव प्रज्ञाति। अतिदेशाच्च उपदेशो बलवान् (श्रौतत्वात्)।

वचनात् परिवृत्तिरेकादशिनेषु ॥ ८६ ॥

भाष्यम्— अथ यदुक्तम्, ऐकादशिनवदिति। युक्त यदेकादशिनेषु दण्डकलितवदावृत्तिरिति। वचनं हि भवति। 'आरणमन्ततः, पुनःपर्यावृत्त्याग्नेयमेव प्रथमेऽहन्यालभेत' इति। वचनाद्दण्डकलितवदावृत्तिः पुनःपर्यावृत्तेर्भवति। सा द्वादशाहे अप्रभवन्ती गवामयने विघाति। किमिव वचनं न कुर्यात्। नहि वचनस्यातिभारोऽस्ति।

लिङ्गदर्शनाच्च। ८७ ॥

भाष्यम्— लिङ्गं खल्वपि एतमर्थं दर्शयति, यथा दण्डकलितवदैकादशिना आवर्तन्ते इति। 'प्रथमा वा ऐकादशिनाः, यथैकादशिनीमितिपुः अहान्यतिरिच्यन्ते पशवो वा' इति। स्वस्थानविवृद्धौ नास्त्यतिरेकः, दण्डकलितवदावृत्तौ न्यूनता अतिरिक्तता वा भवति। तस्मादपि पश्यामः ऐकादशिनेषु दण्डकलितवदावृत्तिरिति।

शा— भाष्यकारेण प्रायणीयोदयनीयमध्यवर्तिनीं द्वादशाहिकीं ऽयनीकां चोदकप्राप्तामाश्रित्य विचारितं किं दण्डकलितवत् आवर्तनीया, किंवा नवानामपि अनीकानां स्वेस्वे स्थाने निवृद्धिः इति। (तदर्थं किमिमे धर्माः प्रकृतौ अहःपूर्वप्रयुक्ताः, उत पशुपूर्वप्रयुक्ताः। तदर्थे च किमहर्धर्माः, उत मासधर्माः। तदर्थे च किमहर्ग्रहणं विवक्षितम्, उत न इति सैद्धान्तिकार्थः। अहर्ग्रहणविवक्षायां द्वितीयादेरहः तृतीयादेश्चाहर्धर्मे। इति तन्निमित्तार्थं दण्डकलितवदावृत्तिः, तदविवक्षायां तु कृत्स्नस्यैव प्रथममासस्य ऐन्द्रवायवाग्रत्वं धर्मः। एवं द्वितीयादिमासानामपि शुक्राग्रत्वादिः इति स्वस्थानविवृद्धिरिति फलफलितार्थः। वार्तिकाधिकरणे तु–) तदयं किमेते दण्डकलितवदावर्तनीयाः, उत नवधा विभज्य नवस्वपि मासेषु नवानामनीकानां निवेशः इति।

सोम— पूर्वाधिकरणोक्तसमुद्रनैमित्तिकयोरजायनेन अस्य विचारस्य प्रवृत्तेः संगतिः। वार्तिककारपक्षे तु प्रासङ्गिकी संगतिः। सूत्रार्थस्तु–एकादशिन्या इव ऽयनीकायाः दण्डकलितवदावृत्तिः स्यादिति।

वि— 'दण्डकलितवत् मते ऽयनीकाऽऽवृत्तिरिष्यते। स्वस्थानवृद्धिरन्यथा, स्यादाद्योऽहर्विवक्षया ॥, न विभक्ता वाक्यभेदात् नवानीकेषु पूरणम्। एकैकवृद्ध्या न विना तेनैकैकं विवर्धते ॥' 'न ऽयनीका चोदकाप्ता प्रत्यक्षविहिता तु सा। तस्यामुक्तो विचारः स्यादिति वार्तिक ईरितम् ॥'

भाट्ट— गवामयने एकषष्ट्यधिकशतत्रयं सुत्याः। तत्राशीतिशतं पूर्वं पक्षः, तथोत्तरम्, मध्ये विषुवान्। तासां क्लृप्तिस्ताण्डकब्राह्मणे समाम्नाता 'प्रायणीयं प्रथममहः, चतुर्विंशं द्वितीयम्, ततश्चत्वारोऽभिप्लवाः षडहाः तानि चतुर्विंशत्यहानि, एकः पृष्ठ्यः षडहः, एवं मासः, तादृश एव द्वितीयस्तृतीयश्चतुर्थः पञ्चमः, ततस्त्रयोऽभिप्लवाः षडहाः तान्यष्टादशाहानि, एकः पृष्ठ्यः षडहः, अभिजिन्नाम एकाहः, त्रयः स्वरसामानः इत्यष्टाविंशत्यहानि, आद्याभ्यामहोभ्यां सह षण्मासाः, तदिदं पूर्वं पक्षः। मध्ये विषुवान्। अथोत्तरं पक्षः, त्रयः स्वरसामानः, विश्वजिन्नाम एकाहः, एकः पृष्ठ्यः षडहः त्रयस्त्रिंशदारभ्यमाणः, त्रयोऽभिप्लवाः षडहाः, तान्यष्टाविंशत्यहानि, पुनः पृष्ठ्यः षडहः चत्वारोऽभिप्लवाः षडहाः, एवं मासः, तादृश एव द्वितीयस्तृतीयश्चतुर्थः। त्रयोऽभिप्लवाः षडहाः, आयुर्गौरिति द्वे अहनी, द्वादशाहस्य दशाहानि, महाव्रतं चातिरात्रश्चेति द्वात्रिंशदहानि, आद्याष्टाविंशत्यहोभिः सह षण्मासाः'। तदेवंविधानुष्ठानात्मके गवामयने पूर्वपक्षान्तर्गतान्तरालकल्पे ऽयनीका श्रुता 'ऐन्द्रवायवाग्र प्रथममहः अथ शुक्राग्रं अथाग्रयणाग्रम्। अथैन्द्रवायवाग्रं अथ

यत्तु भाष्यकारेणौपदेशिकीं व्यनीकामनुक्त्वैव आतिदेशिकीं द्वादशाहिकीं गवामयनसंबन्धिनीं व्यनीकां गवामयनिकपूर्वपक्षादि प्रसाममुदाहृत्य दण्डकलितवदावृत्त्या पूर्वपक्षं कृत्वा पूर्ववदेव स्वस्थानविवृद्धिसिद्धान्तो लिङ्गदर्शनं च व्याख्यातम् । तन्न । द्वादशाहान्तर्गतदशाहप्रवृत्तेरेव सर्वविकृतिषु साधितत्वेन गवामयनसंबन्धिव्यनीकाप्राप्तेरनुक्तिसहत्वात् । अतः दशाहात्मकानां पूर्वस्मिन् पक्षेऽपि दशधा विभागे दशमो भागः अष्टादशदिनात्मक ऐन्द्रवायवाग्र एव स्यात्, प्रकृतौ दशमस्य ऐन्द्रवायवाग्रत्वात् । तत्रोत्तरस्मिन् पक्षे प्रातिलोम्ये प्रथमो भाग ऐन्द्रवायवाग्रः प्राप्नोतीति सिद्धान्तेऽपि आग्रयणाग्रताऽनुपपत्तिः । वस्तुतस्तु आतिदेशिकव्यनीकायाः पूर्वपक्षस्यैव प्राप्तौ प्रमाणाभावः । कृत्स्ने हि गवामयने सा प्राप्येत । अतस्तस्य कृत्स्नस्य नवधा दशधा वा विभागे क्रियमाणे चत्वारिंशद्दिनात्मकः षट्त्रिंशद्दिनात्मको वा एकैको भागः प्राप्नोति । तत्र व्यनीका न पूर्वस्मिन् पक्षेऽपि समाप्यते इति न तद्विषये प्रातिलोम्यविधिरपि प्रवर्तते । तत्र नवधा विभागे [illegible] पञ्चममासान्तर्गतत्वात् शुक्राग्रत्वे आग्रयणाग्रतादर्शनानुपपत्तिः । दशधा विभागे तु तस्य पञ्चमभागान्तर्गतत्वात् आग्रयणाग्रत्वाप्त्या लिङ्गदर्शनोपपत्तावपि भाष्यग्रन्थानुपपत्तिः दुरुद्धरा । किञ्च गवामयने न चोदकेन व्यनीका प्राप्यते, तत्र हि अभिप्लवषडहादौ बहुधा नामातिदेशेनैव धर्मप्राप्तिः । तथाहि, अभिप्लवे तावत् 'ज्योतिर्गौरायुर्गौरायुः' इत्येवं षडहः, तेषु ज्योतिरादिशब्दैः धर्मप्राप्तिर्नामातिदेशेन । तेषु च नैमित्तिके ऐन्द्रवायवाग्रत्वं शुक्राग्रत्वं च ज्योतिष्टोमात् । अतश्च अभिप्लवे षडहे प्रथमतृतीयपञ्चमानां रथन्तरसामत्वात् ऐन्द्रवायवाग्रता, द्वितीयचतुर्थषष्ठानां बृहत्सामकत्वात् शुक्राग्रतेति न तेषु व्यनीकाप्राप्तिः । एवं विश्वजिदादिष्वपि नामातिदेशस्य आवश्यकत्वात् ऐन्द्रवायवाग्रत्वम्, न व्यनीकाप्राप्तिः । एतद्धर्मकेण बहुनो गवामयनमिति न तस्मिन् व्यनीकाप्राप्तिः । न च नामातिदेशेन प्रकृतौ ये विशिष्योपदेशिका धर्माः तेषामेव प्राप्तिः, न तु ये प्रकृतावपि आतिदेशिकाः, तेषामन्यत्वसादृश्येन ज्योतिष्टोमादेव तेभ्योऽभिप्लवेऽपि प्राप्त्युपपत्तेः । अतश्च तदतिदेशापेक्षया गवामयनसादृश्यकल्पितातिदेशस्य विशेषनिष्ठत्वेन बलवत्त्वात् तेन व्यनीकातिदेशो युक्त एवेति वाच्यम् । आवश्यकेन नाम्नैव यावदपेक्षितानां औपदेशिकनामातिदेशिकानां च धर्माणां प्राप्त्युपपत्तौ, तस्यां विकृतौ ज्योतिष्टोमिकधर्मातिदेशस्यैव कल्पनात् । न च तथापि गुण्यान्तरार्थमवयवसादृश्येन गवामयनसादृश्यातिदेशेनैव अग्रप्राप्तिसंभवे नामातिदेशस्य तन्मात्रकत्वे मानाभाव इति वाच्यम् । भूतार्थकल्पितपक्षे संभवति अभूतस्य आनुमानिकातिदेशस्य तद्विषयत्वकल्पनाऽयोगात् । वस्तुतस्तु, न गवामयनादौ सकलसुत्याकारण्येन 'गवामयनं द्वादशाहवत् कुर्यात्' इत्येवमेकोऽतिदेशः । तत्सुत्यानां प्रत्येकशोऽपनीतानां समुच्चयेन प्रत्येकमेवेतिकर्तव्यताकाङ्क्षत्वेन प्रत्येकमेवातिदेशकल्पनात् । अत एव 'गवामयनिकप्रथमदिनं द्वादशाहिकदशाहप्रथमदिनवत् कुर्यात्' इत्याद्याकारक एवातिदेशः । सर्वेषामप्येकेन एकातिदेशकल्पनायां च द्वितीयादिष्वपि प्रथमाहर्धर्मप्राप्त्यापत्तेः । तेन नामातिदेशाविषयसुत्यासु 'इयं सुत्या द्वादशाहिकसुत्यावत् कार्या' इत्यतिदेशेन प्रकृतत्वस्यापूर्वप्रमाणाभावेऽपि नामातिदेशविषयाभिप्लवादौ द्वादशाहिकसुत्यानामन्यतमसुत्यातिदेशाकल्पनेन प्राकृतसुत्यासादृश्यपक्षप्राप्त्यनुपपत्तेः । यदि व्यनीका नाम अनेकसुत्यासाधारणमेकमङ्गम्, येनावयवशः एकैकस्मिन्नेव न प्राप्येत, अपितु यथाविधिनिक्षिप्ताः तासां सुत्यानां तत्र सुत्यानामङ्गम् । अतश्च गवामयने चैव सुत्या द्वादशाहिकसुत्याविकारः, तत्सुत्यास्तत्र प्राप्ताः, नाप्यत्राऽन्यत्रेति नाभिप्लवादौ द्वादशाहस्य प्राप्तताप्राप्ति । न च एवमप्यपकानां प्रकृतौ भागधर्मत्वात् नामातिदेशाविषयसुत्यायां प्राकृतसुत्यानावयवसुत्याधर्मप्राप्तावपि अभावात् कथं प्राप्तिरिति वाच्यम् । भागधर्मत्वेऽपि तत्सुत्याङ्गत्वानपायात् । धर्मान्तरेषु हि केषुचित् तदहरपूर्वसाधनत्वमुद्देश्यतावच्छेदकम्, केषुचित्तु परमापूर्वसाधनीभूतभागविशेषत्वमिति एतावान् भेदः । न त्वेतावता तत्सुत्याङ्गत्वे कश्चिद्विरोधः । अतश्च तत्सामान्यविकारे उभयविधतद्धर्मप्राप्तिरविरुद्धैव । अत एव सौर्यादौ प्रोक्षण-

प्रयाजादीनां अतिदेशः । उक्तसुत्याविकारे एकाहादौ तु परमापूर्वप्रयुक्तप्रथमादिविभागाभावात् तत्प्रयुक्तधर्मलोपेऽपि अन्यत्रोभयप्राप्तिरविरुद्धैव । एवं च गवामयनिकतृतीयाहःसु: द्वादशाहिकदशाहान्तर्गततृतीयाहधर्माणामेव उभयविधानां प्राप्तेः, तत्र च मासधर्मभूतायाः अप्यामयणाया एव, तस्या एवेह प्राप्तेर्न विंशत्यात्मकभागरूपतया ऐन्द्रवायवाग्रताप्राप्तिरूपो भाष्यकारीयः सिद्धान्तः संगच्छते इत्यपि ध्येयम् । अतो यथावार्तिकमौपदेशिकी त्र्यनीकामासादावेव अधिकरणं योज्यं इति सिद्धम् ।

एतावत्तु वार्तिककारमतेऽपि चिन्तनीयम् । यत्र प्रकृतौ न्यूनभागवृत्तिधर्मः, विकृतौ च स भागोऽधिकदिनघटितः । अधिकानि च दिनानि न प्राकृततद्भागप्रकृतिकानि यथा अत्रैवौपदेशिकत्र्यनीकाऽभावे कृष्णाधिन्वया, तत्र तद्भागधर्मप्राप्तिः कथमिति ।

मण्डन— ' स्वस्थानवृद्धिं लभते त्र्यनीका । ' २६.

शंकर— ' त्र्यनीकाऽऽवृत्तिः स्वस्थानात् । ' २७.

● त्र्यम्बकाः एककपालाः चातुर्मास्येषु । ' अप्रतिष्ठिता वै त्र्यम्बकाः ' इति दोषमनुकीर्त्य इदं श्रूयते ' आदित्य चरुं निर्वपेत् पुनरेत्य गृहेषु, इयं वा अदितिः इयं प्रतिष्ठा ' इति । भा. ८।४।५।२१.

ॐ त्र्यम्बकेषु चतुष्पथैकोल्मुकयोः समुच्चयः ॥ ' चतुष्पथे एकोल्मुकमुपनिधाय जुहोति ' इत्यपि प्रकरणान्तरे श्रूयते । तत्र चतुष्पथस्यैव अग्निरूपदेशरूपत्वेन अग्न्यन्तरापेक्षत्वात् एकोल्मुके वा केवलचतुष्पथे वा होमः । इति विकल्पे प्राप्ते, अग्नित्र्यैयेति मतुपः प्रशंसार्थत्वेन चतुष्पथस्याग्निरूपता अनेनोपनेन विहितस्योल्मुकस्य त्यागे प्रमाणाभावात् विकल्पः । संकर्ष. २।४।१९.

● त्र्यम्बकेषु ' नेध्माबर्हिः संनह्यते, न प्रयाजा इज्यन्ते, नानुयाजा इज्यन्ते, न सामिधेनीरन्वाह ' इति । भा. ८।४।५।२१, ● त्र्यम्बकेषु पुरोडाशः करम्भपात्राणि तण्डुलाः इध्मबर्हीषि औषधानि चोच्यते । ८।८।६।२५. ● त्र्यम्बकेषु पुरोडाशेषु चातुर्मास्यगतेषु अभिघारणानभिघारणमीमांसा अर्थवादः । नि. १०।८।६. ● त्र्यम्बकेषु पुरोडाशेषु चातुर्मास्यगतेषु दर्विहोमत्वेन अनूर्ध्वमेव अभिघारणं विधीयते । भाट्ट. १०।८।७.



ॐ त्र्यम्बकाधिकरणम् । त्र्यम्बकपुरोडाशादिविषयकं अभिघारणानभिघारणविकल्पस्यार्थवादः ॥

पर्वेऽत्र तुल्यकालत्वात् । १०।८।५।८ ॥

भाष्यम्— चातुर्मास्येषु त्रैयम्बकानधिकृत्य समामनन्ति ' अभिघार्या नाभिघार्या इति मीमांसन्ते, यदभिघारयेत्, रुद्रायाऽऽस्ये पशूनभिदध्यात्, यन्नाभिघारयेत् रुद्रायाऽऽस्ये पशूनभिदध्यात् । अथो खल्वाहुरभिघार्या एव । न हि हविरनभिघृतमस्ति ' इति । तथा ' होतव्यमग्निहोत्रं न होतव्यमिति मीमांसन्ते ब्रह्मवादिनः, यदि जुहुयादयथापूर्वमाहुतीर्जुहुयात्, यन्न जुहुयादग्निः परा पतेत्, तूष्णीमेव होतव्यम्, यथापूर्वमाहुतीर्जुहोति, नाग्निः परा पतति ' इति । अत्रायमर्थः सांशयिकः किमभिघारयितव्यास्त्रैयम्बकाः, उत नाभिघारयितव्या इति । होतव्यमग्निहोत्रम्, न होतव्यं वा विधिप्रतिषेधावेतौ स्त, उत अर्थवादार्थमेतयोः संकीर्तनमिति । किं तावत् प्राप्तम्? विधिप्रतिषेधाविति ब्रूमः, तद्रूपत्वात् । विधिप्रतिषेधयोर्हि प्रत्यक्षं रूपमुपलभ्यते । श्रुत्या चानुष्ठानार्थता प्रतिषेधार्थता चावगम्यते । वाक्यादर्थवादार्थता । श्रुतिश्च वाक्याद्बलीयसी । न च पर्युदासोऽवकल्पते । तस्मादग्निहोत्रं होतव्यं न होतव्यं वा, यदा होतव्यं तदा तूष्णीम् । त्र्यम्बका अभिघारयितव्याः, न वा अभिघारयितव्याः, यदा पुनरभिघारयितव्याः, तदा अभिघारयितव्यवचनमर्थवादार्थम्, प्रतिषेधसंकीर्तनात् अमावास्यायां पुनरुच्यते इति । एवं प्राप्ते, ब्रूमः । पूर्वाधिकरणोदाहरणैः तुल्यकालानीमानि उदाहरणानि । का तुल्यकालता ? पूर्वं विधिप्रतिषेधौ अभिधाय तयोरेव तयोरभिसंबन्धः क्रियते इति । तदेतत् पूर्वाधिकरणेनैव तुल्यम् । यौ विधिप्रतिषेधौ श्रूयेते, न तावनुष्ठातुम्, वर्जयितुं वा । किं तर्हि ? मीमांसितुम् । यथमाह 'अभिघार्या नाभिघार्या इति मीमांसन्ते ' । तथा ' होतव्यमग्निहोत्रम्, न होतव्यमिति मीमांसन्ते ब्रह्मवादिनः ' इति । मीमांसा चेयमविधिरतदार्था । तथा प्रत्ययः शब्दार्थेन संबन्धः । न किंचित् कल्पनीयम् । विधिप्रतिषेधयोर्हि किंचित् कल्पनीयं स्यात् । ' यदभिघारयेत्, रुद्रायाऽऽस्ये पशूनभिदध्यात् ' इति । इदमभिधान

गुणवत्तरम्, यदीदृशोऽपि दोषो नाऽऽद्रियते इति । तथा, 'यज्जुहुयादयथापूर्वमाहुती जुहुयात्, यन्न जुहुयादग्निः परा पतेत्' इति । इत्थं तूष्णींहोमः प्रशस्तः, यदस्मिन् क्रियमाणे उभावपि दोषौ परिहृतौ भवतः इति ।

सोम— पूर्ववदिह विकल्पस्यान्यतः सिद्धत्वाभावात् प्रतिषेधस्य नानर्थक्यं इत्युत्थितेः ( प्रत्युदाहरण- ) संगतिः । माधवीये वेदभाष्ये "अस्मिन् ( तूष्णीं- ) होमे अग्निहोत्रशब्देन प्रसिद्धाग्निहोत्रधर्माः प्राप्नुवन्ति । तत्र यजुषा होमपक्षे क्रियमाणे 'सूर्यो ज्योतिः' इति मन्त्रः स्यात् । प्रसिद्धाग्निहोत्रस्य च सायमुपक्रमत्वात् तत्र प्राथमिकप्रयोगे 'अग्निर्ज्योतिः' इति मन्त्रेण सायं हुत्वा पश्चात् प्रातःकाले 'सूर्यो ज्योतिः' इति मन्त्रेण होमः इत्येवं क्रमः । इह तु आदावेव सूर्यो ज्योतिरित्यनेन हुताने प्रकृतिवत्क्रमाभावात् अयथापूर्वता स्यात्" इति व्याख्यातम् । तत् चिन्त्यम् । तूष्णींहोमे श्रूयमाणस्याग्निहोत्रशब्दस्य धर्मातिदेशकत्वाभावात् । नहि अत्र कुण्डपायिनामयनगताग्निहोत्रे इव विस्पष्टो अग्निहोत्रशब्दः श्रूयते येन धर्मातिदेशकत्वं स्यात्, किन्तु अर्थवादे, अर्थवादगतस्य च नाम्नो नातिदेशकत्वं स्तुत्युपक्षीणत्वात् । यथा 'एष वै दर्शपूर्णमासयोरवभृथः' इत्यत्र श्रुतेऽप्यवभृथशब्दस्य न धर्मातिदेशकत्वम् । यथा वा 'सोमो वै ब्राह्मिनं सुरा सोमः' 'उपद्रवो यूपः' इत्यादीनाम् । किञ्च अयं तूष्णींहोमः अग्निसंस्कारार्थः, तथा च 'अग्नये होममभिनद्' इति कौशिकत्वाभावात् प्रायणीयादिवत् नातिदेशकत्वम् । अत्र चायं पञ्चमे तन्त्राध्ये स्पष्टः । एवं च प्राकृतहोमविकारत्वाभावेन चाग्निकानां तदीयधर्मानुष्ठानमपि चिन्त्यम् । सूत्रार्थस्तु- पूर्वोक्तलिङ्गदर्शनयोः होमानभिघारणयोरपि गुणवत्त्वात् तुल्यन्यायत्वात् अन्यशेषत्वात् इति यावत् । तस्मात् इहाप्यर्थवादः स्यादिति ।

- नि— 'अभिघारनिषेधौ च होमाहोमौ विकल्पितौ । विधाप्यमानशेषौ वा विकल्प. श्रुतिसाम्यतः ॥', निषेधस्य विधेश्चात्र मीमांस्यत्वेन वर्णनात् । मीमांसाद्वयमर्थवादोऽस्त्वर्थे विधिस्थिते ॥' ( अर्थे विधिस्थिते उभौ मीमांसाद्वितौ अर्थवादः इति ) ।

भाट्ट— आधाने 'होतव्यमग्निहोत्रं न होतव्यमिति मीमांसन्ते ब्रह्मवादिनः । यद् यजुषा जुहुयादयथापूर्वमाहुतीर्जुहुयात्, यन्न जुहुयादग्निः परापतेत्, तूष्णीमेव जुहोति' इति श्रुतम् । तथा चातुर्मास्येषु त्र्यम्बकहोममधिकृत्य 'अभिघार्या अनभिघार्या इति मीमांसन्ते, यदभिघारयेत् रुद्रायास्ये पशूनपिदध्यात् । यन्नाभिघारयेत्, न रुद्रायास्ये पशूनपिदध्यात् । अथो खल्वाहुरभिघार्या एव । न ह्यनभिघृतं हविर्भवति' इति श्रुतम् । तत्रापि अन्तिमस्यैव विधेः सर्वोऽयं शेष. । न तु होमतदभावयोः अभिघारणतदभावयोश्च । होतव्यं न होतव्यं अभिघार्या अनभिघार्या इति विधिप्रतिषेधलक्षणाद्विकल्पः । तयोर्मीमांसाविशेषणत्वेन विधिशक्तिप्रतिबन्धात् । न च विकल्पे पक्षद्वयावलम्बनेन प्रयोगकाले मीमांसोपपत्तेः अन्यतरस्यैव विधेयत्वे एकपक्षावलम्बितया मीमांसाऽनुपपत्तिरिति वाच्यम् । अन्तिमविधितः पूर्वं संदिग्धत्वेन मीमांसोपपत्तेः । अवश्य निवारपूर्वकस्य तदन्ते निश्चायकत्वात् तदुपपत्तिः । एतादृशोऽयं होमोऽभिघारणं च यद्यप्युभयमपि बहुतरगुणत्वात् कर्तव्यमेव । होमे तु नैव वह्निदोष इति स्तुति. । अत्र च त्र्यम्बकहोमस्य दर्विहोमत्वेन अपूर्वत्वादपूर्वमेवाभिघारणं विधीयते । तूष्णींहोमे हि नाग्निहोत्रहोमत्वं, प्रमाणाभावात् । नाप्यग्निहोत्रधर्मकत्वम्, अर्थवादगतस्य नाम्नोऽनतिदेशकत्वात् । शास्त्रदीपिकोक्तरीत्या निषिद्धत्वेऽपि च तथापि आधानद्वारा अग्निप्रयोजकत्वेन अग्निसंस्कारत्वाविशेषात् प्रायणीयादिवदनतिदेशकत्वाच्च । अतोऽपूर्व एवायं होमः आधानाङ्गत्वेन विधीयते । तत्र मन्त्रे प्रमाणाभावादेव तूष्णीमित्यनुवादः । देवता तु अनादिष्टे प्रजापतिः । याज्ञिकास्तु अग्निहोत्रधर्मातिदेशं मन्यन्ते । तदा तूष्णींत्वस्यापि विधि. । परन्तु तदा धर्मान्तरे प्रमाणं मृग्यम् ।

मण्डन— 'त्र्यम्बकावधुति. स्तुतिः ।'

शंकर— 'होमाभिघारणे नित्ये ।'

● स्यार्थेयस्यैव कर्मविकार', नान्यस्य । भा. ६।१।१।४२.

त्र्यार्षेयाधिकरणम् । दर्शपूर्णमासयोः त्र्यार्षेय-त्वसंपादनसमर्थस्यैवाधिकारः ॥

अत्र्यार्षेयस्य हानं स्यात् । ६।१।११।४२ ॥

भाष्यम्—दर्शपूर्णमासयोः श्रूयते 'आर्षेयं वृणीते, एकं वृणीते, द्वौ वृणीते, त्रीन् वृणीते, न चतुरो वृणीते, न पञ्चातिवृणीते' इति । तत्र संदेहः किं अत्र्यार्षेयस्य अधिकारः, उत नेति । किं प्राप्तम् ? अत्र्यार्षेयोऽपि अधिक्रियते इति । कुतः ? 'आर्षेयं वृणीते' इति सामान्य-वचनम् । तस्मात् एकं वरिष्यति द्वौ वा । तथा दर्शयति 'एकं वृणीते, द्वौ वृणीते' इति । तथा प्रतिषेधति 'न चतुरो वृणीते, न पञ्चातिवृणीते' इति । न हि अप्राप्तस्य प्रतिषेधोऽवकल्पते । तस्मात् अत्र्यार्षेयोऽपि अधिक्रियेत इति । एवं प्राप्ते, ब्रूमः । यो न त्र्यार्षेयः स नाधिक्रियेत । कुतः ? 'त्रीन् वृणीते' इति विशेषवचनात् । विधिश्च अप्राप्तत्वात् । ननु एकं वृणीते इत्यपि विशेषवचनमस्ति । नेत्युच्यते, विधायिकाया विभक्तेरभावात् । ननु स्तुत्या विधास्यते, यथा त्रीन् वृणीते इति । उच्यते । त्रयाणामेव स्तुतिः । सा त्रित्व विधास्यति । एकं वृणीते इति अवयुत्यानुवादोऽयं त्रयाणामेव । तत्रापि त्रित्वमेव स्तूयते विधातुम् । एवं एकवाक्येन विधानं भविष्यति इति । 'न चतुरो वृणीते, न पञ्चातिवृणीते' इति नित्यानुवादो भविष्यति । तस्मात् त्र्यार्षेयस्याधिकारो नान्यस्येति ।

टुप्—'आर्षेयं वृणीते' इति सामान्येन (आर्षेय वरणस्य) विधिः । एकत्वादयस्तु (सामान्येनैव) प्राप्तत्वात् स्तुत्यर्थाः । चतुरादिप्रतिषेधस्तु तस्मिन्नेव पक्षे उपपद्यते । अथवा सामान्येन विहिते (सति वरणे) एकत्वादिभिः विशेष्यते । एवं प्राप्ते, ब्रूमः । 'आर्षेयं वृणीते' (इति सामान्यं विशेषं प्रति–) साकाङ्क्षं त्रीन् वृणीते इति वाक्यात् त्रित्वेन विशेष्यते । एकत्वादयः (तु) अवयुत्यानुवादः । अन्यथा (यदि एकत्वाद्यपि विधीयेत, ततः) वाक्यभेदः अदृष्टकल्पना अश्रुत-(विधि–) कल्पना च (प्रसज्येत) । सामान्येन विधिः एकत्वादयः अर्थवादाः इति चेत्, एवमपि चतुरा-दिप्रतिषेधात् वाक्यभेदः स्थित एव । अस्मत्पक्षे पुनः (आर्षेयं वृणीते, किं संख्यम् ? त्रीन्, इति) एक-वाक्यत्वात् न कश्चित् दोषः । त्रीणि आर्षेयाणि यः संपादयितुं शक्नोति, सः अधिक्रियते । चतुरार्षेयस्य त्रित्वसंपादने अस्ति सामर्थ्यम् । न च ईदृक् वाक्यम् 'त्र्यार्षेय एव अधिक्रियते' इति । ननु इदमेवास्ति 'त्रीन् वृणीते' इति, (उत्तरम्–) त्रीणि यः संपाद-यितुं शक्नोति, तस्य वरणमुच्यते । न 'यस्य त्रीण्येव' इति गुरुवाक्यं भवति, अनपेक्षितश्च संबन्धः (स्यात्) । (चोदयति–) 'न पञ्चातिवृणीते' इति पञ्चातिक्रमण-प्रतिषेधात् इदमवगम्यते अस्ति पञ्चाना वरणं इति । नैतदेवम् । अनुमानादेव तत्-वरणं कल्प्यते । न च अनुमानेन शक्यः शास्त्रार्थः अनुष्ठातुम् । त्रिवरणे न पञ्च वियन्ते, नापि अतिक्रम्यन्ते । एवं स्तुत्येन च स्तुतौ एकवाक्यत्वं घटते । इतरथा वाक्यभेदादि स्थित-मेव । तस्मात् त्रित्वसंपादनसमर्थः अधिक्रियते । 'भार्गव' इत्येतावन्मात्रं वरणं न कर्तव्यम् । मन्त्रपक्षे तु यस्यापि एकः, यस्यापि पञ्च, तस्यापि सकृदेव उच्चारणं 'मनुवत्' इति ।

शा—एकं द्वौ त्रीन् पञ्च वा वृणानः अधिक्रियेत इति प्राप्ते, अभिधीयते । 'असंख्याकविधौ तावत् प्रति-षेधद्वयाश्रयात् । वाक्यद्वयं प्रसज्येत त्रीनित्येतच्च पाक्षिकम् (प्रसज्येत) ॥ एकद्वित्रिविधानं च (प्रसज्येत) ततो वाक्यत्रयं भवेत् । विकल्पश्च भवेत् तस्मात् त्रित्वमेव विधीयते ॥'

सोम— पञ्चार्षेयद्व्यार्षेययोः अप्रतिसमाधेयान्यत्व-सामर्थ्याभावात् अस्ति अधिकार. इति प्रत्यवस्थानात् संगतिः । चतुःपञ्चार्षेयादीनां स्वीयऋषिमध्ये त्र्यृषित्व-वरणे अधिकारः सिद्धान्ते संमतः ।

वि—'त्रिर्धिरेण एकादावपि स्यात् भिक्ष एव वा ।, अविशेषात् पञ्च आद्यो, वाक्यभेदाय चूत्तरः ॥' तस्मात् कर्मणि अधिकुर्वन् यजमानः त्रीनेव उद्धारयेत्, न न्यूनं नाप्यधिकं इति तात्पर्यार्थः ।

भाट्ट— दर्शपूर्णमासयोः 'आर्षेयं वृणीते, एकं वृणीते, द्वौ वृणीते, त्रीन् वृणीते, न चतुरो वृणीते, न पञ्चाति वृणीते' इति श्रुतम् । तत्र तावत् एक विधायक अन्ये अनुवादाः इत्यविवादम् । अन्यथा सर्वेषां विधित्वे

वाक्यभेदविकल्पयोरापत्तः । अतः 'त्रीन् वृणीते' इत्येव विधिः । 'एकं वृणीते द्वौ वृणीते' इत्यस्तुत्यानुवादः त्रित्वस्तुत्यर्थः । 'न चतुरो वृणीते' इत्याद्यपि नित्यानुवादः तदर्थ एव । अतश्च त्र्यार्षेयवत् पञ्चार्षेयोऽपि त्रीनेव वृणीयात् । एकद्व्यार्षेययोस्तु नास्मिन् पक्षे अधिकारः । अपि तु 'अथ हैके मनुवत् इत्येकार्षेयं सार्वेवर्णिकं प्रतिदिशन्ति' इति वचनान्तरविहितमनुवत्पक्षाश्रयेणैव । तदेतद्भगवतो जैमिनेर्मतं आश्वलायनेरप्यनुमतम् । तथा च कात्यायनः अनुवदति 'पञ्चार्षेयस्त्रि त्रीणि' इति । आपस्तम्बोऽपि 'त्रीन् यथर्षि मन्त्रकृतो वृणीते' इति । तैस्तु पक्षान्तराण्यपि उक्तानि । 'यावन्तो वा मन्त्रकृतः' इति कात्यायनः । 'अपि वा एकं द्वौ त्रीन् पञ्च वृणीते, न चतुरो वृणीते न पञ्चाति वृणीते' इत्यापस्तम्बः । 'यावन्तः स्युः परंपरं प्रथमम्' इत्याश्वलायनोऽपि । तेषां चायमभिप्रायः, 'त्र्यार्षेयं वृणीते' इत्ययं विधिः इतरे अनुवादाः तत्स्तुत्यर्थाः । अतश्च 'त्रीन् वृणीते' इत्यपि अनुवाद एव । ईदृशोऽयं वरणसामान्यविधिः, यत् तावदार्षेयं प्रति तत्र संख्याकवरणं प्राप्यते इति स्तुतिः । इतरथा भवन्मते सामान्यवाक्येनैव वरणविधिं अभ्युपगम्यापि एकवाक्यत्वलाभाय पञ्चार्षेयस्यैव अधिकारापत्तेः अपामपि एषां अवस्तुत्यानुवादत्वापत्तिः । न चैवं चतुःषडादीनामपि वरणप्रसक्तौ तन्निषेधेन वाक्यभेदापत्तिः, एकद्वित्रिपञ्चार्षेयाणामेव प्रवराध्याये समाम्नानेन चतुःषडादेः अप्रसक्तेः । अतः अस्मिन्नपि पक्षे वाक्यभेदाद्यनापत्तेः एकद्व्यार्षेययोः अधिकारः । पञ्चार्षेयस्य पञ्चानां वरणं न विरुद्धमिति । यत्तु द्व्यामुष्यायणानां उभयतः कुलद्वयेऽपि वरणविधानात् अस्ति चतुःषडादीनां प्राप्तिरिति, तन्न । आश्वलायनेन (१२।१३।४-५) द्व्यामुष्यायणाननुक्रम्य 'तेषामुभयतः प्रवृणीते एकमितरतः द्वावितरतः, द्वावेकमितरतः त्रीनितरतः' ( [illegible] वेतरतः त्रीनितरतः इति पाठः । अत्र वृत्तिः— त्र्यार्षेयवरणपक्षे एकमितरतः इत्यादि । द्वौ वा इत्यादि तु पञ्चार्षेयप्रवरणपक्षोऽयम्) इति आवश्यकमुक्त्यन्तरमुक्त्वैव सन्निवेशात् । अतो भार्गवच्यावन इत्यादिविशेषरूपेण वरणपक्षेऽपि मनुवत्पक्षवदेव एकद्व्यार्षेययोरपि अधिकारः इति अस्मन्मतं बोध्यम् । ६।१।१०.

मण्डन—' विधिस्त्र्यार्षेयवरणे ।'

शंकर—' त्र्यार्षेयवरणात् सा स्यात् ।' सा अधिक्रिया ।

● त्र्यार्षेयपादः । षष्ठे तृतीयेऽध्याये चतुर्थः पादः अत्र चतुर्दश अधिकरणानि । के.

● त्वगिन्द्रियं स्पर्शमात्राभिव्यञ्जकतया स्पर्शवत्त्वानुमानेन वायुप्रकृतिकम् । मणि. पृ. १९. ● त्वक्सहितत्वधावनत्वादयः परिचिधर्माः । वि. १२।१।११.

● त्वन् प्रत्ययः कृत्यार्थः प्रतिषेधे । बाल. पृ. ४०, ● त्वन् प्रत्ययः कृत्यार्थः विधौ यथा— ' कर्त्वं हविः ' कर्तव्यमित्यर्थः । पृ. ४०.

**ॐ त्वष्टारं तूपलक्षयेत् पानात् ।३।२।१४।३५॥**

ज्योतिष्टोमे अस्ति पात्नीवतः सोमः 'आग्रयणात् पात्नीवतं गृह्णाति' इति । तत्र होममन्त्रः 'अग्ना३इ पत्नीवा३ः सजूर्देवेन त्वष्ट्रा सोमं पिब' इति । मन्त्र पात्नीवतस्य शेषभक्षणे पत्नीवता सह त्वष्टाऽपि उपलक्षणीयो न वेति विचारे, पूर्वपक्षमाह । पत्नीवता सह त्वष्टारं उपलक्षयेत् । पानात् पत्नीवता सह त्वष्टुरपि सोमस्य पानात् । तस्मात् त्वष्टृपत्नीवत्पीतस्य इति भक्षमन्त्रे ऊहः कर्तव्यः ।

**अतुल्यत्वात्तु नैवं स्यात् । ३६ ॥**

सिद्धान्तमाह । तुशब्दः पूर्वपक्षव्यावृत्त्यर्थः । एवं न स्यात् पात्नीवतशेषभक्षणे त्वष्टुरुपलक्षणं न स्यात् । अतुल्यत्वात् पाने त्वष्टुः पत्नीवता तुल्यत्वाभावात् । पाने अन्वयाभावात् इत्यर्थः । एवं त्वष्टृसाहित्यबोधकस्य मन्त्रस्य देवतानिर्देशबोधकस्य च अतुल्यत्वात् । अग्नेः सादित्येन वर्तमानस्य न त्वष्टुः न्यायुन्यत्वात् मन्त्रलिङ्गकल्पितस्य त्वष्टुः देवत्वात्वविधे. अग्निदेवत्वविधेश्च अतुल्यत्वात् तुल्यतन्त्वाभावात् । तस्मात् पात्नीवतभक्षमन्त्रे त्वष्टुः उपलक्षणं न स्यात् । इति सिद्धान्तः । के.

● 'त्वष्टारं तूपलक्षयेत् पानात्' ( कु. ३।२।१४। ३२ ) इत्यधिकरणे ' सजूर्देवेन त्वष्ट्रा सोमं पिब ' इति त्वष्टुरुपलक्षणमूलत्वात् न पानान्वयः इति व्यवस्थाप-

पिबति । मु. ३।११।१५।२६. ● त्वष्टुः अदेवत्वात् पात्नीवतसोमभक्षमन्त्रे स नोपलक्षणीयः । नि. ३।२।१४.

※ त्वष्ट्रधिकरणम् । पात्नीवतभक्षणे त्वष्टा नोपलक्षणीयः, ज्योतिष्टोमे ॥

त्वष्टारं तूपलक्षयेत् पानात् । ३।२।१४।३५॥

भाष्यम्— अस्ति पात्नीवतः सोमः । तत्र मन्त्रः 'अग्ना३इ पत्नीवा३ः सजूर्देवेन त्वष्ट्रा सोमं पिब' इति । तत्र संदेहः किं त्वष्टा उपलक्षयितव्यो न वेति । किं प्राप्तम् ? उपलक्षयितव्यः । कुतः ? पानात् । पानं श्रूयते, 'सजूर्देवेन त्वष्ट्रा सोमं पिब' इति । तेनायं ज्ञायते पत्नीवते सह त्वष्ट्रा दीयते इति गम्यते । यस्मै च येन सह दीयते, उभाभ्यां तद्दीयते । एवं तत् सहदानं भवति । यथा देवदत्ताय यज्ञदत्तेन सह शतं दीयताम् इत्युक्ते तयोरुभाभ्यामपि दीयते । तस्मात् त्वाष्ट्रोऽप्यसौ सोमः इति ( भक्षमन्त्रे ) त्वष्टा उपलक्षयितव्यः । अत्रापि इन्द्र इव पिबतीति ।

वा— तस्मिन्नेव पात्नीवते पत्नीवता सह पानस्य-निर्देशात् मान्त्रवर्णिकं त्वष्टुर्देवतात्वं इति पूर्वपक्षः ।

अतुल्यत्वात्तु नैवं स्यात् । ३६ ॥

भाष्यम्—नैतदेवम् । शब्दप्रमाणका वयम् । यच्छब्द आह, तदस्माकं प्रमाणम् । शब्दश्च अग्नेः पत्नीवत्पानमाह, त्वष्टुः सहभावमात्रम् । नहि अननुष्ठीयमाने सहभावः सिध्यति इति त्वष्टरि पानमनुमीयते । ननु त्वष्टुः पानं चोदितम् । यदि चोदितं मन्त्रवर्णेन, न चोदनया । चोदना हि 'पात्नीवतं गृह्णाति' इति । लोके तु कार्यं दृष्ट्वा चोदितमचोदितमपि अनुष्ठीयते एव । लोकेन चैतत् परिच्छिन्नम् । नैवमाम्नायवचनेन पानेन त्वष्टुः सोमः कृतो भवतीति ।

वा— नैवोपलक्षयितव्यस्त्वष्टा । कुतः ? 'मन्त्र-चोदनयोस्तावदतुल्यत्वं प्रतीयते । पातृत्वेनाप्य-तुल्यत्वं सहपानाभिधानतः' ॥ विधौ हि केवलं पत्नीवान् देवता नान्यत्रेति । तद्विशेनाग्नौ चोद्यते । न च तद्विषय अध्याहारेण बुद्धयो । तेनापि मान्त्रवर्णिकी दुर्वचा । न ■ मन्त्रवर्णस्य तद्देवतावचनत्वं विना कर्मसंबन्ध पत्नीवदभिधानेन सविशेषः । न च त्वष्टु-रभिधानं अन्यथा नोपपद्यते, तुल्यार्थमात्रत्वेन उपपद्य-मानत्वात् । अत एव न मन्त्रार्थो भवति 'गच्छं त्वष्ट्रा सहितः, त सोमं पिब' इति । इतरथा पातृत्वेनैव तावत् कीदृश देवताऽभिधानम् ? देवतायाः उद्देश्यमानो-पकारित्वात् । किं पुनर्यदा तत्रापि साहित्यमात्रश्रवणात् केवलमुपेक्षा । न चासौ ऐकाग्र्यैर्विनाऽपि कार्य-योगित्वेन सहशब्दप्रयोगात् । तद्यथा 'सहैव दशभिः पुत्रैर्भारं वहति गर्दभी' तत्र हि एकस्यैवार्थो विज्ञायते अन्यानि दशसु पुत्रेषु सैव वहति इति । तस्मात् त्वष्टु-र्देवतात्वमनवगम्यते । अतो नोपलक्षयितव्यः ।

सोम— पूर्वत्र इन्द्रवाय्वादीनां देवतात्वाभावात् अनुपलक्षणत्वेऽपि अत्र त्वष्टुर्देवतात्वात् उपलक्षणं इति प्रत्यवस्थानात् संगतिः ।

वि—'सह पत्नीवता त्वष्टा तद्-भक्षे लक्ष्यते न वा ।, सह त्वष्ट्रा पिबेत्युक्तेर्देवत्वात् सोऽपि लक्ष्यते ॥, सहत्वमात्रं त्वष्टुः स्यात् पानुस्वप्राधान्यात् । चोदनायां अभावाच्च न देवोऽसौ लक्ष्यते ॥' इति ।

भाट्ट—पात्नीवते एव 'अग्ना३ इ पत्नीवा३ः सजूर्देवेन त्वष्ट्रा सोमं पिब' इति मन्त्रात् त्वष्टुरपि देवतात्वम् । अतः सोऽपि अभिवदुपलक्षणीयः । इति प्राप्ते, युक्तमग्नौ पत्नीवच्छब्दस्य यौगिकत्वेन विशेष्यवाचकस्य सामानाधिकरण्येन विशेष्यवाचकत्वम्, त्वष्टुस्तु तृतीयया सहभावमात्रं प्रतीयते । न चासौ पानक्रियान्वयाभि-धायी 'सहैव दशभिः पुत्रैर्भारं वहति गर्दभी' इत्यादौ व्यभिचारात् । तथापि पाने देवतात्वस्य अप्रामाणिक-त्वात् । अतः पात्नीवतं इति निरपेक्षश्रुतिकेन पत्नीवतो-ऽग्नेरेव देवतात्वं इति स पत्नीवदुपलक्षणीयो न त्वष्टा ।

भण्डन— 'त्वष्टा न पात्नीवतदेवता स्यात् ।'

शंकर—'त्वष्टा चोद्येत नैव ।' पात्नीवते भक्षे ।

● त्वष्टुः पत्नु उपलक्षणान्तरा कर्तव्यं, पत्नु न उपलक्षणम् । इदं वाक्यमेव दर्शयति तु । वि. ४।८।१, भा ४।४।११–६. ● 'त्वाष्ट्रं पात्नीवतमालभेत' 'पर्यग्निकृतं पात्नीवतमुत्सृजन्ति' अत्र पर्यग्निकरणान्तस्य पशुधर्मस्य विधिः, न तु धर्मविधिः । वि. ३।१।१८. ● 'त्वाष्ट्रं पात्नीवतं पर्यग्निकृतं उत्सृजति' । 'आज्येन

तस्यैव गुणविधिर्विज्ञायते । ननु च सर्वे गुणविधिप्रकारा निराकृताः । सत्यं दोषा निराकृताः, पर्यग्निकरणान्ताङ्गरीतिपक्षस्तु न निराक्रियते । यद्यपि एष शब्दः इडान्तादिवत् ( इडाऽन्ता आतिथ्या संतिष्ठते इत्यनेव ) तदन्तत्वं न ब्रवीति, तथापि गमयितुं शक्नोति । नहि निर्वृत्तपर्यग्निकरणस्य पूर्वाङ्गेषु अकृतेषु संभवति । तस्मात् तदुपादानादेव अनुक्ताऽपि तदन्तता अवगम्यते । कथंभावापेक्षी च त्वाष्ट्रप्रयोगवचनः प्रकृतौ दृष्टसामर्थ्यपर्यग्निकरणान्ताङ्गकलापस्य अतिक्रमकारणाभावात् न प्रकृतिस्थानि सर्वाणि अङ्गानि अपेक्षते । तत्र एतावन्ति एव अस्याङ्गानि इति अवधारणात् स्वरूपप्राप्तिमात्रस्य च चोदकेनापि सिद्धेः उत्तराङ्गाननुष्ठानार्थमेव इदं वाक्यं इति फलेन व्यपदिश्यते, तेन उच्यते 'पूर्ववादवच्छेदः' इति । एवं च सति यागान्तरापूर्वान्तरानुमानादिक्लेशो न भवतीति । न च परपदसंबन्धविधानविप्रकर्षः । पर्यग्निकरणान्तविशिष्टे तु उत्सर्गे विधीयमाने यद्यपि उत्सर्गस्वरूपं प्राप्तमेव, तथापि तदुद्देशेन अङ्गकलापविधानात् अनत्यन्तविप्रकर्षात् स एव विधेयत्वेन उक्तः । त्वत्पक्षे तु 'दध्नेन्द्रियकामस्य' इत्यादिष्विव धातोः अत्यन्तपारार्थ्यं स्यात् । तस्मादपि अकर्मान्तरम् । प्रकरणादेव च पर्यग्निकरणान्ताङ्गग्रहणसिद्धेः पात्नीवतग्रहणं नित्यानुवादत्वात् अनन्वयम्, इति विशिष्टानुवादैकदेशव्यपदेशोपालम्भपरिहारः ( पर्यग्निकरणावस्थाविशिष्टपात्नीवतव्यपदेशलक्षणस्य, पात्नीवतस्वरूपेण च एकेनांशेन त्वाष्ट्रपात्नीवतव्यपदेशलक्षणस्य च उपालम्भस्य परिहार इति समासार्थः ) । तस्मात् गुणविधिः इति सिद्धम् ।

सोम— इह विधौ पात्नीवतमिति देवताश्रवणात् यागान्तर इति प्रत्यवस्थानात् संगतिः । सूत्रार्थस्तु— पात्नीवते 'पर्यग्निकृतं पात्नीवतम्' इति वाक्ये प्रत्यभिज्ञायमानपूर्वकर्मेतरात् तदन्ताङ्गरीतिविधानेन इतरेतामभावः स्यात् इति ।

वि— 'पर्यग्निकृतः पात्नीवत उत्सृज्यत इत्यसौ । यागो गुणो वा, यागः स्यादन्यानन्यत्वाधानतः ॥, ध्यनिष्टतत्पात्नीवतस्तोत्रगंशान्ततः । गुणं पर्यग्निकृत्याज्यं वक्त्युत्तरनिवृत्तये ॥ न दृष्टा परिसंख्याऽत्र चोदकात् प्राग् विधौ सति । पर्यग्निकरणान्ताङ्गरीतिः कल्प्योपकारतः ॥'

भाट्ट— 'त्वाष्ट्रं पात्नीवतमालभेत' इत्यनेन द्रव्यदेवताविशिष्टं यागं विधाय 'पर्यग्निकृतं पात्नीवतमुत्सृजति' इति श्रुतम् । तत्रोभयदेवत्यस्य पूर्वयागस्य 'आग्नेयं चतुर्धा करोति' इतिवत् केवलपात्नीवतपदेन अनुवादायोगात्, पर्यग्निकरणादेश्च विधेयस्य गुणस्य अतिदेशेनैव प्राप्तत्वात्, इतराङ्गपरिसंख्यायां च प्रदोषापत्तेः, पर्यग्निकृतपदस्य अनुवादत्वमङ्गीकृत्य कर्मान्तरविधिरेवायम् । इति प्राप्ते, प्रत्यभिज्ञानात् न कर्मान्तरम् । न चानुवादाऽनुपपत्तिः, सत्यपि अग्नीषोमाविव त्वाष्ट्रपात्नीवतोर्यागस्पृष्टदेवतात्वे मनोतास्थाग्निशब्दवत् लक्षणया अभिधानोपपत्तेः । वस्तुतस्तु पृथक्त्वाभिनिवेशात् देवताद्वयमेवेदम् । एकवाक्योपादानाच्च समुच्चयः । अतो वियद्वदितिक्रमोर्मता त्रिष्टुमाता इतिवत् लक्ष्यते एव केवलेन पात्नीवतपदेनानुवादः । अतः पूर्वकर्मानुवादेन गुण एव विधीयते । न च विधेयाभावः, उत्सर्गपर्यग्निकरणावस्थैव तत्प्रत्ययान्तार्थस्य विधेयत्वात् । तस्य च गृहमेधीयाज्यभागन्यायेन प्राकृतस्यैव अतिदेशतः पूर्वमनुत्पत्त्या विधेयत्वात्, फलोपकारकत्वेन च तेनैव नैराकाङ्क्ष्यात् अतिदेशाकल्पनेन उत्तराङ्गानामपादेव निवृत्तो भेदोपादानापत्तेः । उत्तरपर्यग्निकरणस्य च पूर्वाङ्गेष्वकृतेषु असंभवात् तान्याक्षिप्यन्ते । न च कल्प्यपरत्वेन प्रमाणान्तरप्रसिद्धत्वावगमात् अतिदेशाप्रतिबन्धकत्वम् । 'श्रोत्रिताम्यामुन्दूरस्तुगलाग्रशमयन्ति' इत्यादौ प्रमाणान्तराभावेऽपि एतद्विधिविधेयस्यापि कल्प्यत्वेन ज्ञातत्वेन बाधसंभावात् ।

मण्डन— 'त्वाष्ट्रे सर्वौ विधीयते ।'

शंकर— 'पात्नीवतयजिनं च ।'

☙ त्वाष्ट्रपात्नीवतपशोः पर्यग्निकरणोत्तरमुत्सर्गे सति 'आज्येन शेषम्' इति पत्नीयदेवताकं आज्यद्रव्यकं कर्मान्तरं विधीयते ॥

आज्यसंस्था प्रतिनिधिः स्याद्द्रव्योत्सर्गान् । ९।४।१४।५६॥

भाष्यम्— 'पर्यग्निकृतं पात्नीवतमुत्सृजति' इति प्रकृत्य श्रूयते । 'आज्येन शेषं संस्थापयति' इति । तत्र

संदेहः किमाज्यं पूर्वस्मिन् प्रतिनिधीभूतम्, अथवा आज्यद्रव्यकं पूर्वस्मात् कर्मान्तरं विधीयते इति । किं प्राप्तम् ? प्रतिनिधिरिति । कुतः ? पात्नीवतमिति द्रव्यमुच्यते । उत्सृजतीति नैव उत्सर्गः श्रूयते । शेषमिति तदयुक्तेतरत् विधानं गम्यते । तत् आज्येन संस्थापयतीति पशोः कार्ये आज्यं श्रुतं भवतीति । ननु पूर्वकर्म परिसमाप्तमित्युक्तम् । अत्रोच्यते । द्रव्योत्सर्गवचने प्राप्ते, शेषशब्दे वा अपरिहृते पुनरसमाप्तं पूर्वकर्म इत्याशङ्क्यते । तस्मात् प्रतिनिधीयते आज्यमित्याशङ्कामहे । संस्थापयतीति च अपूर्वे नोपपद्यते ।

समाप्तिवचनात् । ५७ ॥

भाष्यम्— इतश्च आशङ्कामहे । समाप्तिवचनमिदं भवति 'संस्थापयति' इति । तेन मन्यामहे यत् पूर्वं पशुना आरब्धम्, तत् उत्सृष्टे पशौ आज्येन परिसमाप्यते इति । अपूर्वस्य अस्य कर्मणः उच्यमानस्य आरम्भः एव वक्तव्यो भवति । भवन्तु अनभिधाय आरम्भं परिसमाप्तिरेव उच्यते, ततः अवगच्छामः, पूर्वस्यैव परिसमाप्तिः नापूर्वं कर्म चोद्यते इति ।

चोदना वा, कर्मोत्सर्गादिभ्यः स्यादविशिष्टत्वात् । ५८ ॥

भाष्यम्— कर्मान्तरचोदना वा । कुतः ? पूर्वस्य कर्मणः परिसमाप्तत्वात् । ननूक्तं द्रव्योत्सर्गे शेषवचने वा अपरिहृते पूर्वकर्मणः समाप्तिराशङ्किता भवति । अत्रोच्यते । इदं द्वयमपि परिह्रियते । संस्थापयतीति प्रकृतेन पात्नीवतशब्देन संबध्यते । तत्रायमर्थः पात्नीवतं संस्थापयति इति । स एव यागो विधीयते । संपूर्वश्च स्थापयतिः प्रयुज्यते । अयमयं कश्चित् धातुः संपूर्वो भाववचनश्च प्रयोक्तव्य इति । तत्र अनिरुद्धो भावनायामुच्यमानायां अर्थप्राप्तः संस्थापयतिः आलभतिरिव प्रयुज्यते । शेषशब्दश्च एवं सादृश्यात् प्रयुज्यते । द्रव्योत्सर्गश्च अविरुद्ध एव यागे उच्यमाने । तस्मात् यथा अन्ये निर्वपत्यादयः कर्मान्तरविधाने भवन्ति, एवं तैः अविशिष्टत्वात् संस्थापयतिरपि भवितुमर्हतीति ।

अनिज्यां च वनस्पतेः प्रसिद्धां तेन दर्शयति । ५९ ॥

भाष्यम्— प्रसिद्धां वनस्पतेः अनिज्यां अत एव दर्शयति । कथम् ? 'यद् त्वष्टारं च वनस्पतिमावाहयसि, अयवैतो यक्ष्यसि, त्वाष्ट्री नवमी प्रयाजेज्या, वानस्पत्या दशमी, अथैव एतानिष्टौ विद्यात्' इति अङ्गान्तरेण अनुपदं ब्रुवन् वनस्पतीज्यायाः अभावं दर्शयति । शेषपरिसमाप्तौ तस्या 'वनस्पतिं जुहोति' इति वनस्पतीज्या क्रियते । अथ परिसमाप्तं पूर्वं कर्म, ततो इज्या स्यात्, तत्र अभावदर्शनमुपपद्यते । तस्मात् पूर्वकर्म परिसमाप्तम् । इदमपि कर्मान्तरमिति ।

संस्था तद्देवतत्वात् स्यात् । ६० ॥

भाष्यम्— अथ यदुक्तं 'संस्थापयति इति च अपूर्वे नोपपद्यते' इति, तत् परिहर्तव्यम् । अत्रोच्यते । अर्थसंस्थाया संस्थापयनमेतत्, तदपि पूर्वं पात्नीवतमिति समानदेवतत्वात् समाप्तिसादृश्यं शक्यते । तत्र तत् पात्नीवतपारब्धम्, इह परिसमाप्तमिति । स एष सादृश्यात् संस्थापयतीति शब्दः अवकल्पते इति ।

सोम— पूर्वाधिकरणे 'आज्येन शेषं संस्थापयति' इति इदं लिङ्गदर्शनमेव प्रसक्तम्, तत्र च यागान्तरविधित्वे एव तस्य लिङ्गत्वमुपपद्यते इति तस्य यागान्तरविधित्वसमर्थनात् संगतिः । सूत्रार्थस्तु—आज्येन शेषं संस्थापयति इत्यत्र आज्य प्रतिनिधिः स्यात् पशुद्रव्यस्य उत्सृष्टत्वेन कर्मणः द्रव्यापेक्षत्वात् इति । ९।४।१५०

वि— 'आज्येन शेषमित्युक्तौ द्रव्यप्रतिनिधिर्भवेत् । कर्मान्यद् वा, ऽग्निमत्त्वागतोपयोगस्थापनोक्तिभिः ॥ अङ्गरीत्या समाप्तत्वाद् देवतोक्तरनुवर्तनात् । शाम्याद् शेषः संस्थितिस्तु याग आलम्भनादिवत् ॥' ९।४।१५०

भाट्ट—पात्नीवतयागे पुनराक्षेपः । तत्र हि 'पर्यग्निकृतं पात्नीवतमुत्सृजति' इत्युक्त्वा 'आज्येन शेषं संस्थापयति' इति श्रुतम् । अपूर्वत्वे हि शेषावस्थाऽनुपपत्तेः पर्यग्निकरणवाक्ये पर्यग्निकरणोपरितोऽल्पमेव प्रधानं यागकर्तव्यता अपकृष्य विधीयते । तत्करणे च विराडादिपदार्थलोपेऽपि अन्याङ्गलोपे प्रमाणाभावात् शेष यद् विशिष्टमवशिष्टं तद् आज्येन संस्थापयतीति विधीयते ।

यद्यपि च प्रयाजादौ आज्यं प्राप्तमेव, तथापि स्विष्टकृद्वनस्पतियागादौ आज्यनिर्भिन्नं निषिध्यते । न च विशसनाभावादेव न्यङ्गार्थत्वात् 'अस्य सर्वाणि हवींषि' इत्यनेनैव स्विष्टकृत्यपि आज्यप्राप्तिः शङ्क्या, नाशादिनिमित्ताभावेन तदप्राप्तेः, विशसनस्य अङ्गप्रधानसाधारण्येन न्यङ्गार्थमपि प्राप्त्युपपत्तेश्च, वनस्पतियागादौ आज्यविधेरपि उपपत्तेश्च । नचात्र कर्मान्तरत्वे किञ्चित् प्रमाणमस्ति, प्रत्युत शेषसंस्थापदयोः अनुपपत्तिः । इति प्राप्ते, 'यत् त्वष्टारं च वनस्पतिमावाहयति अथयैतौ यक्ष्यति' इति पूर्वे 'त्वाष्ट्री नवमी प्रयाजेष्या, वानस्पत्या दशमी अग्नेरेतौ यज्ञौ विद्यात्' इति वनस्पतियागस्य अङ्गान्तरेण अनुमन्त्रणेन अभावावगतेः, तस्य च अपूर्वत्वमन्तरेण अनुपपत्तेः पूर्ववाक्ये प्रधानापकर्षमात्रविधिः, अपि तु तदन्तःपातीतिविधिरेव अपूर्वोत्पत्तिः । यद्यपि च अक्रियमाणस्य वनस्पतियागस्य देवताऽऽवाहनमपि नैव प्राप्यते, तथापि सिद्धवन्निर्देशान्यथाऽनुपपत्त्यैव आवाहनविधिकल्पना । त्वष्टुस्तु प्रधानदेवतात्वादेव आवाहनाविरोधः, प्रश्नेषाभावाभिप्रायेण च नवम्या अनुमन्त्रणोक्तिः । अतश्च पूर्वकर्मणि शेषाभावेन आज्यविधानानुपपत्तेः गुणात् कर्मान्तरमेवेदं आवाहनानुमन्त्रणकं अनुमानपत्नीवतदैवत्य उपांशुयाजप्रकृतिकम् । शेषसंस्थाशब्दौ तु पूर्वस्य कर्मणः अवसानप्रायतया कथंचित् अनुवादकौ इति । सिद्धान्तिविध ऊहः । १३.

मण्डन— 'सोमाऽऽज्येन पृथग् यष्टिः ।' १४.

शंकर— 'आज्यशेषवच्चाग्नि ।' यागः । १५.

* त्वाष्ट्रपात्नीवतपश्वनुयागाख्यस्य पूर्वस्य कर्मणः 'पर्यग्निकृतं पात्नीवतमुत्सृजति' इत्यनेन पर्यग्निकरणान्तस्यैव पर्यवसानविधानात् प्रत्ययानुग्रहार्थे संस्थापयतिपरेण पञ्चमलकारेण 'आज्येन करोति' इत्यादिविशिष्टकर्मान्तरविधानगतेः शेषशब्दस्य एकावयविगतोपयुक्तावयवान्यावयवात्मकत्वविशिष्टवाचिकत्वायोगात् तद्गतैकोपाध्यन्वितोपयुक्तपात्नीवतपशुयागान्याज्ययागरूपे कर्मान्तरे त्वाष्ट्रपत्नीवद्दैवतात्वसाम्यात् तच्छब्दो ना शेषशब्दप्रयोगः इति नरमान्ये वक्ष्यते । सु. पृ. १५१५.



* त्सरा नाम छद्मगतिः । यथा शकुनिग्राहकस्य शकुनिं जिघृक्षतः छद्मना गतिर्भवति, शनैः पादन्यासः, दृष्टिप्रणिधानम्, अशब्दकरणं च कथमनवबुद्धः शकुनिं गृह्णीयेति । भा. ९।१।६।२२.

---

द.

* दंपती उभावपि स्रवन्तौ (अस्रवन्तौ) इत्येवं तावत् स्थितम् । वचनात् तयोः सहक्रिया । भा. ६।१।४।१७ * दंपत्योः कर्तृत्वं व्यासज्यवृत्ति । तस्मात् दंपत्योः सहाधिकारः कर्मसु । अन्यथा प्रत्येकस्य कर्मणि वैगुण्यप्रसङ्गः । वि. ६।१।४. * दंपत्योः कर्मसु सहाधिकारः । सहाधिकाराधिकरणं द्रष्टव्यम् । भा. ६।१।४।१७–२१, * दंपत्योः मध्यगं हीदं धनम् । अतः अवश्यं च सह पत्न्या यष्टव्यम् । ६।१।४।१७. * दंपत्योः सन्निपत्य कर्मभेदः । यागाधिकारस्तु सहैव । रत्न. ६।१।४।१७–१८.

* दक्षिणेऽग्नौ पत्न्याः भवस्य श्रपणमाम्नातम् । यदा आमयदोषात् मांसं भक्तार्थे उपादीयते, तदा तत्र दक्षिणाग्नौ अपवित्रव्यम् । भा. १२।२।६।७.

सू. दक्षिणेऽग्नौ वरुणप्रघासेषु देशभेदात् सर्वं क्रियते । ११।२।९।३५ ॥

वरुणप्रघासेषु द्वौ आहवनीयौ तत्र दक्षिणे अग्नौ उत्तरेऽग्नाविव सर्वं आम्नातं पृथक् क्रियते । देशभेदात् दक्षिणः उत्तरः इति देशयोर्भेदात् । इति सिद्धान्तः ।

अचोदनेति चेत् । ३६ ॥

पूर्वपक्षी आह । दक्षिणविहारे कर्तव्यायाः मारुत्या आमिक्षायाः फलं प्रति अचोदना, न चोदना, न विधानम् । किंतु वरुणप्रघासान् प्रति मारुत्याश्चोदना । तथा च कर्मणः अचोदनात् अङ्गानां प्राप्तिरेव नास्ति, कृत्स्नाभ्यम् । इति चेत् ।

स्यात्, पौर्णमासीवत् । ३७ ॥

सिद्धान्ती आह । स्यात् दक्षिणविहारे अङ्गानां प्राप्तिः । पौर्णमासीवत् 'पौर्णमास्यां पौर्णमास्या यजेत' इति न तावत् कर्म फलं प्रति चोद्यते, अथ च साङ्गप्रधानं पौर्णमास्यां क्रियते, एवमिहापि ।

प्रयोगचोदनेति चेत् । ३८ ॥

पूर्वपक्षी पुनराह । पौर्णमास्यां श्रुतम् । यजेत इत्यास्पातेन प्रयोगचोदना पौर्णमास्याः प्रयोगस्य चोदना कृता, प्रयोगश्च अङ्गप्रधानानां भवति । तस्मात् तत्र साङ्गं क्रियते । इति विषयो दृष्टान्तः । इति चेत् ।

तथेह । ३९ ॥

सिद्धान्ती आह । यथा पौर्णमासीवत् मारुत्यामपि 'अथाऽध्वर्युरुत्तरे विहारे हवींष्यासादयति, मारुतीमेव प्रतिप्रस्थाता दक्षिणस्मिन्' इति आसादयति शब्देन निर्वपेत् आलभेत इतिवत् लक्षणया याग एव चोद्यते । तथा च प्राप्तानामङ्गाना भेदेन क्रिया ।

आसादनमिति चेत् । ४० ॥

आह पूर्वपक्षी । पौर्णमास्या यजेत इति पदेन याग उच्यते । 'मारुतीं प्रतिप्रस्थाता आसादयति' इति आसादयति–पदेन न याग उच्यते किंतु आसादन स्थापनम् । तथा च नाङ्गाना प्राप्तिः स्यात् । इति चेत् ।

नोत्तरेणैकवाक्यत्वात् । ४१ ॥

आह सिद्धान्ती । नैष दोषः । यद्यपि आसादयतिशब्देन आसादनमुच्यते तथापि तत् होमार्थमेव नादृष्टार्थम् । उत्तरेण 'अथाध्वर्युरुत्तरे विहारे हवींष्यासादयति' इत्यनेन उत्तरविहारविषयकेण वाक्येन सह 'मारुतीमेव प्रतिप्रस्थाता दक्षिणस्मिन्' इति दक्षिणविहारविषयकवाक्यस्य एकवाक्यत्वात् । तथा च उभयत्रापि आसादयति-पदेन लक्षमासादन होमार्थमेव । तस्मात् अङ्गानां प्राप्तिः ।

अवाक्यत्वाच्च । ४२ ॥

वस्तुतस्तु आसादयति-पदेन होमार्थस्य आसादनस्य अवाक्यत्वात् हविषां वेद्यामासादनस्य प्रकृतित एव प्राप्तत्वात् । तस्मात् आसादयति-पदेन निर्वपेत् आलभेत इतिवत् लक्षणया यागप्रयोग एवोच्यते । तथा च अङ्गानां प्राप्तिः । तस्मात् विहारयोस्तन्त्रभेदः ।

आम्नायवचनं तद्वत् । ४३ ॥

आसादयति-पद लक्षणया यागप्रयोगपर इत्यत्र तात्पर्यग्राहकमाह सिद्धान्ती । 'यदेवाध्वर्युः करोति, तत् प्रतिप्रस्थाता करोति' इति आम्नायस्य वेदस्य वचन वदत् उत्तरविहारवत् दक्षिणे विहारेऽपि अनुष्ठानं ब्रूते । तस्मात् आसादयति शब्दः लक्षणया यागप्रयोगमेव ब्रूते । तत्र अङ्गाना प्राप्तिः । तस्मात् दक्षिणविहारेऽपि अङ्गाना पृथगनुष्ठानं इति सिद्धान्तः । के.

● दक्षिणेऽग्नौ सुरायहान् जुहोति सौत्रामण्याम् । भा. ३।५।३।१४.

● दक्षिणदेशाभिर्गताः प्राच्य वा उदच्य वा अवग्यितः आहीनैनुकादीन् कोल्यैव । भा. १।३।७।१९. ● दक्षिणदेशेषु मातुलसुतापरिणयं कुर्वन्ति । तत्र स्मृतिविरुद्धम् । वि. १।३।५ वर्णकं २.

● दक्षिणविहारे क्रियमाणप्रायश्चित्ते पृथगङ्गानुष्ठान वरुणप्रघासेषु चातुर्मास्येषु । भा. ११।२।९।१५–४१, ● दक्षिणविहारे प्रतिप्रस्थाता अध्वर्योः पृथक् मन्त्रोच्चारण कार्यं वरुणप्रघासेषु चातुर्मास्यगतेषु । १२।१।९।१८, ● दक्षिणविहारे मारुत्यामिक्षाया हविषोऽर्थेन वरुणप्रघासेषु अग्निमन्थनादेः पुनर्विधानं चातुर्मास्येषु । ७।१।३।२१.

● दक्षिणहविर्धानदेशः अभिषेचनीयानमनुवचनार्थः ज्योतिष्टोमे । भा. ३।७।३।१५–१७. ● दक्षिणहविर्धानशकटसमीपे सोमाभिषवः । वि. ३।७।७.

● दक्षिणा अध्वर्य्वादीनां परिक्रयार्था कर्मसंयोगात् । भा. ३।१।६।१२ पृ. ६९७. ● दक्षिणा अनुवं भवि वेचनीये राजसूयान्तर्गते सोमयागे । वि. ११।४।२, ● दक्षिणा अश्वमेधे 'हिरण्मयी प्राकाशौ अध्वर्यवे ददाति' । प्राकाशौ दीपस्तम्भौ इत्येके, दर्पणौ इत्यपरे । तयोः ग्रहणं अध्वर्युमात्रस्य बाधः । अन्येभ्यस्तु ऋत्विग्भ्यः यथायथं देयमेव, न तस्य बाधः । ११।३।१७. ● दक्षिणा आग्रयणे 'वासो दक्षिणा' 'वत्सः प्रथमजो दक्षिणा' । अनया प्रकृतस्य अन्वाहार्यस्य निवृत्तिः (अत्र श्यामाकाग्रयणे वासो दक्षिणा, ब्रीह्याग्रयणे च वत्सः प्रथमजो दक्षिणा) । भा. १०।३।६।२४. ● दक्षिणा आधाने 'एका (गौ) देया, षड् देयाः, द्वादश देयाः, चतुर्विंशतिर्देयाः, शतं देयं सहस्रं देयं अपरिमितं देयम्' (सहस्रादिकम्) । इदं विकल्पेन । वि. ६।७।१०, ● दक्षिणा उपहव्ये अग्निष्टोमसंस्थे अश्व. श्वेत. । उपहव्ये उक्थ्यसंस्थे अश्वः श्यावो दक्षिणा स ब्रह्मणे देय. । स च कृष्णकादाक्षिण्यनिवर्तक । भा. १०।३।१८।६५–६७.

* दक्षिणा उपहव्ये यज्ञादे श्यावोऽश्वः । स ब्रह्मणे देयः, इतरेभ्यस्तु न किमपि शास्त्रीयम् । लौकिकेन तु दानेन तेषामानतिः । वि. १०।३।१८. * दक्षिणा ऋतपेये औदुम्बरः सोमचमसः । स प्रियाय सगोत्राय ब्रह्मणे देयः । स च कृत्स्नस्य क्रतुदाक्षिण्यस्य निवर्तकः । भा. १०। ३।१९।६८–७३. * दक्षिणा अन्विष्या कृत्स्नाह्नकारिणी । परिक्रयस्य चैतद्रूपम् । शा. ३।४।१७।४९. * दक्षिणा आग्नेयः हिरण्यामवेष्टौ राजसूये । भाट्ट. ११।४।२. * दक्षिणा ज्योतिष्टोमे 'गौश्च अश्वश्च अश्वतरश्च गर्दभश्च अजाश्च अवयश्च, व्रीहयश्च यवाश्च तिलाश्च माषाश्च'। तत्र गाव एव द्वादशशतं ( द्वादशाधिकं शतम् ) । भा. १०।२।८।२२, * दक्षिणा ज्योतिष्टोमे साङ्ग कर्मणाधि-मङ्गीकृत्य दीयते । १०।६।१८।६५. * दक्षिणा ज्योति-ष्टोमादौ प्रधानार्था, न तु अङ्गार्था । वि. ३।७।५. * दक्षिणा दर्शपूर्णमासयोः अन्वाहार्यः चरुः । भा. १०।३।६।३४, * दक्षिणा दीक्षा च प्रधानार्था ज्योति-ष्टोमे । ३।७।५।११–१२. * दक्षिणा द्वादशशतगोरूपा ऋत्विग्भ्यो विभागेनैव विशिष्टेन देया, न तु स्वेच्छया वा समुदायार्थे वा । वि. १०।३।१२. * दक्षिणा द्वादशाहे प्रत्यहं वचन 'अन्वहं द्वादशशतं ददाति' इति । भा. १०।६।१७।६६, * दक्षिणा धेनुः ( एकैव ) भूः नाम यागे । सा च कृत्स्नाया क्रतुदाक्षिण्यस्य निवर्तिका, न तु केवलं गवामेव । १०।३।१४।५९, * दक्षिणा नाम दक्षते-रुत्साहकर्मणः । दक्षिणा उत्साहिका इति । एकः स गुणः । स च प्राधान्येन विवक्षितः । १०।३।१४।५७. * दक्षिणा विराड् पष्ठौही तृतीयायामवेष्टौ राजसूये । भाट्ट. ११। ४।२. * दक्षिणा पुनराधाने पुनरुत्स्यूत वासो दक्षिणा, पुनरुत्सृष्टोऽनड्वान् ( पुनर्निष्कृतो रथो दक्षिणा । श्रु. )। भा. १०।३।५।३०, * दक्षिणा पौण्डरीके एकादशाहे प्रथमे नवाहे गवां सहस्रम्, दशमेऽहनि तु अश्वसहस्रम् इति पार्थसारथि-मानवसूत्रानुसारात् । भाट्ट. १०।६।१७. * दक्षिणा भूः नामकैकाहे एका धेनुः । धेन्वा चानया 'गौश्चाश्वश्च' इत्यादिनिखिलदक्षिणाबाधः । वि. १०। ३।१४. * दक्षिणा । यत्र हि धार्त्विक्रमपि अहः न लभ्यते न सा दक्षिणा भवति । न हि या तस्मिन् कर्मणि दक्षं करोति । दक्षकरणी हि दक्षिणा । दक्षश्च बलम् । या न आशितम्भवं ( अशोषस्यौर्जठरपूर्तिपर्याप्तम् ) करोति नासौ बलकरणी । तस्मात् या न आशितम्भवा नासौ दक्षिणा । आशितम्भवाया आधिक्यं वचनस्य विषयः । तस्मात् आशितम्भवं यद् द्रव्यम्, सा भृतिः सा दक्षिणा । भा. १०।३।११।४५. * दक्षिणा राज-सूयगते प्रथमे त्रिके 'सौमापौष्ण एकादशकपालः ऐन्द्रा-पौष्णश्चरुः, पौष्णश्चरुः श्यामो दक्षिणा' इति । द्वितीये तु त्रिके 'आग्नावैष्णव एकादशकपालः, ऐन्द्रावैष्णवश्चरुः, वैष्णवस्त्रिकपालः, वामनो दक्षिणा' इति । वि. ११।४।१. * दक्षिणा वरुणप्रघासेषु 'प्रयसमृषभं दक्षिणा ददाति'। भा. ११।२।२०।४६. * दक्षिणा वत्सा चतुर्थ्यामवेष्टौ राजसूये । भाट्ट. ११।४।२. * दक्षिणा वाजपेये 'यजुर्युक्तं रथमध्वर्यवे ददाति'। यजुर्युक्तरथेन कृत्स्ना अपि अतिदिष्टादिदक्षिणाया न बाधः । वि. १०।१।२०. * दक्षिणा शितिपृष्ठः पञ्चम्यामवेष्टौ राजसूये । भाट्ट. ११।४।२. * दक्षिणा शुनासीर्ये श्वेता गौः । के. * दक्षिणा श्येने दीक्षणीयायां द्वादशमानं हिरण्यम्, प्रायणीयायां चतुर्विंशतिमानम् । भा. ८।२।९।१६, * दक्षिणा सत्रेषु नास्ति । १०।२।११।३५–३८, * दक्षिणा समुदायाङ्गम्, नावयवाङ्गम् । १०।३।७।६२. * दक्षिणा सहस्रस्य शृङ्गपत्नीये परिक्रयार्थेन न अदृष्टार्था । वि. १०।२।१२, * दक्षिणा सोमापहारे एकैव गौः न तु द्वादशशतम् । अश्वाश्वतरादयस्तु सन्त्येव । गोविषये एवायं नियमः । १०।३।१५, * दक्षिणा सोमा-भिषवे पञ्चैव गावः, न तु द्वादशशतम् । गोविषय एवायं नियमः । अश्वाश्वतरादयस्तु सन्त्येव । १०।३।१५. * दक्षिणा हिरण्यं प्रथमायामवेष्टौ राजसूये । भाट्ट. ११।४।२. * दक्षिणा ज्योतिष्टोमादौ माध्यदिने सवने दीयन्ते । वि. १०।६।१८. * दक्षिणाः 'त्रिष्टुभो लोके माध्यंदिने सवने नीयन्ते' ज्योतिष्टोमे ( दक्षिणदेशात् उत्तरदेशे नयनम् । ततो विभज्य दानम् ) । भा. १०।६।१८।६९, * दक्षिणाः प्रधानार्थाः सत्यः प्रत्यङ्गाद्गुणानामुपकुर्वन्ति इति वक्ष्यामः ( १२।१।३१ इत्यत्र ) । शा. ३।७।२।११. * दक्षिणया नैमित्तिके पुनराधाने श्रुतया आधानसामान्यविहितैकादि-

दक्षिणाया बाधः । भा १०।३।५।२०–२२, ● दक्षिणया नैमित्तिक्या एकादिरूपया ज्योतिष्टोमे नित्यप्रयोगीय-द्वादशशतसंख्यात्मकस्य बाधः यथा सोमापहारे । १०।३। १५।५१–६२. ● दक्षिणया परिक्रीतानामृत्विजां होम-दर्शनात् अध्वर्यवे वैसर्जनहोमीयवासोदानस्मृतिरप्रमाणम् । वि. १।३।३. ● दक्षिणया सौमिक्या सोमाङ्गेष्टिषु सोप-भक्षणा प्रसङ्गसिद्धिर्नास्ति । भा. १२।१।१७।३३–३४, ● दक्षिणाभिः ऋत्विक्परिनियमः । दीक्षादक्षिणवाक्यनिर्दिष्टा ऋत्विजः षोडशैव, न चमसाध्वर्यवः । ३।७।१७।३६–३७, ● दक्षिणायाः अन्वाहार्यरूपायाः दार्शिक्याः सोमा-ङ्गदीक्षणीयादीष्टिषु सौमिकदक्षिणया प्रसङ्गसिद्धिः । १२। १।१६।१२, ● दक्षिणायाः द्वादशशतगोरूपायाः विभज्य दानं ज्योतिष्टोमे ( १२+६+४+३ = २५×४ = १०० +१२ = ११२ ) । १०।३।१२।५०–५२, ● दक्षिणायाः द्वादशशतसंख्यायाः अध्वर्य्वादिनामाख्यानुरोधेन विभागः । १०।३।१३।५२–५९. ● दक्षिणायाः श्रुति रूपत्वं वेदवाक्यादेवावगम्यते 'दीक्षितमदीक्षिता दक्षिणा-परिक्रीता ऋत्विजो याजयेयुः' इति । वि १०।२।८. ● दक्षिणानां अपरिमितत्वं पूर्वोक्तात् संख्याऽन्तर आधाने । भा. ६।७।१०।२९, ● दक्षिणानां अपरि-मितत्व सहस्राधिकत्वं आधाने । ६।७।११।३३–३५, ● दक्षिणानां उत्पत्तिविधौ विशिष्टकालसंबन्धः श्रूयते 'तस्मात् मिथुनो लोके माध्यन्दिने सवने दक्षिणा नीयन्ते' इति । १०।६।१८।७१. ● दक्षिणानां ऋत्विगानमनार्थ-त्वात् । आनमनं न सहाय्योपादित्सया । वा. ३।७।५।१२. ● दक्षिणानां दक्षिणदेशादुत्तरदेशे नयन प्रयह विभज्य पौण्डरीके । भा. १०।६।१८।६९–७२. ● दक्षिणानां द्वादशशतसंख्या गवामेव, न तु अश्व–अश्वतर–तिल–माषादिषु प्रत्येक या मिलित्वा या । द्वादशाधिकं शतं द्वादशशतम् । वि. १०।३।११. ● दक्षिणानां नयनादि-संस्कारसंस्कृतानां प्रत्यर्पण कार्यम् । भा १०।६।१८।७०, ● दक्षिणानां संख्यासु विकल्पः आधाने । १२।४।५।१९.

● द्वादशशतं गावः इत्युदाहृतश्रुतिवाक्ये गोशब्दा-भावेऽपि तत्र निर्दिष्टा द्वादशसंख्या 'गौश्चाश्वश्चाश्वतरश्च गर्दभश्च' इत्यादि पूर्वसंदर्भानुरोधात् गोविषया इति दक्षिणा-अधिकरणे निर्णीतत्वात् गावः इत्युक्तम् । परिमल. २।३।१।१ व्याख्या.

● दक्षिणान्तर्गतगोष्वेव द्वादशशतसंख्यानिवेशः न तु अश्वादौ ज्योतिष्टोमे । भा. १०।३।११।३९–४९.

● दक्षिणार्थनिर्दिष्टभागस्यैव सर्वस्य विश्वजिति देयता । भा. ६।७।७।८–१३.

● 'दक्षिणाचारेण कर्तव्यम्' इत्यादिस्मृतिः वेदा-विरुद्धत्वात् प्रमाणम् । भा. १।३।३।५–७.

● दक्षिणाम्नानं विकृतौ चोदकेन प्राप्त बाधित्वा विविधने निरोधाम् । टुप्. १०।५।२५।८५.

● दक्षिणैक्यात् कर्तृभेदो नास्ति । टुप् ११।४। ५।२७, ● दक्षिणैक्यात् द्वादशाहस्य तन्त्रेण प्रयोग । ११।४।५।१८.

§ दक्षिणाकाले यत् स्वं, तत् प्रतीयेत तद्दान-संयोगात् । ६।७।६।७॥

विश्वजिति अध्वरे दक्षिणाकाले दक्षिणादानकाले माध्यन्दिने सवने यत् स्वं स्वीय धनम्, तत् एवं सर्वस्व-शब्देन प्रतीयेत । तदेव देयम् । तद्दानसंयोगात् स्वस्यैव स्वत्वविशिष्टस्य स्वत्वेन संयोगात् । 'सर्वस्वं ददाति' इति सर्वस्वशब्देन दक्षिणाकाले स्वत्वेन विद्यमानस्यैव देयत्वेन उक्तत्वात् । तेन भूतस्य भविष्यतो वा न देयता कथंचिदपि । इति सिद्धान्तः । के.

● दक्षिणाकाले विद्यमानस्यैव सर्वस्वस्य विश्वजिति दानम् । विश्वजित्प्रकरणे अधिकरणे द्रष्टव्यम् । भा. ६।७।६।७.

● दक्षिणादानं भरतार्थे सारस्वते सत्रे कर्तव्यं । भा. १०।२।१०।४५–४६, ● दक्षिणादान ऋत्विगादि-क्रयार्थं उदवसानीये, तस्य प्रशान्तत्वात् । उदवसानीय-न्याय. द्रष्टव्य । १०।२।१२।३९–४०. ● दक्षिणादानं चयने अन्वाहम । प्रीतिफलकत्वात् गुणविधिरेव फलस्य मूलभूततो वा वित्तदक्षिणाविधानात् । आगमप्रयुक्ते सिद्धे, या अधिका दक्षिणा दीयते सा यथा प्रीतिवर्धिका स्यात्, तथा देया, 'सोऽग्निं चिनुते स दक्षिणाभि राधयेत्' इति श्रुते । संकर्ष. ३।१।८. ● दक्षिणादानेन कर्मकरणार्थमृत्विजां परिक्रय यजमानेन कर्तव्य. । वि.

३।८।१, * दक्षिणादानस्य यजमानकर्मत्वेऽपि वचनात् क्वचित् स्वयमानृण्यस्येष्टत्वोपधाने गोश्वदानमध्वर्योः कर्म । ३।८।२, * दक्षिणादाने द्वादशशतादिपरिमाणनियमः मन्त्रवत्तन्नियमश्च अदृष्टार्थः । १०।२।८, * दक्षिणादानोत्तरं चात्वाले कृष्णविषाणास्यसनं प्रतिपत्तिः ज्योतिष्टोमे । ४।२।७.

* दक्षिणानयनं पौण्डरीके प्रत्यहं विभज्य । भा. १०।६।१८।६९–७२.

¶ दक्षिणान्यायः ज्योतिष्टोमादौ दक्षिणादानं ऋत्विगानत्यर्थम् ॥

ऋत्विग्दानं धर्ममात्रार्थं स्याद्दानिसामर्थ्यात् । १०।२।८।२३॥

भाष्यम्— अस्ति ज्योतिष्टोमः 'ज्योतिष्टोमेन स्वर्गकामो यजेत' इति । तत्रेदं समामनन्ति 'गौश्चाश्वश्चाश्वतरश्च गर्दभश्चाजाश्चावयश्च व्रीहयश्च यवाश्च तिलाश्च माषाश्च तस्य द्वादशशतं दक्षिणा' । इदं चापरं श्रूयते, 'ऋत्विग्भ्यो दक्षिणां ददाति' इति । तत्र संशयः किं दानं धर्ममात्रम्, उत ऋत्विगानमनमिति । किं प्राप्तम् ? ऋत्विग्दानं धर्ममात्रं स्यात् । तस्य हि कर्तव्यता श्रूयते । ददातिकर्तव्यता अस्माच्छब्दात् गम्यते । ऋत्विगानमनं कर्तव्यं वाक्याद्गम्यते । श्रुतिश्च वाक्याद्बलीयसी । लोकेऽपि अदृष्टार्थेऽपि ददातिर्गम्यते, इति सामर्थ्यादेव न आनमनादि । अपि च कर्मानतुरूपमपि दाक्षिण्यं क्वचित् श्रूयते, मैत्रावरुणाया एकसम्, शतपेये सोमचमसः । अपि च यत्रोपनीतकर्मपमः क्रियते, स परिक्रयो भवति, न च नियतपरिमाणं दानम् । तस्माद्धर्ममात्रं दानम् । अपि च नियमवत् मन्त्रवच्च क्रियते । तददृष्टार्थत्वेन अवकल्पते । क्वचिच्च श्रूयते 'दण्डः, उपानहौ, कुम्भा हवि., सा हि दक्षिणा' इति । को हि दण्डेन आनमेत् । तस्माद्धर्ममात्रं दानमिति ।

परिक्रयार्थं वा, कर्मसंयोगाल्लोकवत् । २४ ॥

भाष्यम्— परिक्रयार्थं वा दानम् । कुतः ? कर्मसंयोगात् । कर्मसंयुक्तेभ्य श्रूयते 'ऋत्विग्भ्यो दक्षिणां ददाति' इति । तत्र दृष्टं प्रयोजनमुत्सृज्य न शक्यमदृष्टं कल्पयितुम् । यदपि नियमाददृष्टम्, तदपि दृष्टत्वेन । अनेन नियमेन नियतगुणकेन दानेन आनम्यमाना ऋत्विजः अभ्युदयकारिणो भवन्ति । कथम् ? आनमने गुणभूतः त्यागश्चोद्यते, न प्रधानभूतः । वाक्यार्थश्च अवश्यं ग्रहीतव्यः । इतरथा ऋत्विग्भ्य इत्येतदेव पदमनर्थकं स्यात् । अगृह्यमाणे तु वद श्रुतिर्बाध्येत । यच्च न कर्मानुरूपं दाक्षिण्यमिति । नैतावता दृष्टोऽर्थः शक्यः अपह्नोतुम् । नियमात् दृष्टादृष्टाभ्यां युक्तमेव । वचनप्रामाण्याच्च दण्डोऽवगम्यते । अपि च भवति तत्र या च यावती च आनमनमात्रा । लोकेऽपि हि काष्ठतक्षप्रभृतिभ्यो गृह्यते, तदसंकीर्तितेऽपि परिक्रये, आनमनार्थमेव भवति । तस्मात् परिक्रयार्थं दक्षिणादानमिति ।

दक्षिणायुक्तवचनाच्च । २५ ॥

भाष्यम्— दक्षिणायुक्तवचनाच्च लिङ्गात् परिक्रयार्थं दानमिति पश्यामः । दक्षिणायुक्ता वहन्ति ऋत्विज इति ।

न चान्येनानम्येत परिक्रयात् कर्मणः परार्थत्वात् । २६ ॥

भाष्यम्— इतश्च परिक्रयार्थं दानमिति । कुतः ? नान्तरेण परिक्रयं परार्थे परः प्रवर्तते । ननु सामादयोऽपि प्रवर्तनोपायाः । न ब्रूमो न प्रवर्तनोपाया इति । किं तर्हि ? परिक्रयः प्रत्यक्षमाम्नातः इति । अतस्तेनैव परिक्रेतव्या नान्येनेति ।

परिक्रीतवचनाच्च । २७ ॥

भाष्यम्— परिक्रीतवचनं भवति, तेनायमर्थो द्योत्यते 'दीक्षितमदीक्षिता दक्षिणापरिक्रीता ऋत्विजो याजयन्ति' इति । तस्मादपि परिक्रयार्थं दानमिति ।

सन्निधाने च भृतिवचनात् । २८ ॥

भाष्यम्— सन्निधानमिति सन्निधौ, सन्निधाने इत्यर्थः । तस्मिन् भृतिवचनं भवति । 'यज्ञो वै देवताभ्यो न समभवत्, तं भृत्या समभावयन् । यद्भृतिं वनुते, यज्ञस्य धृत्यै द्वादशशतीं दीक्षितो भृतिं वन्वीत' इति । यज्ञार्थं यद्दक्षिणं ऋत्विजः परिक्रेतुम्, अन्यच्च यज्ञार्थं साधयितुम्, सन्निधावेव भृतिवचनम् । भृतिश्च कर्मकरेभ्य आनत्यर्थं गृह्यते । तस्मादपि परिक्रयार्थमृत्विग्भ्यो दानमिति ।

-कर्येऽपि । प्रकृतौ हि अनुयाजोत्तर तौ भवतः । वा. ५।१।१५।२८.

**दग्धेन्धनवह्निन्यायः** । यथा दग्धानीन्धनानि येन सोऽग्निर्यथा स्वयमेव प्रशाम्यतीति । उक्तं च 'यथा निरिन्धनो वह्निः स्वयोनावुपशाम्यति । तथा वृत्तिक्षयाच्चित्तं स्वयोनावुपशाम्यति ॥' इति । साहस्री. २६१.

**दग्धपटन्यायः** । अग्निना दग्धेऽपि पटे यथा चिह्नं दग्धं न भवति, एवं नष्टेऽपि सर्वस्वार्थे अभिमानो विद्यते एव, एवंविषयेऽयं प्रवर्तते इति । साहस्री. ५९३.

* अत एव अविद्या दग्धपटन्यायेन तावत् तिष्ठति इत्यपि निरस्तम् । निरवयवे एतन्न्यायासंभवात् इति चेत् । अद्वैत. ४।५।२६. * न च दग्धपटन्यायेन जीवन्मुक्तस्य देहेन्द्रियादिभेदज्ञानसंबन्ध इति वाच्यम् । दग्धपटोऽपि पटवदाभाति शीतनिवारकत्वादिक्रियासिद्ध्यभावात् । श्रीकर. १।१।२ पृ.

**दग्धपत्रन्यायः** यथा पत्रस्य दग्धत्वेऽपि पूर्वाकारेणावस्थानं दृश्यते, एवं यत्र वस्तुनो दाहेऽपि तदाकारप्रतीतिः, तत्रास्य प्रवृत्तिः । साहस्री. २८४.

**दग्धबीजन्यायः** । यथा दग्धस्य बीजस्य नाङ्कुरोत्पादकता, एवमविवेकनाशे न संसारवृक्षप्ररोहः इत्येष यत्र विवक्षा, तत्रास्य प्रवृत्तिरिति । साहस्री. ४९७.

**दग्धरशनान्यायः** । रशना रज्जुः । दग्धमध्योऽपि रशनाशब्दः । यथा दग्धरज्जुः पूर्ववत् त्रिगुणताविरूपेण प्रतीयमानाऽपि निःसारा बुध्यते बुधैः, तथा प्रपञ्चं संसारं प्रतीयमानमपि निःसारं वेत्ति बुध इति । साहस्री. २८३.

* दण्डः अपराधिनाम् । 'शारीरो निग्रहो यत्र, तत्र प्रत्येकमिष्यते । हिरण्यादानदण्डस्तु समुदाये समाप्यते ॥' यथा गर्गाः शतं दण्ड्यन्तामिति वर्गसमुदाये दण्डः । वा. ३।१।६।१२ पृ. ६९७. * दण्ड एक एव सर्वे प्रैषानुवचने । भाट्ट. ४।२।६ पृ. ११६. * दण्डः दीक्षासंस्कारस्य अङ्गः न तु यजमानस्य संस्कारकः । वि. ५।३।११. * दण्डः हस्तचतुष्टयम् । सु पृ. १२८.

* दण्डस्य उपयोगाः । यथा पूर्वं तमोऽवगाहते, अपः प्रविशति, गां च सर्पं च वारयति, अवलम्बनं च भवति । भा. ४।२।६।१७. * दण्डस्य भूतभाव्युपयोगित्वेन संभवत्यपि भाव्यन्ते मैत्रावरुणाय इति चतुर्थ्या 'दण्डी प्रैषानन्वाह' इति प्रैषानुवचनकर्तृत्वेन भाव्युपयोगित्वेन मैत्रावरुणस्यैव भाव्यत्वमुक्तम् । व्यवहारमयूख. पृ. ४८–४९. * दण्डानां सर्वेषां मैत्रावरुणाय दानं मते । भाट्ट. ४।२।६ पृ. ११६. * न तु अप्रतीते दण्डे दण्डिप्रत्ययोऽस्ति । भा. १।३।९।१२ पृ. ११८.

**दण्डापूपन्यायः** । यथा दण्डनद्धापूपानां दण्डानयनात् अपूपानयनम्, तथा युगनद्धवाहित्वादीनि इति केचिदाहुः । वस्तुतस्तु एकत्र स्थापितयोर्दण्डापूपयोः यदा अपूपो नास्ति दण्डस्तु मूषकैर्भक्षितो वर्तते । तत्र यथा मूषकाणां दुष्करदण्डभक्षणसिद्धौ तत्सहचरितापूपभक्षणमपि सिध्यति इति । तथा 'मणिमुक्ताप्रवालानां सर्वस्यैव पिता प्रभुः । स्थावरस्य तु सर्वस्य न पिता न पितामहः ॥' इति स्मृतौ स्थावरग्रहणात् निबन्धद्विपदयोः दण्डापूपन्यायात् दानादिनिषेधसिद्धिरिति । साहस्री. १७२.

* तस्मात् लौकिकपरमार्थरजतमेव इदंपदास्पदे स्वरूपेण निषिध्यते इत्येव सम्प्रदायाचार्याणां वाचामर्थः । तत्र भ्रमकाभावेऽपि करण्डकविशेषस्तु दण्डापूपन्यायेन ममानुकूल एवेति । इति द्वैतिनां शङ्का । सिद्धित्रयाख्या. पृ. १३०.

**दण्डापूपिकन्यायः** । 'अन्तरङ्गानपि विधीन्' इत्यत्र अपिशब्दः दण्डापूपिकन्यायद्योतनार्थः । दण्डापूपिकन्याये 'केसरिणमपि हन्यात्' इत्यादौ केसरिहन्तृत्वे, अन्येषामपि सत्त्वानां च हन्तृत्वं लभ्यते । कपुनिकन्याये तु अन्यार्थे तात्पर्यं पर्यवसीयते स्वार्थे निषेधश्च भवति । तत्त्वप्रकाशिका. पृ. १००. * दण्डापूपिकन्यायः । दण्डाकर्षणेन तत्रावलम्बमानमपूपस्यापि आकर्षणमर्थसिद्धम् । इति न्यायार्थः । संग्रहः.

* दण्डकलितं आवृत्तिन्यायस्तौ न्यायद्वयम् । तथा क्रमानुग्रहो भवति । तद्यथा कश्चिदुच्यते अनुवाकः त्रिः पठ्यतां इति । दण्डकलितवदसौ पठ्यते क्रमानुग्रहाय ।

भा. १०।५।२५८३. * दण्डकलितवत् अभ्यासः गवामयने द्वादशाहात् प्रागासु भ्यनीकासु पूर्वपक्षे स्वस्थानविवृद्धया सिद्धान्ते । १०।५।२५।८३, * दण्डकलितवत् आवर्तनीयानां धर्मः । यो ब्रूयते 'त्रिरनुवाकः पठयताम्' इति * आदित आरभ्य परिसमाप्य पुनरादित आरभते इति दण्डकलितवदावृत्तिः । ५।१।२।३ । यथा दण्डेन भूप्रदेशं खेमिमानः पुरुषः आमूलाग्रं कृत्स्नं दण्ड पुनःपुनः पातयति , न तु दण्डस्य प्रत्यवयवं पृथगावृत्तिं करोति तद्वत् । वि. ५।१।१, * दण्डकलितवत् न उपांशुत्वादिधर्मस्पर्शिवः, किंतु स्वस्थानविवृद्धया अभिधयते । भा. ५।१।१।३.

* दण्डकत्वस्य. प्रतिषेधो यथा कर्मप्रदीपे 'यजनीयेऽह्नि सोमक्षेदाखण्या क्रियेत इष्यते । तत्र न्याहृतिभिर्हुत्वा दण्डं दद्याद् द्विजातये ॥' इति । नेयं दक्षिणा कल्पितत्वाभावात् । अत पूर्वदिने अन्वाधाने दण्डविधिरेव कल्प्यः, तेन तु निषेधः कल्प्यते । याल. पृ. ३०.

* दण्डचक्रन्यायः । यथा दण्डचक्रसूत्रसलिलादेर्बहुनामनेकधर्मावच्छिन्नं प्रति कारणत्वम्, एवं विवक्षायाः मत्र प्रवृत्तिः । एतेन काव्यप्रकाशे अदृष्टस्य कारणता, अदृष्टाभ्यासप्रतिभानां च दण्डचक्रन्यायेन कारणतेति काव्यप्रकाशोक्तिः परास्तेति नागाभट्टाः । साहस्री. ४१४.

* दण्डदानं मैत्रावरुणाय अग्नीषोमीयविकारे निरूढपशौ असत्यपि दीक्षिते दण्डोत्पत्त्युपादानयोः प्रयोजकम्, तत्पालनस्य तु अप्रयोजकं तदभावात् । याल. पृ. १०७. * दण्डदानं मैत्रावरुणस्योपकाराय अर्थकर्म, न तु प्रतिपत्तिः । 'क्रीते सोमे मैत्रावरुणाय दण्डं प्रयच्छति' 'दण्डी प्रैषानन्वाह' । वि. ४।२।६. * दण्डदानस्य प्रयोजकं प्रैषानुवचनम्, मैत्रावरुणाय । याट्. ४।२।६.

* दण्डदानन्यायः । दण्डन्यायः । दण्डप्रदानाधिकरणम् । मैत्रावरुणदण्डदानन्यायः । ज्योतिष्टोमे मैत्रावरुणाय दण्डदानं उपकारकार्थकर्म, न प्रतिपत्तिः ॥

प्रासनवन्मैत्रावरुणाय दण्डप्रदानं, कृतार्थत्वात् । ४।२।६।१६ ॥

भाष्यम्— ज्योतिष्टोमे श्रूयते 'वाग्वै देवेभ्यो ऽपाक्रामत् यज्ञायातिष्ठमाना । सा वनस्पतीन् प्राविशत् । सैषा वाग् वनस्पतिषु वदति । या दुन्दुभौ, या तूणवे, या वीणायाम् । यद्दीक्षितदण्डं प्रयच्छति वाचमेवावरुन्धे' इति । तथा 'क्रीते सोमे मैत्रावरुणाय दण्डं प्रयच्छति' इति । मैत्रावरुणाय दण्डं प्रयच्छति, इत्येतदुदाहरणम् । तत्र संशयः किं दीक्षितधारणे शेषभूतस्य दण्डस्य मैत्रावरुणधारणं प्रतिपत्तिः अथवा अर्थकर्मेति । किं प्राप्तम् । मैत्रावरुणाय दण्डदानं प्रतिपत्तिः । कुतः ? दीक्षितधारणे कृतार्थत्वात् । 'दण्डेन दीक्षयति' इति शेषभूतस्य अन्यत्र व्यापारे प्रतिपत्तिर्न्याय्या । यथा 'चात्वाले कृष्णविषाणां प्रास्यति' इति कण्डूयने शेषभूतायाः प्रासनं प्रतिपत्तिः । एवमत्रापि द्रष्टव्यम् । द्वितीया च दण्डे विभक्तिः । तस्मात् प्राधान्यमिति ।

टुप्— दानस्य मैत्रावरुणः प्रयोजकः, कृष्णविषाणा चात्वाले प्रक्षिप्तव्या इति प्रतिपत्तिः । प्रसङ्गेन उपरितनी चिन्ता । किं सोमलिप्तानां अवभृथगमनं प्रतिपादनम्, उत अर्थकर्मेति ( ४।२।८ इत्यत्र ) । देशार्थां अवभृथश्रुतिः ( इत्युक्ते ) देशसंबन्धात् ( देशप्रसङ्गात् ) अन्योऽपि देशः ( क्षमादिः भवति ) विपरिवर्तमानः ( कालः कर्ता च ) चिन्त्यते किमनूद्यते, ( उत ) नियम्यते इति । नियमप्रसङ्गेन तयोरपरे अधिकरणे अपकर्षतः गुणसंस्कारयोरपि नियम एवेति । करणत्वेन संस्कुर्वीत ( अवघातादि ) तेन ( करणेन ) संबध्यते । तस्य ( करणस्य ) स्वरूपमाख्यायते । वीहशेन व्यापारेण करणमनुष्ठितं भवति इत्यनेन प्रसङ्गेन धात्वनिरूपणमारभ्यम् । एवं कुर्वीतापि ।

अर्थकर्म वा, कर्तृसंयोगात् स्रग्वत् । १७ ॥

भाष्यम्— अर्थकर्म वा स्यात् । कर्तृसंयोगात् । कर्तृसंयोगो भवति 'मैत्रावरुणाय दण्डम्' इति । तस्मिंश्च दण्डो गुणभूतः, पुरुषः प्रधानभूतः । पुरुषं हि स प्रचरितुं समर्थं करोति । कथम् ? यदा (दण्डमाश्रयेण) पूर्वं तमोऽवगाहते, अपः प्रविशति, गा च सर्प च वारयति, अवष्टम्भनं च भवति । अतः पुरुषप्राधान्याच्च प्रतिपत्तिः । स्रग्वच्च द्रष्टव्यम् । यथा स्रजमुद्गात्रे ददाति, इति असत्यपि उपकारे पुरुषस्य प्रयोजनवत्त्वात् निष्प्रयोजनत्वाच्च स्रजो भवति पुरुषप्राधान्यम् । एवमिहापि द्रष्टव्यम् । तस्माच्च प्रतिपत्तिरिति । अथ यदुक्तं द्वितीया-

श्रवणात् दण्डप्राधान्यमिति । उच्यते । 'तथा युक्तं चानीप्सितम्' इति द्वितीया द्रष्टव्या । कुतः ? मैत्रावरुणे चतुर्थीनिर्देशात् । संप्रदाने हि चतुर्थी भवति । संप्रदाने च कर्मणा अभिप्रेयते । तत्र दण्डात् अभिप्रेततरो मैत्रावरुणः इति गम्यते ।

. टुप्— दण्डो व्याप्यमानः क्रियया, शब्देनैव मैत्रावरुणार्थः उपदिश्यते । या च द्वितीया दण्डमिति, साऽपि न प्राधान्येन ईप्सितार्था, किं तर्हि, व्याप्यमानतया । मैत्रावरुणो हि तत्र प्रधानभूतः । अत आह तथायुक्तं चानीप्सितम् इति द्वितीया भविष्यतीति । तस्मान्न दण्डः प्रधानभूतः । न च दण्डदानमदृष्टम् । यतोऽयमाहनादिषु दृष्टार्थैव ।

कर्मयुक्ते च दर्शनात् । १८ ॥

भाष्यम्— 'दण्डी प्रैषानन्वाह' इत्यनूद्यते । तेन प्रचरतो दण्डं प्रदर्शयति । तदर्थकर्मणि सति उपपद्यते । प्रतिपत्तौ तु दण्डो मैत्रावरुणाय दत्तः ततोऽप्यन्येन । तत्कर्म कर्तव्य च कृतम्, इति न तेन प्रयोजनमिति न धार्येत । तत्रैतद्दर्शनं नोपपद्यते । तथा अहिरिव वदतीति मैत्रावरुणं ब्रूयात्, अहिरिव होय द्रष्टव्य इति । तथा 'मुसलपन्वाह' इति । मुसलशब्दश्च दण्डे प्रसिद्धः । यथा, कथं नु पत्र मुसलिनो माणवका भद्रा नावतेरु-रिति । तस्मादपि अर्थकर्म ।

टुप्—'दण्डी प्रैषानन्वाह' इत्यनूद्यते (दण्डित्वम्) तेन प्रचरतो दण्डं दर्शयति । प्रतिपत्तित्वे न तस्य धारणं भवेत् । अथ अर्थकर्म ततो ध्रियमाणस्य (दण्डस्य अनुवाददर्शनमुपपद्यते इति परेण संबन्धः), प्रकरणाविशेषात् यद्यत् कुर्यात् तत्तत् दण्डसंयुक्तेन (कर्तव्यं) इति, तस्मात् सर्वत्र दण्डभावात् अनुवाददर्शनमुपपद्यते । ननु श्रवणाऽधिकरणे दण्डविधानमुक्तम् 'उपसर्जनार्थो विधीयते' इति (कदाचित् उपसर्जनीभूतोऽर्थो विधित्सितः प्रधानीभूतोऽनुवादः । तद्यथा दण्डी इति उपसर्जनीभूतदण्डकपुरुषप्रधानकः शब्दः अवगम्यते, कदाचित्तु निर्ज्ञाते पुरुषे दण्डगुणविधानार्थमुच्चार्यते 'दण्डी प्रैषानन्वाह' इति अनेन वाक्येन, तत् कथमिह दण्डानुवादोऽभिधीयते ?) उच्यते । प्रकरणात् सर्वार्थे (दण्डवत्त्वं) प्राप्तं प्रैषानुवचनयोर्निर्दिश्यते (उपसंह्रियते इत्यर्थः) । एवं सति नास्ति (पूर्वापर–) विरोधः । दण्डानुवादोऽपि घटते, (प्रकरणात् प्राप्ते) नियमविधानात् (तत्) उपसर्जनार्थं विधानमपि (श्रवणाऽधिकरणोक्तं घटते एव । ततः सिद्धं मैत्रावरुणः प्रयोजकः इति) ।

उत्पत्तौ येन संयुक्तं, तदर्थं तच्छ्रुतिहेतुत्वात्, तस्यार्थान्तरगमने शेषत्वात् प्रतिपत्तिः स्यात् । १९ ॥

भाष्यम्— यदुक्तं यथा कृष्णविषाणाप्रासनमिति । तत्रोच्यते । युक्तं तत्र, उत्पद्यमानं यत् येन प्रयोजनेन संबद्धमुत्पद्यते, तत् तदर्थमेव न्याय्यम् । तस्यान्यत्र गमने प्रतिपत्तिः इत्येतदुपपद्यते, यदि न दृष्टं प्रयोजनं भवति । इह तु दृष्टं प्रयोजनं मैत्रावरुणस्य धारणम् । तस्मात् विषममेतत् ।

दुप्— दीक्षितस्य दण्डधारणं विधाय पुनराम्नातं 'क्रीते सोमे मैत्रावरुणाय दण्डं प्रयच्छति' इति । किं मैत्रावरुणाय दण्डप्रदानं दण्डस्य प्रयोजकमर्थकर्म, तत प्रतिपत्तिकर्म अप्रयोजकमिति । तत्र 'द्वितीयाश्रुतिसंयोगात् कृतार्थत्वाच्च धारणे । मैत्रावरुणहस्तेऽस्य प्रक्षेपः प्रतिपादनम् ॥' उच्यते । 'चतुर्थ्या संप्रदानत्वं प्रशास्तुरवगम्यते । कर्मणा यमभिप्रैति संप्रदानं तदुच्यते ॥' द्वितीया तु 'तथायुक्तं चानीप्सितम्' (पा० १।४।५० । ईप्सिततमवत् क्रियया युक्तं अनीप्सितमपि कारकं कर्मसंज्ञं स्यात् । ग्रामं गच्छन् तृणं स्पृशति । तथायुक्तत्वं च समभिव्याहृतधात्वर्थप्रधानव्यापार-प्रयोज्यफलाश्रयत्वम्) इति भविष्यति । 'उपयुक्तस्य संस्काराद् उपयोक्तव्यसंस्क्रिया । गरीयसी, प्रशास्तुश्च दृष्टं तेन प्रयोजनम् ॥' स्थित्वा हि प्रैषानुवचनं कुर्वतः आलम्बनं भवन् दृष्टार्थ एव दण्डः । निरूढपशौ असत्यपि दीक्षिते मैत्रावरुणार्थेन दण्डोपादानसिद्धिः विचार-प्रयोजनम् । (प्रैषानुवचनात् पूर्वं दण्डनाशे पुनरुपादानस्य प्रयोजनम्) ।

सोम— पूर्ववत् प्रत्यवस्थानात् संगतिः ।

वि— 'मैत्रावरुणके दण्डदानस्य प्रतिपत्तिता । तदर्थकर्मता, ऽऽद्योऽस्तु धारणे कृतकृत्यतः ॥', युक्तोप-

सुक्तसंस्कारादुपयोक्तव्यसंस्क्रिया । सिद्धा प्रैषानुवचने दण्डोऽपेक्ष्योऽर्थकर्म तत् ॥'

भाट्ट— सोमे 'दण्डेन दीक्षयति' इत्यनेन दण्डस्य दीक्षाऽभिव्यञ्जकत्वं विधाय 'क्रीते सोमे मैत्रावरुणाय दण्डं प्रयच्छति' इति श्रुतम् । तत्र पूर्ववदेव द्वितीयासंयोगात् मैत्रावरुणसंस्कारार्थत्वं दण्डप्रतिपत्तिः । चतुर्थी पष्ठ्यर्थे लक्षिता, 'पेदवे गां ददाति' इतिवद्वा प्राधान्याभावेऽपि संप्रदानत्वार्थिकैव । अत एव दीक्षितदण्डस्य दानमात्रेण प्रतिपत्तिसिद्धेनोपयुक्तः स एव दण्डो 'दण्डी प्रैषानन्वाह' इत्यनेन प्रैषानुवचने विनियुज्यते । तेन न प्रैषानुवचनं दण्डदानस्य प्रयोजकमिति निरूढपशावपि न तदनुष्ठेयम् । इति प्राप्ते, 'कर्मणा यमभिप्रैति स संप्रदानम्' इति स्मृत्या क्रियां प्रति व्याप्यमानं कर्मकारकं यत्रापि संप्रदानस्य व्याप्यमानत्वाविशेषेऽपि विशेषेण कस्यचिद्व्याप्यमानस्य ईप्सितत्वे कल्प्यमाने 'व्याप्यव्याप्यस्य सुतरां व्याप्यत्वम्' इति न्यायेन मैत्रावरुणे एव तदवगतेः तस्यैवोद्देश्यत्वम् । संभवति च मैत्रावरुणस्य तदुपयोगादुद्देश्यत्वम् । वेदविदादौ तु बाधात् स्वर्गादेरेव उद्देश्यता । इह चावश्यं दण्डस्य प्रयोजनमिति नादृष्टार्थत्वमपि । न चैवं 'दण्डं' इति द्वितीयाऽनुपपत्तिः, सक्तुवत् करणत्वलक्षणार्थत्वात् । यत्तु मूले अनीप्सितकर्मत्वेन तदुपपत्तिरित्युक्तम्, तन्न तुष्टौ अपि 'तृतीया च होश्छन्दसि' इत्यादिस्मृत्या सकर्मकत्वावगतेः सक्तुष्वपि तदापत्तेः अनीप्सितकर्मत्वेऽपि न तदुद्देश्यत्वनिमित्तकवाक्यभेदपरिहारस्य कौस्तुभे एवोक्तत्वादुपेक्षितम् । अस्तु वा दण्डस्य अनीप्सितकर्मत्वेनैव अन्वयः संप्रदानस्य । तथापि प्राधान्ये संप्रदानत्वेनैव अन्वयात् द्विकर्मकत्वापत्तिरित्यपि बोध्यम् । अतश्च दण्डविशिष्टदानस्य उपयोगापेक्षायां 'दण्डी प्रैषानन्वाह' इत्यादिना प्रैषानुवचनार्थत्वेन विनियुज्यते । अतो निरूढपशावौ दीक्षाहोमक्रियाभावेऽपि दण्डदानानुष्ठानं तस्य प्रैषानुवचनप्रयुक्तत्वादनुपपन्नम् ।

इदं त्विह वक्तव्यम् । दानस्य दण्डं प्रति अर्थकर्मत्वे.पि दीक्षादण्डस्य कथं दानाङ्गत्वम् । नहि स्वत्वत्यागे कृते ।जमानेन. स्वयं पुनर्ग्रहीतुं शक्यम् । न चैतादेव दण्डस्यैव दीक्षाऽभिव्यञ्जकत्वम्भनं न परमाप्तिः, चैतोदानन्यायानुरोधेन प्रकृतः एव गृह्येत । न च दानविध्यनुरोधेन कार्यसंकोचः, तस्य लौकिकदण्डेनापि उपपत्तेः । प्रतिपत्तित्वे तु तुल्यविधानादेव युक्तता संभवेद् इति । अत्र ब्रूमः । श्रौतविधेरर्थकर्मत्वेऽपि भक्तद्रुपयाप्तोपाभिघारणन्यायेन आर्थिकदानप्रतिपत्तिविधित्वावगतेः प्रकृतेऽपि कार्यसंकोचोपपत्तिः । न चात्र तस्य प्रतिपत्त्यपेक्षाऽभावेन कल्पनाभावात्सत्यापवैलक्षण्यम्, दानविधेर्दण्डान्तरप्रयोजकत्वशक्तिकल्पनाभिया कार्यसंकोचमङ्गीकृत्यापि मध्ये तदपेक्षोपपत्तेः । इत्थं शेषे अन्यानुरोधेनापि अवश्यापेक्षितविषये स्वकार्यसंकोचेन अङ्गत्वे एव तदपवर्गः । शक्यते चात्र स्व त्यागादपर मैत्रावरुणोपकारकत्वाभावात् सर्वदा दण्डप्रतिनयर्थत्वं वक्तुम् । स्वत्वत्यागेऽपि समर्पणमात्रेणापि प्रैषानुवचनोपपत्तेः । अतश्च प्रतिपत्त्यनुरोधेन दीक्षितदण्डस्य तद्विषयत्वसिद्धिः । अत एव सर्वे एवैषां दण्डानां दानम्, एवं च परप्रयुक्तदण्डोपजीवित्वात् श्रौतदानविधेः प्रैषानुवचनादेर्वा दीक्षितदण्डनाशे दण्डान्तरानादेयकत्वम्, तत्रादौ तु दण्डान्तरादेयत्वस्य अग्न्याधेयन्यायेन (४।३।१०) इष्टमेव । श्रौतदानविधौ एकत्वश्रवणादेकदण्डदानमेव मैत्रावरुणोपकारकमिति सर्वे प्रैषानुवचने एक एव दण्ड इत्यपि बोध्यम् । इदं च दीक्षितदण्डप्रापकवचनस्य पार्थसारथ्यादिमीमांसकैरलिखितत्वात् तदभावमभिप्रेत्योक्तम् । वस्तुतस्तु तैत्तिरीयशाखायाम् 'यदीक्षितदण्डं प्रयच्छति' इति स्तार्थवादकवाक्यान्तरश्रवणात् 'क्रीते' इति दीक्षितपदरहितवाक्ये प्रतिपत्तिविधानताकल्पनेऽपि न क्षतिः, तैत्तिरीयवाक्येनैव मैत्रावरुणपदश्रवणेन दानस्य प्रतिपत्तित्वसिद्धेः । क्रीतवाक्ये तु मैत्रावरुणपदश्रवणेन तत्प्राधान्यावगतेः तदुपकारार्थत्वमेव । अतश्च तैत्तिरीयवाक्ये यच्छतेः संप्रदानापेक्षायां क्रीतवाक्ये स्वतन्त्रदण्डोपादानकल्पनागौरवपरिहारार्थं च परस्परापेक्षतया दीक्षितदण्डस्यैव मैत्रावरुणोपकारार्थत्वसिद्धिः । न च तैत्तिरीयवाक्ये क्रीतवाक्यविहितदण्डे एव दीक्षासंबन्धविधानोपपत्तेः न प्रतिपत्तिविषयत्वमिति वाच्यम् । तथात्वे दण्डोद्देशेन दीक्षितत्वविधानेऽपि एकप्रसरता-

भङ्गापत्तेः दानस्य अर्थकर्मत्वे प्रमाणाभावः । प्रासदानानुवादेन कालमैत्रावरुणयोरन्यविधाने वाक्यभेदापत्तिः । अतः उभयत्रापि दानविधिः, तत्र च दीक्षितपदयुक्तवाक्ये प्रतिपत्तिविधिरेव, संप्रदानाश्रवणात् दीक्षितपदश्रवणाच्च । क्रीतवाक्ये तु तत्त्वयुक्त्या अर्थकर्मत्वमेव । उभयत्र प्रयोजनं पूर्ववत् । वस्तुतस्तु क्रीतवाक्येऽपि मैत्रावरुणवचनोपयोगिदण्डसंस्कारकत्वमेव दानस्य इति दण्डस्यापि दीक्षितकर्मत्वमेव । न चैतावता दण्डप्रतिपत्तित्वम्, तयोरुपयोगसंस्कारयोः न्यायत्वात् । मैत्रावरुणस्य तु संप्रदानत्वे मैत्रान्वय इति न कश्चिद्दोषः । तथैव मैत्रादौ दण्डैकत्वं तु 'दण्डी प्रैषानन्वाह' इत्यत्र प्रमाणान्तरे कारणाभावादेकवचनान्तेन व्युत्पत्तिमङ्गीकृत्य समर्थनीयमिति दिक् ।

मण्डन— 'दण्डप्रदानं पुनरर्थकर्म ।'

शंकर— 'दण्डदानं त्वर्थकर्म ।'

* दण्डमेखलादयः दीक्षितस्य दीक्षितत्वाभिव्यञ्जनमात्रार्थाः । भा. ५।३।११।२९–३१.

❖ दण्डसर्पमारणन्याय । यत्रायासं विना साक्षाल्लिद्ध्यन्तमर्थमुद्दिश्य आयासेन परम्परया स पदार्थः साध्यते, तत्रायं न्यायोऽवतरतीति । यथा कश्चित्सर्पं दृष्ट्वा तन्मारणाय दण्डमिच्छन् तमलभमानश्च कुठारं गृहीत्वा तच्छेदाय प्रवर्तते । तस्य दण्डगवेषणायासो यथा वृथा, कुठारेणैव सर्पस्य हननसंभवादिति । साहस्री २५०.

* दण्डी इति उपसर्जनीभूतदण्डकपुरुषप्रधानकः शब्दः अवगम्यते, कदाचित्तु निर्ज्ञाते पुरुषे दण्डगुणविधानार्थं उच्चार्यते 'दण्डी प्रैषानन्वाह' इति । यथा 'लोहितोष्णीषा ऋत्विजः प्रचरन्ति' इति । भा. ३।१।६।१२ पृ. ६८७. * 'दण्डी' इति दण्डनिमित्तः पुरुषवचनः, दण्डोऽस्य निमित्तं नाभिधेयः । (एवं स्वर्गशब्दः प्रीतिसाधनवचनः, न प्रीतिवचनः) । भा ६।१।१।१ पृ. १३४० । यत्तु दण्डिशब्दवदिति, सोऽपि प्रतीते शब्दात् दण्डे, दण्डिनि प्रत्ययमादधाति, अन्तर्गतश्च दण्डशब्दः, स दण्डस्य वाचकः । इह तु स्वर्गशब्द एव प्रीतेरभिधाता । पृ १३५०. * 'दण्डी प्रैषानन्वाह' इति निर्ज्ञाते पुरुषे दण्डगुणविधानार्थं दण्डपदमुच्चार्यते । अत्र उपसर्जनीभूतोऽर्थो विवक्षितः, प्रधानीभूतश्च अनुवादः । भा. ३।१।६।१२ पृ. ६८७. * 'दण्डी प्रैषानन्वाह' इति प्रैषानुवचनार्थत्वेन दण्डदानं विनियुज्यते । भाट्ट. ४।२।६. * 'दण्डी प्रैषानन्वाह' मैत्रावरुणः दण्डमवलम्ब्य स्थित्वा प्रैषाननुब्रूयात् । के. ४।२।६.

* दण्डिशब्दः केवले दण्डे न प्रयुज्यते इति विशिष्टवचनोऽवधार्यते । वा १।३।९।३३ पृ. ३१८. * दण्डिशब्दः विशेषणभूतं दण्डमनभिधायापि तं निमित्तीकृत्य पुरुषमेव वक्ति । रत्न. ६।१।१।१. * दण्डिशब्देन न तावत् दण्डोऽभिधीयते, अथ च दण्डविशिष्टोऽवगम्यते । भा. १।३।९।३३ पृ. ३१७. * दण्डिशब्दे हि प्रकृत्या दण्डोऽभिहितः प्रत्ययेन पुरुषः । रत्न. ६।१।१।२.

* दत्तो धावते इति ज्योतिष्टोमे दत्तधावनस्य मेधगोत्वमुपैति इति फलश्रुतिः फलार्थवादः, न तु फलविधिः । भा. ४।३।१।१–४.

❖ दत्ते तु (दत्ते त्वर्थे प्रकल्पयेत्—याज्ञ. २।१४८) इति न्याय । यथा जीवत्पितृकविभागे आद्यपक्षे, एवं अन्यपक्षद्वये 'दत्ते तु' इति न्यायेन निर्वाहवत्, पुनश्च स्थैव पितृवत् निर्वाहो बोध्यः । वाक्यभट्टी. ३।११५.

❖ दत्तासिद्धअसिन्याय. । यत्र पुत्रादिदत्तातिसाञ्जलिवत् वस्तु उत्सृज्यते, तत्रायं न्याय इति संक्षेपः । साहस्री. ७६६.

* ददातिरुत्सर्गपूर्वकः परस्वत्वेन संबन्धः । इदं भुवोविनीश्चौ अधिकः सूत्रम् । ४।१।१४।२९ ॥ मण्डनाचार्यैश्च मीमांसानुक्रमण्यां इदमधिकरणं दानलक्षणप्रतिपादकं पृथक् गृहीतम् । 'अथ ददातिः किंलक्षणक' इति । आत्मनः स्वत्वनिवृत्ति परस्य स्वत्वेन संबन्धः । ददातिरुत्सर्गपूर्वकः परस्वत्वेन संबन्धः इति' इति च भाष्यम् । 'स्वीयं द्रव्यं परित्यज्य परकीयं यथा भवेत् । तथा संपादनं दानम्' इति विस्तरः । के.

* ददाति. परस्वत्वमात्ररूपफलवाची । संकल्पितस्वीकरणपूर्वकपरस्वत्वापत्तिसस्वत्वध्वंसफलकद्रव्यत्यागः ददातिपदवाच्यः । मणि. पृ. १०२.

● दध–शब्दो भागधेयवचनः । तद्यथा कड्कटकाय दधम्, नाधिताय दध इति । देवदधानि देवभागा इत्यर्थः । भा. १०।८।१२।३२.

● दधि अग्निहोत्रहोमे नित्यं नैमित्तिकं च उभयविधम् । भा. ४।३।३।५–७, ● दधि ग्रहणाल्यम् । ८।२।३।११. ● 'दधि मधु घृतमापो धानास्तण्डुलास्तत्संसृष्टं प्राजापत्यम्' इत्यत्र मधुनि उदके च आज्यधर्माः कर्तव्याः । न सान्नाय्यगतपयसो धर्माः । वि. ८।१।१९.

● दध्नेन्द्रियकामस्य जुहुयात् इति अग्निहोत्रात् न कर्मान्तरम् । वि. २।२।११. ● दध्नेन्द्रियकामस्य जुहुयात् इत्यत्र प्रकरणप्राप्तमपि सर्वं होममेव धातुरनुवदति, न विधानार्थमपि अन्यदेव नामादि वाक्यशेषात् प्रतीतिः । वा. ३।१।७।१४ पृ. ७२२. ● दध्नेन्द्रियकामस्य जुहुयात् इत्यत्र होमसंबन्धात् दध्यादेर्गुणात् फलं न तु दधिगुणक होमान्तरम् । भा. २।२।११।२५–२६.

● दध्नेन्द्रियाधिकरणम् । इन्द्रियकामाधिकरणं द्रष्टव्यम् । भा. २।२।११।२५–२६.

● दध्नेन्द्रियकामाधिकरणन्यायेन एकत्रिंशत्वादेः गुणात् फलावगतिः ( सत्रिविनीपु ) । सु. पृ. १०५७.

● दध्ना जुहुयात् इन्द्रियकामस्याग्निहोत्रम् । भा. २।२।११।२५, ● 'दध्ना जुहोति' इति न कर्मान्तरम्, किंतु अग्निहोत्रे एव गुणविधि. वैकल्पिकः । २।२।१०।२४. ● 'दध्ना जुहोति' इत्यादौ गुणविशिष्टविधिः बोध्यते । बाल. पृ. १४०. ● 'दध्ना जुहोति' इत्यादौ दध्यादिद्रव्यस्य अक्रियारूपत्वेऽपि क्रियाविशेषणतया विधेयता । वि. ५।१।१ वर्णक २, ● 'दध्ना जुहोति' 'दध्नेन्द्रियकामस्य' इति वाक्याभ्यां अग्निहोत्रे दध्नः काम्यत्वं नित्यत्वं चाविरुद्धम् । ४।३।३, ● 'दध्ना जुहोति' 'व्रीहिभिर्यजेत' इत्यादौ दध्नो व्रीहीणां च गुणत्वेन विधिः, यागनामत्वाभावात् । १।४।२, ● दध्ना मधुमिश्रेण अग्निचयने अग्नेः प्रोक्षणम् । तच्च एकदेशेन, न प्रतीकम् । १।१।८.

● दध्न. अवदानाभिघारणासादनानि पश्चात् आज्यस्य तु पूर्वम्, मुख्यक्रमस्य प्रवृत्तिक्रमात् बलीयस्त्वात् । भा. ५।४।३।३–४. ● दध्न. फलस्य क्रत्वर्थत्वे पुरुषार्थत्वे च 'दध्ना जुहोति' 'दध्नेन्द्रियकामस्य जुहुयात्' इति संयोगपृथक्त्वं कारणं इत्युक्ते, 'शेष इति चेत्' ( ४।३।६ ) इति सूत्रेण 'दध्ना जुहोति' इति विहितस्य दध्न. फलापेक्षया इतरेण इन्द्रियफलोक्तेः एकवाक्यत्वात् संयोगपृथक्त्वाभावमाशङ्क्य, 'नार्थपृथक्त्वात्' ( ४।३।७ ) इति सूत्रेण होमार्थत्वेन विहितस्य दध्नः फलार्थकत्वात् एकवाक्यताभावं वक्ष्यति । सु. पृ ८९७. ● दध्न एव स्वभावः, यत् पूर्वेणुत्पन्नान्त अपरेद्युरभिनिर्वर्तते । भा. ३।६।८।१९.

सू दध्न. स्यान्मूर्तिसामान्यात् । ८।२।३।१५ ॥

अग्नीषोमीयः पशुः सान्नाय्यविकारः इत्युक्तम् । इदानीं तत्रापि विशेषो वक्तव्यः । अयं अग्नीषोमीय. पशुः, सान्नाय्यमध्ये यत् दधि तस्य दध्नः विकारः स्यात् । दध्नो निष्पन्नः पशोः । मूर्तिसामान्यात् । मूर्तिः घनरूपत्वम् । पशुरपि घनः दधि अपि घनमेवेति ।

पयो वा, कालसामान्यात् । १६ ॥

पूर्वपक्षं वाशब्देन निरस्यन् सिद्धान्तमाह । न दधि प्रकृतिः, किंतु पशोः प्रकृतिः पयः, कालसामान्यात् । सद्यस्कालं पयः, पशुरपि सद्यस्कालः इति पयः अन्तरङ्गम् । दधि तु असद्यस्कं इति बहिरङ्गम् ।

पश्वानन्तर्यात् । १७ ॥

सिद्धान्ते हेत्वन्तरमाह । पयसः पशोः आनन्तर्यं अव्यवहितत्वम्, दध्नस्तु पयसा व्यवहिततरम् । एतस्मादपि हेतोः पयः अन्तरङ्गं भवति इति तदेव पशोः प्रकृतिः, न दधि ।

द्रव्यत्वं चाविशिष्टम् । १८ ॥

ननु अग्नीषोमीयस्य पशोः पयो न प्रकृतिः पयो हि द्रवम् । पशुस्तु न द्रवः इति चेत् । न, यद्यपि पशौ कियाश्चित् भागः घनः, तथापि कियाश्चित् भागः द्रवोऽपि वर्तत एव । इति पयसः पशोश्च द्रवत्वं अविशिष्टं समानमेव । तस्मात् अग्नीषोमीये पशौ ऐन्द्रसान्नाय्यैकदेशस्य पयसो विधानं इति सिद्धान्तः । के.

● दधनि इत्यर्थे प्रणीताधर्माः नाप्यनुवर्तन्ते । वा. ३।१।७।१४ पृ. ७१९.

※ दधनिसितान्यायः । सामिधेनीषु– 'ऋचि प्रणवं दधाति ' इति विधानात् प्रत्यृचमन्ते प्रणवः प्रयोज्यः । स च कुण्डपदरन्यायेन ऋगक्षरासंमिश्रो वा दधनिसितान्यायेन तत्संमिश्रो वेति द्वेधाऽपि संभवति । इति पूर्वपक्षः । संकर्ष ४।२।११.

* 'दधंश्रवम्' इति चन्द्राभ्युदितेष्टौ । तत्र दधनि इज्यार्था धर्माः कर्तव्याः । भा. ६।५।१०।४१–४२, * 'दधंश्रवम्' इति पशुकामेष्टौ । तत्र दधनि प्रवेयधर्मा न भवेयुः । ६।४।११।४३–४४.

* दध्यभावे अन्येनाम्लेनापि काञ्जिकादिना ( पयो दधि ) क्रियते । तथापि चामिक्षा शब्दो भवति । भा. ८।२।४।२२

* दध्यादेः नित्यनैमित्तिकोभयार्थत्वम् । अग्निहोत्रे 'दध्ना जुहोति ' इति नित्यार्थं सत् , 'दध्नेन्द्रियकामस्य जुहुयात् ' इति नैमित्तिकार्थम् । भा. ४।३।३।५–७.

* दध्यानयनं आमिक्षाप्रयोजनम् । यदुद्देशप्रवृत्त-कृतिव्याप्यत्वं यस्य, तत् तस्य प्रयोज्यम् । भाट्ट. ४।१।११.

※ दधिक्षीरन्यायः । ननु दधिक्षीरन्यायवत् स्वस्व-रूपपरित्यागपूर्वकरूपान्तरप्राप्तिरेव परिणामः इति चेन्न । ( क्षीरस्वरूपपरित्यागपूर्वकः दधिरूपेण क्षीरस्य परिणामो भवति न स्वरूपमपरित्यज्य ) । श्रीकर. ११४।२६ अस्.

※ दधिग्रहः अंश्वदाभ्यानन्तरमेव न तु प्राक् ॥ दधिग्रहो नित्य इत्युक्तम् । स चोपांश्वादिभ्यः पूर्व एव प्राप्तः । एतदपूर्वविधेरन्येभ्यः पूर्वं पाठात् 'ज्येष्ठो वा एष ग्रहाणाम् ' इति श्रुत्याऽपि सर्वग्रहप्राथम्योक्तेः । प्रथमोत्पन्नस्यैव ज्येष्ठत्वेन व्यवहारात् इति प्राप्ते, ब्राह्मण-क्रमाग्रहणक्रमस्य बलवत्त्वात् उपांश्वादिमन्त्रोत्तरमेव दधि-ग्रहमन्त्रपाठात् अंश्वदाभ्यानन्तरमेव ज्यादेशाभिमानेन 'ज्येष्ठा वा एता ब्राह्मणाः विराजकन् ' इत्यादाविव ज्येष्ठशब्दस्य प्राशस्त्यवाचकत्वाभावात् उपांश्वादिभ्यः परत एव शादिज्या । अत एव गवामयनकाले दधिग्रहेज्याप्रदर्शनार्थः अर्थवादः 'यथा गावः संजानानाः संगच्छमानाः संगम्या-न्योन्यं यन्ति ' इत्यादिः संगच्छते । संकर्ष. ३।३।८.

* दधिग्रहः । अग्निष्टोमे प्रातःसवने । 'दधिग्रहेण प्रचरति' । सत्या. ८।२।१।, दधिग्रहपात्रे दधिग्रहं गृह्णाति । हरति ( आहवनीयं प्रति होमार्थं ) । जुहोति । २ । दधिग्रहस्य अंशोरदाभ्यस्य च समानं पात्रम् । २८ । औदुम्बरं चतुस्स्रक्ति दधिग्रहपात्रम् । दध्ना द्रव्येण ग्राह्यो ग्रहः दधिग्रहः । कै. * दधिग्रहः नित्य एव ज्योतिष्टोमे 'या वै काश्चिदध्वर्युश्च यजमानश्च देवता अन्तरितः तस्या आवृश्च्येते, यत् प्राजापत्यं दधिग्रहं गृह्णाति , शमयत्ये-वैनाम् ' 'ज्येष्ठो वा एष ग्रहाणाम् ' इति देवताक्षोभ-नशमनप्राशस्त्यवचनस्तु विधेयदधिग्रहस्तुतये अर्थवादः । चि. ४।४।५.

※ दधिग्रहः नित्यः काम्यश्च संयोगपृथक्त्वेन ॥ तस्मात् एव 'दधिग्रहं गृह्णीयात् पशुकामस्य' इति पठिते विधौ अपि उक्तन्यायेन कर्मान्तरत्वे प्राप्ते, लाघवात् फलोद्देशेन धात्वर्थविधिमात्रम् , गुणपदं तु अनुवादः विहितस्य पुनःश्रवणे विधानात् संयोगपृथक्त्वेन ऐन्द्र-वायवाग्रतावत् नित्यकाम्यत्वम् । संकर्ष. ३।३।१०.

※ दधिग्रहो नैमित्तिकः श्रुतिसंयोगात् । ४।४। ५।८॥

ज्योतिष्टोमे 'प्राजापत्यं दधिग्रहं गृह्णाति ' इति श्रुतम् । सोऽयं दधिग्रहः किं नित्यः नैमित्तिको वेति विचारे पूर्वपक्षमाह । दधिग्रहः नैमित्तिकः देवताक्षोभजन्यदोष-परिहारार्थः । श्रुतिसंयोगात् 'या वै काश्चिदध्वर्युश्च यजमानश्च देवतामन्तरितः तस्या आवृश्च्येते , यत् प्राजापत्यं ग्रहं गृह्णाति शमयत्येवैनाम् ' इति श्रुत्या संयोगात् श्रुत्या निमित्तसंबन्धेन उक्तत्वात् ।

नित्यश्च ज्येष्ठशब्दात् । ९ ॥

द्वितीयं पूर्वपक्षमाह । नित्यश्च नित्यो दधिग्रहः, चकारेण नैमित्तिकश्च । ज्येष्ठशब्दात् । 'ज्येष्ठो वा एष ग्रहाणां यद्दधिग्रहः ' इति दधिग्रहे ज्येष्ठशब्दप्रयोगात् । ज्येष्ठत्वं चात्र प्रशस्तत्वम् । तस्मात् नित्यश्च नैमित्तिकश्चासौ ।

सार्वरूप्याच्च । १० ॥

द्वितीये पूर्वपक्षे हेत्वन्तरमाह । 'सर्वेषां वा एतत् देवानां रूपम् , यदेष ग्रहः' इति दधिग्रहस्य सर्वदेवरूपताया उक्तत्वात् नित्यत्वमस्य । तस्मात् नित्यो नैमित्तिकश्चायम् ।

नित्यो वा स्यादर्थवादात् तयोः कर्मण्य-संबन्धाद्, भङ्गित्वाचान्तरायस्य ॥ ११ ॥

वाशब्दो द्वितीयं पूर्वपक्षं निवर्तयति । दधिग्रहः नित्य एव स्यात् ज्येष्ठशब्दरूपात् सर्वदेवतासारूप्यरूपाच्च अर्थवादात् । यत्तु प्रथमपूर्वपक्षे श्रुतिसंयोग उक्तः तमाह, कर्मशब्देनात्र क्रियते इति कर्मव्युत्पत्त्या फलं गृह्यते । तयोः अध्वर्युयजमानयोः कर्मणि देवतान्तराय-प्रयुक्तदोषपरिहाररूपे फलाचित्ते फले दधिग्रहस्य साधन-तया आसंबन्धात् संबन्धाभावात् नित्यानित्यसंयोग-विरोधात् । अन्तरायस्य च भङ्गित्वात् कादाचित्कत्वात् । तस्मान्न नैमित्तकः । तथा च नित्य एव दधिग्रहः इति सिद्धान्त. । के.

* दधिग्रहः नैमित्तिकः श्रुतिसंयोगात् ( ४।४।५।८ जै. ) । ज्योतिष्टोमे श्रुतं 'या वा अध्वर्युश्च यजमानश्च देवतामन्तरितः तस्या आवृश्च्येते यत् प्राजापत्यं दधिग्रहं गृह्णाति शमयत्येवैनाम्' इति । अत्र देवताऽन्तरायो निमित्तं पूर्ववत् यच्छब्दात् इति पूर्वपक्षिते, सिद्धान्ति-तम् । अकर्तृप्रमाणाधिकरणस्य यच्छब्दस्य निमित्तता प्रतिपादकत्वाभावात् अर्थवादमात्र अन्तरायश्रवण इति नित्यो दधिग्रहः इति । अर्थवादश्चाय निमित्तविधिस्वरूपः । बाल. पृ ५५. * दधिग्रहस्य इच्छा उपांश्वादिभ्यः परत एव । संकर्ष. ३।१।८.

[redacted] दधिग्रहाधिकरणम् । ज्योतिष्टोमे दधिग्रहो नित्यः ॥

दधिग्रहो नैमित्तिकः श्रुतिसंयोगात् ।४।४।५।८।।

भाष्यम्-- ज्योतिष्टोमे श्रूयते 'या वै कानि-दध्वर्युश्च यजमानश्च देवतामन्तरितस्तस्या आवृश्च्येते, यत् प्राजापत्यं दधिग्रहं गृह्णाति, शमयत्येवैनाम्' इति । तत्र संदेहः किं नित्यो दधिग्रहः, उत नैमित्तिक इति । किं प्राप्तम् ? दधिग्रहो नैमित्तिकः स्यात्, श्रुतिसंयोगात् । देवताऽन्तराये निमित्ते श्रूयते । [redacted] च नित्योऽन्तराय. । तस्मान्नैमित्तिक इति ।

नित्यश्च ज्येष्ठशब्दात् । ९ ॥

भाष्यम्--यदुक्तं नैमित्तिक इति, तत् गृह्यते किन्तु नित्यश्च । कुतः ? ज्येष्ठशब्दात् । ज्येष्ठशब्दो भवति, 'ज्येष्ठो वा एष ग्रहाणां यस्यैष गृह्यते, ज्यैष्ठ्यमेव गच्छति' इति । ज्येष्ठशब्दश्च प्राधान्ये प्राथम्ये वा स्यात् । नैष प्रथमो न प्रधानम् । यदि नित्यः, एवं प्राशस्त्या-दुपपद्यते । न खलु चलाचलं प्रशंसन्ति । तस्मान्नित्यश्च नैमित्तिकश्चेति । विनाऽपि निमित्तेन ग्रहीतव्यः, निमित्ते-नापि पुनरिति ।

सार्वरूप्याच्च । १० ॥

भाष्यम्--सर्वरूपता च श्रूयते 'सर्वेषां वा एतद्देवानां, रूपं यदेष ग्रहो, यस्यैष गृह्यते सर्वाण्येवैनं रूपाणि पशू-नामुपतिष्ठन्ते' इति । नहि देवतारूपमस्माकं किंचिदप्य-प्रत्यक्षम्, अन्यदतो नित्यवत् । तस्मादपि नित्यश्च नैमित्तिकश्चेति ।

नित्यो वा स्यादर्थवादस्तयोः कर्मण्यसंबन्धाद्, भङ्गित्वाचान्तरायस्य ॥ ११ ॥

भाष्यम्-- यदुक्तं नित्यो नैमित्तिकश्चेति, तन्न नित्य एव स्यात् । ज्येष्ठशब्दात् सार्वरूप्याच्च । यदुक्तं देवताऽ-न्तराये निमित्ते श्रूयते इति । न देवताऽन्तरायो निमित्त-त्वेन गम्यते । तयोरध्वर्युयजमानयो. कर्मणि अन्तरायेण संबन्धात् । नहि एतत् श्रूयते अध्वर्युणा देवता अन्तरि-तव्या यजमानेन वेति । अनित्यो हि अन्तरायः । न चैवं शब्दोऽस्ति, 'अन्तराये सति दधिग्रहो ग्रहीतव्य.' इति । नित्येन संयोगेन दधिग्रहस्य ग्रहणम्, अन्तरायसमाधानं तु अस्य प्रयोजनमिति । तदेतन्नित्यवत् ग्रहणम्, अनित्यं प्रयोजनम् । नित्य गृह्णीयात् अनित्यमन्तराय समाधास्यामीति नावकल्पते । तत्र प्रयोजने अनित्यत्वात् ग्रहणे नित्यवत्त्वं निर्वाह्येत । अर्थवादत्वे तु न बाध्यते । नहि तदन्तरायं समाधातुं गृह्यते । अन्यदेव प्रयोजनं काम्यादीति यदभिप्रे-तमभिधीयते । दधिग्रहस्य तु सोऽपवाद एव प्रयोजनमिति । भङ्गित्वाच्च अन्तरायस्य । भङ्गी चान्तरायः अनित्यो नित्य-प्रयोगार्थे नेतीति । तस्मान्नैष दोष. । नित्य एव दधिग्रह इति ।

टुप्-- नित्य एव स्यात् । कुतः ? निमित्तसंयोगा-भावात् । सप्तम्या हि निमित्तमुच्यते । यद्वचनेन वा यदिशब्देन वा । इह तु प्रथमाश्रवणम् । अत आह-- न चैवं शब्दोऽस्ति यो निमित्तं प्रतिपादयतीति । निमित्त

सान्द्रतरदध्न एव करणत्वेन नियमयितुं युक्तत्वेन आर्थिकत्वाभावात् चोदकतोऽपि द्रवद्रव्याधारत्वद्वारेव पात्रप्राप्तेरपि वस्त्राक्षेपः । संकर्ष. ३।३।१२.

* दधिमद्हविष्कृतिभूतौ काम्यौ कर्मान्तरभूतौ सोमग्रहाग्रग्रहौ । संकर्ष. ३।३।१९.

☞ दधित्रापुषं प्रत्यक्षो ज्वर इति न्यायः । ज्वरनिमित्तमिति गम्यते । ( दधिसहिते त्रपुषे नाम फले भक्षिते धातुवैषम्योत्पत्त्या ज्वरः संजायते ) । साहस्री. १६४.

* दधिद्रव्यकत्वं हविष्प्रकृतिलिङ्गम् । बाल. पृ. ११९.

* दधिन्यायेन महाव्रते काम्येन 'अग्नि नये ... दीधितिभिः' इति आज्यधारार्थे सूक्तप्रयोगेण पुरुषार्थेन क्रत्वपि निष्पद्यते ह्यवेक्षार्थेन सूक्तस्य चोदकप्राप्तवचनाभ्यां उभयार्थत्वमविरुद्धम् । संयोगपृथक्त्वन्यायः द्रष्टव्यः । ऐआस्मा. ११।२।२१. * नहि अत्र ( ' त्रिवृदग्निष्टुदग्निष्टोमः तस्य वायव्यासु ' इत्यत्र ) दधिन्यायेन ( ४।३।२।५-७ ) गुणफलोत्पत्ती अन्याययोग्यत्वम् । मी. २।२।१२।२६ पृ. २८०, * रेवतीमतं प्रातामिष्टोमस्तोत्रोत्पत्त्यनुवादेन विधेयं फलोद्देशेन यागविनियोगश्च इति वाक्यभेदतादवस्थ्यात् दधिन्यायेन अत्र लाघवात् गुणफलोभयविधिरेव ( पूर्वपक्षे ) । शा. २।२।१२।२६ पृ. २८०. * लाघवात् गुण एव रेवत्यधिकरणवारवन्तीयस्य. रेवत्यादय एव वा अप्राप्तत्वात् फलोद्देशेन विधीयते इति द्वितीयः पूर्वपक्षः । अतो दधिन्यायेन गुणफलसंबन्ध एव मुख्यः । भाट्ट. २।२।१२.

* दधिपयसी— इत्यादि प्रणीताधर्मानुपलब्धेः । ( अभ्युदितेष्टौ यागार्थयोरपि दधिपयसोः सह श्रपयति इति प्राकरणिकेन वाक्येन तण्डुलैः सह श्रपणविधानेन प्रसङ्गात् प्रणीताकार्यभावेन तद्धर्माः प्राप्नुवन्ति ) । शा. २।२।१२।२७ पृ. ५६५.

☞ दधिपयसी प्रत्यक्षो ज्वर. इति न्यायः । ज्वरजनकत्वात् दधिपयःसमाहारस्य ज्वरत्वेन व्यपदेश. । संग्रह.

* दधिपयसोः इत्यार्थयोः प्रणीताकार्ये श्रपणाङ्गत्वेऽपि श्रपणोपकारित्वात् तद्धर्माणां प्रणीताधर्माणां श्रपणाङ्गत्वोपपत्तिः । दधिपयसोः श्रपणापूर्वसिद्ध्यर्थत्वात् निरङ्गयोश्च अपूर्वसाधनत्वायोगात् श्रपणापूर्वसाधनीभूत दधिपयोऽर्थतया चोदकेन प्रणीताधर्माणां विधानात् श्रपणाङ्गत्वं युक्तम् । सु. पृ. १४६०. * दधिपयसो. चतसृभिः कुम्भीभिरेव कार्यप्रत्यर्थीये होमे कृते सति हविर्लोपाभावात् स्विष्टकृदादिलोपकार्यलोपः । वि. ३।५।२.

☞ दधिपयसोः पशुकामेष्टौ प्रदेयधर्मा नानुष्ठेयाः ॥

अपनयो वाऽर्थान्तरे विधानाच्चरुपयोवत् । ९।४।११।४३ ॥

भाष्यम्— अस्ति पशुकामेष्टिः 'यः पशुकामः स्यात् सोऽमावास्यामिष्ट्वा वत्सानपाकुर्यात् । ये क्षोदिष्ठास्तानग्नये सनिमतेऽष्टाकपालं निर्वपेत्, ये मध्यमास्तान् विष्णवे शिपिविष्टाय शृते चरुम्, ये स्थविष्ठास्तानिन्द्राय प्रदात्रे दधंश्चरुम्' इति । शृते चरुम्, दधश्चरुं इत्येतदुदाहरणम् । अत्र संदेहः किं शृते दधनि च इत्यार्थ दधिपयोधर्माः कर्तव्याः, उत नेति । किं प्राप्तम् । पूर्वेणाधिकरणेन कर्तव्या इति । समाना हि श्रुतिर्भवतीति । सिद्धवच्च शृतोपदेशः, तस्मात् प्रदानार्थेषु धर्मैरुपपद्यते । एवं प्राप्ते, ब्रूमः । अपनयो वा धर्माणां भवेत् । अर्थान्तरे हि एतत् पयो विधीयते दधि च श्रपणार्थे, न प्रदानार्थे, सप्तमीसंयोगात् । चरुपयोवत् । यथा प्रायणीये चरौ पयसि प्रदेयधर्मा न क्रियन्ते, सप्तमीसंयोगात् । एवमिहापि ।

लक्षणार्था शृतश्रुतिः ॥ ४४ ॥

भाष्यम्— अथ यदुक्तं सिद्धवत् शृतोपदेशो भवतीति, नैष दोषः । श्रपणेन द्रव्यं लक्षयिष्यति । श्रपयति प्राप्ते हि चरौ श्रपणम्, तदुपदं लक्ष्यते । श्रपयति द्रव्ये चरुरिति । तस्मात् प्रदेयधर्मा न भवेयुरिति ।

सोम— पूर्वोपवादात् संगतिः । सूत्रार्थस्तु— प्रदेयत्वापनयो वा चरुपयोवत् प्रणीताकार्ये विधानात् इति ।

वि— ' स न्यायः पशुकामेष्टौ प्रायणीयवतोऽधरा ।, तुल्यश्रुतित्वात् स्याद्वाद्यो, ऽपूर्वकर्मपतोऽन्तिमः ॥ ' प्रणीताधर्मा एतात्र कार्याः ।

भाट्ट—'यः पशुकामः स्यात् सोऽमावास्यामिष्ट्वा वत्सानपाकुर्यात्, ये क्षोदिष्ठास्तानग्नये सनिमतेऽष्टाकपालं निर्वपेत्, ये मध्यमास्तान् विष्णवे शिपिविष्टाय शृते चरुम्, ये स्थविष्ठास्तानिन्द्राय प्रदात्रे दधंश्चरुम्' इत्यत्रापि यद्यपि अपनयविधेरभावात् कर्मान्तरस्य पक्षे उपपादितम्, तथापि अभ्युदितेष्टितुल्यश्रुतित्वात् वत्सापाकरणश्रुतिबलाच्च तत्सम्बन्धविवक्षया प्रदेयत्वावगतेः प्रदेयधर्मान् मत्वानन्तरोत्तरम्। वत्सापाकरणविधित्वेन तण्डुलपयोऽन्याश्रुतावपि अधिकरणजातिवक्षाया प्रमाणाभावात् प्रदेयत्वानुपपत्तेर्न प्रदेयधर्माः आदित्यचरुवत्। ६।४।१०.

मण्डन—'न वै स्युः पशुकामेष्टौ।' ते प्रदेयधर्माः।

शंकर— 'पशुकामेष्टौ तु नैवम्।' १२. एवं अभ्युदयेष्टावपि प्रदेयधर्माः न।

* दधिपयसोः प्रणीताधर्मानुष्ठान ( चन्द्रस्य- ) अभ्युदितेष्टौ। भा. ६।२।१४।४३-४६, * दधिपयसोः प्रदेयधर्मा अनुष्ठेयाः ( चन्द्रस्य ) अभ्युदितेष्टौ। ६।५।१०।४१-४२. * दधिपयसोः सौविष्टकृताभ्यपूर्वोपस्तरणयोरभावात् तत्काल। 'अग्नये प्रातावते पुरोडाशमष्टाकपालम्' इत्यादिना विहितायां पशुकामेष्टौ। संकर्ष. ४।४।९.

* दधियागः पशुकामेष्टौ अमावास्यागतः सान्नाय्यस्य विकृतिः। वि. १२।२।७ वर्णक ९.

* दधिविशिष्टस्य होमस्य फले विधौ स्वपदार्थस्यैव अन्यान्यपदविधानात् संनिकृष्टविधुपपत्तिः। सु. पृ. ८४४.

* दधिहोमसंबन्धो वाक्येन विधीयते इति पूर्वाधिकरणभाष्योक्तेन न्यायेन रेवतीषु इति सप्तमीश्रुतेः ( २।२।११ ) अधिकरणभूताभ्यो रेवतीभ्यः फलं इत्यनुगमात्। सु. पृ. ८५४.

* दन्तधावनं संस्कारः न फलयुक्तः, तत्र फलश्रुतिरर्थवादः, तच्च अङ्गत्वं याजमानं ज्योतिष्टोमे। भा. ४।३।३।३-४, * दन्तधावनस्य 'दतो धावते' इत्यस्य ज्योतिष्टोमे 'मेधमेवमुपैति' इति फलश्रुतिः फलार्थवादः, न तु फलविधिः। ४।३।२।१-२.

* दधिमन्त्रः 'दधिक्राव्णो अकारिषम्' इति मध्यवर्ती सन् मध्यवर्तिनः तत्पात्राज्याद्यं यथा-संख्यपाठात् दर्शपूर्णमासयोः। दधिः पशुकामाभ्युदयम्। वि. ३।३।५.

* दमयन्ती नलस्य पत्नी। वा. ३।४।११९.

* दरिद्रस्यापि धनार्जनोत्तरमधिकारः कर्मसु। वि. ६।१।८.

☒ दर्पणप्रतिबिम्बन्यायः। अयं न्यायः सुरेश्वराचार्येण विवृतः। तथाहि 'अन्तरग्निरिमे लोका अन्तर्विश्वमिदं जगत्। बहिर्वै-मायया भाति दर्पणे प्रतिबिम्बवत्॥' इति। साहस्री. १०६.

☒ दर्पणमुखावलोकनन्यायः। अयं मादर्श मुखं दर्पणे पश्यति, मादर्शमेव दृश्यते इति विषये प्रवर्तते। साहस्री. ८८६.

* दर्भाः सप्तविधाः। ( 'कुशाः काशा यवा दूर्वा उशीराश्च सकुन्दकाः। गोधूमा व्रीहयो मौञ्जा दश दर्भाः सबल्वजाः॥' ) ( धर्मसिन्धु आवणे )। 'कुशाः काशाः शरो गुन्द्रो यवा दूर्वाऽथ बल्वजाः। गोकेश-मुञ्ज-कुन्दाश्च पूर्वाभावे परः परः॥' निर्णयसिन्धुः ( ११२ श्राद्धवस्तूनि इत्यत्र )। वि. ३।२।१. * दर्भैः वेदिस्तरणार्थेभ्यो भिन्नैः विधृती पवित्रं च कर्तव्यम्। भा. ३।८।१७।३३, * न तैरेव दर्भैः प्रयोगान्तरमपि क्रियते। ११।३।४।६. * दर्भाणां प्रागग्रत्वमुदगग्रत्वं वा दैवे कर्मणि। पैतृके कर्मणि तु दक्षिणाग्रत्वम्। वि. ३।४।४, * दर्भाणां लवने प्रतिलवनं 'बर्हिर्देवसदनं दामि' इति लवनमन्त्रस्य आवृत्तिः दर्शपूर्णमासयोः। भा. ११।४।१४।४४-४५.

* 'दर्भपिञ्जूलैः पावयति' अस्योपदेशातिदेशाभ्यामाप्ति दर्भपा कर्मणता न भवति, तेन कर्मभेदो नास्ति तत्र। सोम. २।२।७, * दर्भपिञ्जूलानां एकविंशतेः समुदायेन पावनस्यानुष्ठानम्। भा. ५।२।३।४-९.

* दर्भमन्त्रयोः ( दर्भस्य मन्त्रस्य च ) प्राकृतयोः वाजपेये माहेन्द्रस्तोत्रोपाकरणसाधनभूतेन रथघोषादिना बाधः। भा. १०।४।११।१-२ वर्णक २.

* 'दर्भमयं परिदधाति'। दर्भमयादिवस्त्र कार्पासादिवस्त्रे सत्यपि परिधेयं अपूर्वार्थत्वात्। वि. ६।८।७. * दर्भमयं वासः पत्नी परिधत्ते महाव्रते। तस्य मार्ष्टेन अहतवाससा समुच्चयः। भा. १०।४।७।१३-१५.

● दर्विः लौकिकानां शब्दाचारगृहीता । 'न्यग्विलया मूलदण्डया दर्व्या जुहोति ' इति । भा. ८।४।१६.

● दर्विहोम इति नामधेयं जुहोतिचोदनानामेव, न तु यजतिचोदनानाम् । होमशब्दः जुहोतिचोदनासु मुख्यः । वि. ८।४।१.

※ दर्विहोमो यज्ञाभिधानं होमसंयोगात् । ८।४।१।१ ॥

'यदेकया जुहुयात् दर्विहोमं कुर्यात्' इति दर्विहोमशब्दः श्रुतः । स किं गुणविधिः, उत कर्मनामधेयं इति विचारे सिद्धान्तमाह । दर्विहोमः दर्विहोमशब्दः यज्ञाभिधानं यज्ञस्य नामधेयं कर्मनामधेयं स्यात्, होमसंयोगात् । होमशब्दोऽत्र श्रूयते । तत्प्रधानश्चायं समासः । दर्विशब्द उपलक्षणम् । अथवा जुहुयादिति कर्म उच्यते, तेन अनुवदितोऽयम् । तस्मात् कर्मनामधेयं इति सिद्धान्तः । 'यदेकया जुहुयात्' इति विषयवाक्ये एकया ऋचा इत्यर्थः । पुरोऽनुवाक्यायाज्यारूपे च द्वे ऋचौ विहिते तत्र ।

• द्रव्योपदेशाद्वा गुणाभिधानं स्यात् । ५ ॥

दर्विहोमशब्दः कर्मनामधेयं इति सिद्धान्तिना उक्ते पूर्वपक्षी आह । वाशब्दः सिद्धान्तं व्यावर्तयति । दर्विहोमशब्दो न कर्मनामधेयम्, किन्तु गुणाभिधानं गुणस्याभिधानं गुणनामधेयं स्यात् द्रव्योपदेशात् दर्विरूपस्य द्रव्यस्य होमगुणस्य उपदेशात् । दर्व्या होमो दर्विहोमः । दर्विः होमक्रियायां गुणः करणत्वात् । तस्मात् गुणविधिः । इति पूर्वः पक्षः ।

पञ्चमादिनवमान्तानि सूत्राणि प्रथमाधिकरणशेषभूतानि । द्वितीयतृतीयाभ्यां सूत्राभ्यां एकं अन्तरार्मिण्यधिकरणम्, चतुर्थेन तु सूत्रेण द्वितीयं अन्तरार्मिण्यधिकरणम् ।

न लौकिकानामाचारग्रहणात्त्वशब्दवतां चान्यार्थविधानात् । ६ ॥

दर्विहोमशब्दो गुणविधिः इति पूर्वपक्षिणा उक्ते सिद्धान्ती आह । दर्विहोमशब्दो न गुणविधिः । लौकिकानां कर्मणामर्थे आचारेण शिष्टाचारेण दर्व्याः ग्रहणात् । ननु श्रौते कर्मणि विधास्यते, न, शब्दवतां श्रुतिमतां श्रुतिविहितानां कर्मणां श्रुते च अन्येषां अर्थानां स्रुवजुहूतमसादीनां पात्राणां विधानात् नास्ति दर्व्याः अपेक्षा । लौकिके तु कर्मणि आचारसिद्धैव, इति नायं गुणविधिः ।

दर्शनाच्चान्यपात्रस्य । ७ ॥

ननु उत्तरवेदिव्याघारणरूपदर्विहोमार्थं श्रौतेऽपि कर्मणि दर्वी विधातव्या इति संभवति गुणविधिः इति । नैवम् । तत्र अन्यस्यैव पात्रस्य दर्शनात् न दर्वी विधातव्या । 'भूतेभ्यस्त्वा इति ऊर्ध्वं स्रुचमुद्गृह्णाति' इति अन्यदेव पात्रं दृश्यते । तस्मान्न गुणविधिः ।

तथाऽग्निहविषो । ८ ॥

ननु अग्नेः कार्ये अधिकरणत्वेन दर्व्याः विधिः संभवति । हविषोऽर्थे च प्रदेशत्वेन दर्व्याः विधिः संभवति । दर्व्यां होमः, दर्व्याः होमः इति च क्रमेण समासः इति चेत् । नैवम् । यथा उत्तरवेदिव्याघारणार्थं तथा अग्निहविषोः कार्येऽपि न दर्व्याः विधिः संभवति । 'यदाहवनीये जुहोति' इति होमाधिकरणं आहवनीयो विहितः, न तत्र दर्वी संभवति । हविश्च चरुपुरोडाशादि अन्यदेव विहितम्, इति न तत्रापि दर्व्याः संभवः । तस्मात् अग्निहविरर्थेऽपि दर्व्याः विधिः ।

उक्तश्चार्थेऽसंबन्धः । ९ ॥

दर्विहोमशब्दो गुणविधिः । अग्नेः कार्ये दर्व्याः विधानसंभवात् इति चेदित्याह सिद्धान्ती अर्थे अग्नेः अर्थे होमे आहवनीयशब्दवत्त्वात् द्रव्यस्य असंबन्धः न संबन्धः संभवति इति असंबन्धः उक्तोऽस्माभिः । तस्मात् अग्निकार्ये दर्व्याः नोपदेशः । तस्मात् दर्विहोमशब्दः न गुणविधानार्थः किन्तु कर्मनामधेयं इति सिद्धान्तः । अत्र प्रथमेऽधिकरणे प्रथमं पञ्चमादारभ्य नवमान्तानि चेति षट् सूत्राणि भवन्ति । के.

※ दर्विहोमा अपूर्वा एव, न सोमस्य वा नारिष्ठहोमानां वा पत्नीसंयाजानां वा स्विष्टकृत्पत्नी-करण्यहोमयोर्वा विकृतिः ॥

तस्मिन् सोमः प्रवर्तेताव्यक्तत्वात् । ८।४।४।१० ॥

भाष्यम्— दर्विहोमशब्दः कर्मनामधेयमित्युक्तम् । तत्र चिन्त्यते किंप्रकृतयो दर्विहोमाः, उत कुतश्चित् धर्माः ग्राहिणः इति । किं प्राप्तम् । आपूर्वा इति । कुतः ।

इतिकर्तव्यताऽविधेः । अविहितेतिकर्तव्यताकं कर्म विहितेतिकर्तव्यताकात् धर्मान् गृह्णाति इत्युक्तम् । अविहितेतिकर्तव्यताकाश्चामी । तस्मात् पूर्ववन्तः इति । यदा एतदेवम्, तदा एतदापतति, किंपूर्वा इति । अत्रोच्यते । तस्मिन् खलु दर्विहोमे सोमः प्रवर्तेत, सौमिको विध्यन्तः स्यात् । कुतः ? अव्यक्तत्वात् । अव्यक्तचोदनः सोमः (स्वाहाकारेण अविहितदेवताकः)। अमी अपि च अव्यक्तचोदनाः 'भिन्ने जुहोति' इति । अतः चोदनासामान्यात् सौमिको विध्यन्त इति ।

न वा, स्वाहाकारेण संयोगात्, वषट्कारस्य च निर्देशात् तन्त्रे तेन विप्रतिषेधात् ॥ ११ ॥

भाष्यम्— वाशब्दः पक्षं व्यावर्तयति । नात्र सौमिको विध्यन्तो न्याय्यः । किं कारणम् ? स्वाहाकारेण संयोगात् । स्वाहाकारेण संयुक्ता दर्विहोमाः । 'पृथिव्यै स्वाहा, अन्तरिक्षाय स्वाहा' इति । किमतः ? वषट्कारस्य निर्देशात् तन्त्रे तेन च विप्रतिषेधः । तन्त्रे च सौमिके वषट्कारो निर्दिष्टः । तेनास्य विप्रतिषेधः, उभयोः प्रदानार्थत्वात् । यदि सौमिको विध्यन्तः, ततो वषट्कारेण भवितव्यम् । तत्रैतत् स्वाहाकाराम्नानं अनर्थकं स्यात् । अथ विकल्पः क्रियते, तथापि उभयोः पक्षे बाधः । अथ तु अपूर्वा दर्विहोमाः, नैष विशेषो भविष्यति । तस्मात् अपूर्वाः ।

शब्दान्तरत्वात् ॥ १२ ॥

भाष्यम्— शब्दान्तरं च यजतिशब्दात् जुहोतिशब्दः । यजतिचोदनश्च सोमः, दर्विहोमाः पुनर्जुहोतिचोदनाः । चोदनासामान्येन ■ धर्मप्राप्तिरिष्यते । तस्मादपि अयुक्ता सौमिकी धर्मप्राप्तिः । ननु अव्यक्तत्वात् चोदनासामान्यमुक्तम् । अत्रोच्यते । सामान्ये अव्यक्तत्वे यजतिशब्दो विशेषचिह्नम् । तेन यजतिष्वेव अव्यक्तासु धर्मनियमः । यथा समाने औपसदत्वे देवतैकत्वेन विशेषचिह्नेन सौमेऽकर्मणि आग्नेयविध्यन्त इति ।

लिङ्गदर्शनाच्च ॥ १३ ॥

भाष्यम्— लिङ्गदर्शनाच्च एतत् विज्ञायते 'नात्र सौमिको विध्यन्तः' इति । औदुम्बरीहोमे हि स्वाहाकारं विधाय आज्यविधिपरे वाक्ये दर्शयति 'घृतेन द्यावापृथिवी आपृणेथामिति अन्यतरा कर्णौ जुहोति, आ मूलादन्ववस्रावयति, भूमिगते स्वाहा करोति' इति । यदि अत्र सौमिको विध्यन्तः स्यात् वषट्कारस्ततो भवेत्, न स्वाहाकारः ।

उत्तरार्थस्तु स्वाहाकारो यथा साप्तदश्यम्, तत्राविप्रतिषिद्धा पुनःप्रवृत्तिर्लिङ्गदर्शनात्, पशुवत् ॥ १४ ॥

भाष्यम्— लिङ्गदर्शनस्य परिहार उच्यते । यदुक्तं औदुम्बरीहोमे लिङ्गवत् स्वाहाकारस्य दर्शनात् न सौमिको विध्यन्तः इति, अत्र ब्रूमः । उत्तरार्थस्तु स्वाहाकारः यथा साप्तदश्यम् । यथा साप्तदश्यं अनारभ्याधीतम् 'सप्तदश सामिधेनीरन्वाह' इति । अनारभ्यवादाना प्रकृत्यर्थत्वात् दर्शपूर्णमासौ आगतम् । ततः प्राकरणिकेन पाञ्चदश्येन बाधितं सत् विकृत्यर्थं जातम् । एवमय स्वाहाकारः अनारभ्याधीतः 'स्वाहाकारेण वषट्कारेण वा देवेभ्यो हविः प्रदीयते' इति । तेनैव न्यायेन प्रकृतिं निविविक्षुः सोमं दर्शपूर्णमासौ च । ततस्तयैव वषट्कारेण उपरुद्धः तद्वर्जं अन्यानि प्रदानानि उपसंक्रामति । तत्र अविप्रतिषिद्धा सोमधर्मप्रवृत्तिः । पशुवत् । यथा पशौ साप्तदश्ये श्रूयमाणे न वार्त्रघ्नपौर्णमासिकी तत्र प्रवृत्तिर्विप्रतिषिध्यते वाचनिकत्वात् साप्तदश्यस्य, एवमिहापि वाचनिकत्वात् स्वाहाकारं प्रति लिङ्गदर्शनात् न सौमिकधर्मप्रवृत्तिर्विप्रतिषिध्यते । पुनःशब्दश्च अनर्थकः यथा 'किं पुनः इदम्' इति ।

अनुत्तरार्थो वाऽर्थवत्त्वादानर्थक्याद्धि प्राकृतस्योपरोधः स्यात् ॥ १५ ॥

भाष्यम्— यदुक्तं 'उत्तरार्थः स्वाहाकारः' इति, तत्र । कुतः ? अनुत्तरार्थः अर्थवत्त्वात् । प्रकृतावेव अस्य अर्थवत्त्वं नारिष्ठहोमेषु, पार्वणहोमयोश्च 'पूर्णमासाय सुराधसे स्वाहा' इति । अनर्थकत्वाद्धि प्राकृतस्य उपरोधः स्यात् । यदि प्रकृतौ अनर्थकः स्यात् स्वाहाकारः, ततः प्राकृतस्य वषट्कारस्य विकृतौ सतस्य अनारभ्यवादेन स्यादुपरोधः, वषट्कारबाधः इत्यर्थः, न तु अस्य आनर्थक्यम् । तस्मात् नोत्तरार्थः । न चेत् उत्तरार्थः, लिङ्गमेव एतद्भवति अतोऽपूर्वत्वे दर्विहोमानाम् 'भूमिगते स्वाहा करोति' इति ।

न प्रकृतावपीति चेत् । १६ ॥

भाष्यम्— एवं चेत् पश्यसि 'नारिष्ठहोमेषु पार्वणहोमयोश्च स्वाहाकारस्य निवेशः' इति, प्रकृतावपि नारिष्ठहोमादौ नास्य निवेशो घटते । तत्रापि वषट्कार एव प्राप्नोति । स हि अविशेषेण दर्शपूर्णमासयोर्विहितः 'द्व्यक्षरो वषट्कारः, एष वै प्रजापतिः समृद्धो यज्ञेऽन्वायत्तः' इति । ननु स्वाहाकारोऽपि मन्त्रे पठितः । सत्यं पठितः, वषट्कारस्तु विहितः अतश्चोदनेति । 'नास्य यज्ञो व्यथते, प्रजापतौ प्रतितिष्ठति' इति स्वाहाकार पाठेन प्राप्त बाध्यते, पाठे हि आनुमानिको विधिः प्रत्यक्षेण विधिना बाध्यते । न चेत् तत्रापि निवेशः, तदर्थ एव स्वाहाकारो भवति निष्फलार्थः ।

उक्तं समवाये पारदौर्बल्यम् । १७ ॥

भाष्यम्— अत्रोच्यते नैतदुक्तं 'वषट्कारेण स्वाहाकारो बाध्यते' इति । कुतः ? यतः उक्तं श्रुत्यादीनां समवाये परस्य दुर्बलत्वम् । इह च वाक्यप्रकरणयोः संनिपातः । प्रकरणेन वषट्कारः प्राप्नोति नारिष्ठहोमेषु, तन्मन्त्रपदैः एकवाक्यत्वात् स्वाहाकारः । वाक्यं च प्रकरणात् बलीयः । ननु स्वाहाकारस्य उपरिष्टात् प्रदानार्थो वषट्कारः प्रयोक्ष्यते ( स्वाहा वौषट् इति ) । न खलु स्वाहाकारेणैव प्रदानं निर्वर्तितम्, कथमविहितः प्रदानार्थे स्वाहाकारः प्रदानार्थं निर्वर्तयिष्यति । ( उत्तरम्– ) विहितश्च । कथम् ? 'स्वाहाकारेण वा वषट्कारेण वा देवेभ्यो हविः प्रदीयते' इति । ननु उभयोः स्वाहाकारवषट्कारयोः प्रकृतौ आम्नानात् अन्यतरस्यानर्थक्यम्, यत उच्यते, प्रदानार्थतामनयोर्विधास्यति । तस्मात् न सोमप्रकृतयो दर्विहोमाः ।

तच्चोदना वेष्टेः प्रवृत्तत्वात् तद्विधिः स्यात् । १८ ॥

भाष्यम्— वाशब्दः पक्षान्तरपरिग्रहे । तच्चोदना वा । तत् इत्यनेन दर्विहोमाः प्रतिनिर्दिश्यन्ते । जुहोतिचोदना ये दर्शपूर्णमासयोः अङ्गकर्मविशेषाः, ते दर्विहोमेषु प्रवर्तेरन् । के पुनस्ते ? नारिष्ठहोमाः । कस्मात् कारणात् ? ते हि प्रवृत्तधर्माणः सर्वेष्टिषु सर्वपशुबन्धेषु प्रवर्तमाना दृष्टाः । यस्य च यो धर्मः प्रायेण दृष्टः, स तस्य अदृश्यमानोऽपि अनुमीयते । यथा यः परार्थान् प्रायेण करोति, अन्यस्मिन्नपि परार्थकरणे स एव संभाव्यते । तस्मात् तेषां प्रवृत्तिः ।

शब्दसामर्थ्याच्च । १९ ॥

भाष्यम्— शब्दसामर्थ्यं च चोदनासामान्यं दर्विहोमानाम् । नारिष्ठहोमेऽपि हि जुहोतिचोदना 'नारिष्ठान् जुहोति' 'मिश्रे जुहोति' इति । चोदनासामान्यात् धर्मप्राप्तिः ।

लिङ्गदर्शनाच्च । २० ॥

भाष्यम्— लिङ्गं चैतमर्थं दर्शयति यथा नारिष्ठहोमपूर्वत्वं दर्विहोमानामिति । किं लिङ्गं भवति ? अग्निहोत्रे श्रूयते 'यदि कीटोऽवपद्येत, अन्तःपरिधि निनयेत्' इति । तथा अग्नौ श्रूयते 'अन्तर्वेदि तिष्ठन् हवींषि जुहोति' इति । परिधयो वेदिश्च अङ्गप्रधानार्थत्वात् नारिष्ठहोमाङ्गम् । यदि तेषां धर्माः प्रवर्तेरन्, ततः एतत् दर्शनमुपपद्यते । तस्मात् तेषां प्रवृत्तिः ।

तत्राभावस्य हेतुत्वाद् गुणार्थे स्याददर्शनम् । २१ ॥

भाष्यम्— यदेतत् गुणार्थे नारिष्ठहोमार्थे दर्शनमुपदिष्टं नारिष्ठहोमानां प्रवृत्तौ इत्यर्थः, अदर्शनं तत्, असाधकमित्यर्थः । कुतः ? तत्र अभावस्य हेतुत्वात् व्यम्बकेषु 'अप्रतिष्ठिता वै त्र्यम्बका इत्याहुः । नैष्मांबर्हिः संनह्यन्ते, न प्रयाजा इज्यन्ते, नानूयाजा इज्यन्ते न सामिधेनीरन्वाह' इति अप्रतिष्ठितत्वं त्र्यम्बकाणां प्रतिज्ञाय तदुपपादनार्थं इध्मादीनामभावो हेतुत्वेनोपदिश्यते । यदि च नारिष्ठहोमाः प्रवर्तेरन्, ततः अङ्गप्रधानार्थत्वात् इध्माबर्हिषोः सामिधेनीनां च त्र्यम्बकेषु भाव एव स्यात् । तत्रायं तदभावः असत्त्वात् हेतुत्वेन न युज्यते । तस्मात् नारिष्ठहोमानां अप्रवृत्तिः ।

विधिरिति चेत् । २२ ॥

भाष्यम्— इति चेत् पश्यसि 'दर्शनमेतत्' इति । अथ कस्मात् विधिर्न भवति ? नारिष्ठहोमप्रकृतित्वात् प्राप्तानामिध्मादीनां प्रतिषेधको विधिः, तत् अपूर्वमर्थं विधास्यति, अनुवादः अप्रवृत्तिविशेषकः अनर्थकः स्यात् । सिद्धान्ती प्रतिज्ञया सूत्रेण परिचोदयति ।

**न, वाक्यशेषत्वाद् गुणार्थे च समाधानं नानात्वे नोपपद्यते ॥ २३ ॥**

भाष्यम्—नायं विधिर्युज्यते। किं कारणम्? अन्योऽत्र विधिराम्नातः 'आदित्यं घृते चरुं निर्वपेत् पुनरेत्य गृहेषु' इति, तस्य वाक्यशेषोऽयम्। कथं ज्ञायते? तेन आकाङ्क्षितत्वात्। 'अप्रतिष्ठिता वै त्र्यम्बकाः' इति दोषमनुकीर्त्य इदं श्रूयते 'आदित्यं (अदितिदेवताकम्) घृते चरुं निर्वपेत् पुनरेत्य गृहेषु' इति 'इयं वा अदितिः, इयं प्रतिष्ठा, यदादित्यः अस्यामेव प्रतितिष्ठति' इति। यदेतत् तस्य दोषस्य परिहारार्थमिति विज्ञायते, अन्तरेण सह एकवाक्यतां याति। तन्मध्ये च ये इध्माद्यव्यमानवचनाः, तेऽपि तच्छेषा एव समुच्चारणाद् व्याख्याः। ते यदि विधयः कल्पेरन् पृथक् वाक्यानि भवेयुः, तत्र एकवाक्यत्वं बाध्येत। व्यवहितकल्पना च स्यात्। न च एषां विधायकत्वम्, अनुवादस्वरूपत्वात्। तस्मान्न विधयः। अथ कोऽत्र विशेषः, यत् 'समाने लिङ्गत्वे अन्तःपरिधिदर्शनं असाधकम्, इतरत् साधकम्' इति। विशेषं उपरिष्टाद् वक्ष्यामः। (एवं दर्विहोमा नारिष्ठहोमा न प्रकृतिरित्युक्तम्)।

**येषां चाऽपरयोर्होमस्तेषां स्यादविरोधात् ॥ २४ ॥**

भाष्यम्— येषां वा यागानां अपरयोः अग्न्योः होमः, तेषां प्रवृत्तिः स्यात् पत्नीसंयाजानामित्यर्थः। कुतः? अविरोधात्। तत्र विरोधो नास्ति, यो नारिष्ठहोमानां प्रवृत्तौ उक्तः 'तत्राभावस्य हेतुत्वात्' इति। तेषां हि इष्टावर्हिः सामिधेन्यश्च नैवाङ्गम्। तदभावदर्शनं तत्र विरुध्यते। प्रवृत्तिधर्माणस्तेऽपि जुहोतिचोदनाश्च 'सह पत्न्या जुहोति' इति। तस्मात् तेषां प्रवृत्तिः।

**तत्रौषधानि चोद्यन्ते, तानि स्थानेन गम्येरन् ॥ २५ ॥**

भाष्यम्— नैतद् युक्तम्। किं कारणम्? यत्र तत्र औषधानि चोद्यन्ते दर्विहोमे, यथा त्र्यम्बकेषु पुरोडाशः करम्भपात्राणि तण्डुलाः इत्येवमादीनि। तानि स्थानेन गम्येरन्। आज्यस्थानापत्त्या आज्यधर्मान् प्राप्नेरन्। ते न शक्याः तत्रानुष्ठातुम्। अनुष्ठीयमाना वा अप्राकृतकार्याः स्युः, तत्र चोदको बाध्येत। तस्मात् न तेषां प्रवृत्तौ किञ्चित् प्रयोजनमस्ति। याज्यानुवाक्ये अपि मन्त्रान्तरेण निवर्त्येते, वषट्कारः स्वाहाकारेण। (सूत्रद्वयेन पत्नीसंयाजप्रकृतित्वं निरस्तम्।)

**लिङ्गाद् वा शेषहोमयोः ॥ २६ ॥**

भाष्यम्—पिष्टलेपफलीकरणहोमयोर्वा प्रवृत्तिः स्यात् (दर्विहोमेषु)। कुतः? लिङ्गात् औषधसामान्यात्। यश्च पत्नीसंयाजानां प्रवृत्तौ दोष उक्तो धर्माणामानर्थक्यम्, तदत्र नास्ति। तत्र औषधधर्मा निर्वपणादयः शक्याः कर्तुम्। तस्मात् तयोः प्रवृत्तिरिति।

**प्रतिपत्ती तु तौ भवतस्तस्मादतद्विकारत्वम् ॥ २७ ॥**

भाष्यम्— न तु एतदेवम्। कुतः? यतः प्रतिपत्तिकर्मणी एतौ होमौ, दर्विहोमाश्च प्रधानकर्माणि, तेषां दूरतो भेदः। सामान्यतश्च (साम्येन च) धर्मप्राप्तिरिष्यते। यदुक्तम् 'औषधधर्माः शक्यास्तत्र कर्तुम्' इति, प्रतिपत्तित्वात् अप्रयोजकावेव निर्वपणादीनां धर्माणाम्। अतः तत्प्रकृतित्वं तेनैव न्यायेन नोपपन्नम्। नापि प्रयोजनवत्। तस्मात् एतदप्ययुक्तम्। एवं कुतश्चिदपि दर्विहोमानां धर्मप्राप्तिर्युज्यते। तस्मादपूर्वः।

**संनिपाते विरोधिनामप्रवृत्तिः प्रतीयेत, विध्युत्पत्तिव्यवस्थानादर्थस्यापरिणेयत्वाद्, वचनादतिदेशः स्यात् ॥ २८ ॥**

भाष्यम्— अथ कस्मात् उभयपक्षसाधनानामपि लिङ्गानां भावे अप्रवृत्तिरेव प्रतीयते, न पुनः प्रवृत्तिरिति। उच्यते। संनिपाते विरोधिनामेतेषां लिङ्गानां प्रवृत्तिः प्रत्येतुं न न्याय्या। कुतः? विध्युत्पत्तिव्यवस्थानात्। विधीनामुत्पत्तिः पाठः, स च व्यवस्थितः, केचित् दर्शपूर्णमासयोः पठ्यन्ते केचित् सोमे। तेषां अर्थस्य अपरिणेयत्वम्। यत्र पठिताः, ततोऽन्यत्र परिणीयमानेषु प्रकरणं बाध्यते। तस्मात् अप्रवृत्तिः प्रतीयेत। तदाह, किमेव चोदनार्थः, सर्वत्र अप्राप्तिरिति। एवं खलु प्राप्ते, उच्यते। वचनात् अतिदेशः स्यात्। यथा राजसूये उद्गातृकर्मसु। अस्ति एवंविधे वचने अपूर्वो इति। अथ ये लिङ्गे उपदिष्टे 'परि

कीटोऽवपद्येत, अन्तःपरिधि निनयेत्' 'अन्तर्वेदि तिष्ठन् सावित्राणि जुहोति' इति, तयोः कः समाधिः ? उच्यते। अन्वायपूर्वकत्वात् लक्षणया वादः स विज्ञायते। अन्तःपरिधिदेशो अन्तर्वेदिदेशो इति। परिधीनां वेदेश्च सत्त्वाभावात्। 'यथा रजनी मे कण्डूयति, तिलको मे स्पन्दते' इति रागाभावे तिलकाभावे च तद्देशलक्षणया भवन्ति प्रकाराः इति।

सोम— प्रकृतिकं परिसमाप्य अपवादविचारः प्रस्तूयते।

वि— 'दर्विहोमे सोमधर्मा अपूर्वत्वतुया, ऽग्निमः। अव्यक्तेर्, वषट्कारावाच स्वाहोनत्वादेरपूर्वता॥'

भाट्ट— तेषु अव्यक्तत्वसामान्येन सोमयागविकारत्वं अव्यक्ताश्च च अपरिचिताश्चे देवताऽभावरूपम्, न तु स्वाहूतया देवताशून्यत्वम्, तथात्वे सिद्धान्ते दर्विहोमेषु देवताऽभावप्रसङ्गात्। अत एव उपांशुयाजविकारत्वमपि शक्यं वक्तुम्। अथवा होमत्वसामान्याधिक्यात् नारिष्ठहोमविकारत्वम्। अत एव अग्निहोत्रे 'यदि कीटोऽवपद्येत, अन्तःपरिधि निनयेत्' इति परिधिदर्शनम्। परिधेर्हि अङ्गप्रधानार्थत्वात् नारिष्ठहोमाङ्गत्वमपि सुलभमेव। तथा अग्नौ 'अन्तर्वेदि तिष्ठन् सावित्राणि जुहोति' इति वेदिदर्शनं न नारिष्ठहोमविकारत्वसाधकम्। यत्तु मूले पत्नीसंयाजविकारत्व शङ्कितम्, तत् तेषां यागत्वादुपेक्षितम्। यदि पशुयाजोपयाजसाधारण्येन, तदा अस्तु पिष्टलेपफलीकरणहोमयोर्वा विकारः। सर्वथा नापूर्वा दर्विहोमाः। इति प्राप्ते, द्रव्यदेवताऽऽदिकल्पितोपकारकाङ्क्षासमर्पीताकल्पकप्रकृतिविधानत्वेन याव-ज्जुहोतिकर्तव्यतयैव निराकाङ्क्षत्वात्, तादृशस्य च विनिगमनाविरहेण अनियामकत्वात् अपूर्वा एव दर्विहोमाः, न प्रकृतिपूर्वाः। यत्तु परिधिवेदिदर्शनम्, तत् देशोपलक्षणतया अपि उपपन्नम्। एवं त्र्यम्बकहोमेषु औचित्येन 'नात्रैष्णवर्हिः संनह्यते न प्रयाजानूयाजा इज्यन्ते न सामिधेनीरन्वाह' इति स्तुतिरपि उपपद्यते। अतिदेशपक्षे स्वतन्त्रपर्युदासकल्पने विध्यन्तरैकवाक्यताप्रसङ्गः। सोमयागाद्यविकारत्वे इदमपर लिङ्गं औदुम्बरीहोमे 'घृतेन द्यावापृथिवी आपृणेथा इति अन्वाह कर्णे जुहोति, 'भूमिग्वे आग्ये स्वाहाकारः' इति। सोमयागविकारत्वे हि अतिदेशेन वषट्कारः प्राप्येत, तत्र स्वाहाकारस्यापि विधिः अपूर्वविधिः स्यात्। अस्मन्मते तु 'स्वाहाकारेण वा देवेभ्यो हविः प्रदीयते वषट्कारेण वा' इत्यनारभ्याधीतवाक्येन विहितयोः स्वाहाकारवषट्कारयोः विकल्पेन प्रदानमात्रे प्राप्तौ 'याज्याया अधि वषट्करोति' इति वचनेन याज्यावत् कर्मणि वषट्कारनियमात्, तद्भिन्ने परिशेषादेव स्वाहाकारप्राप्तेः, तदनुवादेन भूमिगमनोपलक्षितकालमात्रविधानात् अपूर्वम्। न चैव परिशेषादेव सर्वत्र स्वाहाकारप्राप्तौ 'अग्निर्ज्योतिः' इत्यादौ क्वचित् पुनः स्वाहाकारपाठवैयर्थ्यम्, तस्य मन्त्रावच्छिन्नपर्यायेन कार्यैकत्वात्। यदि तु अतिदेशपक्षेऽपि औपदेशिकस्वाहाकारज्ञानादेव याज्यारहितात् वषट्कारप्राप्त्यभावेन परिशेषसिद्धेः स्वाहाकारप्राप्तिसद्भावेन, तर्हि नेदं लिङ्गमिति ध्येयम्। अतः सिद्धं दर्विहोमा अपूर्वा इति। ९.

मण्डन— 'दर्विहोमास्त्वपूर्वकाः।' 'वाक्याद् धर्मातिदेशः स्यात्।' ५.

शंकर— 'नातिदेशो दर्विहोमेषु। अतो वचनतः क्वचित्।' ५.

• दर्विहोमा नारिष्ठादयः पारमेष्ठीयादि च। बाल. पृ. ८५. • दर्विहोमा बहवो यत्र क्रमेण क्रियन्ते, तत्र प्रथमहोमार्थमवहितपूर्वकाले गृहीतस्य गृह्यमाणविशेषत्वात् तदर्थतैव। इति प्रत्याहुति न सकृत् ग्रहणम्। संकर्ष. २।४।७. • दर्विहोमा राजसूये 'वल्मीकवपायां होमः' इत्यादय.। तेऽपि राजसूये प्रधानमेव। नि. ४।४।१. • दर्विहोमाः स्वाहाकारेण संयुक्ताः पृथिव्यै स्वाहा इत्यादय.। भा. ८।४।७।११. • दर्विहोमेष्वपि यद् प्रत्याहुति एकैकसमिदाधान नियमम्। संकर्ष १।४।८. • दर्विहोमाणां सर्वेषा अपूर्वत्वेन प्रकृतधर्माप्राप्तिरिति। सु. पृ. ११८२. • दर्विहोमाणां लौकिकानां दार्व्यात्वम्, न तु सोम.। संकर्ष. ३।२।२०. • दर्विहोमे परिमित स्वाहाकारपुनःप्रवयं अनारभ्याधीतस्वाहाकारानुपसंहारकम्। भा. १०।८।१०।२०–२२. • दर्विहोमेष्वेव चतुरवत्तं जुहोतीति विधिः। (इदं हविष एव चतुरवत्तत्वम्)। संकर्ष. २।२।५.

दर्विहोमेषु क्वचित् स्वाहाकारपुनःश्रवणस्य अनारभ्याधीतस्वाहाकारश्रवणेन नोपसंहारः ॥

मन्त्रेष्ववाक्यशेषत्वं गुणोपदेशात् स्यात् ।
१०।८।१०।२० ॥

भाष्यम्—दर्विहोमं प्रकृत्य श्रूयते 'पृथिव्यै स्वाहा; अन्तरिक्षाय स्वाहा, वायवे स्वाहा' इति । अस्ति च अनारभ्य वचनम् 'वषट्कारेण वा स्वाहाकारेण वा देवेभ्योऽन्नं प्रदीयते' इति । तत्र संदेहः किं तस्य अयं वाक्यशेषः स्वाहाकारेण अन्नं प्रदीयते देवेभ्यः इति एतस्मिन् दर्विहोमे पृथिव्यै स्वाहा अन्तरिक्षाय स्वाहा इति, उत नायं वाक्यशेषः, येष्वपि प्रदानेषु स्वाहाकारो नाम्नातः, तेष्वपि स्वाहाकार इति । किं प्राप्तम्? अनन्तरसूत्रेण अधिकरणेन वाक्यशेष इति । एवं प्राप्ते, ब्रूमः । मन्त्रेषु वाक्यशेषत्वं न स्यात् । नहि विधायका विधायकवाक्ययोः एकवाक्यत्वं भवति । विधायकं ब्राह्मणं अविधायको मन्त्रः । अपि च आनन्तर्याधिकरणे न क्रतुसंबन्धोऽस्ति, [illegible] तु संबन्धो गम्यते । 'वषट्कारेण स्वाहाकारेण वा देवेभ्योऽन्नं प्रदीयते' इति । प्रदानं हि अत्र प्रधानकर्म । अपि च गुणोपदेशो भवति तस्मिन् दर्विहोमे 'पृथिव्यै स्वाहा' इत्येवं समुच्चारणं भवति, न स्वाहा पृथिव्यै इति । तस्मात् अन्येष्वपि दर्विहोमेषु स्वाहाकारोऽस्ति इति ।

टुप्—(पूर्वन्यायसंभवादाशङ्कया कस्यचित् इहापि उपसंहारबुद्धिः स्यात्, सा व्यावर्त्यते) अनारभ्य (प्रदान संयोगेन) स्वाहाकारवषट्कारौ श्रूयेते । सः अनारभ्यवादः मन्त्रेण न शक्यो विशेष्टुम् । मन्त्रस्य (प्रमाणान्तरप्राप्तमर्थं) प्रकाशयितुमेव सामर्थ्यम्, न (अनारभ्य वाद) विशेष्टुम्, अविधायकत्वात् (नहि विधायकाविधायकयोर्विशेषणविशेष्यता घटते । ननु पशुविधेः अनाम्नातस्य वा इष्टेव, अत आह—) न चात्र 'छागो वा मन्त्रवर्णात्' इति न्यायः । तत्र यावत् अग्नीषोमीयापूर्वम्, तावन्मात्रः प्रयोक्तव्यः 'अग्नीषोमीयं पशुमालभते' इति न (कश्चित् पशु-) जातिविशेषः श्रूयते, तस्मात् (पशुजातिविशेषो) प्रदीतव्यः । स यदि अनियमेन गम्यते (ततः यत्रापि) चोदना न विरुध्यते, (यत्तु नित्यवच्छ्रुतम्) मन्त्राम्नानं (तत्) पाक्षिकं स्यात् । तस्मात् येषा (अनियमेन) पशुचोदना, सा मन्त्रवर्णालोचनेन जातिविशेषपरैव कल्प्यते । एवं तत्र छागनियमो न विशेषणविशेष्यतया (कथम्,) न, न मन्त्रविध्योर्विशेषणविशेष्यता (प्राप्तप्रकाशकत्वात् मन्त्राणामित्युक्तम्) । अपि च (भवतु वा विशेषणविशेष्यता तथापि अत्र नास्ति उपसंहारः—) 'पृथिव्यै स्वाहा' इति न स्वाहाकारपरं इदमाम्नानम् । (किन्तु) पृथिव्यै इति (अनेन) देवतोच्यते, तस्याश्च संप्रदानत्वात् स्वाहाकारो वा वषट्कारो वा प्राप्नोति, तत्र स्वाहाकारो नियम्यते वषट्कारनिवृत्त्यर्थम् । वषट्कारनिवृत्तिपरत्वाच्च वाक्यस्य उपसंहाराभावात् अन्येषु (क्रतुषु) स्वाहाकारो न भवति इत्याशङ्कैव नास्ति । 'स्वाहा पृथिव्यै' इति यदि एवं श्रूयेत तथा सति स्वाहाकारस्य प्राथम्यात् (उद्देश्यलक्षणाऽऽपत्तेः) योऽसौ (अनारभ्यवादेन विहितः) स्वाहाकारः, स अनूद्य अस्मिन् प्रदानविशेषे नियम्येत इति शङ्क्येत अस्मिंश्च पक्षे नान्येषु स्यात् । न तु ईदृशमिदं वाक्यमिति ।

अनाम्नाते च दर्शनात् । २१ ॥

भाष्यम्—यत्रापि दर्विहोमे नाम्नायते स्वाहाकारः, तत्रापि क्वचित् दृश्यते, 'घृतेन द्यावापृथिवी आ पृणेथा इत्यौदुम्बर्यां विशाखे जुहोति, आऽन्तादन्वस्रावयति भूमिप्राप्ते स्वाहा करोति' इति प्राप्त स्वाहाकारं दर्शयति ।

प्रतिषेधाच्च । २२ ॥

भाष्यम्—क्वचिच्च प्रतिषेधो भवति 'न स्वाहेति वचन् करोति, मन्त्रं च नाह' इति । प्राप्तिपूर्वकः प्रतिषेधो भवति । इत्यवाक्यशेषता अध्यवसीयते ।

सोम—सूत्रार्थस्तु— मन्त्रेषु पृथिव्यादिदेवतालक्षणगुणोपदेशात् स्वाहाकारोपसंहारार्थत्वं न अनारभ्यविधिशेषत्वात् स्यात् इति ।

वि— 'स्वाहेत्युक्तिर्दर्विहोमे संहारः स्यान्न वा, ऽग्रिमः । पूर्वन्यायात्, न तन्मन्त्रे स्वाहाकारविधित्सतः ॥ विधित्वेऽपि नियमः स्यान्न व्यत्यासवषट्कृती । सौमान्तरे वषट्कारस्वाहाकारविकल्पनम् ॥'

यत्राऽपि आकाङ्क्षा स्वरूपनिष्पादनेनैव शाम्यति । मीन्या. पृ. १९२–९३.

दर्विहोमन्यायः । दर्विहोमशब्दस्य कर्मनामधेयत्वम् ॥

दर्विहोमो यज्ञाभिधानं, होमसंयोगात् । ८।४।१।१॥

भाष्यम्— 'यदेकया जुहुयात्, दर्विहोमं कुर्यात्' इति श्रूयते । अस्मिन् दर्विहोमशब्दे भवति संशयः । किं गुणविधिः उत कर्मनामधेयमिति । किं प्राप्तम् ? दर्विहोमो यज्ञाभिधानम्, कर्मनामधेयमित्यर्थः । कुतः ? होमसंयोगात् । होमशब्दोऽत्र श्रूयते । तत्प्रधानश्चायं समासः । दर्विशब्द उपसर्जनम्, होमश्च कर्म । अथवा जुहुयादिति कर्मोच्यते । तेन समुचितः, यदेकया जुहुयादिति । तस्मात् कर्मनामधेयम् । स्थितं तावत् ततोऽर्थान्तरं प्रक्रियते ।

द्रव्योपदेशाद्वा गुणाभिधानं स्यात् । ५ ॥

भाष्यम्— निवृत्ताद्युत्तरमुच्यते । यदुक्तं कर्मनामधेयं दर्विहोम इति, तन्न । किं तर्हि ? गुणाभिधानं स्यात् । गुणविधिरित्यर्थः । कुतः ? द्रव्योपदेशात् । द्रव्योपदेशोऽवगम्यते, दर्व्या होमो दर्विहोम इति । एवमेतौ दर्विहोमशब्दौ यथाप्रसिद्धकल्पितौ भविष्यतः । तस्मात् गुणविधिः ।

न, लौकिकानामाचारग्रहणत्वाच्छब्दवतां चान्यार्थविधानात् । ६ ॥

भाष्यम्— नायं गुणविधिर्युज्यते । किं कारणम् ? लौकिकानां तावदाचारगृहीता दर्विः 'व्यग्निकया मूलदण्डया दर्व्या जुहोति' इति । सा न विधातव्या । श्रौतानामपि अन्यानि होमार्थानि पात्राणि आम्नातानि । 'स्रुवेण जुहोति' 'चमसेन जुहोति' इति । तैः सह दर्वेर्विकल्पः स्यात् । स चान्याय्यः । यत्कारणं स्रुवादीनां विधायकः शब्दोऽस्ति, 'स्रुवेण जुहोति' इति, न तु दर्वेः । तत्र हि आनुमानिको विधिशब्दः ।

दर्शनाचान्यपात्रस्य । ७ ॥

भाष्यम्— अन्यच्च पात्रं दर्विहोमे दृश्यते । 'भूतेभ्य एवैतत्पूर्णां स्रुचमुद्गृह्णाति' इति । तस्मान्न गुणविधिः ।

तथाऽग्निहविषोः । ८ ॥

भाष्यम्— अथोच्येत अग्निहविषोः कार्ये दर्विर्भविष्यति । दर्वौ होमो दर्विहोमः, दर्व्या होमो दर्विहोम इति । तत्र ब्रूमः । तथाऽग्निहविषोरपि । यथा पात्रकार्ये दर्विर्न युज्यते, तथा अग्निहविषोः कार्येऽपि । तथापि आहवनीयः आधारत्वेन विहितः 'यदाहवनीये जुहोति' इति, अन्यच्च प्रदेयत्वेन पुरोडाशादि । तस्मादग्निहविषोरपि कार्ये न दर्वेर्निवेशः ।

उक्तश्चार्थेऽसंबन्धः । ९ ॥

भाष्यम्— उक्तं चास्माभिः अग्नेः कार्ये अन्यत् द्रव्यमसमर्थम् । वह्निपचनप्रकाशनकर्म अग्नेः । न चैतत् कार्ये अन्यत् द्रव्यं शक्नोति कर्तुमिति । तस्मात् न अग्निकार्ये दर्वेरुपदेशः । अतो न गुणविधिः । कर्मनामधेयमेव दर्विहोमशब्दः इति ।

सोम—अत्र प्राभाकरैः करिष्यमाणातिदेशापवादार्थतया गुणविध्यादिविचारः इत्युक्तम्, तदयुक्तम् । अर्थवादगतस्य दर्विहोमशब्दस्य आतिदेशिकप्रापकत्वेन अपवादयेत्याभावात् । तस्मात् प्रसङ्ग एवात्र संगतिः । सूत्रार्थस्तु- दर्विहोमशब्दः यज्ञाभिधानं कर्मनामधेयम्, होमसंयोगादिति ।

वि— 'दर्विहोमो गुणो नाम वा, गुणो दधिहोमवत् । गुणासंभवतो लोकवेदयोर्नाम तद् भवेत् ॥'

भाट्ट— सदैव सिद्धेऽतिदेशे दर्विहोमेषु तदपवादं वक्तुं दर्विहोमशब्दार्थो निरूप्यते । तत्र न तावदयं दर्व्याख्यस्य गुणस्य विधिरिति शङ्कितुं शक्यम्, होमादिवत् विधिवाक्ये श्रवणाभावेन विधायकत्वशङ्काऽनुपपत्तेः । न च वाक्यहोमीयगुणनिष्पत्त्यर्थवादे 'यदेकया जुहुयाद्दर्विहोमं कुर्यात्' इत्यत्र श्रुतस्य दर्विहोमपदस्य धृताद्यिपदवत् पदान्तरकल्पनया विधायकत्वसंभवः, 'पुरोऽनुवाक्यामनूच्य याज्यया जुहोति' इति वाक्यद्वयरूपगुणविधेर्न्यायपेक्षाभावात् । न च सिद्धवन्निर्देशान्यथाऽनुपपत्त्या 'उपरि हि देवेभ्यो धारयति' इतिवत् वाक्यान्तरकल्पनया होमोद्देशेनैव दर्विविधायकत्वम् । वाक्यहोमे तावत् स्रुचः प्रत्यक्षशिष्टत्वेन विधानुमानाकल्पनात्, होमान्तरेष्वपि स्मार्तेषु 'व्यग्निकया मूलदण्डया दर्व्या जुहोति' इति स्मार्तवचनेनैव तत्प्राप्तेः,

श्रौतेष्वपि 'स्रुवेण जुहोति, चमसेन जुहोति, स्रुचा जुहोति' इत्यादिना तत्रतत्र तत्तत्पात्रान्तरसद्भावाच्च। अतश्च तत्प्रख्यन्यायेन गुणविधित्वानुपपत्तेः दर्विशब्दं पात्रान्तरस्य उपलक्षणमङ्गीकृत्य एकदेशप्रवृत्तिनिमित्तेन वा तत्साध्यहोममात्रस्येदं नामधेयम्।

मण्डन—'दर्विहोमपदं नाम।'

शंकर—'दार्विहोमे च नामता।'

* यदि केनचिदुपदेशेन वा अतिदेशेन वा (प्रमाणम्) न लभामहे, ततो दर्विहोमन्यायेन (८।४।१।१,९–१) विष्णुदेवत्यमेव द्वे धान्ये कल्पयिष्यामः। भा. ११।२।१७ पृ. ११५.

* दर्विहोमशब्दः कर्मनामधेयम्। स्थालीपाकः, आष्टकाः, अग्निहोत्रम्, नारिष्ठहोमाः इत्यादयो लौकिका वैदिकाश्च होमा दर्विहोमाः। एवं जया., अभ्यातानाः, राष्ट्रभृतश्च दर्विहोमा एव। वि. ८।४।१,४.

दर्विहोमशब्द. स्मार्तानां श्रौतानां च कर्मणां नामधेयम्॥

स लौकिकानां स्यात्, कर्तुस्तदाख्यत्वात्। ८।४।१।२॥

भाष्यम्— यदा कर्मनामधेयम्, तदा चिन्त्यते किं लौकिकानां स्मार्तानां कर्मणामष्टकादीनां नामधेयं दर्विहोमशब्दः, उत सर्वेषामेव लौकिकानां वैदिकानां चेति। किं प्राप्तम्? न लौकिकानां स्यात्। स खलु दर्विहोमशब्दो लौकिकानां कर्मणां नामधेयं स्यात्। कुतः? कर्तुस्तदाख्यत्वात्। तेषां कर्ता, तेन दार्विहोमिकशब्देन समाख्यायते। 'शिनीना दार्विहोमिको ब्राह्मण, काम्यठाना दार्विहोमिको ब्राह्मण.' इति। यश्च यत् करोति, स तेन व्याख्यायते। यथा लावक पावक इति। यदि चाष्टकादीनां नामधेयमेतत्, ततस्तेषां कर्मणां कर्ता दार्विहोमिकशब्दस्याभिधेयो भवतीति। तस्माल्लौकिकानां नामधेयम्।

सर्वेषां वा, दर्शनाद् वास्तुहोमे। २॥

भाष्यम्— सर्वेषां लौकिकानां वैदिकानां च नामधेयमेतत्। न लौकिकानामेव। कस्मात्? दर्शनाद् वास्तुहोमे। वास्तुहोमे हि वैदिके दर्विहोमत्वं दर्शयति। 'यदेकया जुहुयाद्दर्विहोमं कुर्यात्। पुरोऽनुवाक्यामनूच्य याज्यया जुहोति सदेवत्वाय' इति। ननु विपरीतमेतद्दर्शनम्, यदेकया जुहुयाद्दर्विहोमं कुर्यात्, अदर्विहोमं सन्तमित्यापद्यते। यदि दार्विहोम एवासौ, तत एकया द्वाभ्यां च हूयमानो दर्विहोम एव भवति। तत्रैतद्दर्शनं नोपपद्यते। यदेकया जुहुयाद्दर्विहोमं कुर्यादिति। अत्रोच्यते। यदि लौकिकानामेव नामधेयम्, न वैदिकानाम्, तत एकयाऽपि हूयमानोऽसौ नैव दर्विहोमो भवति अलौकिकत्वात्, तत्रैतद्वचनं नोपपद्यते यदेकया जुहुयाद्दर्विहोमं कुर्यादिति। तस्मात् श्रौतकर्मस्वेव वैदिकानां दर्विहोमत्वं। एतदपि शाबरभाष्यम्, कुत. प्राप्ति.। उच्यते। होमशब्दस्य सामान्याभिधायित्वात् प्राप्ति.। तस्माल्लौकिकवैदिकानां नामधेयमेतत्।

वि— 'लौकिकस्यैव सर्वस्य नामा, ऽऽद्योऽस्य नाम्यतः।, निमित्तसाम्याद् वेदेऽपि तदुक्तेः सर्वनाम तत्॥'

भाट्ट— ('अधिकरणमत्रार्थः प्रथमाधिकरणे ▪ भाट्टदीपिकायां निवेशित.। तत्रत्य प्रकृतद्वितीयाधिकरणो पयुक्त पृथक् कृत्वा अस्माभिरत्र निवेश्यते।) तत्रापि यथैव स्मार्तानां पार्वणस्थालीपाकादीनां कर्तरि दार्विहोमिक इति प्रयोगदर्शनात् प्रवृत्तिनिमित्तसद्भावाच्च तेषां नामधेयम्, तथैव वास्तुहोमे प्रयोगात् श्रौतानामपि। न च वास्तुहोमस्य एकया ऋचा करणे दर्विहोमत्वप्रयत्नाभिधानात् ततो दर्विहोमत्वाभावप्रतीते. अस्य प्रयोगस्य विरुद्धत्वमिति वाच्यम्। दर्विहोमपदस्य स्मार्तमात्रनामत्वे वास्तुहोमे एकया ऋचा क्रियमाणेऽपि दर्विहोमत्वानापत्ते., अभ्यर्थसादृश्य रूपकविषया श्रौतेष्वपि होमेषु दर्विहोमपदप्रवृत्तिबाधकत्वात्। अतः सर्वनामधेयम्।

मण्डन—'लौकिके वैदिके च तत्।' तद् दर्विहोमपदम्।

शंकर—'नामैतद् वैदिकानामपि।'

दर्विहोमशब्द होमानामेव नामधेयम्, न यागानाम्॥

जुहोतिचोदनानां वा, तत्संयोगात्। ८।४।१।४॥

भाष्यम्— लौकिकानां वैदिकानां च नामधेये

दर्विहोमशब्द इति स्थितम् । इदानीं चिन्त्यते किं यजति-चोदनानां जुहोतिचोदनानां च सर्वेषां नामधेयम्, उत जुहोतिचोदनानामेवेति । अविशेषात् सर्वेषाम् । इति प्राप्ते, उच्यते । जुहोतीनां नामधेयं न यजतीनाम् । कुतः ? तत्संयोगात् होमशब्दसंयोगात् । अयं होमशब्दो जुहोतेर्वाचको न यजतेः । यजतौ लक्षणया स्यात् । तस्माज्जुहोतिनामधेयम् ।

वि— 'यजतेरपि नाम स्याज्जुहोतेरेव वा, ऽग्रिमः । अविशेषेण, मुख्यत्वाज्जुहोतेर्लक्षणाऽन्यथा ॥'

भाट्ट— तथापि होमपदश्रवणात् होमानामेव, न तु यागानाम् । न च यागस्थलेऽपि 'चतुरवत्तं जुहोति' इत्यनेन होमविधानात् तन्नामत्वोपपत्तिः, तत्रत्यजुहोतिना प्रक्षेपमात्रस्यैव प्रतिपत्तिरूपस्य लक्षणया विधेयत्वेन तस्य मुख्यहोमत्वाभावात् । अतो होमनामधेयमेवेदम् । इदं च सिद्धमेवोत्तरविवक्षार्थं प्राप्यते ।

मण्डन— 'जुहोतेरेव नामैतत् ।'

शंकर— 'अथ स्यात् होमनामता ।'

* दर्शः । चन्द्रमसः अदर्शनात् शक्यते दर्श इति वक्तुं विपर्ययहेतुत्वेन । शा. २।२।३।२ पृ. ४८१. * दर्शो न पौर्णमासीविकारः न वा पौर्णमासी दर्शविकारः । वि. ९।१।१६, * दर्शः पूर्वयोर्दधिपयसोर्निशि पयोन्तरेण दध्यन्तरेण चानुष्ठेयः । ६।४।१०.

※ दर्शेस्याङ्गं, हविरार्तिनिमित्तकः पञ्चशराव-यागः ॥

' स प्रत्याम्नेत्, स्थानात् । ६।४।१०।३०॥

भाष्यम्— स एष नैमित्तिको यागः, किममावास्यां प्रत्याम्नेत्, नेति । किं प्राप्तम् ? स प्रत्याम्नेत् । स एष यागः अमावास्यां प्रत्याम्नातुमर्हति । कुतः ? स्थानात् । यागे विनष्टे याग एष श्रूयमाणो यदि न नष्टस्याङ्गम्, ततोऽर्थवान् भवति । अथाङ्गम्, निष्प्रयोजनस्यार्थे क्रियमाणं निष्प्रयोजनमेव भवितुमर्हति । निर्गुणं च निष्प्रयोजनमेव । विनष्टममावास्यं इति प्रत्यक्षम् । इदमपि कर्तव्यमिति शास्त्रम् । यत् विनष्टम्, तत् निष्फलमिति न कर्तव्यम् । इदं च कर्तव्यमिति प्रत्याम्नायोऽवगम्यते ।

टुप्— अमावास्याऽभावः द्रव्याभावात् । ततः किम् ? आह, कर्माभावेन ( अकर्तव्यतात्मा- ) प्रतिषेधो लक्ष्यते, प्रतिषेधेन स्वकार्यम् ( लक्ष्यते ) । पञ्चशरावोऽपि दर्शाभावे विधीयमानः प्रयोजनाभिलाषी । तस्मात् ( साकाङ्क्षत्वात् ) अभावेन यत् ( प्रयोजनं दर्शसाध्यम् ) लक्ष्यते, तत् साधयन् एकवाक्यता वर्तते इति, फलसाधनस्य साङ्गं भवति । अथवा अकृतकरणे फलसम्बन्धाभावः । फलसम्बन्धाभावात् ( पञ्चशरावस्यापि ) तदङ्गत्वाभावः, अफलसाधनस्य यत् अङ्गम्, तत् अनर्थकं ( स्यात् ) ।

अङ्गविधिर्वा, निमित्तसंयोगात् । ३१ ॥

भाष्यम्— अङ्गं वा एतत् विधीयते । हविरार्तौ निमित्ते यागः श्रूयते । तत्र संशयापत्तिः, यदा निमित्ते स्वतन्त्रं कल्प्यं फलम्, यदा अमावास्यायाः यत् कार्यं तदस्य, यदा तस्याङ्गमिति । स्वातन्त्र्यं तावत् न, अकल्पनात् फलस्य । नामावास्यायाः कार्ये । किं कारणम् ? अश्रवणात् । नैवं श्रूयते, तस्याः कार्ये वर्तते इति । कर्तव्योपदेशेनापि नाम्यवसायावसानम् । त्रिष्वपि पक्षेषु विवक्षितेषु कर्तव्योपदेशः अवकल्पते । ननु एवमभिसम्बन्धो भविष्यति 'यस्योभयं हविः आर्तिमार्च्छेत्, स एतेन यागेन साधयेत्, यत् साधयितुकामः । किं चासौ साधयितुकामः ? यत् अमावास्यायाः फलम्' इति । अत्रोच्यते । फलपदेन सम्बन्धाभावात् सम्बन्धस्य विधायकं नास्त्यम् । श्रुत्या च यागकर्तव्यता विधीयते, सा च वाक्यात् बलीयसी । तस्मान्न तत्कार्ये वर्तते इति । किं तर्हि प्रयोजनम् ? तस्या अमावास्यायाः अङ्गम् । ननु एवमपि नास्ति 'तस्या अङ्गम्' इति, तत्रोच्यते । तत्संबन्धेन समाम्नानात् तत्प्रयोगवचनेन गम्यते 'दर्शपूर्णमासाभ्यां फलं साधयेत् सर्वैरङ्गैः सह, अस्मिंश्च आर्तौ एष यागः इतिकर्तव्यता' इति । तस्मादेवमवगम्यते 'विनष्टे हविषि आमावास्यं यत्र शक्नोति स्वकार्यं कर्तुम्, तत् अनया इतिकर्तव्यतया सहितं शक्नोति' इति । तस्मात् निमित्ते कर्म अङ्गमिति ।

टुप्— आरब्धं कर्म ( येन केनापि द्रव्येण ) अवश्यं समापनीयम् । तस्मात् दर्शकर्मणो नात्यभावः ।

तदभावात् ( दर्शस्य भावात् ) तत्कार्यस्य लक्षणं नास्ति । न ( च ) दर्शे प्रतिनिधि पञ्चशरावो विधीयते । यथा गिरापदं प्रतिनिधि इरापदम् ( विधीयते ) । तत्र इरापदस्य गिरापदं कार्ये लक्षयति प्रतिनिधिमानम्, एवमिह नास्ति ( प्रतिनिधो, येन कार्यं लक्षयेत् ) । तस्मात् पञ्चशरावविधावपि कार्यापत्तेरभावात् दर्शस्थानापत्तिर्नास्ति । यथाश्रुताकरणात् ( यथाश्रुतेन द्रव्येण अकरणात् दर्शस्य यः- ) दोष उपजायते, तन्निर्घातायेज्यमानं विधीयमानम् ( कर्म ) तद्दोषप्रतिसमाधानार्थत्वेन ( दर्शेन- ) एकवाक्यता याति । ( तस्मात् अङ्गमिति सिद्धम् ) । "

शा— पञ्चशरावयागः अमावास्यायाः प्रत्याम्नायः स्यात् । ' स्यादेवं यद्यमावास्या निवृत्ता, न तु सा तथा । पूर्वद्रव्यविनाशेऽपि द्रव्यस्यान्यस्य संभवात् ॥ '

सोम— प्रासङ्गिकी संगतिः । ' अपोन्नाशे हविषे यत्नमाकुर्यात् ' इति वचनेन पुनःप्रयोगस्य पक्षद्वयेऽपि आवश्यकतया पुनःप्रयोगप्रयोगाभ्या अनुष्ठानविशेषाभावेऽपि पूर्वपक्षे दर्शस्थानापत्त्या तद्धर्मनियमः, न तु सिद्धान्ते । तथा पञ्चशरावयागभेदे पूर्वपक्षे प्रधानभेदप्रायश्चित्तम्, इत्येवं विशेषो बोध्यः ।

वि— ' दर्शे प्रत्याम्नाय एतदङ्ग वा, हविर्नाशितः । दर्शयागो निवृत्तेऽस्य प्रत्याम्नायतया विधिः ॥, पूर्वद्रव्यविनाशेऽपि द्रव्यस्यान्यस्य संभवात् । अनिवृत्तेस्तदङ्गं स्यादार्तिवैगुण्यहानये ॥ '

भाट्ट— तदिदं कर्मान्तरं द्रव्यनाशप्रयुक्तवैगुण्यपरिहारार्थत्वेन तदङ्गत्वेनैव विधीयते, न तु तत्फलार्थं तत्स्थाने तत्फलस्य याचस्यते. निमित्तविगर्हणनिमित्तकस्य वा दोषस्यापगमेनैव सिद्धेः प्रायश्चित्तान्तरापेक्षत्वात् । नहि द्रव्यनाशे यागलोपः, द्रव्यान्तरोत्पत्त्या आज्येन वा तत्समापनोपपत्तेः । न च स्वर्गादिरूपस्य फलस्य वैगुण्ये सति अनुपपत्तेः, तस्य साधनापेक्षया यागस्य विधानम् । इति वाच्यम् । तथात्वे तत्समाप्त्यभावे तदनुष्ठाने निमित्तश्रुतेः संकोचापत्तेः । अतः अपेक्षितवैगुण्यसमाधानार्थत्वेनैव अस्य विधानम् । अपेक्षा च प्रायश्चित्तत्वाभावे-

चेति तस्यैव निमित्तसंबन्धितत्वात् तन्नाशकपदकल्पनया वाक्यात् तदङ्गत्वमेव, न तु प्रकरणात् सर्वाङ्गत्वम्, अनुष्ठानसादेश्यात् दर्शमात्राङ्गत्वं वा । अत एव नाशे निमित्ते प्रयोगान्तःपात्येव इदमङ्गम्, न तु क्षामनिमित्तपुनःप्रयोगवत् प्रयोगबहिर्भूतम् ।

मण्डन— ' दर्शस्य नैमित्तिकमङ्गमेषः । ' पञ्चशरावयागः ।

शंकर— सा च क्रिया स्याद् दर्शाङ्गम् । '

● दर्शस्य दण्डधारत्वं पर्वणि आन्वाधानम्, इध्मस्य बर्हिषश्च सपादनम्, प्रतिपदि इष्टिः इति । विकृतिषु तु सद्यस्कालत्वम् । वि. ५।४।७, ● दर्शस्य पिण्डपितृयज्ञो नाङ्गम्, किन्तु पुरुषार्थं कर्मान्तरम् । तस्य च कालः अपराह्णः ' अमावास्यायामपराह्णे पिण्डपितृयज्ञेन चरन्ति ' इति वचनात् । ४।४।१८, ● दर्शस्य पूर्णमासस्य च एकस्मिन् प्रयोगे प्रधानाङ्गानां सहदनुष्ठानम् । फलभूमाधिकरणम् । ११।१।७, ● दर्शस्य पूर्णमासस्य च अङ्गभेदेन प्रयोगभेदे अङ्गानामावृत्तिः । हविरावृत्त्याधिकरणम् । ११।२।३. ● दर्शे अमुविधेयौ नैमित्तिको देवताऽपनयः । भा. ६।५।१।१-९.

**ॐ दर्शे आग्नेयपुरोडाशस्य अवदानादिप्रदानान्तं कृत्वा सांनाय्यस्य तत् कर्तव्यम् । मुख्यक्रमः प्रवृत्तिक्रमात् बलीयान् ॥**

अवदानाभिघारणासादनेष्वानुपूर्व्यं प्रवृत्त्या स्यात् । ५।४।२।२ ॥

भाष्यम्— स्तो दर्शपूर्णमासौ । तत्र पूर्वं हविर्धर्माः समाम्नाताः पश्चात् प्रधानम् । प्रधान च आग्नेयस्य पूर्वम् । तत्र संदेहः किं प्रवृत्तिवशेन क्रमेण पूर्वं दध्नः अवदानाभिघारणासादनानि, उत मुख्यक्रमेण पूर्वमाग्नेयस्येति । किं प्राप्तम् । अनियम इति । एवं प्राप्ते, ब्रूमः । अवदानादिषु प्रवृत्तिवशेन पूर्वं दध्नः इति । कुतः । एव अनुमतेभ्यो व्यवायकेभ्यो नान्यदिकः अन्यो वा व्यवायकः कल्पितो भविष्यति । दर्शयति च ' दध्नः पूर्वमवदेयम् ' इति ।

टुप्— अवदानाभिघारणासादनेषु ( आनुपूर्व्यं प्रवृत्त्या स्यात् ) ( गुणभाष्यतो. अवदानाभिघारणसदनं प्रधान-

चतुरवत्तावयवभूतावदानाभिघारणविषयं मा विज्ञायि इत्याह-) स्विष्टकृदवदाने प्रयाजशेषाभिघारणं बर्हिषि स्रुचोरासादनात् इत्युदाहरणानि । (तत्र) प्रावृत्तिक-मुख्यक्रमयोः कतरो बलीयान् इति विचारः । (पूर्व-पक्षमाह-) तत्र दध्नः प्रथमं धर्माः प्रक्रान्ताः । यदि तथैव प्रवृत्त्या तस्य आसादनादीनि प्रथमं क्रियन्ते, ततो भवति अङ्गानां प्रत्यासत्तिः (प्रधानप्रयोगविहिताङ्गानां परस्परप्रत्यासत्तिरित्यर्थः) इतरथा (मुख्यक्रमेण क्रियमाणे सति) अन्यस्य (आग्नेयस्य) प्रथमं क्रियेरन्, तत्र (दधिधर्माणां पूर्वं प्रक्रान्तानां पश्चात् क्रियमाणानां मिथः अत्यन्तम्-) व्यवधानात् प्रधानप्रत्यासत्तिर्बाध्येत (पारस्परप्रत्यासत्तिरित्यर्थः। तदेव दर्शयति) प्रयोगवचनेन साहित्यात् (समानप्रयोगविधिकत्वात् साहित्यात् प्रत्युप-पत्त्या) यावद्भिः सर्वैः प्रधानमनुष्ठातव्यम्, तावद्भ्यः अधिकैरपि कृतं स्यात् (न चायुक्तम्। तस्मात् दध्नः प्रथमं कार्याणि)।

यथाप्रदानं वा, तदर्थत्वात् । ३ ॥

भाष्यम्— यथाप्रदानं वा कर्तव्यानि । यस्य प्रदानं पूर्वम्, तस्यावदानानि पूर्वम्, पश्चादाग्नेयस्य । कुतः ? प्रदानचोदनागृहीतत्वात् अवदानादीनाम् । प्रदानोपक्रमा एते, न पृथक्पदार्था इत्युक्तम् (५।२।४।६)। अभि-घारणमवदानं च तस्य प्रदानविशेषेणैव क्रियते । आसा-दनमपि प्रदानार्थमेव आसन्नकरणम् । एवं तदर्थता भवति तस्मात् मुख्यक्रमेणाङ्गानां प्रयोग इति । यत्तु दध्नः पूर्वं प्रवृत्तिरिति । अर्थात् पूर्वं प्रवृत्तिः, न पाठात् । प्रावृत्तिकाच्च मुख्यक्रमो बलीयान् । मुख्यक्रमे गृह्यमाणे प्रथम एकः पदार्थो विप्रकृष्टकालः स्यात् । प्रावृत्तिके पुन-र्गृह्यमाणे सर्वेषां विप्रकर्षः । तस्मात् मुख्यक्रमो बलीया-निति । अथ यल्लिङ्गमुक्तम्, दध्नः पूर्वमवदेयमिति । प्रत्योच्यते । श्रुताभिप्रायमेतद्भविष्यति । तस्माददोषः ।

टुप्— (अन्यम्) दध्नः पाठात् (पूर्वेद्युः केचन धर्माः) पूर्वं क्रियन्ते, अपरेद्युः पाठक्रमादेव आग्नेयस्य (निर्वापादयः) पूर्वे (भवन्ति)। एतावति विषये मुख्यप्रावृत्तिकौ नावतरतः, पाठक्रमस्य प्रबलत्वात् । वेद्यासादने तु नास्ति पाठः कस्य पूर्वमासादनमिति । तत्र यदि दध्नः पूर्वं प्रवृत्ताः इति कृत्वा तथैव आसा-दनं (प्रथमम्) क्रियते, तथा सति प्रधानक्रमेण आग्नेयस्य (पूर्वमासादनं) कृत्वा (पश्चात्) अन्येषां कर्तव्यम्, इति (एतत्) नानुगृह्येत । कुतः (पुनर्मुख्य-क्रमः ? अत आह-) पाठाद्धि प्रथममाग्नेयः, ततो दधि, ततः पयः इति (हेतोः। यद्यपि) एकैकमेव एषां (आग्नेयादीनां प्रधानानां स्वीयां) इतिकर्तव्यतां संनि-हितामभिलषति (तथापि) सहत्वयोगात् त्रिक्षणव्यवहितं (आसादनादिकं) एकैकं प्रधानमभिलषति । (अतः किम् ? तदाह-) प्रत्यक्षपाठात् (एष आग्नेयादीनामग्रगतः क्रमः। तेषां च एकैकस्य स्वीया धर्माः क्षणद्वयव्यवहिताः कर्तव्याः इति) पूर्वं पूर्वस्य धर्माः (कर्तव्याः) ततो द्वितीय-तृतीययोः । तत्र यदि दध्नः पूर्वं क्रियेरन्, तथा सति पूर्वमासादनमनुभवितव्यम्, इति यः क्रमः प्रधानेन अङ्गानां क्रमः, स बाध्येत । (भाष्यमनूद्य आक्षिपति-) प्रदानोपक्रमा एते न पृथक् पदार्थाः इत्युक्तम् । असम्योऽयम् । (अध्याये हेतुस्तु वार्तिके नोक्तः । न तु तत्रत्ये इत्थम्- नहि एतेषां पृथक्पदार्थत्वं क्वचिद-प्युक्तम् । अथ प्रदानाभिघारणाभिप्रायमिदं भाष्यम्, तदयुक्तम् । तस्य अनुदाहरणत्वात् । न च तदेवोदाहरण-मिति शक्यं वक्तुम् । पूर्वमेव अवदानादेः प्रदानान्तस्य एकत्वार्थव्यवसायनात् । ... तस्मात् स्विष्टकृदवदान-विषयमेव यथाकथञ्चित् भाष्यं व्याख्येयम् )।

लिङ्गदर्शनाच्च । ४ ॥

भाष्यम्— लिङ्गमपि एतस्मिन्नर्थे भवति । ' [redacted] वै मुखमेव अग्र अभिघारयति, ततो हि प्रथमावद्यमानो भवति ' इति । तस्मादपि मुख्यक्रमेण नियम इति ।

टुप्— (लिङ्गदर्शनाच्च इति सूत्रार्थमाह-) लिङ्ग-दर्शनं च इममेव न्यायं दर्शयति ' यस्य पूर्वमवदानम्, तस्य पूर्वमभिघारणम् ' हेतुवन्निगदेनार्थवादेन । अतः तुल्यन्यायत्वात् इतरेष्वपि तथैव भवितुमर्हति । (तस्मा-न्मुख्यक्रमेण नियमः इति)।

सोम— मुख्यार्थपाठानां मुख्यत्वात् तदङ्गानन्तरचिन्ता-ऽनन्तरं जघन्यपदार्थानां क्रमावधानचिन्तनात् संगतिः ।

एवमिहापि अवत्सेऽपि वत्सापाकरणे, तत्काले विद्यमाने, मंत्र तस्मिन् काले न परिहास्यते इति ।

सोम—सूत्रे तल्लिङ्गसंयोगात् तस्य कालस्य यद् लिङ्गं चिह्नम्, तत्संयोगादित्यर्थः ।

वि—' सानाय्यिनः स कालः स्यादितरस्यापि वा, ऽप्रिमः । वत्सत्वात् तत्पकालो ह्यन्यस्याप्यस्यतो-ऽन्तिमः ॥ '

भाट्ट—यद्यपि वत्सापाकरणं कालोपलक्षणं न तु स्वप्रमाणम्, परार्थत्वात् । तथापि तदभावे कालस्यैव शास्त्रप्राप्यत्वात् सानाय्यवाजिन एव वत्सापाकरणमङ्गत्वात् मतम् । अत एव एकपुरोडाशायामाग्नीषोमीयाभावेऽपि आग्नेयसत्त्वात् कालोपलक्षणत्वेन उपांशुयाजेऽपि न क्षतिः । इति प्राप्ते, ' शाखावेलायामामन्त्र्यम् ' इत्यादौ उपलक्षणापायेऽपि उपलक्ष्यानपायात् वत्सापाकरणाभावे-ऽपि अन्वाधानपश्चाद्भावस्यतत्कालानपायात् सानाय्या-भावेऽपि कर्तव्यमेव मतम् ।

मण्डन—' अर्वागपराह्णप्रथममेव कालः । '

शंकर—' असानाय्येऽप्यसौ भवेत् । '

* दर्शे वेदाः पूर्वेद्युरपकर्षेऽपि इतरमिकालान्तस्य नापकर्षः । वेदिकरणन्यायः । भा. ५।१।१६।२९, * दर्शे शाखा छेदनाहरणपरिवासनानां प्रयोजिका । उपवेषाधि-करणम् । ४।२।१।८-९. * दर्शे ' शाखया वत्सानपा-करोति ' । वि. ४।२।१, * दर्शे शाखाऽऽहरणे दोह-धर्मे' उभयदोहार्थः । ३।६।८.

दर्शे शाखाऽऽहरणादयो धर्माः दोहद्वयार्थी एव, न केवलं सायंदोहार्थाः ॥

दोहयोः कालभेदादसंयुक्तं शृतं स्यात् । ३।६।८। २८ ॥

भाष्यम्— अस्ति सायदोहः, तथाऽस्ति प्रातर्दोहः । सन्ति तु दोहधर्माः शाखाहरणम्, गवां प्रस्थापनम्, प्रस्नावनम्, गोदोहनमित्येवमादयः । ते किं सायदोहार्थाः उत उभयार्था इति । किं तावत् प्राप्तम् ? दोहयोस्तयोः, असंयुक्तं धर्मैः शृतं भवेत् । कस्मात् ? सायंदोहस्य हि क्रमे औपवसथ्येऽहनि शाखाहरणादीन् समामनन्ति । तस्मिन्नेवाहनि सायंदोहः । तस्मात् क्रमात् सायंदोहार्था इति दोहधर्माः ।

वा— एवं क्रमस्थविरोधं दर्शयित्वा इदानीं विरोधं दर्शयति । शाखाहरणादीनामौपवसथ्ये देशसामान्यात् अवान्तरप्रकरणाद्वा दध्यर्थत्वं प्राप्नोति ।

प्रकरणाविभागाद्वा तत्संयुक्तस्य कालशास्त्रम् । २९ ॥

भाष्यम्— प्रकरणं हि साधारणम् । यथैव दध्न एवं पयसः । क्रमाच्च प्रकरणं बलवत्तरम् । तस्मादुभयार्था दोहधर्माः । अपि च, न सायंदोहस्य पूर्वेद्युराम्नानम् । क तर्हि ? उत्तरेद्युः । कथम् ? एवमामनन्ति, ' ऐन्द्रं दध्य-मावास्यायाम् ' ' ऐन्द्रं पयोऽमावास्यायाम् ' इति । अमा-वास्याया हि उभयं साङ्गं चोद्यते । स एव सायंदोहः अर्वाग् पूर्वेद्युरनुष्ठीयते । स्वभाव एव दध्नः, यत् पूर्वेद्यु-रुपक्रान्तं अपरेद्युरभिनिर्वर्तते । तस्मात् सायंदोहस्य क्रमे आम्नाता इत्येतदेव तावन्नास्ति । अतः उभयार्था दोहधर्मा इति ।

वा— प्रधानं धर्मदेशे क्रियमाणं क्रमं प्रतिपद्यते । पठ्यमानं च अवान्तरप्रकरणम् । दधियागश्च अमा-वास्यायां पठ्यते क्रियते च । तस्मात्तुल्यं पयसा । दधित्व-सिद्ध्यर्थास्तु केचित् तस्य धर्माः पूर्वेद्युः क्रियन्ते । न च ते शाखाऽऽहरणादीनां प्रबाधकाः ' गुणानां च परार्थत्वा-दसंबन्धः ' इति स्थितत्वात् । तस्मादुभयसंयुक्तस्य शाखा-हरणादेर्यथकनात् पूर्वेद्युःकरणं न दध्यर्थत्वात् इत्यदोषः ।

सोम— प्रयोजनम्— पूर्वपक्षे प्रातर्दोहार्थे वत्सा-पाकरणं शाखयैव कर्तव्यं इति नियमाभावः । तथा सायं-दोहनिर्वृत्त्यनन्तरं शाखानाशे प्रातर्दोहार्थे न शाखान्तरं ग्राह्यम्, सिद्धान्ते तु तद्विपर्ययः इति । सूत्रार्थस्तु— दोहयोः कालभेदात् सायदोहस्यैव स्थानम्, न प्रातर्दोहस्य । तेन शृतं पयोधर्मैः असंयुक्तं स्यादिति ।

वि—' शाखाछेदादयो दोहे धर्माः सायं व्यवस्थिताः । प्रातश्च सन्ति वा, सायं स्थानात् ते पूर्ववत् स्थिताः ॥, आनर्थक्यप्रतिहविः पूर्वेऽप्यत्रेह विद्यते । प्रक्रियोदितः प्रकरणात् प्रातर्दोहेऽपि सन्ति ते ॥ '

भाट्ट— दर्शपूर्णमासयोः दधि पूर्वेद्युः अपरेद्युश्च पयः उपादीयते । दोहधर्माश्च शाखाऽऽहरणादयः पूर्वेद्युः क्रियन्ते । तेषामनुष्ठानपादेश्यान् दधिमात्राङ्गत्वम् । इति

प्राप्ते, यद्यपि स्थानं भवेत्, तथापि प्रकरणेन तद्बाधः। न हि अत्र पूर्ववत् कल्पोपकारत्वादिना प्रकरणाभावः शङ्कितुं शक्यः। न च स्थानमपि दधियागस्यास्ति, तत्रैवपुरेवानुष्ठानात्। दध्नस्तु विद्यमानमपि न आनर्थक्यमिया अपूर्वसाधनत्वलक्षणतात्पर्यग्राहकम्। न च स्मारकविधयैव दध्नैव यागोपस्थितेः स्थानशङ्का, छन्दोपरिधनेः नैयत्याभावेन ग्राहकत्वानुपपत्तेः। किञ्च दोहधर्माः परेद्युरेवाम्नाताः, तत्रैव साम्यापेक्षायां प्रकरणादुभयार्थत्वेन आपद्यमानाः; पूर्वेद्युस्तुशीयमानदधिसिद्ध्यर्थे पूर्वेद्युरान्तरेण क्रियमाणा अपि न तत्प्रयोगार्थाः भवन्ति। दोहनावयवस्तु सामर्थ्यादेव आवर्तन्ते इति विशेषः।

मण्डन— 'दोहद्वये दोहगुणः समत्वात्।'

शंकर— 'समानो दोहयोर्विधिः।' ९.

● दर्शे शाखाछेदनादीनां वत्सापाकरणमेव प्रयोजकम्, किन्तु वत्सापाकरणं प्रयोजकम्। वि. ४।२।३. ● दर्शे शाखाछेदन–आहरण–परिवासनानां वत्सापाकरणमेव प्रयोजनम्, न कपालोपधानमपि। तथा छेदनादीनां अप्रार्थत्वमेव, न तु मूलार्थत्वमपि। भा. ४।२।३।८–९. ● दर्शे शाखाप्रहरणं प्रतिपत्तिः, नार्थकर्म। शाखाप्रहरणाधिकरणम्। के. ४।२।४।१०–१३. ● दर्शे शाखाप्रहरणं प्रस्तरेण सह कार्यो। जि. ४।२।३.

⊠ दर्शे शाखाप्रहरणं प्रस्तरप्रहरणकाले ॥

प्रस्तरे शाखा, श्रवणवत्। ४।२।१४।४४ ॥

भाष्यम्— 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' इति। तत्र श्रूयते 'सह शाखया प्रस्तरं प्रहरति' इति। [redacted] संदेहः किं शाखा प्रस्तरस्याङ्गभूता, अदृष्टप्रयोजनसम्बन्धयोः। अथ प्रत्यर्थः संयोगः, प्रस्तरप्रहरणकाले शाखा प्रहर्तव्येति। किं प्राप्तम्? प्रस्तरे शाखा श्रवणवत्। प्रस्तरस्य अङ्गभूता शाखा। कुतः? सह शाखया प्रस्तरं प्रहरतीति सहयुक्ते अप्रधाने तृतीया विभक्तिर्भवति। सा च शाखाया तृतीया। तस्मात् प्रस्तरस्य शाखा गुणभूता। प्रस्तरे च द्वितीया। सहयोगे च तृतीया गुणतः, द्वितीया प्रधानतः। ननु न शाखया प्रस्तरस्य कश्चिदुपकारः क्रियते। सत्यं न दृष्टं क्रियते किन्तु अदृष्टं क्रियते। श्रवणवत्। यथा 'पयसा मैत्रावरुणं श्रीणाति' इति द्वितीयातृतीयासंयोगात् अदृष्टोपकारो गम्यते। एवमिहापीति।

टुप्— कालसंयोगापत्त्यैतदाभ्यते। अथवा शाखाप्रहरणे काधिकार इति संबन्धः। ननु चतुर्थे (४।२।४।११) प्रतिपत्तिः शाखाप्रहरणमिति स्थितम्। उच्यते। प्रस्तरस्य प्रतिपत्तावपि सुग्धादेरदृष्टभावो दृष्टः। तेनैवापि तद्देव संभवेत्। एतत्प्रयमित्याशङ्कया पुनरधिकरणारम्भः।

कालविधिर्वोभयोर्विद्यमानत्वात्। ४५ ॥

भाष्यम्— कालविधिर्वा स्यात्। कुतः? उभयोर्विद्यमानत्वात्। प्रस्तरस्तावत् स्रुग्धारणार्थः प्राप्तो विद्यते। तस्य प्रहरणमपि विशिष्टे काले वाक्यान्तरेण विहितम्। ततः शाखायाः प्रतिपादनार्थं तस्यैतत् पुनर्वचनम् उच्यते। भवतु प्रस्तरस्य पुनर्वचनम्। शाखा तु अत्र विधीयते इति। उच्यते। उभयोरपि विद्यमानत्वात्। शाखाऽपि हि पूर्वं विहिता वत्सापाकरणार्था। तामीं पुनः किं गुणभूता चोद्यते, उत प्रतिपाद्यते इति। प्रतिपाद्यमानाया दृष्टं प्रयोजनम्। देशविनियोगात् प्रचरितुमवकाशः स्यात्। सा च यावती च मात्रा देशान्तरसंयोगस्य, न दृष्टं किञ्चिदस्ति। तस्मात् प्रहरणं प्रतिपत्तिः शाखायाः। तस्मात् परतः प्रयोजनाभावात् कालनियमः क्रियते। ननु तृतीया अप्रधाने भवति, सा च शाखायाम्। अत्रोच्यते। या असौ शाखायां तृतीया, सा द्वितीयाऽर्थे। या च प्रस्तरे द्वितीया, सा तृतीयाऽर्थे। कथमवगम्यते? सहयोग एषः, एकस्मिन् काले उभयमपि प्रहर्तव्यमिति। अत्र यस्य निर्ज्ञातः कालः, तस्यानुवादः। यस्य तु अनिर्ज्ञातः, तस्य विधिः। शाखायाश्च अनिर्ज्ञातः, प्रस्तरस्य निर्ज्ञातः। तस्य पुनरुच्चारणमनिर्ज्ञातार्थम्। तदप्रधानम्। इतरस्योच्चारणं प्रधानम्। प्राधान्ये च द्वितीयाऽर्थः, तत्र तृतीया। पारार्थ्यमपि तृतीयाऽर्थः, तत्र द्वितीया। तस्माद्यथार्थं विभक्तिवचनम्।

टुप्— कालविधिर्वा उभयोर्विद्यमानत्वात्। ननु च 'सहयुक्तेऽप्रधाने' इति सहयोगे एव तृतीया। उच्यते। यद्येवं, ततः शाखाया अपि यद्यपि गुणभावः प्रस्तरवत् स्यात्। यथा 'सूक्तवाक एव वाज्या, प्रस्तर आहुतिः'।

एव चेत्, कल्पार्थता । उच्यते । प्रस्तरे सूक्तवाकस्य निर्देशात् । अथवा प्रस्तरस्य यज्ञाङ्गत्वेन निर्देशात् यजि-रूपम् । अन्यथा याज्यादीनि न स्युरिति । नैकमत्र । अतः प्रहरतिमात्रे शुद्धे सहयोग इति सूक्तम् ।

अतत्संस्कारार्थत्वाच्च । ४६ ॥

भाष्यम्— न च शाखया प्रस्तरस्योपकारो दृश्यते । यश्च दह्यमानस्य तृणस्य नोपकारे वर्तते । तृणं तु काष्ठस्य दह्यमानस्य उपकुर्यात् । तस्मान्न शाखा प्रस्तरार्था ।

तस्माच्च विप्रयोगे स्यात् । ४७ ॥

भाष्यम्— किं भवति प्रयोजनम्, यदि प्रस्तरस्य गुणभूता, तथापि प्रस्तरप्रहरणकाले शाखा प्रक्षिप्यते इति । उच्यते । यदि प्रस्तरस्य प्रह्रियमाणस्य अङ्गभूता शाखा, ततो विना प्रस्तरेण न प्रहर्तव्या भवति । अथ अनङ्गभूता, विनापि प्रस्तरेण प्रहर्तव्या । अस्माभिरुक्तं प्रस्तर-काले प्रहर्तव्येति । तस्माच्च विप्रयोगे स्यात्, तस्मादेव कारणात् प्रस्तरविप्रयोगेऽपि शाखायाः प्रहरणं स्यादिति ।

टुप्— यदि प्रस्तरस्य गुणभूता शाखा, ततो विना शाखया प्रस्तरो न प्रहर्तव्यः इति व्याख्येयम् । पौर्ण-मास्यां प्रस्तरः शाखा प्रयोजनेन् । सिद्धान्ते विनैव शाखया प्रहर्तव्यः । अथवा अन्यथा व्याख्येयमुदाह-रणम् । प्रातःसवनीयेषु ( पुरोडाशेषु ) प्रस्तरं विना न प्रहर्तव्या शाखा पूर्वपक्षे । सिद्धान्ते प्रहर्तव्येति ।

उपवेषश्च पक्षे स्यात् । ४८ ॥

भाष्यम्— यथा पूर्वः पक्षः तथा सति, सान्नाय्ये यसि अहनि च शाखा विद्यते इति, उपवेषः सति खलति च स्यात् । यथा ■ सिद्धान्तः, तथा सान्नाय्यपक्षे शाखा सती हि प्रतिपाद्यते, इति तत्रैव उपवेषो नान्यत्रेति ।

वि— 'प्रस्तरं शाखया युक्तं हरेत् ( इत्यनेन ) शाखा विधीयते । काले वा प्रतिपत्त्यर्थः प्रकृत्याऽऽलोप-लभ्यते ॥, आद्योऽङ्गत्वविधेर्भानात्, प्रतिपत्तिमपेक्षते । शाखोपयुक्ता ( शाखा उपयुक्ता ) तेनान्त्यः प्रस्तरे प्रतिपादनात् ॥'

भाट्ट— 'सह शाखया प्रस्तरं प्रहरति' इत्यत्र प्रहरणे एव शाखासाहित्यं प्रस्तरस्य, न तु होमे इत्युक्त चतुर्थे

( ४।२ ) ननु न सहप्रधानत्वेन प्रस्तरप्रहरणस्येव शाखाप्रहरणस्यापि शाखाप्रतिपत्तितया, किन्तु प्रस्तर-प्रहरणे शाखासाहित्य गुणत्वेन मैत्रावरुणप्रदे इव पयः-साहित्य 'सहयुक्तेऽप्रधाने' इत्यनुशासनेन गुणत्वा-वगमात् । इति प्राप्ते, शाब्दबोधे गुणत्वभवणेऽपि प्रयाजशेषाभिघारणन्यायेन आर्थिकप्रतिपत्त्यन्तरविधिकल्प-नेन प्रस्तरवत् शाखाया अपि कृतार्थत्वाविशेषेण प्रति-पाद्यत्वम् । अत एव शाब्दबोधे गुणत्वश्रवणमपि प्रस्तर-प्रहरणकाले प्रतिपत्त्यर्थमित्युक्तम्, न तु स्वयं तन्त्रम् । अतश्च असंनयतः शाखा विनैव प्रस्तरप्रहरणम् । पौर्ण-मास्यां च यथाशक्तिप्रयोगे प्रस्तराभावेऽपि 'गुणलोपे च' इति न्यायेन शाखाप्रहरणम् ।

मण्डन— 'शाखां क्षिपेत् प्रस्तरहोमकाले ।'

शंकर— 'प्रतिपाद्या हृतौ शाखा ।' हृतौ प्रस्तरस्य प्रहरणे प्रहरणकाले शाखा प्रतिपाद्या अग्नौ प्रक्षेप्या इत्यर्थः ।

● दर्शे शाखामार्जने ( शाखायाः मार्जनं तत्रत्य-धूलिनिरसनम् ) 'ऊर्जे त्वा' इति मन्त्रः । वि. ९।१।१५, ● दर्शे सांनाय्यदोहे 'वत्सरा दोहयति' इति उत्तरा-शब्देन विद्यमाना. स्त्रीयाः विसृज्यः वत्सराः गवो गावो दोग्धव्याः । ११।१।५, ● दर्शे सांनाय्यपात्रप्रोक्षणे 'शुन्धध्वं' इत्यादिर्मन्त्रः संनिधिपाठात् । क्रमाधिकरणम् । ३।३।५, ● दर्शे सोमयाजिनः सानाय्यम्, असोम-याजिनस्तु आग्नेयैन्द्राग्नौ पुरोडाशौ । १०।८।१४.

● दर्शामावास्याशब्दौ एकार्थौ । भा. ४।४।११।१४.

● दर्शेष्टेः प्रागुदयात् प्रक्रमः, न तु अहनि । संकर्ष. ३।१।४.

● दर्शनेन्द्रण निशीथिषशेष । भाट्ट. १२।२।५.

● दर्शपूर्णमासौ । आग्नीनाथार सर्वः संकल्पयति पर्वणिपर्वणि मया दर्शपूर्णमासौ कर्तव्यौ इति । भा ६।१। ११।२५. ● दर्शपूर्णमासौ अवघातनिष्पन्नैरेव तण्डुलैः अवान्तरापूर्वद्वारेण परमापूर्वं जनयतः । वि. ११।१।१, ● 'दर्शपूर्णमासौ इष्ट्वा सोमेन यजेत' अनेष्टिसोमयोः पौर्वापर्यं ■ नियमम्, 'सोमेन यक्ष्यमाणोऽग्नीनादधीत' इत्यपि अत्रात् । ५।४।३. ● दर्शपूर्णमासौ कुर्वाणस्य

● दर्शपूर्णमासयोः अतिपाते वैश्वानरेष्टिपथिकृदिष्ट्योर्विकल्पः । प्रायश्चित्तानां दोषनिर्घातार्थानां इत्यधिकरणम् । वि. १२।३।५, ● दर्शपूर्णमासयोः अधिवापः 'अधि च वपति कपालानि चोपदधाति' । पेषणार्थे दृषदि तण्डुलस्थापने अधिवापः । ३।८।१०, ● दर्शपूर्णमासयोः अनारभ्यविधिप्राप्तस्य पेयजामहस्य 'नानुयाजेषु पेयजामहं करोति' इति । तत्र अनयोर्नित्यं बाधो विकल्पेन वा इति निरूपणार्थे नञ् । अयं प्रतिषेधार्थः पर्युदासार्थो वा इति चिन्तायाम्, श्रुत्या नञः प्रधानभूतक्रियान्वयेन निषेधार्थत्वं इति प्राप्ते, प्रतीतमपि निषेधार्थत्वं 'नेक्षेत' इत्यत्र यतशब्दसामानाधिकरण्यात् अनङ्गीकृत्य उपसर्जनीभूतयागार्थान्वयेन पर्युदासः अङ्गीकृतः । सु. पृ. ८. ● दर्शपूर्णमासयोः अनुयाजः तृतीयः स्विष्टकृद्देवतासंस्कारकतया संनिपत्योपकारकः । अनुयाजस्य तृतीयस्य इत्यधिकरणम् । के. १०।४।१९।३८. ● दर्शपूर्णमासयोः अनृतं वदन् नरकं प्राप्नुयात्, दर्शपूर्णमासफलं चाविकलमेव प्राप्नुयात् । घा. ३।४।४।१२ पृ. ९१२. ● दर्शपूर्णमासयोः अनृतवदननिषेधः अङ्गम् । वि. ३।४।८. ● दर्शपूर्णमासयोः अन्वाधानकरणमन्त्रः 'ममाग्ने वर्चो विहवेष्वस्तु' इत्यादिः अध्वर्युणा पठनीयः, तदुक्तं फलं तु यजमानस्येति । घर्मोन्यायः । ३।८।१४. ● दर्शपूर्णमासयोः अन्वारम्भणीया पुरुषं आरभमाणं प्रथमं दर्शपूर्णमासयोः प्रतीमानं कर्तारं आरम्भणयोग्यं करोति । भा. ९।१। १०।२४-२५ वर्णकं २, ● दर्शपूर्णमासयोः अन्वारम्भणीयायाः आदौ सकृदनुष्ठानम् । आरम्भणीयान्यायः । ९।१।११।३४-३५ वर्णकं १. ● दर्शपूर्णमासयोः अन्वाहार्यः परिक्रयार्था दक्षिणा । सा स्वामिना कार्या नाध्वर्युणा । ऋत्विक्परिक्रयः स्वामिकर्म इत्यत्र । के. ३।८।२।१-२. ● दर्शपूर्णमासयोः अन्वाहार्यस्य पाको निरूप्यः । आग्रयणे वासोवत्सयोः अयं धर्मो प्राप्यते । वि. १०।३।९. ● दर्शपूर्णमासयोः अन्वाहार्यं दक्षिणायां ब्राह्मणा एव दृश्यन्ते 'एते वै देवा अहुतादो यद् ब्राह्मणाः' इत्यादौ । या. १२।४।१५।४७. ● दर्शपूर्णमासयोः अन्वाहार्यधर्मः अभिघारणम्, तच्च स्वादुताकरणार्थम् । आग्रयणे वासोवत्सयोर्दक्षिणारूपयोः अभिघारणं प्राप्यते । वि. १०।३।१०. ● दर्शपूर्णमासयोः 'अपः प्रणेष्यन् वाचं यच्छति, ता महविष्कृता विसृजति' इति हविष्कृद्ग्रहणं काललक्षणार्थं इत्युक्तम् ( ३।२।३।५-६ ) । भा. ११।३।७। १५. ● दर्शपूर्णमासयोः अपां प्रणयनं चमसेन । वि. ३।४।२. ● दर्शपूर्णमासयोः अपां प्रणयनस्य संयवनं प्रयोजनम्, निवर्तनं तु प्रतिपत्तिः । निनयनन्यायः । के. ४।२।५।१४-१५. ● दर्शपूर्णमासयोः अपां प्रणयने गोदोहनं पुरुषार्थम्, न क्रत्वर्थम् । वि. ४।१।२ वर्णकं १, ● दर्शपूर्णमासयोः अपां प्रणयने मृन्मयगोदोहनादिपात्रमनित्यं कामसत्वात् । ४।१।२. ● दर्शपूर्णमासयोः अपां च्युत्सेकस्य भक्त्या अवभृथत्ववादः 'एष वै दर्शपूर्णमासयोरवभृथः' इति । भा. ७।३।४।१४. ● दर्शपूर्णमासयोः अपूर्वं चतुर्विधम् । स्वर्गजनकमपूर्वं फलापूर्वं परमापूर्वं इति यदुच्यते । अमावास्यायां प्रयाणां यागानां एकः समुदायः, आग्नेयपुरोडाश-उपांशुयाज-अग्नीषोमीयपुरोडाशयागनामधेयः समुदायः, इति समुदायजन्यं समुदायापूर्वम् । एकैकस्मिन् समुदाये यागत्रयजन्यानि त्रीणि त्रीणि उत्पत्त्यपूर्वाणि । प्रयाजाद्यङ्गजन्यानि प्रोक्षणाद्यङ्गजन्यानि च अङ्गापूर्वाणि । तत्र संनिपत्योपकारकजन्यानि उत्पत्त्यपूर्वनिष्पत्तौ व्यापिपन्ते, आरादुपकारकजन्यानि तु समुदायापूर्वनिष्पत्तौ । वि. २।१।२, ● दर्शपूर्णमासयोः 'अभिक्रमं जुहोति' इत्याद्यभिक्रमणादीनां प्रयाजाङ्गत्वं तद्द्वारा तु दर्शाद्यङ्गत्वमपि । अभिक्रमणाधिकरणम् । ३।१।१०, ● दर्शपूर्णमासयोः अभिघारणम् । पुरोडाशाद्यवदानकाले क्रियते स्रुचि अवयवसंश्लेषनिवारणार्थं उपस्तरणं चाभिघारणं चेति । १०.२।२. ● दर्शपूर्णमासयोः अभिमर्शनं अपूर्वप्रयुक्तमेव, न तु पौर्णमास्यादिसमुदायप्रयुक्तम् । भा. ९।१।५।११-११, ● दर्शपूर्णमासयोः अभिमर्शनस्य अङ्गप्रधानसाधारणत्वविमोक्षपैता । अभिमर्शनाधिकरणम् । ३।७।४।८,१०. ● दर्शपूर्णमासयोः अभ्यूहने पुरोडाशधर्मः 'वेदेन भस्मनाऽङ्गारानभ्यूहति' नासो चरौ स्यात् । के. १०।१।१८।५९. ● दर्शपूर्णमासयोः अवघातः तण्डुलनिष्पत्तिार्थं

अभ्यासेन कर्तव्यः । अवघातादिक्रियाणां इत्यस्याधिकरणम् । वि. ११।१।५, * दर्शपूर्णमासयोः अवघातः नापूर्वजनकः, दृष्टार्थत्वात् । नियमापूर्वहेतुत्वेन तु विधेयः । २।१।३, * दर्शपूर्णमासयोः अवघातस्य प्रधानं प्रयोजकम् । ५।२।११, * दर्शपूर्णमासयोः अवघातादिविधयो यथा व्रीहिषु प्रवर्तन्ते, तथा व्रीहिप्रतिनिधिभूतेषु नीवारेष्वपि साक्षात् प्रवर्तन्ते, व्रीहित्वजातिविकल्पेऽपि मुख्यैकदेशरूपत्वान्नीवाराणाम् । ३।६।१४ * दर्शपूर्णमासयोः अवघातपेषणविधिर्नियमार्थः । अवघातादिसंस्कारविधिर्नियमविधिः इत्यत्र अधिकरणम् । भा. ४।२।११।२६, * दर्शपूर्णमासयोः अवघातमन्त्रः 'अव रक्षो दिवः सपत्नं वध्यासम्' इति प्रथमप्रहारे सकृदेव पठनीयः, न तु प्रतिप्रहारम् । अवघातन्यायः । ११।४। १२।४२ (४५), * दर्शपूर्णमासयोः अवज्वलनं पुरोडाशधर्मः 'दर्भैरभिज्वलयति' । नाग्नौ सौर्ये चरौ स्यात् । के. १०।२।१२।६०, * दर्शपूर्णमासयोः अवदानेन प्रदानान्तेन अनुसमयः, न तु अवदानमात्रेण । अवदानादिप्रदानान्तानुसमयः । ५।२।४।६, * दर्शपूर्णमासयोः अवभृथः अप्सु एककपालः औपचारिकः । 'एष दर्शपूर्णमासयोरवभृथः' । वि. ७।३।४, * दर्शपूर्णमासयोः अवहननविधिः नियमार्थः, अनुवादः । भा. ४।१।११।२६.

*** दर्शपूर्णमासयोः असोमयाजिनः पुरोडाशद्वयाभ्यासानुवादः ॥**

**पुरोडाशाभ्यामित्यधिकृतानां पुरोडाशयोरुपदेशस्तच्छ्रुतित्वाद् वैश्यस्तोमवत् । १०।८।१४।२५ ॥**

भाष्यम्— दर्शपूर्णमासयोः इदमाम्नायते 'पुरोडाशाभ्यामेव असोमयाजिनं याजयेत्, यावेतौ आग्नेयश्चैन्द्राग्नश्च' इति । तत्र संशयः किं अधिकारश्रुतिवाक्यशेषोऽयम् 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' इति आभ्यां पुरोडाशाभ्यामसोमयाजी इति । अथ किमधिकयोः कर्मान्तरयोरुत्पत्तिः अपराभ्यामेवंजातीयकाभ्यां पुरोडाशाभ्यां यजेतेति, अथवा अङ्गकर्तृव्यपदेशः आभ्यां पुरोडाशाभ्यामृत्विक् याजयेदिति, अथवा असोमयागकाले आभ्यां यजेतेति कालोपदेशः, उतैन्द्राग्नस्य विधिराग्नेयस्य चानुवादः, अथवा उभयोरनुवाद इत्येते पक्षाः । किं तावत् प्राप्तम् ? अधिकारशेष इति । यदेतत् स्वर्गकामो यजेतेति, तस्य शेषः, आभ्यां पुरोडाशाभ्यामसोमयाजी स्वर्गकामो यजेतेति । कुतः ? तच्छ्रुतित्वात् । तच्छ्रुतिमन्तौ हि पुरोडाशौ शब्देनानूद्येते । तेन सम्बध्येते । असोमयाजिनश्च कर्तृव्यापारः आभ्यां संबध्यते श्रुत्या, न कालः । स हि लक्ष्येत । श्रुतिश्च लक्षणाया गरीयसी । तत्र सोमयाजिनो वा न पुरोडाशौ, असोमयाजिनो वा न सान्नाय्यम् । यदि पुरोडाशौ अधिकृत्य असोमयाजी विधीयते, ततो नासोमयाजी सान्नाय्ये । तत्र एवकारः समर्थितो भवति । पुरोडाशाभ्यामेव केवलाभ्याम् असोमयाजी, न सान्नाय्येनेति । अथ असोमयाजिनमधिकृत्य पुरोडाशौ विधीयेते, तथा न सोमयाजिनः पुरोडाशौ । तत्र अस्थाने एवशब्दो भवति, पुरोडाशाभ्यामसोमयाजिनमेवेति । यथा 'यमेव विद्याः शुचिमप्रमत्तं मेधाविनं ब्रह्मचर्योपपन्नम् । यस्ते न द्रुह्येत् कतमच्चनाह तस्मै मा ब्रूया निधिपाय ब्रह्मन् ॥' इति । (निरुक्तम् २।४) । यं शुचिमेव विद्या इति वक्तव्ये यमेव विद्याः शुचिमिति । एवमत्रापि । तदुभयोरपि वचनयोरधिकारश्रुतिवाक्यशेषः इत्युभयथाऽयं पूर्वपक्षो भवति । यथा वैश्यस्तोमे अधिकारश्रुतिशेषः 'वैश्यो वैश्यस्तोमेन यजेत' इति, तद्वदत्रापि अधिकारश्रुतिशेष एवेति ।

**न त्वनित्याधिकारोऽस्ति, विधेर्नित्येन सम्बन्धस्तस्मादवाक्यशेषत्वम् । २६ ॥**

भाष्यम्— तुशब्दः पक्षं व्यावर्तयति । नैतदेवम्, अधिकारवाक्यशेष इति । नित्यौ हि दर्शपूर्णमासौ 'यावज्जीवं दर्शपूर्णमासाभ्यां यजेत' इति । नित्यौ च तयोर्मौ पुरोडाशौ फलं प्रति सहकारिणौ । तौ अनित्यमसोमयाजिनं प्रति विधीयेते इत्यनुपपन्नम् । कथम् ? नित्यौ हि दर्शपूर्णमासयोर्विध्यतः । यत्र असोमयाजी तस्योपकरिष्यत इति नोपपद्येत । पुरोडाशविधेर्नित्येन दर्शपूर्णमाससमुदायेन सम्बन्धः । तस्मान्न असोमयाज्यधिकारश्रुतिवाक्यशेषः । किं तर्हि ? अधिकयोः कर्मान्तरयोरुत्पत्तिरिति । नैवमभिसंबन्धः क्रियते 'यावेतौ पुरोडाशौ दर्शपूर्णमासयोर्विहितौ, तौ प्रति असोमयाजी

विधीयते ' इति । कथं तर्हि ? असोमयाजी यः स्वर्गकामः, स आग्नेयं कुर्यादैन्द्राग्नं च इत्येते कर्मणी विधीयेते । विधीयेते चेत् पूर्वाभ्यां कर्मान्तरे । तत्र याजयेदित्यनुवादवचनं धर्मापेक्षं भविष्यति । यथा 'एतस्यैव रेवतीषु वारवन्तीयमग्निष्टोमसाम कृत्वा' इति । एतच्छब्दश्च पुनरित्येतस्मिन्नर्थे भविष्यति । यथा क्षीरेण भुक्त्वा देवदत्तः क्षीरेणैव भुञ्जीतेति । भुञ्जीतैवेति पुनरिति गम्यते । एवमिहापि सोमयाजिनश्च असोमयाजिनश्च दर्शपूर्णमासविधानेन विहितौ पुरोडाशौ, पुनः असोमयाजिनस्तौ विधीयेते, पुरोडाशाभ्यामेव असोमयाजिनं याजयेदिति । तद्धर्मकाभ्यामिति गम्यते ।

तानि च नैकदेशेन, कर्तुः प्रधानभूतत्वात् । ३७ ॥

भाष्यम्— इति चाधिकारशेषे पुरोडाशयोः असोमयाजिकर्तृसम्बन्धो नोपपद्यते । अधिकारशेषे हि प्रधानभूतः कर्ता निर्दिश्यते । न चास्मिन् पक्षे प्रधानभाव उपपद्यते । न च दर्शपूर्णमासैकदेशभूतौ पुरोडाशौ फलस्य साधकौ भवतः । न च वचनसामर्थ्यात् फलं कल्पयिष्यते । वचनस्यान्यार्थस्य भावात् । तस्मादपि नाधिकारशेष इति ।

कृत्स्नत्वात्तु तथा स्तोमे । ३८ ॥

भाष्यम्— यदुपवर्णितम्, वैश्यस्तोमवदिति, युक्तं वैश्यस्तोमे । कृत्स्नो वैश्यस्तोमो न कस्यचिदेकदेशः । तत्र फलं संभवति । न चात्र फलं संभवति । न च तत्र किञ्चिदेकं नित्यमनित्येन संबध्यते । तस्माद्वैषम्यं वैश्यस्तोमेन ।

कर्तुः स्यादिति चेत् । ३९ ॥

भाष्यम्— इति चेन्मन्यसे नाधिकारश्रुतिशेषोऽवकल्पत इति । तन्नोच्यते । कर्मान्तरयोरुत्पत्तिः नावकल्पते । याजयेदिति ण्यपेक्षावचनं लक्षणया कल्प्येत । कथं तर्हीदमिति ? अङ्गकर्तुरुपदेशः । अङ्गे यः कर्ता, न प्रधाने । याजयेदिति हेतुकर्तुरेवैतत् प्रत्ययं वचनम् । लक्षणया यजेः कर्तुः । अपि च नित्यानित्ययोर्विरुद्धः सम्बन्धः अभ्युपगतो न भविष्यति । न चैकदेशस्य फलं कल्पयिष्यते । असोमयाजी पुरोडाशाभ्यां याजयितव्यः इति याजयितुरुपदेशः अभ्युदयाय भविष्यति ।

न गुणार्थत्वात्, प्राप्ते च नोपदेशार्थः । ४० ॥

भाष्यम्— नैतदेवम्, अङ्गकर्तुरुपदेश इति । अङ्गकर्ता हि प्रधानकर्तुरेव नियोगोपदेशेन गुणभूतः प्राप्नोति । न चास्य फलं श्रूयते । न च कल्पयितुं शक्यम्, उपग्रहविशेषणात् । न च प्राप्तस्य पुनरुपदेशे किञ्चिदस्ति प्रयोजनम् । अर्थप्राप्तस्य तु अनुवादः पुरोडाशयोर्गुणविधानम् । न च परिसंख्या, त्रिदोषत्वात् । सोमयाजिनश्च विना अङ्गकर्मा असंभवात् । तस्मात् कर्मान्तरयोरुत्पत्तिरिति ।

कर्मणोस्तु प्रकरणे तन्न्यायत्वाद् गुणानां लिङ्गेन कालशास्त्रं स्यात् । ४१ ॥

भाष्यम्— तुशब्दः पक्षं व्यावर्तयति । नाधिकयोः कर्मान्तरयोरुत्पत्तिरिति । एतयोः कर्मणोः प्रकरणे कालः उच्यते । नासोमयाजिनं कर्तारं प्रति पुरोडाशौ विधीयेयाताम् । कुतः ? तन्न्यायत्वात् । स हि न्यायः, योऽस्माभिरुक्तः । 'अपि [illegible] कालमात्रं स्याददर्शनाद्विशेषस्य' इति । इहापि स एव न्यायः । असोमयागकाले दर्शपूर्णमासयोरेतौ पुरोडाशौ भवत इति । किमेवं भविष्यति ? फलकल्पनादोषो न भविष्यति । यदा समुदायः पूरयिष्यते, तदा सर्वेषां संहतानां फलं भविष्यतीति । शक्यते च असोमयागेन विशेषलिङ्गेन कालो लक्षयितुम् । तस्मिन् काले पुरोडाशाभ्यामेव यजेत, न सांनाय्येनेति ।

यदि तु सांनाय्यं सोमयाजिनो, न ताभ्यां समवायोऽस्ति, विभक्तकालत्वात् । ४२ ॥

भाष्यम्— तुशब्दः पक्षं व्यावर्तयति । यदि सांनाय्यं सोमयाजिनः, न कालार्थं श्रवणं भवितुमर्हति । सांनाय्यं च सोमयाजिन एव । अनाहिताग्नेर्वा तस्मिन् आशङ्कितवचनम् । यथा 'आहिताग्निश्चेत् प्रमीयेत स्रुग्भिस्तस्य कर्मार्थमिति' इति । एवं हि श्रूयते 'नासोमयाजी संनयेत्' इति । एवं सति न कालार्थं श्रवणम् । कथम् ? नैव ताभ्यां पुरोडाशाभ्यां सांनाय्यस्य समवायः अस्ति, विभक्तकालत्वात् । प्राक् सोमयागात् पुरोडाशौ,

ऽप्यस्ते सांनाय्यं प्राप्नोत्येव । न तदर्थं यतितव्यम् । तस्मात्र कालार्थे श्रवणम्, कर्मान्तरचोदनैवेति ।

अपिवा विहितत्वाद् गुणार्थायां पुनःश्रुतौ संदेहे श्रुतिर्द्विदेवतार्था स्याद् यथाऽनभिप्रेतस्तथाऽऽग्नेयो दर्शनादेकदेवते । ४३ ॥

भाष्यम्— अपिवेति पक्षव्यावृत्तिः । नैतत् कर्मान्तरचोदनेति । अनुवाद आग्नेयस्य विहितत्वात् । विहितो हि असौ उभयत्र 'यदाग्नेयोऽष्टाकपालोऽमावास्यायां पौर्णमास्यां चाच्युतो भवति' इति । ऐन्द्राग्नस्य भवति विधिः, उभयत्र अविहितत्वात् । न यत्र न प्राप्नोति, पौर्णमास्यां ऐन्द्राग्नविधानार्था एषा श्रुतिः । विधाने यथा अनभिप्रेतः, तथा आग्नेयः उच्चरितः । विधाने चोभयत्र । तस्य दर्शनं च 'आग्नेयं चतुर्धा करोति' इति । तथा साकम्प्रस्थायीये 'आग्नेयमाग्नाभ्यां प्रचर्य आग्नेयेन पुरोडाशेन' इति ।

विधिं तु बादरायणः । ४४ ॥

भाष्यम्— तुशब्दः एतमपि पक्षं व्यावर्तयति । नैतदेवम् । आग्नेये अनुवादः ऐन्द्राग्ने विधिरिति । उभयोः कालविधिः स्यात् । कुतः ? बादरायण आचार्यो मन्यते स्म, प्राप्तमपि सोमयागात् सांनाय्यविधिरिति । असोमयाजिनोऽपि सांनाय्यं श्रूयते, 'नहु संनयेदिति' । तथा 'तदेतत् स्यादुपावता. सांनाय्यमेवासोमयाजिनः' । तस्मात् कालार्थः प्रयोग इति ।

प्रतिषिद्धविज्ञानाद्वा । ४५ ॥

भाष्यम्— वाशब्दः पक्षं व्यावर्तयति । नैतदस्ति, कालविधिरिति । नाप्यधिकयोः कर्मणोरुत्पत्तिः, न वा आग्नेयस्यानुवादः, ऐन्द्राग्नस्य विधिः । किं तर्हि उभयोरनुवादः । कथम् ? सोमयाजिनः सांनाय्यविधानार्थेऽनुवादः । अतो नैन्द्राग्नस्यापि विधिः । मिथेन हि तदा एतद्वाक्यम् । एवमभिसंबन्धः क्रियते असोमयाजिनः पुरोडाशावेतौ, यौ प्रसक्तौ, सोमयाजिनः सांनाय्यमपरमपीति । पुरोडाशाभ्यामेव असोमयाजिनं याजयेत् यावेतौ आग्नेयश्चैन्द्राग्नश्च, सांनाय्येन सोमयाजिनमिति, एतमेवेन वाक्येन सोमयाजिनः सांनाय्यं विधीयते, अपरेणापि वाक्येन असोमयाजिनः । तस्मादुभयोरपि अनुवाद इति ।

तथा चान्यार्थदर्शनम् । ४६ ॥

भाष्यम्— अन्यार्थोऽपि चैतमर्थं दर्शयति, न कर्मान्तरे इति । कथम् ? 'चतुर्दश पौर्णमास्यामाहुतयो हूयन्ते, त्रयोदशामावास्यायाम्' इति । कर्मान्तरोत्पत्तौ अभ्यधिका आहुतयो भवेयुरिति ।

सोम— उपांशुयाजस्य चतुरवदानत्वाभावेऽपि इह असोमयाजिनः सांनाय्याभावः सोमयाजिनः पुरोडाशयोर्वा ? पुरुषार्थात् सङ्गतिः । सूत्रार्थस्तु— पुरोडाशाभ्यामेव असोमयाजिन इत्यपिशब्दार्थः असोमयाजिना पुरोडाशोऽसोमयाजिन इत्यपिशब्दा असोमयाजिना पुरोडाशयो-रुपदेशः, पुरोडाशयोः असोमयाज्यधिकारोपदेशः इति यावत् । तच्छ्रुतित्वात् असोमयाजिन एव श्रुतत्वात् । यथा 'वैश्यस्तोमेन यजेत' इत्यत्र वैश्यस्यैव श्रुतत्वात् तस्यैवाधिकारः इति ।

वि— 'सप्त पक्षाः (१) पुरोडाशाभ्यामेवेत्यधिकारिणः । शेषः स्यात् तच्छ्रुतेर् (२) नैव कार्त्स्न्यं निश्चययाचनात् ॥ कर्मान्तरविधिर् (३) नैव प्रत्यभिज्ञैव-कारतः । विपर्यस्य विधिर् (४) नैवमापत्तेः स्वार्थ-त्यागतः । कालस्यास्तु विधिर् (५) नैवं लक्षणायाः प्रसञ्जनात् ॥ प्रसङ्गतः । ऐन्द्राग्नैकविधिर् (६) नैव वैयर्थ्यात्त्वेवकारतः ॥ कालो लाक्षणिकोऽप्यस्तु स्वार्थत्वायेति चेत् (७) न तत् । स्तुत्या विध्येकवाक्यत्वात् स्वार्थत्वात्वानुवादता ॥' (अत्र पूर्वे पूर्वे पक्षं निरस्य उत्तरोत्तरपक्षस्य निवेशः । सप्तमः पक्षश्च सिद्धान्तः ) ।

भाट्ट— दर्शपूर्णमासयोः 'नासोमयाजी संनयेद्' इत्यसोमयाजिनः सांनाय्यपर्युदासः श्रुतः । तच्छेषतया न 'पुरोडाशाभ्यामेवासोमयाजिनं याजयेत् द्वावेतावाग्नेय-श्चैन्द्राग्नश्च' इति श्रुतम् । सोऽयं पर्युदासविधेरर्थवादः । ऐन्द्राग्नस्य 'ऐन्द्राग्नमेकादशकपालं निर्वपेदमावास्यायामसंनयतः' इति सांनाय्याभाव एव विहितत्वात् दौर्बल्येन स्तुत्युपपत्तेः । यदा विधिस्तदा कीदृश इति चिन्त्यते । तत्र पुरोडाशाभ्यामेव असोमयाजी भवति क्रियते न सांनाय्येनेति प्रथमः पक्षः । पर्युदासविधिना प्राप्तस्यार्थस्य सिद्धेः 'नहु संनयेत्' इति शास्त्राऽन्तर-वचनेन असोमयाजिनोऽपि सांनाय्यविधानात् पुरोडाश-

षोरसोमयाजी एवाधिक्रियते, न सोमयाजीति द्वितीयः। सोमयाजिनः आग्नेयाभावप्रसङ्गात्, सान्नाय्यस्य सोमयाजिनो नियतत्वेन च तदभावविहितैन्द्राग्नस्य सोमयाजिनः प्रवृत्त्यभावात् एतत्पक्षानुपपत्तेः कर्मान्तरं विधीयते इति तृतीयः। कर्मान्तरत्वे प्रमाणाभावात् एवकारश्रवणाच्च तदनुपपत्तेः याजनविधिरिति चतुर्थः। कल्पश्रवणात् यागतः प्राप्तत्वाच्च एतत्पक्षस्यापि अनुपपत्तेः असोमयागकाले पुरोडाशाविति कालविधिरेव श्रेयानिति पञ्चमः। तदपि ऐन्द्राग्नस्य असोमयागकाले एव प्राप्तत्वात् आग्नेयस्य च असोमयागकालविधौ सोमयाजिनः प्रतिषेधापत्तेः अनुपपन्नम् ... अर्थवाद एवायं इत्यौदुम्बराधिकरणसिद्धमिति कृत्वाचिन्तोदाहरणम्। केषुचित्पक्षेषु आग्नेयस्य असोमयागकालबाधाय बाधोपयोगः।

मण्डन—'अधिको न पुरोडाशौ।' १५.

शंकर—'प्रागेव सोमादैन्द्राग्नौ।' १६.

* दर्शपूर्णमासयोः 'आग्नेयोऽष्टाकपालः' अत्र आग्नेयशब्दो न कर्मनामधेयम्, किन्तु देवताविधायकः। आग्नेयाधिकरणम्। चि. २।४।७. * दर्शपूर्णमासयोः आग्नेयोऽष्टाकपालः। अत्र निगमेषु अग्नेरभिधानं विधिशब्देनैव अभिधानेन, नान्येन शुच्यादिना। विधिशब्दाधिकरणम्। के. १०।८।१२।२३-२४. * दर्शपूर्णमासयोः 'आग्नेयोऽष्टाकपालोऽमावास्यायां पौर्णमास्यां चाच्युतो भवति' इति विधाय पुनरुच्यते 'आग्नेयोऽष्टाकपालोऽमावास्यायां भवति' इति। तत्र आग्नेयस्य न द्विरभ्यासः, पुनःश्रुतिस्तु ऐन्द्राग्नस्तुत्यर्था। भा. २।३।१४।२७-२९, * दर्शपूर्णमासयोः आग्नेयः पुरोडाशः उपांशुयाजः अग्नीषोमीयः पुरोडाशः ऐन्द्रं दधि ऐन्द्रं पयः आघारौ आज्यभागौ स्विष्टकृत् पत्नीसंयाजाः (इति यागा भवन्ति)। तत्र षडेतानि प्रधानानि आघारादीनि आरादुपकारकाणि। २।२।३।३-८. * दर्शपूर्णमासयोः आग्नेयं अवदाय हुत्वा पश्चात् अग्नीषोमीयादेः अवदानहोमौ इति अवदानस्य प्रदानान्तानुसमयः। अवदानादिप्रदानान्तानुसमयन्यायः इत्यधिकरणम्। चि. ५।२।४, * दर्शपूर्णमासयोः 'आग्नेयं चतुर्धा करोति' इति चतुर्धाकरणं आग्नेयस्यैव, न तु ऐन्द्राग्नाग्नीषोमीययोः। आग्नेयचतुर्धाऽधिकरणन्यायः। ३।१।२५. * दर्शपूर्णमासयोः आग्नेयस्य अनुवाक्या 'अग्निर्मूर्धा दिवः' इति। भा. ८।२।१६।३१. * दर्शपूर्णमासयोः आग्नेयस्य पुरोडाशस्य अध्वरकल्पस्थवार्हस्पत्यश्च विकारः, उपांशुयाजस्य च सारस्वतमाज्यं विकारः। चि. ५।१।१०. * दर्शपूर्णमासयोः आग्नेयस्य प्रयाजशेषेणाभिघारणं प्रथमं मुख्यक्रमात्, ततः सान्नाय्यस्य। के. ५।२।७।१४. * दर्शपूर्णमासयोः आग्नेयस्य प्राथम्यं नाग्नीषोमीयस्य, ब्राह्मणपाठस्य अन्यथा येऽपि (तैत्ति. २।५।२) हौत्राध्वर्यवयाजमानकाण्डेषु आग्नेयमन्त्रस्यैव प्राथम्यात्। मन्त्रपाठस्य ब्राह्मणपाठापेक्षया बलवत्त्वात्। चि. ५।१।९ * दर्शपूर्णमासयोः आग्नेयाग्नीषोमीयपुरोडाशयोः मुष्टिकपालोपधान-अवदानेषु समुदायानुसमयः। समुदायानुसमयन्यायः। भा. ५।२।३।४, * दर्शपूर्णमासयोः आग्नेयाज्यभागः आरादुपकारकः। आग्नेयाज्यभागन्यायः। १०।१।८।१६-१८, * दर्शपूर्णमासयोः आग्नेयादीनां प्रधानानामैकदेश्यकालकर्तृकत्वम्। ११।१।१। १-३, ४-७, * दर्शपूर्णमासयोः आग्नेयादीनां समुदितानां एकः स्वर्गः फलम्। तन्त्रन्यायः। ११।१।१।१-४.

◻ दर्शपूर्णमासयोः आग्नेयादिप्रधानभेदेऽपि देशकालकर्तृणामेकत्वात् आघाराद्यङ्गानां सकृदनुष्ठानम्॥

प्रधानकर्मार्थत्वादङ्गानां तद्भेदात् कर्मभेदः प्रयोगे स्यात्। ११।१।१०।५४।

भाष्यम्— दर्शपूर्णमासयोः प्रधानानि आग्नेयादीनि, तेषामङ्गानि आघारादीनि। तेषु चिन्त्यते किं तस्य तस्य प्रधानस्य भेदेनाङ्गानां प्रयोगः, अथवा सर्वेषां तन्त्रेणेति। अथ तत्र किं प्राप्तम्? 'क्रतुवच्चानुमानेनाभ्यासे फलभूमा स्यात्' इति (११।१।७।२९)। तत्र कृत्स्नौ दर्शपूर्णमासौ उद्दिश्य कथा वृत्ता। इह तु तत्तत्प्रधानं प्रति चिन्त्यते। किं प्राप्तम्? प्रधानकर्मार्थत्वादङ्गानां तद्भेदात् कर्मभेदः प्रयोगे स्यात्। अङ्गानां प्रयोगे कर्मभेदः स्यात्, क्रियाभेदः। तस्य तस्य प्रधानस्य भेदेन अङ्गानां प्रयोगः। कुतः? प्रधानकर्मार्थत्वात्। प्रधानार्थत्वात् इत्यर्थः। प्रधानार्थेन हि अङ्गानि उपदिश्यन्ते। अङ्गवन्ति प्रधानानि

ऊर्ध्वं सान्नाय्यं प्राप्तमेव । न तदर्थं यतितव्यम् । तस्मात् कालार्थं वचनम्, कर्मान्तरचोदनैवेति ।

अपि वा विहितत्वाद् गुणार्थायां पुनःश्रुतौ संदेहे श्रुतिर्द्विदेवतार्था स्याद् यथाऽनभिप्रेतस्तथाऽऽग्नेयो दर्शनादेकदेवते ॥ ४३ ॥

भाष्यम्— अपि वेति पक्षव्यावृत्तिः । नैतत् कर्मान्तरचोदनेति । अनुवाद आग्नेयस्य विहितत्वात् । विहितो हि असौ उभयत्र 'यदाग्नेयोऽष्टाकपालोऽमावास्यायां पौर्णमास्यां चाच्युतो भवति' इति । ऐन्द्राग्नस्य भवति विधिः, उभयत्र अविहितत्वात् । स यत्र न प्राप्नोति, पौर्णमास्यां ऐन्द्राग्नविधानार्था एषा श्रुतिः । यथा अनभिप्रेतः, तथा आग्नेयः उच्चरितः । विधानं सोमयाजिन । तस्य दर्शनं च 'आग्नेय चतुर्थो भवति' इति । तथा साकंप्रस्थायीये 'अग्नेयमामावास्या मध्यर्दं आग्नेयेन पुरोडाशेन' इति ।

विधिं तु बादरायणः ॥ ४४ ॥

भाष्यम्— तुशब्दः एतमपि पक्षं व्यावर्तयति । नैतदेवम् । आग्नेये अनुवादः ऐन्द्राग्ने विधिरिति । उभयोः कालविधिः स्यात् । कुतः ? बादरायण आचार्यो मन्यते स्म, प्रागपि सोमयागात् सान्नाय्यविधिरिति । असोमयाजिनोऽपि सान्नाय्यं श्रूयते, तद् संनयेदिति । तथा 'सर्वेद स्याद्गुर्णोरायनाः सान्नाय्यमेवासोमयाजिनः' । तस्मात् कालार्थः संयोग इति ।

प्रतिषिद्धविज्ञानाद्वा ॥ ४५ ॥

भाष्यम्— वाशब्दः पक्षं व्यावर्तयति । नैतदस्ति, कालविधिरिति । नाप्यधिकयोः कर्मणोरुत्पत्तिः, न वा आग्नेयस्यानुवादः, ऐन्द्राग्नस्य विधिः । किं तर्हि उभयो रनुवादः । कथम् ? सोमयाजिनः सान्नाय्यविधानार्थं एतद्वाक्यम् । अतो नैन्द्राग्नस्यापि विधिः । भिद्येत हि तदा वाक्यम् । एवमभिसंबन्धः क्रियते असोमयाजिनः पुरोडाशावेतौ, यौ प्राप्तौ, सोमयाजिनः सान्नाय्यमपरमपीति । पुरोडाशाभ्यामेव असोमयाजिनं याजयेत् यावेतौ आग्नेयश्चैन्द्राग्नश्च, सान्नाय्येन सोमयाजिनमिति, एकमेकेन वाक्येन सोमयाजिनः सान्नाय्यं विधीयते, अपरेणापि वाक्येन असोमयाजिनः । तस्मादुभयोरपि अनुवाद इति ।

तथा चान्यार्थदर्शनम् ॥ ४६ ॥

भाष्यम्— अन्यार्थोऽपि चैतमर्थं दर्शयति, न कर्मान्तरे इति । कथम् ? 'चतुर्दश पौर्णमास्यामाहुतयो हूयन्ते, त्रयोदशामावास्यायाम्' इति । कर्मान्तरे च तौ अभ्यधिका आहुतयो भवेयुरिति ।

सोम— उपांशुयाजाभावे चतुर्दशसंख्याभावेऽपि इह असोमयाजिनः सान्नाय्याभावः सोमयाजिनः पुरोडाशाभावो वा इत्युपधानात् संगतिः । सूत्रार्थस्तु— पुरोडाशाभ्यामेव असोमयाजिनं इत्यविकृताना असोमयाजिना पुरोडाशयोः स्यादेवः, पुरोडाशयोः असोमयाज्यधिकारोपदेशः इति यावत् । वस्तुनित्वात् असोमयाजिन एव श्रुतत्वात् । यथा 'वैश्वस्तोमेन यजेत' इत्यत्र वैश्यत्वेन श्रुतत्वात् तस्यैवाधिकारः इति ।

वि— 'सप्त पक्षाः (१) पुरोडाशाभ्यामित्येतद्विधिकारिणः । शेषः स्यात् वस्तुतेर् (२) मैवं कालस्य नित्यत्वबाधनात् ॥ कर्मान्तरविधिर् (३) मैवं प्रत्यभिज्ञाकारतः । निर्जर्येण विधिर् (४) मैवमाकस्मात् स्वार्थवर्जनात् ॥ कालस्यास्तु विधिर् (५) मैव स्वयमाप्तः प्रवृत्तः । ऐन्द्राग्नेकविधिर् (६) मैवं वैपरीत्यस्यैवकारतः ॥ कालो लाघविकोऽप्यस्तु स्वार्थव्यावेति चेत् (७) न तत् । स्तुत्या विध्येकवाक्यत्वात् साध्यवाद्यानुवादता ॥' (अत्र पूर्वं पूर्वं पक्षं निरस्य उत्तरोत्तरपक्षस्य निवेशः । सप्तमः पक्षश्च सिद्धान्तः ) ।

भाट्ट— दर्शपूर्णमासयोः 'नासोमयाजी संनयेत्' इत्यसोमयाजिनः सान्नाय्यपर्युदासः श्रुतः । तच्छेषतया च 'पुरोडाशाभ्यामेवासोमयाजिनं याजयेत् यावेतावाग्नेयश्चैन्द्राग्नश्च' इति श्रुतम् । सोऽयं पर्युदासविधेरर्थवादः । ऐन्द्राग्नस्य 'ऐन्द्राग्नमेकादशकपालं निर्वपेदमावास्यायामसोमयाजी' इति सान्नाय्याभाव एव विहितत्वादौचित्येन स्तुत्युपपत्तेः । यद्वा विधित्वाद कीदृश इति चिन्त्यते । तत्र पुरोडाशाभ्यामेव असोमयाजी अभिक्रियते न सान्नाय्येनेति प्रथमः पक्षः । पर्युदासविधिना एवास्यार्थस्य सिद्धेः 'तद् संनयेत्' इति शास्त्रान्तरवचनेन असोमयाजिनोऽपि सान्नाय्यविधानात् पुरोडाश-

सोमयाजी एवाधिक्रियते, न सोमयाजीति द्वितीयः। सोमयाजिनः सान्नाय्याभावप्रसङ्गात्, सान्नाय्यस्य सोमयाजिनो निषेधेन च तदभावविहितैन्द्राग्नस्य सोमयाजिनः प्रवृत्त्यभावात् एतत्पक्षानुपपत्तेः कर्मान्तरं विधीयते इति तृतीयः। कर्मान्तरत्वे प्रमाणाभावात् एवकारश्रवणाच्च तदनुपपत्तेः यागविधिरिति चतुर्थः। फलश्रवणात् यागतः प्राप्तत्वाच्च एतत्पक्षस्यापि अनुपपत्तेः असोमयागकाले पुरोडाशाविति कालविधिरेव श्रेयानिति पञ्चमः। तदपि ऐन्द्राग्नस्य असोमयागकाले एव प्राप्तत्वात् आग्नेयस्य च असोमयागकालविधौ सोमयाजिनः प्रतिषेधापत्तेः अच्युतवाक्यावगतसर्वदाकालत्वबाधापत्तेः अर्थवाद एवायं इत्यौदुम्बराधिकरणसिद्धमिति कृत्वाचिन्तोद्घाटनम्। केषु चित्पक्षेषु आग्नेयस्य असोमयागकालबाधाय आक्षेपयोगः।

मण्डन—'अभिक्तो न पुरोडाशौ।' १५.

शंकर—'प्रागेव सोमादैन्द्राग्नौ।' १६.

* दर्शपूर्णमासयोः 'आग्नेयोऽष्टाकपालः' अत्र आग्नेयशब्दो न कर्मनामधेयम्, किन्तु देवताविधायकः। आग्नेयाधिकरणम्। वि. १।४।७. * दर्शपूर्णमासयोः आग्नेयोऽष्टाकपालः। तत्र निगमेषु अग्नेरभिधानं विधिगतेनैव अग्निशब्देन, नान्येन शुच्यादिना। विधिशब्दाधिकरणम्। के. १०।४।१२।२३–२४. * दर्शपूर्णमासयोः 'आग्नेयोऽष्टाकपालोऽमावास्यायां पौर्णमास्यां चाच्युतो भवति' इति विधाय पुनरुच्यते 'आग्नेयोऽष्टाकपालोऽमावास्यायां भवति' इति। तत्र आग्नेयस्य न द्विरभ्यासः, पुनःश्रुतिस्तु ऐन्द्राग्नस्तुत्यर्था। भा. २।३।१४।२७–२९, * दर्शपूर्णमासयोः आग्नेयः पुरोडाशः उपांशुयाजः अग्नीषोमीयः पुरोडाशः ऐन्द्रं दधि ऐन्द्रं पयः आघारौ आज्यभागौ स्विष्टकृत् पत्नीसंयाजाः (इति यागा भवन्ति)। तत्र पयोऽन्तानि प्रधानानि आघारादीनि आरादुपकारकाणि। २।२।३।३–८. * दर्शपूर्णमासयोः आग्नेयं अवदाय हुत्वा पश्चात् अग्नीषोमीयादेः अवदानहोमौ इति अवदानस्य प्रदानान्तानुसमयः। अवदानादिप्रदानान्तानुसमयन्यायः इत्यत्राधिकरणम्। वि. ५।२।४, * दर्शपूर्णमासयोः 'आग्नेयं चतुर्धा करोति' इति चतुर्धाकरणं आग्नेयस्यैव, न तु ऐन्द्राग्नाग्नीषोमीययोः। आग्नेयचतुर्धाऽधिकरणन्यायः। ३।१।१५. * दर्शपूर्णमासयोः आग्नेयस्य अनुवाक्या 'अग्निर्मूर्धा दिवः' इति। मा. ८।२।१६।३१. * दर्शपूर्णमासयोः आग्नेयस्य पुरोडाशस्य अध्वरकल्पष्टयाग्नेयस्याष्टाकपालस्य विकारः, उपांशुयाजस्य च सारस्वतमाज्यं विकारः। वि. ५।१।१०. * दर्शपूर्णमासयोः आग्नेयस्य प्रयाजशेषेणाभिघारणं प्रथमं मुख्यक्रमात्, ततः सान्नाय्यस्य। के. ५।१।७।१४. * दर्शपूर्णमासयोः आग्नेयस्य प्राथम्यं नाग्नीषोमीयस्य, ब्राह्मणपाठस्य अन्यथात्वेऽपि (तैत्त. २।५।२) होत्राध्वर्यवयाजमानकाण्डेषु आग्नेयमन्त्रस्यैव प्राथम्यात्। मन्त्रपाठस्य ब्राह्मणपाठापेक्षया बलवत्त्वात्। वि. ५।१।९. * दर्शपूर्णमासयोः आग्नेयाग्नीषोमीयपुरोडाशयोः मुष्टिकपालोपधान–अवदानेषु समुदायानुसमयः। समुदायानुसमयन्यायः। भा. ५।२।३।४, * दर्शपूर्णमासयोः आग्नेयाज्यभागः आरादुपकारकः। आग्नेयाज्यभागन्यायः। १०।१।८।१६–१८, * दर्शपूर्णमासयोः आग्नेयादीनां प्रधानानामेकदेशकालकर्तृकत्वम्। ११।१।१। १–२, ४–७, * दर्शपूर्णमासयोः आग्नेयादीनां समुदितानामेकः स्वर्गः फलम्। तन्त्रन्यायः। ११।१।१।१–४.

☙ दर्शपूर्णमासयोः आग्नेयादिप्रधानभेदेऽपि देशकालकर्तॄणामेकत्वात् आघाराद्यङ्गानां तन्त्रेणानुष्ठानम्॥

प्रधानकर्मार्थत्वादङ्गानां तद्भेदात् कर्मभेदः प्रयोगे स्यात्। ११।१।१०।५४॥

भाष्यम्— दर्शपूर्णमासयोः प्रधानानि आग्नेयादीनि, तेषामङ्गानि आघारादीनि। तेषु चिन्त्यते किं तान्यतन्त्र प्रधानस्य भेदेनाङ्गानां प्रयोगः, अथवा सर्वदा तन्त्रेणेति। अथ तत्र किं सूत्रम्? 'क्रतुवच्चानुमानेनाभ्यासे फलभूमा स्यात्' इति (११।१।७।२९)। तत्र कृत्स्नौ दर्शपूर्णमासौ उद्दिश्य कथा वृत्ता। इह तु तत्प्रधानं प्रति चिन्त्यते। किं प्राप्तम्? प्रधानकर्मार्थत्वादङ्गानां तद्भेदात् कर्मभेदः प्रयोगे स्यात्। अङ्गानां प्रयोगे कर्मभेदः स्यात्, क्रियाभेदः। तत्प्रधानस्य भेदेन अङ्गानां प्रयोगः। कुतः? प्रधानकर्मार्थत्वात्। प्रधानार्थत्वात् इत्यर्थः। प्रधानार्थेन हि अङ्गानि उपदिश्यन्ते। अङ्गवन्ति प्रधानानि

फलं स्युरिति । अङ्गसंबन्धे च प्रधानानां सहत्वं न विवक्ष्यते । नहि तत्र प्रधानानि विधीयन्ते । किं तर्हि ? अङ्गानि । न च अविधीयमानस्यार्थस्य गुणो विवक्षितो भवति । यथा ग्रहं संमार्ष्टीत्येकत्वम् । एवं चेत् एकैकस्य प्रधानस्य अङ्गैः संबन्धः कर्तव्यः । तानि यदि सकृत् क्रियेरन्, न विभागेन संबध्येरन् । यथा प्रायणीयोदयनीययोः एकादशिन्याः समाप्तेश्च संबन्धः कर्तव्य इत्युक्तम्, विधेरावृत्तिश्रुतिश्चाविशेषा । तस्मात् प्रतिप्रधानमङ्गभेदः ।

टुप्— ( ननु 'अनभ्यासो वा प्रयोगवचनैकत्वात्' इत्यत्र ( ११।१।७।३५ ) अङ्गानां सकृदनुष्ठानमुक्तम् । किमत्र चिन्त्यते ? अत आह— ) भावनया इतिकर्तव्यता करणमनुगृह्णती संबध्यते । भागो नोपकृतानाम् ( प्रधानानां फलभूतार्थिनाऽपि ) पुनरुपकर्तव्यमित्युक्तम् । इदानीं तु विचार्यते, किं आग्नेयादीनां तन्त्रेण इतिकर्तव्यता उपकरोति, उत भेदेनेति । ( तत्र ) भेदेन इति ब्रूमः । कथम् ? आग्नेयादीनां सर्वेषां ( तावत् ) इतिकर्तव्यता उपकरोति । उपकार्यवेलायां च प्रधानभूतानां तेषां साहित्यमविवक्षितम् ( उद्देश्यगतत्वात् ) । तस्मात् एकैकस्य ( एव उपकरोति, न संहतानां इति पूर्वः पक्षः । सिद्धान्तस्तु— ) एककालकर्तृकत्वं वदति अङ्गप्रधानानाम् । तेन अवान्तरप्रमाणविशेषाभावात् सकृदेव प्रयुक्ता उपकरोति । तस्मात् तन्त्रमङ्गानामनुष्ठानम् ।

क्रमकोपश्च यौगपद्ये स्यात् । ५५ ॥

भाष्यम्— प्रधानानि च क्रमवन्ति । तानि च यथाक्रमं साङ्गानि कर्तव्यानि । तत्र यदि तन्त्रमङ्गानि स्युः, ततः अकृत्वा आग्नेयं साङ्गं अग्नीषोमीयः प्रक्रान्तः स्यात् । तथाच प्रधानानां क्रमकोपः स्यात् । अथ तु भेदः, ततः साङ्गमाग्नेयं समाप्य अग्नीषोमीयः साङ्गः प्रक्रान्तः क्रियते इति नास्ति क्रमकोपः । अपर आह, यदि तन्त्रं भवेयुरङ्गानि, ततो यावत् तनूनपात् आग्नेयस्य उपकरोति, तावत् समिधः अग्नीषोमीयस्य उपकर्तव्यम् । स एष उपकारक्रमकोपः ( कोपः विरोधः ) । अपिच अङ्गारोहणादीनि संस्पर्शादीनि ( च ) प्रतिप्रधानं भिद्यन्ते । तैश्च आग्नेयादीनां अवैलक्षण्यं भविष्यति ।

तुल्यानां तु यौगपद्यमेकशब्दोपदेशात् स्याद्, विशेषाग्रहणात् । ५६ ॥

भाष्यम्— तुशब्दः पक्षान्तरं परिगृह्णाति । न चैष पक्षः श्रेयान्, भेदः इति । किं तर्हि ? यौगपद्यं तन्त्रप्रयोगः स्यात् । सकृदेव प्रयुक्तानि अङ्गानि सर्वैः प्रधानैः युगपत् संबध्यन्ते । तुल्यानां एकशब्दोपदिष्टानां च देशं कालं प्रति विशेषाग्रहणात् । इमानि चत्वारि देशतः कालतश्च तुल्यानि 'दर्शपूर्णमासयोर्यज्ञक्रतोश्चत्वार ऋत्विजः' 'समे दर्शपूर्णमासाभ्यां यजेत' 'पौर्णमास्यां पौर्णमास्या यजेत' 'अमावास्यायाममावास्यया यजेत' इति । प्रधानैश्च सह अङ्गानां एकदेशकालकर्तृकत्वं वक्ष्यति 'अङ्गानि तु विधानत्वात् प्रधानेनोपदिश्येरन्' इत्यत्र । एकेन च शब्देन प्रधानानि फलं प्रति उपदिष्टानि 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' इति । किमतः ? अतः तेषां फले संभूयकारित्वम् । तेन स्वर्गकामस्य सर्वेषां युगपच्चिकीर्षा, नैकशः । सर्वचिकीर्षया तु आघारादीनां क्रियमाणानां तुल्यकर्माधीनां न गम्यते विशेषः कस्यैतानि आग्नेयस्य अग्नीषोमीयस्य चेति । सर्वेषां च गृह्यन्ते । तस्मात् सर्वार्थानि भवन्ति । तस्मात् अनावृत्तिः ।

ऐकार्थ्यादव्यवायः स्यात् । ५७ ॥

भाष्यम्— यत्तु 'क्रमकोपश्च यौगपद्ये स्यात्' इति, तत्र ब्रूमः । ऐकार्थ्यात् अव्यवायः स्यात्, न क्रमकोपः । कुतः ? ऐकार्थ्यात् । संभूयकारीणि एतानि इत्युक्तम् । तेषां सह क्रिया, नैकशः । नहि तत्र एकेन कृतेन कश्चिदर्थः । एकसंबन्धक्रियायां आनुपूर्व्यं स्यात् । तस्माच्च तेषां प्रयोगे क्रमः, कुतः क्रमकोप इति । यच्च उपकारे क्रमकोप इति, तत्रापि न आघारः क्रमेण एव प्रधानेषु उपकरोति । यत् कारणं तस्मिन् काले प्रधानान्येव न सन्ति । यदा तु सर्वाण्यङ्गानि कृतानि, तदा तदन्त्यापूर्वाणि संभूय प्रधानेषु उपकुर्वन्ति । अङ्गानामपि हि संभूयकारित्वमुक्तम् 'अर्थैकत्वादेकवाक्यम्' ( ११।१।२।६ ) इति । तस्मादुपकारेऽपि नास्ति क्रमकोपः ।

तथा चान्यार्थदर्शनं कामुकायनः । ५८ ॥

भाष्यम्— तथा च अन्यार्थदर्शनं भवति यथा न्याय उपदिष्टः इति कामुकायन आचार्यो मन्यते स्म ।

किं पुनस्तत् । 'चतुर्दश पौर्णमास्यामाहुतयो हूयन्ते, त्रयोदश अमावास्यायाम्' इति । यदि आवृत्तिः स्यात् न त्रयोदश चतुर्दश वा व्यवतिष्ठेरन् ।

तन्न्यायत्वादशक्तेरानुपूर्व्यं स्यात्, संस्कारस्य तदर्थत्वात् ॥ ५९ ॥

भाष्यम्— यत्तु 'संस्पर्शवत् आरादुपकारिणामपि आवृत्तिरस्तु' इति, तत्र ब्रूमः । स हि न्याय: 'संभूय-कारिणा सहक्रिया' इति । तन्न्यायेन सर्वैव सहक्रिया । अशक्तेस्तु सर्वसंस्पर्शेषु आनुपूर्व्यं स्यात्, भेदेन क्रिया । न शक्यते एकस्मात् अङ्गारापोहनेन सर्वेषां पाकः कर्तुम् । न च एकस्मिन् पुरोडाशे प्रथिते सर्वे प्रथिता भवन्ति । संस्कारस्य तदर्थत्वात्, संस्कारोऽयं पाकार्थो विधीयते । तत एवं प्रत्यक्षोपकारिणः प्रति-प्रधानमावृत्तिः स्यात् । अन्यथा याग एव न संवर्तेत ।

असंसृष्टोऽपि तादर्थ्यात् ॥ ६० ॥

भाष्यम्— असंसृष्टोऽपि आघारादिः प्रति-प्रधानमावर्तेत । कुतः ? तादर्थ्यात् । यस्य समीपे कृतः, तदर्थं इति गम्यते विशेषः । आघारादीनि आज्य-भागान्तानि आग्नेयस्य, स्विष्टकृदादीनि अग्नीषोमीयस्य इति गम्यमाने विशेषे भेदः । तस्मात् उपांशुयाजादीनां समीपे प्राक् आघारादीनि, ऊर्ध्वं स्विष्टकृदादीनि कर्तव्यानि । एवं च संस्पर्शिभिः इतरेतरमवैलक्षण्यं भविष्यति । (अत्र यद्यपि सूत्रे भाष्यारम्भे च असंसृष्टः इति पाठः, अस्मदीये मीमांसादर्शनेऽपि तथैव, तथापि भाष्यान्ते 'संस्पर्शिभिः' इत्युक्तत्वात् 'असंस्पृष्टः' इत्येव पाठ आवश्यकः । मिनल्करीयेऽपि सूत्रभाष्ययोः असंस्पृष्टः इत्येव, नि. शा. मु. प-संपादक । पं.) ।

विभवाद्वा प्रदीपवत् ॥ ६१ ॥

भाष्यम्— यदुक्तं 'यस्य संनिधौ क्रियन्ते, तस्यैतानि इति गम्यते विशेष, तस्मात् तदावृत्तिः' इति, नैतत् युक्तम् । कुतः ? विभवात् । विभविष्यन्ति एतानि एकस्यापि संनिधौ क्रियमाणानि सर्वेषामुपकर्तुम् । प्रदीपवत् । तद्यथा प्रदीपः एकस्मिन् प्रदेशे भुञ्जानानां ब्राह्मणानां एकस्य संनिधौ प्रज्वलितः सर्वेषामुपकारं करोतीति । तस्मादनावृत्तिः ।

अर्थात्तु लोके, विधितः प्रतिप्रधानं स्यात् ॥ ६२ ॥

भाष्यम्— उपवर्णितापरिहारः पूर्वं न कृतः, इति स तावत् वर्ण्यते । यदुपवर्णितं प्रदीपवत् इति । तद-युक्तम् । अर्थात् लोके प्रदीपस्य सकृदसकृद्वा क्रिया । यदि सकृत् कृतः सर्वं प्रकाशयति, सकृत् क्रियते । अथ न प्रकाशयति, ततः असकृत् । ततश्च अस्य प्रत्यक्ष-सामर्थ्यम् । अथेह विधितः उपकारः अनुपकारो वा गम्यते, न प्रत्यक्षेण । न चास्ति विधानं 'अस्योप-करोति' इति । संनिधानात् विशेषग्रहणात् गम्यते 'यस्य संनिधौ प्रयुक्तः, तस्योपकरोति' इति । तस्मादावृत्तिः ।

सकृदिज्यां कामुकायनः, परिमाणविरोधात् ॥ ६३ ॥

भाष्यम्— अथ यदुक्तम् 'सकृदिज्यां कामुकायन आचार्यो मेने चतुर्दश त्रयोदश इत्याहुतिपरिमाणस्य विरोधात्' इति, तस्य कः परिहारः ? आभाषाऽन्तं सूत्रम् ।

विधेस्त्वितरार्थत्वात्सकृदिज्या श्रुतिव्यतिक्रमः स्यात् ॥ ६४ ॥

भाष्यम्— विधीयते इति अर्थे विधिशब्देनोच्यते । अङ्गस्य इतरार्थत्वात् । यदा एतत् स्थितम् 'यत्संनिधौ यत् कृतम्, तदर्थमेव तत्' इति, तदा आवृत्या भवितव्यं प्रयोगे । तत्र चतुर्दश त्रयोदश इत्याहुतिसंख्या नोपपद्यते । आहुतिविषयस्तु चतुर्दश त्रयोदश । तेषां लक्षणया वचनमुपपद्यते । चतुर्दश पौर्णमास्या आहुति-विषयः, त्रयोदश अमावास्यायामिति । नैतत् संख्याविधा-नम्, प्रथमेनैव संख्यायाः प्राप्तत्वात् । अनुवादस्तु अयम् । अनुवादश्च लक्षणया उपपद्यते । विहितस्य च भवति । आहुतिविधीनां च इयं संख्या विहिता, नाहुतीनाम् । तस्मात् तेषामनुवादः ।

विधियन् प्रकरणाविभागे प्रयोगं बादरायणः ॥ ६५ ॥

भाष्यम्— तन्त्रेण प्रयोगं बादरायणो मन्यते स्म । कुतः ? प्रकरणाविभागात् । सर्वेषां प्रधानानां अवि-भक्ता प्रक्रिया संभूयकारित्वात् इत्युक्तम् । तत्र पौर्णमास्यां प्रति न गम्यते विशेषः । यत्तु संनिधिसंयोगेन विशेष-

ग्रहणमुक्तम्, तदयुक्तम् । किं कारणम् ? विशेषो यः संनिधिकृतः, स प्रकरणेन बाध्यते । विधिवत् । यथा विधौ तुल्यत्वात् प्रकरणस्य सर्वार्थानि अङ्गानि विज्ञायन्ते, न यस्य संनिधौ तदर्थानि, क्रमस्य प्रकरणेन बाधितत्वात् । अपिच एकेन संनिधानं अविशेषको हेतुः । यदाऽपि सर्वार्थाः, तदाऽपि एकस्य कस्यचित् अवश्य संनिधौ कर्तव्याः । तस्माच्च विशेषः संनिधेः एकान्ततः शक्यः अवधारयितुम् । संतत्येन प्रयोगः । बादरायणग्रहणं कीर्त्यर्थम्, नैकीयमतार्थम् ।

क्वचिद् विधानादिति चेत् । ६६ ॥

भाष्यम्— नैतद् युक्तं सहत्वं क्रियेति । कुतः ? क्वचित् सहत्वं आहत्य विधीयते । 'सहावघ्नन्ति सह पिंषन्ति' ( इति ) । तत् अनावृत्तौ सर्वतः प्राप्ताया परिसंख्यार्थं भवति 'इहैव सहत्वम्, नान्यत्र' इत्युच्यते ।

न, विधेश्चोदितत्वात् । ६७ ॥

भाष्यम्— न तत्र परिसंख्या युज्यते । प्राप्तस्य पुनर्वचनं परिसंख्यार्थं भवति । न चेह सहत्वं प्राप्तम् । कुतः ? भेदेन निर्वापस्य चोदितत्वात् । आग्नेयाग्नी-षोमीययोः भेदेन निर्वापस्तुक्तः । तयोर्भेदेनैव अवहनन-पेषणे प्राप्नुतः । तत्रावश्यं विधेयं सहत्वम् । तस्माच्च क्वचित् सहत्वविधानात् अन्यत्र भेदेन क्रिया विज्ञायेतेति ।

प्रभा— उपोद्घातसङ्गत्यानुप्रसक्तादि गतम् । इदानीं लक्षणार्थं तन्त्रावापं विचारयामः । तत्र 'भेदेन विनि-युक्तत्वाद् भेदेनैव क्रिया भवेत् । कथम्भावस्य भिन्नत्वाद् भेदेन विनियोगधीः ॥' इति प्राप्ते, अभि-धीयते । 'सत्यं प्रत्येकमङ्गानां विनियोगस्तथापि तु । विधानवदनुष्ठानं सकृदेवोपकारकम् ॥' तस्मात् एकदेशकालकर्तृणां तन्त्रमङ्गानि ।

सोम— सूत्रार्थस्तु— 'अङ्गानां प्रधानार्थमनु-ष्ठेयत्वात् प्रधानभेदे च सति प्रयोगद्वयामनुष्ठानभेदः स्यात् इति ।

वि— 'प्रत्यङ्गि कार्याण्यङ्गानि तन्त्रेणोताङ्गिनो यतः । एकैकस्योपकार्यत्वं तस्मात् प्रत्यङ्ग्यनुष्ठितिः ॥', विधानवदनुष्ठानं सकृदेवोपकारकम् । तद् देशकाल कर्तृणामेकत्वाद्वर्तकादिवत् ॥' नर्तको यथा सर्वेषां प्रेक्षकाणां युगपत् सुखं निर्वर्तयति तद्वत् ।

भाट्ट— यत्रानेकानि प्रधानानि पृथगुत्पन्नानि एक-फलार्थत्वेन समुच्चयेन विनियुज्यन्ते, तत्र सत्यपि एक-विनियोगविधिविषयत्वे उत्पत्तिविधिभेदेन प्रयोगविधि-भिन्न एव । विशेषतश्च आग्नेयादौ उत्पत्तिवाक्येष्वेव प्रयोगान्तर्विधानश्रवणात् च । अतश्च प्रधानप्रयोग-विधिविधेयानामङ्गानामपि भेदेनैवानुष्ठानम् । न चैवं 'पौर्णमास्यां पौर्णमास्या यजेत, अमावास्यायाममा-वास्यया यजेत' इति वाक्यद्वयवैयर्थ्यापत्तिः, आग्नेयादि-त्रिकस्य विभिन्नपौर्णमास्यामपि अनुष्ठानप्रसक्तौ तद्व्य-च्छित्तये पौर्णमास्येकत्वविधानेन अर्थवत्त्वात् । तेन एक-स्यामेव पौर्णमास्यां अन्वाधानादि ब्राह्मणतर्पणान्तं आग्नेयप्रयोगं समाप्य अग्नीषोमीयस्य तु कार्यः । अस्तु वा विनियोगविध्येकत्ववशेनैव प्रयोगविधेरपि एकत्वं दर्शपूर्णमासादिषु च 'पौर्णमास्या पौर्णमास्या' इत्यादि-नैव प्रयोगद्वयविधिः, तथापि एकस्यापि प्रतिप्रधानं गुणवृत्तिन्यायेन प्रधानानामपि निर्वापादिसंनिपत्यो-पकारकत्वात् प्रतिप्रधानं भेदेनैवानुष्ठानम् । अत एव आरादुपकारकाङ्गसाधारण्येन सर्वत्र आवृत्तिप्रसक्तौ 'सहा-वघ्नन्ति, सह पिंषन्ति' इत्यनेन अवघातादौ सहत्वविधि-रुपपद्यते । युक्तं चैतत् । अपूर्वस्य फलसाधनत्वेन आग्ने-योत्पत्तिवाक्योत्पन्नया प्रयाजादिजन्यापूर्वेणाग्नेयस्य आश्रयत्वेन अग्नीषोमीयोपकारार्थं पृथगनुष्ठानस्य अवश्य-म्भावात् । अतः प्रतिप्रधानं भेदेनैवाङ्गानि । इति प्राप्ते, सोत्पत्तिविधिभेदेन प्रयोगविधिभेदः, अपि तु लाघवात् विनियोगविध्येकत्वेन एकस्यैव प्रयोगविधेः अवान्तर विशेष श्रवणे सर्वत्र कल्पनम् । अत एव दर्शपूर्णमासादौ यत् 'पौर्णमास्यां पौर्णमास्या यजेत' इत्यादिविशेषश्रवणम्, तत्र सत्यपि पर्णमेकस्मिन् विनियोगविधौ प्रयोगद्वय सिद्ध्यर्थमेवेति वक्ष्यते । न तु एतावता पर्ण्यां प्रधानानां पद् प्रयोगविधयः । उत्पत्तिवाक्ये कालश्रवणस्य फल-संकल्पसिद्ध्यर्थत्वेनोक्तत्वात् । अतश्च न तत्र प्रयोगविधि-भेदादङ्गावृत्तिः । नापि एकप्रयोगः एव, प्रधानभेदात् । अनेकेषामपि प्रधानानां एकदेशकालकर्तृकत्वेन अनुष्ठा-

माणविशेषतया सकृत्कृतैरेवाङ्गैः उपकारसिद्धेः आवृत्तौ प्रमाणाभावात् । न च आनन्तर्यात् पश्चमाणविशेषत्वम्, प्रकरणेन सर्वाङ्गताबोधे आनन्तर्यस्य अनियामकत्ववत् सकृत्कृतस्यापि उपकारकत्वे तस्य अवर्जनीयतया नियामकत्वाभावात् । अत एव यत्र निर्वापादौ पश्चमाणविशेषता, तत्र भेद एव, तद्वचनादेव न सकृद्विधिः । अतः सिद्धं प्रधानभेदेऽपि भज्यमानविशेषत्वे अङ्गानां तन्त्रत्वम् । अत एव 'चतुर्दश पौर्णमास्यामाहुतयो हूयन्ते' इत्यादिलिङ्गमपि उपपद्यते । एवं च यदुद्देश्यकानुष्ठानविषयीभूतक्रियाजन्यं यदपूर्वम्, तन्नार्थं प्रति तदन्तिमोद्देश्यस्य कारणतेति कल्पनात् आग्नेयोपकारोत्पत्तिमात्रेण तन्त्रता । अपि तु अन्तिमप्रधानोपकारेणैवेति नाङ्गानां पृथक्करणापत्तिः । यत्र च एकमेव प्रधानम्, तत्र सर्वेषामिति तदुत्पत्त्यैव आशः । आवश्यकं चेदमन्तिमत्वदानं भवघातनियमादृष्टार्थम्, प्रयाजाद्यपूर्वस्य परमापूर्वोपयोगित्वेन तत्र अन्तिमन्यादेरविवक्षित वेऽपि क्षतिविरहात् । ११।१।८.

मण्डन— 'यागभेदेऽङ्गानि भवन्ति तन्त्रम् ।'

शंकर— 'कालादैक्येऽङ्गतन्त्रं च ।'

◉ दर्शपूर्णमासयो. आग्नेयकपालानि सर्वाणि उपधाय अग्नीषोमीयस्योपधानम् । अङ्गानां कपालानामुपधानं एक पदार्थः । (यत्तु प्रतिकपालं मन्त्रभेदाभावेन प्रत्येकमुपधानम् । सोम. ) । के. ५।२।३।४–५, ◉ दर्शपूर्णमासयोः आग्नेयपुरोडाशरूपं कृत्स्नं हविः न अग्नये दातव्यम्, किन्तु किञ्चिदवशेषयितव्यम् । सर्वप्रदानाधिकरणम् । ३।४।१४,३७–४१. ◉ दर्शपूर्णमासयोः आघारमाघारयति इति आघारशब्दः कर्मनामधेयं न गुणविधिः । भा. १।४।३।४, ◉ दर्शपूर्णमासयोः आघारमाघारयति इति न समुदायानुवादः, किन्तु अपूर्वस्य होमस्य विधायकः । २।२।५।१३–१६, ◉ दर्शपूर्णमासयोः आघारेऽपि मन्त्रान्तेन कर्मादिसंनिपातः एव । १२।३।१२।२८. ◉ दर्शपूर्णमासयोः आघारे ऋजुत्वसंततत्वोर्ध्वत्वानां धर्माणां भिन्नकार्यत्वात् समुच्चयः । न विकल्पः । समुच्चयबिन्दो अधिकरणम् । वि. १।१।२. ◉ दर्शपूर्णमासयोः आघारायं येयति-

क्रमकल्पयन्त्रोक्तं फलं कर्मार्थत्वात् आध्वर्यवम्, परस्या तु याजमानम् । ३।८।१५, ◉ दर्शपूर्णमासयोः आघार–आज्यभाग–प्रयाज–अनुयाजानां फलश्रुतिः फलार्थवादः, न तु फलविधिः । के. ४।३।१।१–३. ◉ दर्शपूर्णमासयोः आघारादयो न प्रधानम्, किन्तु अङ्गम् । इज्याऽधिकरणम् । वि. ४।४।११, ◉ दर्शपूर्णमासयोः आघारादीनामाग्नेयादीनां चाङ्गाङ्गिभावः । २।२।३, ◉ दर्शपूर्णमासयोः 'आज्यं विलापयति' इति आज्यशब्दो जातिवाची, तेन पूर्वाभ्यनाज्यं लौकिकम् । बर्हिराज्याधिकरणम् । १।४।८. ◉ दर्शपूर्णमासयोः आज्यग्रहणमन्त्राः 'पञ्चानां त्वा वातानाम्' इत्यादयः सुग्व्यूहनमन्त्राश्च अध्वर्युणा यजमानेन च उभाभ्यां कर्तव्याः, न केवलमध्वर्युणा एव । के. ३।८।७।१७. ◉ दर्शपूर्णमासयोः आज्यग्रहणमन्त्रस्य 'धाम नामासि' (ऋक्सं. १।३४) प्रतिग्रहणमावृत्तिः । भा. ११।४।१४। ४४–४५. ◉ दर्शपूर्णमासयोः आज्यभागौ यजति । तत्र आग्नेय आज्यभागः आराद्युपकारकः न प्रधानाग्निदेवतासंस्कारकः । के. १०।१।८।१६–१८. ◉ दर्शपूर्णमासयोः आज्यभागयोरनुवाक्ये 'वार्त्रघ्नी पौर्णमास्यामनूच्येते, वृधन्वती अमावास्यायाम्' । 'अग्निर्वृत्राणि, त्वं सोमासि' इति वार्त्रघ्न्यौ, 'अग्निः प्रत्नेन मन्मना, सोम गीर्भिष्ट्वा' इति वृधन्वत्यौ । वार्त्रघ्नी अधिकरणम् । वि. ३।१।१३. ◉ दर्शपूर्णमासयोः आतञ्चनं सोमाप्यधर्मः । ३।१।४. ◉ दर्शपूर्णमासयोः आध्वर्यवयाजमानकाण्डयोः द्विराम्नाता मन्त्राः उभाभ्यामपि प्रयोक्तव्याः । द्व्याम्नाताधिकरणम् । भा. ३।८।७।१७. ◉ दर्शपूर्णमासयोः 'आयुर्दा अग्नेऽसि' इत्यादिर्मन्त्रो याजमानः । वि. ३।८।७, ◉ दर्शपूर्णमासयोः आर्षेयवरणप्रवरणसमर्थस्यैवाधिकारः । आर्षेयाधिकरणम् । ६।१।११. ◉ दर्शपूर्णमासयोः आवाहनादिनिगदेषु त्यागे च विधिगतशब्देनैव देवताऽभिधानं कर्तव्यम् । विधिशब्दाधिकरणम् । भा. १०।४।१२।२३–२४. ◉ दर्शपूर्णमासयोः आहवनीये यजिचोदिताहुतीनां एकादशत्वं 'पञ्च प्रयाजाः, द्वावाज्यभागौ, स्विष्टकृत्, त्रयोऽनुयाजाः' इति । सु. पृ. ७४६. ◉ दर्शपूर्ण-

मासयोः 'आहार्यपुरीषां पशुकामस्य वेदिं कुर्यात्' इति पुरुषार्थम्, न क्रत्वर्थम् । मा. ४।१।२२ वर्णक २.

※ दर्शपूर्णमासयोरिज्याः इति न्यायः । ४।४।११।२९–३८॥ चतुर्थोपान्त्यन्यायेन दर्शपूर्णमासाख्यानामेव यागानां प्राधान्यार्थं नेतरेषामङ्गत्वात् समप्राधान्यसिद्धिः । सु. पृ. ७२१.

※ दर्शपूर्णमासयोरिज्याः प्रधानान्यविशेषात् । ४।४।११।२९॥

दर्शपूर्णमासयोः आग्नेयः पुरोडाशः, अग्नीषोमीयः पुरोडाशः, आग्नेयोपांशुयाजः, ऐन्द्राग्नः पुरोडाशः, दधिपयोरूपं सांनाय्यम्, आघारौ आज्यभागौ प्रयाजाः अनुयाजाः पत्नीसंयाजाः समिष्टयजुः स्विष्टकृत्, इति यागाः श्रुताः । ते किं सर्वे एव प्रधानभूताः, उत तत्र केचित् गुणभूताः इति विचारे पूर्वपक्षयति । दर्शपूर्णमासयोः यागयोः सामस्त्येन इज्याः यागाः तानि सर्वाण्येव प्रधानानि स्युः । अविशेषात् एतेषां स्वर्गफलकत्वस्य यागत्वस्य च समानत्वात् ।

अपि वाऽङ्गानि कानिचिद्, येष्वङ्गत्वेन संस्तुतिः, सामान्यो ह्यभिसंस्तवः । ३० ॥

दर्शपूर्णमासयो: आघाराज्यभागप्रयाजादयो यागाः आग्नेयादिवत् प्रधानमेव स्यात् उतान्यथा इति पूर्वपक्षे सति सिद्धान्तसूत्रमिदम् । न सर्वेऽपि दर्शपूर्णमासादिक्रतुषु वर्तमानाः सर्वे यागाः प्रधानम्, किन्तु कानिचित् आघारादियागाः अङ्गानि स्युः, न प्रधानम् । अपिवाशब्देन पूर्वपक्षव्यावृत्तिः । येषु यागेषु अङ्गत्वेन संस्तुतिर्भवेत् । 'चक्षुषी वा एते यज्ञस्य, यदाज्यभागौ' 'चक्षुषी वा एतौ यज्ञस्य, यदाज्यभागौ' इत्यादिः संस्तुतिः । हि यस्मात् अभिसंस्तवः अङ्गानां सामान्यः, सामान्यधर्मः, अङ्गानां सामान्यलक्षणं अभिसंस्तुतत्वं इत्यर्थः । अभिसंस्तवेन लभ्यते इदमङ्गमिति । तस्मात् आघाराज्यभागादयः यागा अपि अङ्गमेव, न प्रधानम् ।

तथा चान्यार्थदर्शनम् । ३१ ॥

सिद्धान्ते हेत्वन्तरमाह । 'प्रयाजेप्रयाजे कृष्णलं जुहोति' इति सोर्पयाजे कृष्णलविधानार्थं प्रयाजानुवादस्य अन्यार्थस्य कृष्णलविधानार्थस्य दर्शनं भवति । न च प्रधानस्यानुवादो भवति । तस्मात् कानिचिदङ्गानि, न सर्वे यागाः प्रधानानि ।

अविशिष्टं तु कारणम्, प्रधानेषु गुणस्य विद्यमानत्वात् । ३२ ॥

पूर्वपक्षी आह । तु–शब्देन सिद्धान्तपक्षव्यावृत्तिः । प्रयाजादीनि नाङ्गानि किन्तु प्रधानान्येव । तेषामङ्गत्वसिद्धयर्थं संस्तवरूपं यत् कारणं तु प्रधानेष्वपि आग्नेयादिषु अविशिष्टं समानमेव 'शिरो वा एतद्यज्ञस्य यदाग्नेयः' इत्यादिश्रुतेः । संस्तुताङ्गत्वरूपस्य गुणस्य प्रधानेष्वपि विद्यमानत्वात् । तस्मात् प्रयाजादयोऽपि प्रधानमेव ।

नानुक्तेऽन्यार्थदर्शनं परार्थत्वात् ।३३॥

सिद्धान्ते 'तथा चान्यार्थदर्शनं' इति यदुक्तम्, तत्र पूर्वपक्षी ब्रूते । प्रयाजादीनां अङ्गत्वबोधके वचने न्याये वा अनुक्ते सति अन्यार्थदर्शनं न अङ्गत्वस्य साधकम् । यत्तु दर्शितम् 'प्रयाजेप्रयाजे कृष्णलं जुहोति' इति, तत् परार्थम् । प्राकृतात् प्रयाजात् अन्यस्यैव प्रधानस्य अप्राकृतस्य विधानार्थं तत् । तस्मात् सर्वाणि प्रधानानि इति पुनः पूर्वपक्षः ।

पृथक्त्वे त्वभिधानयोर्निवेशः श्रुतितो व्यपदेशाच्च, तत्पुनर्मुख्यलक्षणं यत्फलवत्त्वम्, तत्संनिधावसंयुक्तं तदङ्गं स्याद्, भागित्वात् कारणस्याश्रुतश्चान्यसंबन्धः । ३४ ॥

पुनः प्राप्तं पूर्वपक्षं तुशब्दो व्यावर्तयति । न सर्वे यागाः समप्रधानानि । तत्र फलवन्ति प्रधानानि, इतराणि तु अङ्गानि । तत्र त्रिकद्वयं फलवत् आग्नेयोपांशुयाजाग्नीषोमीयागात्मकं त्रिकं पौर्णमासीसंज्ञकम् । ऐन्द्राग्नदधिपयोरूपं द्वितीयं त्रिकं अमावास्यासंज्ञकम् । दर्शपूर्णमासाभ्यां इति द्विवचनेन व्युत्क्रमेण तत्त्रिकयोर्निर्देशः कृतः । स्वर्गकाम इति पदेन च फलवत्त्वमुक्तम् । तदेतदाह, 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' इति श्रुतितः श्रवणात्, दर्शपूर्णमासाभ्यां इति द्विवचनेन व्यपदेशाच्च अभिधानयोः दर्श इति पूर्णमास इति नामधेययोः पृथक्त्वे भिन्ने त्रिकद्वये निवेशः प्रयोगः । यत् फलवत्त्वम्, तत् पुनः मुख्यलक्षणं मुख्यस्य प्रधानस्य लक्षणम् । तत् पुनः, तत्तु इत्यर्थः । अनेन फलवत्त्वं प्रधानलक्षण

मुक्तम् । विकृद्धं च तादृशम् । तस्मात्तदेव प्रधानम् । अथ अङ्गलक्षणमाह, तत्संनिधौ फलवत्संनिधौ यत् फलेन असंयुक्तम्, तत् अङ्गं स्यात् । फलवत्संनिधावफलं तदङ्गं इत्यर्थः । तादृशं च आघाराज्यभागादिकम् । तस्मात् तस्य प्राधान्यम्, किन्तु आङ्गम् । कारणस्य अङ्गत्वकारणस्य भागित्वात् । भाक्तो प्रधानं वचनम् । उक्तत्वात् अर्थयुक्तम् 'प्रकरणाविशेषात्ततोऽन्यत्वाच्चर्थित्वात्' ( ३।३।४।११ ) इत्यत्र इत्यर्थः । श्रुतश्च अन्यसंबन्धः प्रयाजादीना प्रधान-फलाद्यन्येन केनचित् फलेन सह संबन्धः न श्रुतः । एवं 'फलवत्संनिधौ अफलं तदङ्गम्' इति अङ्गलक्षणस्य उक्तत्वात् प्रयाजादीनां च अफलत्वात् अङ्गत्वमेव तेषां स्वीकार्यम्, न प्रधानत्वम् ।

गुणाश्च नामसंयुक्ता विधीयन्ते, नाङ्गेषूप-पद्यन्ते । ३५ ॥

सिद्धान्ते हेत्वन्तरपरं सूत्रम् । चकारः समुच्चये । 'चतुर्होत्रा पौर्णमासीमभिमृशेत्, पञ्चहोत्राऽमावास्याम्' इति अभिमर्शनादयो गुणाः नामसंयुक्ताः पौर्णमासी अमावास्या इति नामभ्यां संयुक्ता विधीयन्ते । ते च विधयः प्रधानेष्वेवोपपद्यन्ते नाङ्गेषु उपपद्यन्ते । तस्मा-दाघारादयः अङ्गमेव, न प्रधानम् ।

तुल्या च कारणश्रुतिरन्यैरङ्गाङ्गिसंबन्धः । ३६ ॥

पूर्वपक्षिणा यदुक्तम् 'अविशिष्टं तु कारणम्' इति तत् परिहरति । अन्यैः पुरुषावयवैः पूर्णमासस्य अङ्गानां आग्नेयादीनामवयवानां अभिमर्शनेः एवंरूपा कारणश्रुतिः, सा आग्नेयादीनां प्रधानत्वेऽपि तुल्या । यागावयवानां पुरुषावयवैः स्तुतिः आग्नेयादीनां प्रधानत्वेऽपि युज्यते इति भावः । सा च स्तुतिः 'शिरो वा एतद् यज्ञस्य यदाग्नेयः, हृदयमुपांशुयाजः, पादावग्नीषोमीयः' इति ।

उत्पत्तावभिसंबन्धस्तस्मादङ्गोपदेशः स्यात् । ३७ ॥

'अविशिष्टं तु कारणं०' इति सूत्रोक्तस्य समाधानं 'तुल्या च कारणश्रुतिः०' इति अव्यवहितपूर्वसूत्रेण यदुक्तम्, तस्यैव विशेषप्रतिपादनाय प्रवृत्तं सूत्रम् । योऽयं पौर्णमास्यङ्गानामभिसंबन्धः पुरुषाङ्गैः सह उक्तः, सः अभिसंबन्धः उत्पत्तौ ज्ञातव्यः । यथा जायमानस्य पुरुषस्य अग्रे शिरो जायते, मध्ये मध्यम्, पश्चात् पादौ, एवं आग्नेयः अग्रे, उपांशुयाजो मध्ये, अग्नी-षोमीयः पश्चादिति । तत्सामान्यादेषा स्तुतिः । तस्मात् अङ्गोपदेशोऽयं स्तुत्यर्थः स्यात् । न तेन आग्नेयादीनां प्रधानत्वहानिर्भवति ।

तथा चान्यार्थदर्शनम् । ३८ ॥

सिद्धान्ते हेत्वन्तरपरं अन्तिमं सूत्रम् । तथाच आग्ने-यादिप्राधान्ये आघारादीनां चाङ्गत्वे अन्यार्थदर्शनमपि भवति 'चतुर्दश पौर्णमास्यामाहुतयो हूयन्ते, त्रयोदशामा-वास्यायाम्' इति । पञ्च प्रयाजाः, द्वावाज्यभागौ, आग्नेयो-पांशुयाजाग्नीषोमीयास्त्रयः, त्रयोऽनुयाजाः स्विष्टकृच्चेति चतुर्दश पौर्णमास्याम् । पञ्च प्रयाजाः, द्वावाज्यभागौ, आग्नेयः, सानाय्यम्, स्विष्टकृत् इति त्रीणि, त्रयोऽनुयाजाः इति त्रयोदश आहुतयः अमावास्यायाम् । एवं सति आघारादयोऽपि यदि प्रधानं स्यात्, तदा तेषां दर्शे पौर्णमासे चाहुतिर्न स्यात् । अङ्गत्वे तु आहुतिः संभवति । एतस्मादन्यार्थदर्शनात् आघारादीनां अङ्गत्वमेव सिध्यति । के.

● दर्शपूर्णमासयोः इष्टे द्वे अनुयाज्ये पुरस्तादेका पश्चादपरा । वि. १०।७।१३. ● दर्शपूर्णमासयोः इडा-निगदगत. यजपतिशब्दः बहुयजमानके विकारे नोहि-तव्यः । यजपतिशब्दः न समवेतार्थाभिधायी । भा. ।९। २।१३।४०. ● दर्शपूर्णमासयोः इडाप्राशित्रादिभक्षाः प्रतिपत्त्यर्थाः । वि. १०।२।१९ । अत एव इडादिप्रतार्थ-मवत्तस्य नाशे तत्तदवत्तलोप एव । ६।४।१९, ● दर्शपूर्ण-मासयोः इडाभक्षः, प्राशित्रभक्षः, चतुर्धाकरणभक्षः, शंयुवाककालीनो भक्षश्चेति चतुर्णा भक्षणसिद्धये चत्वार उपहारा उपदिष्टाः । कृष्णलेषु तु ब्रह्मप्रियपाणां तेषामुप-हाराणां सद्भाव उक्तः । १०।२।४, ● दर्शपूर्णमासयोः इध्मः 'त्रीन् परिधीन्०' इत्यादिमन्त्रोपेताभिः क्रियाभिः सिध्यति । १०।२।१, ● दर्शपूर्णमासयोः 'इषे त्वा इति शाखां छिनत्ति, ऊर्जे त्वा इत्यनुमार्ष्टि' इति अर्थ-भेदेन वाक्यभेदात् मन्त्रभेदः । २।१।१५, ● दर्शपूर्ण-मासयोः उखाऽधिश्रयणं 'यस्त्वे चोखामधिश्रयति उखां चाधिश्रयति' इति द्वादशद्वंद्वगतं प्रथमं द्वंद्वम् । २।८।

१०, ● दर्शपूर्णमासयोः उपकारमपेक्षमाणयोः प्रयाजादिषु च उपकार्यमपेक्षमाणेषु अनिष्पन्नावधे एवोपकारे प्रकरणात् तादर्थ्यं प्रतीयते । तदन्यथाऽनुपपत्तिमात्रेणोपकारकल्पना । वा. ३।१।२।२ पृ. ६५८. ● दर्शपूर्णमासयोः उपभृति चतुर्गृहीतद्वयं विधेयम्, न तु अष्ट गृहीतमेकम् । चतुर्गृहीतद्वयाधिकरणम् । के. ४।१।१७। ४६–४८. ● दर्शपूर्णमासयोः उपला 'दृषच्चोपला च'। वि. ३।८।१० । 'दृषदुपलाभ्यां पिनष्टि' । ३।१।१९. ● दर्शपूर्णमासयो उपवीतं क्रत्वे प्रकरणे निविशते, न सामिधेनीष्वेव । के. ३।१।११।२१. ● दर्शपूर्णमासयोः उपवीतं दर्शपूर्णमासाङ्गत्वेन विहितम् । वि. ३।४।१, ● दर्शपूर्णमासयो उपवीतस्य प्राकरणिकाङ्गता । ३।१।११८, ● दर्शपूर्णमासयोः उपस्तरणाभिघारणे क्रियेते सूक्ष्माणां पुरोडाशावयवानां स्रुचि संसक्तिं निवारयितुम् । १०।२।१. ● दर्शपूर्णमासयोः उपस्तरणाभिघारणाभ्यां सह चतुरवत्तसंपत्तिः । उपस्तरणादिविधिन्यायः । भा. १०।८।१२।२९–३२. ● दर्शपूर्णमासयो. उपांशुयाजः अग्नीषोमीयपुरोडाशश्च इत्युभयं पौर्णमास्याम् । तत्र पाठक्रमस्य प्राबल्यात् आदौ पुरोडाशधर्माः, पश्चादाज्यधर्माः अनुष्ठेयाः । वि. ५।१।८. ● दर्शपूर्णमासयो. 'उपांशुयाजमन्तरा यजति' इति अपूर्वस्य यागस्य वाचकः शब्दः, ■ समुदायस्य । भा. २।२।४।९–१२. ● दर्शपूर्णमासयोः 'उपांशुयाजमन्तरा यजति' इति यजतिपदं विधायकम्, न तु अनुवादकम् । वि. २।२।४. ● दर्शपूर्णमासयो. उपांशुयाजे उपस्तरणाभिघारणयोरभावेऽपि हविषैव चतुरवत्तसंपत्तिः । उपांशुयाजशब्दे अधिकरणम् । भा. १०।८।१३।३३–३४, ● दर्शपूर्णमासयोः उपांशुयाजे देवता प्रकृतीनामन्यतमा । उपांशुयाजशब्दे अधिकरणम् । १०।८।१६।४९–५०, ● दर्शपूर्णमासयोः उपांशुयाजे ध्रौवाज्यमेव नियतम्, न यत्किञ्चित् । उपांशुयाजशब्दे अधिकरणम् । १०।८।१५।४७–४८. ● दर्शपूर्णमासयोः उपांशुयाजे विष्णुः प्रजापतिः अग्नीषोमौ इति त्रयाणां विकल्पः । उपांशुयाजशब्दे अधिकरणम् । वि. १०।८।१७. ● दर्शपूर्णमासयोः उपांशुयाजाख्यं ब्राह्मणेन सोमात् प्राग्यागीयोऽपि न कर्तव्यम्, प्राजापत्यं सौम्यं वा कर्तव्यम् । शा. ५।४।६।१९–२१, ● दर्शपूर्णमासयोः उलूखलम् । 'उलूखलं च मुसलं च' यथासुखम् । वि. ३।८।१० । 'उलूखलमुसलाभ्यामवहन्ति' इति तदुपयोगः । ३।१।१९. ● दर्शपूर्णमासयोः उलूखलमुसलयोः दृषदुपलयोश्च प्रोक्षणं अपूर्वप्रयुक्तमेव, न हन्तिपिषिप्रयुक्तम् । हन्तिपिष्यधिकरणम् । के. ९।१।१।१–२ ● दर्शपूर्णमासयोः ऋत्विजश्चत्वारः । ब्रह्मा अध्वर्युः होता आग्नीध्रश्चेति । वि ४।२।९, ● दर्शपूर्णमासयोः एकैकस्मिन् तद्गुणे देशकालकर्तृणां तन्त्रम् । आग्नेयादीनां प्रधानानां इत्याधिकरणम् । ११।२।१, ● दर्शपूर्णमासयोः एकैकस्मिन् सकृत्प्रयोगे भवेदु देशकालकर्तृणां तन्त्रम् । अङ्गप्रधानयो देशकाल-स्थितिसिद्धौ अधिकरणम् । ११।२।२. ● दर्शपूर्णमासयो एव वैश्वदेव सामिधेनीनामद्वयम् । गोदोहनाधिकरणम् । (इद वार्तिके द्रष्टव्यम् ।) भा. ३।६।३।१०. ● दर्शपूर्णमासयो. ऐन्द्राग्नायादर्थवेद्यतिक्रमणाकरणमन्त्रोक्तदेवतापामावरूपं फलं तथात् अन्तरेणैव निर्विघ्नकर्मसमाप्तिरूपावमानं फलम् । बर्हीन्याय. । नि. ३।८।१५, ● दर्शपूर्णमासयो . औपभृतसाम्यं प्रयाजानुयाजार्थम्, जौह्वं तु प्रयाजार्थमेव । ४।१।१६, ● दर्शपूर्णमासयोः औपभृताज्यस्य जुहूमानयन आनयनसंप्रयोजकम् । आज्यानयनाधिकरणम् । ४।१।१५ ● दर्शपूर्णमासयो. औपवसथ्येऽहनि आरण्यभोजनं आम्नातम् । तद् पुरुषार्थम् । आरण्यभोजनन्यायः । भा १२।१। १४।३०, ● दर्शपूर्णमासयोः औपवसथ्येऽहनि रात्रिजागरणं यज्ञाग्नीनां रक्षणाय अप्रमादार्थं वा अदृष्टार्थं वा । १२।१।८।१७, ● दर्शपूर्णमासयो. औपवसथ्येऽहनि व्रतं विहितं 'अग्ने व्रतपते ■ चरिष्यामि' इत्यादि । १२।१।११।२१, ● दर्शपूर्णमासयो. औषध–आज्य–सानाय्यधर्माः न सर्वे सर्वत्र कर्तव्याः, किन्तु प्रत्येकमेव । व्रीहिधर्मा यवेषु मन्त्रवर्जम् । ३।१।४।७–१०, ● दर्शपूर्णमासयो औषधधर्मा पूर्वं समाम्नातास्तत आज्यस्य, तत्र पाठक्रमेणैव तेषामनुष्ठानम्, न तु मुख्यक्रमेण आज्यधर्माणामादौ अनुष्ठानम् । ५।१। ८।१५. ● दर्शपूर्णमासयो. कपालं न पुरोडाशप्रयुक्तम्,

किन्तु श्रपणप्रयुक्तम् । पुरोडाशकपालन्यायः । वि. ४।१।११, दर्शपूर्णमासयोः कपाले भिन्ने 'भिन्ने जुहोति' इति होमः । ६।४।४. ॥ दर्शपूर्णमासयोः कपालेषु पुरोडाशस्य श्रपणं क्रियते, सौर्ये चरौ तु तन्न स्यात् । पे. १०।१।१७।५५.

॥ दर्शपूर्णमासयोः कपालादेरेकदेशभेदनादावपि प्रायश्चित्तम् ॥

अर्थसमवायात् प्रायश्चित्तमेकदेशेऽपि । ६।४।४।१०॥

भाष्यम्— स्तो दर्शपूर्णमासौ । तत्र आमनन्ति, 'भिन्ने जुहोति, स्कन्ने जुहोति' इति । तत्र संदेहः किं कृत्स्ने भिन्ने, स्कन्ने च प्रायश्चित्तम्, उतैकदेशेऽपि भिन्ने, स्कन्ने चेति । किं पुनः सर्वभिन्नं किमेकदेशभिन्नमिति । चूर्णीकृतमयोग्यं प्रयोजनाय, तत् कृत्स्नभिन्नम् । यच्छकले विगतेऽपि प्रयोजनसमर्थम्, तदेकदेशभिन्नमिति । किं प्राप्तम् ? एकदेशभिन्नेऽपि प्रायश्चित्तम् । कस्मात् ? अर्थसमवायात् । समवैति तत्र भेदनम् । एकदेशभिन्नमपि भिन्नमिति । एवं प्राप्ते निमित्ते, नैमित्तिकं कर्तव्यं भवति ।

टुप्— कृत्स्नभेदे प्रायश्चित्तम् । कुतः ? तस्य भिदुरद्रव्यस्य परस्परसंघर्षणात् अवश्यभाविनी क्रियानपि नाशाऽपनयः । तस्य अवर्जनीयत्वात् नित्यता प्रसज्यते । भिन्नमिति भिदिक्रियोपसर्जनीभूतम् ( भिदिक्रिया उपसर्जनीभूता यस्य तत् द्रव्यम् ) भिन्नया द्रव्यमभिधीयते । तदेव उपसर्जनं भवति, यत् कृत्स्नं व्याप्नोति । तस्मात् नैकदेशे भिन्ने होमः इति । एवं प्राप्ते, ब्रूमः । संघर्षणे 'संघृष्टम्' इति बुद्धिर्भवति, न 'भिन्नम्' इति । भेदनं कदाचित् भवति । तस्मात् एकदेशकृत्स्नभिन्नयोः उभयत्र भिन्नबुद्धेः संभवात् उभयत्रापि होमः । यदुक्तम् 'भेदनविशिष्टं द्रव्यं प्रधानम्' इति, उच्यते । विशेषणे एव निमित्तप्रत्यये जाते किमर्थं विशेष्यं यावत् गम्यते । अर्थात् द्रव्यं लक्ष्यते, न शब्दात् । तस्मात् भेदनेन उपजाते, होमश्च ( उपजायते एव ) इति ।

॥ स्यल्लोपे वैगुण्यात् तदर्थं हि । ११ ॥

भाष्यम्— कृत्स्नः पक्षं व्यावर्तयति । नानैकदेशेऽपि भिन्ने प्रायश्चित्तं स्यात् । विनष्टसंस्कारार्थं हि प्रायश्चित्तम् । कुतः ? एकदेशनष्टता प्रयोजनमस्ति, न होमेन । तेन संस्कृतेन प्रयोगः करिष्यते इति प्रायश्चित्तं क्रियते । न च तेन चूर्णीकृतेन प्रयोगः शक्यते कर्तुम् । तस्मात् प्रायश्चित्तमनर्थकम् । एकदेशभिन्नेन तु संस्कृतेन शक्यते प्रयोगः । तस्मादेकदेशभिन्ने प्रायश्चित्तं स्यादिति ।

टुप्— एकदेशभेदे एव होमः । कुतः ? 'भिन्ने' इति द्रव्यप्रधानो निर्देशः इत्युक्तमेव । भेदनेन द्रव्ये दोष उत्पन्नः, स होमेन प्रतिसंधीयते, निर्हृतदोषं च यागयोग्यं भवति । सकलभेदे तु अयोग्यत्वात् तदर्थं होमः सन् अनर्थकः स्यात् । भिन्ने इति सप्तमी द्वितीयाऽर्थे, भिन्नं द्रव्यं ( होमेन संस्कुर्यात् ) इति । एवं च वाक्येन होमस्य संबन्धः ( उद्देश्यसंबन्धः ), संनिपत्योपकारिता च । निमित्तत्वे प्रकरणेन संबन्धः, स दुर्बलः, आरादुपकारकः सन् असंयुक्तः उपकुर्यात् अयमपि दोषः ।

॥ स्याद्वा प्राप्तनिमित्तत्वादतद्धर्मो नित्यसंयोगान्नहि तस्य गुणार्थेनानित्यत्वात् । १२ ॥

भाष्यम्— स्याद्वा प्रायश्चित्तं कृत्स्नभिन्नेऽपि । कुतः ? प्राप्तनिमित्तत्वात् । प्राप्तं हि निमित्तं भेदनम् । प्राप्ते च निमित्ते नैमित्तिकं कर्तव्यम् । यदुक्तम्, नष्टसंस्कारार्थं प्रायश्चित्तमिति । नायं तस्य धर्मः । कुतः ? नित्यसंयोगात् । नित्यवत् होमः । अनित्यं हि भेदनम् । नहि भिन्नमनित्यस्य उपकर्तुं चोद्यते । यदि भिन्नं दर्शपूर्णमासयोरङ्गम्, नानित्यस्योपकारकम् । कुतः ? कदाचिदनित्यं नैव स्यात् । तत्र कथं तस्योपकारकं भवेत् । तत्र को दोषः ? न शक्यं नित्यस्योपकर्तुम् । तेन नित्यमुपकुर्यादिति वचनं अनर्थकम् एव । अथ नैमित्तिकम्, न दोषो भवति । तस्मादसंस्कारः एव । अभिन्नपक्षे यदा भिन्नम्, तदा होमः । यदा न भिन्नं तदा नैव होमो विधीयते । भवदीये पक्षे भवति दोषो नित्यानित्ययोरप्रसिद्धः संबन्ध इति । तस्मात् भिन्नमात्रे प्रायश्चित्तमिति ।

टुप्— कराल्मये होमे ( सति निमित्तसंयोगाभावात् ) अभूतनिमित्तत्वात् ( अदृष्टत्वात् ) दर्शपूर्ण-

मात्रापूर्वं निमित्तम् ( अनुष्ठापकम् )। यावत् दर्शपूर्णमासापूर्वं निमित्तम्, तावत् नैमित्तिकेन ( अनुष्ठाप्येन होमेन ) भवितव्यम्। ( कुतः ? ) निमित्तेन ( अपूर्वेण ) प्रयोजितत्वात् होमस्य। भेदनं च तत्र कदाचित् ( न तु नित्यम्। तथापि किम् ? इत्यत आह— ) तत्र उपकार्यस्य ( भिन्नस्य ) अनित्यत्वात् प्रयोजकस्य ( च अपूर्वस्य ) नित्यत्वात् नित्यानित्यसंयोगविरोधः। भेदनस्य ( तु ) निमित्तत्वे ( सति ) भिन्नेन ( निमित्तेन ) होमे प्रयुक्ते ( सति ) अपूर्वस्य तादर्थ्यम्, इत्यदोषः ( न विरोधः )। सप्तमी च निमित्तत्वेन यथाश्रुता ( भवति। संस्कार्यत्वे तु लक्षणा स्यात्। तस्मात् निमित्तमेव भिन्नम्, न संस्कार्यम्। पूर्वोक्तस्यैव व्यतिरेकमाह— ) निमित्ततादर्थ्ययोर्नित्यत्वात् अस्ति संबन्धः ( निमित्तमनुष्ठापकम्, तादर्थ्यमिति फलम् ) यथा जीवनं निमित्तं ( अग्निहोत्र— ) होमं प्रयुङ्क्ते, स ( च उपात्त— ) दोषोपघातार्थः। ( अत्र लिखिते 'यथा जीवनं निमित्तं पुरुषदोषश्च तत्र प्रायश्चित्तं यतं होमं प्रयुङ्क्ते स दोषोपघातार्थः' इति पाठः। परन्तु नायं सन्दर्भानुसारी ) तत्र जीवनस्य पुरुषदोषस्य च ( पूर्वोत्तरस्य ) विद्यमानत्वात् अविरुद्धः संबन्धः। द्वयोरपि ( प्रयोजकफलयोः ) अनित्ययोः अस्ति संबन्धः यथा ब्रह्महत्यादि अनित्यं निमित्तं पुरुषदोषश्च (अनित्यः), तत्र प्रायश्चित्तं ब्रह्महत्याप्रयुक्तं दोषनिर्घाताय च ( इति नास्ति विरोधः )। तस्मात् उपकार्ये ( फले प्रायश्चित्तादौ ) विद्यमाने अस्ति संबन्धः। इह ( तु ) उपकार्यं ( भिन्नम् ) कदाचित् ( प्रयोजकं तु अपूर्वं नित्यम्, इति विरोधः )। ( भाष्यं व्याचष्टे— ) न शक्यं नित्यस्योपकर्तुं इति होमो न शक्नोति नित्यमुपकर्तुम्, उपकार्यस्य ( भिन्नस्य नित्यम्— ) अभावात्। तेन नित्यमुपकुर्यात् ( इति वचनं प्रलाप एव इति भाष्यम्— ) इति दर्शपूर्णमासापूर्वं ब्रवीति। ( कथम् ? ) नित्यमुपकुर्यात् इति ( होमम्— ) प्रयुञ्जानम् ( अपूर्वं ब्रवीति भाष्यकारः इति )। तस्मात् ( तत्प्रयुक्तस्य नित्यार्थत्वानुपपत्तेः ) कपालविशिष्टं भेदनं निमित्तम्।

गुणानां च परार्थत्वाद् वचनाद् व्यपाश्रयः स्यात्। १२ ॥

भाष्यम्— असति वचने न गुणो गुणार्थो भवितुमर्हति। प्रकरणतः सर्वं प्रधानार्थं भिन्नमपि होमोऽपि। न च भिन्नः आधारभावेन उपदिश्यते। भिन्नस्य आधारभावे हि न होमान्तरं विधीयेत। प्रधानस्यैव हि तदा भिन्नो गुण इति गम्यते। तत्र आहवनीयसंयोगो बाध्येत 'वचनाद्विकल्प इति चेत्, न निमित्तत्वेन संभवात्।' होमस्य च श्रुत्या विहितत्वात्। यदा होमो विधीयते, तदा श्रुत्या। यदा भिन्नो गुणः तदा वाक्येन। तस्माच्च आधारो भिन्नः। यद्युच्येत, निमित्तपक्षेऽपि न होमान्तरम्, प्रकृतस्यैव होमस्य निमित्तं विधीयेतेति। तन्न। अनुपादीयमानं हि निमित्तमित्युच्यते। यदि हि विधीयेत, निमित्तमेव तत्र स्यात्। यदि च स्वयमपि निमित्तं होऽपि उद्दिश्येत, तत्र द्वयोरुद्दिश्यमानयोः संबन्ध एव न स्यात्। न चात्र भेदनं कुर्यादिति विधीयते। भेदने निर्वृत्ते यस्मात् श्रूयते, तद्विधीयते।

टुप्— ( कथं निमित्तपक्षे द्वयोः प्रधानार्थत्वमिति चेत्, तत्राह— ) प्रकरणात् प्रधानार्थो होमः भिन्नमपि ( होमं ) प्रयुञ्जानं ( अपूर्वं ) प्रधानस्य तदर्थमेव ( अतो न भिन्नार्थो होमः )। न च कपालार्थत्वेन होमस्य प्रतिपादकं वचनमस्ति, ( 'भिन्ने जुहोति' इत्यत्र तादर्थ्यप्रतिपादिकायाः ) द्वितीयादिविभक्तेरभावात्। न च भिन्नस्य प्रत्यक्षो दोष उपलभ्यते, येन ( द्वितीयाद्यभावेऽपि दृष्टार्थत्वात् ) दोषनिर्घातार्थो होमः स्यात् ( तस्मात् भिन्नादेः )। न च भिन्नमाधारत्वेन उपदिश्यते ( आधारभावेन इति भाष्ये। ननु पूर्वमेव 'न गुणो गुणार्थो भवितुमर्हति' इति सिद्धे कुतः शङ्का, अत आह— ) श्रुतिसमवायेन ( श्रुतिरेव समवायेन इति तत्त्वम् ) उपन्यस्यते। संभवति हि सप्तमी निमित्ते आधारे च। ( निराकरणभाष्यं अर्थतः अनुसंधत्ते— ) आधारः सन् आवापादीनां ( एव प्रकरणात् अङ्गम् ) स्यात्, कपालानाम्। न च कपालान्तरस्य (विशिष्टविधेरन्याय्यत्वात्) आहवनीयसंयोगो बाध्येत

इति पाक्षिकं बाधमाह न तु नित्यम्। (परन्तु-) बाधमभिप्रेत्य (स्वीकृत्य) आह वचनात् विकल्प इति चेत्। (वचनबलात् पाक्षिको बाधो व्रीहियवविधिवत् न दोषः। इदं विकल्पाभिधानमाक्षिपति-) अयुक्तोऽयं विकल्पः भिन्नस्य प्रकरणसंबन्धात्, आहवनीयस्य च अनारभ्याधीतत्वात्। यथा (प्रकरणसंबद्धेनैव) पाञ्चदश्येन साप्तदश्यम् (अनारभ्याधीतम्) बाध्यते, एवमिहापि (आहवनीयस्य भिन्नेन बाध एव, न विकल्पः)। किञ्च आहवनीयस्य अन्यत्र (होमान्तरेऽपि) कृतार्थत्वात्। भिन्नस्य तु (प्रकृतहोमानुवादेन विधीयमानस्य) अन्यत्रानवकाशत्वात् तदुपमर्देनैव (आहवनीयोपमर्देनैव) पदवत् निवेशः। तस्मात् विकल्पाभिधानं अभ्युपेत्यवादेन (भाष्यकारेण उक्तम्, विकल्पोऽपि यस्यां गतौ अयुक्तः, अस्ति च गतिः निमित्तार्थेनापि संभवात् इति)।

केचिदाहुः युक्त एवायं विकल्पः, उभयोः (भिन्नाहवनीययोः) वाक्येन जुहोतिसंबन्धात्। (ननु भिन्नस्य प्रकरणमस्तीत्युक्तम्, अत आह-) न प्रकरणात् किञ्चिद् अभ्यधिकम् (लभ्यते वाक्यबलीयस्त्वात्। पाञ्चदश्यसाप्तदश्ययोः तर्हि कथम्? तत्राह-) तत्र सामिधेनी- (वाक्य-) संबन्धे (उभयोः) आनर्थक्यात् अपूर्वसंबन्धः (अवश्यम्) एषितव्यः। तत्र एकस्य (पाञ्चदश्यस्य) प्रकरणेन (अपूर्वसंबन्धः) क्लृप्तः, इतरस्य (तु साप्तदश्यस्य काम्यनिवर्तितक्रतुसंबन्धसामिधेनीद्वारेण) कल्प्यः, इति (संबन्धस्य) विप्रकर्षात् पाञ्चदश्येन साप्तदश्य बाध्यते, (किञ्चापि साप्तदश्यस्य) कृतार्थत्वात्। (किञ्च) तदर्थत्वे च न चार्थे नियमेन कारणम्, अननुग्रहणात् शास्त्रस्य (नहि प्रमाणानुग्रहार्थः प्रेक्षावतां प्रयासः, किन्तु समीहितप्राप्त्यर्थः। तस्मात्) प्रमाणात् यस्य बाधो गम्यते, स बाध्यते। (गम्यते च साप्तदश्यशास्त्रस्य बाधः)। इह (तु) जुहोतिशब्दः समानः (भिन्नस्य आहवनीयस्य च)। अधिकरणविभक्तिश्च सप्तमी (समानैव) तस्मात् विकल्पः। ननु 'पदे जुहोति' इत्यत्र (अपि सप्तमी जुहोतिशब्दयोः) तुल्यत्वात् पदेन आहवनीयबाधः (स्यात्)। उच्यते। उत्पत्तिवाक्यशिष्टेन वाक्यान्तरशिष्टं बाध्यते, पदं च उत्पत्तिवाक्यशिष्टम्। (वाक्यान्तरशिष्टस्तु आहवनीयः, तेनासौ पदेन बाध्यते। एवं तावत् पदवाक्यालोचनया बाध उक्तः। आहवनीयवाक्यमपि न तत्र निविशतीत्याह-) किञ्च होमेन आधारस्य (आहवनीयस्य) अनपेक्षितत्वात् वाक्येन असौ (आधारः) नीयमानः (दीयमानः इति लिखिते पाठः), ये शुद्धाः (उत्पन्नाः अग्निहोत्रादयः) होमाः, ताननूद्य आहवनीयः आधारो विधीयते, न (तु) ये (पदहोमादयः उत्पद्यमाना एव) आधारकल्पिताः, (ताननूद्य)।

भेदनार्थमिति चेत्। १४॥

भाष्यम्— अथोच्येत, एतदुपायं तत् कपालं संधीयते। 'गायत्र्या त्वा शताक्षरया संदधामि' इति तत् कपालं संधास्यामीति। तत्र वक्ष्यामः।

नाशेषभूतत्वात्। १५॥

भाष्यम्— न भेदनस्य शेषभूतं जुहोति, न तत् संधातुं शक्यते होमेन मन्त्रेण वा। सदाऽपि संधीयमानस्य निरसुद्धिर्नैवापेयात्।

अनर्थकश्च सर्वनाशे स्यात्। १६॥

भाष्यम्— सर्वनाशे च श्रूयते 'भिन्ने कपालमप्सु प्रहरति' इति। तत्रानर्थकः संस्कारः। ननु तत उद्धृत्य उपधास्यते। नेति ब्रूमः। 'अन्यदुपदधाति' इति हि आमनन्ति। तस्मान्नैमित्तिकं कर्मान्तरम्, भिन्ने जुहोतीति।

वा— 'यत्रैकदेशभेदस्य नित्यत्वान्न निमित्तता। कादाचित्कस्तु कृत्स्नस्य भेदो गच्छेन्निमित्तताम्॥' द्वितीयपक्षवादी तु मन्यते 'होमोऽयं भिन्नसंस्कारो भेददोषनिबर्हणात्। संनिपत्योपकारित्वं तथा सति हि लभ्यते॥ आरादुपकारित्वाच्च न्याय्या स्यात् सन्निपातिता। कार्यक्षमश्च संस्कार्यः, कृत्स्नभिन्नं न तत्क्षमम्॥' तस्मात् यदा कियताऽपि अंशेन भेदो भवति तदैव होमः। इति प्राप्ते, ब्रूमः। 'संस्कारत्वे भवेदेवं, न त्वियं भिन्नसंस्क्रिया। संस्कार्यत्वे हि भिन्नस्य निमित्तत्वं न लभ्यते॥ निमित्ताभावतो होमो नित्यमङ्गं क्रतोर्भवेत्। नित्यश्चानित्यसंस्कार्य-

संबन्धं लभते कथम् ॥ ' तस्मात् भेदने निमित्ते होमो विधीयते । [illegible] चाविशेषात् एकदेशभेदे कृत्स्नभेदेऽपि स्यात् ।

सोम— पूर्वत्र कादाचित्कानां अन्येषां ( मद्वलिङ्गमिश्राणां ) अग्रहणेऽपि [illegible] कृत्स्नभेद एव ग्राह्य इति प्रत्यवस्थानात्, मन्त्राणां द्रव्यसंस्कारत्ववत् होमस्य भिन्नसंस्कारत्वम्, इति प्रत्यवस्थानाच्च संगतिः । सूत्रार्थस्तु एकदेशेऽपि भिन्ने प्रायश्चित्तं स्यात् अर्थस्य भेदनस्य तत्रापि समवायात् इति ।

वि— ' कपालभेदने होमो भग्ने कृत्स्नेऽथवोभयोः ।, आद्यो भेदस्य भङ्गत्वात् संस्कार्यत्वेन मध्यमः ॥, संस्कृतानन्निमित्तत्वात् नित्यानित्यविरोधनम् । निमित्तता समा भङ्गे यथेष्टं वाऽस्तो द्वयोर्हुतिः ॥ '

भाट्ट— दर्शपूर्णमासयोः प्रायश्चित्ताधिकारे ' भिन्ने जुहोति, स्कन्ने जुहोति ' इति श्रुतम् । तत्र कृत्स्नभेदे एवेदम्, उतैकदेशभेदे एव, उतोभयत्रापीति चिन्तायाम्, द्वयोः संघर्षे सति एकदेशभेदस्य अवर्जनीयत्वेन नित्यत्वात् निमित्तत्वानुपपत्तेः सर्वभेदे एवेदं चूर्णतादशायां प्रायश्चित्तमिति प्रथमः पक्षः । संघर्षेण कतिपयावयवानां चूर्णीभावेऽपि भिन्नमिति प्रतीत्यभावात् कपालेऽऽकृतिस्थूलावयवविभागे एव भेदनप्रतीतेः तस्यैवानित्यत्वेन सर्वभेदनवत् एकदेशभेदनस्यापि निमित्तत्वोपपत्तेः तदर्थोऽयं होमः । अयं हि भेदनस्य निमित्तत्वेऽपि होमस्य प्रयोजनापेक्षायां संनिपत्योपकारकत्वलाभाय भिन्नकपालसंस्कारार्थः । कपाले हि भेदनेन उक्तपरिमाणाभावात् वैगुण्यप्रसक्तौ तत्परिहाररूपः होमेन संस्कारो नानुपपन्नः । तस्य चानुपयुक्तस्य संस्कारायोगात् सर्वभेदने च तदयोगात् एकदेशभेदनमेव निमित्तम् । अस्तु वा समग्रं द्रव्यं संस्कार्यमपरेव, न तु निमित्ततार्थिकाऽपि । न च भिन्नस्य कादाचित्कत्वात् नित्यानित्यसंयोगविरोधः, इष्टतरस्य कादाचित्केऽपि संयोगित्वादिधर्मविधिवदुपपत्तेः । इति प्राप्ते, अनुपयोगित्वे भूतोपयोगित्वे वा कपालोपधानाद्यवकाशे ' भिन्नं कपालमप्सु प्रक्षिपति, अन्यदुपदधाति ' इतिवाक्यविरोधात् नात्र स्वतन्त्रो होमो भिन्नसंस्कारकः । नापि प्रकरणपठितहोमानां तत्संस्कारकत्वम् । एतेन प्राकरणिकहोमानुवादेन लौकिकस्य भिन्नकपालस्यैव अधिकरणत्वेन विधिः आहवनीयबाधेन इत्यपास्तम् । होमस्य प्राकरणिकस्य कपालोपधानोत्तरत्वात् ' अन्यदुपदधाति ' इत्यस्य वैयर्थ्यापत्तेः प्रायश्चित्तत्वाख्याऽनुपपत्तेश्च । अत एवेदं कर्मान्तरम्, तच्च नैमित्तिकं आपदुपकारकं क्रतुवैगुण्यपरिहारार्थं अभ्यङ्गत्वेन विधीयते । अतः सर्वभेदनमेकदेशभेदनमुभयमपि अत्र निमित्तम् ।

मण्डन— ' भिन्नैकदेशेऽपि भवेज्जुहोतिः । '

शंकर— ' होमः किञ्चित्-कृत्स्नभेदे । '

● दर्शपूर्णमासयोः कपालोपधानम् ' अग्नि च यदे कपालानि चोपदधाति ' इति हवनादन्यत्र पदम् । वि. ३।८।१० । ' कपालेषु अपपति ' इति स कार्यम् । ३।२।५, ● दर्शपूर्णमासयोः कपालोपधानम् ' उपवेषेण कपालान्युपदधाति ' । ४।२।२, ● दर्शपूर्णमासयोः कपालोपधाने समुदायानुसमयः कर्तव्यः । ५।२।१. ● दर्शपूर्णमासयोः कर्ता भवनीय एक एव पुरुषः । ' अधिकारः दर्शपूर्णमासादौ ' इत्यधिकरणम् । भा. ६।६।२।३–१३. ● दर्शपूर्णमासयोः कर्तारः ते [illegible] वा अन्ये वा अनियमः पुनः प्रयोगे । के. ११।१।१२।१५. ● दर्शपूर्णमासयोः सामिधेनीषु संख्यापूरणं आगमेन संख्यापूरणम् । वि. १०।५।८, ● दर्शपूर्णमासयोः साम्यसामिधेनीसंख्यापूरणं प्रथमोत्तमयोः पदाद्यं गृहीत्वा अभ्यासेनैव पदादीनामागमेन । १०।५।८. ● दर्शपूर्णमासयोः कालः ' यावज्जीवं दर्शपूर्णमासाभ्यां यजेत ' इति । तत्र यावत्कालं प्राणे जीवता कर्म कर्तव्यम्, इति कालार्थः संयोगः । शा. ६।२।७ ● दर्शपूर्णमासयोः कालभेदात् आवृत्तिः इति राजसूयाधिकरणे ( ११।२।३।१२ ) सिद्धान्तिता । सु. पृ. ७७६. ● दर्शपूर्णमासयोः धुन्ध्यादिपात्रभेदने आज्यादिस्कन्दने च होमो विहितः ' भिन्ने जुहोति ' ' स्कन्ने जुहोति ' इति । स च निमित्तानुसारी आहवनीये, न तु स्रुग्देव । वि. ६।२।५, ● दर्शपूर्णमासयोः ' कृष्णाजिनं च शम्या च ' यज्ञायुधम् । ३।८।१० । ' कृष्णाजिनमधस्तादुलूखलस्यावस्तृणाति ' इति तत्प्रयोगस्तस्य । ३।१।५, ● दर्शपूर्णमासयोः खननं वेदिधर्मः । ' देवस्य त्वा सवितुः

प्रथम इति राजति ।' १०।१।१०. * दर्शपूर्णमासयोः गोदोहनं पुरुषार्थमेव । तच्च पशुपयोर्थं पश्वुद्देशेन विहितम् । भा. ४।१।२।२ वर्णकं २. * दर्शपूर्णमासयोः 'गोदोहनेन पशुकामस्य प्रणयेत्' इति विहितं गोदोहनं प्रकृतावेव निविशते । के. ३।६।३।१०. * दर्शपूर्णमासयोः चतुरवत्तं उपस्तरणाभिधारणाभ्यां सह । उपस्तरणादिविधिन्यायः । भा. १०।८।१२।२९-३२. * दर्शपूर्णमासयोः चतुर्थोत्तमयोः प्रयाजयोः प्रति समानयति इत्युक्ते सति 'अविहायेडो बर्हिः प्रति समानयति' इत्युच्यते, तेन बर्हिष अनुयेता दर्शयति इति श्रौतः क्रमः । ५।१।४।७. * दर्शपूर्णमासयोः चतुर्धाकरणं आग्नेयपुरोडाशस्यैव आग्नेयचतुर्धाकरणाधिकरणम् । ३।१।१५। २६-२७. * दर्शपूर्णमासयोः चतुर्धाकरणं भक्षणार्थम्, न परिक्रयार्थम् । चतुर्धाकरणं भक्षार्थं इत्यधिकरणम् । ३।४।१७ (वि. २१) । ४८-५१. * दर्शपूर्णमासयोः चतुर्धाकरणं हस्तेन । आभिचारिके वैश्वदेवे चरौ तु शम्यया । वि. १०।१।१ वर्णकं २. * दर्शपूर्णमासयोः चतुर्धाकरणोत्तरं '*इदं ब्रह्मणः*' *इत्यादिना भागनिर्देशः* भक्षणार्थः । के. ३।४।१७।४८-५१. * दर्शपूर्णमासयोः चतुर्धाकरणविधौ आग्नेयशब्देन द्विदैवत्यो न गृह्यते किंतु आग्नेय एव केवलः । भा. ३।१।१५।२६-२७. * दर्शपूर्णमासयोः 'चतुर्होत्रा पौर्णमासीमभिमृशेत्, पञ्चहोत्रा अमावास्याम्' इति अभिमर्शने अङ्गहविषां प्रधानहविषां च, ■ प्रधानहविषामेव । ३।७।४।८,१०. * दर्शपूर्णमासयोः चतुर्होतृपञ्चहोतृमन्त्राभ्यामभिमर्शने अपूर्वप्रयुक्तम्, न समुदायप्रयुक्तम् । ५।१।५।११-१९. * दर्शपूर्णमासयोः जागरणं औपवसथ्या रात्रौ कर्तव्यम्, तच्च रक्षार्थमदृष्टार्थं वा । यायपूर्वराभिः श्रौतमयी । वि. १२।१।८. * दर्शपूर्णमासयोः जाघनी शाखैव नोच्यते 'पशोः पशोर्निरवदाय जाघन्या पत्नीः संयाजयन्त्यः' इति । सा सोमवति श्रौतापि आनीयमाना पत्नीसंयाजार्थम् । भा. ३।३।१०।२३. * दर्शपूर्णमासयोः 'जाघन्या पत्नीः संयाजयन्ति' अत्र जाघनी क्रयादिना संपाद्य यागः कर्तव्यः । तथा चाज्येन सह जाघन्याः विकल्पः । वि. ३।३।१५. * दर्शपूर्णमासयोः 'जाघन्या पत्नीः संयाजयन्ति' इति अर्थकर्म । नहि तत्र काचित् शेषभूता जाघनी अस्ति । लौकिक्यास्तु तत्र आज्येन सह विकल्पः । भा. १२।४।६।१०. * दर्शपूर्णमासयोः जुहूः पर्णमयी पलाशकाष्ठजन्या इत्यर्थः । अव्यभिचरितक्रतुसंबन्धमाश्रित्य जुहूहेतुः पञ्चसूत्रः वाक्येन विधीयते 'यस्य पर्णमयी जुहूर्भवति' इति । अनारभ्यविधिश्च प्रकृतावेव निविशते । वि. ३।६।१. * दर्शपूर्णमासयोः जुह्वां चतुर्गृहीतं आज्यं आज्यग्रहणकाले 'चतुर्जुह्वां गृह्णाति' । तत्र च प्रतिग्रहणं मन्त्रावृत्तिः । ११।४।१९. * दर्शपूर्णमासयोः जुह्वायाम् 'मयि दक्षक्रतू' इति मन्त्रः पठनीयः । स च मन्त्रपाठः क्रत्वर्थः क्रतुयुक्तपुरुषधर्मो वा, न पुरुषार्थः । जक्षम्यमानाधिकरणं इत्यत्राधिकरणम् । के. ३।४।५। १४-१६.

■ दर्शपूर्णमासयोः जौहवाज्यं प्रयाजार्थम्, औपभृताज्यं च प्रयाजानुयाजार्थम् ॥

तत्रोत्पत्तिरविभक्ता स्यात् । ४।१।१६।४२॥

*भाष्यम्—दर्शपूर्णमासयोः श्रूयते 'चतुर्जुह्वां गृह्णाति, अष्टावुपभृति' इति ।* तत्र संदेहः किं जौहवमौपभृतं चोभय उभयार्थं प्रयाजेभ्यश्च अनुयाजेभ्यश्च (इति), उत जौहवं प्रयाजेभ्यः, औपभृतमनुयाजेभ्यः । अथवा औपभृतं प्रयाजेभ्यः, अनुयाजेभ्यश्चेति । किं प्राप्तम्? उभयमुभयार्थम् । कुतः? यत्तत् आज्येन क्रियते, तस्मै-तस्मै भवितुमर्हति, अविशेषात् ।

टुप्— प्रसक्तानुप्रसक्तेन आरभ्यते । ( समानयनस्य औपभृताज्यपयोर्बन्धे साधिते तत्प्रसङ्गेन औपभृतस्य तादर्थ्यं चिन्त्यते, तदनुप्रसङ्गेन च जौहवस्य मौपस्य चेति ) । तस्य आज्यप्रयोजकत्वे स्थिते चास्मिन् पूर्वाधिकरणारम्भः । ( पूर्वपक्षेणविप्रपन्नात्तु न पूर्वमारब्धम् । पूर्वपक्षमाह—) अप्रयुक्तोऽप्यानि ( आज्यानि ) प्रकरणिना गृह्यन्ते । तस्मात् यत्तत् आज्यसाध्यम् ( कार्यं प्रयाजानुयाजादि ) तत्तत्र एतानि ( चतुरवत्त प्रोक्तादेशम् । भाष्ये जौहवौपभृतग्रहणं प्रौढ्यादि प्रदर्शनार्थम् ) ।

तत्र जौहवमनुयाजप्रतिषेधार्थम् । ४३ ॥

भाष्यम्— नैवं उभयमुभयार्थमिति । जौहवं प्रया-

प्रणय इति ददाति ।', १०।२।१०. ❀ दर्शपूर्णमासयोः गोदोहनं पुरुषार्थमेव । तच पशुप्रयोज्यं पशूद्देशेन विहितम् । भा. ४।१।२।२ वर्णकं २. ❀ दर्शपूर्णमासयोः 'गोदोहनेन पशुकामस्य प्रणयेत्' इति विहितं गोदोहनं प्रकृतावेव निविशते । कै. ३।६।३।१०. ❀ दर्शपूर्णमासयोः चतुरवत्तं उपस्तरणाभिघारणाभ्यां सह । उपस्तरणादिविचिन्त्यायः । भा. १०।८।१२।२१–२२. ❀ दर्शपूर्णमासयोः चतुर्थोत्तमयोः प्रयाजयोः प्रति समानयति इत्युक्ते यति 'अनिहायेद्दो बर्हिः प्रति समानयति' इत्युच्यते, तेन बर्हिरन्यतुर्थेनो दर्शयति इति श्रौतः क्रमः । ५।१।४।७. ❀ दर्शपूर्णमासयोः चतुर्धाकरणं आग्नेयपुरोडाशस्यैव आग्नेयचतुर्धाकरणाधिकरणम् । ३।१।१५। २६–२७. ❀ दर्शपूर्णमासयोः चतुर्धाकरणे भक्षणार्थम्, न परिक्रयार्थम् । चतुर्धाकरणं भक्षार्थे इत्यधिकरणम् । ३।४।१७ (मि. २१) । ४८–५१. ❀ दर्शपूर्णमासयोः चतुर्धाकरणं हस्तेन । आभिचारिके वैमृधे यदौ तु शम्यया । वि. १०।१।१ वर्णकं १. ❀ दर्शपूर्णमासयोः चतुर्धाकरणोत्तरं 'इदं ब्रह्मणः' इत्यादिना भागनिर्देशः भक्षणार्थः । कै. ३।४।१७।४८–५१. ❀ दर्शपूर्णमासयोः चतुर्धाकरणविधौ आग्नेयान्वेन विशेषणो न गृह्यते किंतु आग्नेय एव केवलः । या. ३।२।१५।२६–२७. ❀ दर्शपूर्णमासयोः 'चतुर्होत्रा पौर्णमासीमभिमृशेत्, पञ्चहोत्रा अमावास्याम्' इति अभिमर्शनं अङ्गहविषां प्रधानहविषां च, न प्रधानहविषामेव । ३।७।४।८, १०. ❀ दर्शपूर्णमासयोः चतुर्होतृपञ्चहोतृमन्त्राभ्यामभिमर्शनं अपूर्वप्रयुक्तम्, न समुदायप्रयुक्तम् । ५।१।५।११–१९. ❀ दर्शपूर्णमासयोः जागरणं औपवसथ्या रात्री कर्तव्यम्, तच रक्षार्थमदृष्टार्थं वा । यावत्पूर्वरात्रिः औपवसथी । वि. १२।१।८. ❀ दर्शपूर्णमासयोः जाघनी शास्त्रेण नोत्पद्यते 'एवं पशोर्निष्पाद्या जाघन्या पत्नीः संयाजयन्ति' इति । सा संभवति कौन्चापि आनीयमाना पत्नीसंयाजार्थम् । भा ३।३।१०।२३. ❀ दर्शपूर्णमासयो. 'जाघन्या पत्नीः संयाजयन्ति' अत्र जाघनी क्रयादिना संपाद्य यागः कर्तव्यः । तया चाज्येन सह जाघन्याः विकल्पः । वि. ३।३।१५. ❀ दर्शपूर्णमासयोः 'जाघन्या पत्नीः संयाजयन्ति' इति अर्थकर्म । नहि तत्र काचित् चोदमूला जाघनी अस्ति । लौकिक्यास्तु तत्र आज्येन सह विकल्पः । भा. १२।४।६।१०. ❀ दर्शपूर्णमासयोः जुहूः पर्णमयी पलाशकाष्ठजन्या इत्यर्थः । अव्यभिचरितक्रतुसंबन्धमाश्रित्य जुहूहेतुः पलाशजुहू वाक्येन विधीयते 'यस्य पर्णमयी जुहूर्भवति' इति । अनारभ्यविधिश्च प्रकृतावेव निविशते । वि. ३।६।१. ❀ दर्शपूर्णमासयोः जुह्वां चतुर्वारमेकं प्राथमाज्यग्रहणकाले 'चतुर्जुह्वा गृह्णाति' । तत्र च प्रतिग्रहणं मन्त्रावृत्तिः । ११।४।१५. ❀ दर्शपूर्णमासयोः जृम्भायाम् 'मयि दक्षक्रतू' इति मन्त्रः पठनीयः । स च मन्त्रपाठः क्रत्वर्थः क्रतुयुक्तपुरुषधर्मो वा, न पुरुषार्थः । जृम्भमाणाधिकरणं इत्यनाधिकरणम् । कै. ३।४।५। १४–१६.

❀ दर्शपूर्णमासयोः जौहवाज्यं प्रयाजार्थम्, औपभृताज्यं च प्रयाजानुयाजार्थम् ॥

तत्रोत्पत्तिरविभक्ता स्यात् । ४।१।१६।४२॥

भाष्यम्—दर्शपूर्णमासयोः श्रूयते 'चतुर्जुह्वा गृह्णाति, अष्टावुपभृति' इति । तत्र संदेहः किं जौहवमौपभृतं चोभयं उभयार्थं प्रयाजेभ्यश्च अनुयाजेभ्यश्च (इति), उत जौहव प्रयाजेभ्यः, औपभृतमनुयाजेभ्यः । अथवा औपभृत प्रयाजेभ्यः, अनुयाजेभ्यश्चेति । किं प्राप्तम् ? उभयमुभयार्थम् । कुतः ? यतत् आज्येन क्रियते, तस्मै तस्मै भवितुमर्हति, अविशेषात् ।

टुप्—प्रसक्तानुप्रसक्तेन आरभ्यते । (समानयनस्य औपभृताज्यप्रयोजनत्वे साधिते तत्प्रसङ्गेन औपभृतस्य तादर्थ्ये निरूप्यते, तदनुप्रसङ्गेन च जौहवस्य प्रौढस्य चेति) । तस्य आज्यप्रयोजकत्वे स्थिते चास्मिन् पूर्वाधिकरणारम्भः । (पूर्वमसंगतिप्रसङ्गात् न पूर्वमारम्भम् । पूर्वपक्षमाह–) अप्रयुक्तोत्पन्नानि (आज्यानि) प्रकरणिना गृह्यन्ते । तस्मात् यत्त् आज्यसाध्यम् (कार्यं प्रयाजानुयाजादि) तत्तत्र एतानि (बहुवचन प्रौढापेक्षम् । भाष्ये जौहवौपभृतग्रहणं प्रौढस्यापि प्रदर्शनार्थम्) ।

तत्र जौहवमनुयाजप्रतिषेधार्थम् । ४३ ॥

भाष्यम्— नैवं उभयमुभयार्थमिति । जौहवं प्रया-

र्थम्, औपभृतं उभयार्थम्। कथम्? 'यज्जुह्वां गृह्णाति, ऋतुभ्यस्तद् गृह्णाति, ऋतवो वै प्रयाजाः' इति जौहववचनं अनुयाजप्रतिषेधार्थं प्रयाजान् संकीर्तयति। आह, ननु नास्त्यत्र अनुयाजप्रतिषेधार्थं वचनम्। यदेतत् 'प्रयाजेभ्यस्तद् गृह्णाति' इति, प्रयाजेषु उपदेशकमेतत्। नास्यास्य अनुयाजप्रतिषेधे सामर्थ्यमिति। उच्यते। न ब्रूमः प्रतिषेधकमेतदिति, किन्तु उपचितार्थे आम्नाते नैव प्रयोजनाभिसंबन्धः। अनेन वचनेन प्रयाजप्रयोजनता क्रियते जौहवस्य, अनुयाजप्रयोजनता अस्य वचनाभावादेव न गम्यते, इति अनुयाजप्रतिषेधार्थं वचनमित्युच्यते।

टुप्— तत्र जौहवमनुयाजप्रतिषेधार्थम् 'यज्जुह्वां गृह्णाति' इति उत्पद्यमानं जौहवं अभिलपति किं मया कर्तव्यमिति। प्रयाजाश्च उत्पद्यमानाः द्रव्याभिलाषिणः। (तत्र यावदेव सर्वार्थता प्रकरणेन कल्प्यते, तावदेव) तयोः (जौहवप्रयाजयोः) श्रुतेन वाक्येन संबन्धे (विहिते) द्वयोरपि परस्परनियमात् अन्यत्र (प्रयोजनान्तरे जौहवस्य, प्रयाजानां च द्रव्यान्तरे) प्रसङ्ग एव नास्ति। एवं औपभृतयोः (औपभृतस्य उपस्तरणार्थत्वम्, औपभृतस्य च प्रयाजानुयाजार्थत्वमेवेति) एवं चेत् (यदा परस्परनियमात् अन्यत्र प्रसङ्गाभावः, तदा) प्रतिषेधफलत्वात् नियमफलत्वादित्यर्थः प्रतिषेधः उक्तः (नियम, उक्तः)।

औपभृतं तथेति चेत्। ४४॥

भाष्यम्— इति चेद् दृश्यते, जौहवमनुयाजेभ्यः प्रतिषिध्यते, औपभृतमुभयार्थमिति। भवतु जौहवं प्रयाजार्थम्, न तु औपभृतमुभयार्थम्। तदपि तथा स्यात्, यथा जौहवम्। कथम्? एतदपि अनुयाजार्थमेव श्रूयते 'यदुपभृति गृह्णाति अनुयाजेभ्यस्तद् गृह्णाति। छन्दांसि अनुयाजाः' इति अनुयाजार्थता गम्यते।

टुप्— (पूर्वपक्षान्तरमूलार्थमाह—) यदि श्रुतेन नैराकाङ्क्ष्यात् नान्यार्थत्वम् (आज्यानाम्, तर्हि) औपभृतम् (अपि 'अनुयाजेभ्यस्तद् गृह्णाति' इति वचनेन केवल—) अनुयाजार्थत्वेन निराकाङ्क्षीकृतत्वात् न प्रयाजार्थं स्यात्।

जुहूप्रतिषेधान्नित्यानुवादः। ४५॥

भाष्यम्— नैतदेवम्, उभयार्थमौपभृतम्। एवं हि श्रूयते 'यदष्टावुपभृति गृह्णाति प्रयाजानुयाजेभ्यस्तद् गृह्णाति' इति। ननूक्तं 'अनुयाजेभ्यस्तद् गृह्णाति' इति अनुयाजार्थता अस्येति। उच्यते। जुहूप्रतिषेधात् नित्यानुवादः। उभयस्मिन् औपभृते जौहवे च उभयार्थे प्राप्ते जौहवमनुयाजेभ्यः प्रतिषिद्धम्, नौपभृतम्। तदा औपभृतस्य उभयार्थतायां सत्यां अनुयाजार्थतावचनं नित्यानुवादो भवितुमर्हति, न शक्नोति प्रयाजार्थतां प्रतिषेद्धुम्। प्रत्यक्षश्रुता हि सा। तस्माद् औपभृतमुभयार्थम्। समानयनं च तस्मो शुह्वां श्रूयते। तस्मादपि प्रयाजार्थता न शक्या बाधितुम्। (अत्र सूत्रे 'स्यात्' इति पदं सूत्रारम्भे सर्वोपलभ्यमानमपि टुप्टीकया तत्रानादर्शनात् न पठनीयम्। भाष्येऽपि 'उच्यते' इत्युक्त्वा 'जुहूप्रतिषेधान्नित्यानुवादः' इत्येव सूत्रमनूदितं न ■ 'स्यात्' इति पदमनूदितम्। तेन भाष्यमतेऽपि स्यात् इति पदं सूत्रे नासीदेव सिध्यति। के.)।

टुप्— जुहूप्रतिषेधान्नित्यानुवादः। प्रयाजानुयाजार्थत्वे अवधृते ज्ञायते यदेतत् अनुयाजार्थमिति। यदि तु अनुयाजार्थमेवैतत्, ततः प्रयाजार्थमिति अशक्यं वक्तुम् (अप्रसक्तत्वात्)। तस्माद् अयमनुवादोऽपि न घटते। तस्मात् 'प्रयाजानुयाजेभ्यस्तद् गृह्णाति' इत्यस्य अत्यन्तानर्थक्यात् इतर. ('अनुयाजेभ्यस्तद् गृह्णाति' इति) अनुवादः।

शा— 'उत्पत्त्यविशेषेण सर्वार्थप्रविभोद्गमे। अवश्रुत्यानुवादश्च प्रयाजाद्यर्थतावचः॥' (प्रयोजनविशेषसंयोगात् प्रकरणेन सर्वार्थत्वावगमः इत्यर्थः)। इति प्रथम. पक्ष. 'नानाऽर्थत्ववचो युक्तमर्थवत्त्वस्य संभवे। तेन जुह्वां प्रयाजार्थमितरार्थं तथेतरत्॥' इति द्वितीयः पक्षः। 'जौहवस्य प्रयाजैकशेषत्वं युक्तमीरितम्। अनुयाजैकशेषत्वमितरस्य न युज्यते॥'

सोम— पूर्वोक्तेषेव प्र पक्षत्वानात् संगति। सूत्रार्थस्तु— तत्र औपभृताज्ये उत्पत्ति कार्यविशेषासंयुक्ता, अतः सर्वार्था स्यादिति।

वि-- 'जुहूपभृद्ध्रुवास्वाज्यं सर्वार्थं मा व्यवस्थितिः ।, सर्वार्थमविशेषात् स्यात्, प्रयाजार्थे तु जौहवम् ॥ प्रयाजानूयाजहेतुः स्यादौपभृतमाज्यकम् । ध्रौवमन्यार्थमित्येषा व्यवस्था वचनैर्मता ॥ '

भाट्ट-- एवं तावदौपभृतस्य प्रयाजार्थत्वमङ्गीकृत्य प्रयोजकत्वं निवारितम् । तदेवाक्षिप्य समाधीयते । 'चतुर्जुह्वां गृह्णाति, अष्टावुपभृति गृह्णाति, चतुर्ध्रुवायां गृह्णाति' इत्यसंयुक्तानि आज्यानि लिङ्गप्रकरणाभ्यां यावत् सर्वप्राकरणिकद्रव्यापेक्षकार्यार्थत्वेन विनियुज्यन्ते, तावत् 'चतुर्जुह्वां गृह्णाति प्रयाजेभ्यस्तत्, अष्टावुपभृति गृह्णाति अनूयाजेभ्यस्तत्, सर्वस्मै वा एतद्यज्ञाय गृह्यते यद्ध्रुवायामाज्यम्' इत्याविवचनैस्तत्तत्कार्यार्थत्वेन विनियोगात् औपभृतस्य अनूयाजमात्रार्थत्वम् । यत्तु 'अष्टावुपभृति गृह्णाति प्रयाजानूयाजेभ्यस्तत्' इति वचनम्, प्रयाजानूयाजयोरुद्देश्यताऽवच्छेदकत्वे वाक्यभेदापत्तेः अनूयाजानां प्रयाजोत्तरत्वानुवादमात्रम् । इति प्राप्ते, उभयतोऽपि अनुवादत्वावश्यकत्वे समानत्वाद्विनियोजकार्थत्वानुरोधेन शुद्धानूयाजवचनस्यैव अनुवादत्वम् । न वा वाक्यभेदः, गहैकत्वाधिकरणमुक्त्यादिरीत्यैवोपपत्तेः 'अग्नषुंयजमानो ... यन्त्रान.' इतिवत् अवाक्यभेदात् । अतश्चौपभृतं प्रयाजानूयाजार्थमिति सिद्धम् ।

मण्डन-- 'ऊर्ध्वमौपभृतं कृतम् ।' १८.

शंकर-- 'नानुयाजाग्रमेव तत् ।' १९.

* दर्शपूर्णमासयोः 'तण्डुलान् पिनष्टि' इति पेषणं नापूर्वजनकं दृष्टफलकत्वात् । नियमापूर्वहेतुत्वेन तु विधेयम् । वि. ३।१।३, * दर्शपूर्णमासयोः 'तिष्ठन् याज्यानुवाक्या, आसीनः पुरोऽनुवाक्याम्' इति । अत्र नानुवचनविधानं किन्तु स्थानासनगुणविधानम् । १०।८।२२, * दर्शपूर्णमासयोः तुषोपवापः पुरोडाशकपालेन कर्तव्यः । तत्र कपालस्य तुषोपवापो न प्रयोजकः, किन्तु प्रास ङ्गिकः । अन्यत् तु कपालस्य प्रयोजकम् । पुरोडाशकपालन्यायः इत्यस्याधिकरणम् । ४।१।११. * दर्शपूर्णमासयोः 'त्रीन् परिधीन्०' इति मन्त्रः अपूर्वप्रयुक्तः, न तु परिधिनिष्पादनप्रयुक्तः । के. ९।१।५।११-१९.

* दर्शपूर्णमासयोः त्रिधातु पञ्चधातु वा वेदिं स्तृणाति । भा. ३।८।१७।३२.

X दर्शपूर्णमासयोः त्रिष्टुभौ संयाज्ये काम्ये नित्ये च संयोगपृथक्त्वेन ॥

दर्शपूर्णमासयोरेव 'गायत्र्यौ संयाज्ये ब्रह्मवर्चसकामस्य, त्रिष्टुभौ वीर्यकामस्य' इत्यादि श्रुतम् । 'पिप्रीहि देवान्' 'अग्ने यद्य' इत्यनयोस्त्रिष्टुभोर्नित्यवदाम्नातत्वेन केवलकाम्यप्रायेऽसत्योर्विशिष्य पाठाभावेन च तादृशावुनौ अन्ये वीर्यकामस्यावमयितव्ये । इति प्राप्ते, त्रिष्टुप्शब्देनापि द्व्यवच्चनेन संनिहितयोः ऋचोः परामर्शसंभवात् संयोगपृथक्त्वेनोभयार्थता । संकर्ष. ४।३।१२.

* दर्शपूर्णमासयोः दक्षिणा अन्वाहार्यचरुः । वि. १०।३।५, * दर्शपूर्णमासयोः दक्षिणमन्त्रः उपांशुयाजाङ्ग यथासंख्यक्रमात् । क्रमाधिकरणं द्रष्टव्यम् । ३।३।५, * दर्शपूर्णमासयोः दर्भैस्त्यजनमन्त्रस्य अभिमन्त्रणमं आवृत्तिः । ११।४।१४. * दर्शपूर्णमासयोः 'दाक्षायणयज्ञेन यजेत प्रजाकामः' इति फलविशेषाय गुणविशेषविधिः, न तु दाक्षायणयज्ञः कर्मान्तरम् । दाक्षायणयज्ञाधिकरणम् । भा. २।३।४।५. * दर्शपूर्णमासयोः दृषदि पेषणाय तण्डुलाधिवापे 'धान्यमसि धिनुहि देवान्' इति मन्त्रः । यावत्स्यानामयने तु तत्र 'मांसमसि धिनुहि देवान्' इति ऊहः । वि. ९।१।११ वर्णक २. * दर्शपूर्णमासयोः दृषदुपले 'दृषदोपला च' यथाश्रुतम् । वि. ३।८।१० । तदुपयोगस्तु 'दृषदुपलाभ्यां पिनष्टि' । ३।१।५, * दर्शपूर्णमासयोः दृषत्समाहननं कुकुटया 'दृषदुपले च समाहन्ति' । (कुकुट. = मुष्टिमेयः पाषाणः । बौधायनमते तु कुकुटशब्दे शम्या ) । ३।८।१०. * दर्शपूर्णमासयोः देवताऽऽवाहनकालः सामिधेनीप्रयाजयोर्मध्ये । वि. १०।१।१ वर्णक ३, * दर्शपूर्णमासयोः देवतापरिग्रहार्थमन्त्राभावे आग्नेयाग्नावारुणप्रकरणेव 'ममाग्ने वर्चो विहवेष्वस्तु' इत्यग्नि गृह्णाति इत्युक्तत्वात् । १२।१।१२. * दर्शपूर्णमासयोः देशपुनःप्रयोगे पूर्वप्रयोगीय एव वा अन्यो वा यथाकामम् । भा ११।३।१२।३३. * दर्शपूर्णमासयोः दोहनानयनादयः सांनाय्यधर्माः । वि. ३।१।८, * दर्शपूर्णमासयोः दोहननिर्वापादयो धर्मा यजुर्वेदे आम्नाताः ।

३।३।६. * दर्शपूर्णमासयोः द्रव्यनाशे आज्येन समाप्तं वचनात् । भाट्ट. ४।१।७.

* दर्शपूर्णमासयोः द्वादश द्वन्द्वानि आध्वर्यवाणि, न याजमानानि ॥

याजमाने समाख्यानात् कर्माणि याजमानं स्युः । ३।८।१।१९ ॥

भाष्यम्— स्तो दर्शपूर्णमासौ । तत्र यजमानकाण्डे कर्माणि आम्नातानि द्वादश, 'वत्सं चोपावसृजति उखां चाधिश्रयति, अव च हन्ति दृषदुपले च समाहन्ति, अधि च वपते कपालानि चोपदधाति, पुरोडाशं चाधिश्रयति आज्यं च, स्तम्बयजुश्च हरति अभि च गृह्णाति, वेदिं च परिगृह्णाति, पत्नीं (च) संनह्यति, प्रोक्षणीश्चाऽऽसादयति, आज्यं च । एतानि वै द्वादश द्वन्द्वानि दर्शपूर्णमासयोः' इति । अत्र सन्देहः किमेतानि अध्वर्योः कर्माणि, उत यजमानस्येति । किं प्राप्तम् ? यजमाने समाख्यानात् कर्माणि याजमानं स्युः । विशेषसमाख्यानात् याजमानानीति गम्यते । यथा पोत्रीयं नेष्ट्रीयमिति ।

वा— उखाऽधिश्रयणावहननादीनां द्वादशानां कर्मद्वन्द्वानां याजमाने आध्वर्यवे च पठितानां हि आम्नातमन्त्रवत् उभाभ्यां प्रयोक्तृसम्बन्धत्वात् याजमानसमाख्यानात् यजमानकर्तृकत्वमिति ।

अध्वर्युर्वा, तदर्थो हि, न्यायपूर्वं समाख्यानम् । २० ॥

भाष्यम्— अध्वर्युर्वा कुर्यादेतानि । तदर्थो हि अध्वर्युः परिक्रीत इति समाख्यानादवगम्यते । आध्वर्यवे एव सर्वे इमे पदार्थाः समाम्नाताः । याजमाने एषां द्वंद्वता उच्यते । द्वंद्वता न समभ्यासक्रिया । तत्राध्वर्युः पदार्थान् करिष्यति, यजमानेनापि समभ्यासीकरणम्, इत्येतदवतरम् । तत्र 'अङ्गगुणविरोधे च तादर्थ्यात्' इति द्वंद्वतागुणो बाधितव्यः । तस्मादाध्वर्यवा एते पदार्था इति । यदुक्तं समाख्यानादिति, तत् परिहर्तव्यम् । उच्यते । न्यायपूर्वं समाख्यानम्, समाख्यानात् यजमानेन द्वंद्वता संपादयितव्या । 'इदं चेदं च संपादय' इति यजमानो ब्रूयात् । केषुचिच्चात्र पदार्थेषु यजमानस्य अनुमन्त्रणम् । तन्निमित्ता समाख्या भविष्यति । 'भगुर्वं न्यायक्रमेव' यदुक्तम्, यथा पोत्रीयम्, नेष्ट्रीयमिति, एवमत्रापीति । तदुच्यते । युक्तं तत्र, विशेषसमाख्यानात् । इह तु द्वंद्वता याजमानीया, पदार्थास्तु आध्वर्यवा एव । तस्माददोषः ।

वा— अनुष्ठानां द्वंद्वसंपादनाशक्तेः, विधायकशब्दाभावाच्च नैषां याजमाने प्रयोगोत्पत्तिः । किं तर्हि ? आध्वर्यवे । तत्र च कर्माकाङ्क्षा, तदर्थश्च परिक्रीतः प्रत्यवाप्ते कर्तरि, न द्वन्द्वसमवेतायामपेक्षास्ति इति यजमानकर्तृकानुपपत्तिः । तत्र स्वरूपस्य प्रकृति यजमानसंबन्धे द्वंद्वता कथं याजमानी क्रियेत । न च सा कर्मान्तरेण क्रियमाणानां संभवति । समासकरणं हि द्वंद्वता । न च अन्यकर्तृकां क्रियामन्यः समासेन कर्तुं समर्थः । न च समासकरणानुरोधेन क्रियास्वरूपमपि याजमानं संभवति । अतः 'अङ्गगुणविरोधन्यायात् तदपि आध्वर्यवमेव । यजमानस्तु स्वार्थविधुरत्वे द्वंद्वतामिति समाख्याऽर्थवत्ता ।

श्ल— 'कर्माणि यत्र चोद्यन्ते तत्रैषां कर्तृसंश्रिता । आध्वर्यवे च चोद्यन्ते कर्माण्याध्वर्यवाण्यतः ॥'

सोम— पूर्वेण प्रनियमवत् इह यजमाननियमः इति प्रत्यवस्थानात् सङ्गतिः ।

वि— 'वत्सं चोपसृजेत् उखामुखां चाधिश्रयेदिति । द्वादशद्वन्द्वकर्तृत्वं स्वामिनो वेतरस्य वा ॥, आद्यः पाठात् स्वामिकाण्डे, तादर्थ्येन परिक्रयात् । मन्त्रकाण्डोक्तितोऽन्त्योऽस्तु द्वंद्वतैवात्र कीर्त्यते ॥'

भाट्ट— दर्शपूर्णमासयोः 'वत्समुपावसृजति' इत्यादीनि चतुर्विंशतिकर्माणि आध्वर्यवसमाख्यायुक्तानि प्रत्येकं भिन्नदेशे विधाय पुनस्तान्ये । याजमानसमाख्यायुक्तानि 'वत्सं चोपावसृजति उखां चाधिश्रयति,' इत्याद्युक्त्वा 'एतानि वै द्वादश द्वन्द्वानि दर्शपूर्णमासयोस्तानि संपाद्य यजेत' इति श्रुतम् । तदेषां द्वादशानामन्यवत् उभयकर्तृकत्वं तावच्च संभवति, अदृष्टार्थत्वाऽऽपत्तेः । न चाभ्यासात् कर्मान्तरम्, अन्यपरत्वात् । अत एवैककर्तृकत्वानवगमे विशेषसमाख्यानात् याजमानत्वे प्राप्ते, नैषां याजमानकाण्डे विधानम्, आध्वर्यवे भिन्नदेशे विहितानामेव द्वयोः मिथः सम्बन्धात्मकद्वन्द्वतारूपगुणविधानार्थमनुवादात् । अतः पदार्थेषु तावत् अध्वर्युरेव कर्ता । न च द्वन्द्वतामात्रेण यजमानः

दोहद्वयस्य द्रव्यरूपः प्रतिनिधिः । ६।४।१९. * दर्शपूर्णमासयोः 'पत्नीं संनह्य' इति पत्नीशब्दः द्विबहुस्त्रीके प्रयोगे नोद्वितव्यः । पत्नीसंनहनन्यायः । मा. ९।३।६।२०, * दर्शपूर्णमासयोः पत्न्याः संनहनं समाम्नातं 'योक्त्रेण पत्नीं संनह्यति' इति । १२।१।१३।२९. * दर्शपूर्णमासयोः पत्नीसंयाजाः अवधारः । तत्र तृतीयाऽऽहुतौ देवपत्नीनां देवतात्वात् तद्द्वारा पत्नीसंयाजशब्दप्रवृत्तिः । अत्र जाघन्या द्रव्यं विहितम् । तच्च क्रूरादिना संपाद्यम्, अत्र पशोरभावात् । आचन्याश्च प्रकरणात् नोत्कर्षः । जाघनीन्यायः । वि. ३।३।१९, * दर्शपूर्णमासयोः पत्नीसंयाजेभ्य ऊर्ध्वं हविष्कृतः पत्न्याः उत्थानं विहितम् । १२।२।४, * दर्शपूर्णमासयोः पत्नीसंयाजेषु गार्हपत्येन आहवनीयस्य बाधः । ज्योतिष्टोमादौ विशेषविहित–स्थानाधिकरणम् । ३।८।१८, * दर्शपूर्णमासयोः पत्नीसंयाजरूपे अपेक्षमेंगि आज्यस्थाली… विकल्पेन विहिते । १२।४।६, * दर्शपूर्णमासयोः पथिकृत् । 'अग्नये पथिकृते पुरोडाशमष्टाकपालं निर्वपेत्, यो दर्शपूर्णमासयाजी सन् अमावास्यां वा पौर्णमासीं वाऽतिपादयेत्' । अतिपातनं अकरणम् । अस्याः पाथिकृतेः वैश्वानरेष्टया विकल्पः, अन्योन्यनिरपेक्षत्वात् । १२।३।१९. * दर्शपूर्णमासयोः परिक्रयः अन्वाहार्य आम्नातः । भा. १३।२।१६।३२. * दर्शपूर्णमासयोः परिग्रहो वेदेः । 'स्फ्येन वेदिं परिलिखन् परिगृह्णाति' । पूर्वपरिग्रहोऽयम् । परिग्रहो द्विविधः पूर्वपरिग्रहः उत्तरपरिग्रहश्चेति । वि. १०।१।१, * दर्शपूर्णमासयोः परिधिप्रहरणम् । यदा होता 'शंयोः' इति मन्त्रं जपति, तदानीमध्वर्युः परिधीन् अग्नौ प्रक्षिपति । तथा च कल्पसूत्रम् 'अनूच्यमाने शंयुवाके आहवनीये परिधीन् प्रहरति' इति । १०।७।१२, * दर्शपूर्णमासयोः परिभोजनीया दर्भाः प्रस्तरलवनादिसंस्काररहिताः यागे उपयोक्ष्यमाणाः । ३।८।१८. * दर्शपूर्णमासयोः परिमार्जनं (… ) पुरोडाशधर्मः 'सं ते तन्वा तनूः पृच्यताम्' इति त्रिः परिमार्ष्टि' । (… 'त्वचं गृह्णीष्व' इति मन्त्रेण त्रिः परिमृजन्ति ) । भा. १०।१।१७।५५. * दर्शपूर्णमासयोः परिलेखनं वेदिधर्मः । 'स्फ्येन वेदिं परिलिखन् परिगृह्णाति' । (परिलेखनं प्राक्संस्कारः ) । वि. १०।१।१, * दर्शपूर्णमासयोः पर्णमयत्वं जुह्वाः क्रत्वर्थम् । फलश्रुतिस्तु अर्थवादः । पर्णः पलाशवृक्षः । ४।३।१, * दर्शपूर्णमासयोः पलाशशाखाच्छेदने 'इषे त्वा' इति मन्त्रः, मार्जने च 'ऊर्जे त्वा' इति मन्त्रः । २।१।१५, * दर्शपूर्णमासयोः पवित्रं नाम 'समौ अप्रच्छिन्नाग्रौ प्रादेशमात्रौ दर्भौ पवित्रे करोति' । ३।८।१८. * दर्शपूर्णमासयोः पवित्रे विधृती च परिभोजनीयादर्भैः कार्ये, न तु बर्हिर्दर्भैः । विधृतिपवित्राधिकरणम् । भा. ३।८।१७।३३. * दर्शपूर्णमासयोः पार्वणहोमौ । 'यत्ते वाजिनं वयम्' इति मन्त्रेण पूर्णमासेष्टौ, 'अमावास्या सुभगा सुशेवा' इति मन्त्रेण च अमावास्येष्टौ, न तु द्वयोरपि द्वावपि । के. ९।२।१९।५७–५८. * दर्शपूर्णमासयोः पिष्टलेपफलीकरणहोमौ अनुयाजोत्तरं विधेये, तयोः अनुयाजैः सह नोत्कर्षः । पिष्टलेपः दृषदुपलकपालादिषु आश्लिष्टः, फलीकरणानि च तण्डुलकणाः । होमोऽयं दक्षिणाग्नौ । तत्र 'अग्नेऽदब्धायो' इति मन्त्रेण फलीकरणहोमः, 'उलूखले मुसले' इति मन्त्रेण पिष्टलेपहोमः । वि. ५।१।१५. * दर्शपूर्णमासयोः पुरोडाशः यागप्रयुक्तः, न स्विष्टकृत्प्रयुक्तः । उत्तरार्धन्यायः । के. ४।१।१३।२८. * दर्शपूर्णमासयोः 'पुरोडाशं पर्यग्नि करोति' अत्र एकवचनम् विवक्षितम्, सर्वानेव पुरोडाशान् पर्यग्नि करोति । भा. ३।१।७।११. * दर्शपूर्णमासयोः 'पुरोडाशं पर्यग्नि करोति' इति पुरोडाशशब्दो जातिवाची 'पुरोडाशेन मे माता प्रहेलकं ददाति' इति प्रयोगात् । बर्हिराद्यधिकरणम् । वि. १।४।८, * दर्शपूर्णमासयोः पुरोडाश–पुरोडाशं प्रति कपालभेदः । ११।८।१२, * दर्शपूर्णमासयोः 'पुरोडाशाभ्यामेव असोमयाजिनं याजयेत्' इत्ययं 'सान्नाय्येन सोमयाजिनः' इत्यस्यार्थवादः । दा. १०।८।१४. * दर्शपूर्णमासयोः पुरोडाशस्य कपालेभ्यो ब्युद्धृत्य वेद्यां आसादनं क्रियते । भा. १०।१।२०।५८. * दर्शपूर्णमासयोः पुरोडाशस्य चतुर्धाकरणे ब्राह्मणा एव निर्दिष्टाः । 'ब्राह्मणानामिदं हविः' इति । अधिकारः आर्त्विज्ये ब्राह्मणस्यैव इत्यधिकरणम् । १२।४।१५।

४६. * दर्शपूर्णमासयोः पुरोडाशस्य द्विरवदानम्, उपस्तरणाभिघारणे च द्वे इति चतुरवत्तत्वम्। वि. १०।८।१२, * दर्शपूर्णमासयोः पुरोडाशस्य सकलस्याग्नौ प्रक्षेपो नास्ति किंतु द्व्यवदानमात्रस्य। ३।४।१८, * दर्शपूर्णमासयोः पुरोडाशस्य सदनं ' स्योनं ते ' इति पूर्वार्धेन कार्यम्, सादनं तु ' तस्मिन् सीद ' इत्युत्तरार्धेन लिङ्गात्, न तु वाक्येन ऐकमन्त्र्यम्। ३।२।८. * दर्शपूर्णमासयोः पुरोडाशे प्रायशः कर्मण्यस्मिन् दग्धे पुनः सैवेष्टिः कर्तव्या। अरुपाशकादे तु न कर्तव्या, तस्या यजनीयत्वात्। सैषेयं क्षामेष्टिः नाम। क्षामेष्टिन्यायः। भा. ६।४।५।१७–२१. * दर्शपूर्णमासयोः पुरोडाशे व्रीहियवयोर्विकल्पः, न तु समुच्चयः एकार्थत्वादुभयोः। वि. १२।३।४. * दर्शपूर्णमासयोः पुरोडाशाधिश्रयणं कपालेषु, पाकार्थम्। ' पुरोडाशं चाधिश्रयति आज्यं च '। भा. ४।८।९।१९, * दर्शपूर्णमासयोः पुरोडाशार्थे तण्डुलानां पेषणम्। भा. १०।१।१२।४९–५०, ' प्रणीताभिर्हवींषि संयौति ' इति संयवनम्। १२।५१, ' समितृप्रमृत एवैनं देवताभिः संवपति ' इति संवपनम्। १४।५२, ' वसूनां रुद्राणामादित्यानां भृगूणामङ्गिरसां घर्मस्य तपसा तप्यस्व ' इति संतापनम्। १५।५३, अङ्गारेषु कपालानामुपधानम्। १६।५४, ' उरु प्रथा उरु प्रथस्वेति पुरोडाशं प्रथयति ' इति प्रथनम्। १७।५५, ' वेदेन भस्मनाङ्गारानभ्यूहति ' इत्यभ्यूहनम्। १८।५६, ' दर्भपिञ्जूलैरभिज्वलयति ' इत्यभिज्वलनम्। १९।५७, ' अन्तर्वेद्यां हवींष्यासादयति ' इति कपालेभ्य उद्वास्यासादनं च क्रियते। चरोरर्थे तु नैतं त्रितयमपि कर्तव्यम्। २०।५८. * दर्शपूर्णमासयोः पुरोडाशकपालस्य श्रवणं तु प्रयोजकम्, न तूपवापः। पुरोडाशकपालन्यायः। भा. ४।१।११।२६. * दर्शपूर्णमासयोः पुरोडाशधर्मा आदौ कर्तव्याः, आज्यधर्माः पश्चात्। धर्मिषु तु आदौ तदाज्ययाजाज्यम्, ततोऽग्नीषोमीयपुरोडाशः। वि. ५।१।८. * दर्शपूर्णमासयोः पुरोडाशविभागार्थानां एककार्याणां मन्त्राणां प्रयोगे विकल्पः। भा. १२।३।१३।२९. * दर्शपूर्णमासयोः पुरोडाशश्रपणं गार्हपत्ये विहितम्। (' आहवनीये गार्हपत्ये वा ' इति तु सत्याषाढसूत्रम्)। वि. १२।१।५, * दर्शपूर्णमासयोः पुरोडाशश्रपणे ' यो विदग्धः स नैर्ऋतः, योऽशृतः स रौद्रः, यः शृतः स दैवः ' इति श्रुतम्। अत्र विदग्धाशृतयोरनुवादः शृतस्तुतये यथोचितपाकस्तुतये। ३।४।७, * दर्शपूर्णमासयोः पूर्णमासे अग्निवासलोत्तरं वेदिः। दर्शे तु पूर्वेद्युर्वेदिः, यागदिने निर्वापादि अग्निवासनान्तम्। ५।१।१६, * दर्शपूर्णमासयोः पेषणं पिष्टभवनपर्यन्तं कर्तव्यम्, न सकृत्, दृष्टफलकत्वात्। अवघातादिक्रियाणां इत्याभिक्षरणम्। ११।३।५, * दर्शपूर्णमासयोः पेषण प्रथमतः पश्चात् पुरोडाशश्रपणम्। चातुर्मास्येषु महापितृयज्ञे तु प्रथमतः श्रपणेन धानाः संपाद्य पश्चात् सक्तुभावाय पेषणं इति पेषणधर्माः क्रियन्ते एव। १०।२।२४ वर्णकं २. * दर्शपूर्णमासयोः पेषणविधिः नियमार्थः, नानुवादः। भा. ४।२।११।२६. * दर्शपूर्णमासयोः पौर्णमास्यां उपवेषेणैव कपालोपधानम्, परंतु तदर्थे शाखाछेदो न कर्तव्यः। न हि शाखाछेदस्य उपवेषः प्रयोजकः। वि. ४।२।३, * दर्शपूर्णमासयोः पौर्णमास्यमावास्याऽत्रविशिष्टबीजनिमित्तकत्वात् ' निमित्तावृत्तौ नैमित्तिकस्याप्यावृत्तिः ' इति प्रतिपौर्णमास्यमावास्याकालं अनुष्ठानम्, न तु सकृदेव। ६।२।८, * दर्शपूर्णमासयोः ' प्रणीताभिर्हवींषि संयौति ' इति संयवन नियमे विधानम्। भा. १०।२।११।३१९, * दर्शपूर्णमासयोः प्रणीतानां चेया नियमे प्रतिपत्तिः। तत्र प्रणयनस्य न प्रयोजकम्। अतः संयवनोत्तरं निनयनात् प्राक् प्रणीतानां नाशेऽपि न पुनरुत्पत्तिः। निनयनन्यायः। ४।२।५।१४–१५. * दर्शपूर्णमासयोः प्रणीताकाले आध्वर्युवयजमानयोर्निहितस्य वाङ्नियमस्य हविष्कृदाह्वाने त्यागः। तत्र च मोक्षणायत्नापूर्वं प्रयोजकम्, न परमार्थमिति। वि. ९।१।७, * दर्शपूर्णमासयोः प्रणीताधर्मा अपनाम्याः। १।८।१०. * दर्शपूर्णमासयोः प्रणीताप्रणयनकाले पौर्णमास्यां मध्यमे दधनम्। दर्शे पूर्वेद्युः। भा. १२।१।१८।४०. * दर्शपूर्णमासयोः प्रणीताप्रणयनकालीनो वाङ्नियमः तद्देशकालकार्यान्तरापूर्वप्रयुक्तः। प्रणीतावाङ्नियमन्यायः इत्याभ-

धिकरणम् । के. १।१।७।२३-२४ वर्णकं २. ● दर्शपूर्णमासयोः प्रणीताप्रणयनपात्रं नित्यं वारणम् ( वारणवृक्षविकारः । गोदोहनकांस्यमृन्मयानि तु काम्यानि ) । भा. ४।३।२।४. ● दर्शपूर्णमासयोः प्रतिनिधिः अत्यन्तसदृश एव ग्राह्यः यथा व्रीहीणां नीवाराः । वि. ६।३।११, ● दर्शपूर्णमासयोः प्रथनं पुरोडाशधर्मः ' उरु प्रथा उरु प्रथस्वेति पुरोडाशं प्रथयति ' । चरौ नेदं कर्तव्यम् । १०।१।१७, ● दर्शपूर्णमासयोः प्रदानान्तानुसमयः आग्नेयाग्नीषोमीयपुरोडाशयोः कर्तव्यः । अवदानं प्रदानमित्येकः पदार्थः । तथा चाग्नेयमवदाय हुत्वा अग्नीषोमीयमवदाय जुहुयात् । ५।२।४. ● दर्शपूर्णमासयोः प्रधानानि एकेन शब्देन फलं प्रति चोदितानि ' दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत ' इति । अतस्तेषां सम्भूयकारित्वम् । भा. ११।१।१०।५६, ● दर्शपूर्णमासयोः प्रधानानां तन्त्रेण स्वर्गः फलम् । ११।१।१।१-४, ● दर्शपूर्णमासयोः प्रयाजः अन्त्यः देवतासंस्कारापूर्वोभयार्थः । आश्रयिन्यायः । ४।१।७।१८-२०.

❀ दर्शपूर्णमासयोः प्रयाजः पञ्चमः आज्यभागादिदेवतासंस्कारार्थः ॥

प्रयाजे च तन्न्यायत्वात् । १०।१।७।१४॥

भाष्यम्— दर्शपूर्णमासयोराम्नायते उत्तमः प्रयाजः ' स्वाहाकारं यजति ' इति । तत्र संशयः किं उत्तमः प्रयाजः आरादुपकारकं कर्म, उत संस्कारकर्म इति । तत्र एतत् तावत् परीक्ष्यते किं आज्यभागादिषु या देवता यष्टव्याः, सा एतत्र देवता; उत अन्यास्ताभ्यो देवतान्यः इति । कथमन्या देवता, कथं वा प्रकृता, स्युरिति ? यदि ' स्वाहाकारं यजति ' इति देवताविधानम्, ततोऽन्या प्रकृताभ्यो देवता । अथ ' ये यजामहे स्वाहाऽग्निम् ' इति निगदेन मान्त्रवर्णिको देवताविधिः, ततः प्रकृता देवता इति । किं प्राप्तम् ? आरादुपकारकं कर्म इति । तदेतत् वर्ण्यते अन्या देवता ' स्वाहाकारं यजति ' इत्यनेन विधीयते । एवं वचनप्रामाण्यं भविष्यति, इतरथा मान्त्रवर्णिकी कल्पयितव्या भवेत् । ननु अन्या अग्न्यादिशब्दैः न शक्यते वदितुम् । सत्यम् ' ये यजामहे स्वाहाऽग्निम् ' इति मन्त्रवर्णोऽपि विप्रतिषिध्येत । अत्रोच्यते । नैतत् विप्रतिषिद्धम् । अनेकस्यापि एकः शब्दो भवति वाचकः । तद्यथा ' माता ' इति मातरमपि वदति मातामहीमपि । ' माता च परमं दैवतम्, माता च पुत्रेषु ' इत्येतैरावध्यमानो जननीवचनः अवगम्यते । ' माता समः शिशुश्च ' इत्येभिरपि अनुबध्यमानः शब्दः मातृवाचकः । एवं मन्त्रेऽपि अग्न्यादयः स्वाहाकारदेवताकेऽपि यागे प्रयुज्यमानाः तद्वाचिनः अवगम्येरन् । तथा नास्ति प्रकृत यागस्य कार्यमनुग्रहीतं आरादुपक्रिया । तस्मात् आरादुपकारकं कर्म उत्तमः प्रयाजः इति ।

एवं प्राप्ते, ब्रूमः । प्रयाजे च तन्न्यायत्वात् । उत्तमप्रयाजात् स्वाहाकृतिः संस्कारकर्मेति, इहापि चशब्देन अन्वादिश्यते, उत्तमः प्रयाजः संस्कारकर्मेति । तत एतत्तावद्वर्णयन्ति । या आज्यभागादिषु देवता यष्टव्याः, सा एवेह देवता इति । कुतः ? स्वाहाकारस्य देवतासंयोगाभावात् । तद्धितेन वा देवतासंयोगो विधीयते, चतुर्थ्यन्तेन वा । न चेह तद्धितो न चतुर्थी । अतो न देवताविधिः । यागसामानाधिकरण्येन च द्वितीयया गम्यते । तस्मात् यागवचनः स्वाहाकारशब्दो यदा समभिव्याहृत इति । आह । यदि द्वितीयया संयोगात् तं यागवचनं मन्यसे, आरादुपकारकस्तर्हि यागः । ईप्सिततमे हि द्वितीया विभक्तिर्भवतीति । अत्रोच्यते । एवमेव प्राप्ते, वदामः । तन्न्यायत्वादिति ( य एव न्याय इह, सः स्वाहाकृतौ । अपि वा शेषभूतत्वात् तत्संस्कारः प्रतीयेत ( १०।१।६।११ ) इति । शेषभूताश्च आज्यभागादिषु अग्न्यादयः । तदर्थो यागः सन् प्रयोजनवान् भवति । इतरस्मिन् पक्षे यागो निष्प्रयोजनः स्यात् । तदर्थं देवताभिधानमपि निष्प्रयोजनं स्यात् । सत्यां च देवतायां स्वाहाकारशब्दात् यागप्रयोजनं कल्पयितुं न शक्यते । तथा अग्न्यादीनां संभवति स्वार्थे अदृष्टं स्वाहाकारवचनत्वं न तस्या कल्पयितुम् । तस्मात् देवतासंस्कारार्थमुत्तमः प्रयाजः । देवतास्मरणसंस्कारद्वारेण च अदृष्टमपि तस्मात् यागाद्भवतीति ।

टुप्— ननु पूर्वपक्षेऽपि ( स्वाहाकारदेवतापक्षेऽपि ) संस्कारकर्मैव । अन्यत्र ( हि कर्मान्तरे अग्न्यादिवत् )

स्वाहाकारो विहितः । तस्य स्मारकः ( 'स्वाहाग्निम्' इत्यादिर्मन्त्रः ) भविष्यति ( तेन मान्त्रवर्णिकमेव स्वाहाकारस्य देवतात्वम् । अत्र भविष्यति इत्यतः परम् 'अग्निष्टोमादिषु' इति पदं लिखिते मुद्रिते च वर्तते । तत्प्रकृते तु न तत् स्पष्टम् ) शब्दपदार्थनिर्देशात् । ( 'स्वाहाकारं यजति' इति हि कारप्रत्ययान्तः शब्दोऽयं शब्दपरार्थकः, तस्यैव देवतात्वमाह, न स्वाहाऽर्थस्य )। स्वाहाशब्दो हि ( मन्त्रगतः कारप्रत्ययाभावात् ) अर्थस्य स्मारकः, न शब्दस्य । स च ( अर्थः ) स्वाहाकार मन्त्रेणैव ( देवतात्वेन ) चोद्यते । ( न शब्दः । तेन अर्थस्य देवतात्वं मन्त्रवर्णात् स्यात् । अतः— ) वाचनिकोऽयं देवताविधिः । ( पूर्वपक्षमाह— ) करणेन मन्त्रेण देवता अवगम्यते । यथा 'सूक्तवाकेन प्रस्तरम्' इति । ( करणविभक्त्या सूक्तवाकस्य करणत्वावगमात् अग्न्यादीनां देवतात्वं आयुरादीनां च फलत्वं गम्यते तद्वत् ) । न चायम् ( स्वाहाऽग्निं इत्यादिर्मन्त्रः ) करणत्वेन निर्दिष्टः ( अतो नात्र मान्त्रवर्णिकी देवता ) । ननु च अग्न्यादिशब्दाः स्वाहाकारं न शक्नोति वक्तुम् । उच्यते । शक्ष्यति इत्यर्थत्वात् मातृवत् । ( यथा मातृशब्दो धान्यस्य मातारं जननीं चाभिधत्ते तद्वत् । सिद्धान्तमाह— ) अनभिधीयते । न द्वितीयान्तेन शब्देन देवता उच्यते प्रमाणाभावात् । अपि च स्वाहाकारः शब्दपदार्थको न शक्नोति देवता वक्तुम् । ( नहि शब्दस्य देवतात्वमुचितम् ) । तस्मात् मान्त्रवर्णिकी देवताविधिः । ( यत्तु करणविभक्तिनिर्देशाभावात् न मान्त्रवर्णिकी देवतेत्युक्तम्, तत्राह— ) प्रकरणात् क्रम उदितात् करणभावोऽवगम्यते । स्मरणं च प्रधानदेवताया अपेक्षितम् । अतः तेनैवार्थेन संपद्यते । ( तेन संस्कारार्थत्वसिद्धिः )।

लिङ्गदर्शनाच्च । १५ ॥

भाष्यम्— लिङ्गमपि अस्मिन्नर्थे भवति । किं लिङ्गम् ? संप्रतिपन्नदेवताकः चातुर्मास्येषु उत्तमप्रयाजस्य निगदो दृश्यते 'स्वाहाऽग्निं स्वाहा सोमं स्वाहा सवितारं स्वाहा सरस्वतीं स्वाहा पूषणम्' इत्येवंजातकः । स देवतासंस्कारकोऽवकल्पते । इतरस्मिन्पक्षेऽर्थः स्यात् । तस्मादपि देवतासंस्कार उत्तमः प्रयाजः स्यात् । प्रयोजनं विप्रतिपन्नदेवताकेषु सौर्यादिकर्मसु प्राकृतानि देवतापदानि न निवर्तन्ते पूर्वपक्षे । सिद्धान्ते तु निवर्तन्ते ।

शा— उत्तमः प्रयाजः 'स्वाहाकारं यजति' इति विप्रमादुपकारकः, उत आज्यभागादिषु यक्ष्यमाणानामग्न्यादिदेवतानां संस्कारः इति । तदर्थमिदं विचार्यते किं 'स्वाहाकारं यजति इति देवताविधिः, उत नामधेयं इति । तत्र 'वचनाद्देवतालाभे न मन्त्रात् कल्पनं क्षमम् । तस्याध्यानुपयोगित्वाद् भवेदारादुपक्रिया ॥' इति प्राप्ते, उच्यते 'न देवताविधौ शक्तिर्द्वितीयान्तस्य विद्यते । न च, यागविधौ क्षीणो विधत्ते देवतां विधि. ॥' मन्त्रे च आज्यभागादिषु यक्ष्यमाणा देवता यथाक्रमेण संकीर्त्यमानाः प्रत्यभिज्ञायन्ते इति तासां स्मरणं दृष्टमेव प्रयोजनमिति नादृष्टार्थकल्पना । तस्मात् विकृतिषु सौर्यादिषु अग्न्यादिपदानि दृष्टार्थत्वात् निवर्तन्ते ।

सोम— शाब्दाहुतेः अस्तु संस्कारत्वं शास्त्रोः पूर्वं गृहस्थानधिकारात् । १६ ॥ कथञ्चिदपि स्वाहाकारस्य समवायाभावात् न संस्कारकत्वं इति इत्युपस्थितेः प्रत्युदाहरण संगतिः । सूत्रार्थस्तु— दृष्टे संभवति अदृष्टकल्पना न युक्ता इति स्मारकत्वादुक्तिन्यायसाम्यात् उत्तमप्रयाजस्यापि संस्कारकत्वम् । इति ।

वि— 'अन्त्य. प्रयाज आरात् किमुपकार्युत ( टी ड ) संस्कृतिः ।, स्वाहाकारेति देवोक्तेर्मान्त्रवर्णमान्त्रवर्णनात् ॥ आद्यो, नैवं चतुर्थ्यादिरभावात् यागनामके । विधिरत्र शाऽत्र सौर्यादावर्थोऽग्न्यादिनिवर्तनम् ॥'

भाट्ट— स्वाहाकारप्रयाजे यद्यपि 'स्वाहाकारं यजति' इतिवचनेन 'विष्णुं यजति' इतिवत् स्वाहाकारदेवताविधौ याज्यामन्त्रगतौ अग्न्यादीनां प्रधानादिदेवतानां प्रत्यभिज्ञाप्यमानानां प्रकाशनात् लिङ्गादेव मन्त्रोऽतो तद्देवताप्रकाशनार्थत्वावगतेर्पुनः एव सौर्यादौ अविपरस्थाने सूर्यशब्दोहवत् अग्नीषोमादिपदानां बाध । न हि तदा तत्रत्याग्न्यादिपदानां स्वाहाकारदेवताभिधायकत्वे प्रमाणमस्ति, लिङ्गाद् तद्देवताप्रकाशकत्वेऽपि प्रकृत-

यागाङ्गत्वोपपत्तेः । 'अग्न आज्यस्य वियन्तु' इति मन्त्रेण 'हे अग्निप्रभृतिदेवताः स्वाहाकार त्वयि तुष्टे तत्तत्प्रयाजादिदेवताः सर्वा यक्ष्यमाणाः संतुष्टाः भवन्तु' इत्यर्थाङ्गीकारात् । अतः स्वाहाकारभागः उद्देशांशे परं आराहुपकारकः स्यात्, न तु मन्त्रांशोऽपि, लिङ्गादेव तत्तद्देवतामात्रप्रकाशकत्वोपपत्तेः । मन्तुतस्तु न स्वाहाकारस्य द्वितीयया देवतात्वाभिधानम्, स्वाहाकारशब्दस्य स्वाहाकार यथा स्यात् तथेति यथाश्रुतार्थत्वादिनाऽपि संभवेन प्रकारान्तरस्य संदिग्धत्वात् । अत्र प्रथमविधिप्रकारलिप्सया मन्त्रवर्णमात्रस्वाहाकारदेवत्वं प्रवृत्तिनिमित्तीकृत्य स्वाहाकारशब्दो नामधेयमेवेत्युक्तं कौस्तुभे । देवताश्चास्मिन् यागे मन्त्रवर्णमात्राः यक्ष्यमाणाः अग्न्यादयः एव सूक्तवाकवत् । अतश्चायं यागः उद्देशांशोऽपि तद्देव तत्तद्देवतासंस्कारकः मन्त्रांशोऽपि, न तु लिङ्गादुपकारो एव संस्कारकः, उद्देशांशो तु आराहुपकारकः इति सिद्धः एवायमर्थः उत्तरविषयत्वा स्मार्यते इति द्रष्टव्यम् ।

मण्डन— 'संस्कारकर्मोत्तमकः प्रयाजः ।'

शंकर— 'स्वाहाकारः संनिपाती ।'

* दर्शपूर्णमासयोः प्रयाजा अनुयाजाश्च आज्येनैव हूयन्ते । तत्र प्रयाजचतुष्टयार्थमाज्यधारणार्थो जुहूः, अन्तिमप्रयाजद्वयार्थस्य अनुयाजस्य धारणार्थों च उपभृत् । वि. ५।२।८.

दर्शपूर्णमासयोः प्रयाजा आराहुपकारकाः, समिदादिपदानां नामधेयत्वात् ॥

प्रयाजेऽपीति चेत् । ९।२।२०।५८ ॥

भाष्यम्—दर्शपूर्णमासयोः प्रयाजा आम्नाताः 'समिधो यजति, तनूनपातं यजति, इडो यजति, बर्हिर्यजति, स्वाहाकारं यजति' इति । तत्र संशयः क्रियते किं समिधो यजतीत्यभिधानैः समिदादयो देवताविशेषा विधीयन्ते, एतान् समिदादीन् यजतीति । किंवा मन्त्रैः समिदादिभिः संबन्ध उपादीयते, एवंप्रकारिका देवता न मन्त्रे उपदिश्यन्ते इति । किं तावत् प्राप्तम् ? मन्त्रगतानां समिदादीनां यागो विधीयते । समिदादयश्च देवता वाक्यसंबन्धादिति । एवं मन्त्रैः समिदादिभिः संबन्धे नियमाणे प्रकरणानुग्रहो भविष्यति । तस्मात् प्रयाजेऽपि प्रकृता देवता भवितुमर्हन्तीति । देवताप्राधान्यं च यथा पार्वणहोमे इति ।

नाचोदितत्वात् । ५९ ॥

भाष्यम्— नैतदेवम् । नात्र समिदादयश्चोद्यन्ते देवतात्वेन । कुतः ? द्वितीयानिर्देशात् । तद्धितनिर्देशेन या देवता चोद्यते, चतुर्थ्यन्तनिर्देशेन वा । तत्र हि तादर्थ्यं गम्यते । तादर्थ्यं च सति देवता भवति । न देवता नाम काचित् । यैव कस्यचिदुपाक्ष देवता, सैव नान्यस्य । यस्य या प्रति तादर्थ्यम्, सा तस्य देवता । द्वितीया हि ईप्सिततमे कारके भवति । न च इज्यस्य तादर्थ्यं गम्यते । तस्मात् न द्वितीयाऽन्वेन देवताविधानम् ।

अथाह । तादर्थ्यं कल्पयिष्यामः । यथा 'विष्णुं यजति, वरुणं यजति' इति । अत्र न विष्णुर्वरुणो वा यागः । नापि यागादर्थान्तरम्, यागस्य प्रकृत यत् ईप्सितम्, तत् द्वितीयया अभिधीयते । तेन तत्र कल्प्यते तादर्थ्यम् । शब्दान्तरेण वा विहितं गम्यते । इह तु न शब्दान्तरविहितम् । न चैवं शक्यं परिकल्पयितुम् । न च यागस्य कारकत्वेन संभवति । समिदादिशब्दकत्वात्तु स्वार्थेन समिदादयः शब्दा वाचका उपपद्यन्ते । क्रियाया चेप्सितता इष्यते द्वितीया । यथा पाकं पचतीति । तस्मात्, समिधो यजतीत्ययमर्थः 'समिद्याजिः कर्तव्यः' इति । यदा च यजिं प्रति अनुष्ठानं चोद्यते, तदा यजिरुपदिष्टो भवति । यदि पुनरत्र देवता अपदिश्येत । उपदिष्टे यजौ देवता उपदिश्येत । तत्र उपदिष्टोपदेशो वाक्यं भिद्येत । तस्माद्य देवतोपदेशः । यदा न देवतोपदेशः, तदा मान्त्रवर्णिको देवताविधिः । तदा चोपादेयत्वात् एवंप्रकारिका देवताश्चोद्यन्ते । तस्मात् मान्त्रवर्णिको देवताविधिः ।

टुप्— अत्र सिद्धान्तग्रन्थे 'विष्णुं यजति, वरुणं यजति' इति परिचोदना । (तत्र सिद्धान्तभागं कल्प्यते तादर्थ्यम्, शब्दान्तरेण वा विहितं गम्यते इति । तत्र द्वितीयं परिहारं द्रष्टा व्याचष्टे-) अथोच्यते । वाक्यान्तरेण वैष्णवयागो विहितः, तस्यायमनुवादः । अथवा याग एवात्र विधीयते । तत्र प्रकरणसंनिधिगम्यो मान्त्रवर्णिको विष्णुः प्राप्तः, तस्य (लक्षणया) अव-

मनुवादः यागस्तुत्यर्थः । न चात्र नामधेयं विष्णुः, द्वितीयान्तस्य यजतिसामानाधिकरण्याभावात् । ( एवं दृष्टान्तं परिशोध्य प्रकृतमनुसंधत्ते– ) प्रयाजेष्वपि च मान्त्रवर्णिको देवताविधिः । अग्निसमिदादयश्च ( अग्निशब्देन तनूनपात् प्रदर्शितः ), एवमेव (विष्ण्वादिवदेव) अनूद्यन्ते । संज्ञारूपा वा ( समिदादिशब्दाः ) । यद्यपि ( तन्मात्रन्यायेन यजि– ) सामानाधिकरण्यमस्ति, तथापि न च सा ( संज्ञा ) भेदिका, किन्तु अभ्यास एव भेदकः । तदुक्तं द्वितीये ( २।२।१२ ) ।

शा— 'उद्देशपूर्वकस्त्यागो यजिना ह्यभिधीयते । त्यागो च नास्ति कर्मत्वं देवतायाः कथंचन ॥' तस्मादारादुपकारकाः प्रयाजाः ।

सोम— पूर्ववत् तन्यायात् संगतिः ।

वि— 'देवता यजयो वा स्युः प्रयाजे समिदादयः ।, विष्णाविवत् देवतात्वं, न चतुर्थ्याद्यभावतः ॥'

भाट्ट— समिदादीनां चतुर्णां प्रयाजानां यदि समिदादिपदैर्द्वितीयान्तैः 'विष्णु यजति' इतिवत् देवताविधिः, यदि वा विनियोगविधिगोरभावात्तेर्मन्त्रवर्णादेव समिदादिदेवताविधिः । उपस्थितावयवत्वं तु समिदादिपदं देव सानुवादो नामधेयमनेन वा । सर्वथा संनिपत्योपकारकत्वलाभाय तत्तद्देवतासंस्कारार्थत्वमेव पार्वणहोमस्वाहाकारोपासनानुयाजादिवदिति । न च समिदादीनामुपयोगाभावः, वेदे सर्वत्र समिदादिपदानामग्निसामानाधिकरण्यदर्शनेन आग्नेये उपयोगसंभवात् । समिध्यमानस्यैव वा समिध्यतादौ उपयोगसत्त्वेन तस्यैव संनिपत्योपकारकत्वम् । इति प्राप्ते, सत्यपि वेदे समिदादिपदानामग्निपदसामानाधिकरण्ये इन्द्रमहेन्द्राधिकरणन्यायेन समिदादिपदैः तत्तत्प्रकाशनानुपपत्तेः । शब्दस्य देवतात्वेन तत्रैव तत्तन्मयप्रयोगानुपपत्तेः । न च पूर्णमासादिशब्दस्य पार्वणहोमयोर्देवतात्वेऽपि तदर्थस्यापि आग्नेयादेः उद्देशाशविषयत्वात्प्रतिपाद्यसंबन्धेन उद्देशसंभवनिबन्धात् पार्वणहोमसंस्कार्यत्ववत् इहापि समिदादिपदस्य देवतात्वे तत्प्रतिपाद्यस्याग्नेः संस्कार्यत्वोपपत्तिः इति वाच्यम् । तथात्वेऽपि 'समिधो अग्न आज्यस्य वियन्तु, तनूनपादग्न आज्यस्य वेतु' इत्यादिमन्त्रवर्णेषु अग्नेः संबोधनेन ततो भिन्नस्यैव समिदादिपदार्थस्य क्रियाऽन्वयप्रतीतेः समिदादिपदस्य अग्निप्रतिपादकत्वाभावात् अग्निसंस्कारकत्वे पशौ अतिदेशानुपपत्तेश्च । यत्तु इतरप्रयाजानां आरादुपकारकत्वेऽपि समिद्यागस्य समिन्धनाङ्गभूतसमित्संस्कारकत्वमिति, तन्न । तथात्वे 'यो वै प्रयाजानां मिथुनं वेद, समिधो बह्वीरिव यजति' इति लिङ्गानुपपत्तेः । अत्र हि इवशब्देन वस्तुतो बहुत्वाभावेन आरोपितं बहुत्वमिति सूच्यते । न च तत् समिन्धनाङ्गसमित्सु युज्यते, वस्तुत एव तासां बहुत्वात् । आरादुपकारकत्वपक्षे तु तत्रापि बहुवचनान्तसमित्पदस्य देवतात्वे प्रातिपदिकसंज्ञाबलेन एकस्यैव समित्पदार्थस्य सिद्धौ लिङ्गवशेन युक्तो बहुत्वारोपः । तस्मात् चत्वारोऽपि प्रयाजाः आरादुपकारका एवेति न विकृतौ ऊहितव्याः । १९.

मण्डन— 'समिदादौ यजिविधिः ।' २७.

शंकर— 'प्रयाजा अर्थकर्म च ।' ११.

● दर्शपूर्णमासयोः प्रयाजे उत्तमे मान्त्रवर्णिको देवताविधिः । टुप्. १०।१।७।१४, ● दर्शपूर्णमासयोः प्रयाजेषु पाठक्रमो नियामकः । पाठक्रमाधिकरणम् । भा. ५।१।४।८, ● दर्शपूर्णमासयोः प्रयाजेषु वाक्यपाठेन प्रतीतस्य क्रमस्य नियमोऽस्ति । वि. ५।१।४. ● दर्शपूर्णमासयोः प्रयाजादीनां अङ्गत्वं प्रकरणात् । प्रकरणाऽङ्गताधिकरणम् । भा ३।३।४।११. ● दर्शपूर्णमासयोः प्रयाजादीनां सर्वेषामङ्गानां प्रधानसमुदाये एक एवोपकारो युगपत् । वि. ११।१।२. ● दर्शपूर्णमासयोः प्रयाजानुयाजार्थं समानयनं औपभृतस्याज्यस्य प्रयोजकम् । आज्यसमानयनाधिकरणम् । भा ४।१।१५।४०–४१, ● दर्शपूर्णमासयोः प्रयाजवाक्ये श्रूयते, 'अभिक्रामं जुहोति अभिजित्यै' इति । तस्य अभिक्रमणस्य प्रयाजेष्वेव निवेशः, न सर्वस्मिन् प्रकरणे । अभिक्रमणाधिकरणम् । ३।१।१०।१९–२०, ● दर्शपूर्णमासयोः प्रयाजशेषेण हविरभिघारणार्थं शेषधारणत्वात्ते पृथक् न कर्तव्ये । प्रयाजशेषाभिघारणन्यायः । ४।१।१४।३२–३९, ● दर्शपूर्णमासयोः प्रयोगभेदेन सर्वे कामाः, न तु एकेनैव प्रयोगेण । योगसिद्ध्यधिकरणम् । ४।३।११।२७–२८, ● दर्शपूर्णमासयोः प्रयोगभेदेऽपि फलैकत्वात् समाध-

वचन 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' इति । ११।८।११२, ● दर्शपूर्णमासयोः प्रस्तरस्य प्रहरणं 'आशीर्भिः प्रस्तरं प्रहरति' (आशीर्भिः सूक्तवाकेन)। ११।३।५।१२, ● दर्शपूर्णमासयोः प्रस्तरस्य प्रहरणं 'सह शाखया प्रस्तरं प्रहरति' । वि. ४।२।४ । 'सूक्तवाकेन प्रस्तरं प्रहरति' । ३।२।१५. ● दर्शपूर्णमासयोः प्रागूर्ध्वं चेति सोमस्य द्वौ कालौ । टुप्. ५।४।३।६. ● दर्शपूर्णमासयोः 'प्राचीमाहरति' इति शाखावादः, न दिग्वादः। शाखावादः इत्यनाभिकरणम् । भा. ४।२।२।७, ● दर्शपूर्णमासयोः प्राशित्रावदानं सर्वेभ्य एव, न केवलं आग्नेयादेव । ६।१।१।५।२६. ● दर्शपूर्णमासयोः प्राशित्रादिभक्षणं ऋत्विग्भिरेव कर्तव्यम् , न यजमानेन । वि. ६।४।१. ● दर्शपूर्णमासयोः प्रैषो नित्यः 'प्रोक्षणीरासादय' इत्यादिः । भा. ६।८।८।२८.

☒ दर्शपूर्णमासयोः प्रैषप्रैषार्थौ भिन्नकर्तृकौ । प्रोक्षण्यासादनादि कर्म नाध्वर्योः, किन्तु आग्नीध्रः ॥

प्रैषेषु च पराधिकारात् । ३।८।११।२३ ॥

भाष्यम्— स्तो दर्शपूर्णमासौ । तत्र प्रैषाः समाम्नाताः 'प्रोक्षणीरासादय, इध्माबर्हिरुपसादय, स्रुचः च स्रुचश्च संमृड्ढि, पत्नीं संनह्याऽऽज्येनोदेहि' इति । तत्र संदेहः किं य एव प्रैषे, स एव प्रैषार्थे, उतान्यश्च प्रैषेऽन्यश्च प्रैषार्थे, इति । किं प्राप्तम् ? एक एव प्रैषप्रैषार्थयोरिति । कुतः ? समाख्यानात् । अन्यः इति चाश्रुतत्वात् । अन्यस्मिन् प्रैषो विप्रतिषिध्यते । उच्यते। न प्रैषो भविष्यति । प्राप्तकाले लोटं वक्ष्यामः । आह । प्राप्तकालेऽपि सति युष्मदादिष्वेव उपपदेषु मध्यमादयो व्यवस्थिताः । ■ पुरुषत्रयो भवति । उच्यते । यदा विवक्षायां युष्मदादिषु मध्यमादयः । यदा तत्र प्राप्तः काल इति विवक्ष्यते तदा युष्मदेव संप्रत्ययः, नास्मदि शेषे वा । यदा खलु क्रियायाः प्राप्तः कालः इत्येतावत् विवक्ष्यते, न तत्र मम चेति, न तदा युष्मदादीनामन्तरेण मध्यमादयो भवितुमर्हन्ति । न चेदं युगपत् विवक्षितु शक्यते, पदार्थस्य प्राप्तः कालः तत्र चेति । भिद्येत हि तथा वाक्यम् । तेन यदि वा निर्ज्ञाते पदार्थकाले 'तत्र कालः' इति उच्यते परिशिष्टम्, यदि वा तवेति निर्ज्ञाते 'पदार्थस्य कालः' इति । तत्र पदार्थस्य कालो वदितव्यः, न तु युष्मदर्थस्य । तेन हि स्मृतेन प्रयोजनम् । स हि कर्तव्यः इत्यवगतः, न तु युष्मदर्थंतथा। तस्मात् समाख्यानात् अध्वर्योरेव प्रैषप्रैषार्थौ । इति प्राप्ते, ब्रूमः । प्रैषेषु अन्यः, अन्यश्च तदर्थेषु इति । कुतः ? पराधिकारात् । परस्मिन् हि प्रैषे उपपद्यते, नात्मनि इति । आह, ननु प्राप्तकाले भविष्यतीति । उच्यते । न संभवति प्रैषे, प्राप्तकालता व्याख्या । तस्मात् युष्मदर्थो गम्यमानो न विवक्षित इत्युच्यते । संभवति चात्र प्रैषार्थः तस्मात् प्रैषः । प्रैषश्चेत्, अन्यः प्रैषार्थः इति सिद्धम् ।

वा— प्रैषस्य प्रैषार्थस्य च आध्वर्यवसमाख्यानुग्रहस्यात् आध्वर्यवप्रयोगत्वे अवधारिते कथमागतः प्रैष इति चेदाह— नैवाय प्रैषः, किं तर्हि ? प्राप्तकालतायां लोटं वक्ष्यामः इति । प्रैषवादी तु आह, प्राप्तकाल विषया चेत् प्राप्तकालता विवक्षिता, हन्त उत्तमपुरुषेण भवितव्यम् । नहि परविषययुष्मदर्थमन्तरेण मध्यमपुरुषो लभ्यते । प्रैषे तु स्वभावतः परविषयत्वात् युक्तम् इति । परस्तु आह, यदा समाख्याऽवगतात् समानकर्तृत्वात् प्रैष बुद्धिरपनीता, तदा प्राप्तकालत्वमभिधीयमानं किं क्रियाणामभिधीयताम्, उत कर्तृणामिति, क्रियाणां इत्येव गम्यते। ताः हि चोदितत्वात् प्रयोजनवत्यः प्रथमतरं प्रतीताः । तासां च अनुष्ठानार्थं प्राप्तकालत्वस्मरणं इष्टार्थम् । कर्तृप्राप्तकालत्वकथने तु सर्वं विपरीतम् । आख्यातेषु च प्रथमादि. पुरुषत्व कस्यचित् अन्यत्वाविवक्षितत्वात् नान्तरीयकतया एव मध्यमपुरुषो भविष्यति । क्रियैव चोद्यते तव प्राप्तकाल इति । यदि च कर्तुः प्राप्तकालत्वमुच्येत, तत. 'किं कर्तुम्' इति साकाङ्क्षमेव स्यात् । अथ 'प्रोक्षण्यासादनादि कर्तुम्' इति (अध्याह्रियते), तथा विनिवृत्तसमाख्यावशात् साकाङ्क्षमेव स्यात् । तस्मादपि क्रियायाः प्राप्तकालत्वं प्रकाश्यते । यद्यपि प्रैषोऽयं आश्रीयते, तथापि आत्मानमेव कथञ्चित् शरीरशरीरिणो. अवस्थाऽन्यतया वा भेदेन प्रैषकं प्रेष्यं च व्यपदेक्ष्यति । इति समानकर्तृकत्वे प्राप्ते, ब्रूमः । प्रैषेषु न इतरस्य कुर्याद् इति संबन्ध. । ( अत्र प्रैषेषु च इति सूत्रमुक्तम्,

इतरगन्यः इति पूर्वसूत्रादनुवृत्तम्, कुर्यात् इति अध्याहृतम् ) कुतः ? स्वभावेनैव चैषां परनिष्ठत्वात् परिक्रयवत्। यत्तु नैरार्थं प्रैष इति, तदयुक्तम्, मन्त्ररूपादेव प्रैषत्वस्योपपत्तेः। यो हि समाख्याकर्तृकतया तं बाधते, तेन समाख्यया लिङ्गं बाधितं स्यात्। न च प्राप्तकालतया लिङ्गविशेषः परिहियते, मध्यमपुरुषस्य असंपादनात्। न च शब्दान्तरेण अनुपात्ता क्रिया एवं शक्यते वक्तुं 'तव प्राप्तः कालः' इति। यद्यपि च शक्यते, तथापि न दृष्टः कश्चिदर्थः स्यात् चेतनविरहात् ईदृशस्य प्रयोगस्य। तथा आत्मभेदपरिकल्पनायामपि नैव दृष्टं प्रयोजनम्। गौणत्वं तु स्थितैव। मुख्यं च कार्यं मन्त्राणां इत्यवधारितम् (३।२।१)। ततश्च यद्यपि प्राप्तकालतायामेव लोट्, तथापि परस्यैव सा कथ्यते इति पराभिधानो निवर्तते। न च वाक्यभेदः, विशिष्टार्थप्रेषणात्। अवश्यं चात्र विशिष्टता अभ्युपगन्तव्या प्रोक्षणीपदोपादानात्। न च एकपदोपात्तः अनेकोऽर्थः वाक्यं भिनत्ति। सर्वप्रयोगेषु क्रिया–कर्तृ–संपदा–उपग्रह–पुरुषविशेषाभिधानात्। युगपदुपादानस्य अपरिहार्यत्वात्। न च ईदृशं विशिष्टविधानं क्वचित् नाभ्युपगन्तव्यम्। प्राप्तकालत्वे च क्रियायुष्मदर्थयोः पृथक्त्वात् भेदेन शक्तिः कल्प्येत। प्रैषे तु तस्य नियमेन युष्मदर्थविषयत्वात् मध्यमपुरुषः अनुवादः। एवं चैषा (प्रैष–)समाख्या अनुगृह्यते। तस्मात् लिङ्गेन समाख्याबाधात् अन्यः प्रैषः, अन्यश्च प्रैषार्थः इति।

**सोम—** पूर्वत्र वचनबलात् आतिदेशिकस्य प्राकृतसमाख्यालभ्यस्य कर्तृबाधेऽपि, इह वचनाभावात् न समाख्यालभ्यकर्तृबाधः इति प्रत्यवस्थानात् संगतिः। सूत्रार्थस्तु– प्रैषेषु प्रैषार्थमन्यः कुर्यात्, तेषां स्वभावतः परनिष्ठत्वादिति।

**वि—** 'प्रोक्षण्यासादनं कुर्यादध्वर्युरितरोऽथवा।, आख्यया(ऽ)ऽद्यः, साद्येति प्रेषितोऽन्योऽस्तु लिङ्गतः॥'

**भाट्ट—** 'प्रोक्षणीरासादय' इत्यादयः प्रैषाः, प्रैषार्थाश्च प्रोक्षण्यासादनादयः समाख्यानात् अध्वर्युणैव एकेन कर्तव्याः। न च स्वस्मिन् स्वस्य प्रैषानुपपत्तिः 'चेतो युवा निवर्तते' इत्यादाविव स्वस्मिन्नपि स्वस्योपदेशसंभवात्। वस्तुतो नैवायं प्रैषः, अपि तु 'प्रैषातिसर्गप्राप्तकालेषु कृत्याश्च' (पा० ३।३।१६३) (कृत्यप्रत्ययाः लोट् च एतेषु अर्थेषु स्युः। प्रैषो विधिः। अतिसर्गः कामचारानुज्ञा।) इति चकारेण लोटोऽपि प्राप्तकालतायां विधानात् प्राप्तकालतायामयं लोट्। प्रोक्षण्यासादनस्य प्राप्तः काल इति। युष्मदर्थको मध्यमपुरुषस्तु साधुत्वार्थः। अथवा 'हे प्रोक्षण्यासादन तव प्राप्तः कालः' इति क्रियायां चेतनत्वाध्यारोपेण वा। यत्र तु 'अग्नीदग्नीन् विहर' इत्येवं प्रैषः, तत्रास्तु संबोधनानुरोधेन प्रैषार्थस्य आग्नीध्रकर्तृकत्वम्। वस्तुतस्तु 'हे अग्नीत् ममाग्निविहरणस्य प्राप्तः कालः' इति व्याख्यातुं शक्यत्वात् न तत्रापि समाख्याबाधः। इति प्राप्ते, समाख्याऽनुरोधेन मध्यमपुरुषस्य साधुत्वेन क्रियायां चैतन्याध्यारोपेण व्याख्याने प्रमाणाभावात् संबोधनमध्यमयोश्च अदृष्टार्थत्वापत्तेः प्रैषत्वसमाख्याबाधापत्तेश्च प्राप्तकालार्थकत्वानुपपत्तेः प्रैषस्यापि स्वस्मिन् औपचारिकत्वापत्त्या एकस्याध्वर्युसमाख्याबाधेन उभयोर्भिन्नकर्तृकत्वमेव।

**मण्डन—** 'प्रैषे तदर्थे च न कर्तुरैक्यम्।' १२.

**शंकर—** 'प्रैषप्रैषार्थकर्तृभित्।' कर्त्रोः भिदा। १४.

* दर्शपूर्णमासयोः प्रोक्षणं न व्रीहिस्वरूपप्रयुक्तम्, किन्तु अपूर्वप्रयुक्तम्। मा. ५।१।५।११–१९, * दर्शपूर्णमासयोः प्रोक्षणादीनि संनिपत्योपकारकाणि अपूर्वप्रयुक्तानि। इत्यादिषधिकरणम्। ५।१।२।२–३, * दर्शपूर्णमासयोः 'प्रोक्षणीरासादय' इति प्रोक्षणीशब्दः यौगिकः। तेन कश्चित् घृतं प्रोक्षणं भवति। प्रोक्षण्यधिकरणम्। १।४।८।११, * दर्शपूर्णमासयोः प्रोक्षण्यासादनादि कर्म नाध्वर्योः, किन्तु आग्नीध्रः। प्रैषा आध्वर्यवाः इत्याधिकरणम्। ३।८।१२।२४–२५, * दर्शपूर्णमासयोः फलदेवताप्रकाशका मन्त्राः अपूर्वप्रयुक्ताः। फलदेवताधिकरणम्। ९।१।३।४–५, * दर्शपूर्णमासयोः फलभावनायां शक्तिरत्र उपयुज्यते, नापूर्वस्य फलस्योत्पत्तौ। यथापूर्वं फलं अदृष्टरूपतया, अदृष्टरूपमेव तत् स्यात्। ११।१।७।२५. * दर्शपूर्णमासयोः फलीकरणहोमः 'अग्नेऽदब्धायो' इति मन्त्रेण अनुयाजोत्तरं दक्षिणायां।

फलीकरणानि तण्डुलकणाः । अग्नौ चरौ पुरोडाशे च । वि. ५।१।१९, • दर्शपूर्णमासयोः बर्हिः असकृदाच्छिन्नं भवति । पितृयज्ञे तु सकृदाच्छिन्नम् । भा. ११।३।७। ३६-३७. • दर्शपूर्णमासयोः बर्हिः द्विविधं मुख्यं गौणं च । मुख्यं कुशकाशादिदर्भविशेषरूपम् । गौणं तु तृणान्तरं 'उलपं' इत्युच्यते । वि. ३।२।१. • दर्शपूर्णमासयोः बर्हिः बर्हिर्धर्माः वेदिः वेदिधर्माश्च अङ्गप्रधानार्थाः, न केवलं प्रधानार्थाः । वेदिबर्हिर्धर्मन्याय. । भा. ३।७। १।१-५, • दर्शपूर्णमासयोः बर्हिः (मुख्यं) 'यजस्य घोषदसि' इत्यादिमन्त्रपाठके (तैत्त. १।१।२) प्रोक्षितमन्त्रैः दात्रेण छित्त्वा संपाद्यते । वि. १०।१।१. • दर्शपूर्णमासयोः 'बर्हिर्लुनाति' 'आज्यं विलापयति' 'पुरोडाशं पर्यग्नि करोति' इति बर्हिराज्यपुरोडाशशब्दाः जातिशब्दाः, न संस्कारशब्दाः । भा. १।४।७।१०, • दर्शपूर्णमासयोः 'बर्हिर्लुनाति' इति बर्हिःशब्दो जातिवाची, न संस्कारवाची । तस्मात् यूपावटस्तरणबर्हिर्लौकिकम् । बर्हिराज्याधिकरणम् । १।४।७।१०. • दर्शपूर्णमासयोः बर्हिः वेदस्य वेदाग्रास्तरणे उपक्षीणम्, इति पवित्र विधृती च परिभोजनीयैः कार्याणि । वि. ३।८।१८, • दर्शपूर्णमासयोः बर्हिः सधर्मकम्, यूपावटस्तरणबर्हिस्तु निर्धर्मकम् । ७।३।७, • दर्शपूर्णमासयोः 'बर्हिषा पूर्णमासे व्रतमुपैति, वत्सैर् अमावास्यायाम्' । पूर्णमासे बर्हिःसंपादनकाले व्रतग्रहणम्, दर्शे च वत्सापाकरणकाले व्रतग्रहणम् । संनयतः अमावास्यायामेव व्रतग्रहणम् । असंनयतस्तु वत्सापाकरणोपलक्षिते काले इति विशेषः । ६।४।१२,१३. • दर्शपूर्णमासयोः बर्हिर्धर्माः अङ्गप्रधानोभयार्थाः । द्रव्यसंस्कारन्यायः इत्यत्राधिकरणम् । भा. ३।८।१५।३१. • दर्शपूर्णमासयोः बर्हिर्लवने मन्त्रमुष्टि लवनमन्त्रावृत्तिः । वि. ११।४।१५, • दर्शपूर्णमासयोः बर्हिर्लवनादि सर्वार्थम् । विधृतिपवित्राधिकरणम् । भा. ३।८।१७।३३. • दर्शपूर्णमासयोः बर्हिर्लवनकाले मनुष्या मुष्ट्या मुष्टीर्लुनाति । वि. ११।४।१५. • दर्शपूर्णमासयोः बर्हिर्लवनमन्त्रस्य मुख्ये कुशे एव विनियोगः । बर्हिर्न्यायः । भा. ३।२।१।१-२, • दर्शपूर्णमासयोः ब्रह्मणो वरणं प्रणीताप्रणयनकाले । प्राक् वरणात् न किञ्चित् ब्रह्मकर्मास्ति, वरणादुत्तरकालं ब्रह्मणा कार्यम् । अनन्तर्यमेव तत् । तत्र अमावास्यायां 'पूर्वेद्युरमावास्यायां वेदिं करोति' इति वचनेनोपदिष्टम् । तस्मिन्नपकृष्यमाणे परिग्रहोऽपि अपकृष्टः प्रसङ्गोऽपि ब्रह्मवरणमपि, प्रधानदेशकालत्वात् गुणानाम् । एवं सति पौर्णमास्यां प्रणयनकाले ब्रह्मवरणम्, अमावास्यायां पूर्वेद्युः । उभयत्रापि अप्रवृत्ते ब्रह्मार्थे एव ब्रह्मवरणम् । तस्मात् उभयत्रापि आनन्तर्यम्, नाहत्यर्थम् । १२।१।१८।३७-४१, • दर्शपूर्णमासयोः अध्वा-इडा-प्राशित्र-चतुर्धाकरण-अनुवाककालाः सन्ति । १०।२।३।११. • दर्शपूर्णमासयोः भक्षार्थमवत्तस्य नाशे भक्षलोपः प्रतिपत्तिरसत्त्वात् । वि. ६।४।२, • दर्शपूर्णमासयोः 'भिन्ने जुहोति', 'स्कन्ने जुहोति' इति भेदनहोमः स्कन्दनहोमश्च दर्शपूर्णमासाङ्गम्, लौकिके नाग्नौ होमः । ६।४।१५. • दर्शपूर्णमासयोः भेदनस्कन्दनादावृत्तौ नैमित्तिकस्य प्रायश्चित्तस्यापि आवृत्तिः । यथार्थता नैमित्तिकानां इत्यधिकरणम् । भा. ६।२।५।१०. • दर्शपूर्णमासयोः 'मन्द्रया (वाचा) आज्यभागान्तम्' । सु पृ. ११८१. • दर्शपूर्णमासयोः 'मयि दक्षक्रतू' इति मन्त्रपाठः ऋतुयुक्तब्रह्मयजमानपुरुषसंस्कारः । वि. ३।८।९, • दर्शपूर्णमासयोः 'मलवद्वाससा न संवदेत' इति निषेधः केवलपुरुषार्थः, न क्रत्वर्थः । तस्मात् तस्य प्रकरणादुत्कर्षः । क्रतौ तु निषेधोऽपेक्षितः 'तस्मात् यजेत' इति विधानात् । ३।४।११. • दर्शपूर्णमासयोः मुसलम् 'उलूखलं च मुसलं च यज्ञायुधम्' । वि. ३।८।१०. । तद्वयोस्तु 'उलूखलमुसलाभ्यामवहन्ति' । ३।१।५, • दर्शपूर्णमासयोः 'यजमानः प्रस्तरः' इत्यत्र यजमानशब्दः प्रस्तरस्तुत्यर्थो यागसाधनत्वेन गौणः । १।४।१३. • दर्शपूर्णमासयोः 'यजमानपञ्चमा ऋत्विजः इडां प्राश्नन्ति' । भा. १२।१।१५।३१. • दर्शपूर्णमासयोः 'गर्भं नचिकेता अध्वर्युयजमानौ वाचं यच्छतः' प्रोक्षणप्रभृति हविष्कृदाह्वानपर्यन्तम् । वि. ९।१।७, • दर्शपूर्णमासयोः यज्ञायुधानि दशविधानि व्यवस्थितानि— 'स्फ्येनोद्धन्ति' 'कपालेषु श्रपयति' 'अग्निहोत्रहवण्या हवींषि निर्वपति' 'शूर्पेण विविनक्ति' 'कृष्णाजिनमधस्तादुलूखलस्यावस्तृणाति' '[illegible]म्याया

एकप्रयोगविधिपरिगृहीतेषु पदार्थानुसमये सति प्रकृतौ पाठेन क्लृप्तक्रमयोरुपाकरणनियोजनयोः औपदेशिकक्रमपाठेन क्लृप्तक्रमयोरुपाकरणनियोजनयोः औपदेशिकयुसाहित्यानुरोधेन पोडशाद्यन्यतमाने ऽपि तदधिकप्रधाने प्रमाणाभावात्, येनैव क्रमेणोपाकरणम्, तेनैव क्रमेण नियोजनमिति प्रवृत्तिक्रमो युक्तः। प्रकृते तु एकप्रधाननियोगयोर्नानाप्रत्यक्षानुमन्त्रणयोः पाठाभावेन क्लृप्तक्रमयोर्नानाशाखीयत्वात्, अन्यदि च सर्वप्रयाजानामेकप्रयोगविधिपरिग्रहे जमत्वात्, तयोः पदार्थानुसमयार्थमपात् एकैकस्मिन् प्रयाजे द्वयोर्द्वयोर्मन्त्रयोः पठनीयत्वात् प्रयाजान्तरीयमन्त्रस्य प्रयाजान्तरीयक्रमेण प्रवृत्तिक्रम। न च नानाशाखीययोः क्लृप्तक्रमत्वाभावेऽपि एकशाखाम्नाना पञ्चानामपि मन्त्राणां पाठेन क्लृप्तक्रमत्वात् शाखान्तरीयेणापि अनियतस्थाने प्रवृत्तिक्रमबाधापत्तिः, पञ्चानां मन्त्राणां प्रयाजप्रयाजाङ्गत्वेन एकप्रयोगविधित्वाभावात् अवान्तरप्रयोगविधिभेदेन भिन्नप्रयोगविधित्वाभावात् अवान्तरप्रयोगविधिभेदेन भिन्नप्रयोगविधिपरिगृहीतानां पाठेन क्रमानियमात्। दृश्यते च पाशुपरिगृहीतानां पाठेन क्रमानियमात्। दृश्यते च पाशुकानुयाजानां ऐष्टिकविष्टलेपफलीकरणहोमस्य च महाप्रयोगैकत्वेऽपि भिन्नापान्नप्रयोगविधिपरिगृहीतत्वेन अक्लृप्तक्रमत्वम्। तस्मादनियमः।

मण्डन—'अन्यथाऽनियमो भवेत्।' ४.

शंकर—'नियतो न व्यमानत.।' क्रम.।५.

* दर्शपूर्णमासयोः याज्याऽनुवाक्याऽऽदिमन्त्रपाठपश्चात् आग्नेयपुरोडाशस्य अवदानादिप्रदानान्तं कृत्वा पश्चात् सान्नाय्ये तदनुष्ठीयते। वि ५।४।२, * दर्शपूर्णमासयो याज्यापाठस्तिष्ठता कार्यं, अनुवाक्यापाठस्तु आसीनेन। १०।४।२२

§ दर्शपूर्णमासयो. याज्यापुरोऽनुवाक्याऽनुवचनं देवतासंस्कारार्थम् ॥

अन्वाहेति च शब्दवत् कर्म स्याच्चोदनाऽन्तरात्। १०।४।२८।३९ ॥

भाष्यम्— दर्शपूर्णमासयो. श्रूयते 'याज्यामन्वाह' 'पुरोऽनुवाक्यामन्वाह' इति। तत्र संशय. किं याज्यापुरोऽनुवाक्यानुवचनं प्रधानकर्म, उत संस्कारकर्म इति। किं प्राप्तम्? '[illegible]न्वाह' इति प्रधानकर्म स्यात्। कुत? चोदनाऽन्तरात्। यदि संस्कारकर्म, ततो रूपादेव तत्सिद्धेः न प्राप्नोति, पुन. 'मन्वाह' इति वचनमनर्थकम्। प्रधानकर्मत्वे तु वक्तव्यम्। नहि अन्यथा तस्य कर्तव्यता गम्यते इति। अतः श्रुत्या कर्तव्यताऽवगमात् प्रधानकर्मेति। शब्दवत्। यथा स्तोत्रशस्त्रे, स्तौति शंसतीति कर्तव्यताऽवगमात् प्रधानकर्मणी एवमिहापि द्रष्टव्यम्।

संस्कारो वा, चोदितस्य शब्दवचनार्थत्वात्। ४० ॥

भाष्यम्— संस्कारकर्म वा स्यात्। कुत.? चोदितस्यार्थस्य यः शब्द., स तद्वचनार्थो भवति। स तस्य दृष्टोऽर्थः। तस्मिन् सति अदृष्टकल्पनाया हेतुर्नास्ति। तस्मात् संस्कारकर्मेति।

अवाच्यत्वान्नेति चेत्। ४१ ॥

भाष्यम्— इति यदुक्तम्, तत् परिहर्तव्यम्।

स्याद् गुणार्थत्वात्। ४२ ॥

भाष्यम्— स्यात् तदपवेत 'अन्वाह' इति वचनम्। कुत? गुणार्थत्वात्। 'तिष्ठन् याज्यामन्वाह' 'आसीन. पुरोऽनुवाक्यामन्वाह' इति स्थानासनगुणार्थं पुनर्वचनमुपपद्यते। तस्मात् संस्कारकर्मणी याज्यापुरोऽनुवाक्ये इति।

मोम— पूर्वेणैवमर्थेनोपादानात् संगतिः। सूत्रार्थस्तु—अन्वाहेति विधीयमानमनुवचनं अदृष्टार्थकर्म स्यात् चोदनाऽन्तरात् अदृष्टार्थतया विधानबलात् शब्दवत् इति। २१

वि—'अन्वाहेत्यर्थकर्म स्यात् संस्कारो वा, ऽर्थकर्मता। शब्दवत् कार्यताज्ञानाद्, दृष्टार्थत्वेन संस्कृति ॥' २२

भाट्ट— याज्याऽनुवाक्ययोर्लिङ्गात् देवताप्रकाशनार्थत्वसंभवेऽपि 'तिष्ठन् याज्यामन्वाह, आसीन. पुरोऽनुवाक्यामन्वाह' इत्यादिवचनानर्थक्यप्रसङ्गात् स्तोत्रशस्त्राणामिव अनुवचनस्य अदृष्टार्थत्वम्। नहि अनुवचनानुवादेन अत्र गुणविधि. संभवति, अतिप्रसङ्गसौकर्यापत्ते.। याज्याऽनुवाक्ययोर्विशेषणत्वे विशिष्टोद्देशापत्तेश्च। याज्याद्युद्देशेनैव तद्विधौ याज्याऽऽदिसंस्कार्यत्वप्रतीतेऽपि तदापत्ते.। दृष्टार्थत्वे द्वयोर्विकल्प. 'अन्वाह' इत्यनुवादानुपपत्तेश्च। दृष्टार्थत्वे 'आसीन पुरोनुवाक्याम्' इत्यत्र याज्यापुरोवाक्ययोरपि विधौ वाक्यभेदापत्तेश्च। अतो गुणविशिष्टानुवचनस्यापि

वचनस्य अदृष्टार्थत्वात् न देवताऽन्यत्वे विकृतौ प्राकृतयाज्याऽनुवाक्ययोर्लोपः, अपितु वैकृतयाज्याऽनुवाक्यापाठसत्त्वे तेन समुच्चय एव । इति प्राप्ते, यद्यपि लिङ्गकल्प्यविधिप्रवृत्तेः पूर्वं एतद्विधिप्रवृत्तिमङ्गीकृत्य विशिष्टानुवचनविधिः स्यात्, तथापि दृष्टे संभवति अदृष्टकल्पनस्य अन्याय्यत्वात् देवतास्मरणार्थत्वमेव अनुवचनस्य भवेत्, न तु अदृष्टार्थत्वम् । वस्तुतस्तु याज्योद्देशेन अत्र गुणमात्रविधानमेव । न च याज्याकर्मकत्वेन तदापत्तिः, 'होतारं प्रेष्यति' इति होतुरेव प्रैषे कर्मत्वेन याज्यायास्तत्कर्मत्वाभावात् । अतः अनुवचनस्य नित्यप्राप्ततया याज्योद्देशेनैव गुणमात्रविधिः । 'पुरोऽनुवाक्यामनूच्य याज्यया यजति' इति वाक्यान्तरेणैव समुच्चयप्रतीतेः नाऽस्मिन् वाक्ये पुरःपदार्थविवक्षा । अतो दृष्टार्थत्वात् युक्त एव विकृतौ बाधः । २१.

मण्डन—'याज्याऽनुवाक्ये ह्यकार्ये ।' २३.

शंकर—'याज्याऽनुवाक्ये चैवं स्यात् ।' सोरिकया । २३.

● दर्शपूर्णमासयोः यावज्जीवमावृत्तिः, पौर्णमास्यमावास्याकालविशिष्टजीवननिमित्तकत्वात्तयोः । वि. ६।४।८. ● दर्शपूर्णमासयोः योक्त्रेण पत्नीं संनह्यति । तत् ज्योतिष्टोमे ऐष्टिकेषु कर्मसु सौमिकेन प्रसङ्गसिद्धम् । भा. १२।१।१३।२९ ● दर्शपूर्णमासयोः स्वनमन्त्रस्य गुणे श्रुतो एव विनियोग. । बर्हिर्न्यायः । वि ३।२।१, ● दर्शपूर्णमासयोः वत्सापाकरणं दोहधर्मः । ३।६।८, ● दर्शपूर्णमासयो. वत्सापाकरणं पर्णशाखया । 'यत् पर्णशाखया वत्सानपाकरोति' । ४।२।२, ● दर्शपूर्णमासयोः वत्सोपावसर्जनम् ( स्तनपानार्थं मातृसमीपे वत्सस्य मोचनम् ) । द्वादशद्वन्द्वगणितम् । 'गार्ह नोपानमूत्रति स्त्री चाधिश्रयति' । ३।८।१०. ● दर्शपूर्णमासयो. वत्सोपावसर्जनउखाधिश्रयणादीनि द्वादश द्वंद्वानि अध्वर्यो. कर्म, न यजमानस्य । के. ३।८।५।१९–२१. ● दर्शपूर्णमासयो. याज्यमान: 'यत्र हविष्मन्तौ अध्वर्युयजमानौ यानं यच्छतः' । अत्र याज्यमानस्य परमापूर्वं न प्रयोजकम्, किन्तु हविष्प्रदाने वाग्निसर्गस्य विहितत्वात् आह्वानात् प्रा.क् ये प्रोक्षणादयः पदार्थाः तदीयापूर्वं याज्यमानस्य प्रयोजकम् । वि. ९।१।७, ● दर्शपूर्णमासयोः विद्वद्वाक्यं 'य एवं विद्वान् पौर्णमासीं यजते' 'य एवं विद्वानमावास्यां यजते' इति समुदायानुवादकम् । २।२।३. ● दर्शपूर्णमासयोः विद्वद्वाक्यद्वये कालयोगनिमित्तनामधेयावच्छेदेन यजेः कालयोगियागविषयत्वावसायात् भिन्नवाक्यविहितानामपि एककालान्वयात् समुदायः संभवति । सु पृ. ७२९. ● दर्शपूर्णमासयोः विधृती परिभोजनीयादर्भैः कर्तव्ये । भा. ३।८।१७।३३. ● दर्शपूर्णमासयोः वेदः दर्भमयी संमार्जनी । 'वेदं कृत्वा वेदिं करोति' । वि. ११।३।१. ● दर्शपूर्णमासयोः 'यजमानं पशुकामाय वेदं कुर्यात्' इति पुरुषार्थम्, न क्रत्वर्थम् । भा. ४।१।२।२ वर्णकं २. ● दर्शपूर्णमासयोः वेदद्वयविहितेषु अङ्गेषु नानावेदस्वरे, प्राप्ते गुणमुख्यव्यतिक्रमन्यायेन याजुर्वैदिकप्रधानधर्मः स्वरो याजुषं प्राप्नोति, ततो वाचनिकः स्वरो भवति 'मन्द्रया आज्यभागान्ताम्, परं मध्यमया, उत्तमया अनुयाजादि' इति । वा. ३।३।२।९ पृ. ८११. ● दर्शपूर्णमासयोः वेदवेदीध्मबर्हिरादीनां स्वस्वकाले करणम्, न तु प्रदानस्य काले । अङ्गप्रधानयोः भिन्नदेशकालकर्तृत्वमपि इत्यधिकरणम् । के. ११।३।१।१. ● दर्शपूर्णमासयोः वेदिं 'देवस्य त्वा सवितुः प्रसवे इति हरति' । 'स्फ्येन वेदिं परिलिखन् परिगृह्णाति' । 'स्फ्येनोत्तमां स्थन-मुद्धन्ति' । परिलेखः परिग्रहश्च परस्तात् वक्ष्यते । नि. १०।१।१. ● दर्शपूर्णमासयोः वेदे. 'पूर्वेद्युरमावास्यायां वेदिं करोति' इति पूर्वेद्युरपकर्षः । भा. ५।१।१६।२९. ● दर्शपूर्णमासयोः वेद्याः त्रिः प्रोक्षणे 'वेदिरसि बर्हिषे त्वा' इति मन्त्रस्य प्रथमप्रोक्षणे पाठः एकदैव, न प्रतिप्रोक्षणं मन्त्रावृत्तिः, वेदेरेकत्वात् । प्रोक्षणावृत्तिस्तु वाचनिकी । वि. ११।८।१६, ● दर्शपूर्णमासयोः वेदिकरणादौ 'योऽस्मान् द्वेष्टि यं च वयं द्विष्मः' इति मन्त्रो द्वेष्याभावेऽपि पठनीयः, अदृष्टार्थत्वात् । भा. ६।८।८।२८, ● दर्शपूर्णमासयोः वेदिधर्माः अङ्गप्रधानोभयार्थाः । द्रव्यसंस्कारत्वात् । ३।८।१५।११. ● दर्शपूर्णमासयो. वेदिपरिग्रहः ( वेदिमार्गे प्राथमिकम् ) 'स्फ्येन वेदिं परिलिखन् परिगृह्णाति' ।

परिलेखनं नाम परितः रेखाकरणम् । वि. १०।१।३. ★ दर्शपूर्णमासयोः वेदिप्रोक्षणाङ्गमन्त्रस्य सकृत् प्रयोगः। वेदिप्रोक्षणन्यायः । भा. ११।४।१५।४६–५०, ★ दर्शपूर्णमासयोः वेदिर्बर्हिरादयः पदार्थाः सर्वाङ्गप्रधानहविरर्थाः, न प्रधानमात्रार्थाः । वेदिबर्हिर्धर्मन्यायः । ३।७।१।१–५. ★ दर्शपूर्णमासयोः वेदिस्तरणे 'त्रिधातु पञ्चधातु वा वेदिं स्तृणाति' इति तत्र त्रिधातु स्तरणमन्त्रावृत्तिः । धातुः परिपाटी इति धूर्तस्वामी । बुद्धिमेवा वर्माः ऐकरूप्येण एकः धातुः इत्युच्यते । वि. ११।४।१५, ★ दर्शपूर्णमासयोः वेदिस्तरणे मन्त्रः 'स्तृणीत बर्हिः परिधत्त वेदिं जामिं मा हिंसीरमु या शयाना । दर्भैः स्तृणीत हरिते, सुवर्णैर्निष्का इमे यजमानस्य भ्राते ॥' इति (मै.) । तत्र मौते चरौ 'पुण्डरीकैः स्तृणीत हरितैः' इत्यूहः कर्तव्यः । ९।३।२. ★ दर्शपूर्णमासयोः वैमृधेष्टिः पूर्णमासस्यैवाङ्गम् । वैमृधन्यायः । भा. ४।३।११।३२–३५. ★ दर्शपूर्णमासयोः (एव) वैराजस्य सामिधेनीसामदयनम् । (कार्तिके द्रष्टव्यम्) । के. ३।६। ३।१०. ★ दर्शपूर्णमासयोः 'वैश्वानरं द्वादशकपालं निर्वपेदमावास्यां वा पौर्णमासीं वाऽतिपाद्य' । अतिपादनं स्वकाले अकरणम् । अस्या वैश्वानरेष्ट्याः पथिकृदिष्ट्या विकल्पः, अन्योन्यनिरपेक्षत्वात् । वि. १२।३।५, ★ दर्शपूर्णमासयोः वैश्वानरेष्टिः पत्नीसंयाजेषु कपालमग्निहोमे प्रायश्चित्तम् । १०।२।१६.

☒ दर्शपूर्णमासयोः व्रते वत्सापाकरणोपलक्षितकालस्य विधानम् ॥

वत्ससंयोगे व्रतचोदना स्यात् । ४।३।१२।३४ ॥

भाष्यम्— दर्शपूर्णमासयोः श्रूयते 'बर्हिषा वै पौर्णमासे व्रतमुपयन्ति, वत्सैरमावास्यायाम्' इति । तत्र संदेहः किं वत्सापाकरणकं व्रतं विधीयते, उत व्रतस्य कालः इति, अथ वत्सो व्रताङ्गमिति । किं प्राप्तम् ? वत्सापाकरणं व्रतं विधीयते इति । अमावास्यायां वत्सैर्व्रतं कुर्यात् इति वत्सव्रतसंयोगः अपूर्वः, स विधीयते । तस्मिंश्च विधीयमाने उभयमपि विहितं भवति, वत्सो व्रतं च ।

सूत्रम्— एतदीपोद्घातिकम् । अनेन कालेन कस्मिन् पक्षेऽधिकार इति ।

काले वोत्पन्नसंयोगाद् यथोक्तस्य । ३५ ॥

भाष्यम्— यथोक्तस्य वा वचनान्तरेण प्राप्तस्य व्रतस्य कालोऽयं विधीयते । कुतः ? उत्पन्नसंयोगात् । उत्पन्नसंयोगोऽयं व्रतस्य, नोत्पत्तिसंयोगः । कथम् ? 'अमावास्यायां चतुर्थिकं व्रतं भवति' इति विहितं पूर्वं व्रतम् । अप्राप्तश्च कालः । तस्मात् कालविधिरिति ।

अर्थापरिमाणाच्च । ३६ ॥

भाष्यम्— न च शक्योऽयमर्थैः परिमातुम्, यथैतेन व्रतमुपयन्तीति । किं वत्सोऽत्र व्रतयितव्यः एव यस्तेन व्रतमुपगतं भवति । किं वत्सेन हस्तस्थानीयेन व्रतयितव्यमिति, एवं तदुपेतं भवति । उत व्रते सन्निधाय अन्यदैनदुपेयादिति, नैव व्यवतिष्ठते शास्त्रार्थः । करणं हि यत्निर्दिष्टम्, नेतिकर्तव्यता । यतावदुक्तम्, वत्सद्वारकं व्रतं कुर्यात् । कथमित्येतत् अविशेषात्काङ्क्षमेवावतिष्ठेत । नैवार्थः परिच्छिद्यते, अतो किं वत्सेन क्रियते इति । अथवा यद्यत्तदेति । तथा वत्सो व्रतेन संबध्यमानः यदः स्यात् अपरार्थतामापद्येत । परार्थत्वा वाक्य द्योतयति विभक्तिस्तृतीया । साधकतमे हि सा भवति । तस्मादपि कालार्थः संयोगः ।

वत्सस्तु श्रुतिसंयोगात्तदङ्गं स्यात् । ३७ ॥

भाष्यम्— यदुक्तं विहितत्वात् व्रतस्यानुवाद इति । सत्यमेवम् । यत्तूक्तम्, कालविधानार्थं इति, तन्न । स व्रताङ्गत्वेन विधीयते । कुतः ? श्रुतिसंयोगात् । व्रते ह्यङ्गे विधीयमाने श्रुतिर्निमित्तम्, काले लक्षणायाम्; स्यात् । श्रुतिलक्षणाविषये च श्रुतिर्ज्यायसी । तस्मादङ्गं वत्सः इति ।

कालस्तु स्यादचोदना । ३८ ॥

भाष्यम्— कालस्तु एव निर्दिश्यते, न वत्सोऽङ्गं विधीयते । नैषा चोदना 'बर्हिषा वै पौर्णमासे व्रतमुपयन्ति, वत्सैरमावास्यायाम्' इति । कथमनवगम्यते ? भिन्नैकवाक्यत्वात् । परस्ताद्धि विधिः समाम्नायते 'पुरा वत्सानामपाकर्तोर्दम्पती अश्नीयाताम्' इति । यदि एतोऽपि

छिद्रेषु प्रक्षेप्याः हस्तमात्राः स्थूलशीर्षिका यष्टिविशेषाः )। ३।१।५, * दर्शपूर्णमासयोः शूर्पम् । 'अग्निहोत्रहवणी च शूर्पं च' इति यज्ञायुधम् । 'शूर्पेण विविनक्ति' इति मन्त्रप्रयोगः । विवेचनं तुषेभ्यः कणेभ्यश्च तण्डुलानां पृथक्करणम् । ३।१।६. * दर्शपूर्णमासयोः शेषभक्षाः ऐडादिः संस्कारार्थः उपयुक्तशेषत्वात् द्वितीयानिर्देशाच्च । भा. १२।१।१५।३१, * दर्शपूर्णमासयोः शेषभक्षा न परिक्रयार्थाः, किन्तु संस्कारार्थाः । १०।२।६।२९–३३, * दर्शपूर्णमासयोः 'संवत्सरयज्ञेन यजेतान्नाद्यकामः' इति फलविशेषाय गुणविशेषविधिः, न तु संक्रमयज्ञः कर्मान्तरम् । दाक्षायणयज्ञाधिकरणम् । २।३।४।५, * दर्शपूर्णमासयोः संमार्जनं पर्यग्निकरणं च गुणकर्म, न प्रधानकर्म । अग्निसंमार्गाधिकरणम् । २।१।४।९–१२, * दर्शपूर्णमासयोः संवपनं पुरोडाशधर्मः 'प्रणीताभिर्हवींषि संयौति' । तस्य चरौ बाधः । १०।१।१३।५१ (५८), * दर्शपूर्णमासयोः संवपनं पुरोडाशधर्मः । तस्य चरौ बाधः । १०।१।१४।५२ (५५), * दर्शपूर्णमासयोः सत्यवचनं कत्वर्थमुपदिश्यते पुरुषार्थत्वेन वर्तमानमपि प्रयोगपृथक्त्वात् । १२।१।११।२२. * दर्शपूर्णमासयोः सदनकरणं पुरोडाशस्य, पाठ्या 'स्योनं ते सदनं०' इति मन्त्रेण । वि. ३।३।८. * दर्शपूर्णमासयोः 'समे दर्शपूर्णमासाभ्यां यजेत' इति देशस्य नियमविधि न तु अनुवादः । भा. ४।२।९।२३–२४. * दर्शपूर्णमासयोः 'समे यजेत इति देशस्य संबन्धः कर्मणा सह विधीयते न तु कर्मान्तरम् । वि. २।३।१३, * दर्शपूर्णमासयोः 'समिधो यजति, तनूनपातं यजति०' इत्यादिवचनपञ्चकाभ्यासात् भावनाभेदः, तेन कर्मभेदः । २।२।२. * दर्शपूर्णमासयोः समिदादिजन्यानामपूर्वाणां भेदः । भा २।२।२।२, * दर्शपूर्णमासयोः समिदादिशब्दाः कर्मनामधेयानि । देवताविधिस्तु मान्त्रवर्णिकः । १।४।१०। ५९–६०. * दर्शपूर्णमासयोः सर्वफलकत्वेऽपि प्रतिफलं पृथगनुष्ठानं कर्तव्यम् । सोमसिद्धयधिकरणम् । वि. ४।३।११, * दर्शपूर्णमासयोः सांनाय्यं सोमादूर्ध्वं मुच्यते 'नासोमयाजी संनयेत्' इति निषेधात् । सांनाय्यविकारेऽपि 'वैश्वदेव्यामिक्षा' सोमादूर्ध्वमुच्यते ।

५।४।८, * दर्शपूर्णमासयोः सांनाय्यधर्माः वत्सापाकरणदोहनादयः प्रथममाम्नाताः, पुरोडाशधर्मा निर्वापवपादयः पश्चात् । मन्त्रविक्रमात् मुख्यक्रमस्य बलवत्त्वात् आग्नेयस्य प्रथममवदानादिप्रदानान्तं कृत्वा पश्चात् सांनाय्यस्य कर्तव्यम् । ५।४।१३, * दर्शपूर्णमासयोः सांनाय्यपात्रशोधनशेषः 'शुन्धध्वं०' इति मन्त्रः, क्रमस्य समाख्यापेक्षया प्राबल्यम् । ३।३।११. * दर्शपूर्णमासयोः 'साकंप्रस्थायीयेन यजेत पशुकामः' इत्यनेन साकंप्रस्थाय्य( स्थालीय )रूपो गुणः फलाय विधीयते, न कर्मान्तरम् । दाक्षायणयज्ञाधिकरणम् । भा. २।३।४। ९–११. * दर्शपूर्णमासयोः सादनं पुरोडाशस्य पाठ्या 'तस्मिन् सीदामृते प्रतितिष्ठ व्रीहीणां मेध सुमनस्यमानः' इति मन्त्रेण । वि. ३।३।८, * दर्शपूर्णमासयोः सामिधेन्यः अङ्गम् । तत्र काम्यपक्षः 'एकविंशतिं प्रतिष्ठाकामस्य, चतुर्विंशतिं ब्रह्मवर्चसकामस्य' इत्यादि । ८।३।१०, * दर्शपूर्णमासयोः सामिधेन्यः पञ्चदश । पठिता ऋचस्तु एकादशैव । 'त्रिः प्रथमामन्वाह, त्रिरुत्तमाम्' इति विधानात् आवृत्त्या पञ्चदशत्वसंपादनं । ५।३।१, * दर्शपूर्णमासयोः सामिधेन्यः पञ्चदश, वैकल्प्यं तु अन्यत्र । ६।६।७, * दर्शपूर्णमासयोः सामिधेन्यः 'प्र वो वाजा अभिद्यवः' इत्याद्याः अग्निसमिन्धनार्था मन्त्राः । वि. ३।६।२। सप्तदशाभ्यस्ते धर्मार्थाभिर्ऋग्भिः, ताः सामिधेन्यः । ३।१।११.

※ दर्शपूर्णमासयोः सामिधेनीनां काम्यसंख्याया वृद्धौ प्रथमोत्तमे त्रिरभ्यस्य अवशिष्टानामृचामागमेन संख्यायाः पूरणं नाभ्यासेन ॥

अभ्यासेन तु संख्यापूरणम्, सामिधेनीनामभ्यासप्रकृतित्वात् । १०।५।८।२७॥

भाष्यम्— स्तो दर्शपूर्णमासौ । तत्र काम्याः सामिधेनीकल्पाः । 'एकविंशतिमनुब्रूयात् प्रतिष्ठाकामस्य, चतुर्विंशतिमनुब्रूयाद् ब्रह्मवर्चसकामस्य, एकविंशतिं च–अनुब्रूयादन्नकामस्य, द्वात्रिंशतमनुब्रूयात् प्रतिष्ठाकामस्य, षड्विंशतिमनुब्रूयात् पशुकामस्य' इत्येवमादयः । तत्र अयमर्थः सांशयिकः किं सामिधेनीषु आगमेन संख्या पूरयितव्या, उत अभ्यासेन, उत

यावदुक्तमभ्यस्य शेषमागमेनेति। किं प्राप्तम्? पूर्वेण न्यायेन आगमः इति। अपि च अविशेषोऽर्थः। अभ्यासेन हि पूर्यमाणा न सामञ्जस्येन स्यात्। तस्मात् आगम इति। एवं प्राप्ते, ब्रूमः। अभ्यासेन तु संख्यापूरणमिति। तुशब्दः पक्षव्यावर्तकः। न आगमः, किं तर्हि? अभ्यासः। कुतः? अभ्यासप्रकृतित्वात्। प्रकृतौ अभ्यासेन संख्या पूरिता 'त्रिः प्रथमामन्वाह, त्रिरुत्तमाम्' इति। कथम्? 'पञ्चदश सामिधेन्यः' इति श्रुतिः, एकादश च समाम्नाताः। तत्र अभ्यासेन आगमेन वा संख्यायां पूरयितव्यायां अभ्यास उक्तः 'त्रिः प्रथमामन्वाह, त्रिरुत्तमाम्' इति। अनेन नियमेन प्रथमोत्तमयोरभ्यासः कर्तव्यः इति। यावत्कृत्वस्तयोरभ्यासे क्रियमाणे पञ्चदशसंख्या पूर्यते तावत्कृत्वः अभ्यसितव्यं इत्येतदभिप्रायं त्रिःवचनम्। तथा हि दृष्टार्थता। त्रिस्त्वाऽभिप्राये अदृष्टं कल्प्यं स्यात्। तस्मात् इहापि तत्प्रकृतित्वात् यावत्कृत्वः अभ्यस्यमानयोः यथोदिता संख्या पूर्यते, तावत्कृत्वः अभ्यसितव्यमिति।

अविशेषागमेनेति चेत्। २८॥

भाष्यम्— इति यदुक्तम्, तत् परिहर्तव्यम्।

स्यात् तद्धर्मत्वात् प्रकृतिवदभ्यस्येताऽऽसंख्यापूरणात्। २९॥

भाष्यम्— स्यादभ्यासः। कुतः। प्रकृतिधर्मत्वं हि विकृतेः। तस्मात् आ संख्यापूरणात् अभ्यसितव्यम्। एवं प्रकृतिवत् कृतं भविष्यति। चोदकानुरोधेन अभ्याससामञ्जस्यम् अभ्युपगन्तव्यम्। तस्मात् अभ्यास इति।

यावदुक्तं वा, कृतपरिमाणत्वात्। ३०॥

भाष्यम्— वाशब्दः पक्षं व्यावर्तयति। नैतत् 'आ संख्यापूरणात् प्रथमोत्तमे अभ्यसितव्ये' इति। यावदुक्तमभ्यस्य अवशिष्टानां आगमेन पूरयितव्या संख्येति। कुतः? कृतपरिमाणत्वात् अभ्यासस्य। कृतं हि अभ्यासस्य परिमाणम् 'त्रिः प्रथमामन्वाह, त्रिरुत्तमाम्' इति। त्रिसंख्या चाभ्यासेन विवक्षिता, न पूरणी संख्या। तथा श्रुतिः परिगृहीता स्यात्। इतरथा त्यक्ता। अथ यदुक्तं 'दृष्टार्थता नैवं भवति' इति, नैतदेवम्। आदर्शको हि त्रिरनुरोधः। त्रिरनुवचनेनापि हि संख्या पूर्यते। यथापि प्रथमोत्तमयोः त्रिरभ्यास अनुष्ठेयः, तेन संख्या पूरयितव्येति। इहापि तेनैव अभ्यासेन संख्या पूर्यते। भवति सोऽपि अत्र संख्यापूरणः। प्रकृतौ प्रथमोत्तमे च त्रिरभ्यस्ते, संख्या च पूरिता। इहापि तद्वदेव कर्तव्यम्। प्रथमोत्तमे च त्रिरभ्यसितव्ये संख्या च पूरयितव्या। न प्रकृतावेष शब्दार्थो गम्यते 'अनेनाभ्यासेन संख्या पूरयितव्या' इति। अभ्यासः कर्तव्य इति वचनादवगम्यते, संख्या पूरयितव्येति सामर्थ्यात्। सा च प्रकृतौ अर्थात् अनेन पूरिता। यच्च अर्थात् कृतम्, न तु चोदनार्थम्। तस्मात् नानेनाभ्यासेन संख्या पूरयितव्येति चोदक आह। एवं चेत् यावदुक्तमभ्यस्य अवशिष्टानामागम इति।

अधिकानां च दर्शनात्। ३१॥

भाष्यम्— इतश्च आगम इति। अधिकदर्शनं हि भवति 'न गायत्र्या परिदध्यात्। पङ्क्त्या परिदध्यात्, तच्छन्दसि गमयेत्। त्रिष्टुभा परिदधाति' इति। अभ्यासे च अगतीपरिधानाशङ्का नावकल्पते। तस्मादपि आगम इति।

कर्मस्वपीति चेत्। ३२॥

भाष्यम्— इति चेत् पश्यसि यावदुक्तमभ्यस्य अधिका आगमयेदिति, पुरिशायकर्मसु अपि एवमेव स्यादिति।

न, चोदितत्वात्। ३३॥

भाष्यम्— नैतदेवम्। पुरिशायकर्मसु श्रुतम्। चोदितस्तत्र अभ्यासः 'आहुत धूर्यु स्तुवते, पुनराहृत्य पृष्ठैरुपतिष्ठते' इति। इह तद्वचनं नास्ति। तस्मात् यावदुक्तमभ्यस्य अवशिष्टानां आगमेन संख्या पूरयितव्येति।

सोम— पूर्वेण यथा न समानम्, एवमिहापि न सामिधेन्यभ्यासागम इत्युपपत्तेः संगतिः। सूत्रे—अभ्यासप्रकृतित्वात् प्रकृतौ 'त्रिः प्रथमाम्' इत्यभ्यासेन संख्यापूरणस्य दृष्टत्वात् इत्यर्थः।

वि— 'सामिधेनीविवृद्धौ स्यादागमोऽभ्यासनादुत।, आगमः पूर्ववत्, नोऽभ्यासः प्रकृतिवदः ॥' ( पुनरपि संशयादि ) 'तत्राऽऽद्यन्तयोर्नास्त्यभ्यासो यथोदितः।, अन्त्यस्याभ्यासतः पूर्तिः पूर्वपक्षोऽभिमतः ॥', किंच न

पूरणायोक्तमन्यथाऽप्यत्र पूरणात् । विवक्षितमनाविन्या भवेत् पूरणमागमात् ॥'

भाट्ट— 'एकविंशतिमनुब्रूयात् प्रतिष्ठाकामस्य' इत्यादिना यत्र सामिधेनीवृद्धिः श्रुता, तत्र त्र्यावृत्तोऽपि अभ्यासो न प्रवर्तते । प्रकृतौ 'त्रिः प्रथमामन्वाह त्रिरुत्तमाम्' इति वचनेन एकादशसंख्यया पठिताना मृचां प्रथमोत्तमयोः यावत्पञ्चदशसंख्यापरिपूर्त्यभ्यास-विधानेन आगमस्याप्राप्तेः । न चानेन प्रथमोत्तमयोः त्रिरभ्यासमात्रविधानेन ततोऽधिकानामागमे बाधकाभावः, त्रिरभ्यासावधौ अदृष्टार्थत्वापत्तेः अनेन वचनेन प्रयाज-शेषाभिघारणन्यायेन लक्षणया 'पञ्चदश सामिधेनीरनु-ब्रूयात्' इति विहितपञ्चदशसंख्यार्थत्वेन अभ्यासमात्र विधानात् । एकादशानां हि ऋचां प्रथमोत्तमयोः याव-त्संख्यासंपत्त्यभ्यासे 'समं स्यादश्रुतत्वात्' इति न्यायेन प्रत्येकं त्रिरभ्यास एव संपद्यते । अत एव द्विचतुरभ्यासे नापि संख्यासंपत्तिसिद्धेः त्रित्वानुवादानुपपत्तिरिति पार्थ-सारथ्युक्तमपास्तम् । अतश्च लक्षणया यावत्संख्यासंपत्ति प्रथमोत्तमे अभ्यसेत् इतिवाक्यार्थावगमात् एकविंश-त्यादिसंपत्त्यर्थमपि तयोरेवाभ्यासः । न च प्रथमोत्तमयोः उद्देश्यत्वे तदनेकत्वनिमित्तो वाक्यभेदः, 'अर्वन्मन्त्रोऽपि' इतिवत् तदुभयान्यतम्यत्वेन उद्देश्यतावच्छेदकत्वात् । इति प्राप्ते, निरवकाशत्वाधिकरणन्यायेन अदृष्टार्थत्वा-पत्तावपि लक्षणाया अन्याय्यत्वात् प्रयाजशेषाभिघारण-न्यायस्यापि अत एव अस्माभिरन्यथोपपादितत्वात् त्रिरभ्या-सानुवादेनैव अभ्यास वाक्यद्वयेन प्रथमानुद्देशेन त्रिरभ्यास एव विधीयते । अत एव एकादशानामृचां प्रथमोत्तमयोः त्रिस्त्रिरभ्यासे पञ्चदशत्वसंपत्तेः वस्तुतः 'पञ्चदश सामि-धेनीरनुब्रूयात्' इत्यत्र नैव संख्या विधीयते इत्युक्तं कौस्तुभे । अतः पञ्चदशसंख्याया अप्रमाणत्वात् तत्संपत्त्य-र्थत्वेन लक्षणया अभ्यासविध्यनुपपत्तेः त्रिरभ्यासः वचनेन विधीयते । 'ताः पञ्चदश संपद्यन्ते' इति तु 'त्रिः प्रथमामन्वाह' इत्यस्यार्थवादमात्रमिति ध्येयम् । अतश्च एकविंशत्यादावपि प्रथमोत्तमे त्रिरभ्यस्य अवशिष्टानां प्राकृताधिकानामागम इति सिद्धम् ।

मण्डन—'अभ्यस्ता यथोक्तं स्यात्तु सामिधेनी ।'

शंकर—'सामिधेनीषु चागमः ।'

● दर्शपूर्णमासयोः सामिधेनीनां स्थानं आहवनीयस्य पश्चिमो देशः । ज्योतिष्टोमे तु दक्षिणहविर्धानशकटसमीपो देशः । वि. ३।७।७, ● दर्शपूर्णमासयोः सामिधेनीषु 'एकविंशतिमनुब्रूयात् प्रतिष्ठाकामस्य' इति । तत्र अधिकाना मृचामागन्तूनामन्ते निवेशः । ५।३।१.

■ दर्शपूर्णमासयोः सामिधेनीत्रिरभ्यासः प्रथमो-त्तमस्थानधर्मः, न तु प्रयोगाङ्गादिस्वरूपविशेषधर्मः ॥

अभ्यासः सामिधेनीनां प्राथम्यात् स्थानधर्मः स्यात् । ९।१।१०।३३ ॥

भाष्यम्— स्तो दर्शपूर्णमासौ । तत्र सामिधेनीः प्रत्युच्यते 'त्रिः प्रथमामन्वाह, त्रिरुत्तमामन्वाह' इति । तत्र एषोऽर्थः सांशयिकः, किं स्थानधर्मः एषः यत्रत्रस्था प्रयोगेऽर्चा त्रिरभ्यसितव्या, उत स्थानधर्मः या अन्याऽपि प्रथममुच्यते सा त्रिरभ्यसितव्येति । कुतः संशयः ? उभयथोपपत्तेः । यदि एवमभिसंबन्धः क्रियते, या असौ समिदाना सामिधेनीनां प्रथममुच्यते सा त्रिरभ्यसितव्येति, ततः प्रयोगाङ्गायाः ऋचो धर्मः । अथ एवं विज्ञायते प्राथम्यसंयुक्तं त्रिर्ब्रूयादिति, ततो वचनस्य स्थानधर्मता । किं तावत् प्राप्तम् ? ऋचो धर्म इति । कुतः ? प्राथम्यस्य श्रुत्या संबन्धात्, वाक्येनाभ्यासेन । कथमवगम्यते ? स्त्रीलिङ्गनिर्देशात् । व्यक्तिविशेषो हि स्त्री नाम । यदि तद्विशेषणं प्राथम्यं स्यात्, ततो लिङ्गविशेषनिर्देशः अवकल्पेत, साऽपि स्त्री अभ्यासेन संबध्यते । अथ प्रथममनुब्रुवता त्रिरभ्यसितव्यमिति, ततो व्यक्तिविशेषो न विवक्ष्येत, तत्र स्त्रीलिङ्गविशेष निर्देशो नोपपद्यते । अपि च वाक्यभेदः प्रसज्येत प्रथममुक्तं त्रिरभ्यसितव्यम्, प्रथममुक्ता ऋक् त्रिरभ्य-सितव्येति । स्थाने पुनः प्राथम्यलक्षिताया ऋचो धर्म उच्यते । तत्र एकार्थविधाने न भवेत् वाक्यभेदः । तापि च श्रुत्या प्राथम्येन स्त्री संबध्यते, वाक्येन अभ्यासः । तस्मात् ऋग्धर्मो यत्रत्रस्था प्रयोगेऽर्चा त्रिरभ्यसितव्येति । एवं प्राप्ते, ब्रूमः । योऽयं सामिधेनीनां प्रथमायाः त्रिरभ्यासः उच्यते, स प्रथम-

स्थाननिमित्तो धर्मः, न ऋचः कस्याश्चित् जातिनिमित्तः। कुतः? न हि कृत्स्नेऽपि ऋग्वेदे प्रथमा नाम काचित् ऋक् विद्यते, या त्रिरभ्यस्येत, तत्र प्राथम्यमुपलक्षणार्थं स्यात्। इतरस्मिन् पक्षे श्रुतिः न लक्षणा, श्रुतिश्च ज्यायसी लक्षणायाः। तस्मात् प्रथमपक्षः। अथ यदुक्तं 'स्त्रीलिङ्गदर्शनात् अस्मत्पक्षे एव श्रुतिः, वाक्यं च न भिद्यते, स्त्रीलिङ्गोपपत्तिश्च' इति। अत्रोच्यते। गुणवचनाना हि शब्दानां आश्रयतो लिङ्गवचनानि भवन्ति इति अविशेष्यमाणायामपि व्यक्तौ यत् अवश्यं प्राप्तं लिङ्गम्, तदाश्रयभूतं गुणस्य भवति। अविवक्षितेऽपि तस्मिन् लिङ्गविशेषनिर्देशः अनुवादभूतो भवत्येव। यथा शुक्लः पुमान्, शुक्ला स्त्री, शुक्लं नपुंसकम्। शुक्लः एकः, शुक्लौ द्वौ, शुक्ला बहवः इति। शुक्ला शाटीमानयेति यद्यपि शाट्यानयनं न विधीयते, शुक्लसंबन्धमात्रविधित्सा भवति, न तत्र लिङ्गेन विशेषणं क्रियते, तथापि अनुवादभूतः स्त्रीलिङ्गनिर्देशो भवत्येव 'शुक्लामानय' इति। अनुवादभूतत्वाच्च न वाक्यभेदो भविष्यति। एवं च सति यद्यपि प्राथम्यस्य स्त्रीलिङ्गसंबन्धः श्रौतः, तथापि प्राथम्यद्वारेण अभ्यासेन संबन्धः, न लिङ्गस्य। यदि लिङ्गस्य एतेन संबन्धः अभिधीयते, प्राथम्यस्य अनुवादता कल्प्येत। प्राथम्यसंबन्धेऽपि अभिधीयमाने वाक्यं भिद्येत। अपि च नैवात्र विवदितव्यम्। प्रातिपदिकविशेषणं हि स्त्रीशब्दः 'स्त्रियां यत् प्रातिपदिके वर्तते ततः टाबादयः' इति। न विशेष्यस्य पदान्तरेण संबन्धो भवति यथा 'राजपुरुषो गच्छति' इति। यदा तु प्राथम्यस्य अभ्यासेन संबन्धः, तत्र प्राप्तमनूद्यते स्त्रीत्वम्। यानि सामिधेनीषु वचनानि, ऋचस्ताः, स्त्रीलिङ्गश्च ऋक्शब्दः। तत्र यत् प्रथमं वचनम्, तस्याश्रयः ऋक्। गुणवचनानां च शब्दानामाश्रयतो लिङ्गवचनानि भवन्ति इति अविवक्षितायामपि ऋचि स्त्रीलिङ्गं भविष्यतीति। यत् प्रथमवचनं तत् त्रिराह इति सा च सा ऋक् सामिधेनी। तस्मात् 'त्रिः प्रथमामन्वाह' इति प्राप्तस्य लिङ्गस्य अनुवादः। 'त्रिः प्रथमामन्वाह, त्रिरुत्तमाम्, ताः पञ्चदश संपद्यन्ते' इति पञ्चदशानां सामिधेनीनां संपत्त्यै त्रिर्वचनमुपपन्नं परिपूर्णाया ऋचो भवति, न ऋगवयवस्य। परिपूर्णा च समिन्धनवती, न ऋगवयवः। तस्मात् प्राप्तानुवादो लिङ्गस्य इति प्राथम्यस्य धर्मः, न ऋचः।

आ— 'तत्र स्त्रीलिङ्गनिर्देशादृगनेनाभिधीयते। तस्या एव त्रिरभ्याससंबन्धोऽत्र विधीयते॥' उच्यते 'श्रुत्या प्रथमशब्देन प्राथम्यमभिधीयते। ऋक् तु लक्षणयोच्येत, तस्मात् प्राथम्यधर्मता॥'

सोम— पूर्वत्र यथा अपेक्षितविधिलोभेन धर्मीसंबन्धानवगमत्वे इत्युक्तम्, एवं पाठद्वयसिद्ध्यर्थं अपेक्षितः ऋगभ्यास एव विधीयते इति प्रतिपादनात् संगतिः। सूत्रार्थस्तु- सामिधेनीनां मध्ये प्रथमोत्तमाभ्यासः प्राथम्यसंबन्धात् प्रथमशब्देन उपस्थितत्वात् स्थानधर्मः इति।

वि— 'त्रिरनूक्तिर्मन्त्रो धर्मः स्थानधर्मोऽथवा, ऽग्रिमः। स्त्रीलिङ्गत्वात्, न तथाऽतिपरिकप्रयत्नतः॥' स्थानान्तरे पठितायाः 'प्र वो वाजाः' इत्यस्या ऋचः नास्त्यभ्यासः।

भाट्ट— दर्शपूर्णमासयोः सामिधेन्यवान्तरप्रकरणे 'त्रिः प्रथमामन्वाह त्रिरुत्तमाम्' इति श्रुतम्। तत्रानुवचनं तावत् प्रकरणप्राप्तमनूद्यते, त्रिरभ्यासमात्रं तु विधीयते। प्रथमामिति च उद्देश्यसमर्पकमित्यविवादमेव। तत्रापि प्रथमामिति विशेष्यनिष्ठं प्राथम्यविशिष्टमभिधत्ते शुक्लादिपदवत्। तत्र विशेष्यं स्त्रीलिङ्गनिर्देशात् सामिधेनीप्रकरणाच्च ऋगेव। प्राथम्यरूपविशेषणयोगाय ऋग्विशेषप्रतीतिसाधिकी, न तु प्रोक्षणादिसंस्कारिका उपस्थितिः शाब्दी, तद्वाचकपदाभावात्। अत एव प्राथम्यमेव उद्देश्यताऽवच्छेदकं शुक्लादिवत्। न तु तदुपलक्षितप्रयोयाजादित्वं विना कारणं तथात्वे प्रमाणाभावादित्यविवादमेव। इदं तु विचार्यते। प्रथमाशब्दस्य आनर्थक्ये प्रसक्ते अपूर्वसाधनत्वलक्षणायां अपूर्वसाधनीभूतामितिमिन्धनप्रकाशनसमर्थमन्त्रलक्षणे अतिप्रसक्तेः, तन्निवारणाय उद्देश्यताऽवच्छेदककोटौ ऋक्त्वविशेषणतया प्रवेशनादिलस्य विवक्षणम्, उत प्राथम्यस्य इति चिन्तायाम्, प्राथम्यरूपस्य अमुख्य उद्देश्यताऽवच्छेदकस्य प्रतीत्यादित्वात् अपूर्वसाधनसंबन्धोपस्थितिसंभवात् तस्यैवत्वेन निरूढापूर्वसाधनस्वरूपोद्देश्यताऽवच्छेदकत्वोपि निश्चिते

प्रमाणाभावात् प्रयोगवाक्यविहितमेव ऋक्त्वविशेषणम्। अतश्च विकृतौ यत्रकुत्रस्था प्रयोगवाक्येव त्रिरभ्यसितव्या। न तु प्रथमस्यानवगतिप्रसङ्गपरिहारार्थमवश्यकल्प्येन क्वचित् तत्तद्यागारम्भकयागानन्तर्यादिरित्येन विशेषण उपस्थितत्वात् उपस्थितेनापि प्रथमत्वेनैव विशेषणं न तु अनुपस्थितेन प्रयोगवाक्यत्वेन। अवघातादौ तण्डुलनिष्पत्तिव्यापारकत्वापत्तावन्तरेणैव उद्देश्यत्वपर्यवसानात् पश्चात् धर्माकाङ्क्षावत्वेन यत्साधारणकल्पनेऽपि च वाक्यवैयर्थ्याभावात् नातिप्रसङ्गपरिहारार्थं व्रीहित्वप्रवेशः। प्रकृते तु अतिप्रसङ्गाद्यीत्तरे प्रथमोत्तमपदघटितवाक्यद्वयवैयर्थ्यापत्तेः 'ता. पञ्चदश संपद्यन्ते' इत्यर्थवादानुपपत्तेश्च विशेषणविवक्षा आवश्यकी। अतश्च याकाचित् प्रथमोत्तमा त्रिरभ्यसितव्या इत्यूहोपयोगोऽपि।

मण्डन—'अभ्यासक्रिया स्यात् प्रथमोत्तमाऽन्ते।'

अन्ते स्थाने।

शंकर—'त्रिरभ्यास स्तवा न च।' २६.

दर्शपूर्णमासयोः सामिधेनीसंख्यायां धाय्याविवृद्धौ आगन्तूनामृचामन्ते निवेश॥

समिध्यमानवतीं समिद्धवतीं चान्तरेण धाय्याः स्युर्द्यावापृथिव्योरन्तराले समर्हणात्। ५।३।१।४॥

भाष्यम्—दर्शपूर्णमासयोः सामिधेन्यः 'सामिधेनीरन्वाह' इति। तत्र काम्या. सामिधेनीकल्पा. 'एकविंशतिमनुब्रूयात् प्रतिष्ठाकामस्य' इत्येवमादयः। तत्र आगमेन संख्यापूरणं क्रियते (१०।१।८)। तत्र संदेहः किमागन्तूनामन्ते निवेशः, उत समिध्यमानवतीं समिद्धवतीं चान्तरेण निवेशः इति। किं तावत् प्राप्तम्? अन्ते निवेशः 'अन्ते तु बादरायण' इत्यनेन न्यायेनेति। एवं प्राप्ते, ब्रूमः। समिध्यमानवतीं समिद्धवतीं चान्तरेण निवेश इति। कुतः? द्यावापृथिव्योरन्तराले समर्हणात् संस्तवादित्यर्थः। 'इयं वै समिध्यमानवती द्यौः, असौ समिद्धवती पृथिवी, यदन्तरा तद् धाय्या.' इति अन्तरिक्षसंस्तुत्या तस्मिन् अन्तराले विधीयन्ते। तस्मात् नान्ते स्युरिति। ('समिध्यमानो अध्वरे' इत्यादि. समिध्यमानवती, 'समिद्धो अग्न आहुत.' इत्यादिः समिद्धवती)।

तच्छब्दो वा। ५॥

भाष्यम्— अथवा या धाय्याशब्दिका., तान्तत्र भवितुमर्हन्ति। तेन हि शब्देन तत्र संस्तवः। संस्तवाच्च विधानम्। यथा 'पृथुपाजा' (पृथुपाजा० त सवाय० इति द्वे) धाय्ये' 'उष्णिक्ककुभौ धाय्ये' इति। (मैत्रावरुणीयायां 'प्रवो अग्ने वनोतिभिः, प्रहोत्रे पूर्व्यम्' इति धाय्ये— सोम.) का: पुनरेता धाय्या नाम, नास्य शब्दस्य प्रसिद्धिमुपलभामहे। उच्यते। सामिधेन्यो धाय्याः। कुतः? एवं भगवतः पाणिनेर्वचनम् 'पाय्य-सान्नाय्य-निकाय्य-धाय्या-मान-हविर्-निवास-सामिधेनीषु' (पा० ३।१।१२९) इति। अस्माद् वचनात् श्रुतिमनुमिमीमहे। कतमासु सामिधेनीषु इति? उच्यते। अविशेषात् सर्वासु इति गम्यते। इह तु समिध्यमानवतीं समिद्धवतीं चान्तरेण धाय्या. स्युरिति। सर्वासु सामिधेनीषु सतीषु धाय्यावचनात् विशिष्टाना सामिधेनीनां धाय्याशब्द इति गम्यते। ननु पाणिनिवचनात् अविशेषेण सर्वा धाय्याः। नेत्याह। विशिष्टास्वपि वचनमुपपद्यते एव। यदि विशिष्टा. धाय्या. का इति? उच्यते। यासु धाय्याशब्दः श्रूयते, तास्तावत् धाय्याः। तासु न धाय्यासु सतीषु वचनमर्थवत् भवति। अर्थवति च सति वचने, नान्या धाय्या. प्रमाणाभावादिति।

उष्णिक्ककुभोश्चान्ते दर्शनात्। ६॥

भाष्यम्— उष्णिक्ककुभोश्च अन्ते प्रयोगो दृश्यते 'यद्यमन्ता परिदध्यात् अन्तं यज गच्छेत्। अथ यद् त्रिष्टुभा परिदधाति, नान्तं गच्छति' इति। (मैत्रावरुणीयायां अग्ने भी वे मारिना इति परिधानीया इति शा.)। ननु त्रिष्टुप् अत्रान्ते दृश्यते, नोष्णिक्ककुभौ इति। उच्यते। त्रिष्टुममेव अत्र (सूत्रकार.) उष्णिक्ककुभौ इति ब्रूते। कथम्? 'त्रिष्टुभो वीर्यम्' इत्येवं संस्तुते, त्रिष्टुभो वा एतद्वीर्यं, 'यदुष्णिक्ककुभौ' इति कारणे कार्यवत् उपचार. कृत (वेदेनैव, ततः सूत्रकारेणापि)।

सोम— पूर्वाधिकरणे प्राकृतकमाश्रित. इति प्रत्युदाहरणात् संगतिः। सूत्रार्थस्तु— धाय्यात्मना धाय्याः ऋचः आगन्तव. स्युः समिध्यमानवतीं समिद्धवतीं चान्तरेण द्यावापृथिव्योरन्तराले संस्तवात् इति।

वि०—'सामिधेन्येकविंशत्यामागन्तोर्मध्यतः स्थितिः । अन्ते वा, मध्यतो धाय्याशब्दितानां लवेक्षणात् ॥, इध्यमानेद्धवत्योस्तु मध्ये धाय्याविधानतः । आगन्तुनामधाय्यानां निवेशोऽन्ते हि युज्यते ॥'

भाट्ट— पञ्चदशसामिधेनीनां यत्र 'एकविंशतिमनुब्रूयात्' इत्यत्राधिका संख्या श्रुता, तत्रागमेन संख्यापूरणं दशमे वक्ष्यते । तत्र आगम्यमानानामृचां यद्यपि न्यायेनान्ते निवेशः प्राप्नोति, तथापि 'इयं वै समिध्यमानवती असौ समिद्धवती, यदन्तरा तद्धाय्या' इति द्यावापृथिव्यन्तरालत्वेन स्तुतस्य च समिध्यमानवतीसमिद्धवत्यन्तरालस्य धाय्याशब्दितत्वविधिविहितत्व सत्त्वात् तदन्तराले एव सर्वासामागम्यमानानां निवेशः । न च धाय्यापदपरिभाषितानामेव मन्त्रविशेषाणां तदन्तराले निवेशः अन्येषां तु अन्ते इति वाच्यम् । धीयमानत्वयोगेन सर्वेषामेव धाय्यापदवाच्यत्वात् । इति प्राप्ते, नायं यौगिकः रथकारादौ आगम्यमानास्वपि धाय्याशब्दप्रयोगापत्तेः, पाणिनिना सामिधेनीत्वेन धाय्यापदस्य अनुशिष्टत्वाच्च । अतो रूढ एवायम् । सोऽपि यद्यपि वेदे 'पृथुपाजवती धाय्ये' इत्यादिना परिभाषितत्वेन । तेषामेव मध्यान्तराले निवेशः । अन्येषां तु अन्ते इति । अत एव वैशम्पायनीयायां धाय्याशब्दितायाः 'अग्ने श्री ते' इत्यस्या ऋचः 'त्रिरन्त्यां परिदधाति' इत्यन्ते निवेशदर्शनमुपपद्यते ।

मण्डन—'धाय्याश्चोदिता मध्ये ।'

शंकर—'अन्ते धाय्या निवेश्यन्ते ।'

● दर्शपूर्णमासयोः सार्वकाम्ये फलविधिरेव न अङ्गफलैः सह फलकामेषु अनुवादः । भा. ४।३।१०।२५–२६, ● दर्शपूर्णमासयोः सूक्तवाक प्रस्तरप्रहरणे मन्त्रत्वेनोपदिश्यते, न तु फलार्थ. संयोग. । सूक्तवाकन्याय. । ३।२।५।११–१५, ● दर्शपूर्णमासयोः सूक्तवाके पाठ्या प्रस्तरः द्रव्यं अग्न्यादिश्च देवता । याग. सन् प्रतिपत्तिरपि निष्पद्यते । ३।२।५।११–१५, ● दर्शपूर्णमासयोः सूक्तवाके 'अयं यजमान आयुराशास्ते' इति यजमानशब्दः प्रकृतौ विकारे ऊहितव्यः । ९।१।१४ (१५) । ४१, ● दर्शपूर्णमासयोः सूक्तवाकानुवाकयोरन्तरवाक्यानां त्रिभज्य प्रत्येकं विनियोगः वाक्यात्, न तु प्रकरणात् सर्वेषामपि समुच्चयेन विनियोगः । वाक्यप्रकरणाधिकरणं द्रष्टव्यम् । वि ३।३।९. ● दर्शपूर्णमासयोः सूक्तवाकनिगदे लिङ्गसामर्थ्यात् पौर्णमासीप्रयोगात् इन्द्राग्निशब्दः उत्कृष्टव्यः अमावास्याया च प्रयोक्तव्यः । तत्र पौर्णमासीदेवताः अमावास्यादेवताश्च आम्नाताः । ताः परस्परेण एकवाक्यता नाभ्युपयन्ति । भा ३।२।७।१४ पृ. ८५२–५३. ● दर्शपूर्णमासयोः सूक्तवाकमन्त्रः 'इदं द्यावापृथिवी भद्रमभूत्' इत्यादिः । वि. ३।२।५. ● दर्शपूर्णमासयो. सूक्तवाकमन्त्रस्य अर्थानुसारेण विभज्य विनियोगः । सूक्तवाकविभागन्यायः । भा. ३।२।६।१६–१९. ● दर्शपूर्णमासयोः स्तम्बयजुर्हरणं 'स्तम्बयजुश्च हरति, अग्निं च गृह्णाति' द्वादशद्वंद्वगतम् । वि. २।८।१०। (स्तम्बेन तृणमूलेन सह पांसूनां हरणम् । वेदिं कृत्वा स्फ्यः संमार्ष्टि । पूर्वार्धात् वेदेः बिलुतीयदेशे ( $\frac{2}{3}$ भागे ) स्तम्बयजुर्हरति । तूष्णीं चतुर्थम् । सत्या. १।६।६२–८५). ● दर्शपूर्णमासयोः स्फ्यादीनि दश यज्ञायुधानि हविः, किन्तु यज्ञायुधेन संख्यानस्तुतिः । यज्ञायुधाधिकरणम् । के ४।१।४।७–१०. ● दर्शपूर्णमासयोः स्फ्यकपालादिद्रव्याणि स्वस्वकार्ये व्यवस्थितानि । द्रव्याधिकरणम् । भा ३।१।५।११. ● दर्शपूर्णमासयो. 'स्योनं ते' इति मन्त्रः सदनकरणे, 'तस्मिन् सीद' इति तु पुरोडाशसादने विनियोक्तव्यः लिङ्गात्, न तु वाक्येन उभयोरेकमन्त्रत्वम् । वि ३।३।८, ● दर्शपूर्णमासयोः 'स्रुचः संमार्ष्टि' इति स्रुक् प्रधानम्, दर्भैः समार्जनं गुणकर्म । अभिधेयमार्गाधिकरणम् । २।१।४. ● दर्शपूर्णमासयोः स्रुग्व्यूहनमन्त्राः 'अजस्य मा प्रजया' इत्यादयः अध्वर्युयजमानाभ्यामुभाभ्यामपि पठनीयाः, द्वयोरपि काण्डयोः पठितत्वात् । द्वयाम्नानाधिकरणम् । भा ३।८।७।१७. ● दर्शपूर्णमासयो. स्रुचः खादिरः जुहूः पर्णमयी । भा. ३।६।२।१. ● दर्शपूर्णमासयो. 'स्रुवेण पार्वणौ जुहोति' । तत्रैकः पार्वणः 'कामभ पानिर्न मर्य॰' इति मन्त्रेण पूर्णमासे होमः । अपरः पार्वण. 'अमावास्या सुभगा' इति मन्त्रेण दर्शे होमः । पार्वणमन्त्रयः । वि. ९।२।१८–१९. ● दर्शपूर्ण-

मासयोः ध्रुवजुहूपभृद्ध्रुवाणां पर्यायाः पर्यायवादः, न तु फलविधिः । पर्णमयीन्यायः । भा. ४।३।१।१–२. ● दर्शपूर्णमासयोः स्वर्गः फलम्, तच न विधेयं गौणत्वात् स्वयमुक्तेः । वि. ४।३।२ वर्णके २, ● दर्शपूर्णमासयोः स्विष्टकृत् उत्पन्नहविःसंस्कारः । ३।४।११, ● दर्शपूर्णमासयोः स्विष्टकृत् पुरोडाशस्य न प्रतीकः । उत्तरार्धन्यायः । ४।१।१२. ● दर्शपूर्णमासयोः स्विष्टकृत् भागस्य प्रतिपत्तिश्च । भा. ३।२। ५।१५. ● दर्शपूर्णमासयोः स्विष्टकृत् यागद्रव्यदोषसंस्कारः । टुप्. १०।७।३।११. ● दर्शपूर्णमासयोः स्विष्टकृत् हविःशेषकार्याणां प्रयोजकः । आश्रयिन्यायः । के. ४।१।७।१८–२०, ● दर्शपूर्णमासयोः स्विष्टकृदादिशेषकर्माणि सर्वेभ्यो हविर्भ्यः अनुष्ठेयानि, नैकस्मात् कस्माचित् । स्विष्टकृद्विकरणन्यायः । ३।४।१५।४२–४५. ● दर्शपूर्णमासयोः स्विष्टकृदादिशेषकर्मानुष्ठानं एक स्मादेव चेत् प्राथमिकादेव । प्रथमोपस्थितन्यायः । भा. ३।४।१६।४६–४७ ● दर्शपूर्णमासयोः स्विष्ट कृदादिशेषकार्यं प्रैयाजेन न कार्यम्, तत्प्राणादिकार्यान्तरप्रसङ्गात् । वि. ३।५।१. ● दर्शपूर्णमासयोः स्विष्टकृदिडं उपांशुयाजान्ताज्याद्यनामम् । भा. ३।५।१। १–१९, ● दर्शपूर्णमासयोः स्विष्टकृद्यागः अनुयाजेषु संस्कारकः न आगादुपकारकः । १०।४।१९।३८ ● दर्शपूर्णमासयोः हविषां श्रपणं गार्हपत्ये श्रुतम् । १२। १।५।१२.

■ दर्शपूर्णमासयो हविरार्तौ पञ्चशराव ओदनः कर्मान्तरम्, न सांनाय्यस्य प्रतिनिधिः ॥

पञ्चशरावस्तु द्रव्यश्रुतेः प्रतिनिधिः स्यात् । ६।४।६।२८ ॥

भाष्यम्— 'दर्शपूर्णमासयोः' श्रूयते 'यस्योभयं हविरार्तिमार्च्छेदैन्द्रं पञ्चशरावमोदनं निर्वपेत्' इति । तत्र संदेहः, किं हविषि आर्ते पञ्चशरावः प्रतिनिधिः, उत निमित्ते कर्मान्तरमिति । कथं प्रतिनिधिः, कथं कर्मान्तरमिति ? यदि एवमभिसंबन्धो भवति पञ्चशरावं निर्वपेत् कुर्यादिति, ततः सांनाय्यस्य कार्ये पञ्चशरावः प्रतिनिधिरिति । अथ न पञ्चशरावो निर्वपतिना, किन्तु देवतया संबध्यते, पञ्चशरावमैन्द्रं कुर्यादिति, ततो निमित्ते कर्मान्तरं विधीयते । किं तावत् प्राप्तम् ? पञ्चशरावस्तु द्रव्यश्रुतेः प्रतिनिधिः स्यात् । पञ्चशरावः सांनाय्यस्य प्रतिनिधिः । कुतः ? द्रव्यश्रुतेः । द्रव्यस्य निर्वापे श्रवणम्, नेन्द्रसंबन्धे । कुतः ? एवं निर्वापविधिर्भविष्यति, तत्र श्रुतिर्विधायिका । इतरथा द्रव्यदेवतासंबन्धे वाक्यं स्यात् । तच्च दुर्बलं श्रुतेः । तस्मात् प्रतिनिधिरिति ।

टुप्— द्रव्यविनाशे द्रव्यमभिलष्यतः प्रकृतस्य सांनाय्यस्य कर्मणः ओदनः पञ्चशरावपरिमितो द्रव्यं विधीयते । एवं अपेक्षितः संबन्धः (भवति) कर्मान्तरे (तु सति द्रव्यान्तरस्य) अनपेक्षितत्वात् अदृष्टं कल्प्यम् । एवं च ओदनस्य आनन्तर्यलक्षणया (प्रत्यासत्तिलक्षणया) श्रुत्या न्याय्यैव कर्मता (विधेयता) ।

चोदना वा, द्रव्यदेवताविधेरवाच्ये हि । २९ ॥

भाष्यम्— निमित्ते वा अन्यभूतं कर्मान्तरं यजतिः, द्रव्यदेवताविधेः । द्रव्यदेवतमिह श्रूयते, पञ्चशरावमैन्द्रं कुर्यादिति । इतरथा हि, ऐन्द्रमिति प्रमादपाठोऽनर्थकश्च । ऐन्द्रमाहेन्द्रयोर्वा अयथार्थानुवादः ऐन्द्रमिति स्यात् । अन्यौ हि ते देवते । ऐन्द्रशब्देन इन्द्रो महेन्द्रश्च न शक्योऽनुवदितुम् । विशेषणत्वे अवचनेऽपि । ननु श्रुतिसंबन्धीसंश्रुतम् । सत्यमेवम् । किन्तु इतरस्मिन् पक्षे वाक्यनैरर्थ्यं श्रुतिः । ऐन्द्रशब्दस्य अनर्थकत्वात् ।

टुप्— देवतापरिमाणयोः (इन्द्रस्य पञ्चशरावस्य च) अप्राप्तत्वात् (तयोर्द्वयोर्विधौ) अनेकगुणविधानात् (विधानप्रसङ्गात्) कर्मान्तरम् (इदम् । ननु अपेक्षितं द्रव्यमिति तत्राह—) द्रव्ये चासति प्रतिनिधिर्भवति, विद्यते च लौकिकं पयः (तस्मिन् मुख्ये सति द्रव्यान्तरमनपेक्षितमिति) ।

शा— 'आर्तत्वाद् द्रव्ययोरन्यत् कर्मणो द्रव्यमीप्सितम् । लाघवं च (विशिष्टकर्मान्तरविध्यपेक्षया) विधेरेवमतो द्रव्यविधिर्भवेत् ॥' उच्यते 'स्थानापत्त्या हि नैकत्वात् प्राप्तिरिन्द्रस्य लभ्यते । महेन्द्रस्यापि सद्भावात् तस्मादिन्द्रो विधीयते ॥ प्राप्ते कर्मणि नैकेन विधिना द्रव्यदेवते । शक्ये विधातुं, ताभ्यां तु विशिष्टं कर्म चोद्यते ॥'

**सोम—** पूर्वत्र विशिष्टोद्देशेऽपि यथा न वाक्यभेदः, एवमिहापि इति प्रत्यवस्थानात् संगतिः । **प्रयोजनम्**—पूर्वपक्षे पञ्चशरावौदने सानाय्यधर्माः कार्याः, सिद्धान्ते तु औषधधर्माः इति ।

**वि—** 'द्रव्यप्रतिनिधिः पञ्चशरावो भिन्नकर्म वा ।, दोहद्वयार्तितो दर्शे द्रव्ये स्यादीप्सितत्वतः ॥, प्राप्ते कर्मणि नैकेन विधिना अन्यदेवते । वाक्ये विधातुं ताभ्यां तु विशिष्टं कर्म चोद्यते ॥'

**भाट्ट—** 'ऐन्द्रं पञ्चशरावमोदनं निर्वपेत्' इत्यत्र हविर्नाशे आज्यादिना समापने प्रसक्ते प्रतिनिधित्वेन न्याय्यात् सानाय्यानुवादेन पञ्चशरावपरिमितौदनमात्रविधानम् । न च वाक्यभेदः, पञ्चशरावौदनपदयोः समानाधिकरणत्वेन 'अग्नये क्षामे इत्यादिवत् विशिष्टविधानोपपत्तेः, ओदनपदस्य तात्पर्यग्राहकत्वेन पञ्चशराव मिति बहुव्रीहिणैवौदनस्योक्तत्वाच्च । ऐन्द्रमिति सानाय्यस्य इन्द्रदेवताकत्वस्यापि अन्यतः 'सान्नाय्यम्' इत्यत्राक्षिप्तस्यानुवादः । अथवा तत्तद्गुणविशिष्टे इन्द्रमहेन्द्रभेदेन सानाय्यस्य भेदात् ऐन्द्रयागानुवादेनैव प्रतिनिधिविधानम् । इति प्राप्ते, सुबन्तपदद्वयस्य परस्परान्वयानुपपत्तेः बहुव्रीहिणा सामान्यतो द्रव्योपादानेऽपि ओदनत्वादिरूपेणोपादाने प्रमाणाभावात् । तात्पर्यग्राहकत्वमङ्गीकृत्य एकत्रैव पदे विशिष्टलक्षणाङ्गीकारे च प्राप्तकर्मानुवादेन अनेकविधाने वाक्यभेदापत्तेः, वाक्यभेदापादकगुणादेव कर्मान्तरमिदं प्रायश्चित्तत्वेन विधीयते । समाप्तिस्तु आज्यादिनैव । 'अग्नये दाते' इत्यत्रापि तु न देवतामात्रविधिपक्षाश्रयणम्, वाक्यभेदप्रसङ्गात्, अपि तु भावनाऽन्तरविधिरेव । न चैवमपि भावनाऽन्तरत्वापत्तेः कर्मान्तरत्वानापत्तिः, उपादानत्यागिनो गुणस्य वाजिनवत् यागभेदकत्वावश्यम्भावात् । अभ्युदितेष्टौ तु पूर्वदेवताऽपनयविधानात् पश्चाच्छ्रवणाच्च विशिष्य पूर्वयागीयत्वप्रतीतेर्भावनामात्रभेद इति विशेषः ।

**मण्डन—** 'कर्मान्तर पञ्चशरावयागः ।'

**शंकर—** 'हविरार्तौ क्रियाविधिः ।'

* दर्शपूर्णमासयोः **हविष्कृदाह्वानमन्त्रः**. 'हविष्कृदेहि' इति । स चाह्वानशेषः नावघातशेषः । वि. ३।२।३, * दर्शपूर्णमासयोः हविष्कृदाह्वानमन्त्रस्य अवहननकाले विनियोगः । ३।२।३. * दर्शपूर्णमासयोः 'हविष्कृदेहीति त्रिरवघ्नन् आह्वयति' इति अवहन्तिः मन्त्रस्य कालं लक्षयति, न तु अवहन्तिं प्रति मन्त्रं उपदिशति । **भा.** ३।२।३।७–९. * दर्शपूर्णमासयोः **हस्तावनेजनादिकं** सर्वाङ्गप्रधानसाधारणम्, न आस्तरणादिमात्राङ्गम् । स्थान-सर्वाधिकरणम् । **के.** ३।१।१४।२४–२५. * दर्शपूर्णमासयोः **होतुर्वरणमदृष्टार्थम्**, वरणात् प्रागपि सामिधेनीषु तस्य प्रवृत्तेः । वि १२।१।१८. * दर्शपूर्णमासयोः होतुर्वरणमाम्नातं 'अग्निर्देवो दैव्यो होता देवान् यक्षत्' इति मन्त्रेण । भा. १२।१।१८।३५ । अस्ति होतुः प्राग्वरणात् सामिधेनीकर्मणा संयोगः । तस्मात् होतृवरणमदृष्टार्थम् । ४१ । प्रवृत्ते कर्मणि दार्शपौर्णमासिक होतृवरण क्रियते । अतस्तत् नानत्यर्थम्, किं तर्हि धर्ममात्रम् । ३५.

* दर्शपूर्णमासाङ्गं उपवीतम् । उपवीताधिकरणम् । वि. ३।१।११.

* दर्शपूर्णमासाङ्गं भेदनादिनिमित्तकहोमाः ॥

प्रायश्चित्तमधिकारे सर्वत्र, दोषसामान्यात् । ६।४।१५।४५ ॥

**भाष्यम्—** दर्शपूर्णमासयोः श्रूयते 'भिन्ने जुहोति' 'स्कन्ने जुहोति' इति । तत्र दर्शपूर्णमासयोरेव एतत् भिन्ने स्कन्ने च प्रायश्चित्तम्, उत यत्र भिद्यते स्कन्दति चेति । किं प्राप्तम्? प्रकरणे यत् प्रायश्चित्तमेवजातीयकं किञ्चिद्विधीयते, तत् सर्वत्र यत्र यत्र भिद्यते स्कन्दति वा तत्रतत्र स्यात् । कस्मात्? दोषसामान्यात् । समानं निमित्तं स्कन्दनं भेदनं वा । स एवाम दोषः इत्यभिप्रेतम् । प्रकरणात् दर्शपूर्णमासयोः प्रायश्चित्तम्, वाक्यादन्यत्रापि । प्रकरणाच्च वाक्यं बलीयः । तस्मात् सर्वत्र स्कन्ने भिन्ने च प्रायश्चित्तमिति ।

प्रकरणे वा, शब्दहेतुत्वात् । ४६ ॥

**भाष्यम्—** प्रकरणे एव भिन्ने स्कन्ने वा प्रायश्चित्तम् । कुतः? शब्दहेतुत्वात् । तेन प्रकृतेनार्थेन सह एकवाक्यता एषां होमानाम् । ततो होमवतो यागस्य प्रत्यायने प्रकृतो 'यजेत' इति शब्दो हेतुः । एवं चेत्

तदुपकारेण अर्थवान् भविष्यतीति । इतरथा विना वाक्येन फलं कल्पयितव्यं स्यात् । तस्मात् वाक्यं फला-भावेनैव बाधितम्, इतिकृत्वा प्रकरणमनुग्रहीतव्यमिति ।

अतद्विकारश्च । ४७ ॥

भाष्यम्— न च तद्विकारः अग्निहोत्र ज्योतिष्टोमो वा, न दर्शपूर्णमासविकारः । यदि तद्विकारो भवेत्, तथापि स्कन्ने भिन्ने वा प्रायश्चित्तं स्यादिति ।

प्रा— गतं प्रासङ्गिकं ( ६।५।८–१४ ) पुनः प्राय-श्चित्ताधिकारमनुसरति ।

सोम-- सूत्रार्थस्तु-- अधिकारे दर्शपूर्णमासादि-प्रकरणे भूत प्रायश्चित्तं दोषसामान्यात् सर्वत्र स्यादिति ।

वि-- 'भिन्ने होमे यमतत्र प्रकृते वा, निमित्ततः । सर्वत्र स्यात्, फलित्वाय प्रकृतेनैकवाक्यता ॥'

भाट्ट— 'भिन्ने जुहोति' इत्यादि प्रायश्चित्तं नैमित्तिकमपि फलापेक्षाया प्रकरणात् क्रत्वङ्गम् । निमित्त मपि भेदनादिक न लौकिककपालादेः, प्रायश्चित्तसामान्या-बलेन क्रत्वङ्गभूतकपालादिभेदननिमित्तवैगुण्यपरिहारार्थ-त्वस्यैव कल्पनेन स्वातन्त्र्यादृष्टकल्पने गौरवात् ।

मण्डन-- 'प्रकृते स्याद् भिदाऽऽहुतिः ।' १६.

शंकर-- 'भिन्ने होमो न सर्वगः ।' १७

* दर्शपूर्णमासार्थोद्धरणकाले अग्निहोत्रार्थोद्धरणाङ्ग-मन्त्रो नानुषेय । भा ९।४।८।३१, * दर्शपूर्ण-मासार्थोद्धृतस्याग्नेः उद्धाने ज्योतिष्मतीति नानुष्ठानम् । ९।४।६।२८.

* दर्शपूर्णमासाख्यस्य एकस्यैव कर्मणः अयनादि-शब्दवाच्यानुष्ठानादिगुणयोगेन अनेकत्वाभासात् भिन्नोत्प-पत्तिः । सु पृ. ८१९.

* दर्शपूर्णमासादेः गुणकामाः विकृतौ न प्रवर्तन्ते । भा. ८।१।१४।२३–२५, * दर्शपूर्ण-मासादीनां कर्मणां आह्नानामप्यर्थं. कर्ता । ३।४।८।२२. * दर्शपूर्णमासादीनां काम्यकर्मणां सर्वाङ्गोपसंहारः । वि. ११।१।३, * दर्शपूर्णमासादीनां निमित्तानुत्तौ आवृत्तिः । अग्निहोत्रादिकर्मणां इत्यत्राधिकरणम् । ६।२।८.

* दर्शपूर्णमासादीनां सर्वफलकत्वेऽपि प्रतिफलं पृथग-नुष्ठानम् । योगसिद्ध्यधिकरणम् । भा. ४।३।११।२८. * दर्शपूर्णमासादौ अध्वर्युकाण्डे यजमानकाण्डे च द्विरा-म्नाता मन्त्रा अध्वर्युयजमानयोर्द्वयोरपि । द्व्याम्नाताधि-करणम् । वि. ३।८।८. * दर्शपूर्णमासादौ आवाहनादि-निगमेषु विधिगतदेवतापदेनैव अभिधानं कर्तव्यम् । भा. १०।४।१२।२३–२४.

## दर्शपूर्णमासादौ इडाऽऽदिशेषभक्षणं ऋत्विजामेव ( यजमानस्य च ) ॥

निर्देशाच्छेषभक्षोऽन्यैः प्रधानवत् । ३।४।३।४ ॥

भाष्यम्— स्तो दर्शपूर्णमासौ । तत्र भक्षाः प्राशित्र-चतुर्धाकरणशंयुवाकाद्याः । तेषु संदेहः किमन्ये एव तेषां भक्षयितारः, उत प्रकरणगताः पुरुषा इति । किं प्राप्तम् ? शेषभक्षः अन्यैःप्रकरणस्थैः कर्तव्यः । कुतः ? निर्देशात् । निर्दिश्यन्ते हि अध्वर्य्वादय इडाभक्षे, 'यजमानपञ्चमा इडां भक्षयन्ति' इति । सर्वेषु भक्षयि-तव्येषु प्राप्तेषु परिसंख्यानार्थो निर्देशः क्रियते । इडा-मेवैते भक्षयेयुरिति । यथा आग्नेयोऽष्टाकपाल इति सर्व-स्मिन्नपर्वणि यागानियमे प्राप्ते अग्निदानमात्रं श्रूयते । स विधिर्न, प्राप्तत्वात् । नानुवादः अनर्थकत्वात् । परि-संख्या तु अर्थवत्त्वात् । एवमेषा परिसंख्येति । अपि च यदि प्रकृता एव भक्षयेयुः, अभक्ष्ये दोषः स्यात् । बहुत्वाद्भक्षाणाम्, भक्षयन्तो म्रियेरन् ।

टुप्— भक्षो निर्देशेभ्यितव्यः । तस्मिन् यथाप्रमाणं कर्तृषु प्राप्तेषु परिसंख्या क्रियते, इडामेवैते भक्षयेयुरिति । अनिर्ज्ञातकर्तृकेषु भक्षेषु पूर्वपक्षोत्थानम् ।

सर्वेषां, समवायात्स्यात् । ५ ॥

भाष्यम्— सर्वेषां प्रकृतैरेव भक्ष्येत । तद्धि भक्षणं पुरुषसंस्कारार्थम् । पुरुषाः संस्कृताः प्रचरिष्यन्तीति । तेषु विनिगमनाया अभावात् यावन्तः प्रकरणे समवेताः, ते सर्वे भक्षयेयुरिति ।

टुप्— ( यजमानविधिपरत्वे संभवति परिसंख्या-परत्वमन्याय्यम्, इत्यादाह्कयाह— ) द्रव्यसंस्कारत्वात् ( भक्षाणाम्, तत्कर्तृत्वेन ऋत्विजामेव प्राप्तेः ) यजमानः अप्राप्तः विधीयते । ( कथं तर्हि पुरुषसंस्कारकत्वं

भाष्यकारेणोक्तम्, तथाह- ) वाक्यप्रकरणसमाख्याभिः 'एभिः ( ऋत्विग्भिरेव ) भक्षयितव्यम्' इत्यस्यापि ( कर्तृ- ) नियमस्य दृष्टमेव प्रयोजनम्। ( तथाहि, ) कर्तृणा कियत्यपि तृप्तिः उपजायते। तदनु निष्पाद्यं ( उक्तप्रयोजनानुनिष्पाद्यं ) अपेक्ष्याह ( भाष्यकारः ) तद्धि भक्षणं पुरुषसंस्कारार्थं इति। याज्ञिकैस्तु ( क्रियाप्रयोजनं द्रव्यसंस्कारः नियमप्रयोजनं तु कर्तृसंस्कारः इति ) विवेकमगृहीत्वा 'भक्षाः पुरुषसंस्काराः' इत्याद्युक्तम्।

निर्देशस्य गुणार्थत्वम्। ६ ॥

भाष्यम्— अथ यदुक्तम्, निर्देशादिति। गुणार्थः सः। अन्ये कर्मकरत्वादेव प्राप्ताः। तत्र यजमानस्तेषां पञ्चमो वचनान्निर्दिश्यते। तत्प्राप्त्यर्थं चेदं वचनम्। ततो न परिसंख्या।

प्रधाने श्रुतिलक्षणम्। ७ ॥

भाष्यम्— यत्तु द्रव्यदानमात्रं प्रधाने निर्दिश्यते, तद्वचनप्रामाण्यात् परिसंख्यानार्थम्। नहि तत्र कस्यचित् अपूर्वस्य विधिः। इह यजमानो विधीयते। विधिपरिसंख्ययोर्विधिर्न्याय्यः। तत्र स्वार्थे शब्दः। परिसंख्यायां त्रयो दोषाः स्वार्थहानम्, अस्वार्थपरिग्रहः, प्राप्तबाधश्चेति। तस्मात् प्रकृता एव भक्षयेयुरिति।

अर्थवदिति चेत्। ८ ॥

भाष्यम्— अथ यदुक्तं अश्वमेधे विरोधः स्यात् बहुत्वात् भक्षाणामिति। तत्परिहर्तव्यम्।

न, चोदनाविरोधात्। ९ ॥

भाष्यम्— अश्वमेधे सर्वे भक्षयिष्यन्ति। अर्थात् सर्वे भक्षयन्तः अश्वमेधं न समापयेयुः। तत्र अश्वमेधश्रुतिः प्रत्यक्षा। सा विरुध्यमाना चोदकप्राप्तं सर्वभक्षणं बाधते। प्रकृतौ न विरोधः। तस्मात् सर्वे प्रकृता भक्षयेयुरिति।

भा— शेषभक्षाः इदमधिकरणम्।

सोम—सूत्रार्थस्तु- शेषभक्षः अन्यैः कार्यः 'यजमानपञ्चमा इडाम्' इति निर्देशात्। यथा सर्वस्य होमे प्राप्ते द्रव्यदानमात्रस्य निर्देशात् होमः, तद्वत् इति।

वि—'शेषभक्षाः किमन्येषामृत्विजां वा, ऽन्येभक्षणम्। ऋत्विजां परिसंख्यानात्, स्वामिपञ्चमोक्तितोऽन्तिमः ॥'

भाट्ट— शेषभक्षादिह दर्शपूर्णमासयोः शेषभक्षाः श्रुताः। तत्रेडाभक्षे 'यजमानपञ्चमाः इडां भक्षयन्ति' इति श्रुताः कर्तारः। तथा प्राशित्रभक्षे 'प्राशित्रं ब्रह्मणे परिहरति' इति श्रुतः। चतुर्धाकरणभक्षेऽपि आदेशाम्नानात् चत्वार ऋत्विजः यजमानभागभक्षणाभावोऽस्त्येव। शंयुवाककालभक्षे तु 'हविःशेषान् भक्षयन्ति' इत्याम्नानेन बहुवचनेन आप्यर्थवत्ता(?)ऽपि कर्मकरत्वात् सर्वे ऋत्विजो भवन्ति। न च इडाभक्षे व्याप्तानामृत्विजां पुनःश्रवणस्य परिसंख्याऽर्थत्वात् शंयुवाककालभक्षे तदन्ये एव भक्षेयुरिति वाच्यम्। ऋत्विजां प्राप्तत्वेऽपि अप्राप्तयजमानसाहित्यस्यैव तत्र विधेयत्वेन तस्य भक्षान्तरे ऋत्विक्परिसंख्यार्थत्वाभावात्। अत्र हि इडोद्देशेन कर्तृविशिष्टभक्षान्तरविधानेऽपि विशेषणविधिवेलायां प्राप्ताप्राप्तविवेकेन भक्षो यजमानसाहित्यं च विधीयते। ऋत्विजां तु भक्षस्य प्रधानशेषाभिधारणन्यायेन कर्तृसंस्कारकत्वस्यापि वक्ष्यमाणत्वेन आनन्तर्यस्यात् प्रातिस्विकेन न विधानम्, स्वत एव आनन्तर्याच्च अप्राप्तं यजमानसाहित्यं तु विधीयते। यदि तु करिष्यमाणकर्मणि बलाधानार्थत्वमपि भक्षस्येति विभाव्यते, तदा अस्तु यजमानपञ्चमत्वग्रहणं पत्नीपरिग्रहणार्थम्। सर्वथा भक्षान्तरे ऋत्विक्परिसंख्याऽभावात् शंयुवाककालभक्षे ऋत्विज एव कर्तारः। अस्मिन्न पक्षे तस्मिन् पत्नीयजमानयोर्निवृत्तिः, 'तानेव ऋत्विजो हविःशेषान् भक्षयन्ति' इति कल्पसूत्रकारवचनाद्‌वगन्तव्या।

मण्डन— 'शेषस्य भक्षः प्रकृतर्त्विजां स्यात्।'

शंकर— 'सर्वे भक्षास्तथर्त्विजाम्।'

* दर्शपूर्णमासादौ इडाभक्षो यजमानस्याप्यस्ति। 'यजमानपञ्चमाः संभूयेडां भक्षयन्ति'। वि. १०।२।९.

* दर्शपूर्णमासादौ ऋग्यजुःसामवो भ्रेषप्रायश्चित्तानां निरूप. । भा. १२।३।५।१६, * दर्शपूर्णमासादौ करणमन्त्रोक्तं फलं याजमानम्। वर्णोन्यायः। ३।८।

१३।२६-२८. ● दर्शपूर्णमासादौ करणमन्त्रप्रकाश्यं कर्मोपयोगि फलं कर्तुमिच्छामि । अतिक्रमाधिकरणम् । ३।८।१४।२९-३०, ● दर्शपूर्णमासादौ कर्तुरेकस्यैव श्रीमद्द्वितीयस्य अधिकारः । ६।२।२।१२-१३. ● दर्शपूर्णमासादौ कर्तृदेशकालविधिः नियमार्थः । वि. ४। २१९. ● दर्शपूर्णमासादौ निर्वापाद्यङ्गमन्त्राणामावृत्तिः । निर्वापन्यायः । मा. ११।४।१४।४७-४८, ● दर्शपूर्णमासादौ नीवारादिप्रतिनिधिष्वपि अवघातादिमुख्यधर्मानुष्ठानम् । ३।६।१४।३७-३९. ● दर्शपूर्णमासादौ नीवारसंकल्पोत्तरमपि व्रीहिलाभे व्रीहय एव ग्राह्या न नीवाराः । पुरोडाशकरणोत्तरं तु प्रतिनिधिनैव समापनम् । नि ६।३।१६, ● दर्शपूर्णमासादौ पुरोडाशप्रथनमन्त्रोऽनिकश्च: । ११।३।१९, ● दर्शपूर्णमासादौ प्रयाजादीनां विनियोजकं प्रकरणम् । ३।३।४.

## ☸ दर्शपूर्णमासादौ प्रैषा आध्वर्यवाः ॥

**अध्वर्युस्तु दर्शनात् । ३।८।१२।२४॥**

भाष्यम्— अथ एव गते ( प्रैषप्रैषार्थयोर्गौणं कर्तृकत्वे अवगते इत्यर्थः ) इदं संदिह्यते किमध्वर्युः अग्नीधं प्रेषयेत्, उत अग्नीत् अध्वर्युमिति । अनियमोऽविशेषात् । इति प्राप्ते, ब्रूमः । अध्वर्युः तत्प्रैषार्थकारी स्यात् । कुतः ? दर्शनात् । दर्शनं भवति ' निर्मथ्यं स्फ्यं धारयेत् । यदन्वञ्चं धारयेत् वज्रो वै स्फ्यो वज्रेणाध्वर्युं क्षिण्वीत ' इति । यः प्रेष्यति, तस्य हस्ते स्फ्यः । स्फ्येन अध्वर्युं क्षिण्वीत इति अन्यमध्वर्युं प्रेषकात् दर्शयति । तस्मात् अग्नीत् अध्वर्युं प्रेष्येत् इति ।

वा— ' यदन्वञ्चं धारयेत्, वज्रेणाध्वर्युं क्षिण्वीत ' । ' वज्रोऽध्वर्युं क्षिण्वीत ' इति वा पाठः । स्फ्यस्य धारणं तावत् अग्नीधः प्रकान्तेन । स च अध्वर्युं क्षिण्वीत इति वदन् अग्नीधं स्फ्यहस्तं प्रेषकं दर्शयति । का तु अस्य प्राप्तिः ? उच्यते । ' अङ्गगुणविरोधे च तादर्थ्यात् ' इत्यनेन अङ्गत्वात् प्रैषस्य कर्तृलोपो युक्तः, न प्रधानस्य । बहवश्च प्रैषार्थाः, एको निगदः । तेन ' भूयसां स्यात् सधर्मत्वम् ' ( १२।२।७।२२ ) इत्यपि प्रैषार्थे अध्वर्युरिति, परिशेषात् प्रैषे अग्नीत् ।

**गौणो वा, कर्मसामान्यात् । २५ ॥**

भाष्यम्— नैतदस्ति अग्नीधः प्रैषः, अध्वर्योः प्रैषार्थ इति । किं खलु ? अध्वर्युरेव अग्नीधं प्रेष्येत् । एवमध्वर्युणा प्रैषः प्रैषार्थश्च उभावपि कृतौ भविष्यतः । तत्र आध्वर्यवमिति समाख्या अनुग्रहीष्यते । तस्मात् अध्वर्युरेव मुख्यः स्यात् । किमस्य मुख्यत्वम् ? यदनेन सर्वं कर्तव्यं समाख्यानात् इति । अथ यदुक्तं ' अध्वर्युः प्रचरिता दृश्यते ' इति, तदुच्यते । सत्यं दृश्यते, न तु अस्य प्रैषार्थकरणे प्रमाणमस्ति चिन्त्यमानम् । तस्मादेतत् मिथ्या दर्शनम् । यस्य हि दर्शनस्य प्रमाणं नास्ति, व्यामोहः सः । यथा शुक्तिकायां रजतविज्ञानम् । अस्ति तु अग्नीधः प्रैषार्थकरणे प्रमाणम् । तस्मात् आग्नीध्रः प्रचरिता । प्रचरितरि च अध्वर्युशब्दो दृश्यते । तस्मात् गौणः । आध्वर्यवे वेदे समाम्नातान् पदार्थान् करोति इति कृत्वा अध्वर्युरित्युच्यते आग्नीध्र इति । तस्मात् आध्वर्यवः प्रैषः, आग्नीध्रः प्रैषार्थ इति ।

वा—' मुख्यं वा पूर्वचोदनात् ' इति न्यायात् प्रैषे समाख्यातः कर्ता युक्तः । नहि तदानीं विरोधः कश्चिदस्ति । तस्मिंस्तु प्रयुक्ते विरोधात् प्रैषार्थे अन्यो भवति । प्रयोजकस्य च प्रयोज्यव्यापारेऽपि कर्तृत्वं न विहन्यते इत्युभयानुग्रहः । इतरथा हि प्रैषे अत्यन्तबाध एव स्यात् । नहि स तेन कृतो नापि कारितो भवेत् । तस्मादध्वर्युप्रेषितः अग्नीत् कुर्यादिति । ' वज्रेणाध्वर्युम् ' इति च आग्नीध्रमेव तत्कार्यापत्तेरभिधास्यति ।

भाट्ट—तत्रापि बहुषु प्रधानभूतेषु प्रैषार्थेषु समाख्याबाधे प्रमाणाभावादेकस्मिन् ' प्रोक्षणीरासादय ' इत्यादिप्रैषे एव अध्वर्युबाधेन अन्यकर्तृकत्वम् । अत एव ' निर्मथ्य स्फ्यं धारयित्वा संप्रैषमाह यदन्वञ्चं धारयेत्, स्फ्यो वज्रेणाध्वर्युं क्षिण्वीत ' इति धारयितुर्भिन्नमध्वर्युं दर्शयति । इति प्राप्ते, प्रैषार्थेषु अन्यकर्तृकत्वेऽपि प्रयोजकत्वेनापि अध्वर्योः कर्तृत्वोपपत्तेः समाख्यायाः कुत्रापि अबाधात् प्रैषार्थान् अन्य एव कुर्यात्, प्रैषोच्चारणं तु अध्वर्युः । न च लोभादावपि विशेषवचने प्रतिप्रस्थात्रादिः तत्पुरुषः । दर्शादौ तु आग्नीध्र एव, धर्मकत्वेन

याज्ञिकप्रसिद्धत्वादिति ध्येयम् । यत्तु स्फ्यम्, तद् यदि अध्वर्युः अग्रतो धारयेत् तदा स्फ्यः तं क्षिण्वीत इत्यर्थेऽपि बाधकाभावात् धारणप्रेषयोराध्वर्यवत्वेऽपि उपपन्नम् । स्फ्यधारणमपि कल्पसूत्रेषु आध्वर्यवमेव प्रसिद्धमिति अवस्थवार्तिक प्रौढिवादः ।

मण्डन—'अध्वर्युणा प्रेषणमेव कार्यम् ।' परिधीधार्थः आग्नीध्रेण कार्यः ।

शंकर—'प्रेषिताऽध्वर्युरेव स्यात् ।' १५.

दर्शपूर्णमासादौ स्विष्टकृदादिशेषकार्यार्थमवत्तस्य द्रव्यस्य नाशे शेषकार्यलोपः । नाशाधिकरणम् ॥

अपि वा शेषभाजां स्याद् विशिष्टकारणत्वात् । ६।४।२।३॥

भाष्यम्— अथ स्विष्टकृदर्थमवत्तं यदि विनश्यति, तत्र किं शेषादवदेयम्, उत नेति । किं प्राप्तम् ? पुनः शेषादवदेयमिति । कुतः ? नाम कृत्स्नस्य उत्तरार्धादवदीयते । कस्य तर्हि ? संनिहितस्य । सति हि प्रयोजने संनिहितस्यावदेयमिति । तस्मादवदीयमाने कृतं कृतं भवति । तस्माच्छेषादवदेयमिति । एवं प्राप्ते, ब्रूमः । शेषभाजां स्याल्लोपः ( लोपः इति पदस्य सूत्रे अध्याहारः । म्कोषा. ६।१।१।५४ ) । कुतः ? विशिष्टकारणत्वात् । विशिष्टं हि कारणं तदवदाने, यत् प्रतिपादयेनेति । प्रतिपत्तिश्च विविक्तरूपेण उपकरोति । तस्य विविक्तकरणाय प्रतिपाद्यमानस्य नियमोऽयं 'स्विष्टकृद्धोमेन प्रतिपादयितव्य.' ( इति ) । तस्मिंश्च प्रतिपादिते भवति । स यदि शेषाद उद्धृतो विनश्येत, कृते विवेके न पुनर्ग्रहणं प्रयोजयेत् । प्रतिपाद्यमानश्च स्विष्टकृद्धोमेन प्रतिपादयितव्य इति । प्रतिपाद्यमानाभावात् लोप एव स्विष्टकृतः स्यात् । प्रधाने कृते शिष्टं सर्वशेषकार्यसाधारणम् । तत्र एकस्य उद्धृते शिष्टमन्यत्र प्रतिपादनीयम् ।

टुप्—( पूर्वपक्षमाक्षिपति— ) स्विष्टकृत् अतिप्रयुक्तस्य ( अन्यप्रयुक्तस्य इति आनन्दाश्रमीये पाठः । द्रव्यस्य— ) ग्राहकः । एवं चेत् संनिहितं परकीयं ग्रहीष्यति ( अतः नाशे लोप एव सिद्ध इति ) किमतः ( अधिकरणकृत्यम् ? ) उच्यते । यदि प्रयोजकः स्यात् ( ततः ) यादृशं प्रयुक्तम्, तादृशस्याभावात् न पुनः शिष्टादवदेयं ( स्यात् ) । यत् पुनरिदं संस्कार्यम्, तस्य ( कस्मिंश्चिदंशे विनष्टेऽपि शिष्टस्य ) विद्यमानत्वात् पुनरवदानेन संस्कारः किमिति न क्रियते ? न चात्र अवयवी उपलक्षणार्थः ( स्विष्टकृदवदानोपलक्षणार्थः इत्यर्थः ) । किं तर्हि ? संनिहितोऽसौ इति । एवं प्राप्ते, ब्रूमः । विशिष्टो देशः ( सकलपुरोडाशोत्तरार्धावयवरूपः, स्विष्टकृद्यागस्य ) संस्कार्यत्वेन अपेक्षितः । तस्य ( च देशस्य ) अभावात् कः प्रतिपत्तिं प्रयुञ्जीत ? अपूर्वमिति चेत्, न, द्रव्यप्रतिपादनानुनिष्पादि ( एव ) अत्र अपूर्वम् । अतस्तत् ( स्वयम् ) अप्रयोजकम् । द्रव्यप्रतिपत्तिरेव चिकीर्षिता ( प्रयोजिका ) न तु यागनिर्वृत्तिरिति । ( इदं च स्विष्टकृतो लोपविधानं न्यायप्राप्तमुक्तम् । वचनात्तु तस्य आज्येन समापनमिष्टमेव । इडाऽऽदीनामेव ▮ लोपः ) ।

सोम— पूर्ववदिह नास्ति अवदेयाभावः, येन पुनरवदानं न भवेद् इति प्रत्यवस्थानात् संगतिः । सूत्रार्थस्तु— पुनरवदानव्यावृत्त्यर्थः अपिवाशब्दः । लोपशब्दश्चापि अध्याहार्यः । तथा च शेषभाजां स्वार्थविनाशे नावदानम्, किन्तु लोपः स्यात् प्रतिपत्तिरूपविशिष्टप्रयोजनकारणकत्वात् तदनुष्ठानस्य प्रतिपाद्याभावे प्रतिपत्त्यभावादिति ।

वि—'इडाद्यर्थस्य नाशेऽन्यः शेषाद् ग्राह्यो न वा, ग्रहीष्यते । शेषभाजां, स लोपोऽप्रतिपत्त्यप्रयोजनात् ॥'

भाट्ट— यत्र तु त्यागासंयुक्तानि शेषकार्याणि यथा स्विष्टकृदादौ, तत्रोत्तरार्धादिनाशे उत्तरार्धान्तराभावात् अवशिष्टस्य प्रतिपत्त्यन्तरगृहीतत्वाच्च न तावच्छेषेण करणम् । नापि हविरन्तरोत्पत्तिः, अप्रयोजकत्वात् । किन्तु आज्येनैव समापनम् । उक्तवचनस्य पुनर्द्रव्यनाशे द्रव्यापेक्षामात्रेणैव प्रवृत्तेः । याज्ञिकमते तु 'यदि प्रत्तदैवतम्, आज्येन शेषं संस्थापयेत्' इत्यापस्तम्बवचनादवधेयम् । अविशेषप्रवृत्तमपीदं अपेक्षानुरोधात् स्विष्टकृत्परमेव । अतस्त्यागाशामावादिडादेर्लोप एव । इद चोत्तरार्धनाशविना अनेकप्रतिपत्तिविधाने । शेषत्वेन अनेकप्रतिपत्ति-

विधाने तु शेषैकदेशविनाशेऽपि अवशिष्टेनैव अवयवशः सर्वप्रतिपत्तिकरणमिति ध्येयम्।

मण्डन—' शेषक्रिया नास्ति तु शेषनाशे।'

शंकर—' एवं शेषासत्त्वनाशे।' शेषकार्यलोपः।

* दर्शपूर्णमासादिषु आग्नेयादीनां समुदितानां प्रकरणं फलकारणम्। सम्बन्धः। भा. २।२।२।१–४. * दर्शपूर्णमासादिषु जुह्वादिपात्राणां पर्णतादिविधानपि अहृनादिविधानेषु नारम्यैकफलविधानविरोधः। सु. पृ. १०६२. * दर्शपूर्णमासादिषु वैदिकीविकर्तव्यता। भा. ७।४।१।१.

* दर्शपूर्णमासादिप्रकरणे विधिरनियमो श्रुतानां देशकालनिमित्तकर्मसंस्काराणां न कर्मभेदकत्वम्। वि. २।३।१३. * दर्शपूर्णमासादियाजनस्य श्रुतिस्मृत्याचारपर्यन्ताप्रमाणकधर्मप्रमाणसहितस्यैव साङ्गप्रधानप्रयोगविधायित्वम्। सु. पृ. ११८६. * दर्शपूर्णमासादिसंयद्वपत्नीनियमकर्तृसमुदायस्य सौर्यादिषु नातिदेशः। भा. ८।१।११।२०–२२. * दर्शपूर्णमासादिसर्वपदार्थे आधाने श्रुतं वैकङ्कतादिपात्रम्। वि. ३।१।१२.

* दर्शपूर्णमासारम्भत्वप्रसिद्धिः याज्ञिकानां अन्वन्वाधानादिरूपे प्रथमपदार्थे। भाट्ट. ५।१।११ पृ. ६७.

* दर्शपूर्णमासावृत्तावपि अन्वारम्भणीयायाः आदौ सकृदेवानुष्ठानम्। भा. ५।२।१०।३४–३५.

* दर्शपूर्णमासेनिर्वर्तव्यतायाः अविहितेतिकर्तव्यतापेषु सौर्यादिषु अतिदेशः। भा. ७।४।१।१.

* दर्शपूर्णमासेष्टिः मूलप्रकृतिः। वि. ८।१।२ वर्णक २.

* दर्शपूर्णमासोत्तरमेव सोमविकारा गवादयः एकाहा भवन्ति न प्रागपि। भा. ५।४।१।२६. * दर्शपूर्णमासोत्तरं ज्योतिष्टोमः अनुष्ठेयः। भा.३।१५।३७.

* दर्शपूर्णमासोपकाराय यदनो यदन्तं प्रसज्यते तत्प्रतिषेधो विधीयते। ततश्च यावत् कर्मभिः संवादः तत्र सर्वत्र अनृतं वर्जनीयम्। भा. ३।४।४।१३ पृ. ९४१.

* दर्शपूर्णमासकर्मणि यजमानः उपसर्गमात्र कुर्यात्, शेषस्य अन्य एव कर्ता अध्वर्य्वादिः। के. ३।७।८।१८–२०.

* दर्शपूर्णमासकालत्वात् प्रायेण यागानाम्। भा. ७।१।१।२ पृ. १५२८.

* दर्शपूर्णमासगतं बर्हिः यूपावटस्तरणबर्हिषो न प्रकृतिः। न च धर्मातिदेशः। वि. ७।३।७. * दर्शपूर्णमासगतयोः हविरभिमर्शनकरणमन्त्रयोः प्रातर्दोहपञ्चहोत्रोः सोमयागे विकल्पः। भा. ८।१।१५।२६.

* दर्शपूर्णमासगताग्नेयद्वयस्य विकल्पेन सौर्ये चरौ अतिदेशः। भा. ८।१।१५।२६. * दर्शपूर्णमासगताग्नेयविध्यन्तस्य एकदेवताकौषधद्रव्यकविकृतिषु अतिदेशः, द्विदेवत्ये तु अग्नीषोमीयादेरतिदेशः, आज्यद्रव्यके च उपांशुयाजस्यातिदेशः। वि. ८।१।१६. * दर्शपूर्णमासगताज्यभागान्ता पशुगतयूपसंस्कारार्थभक्षणाज्ये धर्माणां नातिदेशः। भा. ७।१।७।१८, * दर्शपूर्णमासगतेडानिगदे यजपतिशब्दस्य विकृतौ नोहः। ९।१।१३।४०, * दर्शपूर्णमासगतनिर्वापमन्त्रस्याग्निशब्दस्य विकृतौ ऊहः। ९।१।१३।२८, * दर्शपूर्णमासगतनिर्वापमन्त्रस्थसवितृप्रसवादिपदानां विकृतौ नोहः। ९।१।११।३६–३७, * दर्शपूर्णमासगतपार्वणहोमयोः विकृतौ नातिदेशः। ९।२।१८।५१–५६. * दर्शपूर्णमासगतपुरुषार्थगोदोहनादेः सौत्रे नातिदेशः। कत्वङ्गमेव हि अतिदिश्यते। वि. ८।१।१४. * दर्शपूर्णमासगतपेषणमन्त्रे वाक्यशब्दस्य विकृतौ वाक्यान्तापत्ति 'मामभि' इति ऊहः। भा. ९।१।१२।३८–३९ वर्णक २, * दर्शपूर्णमासगतप्रणयनस्य (अग्निप्रणयनस्य) चातुर्मास्यगतप्रणयने (द्वयोः प्रणयन्ति) अतिदेशः, न चौमिकस्य इति भाष्यमतम्। न दार्शिकम्, न सौमिकं किन्तु अपूर्वमेवेति वार्तिकमतम्। ७।३।८।१९–२२। इदं च प्रणयनं मध्यमयोरेव पर्वणोः। ७।३।९।२३–२५, * दर्शपूर्णमासगतसांनाय्यविकारः अग्नीषोमीयः पशुः। ८।२।२।१०–१४। तथापि पयोविकारे न दधिविकारः। ८।२।३।१५–१८, * दर्शपूर्णमासगतसांनाय्यविकाराणां अग्नीषोमीयपुरोडाशविकाराणां च सोमोत्तरकालता। ५।४।८।२५.

* दर्शपूर्णमासचातुर्मास्यादिषु आग्नेयादिप्रधानानां एकदेशाद्वकर्तृत्वम्। भा. ११।२।१।१, * दर्शपूर्णमास-

चातुर्मास्यादिषु तत्तद्द्रव्याप्रयोगानुरोधेनाङ्गानामावृत्तिः । इष्टिराजसूयाधिकरणम् । ११।२।३।१२–१८.

* दर्शपूर्णमासतन्त्रगतान्यतमदेवताकत्वनियमः उपांशुयाजस्य । भा. १०।८।१८।४९–५०.

* दर्शपूर्णमासधर्माणां ऐन्द्राग्नादिविकृतौ अतिदेशः । भा. ८।१।४।११, * दर्शपूर्णमासधर्मातिदेशः सोमे नास्ति । ८।१।१।२–१०.

दर्शपूर्णमासन्यायः । दर्शपूर्णमासौ ज्योतिष्टोमश्च सर्वकामार्थौ ॥

सार्वकाम्यमङ्गकामैः प्रकरणात् । ४।३।१०।२५ ॥

भाष्यम्— इदमाम्नायते 'एकस्मै वा अन्या इष्टयः कामायाह्रियन्ते, सर्वेभ्यो दर्शपूर्णमासौ, एकस्मै वा अन्ये क्रतवः कामायाह्रियन्ते सर्वेभ्यो ज्योतिष्टोमः' इति। तत्र संदेहः किमङ्गकामैः अङ्गाङ्गकामैश्च सह अस्यानुवादः, अथवा विधिरिति । किं प्राप्तम् ? अनुवाद इति । यदेतत् सार्वकाम्यम्, तदनूद्यते । अङ्गकामैश्च अङ्गाङ्गकामैश्च सह । सन्ति हि अङ्गकामाश्च अङ्गाङ्गकामाश्च । यथा 'आहार्यपुरीषां पशुकामस्य वेदिं कुर्यात्, खननपुरीषां प्रतिष्ठाकामस्य' इत्येवमादयः । तथा, 'यदि कामयेत वर्षेत् पर्जन्य इति नीचैः सदो मिनुयात्' इति । तद्विहितमेवेदं अभिधीयते इत्यनुवाद स्यादिति मन्यामहे ।

टुप्— 'सर्वेभ्यो ज्योतिष्टोमः' इति विधायकाभावात् साधनत्वाभावः । तस्मादङ्गाङ्गकामानपेक्ष्य सर्वेभ्यो ज्योतिष्टोम इत्यनुवादः ।

फलोपदेशो वा, प्रधानशब्दसंप्रयोगात् । २६ ॥

भाष्यम्— फलविधिर्वा । कुतः ? प्रधानशब्देन फलसंयोगो भवति । सर्वेभ्यो दर्शपूर्णमासौ, सर्वेभ्यो ज्योतिष्टोम, इति च । प्रधानाभिधानेन च प्रधानस्य सर्वफलता विहिता । तस्मान्नानुवादः । अथ अङ्गकामान् अङ्गाङ्गकामाश्चापेक्षन्ते, तथा लक्षणाशब्दः स्यात् । श्रुतिश्च लक्षणाया गरीयसी । तस्मात्प्रयोगवचनेन विधिरिति ।

टुप्— प्रधानेभ्यः फलं श्रुतम् । अङ्गानि अङ्गाङ्गानि च लक्षणया गम्येरन् । श्रुतिश्च बलीयसी । न चायं कस्यचिद्विधेः शेषः, येन अर्थवादत्वादनूद्येत । तस्मादुत्पत्तिप्रयोगवचनार्थवादाद्याहाराणामन्यतरतो विधिः । किं कर्मसाध्यान् कामानपेक्ष्य सर्वकामता, उत यावन्तः केचन कामा इति । अविशेषात् यावन्तः कामा इति । अन्ये क्रतवः एकफलसाधनकाः, अयं तु क्रतुः सर्वाणीति क्रतुगतानि फलान्यपेक्ष्य सर्वतेति चेत्, तन्न । ज्योतिष्टोमस्य सर्वफलेभ्यो विधीयमानस्य अर्थवादोऽयम् । तस्मान्नियतफलतायां नास्ति प्रमाणम् । उच्यते । यत्रयत्र कामशब्दो हिरण्यकामः पुत्रकाम इति, तेनैषाम् साधनता । कुतः ? तेषु हि कामशब्दमुच्चारयन्ति, नेतरत्र । उपलब्धपूर्वं हि प्रियं भवतीति । सर्वज्ञता च न कदाचिदुपलब्धा । तस्मात्तत्र कामस्य अप्रवृत्तिः । तेन ये एव वेदे कामशब्दा उच्चारिताः, तेऽनुषज्यन्ते ।

शा— 'सर्वेभ्यः कामेभ्यो दर्शपूर्णमासौ' इत्यनुवादो दर्शपूर्णमासस्तुत्यर्थः इति प्राप्ते, ब्रूमः । 'षष्ठी संबन्धमात्रेऽपि वर्तमाना न दुष्यति । तादर्थ्ये च चतुर्थ्यर्थस्तत्र प्रायं न केनचित् ॥ स्यात् प्रधानफलार्थत्वमङ्गानां तदनुग्रहात् । न त्वङ्गफलशेषत्वं प्रधानस्य कथंचन ॥ सर्वकामार्थता तस्मादप्राप्तेह विधीयते । कर्तव्यामिति चाहार्यं विधिभावनयोः पदम् ॥ उत्पत्तिचोदनाभ्यो वा प्रसिद्धे विधिभावने । आश्रित्य फलसंबन्धमात्रमत्रोपदिश्यते ॥' तस्मात् फलविधिः ।

सोम— पूर्ववत् इहापि नानेकफलार्थत्वं इति प्रत्यवस्थानात् संगतिः ।

वि— 'दर्शादिः सर्वकामेभ्योऽनुवादो वा फले विधिः । , अङ्गोपाङ्गोदितः कामो विद्यमानादनूद्यते ॥ , उत्पत्तिचोदनासिद्धे आश्रित्य विधिभावने । फलसंयोगबोधेन भवेदेव फले विधिः ॥'

भाट्ट— 'एकैकस्मै कामायान्ये यज्ञक्रतव आह्रियन्ते सर्वेभ्यो ज्योतिष्टोमः, एकैकस्मै कामायान्ये यज्ञक्रतव आह्रियन्ते सर्वेभ्यो दर्शपूर्णमासौ' इति श्रुताभ्यां वचनाभ्यां संयोगपृथक्त्वन्यायेन सर्वफलार्थत्वम्, न तु तत्प्रकरणस्थगुणकामानामपि दर्शादिप्रयोज्यत्वात् । तदभिप्रायेणानुवादत्व वैयर्थ्यात्, औपचारिकत्वाङ्गीकारे तादर्थ्ये प्रमाणाभावाच्च । अतः अप्राप्तार्थकत्वादेव विधि-

भावनावाचिपदाध्याहारेण सर्वफलार्थत्वेन विनियोगः । न चैवं स्वर्गार्थत्वबोधकविधिवैयर्थ्यम्, गोबलीवर्दन्यायेन भिन्नविषयकत्वकल्पनया अभ्युदयशिरस्कत्वोपपत्तेः ।

अत्र चाविशेषात्सर्वाणि फलानि ज्ञेयानि । न तु अर्थवादगतान्यशब्दस्य सदृशवाचित्वात् ज्योतिष्टोमदर्शपूर्णमाससदृशसोमयागान्तरेष्ट्यन्तरसम्यक्फलमात्रपरः तत्रत्य यथायोग सर्वशब्दः, अर्थवादस्य स्तुत्यर्थत्वेनैवोपपत्तौ हारियोजनवाक्यसर्वशब्दन्यायेन संकोचकल्पनानुपपत्तेः । अत एव सर्वशब्दस्य सर्वनामत्वात् वैदिकफलमात्रपरत्वमपि नाशङ्कनीयम्, नैमित्तिकानामपि पूर्वमनुपस्थितत्वात् । कथञ्चिदुपस्थितेष्वपि तेष्वपि अविशेषात् । यानि तु राजविषाणप्राप्त्यादीनि प्रमाणेन केनापि अप्रसिद्धानि तेषां न सर्वशब्देन ग्रहणम् । यत्तु अतीन्द्रियार्थदर्शित्वात्मलक्षणसार्वज्ञ्यादेरपि न सर्वशब्देन ग्रहणम्, तस्य लोकवेदयोः क्वचिदपि उपायान्तरजन्यत्वादर्शनादित्युक्तं तन्त्रधारतन्त्ररत्नादौ, तत् 'प्रवृत्त्यालोकन्यासात् सूक्ष्मव्यवहितविप्रकृष्टज्ञानम्, भुवनज्ञानं सूर्ये संयमात्' इत्यादिपातञ्जले 'चक्षुस्तत्परि संयोग्य स्वाहारमपि चक्षुषि । मां तत्र मनसा ध्यायन् विश्वं पश्यति चक्षुषा ॥' इत्यादिपुराणेषु च सिद्धिमार्गे योगधारणाविशेषस्य साधनत्वेन उक्तत्वादुपेक्षितम्, नियतविषयसार्वज्ञ्यस्य अत्रान्यत्वेऽपि भुवनज्ञानादेः संभवेन ग्रहणोपपत्तेः । न चैवं मन्वादीनामपि सर्वज्ञत्वोपपत्तेः स्मृतीनां वेदमूलत्वानापत्तिः, अदृष्टार्थस्वर्गसाधनत्वस्य प्रमाणान्तरेण असिद्धौ योगेनापि ज्ञातुमशक्यत्वात् ।

मण्डन— 'सर्वकामविधिर्भवेत् ।'

शंकर— 'दर्शादि सर्वकामार्थम् ।'

● दर्शपूर्णमासपदं विद्वद्वाक्यद्वयसिद्धसमुदायद्वयपरं प्रसिद्धार्थकम्, न च तदाख्यातपरत्वम् । ( विद्वद्वाक्यं च 'य एवं विद्वान् दर्शपूर्णमासाभ्यां यजते' इत्यादि ) । मीन्या. ● दर्शपूर्णमासपदवत्, यथा दर्शपूर्णमासपदं आग्नेयादिषट्कव्यावच्छेदकं तथा ज्योतिष्टोमपदं ज्योतीरूपत्रिवृदादिस्तोमचतुष्टयव्यावच्छेदकम् ( पूर्वपक्षे सिद्धा ) । भाट्ट. ४।४।१२.

● दर्शपूर्णमासपुरोडाशधर्मातिदेशः सौत्रामणीगतसुराग्रहेषु । भा. ८।२।१।१–९.

● दर्शपूर्णमासप्रकरणं असंदिग्धोद्भूतिकं महाप्रकरणम् । बाल. पृ. ६. ● दर्शपूर्णमासप्रकरणात् यूपाद्यनुमन्त्रणादीनां उत्कर्षः । संस्कारको हि मन्त्रः सोऽसति संस्कार्येऽनर्थकः इति तत्र न्यायमिष्यते । भा. ३।३।११।२.

● दर्शपूर्णमासप्रकरणे आज्यभागौ प्रकृत्य 'न तौ पशौ करोति न सोमे' इति । अत्र 'न सोमे' इति वाक्यं 'तौ न पशौ करोति' इत्यस्य अर्थवादः । भा. १०।८।२५. ● दर्शपूर्णमासप्रकरणे 'आर्षेयं वृणीते' इति वचनं यजमानप्रवरर्षिनामकीर्तनपरं न तु ऋत्विग्विषयम् । संकर्ष. १।४।१. ● दर्शपूर्णमासप्रकरणे 'निवीतं मनुष्याणाम्' इति श्रुतं निवीतवाक्यं उपवीतविधेः अर्थवादः, न विधिः । के. ३।४।१।१–९. ● दर्शपूर्णमासप्रकरणे पिण्डपितृयज्ञे 'यत् परुषि दिनं तद्देवानाम्, यदन्तरा तन्मनुष्याणाम्, यत् समूलं तत् पितृणाम्' इति श्रुतम् । अत्र परुषि दितम्, यदन्तरा इत्यनुवादः समूलत्वस्तुतये । समूलत्वं तु विधीयते । वि ३।४।७. ● दर्शपूर्णमासप्रकरणे यूपाद्यनुमन्त्रणानि असंबद्धान्यपि न पुरस्तात् प्रकरणं विच्छिन्दन्ति । वा. ३।१।११।२१ पृ. ७६२. ● दर्शपूर्णमासप्रकरणे 'पौर्णमास्यां यजेत' इत्यादिना कालसंबन्धो विधीयते न कर्मान्तरम् । वि. २।१।१९, ● दर्शपूर्णमासप्रकरणे 'शेषं स्विष्टकृते समवद्यति' इति शेषकालसंबन्धस्य विधिः न कर्मान्तरस्य । २।१।१९, ● दर्शपूर्णमासप्रकरणे श्रुतं निवीतप्राचीनावीतवाक्यं उपवीतविधेरर्थवादः । निवीताधिकरणम् । ३।४।१, ● दर्शपूर्णमासप्रकरणे श्रुत. अनृतवदननिषेधः क्रत्वर्थत्वेन विधीयते । ३।४।८. ● दर्शपूर्णमासप्रकरणे श्रुतः 'नाभिव्याहरेत्' इति निषेधः क्रतुयुक्तजञ्जभ्यमानपुरुषसंस्कारः, न केवलपुरुषार्थः । जञ्जभ्यमानाधिकरणम् । भा ३।४।५। १४–१६. ● दर्शपूर्णमासप्रकरणे श्रुतः 'यो विदग्धः स नैर्ऋतः' इत्यादिः 'अविदहता श्रपयितव्यः' इत्यस्य विधेरर्थवादः । पर्णादिताधिकरणम् । के. ३।४।३ ( सि. ७ ) । ११, ● दर्शपूर्णमासप्रकरणे श्रुतस्य

अवगोरणनिषेधस्य कैवल्यपुरुषार्थतया प्रकरणादुत्कर्षः । ३।४।६।१७. * दर्शपूर्णमासप्रकरणे श्रुतस्य पौष्णपेषणस्य पूषैकदेवत्ये निवेशः, न तु द्विदेवत्ये । भा. ३।३।१५।३९–४६, * दर्शपूर्णमासप्रकरणे श्रुतस्य पौष्णपेषणस्य पौष्णे चरावेव निवेशः । ३।३।१४।३५–३८, * दर्शपूर्णमासप्रकरणे श्रुतस्य पौष्णपेषणस्य पौष्णे यागे उत्कर्षः । पौष्णपेषणाधिकरणम् । ३।३।१३।३४, * दर्शपूर्णमासप्रकरणे श्रुतस्य मलवद्वासःसंवादनिषेधस्य कैवल्यपुरुषार्थतया प्रकरणादुत्कर्षः । संवादाधिकरणम् । ३।४।७।१८–१९, * दर्शपूर्णमासप्रकरणे श्रुतयोः जामन्याः नान्यमोत्कर्षः । पत्नीसंयाजन्यायः । जामनीन्यायः । ३।३।१०।२०–२३. * दर्शपूर्णमासप्रकरणे 'संस्थाप्य पौर्णमासीं वैमृधमनुनिर्वपति' वैमृधः पौर्णमास्यङ्गम्, न तु दर्शपूर्णमासोभयाङ्गम् । वि. ४।२।१४. * दर्शपूर्णमासप्रकरणे हविषामभिघारणादूर्ध्वं वेदिकरणमाम्नातम् । भा १२।१।१८।३९ * दर्शपूर्णमासप्रकरणपठितानामपि प्रयाजानां अवान्तरप्रकरणं अतिक्रमाधिकरणे व्युत्पादयिष्यते । सु. पृ. ७६४

* दर्शपूर्णमासप्रकृतीनि दीक्षणीयादीनि । भा. ४।३।१५।३७.

* दर्शपूर्णमासप्रक्रमसमाप्ती प्रतिमासम् । भा. २।४।१।१ पृ. ६२७.

* दर्शपूर्णमासप्रयुक्तो न भवति यथमानेष्टिसंस्कारः किन्तु अभिप्रयुक्तः । भा. ३।६।६।१७.

* दर्शपूर्णमासप्रयोगे यावज्जीविके प्रयाजादीतिकर्तव्यता भवति इत्युक्तम् ( ६।३।१।२ ) । भा. ९।१।११।३४.

* दर्शपूर्णमासप्रवृत्त्युत्तरं निर्वापात् प्राक् चन्द्रोदयेऽपि अभ्युदितेष्ट्यनुष्ठानम् । भा. ६।५।३।१२–१६.

**दर्शपूर्णमासयागस्य परेद्युरनुष्ठानेऽपि दिवैव अनुष्ठानम् ॥**

परेद्युरपि रात्रावेव यागः कार्यः । 'तस्मात् सहस्रीणां रात्रीणाममावास्यायां च पौर्णमास्यां च देवा इज्यन्ते' इति श्रुतौ रात्रीणामिति निर्धारणषष्ठ्या 'ब्राह्मणानां मध्ये यज्ञदत्तः सुरूपः' इति वाक्येन यज्ञदत्ते ब्राह्मणत्वस्येव पौर्णमास्यादेः रात्रित्वस्य अवगमात् । 'दर्शादृष्टेत्यनुवाके' पौर्णमासीदर्शपदयोः रात्रिनामस्वोक्तेश्च । इति प्राप्ते, दिवसे एव यागः कर्तव्यः 'प्रवर्यंजव्यम्' इति श्रुत्या 'पर्वणो यश्चतुर्थांश आद्याः प्रतिपदस्त्रयः । यागकालः स विज्ञेयः प्रातरुक्तो मनीषिभिः ॥' इति वृद्धशातातपविहितस्य 'उत्तरमहः' इति श्रुतेरुपसंहारात् । शुक्लप्रतिपद्वाचकस्य दर्शपदस्य इहानुपयोगाच्च । तत्प्रक्रमस्य रात्रावपि कदाचित् संभवाभिप्रायेण रात्रीणामिति श्रुतेरुपपत्तेः । रात्रिशब्दस्य 'द्वादशरात्रीर्दीक्षितो भृतिं वन्वीत' 'दशरात्रमाशौचम्' इत्यादौ अहोरात्रपरत्वदर्शनाच्च । यत्तु भाष्ये 'कुर्वाहे दैवानि कर्माणि' 'ते वा एते पूर्वे मेध्ये अहनी यजनीये उत्तरमहर्देवता यजते' इति श्रुतिषु अह्नामेव कीर्तनमिह हेतूकृतम् । तत्तत्प्रक्रमाभिप्रायेण अहोरात्रपरत्वेन न अन्यथासिद्धो रात्रिशब्द इति यतः सूत्रकृतो विरुद्धम् । अहःशब्देऽपि तदुभयसंभवात् । संकर्ष. ३।१।३.

* दर्शपूर्णमासविकारो हि शाकमेधीयः । भा. ३।५।२।११. * दर्शपूर्णमासविकाराणां पशूनां अग्नीषोमीयः पशुः प्रकृतिः प्राणिद्रव्यकत्वसामान्यात् । के. * दर्शपूर्णमासविकारेषु पवमानमन्त्राणामतिदेशः । संकर्ष. १।२।४.

* **दर्शपूर्णमासविकृतीनां** काम्येष्टिव्यतिरिक्तानां साङ्गानां चोदकप्राप्तमन्त्रादिस्वरत्रयम्, काम्येष्टीनां तु काम्यशब्दश्रव्ये प्रधाने 'यज्ञाथर्वणं वै' इत्यादिना विशेषवचनेन उपांशुत्वविधानात् अङ्गमात्रे स्वरत्रयमुक्तम् । सु. पृ. ११७८, * दर्शपूर्णमासविकृतिषु वर्णत्रयस्यापि सामिधेनीमात्रवत्त्वम् । वि. ६।६।७. * दर्शपूर्णमासविकृतिषु सौर्यादिषु आरम्भणीयायाः पुनरनुष्ठानम् । आरम्भणीयायाः इत्यत्राधिकरणम् । भा. १२।२।६।१९–२१.

* **दर्शपूर्णमासविध्यन्तः** अग्नीषोमीयपशौ प्राप्तः 'आग्नेयमष्टाकपालम्', 'अग्नीषोमीयं पशुम्' इति तत्तद्द्रव्यदेवत्वम् 'एकादश प्रयाजान् यजति' इति प्रयाजत्वम्, 'स्रुच्यमाघार्य' इत्याघारत्वम्, 'जुह्वा पशुमनक्ति' इत्यञ्जनम्, 'देवायाल्भते' इत्यालम्भः इति

लिङ्गेभ्यः पशोर्विकृतित्वसिद्धेः। वि. ८।१।९, ● दर्श-पूर्णमासविध्यन्तस्य सौर्ये अतिदेशः। ८।१।२.

● दर्शपूर्णमासशब्दो लोके कालवाचकः प्रसिद्धो न यागवाचकः। यजिसामानाधिकरण्यात् यागवचनो भवेत्। टुप् ९।१।१।१ पृ. १६२९. ● दर्शपूर्णमासशब्दौ कालवाचिनौ सन्तौ कालसंयोगेन विहितानामेव आग्नेयादीनां षण्णां यागानां नामधेयत्वं प्रतिपद्येते। वि. ४।४।११.

● दर्शपूर्णमासशब्दौ सूर्याचन्द्रमसोः संनिकर्ष-विप्रकर्षवचनौ ॥

यदा पौर्णमास्यमावास्या च अहन्येव तण्डा सती समाप्यते तदा तत्पूर्वेद्युरेव पर्वणोरहोरात्रव्यापित्वात् पौर्णमास्यमावास्याशब्दयोः अहोरात्रव्यापकालवाचित्वात् 'पौर्णमास्यां पौर्णमास्या यजेत' इत्यादिवचनेन तत्रैव दर्शपूर्णमासयोरनुष्ठानम्। इति प्राप्ते, सूर्याचन्द्रमसोः विप्रकर्षसंनिकर्षोभयस्यैव तत्तन्नामप्रवृत्तिनिमित्तत्वात् तस्य च परदिने एव लाभात् परेद्युरेवानुष्ठानम्। पूर्णो मासो यस्मिन्काले स पूर्णमासः, तत्पूर्तिश्च पौर्णमास्यन्त्यक्षणे। तदैव युगपत्तयोरतीव विप्रकर्षः। अमा सह समीपे वा वसतः तौ यस्मिन् काले, सा अमावास्या। तत्संनिकर्षो ऽपि तदन्त्यक्षणे यथातिशयित इत्यसंयुचितवृत्तिकयोः पदयोस्तत्रैव प्रवृत्तिः। तेन तत्संयोगादिति पद् यौगिक-रूपा तत्रैव प्रतीतेरित्येतत्परम्। 'सोमो यजेत' इति श्रुत्यन्तरे तस्यैव कालस्य विनियोगेन उपसंहारादिति वा अर्थः। 'विक्रमः संनिपातश्च पर्वकालः' इति शिष्टाः स्मरन्ति इति भाष्य न शिष्टाचारमूलत्वपरम्। अपितु अमावास्याऽऽदिपदनिर्वचनपरम्। तथैव निर्वचनस्य स्मृतिषु अपि उपलम्भात् इति भाव। तत्कर्षी. ३।१।१.

● दर्शपूर्णमासशब्दस्य यागवचनत्वात्। भा. ११।१।१।३.

● दर्शपूर्णमासप्रकृतिकत्वात्पञ्चयज्ञशब्दस्यानेक-कर्तृकविकृतौ ऊहः। भा ९।१।१४।४१.

● दर्शपूर्णमासहविषो विकार सुत्रामणे। औषधविकृति सुरा, सनाय्यविकृत वाजिनम्। भा. ८।२।१।९.

● दर्शशब्दस्य अप्रसिद्धार्थत्वात् पूर्णमासशब्दस्य येनचित् यागनाम्ना सारूप्याभावात् कथं यागविशेषे निवेश इत्याशङ्क्य आरम्भणीयाप्रकरणे 'दर्शो एतयोः पूर्वः, पूर्णमास उत्तरः, अथ यत् पूर्णमासं पूर्वमारभते तद् यथापूर्वं क्रियते तस्मात् पूर्णमासमारभमाणः सरस्वत्ये चरुं निर्वपेत्, सरस्वते द्वादशकपालम्, अमावास्या वै सरस्वती पूर्णमासः सरस्वान्, उभावेतौ यथापूर्वं कल्पयित्वा आरभते' इति अमावास्याख्ययागविशेषस्य दर्शव्यपदेशात् चन्द्रदर्शनात् अमावास्यायां तिथौ दर्शव्यपदेशात् (चन्द्रादर्शनाद्वा अमावास्यायां तिथौ विपरीतलक्षणया दर्शव्यपदेशात्) 'प्रतिपद्दर्शषष्ठीषु न कुर्याद्दन्तधावनम्' इत्यादौ च अमावास्यायां दर्शव्यपदेशात् प्रसिद्धार्थता। सु. पृ. ७२१, ● दर्शशब्दस्य विरुद्धलक्षणया दर्शनविपर्ययात् अदर्शनगमकत्वात् ततश्च अमावास्यातिथ्यभिव्यक्तिपरिचि. । पृ. ७२२.

● दर्शनं यदुपदिष्ट 'स तत्रस्य प्रत्येता' इति, न तद् दर्शनम्, किं तर्हि वचनं तत्। प्राप्तिपूर्वकं हि दर्शनं भवति। भा. १२।४।१४।४१, ● सर्वत्र नो दर्शनं प्रमाणम्। १।१।५।५ टु. ८८. ● दर्शनाद् विनियोगः स्यात्। (१।३।८।२७) स्वार्थैकप्रयोजनत्वे नैमित्तिकं वाक्यान्तरव्यवस्थापितस्य साधनत्वम्। दर्शनात् लोकविशेषवाच्युपपदानुमानेन कर्तृविशेषस्य विनियोग स्यात्। पृ. २५१. ● दर्शनादर्शनयोश्च दर्शनं प्रमाणम्। भा. १०।७।११।३६.

● दश घटाः कर्तव्या इतिवत् बन्धस्तिलमयक्रिया-ऽवच्छेदात् मुख्यशब्दस्यैव साध्य। सोम. ५।३।११. ● 'दश दाडिमानि षडपूपाः' इति अनुपपन्नार्थमपि हि लौकिक वचनं दृष्टम्। लोके चानुपपन्नार्थमेव किंचित् दृष्ट्वा वक्तुः तदभिप्रायं प्रष्टव्यम्। बृहती. पृ. १२२. ● 'दशभिः क्रीणाति' इति वचनस्य क्रयसमुच्चयपरत्वम्। भाट्ट ३।१।६.

● दशतयशब्देन शाकल्यसंहितायां 'दश' मण्डलानि उच्यन्ते। सु पृ ११२१.

𝕿 दशत्वं लिङ्गदर्शनात् । ३।७।१२।२७॥

ज्योतिष्टोमे चमसाध्वर्यवो बहवः इति प्रागुक्तम् । किमात्मकं तत् बहुत्वं इति विचारे, कपिञ्जलाधिकरणन्यायेन त्रित्वरूपं बहुत्वं इति उक्ते पूर्वपक्षे प्राप्ते सिद्धान्तमाह । उक्तं चमसाध्वर्यूणां बहुत्वं दशत्वं दशत्वरूपं ग्राह्यम् । कुतः ? लिङ्गदर्शनात् । ज्योतिष्टोमविकारे दशपेये 'दशदश एकैकं चमसमनुप्रसर्पन्ति' इति ब्रुवन् दश चमसाध्वर्यून् दर्शयति । स्वामिना ऋत्विजां दशत्वं च लिङ्गम् । होता, ब्रह्मा, उद्गाता, यजमानश्चेति चत्वारो भक्षणे कारिणः, प्रशास्ता, ब्राह्मणाच्छंसी, पोता नेष्टा, अच्छावाकः, आग्नीध्रश्चेति षट् होमकाः इति दशानां चमसाध्वर्यवोऽपि दश इति युक्तम् । तस्मात् चमसाध्वर्यवो दश ।

अत्र सुधा— एकस्यापि ग्राममुख्यस्य अनेकस्वाम्यन्वयाविरोधात् स्वामिदशत्वेऽपि त्रित्वनियमविरोधिनी चमसाध्वर्युदशता न युक्ता इत्याशङ्कायाम्, ग्राममुख्यस्यापि अन्योन्यानपेक्षानेकस्वामिसंबन्धायोगात्, इह च भक्षणे कारिणो होमकाश्च इति च बहुवचनावगतस्य साहित्यस्य उद्देश्यविशेषणत्वेन अविवक्षितत्वात् अन्योन्यानपेक्षस्वामिदशत्वावगतेः, तदन्यथाऽनुपपत्त्या अवगतेन दशत्वेन त्रित्वनियमस्य लिङ्गदर्शनद्योतितदशत्वापनयप्रयोजकस्य बाधितत्वात्, दशता अपनीयते इति तत्त्वम् । इति । के.

❀ दशपेयः ज्योतिष्टोमस्य विकृतिः । वि. ३।५।२०. ❀ दशपेयः राजसूये अभिषेचनीयोत्तर एकस्मिन्नेव अहनि । तत्रापि अभिषेचनीयस्य दशमेऽहनि दशपेयः संपद्यते । शाबर. सोमक्रयः अभिषेचनीयसोमक्रयकाले एव । अपकृतस्तु स्वकाले । नानयोस्तन्त्रम् । भा. ११।२।१४।५७–६२. ❀ दशपेय. प्रचारकालः । 'सद्यो दीक्षयन्ति' 'सद्यः सोमं क्रीणन्ति' । वि. ११।२।१४, ❀ दशपेय सोमयागविशेषो राजसूयान्तर्गतः । ४।४।१, ❀ दशपेयस्य संसृप्यदशोहविःष ऊर्ध्वमपराह्णे उत्क्रमः । ११।२।१४, ❀ दशपेयस्य सोमक्रयार्थोपसंवादमात्र अभिषेचनीयक्रयार्थोपसंवादेन सहैव । ११।२।१४,

❀ दशपेये एकैकश्चमसो दशभिर्दशभिः पीयते । 'दशदश एकैकं चमसमनुप्रसर्पन्ति' । ३।५।२०.

𝕿 दशपेये क्रयप्रतिकर्षात् प्रतिकर्षस्तत. प्राचां तत् समानं तन्त्रं स्यात् । ११।२।१४।५७॥

राजसूये पवित्रादयः सोमयागाः । तत्र द्वितीयः सोमः अभिषेचनीयः नाम, पञ्चमः सोमः दशपेयो नाम । अनयोः अभिषेचनीयदशपेययोर्मध्ये दशपेये यः क्रयः सोमक्रयः तस्य 'सह सोमं क्रीणाति अभिषेचनीयदशपेययोः' इतिवाक्येन अभिषेचनीयसोमक्रयकाले प्रतिकर्षो विहितः । तेन ततः क्रमात् प्राचां पुरस्तादङ्गानामपि प्रतिकर्षः स्यात् 'तदादि वाभिसंबन्धात्' (५।१।१२।२४) इति न्यायात् । तस्माच्च क्रयान्तानामङ्गानां प्रतिकर्षः तत् तस्मात् समानानामपि समानं तन्त्रं स्यात् । अभिषेचनीयदशपेययोः क्रयान्तानामङ्गानां तन्त्रत्वात् उत्तराङ्गानामपि तन्त्रं स्यात् इति क्रयान्तानां तन्त्रत्वे तु वचनविधानं हेतुः । इति पूर्वः पक्षः ।

समानवचनं तद्वत् । ५८ ॥

'समानो वा एष यज्ञो यद्दशपेयश्चाभिषेचनीयश्च' इति तयोः सोमयोः समानवचनं समानत्वबोधकं वचनं भवति । समानत्वं च अङ्गानां तन्त्रेणैव संभवति प्रधानानां भिन्नत्वात् । तस्मात् तन्त्रम् । इति पूर्वपक्षे हेत्वन्तरम् ।

अप्रतिकर्षो वाऽर्थहेतुत्वात् सहत्वं विधीयते । ५९ ॥

वाशब्दः पूर्वपक्षव्यावृत्त्यर्थः । अप्रतिकर्षः क्रयस्य प्रतिकर्षः, नापि क्रयान्तानामङ्गानाम् । सहत्वं क्रयसहत्वं तु अर्थहेतुत्वात् मूल्यनिश्चयार्थम् । नायं मुख्यः सोमक्रयः । मूल्यपरिच्छेदोऽयम् । मुख्यः क्रयस्तु दशपेयकाले एव भविष्यति । तस्मात् न अभिषेचनीयदशपेययोः समानं तन्त्रम् । इति सिद्धान्तः ।

पूर्वस्मिंश्चावभृथस्य दर्शनात् । ६० ॥

सिद्धान्ते हेत्वन्तरमाह । पूर्वस्मिन् अभिषेचनीये अवभृथस्य दर्शनात् अभिषेचनीयदशपेययोर्न तन्त्रम् । समानतन्त्रत्वे तु दशपेयान्ते एव एक एव अवभृथः स्यात् । 'समान वा एतद्यज्ञं विच्छिन्दन्ति यदभिषेच-

नीयस्याप्यूपममध्यवयन्ति ' इति अवभृथदर्शनम् । तस्मात् तन्त्रम् ।

दीक्षाणां चोत्तरस्य ॥ ६१ ॥

सिद्धान्ते हेत्वन्तरम् । अभिषेचनीयदीक्षाभ्यः पृथक् उत्तरस्य दशपेयस्य दीक्षाणां दर्शनात् तयोर्न तन्त्रम् । ' तथाऽभिषेचनीयस्य दीक्षा वर्धयेयुर्यथा दशमेऽहनि दशपेयः संपद्यते ' ' ततो दीक्षयति, ततः सोमं क्रीणाति ' इति ( अत्र सत्यापाढसूत्रं तु ' तथा दीक्षाः प्रवर्धयन्ति अभिषेचनीयस्य, यथा दशमे तिथे संवत्सरस्य दशपेयो भविष्यति ' इति ) तस्मात् तन्त्रम् ।

समानः कालसामान्यात् ॥ ६२ ॥

यत्तु ' समानवचनं तद्वत् ' इति ( सू० ५८ ) तत्राह । यस्मिन् संवत्सरे अभिषेचनीयः तस्मादुत्तरे संवत्सरे तस्मिन्नेव ऋतौ दशपेयः । तथा च काल-सामान्यात् ऋतुरूपस्य कालस्य सामान्यात् समानत्वात् अभिषेचनीयदशपेययोः ' समानो वा एष यज्ञः ' इत्यनेन समानत्वमुक्तम् । तस्मात् तन्त्रभेदः इति सिद्धान्तः । के.

* दशपेये राजसूयगते प्राकाशौ अध्वर्युमात्रस्यैव निवर्तेते, न तु ऋत्विजां ऋतुदाक्षिण्यवत् ( भाष्ये अश्वमेधे इत्युक्तम् ) । प्राकाशन्यायः । भा. १०।३।१७। ६३–६४.

* दशपेयाभिषेचनीययोर्भिन्नतन्त्रता राजसूये । अभिषेचनीयदशपेययोः इत्यधिकरणम् । भा. ११।२। १४।५७–६२.

■ दशपेयन्याय. । दशपेये यजमानचमसस्य दश ब्राह्मणा एव भक्षकाः, न राजन्याः ॥

अनुप्रसर्पिषु सामान्यात् । ३।५।२८।५२ ॥

भाष्यम्— अस्ति राजसूये दशपेयः । तत्र श्रूयते ' शतं ब्राह्मणाः सोमान् भक्षयन्ति, दशदश एकैकं चमस-मनुप्रसर्पन्ति ' इति । अत्र राजन्यचमसे संदेहः किं तं राजन्या अनुप्रसर्पेयुः उत ब्राह्मणा इति । किं प्राप्तम् ? राजन्या इति । कथम् ? दशदश एकैकं चमसमनुप्रसर्पेयुः इति अनुप्रसर्पतां संख्या विधीयते । एकस्यां राजन्य-जातौ दशसंख्या विधीयते । राजन्यजातिः सैव । तेन तं दश राजन्याः अनुप्रसर्पेयुः । एवं शतं ब्राह्मणा राजन्याश्च । तेषु ब्राह्मणशब्दोऽनुवादः । अनुवादस्वरूपश्च शतं भक्षय-न्तीति । तस्मात् राजन्या राजन्यचमसमनुप्रसर्पेयुरिति । केचिदाहुः, ' ब्राह्मणराजन्यानामेव हिंसकमसे भक्षणे विरुध्यते ' इति । न च दोषः, ' नहि सोमेनोच्छिष्टा भवन्ति ' इति श्रूयते ।

वा— दशपेये ( राजसूयगते सोमविशेषे ) ' शतं ब्राह्मणाः सोमान् भक्षयन्ति, दशदश एकैकं चमसमनु-प्रसर्पेयुः ' इति । तत्र राजन्यचमसोऽपि ( यजमान-चमसोऽपि इत्यर्थः ) किं ब्राह्मणैरेव दशभिर्भक्षयितव्यः, उत राजन्यैः इति संदेहः । कः पुनः संदेहहेतुः ? केचि-दाहुः, वचनव्यक्तिभेद इति । यदि हि ' दशदश एकै-कम् ' इति विधिः, ततः तुल्यजातीयेषु सर्वेषु विहितेषु ' शतं ब्राह्मणाः ' इति यथाप्राप्तानुवादः ब्राह्मणप्रायवत् भूम्ना भवति इति राजन्या दश । अथ पुनः ' शतं ब्राह्मणाः ' इति विधिः, ' दशदश एकैकम् ' इत्यनु-वादः, ततो विधौ गौणत्वासंभवाद् सर्वैव ब्राह्मणैरेव भक्षयितव्यम्, इति ब्राह्मणा दश । किं तावत् प्राप्तम् ? ' अनुप्रसर्पेयुः ' इत्यस्य विधिसामर्थ्यात्, ' भक्षयन्ति ' इति च अनुवादसामर्थ्यात् ' दशदश एकैकम् ' इति विधौ सति, ' के दश ' इत्यपेक्षायां तुल्यजातीयेषु संख्या-श्रुतिसामान्यात् ब्राह्मणचमसेषु ( ऋत्विक्चमसेषु ) ब्राह्मणाः, राजन्यचमसे राजन्या दश इति गम्यते । ' सामान्यात् ' इति च ( सूत्रे ) दशसंख्या चोदयित्वा निवृत्तव्यापारे शास्त्रे, तत्पूरणार्थं अभूतासु व्यक्तिषु उपादीयमानासु यासां किंचित् प्रत्यायकमस्ति, ता ग्रहीतव्याः । तुल्यजातीयानां च सामान्यं गमकं विद्यते, न जात्यन्तरानुगतानाम् । अथवा सामान्यात् इति नियमसामान्यात् । ' अर्थैकत्वे द्रव्यगुणयोः ' इति हि फलचमसं प्रति उपादीयमानयोः अनियतदशत्वयोः परस्परनियमे सति, नावति विषये दशत्वं तावति राजन्यत्वं इत्यवगम्यते, इति बलात् दश राजन्या विज्ञायन्ते । अथवा सामान्यात् इति तुल्यकार्यं तुल्यजातीयं च तुल्यस्य बाधकं भवति । तत् यदि राजसूयचोदनातो राजन्यत्वं प्राप्तं प्रकृतितश्चैकत्वम् । तत्र दशत्वं विधीयमानं सामान्यात् आतिदेशिकमेव एकत्वं बाधते, न जातिम्,

गित्वकार्यत्वात् । ततश्च अनिवृत्तजातिरेव यजमानचमसो दशत्वेन योजयितव्यः इति दश राजन्या भवन्ति । ननु च दशत्वे विधीयमाने यत् एकैकं चमसमनु प्रसर्पन्ति, इति विशिष्टानुवादात् वाक्यं भिद्यते । नैष दोषः । 'चमसम्' इति द्वितीयान्तं केवलमनूद्यते, तावता तु संस्कार्यत्वं गम्यते । न च चमसानां भक्षणं मुक्त्वा अन्यः संस्कारः । तेन स एव अनुप्रसर्पणशब्देन लक्ष्यते । तत्र च प्रत्येकमेव भक्षणं प्राप्तम्, इति तदपि अनूद्यते । तस्मात् न वाक्यभेदः ।

ब्राह्मणा वा, तुल्यशब्दत्वात् ॥ ५१ ॥

भाष्यम्— ब्राह्मणा वा राजन्यचमसमनुप्रसर्पेयुः । कथम् ? 'शतं ब्राह्मणाः सोमान् भक्षयन्ति' इति विधिः श्रुत्वा ब्राह्मणशतमेव संख्यामाह । तस्मात् शतं ब्राह्मणाः । तेषां भक्षणार्थमनुप्रसर्पतां एकैकस्मिँश्चमसे दशदश उपविश्यन्ते । तस्मात् ब्राह्मणशतस्य (मध्ये) दश ब्राह्मणाः राजन्यचमसमनुप्रसर्पेयुरिति ।

वा— न वा राजन्या भक्षयेयुः । कुतः ? 'शत-ब्राह्मणसंयुक्तो विधिरत्रावगम्यते । अन्यथा तदुपादानं गौणं व्यर्थं च ते भवेत् ॥' इत्येतेन ब्राह्मणशब्देन सर्वचमसेषु ब्राह्मणाः प्रतिपाद्यन्ते । तेन कुतश्चिदपि व्यावर्तयितव्याः । न च गौणत्वकारणं किञ्चिदस्ति । प्रमाणान्तरेण विपरराजन्यानुपादानात् । समस्तमेव नैतत्, अनर्थकं पुनःश्रवणं भवेत् । अस्मत्पक्षे पुनः प्रयोगवचनादिभ्यो विधिवाक्यमनुमाय ब्राह्मणशते सिद्धे 'दशदशमेकैकम्' इति विभागार्था पुनःश्रुतिः । अथवा 'समं स्यादश्रुतत्वात्' इति न्यायेन दशवत्ता प्राप्ताः श्रुत्यैव स्तुत्या अनुवदिष्यन्ते । ब्राह्मणशतेन च दशदशकैः अवच्छिन्नेन दशस्वपि चमसेषु अवरुद्धेषु न कश्चित् राजन्यानामवकाशो विद्यते । तस्मात् ब्राह्मणा दश (राजन्यचमसं भक्षयेयुः) इति ।

न तु इयं व्याख्या घटते । यदि हि 'शतं ब्राह्मणाः' इत्येष विधिः स्यात्, ततः अतिदेशप्राप्तभक्षानुवादात् विशिष्टविधानासंभवेन अन्यपरत्वे विधीयमाने, यदि शतं विधीयते, (तदा) 'ब्राह्मणाः' इत्यनर्थकम्, सिद्धान्तहानिश्च । ब्राह्मणविधौ तु 'शतं' इत्यनर्थकम् । अथ 'यत् शतं भक्षयन्ति' इत्यनूद्य ब्राह्मणा विधीयन्ते (तदा), केन शतं प्राप्तं इति वक्तव्यम् । अथ 'यत् ब्राह्मणा भक्षयन्ति' इत्यनूद्य शतं विधीयते, ततो राजन्याद्यावृत्त्या ब्राह्मणश्रुतेः विशेषणत्वात् विशिष्टानुवादात् वाक्यभेदः, राजन्यचमसे न च किञ्चित् कृतं स्यात् । तत्र 'एकैकम्' इत्यस्य राजन्यचमसे अनुपादानसंभवात् तत्रान्ये राजन्या दश विधीयेरन् इतरत्र च ब्राह्मणशतं नवसु चमसेषु, न विद्मः केन विभागेन स्यादिति । अथ सोमसंबन्धात् 'ब्राह्मणाः' इति प्राप्तानुवादः कल्प्यते, तथापि फलचमसव्यावृत्त्या विशिष्टानुवादो दोषोऽन्येन, फलचमसे च पुनरपि न कश्चित् व्यापारः, इति पूर्ववदेव प्रसङ्गः । न च सोमशब्दब्राह्मणशब्दयोः अर्थान्तरेऽपि फलचमसे राजन्ये वा प्रयोगः इति किञ्चित् प्रमाणम् ।

अविशेषितभक्षानुवादे पशुपुरोडाशादिभक्षेष्वपि शत प्रसङ्गः, नहि असौ प्रधानेन विशेष्यते, 'सर्वेषां वा शेषत्वस्याप्रयुक्तत्वात्' इत्येव अङ्गप्रधानार्थत्वप्रतीतेः, सोमशब्दश्च अत्यन्तमेव अनर्थकः स्यात् । अथ 'सोमान्' इत्येतावन्मात्रमनूद्य शतं विधीयते, ततः क्रयादारभ्य सर्वान् सोमसंस्कारान्, स सर्वैः शतेन कर्तव्यः, तत्र भक्षपतिरनर्थक एव स्यात् । अथ भक्षयन्तौ शतब्राह्मणसंबन्धो विधीयते, तथा पुरोडाशादिष्वपि प्रसङ्गात् सोमशब्दानर्थक्यं अस्त्येव । सोमे तु ब्राह्मणशतसंबन्धविधानं अक्रियाशब्दत्वादेव अशक्यम् । पुनरपि फलचमसे त्रिभीरूपत्वेन (त्रिभीनाम न्यग्रोधफलगुच्छः) असोमे राजन्यप्राप्तिः नैव वार्यते । तेन एतद्वाक्यमनुपपन्नम् । तथा 'दशदश एकैकम्' इत्यस्यापि अनुपपत्तिविधित्वेः स्वतन्त्रविधित्वावधारितस्य अनुवादस्य निष्फलं अप्रमाणकत्वं च । कथं हि पूर्वेण वर्तमानापदेशः सन् विधिः स्यात्, अयं चानुवादः ? न च निमित्तत्वादिभिर्विना अनेकाख्यातैकवाक्यत्वं घटते । न च यदिशब्दादिरहितस्य निमित्तत्वादिप्रतीतिरस्ति । न च 'दशदश एकैकम्' इत्यत्र क्वचित् स्तुतिः प्रतीयते, येन तदर्थः अनुवादः, एकवाक्यत्वं चोपपद्येत । तस्मात् पृथग्भूतस्य वाक्यस्य समस्तानुवादत्वमयुक्तम्, इति निश्चितं विभावनीयम् ।

त ॥, आद्यो भानात् सोमयागैकत्वादेः, विप्राः शतं दश । चमसानन्तुर्विशुक्रस्य राजपानं च विमतम् ॥'

भाट्ट—राजसूये दशपेयो नाम सोमयागविकारो राजकर्तृकः । अतिदेशतो दशसु चमसेषु प्राप्तेषु यजमानचमसे राज्ञो भक्षणम् । तत्र अपर 'शतं ब्राह्मणाः सोमान् भक्षयन्ति' 'दशादशैकैकं चमसमनुप्रसर्पेयुः' इति वचनद्वयं श्रुतम् । तत्र न तावत् 'शतं ब्राह्मणाः' इति विधिः 'दशादश' इत्यनुवादः, भक्षानुवादेन गुणद्वयविधाने वाक्यभेदात्, एकैकस्मिन् भक्षे शतब्राह्मणप्राप्त्यापत्तौ दशादश इत्यस्य प्राप्त्यभावाच्च । अतो दशादशेत्येव लिङ्श्रवणात् विधिः । कोऽपि च न चमसोद्देशेन, दशत्वस्य प्राप्तत्वात् । नापि तदुद्देशेन भक्षाभिषवकर्तृविधिः, चमसोमयनादिक्रियाऽन्तरस्यापि आश्रयत्वप्रसङ्गेन भक्षस्यैव आश्रयत्वे प्रमाणाभावात्, याज्ञिकाचारसिद्धसमाख्याभक्षस्यैव नियमेन उपस्थित्यभावेन वषट्कारनिमित्तस्यापि आश्रयत्वापत्तेश्च, 'चमसम्' इति द्वितीयायाः अनुप्रसर्पयोगनिमित्तत्वेन प्रतियोगित्वपरतया तस्य उद्देश्यत्वोपस्थापकत्वाभावाच्च । नापि चमसानुप्रसर्पणोद्देशेन दशकर्तृविधिः विशिष्टोद्देशे वाक्यभेदात्, चमस प्रतियोगिकर्त्विक्कर्तृकानुप्रसर्पणस्य अप्राप्तत्वाच्च, 'प्रयाजेभ्यस्तत्' इतिवत् सर्वचमसेषु एकस्यैव दशकस्य प्रसक्त्यापत्तेश्च । चमसेषु एकैकत्वविशेषणे पुनः विशिष्टोद्देश. । दशादश इति वीप्सार्थविधाने वाक्यभेदः, प्रतिचमस विशिष्टापत्तिश्च । अतो दशकर्तृविशिष्ट प्रत्येकचमसप्रतियोगिक अनुप्रसर्पणमेव अत्र विधीयते । तथोश्च पार्ष्णित्वये एकैकस्मिन् चमसे दशादश कर्तारो भवन्तीति वीप्सानुवाद. । अनुप्रसर्पणस्य च प्रयोजनापेक्षाया वैमृध न्यायेन चमसपदान्तर्गतचमिधात्वभिप्रायमभिप्रेत्य निमित्त भक्षस्यैव सन्निधानोपस्थितत्वात् तद्वाचकपदान्तरकल्पनया प्रयोजनत्वम् । ततश्च समाख्यानिमित्तभक्षार्थं प्रतिचमस दशानामनुप्रसर्पणे चमसानां दशत्वात् शतसंख्याप्राप्तेः शतवाक्यमनुवादो विधेयदशत्वस्तुत्यर्थः, न तु ब्राह्मणत्व विधायक., वाक्यभेदापत्तेः । अतो ब्राह्मणग्रहणं सोमपदवदेव गुणा गौणमिति यजमानचमसे राजत्वजातेरेव श्रवणमात्रत्वात् राजन्या दश भक्षयेयुः । इति प्राप्ते, ब्राह्मणत्वस्य सर्वचमसेषु प्राप्त्यभावेन 'उपरि हि देवेभ्यो धारयन्ति' इतिवत् विधेयत्वोपपत्तेः गौणत्वे प्रमाणाभावात् ब्राह्मणत्वमेवेह चमसोद्देशेन विधीयते । 'सोमान् भक्षयन्ति' इत्यनुवादमात्रम् । वस्तुतस्तु भक्षयतिना पूर्ववाक्ये समाख्याभक्षस्य उद्देश्यत्वेन उपस्थितस्यैव उपादानात् तदुद्देशेनैव ब्राह्मणत्वविधानमिति दशत्वेन एकवाक्यत्वम् ब्राह्मणत्वेन राजन्यबाध., इति यजमानचमसेऽपि ब्राह्मणा एव फलचमसं दश भक्षयेयुः । न च 'स यदि सोमम्' इत्यनेन राजकर्तृकयागस्य निमित्तत्वावगतेः कथं तदभावे फलचमस इति वाच्यम् । निमित्तत्वद्वयाङ्गीकारे वाक्यभेदापत्तेः आद्येनैव यदिशब्देन यागकर्तृकराजकर्तृकत्वस्य निमित्तत्वप्रतिपादनात् । अयं तु यदिशब्दो नि.सन्दिग्धस्वार्थकोऽनुवाद इत्युक्तम् ।

मण्डन—'सोमपा ब्राह्मणाः शतम् ।'

शंकर—'ब्राह्मणा दश भक्षेयुः ।' दशपेये यजमानचमसम् ।

* दशममहः द्वादशाहे । 'एष वै दशमस्याह्नो विसर्गो यन्मानसम्' इति । नात्र पत्नीसंयाजान्तता किंतु मानसान्तत्वम् । दशमेऽहनि मानसाय प्रसर्पन्ति । दशमेऽहनि सार्पराज्ञीभिर्ऋग्भिः स्तुवन्ति । भा. १०।६।१३।३९-४०. * दशमस्य अह्नो द्वादशाहगतस्य समाप्त मानसपदेष वाचनिकम् । वि. ९।१।९. * दशमस्य अह्नो मानसमन्तम्, स्वस्त्र द्वादशाहे । भा. १०।६।१३।२४-४४.

* दशमे अध्याये चोदकप्राप्तानां प्रत्यक्षविहितानां च पदार्थानामियत्ता चिन्तिता । एकादशे तन्त्रावापविशेषश्चिन्त्यते । दशमेऽध्याये बाधाभ्युच्चयौ वृत्तौ । टुप्. ११।१।१।१. * दशमेऽध्याये प्रसङ्गाद, तृतीये तु प्रासङ्गिक. । के. * दशमेऽध्याये बाध उच्यते । वि. १०।१ प्रास्तावश्लोके. * दशमेऽध्याये बाधाभ्युच्चयानुनिष्पादिनी शेषियचिन्ता । टुप्. ७।१।१।१. * दशमे ऽहनि द्वादशाहगते ऐन्द्रवायवाग्रत्वम् । वि. १०।५।२३.

* दशमाध्यायार्थः । 'द्वारलोपोऽस्य विस्तारः कार्यैकत्व समुच्चयः । ग्रहसामप्रकीर्णानि नवर्थेऽष्टपादगाः ॥' प्रथमे पादे कार्यहेतुर्द्वारलोपो निरूपितः । यथा 'स्वयं-

कृता वेदिर्भवति' इत्यत्र वेदिनिष्पादनरूपस्य द्वारस्य लोपेन निष्पादनानामुद्धननादीनां बाधः। कृष्णलेषु वितुषीकरणरूपस्य द्वारस्य लोपेन अवघातस्य बाधः। द्वितीये पादे संक्षेपेणोक्तस्य द्वारलोपस्य बहुभिरुदाहरणैर्विस्तारः। तृतीये बाधकारणं कार्यैकत्वम्। तद्यथा प्रकृतौ गवाश्वादिदक्षिणायाः ऋत्विक्परिक्रयः कार्यम्। तथा विकृतिरूपे भूनाम्नि एकाहे धेनुरूपायाः दक्षिणायाः तदेव कार्यम्। ततो धेन्वा गवाश्वादिदक्षिणा विकृतौ चोदकप्राप्ता बाध्यते। चतुर्थे नक्षत्रेष्टिविहिता उपहोमाः चोदकप्राप्तैर्नारिष्टहोमैः सह समुच्चीयन्ते इत्यादिः समुच्चयः। पञ्चमे षोडशिग्रहः प्रकृतिगामी। स च आग्रयणग्रहादेव ग्रहीतव्य इत्यादिः बाधप्रसङ्गागतो ग्रहादिविचारः। षष्ठे 'साम तृचे गेयम्' इत्यादिर्बाधप्रसङ्गागतः सामविचारः। सप्तमे पशुयागेषु प्रत्यङ्गं हविर्भेदः, न कृत्स्नः पशुः हविः। अष्टमेष्टीयमपूर्वं कर्म इत्यादिः बाधप्रसङ्गागतः प्रकीर्णविचारः। अष्टमे 'नानुयाजेषु' इति पर्युदासः, 'न सोमे' इत्यर्थवादः, 'नातिरात्रे' इति प्रतिषेधः इत्यादिः बाधोपयुक्तो नञर्थविचारः। वि. प्रस्तावना. श्लोकः २१.

* दशमाध्यायार्थविचार ((न्यायरत्नमालास.))। दशमे बाधाभ्युच्चयद्वारेण विकृतिषु पदार्थेयत्ता चिन्त्यते। कथं पुनः वचनप्राप्तस्य बाधः अभ्युच्चीयते? यथा चैतत् तथा वक्ष्यामः। प्रथमं तावत् इदं तत्सिद्ध्यर्थं चिन्त्यते किं प्राकृतपदार्थाः अपरित्यक्तोपकाराः स्वरूपेणैव विकृतौ अतिदिश्यन्ते 'सौर्येण कुर्यात्', कथम्? आग्नेयस्य स्वकार्यसाधने यः प्रकारः, स सौर्येऽपि स्यात् इति अतिदिश्यते। ततः तत्सिद्ध्युपायत्वेन अवान्तरापूर्वाणि प्रयाजादिजन्यानि प्रोक्षणजन्यं चाद्दष्टं व्रीहिद्रव्योपकारघातादिजन्यं च नियमादृष्टमित्थ्यिदं सर्वं अतिदिश्यते। तत तत्साधनभूताः पदार्थाः, तेषां च तथाविधानामेव प्रतीयमानया वचनानि अतिदिश्यन्ते इति।

तत्र पूर्वपक्षः। प्रकृतिवत् सर्वमेव अङ्गकाण्डं विकृतावपि कारयत्येषो भवति, तेन तेषु सर्वेषु विहितेषु प्रकृतिवत् यथासंभवं दृष्टमदृष्टं वा प्रयोजनं कल्प्यते इति नास्ति बाधः। यद्यपि न साक्षादतिदेशः, तथापि पदार्थाः एवातिदिश्यन्ते नोपकारः। प्रकृतौ उपकारस्य पदार्थपूर्वकत्वात् विकृतावपि तत्पूर्वकैव तस्य प्रतीतिः। तत्र प्रथमप्रतिपन्नपदार्थातिक्रमेण न युक्तं जघन्यप्रतिपन्न उपकारः अतिदिश्यते इति। तस्मात् पदार्थानामेव कार्यनिरपेक्षाणामतिदिष्टानां दृष्टेन दृष्टादृष्टप्रयोजनकल्पनात् नास्ति बाधः। इति प्राप्ते, अभिधीयते 'प्रकारस्यातिदेशः स्यात् पूर्वं यस्मादपेक्षितः। ततोऽवान्तरकार्याणामङ्गानां वचसां क्रमात् ॥' १ ॥ यद्यपि प्रकृतावुपकारः शास्त्रपदार्थपूर्वक एव, तथापि विकृतौ अतिदेशावस्थायां सर्वेषां शास्त्रपदार्थकार्याणां कल्पनाविशेषेऽपि कथंभावापेक्षा विकृतिभावनाप्रकारेणैव प्रथमं स्वीकरोति। नहि तस्याः शास्त्राणि पदार्था वा स्वरूपेणापेक्षिताः, किन्तु प्रकारः प्राकृतः। स एव तावदङ्गीक्रियते। स च पदार्थविशिष्टावान्तरकार्यविशिष्टः सन् विशेषणानि च अर्थात् प्रापयति। तेन तत्सिद्ध्यर्थं अवान्तरकार्याणि, तदर्थं चाङ्गानि, तत्र शास्त्राणि। यद्यपि प्रथमागताः (प्रथमागताः) पदार्थाः तथैव आलोचयितव्याः, तथापि अनपेक्षितत्वात् पदार्थान् उपेक्ष्य प्रकारमेव विकृतिर्गृह्णाति। तस्मात् तत्पुरःसर एव अतिदेशः, तदतिदेशेन च अर्थात् प्राप्यमाणेषु पदार्थेषु मीमांसा प्रत्यक्षश्रुतद्व्यलक्षणे निवृत्तिः, वितुषीकरणस्य च तेषु अभावात् निवृत्तिः, तन्निवृत्तौ च तद्द्वारस्य अवघातस्य निवृत्तिः, इति तदतिरिक्तविशेषणयुक्तस्यैव उपकारस्यातिदेशः इति। 'प्रकृतस्योपकारस्य विकृतावुपदेशतः। अन्वयं कश्चिदाचष्टे पितृयज्ञे नियोज्यवत् ॥' २ ॥ उपदेशो हि ग्रन्थसंदर्भः स च अर्थान्वयान्वित विषयं कार्यतया (कर्मतया) प्रतिपादयति। स शास्त्र तत्प्रभूत एव औपदेशिकः। तेनापि यत् अपूर्वस्य आक्षिप्यते, तदपि औपदेशिकमेव, यथा पिण्डपितृयज्ञे नियोज्यः। यथा च प्रकृतौ उपकारः, तेन विकृतावपि विध्यर्थकल्पितस्य उपकारस्य भवति औपदेशिकत्वम्, इति कश्चित्। तन्न युक्तम्, 'उपकारकभेदात् स्यादुपकारविशेषधीः। पूर्वमेव त्वपेक्षा स्यात् पदार्थेष्वपि सा समा ॥' ३ ॥ उपकारकपदार्थविशेषाधीनसिद्धिः उपकारविशेषः न अवधारितेषु तेषु विशिष्टरूपेण निरूपयितुं शक्यते। यत्किञ्चिद्धि येऽपि

उपकारविशेषेण इति अपेक्षामात्रेण प्रथमं सिध्यति । तच्च पदार्थेऽपि भवितव्यं उपकारजनकैः पदार्थभेदैः । इत्यपेक्षासंभवात् तुल्यमेव । अतोऽत्रोच्यते न विधिः विशेषरूपेण पदार्थान् आक्षेप्तुं प्रभवतीति वाक्यान्तरादिभिः अतिदेशेन वा यागदानादिपदार्थभेदसमर्पणं अपेक्ष्यते, उपकारं तु विशेषरूपेणैव आक्षिपति । अयमेव हि तस्य विशेषाक्षेपः, यदस्ति कश्चिद् उपकार इति । नहि असौ पदार्थवत् 'अयमसौ' इति निरूप्यते, तद्विधिना कल्पितोऽसौ औपदेशिक इति । तथापि कथं प्राकृतस्य उपकारविशेषस्य औपदेशिकत्वम्, तस्य हि नान्तरेण चोदकं विधिः आक्षेपाय प्रभवति । सत्यम्, तथापि उपकारविशेषकल्पनायां ईशानोऽपि लाघवात् प्राकृतं गृह्णाति, तेन विध्याक्षेपस्यापि विशेषस्य नियमार्थं चोदकादिति ।

अत्राह । ननु च एवं सति पदार्थानामवघातादीनां द्रव्यगुणादीनां च विधित एव अनियमेन आक्षेपसंभवात् अतिदेशेन च नियमनाशालाभात् व्रीह्यादीनामपि विकृतौ उपदेशादेव संगतिः प्रसज्येत । अथ 'विधिना यत् साक्षादाक्षिप्यते, तत् औपदेशिकं यथा चोपकारः । नियमार्थं तु यत् पश्चादाक्षिप्यते द्रव्यादि, न तत् औपदेशिकम्' इति परिभाष्यते, तथा सति विश्वजिदादावपि स्वर्गफलसाधनत्वं नौपदेशिकं स्यात्, विधिपरिकल्पितविशिष्टनियोगसंबन्धकाक्षितत्वात् । तस्मात् नोपकारस्य उपदेशः, सर्वेष्वेव तु पदार्थेषु उपकारस्यातिदेश एव प्रमाणम् । तद्वाचो हि अतिदेशः । तेन यत् साक्षात् प्रमाणेन वा प्राप्यते, तत् आतिदेशिकम् । तन्निरपेक्षमेव तु ग्रन्थसंदर्भमात्रेण अर्थवत्त्वा प्रतीतं औपदेशिकम्, इति विवेकः ।

यद्यपि उच्यते उपदिष्टस्यापि उपकारस्य अन्यदीयस्य अन्यत्रातिदेशात् अतिदिष्टत्वमपि अस्ति, तेन उपदेशातिदेशयोः एकत्रैव युगपत्संभवात् नैतौ प्रतिपक्षभूतौ शब्दप्रमाणभेदौ । अत एव नोपदेशातिदेशाश्रितौ षट्कौ, किन्तु उपदेशकार्यान्वितौ, कार्यमिति च पदार्थजन्यस्य उपकारस्याभिधानम्, न नियोगस्य । अत एव उपकारानभिधानो विध्याक्षेपः पूर्वषट्के चिन्तितः, विध्याक्षेप्यत्वात् अवघातादीनाम् । तन्त्रावापादि तु प्रकृतावपि उपकारयोगं इत्युत्तरषट्के निरूपितम्, अन्यथा अतिदेशविषयत्वे सति प्रयाजादीनां आग्नेयादिषु तन्त्रेण आवृत्त्या वा अनुष्ठानम्, इत्यादिविचारो नात्र संबध्येत । तस्मात् नोपदेशातिदेशाश्रितं षट्कद्वयम्, अपितु उपदेशकार्याश्रितमिति । तदपि उपकारस्य उक्तेन न्यायेन औपदेशिकत्वासंभवात् निरस्तम् । तथाहि, उपदेशातिदेशावेव प्रमाणे, तदाश्रितं च षट्कद्वयं भवति । तथा सति कथं उपदिष्टार्थविषया तन्त्रावापादिचिन्ता । अन्यथा वा कथं सप्तमाष्टमयोः वचननामधेयचोदनालिङ्गैः उपकारस्य उपदेशाप्रमेयस्य चिन्ता । सा हि विध्याक्षेपविषयत्वात् चातुर्थिकी स्यात् प्रयोजनप्राप्तिसिद्धयर्थे इति ब्रूमः । नहि अकल्प्य उपकारस्य प्राप्तौ तद्द्वारेण पदार्थाः प्रापयितुं शक्यते । तेन उपोद्घातः तद्विचारः पौनरुक्त्यनिराकरणवदिति । असत्पक्षेऽपि प्रासङ्गिकः तन्त्रावापादिविचारः । दशमे हि पदार्थप्राप्तौ निरूपितायां परिमाणप्रसङ्गेन तन्त्रावापप्रसङ्गाः प्रयोगपरिमाणरूपाः चिन्त्यन्ते । उपदिष्टातिदिष्टपदार्थसाधारण्यात् उभयोरन्तरात्मैव तन्त्रावापारम्भः । यद्यपि प्रयोगविशेषविचारात्मकत्वात् चतुर्थपञ्चमयोरपि आरम्भसंभवः, तथापि परिमाणविचारात्मकत्वात् अत्रापि आरम्भः संभवति, इति पर्यनुयोगाविरोधात् अत्रापि आरम्भः । यथा भवन्मते कार्यपदार्थयोः उपदेशकार्यप्रमेयत्वात् उभयविचारात्मकयोः सप्तमाष्टमयोः अन्यतराशेन चतुर्थोत्तरषट्कान्तर्भावात् अन्यतरप्रारम्भे कर्तव्ये सति अविशेषात् उत्तरषट्क एवारम्भः, तथा अस्माकमपि तन्त्रादेः इति न दोषः । यच्च उपकारप्राप्तेः पश्चात् पदार्थाङ्गीकरणम्, तदपि व्यर्थम्, विशिष्टोपकारप्राप्त्यैव अर्थात् पदार्थप्राप्तेः । न चेह सामान्यशास्त्रात् परतः विशेषशास्त्राणि कल्प्यन्ते सर्वपदार्थसाधारणोपकारशास्त्रतः पश्चात् न पदार्थविशेषाणां शास्त्राणि संभवन्तीति । यत् सिद्धं कार्यद्वारेण पदार्थानां प्राप्तौ कार्याभावे बाध इति । एवं च यत् वचनप्राप्तस्य बाधो न युक्त इति, तत् परिहृतम्, वचनस्यैव कार्यद्वारेण पदार्थान् प्रापयतः तदभावे प्रापकत्वाभावात् । एतादृशं हि वचनं 'यथा आग्नेय उपकृतः, तथा सौर्योऽपि' इति । किं तत् येनोपकर्तव्यम्, समिदाद्यवान्तरकर्मम् । तदपि वेदेन समिदादिभिः

 दशमाध्यायार्थविचारः

यथाप्रकृत्येव जनयितव्यमिति । एवं च सामान्यतः प्राप्तिमवगम्य तदनन्तरं पदार्थान् स्वरूपेण आलोचयति 'अनेन कथमुपकृतं अनेन कथमुपकृतम्' इति । तत्र अवघातस्य दृष्टप्रयोजनद्वारेण उपकारकत्वं प्रकृतौ आलोच्य कृष्णलेषु तथाभावासंभवात् पूर्वसंजातस्य सामान्यज्ञानस्य बाधं मन्यते । एवं प्रत्याम्नानेऽपि कार्यद्वारेण पदार्थेषु प्राप्यमाणेषु बर्हिःकार्ये इविरासादने पूर्वं प्राप्ते. तत्साधनापेक्षायां यावत् चोदकेन कुशा न प्राप्यन्ते, तावदेव प्रत्यक्षेण वाक्येन तदुद्देशेन शराणां विधानात् कुशबाधः । तथा प्रतिषेधे सामान्यतस्य चोदकस्य विषयविरोधात् उपकल्पने 'नार्षेयं वृणीते' इति । तस्मात् लुप्तार्थ-प्रत्याम्नान-प्रतिषिद्धार्थेभ्यः सर्वत्र अन्यत्रेषु चोदको व्यवस्थाप्यते इति सिद्धो बाधः । 'लुप्तार्थस्यापि इत्यादेः कृष्णलादिषु योजना । अपि नास्ति त्वनुष्ठानमिति केचिदाचक्षते ॥ ४ ॥ प्राप्तबाधस्य सिद्धार्थमन्यथा तन्न सिध्यति । प्राप्तौ निरायेमाणाया श्रुतिलिङ्गादिवदन्वयेन ॥' ५ ॥ वार्तिके हि अप्राप्तबाध, प्राप्तिबाधस्तु प्राप्तबाध इति स्थितिः । तत्र यदि चोदक एव कुशार्थाना नाश्रीयते, ततो इत्यादीनां प्राप्त्यभावात् प्राप्तबाधवचोयुक्तिरयुक्ता स्यात् । श्रुतिलिङ्गादिवत् अप्राप्तबाध एव स्यात् । तस्माच्चोदकेन सर्वमेव प्राकृतमङ्गजातं प्राप्यते । सत्यामेव तु प्राप्तौ कृष्णलादिषु इत्यादेः प्रयोजनाभावात् अननुष्ठानलक्षणो बाधो भवति । तथा 'शरमयं बर्हिः' इत्यत्रापि चोदकप्राप्ताबाधितानां कुशानां प्रत्यक्षवाक्यगतशरैः नैराकाङ्क्ष्येण प्रयोगवचनेन अनुपसंग्रहात् तल्लक्षण एव बाधः । तथा 'नार्षेयं वृणीते' इत्यत्रापि प्रतिषेधेनैव प्रयोगविध्यसंग्रहात् वरणस्य प्राप्तस्यापि अप्रयोज्यत्वात् अननुष्ठानम् । तस्मात् कुतश्चिदपि चोदको निवर्तते इति सर्वमेव तेन प्रापितमपि प्रयोगविध्यसंग्रहणात् बाध्यते इत्युच्यते । युक्तं चैतत् । नहि प्रतिस्वं पदार्थानां चोदकोऽस्ति, यत् एकवर्जं इतरत् प्राप्यते । उपकारमुखेन हि प्राकृतं पदार्थजातं प्रति सर्वमेव तस्मिन् आकृष्यमाणे समाकृष्यते, तदनाकर्षणे न किञ्चिदपि । तदुक्तम् 'तदर्थे तु वचनप्राप्तेः' ( ३।६।१।३ वार्तिके 'प्राप्ते' इति वा पाठ ' इत्युक्तं ) 'चोदनार्थकार्त्स्न्यात्' ( ३।६।१।८ ) इति । किमिदानीं प्रमत्तगीतमिदं भाष्यम् 'नास्ति कुशार्थानां चोदकवचनम्' इति ( १०।१।१।२ सूत्रे । आनन्दाश्रमीये तु मूले 'नास्ति कुशार्थस्य देशकं वचनम्' इति पाठः ) । 'तस्मात् तुषापाकरणप्रयोजनं चोदकश्चोदयति' इति च ( द्वितीयसूत्रान्ते । परन्तु न-शब्दः आनन्दाश्रमीये 'प्रयोजनं न' इत्यत्र पठितः ) । तथा 'बाधो नाम यत् एवमिदं इति विज्ञानं निश्चितं कारणान्तरेण मिथ्येति विज्ञायते' इति च ( आनन्दाश्रमीये तु 'बाधो नाम यदेव इदमिति निश्चितं विज्ञानं कारणान्तरेण मिथ्येति कल्प्यते' इति पाठः, प्रथमसूत्रे आदौ ) । नेति ब्रूमः । मिथ्यात्वं तावत् अनुष्ठानाभिप्रायम् । व्यवहारविसंवादादेव हि सर्वसंविदां मिथ्यात्वम्, न तु अयथार्थत्वात् । नहि अयथार्थं नाम संवेदनं संभवति इत्युक्तम् । 'यत् प्रत्यक्षम्, न तद् व्यभिचरति । यत् व्यभिचरति, न तत् प्रत्यक्षम्' इत्यत्र ( भाष्ये १।१।५ वृत्तिग्रन्थे पृ ९६ ), शुक्तिकारजतादिषु अग्रहणाभिधानात् । तद्देव तर्हि अग्रहणमस्तु, न ग्रहणकारणसद्भावात् । तत्र हि चक्षुरादीनां प्राप्यकारित्वात् असंनिहितरजतप्राप्त्यसंभवात् अग्रहणम् । अत्र तु चोदकस्य ग्रहणकारणस्य सद्भावात् न अग्रहणं संभवः । कथं तर्हि बाधः ? उक्तं व्यवहारविसंवादादिति । तदेव तु न युक्तमिति पश्यामः । अग्रहणनिबन्धनो हि व्यवहारः, ग्रहणेन अग्रहणे निवृत्ते परावर्तेत इति युक्तम् । ग्रहणे तु सति न तन्निबन्धनं व्यवहारं परावर्तयेत् । उच्यते । अङ्गत्वमात्रं चोदकेन अवगम्यते न च तावन्मात्रेणानुष्ठानम्, प्रयोगविध्युपसंग्रहनिमित्तत्वात् तस्य । तेन च कुशार्थानामनुपसंग्रहात् भवत्येवापि व्यवहारविसंवादः । 'अन्यथा ज्ञानमप्यत्र चोदकान्नोपजायते । दुष्टकारणजं तत् स्याददुष्टश्चेह चोदकः ॥' ६ ॥ येषामपि 'अयथार्थं विज्ञानं मृगतोयादिविषयं उत्पन्नमेव ज्ञानान्तरेण अर्थतत्त्वोपदर्शनेन मिथ्या क्रियते' इति मतम्, तेऽपि मिथ्याज्ञानस्य दुष्टकारणजत्वात् चोदकस्यादुष्टत्वात् तज्जनितं यत् पदार्थप्राप्तिज्ञानम्, 'नार्थलोपादिना तस्य मिथ्यात्वं वदितुं क्षमा. । अननुष्ठानमेवात्र बाधोऽङ्गानां सतामपि ॥"

७॥ तेन चोदकप्राप्तानामपि तत्फलस्यानुष्ठानस्य असंभवात् नास्ति चोदकश्चचनम्। 'न चोदकश्चोदयति' इति च फलद्वारेण व्याख्यातम् (भाष्ये) इति।

अत्र गुरुः 'चोदकेन पदार्थानां विकृतौ संगतिः कथम्। किं कार्यनिरपेक्षाणां तद्द्वारेणाथवा भवेत्॥ ८॥ संगतौ निरपेक्षाणां कल्पयित्वा प्रयोजनम्। प्रकृतौ वा प्रयोगः स्याद् विकृतौ बाधनं कुतः॥ ९॥ बाधोऽधिकरणस्य स्यात् तादृशी संगतिर्यदि। कार्यद्वारेण चेत् प्राप्तिस्तल्लोपे वा कथं भवेत्॥' १०॥ यो हि चोदकप्राप्तानां अवघाताङ्गभावानामेव अङ्गानां अननुष्ठानं बाध्यमानिष्यते, स विकल्प्य प्रष्टव्यः किं प्राकृतकार्यनिरपेक्षस्यैव हन्त्यादेः कृष्णलादिषु चोदकेन अङ्गत्वप्राप्तिः, अथवा तद्द्वारेणेति। यदि चेद् ब्रूयात् तन्निरपेक्षस्यैव विकृत्या संगतिरिति। प्रतिब्रूयादेनम्। तथा सति चोदकावगताङ्गभावस्य तदुपपत्त्यर्थं दृष्टमदृष्टं वा प्रयोजनं परिकल्प्य प्रकृताविव विकृतावपि कृष्णलादौ हन्त्यादीनां प्रयोगात् नाननुष्ठानलक्षणबाधसिद्धिः। दशमाद्यधिकरणबाधश्च कार्यनिरपेक्षाणां प्राप्तौ प्रसज्येत। स चेत् एतद्दोषपरिहारार्थं द्वितीयं पक्षमवलम्ब्य ब्रूयात् कार्यद्वारेणैव अङ्गानां प्राप्तिर्न स्वतन्त्राणामिति, प्रतिब्रूयादेनम्, न तर्हि कृष्णलेषु हन्तेः प्राप्तिः संभवति, द्वाराभावात्। यत्र हि यस्य द्वारं नास्ति, स तत्र तेनैव द्वारेण प्रविशतीति कुत एतत्। नो खलु आर्द्रतया ज्वलनमकुर्वन्ति काष्ठानि तद्द्वारेण ओदनसिद्धेः साधनभावमनुभवितुं प्रभवन्ति। तत्र प्राकृतेन द्वारेण कृष्णलापूर्वस्य हन्तिरङ्गमिति वचनमप्रत्यक्षार्थविधित्वादप्रमाणं स्यादिति। तन्नैतत् स्यात्। 'उपकारस्तु सर्वाङ्गजन्यः पूर्वं प्रदिश्यते। ततोऽवान्तरकार्याणां नाङ्गानामतिदेशनम्॥' ११॥ न ब्रूमः। कार्यानपेक्षः पदार्थातिदेश इति। सर्वाङ्गजन्य उपकारः पूर्वमतिदिश्यते एव तदनन्तरं तु नावान्तरकार्याणामतिदेशः, किन्तु अङ्गानामेव। स चोपकारः कृष्णलेष्वपि विद्यते एव तन्निर्वृत्त्युपायत्वेनैव पदार्थानामतिदेशात् नास्त्यप्राप्तिः। एवमुपकारपूर्वेण पदार्थानामङ्गभावे अपूर्वं प्रत्यङ्गभावे तदुपकारजनकत्वं तेषां प्रकृतवदेव ज्ञातमकारमिति स प्रकारान्तरकल्पनाऽवसरः। न चावघातस्याग्र तथा तज्जनकत्वं संभवतीत्यननुष्ठानम्। तस्मादुभयमप्युपपन्नं प्राप्तिरननुष्ठानं चेति। अधिकरणमपि उपकारानपेक्षपदार्थमात्रस्यानभ्युपगमात् असङ्गतमिति। 'तदेवमपि पूर्वोक्तदूषणं नातिवर्तते। शेषभावे प्रतीते हि द्वारकार्यानपेक्षया॥ १२॥ प्राकृतस्योपकारस्य प्रकारान्तरमाश्रितः। हन्त्यादिहेतुतां गच्छेदपूर्वाङ्गपदेव नः॥' १३॥ यद्यपि परमोपकारपुरःसर एव अङ्गानामतिदेशः, तथापि अवान्तरकार्यनिरपेक्षाणामेव अङ्गभावावगमात्, तस्य च करणोपकारसाधनमन्तरेण अघटनात्, तस्य च प्रकृत्यवगतेन मार्गेणासंभवात्, प्रकारान्तरेणापि तत्साधनत्वमवघातादीनां अपूर्वाणामिव आमनहोमादीनां अङ्गानां परिकल्प्य अनुष्ठानं स्यात्। किञ्च उपकारजनकापेक्षायामपि पदार्थानां इत्यतिदेशं भवानिच्छति, तेषां च न प्रथममुपकारेण अन्वयः। नहि उपकाराभिधायी शब्दोऽस्ति यः पदार्थैरन्वितमुपकारमभिदध्यात्। न च पदार्थवाचिनोऽपि शब्दा विकृतौ सन्ति, ये पदार्थानुपकारान्वितान् अभिदध्युः। तेन अपूर्वस्यैव स्वशब्देन पदार्थप्रयोजनतया अन्वितस्याभिधानात् तत्सिद्धये कल्पयित्वाऽपि द्वारमनुष्ठानं स्यात्। एवं च यद्यपि उपकारानन्तरं अवान्तरकार्याणि, ततः पदार्थाः प्राप्यन्ते, तथापि तेषामशब्दतया मिथःसंबन्धाभावादपूर्वेणैव तादर्थ्यान्वयात् कुशकाशानामपि तत्कल्पनया स्यादेवानुष्ठानम्। यदि उच्येत नावघातस्याचि उपकारसाधनत्वमङ्गानाम्, तेन उपकारसाधनत्वं न कल्पयितव्यमिति। प्रकृतौ तर्हि कथमुपकारकल्पना? अपेक्षितत्वात्। प्रधानस्य हि उपकारापेक्षा, तेन प्रकृतौ शेषाणां तज्जनकत्वं कल्प्यते। विकृतौ तु अतिदेशप्राप्ताङ्गजनितेनैव उपकारेण प्रधानस्य नैराकाङ्क्ष्यात् नास्ति उपकारकत्वपरिकल्पनं कुशादीनामिति। नैतत् सारम्। नहि अनुपकारिणामपि अङ्गत्वे सत्येव प्रधानापेक्षानिबन्धनं तज्जनकत्वपरिकल्पनम्। तर्हि तत्प्राकृतोपकारात् विकृतिषु तदपेक्षाऽभावात् अपूर्वाणामपि आमनहोमादीनां अवघातादिवत् तज्जनकत्वपरिकल्पनाहेत्वभावात् अनुपकारकत्वेन नानुष्ठानं सिध्येत्। अथ तेषां वचनानर्थक्यभयात् अनुष्ठानम्, चोदकस्य तु नानर्थक्यम्, अङ्गान्तरेष्वपि

कृतापेक्षत्वात् इत्युच्यते, तदयुक्तम् । अत्रापि आनर्थक्यात् । नहि सर्वपदार्थसाधारणोपदेशमपेक्ष्यैव अर्थात् पदार्थप्राप्तिरभिमता, पुनरपि शास्त्रेणैव पदार्थानां विशेषितत्वात्, तेषां च सामान्यरूपाभावात् प्रत्येकमनिर्देशात् अप्राप्तस्यापि शास्त्रं अननुष्ठाने अनर्थकं स्यात् । अतस्तस्य अतिदेशो वा अनुष्ठानं वा, नान्या गतिरस्ति । कामम् अनर्थकं भवतु नैरर्थक्यात् अत्यन्तलोऽर्थः शक्यते कल्पयितुम् । नहि अत्र किञ्चिदुपकारजनकत्वे प्रमाणमस्ति । ननु अङ्गत्वानुपपत्तिरेव प्रमाणम् । नहि अनुपकारिणः तत् भवति, इत्येषु प्रकृतिवद्वचनात् अन्यथोपकारकत्वं न संभवति । तस्मात् अननुष्ठानम् । इति चेत्, तत्र उच्यते । प्रकृतिवत् अङ्गत्वमनुपपन्नं कुशेषु विदधत् वचनं अप्रमाणं स्यादिति । किञ्च प्रत्यक्षाधे कुशानामङ्गत्वार्थानां किमिति अनु(अननु)ष्ठानम् । प्रत्याम्नानात् इति चेत् न, तेनापि अङ्गत्वानपक्षेपात् । तेन अबाधितार्थयोः कुशशरयोः विकल्पेन अनुष्ठानं ऐकार्थ्यात् स्यात्, न बाधः । ननु अनुष्ठानयोः उपदेशातिदेशयोः कथं विकल्पः ? किञ्च उपदेशेन अतिदेशो बाध्यते इत्युच्यते ? ओमिति चेत्, न तर्हि कुशानामङ्गत्वमस्ति, तत्प्रमाणस्यातिदेशस्य बाधितत्वात् । अथ नातिदेशस्य बाधः नापि विकल्पः, अथ किम् ? समुच्चयः । सोऽपि न, ऐकार्थ्यात् । कथं तर्हि उक्तं प्रयोगवचनेन अङ्गसंग्रहात् अननुष्ठानमिति ? तदेव तु न युक्तम्, अङ्गत्वाभावात् इति ब्रूमः । का खलु अङ्गत्वयोः उपकारकत्वयोः कुशशरयोर्विशेषः ? येन द्वितीयस्यापि (शरयोपि द्वितीयेत्यर्थः) यदेतु कानुपस्थस्य विधेः अनुरागो भवेत् ? अयमस्ति विशेषः, शराणां प्रत्यक्षवचनं प्रमाणं इतरेषामनुमानमिति । नायं विशेषः, प्रत्यक्षेणापि अनुमानस्य अबाधितत्वात् । प्रमाणयोर्हि प्राबल्यदौर्बल्याभ्यां अन्यतरस्य प्रमेयापहारात् मिथ्यात्वं भवति । प्रमेयानपहारे तु द्वयोरपि अर्थयोः कार्यसाधनत्वाविशेषात् अविशिष्टं कार्यमित्यनुष्ठानमिति । विधिर्हि साध्यभूतः साधनेषु अनुष्ठानमाक्षिपति । साधनत्वं च द्वयोरपि कुशशरयोः अङ्गत्वाविशेषात् दारसंभवाच्च अविशिष्टं इति नानुष्ठानाक्षेपे कश्चिद् विशेषः । तस्मात् उभयत्रानुष्ठानात् नास्ति अननुष्ठानलक्षणो बाधः ।

तथा 'नार्षेयं वृणीते' इत्यत्र प्रतिषेधार्थे विकल्पमभ्युपेत्य तत्परिहाराय पर्युदास एव चोदकस्य आश्रितः । यदि उच्यते अनारभ्यविधेः सामान्यरूपस्य उपदेशात्मकस्य तत्र पर्युदासः अभिहितः, नातिदेशस्येति । कथं तर्हि (१०।८।१।१ सूत्रे) प्रदेशग्रहणम् ? न्यायविरोधात् अनादरणीयमिति चेत्, अहो बत महामोहमाश्रयन्तं भवन्, यत् आत्मीयमज्ञानं कर्णौ (सूत्रकारे) आरोपयति । नहि अङ्गत्वाबाधे सति उपदिष्टं अतिदिष्टं इत्यनेन कश्चिद् विशेषः इत्युक्तम् । यदि च अनयोरुभयोरपि प्रमेययोः 'इदं प्रत्यक्षगतम्, इदं दुर्बलमितम्' इत्यनेन विशेषेण अनुष्ठानाननुष्ठाने भवतः, ततो दूरात् वह्निमप्यपश्यन् आराद् अनुमिमानः अनुमितं हित्वा पाकार्थी दूरमप्युपधावेत् ।

तथा 'यजतिषु येयजामहं करोति' इत्यस्य सामान्यविधेः 'नानुयाजेषु येयजामहं करोति' इत्यतः विशेषप्रतिषेधात् आहवनीयशास्त्रस्येव विशेषशास्त्रात् पदविधायिनो दुर्बलत्वात् प्रतिषेधे सत्यपि अननुष्ठानं येयजामहस्य अनुयाजेषु शक्यते वक्तुम्, इति अनर्थकं पर्युदासप्रतिपादनं स्यात् । तस्मात् न कथञ्चिदपि प्राप्तबाधे सति अननुष्ठानं संभवति इति प्राप्तिरेव बाधयितव्या ।

ननु एवं सति प्राप्तबाधाभिधानमनुपपन्नं तादृशबाधमिकयोरविशेषात् इति, अत्राभिधीयते 'साधारणस्य शास्त्रस्य विशेषविषयादिना । संकोचः कृत्स्नरूपस्य प्राप्तबाधोऽभिधीयते ॥ १४ ॥ कल्प्यस्य शास्त्रस्य तु कल्पनं यन्निरुध्यते मूलनिष्कृन्तनेन । कृत्स्नेन शीर्षेण कल्पप्रहारात्प्रासबाधं तमुदाहरन्ति ॥' १५॥ यत्र कृत्स्नस्यैव शास्त्रस्य सामान्यद्वारेण विशेषानुपसर्पतः क्वचित् विशेषबाधादिना प्राप्तिरपोह्यते, तत्र प्राप्तबाधः । यथा प्राकृतवैकृतसामान्य–विशेष–नित्यनैमित्तिक–क्रत्वर्थ–पुरुषार्थ–पौर्वापर्य–असरूपत्व–सावकाशनिरवकाश–अङ्गप्रधान–तद्धर्मबाधेषु । प्राकृता हि धर्माः प्रातिस्विकेन रूपेण चोदकेन विकृतौ प्राप्यन्ते 'इदमिदं कर्तव्यम्' इति । कथं तर्हि ? यथा प्रकृत्या स्वकार्यं साधितं तथा विकृत्याऽपि इति । तथाभावश्च तैरेव पदार्थैः यथार्थमप्यमानैः संपादयितुं शक्यते नान्यथेति ।

तेषां तत्साधनसमाम्नायरूपेण प्राप्तिः अविशेषेण प्रतीयते । सेयं प्रतीतिः अविशेषेण उपजाता सती पश्चात् तत्तत्पदार्थविशेषनिरूपणावसरे इत्यादेः तथा साधनमात्रासंभवपर्यालोचनेन भ्रान्तीक्रियते । न चैतावता शास्त्रस्य अप्रामाण्यम्, तस्य विषयविशेषपरिशेषमात्रपरिकल्पनात् । विशेषादर्शनेन हि सामान्यमात्रालोचनात् सर्वविषयत्वं शास्त्रस्य भ्रान्त्या अवगम्यते । तद्दर्शनात्तु तावन्मात्रस्य विषयः अल्पविषयमेव तु शास्त्रं सामान्यमात्रपर्यालोचनादोषात् एतद्विषयत्वेन भ्रान्त्या अध्यवसितम् इति मन्यते । तेन सर्वलोपात् प्रत्याम्नानात् प्रतिषेधाच्च चोदकसंकोचः ।

तथा आहवनीयविधायिनः सामान्यशास्त्रस्य पदविधायिना विशेषशास्त्रेण होमान्तरविषयत्वकल्पनम् ।

पाञ्चदश्यस्य नित्यस्य अविशेषविहितस्य वैश्यविषयेण नैमित्तिकेन साप्तदश्येन वर्णान्तरविषयत्वम् । साप्तदश्यस्यापि क्रत्वर्थस्य पुरुषार्थेन एकविंशत्यनुवचनेन प्रतिष्ठाकामव्यतिरिक्तविषयत्वम् । न चात्र सामान्यविशेषभावः, उभयोरपि सामान्यत्वात् । एकविंशत्यनुवचनं हि प्रतिष्ठाकामवर्णत्रयसाधारणं साप्तदश्यमपि प्रतिष्ठाकामातत्कामवैश्यसाधारणम्, प्रतिष्ठाकामे तु वैश्ये द्वयोः संनिपाते इति पुरुषार्थानुवचनेन क्रत्वर्थस्य प्रत्यासन्नफलेन अन्याश्रयस्य बाधः ।

तथा पौर्वापर्येऽपि च उद्गातृप्रतिहर्त्रपच्छेदयोः सामान्यविशेषभेदाभावात् पौर्वापर्यप्रत्ययेन मिथो बाधः । यत्र यदा पाश्चात्यो भवति पश्चाद्भाव्युद्गात्रपच्छेदनिमित्त-प्रतिहर्त्रपच्छेदेनतः कृतो, सर्ववेदसदानमङ्गमिति, एवं प्रतिहर्त्रपच्छेदेऽपि द्रष्टव्यम् ।

तथा पञ्चदशरात्रे प्रथमेऽहनि अग्निष्टुन्नामधेये एकाहाभिष्टवधर्मेषु प्राप्तेषु सुब्रह्मण्या आग्नेयी प्राप्ता, उत्तरेषां चतुर्दशानामह्नां ऐन्द्री, तत्र अल्पवैगुण्येनापि गतौ सत्यां भूयोवैगुण्यमन्याय्यम्, इति भूयस्त्वेन प्रथमाहर्गताऽपि आग्नेयी बाध्यते । तेन अग्निष्टुन्नामधेयं सुब्रह्मण्याऽऽग्नेयीव्यतिरिक्ताङ्गातिदेशपरं भवति ।

तथा 'यत्किञ्चित् प्राचीनमग्नीषोमीयात् तेनोपांशु चरन्ति' इत्यस्य 'यावत्या वाचा कामयेत तावत्या वाचा दीक्षणीयायामनुब्रूयात्' इत्यनेन दीक्षणीयाऽऽदिप्रधानेषु स्वरान्तरविधानात् अन्यविषयत्वम् । न चास्य सामान्यात्मता, यत्किञ्चिच्छब्दस्य प्रकृतविशेषाभिधायित्वात् । तेन सावकाशनिरवकाशत्वेन अत्र बाधः ।

तथा 'उपांशु यजुषा' इति विहित यजुरर्थं उपांशुत्वं निगदेषु प्रधानभूतपरप्रत्यायनकार्यविरोधात् बाध्यते । तेन यजुःषु उपांशुविधानं निगदव्यतिरिक्तयजुर्विषयं भवति ।

तथा 'य इष्ट्या पशुना सोमेन वा यजेत, सोऽमावास्यायां पौर्णमास्यां वा' इत्यनेन इष्टिषु पशौ सोमे च पर्वणि प्राप्ते सति एकादशीदीक्षापक्षे सुत्यादीक्षणीययोः उभयोरपि पर्वसंपादनासंभवात् अन्यतरस्य बाधे कर्तव्ये सति प्रधानस्य अवैगुण्यात् दीक्षणीयायां पर्वबाधः । तेन इष्टिषु पर्वविधानं प्रधानकालाविरोधिविषयं भवति । तदेवं सर्वत्र विद्यमानस्य प्रापकस्य शास्त्रस्य अविशेषेण प्रापकत्वे प्राप्ते क्वचित् विशेषे यः प्रापकत्वापवादः स प्राप्तबाधः ।

( एवं प्राप्तबाधप्रतिपादकं चतुर्दशं श्लोकं व्याख्याय, अप्राप्तबाधप्रतिपादकं पञ्चदशं श्लोकं व्याचष्टे-- ) यत्र तु कल्पनीयस्य अलब्धात्मकस्य शास्त्रस्य कल्पनाऽभिमुखस्य शीघ्रेण तद्विरोधापहारात् कल्पनामूलं निकृत्य प्रतिरोधः क्रियते, तत्र अप्राप्तबाधः । यथा श्रुतिलिङ्गादिषु । नहि 'ऐन्द्या इन्द्रमुपतिष्ठते' इति शास्त्रमस्ति, यस्य प्राप्तस्य 'ऐन्द्या गार्हपत्यमुपतिष्ठते' इत्यनेन बाधः स्यात् । नहि लिङ्गमात्रं स्वत एव प्रमाणम्, तत्कल्पिता तु श्रुतिः अत्र प्रमाणम् । तत्कल्पनायामपि न तस्यार्थे प्रमाणम्, किन्तु अस्याप्याकाङ्क्षाशमनार्थं तत् प्रमाणं श्रुतिकल्पने । तां चान्यत्र नियोगेन प्रत्यक्षा कृन्तति श्रुतिः ॥' १६ ॥

तेन प्रत्यक्षेण शास्त्रेण साक्षादभ्यन्तलिङ्गकल्प्यश्रुतिविषयं मन्त्रमपहृत्य गार्हपत्योपस्थाने विनियुज्य मन्त्रं निराकाङ्क्षीकुर्वता कल्पनामूलभूता आकाङ्क्षा निराकृता इति न तदधीनात्मलाभा श्रुतिः उन्मज्जितुं क्षमते । एवमन्यत्रापि अप्राप्तबाधो द्रष्टव्यः । तद् उपपन्नः प्राप्ताप्राप्तबाधविवेकः ।

प्रत्युत एकदेशिमते एव प्राप्तबाधानुपपत्तिः । नहि तस्य किञ्चित् प्राप्तं बाध्यते । अप्राप्ते हि प्राप्तम्, न तद्

 दशमाध्यायार्थविचारः

बाध्यते । यत्तु अनुष्ठाने बाध्यते, न तत् प्राप्तम्, इति न प्राप्तबाधसंभवः । तस्मात् यथोक्तमेव न्याय्यम् । यत्तु कृत्स्न-प्राप्ती चोदको न किञ्चित् वर्जयितुमर्हतीति । सत्यं अयमे-वास्य स्वभावः । स तु स्वभावः प्रबलेन हेतुना प्रतिबध्यते सामान्यशास्त्रस्येव विशेषशास्त्रेण । 'तदर्थे तु वचनप्राप्तिः' (३।५।१।२) 'न चोदकार्थकात्स्न्यात्' (३।६।१।८ । वस्तुतस्तु 'न तुल्यत्वात्' ७, 'चोदनार्थकात्स्न्याच्चु० ८ इति सूत्रपाठः । प्रकृतग्रन्थेऽपि पूर्वं 'चोदनार्थकात्स्न्यात्' इत्येव उक्तम् । तस्मादत्र अन्यथा मुद्रणं लेखकप्रमादः स्यात्) इत्यपि स्वभावत एव प्रतिपक्षविषयत्वमाशङ्क्य निराकृतं इति वेदितव्यम् । यद्यपि चात्र न कारणदोषेण मिथ्यात्वं सामान्यशास्त्रज्ञानस्य उपपादयितुं शक्यते, तथापि बाधकेन प्रत्ययान्तरेण तदुपलक्षणं भवति । द्वय-मपि हि तदुपलक्षणत्वेनोक्तम् 'यस्य च दुष्टं करणम्, यत्र च मिथ्येति प्रत्ययः, स एवासमीचीनः प्रत्ययः' इति (भाष्य १।१।५ वृत्तिग्रन्थारम्भे पृ. २८) । तत्र वैदिकेषु संभवात् बाधकप्रत्यय एव तदुपलक्षणम्, न कारणदोष-ज्ञानसंभवात् । आह च 'यत्तु कारण- (करण-) दोषज्ञानं द्वितीयमुपलक्षणमुक्तम्, तत् लोकविषयत्वात् न वेदे संभवति इति नोपन्यस्तम्' इति । कथं पुनः अदुष्टेन करणेन मिथ्याज्ञानं जन्यते ? नहि बाधकेन मिथ्याज्ञानं जायते, ज्ञातस्य तु मिथ्यात्वतः स्वरूपतो ज्ञापयति । तज्जन्म तु कारणदोषादेव । सत्यमेव तत् । अत्रापि हि कारणदोषो विद्यते एव । यद्यपि असौ अपौरु-षेयस्य वेदस्य न स्वगतः कश्चित् दोषो विद्यते, तथापि प्रतिपत्तुरेव सामान्यापहृतबुद्धित्वात् अपवादानिरूपणाच्च न्यायाभासेभ्यः प्रवृत्तं मिथ्याज्ञानं जायते । अत एव सम्यक् न्यायनिरूपणार्थं मीमांसाशास्त्रमर्थवत् भवति । न चायं दोषो बाधकात् प्राक् अतुल्यवदिव्यमादिव निरूप-यितुं शक्यते इति बाधकैकोपलक्षणीयत्वं मिथ्यात्वस्य अभिहितम् । इति सर्वमवदातम् ।

तत् सिद्धं यत् 'एवमिदं' इति निश्चितं ज्ञानं कारणा-न्तरेण मिथ्येति बाध्यते । 'नास्ति कृष्णलार्थानां चोदक-वचनम्' । 'कृष्णप्राकृतप्रयोजनं न चोदकश्चोदयति' इत्यादिभाष्यविनाशात् (भाष्य १०।१।१।२) । 'अपि तु वाक्यशेषः स्यात्' (१०।८।१।८) इति च सूत्रविनाशात् कृष्णलार्थेषु आम्नातप्रतिषिद्धेभ्यः अन्येभ्यः चोदकस्य प्रवृत्तत्वम् ।

'कृष्णलादिषु हन्त्यादेरनङ्गत्वं तथा क्रिया ।
नियमादृष्टसिद्धिस्तु नियमात्र स्वरूपतः ॥' १७ ॥

तत्र एतत् स्यात्, यद्यपि कृष्णलेषु हविः दृष्टार्थं न प्राप्यते, तथापि नियमादृष्टसिद्ध्यर्थं किं न प्राप्यते इति । नेत्युच्यते । तत्र तस्यासंभवात् । एवं हि तत् कल्प्यते 'अव-घातेनैव निष्पन्नास्तण्डुलाः अपूर्वं साधयन्ति' इति । न नैवमिह संभवतीति, प्रयोजकाभावात् । नहि अव-घातस्य नियमादृष्टं प्रयोजकम् । दृष्टप्रयोजनेनैव तावत् स्वरूपे प्राप्ते नियममात्रं तेन प्रयुज्यते । तेन यद्यपि चरुषु वैशद्यमप्रतिषिद्धम्, पिष्टस्यापि चरुत्वाविरोधात्, तथापि प्रयोजनाभावात् वैशद्यस्वरूपस्य अप्राप्तेः तदधीनत्वाच्च नियमप्रवृत्तेः अननुष्ठानम् । सत्यपि च प्रयोजने प्रयोजका-भावात् पुरोडाशकपालादेः चर्वादिषु बाध इति । एतेन चिन्तया तण्डुलेषु प्राकृतस्य व्रीहियवप्रकृतिद्रव्यनियमस्य बाधो व्याख्यातः । तथाहि 'प्राप्ते प्रकृत्युपादाने निय-मोऽत्र विधीयते । लौकिका एव तु प्रायास्तण्डुलाः प्रकृतिर्न तु ॥' १८ ॥ नहि प्रकृतौ 'नैवारेण हविषा यजेत' इति शास्त्रमस्ति, यदतिदेशात् तण्डुलानामपि तन्मयत्वं स्यात् । यत्र प्रति 'व्रीहिभिर्यजेत' इति व्रीहीणां करणत्वं श्रूयते । कर्तृव्यापारगोचरश्च करणं भवति । यथा आहुः 'करणं खलु सर्वत्र कर्तृव्यापारगोचरः' इति । (भावनाविवेके) तेन व्रीहीनुपादाय तैर्हविर्निर्वृत्ति । करणत्वं च तेषां उत्पत्तिविशिष्टपुरोडाशावयवद्वारेण यागे तत्प्रकृतित्वेन संभवति, इति एष शास्त्रार्थः 'व्रीहीनुपादाय तैर्हविः संपाद्य यजेत' इति । अत्र च 'हविः संपाद्य यजेत' इत्यनूद्य 'व्रीहिभिः' इत्येतावन्मात्रं विधीयते । एवं च सति आर्थिकं हविःसंपादनम्, न श्रौतम् । न चैवं तण्डुलेषु संभवति । नहि तत्र प्रकृत्युपादानेन हविः संपादनीय (हविः संपादनं) प्राप्तम्, यत् 'व्रीहिभिः' इति नियम्येत, लोकसिद्धानेव तण्डुलानुपादाय यष्टुं शक्यत्वात् । ननु प्रकृतावपि लौकिकानेव पुरोडाशमादाय यागस्य कर्तुं शक्यत्वात् कथं प्रकृत्युपादानेन हवि-

संपादनप्राप्तिः। इति चेत्, तदुच्यते 'हविःश्रपणसाध्यं हि पुरोडाशाख्यमिष्यते। स्वयं कर्तृकता तस्य श्रपणस्य विधीयते ॥' १९ ॥ पुरोडाशरूपं हि हविः नान्तरेण श्रपणं सिध्यति। तत् किं लौकिकमेव उपादेयं स्वयमेव वा प्रकृत्युपादानेन संपादयितव्यमिति, यद्यपि उत्पत्तिवाक्यात् अनियमः प्राप्तः 'अष्टाकपालेन यजेत' इत्यस्य उभयथाऽपि उपपत्तेः, तथापि 'कपालेषु श्रपयति' इति वचनात् नान्येन श्रपितं गृह्णाति इति स्वयंकर्तृकत्वमेव तु अस्य विधेयम्, सर्वमन्यत् उत्पत्तिवाक्यसामर्थ्यसिद्धम्। कपालानि उत्पत्तिवाक्यसिद्धानि, श्रपणमपि सामर्थ्यात् नाश्रपितस्य पुरोडाशत्वमस्ति इति श्रपितद्रव्यविशेषवचनत्वात् पुरोडाशचर्वादिशब्दानाम्। अतः स्वयंकर्तृकतैवात्र विधेया। यथा आह भगवान् भाष्यकारः 'कपालेषु श्रपयति इति वचनात् नान्येन श्रपितं गृह्णाति' ( १।४।६।१९ पृ. ३४१ ) इति तद्बलेन प्रकृत्युपादानं प्राप्नोति इति। नहि अन्यथा स्वयं श्रपयितुं शक्यते। एवं प्रकृतिद्रव्योपादाने प्राप्ते किमवयवं किं रूपं च द्रव्यमुपादेयं इत्याकाङ्क्षायाम्, व्रीहिशब्देन सतुषजातिविशेषवाचिना तन्नियमात् पिष्टतण्डुलावस्थयोः नीवारादीनां च व्यावृत्तिः। यदि तु अनेनैव वाक्येन 'प्रकृतिमुपादाय हविः संपादयेत्, तच्च व्रीहिभिः' इति विधीयते, ततो गौरवम्। 'कपालेषु श्रपयति' इति च विधेः आनर्थक्यं सत्या गतौ स्यात्, तच्च अन्याय्यम्। तेन यत्र श्रपणम्, तत्र तस्य स्वयंकर्तृकत्वम्। यत्र च तत्, तत्र प्रकृत्युपादानप्राप्तिः। यत्र चासौ, तत्र व्रीहिनियमः। तण्डुलेषु तु श्रपणस्य अर्थलोपात् निवृत्तिः। निवृत्ते च तस्मिन् तत्र स्वयंकर्तृकत्वस्य कुतः प्राप्तिः, कुतस्तरां च प्रकृत्युपादानम्, कुतस्तमां च व्रीहिनियमः इति न तेषु व्रीहिनियमसंभवः। ननु अवघातसामर्थ्यात् तण्डुलेष्वपि प्रकृत्युपादानं स्यात्। नेत्याह। नहि 'व्रीहीनवहन्ति' इत्येतत् अवघातस्य स्वयंकर्तृकत्वसिद्ध्यर्थं अप्राप्तत्वात् व्रीह्युद्देशेन अवघातो विधीयते इति न तद्वशेन प्रकृतिद्रव्यप्राप्तिः शक्यते वदितुम्। न चासौ अवघातः नियमेन प्राप्नोति, यत् तदनुवादेन स्वयंकर्तृकता विधीयेत स्वयमेव अवहन्यात् नान्येन अवहतान् गृह्णीयात् इति नखनिर्दलनादिभ्योऽपि वितुषीकरणसंभवात्।

एतेन पेषणं व्याख्यातम्। तस्यापि नियमेन अप्राप्तेः। अवघातेनापि हि विच्छिन्नास्तण्डुलाश्चूर्णीभवन्ति।

तदेवं क्रमः। प्रथमं तावत् पुरोडाशो विनियुज्यते, ततस्तस्य यथाकथञ्चित् उपादाने प्राप्ते श्रपणविधिवशात् प्रकृत्युपादानेन स्वयं संपादनम्, ततः प्रकृतिविशेषापेक्षायां 'व्रीहिभिर्यजेत' इत्यनेन अनन्तरप्रकृतिपिष्ट्युदासेन पिष्टव्यवहिततण्डुलव्युदासेन व्यवहिततरनीवारादिव्युदासेन च व्रीहयो विधीयन्ते, ततः तैः कथं हविष्कार्यम्, इत्यपेक्षायां अवघातपेषणादिविधानम्। तण्डुलेषु तु अर्थलोपात् श्रपणनिवृत्तौ तन्मूलप्रकृत्युपादानव्रीहिनियमावघातादीनां क्रमेण निवृत्तिः, इति लोकसिद्ध एव यत्किञ्चित्पात्रीपकवरक्षाविवर्जं उपादेयाः। यत्र तु अपुरोडाशेऽपि श्रपणेन अर्थः चरु–धाना–मन्थ–लाज–पृथुक–यवाग्वादिषु, तत्र भवत्येव व्रीहिनियमः अवघातादयश्च संस्काराः। इति सूक्ष्ममिदं न्यायरत्नं भाष्यवार्तिकपरिचयोपचितचेतोऽलोचनसंस्कारैः विवेक्तुं शक्यते, न स्थूलदृष्टिभिरिति। श्लोकौ अप्यत्र वार्तिककारीयौ गायन्ति 'तण्डुलेभ्योऽर्थलोपेन श्रपणं विनिवर्तते। श्रपणस्य निवृत्तस्य स्वयंकर्तृकता कथम् ॥ तदधीनमुपादानं प्रकृतेः स्यात् कथं तथा। तद्वशो व्रीहिनियमस्तदभावे कथन्तमाम् ॥' इति।

तदेवं प्राकृतानामर्थलोपाद्विना बाधात् वैकृतकार्यापत्तिशून्यानां आमहोमादीनां अनुष्ठानाभिधानाय प्रयोगश्चत्वा दशमो विनिवृत्तेति।

इति श्रीन्यायरत्नमालायां अङ्गनिर्णये चतुर्थः परिच्छेदः ॥

* दशमाद्यपूर्वपक्षन्यायेन सामस्वरूपं उत्तरयोः प्राप्तिं अविकृतस्वरूपमेव तत् प्रकृतं अप्राकृतं दृष्टमदृष्टं वा कार्यं कुर्यात्। शा. ९।२।१। दशमाद्यपूर्वपक्षन्यायस्तु 'स्वरूपेण पदार्थानामतिदेशः' इति। सोम. * दशमाद्यसिद्धान्तन्यायः। 'सौधर्मो कथम्भावाकाङ्क्षाबलात् उपकारातिदेशः' इति दशमाद्यसिद्धान्तस्य अप्राप्तत्वात्। सोम. ९।२।१.

* दशरात्रस्य आद्यन्तौ द्वौ अग्निष्टोमौ। वि. ८।३।५. * दशरात्रस्य प्रकृतिः द्विरात्रादहर्गणेषु। भा.

१०।५।४।१२-१३, * दशरात्रे चयनं कर्तुं शक्यते। १०।५।२३।७८.

* दशहोता ग्रहादूतयः हिंकारः शामिधेन्यः इति भ्रमः न तु अभिधयः। संकर्ष. ४।१।१.

* दशापवित्रं नाम सोमपावनार्थो वासःखण्डः। 'दशापवित्रेण ग्रहं संमार्ष्टि'। वि. ३।१।७. * 'दशापवित्रेण ग्रहं संमार्ष्टि' इत्यत्र सर्वेषामेव ग्रहाणां संमार्जनं कर्तव्यम्। नैकस्यैव ज्योतिष्टोमे। भा. ३।१।७।१३-१५. * 'दशापवित्रेण ग्रहं संमार्ष्टि' सर्वे ग्रहा एव संमार्जनीयाः, न तु चमसादयः। वि. ३।१।८.

* दशाहस्य द्वादशाहिकस्य धर्माणामनुप्राप्ते द्विरात्रादिगणेषु। भा. १०।५।४।१२-१३.

* दहरानादौ ग्रहा इति महानुग्रहन्यायेन निर्णयः नोपसंहारन्यायत्वेन। परमाकरः. ५७।१, * दहराकाशमहिमवचनस्य तदन्तर्गतवस्तुप्रतिपत्त्यर्थत्वासंभवात् उपासनार्थत्वावश्यंभावेन (अन्तर्गतवस्तुना) तेषामनन्यथा सिद्धाना भूमानमनुप्रमानुरोधेन तस्मिन् यदन्तः इत्यादे. दहराकाशस्य अन्वेष्टव्यतापरत्वमङ्गीयते, न तदुपासिकाले उपसंहारमात्रानुरोधेन। ५९।२.

* दाक्षायणयज्ञः। अयनमित्यावृत्तिरुच्यते। दक्षस्य इमे दाक्षाः तेषामयनं दाक्षायणम्। कः पुनर्दक्षः? उत्साही। भा. २।३।४।१०। दक्ष इति च उत्साही शीघ्रकारी यजमानः। तदीया ऋत्विजो दाक्षाः तेषामयनं प्रयोगः यज्ञाभिन्नत्वात् दाक्षायण इत्युच्यते। बा. पृ. ५९६. * दाक्षायणयज्ञः दर्शपूर्णमासयोरेव अभ्यासरूपगुणविकारः। संकर्ष. १।३।६. * 'दाक्षायणयज्ञेन यजेत प्रजाकामः' इति आवृत्तिविशिष्टौ दर्शपूर्णमासौ एव न यागान्तरम्। दर्शपूर्णमासयोरेव गुणात् फलमुच्यते। भा. २।३।४।५-११.

## दाक्षायणयज्ञे गुणविकाराणां प्रथमप्रयोगे एव विकल्पः ॥

ईदृशाना गुणविकाराणामैच्छिको विकल्पः प्रतिप्रयोगं स्यात्, दर्शपूर्णमासनिष्ठस्य यावज्जीविकल्पस्य विकारेष्वपि प्रवृत्ते.। इति प्राप्ते, प्रथमप्रयोगे एवाय विकल्पः, कर्मधर्मरूपाणां विकारे प्रवृत्तावपि कर्तृधर्मस्य यावज्जीविकत्वस्य तदयोगात्। संकर्ष. १।३।९.

* दाक्षायणयज्ञे दर्शस्येव पौर्णमास्यामपि सांनाय्यस्यैव आवृत्तिः। संकर्ष, १।३।६.

## दाक्षायणयज्ञे दर्शस्यैवावृत्तिः ॥

दाक्षायणयज्ञस्य दर्शपूर्णमासयोरेव अभ्यासरूपगुणविकारविशिष्टत्वात् दर्शस्येव पौर्णमास्याः अप्यावृत्तिः। 'पौर्णमासे संनयेत्' इति वचनेन सांनाय्यस्य पौर्णमास्या अमावास्यायां च करणात् 'तेषामेव अर्धमासं प्रसुत' इति वचनेन सोमसंस्तुतस्य समस्तस्य कर्मणः कालेन सह अत्यन्तसंयोगविधानेन तस्य समस्तकर्मावृत्तिमन्तरेण अनुपपत्ते.। दर्शमात्रावृत्तौ च तद्विरोधात्। इति प्राप्ते, 'सोमः खलु वै सांनाय्यम्' इति श्रुत्या कर्मैकदेशस्यैव सोमयागत्वेन संस्तवात् तस्यैव पौर्णमासेऽपि विधानाच्च अर्धमासमित्यस्यापि तदेकवाक्यतया सांनाय्यस्यैव आवृत्तिः। संकर्ष. १।३।६.

* दाक्षायणयज्ञे दर्शपूर्णमासानुष्ठानक्रमे सकलयोः दर्शपूर्णमासयोः द्विरावृत्तेः साङ्गस्यावश्यकत्वबुद्धिः। सु. पृ. ७८६.

## दाक्षायणयज्ञे द्विरेव आवृत्तिर्नियता ॥

'अर्धमासम्' इति अत्यन्तसंयोगलक्षणद्वितीयावशादेव 'मासमधीते, क्रोशमधीते' इत्यादाविव निरन्तरमभ्यासः। इति प्राप्ते, 'द्वे अमावास्ये यजेत' इति द्विरेव विधाय 'आग्नेयोऽष्टाकपालः पौर्णमास्याममाग्नेयोऽष्टाकपाल ऐन्द्रं दधि च पूर्वस्याममावास्यायामाग्नेयोऽष्टाकपालो मैत्रावरुण्यामिक्षोत्तरस्याम्' इति प्रयोगक्रमस्य विवरणाच्च प्रत्यहमभ्यासः. पौर्णमास्या क्रियमाणस्य सांनाय्यस्यैव सोमाभिप्रायत्वेन अमावास्याया क्रियमाणायाः आमिक्षायाः अनुवन्ध्यात्वेन संस्तवात् तन्मध्यपतितस्य सर्वस्यापि कालस्य तुल्यत्वात् अत्यन्तसंयोग. स्तुत्यर्थत्वादपि उपपन्नः। किञ्च नियतं वर्षाणि कर्तव्यत्वेन विहितयोर्दर्शपूर्णमासयो. 'यद्यु वै दाक्षायणयाजी स्यात् पञ्चदशवर्षाणि यजेत त्रिंशद्याजी संपद्यते' इति पञ्चदशस्वेव वर्षेषु त्रिंशत्परिसंख्यानाद् द्विरेवाभ्यासः। संकर्ष. १।३।७.

* दाक्षायणयज्ञे 'नानृतं वदेत्, न मांसमश्नीयात्' इत्यादिवतानां न विकल्पः । संकर्ष. १।३।९.

🕱 दाक्षायणयज्ञे पठितानि अन्तरालव्रतानि न प्राकृतानि ॥

तत्रैव तस्य 'एतद्व्रतम्' इत्युपक्रम्य 'नानृतं वदेत्, न मांसमश्नीयात्, न स्त्रियमुपेयात्, नास्य पल्पूलनेन वासः पल्पूलयेयुः, एतद्धि देवाः सर्वं न कुर्वन्ति' इति विहितानि व्रतानि प्राकृतव्रतानामेव गुणविकाररूपाणि दाक्षायणयज्ञस्यैव दर्शपूर्णमासगुणविकाररूपत्वेन तत्तद्व्रतयोरपि तथात्वस्यौचित्यात् । इति प्राप्ते, चातुर्मास्यव्रतवत् अमावास्यैष्टियागान्तराले अपरपक्षे एवैतत् व्रतम्, प्राकृतं तु प्रतिप्रयोगं व्रतोपायनादिव्रतविमोकान्तकालमेवेति तयोर्भेदात् । 'स एतमर्धमासं यशो बिभर्ति तस्यैतद्व्रतम्' इत्यर्धमासवर्तिनोरपि तत्त्वात् । एतत्प्रकरणे एव पठितस्य 'ऋतौ भार्यामुपेयात्' इति प्रतिप्रसवस्य वैयर्थ्यापत्तेश्च । संकर्ष. १।४।८.

🕱 दाक्षायणयज्ञाधिकरणम् । दर्शपूर्णमासयोः दाक्षायणयज्ञादिः फलविशेषाय गुणविशेषविधिः, न कर्मान्तरम् ॥

🕱 अयनेषु चोदनाऽन्तरं संज्ञोपबन्धात् । २।३।४।५ ॥

भाष्यम्—दर्शपूर्णमासौ प्रकृत्य आमनन्ति 'दाक्षायणयज्ञेन यजेत प्रजाकामः' 'साकंप्रस्थायीयेन यजेत पशुकामः' 'संक्रमयज्ञेन यजेतान्नाद्यकामः' इति । तत्र संदेहः । [illegible] दर्शपूर्णमासयोरेव गुणात् फलम्, उत कर्मान्तरमेवंजातीयकमिति । किं प्राप्तम् ? कर्मान्तरमिति । कुतः ? संज्ञोपबन्धात् । यद्यपि प्रकरणात् यजतिशब्दाच्च स एव पूर्वप्रकृतो याग इति गम्यते, तथापि नासौ एवंसंज्ञक इति यागान्तरं विधेयं गम्यते ।

वा—श्रुतं दध्नेन्द्रियकामस्येति गुणात् फलम् । नहि तत्र दध्यादीनां होमयागसामानाधिकरण्यं येन संज्ञालक्षणो भेदः स्यात् । दाक्षायणयज्ञादीनां तु यागसामानाधिकरण्यात् पूर्वयागे च अप्रयुक्तत्वात् आत्मरूपावच्छिन्नयागान्तरप्रतिपादनमविरुद्धम् । [illegible] च कश्चिद्दध्यादिभिस्तुल्य एवंसंज्ञो गुणः प्रसिद्धः । तस्मात् भावार्थाधिकरणन्यायेन फले यागविधानात् यागान्तरम् ।

अगुणा च कर्मचोदना । ६ ॥

भाष्यम्— न चात्र गुण उपलभ्यते कश्चित् यद्विधानार्था चोदना भवेत् । यदि स न यागान्तरम्, आनर्थक्यमेव । अपि च, यदि गुण उपलभ्येत, ततो यागगुणसंबन्धो गम्यते, इति तदनुष्ठानं विहितं गम्यते ।

वा— विधिशक्तिः क्रियातो नोत्तारितेत्यभिप्रायः ।

समासं च फले वाक्यम् । [illegible] ॥

भाष्यम्—इतश्च कर्मान्तरम् । कथम् ? फले समासं वाक्यम् । 'प्रजाकामो यजेत' इति प्रजाकामस्य याग उभयो विधीयते । विधीयते चेत् कर्मान्तरम् ।

वा— फलस्यानुपादेयत्वात् 'व्रीहिभिर्यजेत' इत्यादिवत् कर्मोद्देशेन विधिः समर्पित इति अपूर्वं कर्म तत्र विधातव्यम् । ततश्च सिद्धो भेदः ।

विकारो वा, प्रकरणात् । ८ ॥

भाष्यम्—दर्शपूर्णमासयोरेव विकार एवंजातीयकः स्यात् दाक्षायणयज्ञादिः । एवं प्रकरणमनुगृहीतं भवति ।

वा— सत्यपि फलं प्रति विधाने 'सन्निधौ त्वविभागात्' इत्यनेन अकर्मान्तरता । दध्यादिवच्च गुणफलसंबन्धप्रत्ययात् प्रकृतयागबुद्धेः । यत्तु गुणो न प्रसिद्ध इति, नैष दोषः । उपांश्वादिवत् प्रकरणलभ्यत्वात् । एवंविधा च ('द्वे पौर्णमास्यौ यजेत द्वे अमावास्ये, सह कुम्भीभिरभिक्रामेत्' इत्यादिना) वाक्यान्तरेण गुणरूपविधानादस्ति प्रसिद्धिः । दध्यादिवदेव अत्रापि वैयधिकरण्येनैव संबन्धः । किञ्च 'अवस्थान्तररूपत्वाद् दध्यादेरविलक्षणा । प्रत्यासत्तेः प्रतीयन्ते सामानाधिकरण्यवत् ॥' तस्मात् दर्शपूर्णमासयोरेव अवस्थाऽन्तररूपात् विकारात् फलं न कर्मान्तरात् । एवं च प्रकरणविच्छेदो नात्यन्तं कृतो भविष्यति । यद्यपि फलवतः कथंभावेन अप्रकृतादेतद्विषये अस्त्येव प्रकरणबाधः, तथापि आश्रयत्वेन संबन्धादुपरागि च वाक्यानि प्रति अनुपपन्नसिद्धेरनुमह इत्युच्यते ।

लिङ्गदर्शनाच्च ॥ ९ ॥

भाष्यम्— लिङ्गमपि एतमर्थं दर्शयति 'त्रिंशतं वर्षाणि दर्शपूर्णमासाभ्यां यजेत । यदि दाक्षायणयाजी स्यात् । अथो अपि पञ्चदशैव वर्षाणि यजेत । अत्र ह्येव सा संपद्यते । द्वे हि पौर्णमास्यौ यजेत द्वे अमावास्ये । अत्र ह्येव खलु सा संपद्यत' इति । यदि दाक्षायणयज्ञो दर्शपूर्णमासावेव, एवं तर्हि त्रिंशत्संख्या प्रयोजनम् । ततस्तस्य त्रिंशत्संपदनुग्रहो युज्यते । तस्मादपि न कर्मान्तरम् ।

वा— त्रिंशत्संपूरणं पौर्णमास्यमावास्याद्वयकीर्तनं चाभेदं बोधयति । नहि दार्शपूर्णमासिकः त्रिंशद्वर्षयज्ञः कर्मान्तरेण पूरयितुं शक्यते । न च नियमस्यातिदेशः । येन कर्मान्तरस्यैव एतत् पञ्चदशवर्षपक्षविधानं स्यात् । न च दाक्षायणयाजित्वेन निमित्तेन दर्शपूर्णमासयोरेव पञ्चदशानर्थक्य उपजायते, संबन्धाभावात् । द्वे हि पौर्णमास्यौ द्वे अमावास्ये इति चास्य अनुपपत्तिः ।

गुणात् संज्ञोपबन्धः ॥ १० ॥

भाष्यम्— यदुक्तं संज्ञोपबन्धात् कर्मान्तरमिति । यदि दाक्षायणशब्दो न केनचिदपि प्रकारेण दर्शपूर्णमासवचनः शक्यते कल्पयितुम्, ततः उच्येत कर्मान्तरमिति । शक्नोति तु आवृत्तिगुणसंबन्धात् वदितुम् । आयनमिति आवृत्तिरुच्यते । दक्षस्य इमे दाक्षाः, तेषामयनं दाक्षायणम् । कः पुनर्दक्षः ? उत्साही । तथा साकंप्रस्थायीये-ऽपि, सहप्रस्थान गुणसंबन्धः । एवं सर्वत्र । शक्यते चेत् दर्शपूर्णमासयोर्गुणसंबन्धो वदितुम्, किमिति स एव यागः प्रतीयमानः अन्य इत्युच्यते, किमिति वा प्रकरणं बाध्यते ।

वा— उपक्रमेऽप्युपक्रान्ते पूर्वसंबन्धे च संज्ञा भेदिका भवति । न च इत्युत्पत्तिसंयुक्ता 'अथैष ज्योतिः' इत्यादेरिव प्रक्रमाभावात् । संभवति च पूर्वकर्माश्रितगुणवाचित्वेनैव इति न भिनत्ति । दाक्षायणयज्ञो हि वाक्यान्तरवशात् अनयक्प्रसिद्धेश्च आवृत्तत्वमभिधीयते । तेन च प्रकरणात् दर्शपूर्णमासाश्रितेनैव फलं लभ्यते । दक्ष इति च उत्साही शीघ्रकारी यजमानः, तदीया ऋत्विजो दाक्षाः । तेषामयनं प्रयोगो यज्ञाश्रितत्वात् दाक्षायण इत्युच्यते । साकंप्रस्थायीयेऽपि सानाय्ययवनादय कुम्भीभ्यामेव साकं प्रस्थाप्यते इत्येवमभिधीयते । तस्मात् प्रकृतप्रत्यभिज्ञानबाधः ।

समाप्तिरविशिष्टा ॥ ११ ॥

भाष्यम्— यदुक्तं फले वाक्यं समाप्तम्, प्रजाकामादेर्यागानुष्ठानं विधीयते इति । नैवम् । अविशिष्टा फले समाप्तिः । यानि अन्यानि गुणार्थपदानि गुणे फलस्य विधायकानि वाक्यानि गुणस्य फलवचनानि पर्यवसितानि, यथा 'दध्नेन्द्रियकामस्य जुहुयात्' इत्येवमादीनि तैरेतदविशिष्टम् । अत्रापि हि गुणात् फलमुच्यते । कथम् ? नैतदेवं संबध्यते प्रजाकामस्य यज्ञमनुतिष्ठेदिति । कथं तर्हि ? प्रजाकामस्य आवृत्तियज्ञमनुतिष्ठेदिति । आवृत्तियज्ञ इति यज्ञावृत्तिसंबन्धः अनुष्ठाप्यो निर्दिश्यते, न यज्ञः । तस्मात् प्रकृतयोर्दर्शपूर्णमासयोः गुणात् फलमुच्यते, न यागान्तरं विधीयते इति । एवं साकंप्रस्थायीये संक्रमयज्ञे च द्रष्टव्यमिति ।

वा— यद्यपि कर्मोद्देशेन न फलं विधीयते, तथापि कर्मफलसंबन्धाभावात् अकर्मान्तरता । यथैव हि कर्मणः फलमिति भाष्यार्थविचारणे साधितम्, तथैव 'अतुल्यत्वात्तु वाक्ययोः' इत्यत्र गुणफलसंबन्धपर्यवसायित्वमपि उक्तमिति संदेहे सति पदान्तरानुग्रहार्थं गुणादेव फलम्, न कर्मणः इति सिद्धम् ।

शा—(दाक्षायणादिः कर्मान्तरम्–) इति प्राप्ते अभिधीयते । 'स्यादेवं नामधेयत्वे, गुणस्त्वत्र विधीयते । फलस्य साकंप्रस्थानमावृत्तिश्चेत्यभिन्नता ॥'

सोम— दाक्षायणादिवाक्येषु आधानमिव अत्रापि कर्मान्तर विधेय इति प्रत्यवस्थानात् संगतिः । प्रयोजनं पूर्वपक्षे दर्शपूर्णमासप्रयोगात् बहिः सौर्यादिवत् दाक्षायणयज्ञादेः प्रयोगः, तथा दाक्षायणयज्ञस्य पञ्चदशवर्षप्रयोगेण दर्शपूर्णमासयोः त्रिंशद्वर्षप्रयोगाबाधः । सिद्धान्ते तु तस्यैव गुणविकृतप्रयोगमात्रम्, त्रिंशद्वर्षप्रयोगबाधश्चेति । सूत्रार्थस्तु– अयनेषु दाक्षायणादिवाक्येषु संज्ञोपबन्धात् कर्मान्तरं स्यात् इति ।

वि— 'यद् दाक्षायणयज्ञेन स्वर्गकामो यजेत तत् । कर्मान्तर गुणो वोऽग्न्याद्यो फलसिद्धये ॥', गुणस्यासा-

प्रसिद्धत्वात् कर्मभेदोऽत्र संज्ञया ।, गुणे त्वावृत्ति-दोषाभ्यासमाहुल्यतो न नाम तत् ॥'

भाट्ट— दर्शपूर्णमासयोः 'दाक्षायणयज्ञेन स्वर्गकामो यजेत' इति श्रुतम् । तथा 'साकंप्रस्थायीयेन यजेत पशुकामः' इति च । तत्र दाक्षायणादिपदवाच्यस्य गुणस्य लोके अप्रसिद्धत्वात् उद्भिदादिवत् नामधेयत्वावगतेः संज्ञया अभ्यासाद्वा कर्मान्तरं विधीयते फलसंबन्धस्यापि सार्वकाम्यवाक्यवशादेव प्राप्तत्वेन अन्यपरत्वाभावात् । इति प्राप्ते, अभिधीयते । यद्यपि लोके गुणो न प्रसिद्धः, तथापि दक्षस्य यजमानस्य इमे दाक्षाः ऋत्विजः, तेषां अयनं प्रयोगावृत्तिर्यस्य यज्ञस्येति व्युत्पत्त्या आवृत्ति-परत्वावगतेः, सह प्रस्थानं यस्येति व्युत्पत्त्या च सहत्वपर-त्वावगतेर्नातिरिक्तशक्तिकल्पनया नामधेयत्वाध्यवसानम् । अतः प्रमाणावृत्तिरूपः सहत्वरूपश्च गुण एव फलोद्देशेन विधीयते । आवृत्तिश्च कियतीत्यपेक्षायां 'द्वे पौर्णमास्यौ द्वे अमावास्ये यजेत' इति वाक्येन विशेषविधानात् द्विरावृत्तिरेव । सहत्वं च प्रस्थाने केनेत्यपेक्षायां 'सह कुम्भीभिरभिक्रामेत्' इति वचनात् कुम्भीभ्याम् । अनेनैव च वचनेन सहत्वाश्रयत्वमभिक्रमणस्य विदधता आवान्तरप्रकरणाभावेऽपि तदाश्रयत्वसिद्धिः । आवृत्तेस्तु प्रकरणात् दर्शपूर्णमासावेवाश्रयः । अतोऽत्र संज्ञान्तराभावात् गुणफलसंबन्धपरत्वेन च अभ्यासाभावाच्च कर्मा-न्तरम् । वस्तुतस्तु 'पूर्वपदात् संज्ञायामगः' (पा० ८।४।३ पूर्वपदस्थान्निमित्तात् परस्य नस्य णः स्यात् संज्ञायाम्, न तु गकारव्यवधाने (गगनम्, ऋगयनम्) इति स्मृत्या संज्ञायामेव णत्वावगतेः दाक्षायणयज्ञपदे संज्ञा-त्वावसायेऽपि अवयवार्थप्रतीत्या योगरूढिस्वीकारात् अवयवार्थरूपावृत्तिः अप्राप्तत्वात् फलोद्देशेन विधीयते इति न विरोधः ।

मण्डन—'भेदो दाक्षायणे नहि ।'

शंकर—'दाक्षायणगुणात् फलम् ।'

अत्र कुतूहलम्— यदेतदपरे न क्षमन्ते । नहि दर्शपूर्णमासयोः संनिधौ दाक्षायणयज्ञादिविधिः, येन तत्र गुणविधानं स्यात् । कौषीतकिब्राह्मणे हि तृतीयेऽध्याये दर्शपूर्णमासौ अनुक्रम्य चतुर्थेऽध्याये पूर्णमासे संस्थिते अनुनिर्वाप्यं वैमृधम्, दर्शे संस्थिते अदितियागं च विधाय अभ्युदितेष्टिं अभ्युदृष्टेष्टिं च विधाय 'अथातो दाक्षायण-यज्ञस्य । दाक्षायणयज्ञेन यक्ष्यन् फाल्गुन्यां पौर्णमास्या प्रयुङ्क्ते' इत्यादिना दाक्षायणयज्ञसाकंप्रस्थायीयादीनि बहूनि कर्माणि अनुक्रान्तानि । तत्र अथशब्देन प्रकरण-विच्छेदात् 'अथैष ज्योतिः' इत्यादिवत् उत्पत्तिशिष्ट-संज्ञाऽन्तरकत्वात् प्रकृतकर्मणि संज्ञाऽन्तरस्य समावेशा-संभवाच्च कर्मान्तरत्वमेव युक्तम् । नापि दाक्षायण-शब्दः दर्शपूर्णमासयोः आवृत्तिगुणयोगात् वर्तितुमर्हति, नहि दक्षस्य इमे दाक्षाः ऋत्विजः, तत्कर्तृकमयनं आवृत्तिः इति अवयवव्युत्पादनमुचितम्, येन वाक्यान्तरप्रसिद्ध-गुणपरत्वं स्यात् । 'दक्षो वै पार्वतिः एतेन यज्ञेनेष्ट्वा सर्वान् कामानवाप' (कौषी. ४।४), 'स वै दक्षो नाम तत्, यदनेन सोऽयजत, तस्मात् दाक्षायणयज्ञ इत्याख्या' इति कौषीतकिवाजसनेयकयोः अन्यथैव निर्वचनावगतेः । अतो दाक्षायणशब्दस्य गुणविधिपरत्वासंभवात् कर्मान्तर-त्वमेव युक्तम् । एवं शतपथब्राह्मणेऽपि हव्यवाहकाण्डे दर्शपूर्णमासौ अनुक्रम्य संमरणकाण्डे आधानं पुनराधानं अग्निहोत्रं चानुक्रम्य दाक्षायणयज्ञः अनुक्रान्तः । तथा च प्रकरणविच्छेदात् कर्मान्तरत्वमेव युक्तम् । यद्यपि तैत्ति-रीयादिब्राह्मणे दर्शपूर्णमासप्रकरणे दाक्षायणादिवाक्यं श्रुतम्, तथापि दाक्षायणादिशब्दस्य गुणपरत्वं उक्तरीत्या अनुपपन्नम्, इति कर्मान्तरत्वमेव युक्तम् । अधिकरणं तु गवामयनप्रकरणस्थोत्सर्गिणामयनादिविषयं योज्यम् । इत्याहुः तावत् । इति ।

संक्रमणविषयक वाक्यं यत्कस्मिंश्चिच्छाखायामन्वे-षणीयम्, तत्रैव च संक्रमशब्दस्य गुणविशेषपरत्वे वाक्यशेषश्च अन्वेषणीयः इत्युक्तं एकादशे सूत्रे ।

* दाक्षायणयज्ञाधिकरणस्य (२।३।४) अपवादः देवताऽऽलम्भाधिकरणम् (२।३।५) । कौ. २।३।५।१२ पृ. ४५, * इन्द्रियकामाधिकरणसिद्धस्यैव गुणफलसंबन्धस्य आक्षेपसमाधानात् न तेनास्य (दाक्षायणयज्ञाधि-करणस्य २।३।४) पौनरुक्त्यम् । कौ. २।३।८।५ पृ. ३६. * दाक्षायणयज्ञादिवत् अग्निहोत्रदर्शपूर्णमासहोमयोः प्रकरण-कर्मोत्पत्तिप्रमाणात् । वा. २।२।२।१६ पृ. ५०८. * न

च अन्त्यपक्षे तृतीयान्तेन ( तस्य वायव्यासु एकविंशम-ग्निष्टोमसाम कृत्वा ब्रह्मवर्चसकामो ह्येतेन यजेत इति) एक-च्छन्देन विलिङ्गसंख्यत्वात् रेवतीमात्रनिर्देशानुपपत्तिः । तेन रेवतीविशिष्टसम्बन्धीयनिर्देशोऽपि दाक्षायणयज्ञ-न्यायेन अप्राप्तरेवतीमात्रस्यैव फलसंबन्धोपपत्तेः । दाक्षा-यणयज्ञाधिकरणम् । भाट्ट. २।७।१४. * 'वायव्यं श्वेतमालभेत', 'ऐन्द्रमालभेत' इत्यादौ दाक्षायणयज्ञ-न्यायेन गुणमात्रविधानं इति पूर्वपक्षः प्रथमः । मी. २।३।५।१२ पृ. ४५.

* दाक्षिणानि । न च दाक्षिणानि नाम गुणः कश्चित् प्रसिद्धः इति सामानाधिकरण्यात् नामधेयत्वमेव युक्तम् । वा २।२।१।२ पृ. ४६६ । दाक्षिणशब्दस्य दक्षिणाकालवाचित्वात् प्रसिद्धे विधौ वाचकशब्दायोगात् अर्थाक्षिप्तवाच्यायसामानाधिकरण्याच्च नामत्वावगतेः कर्मण एव विधेयत्वात् सिद्धो भेदः । सु पृ ७१०.

* दाक्षिणाग्निकौ होमौ पिष्टलेपफलीकरणहोमौ । के. ५।१।१५।२८.

* दाक्षिणाग्निकहोमानपकर्षाधिकरणम् । ज्योतिष्टोमे अनुयाजोत्कर्षेऽपि दाक्षिणाग्निकयोः पिष्टलेपफली-करणहोमयोर्नोत्कर्षः ॥

मान्त्रवर्णिकं च नोत्कर्षेदसंयोगात् । ५।१।१५।२८ ॥

भाष्यम्— ज्योतिष्टोमे श्रूयते 'आग्निमारुतादूर्ध्व-मनुयाजैश्चरन्ति' इति । अनुयाजा उत्कृष्यमाणा दाक्षि-णाग्निकौ होमौ उत्कर्षन्ति, नेति संशयः । संबन्धादुत्कर्षन्ति इति प्राप्ते, उच्यते । नैतौ उत्क्रष्टुमर्हन्ति, येन संयोगेनानुयाजाः उत्कृष्टाः तेन अनुक्ताः, अतस्तयोरुत्कर्षो निवर्तितः इति । पदार्थानां च क्रमो भवति, न पदार्थप्रयोजनानाम् । यौगपद्येन हि पदार्थाः उपकुर्वन्तीति अवश्यम् । पदार्थानां चोत्पत्तिः क्रमवती । पृथक्शब्दत्वात् उत्पत्तेः । न पदार्थप्रयोजनस्य, युगपत् प्रयोगवचनेनाभिहितत्वात् । अतः अनुयाजोत्पत्तेः उत्पत्तिकाला अभावात् दाक्षिणाग्निकौ होमौ नोत्कृष्येयातामिति । अपि च अनुयाजप्रकर्षस्य कृतार्थे शब्दे दाक्षिणाग्निकयोर्होमयोः प्रकर्षवाचो न भविष्यतीति ।

टुप्— ( सिद्धान्तमाह— ) यद्यपि प्रकृतौ अनुयाजो-त्तरकालीनौ ( दाक्षिणाग्निकौ ) होमौ दृष्टौ, तथापि अनु-याजोत्कर्षे नोत्कृष्येते । कुतः ? असंयोगात् । कथम-संयोगः ? ( प्रसङ्गन्याय दर्शयितुं प्रश्नः । प्रसङ्गन्याय दर्शयति— ) उपमितलक्षितप्रापणेन ( उपमितेन वाक्या-न्तरेण लक्षिता या इतिकर्तव्यता तस्याः प्रापणेन ) अग्नी-षोमीयात् ( पशोः ) अयं ( सवनीयः ) धर्मान् गृह्णाति । तस्माच्च ( सवनीयः ) भिन्नेषु सवनेषु विप्रकृष्यते ( 'पशुना प्रातःसवने चरन्ति' इत्यादिवचनात् ) । इतिकर्तव्यता चास्य तद्विप्रकर्षादेव विप्रकृष्यते । पदार्थप्रयोजनाना एक-कालत्वात् ( एकस्मिन्नेव काले संभूय सर्वैरवान्तरोपकारैः प्रधानानि उपकर्तव्यानि । तेन ) यावत् क्रतुप्रकारः ( सर्वाङ्गजन्य. ) अभिनिर्वर्त्यते, तावत् अन्यान्या-धानादिजनितः ( अवान्तर. ) उपकारः आहोते । यावत् पशोः अन्य. पदार्थः, तावदाद्य ( अवान्तरोपकारद्वारेण पदार्थः अवतिष्ठते ), अन्त्योऽपि यावदाद्य. । एवं सिते पशौ मध्ये निपतन् पुरोडाशः उपमितलक्षणप्रापणेन अग्नीषोमीयपुरोडाशात् आगत व्यापार ( विधिप्रकार ) अभिलषन् तमुपादयति प्रापयति च । ( ननु सवनीयस्य पशोरपेक्षत्वात् तत्पुरोडाशस्यापि आग्नेयविकृतित्वे सति, कथं अग्नीषोमीयविकृतित्वमुच्यते । नैष दोषः । अग्नी-षोमीयपशुपुरोडाशस्तावत् अग्नीषोमीय एव । स एव च सवनीयपशुपुरोडाशेऽपि अतिदिष्टः । तेन सवनीयपशु-पुरोडाशस्य देवतासाम्यात् आग्नेयत्वेऽपि पूर्वोपगताग्नी-षोमीयप्रकृतिकत्व जायेत, इति युक्तमुक्तं अग्नीषोमीय-पुरोडाशागतेन व्यापारं अभिलषन् इत्यादि ) । प्रापितान् ( च ) अवसाद्य ( अकारणम् ) समीपे अग्नीषोमीया-न्यङ्गानि ( योजयति । तथापवादमाह— ) तत्र पशुना प्रयुक्तस्य आगतव्यापारस्य समीपे गृहीतत्वात् ( पुरोडाश-स्य ) समीपे न करोति ( नहि अन्यप्रयुक्तेनापि कार्य-सिद्धौ सत्यां स्वप्रवृत्तिर्युक्ता । अस्यापि अपवादमाह— ) अप्रयुक्ता तु पशुना ये ( अङ्गाः ) न समीपे कृताः, तेषां ( पिष्टलेपादीनां पशुना उपयोगाभावात् ) उत्पत्ति-प्राप्त्युपदर्शनात् अपेक्षते ( पुरोडाशः । इतरेषां तु उत्पत्तिमात्र करोति नोपयोगम् ) । तस्यासौ व्यापारः

अपूर्वमन्तरेण नोपपद्यते । अपूर्वाण्यपि पदार्थैर्विना न सन्ति । इति अन्यथाऽनुपपत्त्या ( व्यापारप्रयोजकेन- ) विधिना पदार्था आक्षिप्यन्ते । यास्तु ( परप्रयुक्तान् ) प्रसङ्गेन उपकारान् गृह्णाति, तेषु तस्य ( प्रयाजिनो विधेः ) व्यापारो नास्ति, येनैव ते प्रयुक्ताः तस्यैव ( तन्त्रिणः पशुविधेः ) तत्र व्यापारः । ( प्रकृतमनुत्कर्षं दर्शयति- ) पदार्थानां च क्रमः आकाङ्क्ष्यते, न पदार्थप्रयोजनानाम् । तस्मात् दाक्षिणाग्निकहोमयोः (पुरोडाशार्थयोः) अनुयाजानां च (पाशुकानां) नास्ति सः ( क्रमः ) । अनुयाजप्रक्लृप्तः तेन ( पुरोडाशेन ) उपकारो गृह्यते, न पदार्थैः । अतः परकीयैः पदार्थैरनुत्कृष्यमाणैः न दाक्षिणाग्निकौ होमौ उत्कृष्येते ।

अत्र ( भाष्य- ) ग्रन्थः 'पदार्थानां च क्रमो भवति, न पदार्थप्रयोजनानाम् । यौगपद्येन हि पदार्था उपकुर्वन्ति इति वक्ष्यामः' इति । कथमित्याकाङ्क्षायां यौगपद्येन उपकारा गृह्यन्ते । यत्र यस्मिन्नेव क्षणे एकः ( उपकारः ) गृह्यते, तस्मिन्नेव द्वितीयादयोऽपि । तस्मात् कथम्भावग्रहणवेलायां नास्ति क्रमः । अत्र अपरः ( भाष्य- ) ग्रन्थः "पदार्थानां चोत्पत्तिः क्रमवती पृथक्शब्दत्वादुत्पत्तेः, न पदार्थप्रयोजनस्य' इति । ( तत् व्याचष्टे- ) पदार्थग्रहणे हि क्रमो भवति ( अनेन उत्पत्तिः क्रमवती इति व्याख्यातम् । पृथक्शब्दत्वादुत्पत्तेः इत्येतत् व्याचष्टे- ) शब्देन हि पदार्थोऽवबोध्यते, एवं द्वितीयस्तृतीयोऽपि ( शब्देनैव ) तत्र ( उत्पादकस्य शब्दस्य क्रमवत्त्वात् ) अवश्यं भवितव्यं क्रमेण अनुष्ठानावबोधेन । ( न पदार्थप्रयोजनस्य इत्यस्यार्थमाह- ) यः पुनरुपकारस्तदीयः, स एकः ( एकेन प्रयोगवचनेन एकस्मिन्नेव काले एककथंभावस्य विशेषणतया कल्प्यमाना उपकाराः एकतामापन्ना भवन्ति )। तस्मिन् ( युगपत् ) गृह्यमाणे कीदृशः क्रमः ( नास्तीत्यर्थः )। अतो न ( पाशुक- ) प्रयोगवचनापरिगृहीतानां तत्क्रमव्यपनीतानामपि ( पिष्टलेपादीनां तदीयैरनुयाजैः ) अस्ति क्रमः । तस्मात् स्वस्थानादेव दाक्षिणाग्निकौ होमौ ( नोत्कृष्येते इति )।

गोरा—पूर्वपक्षेण संगतिः।सूत्रार्थस्तु- प्रधानानुपकारकं प्रासङ्गिकं पाशुकानुयाजादिकं दाक्षिणाग्निकहोमादीन् नोत्कर्षेत् असंयोगादिति ।

वि—' सवनीये पिष्टलेपफलीकरणहोमकौ । उत्कृष्यौ न वा, ऽऽद्यः स्यादनुयाजोत्तरत्वतः ॥, पश्वर्थाः स्युरनूयाजाः पुरोडाशगताविमौ । उभौ होमौ प्रयोगस्य भेदान्नोत्कर्षमर्हतः ॥'

भाट्ट— सवनीयपशुतन्त्रं सवनीयहविःषु प्रवर्त्यते । ऐकपशुकत्वं च पशुपुरोडाशे इति वक्ष्यते । प्रकृते च ये उपकाराः प्रयाजानूयाजादिजन्याः तत्रतो लब्धाः तज्जनकीभूतपदार्थांशे नातिदेशः, अपेक्षाऽभावात् । ये तु न लब्धाः आज्यभागपिष्टलेपफलीकरणहोमादिजन्याः, तत्पदार्थांशेऽप्येवातिदेशः इत्यपि वक्ष्यते । तदिह पाशुकानूयाजानां देशे हृदयादियागोत्तरत्वात् सवनीये चाग्निमारुतशस्त्रोत्तरत्वात् तत्पूर्वभाविसवनीयहविःपशुपुरोडाशादीनामङ्गभूता पिष्टलेपफलीकरणाख्यहोमाः किमनूयाजोत्तरमुत्कर्ष्या, उत नेति चिन्तायाम्, प्रकृतौ दर्शपूर्णमासयोः पिष्टलेपफलीकरणहोमानां परप्रयुक्तानूयाजैरेव सह क्रमत्वात् इहापि सत्यपि भिन्नप्रयोगविधिपरिग्रहे अङ्गभूतस्य अन्याङ्गभूतानुयाजोत्तरत्वस्यापि संभवेन उत्कर्षे प्राप्ते, न तावत् विकृतावेव क्रमश्रुतिः, भिन्नप्रयोगविधिपरिग्रहात्, पुरोडाशादिप्रयोगविधिना विहितानां पिष्टलेपफलीकरणहोमेतराभक्ष्याणां व्यवधायकाभावात्, व्यवधायकाभावविशिष्टप्रकृतिदृष्टपौर्वापर्यस्य क्रमकल्पकत्वेन उत्कर्षे तत्क्रमबाधप्रसङ्गाच्च, पाशुकप्रयोगविधिविहितानां समिष्टयजुरन्तानामेवाङ्गानां तत्प्रमाणेनैव क्रमवत्त्वं, तद्बाधस्यापि प्रसङ्गाच्च । अपि प्रकृतिवत् अनूयाजोत्तरत्वस्यापि, प्रकृतौ हि पाठकल्पितवाक्येन क्रमविशेष एव विधीयते, न तु क्रमोऽपि, तस्य प्रयोगविध्याक्षेपादेव प्राप्तेः । अतश्च प्रकृते भिन्नप्रयोगविधिपरिगृहीतानां सामान्यतः क्रमस्याप्राप्तौ तदाश्रितस्य नियमस्याप्राप्तिः । न च आक्षेपात् पूर्वमेव अत्र घनविधिवत् प्रकृत्यङ्गीकारेण पाठकल्पितवाक्यस्य क्रमविधायकत्वमेवेति शक्यं वक्तुम्, तद्वदिह पाठकल्प्यस्य विधेः कल्प्यत्वाभावेन तमनपेक्ष्य आक्षेपप्रवृत्तिन्यायोगात् । इतरथा हविरासादनयोरपि पाठेन क्रमापत्तेः । अतश्च प्रकृतितोऽपि अनूयाजोत्तरत्वस्याप्राप्तेः पुरोडाशादङ्गोदात्तोत्तरमेव पिष्टलेपफलीकरणहोमौ ।

मण्डन— 'शेऽकृत्यर्थे पिष्टलेपि ।' पिष्टलेपः भवेत अस्मिन् कर्मणि तत् पिष्टलेपि । १७.

शंकर— 'नैवं प्राशङ्गिके मतः ।' १९.

● दाक्षिणात्यः । 'क्रमानुक्रमुना प्राप्य दाक्षिणात्यस्य तुष्यति' । वा. १।३।३।७ पृ. २०४, ● दाक्षिणात्याः 'श्यामा वृहन्तो लोहिताक्षाः' इति भाष्यम् । 'यदिहं दाक्षिणात्यानां लोहिताक्षादि कल्प्यते । अन्येषामपि तत् दृष्टम्' ॥ १।३।७।१८ पृ. २४९. ● दाक्षिणात्यैः मातुलं नाम कर्म क्रियते । तत्र स्वस्तकुल्भगनं भवज्ञाकाविस्थावरदेवतापूजनम् । वि. १।३।८. ● दाक्षिणात्यानां मातुलकुहितुद्वाहासन्दीस्थभोजनादीनि, विमरजनोच्छिष्टस्पृष्टभोजनम्, सर्वकर्णपरस्परस्पृष्टताम्बूलादन-तद्धनालामाचमन- निर्णेजकधौतार्द्रमार्द्रवस्त्रपरिधान—ब्रह्महत्यातिरिक्तमहापातककार्यपरिहरणादीनि च धर्मत्वेनोपगोदाहरणानि । वा. १।१।३।७ पृ. २०४.

● दातुः यागवचतुष्कपालेष्टिः, न तु भक्षक प्रतिग्रहीतुः । वि. ३।४।१९, ● दातुः समर्पणादिरूपः एको व्यापारः, अपरः प्रतिग्रहीतुः स्वीकरणरूपः । इति दाने द्वौ व्यापारौ । वा. ३।४।१०।२८ पृ. ९६०, ● दातृदोषेण नर्मदन्यप्रतिग्रहाणां दुष्टत्वात् । ३।४।१०। २८ पृ. ९५९, ● दातृव्यापार एवासौ परस्वत्वापादनं नाम । ३।४।१०।२८ पृ. ९६०.

● दात्रादि ( दात्रं लवित्रं ) वजिभ्यामम्, तत् करणत्वं प्रतिपत्तुं शक्नोति । वा. ६।१।१।१ पृ. १३४७.

● दानं अदृष्टार्थं शारस्वतसत्रगतकाशेष्टौ । भा. १०।२।१५।४४–४५. ● दानं आत्मस्वत्वध्वंसपूर्वकं परकीयस्वत्वापादनम् । वि. ६।७।१. ● दानं आधाने अपरिमितस्य नाम सहस्राधिकस्य । भा. ६।७।११।२३ –२५, ● दानं आधाने सकैकादिमिचसंख्याकगवाम् । ६।७।१०।२१–२२, ● दानं मवायुतस्य अश्वसहस्रस्य च सकृत् पौण्डरीके । १०।६।१७।६२–६८, ● दानं दक्षिणार्थनिर्दिष्टमागस्यैव सर्वस्य विश्वजिति । ६।७।७। ८–१३. ● दानम् । दातव्यस्यैव तद् रूप यत् स्वत्वपरित्यागेन परस्वत्वापादनम् । भा. १०।३।१२।५० । ददातिश्च स्वत्वनिवृत्तिपरस्वत्वापादनरूपम् । तथ यत्रे एकैकं प्रति कर्तव्यम् । यदि समुदायं अभीहन्य परित्यजेत्, तथा सति त्याग एव कृतो भवेन्न ददातिः । तुप्. ● दानं द्रव्याय अद्दष्टभागार्गं दार्शपौर्णमासिकपत्नीसंयाजगतकृतात्मसिहोमनिमित्तकवैश्वानरेष्टौ । भा. १०। २।१६।४७, ● दानं नाम आत्मीयस्य द्रव्यस्य परस्वत्वापादनम् । तच्च परः स्वधान् स्यादित्येवमर्थम् । १२।४। ५।१९, ● दानं नास्ति अश्वादीनां ( उभयतो दतां ) विश्वजिति सर्वस्वदाने । ६।७।२।४, ● दानं नास्ति पित्रादीनां विश्वजिति सर्वस्वदाने । ६।७।१।१–२, ● दानं नास्ति महाभूमेः विश्वजिति सर्वस्वदाने । ६।७।२।३, ● दानं नास्ति विश्वजिति धर्मार्थसेवकस्य शूद्रस्य । ६।७। ५।६, ● दानं प्रभवता हि शक्यं दातुम्, नाप्रभवता । ३।४।१७।५०, ● दान पक्षे ऋत्विग्भ्यः परिक्रयार्थमेव, न तु धर्मपात्रम् । १०।२।८।२२–२८, ● दानं विप्रसामान्याय न संभवति, किन्तु तद्विशेषस्य । संकर्ष. २।४।२. ● दानं विभज्य कर्तव्यं ज्योतिष्टोमे द्वादशोत्तरशतगोदक्षिणायाः । भा. १०।३।१२।५०–५२. ● दानं विश्वजिति दक्षिणाकाले विद्यमानस्य स्वीयस्य । ६।७।६।७, ● दानं विश्वजिति विद्यमानस्यैव सर्वस्य स्वीयस्य । ६।७।४।५, ● दानं सर्वस्य शाद्दशाहान्तर्गतेऽपि विश्वजिति ( भाष्यमते, वार्तिकमते तु द्वादशाहदक्षिणा अहर्गणस्येऽपि विश्वजिति ) । ६।७।८।१४–१७. ● दानानि सदाचारः । वा. १।३।३।७ पृ. २०१. ● दानस्य पुरुषार्थस्य दीक्षितकर्तृकस्य प्रतिषेधः ज्योतिष्टोमे । भा. १०।८।७।१२–१५. ● दानस्य विधिलक्षणत्वे सति दानाङ्गत्वेन अचोदितेऽपि प्रतिग्रहे, विहिते दाने साध्ये तत्सिद्ध्यर्थं प्रयोगविधिना प्रतिग्रहस्य अनुमतत्वात् न तत्करणे पदार्थपरिमाणशास्त्रापत्यमध्यो दोषः । तु. पृ. १४९०.

## ※ दानेऽपाकोऽर्थलक्षणः । १०।३।८।२६ ॥

आग्रयणे 'वत्सः प्रथमजो दक्षिणा' । तत्र अन्वाहार्यधर्माः कर्तव्याः इत्युक्तम् । परतु वत्सस्य दाने कर्तव्ये अपाकः पाको न कर्तव्यः । जीवन्नपि हि वत्सः अर्थलक्षणं परिक्रयं साधयितुं समर्थः । यदि पाकः क्रियेत

अश्रुतः प्रतिषेधः आचारविरुद्धोऽनुष्ठीयेत । तस्मात् पत्नी न पाकः इति सिद्धान्तः । के.

■ दाने द्वौ व्यापारौ एकः प्रतिग्रहीतुः स्वीकरणम्, अपरो दातुः तत्समर्थाचरणं समर्पणादिरूपम् । वा. ३।४।१०।२८ पृ. ९६०.

■ दानक्रिया उद्देश्यत्यागलक्षणा क्रिया । ब्राह्मणोद्देशेन पश्वेऽपि अश्वे तदुद्देशेन त्यागे क्रियमाणे ब्राह्मणसंबन्ध-प्रसिद्धेः, अश्व्याप्रियमाणेऽपि च 'युष्मदिदं न मम' इति तदुद्देशेन त्यागे कृते तत्संबन्धप्रसिद्धेः अन्वयव्यतिरेकाभ्यां उद्देशत्यागलक्षणैव क्रिया संबन्धापादिका अवधीयते । सु. पृ. ११०.

* दानविधानेनैव प्राक् परस्वत्वापादनात् अपर-वस्तुता तस्य ( प्रतिग्रहस्य ) आक्षितत्वात् । वा. ३।४। १०।२८ पृ. ९६१.

* दानशब्दः अधिरण्यादीनां अदृष्टार्थे त्यागे प्रसिद्धः । दृष्टार्थाया भृतावपि दानशब्द. 'अभिदेया' इत्यादौ प्रसिद्धः । वि. १०।२।८. * दानशब्दः कर्मकरेषु सम्यु परिक्रयार्थ इत्युक्तम् । भा. १०।२।१५।४४.

* दानहोमपाकानामुक्तौ दीक्षाकालोत्कर्षे । भा. ३।५।१०।३८–३९. * दानपाकहोमानां क्रतुप्रयुक्त-मिश्रानां प्रतिषेधः पर्युदासः ज्योतिष्टोमे । १०।७।७। ३९–१५.

☞ 'दामव्यालकटन्यायो न तत्र ( रामस्य ) स्यात् कदाचन' इति वसिष्ठ उवाच ( दामः व्यालः कटः एते त्रयो राक्षसाः अतीवदुर्दमा अपि द्वैतनिष्ठत्वात् कामक्रोधलोभाविष्टा भूत्वा अन्ते विनष्टा एवेति कथा योगवासिष्ठे ) । संग्रह:.

* दारसंग्रहः न द्विः । अपित्व एव सर्वत्र 'धर्मे च अर्थे च कामे च नातिचरितव्या' इति । एवं सती अतिचरिता स्यात् । अतोऽपि न द्विदारसंग्रहः । एकैव भार्या कर्मार्था अपत्यार्था च । भा. १०।८।२।१७, * दारसंग्रहः विद्याग्रहणोत्तरकालः । ६।८।२।१३.

* दारुहारो नैष्कर्त्त्र्यो निष्कर्तृत्वम् कर्मयोगे वर्तते, एवं वा पते मयस्य कनिजः । भा. १०।२।८।२८.

* दार्विहोमिको ब्राह्मणः शिवीनाम् । अध्वनाना दार्विहोमिको ब्राह्मणः । ( दार्विहोमिकः स्मार्तकर्मकर्ता उपाध्यायः ) । भा. ८।४।२।२.

* दार्शपौर्णमासिकं होतुर्वरण प्रवृत्ते कर्मणि क्रियते । भा. १२।१।१८।३५. * दार्शपौर्णमासिकं होत्रकाण्डम् ( तैत्रा. ३।५।७ ), आध्वर्यवकाण्डम् ( तैत्सं. १।१।४ ), याजमानकाण्डं च ( तैत्सं. १।६।२ ) । के. * दार्शपौर्णमासिकानि पात्राणि जुह्वादीनि सौमिक-पात्रैश्चमसैः सवनीयपुरोडाशादिषु प्रसङ्गसिद्धानि न भवन्ति । भा. १२।१।४।१०–११, * दार्शपौर्ण-मासिको विध्यन्तः ऐन्द्राग्नादिषु इष्टिषु । ८।१।४।११। पशौ च । ८।१।७।१२, * दार्शपौर्णमासिको विध्यन्तः चातुर्मास्यादिगतवाजिने सौत्रामणीगतसुराग्रहेषु च । औषधविकृतिः सुरा, सांनाय्यविकृतिर्वाजिनम् । ८।२।१। १–९, * दार्शपौर्णमासिको विध्यन्तः दीक्षणीयायां आतिथ्यायां प्रायणीयायाम्, पशौ च । ८।१।३।१, * दार्शपौर्णमासिकस्य फलनिगमकर्तृकत्र्युपायस्य होत्रादेः नातिदेशः । ८।१।१३।१०–१२.

* दार्शपौर्णमासिकनिर्वापालम्भन्यायेन (आलम्भ-निर्वापन्यायेन ३।३।५।१२–१९ ) यदि विशेषणमिष्यते तर्हि दार्शन्यायेन कर्तव्यतावचनेन लिङ्गेन विशेष्यम् ( सुधा— कर्तव्यतावाचिना प्रत्ययेन उपलक्षणीभूय व्याप्रुत्यास्त्वविशेषणं कर्तव्यम् ) । वा. ३।२।८।२१ पृ. ७७९. * 'यदि आलम्भनिर्वापौ विधीयेते तर्हि न प्राकृतौ तौ विहितौ । यदि न विधीयेते ततः प्राकृतौ अन्वेते यौ आलम्भनिर्वापौ कर्तव्यौ' इति आलम्भ-निर्वापाधिकरणसाध्योक्तन्यायेन कर्तव्यतावाचिना प्रत्ययेन उपलक्षणीभूत्वा व्याप्रुत्यास्त्वविशेषण कर्तव्यमित्युक्तम् । सु. पृ. ११२३.

* दार्शपौर्णमासिकपत्नीसंयाजाङ्गभूतेन आज्येन सह विकल्पमाना आपनी । वा. ३।३।१०।२३ । 'आपन्या पत्नीः संयाजयन्ति' । भा. । न आज्ये पत्नीसंयाजा इष्यन्ते । कु.

§ दार्शपौर्णमासिकपत्नीसंयाजगतकपालाभिहोमनिमित्तकवैश्वानरेष्टौ द्वेष्याय दानं अदृष्टमात्रार्थम् ॥

द्वेष्ये चाचोदनाद् दक्षिणाऽपनयः स्यात् । १०।२।१६।४७॥

भाष्यम्—दर्शपूर्णमासयो इदमाम्नायते 'यदि पत्नी संयाजयन् कपालमग्नि जुहुयात् ( कपालं अग्निरूप कपालोपरि इत्यर्थः ), वैश्वानरं द्वादशकपालं निर्वपेत् । तस्य एकहायनो गौर्दक्षिणा । तं स द्वेष्याय दद्यात्' इति । तत्र संशयः किं परिक्रयार्थं एकहायनस्य दानम्, उत धर्ममात्रमिति । किं प्राप्तम् ? दक्षिणाशब्दात् परिक्रयार्थमिति । परिक्रयार्थे हि दक्षिणाशब्दो भवति । एवं प्राप्ते, ब्रूमः । द्वेष्ये च धर्ममात्रं दानमिति चशब्देन अवक्रियते । कुतः ? अचोदनात् द्वेष्यस्य ऋत्विजः । नहि द्वेष्य ऋत्विक् भवति, 'ऋत्विगाचार्यौ नातिचरितव्यौ' इति । यदा परिक्रीतो येनैव कर्म प्रयोजनं नास्ति, तदा किं दक्षिणाशब्दः करिष्यति ? अपि च परिक्रयार्थे सति दक्षिणाऽपनयः स्यात् चोदकप्राप्त अन्वाहार्यं अपनीयेत, तत्र चोदको बाध्येत । तस्मात् धर्ममात्रं एकहायनस्य दानम्, अनृत्विजे दानमिति ।

टुप्—द्वेष्ये चाचोदनाद् दक्षिणाऽपनयः स्यात् । ( अत्र टुप्टीकायां अचोदनात् इति पञ्चम्यन्तः पाठः । एतेन तु अचोदनेन इति तृतीयान्तः पाठः । सूत्रार्थकथनकाले तु 'अचोदितत्वात्' इति व्याख्यातम् ) अपि च परिक्रयार्थे सति दक्षिणाशब्दः स्यात् । चोदकप्राप्तः अन्वाहार्ये अपनीयेत, तत्र चोदको बाध्येत इति अयुक्तोऽयं ( भाष्य— ) पक्षः । कथम् ? पत्नीसंयाजनवेलायां अन्वाहार्यो दत्तः । यद्यपि निमित्ते इष्टिः ( वैश्वानरी ) विधीयते, तथापि ( प्रधानदक्षिणयैव ) प्रसन्नेन ( कार्यस्य ) निवृत्तत्वात् नान्वाहार्यं ( चोदकेन ) प्राप्नोति ।

शा— दर्शपूर्णमासयोरेव नैमित्तिकमिष्ट्यन्तरमध्ये एव क्रियते ।

सोम— पूर्वत्र दक्षिणाशब्दाभावात् परिक्रयार्थत्वाभावेऽपि दक्षिणाशब्दात् परिक्रयार्थं भवितिसंगति । सूत्रार्थस्तु— द्वेष्ये च यद् दानम्, तस्य दक्षिणात्वात् अपनयः स्यात् अदृष्टार्थता स्यादित्यर्थः । द्वेष्यस्य ऋत्विजः अचोदितत्वादिति ।

वि— श्रीये धर्माय वा द्वेष्ये दानं स्याद्, दक्षिणोचित ? क्रयाय, नैव द्वेष्यं वा नर्त्विजो धर्मकृत् ततः ॥' धर्मकृत् अदृष्टजनकम् ।

भाट्ट— दर्शपूर्णमासयो 'यदि पत्नी संयाजयन् कपालमग्निं जुहुयात्, वैश्वानरं द्वादशकपालं निर्वपेत् तस्यैकहायनो गौर्दक्षिणा तं तु द्वेष्याय दद्यात्' इति श्रुतम् । तत्र किमिदं दक्षिणादानमदृष्टार्थम्, उत ऋत्विगानत्यर्थमिति चिन्तायाम्, दक्षिणाशब्दस्य आनतिकरद्रव्यवाचित्वेन तद्दानस्य आनत्यर्थं प्रतीते, नादृष्टार्थं कल्पनोचिता । न चास्या प्रयोगमध्यवर्तिनिमित्तार्थत्वेन प्रयोगमध्यवर्तिना प्रधानदक्षिणयैव प्रसक्तसिद्धेः दक्षिणान्तरानपेक्षत्वादेव नानत्यर्थता, दक्षिणाविधानान्यथाऽनुपपत्त्या आनतिविशेषकल्पनेन तदर्थत्वोपपत्ते । अस्तु वा दक्षिणाऽऽम्नानबलात् अस्याः प्रयोगबहिर्भूतत्वमेव । निमित्तानन्तर्ये तु कालेऽपि तद् एवधानेऽपि न विरुध्यते । न चैवमपि 'ऋत्विगाचार्यौ नातिचरितव्यौ' इति स्मरणात् ऋत्विजो द्वेष्यत्वानुपपत्ते द्वेष्यसंप्रदानकदानस्य आनत्यर्थत्वानुपपत्तिः, ऋत्विक्त्वस्योपयुक्तत्वात् तस्य द्वेषनिषेधेऽपि पूर्वकृतद्वेषस्य आर्त्विज्ये बाधकाभावात्, यद्वापि द्वेष्यत्वाभिव्यक्तिनिषेधे तस्य पुरुषार्थतया निषेधमुल्लङ्घ्यापि करणे वैगुण्याभावाच्च । क्रत्वर्थत्वेऽपि वा निषेधस्य सामान्यविषयत्वेन दक्षिणाऽऽम्नानबलकल्प्यद्वेष्यानियमविधिना विशेषविषयेण बाधोपपत्तेश्च । अतोऽस्य दक्षिणात्वात् कर्तव्या एव अन्वाहार्यधर्माः, पाकादयस्तु अर्थलोपात् निवर्तन्ते । इति प्राप्ते, न तावदत्र प्राकृतदक्षिणादानानुवादेन गुणमात्रविधिः संभवति, प्राकृतदानकार्यस्य आनतेः अन्वाहार्येणैव निष्पन्नतया प्राकृतदानस्य इह अप्राप्तत्वात्, तदनुवादेन अनेकगुणविधानासंभवाच्च । अतश्चावश्यं तच्छब्दवाच्यगुणद्रव्यविशिष्टद्रव्यम्, द्वेष्यश्च संप्रदानमिति उभयविशिष्टदानान्तरमेवात्र विधेयम् । तदपि च न प्राकृतकार्यार्थतया, तस्य पूर्वमेव निष्पन्नत्वात्, द्रव्यकर्तृकल्पनेऽयत्नस्य दर्श

पूर्णमासयोः प्रमाणान्तरासिद्धतया तत्संप्रदानकर्मत्वस्य नैरन्तर्यासंभवेन आनतिविशेषस्यापि कल्पयितुमशक्यत्वाच्च। द्वेष्यसंप्रदानकदानाम्नानबलादेव अस्या प्रायश्चित्तेष्टेः प्रयोगबहिर्भावे द्वेष्यकर्तृकनिधिनिमित्तानन्तर्यकार्यं प्रयाजाद्यंशे अतिदेशं चानपेक्षित च प्रकल्प्य आनन्तर्यविकल्पने तु तवैव गौरवम्। न हीदं फलमुखम्, एतत्कल्पनमन्तरेण आनतेरनुपपत्त्यभावात्। अतो वरमदृष्टार्थमेवेदं दान प्रयोगमध्यक्रियमाणाया एव प्रायश्चित्तेरङ्गम्। दक्षिणाशब्दस्तु सच्छब्दापेक्षितार्थसमर्पकार्थवादे श्रुतो द्वेष्यानतिकरणमात्रेण अगत्या कथञ्चिन्नेयः। अतः अन्वाहार्यधर्माणामप्रसक्तत्वादेव निवृत्तिः। अध्यायसंगतिस्तु पूर्वपक्षे पाकलोपात् द्रष्टव्या। १५.

मण्डन— 'दानं द्वेष्याय नानतिः।'

शंकर— 'द्वेष्य आश्रित्य न नो मतः।' नः अस्माकम्।

* दार्शपौर्णमासिकी वेदिः सौमिकेष्टिपश्वादिषु सौमिकवेद्या प्रसङ्गसिद्धा। सौमिकवेदिन्यायः। भा. १२।१।२।८–९, * दार्शपौर्णमासिकी वेदिः हविरासादनार्था। सौमिकी प्रचारार्था। १२।१।३।८.

* दार्शिकसांनाय्यपयोधर्मातिदेशः वैश्वदेव्यामिक्षायाम्। वि. ८।२।८.

* दाशतयी दशमण्डलयुक्ता ऋक्संहिता। वि. ३।१।८. * दाशतयीभ्य उष्णगायत्रीणां समानयनं बृहस्पतिसवादौ। भा. ८।३।६।१२–२६, * दाशतयीभ्यः मानवीनामेकादशानामृचामानयनं विकृतिविशेषे सोमारौद्रेष्टौ सामिधेन्यर्थम्। १०।६।११।७२–७६.

* दास्यादिभागान्तरस्य अध्वर्योः वाक्येनश्रुतयजुर्युक्तत्वेन न बाधः। भा. १०।३।२१।७४–७५.

* दाहे कृत्स्नपुरोडाशस्य जाते क्षामेष्टिः प्रायश्चित्तम्। भा. ६।४।५।१७–२१, * दाहे सोमस्य पञ्च गाः दक्षिणा दद्यात्। १०।३।२५।५९.

■ दाहकदाह्यन्यायः। दाहकः अग्निः दाह्यकाष्ठाकारं भजते, तथा चैतन्यं विषयाकारं भजते। संग्रहः, शाहरी, ६६८.

* दिक् आकाशदिक्कालात्मनां परमाणुदृष्टान्तबलेन नित्यत्वम्। वा. १।३।८।२७ पृ. २८५. * दिक् प्रत्यक्षैव मीमांसकमतेन। रत्न. १०।४।१२।२३. * दिशः षडिन्द्रियजन्यप्रत्यक्षविषयत्वं नावयवविषयसंबन्धित्वेन प्राच्याः पर्वतो दृश्यते इत्याद्यनुभवात्। मणि. पृ. १७०. * दिशामवेष्टीनां द्वेधा प्रयोगः राजसूयान्तःपाती बहिःपाती च। अभावयकार्येण ब्राह्मणेन वैश्येन वा दिशामवेष्टयः स्वातन्त्र्येण कर्तुं शक्यन्ते। तत्राङ्गानां तन्त्रम् 'एतयाऽन्नाद्यकामं याजयेत्'। वि. ११।४।३, * दिशामवेष्टीनां याज्याङ्गानि, तेषां राजसूये अन्तःप्रयोगे भेदः रूपविशिष्टेन दक्षिणाभेदेन प्रयोगभेदावगमात्। बहिःप्रयोगे तु तन्त्रम्। ११।४।२.

* दिङ्मोहाभिधानं आकुलीभावसामान्यात्। तथा च लोके कर्तव्यतासु 'दिशो मे परिभ्रमन्ति' इति व्यवहारो भवन्ति। वा. १।२।१।१० पृ. १२६.–

* दिग्वादः शाखावादश्च। दर्शपूर्णमासयोः वत्सापाकरणार्थां शाखामधिकृत्य 'प्राचीमाहरति उदीचीमाहरति प्रागुदीचीमाहरति' इति श्रुतम्। अत्र प्राच्यादिशब्देन दिगुक्ता, प्राच्यादिदिशि गत्वा शाखा आहर्तव्या इति यो वादः स दिग्वादः। अथ प्राच्यादिशब्दो न दिग्वाचकोऽत्र, किन्तु कस्मिंश्चिद्दिशि गता पलाशवृक्षस्य या प्राच्यादिदिशि विरूढा शाखा, सा आहर्तव्या इति यो वादः स शाखावादः। वादः पक्षः इत्यर्थः। शाखिनो वादो 'शाखाया तत्प्रधानत्वात्' ४।२।२।७ इत्यत्र उदाहृतौ भाष्ये। के.

* दिग्विभागः अर्थवादः प्राचीनवंशस्तुतये। ज्योतिष्टोमे 'प्राचीनवंशं करोति देवमनुष्या दिशो व्यभजन्त। प्राचीं देवाः, दक्षिणा पितरः, प्रतीचीं मनुष्याः, उदीचीं रुद्राः। यत् प्राचीनवंशं करोति देवलोकमेव तद्यजमान उपावर्तते' इति। वि. ३।४।६.

■ दिग्विभागश्च तद्वत् संबन्धस्यार्थहेतुत्वात्। ३।४।२।१०॥

ज्योतिष्टोमे दिग्विभागः श्रूयते 'प्राचीं देवा अभजन्त, दक्षिणा पितरः, प्रतीचीं मनुष्याः, उदीचीमसुराः' ('उदीचीं रुद्राः' इति पाठान्तरे) इति। तत्र

प्रतीची मनुष्याः इत्यत्र विधिर्वा अर्थवादो वा इति विचारे सिद्धान्तमाह । 'प्राचीनवंशं करोति' इत्यनेन विधिना एकवाक्यत्वात् सर्वं दिग्विभागवाक्यं अर्थवादः, न विधिः । तद्वत् पूर्वोक्तनिवीतवाक्यं यथा उपवीतविधेरर्थवादः तथा इदमपि । कुतः ? संबन्धस्य मनुष्यप्रतीचीसंबन्धस्य अर्थहेतुत्वात् अर्थवादार्थभूतस्तुतौ आलम्बनतया हेतुत्वोपपत्तेः । अथवा पूर्वाह्णे म्रियमाणानां मनुष्याणां आदित्यं पृष्ठतः कर्तुं प्रतीचीसंबन्धस्य अर्थतः हेतुत्वात् इति । के.

* दिग्विभागाधिकरणम् । ज्योतिष्टोमे श्रुतो दिग्विभागः प्राचीनवंशविधेरर्थवादः ॥

दिग्विभागश्च तद्वत् संबन्धस्यार्थहेतुत्वात् । ३।४।२।१०॥

भाष्यम्— ज्योतिष्टोमं प्रकृत्य श्रूयते 'प्राची देवा अभजन्त दक्षिणा पितरः प्रतीचीं मनुष्या उदीचीमसुराः' इति । अपरेषाम् 'उदीची रुद्राः' इति । तत्र संदेहः किं विधिः, उतार्थवादः । विधि. उत किं मनुष्यधर्मः, उत कर्मधर्मः । अथवा प्रकरणे मनुष्यप्रधाने कर्मणि निवेशः, किंवा आतिथ्ये इति । किं तावत् प्राप्तम् । दिग्विभागश्च तद्वत्, संबन्धस्यार्थहेतुत्वात् । य एष दिग्विभागः, स निवीतवत् विचार्यः । यो निवीते पूर्वपक्षः स इह पूर्वपक्षः, यो मध्यमः स मध्यमः, यः सिद्धान्तः स सिद्धान्तः । अपूर्वत्वात् विधिः, मनुष्यसंबन्धान्मनुष्यधर्मः इति पूर्वपक्षः । प्रत्यङ्मुखा उदङ्मुखा वा पृष्ठतः आदित्यं कृत्वा पदार्थाननुतिष्ठन्ति मनुष्या इत्यनुवादः । विधिरेव, प्रकरणानुग्रहाच्च ज्योतिष्टोमधर्मः । वाक्यप्रकरणानुग्रहाच्च ज्योतिष्टोमे मनुष्यप्रधाने दक्षिणाव्यापारे निवेश इत्यपरः पक्षः । मिश्रत्वात् वाक्यानां आतिथ्ये निवेशः इत्यपरं मतम् । अर्थवादोऽयं प्रकरणानुग्रहाय । 'प्राचीनवंशं करोति' इत्यनेन विधिना एकवाक्यत्वस्य प्रत्यक्षसिद्धत्वादिति सिद्धान्तः ।

द्या— 'प्रतीचीं मनुष्याः' इत्यत्र निवीताधिकरणवत् सर्वे पक्षा रचयितव्याः । 'व्यभजन्त' इति भूतकालेन पूर्वपुरुषाचरितत्वेन प्रशंसा गम्यते, तया च विधिर्न गम्यते इति विशेषाशङ्का । तां निवर्तयितुं अधिकरणम् ।

सोम— सूत्रार्थस्तु— दिग्विभागः प्रतीच्याः दिशः मनुष्यकर्तृको विभागोऽपि निवीतवत् अर्थवादार्थः । प्रायेण पूर्वाह्णे म्रियमाणानां मनुष्याणां आदित्यं पृष्ठतः कर्तुं प्रतीचीसंबन्धस्य अर्थतः प्राप्तत्वेन तत्र विध्ययोगात् इति । अत्र 'संबन्धस्य अर्थहेतुत्वात्' इति सूत्रावयवः निवीताधिकरणद्वितीयसूत्रावयवोक्तार्थस्मारकत्वेन अनतिप्रयोजनत्वात् आचार्यैः नोक्तः, तदनुसारेण ग्रन्थकृताऽपि न पठितः । ( मुद्रकैस्तु अनवधानात् मुद्रितः ) ।

वि— 'दिशं प्रतीचीं मनुजा व्यभजन्नेत्यसौ विधिः । वादो वा, ऽत्र पुराकल्परूपत्वान्नो विधिर्भवेत् ॥ प्राचीनवंशवाक्योक्तविधावस्यैकवाक्यतः । दिग्विभागोऽर्थवादोऽप्युपवीते निवीतवत् ॥'

भाट्ट— सोमे 'प्राचीनवंशं करोति' इत्येतद्विधिशेषः 'देवमनुष्या दिशो व्यभजन्त प्राचीं देवा दक्षिणां पितरः प्रतीचीं मनुष्या उदीचीं रुद्राः' इत्ययं श्रुतः । तत्र मनुष्यसंयुक्तो निवीताधिकरणवत् औदुम्बराधिकरणस्थ विधिः अं निरस्तमपि पूर्वाधिकरणवत् मनुष्यकर्तव्यवैदिककर्मणि तावत् दिगन्तरस्यैव सामान्यविशेषादिवचनेन प्राप्तत्वात् प्रतीच्या अप्राप्तेः, लौकिके च कर्मणि प्रतीच्या नियमाप्रत्यभावात् । विधित्व विधिकल्पकत्वं वा । इति प्राप्ते, इह प्रतीच्या मनुष्यसंबन्धमात्रोपादानेऽपि कर्मविशेषानुपादानात् तदंश विधानस्य स्वयैव निरस्तत्वात्, यस्यामेव क्रियायामुक्तौ प्रतीचीदिगभिमुख्यं लोके यदृच्छया सिद्धम्, तादृशक्रियागतमेव मनुष्यप्रतीचीसंबन्धं गृहीत्वा स्तुत्युपपत्तेर्नातिरिक्तविषयान्तरकल्पनं प्रमाणवत् । 'उपरि हि' इत्यत्र तु देवाग्निहोत्रत्वावच्छेदेन उपरिभावश्रवणात्, तस्य च अप्रसक्तेः विधानान्तरकल्पनया देवाग्निहोत्राङ्गसमिद्धारणानुवादेन उपरिभावविधिः । अनुनिष्ठानकालत्वाच्च न विशिष्टोद्देशः इति वैषम्यम् ।

मण्डन— 'प्राचीनवंशस्तुतये प्रतीची ।' २.

शंकर— 'दिग्विभागो निवीतवत् ।' ८.

* दित-पूर्ण- पून-विदग्धाना समूलक-पात्रापोभाग-नवनीत-यथोचितार्थता स्तुतये अनुवादः । पर्वणिदित्यधिकरणम् । भा. ३।४।३।११.

* दिनैर्द्वादशभिः प्रत्येकं दीक्षोपसत्सुत्याः साध्याः द्वादशाहे । भा. ११।४।५।१९–२१.

* दिवरापरत्वेन संवत्सरशब्दस्य विश्वसृजामयने सहस्रसंवत्सरे मनुष्याधिकारः । अधिकारशब्दे अधिकरणम् । भा. ६।७।१३।३१–४०.

* 'दिवा संध्यासु कर्णस्थब्रह्मसूत्र उदङ्मुखः । कुर्यान्मूत्रपुरीषे च रात्रौ चेद्दक्षिणामुखः ॥' इति काल्लनः शाचनिकव्यवस्थाविधिः । बाल. पृ. १८.

* दीक्षणीया अश्वमेधे वैश्वानरीया इष्टिरेव । वि. ९।१।२ वर्णकं १. * दीक्षणीया ज्योतिष्टोमे 'आग्नावैष्णवमेकादशकपालं निर्वपेत् दीक्षिष्यमाणः' । भा. १२।२।१।२५. * दीक्षणीया पुरुषसंस्कारद्वारेणोपकरोति, न आरम्भार्थतया । दीक्षासंज्ञकनामत्वा कल्पितवाक्येनैवाम्नायते । टुप्. १०।१।२।४ पृ. १८०५. * दीक्षणीया साग्निचित्ये उत्सन्नमरणोत्तरम् । के. * दीक्षणीयायाः इष्टेरन्ते दीक्षितशब्दस्य प्रवृत्तिः स्यात् । भा. ५।३।११।३०, * दीक्षणीयायाः पूर्वे सावित्रहोमाः उखासंभरणं इष्टकाः पशुश्च कर्तव्याः, ततो दीक्षणीया । सावित्रहोमन्यायः । ५।२।११।२२. * दीक्षणीयायाः यजुर्वैदिकत्वात् साङ्गायामुपांशुत्वं प्राप्नोति । तद्योदकेन बाध्यते । 'प्राक् स्विष्टकृतः प्रथमस्थानेन' 'मध्यमेनेडायाः' 'शेषं तृतीयस्थानेन' इत्येतत् सार्ववैदिकं चोदकप्राप्तम् । तत् 'अग्नीषोमीयात्' उपांशुत्वेन बाध्यते । 'यावत्या वाचा कामयेत' इत्यनेन दीक्षणीयाशब्दवाच्ये वाङ्नियमो विधीयते । स दीक्षणीयाशब्दः प्रधानमात्रे वर्तते नाङ्गेषु । तस्मात् उपांशुत्वमङ्गेषु प्रधानेषु (तु) 'यावत्या वाचा' इति । टुप्. ९।३।६।२५ पृ. १६६७–६८. * दीक्षणीयायां द्वादशमानं हिरण्यं दक्षिणा श्येने । भा. ८।१।९।१६. * दीक्षणीयाया यावत्या वाचा कामयेत तावत्या अनुब्रूयात् । अयं स्वरः दीक्षणीयाऽपूर्वप्रयुक्तः, न परमापूर्वप्रयुक्तः । ज्योतिष्टोमे । वा ३।३।२।१ पृ. ८१२. * दीक्षणीयाया स्वरः (उच्चावचध्वनिः) अङ्गापूर्वप्रयुक्तः । दीक्षणीशब्दादृनिषमन्यायः । भा. ३।३।२।२–३ वर्णकं २.

* दीक्षणीयाऽग्निरेष सोमान्तं धारणीयः । संकर्ष. ३।२।१०.

* दीक्षणीयाऽधिकरणम् । अङ्गगुणविरोधन्यायः । सुत्या पर्वणि दीक्षा अपर्वणि । भा. १२।२।९।२१.

* दीक्षणीयाऽन्ते दीक्षितत्वसिद्धिः, दीक्षितधर्मानुष्ठानम् । ज्योतिष्टोमे दीक्षणीयेष्ट्या इत्यत्राधिकरणम् । भा. ५।३।११।२९–३१.

* दीक्षणीयाऽऽदयो धर्माः अग्निष्टोमसंस्थं ज्योतिष्टोमं प्रकृत्य उक्ताः, न सर्वसंस्थम् । सख्याऽधिकरणम् । भा. ३.६।१६.४२–४७ * दीक्षणीयाऽऽदयः पुरुषसंस्काराः कर्मप्रतिग्रहणयोग्यं पुरुषं कुर्वन्तो यागकार्ये वर्तमानास्तदर्थाः । टुप्. ७।३।१४।३६. * दीक्षणीयाऽऽदीनि कर्माणि दर्शपूर्णमासप्रकृतिकानि ज्योतिष्टोमे । भा. १०।१।२।४. * दीक्षणीयाऽऽदीनां ज्योतिष्टोमादन्यात् सोमविकृतिषु अतिदेशः । सोमयागप्राधान्याधिकरणम् । सोम. ४।४।१२. * दीक्षणीयाऽऽदिषु अन्वन्वाधानं देवतापरिग्रहार्थमपि न कर्तव्यम् । अन्वाधानशब्दे अधिकरणम् । भा. १२।१।१।२४–२८, * दीक्षणीयाऽऽदिषु अन्वाहार्यदक्षिणा सौमिकया दक्षिणया प्रसङ्गसिद्धा । सौमिकदक्षिणान्यायः । १२।१।६।३२, * दीक्षणीयाऽऽदिषु आरण्याशनं सौमिकेन पयोव्रतादिना प्रसङ्गसिद्धम् । १२।२।१४।३०. * दीक्षणीयाऽऽदिषु आरम्भणीया न क्रियते । टुप्. १०।१।२।४. * दीक्षणीयाऽऽदिषु जागरणं दार्शपौर्णमासिकं सौमिकेन दीक्षाकालीनजागरणेन प्रसङ्गसिद्धं न भवति । जागरणन्यायः । भा. १२।१।८।१७, * दीक्षणीयाऽऽदिषु दार्शिकाग्निसमिन्धनं (अन्वन्वाधानम्) न कार्यम् । १२।१।१०।११, * दीक्षणीयाऽऽदिषु पत्नीसंनहनं सौमिकेन प्रसङ्गसिद्धम् । १२।१।१३।२९, * दीक्षणीयाऽऽदिषु व्रतोपायनं 'अग्ने व्रतपते' इत्यादिरूपं सौमिकप्रायणीयाऽऽदिषु प्राप्तेन उपेतत्वात् पुनर्नानुष्ठेयम् । १२।१।११।२०–२३, * दीक्षणीयाऽऽदिषु शेषभक्षः ऋत्विग्भिः प्रतिपत्त्यर्थ. कर्तव्यः । १२।१।१७।३३–३४, * दीक्षणीयाऽऽदिषु शेषभक्षः यजमानेन कर्तव्य एव । १२।१।५।३१

–३२, ● दीक्षणीयाऽऽदिषु होतुर्वरणं सौमिकेन प्रसङ्ग सिद्ध ■ भवति । १२।१।१८।३५–४१.

● दीक्षणीयाऽऽदिपरिसाम्नां दीक्षणीयादिप्रयोगान्तर्गतत्वेऽपि अग्नीषोमीयप्राचीनत्वाविरोधात् तथात्वम् । सु. पृ. ११८३.

● दीक्षणीयाऽऽदिविकृतौ अन्वारम्भणीयायाः बाध. । आरम्भणीयायाः इत्यत्राधिकरणम् । भा. १०।१।२।४.

● दीक्षणीयेष्टिः अग्निपक्षे मुख्याधिकारपक्षे लुप्यते (प्रयाचिन्ता) । वि १०।४।१८, ● दीक्षणीयेष्ट्या दीक्षासिद्धिः, दण्डमेखलाऽऽदिकं तु दीक्षाऽभिव्यञ्जकम् । ५।३।११, ● दीक्षणीयेष्ट्यादयः इष्टयः ज्योतिष्टोमे अङ्गम्, ज्योतिष्टोमप्रकरणे उपदिष्टत्वात् । सोमयागाः प्रधानम् । ४।४।१२.

● दीक्षणीयादिनक्षत्रान्ते वस्त्रप्रतिमोचनादिकं कार्यं अभिधयते । भाट्ट ५।२।१२.

–ङ्क दीक्षणीयावाङ्नियमन्याय. । स्वरनियमः ॥

**संस्कारे युज्यमानानां तादर्थ्यात् तत्प्रयुक्तं स्यात् । ९।१।२।२ वर्णके २ ॥**

भाष्यम्— एवं वा अस्ति ज्योतिष्टोमः । तत्रेदं समाम्नायते ' यावत्या वाचा कामयेत, तावत्या दीक्षणीयायामनुब्रूयात् । मन्द्रं प्रायणीयायाम्, मन्द्रतरमातिथ्यायाम्, उपांशूपसत्सु ' इति । तत्रायमर्थः सांशयिकः किं परमापूर्वप्रयुक्ता एते धर्माः, उत दीक्षणीयाद्यपूर्वप्रयुक्ता इति । किं प्राप्तम् ? परमापूर्वसंस्कारे दीक्षणीयाऽऽद्यपूर्वे युज्यमानस्यास्य धर्मस्य परमापूर्वार्थत्वात् दीक्षणीयाऽऽदीनां परमापूर्वार्थतैव स्यात् । परमापूर्वं हि फलवत् । यत् कर्तव्यतयाऽभिसंबध्यते, तदेव धर्मैरभिसंबध्यते, नाङ्गापूर्वम् । निष्प्रयोजनं हि तदिति ।

टुप्— संस्कारे दीक्षणीयाऽऽद्ये यो धर्मः, स परमापूर्वयुक्तः (न स्वरूपप्रयुक्तः) । कुतः ? परमापूर्वप्रयुक्तत्वात् दीक्षणीयाया, स्वयं निष्फलत्वात् ।

**तेन त्वर्थेन यज्ञस्य संयोगात् धर्मसंबन्धस्तस्मात् यज्ञप्रयुक्तं स्यात् संस्कारस्य तदर्थत्वात् । ३ ॥**

भाष्यम्— तेन त्वर्थेन दीक्षणीयादिना, यस्मात् परमापूर्वस्य संबन्धः, तस्मात् परमापूर्वमेवंजातीयकेन धर्मेण धर्मवत् । तस्मादङ्गप्रयुक्तमेवंजातीयकं धर्मजातम् । तथा श्रुतिः शब्दो भवति । इतरस्मिन् पक्षे लक्षणा स्यात् । न च प्रायणीयाऽऽद्यपूर्वं निष्प्रयोजनम् । ज्योतिष्टोमस्य हि तदुपकारकम् । न च तद्विना एवंजातीयकेन धर्मेण प्रायणीयाऽऽद्यपूर्वं सिद्धम् । अवहननादिवत् । यदुच्यते, विनैव धर्मेण तदपूर्वं भविष्यतीति । तन्न । कुतः ? तदपि हि अपूर्वं शब्दादेवावगम्यते अस्तीति न प्राक् शब्दादन्येन प्रमाणेन उपलभ्यते । एवंजातीयके च शब्दप्रमाणके यत् शब्द आह, तदस्माकं प्रमाणम् । शब्दश्च प्रायणीयाऽऽद्यपूर्वस्य उपकारकमिमं धर्ममाह, न परमापूर्वस्य, वचनप्रामाण्यात् । एवं च आपरमापूर्वनिर्वृत्तेः अवश्यविनाशि नाम धर्मः प्रतिषिद्धः, न परमापूर्वं संक्रमिष्यति । एवमपि प्रयोजनमसमर्थम् । तस्मादेवंजातीयकं धर्मजातं अङ्गापूर्वप्रयुक्तमेवेति । किं भवति प्रयोजनमितरस्मिन्नितरस्मिन् वा पक्षे इति ? उच्यते । अश्वमेधे समाम्नायते, त्रैधातवीया भवतीति । यदि परमापूर्वप्रयुक्त एवंजातीयको धर्मः, तदनुस्योपकारविशेषे निबद्ध इति तत्कार्यापन्नायां त्रैधातवीयायां भविष्यति । अथ आग्नावैष्णवाऽपूर्वप्रयुक्तः, ततो नेदमाग्नावैष्णवापूर्वमिति तत्र त्रैधातवीयाऽपूर्वं न तेन धर्मेण संभन्त्स्यते इति ।

टुप्—'तेन त्वर्थेन ..तदर्थत्वात् ।' ३ ॥ दीक्षणीयार्थेन यो धर्मः संयुक्तः स न परमापूर्वप्रयुक्तः (किन्तु स्वापूर्वप्रयुक्तः) । कुतः ? दीक्षणीया आत्मीयमपूर्वं लक्षयति, तेन धर्माणां संबन्धः (तदतिक्रमे कारणाभावात्) । तस्मिन् पक्षे लक्षणैव (केवला, न लक्षित लक्षणा) । यदा तु (लक्षितं) दीक्षणीयाऽपूर्वं परमापूर्वं लक्षयति तदा लक्षितलक्षणया धर्माणां संबन्धः । (यदि सिद्धान्तेऽपि लक्षणा, कथं तर्हि भाष्ये श्रुत्यभिधानम् ? अत आह–) तस्मात् लक्षणा श्रुतिं ब्रवीति (भाष्यकार.) लक्षितलक्षणाऽपेक्षया (संनिकृष्टार्थत्वात्) । अथवा (दीक्षणीयाऽऽदेः) अङ्गं संबन्धात् अङ्गिनं (ज्योतिष्टोमम्) शक्नोति लक्षयितुम् । तेन अङ्गि-

संबन्धे लक्षणा अङ्गसंबन्धे तु श्रुतिः ( अङ्गिसंबन्धे विवक्षिते लक्षितेन अङ्गिना तदपूर्वं लक्षयितव्यम्, अङ्गापूर्वसंबन्धे तु श्रुत्यैव दीक्षणीयया स्वापूर्वलक्षणा । तदनेन प्रकारेण पूर्वपक्षे लक्षितलक्षणा, सिद्धान्ते तु लक्षणा इत्येतदेव प्रतिपादितम् ) [ ' अथवा ' इत्यादिग्रन्थः क्वचिन्नद्भट्टीकायां नास्ति । सन्दर्भे तु व्याख्यानलाभात् असन्देव घः ] ।

: ' पूर्वपक्षे ' नैयातव्या दीक्षणीया भवति ' इति आमावैष्णवकार्यापन्नया ( नैयातव्या ) तद्गौर्युज्यते यथा नीवाराः प्रोक्षणेन ( युज्यन्ते ) । सिद्धान्ते तु आग्नावैष्णवापूर्वप्रयुक्ता धर्माः नैयातवीयायाश्च अपूर्वान्तरम् । न चापूर्वान्तरं अपूर्वान्तरधर्मान् गृह्णाति । ( भाष्योक्तं प्रयोजनमाक्षिपति— ) अनुपपन्नमिदं प्रयोजनम् । ( कथम् ? ) ' नैयातवीया दीक्षणीया भवति ' इति सामानाधिकरण्यम् ( अनयोः ) । तत्र यदि मुख्यवृत्ते द्वे अपि पदे गृह्येयाताम् ( ततः ) सामानाधिकरण्यं नोपपद्यते । तस्मात् एकमत्र गौणं पदम्, अन्यत् मुख्यम् । तत्र प्राथम्यात् अविरोधाच्च नैयातव्यापदं मुख्यम्, दीक्षणीयापदं तु ( जघन्यत्वात् संजात विरोधं च ) आग्नीयं कार्यमुपकारं लक्षयति । तस्मिन् लक्षिते नैयातव्या विधीयते ( नैयातव्या दीक्षणीयाकार्यकारिणी भवतीति ) । सा ( च ) विधीयमाना तत्कार्योपजननात् तद्धर्मान् लभते । सिद्धान्तेऽपि यथा शालेयानो यूपकार्ये विधीयमाना तद्धर्मान् (अञ्जनादीन्) लभन्ते । तस्मात् उभयोः पक्षयोः तुल्या धर्मप्राप्तिरिति । अथोच्येत ' नैयातव्या दीक्षणीया भवति ' इत्यनेन नैयातवीयायाः यत् कार्यम्, तत् निवार्य दीक्षणीयाकार्यं ( तस्याः ) विधीयते । तच्च ( दीक्षणीयाकार्यम् ) आग्नीयैरेव ( यथासिद्धैः ) धर्मैः आग्नीयेन स्वापूर्वेण नैयातव्या साधयिष्यति, दीक्षणीयाधर्मान् ग्रहीष्यति सिद्धान्तवादिनः । ( एतत् दूषयति— ) पूर्वपक्षेऽपि यदि दीक्षणीयाकार्ये ( यथासिद्धे ) नैयातवीया वर्तेत, तथा सति आग्नीयैरेव धर्मैः तत्कार्यं साधयिष्यति प्रसिद्धधर्मकत्वात् । अथ वर्तते ( दीक्षणीयाकार्ये नैयातवीया, तदा ) सुतरां आत्मीया एव धर्मास्तस्याः । अपि च परमापूर्वप्रयुक्तायामपि वाङ्नियमस्य प्रवृत्तौ आग्नावैष्णवो विशिष्टं द्वारमभूत् ( आग्नावैष्णवापूर्वनिसर्गः ) । नचेह ( द्वारम् ) नास्ति । तस्मात् नास्ति ( पूर्वपक्षे ) वाङ्नियमः ।

ननु अनेन न्यायेन नीवारेषु प्रोक्षणं न प्राप्नोति ( आग्नावैष्णवपदं यथाश्रुतं मत्वानस्य चोद्यम् ) । उच्यते । सत्यं विशिष्टं द्वारं ( व्रीहयः ) प्रोक्षणस्य । इमांस्तु ( नीवारनैयातव्ययोः ) विशेषः, व्रीहयो दृष्टेन ( तण्डुलनिर्वृत्त्या अपूर्वस्य ) उपकुर्वन्ति, नीवाराश्च तत्कार्यं प्रत्यक्षतः साधयन्तो दृश्यन्ते । तत्र तत्कार्यापन्ना धर्मप्राप्तिर्युक्ता । इह तु ( दीक्षणीयायाम् ) अदृष्टं द्वारम् ( अपूर्वम् ) तस्मिन् कार्ये नैयातव्या वर्तते इति नास्ति प्रमाणम् । अथवा दूरादेवेदं भाष्ये प्रयोजनम् । ( कथम् ? ) नैयातवीया यादृशी प्रयोक्तव्या, तादृशी एव ( अश्वमेधे दीक्षणीयात्वेन ) चोद्यते, नैयातवीयशब्देन सैव विपरिवर्तते । आपत्त्यभावात् कर्मान्तरमपि न ( भवति ) । तस्मात् यादृशी तत्र विहिता, तादृशी ( एव ) अत्र ( कर्तव्या ) । यद्यपि च कर्मान्तरं स्यात् तथापि नाम्ना धर्मान् गृह्णीयात्, न चोदकेनेति ।

शा—' फलवत् परमापूर्वं तच्छेषत्वं ततो भवेत् । स्वापूर्वं क्रतुशेषत्वान्न स्वयं फलवत् यतः ॥ फलवच्छेषता युक्ता न तु निष्फलशेषता । तस्मात् तत्साधने रूपे स्वरभेदो विधीयते ॥ ' उच्यते । ' एवमाश्रीयमाणे हि भवेत् लक्षितलक्षणा । स्वापूर्वे लक्षणामात्रं तस्मात् तच्छेषता परम् ॥ '

सोम— पूर्वत्र इन्तिपिण्डधर्मस्य आनर्थक्याद् प्रोक्षणस्य अपूर्वार्थत्ववत् इहापि निष्फलदीक्षणीयाऽपूर्वार्थत्वे आनर्थक्यात् फलवज्ज्योतिष्टोमापूर्वार्थत्वं इत्युपिधेः संगतिः । सूत्रे संस्कारशब्देन दीक्षारूपो यजमानसंस्कारो विवक्षितः, तच्छब्देन च परमापूर्वं विवक्षितम् ।

वि—' मन्त्रादिकमपूर्वाय परायावान्तराय वा । फलदायो, नो समत्वाल्लक्षणा तु विशिष्यते ॥ '

भाट्ट— एवं वा । एव तावदुद्देश्यसम्बन्धे आनर्थक्यप्रसक्त्या अपूर्वसाधनलक्षणेत्युक्तम् । तत्र प्रधानजन्यापूर्वमेव लक्ष्यते उताङ्गजन्यमपीति चिन्तायाम्, यत्र तावत् अवघातप्रोक्षणादौ न व्रीह्यादिजन्यं मध्ये अपूर्वान्तरम्, तत्र प्रधानजन्योत्पत्त्यपूर्वसाधनत्वलक्षणा अविवादैव । यत्र तु

मन्त्रवत् उपस्थानजन्यादृष्टार्थत्वमेव दीक्षणीयावाड्नियमन्यायेन भवेत्, तस्य तु अभिधानफलकस्य ( मन्त्रस्य ) करिष्यमाणमण्डपवृत्तिपदार्थानुष्ठानोपयोगितया दृष्टार्थत्वात् अवघातमन्त्रवदेव तन्मन्त्रस्य फलपूर्वार्थत्वमावश्यकम् । कौ. ३।४।८।१२ पृ. २६७. * यद्यपि प्रकृतायाः ( 'अग्न आ याहि' इति आग्नेय्याः ऋचः स्तोत्रादिवाक्येषु स्थानान्येन अपूर्वार्थत्वक्लृप्तिः, तथापि तस्याः दीक्षणीयावाड्नियमन्यायेन स्तोत्रजन्यापूर्वार्थत्वस्यैव क्लृप्तेः । पूर्वपक्षः । ३।२।८।२१ पृ. २९१, * समद्वशारत्निर्वं वाजपेयोद्देशेन विधीयते ... अन्यथा हि दीक्षणीयावाड्नियमन्यायेन पशुपूर्वार्थत्वं यूपमात्रार्थत्वं वा आपद्येत इति वाजपेयात्कर्षात् तद्बाधापत्तिः । इति पूर्वपक्षे । ३।१।९।१८ पृ. १८८, * 'समानयते जुहामौपभृतम्' 'प्रयाजशेषेण हवींष्यभिघारयति' । अत्र हि दीक्षणीयावाड्नियमन्यायेन प्रधानसंबन्धयोगात् अङ्गाधिकारस्यैव तात्पर्यग्राहकत्वमावश्यकम् । ३।१।१०।२० पृ. १९५. * उद्देश्यगतस्य स्वरूपे आनर्थक्ये प्रसक्ते गत्यन्तरापूर्वसद्भावे प्रमाणाभावात् दीक्षणीयावाड्नियमन्यायासंभवेन भावसमन्वितयागजन्यपरमापूर्वसाधनत्वमेव मानसिद्धं लक्ष्यते इति परमापूर्वमनुपं उदाहरणम् । भाट्ट. ९।१।६.

* दीक्षा अपर्वणि कर्तव्या सुत्या पर्वणि । अङ्गगुणविरोधन्यायः । भा. १२।२।९।२५, * दीक्षा गवामयनस्य माघ्याः पौर्णमास्याः पुरस्ताच्चतुरहे । ६।५।९।३०–३७, * दीक्षा च व्रतानि । १०।२।१८।४९. * दीक्षा दीक्षणीयेष्ट्या सपन्नः संस्कारः । वि. ६।९।८. * दीक्षा यमनियमव्रतविशेषसंकल्पः । व्रतशब्देन ब्रह्मचर्यादिः विवक्षितः । सोम. १०।२।१८. * दीक्षाः गवामयने द्वादश, 'द्वादश्यां स्तोमायच्छति' इत्यादिना पष्ठ्या दीक्षानुमानं उपन्यस्तत्वात् । वि. ८।१।१०, * दीक्षाः तिस्रः ज्योतिष्टोमे । भा. ३।७।५।११, * दीक्षाः द्वादशाहे तन्त्रेण कर्मप्रयोगात् पृथक्कालत्वात् । ( आदौ द्वादशसु अहःसु दीक्षाद्वादशकं कृत्वा ततः सुत्याऽऽरम्भः इत्यर्थः ) । ११।३।१०।२१, * दीक्षाः द्वादशाहे द्वादशैव । ११।४। ५।१५–२२, * दीक्षाः प्रधानार्थाः । दीक्षादक्षिणन्यायः । ३।७।९।११–१२.

* दीक्षायाः एकत्वपक्षे एका दीक्षा तिस्र उपसदः पञ्चमे दिने सुत्या । त्रित्वपक्षे तिस्रो दीक्षाः तिस्र उपसदः सप्तमे दिने सुत्या । चतुष्ट्वपक्षे–चतस्रो दीक्षाः तिस्र उपसदः अष्टमे दिने सुत्या । के. * दीक्षायाः फलीभूतयमनियमपरिग्रहोपयोगिदीक्षितत्वज्ञानजनकतयैव दीक्षणीयाऽर्थत्वं दीक्षाऽर्थत्वमेव भट्टोक्तमुचितम् । भाट्ट. ५।३।११. * दीक्षाणां उन्मोचनार्थो हि अवभृथः । भा. ६।५।१२।४२. * दीक्षाणा उपसदा च सस्थानविवृद्ध्या प्रयोगो द्वादशाहे । टुप्. ११।४।५।१८. * दीक्षाणा द्वादशत्वपक्षः एव द्वादशाहे नियतः । तत्र च द्वादश दीक्षाः, द्वादशोपसदः, द्वादश सुत्याश्चेति । 'षट्त्रिंशदहो वा एष, यद् द्वादशाहः' । वि. ६।५।९. * दीक्षाणा द्वादशाहे क्रमविशेषनियमः । भा. ५।१। २।१ वर्णक २. * दीक्षायां मुष्टीकरणं सर्वाङ्गम् । तेन हस्तचापलं निवार्यते । वि. ३।१।१४. * दीक्षासु अग्नीषोमीययूपमात्रस्य प्रतिकर्षः, न तु ततोऽर्वाचीनानामपि सौमिकानामग्नीषोमप्रणयनादीनाम् । भा. ५।१।१४।२७, * दीक्षासु यूपमात्रापकर्षः । यूपकर्मन्यायः । ५।१।१४। २७, * दीक्षासु विनिर्देशो भवति, इदं क्रय्यर्थम्, इदं प्रवार्थम्, इदमातिथ्यायेति । ६।७।७।१३. * दीक्षासु सोमक्रयसमीपे अग्नीषोमीयः पशुः समाम्नायते । भा. ३।६।७।१८.

* दीक्षाऽर्थाभ्यञ्जने ज्योतिष्टोमे नवनीतं प्राप्तम् । तत्स्तुतये च 'घृतं देवानाम्, मस्तु पितृणाम्, निष्पक्वं मनुष्याणाम्' इत्यनुवादः । वि. २।४।७.

* दीक्षाऽऽपेदनं आध्वर्यव ज्योतिष्टोमे । भा. ३।१।१४।२४.

* दीक्षाऽऽहुतय. प्राकृत्यो वैकृत्यश्च । तासां समुच्चयः कर्तव्यः, नयने । तत्र प्राकृत्यः षट् 'आकूत्यै प्रयुजेऽग्नये स्वाहा' इत्यादयः । वैकृत्यश्च 'आकूतिमग्निं प्रयुजं स्वाहा' इत्यादयः । भा. १०।३।४।२३–२९, * दीक्षाऽऽहुतिमन्त्राणां अग्निचयनप्रकरणे श्रुतानां

होमैरर्दाश्याऽऽहुतिमन्त्रैः समुच्चयः । अग्निचयनप्रकरणे इत्यत्राधिकरणम् । १०।३।८।२२-२९.

**ꕯ दीक्षोत्कर्षे अग्निहोत्रादीनामपि उत्कर्षः ॥**

**दीक्षाकालस्य शिष्टत्वादतिक्रमे नियतानामनुत्कर्षः प्राप्तकालत्वात् । ६।५।१०।२८॥**

भाष्यम्— इद मुच्यते, 'तस्माद्दीक्षितो न ददाति, न पचति, न जुहोति' इति । ज्योतिष्टोमे समामनन्ति 'तिस्रो दीक्षाः' इत्येवमादि । यदि तु दैवान्मानुषाद्वा प्रतिबन्धात् दीक्षाकालः उत्कृष्यते, तत्र सन्देहः किं दानहोमपाकानामुत्कर्षः, उत नेति । किं प्राप्तम् ? अनुत्कर्षः । नियता हि दानहोमपाकाः 'यावज्जीवमग्निहोत्रं जुहोति' इत्येवमादिभिः श्रुतिभिः । तेषामपवादः, येष्वहःसु ज्योतिष्टोमो विहितः, तानि अहानि मुक्त्वा अन्येष्वहःसु कर्तव्याः । ज्योतिष्टोमविधानकालात् परत अप्रतिषिद्धाः । तस्मात् कर्तव्याः । प्राप्तो हि तेषां कालः इति ।

**उत्कर्षो वा, दीक्षितत्वादविशिष्टं हि कारणम् । २९ ॥**

भाष्यम्—वाशब्दात् पक्षो विपरिवर्तते । यदुक्तं नैषामुत्कर्ष इति, नैतदेवम् । उत्कृष्येरन् । कुतः ? दीक्षितत्वात् । दीक्षितस्य ते प्रतिषिद्धाः, न दीक्षितो यस्मिन्काले । लक्षणा हि एवं स्यात् । यथा तु वयं ब्रूमः, तथा श्रुतिः कारणम् । प्राक् चावभृथादयं दीक्षित एव । अविशिष्टं हि कारणम् । यदैव ज्योतिष्टोमविधानकाले, तदैव अतिक्रान्तेऽपि । उभयत्र हि दीक्षितत्वं हि कारणम् । तस्मात्तेषामुत्कर्ष इति ।

सोम— दीक्षाप्रसङ्गागतविचारानन्तरं यद्यपि दीक्षापरिमाणं निरूपितम्, तद्विचारात् संगतिः । सूत्रार्थस्तु— दीक्षाकालस्य निषेधाङ्गतया शिष्टत्वात् नालीकदीक्षाकालातिक्रमे नियतानामग्निहोत्रादीनां प्राप्तकालत्वात् अनुत्कर्षः इति । ११.

चि— 'चुनोऽप्यवभृथो कर्मे शुद्धस्याग्निहोत्रकम् । न या,ऽऽद्योऽप्रतिषिद्धत्वा, न्मैवं दीक्षाऽनुवर्तनात् ॥' ११.

भाट्ट—सोमे 'दीक्षितो न जुहोति' इत्यादिना पुरुषार्थानामग्निहोत्रादीनां प्रत्यक्ष वेन पर्युदासः प्रतिषेधो वा दीक्षितस्य श्रुतः । अवभृथे च कृते दीक्षामुक्तिः । तद्यदा दैवादिना कारणेन संघातः पूर्वं क्रियमाणावभृथस्य उत्कर्षः, तदा कालेऽग्निहोत्रं कर्तव्यमेव । यावन्तं कालं शास्त्रतोन दीक्षाऽनुवृत्तिः, तावत्कालस्य 'न जुहोति' इति सप्रतिषेधप्राप्तावधारणात् । इति प्राप्ते, काललक्षणायां प्रमाणाभावात् दीक्षैव निषेधावधिः । तस्मात् अनिवृत्तत्वात् कर्तव्यमेवाग्निहोत्रादि । ११.

मण्डन—'यावद्दीक्षं निषिद्धानि ।' ११.

शंकर—'दीक्षितोऽवभृथावधि ।' ११.

● दीक्षोत्कर्षे ज्योतिष्टोमे अवभृथोत्कर्षेण दैवाद्वा, तावति काले अग्निहोत्रहोमस्यैव स्यात् । होमनिषेधादेव च दृष्टहोमानां प्रतिहोमा न कर्तव्याः । चि. ६।५।१२.

● दीक्षोन्मोचनार्थः अवभृथः । भा. ११।४।५।१०,

● दीक्षोन्मोचनवचनं तत्कर्मस्थापनस्य अर्थवादः । 'वरुणपाशाभ्यां [redacted] एषोऽभिधीयते (अभिधानं बन्धनम्) यो दीक्षितः । अहोरात्रे वै वरुणपाशौ । यद् दिवा संस्थापयेत् (यज्ञं समापयेत्) अनुन्मुक्तो वरुणपाशाभ्यां स्यात् । नक्तं संस्थाप्यः । वरुणपाशाभ्यामेवोन्मुच्यते, आत्मनः अहिंसायै' इति । ९।१।८।११.

● दीक्षोपक्रमदिनमारभ्य पञ्चमे सप्तमेऽष्टमे [redacted] दिने सुत्या भवति । ततोऽवभृथेन दीक्षानियमनिवृत्तिः । नि. ६।५।११.

● दीक्षोपसत्सुत्यानां प्रत्येकं द्वादशदिनसाध्यत्वं द्वादशाहे । भा. ११।४।५।१७-२५.

**ꕯ दीक्षाकालस्य शिष्टत्वादतिक्रमे नियतानामनुत्कर्षः प्राप्तकालत्वात् । ६।५।१०।२८ ॥**

ज्योतिष्टोमे 'तिस्रो दीक्षाः' इत्यादि उक्तम्, 'दीक्षितो न ददाति, न जुहोति, न पचति' इति चोक्तम् । अवभृथपर्यन्तं च दीक्षितत्वम् । यदि दीक्षाकालस्य कस्माच्चित् कारणात् वृद्धिः स्यात् तदा विचारः । दीक्षाकालस्य दीक्षायां कालः दीक्षाकालः । दीक्षायाः एव कालः यस्य दानहोमपाकस्य सः दीक्षाकालः । उत्तरपदलोपोऽत्र समासे । दीक्षाकालवर्तमानकालानामेव दानहोमपाकानां निषिद्धत्वेन शिष्टत्वात्, तेषां निषेधस्य विहितत्वात् इत्यर्थः । अतिक्रमे दीक्षायाः कालस्य अति-

कर्षे वृद्धौ सत्यामपि नियतानां नित्यानां अग्निहोत्रहोमादीनां अनुत्कर्षः उत्कर्षो न कर्तव्यः, किन्तु अवभृथात् प्रागपि नियता होमादयः कर्तव्याः। तेषां प्राप्तकालत्वात्। अवधितो यावान् वास्तवो दीक्षायाः कालः, तस्मिन् समाप्ते होमादीनां अनुष्ठानस्य कालः प्राप्तो भवति। तस्मात् दीक्षाकालोत्कर्षेऽपि होमादीनां नियतानां उत्कर्षो न कार्यः इति पूर्वः पक्षः।

उत्कर्षो वा दीक्षितत्वादविशिष्टं हि कारणम्। ३९॥

पूर्वपक्षं सूत्रेण प्राप्तं वाशब्देन निरस्य सिद्धान्तमाह। दीक्षाणां कालस्योत्कर्षे होमादिनिषेधकालस्यापि उत्कर्षः कार्यः। मुख्यदीक्षाकालस्य अतिवृद्धस्य समाप्तावपि अवभृथपर्यन्तं यजमानस्य दीक्षितत्वात् दीक्षितकर्तृकस्य च होमादेर्निषिद्धत्वात्। तथा च होमादिनिषेधकारणं दीक्षितत्वं हि यस्मात् अविशिष्टं समानमेव दीक्षाकालस्य विवृद्धौ अविवृद्धौ वा। तस्मात् दीक्षोत्कर्षे होमादिनिषेधस्यापि उत्कर्षः इति सिद्धान्तः। के.

* दीक्षाकाले अग्नीषोमीयपशुयूपच्छेदमात्रस्य अपकर्षः न तु तदन्तस्याङ्गसमूहस्य। वि. ५।१।२४.

* दीक्षाकालोत्कर्षे अग्निहोत्रादीनामुत्कर्षः। भा. ६।५।१०।३८–३९.

* दीक्षाक्रमः सप्ते श्रौतः। भा. ५।१।१।१.

* दीक्षाक्रमपरं वाक्यम् 'अध्वर्युर्गृहपतिं दीक्षयित्वा' इति। वा. ५।१।१।२ पृ. १५२५.

* दीक्षाग्रहणार्था दीक्षणीयेष्टिः। भा. १०।२। १८।४९.

* दीक्षातः पूर्वमपि प्राजापत्यपशोः परस्तात् अपि अपनेष्टकाकरणकालः। संकर्ष. २।१।२९

॥ दीक्षादक्षिणं तु वचनात् प्रधानस्य। ३।७।५।११॥

ज्योतिष्टोमे तिस्रो दीक्षाः द्वादशशत (११२) दक्षिणा चोक्ता। तत् द्वयमपि किं अङ्गप्रधानार्थम्, उत प्रधानार्थमेवेति विचारे अङ्गप्रधानार्थं इति पूर्वपक्षं उत्सूत्रं गृहीत्वा तन्निरासार्थः तुशब्दः। दीक्षाश्च दक्षिणाश्च तासां समाहारः दीक्षादक्षिणम्। तत् प्रधानस्यैव स्यात्। 'दीक्षाः सोमस्य' 'दक्षिणाः सोमस्य' इति वचनात्। अत्र हि स्वशब्देन प्रधानस्य सोमस्यैव दीक्षादक्षिणमुक्तम्।

निवृत्तिदर्शनाच्च। १२॥

सिद्धान्ते हेत्वन्तरार्थं सूत्रम्। 'अध्वर्यो यत् पशुनाऽयक्षी, अथ काऽस्य दीक्षेति, यत् षड्ढोतारं जुहोति साऽस्य दीक्षा' इति निरूढपशौ षड्ढोतृहोमेन दीक्षानुग्रहं वदन् वस्तुतः दीक्षाया अप्राप्तिं दर्शयति। एवं दीक्षायाः निवृत्तेः दर्शनात् अङ्गेषु न दीक्षादक्षिणं इति सिध्यति। तस्मात् प्रधानस्यैव।

अत्र सुधा—षड्ढोतृमन्त्रकेण होमेन निरूढपशौ दीक्षानुग्रहोक्तेः दीक्षाननुष्ठानाख्यनिवृत्तिदर्शनात् सर्वार्थत्वे च ऐकाङ्गत्वात् तद्विकारे निरूढपशौ दीक्षाप्राप्तेः तन्निवृत्तिदर्शनायोगात् न सर्वेषां दीक्षा इति। के.

* दीक्षादक्षिणयोः प्रधानमात्रार्थता ज्योतिष्टोमे। भा. ३।७।५।११–१२ पृ. १०८२.

* अङ्गैः सह प्रधानानां साधनत्वासाधनत्वविषयचिन्तात्वात् न्यायाधीनत्वेन च वचनाधीनदीक्षादक्षिणाचिन्तावैलक्षण्यात्। सु. ३।७ पृ. ८.

॥ दीक्षादक्षिणन्यायः। ज्योतिष्टोमे दीक्षा दक्षिणाश्च प्रधानार्था एव॥

दीक्षादक्षिणं तु वचनात् प्रधानस्य। ३।७।५। ११॥

भाष्यम्— ज्योतिष्टोमे दीक्षाः श्रूयन्ते 'तिस्रो दीक्षाः' इति। तथा दक्षिणाः श्रूयन्ते 'तस्य द्वादशशतं दक्षिणा' इति। तत्र संदेहः किं दीक्षादक्षिणमङ्गप्रधानार्थम्, उत प्रधानार्थमिति। किं प्राप्तम्? पुरुषाणामङ्गप्रधानार्थत्वात् दीक्षादक्षिणस्य अङ्गप्रधानार्थतेति। एवं प्राप्ते, ब्रूमः। दीक्षादक्षिणं प्रधानस्य। कुतः? वचनात्। वचनं हि भवति। 'दीक्षाः सोमस्य' 'दक्षिणाः सोमस्य' इति। नहि वचनस्यातिभारो नाम कश्चित्। तस्मात् दीक्षादक्षिणं वचनात् सोमस्येति।

वा—'फलसंयोगात्तु स्वामियुक्तं प्रधानस्य' (३। ७।२६) इत्यनेनैव गतार्थत्वात् दीक्षाया अनुदाहरणत्वम्। अन्ये तु समर्थयन्ते सर्वेषु सोमक्रयादिषु दीक्षित-

शब्देन विनियोगो दृश्यते । दीक्षाश्च दीक्षितत्वसिद्ध्यर्थाः । तच्च दीक्षितत्वं क्रयादीनामङ्गत्वात् तत्प्रयोजनत्वेन विवक्षितम् । अतः अङ्गप्रधानार्थत्वप्रसक्तिः । दक्षिणानां ऋत्विगानमनार्थत्वात्, आनमनस्य च साद्गुण्योपादित्सया प्रयोगार्थत्वात् । तस्मात् विश्वजिन्न्यायेन ( ३।७।३।७ ) साद्गुण्यसम्पादनप्रयोगविषयत्वमिति सर्वार्थत्वप्रसक्तिः । ( याज्ञिकानामेव न्यायं स्पष्टीकरोति– ) अपि च प्रत्यक्षमेव एतत् दृश्यते दक्षिणोपाचाः ( दक्षिणया उपात्ताः इति विग्रहः ) ऋत्विजः अङ्गान्यपि कुर्वन्ति, इतरथा हि प्रधानमात्रमेव मत्परिक्रीताः कुर्युः । न च तावन्मात्रार्थं यजमानस्य एतैः परिक्रीतेः प्रयोजनम् । अतः यस्मात् परिक्रीताः करिष्यन्ति इत्यवधार्यते, तस्मै दक्षिणा । एवं च कर्तृत्वस्याभिधानं एकादशे योक्ष्यते ( ११।१।१।८ ) । तस्मात् सर्वार्थत्वम् । इति प्राप्ते, अभिधीयते । 'दीक्षाः सोमस्य' 'दक्षिणाः सोमस्य' इति वचनात् प्रधानार्थता ( अनेन सूत्रार्थं उक्तः ) । यत्तु दीक्षितविनियोगः अङ्गेषु, स पुरोडाशकपालादिवत् अप्रयोजकलक्षणाऽऽपत्ते. प्रधानप्रयुक्तत्वेन इति ज्ञायते । दक्षिणाश्च प्रधानार्थाः सत्यः प्रसङ्गात् अङ्गानामुपकुर्वन्ति इति वक्ष्याम. ( प्रसङ्गाच्च परिक्रयः इत्यम ) ।

निवृत्तिदर्शनाच्च । १२ ॥

भाष्यं— निवृत्तिं दीक्षाणां दर्शयति । कथम् ? 'अथ यदि यजमानाऽप्यार्तिमार्च्छेत् कोऽस्य दीक्षेति, यत् पड्ढोतारं जुहोति साऽस्य दीक्षा' इति । अङ्गेष्वपि दीक्षायां वचनं भवति । तस्मादङ्गानां दीक्षादक्षिणमिति ।

वा— निरूढपशौ च षड्ढोतृहोमेन ( सूर्यं ते चक्षुः, वातं प्राणः इत्यादिमन्त्रैः षड्ढोता ) दीक्षाऽनुग्रहं वदन् अप्राप्तिं दर्शयति । सर्वार्थत्वे च स्यादेव दीक्षा, इति नान्येन अनुगृह्णीत । ननु च अनङ्गत्वेऽपि अनुग्रहवचनं अनाकाङ्क्षितत्वात् व्यर्थमेव । नैष दोषः । प्रकृतौ परप्रयुक्तोपजीवनात् तत्कृत उपकार आसीत् इति अप्रयोजकत्वात् तदभावे सति वैगुण्यमिव आशङ्क्यते, तत्र अनुग्रहवचनमुपपद्यते ।

सोम— वचनाविरोधप्रतिपादनेन यथा भातुहोत्रादेः अङ्गप्रधानार्थत्वेऽपि वचनाविरोधः, एवमिहापि इति प्रत्याख्यानात् संगतिः । प्रयोजनं– निरूढपश्वादौ अनुग्रहप्रवृत्ती एव ।'

नि— 'इष्टदीक्षा दक्षिणा तु सर्वं द्वादशभिर्गुणम् । इत्यर्थमुत मुख्यार्थं, सोमस्येयुक्तिसंभवात् ॥ मुख्याङ्गद्वयं, मैवं पारंपर्यविडम्बना । वचनस्य न युक्ताऽतः प्रधानार्थमिदं स्थितम् ॥'

भाट्ट— ज्योतिष्टोमे दीक्षा 'दण्डेन यजमानं दीक्षयति' इत्यादिना, दक्षिणा च 'गौश्चाश्वश्च' इत्यादिना श्रुता । सा अङ्गप्रधानार्था । दीक्षायास्तावत् द्वितीयया पुरुषसंस्कारिकाया वचनाधिकरणन्यायेन ( ३।८।२ ) फलितकर्तृसंस्कारकत्वप्रसक्तावपि 'यो दीक्षितो यदग्नीषोमीयं पशुमालभते' 'दीक्षितः सोमं क्रीणाति' इत्यादौ दीक्षितग्रहणात् 'निर्मन्थ्येनेष्टकाः पचन्ति' इत्यादिवत् विशेषणीभूतदीक्षायाः अपि कर्तृसंस्कारद्वारा अग्नीषोमीयाद्यर्थत्वप्रतीतेः, तस्य च स्वतन्त्रविध्युपायकत्वे गौरवात्, अनुवादविधया 'दण्डेन दीक्षयति' इत्यादौ 'हिरण्यमालिनः' इति बहुवचनवत् कर्तृविशेषणत्वतात्पर्यग्राहकत्वाभावात्, कर्तृद्वाराप्रधानार्थत्वेन दीक्षाया अपि अङ्गप्रधानार्थत्वम् । दक्षिणायास्तु कर्मानमनद्वारा अङ्गप्रधानार्थत्वं स्फुटमेव । एवं च 'दीक्षा सोमस्य' 'दक्षिणा सोमस्य' इति वचनद्वयं साक्षात्परम्परासाधारणसंबन्धसामान्यमादाय अनुवादः, इतरथा परिसंख्यापत्तेः । इति प्राप्ते, वचनाऽऽनर्थक्यभिया प्रधानमात्रार्थत्वम् । फलतः परिसंख्यात्वाच्च न दोषापत्तिः । न च वचनस्य प्रधानप्रयुक्तत्वमात्रपरत्वेनापि उपपत्तेः अङ्गाङ्गत्वनिवृत्तिपरत्वे मानाभावः, प्रधानविकृतिकारकत्वादेर्निराकर्तुं अशक्यतया वचनस्य अङ्गोद्देश्यकप्रमाणनिवृत्तिफलकत्वावश्यंभावात् । तस्याश्च प्रयुक्तत्वे इव अङ्गत्वेऽपि प्रविष्टत्वेन उभयनिवृत्त्युपपत्ते, प्रयुक्तत्वनिवृत्तौ अङ्गत्वाङ्गीकारे फलाभावाच्च । न च दक्षिणावाक्ये परिसंख्यार्थत्वोपपत्तावपि 'दण्डेन' इत्यादिवाक्येन दीक्षायाः प्रसक्तस्य प्रधानमात्रार्थत्वस्य 'यो दीक्षित.' इत्यादिवाक्येन दीक्षायाः तत्तदङ्गाङ्गत्वविधायकेन बाधितस्य प्रतिप्रसवार्थता 'दीक्षा सोमस्य' इति वाक्यस्यास्त्विति वाच्यम् । गौरवेण अग्नीषोमीयादिवाक्यस्य दीक्षाविधायकत्वानुपपत्तेः । अतः

अनुवादविधयैव तद्बाधकत्वात् शुक्तमेव परिसंख्यात्वम् । वस्तुतस्तु गौरवमिवेन अनुवादविषयाऽपि न बाधकत्वं अपितु प्रधानाङ्गभूतदीक्षायुक्तपुरुषानुवाद एव ' य एवं विद्वान् ' इतिवत् दीक्षितपदम् । अतश्च दीक्षानाक्यस्य अनुवादकत्वमेव दक्षिणाप्रशंसाफलकम् । अतः प्रधानमात्रार्थमेव दीक्षादक्षिणम् । तथापि तु वाङ्केषु प्रकृतौ अन्या वा दक्षिणा, प्रसङ्गेन कार्यसिद्धेर्वादो वक्ष्यमाणत्वात् ।

' प्रयोजनं— अग्नीषोमीयादिविकारेषु दीक्षादक्षिणयोः अनतिदेशः सिद्धान्ते । तत्र तेऽपेक्षितत्वात् शनोत्पत्त्यादिवत् प्रकृतिप्रकृतितः अन्वाहार्यदक्षिणायाः स्वनत्मातिदेशः, अर्थाक्षिप्तं यत्किञ्चिद्दानसाधनद्रव्यं वा दक्षिणा, इत्यपि तत्रैव वक्ष्यते ।

मण्डन— ' दीक्षा सदक्षिणा नाङ्गे । '

शंकर— ' सोमाङ्गं दक्षिणा दीक्षा । '

● दीक्षादक्षिणवाक्ययोरुपक्रमादीनामेव तत्पदार्थलिङ्गत्वम् । वि. ३।७।१७.

■ दीक्षानियमाः अशक्तपक्षे मृताधिकारपक्षे लुप्यन्ते ( कृत्वाचिन्ता ) । वि. १०।२।१८.

■ दीक्षापदार्थः यजमानसंस्कारः । भा. १०।६। १५।५२.

■ दीक्षापरिमाणे ज्योतिष्टोमे यथाकामी । वा. ३।५।८।२८.

■ दीक्षापरिमाणे यथाकाम्यविशेषात् । ६।५। ८।२८ ॥

' एका दीक्षा, तिस्रो दीक्षाः, द्वादश दीक्षाः ' इति बहूनि दीक्षापरिमाणानि आम्नातानि । तत्र ज्योतिष्टोमे अनुष्ठातव्ये दीक्षापरिमाणे दीक्षाणां परिमाणे यजमानः यथाकामी यथा कामयते तथाकामी स्यात् । इच्छया यः कोऽपि परिमाणपक्षः स्वीकार्य इत्यर्थः । अविशेषात् विशेषाभावात् विशेषस्य अनुक्तत्वात् । इति पूर्वः पक्षः । यथाकामी इत्यत्र याथाकाम्यं इति, याथाकामी इति च पाठः । तत्र यथाकामी इति इयत , पुल्लिङ्गम् । यथाकामिनो भावः याथाकाम्यं इति नपुंसकलिङ्गम् । याथाकामी इति स्त्रीलिङ्गं इति विशेषः । सर्वे च पाठाः प्रामाणिकाः नातिभिन्नार्थकाश्च ।

इद पूर्वपक्षसूत्रं भाष्यकारमतेन । वार्तिककारमतेन तु सिद्धान्तसूत्रमेवेदम् । ज्योतिष्टोमे दीक्षाणां परिमाणे यथाकामी स्यात् । ऐच्छिको विकल्पः । अविशेषात् ज्योतिष्टोमप्रकरणस्य । इति सिद्धान्तः । इति ।

द्वादशाहस्तु लिङ्गात् स्यात् । २९ ॥

पूर्वपक्ष सूत्रेण प्राप्तं तुशब्देन निरस्यन् सिद्धान्तमाह । द्वादशाहः दीक्षाद्वादशाहपक्ष एव ज्योतिष्टोमे स्यात् । ज्योतिष्टोमे द्वादशैव दीक्षाः कर्तव्याः स्युः । कुतः ? लिङ्गात् ' द्वादश रात्रीर्दीक्षितो भृतिं वन्वीत ' इति नित्यवदाम्नानरूपात् । अन्यानि परिमाणानि तु विकृतौ भविष्यन्ति । इति भाष्यकारपक्षेण व्याख्या । वार्तिककारमतेन तु— अहीनरूपः सत्ररूपो वा द्वादशाहो नाम क्रतुविशेषः, द्वादशदीक्षापक्षमेव गृह्णीयात् । ' षट्त्रिंशदहो वा एष यद् द्वादशाहः ' इति लिङ्गात् । द्वादश दीक्षाः, द्वादश उपसदः, द्वादश सुत्याः इति षट्त्रिंशदहत्व अप्युक्तम् । तस्मात् द्वादशाहे नाम क्रतौ द्वादशदीक्षानियमः इति सूत्रार्थः । के.

● दीक्षाशब्देन अन्वर्यधर्मनियमविषयकः संकल्प उच्यते । स्त. १२।१।१२।२४. ● दीक्षाशब्देन मुण्डनवपनादिसंस्कारो लक्ष्यते । तेन तद्विषयः संकल्पः । टुप्. १२।१।१२।२४.

● दीक्षासिद्ध्यर्थं अध्वर्युणा दीयमानो दण्डो यजमानेन आक्रोपक्रयात् धार्यते । ' क्रीते सोमे मैत्रावरुणाय दण्डं प्रयच्छति ' । वि. ४।२।६.

● दीक्षितः ■ जुहोति न पचति इति निषेधः दीक्षणीयेष्ट्यनन्तरमेव । स्त. ५।३।११।२९–३१. ● ' दीक्षितो भृतिं वन्वीत ' । भृतिवननं यज्ञार्थं याचनया द्रव्यसंपादनम् । तत्र ' द्वादश रात्रीः ' इति तु प्रदर्शनार्थम् । वि. ६।५।८. ● दीक्षिताः स्वयं यजन्ते, अदीक्षिता अहीनैर्याजयन्ति । एतौ च नियतौ पदार्थौ । दीक्षिताः स्वार्थं यजन्ते, याजका अपि अदीक्षिताः याजयन्ति इति । भा. १०।६।१५।५८. ● दीक्षितमदीक्षिता दक्षिणापरिक्रीता ऋत्विजो याजयन्ति । १०।६।

८।२६. ● दीक्षितस्य अयमोजनाभावे 'पयो व्रतं ब्राह्मणस्य, यवागू राजन्यस्य, आमिक्षा वैश्यस्य' इति वर्णभेदेन व्रतस्य व्यवस्था। इदं व्रतं न पुरुषार्थं किंतु प्रकरणात् क्रत्वर्थम्। वि. ४।३।४, ● दीक्षितस्य अमेध्यदर्शने 'अबद्धं मनः' इत्यादिर्मन्त्रो जप्यः। स च पुनः अनेकामेध्यदर्शनेऽपि नावर्तनीयः। ११।४। १८.

● दीक्षितस्य दानहोमपाकप्रतिषेधोऽविशेषात् सर्वदानहोमपाकप्रतिषेधः स्यात्। १०।८।७।१२॥

ज्योतिष्टोमे श्रूयते 'दीक्षितो न ददाति, न जुहोति, न पचति' इति दीक्षितस्य दानहोमपाकानां प्रतिषेध उक्तः सः अविशेषात् विशेषाभावात् श्रौतानामेव दानहोमपाकानां क्रत्वर्थानां पुरुषार्थानां च प्रतिषेधः स्यात् इति पूर्वः पक्षः।

अक्रतुयुक्तानां वा धर्मः स्यात्, क्रतोः प्रत्यक्षशिष्टत्वात्। १३॥

पक्षान्तरमाह अक्रतुयुक्तानाम्, ये दानादयो न क्रतुना संबद्धाः, तेषां धर्मः स्यात् अयं प्रतिषेधः। क्रतुसंबद्धानां तु दानादीनां नाय प्रतिषेधः स्वीकर्तुं शक्यते क्रतोः क्रतुसंबद्धस्य दानादेः प्रत्यक्षशिष्टत्वात् वचनेनैव विहितत्वात्।

तस्य वाऽप्यानुमानिकमविशेषात्। १४॥

वाऽपि अपिवा इति पक्षान्तरमाह। तस्य क्रतोः आनुमानिक चोदकप्राप्तं दानहोमपाक 'दीक्षितो न ददाति' इत्यादिना प्रतिषिध्यते। पुरुषार्थस्य आनुमानिकस्य च अविशेषात् प्रतिषेध्यत्वेन तुल्यत्वात्। तस्मात् चोदकप्राप्तस्य प्रतिषेधः इति पक्षान्तरम्।

अपितु वाक्यशेषत्वादितरपर्युदासः स्यात्, प्रतिषेधे विकल्पः स्यात्। १५॥

अपितु इति पक्षव्यावृत्तिः। 'अहरहर्दद्यात्, अहरहर्जुहुयात्, अतिथिमागतं भोजयेत्' इत्यादिवाक्यस्य 'दीक्षितो न ददाति' इत्यादि वाक्यं शेषः। तस्मात् वाक्यशेषत्वात् 'दीक्षितो न ददाति' इत्यादिः इतरस्य अदीक्षितस्य पर्युदासः स्यात्, अदीक्षितः अहरहः जुहोति ददाति पचति इति। 'दीक्षितो न ददाति' इत्यत्र प्रतिषेधे स्वीकृते तु विहितप्रतिषिद्धत्वात् विकल्पः स्यात्। स पक्षश्च। सर्वथाऽपि ज्योतिष्टोमाङ्गभिन्नानां दानहोमपाकानां दीक्षितेन अकर्तव्यता इति सिद्धान्तः। 'दीक्षितो न ददाति' इति नञ् न प्रतिषेधार्थकः किन्तु पर्युदासार्थकः इति अधिकरणार्थः। के.

● दीक्षितस्य नदीतरणकाले 'देवीरापो अपांनपात्' इति मन्त्रस्य जपः। स च अथा-तरणाभेदेऽपि नावर्तनीयः। वि. ११।४।१८, ● दीक्षितस्य निद्राकाले प्रथमतः 'त्वमग्ने व्रतपा असि' इत्यादिमन्त्रस्य जपः। स च अनन्तरनिद्राभेदेऽपि नावर्तनीयः। ११।४।१८. ● दीक्षितस्य वर्षेष्वभिवर्षणे 'उन्दतीर्बलं धत्त' इति मन्त्रः पठनीयः। स च अनेकधारापातेऽपि नावर्तनीयः। ११।४।१८, ● दीक्षितस्य वाङ्नियमात् प्राक् पठनाय वास्तव-आग्नावैष्णव-बार्हस्पत्यमन्त्राः सन्ति, तेषां समुच्चय एव न विकल्पः, नानाकार्यकत्वात्। १२।४।१, ● दीक्षितस्य संकल्पितप्रयाणप्राप्तिपर्यन्तं मध्ये विश्रामस्थानेऽपि आद्ये एव 'भद्रादभि श्रेयः प्रेहि' इत्यादिमन्त्रपाठः। ज्योतिष्टोमप्रयाणे अधिकरणम्। ११।४।१९. ● दीक्षितान्नविधिप्रभोजननियमो हि श्रेयोऽर्थिभ्यो विधीयते। ('दीक्षितान्नं न भोक्तव्यम्' इति दीक्षितान्नेन निषिद्धस्य भोजनस्य अभावो नियम्यते)। भा ११।३।२४ पृ. ११२. ● दीक्षितकर्तृकस्य पुरुषार्थदानहोमपाकानां पर्युदासः। नदीक्षिताधिकरणम्। भा. १०।८।७।१२-१५. ● दीक्षितधर्माः 'न ददाति, न पचति, न जुहोति' इत्यादयः। वि. ६।५।११, ● दीक्षितधर्माणां देशान्तरप्रयोगेऽपि इति उत्तरं पदं। ६।५।६८. ● दीक्षितधर्मं ज्योतिष्टोमे 'कृष्णविषाणया कण्डूयति' इति। पुनः श्रुतं 'नीतासु (दक्षिणासु) चात्वाले कृष्णविषाणां प्रास्यति' इति। भा. ११।३। ६।१३, ● दीक्षितशब्दप्रवृत्तिः दीक्षणीयायाऽन्ते। ५।३। ११।२९-३१, ● दीक्षितसंस्काराः पूर्वे कर्तव्याः, ततः स्वकप्रतिमोचनादि अग्निचयने। ५।३।१२।२३.

● दीक्षिष्यमाण इति शानचा कर्ता अभिधीयते। लृट् भविष्यत्कालः। टुप्. १२।१।१२।२४.
● दीक्षिष्यमाणत् क्रियार्थात् क्रियायामुपपदे

लृट्प्रत्ययः सोमेन यक्ष्यमाणः सोमेन यष्टुं इत्यर्थः । रत्न. ५।४।२.

* दीपस्य क्वापि स्थितस्येव पदस्य अर्थप्रकाशकत्वानपायात् 'ब्राह्मणाय देहि, देहि ब्राह्मणाय' इत्यपि शेषः । संकर्ष. २।४।१७.

* दीर्घकालः कर्मी भवति । टुप्. १२।२।१२।४२.

* दीर्घशूकाः ( तण्डुलाः ) प्रियङ्गवश्च पूर्वतन्त्ये क्षीणे भवन्ति । भा. ११।२।४।९.

* दीर्घसोमाः द्वादश्यादयः सोमविकृतयो अहर्विधयाः । द्विरात्रादयश्चाह्ना । अग्निष्टोमस्तु नैव दीर्घसोमः । वि. ३।१।१६, * दीर्घसोमे संतर्दनस्य ज्योतिष्टोमादुत्कर्षः । ३।३।१६.

☒ दुःखमेव सर्वं विवेकिनः इति न्यायः । दुःखे सकलचन्दनवनिताऽऽदौ सुखत्वारोपः इत्यानुपूर्व्या पातञ्जलदर्शने माध्यमाचार्येणोक्तम् । साहस्री. ८७०.

* दुःखं हि तपः । भा. ३।८।३।९, * दुःखफलभोगाय अधर्मः श्रूयते । ३।८।३।९, * दुःखवान् । कर्तव्यश्च सुखवान्, अकर्मण्यो दुःखवान् । ६।१।१।२ पृ. ११४९.

* दुन्दुभिगानकालीनं काण्डवीणोपगानं महाव्रते । तच्च दुन्दुभिगानस्यैवोपगानम् । वि. १०।८।६.

* दुन्दुभिघोषेण वाजपेये माहेन्द्रस्तोत्रोपाकरणसाधनभूतेन प्राकृतदर्भमन्त्रयोर्बाधः । ( तत्र दुन्दुभिना दर्भयोः, घोषेण च मन्त्रस्य बाधः । ) भा. १०।४।११।१-२ वर्णकं ३.

* दुन्दुभिस्वनस्य बाधित्वम् उपगानमिदं पत्नीनां काण्डवीणादिभिर्गानम् । महाव्रते । भा. १०।४।५।८-९.

* दुरिष्टशब्दः समुदायप्रसिद्ध्या पापवचनः । दुरिष्टं पापमित्यर्थः । टुप्. १।२।३।९ पृ. १७४८.

* दुरिष्टिशब्दः समाप्तिवाचकः । टुप्. १।३।३।९ पृ. १७४८.

☒ दुर्जनगर्दभन्यायः । यथा दुर्जनस्तथा गर्दभः, यथा गर्दभस्तथा दुर्जन इत्यर्थेऽभिज्ञाभाणकप्रवृत्तिः । अयमपि श्लोकेन निबद्धः । तथाहि 'मलिनीकुर्वन्नर्जुनवर्त्म मदी भवति राधेयः । यदि ताडनादि लभते तथापि तच्छील एव पटुः ॥' अस्यार्थः—खलस्तथापि तच्छील एव । कथम् । तदाह— अर्जुनवर्त्म श्वेतमार्गम् । 'धवलोऽर्जुनः' इत्यमरः । मलिनीकुर्वन्, किञ्च राः धनं यदि धेयः निधातुं योग्यः संचितो भवति, तदा मदी भवति, मदवान् भवति । पुनर्यदि ताडनादि लभते देहलीदीपकन्यायेन भवतीत्यस्योभयत्र संबन्धः । गर्दभपक्षे खलः श्लेषाभेदात् खरः तथापि तच्छील एव । किं कुर्वन्, अर्जुनवर्त्म उज्ज्वलमार्गं लोठनात् धूल्युत्थापनेन मलिनीकुर्वन् । पुनरसौ राधे वैशाखमासे मदी मत्तो भवति, पुनर्यदि ताडनादि लभते, तथापि दुष्टं शीलं न त्यजति । अथ अर्जुनस्य मध्यमपाण्डवस्य वर्त्म मार्गं मलिनीकुर्वन् राधेयः कर्णः मदी भवतीत्यर्थोऽपि ध्वनित इति । साहस्री. ९७२.

* दुर्बलोऽपि अर्थवादः प्रबलस्यापि विधेः संदेहजनकत्वे निर्णयहेतुर्भवति । 'अक्ताः शर्करा उपदधाति' इति विधेः 'तेजो वै घृतम्' इत्यर्थवादेन निर्णयः । वि. १।४।१९. * 'दुर्बलोऽपि विधिः तदधीनात्मलाभेन प्रतिषेधेन तुल्यबलो भवति' इति पर्युदासन्यायस्य वेदनामहन्याधायस्वपर्यायस्य स्वरूपम् । बाल. पृ. ९८, * दशमे 'प्रतिषेधः प्रदेशे०' १०।८।१।१ इत्यत्रोक्तेन 'दुर्बलोऽपि विधिः तदधीनात्मलाभेन प्रतिषेधेन तुल्यबलो भवति' इति न्यायेन 'न प्रथमयज्ञे प्रवृञ्ज्यात्' इत्यस्य प्रतिषेधत्वे वैयर्थ्ये प्रतिषेधवत्त्वादेव विकल्पसिद्धिः । पृ. ९८. * दुर्बलस्यापि प्रबलाश्रितस्य प्राबल्यम् । श्रुत्यपेक्षया दुर्बलाया अपि स्मृतेः आचमनरूपप्रबलपदार्थबोधितत्वेन प्राबल्यात् पदार्थधर्मगुणभूतश्रौतक्रमत्यागेन वेदकरणानन्तरं क्षुते सति आचमनमेव कर्तव्यम् । मीन्या. * दुर्बलस्य प्रमाणस्य बलवदुपष्टम्भात् इतरेण बलवत्त्वं बाध्यम् । पराक्रमः. ६२।९. * दुर्बलस्य बाधो न्याय्यो न बलीयसः । भा १२।१।२।७.

* दुर्बलाश्रयं बलवदाश्रयेण बाध्यते अप्रधानत्वात् । बा. ३।३।७।१४ पृ. ८६०.

☒ दुश्चिकित्स्यव्रणपीडितानां व्रणं शिरामपि पोषागृहणमिति न्यायः । यथा व्रणपीडितपुंसः पीडानिवृत्तये शस्त्रेण व्रणं छिनत्ति वैद्यः स तु वैद्यत्वेनोच्यते

न तु पातकत्वेन, एवं च निरन्तरदुःखमयसंसारपरिभ्रमणपरिश्रान्तानां जीवानां कस्मिंश्चित्काले विक्षेपविगमप्रमुखसुखदानमात्रदानुभवेन विश्रान्तिं संपादयितुकामस्य शिवस्य संहाराख्यं नामसत्यम्। वस्तुतस्तु निरतिशयकरुणाम्बुधित्वमेव शिवस्य। अत एव निदानज्ञस्य भिषजो रुग्णदिशा प्रयुञ्जतो न किञ्चिदपि नैर्घृण्यम्। 'घृणैवास्य मनोभिका' इति शिवपुराणे व्याख्यानम्। साहस्री. ९४.

* दुष्कुलप्रसूतत्वं व्यभिचारशीलत्वे प्रयोजकम्, न हीनत्वम्। सु पृ. १२.

* दुष्टतायाः कार्यशक्तिविघातकत्वात्। ऋजु पृ. ११७. * दुष्टतायाः कार्याक्षमत्वं युक्तम्, न पुनः कार्यान्तरक्षमत्वम्। बृहती. पृ. ५१। नहि दुष्टत्वादयः शाल्याद्यङ्कुरजननसमर्थतां भजन्ते। यच्चोक्तं अप्राकृत्यदोषस्य कार्यान्तरोत्पादकत्वमिति, तत्र शारीरस्य पक्षे चक्षुरुद्यादिकं कार्यम्, तत्तु तत्र नास्त्येव। यत्तु प्रयत्नसदभिघातस्य, तदपेक्षया च न दोषत्वम्। ऋजु. पृ. ५२.

* दुहितृगमनं अनाचारः। वा. १।३।२।७ पृ. २०३-२०४.

* दूरात्वेऽपि कश्चिद्भवति। "व्यवहितमपि परागुप व्यवधायकं आनन्तर्येण मनसि विपरिवर्तमानं अलमेव भवति विशेषमुपजनयितुम्। यथा 'इतः पश्यसि धावन्तं दूरे जातं वनस्पतिम्। त्वां ब्रवीमि विशालाक्षि या पिनक्षि जरद्गवम्॥'" (धावन्तं जरद्गवं पश्यसि इत्यन्वयः)। भा ४।३।५।११.

* दूरभूयस्त्वात् (१।२।१।१२) इति अर्थवादनिमित्तं कथितम्। ("धूम एवाग्नेर्दिवा ददृशे, अर्चिरेवाग्नेर्नक्तं ददृशे' इत्यस्यार्थवादस्य निमित्तं अनेन सूत्रेण कथितम्। दिवा अग्नि दूरत्वात् न दृश्यते, रात्रौ तु अग्नेः आदित्याद्भिन्नत्वेन तेजसोमूर्तत्वात् दृश्यते इति निमित्तम्)। वा. १।४।११।२२ पृ ३५४.

¶ दूरस्थितवाक्यैकवाक्यताकल्पनमपेक्ष्य अष्टदोषदुष्टो विकल्पः पापीयान् इति न्यायः। आभरणम्, ३।३।१५।२६ वर्णक १ वस्.

¶ दूर्वेष्टकादिषु इष्टकाधर्मा कर्तव्याः॥

इष्टकामेकस्याणां इष्टकाकार्यत्वेऽपि द्वादशो नियमविधेः आवश्यकतया चमसाधिकरणन्यायेन इष्टकात्वस्याविवक्षाऽभावात् दूर्वाघृतादिषु आकृतेरभावेन इष्टकात्वजातेरभावात् न तेषु इष्टकाधर्माः। इति प्राप्ते, 'दूर्वेष्टका उपदधाति' 'घृतेष्टका उपदधाति' इत्यादौ इष्टकाशब्दप्रयोगस्य तद्धर्मप्राप्त्येकफलकत्वात् 'सहस्रेष्टकमग्निं चिनुते' इति विहितसंख्याघटकत्वाच्च भवेयुः अमृन्मयीष्वपि इष्टकाधर्माः। सकर्ष. २।१।८.

¶ दृतिनवनीतं श्येने सर्वेषामेवाङ्गानाम्, न सुत्याकालीनानामेव॥

तत्काले वा लिङ्गदर्शनात्। ३।८।२१।४०॥

भाष्यम्— इदमिदानीं संदिह्यते, किं सुत्याकालीनामङ्गानां नवनीतम्, उत सर्वेषामिति। सुत्याकालानां स्यात्, लिङ्गदर्शनात्। एवं भूयते 'अहपशुमालभते' इति। तत्र पुनर्वचनम्, अग्नीषोमीयस्य स्थाने अग्नीषोमीयः पुरोडाशः, अनुबन्ध्यायाः स्थाने मैत्रावरुणी पयस्या, इति द्वे स्थाने शून्ये दर्शयति। तेन अवगम्यते श्येनस्य वचनं सुत्याकालानामङ्गानां विशेषं विदधातीति।

वा— (पूर्वतन्त्रस्य विधानविरोधात् इति पदानुषङ्गेण व्याचष्टे—) संनिधिविशेषात् सामान्यतो दृष्टस्य तत्कालता लिङ्गदर्शनेन दृढत्वं आश्रयति। पशुसाहित्ये हि एतदीयो धर्मः सुत्याकाले दृष्टः, अग्नीषोमीयानुबन्ध्ययोः अन्येनानुग्रहवचनात्। तस्मात् अयमपि एतद्धर्मत्वात् सुत्याकालः इति।

सर्वेषां वाऽविशेषात्। ४१॥

भाष्यम्— सर्वेषामेव वाऽङ्गानां नवनीतं स्यात्। कुतः? अविशेषात्। अश्रुते विशेषे सर्वेषामप्यङ्गानामिति।

वा— तद्धुक्तम् 'सर्वेषां वा शेषत्वस्यातत्प्रयुक्तत्वात्' इति।

न्यायोक्ते लिङ्गदर्शनम्। ४२॥

भाष्यम्— यदुक्तं लिङ्गम्, तत्परिहरणीयम्। नास्ति तावत् प्रमाणं यत् श्येनस्य वचनं तत् सुत्याकालानामङ्गानामिति। किन्तु दर्शनम्। तदप्रमाणमूलत्वात्

मिथ्यादर्शनं मृगतृष्णावत् । कथं तु मध्ये पशूनामालम्भः इति । न्यायात् । को न्यायः । क्रमानुग्रहः । एवं वचनवर्जितः क्रमोऽनुगृहीतो भवति । तस्मात् सर्वेषामङ्गानां नवनीतमिति ।

वा—न्यायमध्ये लिङ्गमीदृशं साधकं भवति । आगमगम्यस्तु अयम् । न च सहालम्भस्य एतद्धर्मत्वात् तुल्यकालता । [illegible] तर्हि ? अन्यत एव न्यायात् । न चासौ दधिनवनीते संभवति । तं न्यायं दर्शयति ( भाष्यम्— ) एवं वचनवर्जितः यः क्रमः सनिकर्षलक्षणः अनुमेयमुत्पत्तिः, सोऽनुग्रहीष्यते इति । सवनीयकाले हि आलभ्यमानेषु न कस्यचित् पशोः कालमतिक्रमेत । न च द्विगुणो वा भवति । इतरथा द्वयमपि स्यात् । तस्मादुपपन्नं दर्शनम् ।

न्याय— ( दधिनवनीत अङ्गेषु इत्युक्तम् । तत्र तुल्यकालेषु वा सर्वेष्वेव वा इति विचारात् प्रासङ्गिकी संगतिः । ) सूत्रार्थस्तु— तुल्यकालाङ्गे एवेदं स्यात् पशुत्रयस्य श्येनाङ्गत्वेन विहितस्य तुल्यकालत्वरूपलिङ्गदर्शनादिति ।

वि— 'तुल्यकालेष्वथाङ्गेषु तुल्यः सर्वेषु चोदितः ।, आद्यो वैशेषिकाङ्गत्वाद्, वाक्यात् सर्वाङ्गसंगतिः ॥ '

भाट्ट— एवं चेत् तुल्यकाले एव श्येनवैशेषिकाणां ' सह पशूनालभते ' इत्यादीनां दर्शनात् दधिनवनीतस्यापि तुल्यकालाङ्गत्वे एव निवेशः । इति प्राप्ते, सामान्यतोदृष्टेन सर्वधर्मोपयोगात् सर्वार्थत्वम् । नहि पशुत्रयस्यापि तुल्यकालत्वे श्येनाङ्गत्वं प्रयोजकम्, अपितु प्रधानप्रत्यासत्तितुल्यकालोत्पत्तिवाक्यपाठरूपहेतुद्वयम् । न चात्र तदस्ति । अतः सर्वार्थतैव ।

मण्डन— ' सर्वत्र चाङ्गे नवनीतमिष्टम् । '

शंकर— ' अतुल्यकालेऽप्यङ्गे तत् । ' २५. ' तुल्यार्थो पशुसंहतिः । ' २६. ( श्येने पश्वादिवत् तुल्यानां यथा )।

**६** दधिनवनीताधिकरणम् । दधिनवनीतं श्येने अङ्गेषु न प्रधाने ॥

संनिधानविशेषादसंभवे तदङ्गानाम् । ३।८।२०। ३७ ॥

भाष्यम्— श्येने श्रूयते ' दधिनवनीतमाज्यम् ' इति । तत्र संदेहः किं नवनीतं प्रधानस्य, उत अङ्गानामिति । किं प्राप्तम् ? प्रधानस्य । तस्य हि प्रकरणमिति । वचनप्रामाण्यात् नवनीतेन प्रधानं निर्वर्तयितव्यमिति । एवं प्राप्ते, ब्रूमः । असंभवे एतस्मिन् तदङ्गानां श्येनाङ्गानां स्यात् । कथमसंभवः सोमद्रव्यकत्वात् प्रधानस्य । ननु वचनात् नवनीतं भविष्यति, न श्येने नवनीतं भवति इत्येष वाक्यार्थः । कस्तर्हि ? श्येने नवनीतं आज्यं भवति इति नवनीताज्यसंबन्धो विधीयते, श्येनाज्यसंबन्धः अनूद्यते न च साक्षात् श्येनस्य आज्यसंबन्धोऽस्ति । श्येनाङ्गानां तु विद्यते । तस्मात्ते तदनूद्य नवनीतं विधीयते संनिधानविशेषात् ।

वा—' दधिनवनीतमाज्यम् ' इति प्रकरणे विशिष्टविधानात् सोमो बाधिष्यते इति मन्यते । ( सिद्धान्तमाह— ) यतस्तु अनेकार्थविध्यसंभवात् आज्यमनूद्य विशेषमात्रं विधीयते । न च प्रधानस्य आज्यप्राप्तिः । तस्मात् ' आनर्थक्यात् तदङ्गेषु ' इत्येव सिद्धम् ।

आधानेऽपि तथेति चेत् । ३८ ॥

भाष्यम्— एवं चेत् इष्यते श्येनाङ्गानां नवनीतमिति, आधानेऽपि पवमानेष्टिषु स्यात् । ता अपि हि श्येनस्योपकुर्वन्ति, संस्कृतेऽग्नौ श्येनो निर्वर्तते इति ।

वा— अवश्यं श्येनोपकारि यत्तावद् इति वक्तव्यम् । ततश्च पवमानहविराज्यमपि श्येनोपकारि इति दधिनवनीतं स्यात् ।

नाप्रकरणत्वादङ्गस्य तन्निमित्तत्वात् । ३९ ॥

भाष्यम्— न श्येनस्य प्रकरणे पवमानेष्टयः अग्न्याधानं वा श्रूयते । किमतो यद्येवम् ? आधानस्य च श्येनस्य च न कश्चिदस्ति संबन्धः । अग्नीनामाधानम्, आश्रयश्च श्येनस्य । नस्माच्च पवमानहविःषु नवनीतम् । नैतत् श्येनाङ्गत्वे निमित्तम्, यत् आधानमग्नीनामुपकरोति । यदि प्रकरणादीनामन्यतमदस्ति, तत् निमित्तं भवेत् । तस्मान्न श्येनाग्न्याधानयोः संबन्धोऽस्ति इति ।

वा—( सूत्रं स्वयं व्याख्यातुमाह— ) नहि उपकारित्वमात्रेण संबन्धः । किं तर्हि ? अधिकारात् प्रकरणेऽवस्थितिः प्राकरणिकचोदकेन संनिहितम्, न पवमानेष्टिगतमिति व्यवस्था ।

सुधा— दधौ नवनीतं प्रकृतिभूत अस्य इति षष्ठीलुक् दधिनवनीतविशिष्टमाज्यं सोमद्रव्येण प्रधानमात्राथे

विधीयते इति पूर्वपक्षः। उत्तरपदार्थप्रधानतत्पुरुषसंभवे अन्यपदार्थप्रधानबहुव्रीह्ययोगात् व्यधिकरणबहुव्रीहेश्च अत्यन्तायुक्तत्वात् विशिष्टविध्ययोगेन अनेकार्थविध्यापत्तेः नवनीताज्यशब्दयोश्च भिन्नार्थत्वेन सामानाधिकरण्यायोगात् एव यस्य आज्यशब्दस्य कार्यलक्षणार्थत्वात्प्रतेः विधौ च लक्षणायोगात् आज्यकार्यानुवादेन दधिनवनीतविध्यवगतेः प्रधाने कार्याभावात् आज्यवति अङ्गमात्रे दधिनवनीत-विधि इति सिद्धान्तः।

शा— विशिष्टविधिगौरवात् उपदेशत. अप्रकृतस्यापि आज्यस्य अतिदेशात. प्राप्तिसंभवात् तदनुवादेन दधि नवनीतस्य गुणो विधीयते। यत् आज्य तत्, दधौ (चर्मभस्त्रिकायाम्) नवनीत प्रकृतिकं स्यात्। (दधिस्थाज्यपाकनिषेधो आज्यमित्यर्थ)

सोम— पूर्वत्र वाक्यादिव इह प्रकरणात् प्रधानार्थत्वमिति प्रत्यवस्थानात् सङ्गतिः। सूत्रार्थस्तु— प्रधाने अर्थात्वे अङ्गानां स्यात् चोदकतः आज्यस्य विधिलक्षण-विशेषात् नवनीतविध्युपपत्तिः इति। यद्यपि नवनीतस्य आज्यकार्ये तत्पुरुषोऽपि संभवति, तथापि तथा सति आज्यशब्दस्य आज्यकार्ये लक्षणा स्यात्, सा च बहुव्रीहा-ऽपि न युक्ता इति बहुव्रीहिराश्रितः। (शास्त्रदीपिकायां सिद्धान्ते)।

वि— 'नवनीत श्येन आज्य मुख्येऽङ्गे वा, उत मुख्यगम्। विधेयमाज्यमप्राप्तं दधिसन्नवनीतकम्॥ मुख्य. सोमविकारो (मुख्यसोमविकारो), ऽङ्गे चोदकप्राप्त-माज्यकम्। अनूद्य दधिसंस्थान नवनीतगुणो विधि.॥' अङ्गेषु चोदकप्राप्तस्य आज्यस्य प्रकृतिद्रव्यत्वेन दधिस्थ-नवनीतगुणो विधीयते।

भाट्ट— श्येने 'दधिनवनीतमाज्यं भवति' इति श्रुत दधिनवनीतं प्रकरणात् श्येनप्रधानाङ्गम्। नहि अत्र आज्या-नुवादेन दध्यधिकरणकनवनीतप्रकृतिविधि, आज्यस्य नवनीतप्रकृतिकत्वस्य प्रसक्त्यात् तदनुवादेन दध्यधिकरण त्वविधौ एकप्रसरताभङ्गापत्तेश्च। अतो बहुव्रीहिसमासार्थ एवैको दध्यधिकरणकनवनीतप्रकृतिकं संनिधानात् श्येने द्रव्यतया विधीयते। आज्यपद तु तस्यैव नवनीतप्रकृति-कत्वादनुवाद अन्यपदार्थतात्पर्यग्राहक चेति नानेक विधेयता। अत एव श्येनोऽपि आज्यद्रव्यकत्वात् दर्श-पूर्णमासविकार एव। गमकान्तरसत्त्वे तु सोमप्रत्याम्नाय-मात्रमाज्यम्। इति प्राप्ते, विशिष्टविधिगौरवापत्तेः अतिदेशप्राप्ताज्योद्देशपरत्वमेव आज्यशब्दस्य अङ्गीकृत्य तदुद्देशेन दध्यधिकरणकनवनीतप्रकृतिकत्वमेव प्रयोगान्तः-पातितया विधीयते। आज्यं च अङ्गेष्वेव प्राप्तमिति तन्मात्रविषयता। यत्तु दधिनवनीतपदस्य तत्पुरुषत्व-मङ्गीकृत्य दध्यधिकरणकनवनीतमेवाज्यपदलक्षिततत्कार्यो-द्देशेन द्रव्यतया पञ्चघृतन्यायप्रत्याम्नायत्वेन विधीयते इति न्यायसुधाकृन्मतम्, तत् आज्यपदे सप्रतिकल्पलक्षणा-पत्तेः तदपेक्षया आनुमानिकलिङ्गकल्पनागौरवेऽपि बहु-व्रीह्यङ्गीकारस्यैव न्याय्यत्वादुपेक्षितम्। यदि [redacted] किंचि-द्गमकान्तर भवेत् तदा तदेवास्तु। २०.

आधानेऽपि तथेति चेत्। ३।८।२०।१७॥ नाप्रकरण-त्वादङ्गस्य तन्निमित्तत्वात्। १८॥ सर्वत्र धर्माणां प्रकार-स्याधीतप्राकरणिकसाधारण्येनापूर्वोपकारके एवान्यथात् पवमानेष्टयाधानादीनामपि च श्येनापूर्वोपकारकत्वात् तत्रापि दधिनवनीतम्। इति प्राप्ते, यदुपकारकता वैधप्रमाणप्रमिता तदुपकारक एव धर्माणां निवेशः। न तु अर्थतमाज्यमस्योपकारकत्वेऽपि, श्येनोपकारकपवमानाज्य-भोजनादावपि दधिनवनीतत्वापत्ते.। न च आधानादेः श्येनोपकारकत्व प्राप्ते प्रमितम्, अग्निमात्रार्थत्वस्यैव तत्प्रमितत्वात्। अत. श्येनप्रयोगपतितदुपकारकाज्य एव तन्निवेशः। (अत्र अधिकरणान्तरमेव स्वीकृतं इति भाति)। २१.

सण्डत— 'श्येनेऽङ्गधर्मो नवनीतमाज्यम्।'

शंकर— 'श्येनाङ्गे नवनीतयुक्।' २४.

● दृषि स्वार्थं प्रयुज्यमान. दर्शनमवगमयेत्, न परार्थे। भा १०।६।२।३ पृ. १९८७.

● 'दृश्यमानेऽपि कदाचित्' (चन्द्रे, दर्शे उपवासः) इति गोभिल.। सम्पर्क. ११।२।१२.

● दृषद् दशाशुभम् 'यशाशुभानि संभरति'। 'दृषदुपलाभ्यां पिनष्टि'। नि ३।१।५, ● दृषदु पलयो. पेषणे समुच्चय. परस्परसापेक्षत्वात्। १२।१।८.

* दृषदुपलमोक्षणं अपूर्वप्रयुक्तं दर्शपूर्णमासयोः । भा. ९।१।२।२-३.

* दृष्टश्च तुशब्दस्यार्थे चशब्दः यथा "किं नेह भवति" इति । भा. ८।३।६।२८, * दृष्टो हि तस्य ( वेदस्य ) अर्थः कर्मावबोधनं नाम । १।१।१।१ पृ. ६. * दृष्टो हि मणिविक्रये वणिक्क्रयिकयोर्लाभालाभकृतः फलभेदः । कल्पतरुः. ३।३।२८।४३ अमृ.. * दृष्टमेव तु अर्थं अङ्गानि कुर्वन्ति प्रधानस्य अङ्गवत्ताम् । भा. ११।१।७।१५.

■ दृष्टं किमपि लोकेऽस्मिन्न निर्दोषं न निर्गुणमिति न्यायः । अत्र सर्वत्र गुणदोषौ भवत इति विवक्षाया प्रदर्शने । साहस्री. ५७२.

■ 'दृष्टं हि कर्मणः फलं कृष्यादिवत्' । (३।२।१५ सूत्रस्था भाष्यपङ्क्तिरियम्) इत्यनेन न्यायेन सामान्यतोदृष्टेन किं होमात् फलं मन्यसे । इति सिद्धान्तवादी पृच्छति । वा. ३।२।११।२५ पृ. ५४२. * दृष्टं हि हरीतकीं भक्षयतोऽवदघ्नतोर्विरेचनं फलम् । कल्पतरुः. ३।३।२८।४३ अमृ..

* दृष्टे कारणे सति न च अदृष्टं कल्पयितुं शक्यते प्रमाणाभावात् । भा. २।१।५।५ पृ. ४०.

■ दृष्टे संभवति अदृष्टकल्पनमयुक्तं इति न्यायस्य वेदमूलत्वाभावान्यमूलत्वयोर्निश्चयकारणस्य तुल्यत्वात् । तु. पृ. १५८.

■ दृष्टे संभवति अदृष्टकल्पना न न्याय्या इति न्यायः । प्रत्यक्षप्रमाणसिद्धे कार्ये अप्रत्यक्षकल्पना न कार्या, तस्या अयोग्यत्वादिति । महाभारतोद्योगपर्वैकोनपञ्चाशदधिकशततमोऽध्याये १५९-'न आत्मनो दुश्चरितादशुभं प्राप्नुयादनरः । न स कालं न वा देवानेनसा गन्तुमर्हति ॥' इति नवमश्लोकटीकायाम् "एनसा दोषेण देवान् कालं वा गन्तुमुपालब्धुं नार्हति, दृष्टे संभवति अदृष्टकल्पनाया अन्याय्यत्वात् दुष्टापराधे देवस्य कालस्य चोपालम्भः कर्तुमुचितः, न तु कस्मिन् कदाचिदपि.' इत्युक्तमिति । साहस्री. ५५९.

* ननु जिज्ञासासूत्रे एवाध्ययनस्य अर्थज्ञानफलकत्वसाधनाय 'दृष्टे०' इति न्यायस्य व्युत्पादनात् इह (१।२।४) पुनस्तद्व्युत्पादनमनर्थकमिति चेन्न । इहैनायं न्यायो व्युत्पाद्यते । अनेन तु न्यायेन अध्ययनस्य अर्थज्ञानार्थत्वं न संभवति, तथा सति विधिवैयर्थ्यात् विध्यभावेऽपि प्रमाणान्तरेणैव तदर्थसिद्धेः । सोम. १।२।४.

■ दृष्टे संभवति अदृष्टकल्पनाया अन्याय्यत्वात् इति न्यायस्य तानिदेवाद्यौ (२।११।३।६) व्युत्पादनेऽपि अकर्मकाले प्रयोगस्यादृष्टमदृष्टार्थत्वमिति शङ्का । सोम. १।२।२. * 'दृष्टे संभवति अदृष्टकल्पनाया अन्याय्यत्वात्' सिद्धरूपेदेवतासंस्कारार्थत्वमेव तृतीयस्यानूयाजस्य (दर्शादौ) । भाट्ट. १०।४।२०.

■ दृष्टे संभवति अदृष्टकल्पनाऽनवकाशः इति न्यायेन धर्मविचारेऽधिकरणे अध्ययनविधिः फलवदर्थावबोधरूपदृष्टार्थः इति सिद्धान्तः । याल. पृ. २.

■ दृष्टे सति अदृष्टकल्पना न न्याय्या इति न्यायेन अर्वाचीनानामेव पुराणोपनिबद्धानां स्मृतीनां वेदेऽपि ग्रहणं इति समुचितमेव । तन्त्रा. ध. प्र. प्रामाण्य. पृ. ६७. * दृष्टे सति अदृष्टकल्पना न संभवति । भा. ११।२।१६।६६.

* दृष्टे त्वनुपपत्तिर्नास्ति । बृहती. पृ. १६४ (नहि दृष्टेऽनुपपन्न नाम १५२, १५५, १६४). * 'दृष्टे हि स्वलक्षणस्य भक्त्यन्तरनिष्प्रामाणिका ।' शा. १।१।२।४ पृ. १८६.

* 'दृष्टा हि न क्वचित् बुद्धिरगृहीतविशेषणा' । कथं हि अश्वत्वे अनुच्यमाने तदवच्छिन्नरक्तत्वप्रत्ययो जायेत । वा. ३।४।४।१३ पृ. ९११.

* दृष्टादृष्टोभयार्थः ( दृष्ट देवतासंस्कारः, अदृष्टं च अपूर्वम् ) अन्त्यः प्रयाजः, स्विष्टकृत्, पशुपुरोडाशश्चेति । चि. ५।१८७.

■ दृष्टानुसारेण कल्पना इति न्यायेन नास्त्यस्याकाशस्य प्रतिबिम्बात्मभावात् । तत्प्रतिबिम्बप्रतीतिस्तु भ्रान्तिरेव । श्रीरत्न. १।१।२ नगू.

● दृष्टार्थः एव अशदशाक्षरः प्रजापतिः आश्रावय इत्यादिः । संकर्ष. २।३।१. ● दृष्टार्थः एव सर्वोऽपि अध्यनुज्ञाविधिः । बाल. पृ. २१, प्रतिनिधिनियमविधिश्च । पृ. २३. ● दृष्टार्थो विधिः अप्राप्तविषयः प्राप्तविषयो वा, स सर्वोऽपि नियमविधिः इत्यभ्युपगन्तव्यम्, अप्राप्तविषयेऽपि अस्मिन् नियमादृष्टाभ्युपगमावश्यम्भावात् । रसायनं. पृ. २११. ● दृष्टार्थं ऋत्विजां वरणम् । संकर्ष. २।३।१, ● दृष्टार्थं प्रस्तरधारणं स्नेहमार्थम् । २।२।१७. ● दृष्टार्थेष्वपि नियमादृष्टसिद्ध्यर्थं कथभावापेक्षोत्पत्तिः प्रकरणबन्धात् । वा. ३।१।११।२१ पृ. ७३२. ● दृष्टार्थेष्वपि विहितेषु नियमादृष्टं संभवति । वि. ६।२।१०. ● 'दृष्टार्थेष्वपि सर्वेषु नियमादृष्टसिध्यते' । रसायनं, २११. ● दृष्टार्थेषु कार्यैकत्वं दृष्ट्वा (वैकृतेन प्राकृतस्य) बाधः । वि. १०।४।१, ● 'दृष्टार्थेषु (धर्मेषु) तु तुल्यत्वमार्थं लोकप्रयोगिणाम्' । वा. १।३।४।९ पृ. २१९. ● दृष्टार्था स्मृतिः अदृष्टार्थया बाध्यते, अप्रसक्तबाधः । ११।१०।१४ पृ. ८६०, ● दृष्टार्थानां अवघातादिक्रियाणां प्रयोजननिर्वृत्तिपर्यन्तमभ्यासः । भा. ११।१।९।२७.

● दृष्टार्थगन्धस्पृष्टानि बहून्येव वेदेऽपि विधीयन्ते, इति न तावता वेदमूलत्वाभाव. । वा. १।३।२।७ पृ. २०९.

● दृष्टार्थता अध्ययनस्य (अध्ययनस्नानयोरानन्तर्ये) ग्याहन्येत (तस्मात् 'अधीत्य स्नायात्' इति क्त्वा नानन्तर्ये) । भा. १।१।१।१ पृ. ६.

● दृष्टार्थत्वं वेदमूलत्वाविरोधि । तु. पृ. १९६, ● वैदिकेष्वपि च सर्वत्र दृष्टार्थत्वस्य उत्प्रेक्षितुं शक्यत्वात् न तेन अवैदिकत्वसिद्धिः । पृ. १९६.

● दृष्टार्थोऽप्राप्तविधिविषयो द्विविधः, विधिं विना स्वतःप्रसिद्धदृष्टप्रयोजनजननसामर्थ्यः, विधिबलप्रसाद नियतजननसामर्थ्यश्च । (तत्र 'औदुम्बरो यूपो भवति' इत्यादयः । प्रकृतौ यूपे पलाशादोऽपि उदुम्बरः खादिरादिनियमविधिना निवर्तितः इति विकृतावपि चोदकात् खादिरादेरेव प्राप्त्या प्रतिप्रसवविधिविषयन्यायेन सौमायौष्णयवौ (१०।८।१८) अप्राप्तेन उदुम्बरजातिः अष्टास्रत्वादिविशिष्टयूपाकृतिजनने स्वत एव प्रसिद्धसामर्थ्या च । उत्तरायाश्शाखाच्छेदनमन्त्र–उत्कर–परिध्यादिः द्वितीयः, विधिबलादेव हिरण्यगर्भमन्त्रस्य गौणवृत्तिकल्पनया इन्द्रप्रकाशने, इषे त्वेति मन्त्रस्य छिनद्मि इत्यध्याहारेण शाखाच्छेदनप्रकाशने, उत्करस्य पृथक्ताकरणेन वाजिनपात्रधारणे, परिधेः स्वनिमद्ग्रहणेन पशुनियोजने च सामर्थ्यं प्रसाधनीयम् । रसायनं. पृ. २११.

● दृष्टार्थापत्तिः प्रमाणम् । पीनो देवदत्तो दिवा न भुङ्क्ते । अत्र दृष्टस्य पीनत्वस्यान्यथानुपपत्त्या रात्रिभोजनं सिध्यति । भा. ● दृष्टार्थापत्तिः श्रुतार्थापत्तिश्चेति अर्थापत्तिर्द्विविधा । बाल पृ ८.

● दृष्टकार्यं अदृष्टात् बलीयः । भा. १०।१।९।२३. ● दृष्टपूर्वो च या लक्षणा, तस्यामेव शीघ्रतरबुद्धिर्भवति । वा. १।३।१।२. ● दृष्टप्रयोजनद्वार एव संबन्धोऽवकल्पते संस्काराणां अपूर्वप्रयुक्तत्वेऽपि । वा. ३।१।४।७ पृ. ६६६. ● दृष्टप्रयोजनसंभवेन अदृष्टार्थत्वकल्पनाऽयोगात् । संकर्ष. ३।८।३. ● दृष्टफले संभवति अपूर्वं न कल्पनीयम् । यथा अवघाते पेषणे च । वि. २।१।१. ● दृष्टफलसंभवे अदृष्टकल्पनाया अन्याय्यत्वात् 'लभ्यमाने फले दृष्टे नादृष्टपरिकल्पना' इति न्यायात् । वैद्यनाथी. १।२।१।१ पृ १०. ● दृष्टमूलकस्मृतेः न प्रामाण्यम् । वि. १।३।२, ● दृष्टसंस्कारे संभवति अदृष्टमारादुपकारकत्व कल्पयितुमयुक्तम् । १०।१।६.

● दृष्टान्ते यथाभूतो धर्मो दृष्टः तथाभूतेनैव दार्ष्टान्तिकेऽपि भवितव्यम् । ऋजु. पृ. २३५. ● दृष्टान्तेन विशेषणस्य उपलक्षणोपन्यासे न युक्त इति यत्तु, तत् उपलक्षणस्यापि विशेषकत्वात् न चोद्यम् । यद्वा केनचित् सामान्येन दृष्टान्तता भविष्यति अनभिधेयत्वेन विशेषकत्वेन चेति । वा. १।३।९।११ पृ. ३१८.

● दृष्टिसृष्टिन्यायः । अयमपि नीलकण्ठेन व्यवहृत. । तथाहि, प्रजापतेः स्वापकाले तत्कल्पितः स्थावरजङ्गमप्रपञ्चः सर्वोऽपि तदीये अज्ञाने अव्याकृताख्ये लीयते रात्र्यागमे । तथा दिनागमे पुनस्तत एव यथापूर्वमाविर्भवति । एवं दृष्टिसृष्टिन्यायेन अस्मत्कल्पितोऽप्ययं

विपदादिप्रपञ्चः अस्तमुपगतो लीयते असत्प्रयोगे यथापूर्वं प्रादुर्भवन्तीति । साहस्री. ९१८.

* देवाः । दीव्यन्ति द्योतन्ते वा चन्द्रादित्याग्निग्रहनक्षत्र-तारकादिरूपेण, याच्यन्ते स्तूयन्ते सर्वैर्मन्त्रैः इति देवाः । धा. १।३।९।३१ पृ. २९९ । सर्वेन्द्रादि-देवतानुवर्ति दीव्यतिधात्वर्थयोगित्वसामान्यं देवताशब्द-वाच्यम् । मु. ए. ३५२.

* देवस्यत्वेतिमन्त्रन्यायः । विकृतौ निर्वापमन्त्रे सवित्रादिशब्दानां ऊहो न ॥

अर्थाभिधानसंयोगान्मन्त्रेषु शेषभावः स्यात्, तत्राचोदितमप्राप्तम्, चोदिताभिधानात् । ९।१।१२। ३६ ॥

भाष्यम्— स्तो दर्शपूर्णमासौ । तत्र निर्वापमन्त्रः 'देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्या-मग्नये जुष्टं निर्वपामि' इति । तत्र एषोऽर्थः सांशयिकः किं सवित्रश्विपूषशब्दानां विकृतौ ऊहः, उतानूह इति । तत्र एतत् तावत् परीक्ष्यते, कर्मणि समवेतमर्थं एते शब्दा अभिदधति, उत असमवेतमिति । यदि समवेतम्, ऊहिष्यन्ते । अथासमवेतम्, अविकृताः प्रयोक्ष्यन्ते । तदुभयमपि सह परीक्ष्यते । किं तावत् प्रतिभाति ? तत्र समवेतमभिवदन्ति इति । कुतः ? एतद्धि मन्त्रपदानां दृष्टं प्रयोजनम्, यत् समवेतमर्थं प्रकाशयन्तीति । यत् असमवेतार्थप्रकाशने न किञ्चिदपि दृष्टं प्रयोजनम् । समवेतानां तु प्रकाशने दृष्टमस्ति । तत् यदि समवेता-भिधायिनः एते शब्दाः, ततः प्रयोजनवन्तः । कथं पुनः समवेताभिधायिनः ? यदि नाम सवित्रादयः शब्दाः अग्न्यादीनां वाचका भवेयुः, यदि वा सवित्रादयो देवता विशेषाः दर्शपूर्णमासयोः स्युः । तन्मन्त्रपदानां अदृष्टार्थता मा भूत् इति अन्यतरदपि अध्यवसीयते, मान्त्रवर्णिको देवताविधिः, सवित्रादयो वा शब्दाः अग्न्यादीनां वाचका भवेयुः । तस्मात् अर्थवत्त्वात् अन्यतरत् अध्यवसेयम् । अत्राह, ननु 'अग्नये जुष्टम्' इत्यत्र अवचनभूताः सवित्रादयः अग्न्यादीनां वचना अपि सन्तः अग्न्यादिभिः प्रकाशितायाः देवतायाः न किञ्चिदपि अधिकं कुर्युः । नो खल्वपि सवित्रादिवचना एव मान्त्रवर्णिकाः शक्नुवन्ति उपकर्तुम् । अत्रोच्यते पृथक् वाक्यानि एतानि भविष्यन्ति, तेषां 'जुष्टं निर्वपामि' इति साधारणः अनु-षङ्गः । तानि वाक्यानि दर्शपूर्णमासयोर्गुणभूतानि । यदि एतद्देवत्यानि अत्र हवींषि विद्यन्ते, ततः अवकल्पन्ते इति अर्थापत्त्या मान्त्रवर्णिक्यो देवता विधीयन्ते अग्न्यादिवचना वा सवित्रादीनाम्, पृथक् वाक्यानि वा अभिप्रायेण वैकल्पिकानि इति ।

एवं प्राप्ते, ब्रूमः । नैवमादीनि ऊहितव्यानि इति । अचोदिते ऊहो न प्राप्नोति, चोदिताभिधानात् मन्त्रस्येति । अतः एतत् वर्ण्यते, असमवेताभिधायिनः सवित्रादय इति । कथम् ? नहि अत्र सवित्रादिदेवत्यं कर्म चोद्यते । न च अग्न्यादीनामर्थेषु सवित्रादयः शब्दाः प्रसिद्धाः । अत्राह, ननु अर्थापत्त्या अन्यतरत् अध्यव-सीयेत इत्युक्तम् । सति एतद्देवत्ये कर्मणि सवित्रादि-वाक्यानि उपपद्यन्ते, अग्निवचनत्वे वा सति । या हविषो देवता, सा मन्त्रवचनेन प्रकाशयितव्या । सवित्रादयश्च शब्दाः निर्वापवाक्ये प्रकाशनार्थाः । ते हविर्देवताः प्रकाशयन्तः उपपद्यन्ते, नान्यथेति । अग्न्यादयश्च हविर्देवता इति तद्वचनाः इत्यध्यवसीयते । अत्रोच्यते । यदि अकल्प्यमाने आनर्थक्यमेषां स्यात्, ततः अन्यतरत् कल्प्येत अर्थाभिधानसंयोगात् मन्त्रेषु शेषभावो भवतीति । न तु एवमकल्प्यमानेऽपि आनर्थक्यम् । तस्मात् नान्यतरस्यापि कल्पने किञ्चिदस्ति प्रमाणम् । न च चोद्यन्ते एतच्छब्दिका देवताः । तत्र अचोदितमप्राप्तं ऊहम्, चोदिताभिधानात् ।

टुप्— उपोद्घातप्रसक्तानुप्रसक्तादि निवृत्तम् । इदा-नीं ऊहश्चिन्त्यते । किं सवित्रादिशब्दा विकृतौ ऊहि-तव्याः (उत) नेति । (तदर्थमिदं चिन्त्यते किं समवेत-देवताप्रकाशनार्था एते शब्दाः, उत असमवेतस्वार्थद्वारा निर्वापमेव प्रशंसन्ति इति । पूर्वपक्षमाह—) ऊहितव्याः । कुतः ? सवित्रादयः शब्दाः (तावत्) अर्थप्रकाशनाः (न तु अदृष्टार्थाः) । यदि श्रुतिदृष्टाः (एतान्ते)

ततो दृष्टार्थाः स्युः, प्रकाशनद्वारेण मन्त्रस्यापेक्षितत्वात् । यदि ( तु ) स्तुत्या अग्निमभिवदन्ति, ततो दृष्टार्थाः ( तस्मात् समवेतार्थवचनाः सवित्रादयः शब्दाः ) । अथवा सवित्रादिभिः ( शब्दैः ) मुख्य एवार्थः मन्त्राख्यते, तथापि समवेतार्थवचनाः, कथम् ? भिन्नत्वात् एतेषाम् ( मन्त्राणाम् । तस्मात् 'देवस्य त्वा सवितुः' इत्यादि प्रतिदैवतं मन्त्रभेदः । तेषु च 'जुष्टं निर्वपामि' इत्यनुषङ्गः । तत्र— ) मान्त्रवर्णिको देवताविधिः दर्शपूर्णमासयागेषु अग्न्यादिभिः वैकल्पिको भविष्यति । अत्र ( केचित् ) आहुः । मान्त्रवर्णिकेन देवताविधानेन न शक्यन्ते अग्न्यादयः उत्पत्ति-( वाक्य- )शिष्टा बाधितुम्, विषमशिष्टत्वात् । ( तस्मात् ) सवित्रादिमन्त्रवर्णे ( अपि ) यागान्तराणि कल्प्यन्ते । तेषु मुख्याश्च समवेतवचनाश्च ( सवित्रादिशब्दाः ) इति । नैतत् युक्तम् । एवं सति यागान्तरत्वात् प्रयाजादिवत् स्युः । न चोदकेन अतिदिष्टानामपि विकारः स्यात्, यथा प्रयाजादीनाम् । तत्र पूर्वोत्तरपक्षयोः न ( कश्चित् महान् ) विशेषः । तस्मात् स एव ( युक्तः पूर्व- )पक्षः, यत्र तावत् स्थास्यति । ( अत्राह सिद्धान्ती— ) एवं प्राप्ते, ब्रूमः । लोके सवित्रादयः अग्न्यादिवचना न प्रसिद्धाः । न च गुणेन (गुणवृत्त्या लक्षणेनापि) अग्न्यादीनभिधातुं समर्थाः । ( कुतः ? ) यत्र ( हि ) परशब्दसामानाधिकरण्यं (तत्र) गुणेन ( निमित्तेन ) परशब्दः परत्र ( वर्तते ) न चेह ( अभिधानेन ) सामानाधिकरण्यं ( सवित्रादीनामस्ति ) विविभक्तिनिर्देशात् । न मान्त्रवर्णिको देवताविधिः शक्यः कल्पयितुम् । मन्त्रभेदे ( हि सति ) स भवति । एकः ( चायं ) मन्त्रः इत्युक्तम् 'अर्थैकत्वात्' इति ( २।१।१४।४६ ) । कल्पितेऽपि ( मन्त्र- ) भेदे नैव अग्न्यादिना ( सह मान्त्रवर्णिकानां सवित्रादीना ) विकल्पः ( युक्तः ) विषमशिष्टत्वात् । तस्मात् निर्वाप स्तुत्यर्थोऽयमुच्चारणं इति ।

ततश्चावचनं तेषामितरार्थं प्रयुज्यते । ३७ ॥

भाष्यम्— अथ यदुक्तं मन्त्रवत्त्वेन शब्देन प्रकाशन्ते ऽत्र देवताः, तस्मादपि अश्रुतानां प्रकाशने न किञ्चिद् इति प्रयोजनमिति, तत् परिहर्तव्यम् । अत्रोच्यते । ततश्च तेन कारणेन, अश्रुतानां वचनं न क्रियते सवित्रादिभिः शब्दैः । केन तर्हि कारणेन क्रियते ? इतरार्थं प्रयुज्यते निर्वापस्तुत्यर्थम् । देवस्य सवितुः प्रसवे—देवेन सवित्रा यजमानेन प्रसूते उदिते वा सवितरि । अश्विनोर्बाहुभ्यां—परिक्रममभिप्रेत्य यजमानयोर्दम्पत्योर्बाहुभ्याम्, अश्विनौ ( अश्ववन्तौ ) हि तौ अन्याधेये अश्वदानेन, अश्विवन्तौ वा तत्फलं अश्नुवाते । तद्बाहू इति स्तौ बाहू व्यपदिशति, देवताऽध्वर्योर्वा अश्विनोः एतौ बाहू इति । पूषणं यजमानमेव मन्यते पुष्टतेः । एवं सर्वे निर्वापविशेषणशब्दनार्थाः ।

अत्राह, कस्मात् नोत्कृष्टाः सवित्रादयः शब्दाः, प्रकरणान्तरे सवितारं अश्विनौ पूषणं चाभिवदन्ति । लिङ्गेन तत उत्कृष्यमाणाः प्रकरणं बाधितुमर्हन्ति । अत्रोच्यते । सवित्रादयः परविशेषणं विभक्तिश्रुत्या क्रियन्ते, प्रातिपदिकार्थस्तु अन्यतिरिक्त इति गम्यते । तत्र लिङ्गं श्रुत्या बाध्यते । लिङ्गं हि प्रातिपदिकार्थप्रकाशनं देवताऽर्थमित्थं कृत्वा । इह देवताऽभावात् यत्र देवता तत्रोत्कर्षति । विभक्तिश्रुतिस्तु प्रातिपदिकार्थं पदार्थान्तरविशेषणं गमयति । तच्च इहास्ति पदान्तरम् । श्रुतिश्च लिङ्गात् बलीयसी । तस्मात् नोत्कर्षः । आह, यदा सवित्रादयो यजमानपराः, तदा तत्रे कथमनूह इति । उच्यते । तोषणार्थमिदं वाक्यम्, नानुज्ञापनार्थम् । अनोषितस्य तोषणं कर्तव्यम्, तत्र दृष्टोऽर्थः । अनुज्ञापनं पूर्वं वृणानेन कृतम्, तत् अदृष्टार्थमापद्येत । अपि च 'जुष्टं निर्वपामि' इति तोषणकरणं 'निर्वपामि' इति भावशब्देनोच्यते । 'सवितुः प्रसवे' इति अनुज्ञा निर्वृत्ता परविशेषणार्थं कीर्त्यते । अननुज्ञातमपि निर्वपणशब्दार्थं कुर्यादेव, न तु अतोषितेन यागः भवति । तस्मात् तोषणार्थत्वात् परार्थाः सवित्रादयः शब्दाः नोत्कृष्यन्ते इति ।

व्या— ( पूर्वपक्षमाह— ) 'तत्र दृष्टार्थतालाभाद् देवतावाचिता भवेत् ॥ निर्वापस्य प्रशंसार्थाः सन्तोऽदृष्टार्थतामियुः । सवित्रादिपदैस्तस्मादग्न्यादिरभिधीयते ॥ अग्निना वा विकल्पेन सविता मान्त्रवर्णिकः । ( सिद्धान्तमाह— ) उत्पत्तौ वह्नितोक्तेन न मन्त्रोक्तो विकल्पते ( विकल्प्यते ) ॥ वैषम्यात्

सवित्रादिपदमप्येष. वाचकम् । मन्त्रवाक्यानि चैतानि भिद्येरन् प्रतिदेवतम् ॥ जुष्टनिर्वापशब्दौ च भजेतामनुषञ्जिताम् । सर्वेष्व निर्वपाम्यन्तः एकमन्त्रः प्रतीयते ॥ जुष्टादिः सकृदाम्नातो न सहेतानुषञ्जनम् ॥' तत्राक्षेपितम्याः ।

सोम— उपोद्घातप्रसक्तानुप्रसक्तं समाप्य इदानीं अध्यायार्थः ऊहश्चिन्त्यते इति संगतिः । सूत्रार्थस्तु— मन्त्राणां समवेताभिधानद्वारा कर्मणि शेषभावात् सवित्रादीनामपि स्वार्थाभिधानेन शेषभावे समवेतार्थत्वात् ऊहः इति 'अर्थाभिधानसंयोगान्मन्त्रेषु शेषभावः स्यात्' इत्यनेन पूर्वपक्षः प्रतिपाद्यते । तत्रोत्तरम्, अचोदितं अचोदितार्थकं सवित्रादि ऊहप्राप्तं मन्त्रस्य चोदिताभिधायकत्वात् इति ।

विधि—'सवित्रश्व्याद्यूहनीयं न वा, ऽर्थः संगतस्ततः । ऊहो, न्यायिकृतस्यैव निर्वापाङ्गस्य भवात् ॥' सवितृ-अश्वि-आदि ऊहनीयं न वा इति संशयः ।

भाट्ट— एवं तावदुपोद्घातमुखेन ऊहविषयश्चिन्तितः । इदानीं साक्षादेव तद्विषयश्चिन्त्यते । तत्र 'फलदेवतयोश्च' (९।१।३।४) इत्यत्र शक्त्या अपूर्वसाधनीभूतदेवताभिप्रकाशकमन्त्रपदानां विकृतौ तत्स्थानापन्नदेवतान्तरे शक्त्या तत्प्रकाशनार्थं पदान्तरोहः इत्युक्तम् । तत्र यत् मन्त्रपदानां न शक्त्या अपूर्वसाधनीभूतदेवतादिप्रकाशकत्वम्, अपि तु लक्षणया तत्प्रकाशकत्वम्, शक्यार्थस्यैव वा अदृष्टार्थमन्यतुल्यत्वे योपादानम्, तत्रासमवेतार्थत्वात् विकृतौ अपि श्रुतपदैरेव तत्प्रयोजनोपपत्तेर्नोहः । समवेतार्थत्वं च अदृष्टाद्वारकसंबन्धेन स्वशक्यार्थस्य अपूर्वसाधनीभूतसंबन्धित्वम् । अस्ति चेदम् 'देवस्य त्वा' इत्यादिमन्त्रे अग्निनिर्वापपदयोस्तद्द्वारा यागगतद्रव्यसंबन्धित्वात् । सवितृ-प्रसवादिमन्त्रपदानां च स्वशक्यार्थस्य अदृष्टद्वारा तादर्थ्यसंबन्धित्वेऽपि न समवेतार्थत्वम् । एवं देवादिपदानामपि न समवेतार्थत्वम् । नहि देवसवित्रश्विपूषशब्दानां प्रकृतयागीयदेवताप्रतिपादकत्वं संभवति, तत्पत्तिशिष्टदेवताऽवरोधेन मन्त्रवर्णिकदेवताकल्पनाऽनुपपत्तेः । न चोपांशुयाजे वचनवत्, तथात्वे मन्त्रमात्रनिर्वापैकवाक्यताभङ्गापत्तेः । न च 'त्वा जुष्टं निर्वपामि' इत्येतत्पदानुषङ्गेण 'देवस्य सवितुः प्रसवे त्वा जुष्टं निर्वपामि, अश्विनोर्बाहुभ्यां त्वा जुष्टं निर्वपामि, पूष्णो हस्ताभ्यां त्वा जुष्टं निर्वपामि, अग्नये त्वा जुष्टं निर्वपामि' इत्येवं मन्त्रभेदाङ्गीकारेण निर्वपामिपदैकवाक्यतोपपत्तेः चतुर्थ्याग्नेये उपयोगेऽपि आद्यानां त्रयाणां मन्त्राणामुपांशुयाजे देवताकल्पकत्वोपपत्तिरिति वाच्यम् । अनुषङ्गेण वाक्यभेदाङ्गीकारस्यैव दोषत्वात् । षष्ठ्यन्तपदानां प्रसवबाहुहस्तपदैरन्वितानां देवताप्रतिपादकत्वे प्रमाणाभावाच्च । अत एव एतत्कल्प्य-देवतानामन्यत्र निवेशासंभवेऽपि यागान्तरकल्पकत्वमिति शङ्काऽपि प्रत्युक्ता, तथात्वे यागान्तरस्य आग्नेयादङ्गाऽऽपत्तेर्निवृत्तो ऽसमवेतत्वेन । एतेन या सूत्रे सवित्रादिपदानामन्यत्रादिपरत्वं लक्षणया स्वीकृत्य समवेतार्थत्वशङ्का कृता, सा येन शक्यसंबन्धेन अग्न्यादिपरत्वम्, तेनैव शक्यसंबन्धेन वैकृतदेवतापरत्वस्यापि उपपत्तौ ऊहाप्रसक्तेरुपेक्षिता । अत एव समवेतार्थत्वलक्षणे शक्यार्थस्येति विशेषणम् । अस्तु वा शक्यपदं वृत्तिप्रतिपाद्यपरम्, तथापि समवेतार्थत्वेऽपि लक्षणयैव ऊहरूपफलाभावकैरेव इयं शङ्कोपेक्षिता । तस्मात् कथमपि समवेतार्थप्रकाशकत्वाभावात् देवस्यत्वादिपदानां यः प्रयोगोंऽशः, तद्विशिष्टनिर्वापप्रकाशनमेव देवस्य त्वाऽऽदिसकलमन्त्रप्रयोजनम् । तत्र येषां पदार्थानां दृष्टप्रयोजन-संभवः, तत्प्रकाशनस्य दृष्टमेव प्रयोजनम्, येषां तु तदसंभवः, तत्प्रकाशनस्य अदृष्टमेव प्रयोजनं कल्प्यम् । अत एव तादृशपदार्थानां निर्वापेऽपरि वैशिष्ट्यमपि आहार्यसंबन्धेनैवेति ध्येयम् ।

तदिह निर्वापस्य तावत् दृष्टमेव प्रकाशनं प्रयोजनम् । अग्नये त्वा पदार्थस्य च तदुपयोगितया स्वातन्त्र्येण च स्मृतिदार्ढ्यम् । जुष्टपदस्य च वक्ष्यते, तदन्येषां तु अदृष्टार्थत्वमिति । केचित्तु देवस्यत्वादिपदैर्निर्वापस्तुति-रूपतया प्रतिपादयन्ते । सा चानुष्ठानकालेऽपि निर्वापं प्ररोचयितुमिति दृष्टार्थैव । तथा अस्तु, सर्वथा देवस्य त्वाऽऽदिपदानि असमवेतार्थानि नोहितव्यानि ।

यत्तु भाष्यकारेण गौण्या अश्विशब्दः आपाते अभ्रदानकरणात् दंपतिपरः, पूषशब्दश्च पोषकत्वात् यजमानपरः, अध्वर्युबाहुहस्तयोश्च तदीयत्व परिकीर्तनात्, देवः सविताऽपि लक्षणया यजमानः, तस्य प्रसवे अनु-

न्यायमित्यर्थाङ्गीकारेण निर्वापविशेषणत्वमुपपादितम्, तत् वेदे आरोपकपुरुषाभावात् अन्यत्रार्थवादादौ आहार्यारोपस्यैव इष्टाध्यारोपाभावमभिप्रेत्य । यदा तु अध्वर्योः स्वात्मनिष्ठेन आहार्यारोपेण वैशिष्ट्यं संपाद्य स्वकर्तृकं निर्वापं प्रकाशयितुं लौकिकवाक्यप्रयोगवत् वैदिकवाक्यप्रयोगेऽपि ग्रामकामाय इत्यादौ न्यत्वे, तदा आयुक्तलक्षणायां प्रमाणाभावात् अध्वर्युप्रकाशनमात्रान्यतमग्रहणे नियमकाभावाच्च पूर्वोक्तपक्षाश्रयणमेव युक्तम् । किञ्च, एवं सति देवसवित्रश्विपूषशब्देषु बहुवचनोहः प्रसज्येत । न च यजपतिबुद्धिवदस्य परार्थत्वमिति भाष्यकारवचनात् युक्तम्, अश्विपूषपदे तथा संभवेऽपि यजमानानुज्ञायाः परकीयद्रव्यविषयेऽपि अचौर्यादिपरिहारार्थेन दृष्टार्थत्वात् 'उदीचीनानस्य पदो निधत्तात्' इत्यादाविव देवसवितृपदयोः ऊहस्यानिवार्यत्वात् । न च एवं मन्त्रेऽपि देवस्य सवितुरुदयरूपे प्रसवे इत्यर्थाङ्गीकारेण तस्य समवेतार्थत्वात् 'महायज्ञे हवींषि निर्वपेत्' इत्यादिविकृतौ अप्रसवे इत्यूहापत्तिः । अमावास्यायां च प्रागुदयान्निर्वापे लोपापत्तिरिति वाच्यम् । प्रसवे जाते भविष्यमाणे वा इत्यर्थाङ्गीकारेण बाधकाभावात् । सूर्योदयकालीनत्वप्रकाशनस्य दृष्टार्थत्वाभावाच्च । अतो न देवस्येत्यादिपदेषु ऊहः इति सिद्धम् ।

मण्डन— 'नोहः सवित्रादिपदेषु कार्यः ।'

शंकर— 'सवित्रादेरनूहनम् ।' १८.

● 'देवस्य त्वा' इत्यादौ एकवाक्यत्वनिर्णयार्थं एकवाक्यत्वलक्षणम् । के. २।१।१४।४६, ● 'देवस्य त्वा सवितुः प्रसवे' इति मन्त्रे 'अग्नये निर्वपामि' इति पदद्वयस्य अनुष्ठेयार्थप्रकाशकतया देवस्य त्वा इत्यादिपदानां स्तावकता इति सर्वेषां सार्थकता । आमरणम्. १।३।१४। २५ भाष्.

● देवानां आमोद्देशेन त्यागासंभवात् विग्रहाभावाच्च अशक्तेः अनधिकारः । कर्मकर्तृभावविरोधात् आत्मोद्देशकत्यागस्य स्वत्वनिवृत्तिफलकत्वासंभवाच्च त्यागासंभवः । सोम. ६।१।२. ● देवानां देवतात्वं कश्चित् श्रुत्या कश्चित् वाक्येन । तद्धितनिर्देशे श्रुत्या, चतुर्थीनिर्देशे वाक्येन । भा. ३।२।९।२३ पृ. ९३३, ● देवानां वैदिके कर्मणि नाधिकारः । ६।१।२।५.

● देवपत्न्यः चतुर्षु पत्नीसंयाजेषु तृतीयस्य देवता । तद्द्वारा कर्मनामः पत्नीसंयाजशब्दस्य प्रवृत्तिः । वि. ३।३।१५.

● देवपूजा चन्दनादिना यथा नाट्यार्थेषु उपदिश्यमानेषु कश्चिद् ब्रूयात् देवाय धूपो देयः पुष्पाण्यलङ्करिष्यन्ति चन्दनेनानुलेपनम् उपहारोऽस्मा उपहर्तव्य एवं कृते देवस्तुष्यति इति । तमन्यः प्रतिब्रूते नैतदेवम्, न प्रथमं धूपो दातव्यः, प्रथमं पुष्पाणि अलङ्करिष्यन्ति इति । एवं मन्यते धूपदानस्य प्राथम्यमनेन उक्तमिति । भा. ५।१।४।४.

● देवयजनं देवाः इज्यन्ते यत्र इति यज्ञभूमिः । देवयजनाध्यवसानम्— इदं योग्यत्वात् देवयजनं कर्तव्यं इति निश्चयः । इदं यज्ञारम्भात् प्राक् कर्तव्यं भवति । के.

● देवव्रतानि नाम त्रीणि सामानि अनूक्ताणि । वाख. पृ. ७२.

● देवस्वामित्वव्यवहारसिद्ध्यर्थं देवताया अपि स्वीकारापर्यन्तत्वस्य तृतीये साधितत्वात् । भाट्ट. ६।१।१२.

● 'देवीरापः' इति दीक्षितस्य प्रवासे नदीतरणार्थो मन्त्रः । यदा अनेकस्रोतसं नदीं तरति, तदा आदौ सकृदेव मन्त्रः, न तु प्रत्येकं स्रोतसि मन्त्रावृत्तिः । भा. ११।४।१७।५०.

● देवता अलौकिकैकप्रमाणशब्दाधिगम्या अपूर्ववत् । संकर्ष. २।४।२. ● देवता आरादुपकारिणी, तस्मात् परिग्रहम् (हविषु अन्वयम्) । भा. ८।१।१७।३२, ● देवता याच्ञा यदी हविरुपयोऽप्यते तर्पयति च । तृप्ता श्रेयस्यति । प्रसन्ना सती फलेन संयोजयतीति । तदेतत्सर्वमसिद्धम् । १०।१।१।१ वर्णक ३. ● देवता इन्द्रादयो विग्रह-हविःस्वीकार-मद्भोजन-तृप्ति-प्रसादरूपपञ्चकविशिष्टा नैव सन्ति । विग्रहादिपञ्चकप्रतिपादकयोर्मन्त्रार्थवादयोः स्वार्थे तात्पर्याभावात् न चान्यत् किंचित् प्रमाणमस्ति । शब्दरूपा एव तु देवताः । शब्दबोध्या वा मनःकल्पितरूपा देवताः स्वीकार्याः । वि. ९।१।४.

● देवता उद्देश्याङ्गभूतत्वात् द्रव्यस्य त्यागाङ्गभूतस्यापेक्षया दुर्बला । भाट्ट. ४।१।७. ● 'देवतैव प्रधानत्वात् फलं याच्येत कर्मवत् । न स्वामिनि स्थिते कश्चित् दासान् प्रार्थयते फलम् ॥' ( कर्मण एव फलं न देवतायाः इत्यर्थः ) । वा. ३।१।५।२९ पृ. ४३१. ● देवता कर्मणि गुणभूता याज्याऽनुवाक्याद्वयेन कर्मसिद्ध्यर्थमुपलक्ष्यते । भा. १२।४।२।३, ● देवता यावत् उद्देशेन अर्थं साधयति । ६।३।५।१८.

● देवता तु तदाशीष्ट्वात् संप्रासत्वात् स्वामिन्यनर्थिका स्यात् । ९।१।१२।३६ इति सूत्रेण 'आशासाना मेधपतिभ्यां मेधम्' इति मेधपत्यस्य पशो. मेधपत्यर्थत्वाशिषः देवताया पशुस्वामित्वसिद्ध्यर्थे उपपत्तेः यजमाने तु पशुस्वामित्वस्य प्राप्तत्वात् तदाशासनानर्थक्यापत्तेः देवतापर एव मेधपतिशब्दः न यजमानपर इति सिद्धान्तितम् । सु. पृ. १५२४. ● देवता दर्शपूर्णमासयोः उपांशुयाजे प्राकृतीनामन्यतमा । भा. १०।८।१६। ४९-५० ● देवता द्वितीयान्तेन शब्देन न हि उद्दिश्यते प्रमाणाभावात् । टुप्. १०।१।७।१४. ● देवता नाशं गच्छति । यजतौ तु उद्देशेन केवलमङ्गी भवति । भा. ११। ४।७।१८, ● देवता नास्ति काचिद् विग्रहवती । ननु विष्णुः स्तूयते, न च विष्णुना स्तुतेन कश्चिदर्थोऽस्ति । न स्तुत्यो विष्णुः कश्चिदङ्गी क्रियते । १२।४।१।१. ● देवता न संबोध्या 'यथाभागं व्यावर्तेथाम्' इत्यादिविभागमन्त्रेषु, किन्तु पिण्डयोरेव । संकर्ष. १।३।१६.

● देवता नाम का पुनरियम् ? एक तावन्मतं या एता इतिहासपुराणेषु अग्न्यादयः संकीर्त्यन्ते नाकसदः, ता देवता इति । उच्यते, तासु देवतासु अहरादीनां शार्दूलादीनां वा न संग्रहः । स्मर्यते च कालवाचिनां देवतात्वं कालेभ्यो भवति 'मासो देवता, संवत्सरो देवता' इति । अपरं मतम्, येषु देवताशब्दो मन्त्रब्राह्मणे श्रूयते 'अग्निर्देवता, वातो देवता, सूर्यो देवता, चन्द्रमा देवता' इत्येवमादिषु तेऽत्र देवताशब्दे नोच्यन्ते इति । तथापि अहरादीनामनुपसंग्रह एव । तस्मात् सूक्तभाजो हविर्भाजश्च देवताः । काः सूक्तभाजः ? 'इमं स्तोममर्हते जातवेदसे रथमिव सं महेमा मनीषया । भद्रा हि नः प्रमतिरस्य संसद्यग्ने सख्ये मा रिषामा वयं तव ॥' ( ऋसं. १।९४।१ ) इति । हविर्भाजः 'आग्नेयमष्टाकपालं निर्वपेत्, अग्नीषोमीयमेकादशकपालम्' इति । सा हविर्भाक् देवता, [illegible] प्रति तादर्थ्यं हविषः । सूक्तस्याप्येवमेव । एवं मूर्तानाममूर्तानां चेतनानामचेतनानां श्रुत्या कश्चिदर्थं प्रति तादर्थ्येन संकल्पनीयानां देवतात्वं भविष्यति । यस्याः वाचकं शब्दमुद्दिश्य इमां वा हविस्त्यक्ष्यामि इति संकल्पः क्रियते सा देवता भवति तत्र । भा. १०।४।१३।२३ पृ. १९२७, ● देवता नाम यदर्थं क्रियते चोद्यते । चोदिता हि देवता भवति नाचोदिता । देवता इति संबन्धिशब्दो न जातिशब्दः । ६।३।५।११, ● देवता । न्यायसुधाकारास्त्वाहुः प्रातिपदिकेन अर्थवाचिनाऽपि स्वेष्टप्रत्ययान्वयार्थं पदविशिष्टार्थलक्षणामङ्गीकृत्य तत्र तद्धितवाच्यदेवतात्वान्वयाङ्गीकारात् शब्दोपहितः अर्थो देवता इति प्रतीयते, तत् पदविशिष्टेऽर्थे उपार्यस्याप्येकदेशत्वाच्च कथात् विशेषणीभूतपदान्वयस्य च 'अभ्योपसर्जनं अन्येन नान्वेति' इति न्यायेन अनुपपन्नत्वात् उपेक्षणीयम् । कौ. २।१।१६ पृ. ९०-९२. ● देवता पौर्णमास्यां उपांशुयाजे प्रजापतिर्वा विष्णुर्वा अग्नीषोमौ वा । भा. १०।८।१७।५१-६१, ● देवता मान्त्रवर्णिकी आघारे । १।४।१।४ पृ. ३३५. ● देवता । 'यदर्थो यादृशो यत्र देवतात्वेन चोदितः । मनागपि ततोऽन्यत्वे देवतेति न गम्यते ॥' इति स्तुतशस्त्राधिकरणवार्तिके व्याख्यातम् । सु. पृ. ७४२. ● देवता यद्यपि प्रत्यक्षं गृह्णीत, तथापि इदं पयोदकात् क्षीरं पश्चात्तनमेव सोमं विविच्य गृह्णीत । किमुत यदा उद्देशमात्रोपकारिणी देवता पुनरनुगृह्णीतस्यैव उद्दिश्यते न पूर्वदोषस्य । वा. ३।२।१२।२२. ● देवता यागे गुणभूता । तस्याः दातृत्वं स्तुत्या उच्यते । यागात्तु फलम् । 'स्वर्गकामो यजेत' इति श्रूयते । भा ८।१।१८।३४.

● देवता वा प्रयोजयेदतिथिवद् भोजनस्य तदर्थत्वात् ( ९।१।४।६ ) इति पूर्वतन्त्राधिकरणे अतिथिभोजनस्य अतिथिप्राधान्यवत् देवतोद्देशेन द्रव्यत्यागरूपस्य यागस्य देवताप्राधान्यमिति पूर्वपक्षं कृत्वा अतिथिभोजनवैरूप्य-

कथनेन यागप्राधान्यसिद्धान्तकथनात् अतिथिभोजनस्य अतिथिप्राधान्यप्रत्युदाहरणम् । परिमल. ४।१।४।५ मध्.

* देवता वा प्रयोजयेदतिथिवद् भोजनस्य तदर्थत्वात् । ९।१।४।६॥

दर्शपूर्णमासयो. 'अग्नेरहमुज्जितिमनूज्जेषम्, सोमस्याहमुज्जितिमनूज्जेषम्' इति मन्त्रं न देवता प्रयोजयति किन्तु अपूर्वं इति सिद्धान्त उक्तः पूर्वाधिकरणे । तमाक्षिपति । वाशब्दः पूर्वाधिकरणसिद्धान्तव्यावर्तक. । देवता [illegible] मन्त्रं प्रयोजयेत्, भोजनस्य तदर्थत्वात् देवतार्थत्वात्। भोजनं हीद यागो नाम देवतायाः । भोज्यं द्रव्य देवतायै प्रदीयते, सा भोक्ष्यते । अत. देवता प्रयोजिका । अतिथिवत् । यथा यावत् किंचित् अतिथेः परिचरणम्, तत्सर्वं अतिथिप्रयुक्तम् । एवमिदमपि ।

आर्थपत्याच्च । ७ ॥

देवताया आर्थपत्यात् अर्थपतित्वात् यागे मन्त्रादीना प्रयोजकता सिध्यति । अर्थपतित्वं च स्मरन्ति 'अर्थानामीष्टे देवता' इति । तथा देवताग्राम. देवक्षेत्र इति व्यवहारः तामेव स्मृतिं द्रढयति । तथा 'इन्द्रो दिव इन्द्र ईशे पृथिव्या इन्द्रो अपामिन्द्र इत् पर्वतानाम् । इन्द्रो वृधामिन्द्र इन्मेधिराणामिन्द्र. क्षेमे योगे हव्य इन्द्रः ॥' ( ऋक्. १०।८९।१० ) इति ।

ततश्च तेन संबन्ध. । ८ ॥

दर्शपूर्णमासयो 'अग्नेरहमुज्जितिमनूज्जेषम्' इति मन्त्रस्य देवता प्रयोजिका । यस्मात् देवता हविर्भोजनेन तृप्ता भवति । ततश्च तस्मादेव हेतो. देवतायाः प्रसादेन तेन स्वर्गादिना फलेन सह यागकर्तुः संबन्धो भवति । तस्मात् देवतैव प्रयोजिका प्रधानभूता ।

अपि वा शब्दपूर्वत्वाद् यज्ञकर्म प्रधानं स्याद्, गुणत्वे देवताश्रुति । ९ ॥

पूर्वपक्षव्यावृत्त्यर्थो अपिवाशब्द. । यागे न देवता प्रधानम्, किन्तु यज्ञकर्मैव प्रधानम् । शब्दपूर्वत्वात् फलादेः । यत् शब्द आह, तत् प्रमाणम् । शब्दश्च कर्मणां फलमाह 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' इत्यादिः । ननु द्रव्यदेवताक्रिय यज्ञत्यर्थ. । सत्यमेतत् किन्तु गुणत्वे देवताश्रुतिः । द्रव्यदेवतं हि भूतम्, भावयितव्यो यज्यर्थः । भूतभव्यसमुच्चारणे भूत भव्यायोपदिश्यते । तस्मिश्च कर्मणि प्रधाने गुणभूता देवता । तस्मान्न देवता प्रयोजिका किन्तु अपूर्वमेव मन्त्रादेः प्रयोजकं इति सिद्धान्त. । शब्दः पूर्वः प्रमाणं यस्य तत् यज्ञकर्म शब्दपूर्वं शब्दप्रमाणकमित्यर्थः । तस्य भाव. शब्दपूर्वत्वं तस्मात् इति विग्रहः । देवताश्रुतिः देवतावाचकः शब्द. गुणत्वे कर्मगुणत्वस्य बोधक इत्यर्थः ।

अतिथौ तत्प्रधानत्वमभाव· कर्मणि स्यात्, तस्य प्रीतिप्रधानत्वात् ।१०॥

यज्ञकर्मणि देवतैव प्रधान इत्यत्र पूर्ववादिना उक्तस्य अतिथिवत् इति दृष्टान्तस्य वैषम्यं प्रतिपाद्य सिद्धान्तमुपसंहरति । अतिथौ इति भोजनादिदानस्य तत्प्रधानत्व अतिथिप्रधानत्वं स्यात् । सः अतिथिः प्रधानं यस्मिन् भोजनादिदाने तत् तत्प्रधानम् । तस्य भोजनादिदानस्य अतिथिप्रीतिप्रधानत्वात् । तत्र हि अतिथे. प्रीतिः संतोषः प्रधानम् । यागादौ कर्मणि तु तस्य देवताप्रीतिप्रधानत्वस्य अभाव. स्यात् । यागादौ हि कर्मैव प्रधानम्, देवता तु गुणभूता । तस्मात् अतिथिवत् इति विषमो दृष्टान्तः । तस्मात् नास्ति कर्मणि देवतायाः प्राधान्यम् । ततश्च मन्त्राणां देवता न प्रयोजिका ।

अत्र सुधा- ( पृ. ७५० ) दृष्टान्तवैषम्याभिधानार्थे सूत्रे विग्रहादिमत्त्वेऽपि सति. पूजाद्यचिन्त्याभावात् यागकर्मणि देवताप्राधान्याभाव इति मध्यमावयवेन देवताप्राधान्य निषेत्स्यते इति । के.

* देवता विग्रहादिमत्यो मीमांसकमते सन्ति न वेत्यत्र कुतूहले विचार । स इत्थम् —

येषां तु मते चतुर्थ्यन्तशब्द एव देवता, येषां च चैतन्यादिरहितोऽर्थ एव देवता, तेषां शब्दस्य अर्थस्य वा अचेतनत्वादेव अनधिकारे सिद्धे 'देवताऽनन्तराभावात्' इति प्रयत्नवैयर्थ्यापत्तेः सूत्रभाष्यविरोधो दुष्परिहर. ।

यत्तु नवमे 'देवता वा प्रयोजयेत्' ( ९।१।४।६ ) इत्यधिकरणे देवताना विग्रहादिपञ्चकं निराक्रियते, तत् प्रौढिवादमात्रम् । अत एव वार्तिके देवताविग्रहादि-

पञ्चकं अनाश्रयेण तदधिकरणं प्रवर्तयिष्यते।' 'शब्द एव देवता न तु अर्थः' इति तु बौद्धप्रलपितमेव। अर्थाभावे इन्द्रादिशब्दानां अनर्थकतया प्रातिपदिकार्थतद्गतवचनत्वादिकारकत्वाभिधायिन्यः सुप्विभक्तयो न स्युः। ततश्च इन्द्रादिशब्दघटितसमस्तवेदवाक्यानि उन्मत्तप्रलपितानि आपद्येरन्।

तथा विग्रहादिपञ्चकरहितोऽर्थो देवता इत्यपि प्रच्छन्नबौद्धप्रलपितमेव। नहि वेदप्रामाण्यमभ्युपगच्छद्भिर्वैदिकैः देवतानां विग्रहादिपञ्चकं नास्तीति शक्यमभ्युपगन्तुम्। यागविधिसामर्थ्यादेव तद्विग्रहादिलाभात्। यागो हि देवताऽऽराधनरूपः, 'यज देवपूजायाम्' इति स्मरणात्।

फलकामिभ्यश्च 'राजा फलं ददाति' इतिवत् यागेनाराध्यमानानां देवतानां फलदातृत्वं गम्यते। न च फलस्थानीयानां फलदातृत्वं संभवति। नापि अप्रसन्नाः फलं प्रयच्छन्ति। नापि दत्तं हविः अभुञ्जानाः प्रसीदन्ति। न चैतत् सर्वं अचेतनानां विग्रहरहितानां घटते। तस्मात् यागविधिसामर्थ्यादेव विग्रहवत्त्वम्, हविर्भोक्तृत्वम्, प्रसादवत्त्वम्, फलैश्वर्यवत्त्वम्, फलदातृत्वं च इति विग्रहादिपञ्चकं देवतानां कल्प्यते।

'सहस्राक्षो गोत्रभिद्वज्रबाहुस्तु देवो द्रविणं दधातु' 'तृप्त एवैनमिन्द्रः प्रजया पशुभिस्तर्पयति' 'इन्द्रो राजा जगतश्चर्षणीनामधि क्षमि विषुरूपं यदस्ति। ततो ददाति दाशुषे वसूनि' 'इमान् भोगान् हि वो देवा दास्यन्ते यज्ञभाविताः' 'ते तृप्तास्तर्पयन्त्येनं सर्वकामफलैः शुभैः' इत्यादिमन्त्रार्थवादेतिहासपुराणेषु देवतानां विग्रहादिपञ्चकस्य स्पष्टमभिधानाच्च। तेषां विध्येकवाक्यत्वेऽपि अवान्तरपदसंसर्गतः प्रतीयमानदेवताविग्रहादित्यागे कारणाभावात्।

अत एव भगवता जैमिनिना 'अविशिष्टस्तु वाक्यार्थः' (१।२।४।३२) 'अर्थैकत्वादेकं वाक्यम्' (२।१।१४।४६) इत्यादिभिः सूत्रैः मन्त्राणां वाक्यानां अर्थवत्त्वं च दर्शितमुपपादने। मन्त्रवाक्यार्थप्रतीतिमुपजीव्यैव 'शाखो वा मन्त्रवर्णात्' (६।८।१०।११) इत्यधिकरणप्रवृत्तिः। 'बर्हिर्देवसदनं दामि' इत्यादिमन्त्राणां लैङ्गिकश्च विनियोगः सिध्यति। अर्थवादानामर्थवत्त्वविरोधिनश्च शास्त्रदृष्टविरोधादयः अर्थवादाधिकरणे 'गुणवादस्तु' (१।२।१।१०) 'रूपात् प्रायात्' (१।२।१।११) इत्यादिभिः सूत्रैः गौण्या वृत्त्या परिहृताः। 'यजमानः प्रस्तरः' इत्यादौ तत्कार्यकरत्वादिगुणयोगात् अर्थवत्त्वं तत्सिद्धिपेटिकायां (१।४।१२।२३) निरूपितम्। किं बहुना, कृत्स्नमपि अध्वरमीमांसाशास्त्रं मन्त्रार्थवादलिङ्गान्युपजीव्यैव प्रवृत्तं तेषामर्थवत्त्वाभावे व्याकुलं स्यात्।

न च विध्येकवाक्यतया तत्र तात्पर्यवत्त्वात्, मन्त्रार्थवादानां देवताविग्रहादिरूपेऽर्थे तात्पर्याभावात् कथं तत्र तेषां प्रामाण्यमिति वाच्यम्। यथा विधिभिः वाक्यैकवाक्यतया तेषु महातात्पर्यवत्त्वमपि मन्त्रार्थवादानां प्रधानविध्येकवाक्यताक्रमप्रयाजादिवाक्यानामिव स्वस्वार्थेऽपि अवान्तरतात्पर्यवत्त्वात्।

'यन्न दुःखेन संभिन्नं न च ग्रस्तमनन्तरम्। अभिलाषोपनीतं यत् तत् सुखं स्वःपदास्पदम्॥' इत्यर्थवादस्य विधेयस्तुतितात्पर्यकत्वेऽपि स्वर्गशब्दार्थप्रतिपादनेऽपि अवान्तरतात्पर्यस्य सर्वसंप्रतिपन्नतया तद्वदेव अर्थवादमात्रस्य अबाधितविरोधे स्वार्थावान्तरतात्पर्यकताया आश्रयणीयत्वम्।

न च स्वर्गार्थवादस्य फलविध्यपेक्षितत्वात् स्वार्थे अवान्तरतात्पर्यं नान्यस्य इति वाच्यम्। 'देवता आवाहयति' इति आवाहनविधिः स्वार्थत्वात् देवतानामागमनमपेक्षते। तदागमनं च हविषां स्वीकरणाय। तत्स्वीकरणं च भोजनाय। भोजनं च तृप्तये। फलकामेन क्रियमाणं च देवतानां तृप्तिजननं फलदातृत्वसिद्धये। फलदातृत्वं च फलैश्वर्यात् इति साक्षात् परम्परया वा देवताऽऽगमनादीनां आवाहनविध्यपेक्षितत्वात् तद्विग्रहादौ तात्पर्यमनिवार्यम्। किञ्च विश्वसृजामयनाख्यस्य सत्रस्य फलं श्रुतम् 'एतस्य सायुज्यं सलोकतां यन्ति, एतासामेव देवतानां सायुज्यं सार्ष्टितां समानलोकतां यन्ति य एतदुपयन्ति' इत्यादौ कथितं फले समानलोकता एकलोकताप्राप्तिः, ततः सार्ष्टिता समानदेहभोगवत्त्वम्। सायुज्यं सदेहत्वम्। यदि देवाः तत्तल्लोकविशेषेषु दिव्यशरीरापन्न-

निरतिशयभोगवन्तो न स्युः तदा तत्फलार्थत्वेन विधानं उन्मत्तप्रलपितमेव स्यात् ।

तथा सामविधिब्राह्मणे 'अथामितमेतेन [कद्रनय?] इति द्वितीयं प्रयुञ्जानो देवान् पश्यति' इति देवदर्शनार्थसामविशेषजपविधिसामर्थ्यादपि देवानां विग्रहवत्त्वं सिध्यति । न च देवदर्शनार्थं युगपदेव सामजपं कुर्वत्सु अनेकेषु यजमानेषु विग्रहवतामपि देवानां कथं दर्शनमेव इति वाच्यम् । अत एव तेषां संकल्पमात्रेणानेकशरीरग्रहादिकल्पनात् । एवं च बहुभिर्यजमानैः युगपदाहूतानां देवतानां युगपत्संनिधानं इति नानुपपन्नम् । यज्ञेषु देवतानामदर्शनं तु योगिवत् ऐश्वर्ययोगादुपपन्नम् ।

'कस्य वा ह देवता यज्ञमागच्छन्ति, कस्य वा न बहूनां यजमानानाम्, यो वै देवताः पूर्वः परिगृह्णाति स एनाः श्वोभूते यजते' इत्यर्थवादश्च 'अग्निहोत्रं हुत्वा प्रावरन्वाश्नाति' इति विधेः स्तावकः, न विवक्षितस्वार्थः ।

न च वाजसनेयके 'ते वा एते आहुती हुते उत्क्रामतः, ते अन्तरिक्षमाविशतः, ते अन्तरिक्षं तर्पयतः, ते दिवमाविशतः, ते दिवं तर्पयतः । ते आवर्तेते इमामाविशतः, ते पुरुषमाविशतः, ते स्त्रियमाविशतः, ततः पुत्रो जायते' इति श्रवणेन 'अग्नौ प्रास्ताऽऽहुतिः सम्यगादित्यमुपतिष्ठते । आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजाः ॥' इत्यादिस्मृत्या च हुतानां हविषां परलोकात् क्रमेण प्रत्यावृत्त्यवगमात् कथं यज्ञाटे देवतानां हविर्भोक्तृत्वं इति वाच्यम् । हुतस्य हविषः कश्चिदंशः तृप्तिपर्याप्तो देवैर्भुज्यते अन्योंऽशस्तु वृष्ट्यन्नादिरूपेण परिणतः प्रत्यावर्तते इत्युभयविधवचननिर्वाहात् ।

न च 'त्रिंशदस्या जघनं योजनानि उपस्थ इन्द्रः स्थविरं बिभर्ति' इति अतिस्थूलदेहानां देवानां कथं अल्पेन हविषा तृप्तिरिति वाच्यम् । 'यावदेका कामयते देवता यावदेषा, तावदाहुतिः प्रथते' इति हुतस्य हविषः वृद्धिश्रवणेन तदुपपत्तेः ।

यद्यपि हुतं हविर्भस्मीभवति ततो निर्गतस्य तदीयसूक्ष्मांशस्यैव वृद्ध्युपगमाच्च दोषः । 'अन्नाद्दशानि सूक्ष्माणि कृत्वा' इति च हविरवस्थान्तरजननस्य श्रवणात् । पुरोडाशादावसकलादिष्वपि हविःषु कश्चित् भक्ष्यांशः तत्तदास्वादनयोग्यरूपेण परिणमते, इति न तेषु अनदनीयत्वदोषः । अत्र च लिङ्गम् 'एतद्वै देवानां मधु यद् घृतम्' इति । उक्तं च तन्त्रवार्तिके लोकवेदाधिकरणे (१।३।९।३० वर्णकं १) 'यच्चैतद् घृतमस्माकं देवानां मधिदं यदि । रसवीर्यादिभिस्तत्र न शब्दार्थोऽन्यथा भवेत् ॥' (आ. पृ. २९२) इति ।

येषु देवताऽऽवाहनमस्ति तेषु आगत्य भुज्यते इत्यागमनश्रुतिः हविर्नयनश्रुतिश्च विरुध्यते । आहूतसंनिहितान् देवान् प्रति तदास्वादनीयरसस्यानयनसंभवाच्च ।

यद्यपि श्राद्धे अतीतपितॄणां स्थावरतिर्यङ्मनुष्यनारकजन्मप्राप्तानां आगमनासंभवात् आवाहनं न संभवति, तथापि यथा गर्भवृद्धये सुहृद्भिर्दत्तमौषधमन्नं गर्भवती भुक्त्वा तृप्ता सती गर्भं तर्पयित्वा पोषयति सुहृद्भ्यश्च प्रत्युपकरोति तथा श्राद्धीयमन्नं भुक्त्वा तदधिष्ठानदेवाः तृप्ताः श्राद्धकर्तॄन् पित्रादीनपि तर्पयन्ति श्राद्धदानेऽपि फलं प्रयच्छन्ति 'वसुरुद्रादितिसुताः पितरः श्राद्धदेवताः । प्रीणयन्ति मनुष्याणां पितॄन् श्राद्धेषु तर्पिताः ॥ सर्वान् कामान् प्रयच्छन्ति शतशोऽथ सहस्रशः ॥' इत्यादि स्मरणात् ।

'अगृभ्णा ते दक्षिणमिन्द्र हस्तम्' इति, हे इन्द्र ते दक्षिणं हस्तं रक्षकत्वेन वयं ग्रहीष्यामः इत्यर्थः । इति न मन्त्रविरोधः ।

'ओषधीभ्यः स्वाहा, मूलेभ्यः स्वाहा' इत्यादौ तदधिष्ठात्र्यो देवताः इति न विरोधः ।

न च देवताप्रसादादेव यागस्य कालान्तरभाविफलजननिर्वाहसंभवात् किमपूर्वकल्पनया इति वाच्यम् । प्रसन्नानामपि देवतानां कालान्तरभाविफलदातृत्वस्य आगमबलेन अपूर्वद्वारेण देवताप्रसादस्यापि फलजनकत्वस्य वक्तव्यतया अन्यथापि तथा कल्पनात् । 'तं विद्याकर्मणी समन्वारभेते पूर्वप्रज्ञा च' इति विद्याकर्मणोः पूर्वानुभवजनितसंस्कारस्य च जीवेन सह उत्क्रान्तिश्रवणेन कर्मजन्यापूर्वस्य अवश्यमभ्युपेयत्वाच्च ।

एवमन्योऽपि मन्त्रार्थवादादिषु देवताविग्रहादिविरोधः परिहर्तव्यः । तद्विस्तरस्तु ब्रह्ममीमांसायां वाचस्पत्यपरिमलन्यायरक्षामण्यादिमहाग्रन्थेषु द्रष्टव्यः ।

'कर्ममीमांसकाः निरीश्वरवादिनः' 'तेषां देवताविग्रहादिपञ्चकं नास्ति' इति प्रवादस्तु प्रच्छन्नबौद्धतदेकदेशिविषयः। 'न देवतानां देवतान्तराभावात्' इत्येतत्सूत्रभाष्यवार्तिकेषु सविग्रहाभ्युपगमात्। 'विशुद्धज्ञानदेहाय त्रिवेदीदिव्यचक्षुषे। श्रेयःप्राप्तिनिमित्ताय नमः सोमार्धधारिणे॥' इति श्लोकवार्तिकारम्भे भट्टाचार्यैः ईश्वरस्वरूपाभिधानाच्च। भूतार्थवादानामपि स्वार्थे प्रामाण्याभिधानपुरःसरं देवतिर्यङ्मनुष्यादिजगत्सृष्टिप्रलयकर्तुः परमेश्वरस्य देवतादिव्यविग्रहादेश्च वार्तिके तत्रतत्राभिधानाच्च।

शास्त्रदीपिकायां तृतीयस्य द्वितीयपादे 'लिङ्गक्रमसमाख्यानात् काम्ययुक्तं समाम्नानम्' इत्यधिकरणे (३।२।७।१९) 'मन्त्रार्थवादेतिहासपुराणादिषु स्वर्गाधीश्वरत्वलोकपालत्वासुरजेतृत्वादिरूपेण प्रतिपादितानां कर्मणो बहिरपि सद्भावावगमात् न फलव्यभिचारः इत्यभिधानाच्च (टीप्पणी– 'न च अग्निसूर्यादीनां फलव्यभिचारः, येन फलवत्त्वाभ्यपेतः। लोकेऽपि तत्सद्भावात्। इन्द्रादीनामपि मन्त्रार्थवादेतिहासादिभिः कर्मणोऽन्यत्रापि प्रतीतेः' इति शास्त्रदीपिकायां पङ्क्तिः। तत्र सोमनाथस्य च 'मन्त्रार्थवादादिषु स्वर्गाधीश्वरत्वलोकपालत्वासुरजेतृत्वादिना प्रतिपाद्यमानत्वेन इन्द्रादीनामपि कर्मणो बहिरपि संभवावगमात् लोके संभवोऽस्तीत्यर्थः' इति पङ्क्तिः)।

तस्मात् वैदिकानस्माकं अस्ति देवताविग्रहादिपञ्चकम्। इत्यास्तां तावत्। [ 'न देवतानां देवतान्तराभावात्' (९।१।२।६) इति सूत्रे इदम्]।

● देवता निमित्तप्रमाणिका इत्युक्तं इन्द्रमहेन्द्राधिकरणे, 'विधिशब्दस्य मन्त्रत्वे' (१०।४।१२।२३) इति दशमे म। थाल. पृ. १२२, १२५.

§ देवता वेदशब्देनैव ध्यातव्या 'यस्यै देवतायै वषट्कुर्यात् तां ध्यायेत्' इति॥

'कान्तां ध्यायन् अश्नते' इत्यादौ तद्रूपध्यानस्येव प्रकृतेऽपि देवतारूपध्यानविधिः, अर्थवादेषु देवतारूपाम्नानात्, विग्रहपेक्षितपकादिनियमादौ तस्य प्रामाण्यात्। देवतायाः फलदातृत्वं स्वरूपेण कर्माङ्गत्वं च धर्मौ तत्प्रयुक्तत्वे चेत्येतत् नियमनिरासेनैव नामशब्दे विग्रहनिरासस्य देवताऽधिकरणार्थलाभाभावात्। तथात्वे नियमाधिकरणे तेषामनधिकारसाधनमनर्थकं स्यात्। अतएव वा रूपमीदृशविग्रहपेक्षितार्थनियमनार्थतया उपदिश्यते इत्यपि सुवचम्। न च शब्दद्वारेणैव देवतायाः कर्माङ्गतया शब्दस्यैव मानसमुपनीतमानमङ्गत्वेन विधीयते इति वाच्यम्। 'यदि मनसा ध्यायति तद्वाचा वदति' इति न्यायेन वाचाऽनुवादस्याऽन्तर्गतदेवतानाम्नोच्चारणतः पूर्वं नियमतः तत्त्वेन तस्याविधेयत्वात्। इति प्राप्ते, सर्वत्रापि प्रथमोपस्थिते शब्दे कार्यस्य असंभवादेव हि तस्यार्थपर्यन्तानुधावनम्। न च प्रकृते तदसंभवः, संकल्पपूर्वकशब्दध्यानविशेषस्येह विधेयत्वात्। याज्योच्चारणपूर्वनियतशब्दध्यानस्य हेतुः सत्येऽपि हविर्ग्रहणाभ्यवहितोत्तरकाले यजमानस्य एतद्विधिसार्थक्यात्। तस्मात् देवतारूपः शब्द एव ध्यातव्यः। संकर्ष. ४।३।६ वर्णकं २.

● देवता श्रुत्या गम्यते, न प्रत्यक्षादिभिः। भा. ४।३।१५।३७. ● देवता सर्वा एवमर्थमभिधीयते विधीयते वा, कथं नाम तदुद्देशेन कर्म क्रियेतेति। वा २।१।५।१८. ● देवता स्तुता वा अस्तुता वा अङ्गभावं साधयति। भा. २।१।१४।२९.

● 'देवता हि विधेयत्वाद् विवक्षितगुणेष्यते। लक्षणत्वे तु तस्याः स्यादविवक्षा गुणादिषु॥' यदि हि तद्धितसंबन्धे देवता उद्दिश्यमाना स्यात् ततः अस्याः गुणाविवक्षा भवेत्। इयं पुनः अविधीयमाना देवतात्वमेव न प्रतिपद्यते इति अवश्योपादातव्या। वा. २।१।५।१७ पृ. ४२१. ● अग्निर्मूर्धा इत्यादिमन्त्रेषु अग्न्यादीनां प्राधान्येन अभिधानात् यमर्थं प्राधान्येन मन्त्रोऽभिदधाति सोऽपि देवता इति लक्षणेन देवतात्वावगमात्। तु. पृ. ४५७.

● अनुपदिष्टदेवताद्रव्यरूपं न यागान्तरं प्रतिपद्येमहि। भा. २।२।४।५,● 'गुणत्वेन देवताश्रुतिः' (८।१।१४ सूत्रम्)। विशेषणत्वेन देवता श्रूयते हविर्विशेष्यत्वेन। 'ऐन्द्रं पयः' इत्युक्ते हविर्युदो संनिधीयते, न देवता। ८।१।१८।३४, ● तादर्थ्ये च सति देवता भवति। न देवता नाम काचित्। येन कस्यचित् रूपस्य देवता, येन नाम्ना। यस्य यां प्रति तादर्थ्यम्, सा तस्य देवता।

१।२।२०।६०, ● द्रव्यदेवतक्रिये यजतिशब्दो वर्तते। ६।१।१।१२ पृ. १३५१. ● द्रव्यदेवतासंयोगस्तु न कथञ्चिद् यागादिना सिध्यति। वा. २।२।६।१८ पृ ५१६. ● न च शब्दमात्रं देवता इति नवमदशमयोरभिधास्यते। २।१।५।१५ पृ. ४१७, ● न अस्माकं देवता विद्यते, किं तर्हि। संकल्पविषयदेवतैवोपयुज्यते। ३।२।१७।४१. ● यमर्थं प्राधान्येन मन्त्रोऽभिधत्ते सा देवता। सु. पृ. ६५४. ● यं चार्थं प्राधान्येन मन्त्रः प्रकाशयति सा तस्य देवता नाभिधानमात्रेण, एकदेवत्येऽपि मन्त्रे अनेकदेवताऽन्तरपदप्रयोगे सति तद्देवत्यव्यपदेशाभावात्। वा. २।१। ४।४१. ● यस्य वाचकं शब्दमुद्दिश्य स्मृत्वा वा हविस्त्यक्ष्यामि इति संकल्पः क्रियते सा देवता भवति इति विशिष्टशब्दाधिकरणे लक्षणं वक्ष्यते। सु पृ. ७४२. ● येषां शब्द एव देवता तेषां......। वा. ६।१।२।५, ● या चोद्दिश्य द्रव्यं त्यज्यते सा देवता। ३।१।१५।२७. ● देवताः चतुर्थ्या तद्धितेन वा निर्दिश्यन्ते। 'अग्नये स्वाहा जुहुयात्' अत्र चतुर्थी। 'आग्नेयोऽष्टाकपालः' अत्र तद्धितः। वि. ९।१।२०. ● देवताः नहि मानन्ति। भा. ३।२।१५।३७, ● देवताः विग्रहादिमत्यो न सन्ति। देवताऽधिकरणम्। ९।१।४।६-१०, ● देवतामुद्दिश्य यस्मात् स यागो भवति। न हि उद्देशमात्रेण देवता भवति। या यस्य श्रूयते सा तस्य देवतेति। २।४। ६।३२ ● देवता च विना होमायोगात्। सु पृ.८०७, ● देवता प्रति द्रव्यस्योत्सर्गः कर्म। भा. ८।१।१७।३२. ● 'देवता या समुद्दिश्य द्रव्यं स्वत्वेन गृह्यते। तस्मास्तदेव संबन्धि, नान्यत् तत्सम्प्रदायि॥' शाक्यस्यणो हि देवतासंबन्धः। भा. ३।१।१२।३२. ● देवता विना यागो नहि भवति। तेन स देवतामाकाङ्क्षति। तस्मात् देवता यागार्था। भा. १०।१।८।१८, ● न हि देवता मन्तरेण यागो भवति। न च वचनमन्तरेण देवता। न चान्दस्य विहिता देवता अन्यस्याधकल्प्यते। १०।८। १०।५०, ● यागो देवतामपेक्षते देवताश्च यागमन्तरेण न संभवन्ति इति यागमपेक्षते। तयोः संनिधानेन प्रमाणेन संबन्धो भवति। टुप्. १०।४।२३ पृ. १९१२. ● न हि एकस्य कर्मणः अनेकया देवतया अनेकया (च) अनुवाक्यया कार्यमस्ति। वा. २।२।१।२ पृ. ४७९, ● देवताभिरप्यस्माभिः संन्यासे न कश्चिद्यज्ञस्योपकारः। भा. ११।२।४।३२. ● देवतायै दातुं द्रव्यं त्यजन्ति। वा. ३।४।१४।४१ पृ. ९७९. ● देवतायै संकल्पितं यजमानेन न स्वयमुपयोक्तव्यम्। तस्मात् तस्योपयोक्तृत्वमृत्विज इष्यते, नो खल्वपि यजमानः। भा. १०।२।९।३१, ● देवतायै संकल्पितेन शिष्टाः न स्वेनेव व्यवहरन्ति। ३।४।१७।५०, ● देवतायाः अभिधानं वनस्पतियागे वनस्पतिशब्देनैव। १०।४।१६।३२-३९, ● देवतायाः भक्ति विधाने अभावात्। २।२।३।६. ● देवतायाः ऐश्वर्यम्। 'देवताद्रव्यसत्ता च विधेयं द्रव्यमुत्तमम्' इत्यादौ ब्राह्मणादिवत् देवताया अपि ऐश्वर्यप्रसिद्धेः 'यस्यै वा कस्यै देवतायै पशुरालभ्यते सैव मेधपतिः' इत्यर्थवादेभ्यश्च देवतानामैश्वर्यरूपत्वप्रसिद्धेः प्रतिग्रहाभावेऽपि तदुद्देशपूर्वकेण त्यागेन तदधीनत्वापादनात् मुख्यैश्वर्याभावेऽपि औपचारिकमैश्वर्यमस्ति। सु. पृ. ८३२, ● देवतायाः कर्मसंप्रदानातिरिक्तकारकत्वस्य कथञ्चिदपि अयोगः। पृ. ७९१, ● देवतायाः कारकत्वाभावेऽपि अङ्गत्वाभ्युपगमः। पृ. ११७, ● देवतायाः त्यज्यमानद्रव्योद्देश्यत्वेन यागनिष्पादकत्वम्। पृ. ८००, ● देवतायाः नास्ति प्रतिनिधिः। भा. ६।३।५।१८-१९, ● देवतायाः। 'न चाऽतिथिवद्देवताः पूज्यतेति च वक्ष्यते' रूपाद्यभावित्वात् नातिथिवत् पूज्यमानता पतिपद्यते। नैवास्याः सम्प्रदानत्वमप्यस्ति प्रतिग्रहीतृत्वाभावात्। वा. २।२।४।१० पृ. ४९२. ● देवतायाः नवमे विग्रहाभावस्य वक्ष्यमाणत्वेन क्रियया सम्बन्धायोगात् मन्त्रस्य स्तुतिप्रकाशनार्थत्वात् न सम्बन्धानुवादेन अभिधायकत्वविधिर्युक्तः। सु पृ. ३७२, ● देवतायाः पशुश्रामीयायाः संस्कारः पशुपुरोडाशयागः। भा. १०।१।९।१९-२३. ● देवतायाः प्रतिग्रहीतृत्वं न च संभवति। वा. २।२।९।२३ पृ ५३६. ● देवतायाः प्रतिग्रहीतृत्वाभावेन तत्स्वत्वापादनलक्षणदानायोगात् न तेन द्रव्यदेवतान्वयः संभवति। सु. पृ. ८११, ● देवतायाः प्रतिग्रहीतृत्वाभावेन स्वत्वसम्पादनात् उद्देश्यत्वमात्रेण उपकारित्वात् उद्देशस्य च शब्दाधीनत्वात् येन

शब्देन उद्देश्या देवता इत्यपेक्षायां श्रुतशब्दत्यागेन अश्रुतशब्दकल्पनाऽयोगात् विधिगतेनैव शब्देन देवतात्वचोदनाऽवगतेः न शब्दान्तरवत् न्यूनशब्दोच्चारणेऽपि देवतात्वप्रसिद्धिः। पृ. ६५१, * देवतायाः प्रतिग्रहीतृत्वाभावेन संप्रदानत्वाभावः। पृ. ७४९, * देवतायाः भोक्तृत्वाभावेऽपि स्तुतिभोक्तृत्वलक्षणस्य देवतात्वस्य यागकल्पकत्वम्। पृ. ९२९. * देवतायाः भोजनं होर्द यागो नाम (पूर्वपक्षे)। भा. ९।१।४।६. * देवतायाः विग्रहाद्यभावेन रूपासत्त्वात् पूज्यत्वं निरस्तम् 'अपि वा शब्दपूर्वत्वात्' (९।१।४।९) इति सूत्रे। सु. पृ. ७९०. * देवतायाः शब्दद्वारेण यागोपकारकत्वम्। संकर्ष. २।४।२, * देवतायाः शब्दरूपत्वम्। २।३।१६. * देवतायाः संस्कार्यत्वं विनाऽपि आरादुपकारित्वात् यागस्य प्रयोजनवत्त्वोपपत्तिः। सु. पृ. ८३४. * देवतायाः सकाशात् पुरोडाशपिण्डद्रव्यं अन्तरङ्गम्। संकर्ष. १।३।१६. * देवतायाः स्वेन रूपेण कर्मणि साधनभाव इत्युक्तम्। भा. १०।४।१४।२८. * देवतायाः स्वरूपेण कर्मणि सन्निपातनिषेधः 'विधिशब्दस्य मन्त्रत्वे' (१०।४।२३ सू.) इति दाशमिके देवताधिकरणे उक्तः। सु. पृ. २३४२. * शब्देन प्रत्यासन्नस्य यागस्य फलसाधनत्वात् प्राधान्यम्, देवतायाश्च गुणत्वं विज्ञायते। टुप्. ९।१।४।९ पृ. १६५४. * देवतानां अनुयाजीयानां प्रकाशनार्थं चातुर्मास्येषु प्राकृताध्वनमन्त्रस्याविकारेणैव प्रयोगः। भा. १०।४।२५।५०–५९. * देवतानां विग्रहाद्यभावः। संकर्ष. २।४।१.

% देवतानां विधिगतशब्देनैव प्रकाशनं सौर्यादिविकृतौ आवाहनादिनिगमेषु ॥

तथोत्तरस्यां ततौ तत्प्रकृतित्वात्। १०।४।१३। २५ ॥

भाष्यम्— अस्ति चरुः 'सौर्यं चरुं निर्वपेद्ब्रह्मवर्चसकामः' इति। सन्ति सूर्यस्याभिधानानि 'सूर्य आदित्यो भास्करः सविता दिवाकरः' इति। तत्र किं येषु निगमेषु येनकेनचिच्छब्देन अभिधानं कर्तव्यम्, उत विधिशब्देन सूर्यशब्देनेति। किं प्राप्तम्? अग्निशब्दसंयुक्तास्ते प्रकृतौ निगमा इह चोदकेन प्राप्ताः, न सूर्यशब्देनेति। सूर्यशब्दो हि चरौ, नोक्तिग्रादिषु। ते यथार्थं विपरिणमयितव्याः। सूर्यार्थश्च तेषु संकीर्तयितव्यः। स च येनकेनचित् सूर्याभिधानेन शब्देन संकीर्त्यते। तस्मादनियमः। ये च प्रकृतौ अग्निशब्दसंयुक्ता निगमास्ते इहोदाहरणम्, नासंयुक्ताः। एवं प्राप्ते, ब्रूमः। तथोत्तरस्यां ततौ तत्प्रकृतित्वादिति। यथा प्रकृतौ, तथोत्तरस्यां ततौ विकृतौ कर्तव्याः। तत्प्रकृतित्वात्तेषाम्, चोदकानुग्रहाय। प्रकृतौ च विधिशब्दाभिप्रायोऽग्निशब्दः प्रयुक्तो नाम्न्यभिधानपरः। इहापि तत्प्रकृतित्वात् विधिशब्दाभिप्रायेणैव निगमाः प्रयोक्तव्याः। न चार्थं वचना सूर्यशब्दस्य संबन्धः। किं तर्हि? प्रयोगेण। सौर्यं निर्वपेदिति प्रयोगेण संबन्धो न सौर्यश्रवणेति। कारकविभक्तिर्हि द्वितीया। सा आख्यातेन संबध्यते। तस्मात् तत्रापि सूर्यशब्देन संयुक्ताः कर्तव्या इति।

टुप्— ननु नैवेदमधिकरणमारब्धव्यम्। य एव शब्दश्चोदितः स एव अन्यत्राप्युच्चार्यः। उच्यते। यत्र शब्दो विद्यते, तत्रैव पर्यायशब्दानामप्रसङ्गः। यत्र शब्दो नाम्नायते तत्रार्थः प्रत्यायतिव्यः। स च येनकेनचित् प्रत्याय्यत इति पूर्वः पक्षः। सिद्धान्तस्तु— सूर्यशब्दो यागानुमितप्रयोगभावनया संबध्यते। अन्यः शब्दो यदि उच्चार्येत, तथा सति शब्दः प्रयोगे अश्रुत एवोच्चार्येत। एवं प्रकृतावपि।

सोम— पूर्ववैपरीत्येन उत्थानात् संगतिः।

सूत्रार्थस्तु— यथा प्रकृतौ विधिशब्दनियमः, तथा उत्तरस्यां ततौ विकृतावपि, तत्प्रकृतित्वादिति। १४.

वि— 'सौर्यादिनिगमे कोऽपि शब्दः स्याद् वैध एव वा।, चरौ सूर्यान्वयादाद्यः, प्रयोगान्वयतोऽन्तिमः ॥' २५.

भाट्ट— विकृतौ 'सौर्यं चरुम्' इत्यादिना यागे सूर्यशब्दस्यैव पूर्वाधिकरणवत् विधानेऽपि आवाहनादिमन्त्रेषु अग्न्यादिपदैः तदर्थस्यैव प्रकाशनात् इहापि तस्यैव कर्तव्यत्वात्, तत्र च प्रकृतिप्रत्ययमिपदे निवृत्ते तत्स्थानापन्नसूर्यपदोहवत् तत्पर्यायादित्यादिपदोहेऽपि बाधकाभावः। न च अनेकपदप्राप्तौ उपस्थितत्वात् सूर्यपदस्यैव नियमः इति वाच्यम्। तथात्वे मैत्रावरुणे पुरोडाशे पावनाग्नि वा

'व्रीहीणां मेध' इति मन्त्रे यवादिपदस्येव नियमेनोहापत्तेः। न च विधिवाक्ये सूर्यदेवताया भावनायामेव प्रत्ययार्थभावनान्वयेन अन्वयात् यागपाके तस्याः विधानाभावेन प्रयोगान्वयित्वाभावेः साङ्गप्रधाने तत्प्राप्तौ आवाहनादौ प्राकृतत्वाद्वस्य इन्द्रादेषु तत्परिसंख्यार्थत्वेऽपि प्रकृतौ आवाहनादिमन्त्रेषु अग्निपदनियमवत् विकृतावपि तेषु सूर्यपदनियमोपपत्तिरिति मूलोक्तं शाङ्क्यम्। द्रव्यदेवतायाः तस्यापि प्राथमिके भावनाऽन्वये अरुणान्यायेन उत्तरकालिकान्वयस्य यागमात्रे एवाङ्गीकारात् आवाहनादौ तदप्राप्तेः। इतरथा द्रव्यस्यापि साङ्गप्रधानसंबन्धापत्तेः देशकालकर्मभिन्नानां द्रव्यदेवतादीनां उत्पन्नान्वयित्वस्य एवमप्रामाण्यात्। किञ्च, साङ्गयागभावनायां गुणत्वेन देवताऽन्वयेऽपि आवाहनादेर्देवतासंस्कारार्थत्वात् आग्नेयम्, सौर्यमित्यादितद्धितेन आवाहनादौ शब्दनियोगः शक्यते कर्तुम्। अतः आवाहनादिमन्त्राणां लिङ्गादेव देवतासंस्कारार्थत्वप्रतीतेः, विकृतौ च अग्निपदनिवृत्तौ जातायां सूर्यशब्दनिवेशस्य प्राप्तौ न किञ्चित् बाधकम्। इति प्राप्ते, नावाहनादिमन्त्रेषु प्रकृतौ लिङ्गकल्प्या श्रुतिः 'तत्प्रकृतापूर्वसंबन्धिनी देवता तत्तदग्न्यादिपदैः प्रकाशयेत्' इति एवंविधा, येन विकृतौ अग्निपदस्य लोपे सूर्यप्रकाशकपदस्य प्राप्तिर्भवेत्, न ह्येवमस्ति, अनेकश्रुतिकल्पनाऽऽपत्तेः। किन्तु 'प्रकृतापूर्वसंबन्धिनी देवता विधिगतशब्देन प्रकाशयेत्' इत्येवंविधा एकैव। अतश्च तदर्थं विकृतावपि विधिगतशब्दप्रयोगः एवावश्यक इति न सूर्यपर्यायाणां प्रयोगः। अत एव द्रव्ये नैवंविधश्रुतिकल्पनासंभवः। तथात्वे 'व्रीहीणां मेध' इत्यादौ प्रकृतावेव यवपदप्रयोगापत्तेः। अपितु प्रकृतापूर्वसाधनीभूतं द्रव्यं व्रीहिपदेन प्रकाशयेत् इत्येवंविधा। ततश्च धानाऽऽदिषु व्रीहिपदे निवृत्ते यवपनिपादकस्य तत्पर्यायपदप्राप्तिविरुद्धा। अस्तु वा प्रकृतावेव शान्तरीयकसिद्धस्यापि अर्थस्य यागाङ्गतया तत्प्रकाशनस्यानुपयोगात् यागाङ्गभूतस्य शब्दस्यैव विनाऽपि लक्षणयावाहनादिमन्त्रगताग्न्यादिपदेन अर्थस्मरणद्वारा स्मरणम्। तथा चैव लिङ्गकल्प्या श्रुतिः विधिगतशब्देन स्वनिष्ठशक्तिप्रयोज्यशाब्दबोधोपधायकशक्त्यवच्छेदकरूपावच्छिन्नदेवतोद्देश्यस्मृतिद्वारा अपूर्वसाधनीभूतदेवतात्वावच्छिन्नां संस्कुर्यादिति। संभवति हि उक्तविधशाब्दबोधविषयस्य अर्थरूपदेवतस्य संबन्धिनः शाब्दबोधात्मकेन दर्शनेन तादृशबोधोपधायकशक्त्यवच्छेदकरूपेण अपरसंबन्धिनः शब्दस्य स्मरणम्। एवं च उद्देश्यताऽवच्छेदके लाघवमपि। ततश्च विकृतावपि पर्यायाणामप्रसक्तिरेव। न वा 'अग्नये पावकाय' इत्यादिविकृतौ शब्दद्वयस्य आवाहनादिमन्त्रेषु प्रयोगप्रसङ्गः। अर्थस्यैव उद्देश्यतामङ्गीकृत्य प्रकाशकत्वपक्षे हि तस्य एकेनैव स्मरणसिद्धेः इतरवैयर्थ्यमित्यपि शङ्क्येत। १४.

मण्डन—'सौर्ये सूर्यपदं वदेत्।' १६.

शंकर—'विकृतावपि तत् तथा।' १६. तत् देवतापदं तथा विधिगतमेव।

* देवतानां मथनीयपुरोडाशीयानामप्युत्पत्तेः—आग्निमारुतादूर्ध्वं अनुयाजोत्कर्षेणोत्कृष्यमाणे सूक्तवाके। भाट्ट. ११।१।१५.

४ देवताऽभिशब्दक्रियाणामपचारेऽपि प्रतिनिधिर्न ग्राह्यः॥

न देवताऽग्निशब्दक्रियमन्यार्थसंयोगात्। ६।३। ५।१८॥

भाष्यम्— देवता 'आग्नेयोऽष्टाकपालः' इत्येवमाद्याः। अग्निः 'यदाहवनीये जुहोति, तेन सोऽस्याभीष्टः प्रीतो भवति' इति। शब्दः मन्त्रः 'बर्हिर्देवसदनं दामि' इत्येवमादिः। क्रिया: 'समिधो यजति, तनूनपातं यजति' इत्येवमाद्याः। तत्र संदेहः देवताऽग्निशब्दक्रियाणां अपचारे प्रतिनिधिः उपादेयः, उत नेति। किं प्राप्तम्? पूर्वाधिकरणन्यायेन प्रतिनिधाय अन्यत् प्रयोगः कर्तव्यः इति। एवं प्राप्ते, ब्रूमः। न देवताऽग्निशब्दक्रियाणां अपचारे प्रतिनिधिना भवितव्यमिति। कुतः? अन्यार्थसंयोगात्। प्रतिनिधीयमानान्यदेतेभ्यः तेषामर्थे (विवरणकारीयपाठोऽयम्, आनन्दाश्रमीये तु अन्यच्च तेषाम् इति पाठः) न शक्नुयात् कर्तुम्। कश्च तेषामर्थः? देवता तावत् उद्देशेन अर्थं साधयति। अग्निमुद्दिश्य अष्टाकपालः पौर्णमास्याममावास्यायां च त्यज्यते। यच्च अन्येषु हविःषु विहितम्, न ततो दर्शपूर्णमासौ भवतः। तत्र अन्या उद्दिश्यमाना न

श्रुताया उद्देश्याया अर्थे कुर्यात् । नहि अन्यस्यामुद्दिश्यमानायां दर्शपूर्णमासौ भवतः । तस्मात् न देवता प्रतिनिधीयते ।

तथा 'यदाहवनीये जुहोति' इत्याहवनीयापचारे नान्योऽग्निः प्रतिनिधातव्यः, अन्यत् वा द्रव्यमिति । कुतः ? अन्यार्थसंयोगात् । प्रतिनिधीयमानं आहवनीयकार्ये न वर्तते । कथम् ? अदृष्टं आहवनीयस्य कार्यम् । आहवनीयस्य उपरि त्यज्यमाने यत् भवति, न तत् अन्यस्योपरि । नहि प्रत्यभिज्ञानेन सामर्थ्यात् तत् गम्यते, यस्योपरि त्यज्यते । नहि उपरि त्यज्यमानस्य देशः किञ्चिदुपकरोति इति । तस्मात् नाग्नेः प्रतिनिधिः ।

तथा मन्त्रापचारे नान्यो मन्त्रः प्रतिनिधीयते । कुतः ? अन्यार्थसंयोगात् । मन्त्रस्य हि एतत् प्रयोजनम्, यत् स्मारयति क्रियां साधनं वा । असति स्मरणे न क्रिया सेवर्तेत । तत् अपचरिते मन्त्रे यदि तस्यार्थे अन्य शब्दमुच्चारयति (पूरयितुम्-) पूर्णमसीत्येतस्मिन् (पूर्वे इत्यानन्दाश्रमीये) शब्दमुच्चारयेत्, न शब्देनार्थं प्रतीयात् । अथ प्रतीतमपि पुनः प्रतिनिधिशब्दोच्चारणेन प्रतीयात् शब्दात् प्रतीतिं कुर्यात् । (अत्र शब्दात् इत्यादि, प्रतीयात् इत्यस्यैव व्याख्या स्यात् । सा च यदि लिखिता सती कायस्थेन ग्रन्थे एव लिखितेति प्रतीमः) एवं च प्रतिनिधिशब्दोच्चारणानुरोधः अनर्थकः स्यात् । नहि 'शब्देन प्रत्याययितव्यम्' इति किञ्चित् प्रमाणमस्ति । यदस्ति, तत् विशेषेणैव 'अनेन शब्देन प्रतिपादिना' इत्येवम् । तदभावे शब्दान्तरानुरोधः अनर्थकः स्यात् । तस्मात् न शब्दस्य प्रतिनिधिः ।

क्रियाऽपचारे न क्रियाऽन्तरं प्रतिनिदध्यात् । अन्यार्थसंयोगात् । समिदादिमन्तौ दर्शपूर्णमासौ कर्तव्यौ । तौ अन्यस्यां क्रियायां (विवलकरीये पाठ) क्रियमाणायां न तद्वन्तौ भवतः । तस्मात् क्रियाया न प्रतिनिधिरिति ।

टुप्— (सिद्धान्तमाह–) अर्थो वाचनिकया श्रुत्या उच्यमानो देवता वै प्रतिपद्यते नान्यथा । तद्वाचकाभावे च कथमर्थो देवता स्यात् (द्वाराभावात्) ? नीवारैस्तण्डुलनिर्वृत्तिः प्रत्यक्षा, न तु देवतात्वम् (प्रत्यक्षम्) । नित्य शब्दं प्रतिनिधानत्वम् । देवताऽभावश्च शब्दनाशे । अतो देवताशब्द स्मृत्वा उत्तरकाल (तत्सदृशशब्दस्य–) स्यादुपादानम् । तत्तु मुख्येनैव सिद्धम् (तस्मात् न प्रतिनिधिः) । मन्त्रेऽपि एष एव प्रकारः (टुप्-पुस्तकेषु तु प्रकारः इति पाठः । प्रकारः इति तत्पाठस्तु युक्तः) । इयांस्तु विशेषः, (देवतातो मन्त्रस्य–) अर्थेन स्मृतेन–न मुख्येन (मन्त्रेण) न (अपि तत्–) सदृशेन (शब्दान्तरेण) – प्रयोजनमस्ति । न च शब्देन स्मरणं कर्तव्यमिति (वचनमस्ति) । किं तर्हि (मन्त्रविशेष–) आम्नानसामर्थ्यात् उपद्रष्ट्रादिनिवृत्तिः मन्त्रनियमात् । तदभावात् (तस्य नियतस्य मन्त्रस्याभावात्) उपद्रष्ट्रादि केन वार्यते (तेन अस्ति शब्दान्तरस्य प्रतिनिधिः । अग्नीनां नास्ति प्रतिनिधिः इत्याह–) आहवनीयो यागहोमाभ्यामनाश्रितः अदृष्टोपकारित्वात् (दृष्टोपकारित्वाभावात् । आहवनीये जुहोति इति–) वचनात् (अदृष्टार्थतया) विधीयते, (अतः) तयोः (यागहोमयोः आहवनीयस्य–) अभावे नास्ति आक्षेपः । आक्षेपाभावाच्च न प्रतिनिधिः । (क्रियायामपि दर्शयति–) यत् प्रयाजादिभिः (अदृष्टम्) क्रियते, तत् अन्या क्रिया करिष्यति इति नास्ति प्रमाणम् । हस्त्यादीनां तु दृष्टार्थत्वात् अस्ति (प्रतिनिधिः । सूत्रोक्तं हेतुमनुसंधत्ते–) अन्यार्थसंयोगात् इति किमुक्तं भवति ? प्रतिनिधिकारणासंयोगात् इति यावत् । (नायमर्थशब्दः प्रयोजनवाची किन्तु वस्तुवचनः) ।

देवतायां च तदर्थत्वात् । १९ ॥

भाष्यम्— देवतायामपरो विशेषो येन न प्रतिनिधीयते । देवता नाम यदर्थं किञ्चिच्चोद्यते सा । अन्या तस्याः स्थाने प्रतिनिधीयमाना न देवता स्यात् । चोदिता हि देवता भवति, नाचोदिता । संबन्धिशब्दश्चैषः । या यदर्थं चोद्यते, सा तस्यैव देवता, नान्यस्य । देवतेति संबन्धिशब्दो न जातिशब्दः । तस्मादपि न देवतायाः प्रतिनिधिरिति ।

सोम—सूत्रार्थस्तु– देवतादिकं न प्रतिनिधेयम्, अन्यार्थसंयोगात् प्रतिनिधिन्यायात् न्यायान्तरसंयोगात् इति ।

वि—'देवाऽग्निमन्त्रोच्चारणादावस्ति प्रतिनिधिर्न वा ।, पुरेवास्तीह, यन्मुख्ये कार्यं करोति नास्त्यसौ ॥'

भाट्ट—एवं सर्वत्र प्रतिनिधौ प्रक्रान्ते देवताया स न भवति । यदि हि अर्थमात्रस्यैव देवतात्वं त्यागकालीनोच्चारणकर्मभूतशब्दप्रतिपाद्यत्वरूपं भवेत्, तदा तस्य शब्दविशेषापेक्षाया प्रतिपाद्यत्वेन विधिगतस्य उपस्थितस्य शब्दस्य निरसनेऽपि रोगादिना तच्छब्दोच्चारणाभावे शाब्दार्थस्य कार्याङ्गत्वानपायात् तद्बोधकपौरुषशाब्दिकशब्दान्तरप्रवक्ता भवेदपि प्रतिनिधिः । यदा तु वाशमिकाधिकरणव्यवस्थानरीत्या विधिगतशब्दविशिष्टस्यार्थस्य तादृशशब्दमात्रस्य वा देवतात्वम्, तदा न प्रयत्नः शब्दान्तरस्य । नहि हविस्त्यागकालीनोच्चारणकर्मत्वविशिष्टविधिगतशब्दत्वसमनियतं श्रवणोपाधिरूपं पूर्वव्यवहारसिद्धं देवतात्वं शब्दान्तरे समस्ति । यदि तु अर्थस्यापि देवतात्वं कथञ्चिदङ्गीक्रियेत, तत्रापि तादृशविधिगतशब्दप्रतिपाद्यत्वसमनियतत्वेन तदङ्गीकृत्य प्रतिनिध्यभावः समर्थनीयः । अत एव यागस्य देवताघटितत्वेऽपि विधेयत्वघटिततद्विषये आक्षेपकत्वाद्भवात् देवताविधिरपूर्वविधिरेव । तदर्थत्वे च यागपदार्थस्य लोप एव । यदा तु देवताऽपचारे प्रत्याम्नायविधिः प्रयतं तद्भावे विधिरिष्यते प्रामाणिकम्, तदा तथैवानुष्ठानम् । एवमग्न्यादेः होमाधिकरणस्य न प्रतिनिधिः । यथाऽऽहवनीयादेस्तावत् आधानविधिसिद्धत्वादेव क्रतुप्रयोगविध्यविषयत्वात् तेषामधिकारविशेषत्वप्रतीतेः यथाशक्तिन्यायाविषयत्वादेव न प्रतिनिध्याशङ्का । यत्र तु लौकिकाग्नेरेव यावत्निकमधिकरणत्वं यत्र वा पद्मादेः, तथापि तस्यापि तस्य प्रयोगविधिविषयत्वे अदृष्टार्थत्वात् न तत्प्रतिनिधिः । नहि पूर्वदेशविभागानुकूलव्यापारकपक्षेपमात्ररूपस्य होमस्य आधारादेशोऽस्ति । अत एव तद्विधिरपि अपूर्वविधिरेव । पक्षादिना आहवनीयादिबाधस्तु पक्षस्यादृष्टत्वकल्पनाधिकरणतायाः एवं अदृष्टोत्पादकत्वात् पक्षेन तत्तिद्धेः अनुपपत्त्यापोगानुरोधेन । अतश्च तत्रापि तत्प्रतिनिधेरदृष्टोत्पादकत्वे प्रमाणाभावाच्च सः । क्वचित्तु यावनिकेऽस्मान्नाम्यादिरभावे विधिरेव ।

एवमर्थप्रकाशनार्थेष्वपि मन्त्रेषु न प्रतिनिधिः शब्दान्तरस्य मन्त्रान्तरस्य वा । न हि उपायान्तरेण ध्यानादिना अर्थे अनवगते तत्प्रतिपादकत्वहानाभावादेव अनाशङ्क्यः । अवगते तु तस्मिन्न स्मारकानपेक्षत्वादेव न तदुपादानम् । न चेदं यत्र खलु एवार्थः स्मृतः, तत्र विहितमन्त्रपाठानापत्तिः, तत्र नियमादृष्टसिद्ध्यर्थं मन्त्रजन्यस्मृतेरेव अभ्युदयकारित्वकल्पनेन मन्त्रपाठावश्यकत्वात् । प्रतिनिधेस्तु कर्मचोदनाऽऽक्षिप्तस्य नियमादृष्टजनकत्वे प्रमाणाभावात् न पाठ इति वैषम्यम् ।

एवमन्यस्मात् तददृष्टोत्पत्तौ प्रमाणाभावेन अदृष्टार्थप्रयाजादिक्रियाया अपि न प्रतिनिधिः । दृष्टार्थावघातादिक्रियायास्तु स समस्त्येव ।

यत्तु अत्र कैश्चिददृष्टार्थस्य षोडशिग्रहणाभावादेरपि न प्रतिनिधिः । तेन षोडश्यभावयुक्तक्रतुप्रयोगसकलत्वे कृते यदि दैवादन्यमपि तत्र षोडशी कृतः, तदा षोडश्यभावस्यापाये तददृष्टार्थे नाभावान्तरं प्रतिनिधेयमित्युक्तम् । तत्र 'नातिरात्रे षोडशिनं गृह्णाति' इत्यनेन षोडशिग्रहणाभावेऽपि हवनाङ्गत्वादेव क्रतूपकारसिद्धिरित्यवगमात् षोडशिग्रहणाभावस्य अदृष्टोत्पादकत्वे प्रमाणाभावात् । अत एव तत्र षोडशिग्रहणे प्रायश्चित्ताकृताय विवचनमात्रम् ।

मण्डन—'न मन्त्रादौ प्रतिनिधिः ।'

शंकर—'न देवताऽऽदेः स मतः ।' प्रतिनिधिः ।

देवताऽधिकरणम् । देवमन्त्रयः । कर्मा न देवताप्रयुक्तः । विग्रहादिमत्यो देवता न सन्ति ॥

देवता वा प्रयोजयेदतिथिवद्भोजनस्य तदर्थत्वात् । ९।१।४।६॥

भाष्यम्—नैतदस्ति, अग्न्यादयः अप्रयोजका इति । सर्वा देवताः सर्वेषां कर्मणां प्रयोजिका भवितुमर्हन्ति । कुतः ? भोजनस्य तदर्थत्वात् । भोजनं हीदं देवतायाः, यागो नाम । भोज्यं द्रव्यं देवतायै प्रदीयते, सा भोक्ष्यते इति । देवतासंप्रदानको ह्ययं यागः श्रूयते । संप्रदानं च नाम कर्मणेऽपि ईप्सिततमादभिप्रेततमम् । तस्माद् गुणभूता देवता, देवतां प्रति गुणभूते द्रव्यकर्मणी । अपि च यागो नाम देवतापूजा । पूजा च पूजनीयं प्रति गुणभूता

लोके दृश्यते । तदेतत् अतिथिवत् द्रष्टव्यम् । यथा यत्किंचित् अतिथेः परिचरणम्, सर्वं तदतिथि-प्रयुक्तम् । एवमिदमपीति ।

आह । नन्वेवं भवता विग्रहवती देवता, भुङ्क्ते चेत्यभ्युपगतं भवति । उच्यते । बाढम् । विग्रहवती देवता, भुङ्क्ते च । कुतः ? स्मृतेः, उपचारात्, अन्यार्थदर्शनाच्च । एवं हि स्मरन्ति, विग्रहवती देवतेति । स्मृतिश्च नः प्रमाणम् । तथा, विग्रहवतीं देवतामुपचरन्ति । यमं दण्डहस्तमालिखन्ति, कथयन्ति च । तथा, वरुणं पाशहस्तम्, इन्द्रं वज्रहस्तम् । उपचारादपि स्मृतेर्दृढिमानं कल्पयामः । तथा अन्यार्थवचनम्, विग्रहवतीं देवतां दर्शयति । 'जगृम्भा ते दक्षिणमिन्द्र हस्तम्' इति ( ऋग्. १०।४७।१ ) पुरुषविग्रहस्य हि दक्षिणः सव्यश्च हस्तो भवति । तथा 'इमे चिदिन्द्र रोदसी अपारे यत् संगृभ्णा मघवन् काशिरित् ते' इति ( ऋग्. ३।३०।५ ) । काशिः मुष्टिः । सोऽपि पुरुषविग्रहरूपेणोपपद्यते । तथा 'सुविग्रीवो वपोदरः सुबाहुरन्धसो मदे । इन्द्रो वृत्राणि जिघ्नते ॥' इति ( ऋग्. ८।१७।८ ) । ग्रीवा उदरं बाहू इति पुरुषविग्रहदर्शनं भवति । तस्मात् विग्रहवती देवतेति भुङ्क्ते च । कथमवगम्यते ? स्मृतेः उपचारात् अन्यार्थदर्शनाच्च । एवं स्मरन्ति 'भुङ्क्ते देवता' इति । तथा चैनां भुञ्जानामिव उपचरन्ति, यदस्यै विविधानुपचारान् उपहरन्ति । तथाच अन्यार्थ-दर्शनं भुञ्जानां देवतां गमयति । 'अद्धीन्द्र पिब च प्रस्थितस्य' इति तथाच 'त्रिंशा सनानि जठरेषु धत्ते' इति ( ऋग्. १।९६।१० ) । 'एकया प्रतिधा पिबत् साकं सरांसि त्रिंशतम्' इति ( ऋग्. ८।७७।४ ) । आह, न देवता भुङ्क्ते । यदि च भुञ्जीत देवतायै हविः प्रत्तं क्षीयेत । उच्यते, अन्नरसभोजिनी देवता मधुकरीवत् अवगम्यते । कथम् ? देवतायै हविः प्रत्तं नीरसं भवति । तस्मात् अन्नरसं भुङ्क्ते देवतेति गम्यते ।

टुप्.— अत्र यागो देवताऽऽराधनार्थं इतिमन्यमानः पूर्वपक्षं करोति । न आम्नायार्थो यागः, किन्तु देवता-ऽऽराधनार्थः । कुतः ? तद्धितशब्दात् ( आग्नेयः इति अग्निर्देवता अस्येति ) । अग्निर्देवता अस्यशब्दस्य विशेषणम्, अस्यशब्दश्च द्रव्याभिधायी इत्यत् तद्विशेषणम् । तत् ( द्रव्यम् ) यदि अग्न्युद्देशेन प्रदीयते, एवं अग्निशब्दो विशेषणं ( भवति ) नान्यथा । यदा च द्रव्यं ( अग्न्यु-द्देशेन ) प्रदीयते, तदा अग्निः संप्रदानं भवति । संप्रदानं च कर्मणोऽपि ( ईप्सिततमात् ) प्रधानतरम् । (कथम् ?) यजतिक्रियया द्रव्यं व्याप्यते, द्रव्येण च संप्रदानम् । तस्मात् आग्न्यर्थो यागः । यथा उपाध्यायाय गां ददाति इति । ( उपाध्यायार्थं दानमिति ) । अपिच देवपूजायां यजिर्वर्तते इति स्मरन्ति ( शाब्दाः 'यज देवपूजासंगति-करणदानेषु' इति ) । तस्मात् 'यजेत स्वर्गकामः' इति देवतां यागेन आराधयेत् ततः ( देवतायाः सकाशात् ) स्वर्गो भविष्यति इति ।

आर्थपत्याच्च ॥ ७ ॥

भाष्यम्— यदि कस्यचिदर्थस्य ईशाना देवता, उपचर्यमाणा च प्रसीदेत्, ततः तदाराधनार्थं इयं देवता-पूजा अभिनिर्वर्त्येत । न चैतद् उभयमपि अस्ति इति । तदुच्यते अर्थपतिर्देवतेति । कथमवगम्यते ? स्मृतेः उपचारात् अन्यार्थदर्शनाच्च । एवं हि स्मरन्ति 'अर्था-नामीष्टे देवता' इति । तथा देवग्रामो देवक्षेत्रं इत्युप-चारः तामेव स्मृतिं द्रढयति । तथा अन्यार्थदर्शनं ईशाना देवतां दर्शयति 'इन्द्रो दिव इन्द्र ईशे पृथिव्या इन्द्रो अपामिन्द्र इत् पर्वतानाम् । इन्द्रो वृधामिन्द्र इन्मे-धिराणामिन्द्रः क्षेमे योगे हव्य इन्द्रः ॥' इति ( ऋग्. १०।८९।१० ) । तथा 'ईशानमस्य जगतः स्वर्दृश-मीशानमिन्द्र तस्थुषः' इति । तथा स्मृत्युपचाराभ्यां प्रसीदति इत्यवगच्छामः । एवं हि स्मरन्ति 'प्रसीदति देवता' इति । तथा उपचरन्ति 'प्रसन्नोऽस्य पशुपतिः पुत्रोऽस्य जातः' 'प्रसन्नोऽस्य वैश्रवणः धनमनेन लब्धम्' इति । तथा अन्यार्थदर्शनं भवति 'आहुतिभि-रेव जुहुवतो देवान् प्रीणाति' इति, 'तस्मै प्रीता इषमूर्जं नियच्छन्ति' इति ।

ततश्च तेन संबन्धः ॥ ८ ॥

भाष्यम्— ततो देवतायाः तेन फलेन संबन्धः परि-चरितुर्भवति । यो देवतां इज्यया परिचरति, तं सा फलेन संबध्नाति । कथमेतदवगम्यते ? स्मृत्युपचाराभ्याम् ।

स्मरन्ति हि ' देवता यष्टुः फलं ददाति ' इति । तामेव उपचारेण स्मृतिं द्रढयति ' पशुपतिरनेन उपचरितः, पुत्रोऽनेन लब्धः ' इति । तथा अन्यार्थदर्शनं इममेवार्थं दर्शयति ' स इध्मेन स विशा स अन्मना स पुत्रैर्वाजं भरते धना नृभिः । देवानां यः पितरमाविवासति श्रद्धामना हविषा ब्रह्मणस्पतिम् ॥ ' इति (तैत्त २।३।१४)। तथा ' तृप्त एवैनमिन्द्रः प्रजया पशुभिस्तर्पयति ' इति । तस्मात् हविर्दानेन गुणवचनैश्च देवता आराध्यते । सा प्रीता सती फलं प्रयच्छति । येन कर्मणा अभिराधिता यस्य फलस्य ईष्टे, तत् कर्त्रे प्रयच्छति । न तत् स्वयं प्रदातुमर्हति । वचनात् एतदवगम्यते ' स किं प्रयच्छति ' इति । यथा अयं वचनम्, न तत् सर्वे ।

अपिवा शब्दपूर्वत्वात् यज्ञकर्म प्रधानं स्यात्, गुणत्वे देवताश्रुतिः ॥ ९ ॥

भाष्यम्— अपिवेति पक्षो व्यावर्त्यते । न च एतदस्ति यदुक्तम् ' देवता प्रयोजिका ' इति । यज्ञकर्म प्रधानं स्यात् । यजतेर्जातमपूर्वम् । कुतः ? शब्दपूर्वत्वात् । यदि फलं ददाति, तत् प्रयोजकम् । ' इदं फलं ददाति ' इत्येतत् ज्ञानं शब्दपूर्वकम्, न प्रत्यक्षादिभिरवगम्यते । शब्दश्च यजतिशब्दात् फलमाह, न देवतायाः । कथमवगम्यते ? दर्शपूर्णमासयोः करणत्वेन निर्देशः ' दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत ' इति । तथा ' ज्योतिष्टोमेन स्वर्गकामो यजेत ' इति । यजत्यर्थस्य हि स्वर्गकामेन समभिव्याहारो न देवतायाः । ननु द्रव्यदेवताक्रिया यजत्यर्थः । सत्यमेवम्, किन्तु गुणत्वे देवताश्रुतिः । द्रव्यदेवतं हि भूतम्, भावयितव्यो यजत्यर्थः । भूतभव्यसमुच्चारणे च भूतं भव्यायोपदिश्यते । तस्मात् न देवता प्रयोजिका ।

अथ यदुक्तम्, कर्मणः ईप्सिततमत्वात् देवताया अभिप्रेततमत्वमिति । तास्याभिप्रेतता अपह्नुमहे । तद्धितशब्देन चतुर्थ्या वा संयुक्तस्य देवताऽर्थस्य वाक्यात् अभिप्रेतता अवगम्यते । फलसंयोगस्तु वाक्यादेव यजत्यर्थस्य । तस्य च श्रुत्या करणता अवगम्यते, न देवतायाः । तत्र यद्यपि देवताऽर्थता वाक्यात् गम्यते, फलार्थताऽपि तेन न प्रतिपद्यते । फलं च पुरुषार्थं । पुरुषार्था च नः प्रवृत्तिः । न चासौ देवतायाः । तस्मात् देवताप्रयुक्तां प्रवृत्तिं न पश्यामहे । या तु संप्रदानस्य अभिप्रेतता, सा फलवतो यजेः साधनत्वे सति उपपद्यते ।

यच्च ' यजिर्देवतापूजा, सा पूज्यमानप्रधाना लोके लक्ष्यते ' इति । न लोकवत् इह भवितव्यम् । न पूज्यमानं पूजाप्रधानम् । यदि फलवत्, तत् प्रयोजकम् । तस्मात् यज्ञकर्म प्रयोजकम् । अपि च एतस्मिन् पक्षे विग्रहवती देवता, भुङ्क्ते च इत्यध्यवसनीयं भवति । नहि अविग्रहायै अभुञ्जानायै च दानं भोजनं वा संभवतीति ।

यच्चोक्तं स्मृत्युपचारान्यार्थदर्शनैः विग्रहवती भुङ्क्ते चेति, तन्न । स्मृतेर्मन्त्रार्थवादमूलकत्वात् । मन्त्रेभ्यश्च अर्थवादेभ्यश्च स्मृतिमूलं विज्ञानमुत्पद्यते इति प्रत्यक्षमवगम्यते । ते च मन्त्रार्थवादा नैवंपरा इत्येतद् वक्ष्याम । आह, यदि नैवंपराः, न तर्हि मन्त्रार्थवादमूलं तद्विज्ञानमिति । उच्यते । ये आलोचनमात्रेण मन्त्रार्थवादान् पश्यन्ति, तेषां तत् स्मृतिमूलम् । ये पुनर्निपुणतः पश्यन्ति, तेषां तत् कथितमपि न कस्यचित् स्मृतिमूलं भवति । तस्मात् तत एव स्मृतिः । उपचारोऽपि स्मृतिमूल एव ।

यत्तु अन्यार्थदर्शनमुक्तम् ' ग्रभ्णा ते दक्षिणमिन्द्र हस्तम् ' इति नैतद् एवंपरम् ' इन्द्रस्य हस्तो विद्यते ' इति । वयमस्य दक्षिणो हस्तः, तं वयं गृहीतवन्त इति । तस्मान् अस्मात् इन्द्रस्य हस्तवत्ता न प्रतीयते । आह, यदि हस्तो नास्ति, ' वयं ते हस्तं गृहीतवन्त ' इत्येतन्नावकल्पते इति हस्तसत्ता अध्यवसीयते ' अस्त्यस्य हस्तः, तं वयं गृहीतवन्त ' इति । तन्नोपपद्यते । यद्यपि अस्य हस्तो भवेत्, तथापि न ' तं वयं गृहीतवन्त ' इति प्रत्यक्षमेतत् । तथापि एतन्नावकल्पते एव । तत्र एतत् असंबद्धं वा कल्पयितव्यं स्तुतिर्वा । तच्च प्रत्यक्षेऽपि तुल्यम् । अथैवमुच्यते, तस्य एतत् वचनम्, यो गृहीतवान् तस्य हस्तमिति । उच्यते । नैतदप्यवगमेयम्, आदिमत्ता दोषो वेदस्य प्रसज्येत । न च गृहीतवानासीत् इत्युच्यते, प्रमाणाभावात् । एतस्मादेव वचनात् अर्थात् कल्प्यते गृहीतवान् इति चेत्, तन्न । अन्यार्थस्यापि उच्चारणं संभवत्येव यथा । यथा ' दश दाडिमानि, षडपूपाः ' इति ।

यद्यपि चैष पक्षो 'विग्रहवानिन्द्रः' इति, तथापि इन्द्रशब्देन आमन्त्रणं संबोधनार्थम्, संबोधनमनुवचनाय। तत्र संबुद्ध इत्यवगते अनुवचनं न्याय्यम्। न चासौ केनचित् प्रकारेण संबुद्ध इत्यवगम्यते। अनवगते संबोधनं व्यर्थम्। वचनप्रामाण्यात् संबुध्यते इत्येवं गम्यते इति चेत्, उक्तम् 'अदृष्टफलकल्पना हस्तादिकल्पनाऽनुपपत्तिः' इति। न चासौ संबुद्धः इत्यवधार्यते, प्रमाणाभावात्। तस्मात् संबोधनवचनं न संबोधनाय, निर्देशार्थमेव। अविग्रहपक्षेऽपि तत् निर्देशार्थमेव भविष्यति। तत्र आमन्त्रितविभक्तिवचनं स्तुत्यै। एवमिदं देवताऽऽख्यं साधनं साधयितुमलम्, यत् चेतनादिवत् संबुध्य (टिप्पणीपाठः) साधयतीति चेतनवदिव उपचर्यमाणः संबुद्धिशब्देन आमन्त्र्यते। तथा संबोधनशब्देन निर्दिश्य उच्यते 'गृहीतवन्तो वयं तव हस्तम्' आददाना वयमित्यर्थः। 'अस्माभिः इन्द्रकर्म कर्तव्यम्' इत्येतदनेन स्मार्यते। तथा इमे द्यावापृथिवी दूरे अपारे यत् संगृभ्णासि मघवन् अहो ते पूजितो मुष्टिः इति मन्त्रमिव मुष्टि स्तुत्यर्थेन वदति। तस्यापि भावे न प्रमाणमस्ति। नेदं वचनम्, इन्द्र महान् काशिरस्तीति। किं तर्हि? यस्तव काशिः, स महानिति। अन्यार्थः 'तव काशिरस्ति' इति, अन्यः 'तव काशिर्महान्' इति। तथा हि स्तुतिरुपपद्यते इति चेत्, नैतत्। नियोगतो यस्यापि पौरुषविधिकैः अङ्गैः नास्ति संयोगः, पौरुषविधिकैरङ्गैः तस्यापि स्तुतिर्भवति यथा 'एते वदन्ति (ग्रावाणः) शतवत् सहस्रवदभिक्रन्दन्ति हरितेभिरासभिः। विष्ट्वी ग्रावाणः सुकृतः सुकृत्यया होतुश्चित् पूर्वे हविरद्यमाशत॥' इति (१०।९४।२) तथा 'सुखं रथं युयुजे सिन्धुरश्विनम्' इति (ऋ. १०।७५।९)। तस्मात् न स्तुतिवचनादर्थावाप्तिर्भवति पुरुषविधत्वे देवतायाः।

यथा 'तुविग्रीव इन्द्रः' इति नैतत् युक्तं भाति ग्रीवावान् इन्द्र इति। किं तर्हि? या अस्य ग्रीवा, सा महती। ग्रीवासत्त्वे नास्ति प्रमाणम्। न च ग्रीवानुविधर्षाप्तिः, अपुरुषविधत्वेऽपि स्तुत्युपपत्तेः। अपि च 'इन्द्रो वृत्राणि जिघ्नते' इत्येताभ्यां पदाभ्यां इन्द्रशब्दः संबद्धो न शक्नोति तुविग्रीवादिभिः संबन्धं यातुम्। द्विरुच्चारणमस्य प्रसज्यते 'तुविग्रीवत्वात् इन्द्रो वेदितव्यः, वृत्राणि च इन्द्रो हन्ति' इति। तथाहि सति भिद्येत, अभिन्नं च वाक्यमुपलभ्यते। तदेवमवकल्पते, यदि तुविग्रीवादयः अस्य नोपदिश्यन्ते इति। स्तुत्यर्थं संकीर्त्यते तुविग्रीवादिः। अन्धसो मदे, ईदृशो वृत्राणि हन्ति इति एषा तु वचनव्यक्तिः। गुणवद्धोपदेशपरमिदं वचनमिति।

यदपि वचनम्, 'बाहू ते इन्द्र रोमशौ' 'अक्षी ते इन्द्र पिङ्गले' इति। तदपि बाह्वोः रोमशत्वं अक्ष्णोश्च पैङ्गल्यमाह, न बाहुसत्तामक्षिसत्तां च। यदपि अक्षिसत्तां वदतीति गम्यते 'चक्षुष्मते शृण्वते ते ब्रवीमि' इति, तदपि न चक्षुःसंबन्धार्थम्, 'चक्षुष्मते ब्रवीमि' इति वचनसंबन्धार्थम्। यत् ब्रवीमि तत् चक्षुष्मता श्रुत्यर्थमुच्चारयसि। कुत एतदवगम्यते? चतुर्थीनिर्देशात्। यदि प्रातिपदिकार्थः अभ्यधीयते, तथा वाक्यं भिद्येत। चक्षुष्मान् इत्येव नोद्दिश्येत, 'चक्षुष्मते ते ब्रवीमि' इति च। तस्मात् न किञ्चित् अन्यार्थदर्शनं पुरुषविधतां देवताया इदं ख्यापयति इति।

न चेदं भोजनम्। नहि देवता भुङ्क्ते। तस्मात् 'भोजनस्य तदर्थत्वात्' इति तत् असत् वचनम्। यदपि स्मृत्युपचारान्यार्थदर्शनैः भुङ्क्ते इति, तत् अप्रमाणत्वेन प्रत्युक्तम्। अपि च भुञ्जानायै देवतायै प्रत्तं हविः क्षीयेत। न च मधुकरीवत् भ्रमरसभोजिन्यो देवता इति प्रमाणमस्ति। मधुकरीषु प्रत्यक्षम्। न च तद्वत् देवतासु। तस्मात् न भुङ्क्ते देवतेति। यदुक्तं देवतायै हविः प्रत्तं नीरसं भवतीति, नैष दोषः। कालोपहतं नीरसं भवतीति शीतीभूतं च।

न चासौ कस्यचिदर्थस्य ईष्टे। अनीशा कथं दास्यतीति। यदुक्तम् 'स्मृत्युपचारान्यार्थदर्शनैः ईशाना देवतेति अवगम्यते' इति, तत्र, स्मृतेः मन्त्रार्थवादमूलत्वात् प्रत्युक्तम्। उपचारोऽपि देवग्रामो देवक्षेत्रमिति, उपचारमात्रम्। यो यदभिप्रेतं विनियोक्तुमर्हति तत् तस्य स्वम्। न च ग्रामं क्षेत्रं वा यथाऽभिप्रायं विनियुङ्क्ते देवता। तस्मात् न संप्रकल्पते इति। देवपरिचारकाणां तु ततो भृतिर्भवति, देवतामुद्दिश्य यत् त्यक्तम्। यदुक्तम्, अन्यार्थदर्शनं ईशाना देवता इत्यवगतेः 'इन्द्रो दिव इन्द

अतिथौ तत्प्रधानत्वमभावः कर्मणि स्यात् तस्य प्रीतिप्रधानत्वात् ॥ १०॥

भाष्यम्—यदुक्तं अतिथिवदिति। तत् परिहर्तव्यम्। आतिथ्यं अतिथिप्रयुक्तं स्यात्। आतिथ्ये हि तत्प्रीति र्विधीयते। अतिथिः परिचरितव्यः। यथा प्रीयते, तथा कर्तव्यमिति। दानं भोजनं वा कार्यमिति। यदन् अतिथये रोचते, तत्कर्तव्यम्। यत्तस्मै न रोचते, न तद्बलात् कारयितव्यमिति। इह तु कर्मणि अभावः प्रीतिविधानस्य। तस्माद् विषमात् विषमेति।

शा— ( पूर्वः पक्षः— ) 'इन्द्रादेः संप्रदानत्वात् कर्मणोऽपि प्रधानता। यागः पूजा तदङ्गं स्या-दतिथेर्भोजनं यथा ॥' एवं प्राप्ते, ब्रूमः 'यागस्यैव यद्भुत्वा फलसाधनतोच्यते। देवतायाश्च तादर्थ्ये तन्निर्वृत्त्युपयोगतः ॥ यागश्च साध्यरूपत्वात् साधन-त्वेन देवताम्। गृह्णाति सिद्धरूपा च देवता तस्य साधनम् ॥' तस्मात् अपूर्वप्रयुक्ता धर्माः।

सोम— प्राधान्येऽपि प्रयोजकता न स्यात् इति पूर्वोक्तापूर्वप्रयोजकत्वमाक्षिप्य समर्थ्यते इति संगतिः। सूत्रार्थस्तु—देवतैव सर्वान् धर्मान् प्रयोजयेत् भोजनस्य यागस्य इदं हविः देवता भोक्ष्यते इति क्रियमाणत्वात् यागस्य भोजनशब्देन निर्देशः। देवताऽर्थत्वात् भोजनस्य भोक्त्रर्थत्वे दृष्टान्तः अतिथिवदिति।

वि— 'देवः प्रयोजकोऽपूर्वं वा, ऽऽद्योऽस्य फल-दत्वतः। , न विधेये गुणो द्वेपोऽपूर्वस्य फलितोचिता ॥'

भाट्ट— एवं तावदपूर्वमङ्गीकृत्यैव देवताप्रसादस्य प्रयोजकत्वं निराकृतम्। इह तु तदनङ्गीकृत्य देवताप्रसादः एव प्रयोजकोऽस्तु इत्याशङ्का प्रसङ्गान्निराक्रियते। तत्र देवतायाः संप्रदानत्वात् तस्य च कर्मकारकापेक्षयाऽपि अभिप्रेयमाणत्वेन प्राधान्यात् यागस्य पूजारूपस्य तत्संस्कार-कत्वावगतेः, तस्याश्चोपयोगापेक्षाया 'स एवैनं भूतिं गमयति' 'स एवैनमिन्द्रः प्रजया पशुभिश्च तर्पयति' इत्याद्यर्थवादानुसारात् प्रसन्नायाः फलदातृत्वावगतेः, यागस्यैव फलजनकत्वे प्रमाणाभावे अपूर्वसाधनत्वे सुतरां प्रमाणाभावः। अस्तु वा देवताया अभिप्रेयमाणत्वोक्तावपि तस्य 'ब्राह्मणाय गां ददाति' इत्यादौ ब्राह्मणस्य फल-दातृत्वासंभवेन उपयोगाभावात् प्राधान्यासंभवेन प्राधान्य-व्यभिचारेण तत्कल्पनाऽनुपपत्तेः, प्रत्युत भावार्थाधिकरण-न्यायेन यागकरणिकाया भावनाया भाव्यापेक्षायां स्वर्गस्यैव तत्त्वेनान्वयात्, देवताया अपि संस्कार्यत्वे उद्देश्यत्वाने-कत्वनिमित्तवाक्यभेदापत्तेः देवताया एव यागाङ्गत्वम्, तथापि यागस्य फलजनकत्वे व्यापारापेक्षायामभूतापूर्व-कल्पनाऽपेक्षया शक्तिमत्त्वात् आर्थवादिकदेवताप्रसादस्यैव द्वारत्वकल्पनात् तत्प्रयुक्तत्वसिद्धिः। प्रसादस्य च विग्रह-भोगादिलिङ्गनिरूपणेन अनुपपत्तेः अर्थवादाद्यनुसारेण विग्रह-भोगादिकल्पनेऽपि न दोषः। इति प्राप्ते, प्रसादो हि यदि इच्छारूपः, तदा तस्येच्छात्वेन तत्फलं प्रति कारणत्वे अतिप्रसङ्गापत्तेरवश्य दर्शादिकर्तुस्तत्फलं भवतु इत्येव-माकारकेच्छात्वेन तद्वाच्यम्, तथा च कारणताऽवच्छेदके गौरवम्। दर्शादिजन्यफलभोगे जातेऽपि तत्कर्तृत्वानपायात् अन्यकृतदर्शपूर्णमासजन्यप्रसादात् अन्यस्य फलापत्तिश्च। अतस्तत्फलव्यक्तित्वावच्छिन्नं प्रति तद्व्यक्तिकर्तुः सा फल-व्यक्तिर्भवतु इत्येवमाकारकेच्छात्वेन कारणत्वं वाच्यम्। तथा चानेककार्यकारणभावकल्पनं कारणताऽवच्छेदके गौरवं च।

किञ्च एतादृशप्रसादो यदि ब्राह्मणतर्पणान्ते, तदा यागानां नष्टत्वादेव तत्कल्पनापत्तिः। यदि तु तत्तद्यागेभ्यो-ऽपि अवान्तरप्रसादा आग्नेयव्यक्तिकर्तुस्तद्व्यक्तिजन्यं फलं भवतु इत्याकारिका इष्यन्ते, तदा देवतानां अभीप्सितत्वस्य अर्थवादेषु प्रतिपादनात् देवतासंयोगमीमांसाधिकरणेऽपि फला-पत्तिः। अपेक्ष्यार्थवादक्रमेण अभ्युपगम्य ताद्दृशमहा-प्रसादस्य विजातीयेच्छात्वेन अपूर्वशब्दिन इव विजातीय-फलत्वावच्छिन्नं प्रति कारणता, अवान्तरप्रसादानां च विजातीयतत्तदिच्छात्वेनैव महाप्रसादं फलं च प्रति कारणता, कारणताऽवच्छेदकसंबन्धश्च स्वजनकयागजन्य-समवायित्वम्, कार्यताऽवच्छेदकसंबन्धश्च फलानां समवायः, अतः कर्मान्तरे फलापत्तिः। अवान्तरप्रसादमहाप्रसादयोः परस्परं कार्यकारणभावे प्रत्यासत्तिस्तु उभयत्र स्वजनकयाग-समवायित्वमेव। देवतानिष्ठमेव वा तं कार्यकारणभाव-मङ्गीकृत्य समवायः एव प्रत्यासत्तिरस्तु इति चेत्, संबन्ध-गौरवस्यैव दोषत्वात्, यागनिष्ठकारणतानिरूपितकार्यता-

घटकसंबन्धस्य मयता निर्वक्तुमशक्यत्वाच्च । मन्मते तु सर्वकार्यकारणभावानां समवायः एव संबन्ध इति अवधेयम् । एतेन प्रसादो नाम गुणविशेष इत्यपि पक्ष. प्रत्युक्तः ।

न च अस्य गौरवस्यार्थवादिके प्रसादाख्ये व्यापारे सिद्धे फलमुपपन्नमिति वाच्यम् । अर्थवादस्य स्वार्थकत्वेऽपि उपपत्तौ स्वतन्त्रफलदत्वाभावात्, व्यापारापेक्षाया यजि सम्बन्धेन तद्वाचकपदान्तरकल्पनया तस्य व्यापारत्वकल्पने च व्यापारस्यापि स्वरूपसाधकत्वेन तस्याः संबन्धावगमपूर्वकत्वात् संबन्धगौरवस्य फलप्रयुक्तत्वानुपपत्ते । अतो ये नागत् प्रसादादिप्रतिपादकाः, ते देवतयन्त्रादिफलजनकत्वेन प्रसादादिविशिष्टदेवताप्रकाशनार्थाः अन्तो विशेषणांशे प्रकाशनस्य अदृष्टार्थत्वात् नानुपपन्नाः । वैशिष्ट्यघटकसंबन्धश्च आहार्यो वा अनाहार्यो वेत्यन्यदेतत् । अर्थवादाश्च तेनैव संबन्धेन साधका इति तेष्वपि न मुख्यलक्षणा, अतोऽन्या काचिल्लक्षणा । अस्तु वा सा, तथाऽपि सिद्धो गौरवापत्तेः सा न दोषः ।

न च एवं विध्यनपेक्षितत्वात् आर्थवादिकप्रसादाद्यकल्पनेऽपि लक्षणया प्राशस्त्यतात्पर्यकस्यापि अर्थवादस्य असति प्रमाणान्तरविरोधे स्वार्थकार्येऽपि प्रामाण्याभ्युपगमात् निग्रहभोगप्रसादादिस्वीकारात् अपूर्वान्वये एव प्रसादस्वीकरणमस्त्विति वाच्यम् । अन्यतात्पर्यकस्य वाक्यस्य अन्यत्र प्रामाण्यायोगात् । अन्यथा शत्रुपुरुषतात्पर्यके 'यष्टी. प्रवेशय' इत्यादौ परावरोधननिवृत्तितात्पर्यके 'गृहे भुङ्क्ष्व' इत्यादौ च प्रमाणान्तराविरोधात् स्वार्थकार्येऽपि प्रामाण्यापत्तिः । अतः सकृदुच्चरितस्य शब्दस्य अनेकार्थबोधकत्वाभावनियमानुरोधेन शाब्दबोधस्यावच्छिन्नं प्रति तात्पर्यज्ञानस्य कारणत्वानुरोधेन चार्थवादानां स्वार्थे प्रामाण्यानुपपत्तेर्न देवताविग्रहादिस्वीकारः ।

न च तथापि शक्यार्थविशिष्टप्राशस्त्ये एव लक्षणया अर्थवादानां तात्पर्यात् विशेषणांशेऽपि प्रामाण्योपपत्तिः, लक्ष्यताऽवच्छेदके गौरवापत्तेः । अन्यथा व्रीहिन्यादेरपि निवृत्ताऽऽपत्त्या ऊहानापत्तिः । अतः कथमपि न विग्रहादिस्वीकारः । किन्तु शब्दमात्र देवता । अर्थस्तु प्रतिपदिशानुरोधात् चेतनोऽचेतनो वा कश्चित्स्वीक्रियते । न तु विग्रहादिमान् । उपासनाऽऽदौ पर ध्यानमात्रमाहार्यं तत्रेति जैमिनिमतनिष्कर्षः । मम तु एवंवदतोऽपि वाणी दुष्यतीति हरिस्मरणमेव शरणम् ।

खण्डन— 'न देवता कर्मणि तु प्रधानम् ।' ५.

शंकर—'देवताविग्रहादि न ।' प्रधानम् । १०.

* देवताऽधिकरणे दार्शनिके ( १०।४।१२।२६ ) देवतायाः स्वरूपेण कर्मणि समवायनिषेध उक्तः । मु. पृ. ११४२, * देवताऽधिकरणे देवताप्राधान्यस्य निषेध्यमानत्वात् । पृ. ४३८. * देवताऽधिकरणे ( म. ) वक्ष्यमाणेन न्यायेन 'एतस्यैव रेवतीषु वारवन्तीयम्' इति वाक्ये रेवतीनां वारवन्तीयस्य च आधाराधेयभावस्येव यज्ञादीनां विविदिषायाश्च क्रियाकारकभावस्यापि समभिव्याहारादेव सिद्ध्युपपत्तेः । परिमल. १।१।१ सम्. पृ. ६१. * देवताऽधिकरणे विग्रहादिपञ्चकाभावस्य प्रतिपादनात् । सोम. ६।१।२. * आगमनस्वरूपस्य देवतासांनिध्यस्य देवताऽधिकरणे निराकृतत्वात् । श्राद्धमयूखः पृ. ७१. * क्रममुक्तिनिर्वाहाय देवतानां विग्रहव्यवस्थापनेन ब्रह्मविद्याऽधिकारस्तासामुक्तः, अन्यथा उपासनादिकर्मभिः तत्तद्देवतास्वरूपप्राप्त्या मुक्तिफलोपपादिकानां श्रुतिस्मृतीनामप्रामाण्यमेव प्रसज्येत इति शारीरकमीमांसायां देवताधिकरणे (ब्र.) स्थापितम् । वैजयन्ती. ११।१।८. * तत्तत्प्रसादग्रहकतोपुत्तोपगमयुवजननिदर्शनसहस्रैः सुपरिनिश्चित यया चेतनाधिष्ठानात् अचेतनाना कार्यारम्भकत्वमिति, तथा चैतन्यं देवताया असति बाधके श्रुतिस्मृतीतिहासपुराणप्रसिद्धं न शक्यं प्रतिषेद्धुं इत्यपि स्पष्ट निरटङ्कि देवताऽधिकरणे । भामती. १।३।८।४१ ब्रह्. * ननु एवं अन्यपरस्यापि 'वज्रहस्तः पुरन्दरः' इत्याद्यर्थवादस्य स्वार्थेऽपि प्रामाण्ये देवताऽधिकरणविरोध इति चेन्न, देवताऽधिकरणे सूत्रकृता ( जैमिनिना ) यागः एव फलस्य प्रयोजकः, देवता तु यागस्य गुणः, न तु यागादृते देवता फलं प्रयोजयति इत्येव 'देवताया गुणभावो यागं प्रति' इत्येतावदेव व्यवस्थापयिष्यते, देवताविग्रहादिकं तु भाष्यकृतैव उत्सूत्रं निराकरिष्यते प्रौढिवादेन । कु. १।१।८।२२. * नहि प्रमाणान्तरायोग्यविषयकत्वं इत्येतावता अर्थवादादीनां प्रमाणान्तरमूलकत्वं

संभवति । तदुक्तं देवताऽधिकरणे भामत्याम् । सना. प्रा. प्रकाशे पृ. ९५. * शास्त्रदीपिकायां 'लक्ष्मीकौस्तुभवक्षसं. ... वन्दे मुकुन्दं मुदा' इति मङ्गलं कृतम् । तत्र सिद्धान्तचन्द्रिका—न चैवं देवताऽधिकरणविरोधः उद्देश्याया एव तद्विषयत्वात्, सोमाय स्वाहा इत्येवंरूपा या देवता कर्माङ्गभूता तस्या एव देवताऽधिकरणे विग्रहादिपञ्चकनिराकरणात् । उक्तं च 'नास्माकं शब्द एव देवता, नाकसदामिन्द्रादीनां देवतात्वाङ्गीकारात्' इति । अत एव वार्तिककारैः 'विशुद्धज्ञानदेहाय' इत्यादिना ग्रन्थादौ महादेवो नमस्कृतः । के.

* देवताऽधिकरणन्यायः । यत्तु केचिन्मन्यन्ते विग्रहबोधकश्रुत्यादेः उपासनापरत्वात् आरोपितविग्रहेणापि उपासनासिद्धेः नेश्वरस्योक्तविग्रहसिद्धिरिति,– तन्न । उपासनापरेभ्योऽपि अविरोधे देवताऽधिकरणन्यायात् प्रतीयमानार्थसिद्धेः नियार्थत्वादित्युक्तं संमदे । ( देवताऽधिकरणं द्रष्टव्यम् ) । साहस्री. ८४९.

* देवताऽधिकरणन्यायेन (न.) 'उपासनायाः कार्यत्वे विष्णोरात्मत्व एव च । उभयत्रापि तात्पर्यमात्मोपास्तिविधौ विधौ ॥' इति प्रतिज्ञासूत्रमूले: विधेः स्वार्थकत्वे स्वार्थतत्त्वे चेति उभयसिद्धिपरत्वात् । अद्वैत. १।४।१३१. * देवताऽधिकरणन्यायेन भूतार्थवादतया व्यवस्थाहेतुता अस्याः– ( शुको मुक्तः इत्यादेः ) स्येया । संक्षेपशा. टीका. २।२।७. * देवताऽधिकरणन्यायेन मन्त्राणामपि प्रतीयमानार्थप्रामाण्यमङ्गीकरणीयमेव । सना. विचार. पृ. २८६. * अत्र विश्वसत्यत्वस्य पारमार्थिकस्य देवताऽधिकरणन्यायेन कल्पनीयतया, तन्न्यायस्य च श्रुतिविरोधे अप्रवृत्तेः न प्रतिपन्नार्थत्वम् । चतुर्मन्थी. पृ. ४१९. * अन्यपदादपि परामर्शात् आश्रमान्तराणि प्रतीयमानानि देवताऽधिकरणन्यायेन आत्मनोऽपि सिद्धिसंभवात् । आभरणम्. ४।१।१।२ ब्रसू. * अनधिबाधके देवताऽधिकरणन्यायेन शब्दतः प्रतीयमानं परित्यक्तुमशक्यम् । भामती. ३।३।१५।२६ ब्रसू. * देवतामत् मात्रमसेवानुपपत्तेः यागद्वारा अपूर्वधर्म एवायं ( पौरुषेयत्वे ) देवताऽधिकरणन्यायेन विज्ञायते । घा. ३।३।१५।७४ पृ. ८८७. * स्तुतिपराणामपि उपपन्नानां देवताऽधिकरणन्यायेन (ब्रसू.) विश्वसत्यत्वेऽपि तात्पर्यस्य अङ्गीकरणीयतया बाधकत्वस्य संभवात् । चतुर्मन्थी. ४३८. * आगमबाधिताः दृश्यत्वादयः अन्यथासिद्धतात्त्विकसत्त्वपरत्वकल्पनायां अयुक्तत्वेन देवताऽधिकरणन्यायाप्रवृत्तेः । पृ. ४१९.

* देवताऽन्तरत्वं ( इन्द्रः महेन्द्रः इत्यत्र ) नास्ति इत्येकत्वे सगुणनिर्गुणाश्रयणात् । घा. २।१।५।१७ पृ. ४१४.

* देवताऽन्वाधानं अन्वाधानात् पृथक् न विद्यते । वि. १२।१।१२.

* देवताऽपनयः अभ्युदितेष्टौ कपालापनयेऽपि । भा. ६।५।२।१०–११. * देवताऽपनयो यद्येष्टौ अभ्युदयेष्टौ नैमित्तिकः । ६।५।१।१–९.

* देवताऽभिधानं आवाहनादौ विधिगतशब्देनैव अतिदेशस्थले । भाट्ट. १०।४।१४. * देवताऽभिधानं मन्त्रस्तिवाने ( ज्योतिष्टोमेऽग्नीषोमीये पशौ ) विधिगतशब्देनैव निगदेषु । भा. १०।४।१६।१२–१३.

* देवताऽर्थं कृतस्य हविषः संकल्पितत्वेन तत्र यजमानस्य स्वामित्वाभावात् न युक्तः परिक्रयः । वि. ३।४।२१. * देवताऽर्थता हविषः आहवनीयप्रक्षेपेण भवति । घा. ३।४।१४।३७.

* देवताऽऽदेः दृष्टमात्रापेक्षत्वेन अदृष्टोपकारानपेक्षता । भाट्ट. ४।१।७.

* देवताऽऽयतनेषु महापापात् सदाचारः । घा. १।३।२।७ पृ. २०५.

* देवताऽऽराधनार्थो यदि यागः, ततः पूज्यमाना देवता । यागश्च पूजा । पूजा च लौकिकैः पदार्थैः । तत्र येन प्रकारेण अग्निः पूज्यते, तेनैव सूर्यः पूज्यते इति न आश्वासः । विपरीतमपि कदाचित् स्यात् । ( पूर्वपक्ष इदम् ) । टुप्. ९।१।४।९ पृ. १६५९. * देवताऽऽराधनार्थः सर्वोऽयं प्रयासः । साऽस्य प्रसन्ना फलं ददाति । इति चेन्न । यागादेव फलम् 'स्वर्गकामो यजेत' इति हि श्रूयते । 'तस्य एवैनमिन्द्रः' इति तु गुणत्वेन देवताश्रुतिः । गुणभूतायां तु देवतायां स्तुत्या दातृत्ववादः । तस्मात् देवता न फलं प्रयच्छति । भा. ८।१।१७।३४.

◆ देवताऽऽवाहनार्थः निगदः 'अग्निमग्न आवह' इत्यादिः होत्रा सामिधेनीप्रयाजयोर्मध्ये पठ्यते । वि. १०।१।१ वर्णकम् ३. ◆ देवताऽऽवाहनकाले वेद्यन्तरे विष्णोरुरुक्रमस्यावाहनं न कार्यम् । भा. १०।८।१।१-२ वर्णकं २.

◆ देवताऽऽश्रयं द्रव्यान्तरेण बाध्यते यथा ऐन्द्रपुरोडाशो देवतासामान्यात् सान्नाय्यविकारः प्राप्तः, स तु द्रव्यसामान्यात् प्रवृत्तेन आग्नेयविकारत्वेन बाध्यते । बाल. पृ. १४१.

◆ देवतोपलक्षणार्था याज्या । भा. १२।३।१५।३९.

◆ देवतैक्ये पशुगणे सहहोमस्य तन्त्रम् । भा. ११।२।५।२४.

◆ देवतापदघटितशब्दापेक्षया द्रव्यपदघटितशब्दस्य बलीयस्त्वम् । भा. ८।१।१७।३२-३४.

◆ देवतात्वं अग्नीषोमयोर्व्यासज्यवृत्ति । संकर्ष. ४।४।६. ◆ देवतात्वं त्यज्यमानद्रव्योद्देश्यकर्मत्वम् । सु. पृ. ७४९. ◆ देवतात्वं त्यज्यमानद्रव्योद्देश्यत्वम् । मीन्या. ◆ देवतात्वं त्यागकालीनवतुर्थ्यन्तपदोच्चारणकर्मत्वरूपम् । रहस्य. पृ. १०२. ◆ देवतात्वं नाम मन्त्रेण शब्देनोक्तम्, तस्यैव योग्यस्यायोग्यस्य वा भवति, इति न जातिनिमित्तम् । शा. २।२।५।२३ पृ. ५३७. ◆ देवतात्वं मन्त्रप्रतिपाद्यत्वम् । संकर्ष. २।४।२. ◆ देवतात्वं व्यासज्यवृत्ति अखण्डोपाधिरूपम् । भाट्ट. २।१।१५.

■ देवतात्वं शब्दमात्रस्य निरस्तम् । ननु शब्दमात्रस्य देवतात्वात् इन्द्रमहेन्द्रशब्दयोश्च भेदात् कथं देवतैक्यं स्यादाशङ्क्याह— नचेति ( न च शब्दमात्रं देवता इति मतमस्माकमपीत्यभिधास्यते । शा. पृ. ४१७) । नवमे 'अपि वा शब्दपूर्वत्वाद् यज्ञकर्म प्रधानं स्याद् गुणत्वे देवताश्रुतिः' इति सूत्रे ( ९।१।९ ) भूतभव्यसमुच्चारणन्यायेन देवतायाः याग प्रति गुणत्वे अभिहिते, 'ननु कर्मणोऽपि ईप्सिततमत्वाद्-अभिप्रेतत्वं देवताया गम्यते' इत्याशङ्क्य 'नाप्यभिप्रेततामवगच्छामहे । तद्धितशब्देन चतुर्थ्या वा संयुक्तस्य देवतार्थस्य वाक्यादभिप्रेतता गम्यते' (भा. पृ. १६५२) इति भाष्येण अनर्थकत्वणंसमूहस्य प्रातिपदिकसंज्ञाभावे तद्धितचतुर्थीप्रयोगायोगात् तत्संयोगाभिधानेन अर्थग्रहणेन (च) शब्दमात्रस्य देवतात्वं निरस्तम् । दशमे च 'विधिशब्दस्य मन्त्रत्वे भावः स्यात् तेन चोदना' (१०।४।१३) इत्यत्र 'आवाहनादौ येनकेनचित् पर्यायेण देवताऽभिधानसिद्धेः विधिगताग्न्यादिशब्दानादरः' इति पूर्वपक्षयित्वा "आग्नेयोऽष्टाकपालः" इतिविधिगतेन अग्निशब्देन देवताया हविःसंबन्धाभिधानात् मन्त्रकार्ये देवतोद्देशे विधिगतस्यैव शब्दस्योच्चारणं कार्यम्' इति सिद्धान्तिते, 'का पुनरियं देवता नाम' इति पृष्ट्वा इन्द्रादीनां दृश्यानानां वेदे वा यत्र 'अग्निर्देवता वातो देवता' इत्यादिर्देवताशब्दः प्रयुक्तः, सा देवता इति परमतद्वयं अहःशार्दूलादीनां अनुपपत्तिप्रसक्तेः निरस्य, स्वमतेन 'सूक्तभाजो हविर्भाजश्च देवताः' ( भा. पृ. १९२७ ) इति भाष्येण 'आग्निदेवत्यं सूक्तम्' 'अग्निदेवत्यं हविः' इत्यादिप्रयोगात् 'आहुतिभाजो या अन्या देवता अन्याः स्तोमभाजश्छन्दोभाजः' इति लिङ्गाच्च सूक्तस्तुत्यस्य त्यज्यमानहविरुद्देश्यस्य च देवतात्वाभिधानादर्थस्यैव स्तुत्यत्वोद्देश्यत्वावगतेः 'मूर्तानाममूर्तानां चेतनानामचेतनानां च भूत्वा कञ्चिदर्थं प्रति तादर्थ्ये संकल्प्यमानानां देवतात्वं भविष्यति' (भा. पृ. १९२७) इति च भाष्येण मूर्तानां चेतनानां देवतात्वाभिधानात् 'यस्य वाचकं शब्दमुद्दिश्य स्मृत्वा वा हविस्त्यक्ष्यामि इति संकल्पः क्रियते सा (देवता) भवति ( तत्र )' ( भा. पृ. १९२७ ) इति च भाष्येण उच्चारणीयत्वात् दिशेः उच्चार्यमाणेन शब्देन 'प्रजापतिं मनसा ध्यायेत्' इत्यादिविधौ वा स्मर्यमाणेन वाच्यस्य देवतात्वाभिधानात्, 'ननु एवं सति श्रुतौ येनकेनचित् अग्नेः शब्देन निर्देशः करणीयः' इति चाशङ्क्य 'भवेदेतदेवं यदि अग्निशब्दोऽर्थप्रत्यायनार्थमुच्चार्येत अर्थोऽपि हविःसंबन्धार्थं प्रत्याय्येत' इत्युपक्रम्य (भा. पृ. १९२७) 'देवतायाश्च यज्ञसाधनभावो न रूपेण भवति । केन तर्हि ? संबन्धिना शब्देन' इत्यादिना भाष्येण ( भा. पृ. १९२८ ) शब्दसंबन्धितद्व्यतिरिक्ताभिधानात् शब्दस्य देवतात्वं निरस्तं भवति । सु. पृ. ६४३. ◆ देवतात्वं हविर्भोक्तृत्वम्, स्तुतिभाक्त्वम् । पृ. ६५९. ◆ अर्थो वाचिकया श्रुत्या उच्यमानो देवतात्वं प्रतिपद्यते, नान्यथा । वा. ६।३।५।१८. ◆ नहि द्रव्योद्देश्यत्वमेव देवता [illegible] । तथा

सति 'मैत्रावरुणाय दण्डं प्रयच्छति' 'आत्रेयाय हिरण्यं ददाति' इत्यादौ मैत्रावरुणात्रेयादेरपि द्रव्योद्देश्यत्वसद्भावेन देवतात्वापत्तेः । किञ्च उद्देश्यत्वमात्रस्य देवतात्वे प्रतिनिधीयमानस्यापि देवताभावात् पक्षे वक्ष्यमाणो देवताप्रतिनिध्यभावो विरुध्येत । सोम. १।४।४ पृ. ६३. ● शब्दस्यैव देवतात्वम् । भाट्ट. ९।१।१२. ● संप्रदानद्वैविध्यमभ्युपगम्य प्रतिग्रहणात्मकस्य संप्रदानस्य देवतात्वाभावेऽपि अनिराकरणात्मकसंप्रदानस्य देवतात्वमिच्छन्ति केचित् । सु. पृ. ८३२. ● 'अर्थोऽपि यादृशो यत्र देवतात्वेन चोदितः । मन्त्रगोऽपि ततोऽन्यत्वे देवतेति न गम्यते ॥' देवतात्वस्य प्रत्यक्षाद्यनवगम्यत्वात् चोदनैव एकं प्रमाणम् । ■ च यं यादृशं यत्र यादृशो चार्थे विदधाति, स यदि तथैव अनुष्ठानेऽपि संपाद्येत, ततः तत्प्रमितोऽयं इत्यवसीयते । किञ्चिदपि चेत् इह अन्यथा जातं निवृत्तव्यापारया चोदनाया प्रमाणान्तरं मृग्यम् । न च तदस्ति इत्यप्रमाणता । वा. २।१।५।१७ पृ. ४२२, ● मन्त्रेषु प्राधान्याभिधानात् अग्न्यादयः देवतात्वेन प्रज्ञाताः । १।४। ३।९ पृ. ३४०, ● देवतात्वस्य अनुष्ठानसंपाद्यत्वात् । २।३।५।१४ पृ. ६०१, ● देवतात्वस्य द्विदेवत्ये व्यासक्तत्वात् (व्यासज्य वृत्तित्वात्) । ३।२।१५।४१. ● 'देवतात्वस्य शब्दनिष्ठत्वेन' इत्यादिना एकदेवताऽलक्षणमुक्त्वा 'अर्थस्य देवतात्वपक्षे' इत्यादिना अन्यथा लक्षणमुक्तम् । (भाट्ट ८।२।७) । के. ● त्यज्यमानद्रव्योद्देश्यत्वात्मकहविर्भोक्तृलक्षणस्य देवतात्वस्य यागकल्पकत्वम् । सु. पृ. ९११, ■ भोक्तृस्वरूपदेवतात्वायोगात् । पृ. ९२६, ● यागं विना देवतात्वानुपपत्तेः । पृ. ९२८, ● विधिं विना देवतात्वाभावः । पृ. ७५५.

● देवतात्वबोधकानि च देवताशब्दः, तद्धितः, चतुर्थी, द्वितीया, मन्त्रवर्णश्चेति । 'देवतास्तर्पयति प्रजापतिर्मेधा देवताः' इत्यादौ 'अग्निदेवतामेके, नक्षत्रदेवतामेके' इत्यादौ च द्रव्यत्यागोद्देश्यत्वरूपदेवतात्वस्य देवतापदवाच्यस्य अन्वयः । यागार्थत्यागस्तु अनुवादः । एवं आग्नेयः इत्यादितद्धितस्य देवतात्वविशिष्टद्रव्यविशेषप्रातिपदिकम् । न च द्रव्यविशेषवाचित्वमसिद्धं इति वाच्यम् । बुद्धिस्थप्रकारावच्छिन्नबोधकत्वेनास्यार्थे 'साऽस्य देवता' (पा० ४।२।२४) इति तद्धितविधेः । एवं च तद्धितस्य देवतात्वविशिष्टे बुद्धिस्थप्रकारे अष्टाकपालत्वादौ तद्व्यक्तित्वादौ वा शक्तिः । तदवच्छिन्नस्य तु व्यक्तिन्यायेन लाभः । बुद्धिस्थत्वेन भानाभावात्तु न बुद्धिस्थत्वे शक्तिः । तेषां प्रकाराणां नानात्वेऽपि बुद्धिस्थत्वस्य उपलक्षणत्वेन शक्तिग्रहसंभवः । शक्तिग्रहोपलक्षणस्य न शक्यताऽवच्छेदकत्वं इति दिक् । मणि. पृ. १६२–१६३.

● देवताद्रव्येण कार्याणि न कर्तव्यानि । भा. १०।७।२।७. ● देवताद्रव्ययोः संनिपाते द्रव्यं बलीयः । भाट्ट. ८।१।१८. ● देवताद्रव्यादीनां साङ्कर्ये विकृतौ उपदिष्टदेवताद्रव्यादिभिः बाधः । भा. १०।७।१७। ५८–६०, ● देवताद्रव्यसंयोगः यागविधेः प्रयोजकः । 'वायव्यं श्वेतमालभेत' 'सौर्यं चरुं निर्वपेत्' । २।३।५। १२–१५.

● देवताध्यानं वषट्कारात् प्रागेव होत्रा कर्तव्यम् । संकर्ष. ४।३।६.

■ देवताध्यानं वषट्कारात् प्राक् 'तां ध्यायेद् वषट्करिष्यन्' इति लृट्प्रयोगात् ॥

'यस्यै देवतायै वषट्कुर्यात् तां ध्यायेत्' इति विहितं देवताध्यानमविहितकालनियमेन यदाकदाचन कुर्यात् । इति प्राप्ते, 'आतमञ्जलिना गृह्णाति' 'प्राणमभिप्राणिति' इत्यादौ अनन्तरव्यवहितोत्तरकालस्य सामर्थ्येनापि नियमदर्शनात् देवताऽर्चनविधौ ध्यानस्य प्राथमिकदर्शनाद् वषट्कारात् पूर्वमेव देवताध्यानम् । यस्तु 'यस्यै देवतायै हविर्गृहीतं स्यात्तां ध्यायेद्वषट्करिष्यन् साक्षादेव तद्देवतां प्रीणाति' इति वचनान्तरेणैव कालनियमः । संकर्ष. ४।३।६.

● देवतानय. । देवताऽधिकरणं द्रष्टव्यम् । भा. ९।१।४।६–१०. ● प्रमाणान्तराविरोधे एव देवतानयः (अनु.) प्रवर्तते । अन्यपरत्या अपि (भेदश्रुतेः) देवताऽधिकरणन्यायेन स्वार्थपरत्वमपि किं न स्यात् । संक्षेप. रामतीर्थ. ३।२८२.

● देवतानिर्देशः इदममुष्य अमुष्य च इत्यादिरीत्या समुद्दिश्य कार्यः, यत्र चरवः पुरोडाशाश्च व्यापकाः । संकर्ष. १।३।२३.

* देवतानिघ्नगुणवाचिपदस्यापि विकृतौ आवाहनादौ प्रयोगः । भा १०।४।१४।२६–२१

* देवतापदस्य निर्गुणस्यैवाभिधानं पवमानेष्टिषु आज्यभागयोः । भा १०।४।१५।२०–२१ * देवतापदस्य शब्दविशेषरूपत्वेन तदुच्चारणनियमः । सङ्कर्ष २।४।२

**देवतापदयोगेऽपि न सततदत्वनियमः ॥**

'अग्नयेऽनुब्रूहि' इत्यादौ इव 'अग्निं यज' 'ये यजामहेऽग्निम्' इति सततदेवतानाम्ना योगे सततदाक्षरत्वमन्त्रापत्तेः नियमादृष्टविरोधात्, अश्रुतकल्पने मानाभावात्, आकाङ्क्षितकर्मपदस्य 'छिन्दधि' इत्यादिवत् अर्थाध्याहारेणापि उपपत्तेः, अग्निपदस्य अध्याहारेऽपि तस्य प्रैषादौ प्रतिवचनान्त एवेति नियमेऽपि मानाभावात् । अक्षरपङ्क्तावेव तौ प्रयोज्यौ । इति प्राप्ते, सर्वदेवतापदसाधारणाग्रमादायापि सततदाक्षरोपपत्तेः अर्थाध्याहारस्य निरस्तत्वात् देवताविशेषपदमन्तरेण यागविशेषप्रतिपत्तेः अभावेन अनन्ततत्वाविकरणविरुद्धयागपञ्चकापत्तेश्च, देवतानाम्ना आदेशः । अत एव आम्नातेऽन्तरे 'अमुष्मै अनुब्रूहि', 'अमुं यज' इत्यादिवचने देवतानाम-विशेषोपलक्षक अदःशब्दः श्रूयते । 'अवावेष्टि' 'अवधिष्यामुम्' 'इदमहममुष्य' इत्यादिवचने देवतापदपौर्वापर्यनियमोऽपि पठनादेव । यत्तु लिङ्गदर्शनं सूक्तमूले 'यत्तनूनपात यज इडो यज इति ब्रूयात् वासिस्यात्, यत्रैवेव ब्रूयात्' 'मारुतस्यापरान् महद्भ्योऽनुब्रूहीत्याश्राव्य मरुतो यजेति ब्रूयात्' इत्यादिशासनात् अन्यत्रापि देवतापदप्राप्तिरिति, तत् आम्नातेऽन्तरे 'तनूनपात यज' इत्येव पाठात् तन्निषेधार्थकत्वेन दुर्लभम्, इतरस्य तु लिङ्गरूपत्वेनापि उपपत्तेः विपरीतसाधक इति तत्रैवोक्तम् । सङ्कर्ष २।३।२

* देवतापरो मेधपतिशब्दः अग्निपुरोपवान । भा ९।३।१२।३२–४०

* देवतापरिग्रहार्थं अग्निधारणार्थं वा अन्वाधानम् । देवतापरिग्रहार्थमपि अग्निधारणार्थम् । भा १२।२।५।१८, * देवतापरिग्रहार्थमपि अन्वाधानं ज्योतिष्टोमे पैष्टिकेषु पशुषु न कर्तव्यम्, प्रधानदेवतावत् अङ्गदेवतानामपि गृहीतत्वात् । १२।१।१२।२४–२८

* देवतापरिग्रहणं अन्वाधानेन कृतम् । भा १२।४।७।१९

* देवतापूजा यागो नाम (पूर्वपक्षे) । भा ९।१।४।६

* देवताप्रकाशेन न प्रत्यक्ष उपकारो यागसिद्धिः । भा २।१।५।१३

* देवताप्रकाशकस्य मन्त्रस्यापूर्वप्रयुक्तत्वम् । भा ९।१।३।४–५

* देवताप्रकाशनं सौर्यादिविकृतौ आवाहनादिमन्त्रेषु विधिमतशब्देनैव । भा १०।४।१३।२५

* देवताप्रयुक्ता न भवी किन्तु अपूर्वप्रयुक्ता एव । भा ९।१।४।६–१०

* देवताप्रसादाभयप्रार्थनादौ संहतहस्तसंयोगरूपाञ्जलिः । वा ३।४।१४।२५

* निग्रहविग्रहाभावेऽपि यज्ञे पूजाप्राप्त्यभावात् यागकर्मणि देवताप्राधान्याभाव इति देवताप्राधान्यं 'शक्तिर्वा प्रधानत्वम्' (९।१।४।१०) इति सूत्रे निषेत्स्यते । सु पृ ७९० * देवताप्राधान्यस्य देवताऽधिकरणे निषेध्यमानत्वात् । पृ ४२८

* देवताबोधकयाज्यादिक्रमादपि यागक्रमः । भाट्ट ५।१।८

* देवताभेदात् कर्मभेदः । बिन्दु २।२।९ * देवताभेदेऽपि एकजातीयेषु पशुषु (एकादशिनेषु) कुम्भीशूलवपाश्रपणीनां तन्त्रम् । भा ११।४।९।२१–२६ * देवताभेदेऽपि वचनिकः पुरोडाशैकत्वे सहैव प्रदानम् । सङ्कर्ष २।२।१४ । प्रदानं तु भिन्नमेव । २।२।१५ * देवताभेदे पशुगणे देवताप्रदानादिप्रदानान्तेषु न अनुसमयः । भाट्ट ५।२।६ * देवताभेदे पशुगणे वसाहोमस्यावृत्तिः । भा ११।२।६।२९

* देवतायाम अदनीयेन द्रव्येण आचरन्ति शिष्टाः, न अनदनीयेन । तत्र मनस्तमाचारात् तेषां स्मृतिरनुमीयते, स्मृतेः श्रुतिः । भा १०।३।१०।३६

* न हि देवतारूपमस्माकं किञ्चिदन्यत् प्रत्यक्षम्, मन्त्रवादतो निगदनात् । भा ४।४।५।१० * देवतारूप

शब्द एव ध्यातव्यः। संकर्ष. ४।२।६ सर्णकम् २.
* देवतारूपस्य अग्न्यादिशब्दस्य आनुपूर्वीविशिष्टवर्णान्येन कर्तुं प्रतीत स्वार्थप्रतिपादनं प्रत्यपि कारणत्वात्। भाट्ट. १।१।७.

* देवतावाचकपदस्य गुणवाचकपदरहितस्य पत्नीसंयाजादिषु अभिधानम्। भा. १०।४।१५।३०–३१.

* देवताविग्रहचैतन्यादिकं नवमे यद्यपि निराकरिष्यते, तथापि तत् तत्सूत्रं भाष्यकृता, न तु सूत्रकृता। प्रत्युत सूत्रकारस्य देवताविग्रहादिकं अभिमतं वार्तिकाभिमतं च इति याज्ञतिर्थेऽधिकरणे प्रपञ्चयिष्यते। कु. १।२।४।४३ पृ. ४७.

* देवताविधिः 'तद्धितेन चतुर्थ्या वा मन्त्रवर्णेन चेष्यते। देवतासंगतिस्तत्र दुर्बलं तु परंपरम्॥' वा. २।२।९।२१ पृ. ५११. * देवताविधिः तद्धित–चतुर्थी–मन्त्रवर्ण–द्वितीया–अर्थवादभेदात् पञ्चविधः। बाल. पृ. २२. * देवताविधिः प्रयाजेषु मान्त्रवर्णिकः। टुप्. ९।१।१०।६०.

* देवताविधिसरूपः अर्थवादः 'विष्णुरूपाद्य यज्ञोऽजामित्वाय, प्रजापतिरूपांशु यष्टव्योऽजामित्वाय, अग्नीषोमावुपांशु यष्टव्यावजामित्वाय' इति। बाल. पृ. ५१.

* देवताव्यापारे शाखाकृते उपक्रम्य अपरिसमाप्यमाने शिष्टनिर्णयम्। भा. ६।२।४।१६.

* देवताशब्दस्य विधिगतस्यैव त्यागादौ उच्चारणम्। विधिशब्दाधिकरणम्। भा. १०।४।१९।२३–२४.

* देवताश्रवणं प्रहरणे न यागे। प्रहरणं तु यागं निर्वर्तयति, न तु तथा यागं प्रति सादृश्यं प्रमाणमस्ति। कथम्? करणत्वेन देवताः संयुक्ताः, ता यागमभिलषन्ति। यागोऽपि देवताभिलाषी। तयोः संबन्धोऽर्थाद् भविष्यति। यागोऽपि द्रव्यं गृह्णन् तदाश्रितां देवतां गृह्णाति। टुप्. ८।३।३।१५.

* 'देवतासंबन्धाभावात् आलभतिर्न यागवचनः। दृष्टार्थत्वाच्च यस्य आलभ्यमानो गां प्रस्तावयिष्यति' इति न्यायः 'विशये प्रायदर्शनात्' (२।३।७।१६–१७) इत्यधिकरणसिद्धान्तबीजम्। के.

* देवतासंस्कारार्थः उत्तमः प्रयाजः। भा. १०।१।७।१४–१९, * देवतासंस्कारार्थः पशुपुरोडाशः। ३।६।७।२६, १०।१।९।२८–२९, १२।२।२।१९, * देवतासंस्कारार्थाः शान्याऽनुवाक्याः। १०।४।२०।३९–४२.

* देवतासमर्पकत्वं वाक्यशेषस्य, उपक्रमस्य नैराकाङ्क्ष्यात् निराकृतम् 'संयुक्तस्त्वर्थशब्देन॰' इत्यधिकरणे (४।३।७।१८)। पराक्रमः. ४४।२.

* देवतासाधकं विग्रहादिपञ्चकं नाम। विग्रहः, हविःस्वीकारः, तद्भोजनम्, तृप्तिः, प्रसादश्चेति। तत्र विग्रहः 'सहस्राक्षो गोत्रभिद् वज्रबाहुः', हविःस्वीकारः 'अग्निरिदं हविरजुषत', हविर्भोजनम् 'अद्धीदिन्द्र प्रस्थितेमा हवींषि', तृप्तिप्रसादौ 'तृप्त एवैनमिन्द्रः प्रजया पशुभिस्तर्पयति'। एतेषां विग्रहादीनां प्रतिपादकयोर्मन्त्रार्थवादयोः स्वार्थे तात्पर्याभावात्, देवानां वस्तुसामर्थ्यात् फलप्रदत्वं न सिध्यतीति मीमांसकसिद्धान्तः। वि. ९।१।४.

* देवतासामान्यं बलीयो हविःसामान्यात्। कुतः? सर्वोऽयं प्रयासो देवताऽऽराधनार्थ एव, सा अत्र प्रसन्ना फलं ददाति। एवं श्रूयते 'तृप्त एवैनमिन्द्रः प्रजया पशुभिस्तर्पयति' इति। यत्र इन्द्रस्य प्रसादनोपायः इति ज्ञातः पुनरपि इन्द्रे प्रसादयितव्ये स एवाश्रेयो भवति, तस्मात् देवतासामान्यं बलीय इति। अत्र ब्रूमः। स्यादेतदेवं यदि देवतातः फलं स्यात्। यागात्तु फलं 'स्वर्गकामो यजेत' इति श्रूयते। यत्तु 'तृप्त एवैनमिन्द्रः' इति, तत्रेदमुच्यते, गुणत्वेन देवताश्रुतिः। यागे गुणभूता देवता। तस्या दातृत्वे स्तुतिरुच्यते। यथा 'अमात्येन मे ग्रामो दत्तः, सेनापतिना मे ग्रामो दत्तः' इति। न च अमात्यः सेनापतिर्वा ग्रामस्य प्रभवति। राजैव प्रभवति। इतरस्मिन् गुणभूते स्तुत्या दातृत्ववादः। तस्मात् यथोक्तेन न्यायेन हविःसामान्यमेव बलीयः इति। भा. ८।१।१७।३४, * देवतासामान्यात् आग्रावैष्णवादौ अग्नीषोमीयपुरोडाशधर्माणां शुचिवत्यादिषु आग्नेयपुरोडाशधर्माणां चातिदेशः। ८।१।८।१–२.
* देवतासामान्यात् हविःसामान्यं बलवत्। त्यागरूपे कर्मणि हविः प्रधानम्, देवता तु गुणभूता। अतः

'ऐन्द्रमेकादशकपालं निर्वपेत्' इत्यादौ पुरोडाशधर्मातिदेशः, न ■ सामान्यधर्मातिदेशः। वि. ८।२।१७. • देवतासामान्यस्य उत्पत्तिसमयावयवस्य प्रयोगकाल्यावगतक्रमात् बलवत्त्वम्। संकर्ष. २।३।५.

• देवतास्वत्वं त्यागमात्रेण न च भवति। प्रतिग्रहेण हि स्वस्वामिसंबन्ध आपद्यते। न च परिगृहीतं देवतया इति किंचन प्रमाणमस्ति। भा. ३।३।१९।४४.

• देवदत्तस्य गुरुकुलम्। संबन्धिशब्दानां प्रतिसंबन्धिनमपेक्षमाणानामपि न सामर्थ्यविघातो भवति। रत्नाकर., पृ. ६४७.

• देवदत्तादिशब्दो द्रव्यवचनो न शक्तिं ब्रवीति। वा. ३।४।४।१३ पृ. ९११.

■ देवदत्तपुत्रन्यायः। पितृप्राधान्यविवक्षायामेवमुच्यते, मातृप्राधान्यविवक्षायां तु देवदत्तापुत्र इति। संग्रह:.

■ देवदत्तहननोद्यतहननन्यायः। यथा देवदत्तहननोद्यतस्य हनने तु देवदत्तस्य भवत्येवोन्मज्जनम्, तथा समानाश्रयत्र पूर्वसवर्णदीर्घेण न वृद्धेर्हननम्, किंतु हननोद्यतसजातीयस्य प्रवृत्तिमात्रम्, प्रवृत्त्यैव निषेधात्। साहस्री. १४.

■ देवदत्तहन्तृहननन्याय.। यथा देवदत्तस्य हन्तरि हते देवदत्तस्योन्मज्जनं न भवतीति, तथा अज्ञानबाधके ज्ञाने विनष्टे पुनरज्ञानोदयेन बन्धापत्तिर्न भवतीति। अयं न्यायः 'अचः परस्मिन् पूर्वविधौ' १।१।५७ इति सूत्रमहाभाष्येऽपि। साहस्री. २१.

■ देवदत्तापुत्रन्यायः। यथा नहि देवदत्ताया एव पुत्रः किन्तु देवदत्तस्यापि, मातुः प्राधान्यविवक्षायां देवदत्तापुत्र इत्युच्यते। यथा च दाक्षीपुत्रः पाणिनिः। अत एव यजुर्वेदे वंशकीर्तने स्त्रीप्राधान्येनैव निर्देशः। यथा 'अथ वंशः इदं वयं भारद्वाजीपुत्राद्भारद्वाजीपुत्रो वात्सीमाण्डवीपुत्राद्वात्सीमाण्डवीपुत्रः' इत्यादि (शत. १४।९।४)। साहस्री. २०.

■ देवदत्तास्थो गर्भो देवदत्ताग्रहणेन गृह्यते इति लोकन्यायः। मुक्तिः पृ. २९८.

• देवनस्य कृत्स्नराजसूयाङ्गता। वि. ४।४।२, • देवन–जय–शौनःशेपाख्यानानि अभिषेचनीयसंनिधौ पठितान्यपि न अभिषेचनीयाङ्गम्, किन्तु प्रकरणबलेन राजसूयाङ्गम्। ३।३।१०.

• देवसुवां हवींषि अष्टौ। १ अग्नये गृहपतये पुरोडाशमष्टाकपालं निर्वपति कृष्णानां व्रीहीणाम्, २ सोमाय वनस्पतये श्यामाकं चरुम्, ३ सवित्रे सत्यप्रसवाय पुरोडाशं द्वादशकपालमाशूनां व्रीहीणाम्, ४ रुद्राय पशुपतये गावीधुकं चरुम्, ५ बृहस्पतये वाचस्पतये नैवारं चरुम्, ६ इन्द्राय ज्येष्ठाय पुरोडाशमेकादशकपालं महाव्रीहीणाम्, ७ मित्राय सत्याय आम्बानां चरुम्, ८ वरुणाय धर्मपतये यवमयं चरुम्। [ आशुव्रीहयः अल्पैः दिनैः पच्यमानाः, महाव्रीहयः स्थूलबीजम्, आम्बाः– आबेओहोर (भाषायां) ] एतानि च अग्नीषोमीयस्य पशुपुरोडाशतन्त्रमध्ये विहितानि इति पुरोडाशधर्मैः प्रसङ्गसिद्धानि, हविषा स्वधर्मानुष्ठानं न कर्तव्यम्। इदं अनुनिर्वाप्याधिकरणम्। के. १२।१।२।१–८. • देवसुवां हविःषु अनुनिर्वाप्येषु अग्नीषोमीयपशुपुरोडाशतन्त्रेण प्रसङ्गसिद्धिः। अनुनिर्वाप्याधिकरणम्। भा. १२।१।२।१.

• देविकाहवींषि अनुवन्ध्यामनुनिर्वाप्याणि। भा. १२।१।२।१. • देविकाहवींषि पञ्च। १ धात्रे पुरोडाशं द्वादशकपालम्, २ अनुमत्यै चरुम्, ३ राकायै चरुम्, ४ सिनीवाल्यै चरुम्, ५ कुह्वै चरुं इति। के. • देविकाहविःषु अनुनिर्वाप्येषु अनुबन्ध्यातन्त्रेणैव प्रसङ्गः, न तु नैरन्तर्यम्। भा. १२।१।२।१–८.

• देविकाहविरधिकरणम्। अनुनिर्वाप्याधिकरणं द्रष्टव्यम्। भा. १२।१।२।१–८.

• देशः अनुवादेन.। तस्य कर्मभेदके ये उदाहरणानि 'दक्षिणेन वीरेण शरव्यायाः आग्नेयेनाष्टाकपालेन याम्या पशुमभ्येयात्' इत्यादीनि यद्यपि अत्र अतिरात्रादिवदेव यज्ञमध्ये तथापि प्राक् यज्ञनुमानात् तद्धितान्तरश्रुतवाक्यपरिसमाप्तेः वाक्यान्तरस्थानपेक्षणात् कर्मान्तरत्वम्। भा. २।३।१२।२५. • देश एव एकाभेदकेनां प्रमाणत्वे

दर्शपूर्णमासचातुर्मास्यादौ । भा. ११।२।१।१–२,४–७. ● देशः 'एककालाभिसंयोगाद्विधानामपि कर्मणाम् । समुदायार्पणं शक्यमेकदेशस्य चाश्वत् ॥' यथैव हि एकदेशावस्थितान् वृक्षानालोच्य वनमिति समुदायबुद्धिर्भवति, एवं एककालप्रयुक्तकर्मसमुदायनामधेयबुद्धिः । वा. २।२।३ पृ. ४८०. ● देशः कालः फलं निमित्तं संस्कार्यं इत्यनुपादेयपञ्चकम् । बाल. पृ. ८८. ● देशः दर्शपूर्णमासयोः पुनः प्रयोगे स वा अन्यो वा अनियमः । भा. ११।३।१२।३२. ● देशः निर्वापस्य 'अपरेण गार्हपत्यं मार्गीयं अनोऽवस्थितं भवति, तस्य दक्षिणं चक्रमाक्रम्य अनसोऽधिनिर्वपति' । १२।१।७।१५. ● देशः पात्राणि ऋत्विजश्च एकस्मिन् प्रयोगे ये उपयुक्ताः, प्रयोगान्तरे ते वा अन्ये वा इच्छया प्रयोक्तव्याः, उपयुक्ता अपि यातयामा न भवन्ति । 'कुशा दर्भादयो मन्त्रा ब्राह्मणाश्च बहुश्रुताः । न ते निर्माल्यतां यान्ति विनियोज्याः पुनःपुनः ॥' भाट्ट. ११।३।१२. ● देशः 'समे दर्शपूर्णमासाभ्यां यजेत' इति एकस्मिन् प्रयोगे तन्त्रम् । वि. ११।२।१. ● देशस्य नियमविधिः चातुर्मास्येषु वैश्वदेवपर्वणि 'प्राचीनप्रवणे वैश्वदेवेन यजेत' इति । ४।२।९.

● देशान्वयनिमित्तेन साहित्येन कालान्वयसाहित्यानयगतिः । सु. पृ. ७३४.

● देशादिसंबन्धं विधातुम् 'समे यजेत' इत्यादिः दर्शादीनां पुनर्विधिः कर्मानुवादः, इति न कर्मभेदमावहति । वि. २।३।११.

● देशकर्तृविषये अनियमः कर्मसु भिन्नेषु । भा. ११।३।१२।१३.

● देशफलयोः सिद्धवदाकारस्योद्देश्यत्वेऽपि स्वारसिकप्रवृत्तिविषयत्वाऽऽपादकप्रयोजनाकारत्वेन उद्देश्यत्वाभावात् स्वरूपतश्च सिद्धरूपस्य निर्देशोऽपि कर्माङ्गत्वेन अप्रसक्तत्वात् विधेयत्वोपपत्तिः । सु. पृ ९५८.

● देशकालकर्तारः तन्त्रं अङ्गेषु दर्शपूर्णमासयोः । भा. ११।२।२।३,८–११. ● देशकालकर्तारः तन्त्रं प्रधानेषु दर्शपूर्णमासादिषु । ११।२।१।१–२,४–७.

● देशकालकर्तॄणां नियमविधिः 'दर्शपूर्णमासयोर्यज्ञक्रतोश्चत्वार ऋत्विजः' इति । ४।२।९।२३–२४. ● देशकालकर्तॄणां प्रयोगरूपत्वम्, न तु आग्नेयादिविधिशेषत्वम् । वि. ११।२।२.

● देशकालकर्त्रादीनामैक्ये न्यायेन प्राप्ता तन्त्रता । व्यवहारमयूखः. पृ. ५९.

● देशकालकर्त्रैकत्वं अङ्गानां प्रधानैः सह । भा. ११।२।२।३,८–१२.

● देशकालकर्तृभेदोऽपि अङ्गप्रधानयोर्यथानेन भवति । भा. ११।३।१।१.

● देशकालपरिमाणमपि लोक-ज्योति.शास्त्रव्यवहारसिद्धयर्थं यथाशास्त्रगणितप्रदर्शनपूर्वकम् । वा. १।३।१।२ पृ. १६७.

● 'देशकालवयोऽवस्थाबुद्धिशक्त्यनुरूपतः । धर्मोपदेशो भैषज्यं वक्तव्यं धर्मपारगैः ॥' इति न्यायः । स्पष्टोऽर्थः । साहस्री. ५३२.

● देशवत्तुल्यानि दर्शपूर्णमासयोः अङ्गानि प्रधानानि च । 'समे दर्शपूर्णमासाभ्यां यजेत' इति । प्रधानैः सह अङ्गानां एकदेशकालकर्तृकत्वं वक्ष्यति, 'अङ्गानि तु विधानत्वात्' (११।२।८) इत्यत्र । भा. ११।१।१०।५६. ● देशतः वाचनिकी व्यवस्था यथा श्रौते 'बकगभपारोपु उत्तरे विहारे अध्वर्युरग्नी हवींष्यासादयति, मारुतीमेव प्रतिप्रस्थाता दक्षिणस्मिन्' इति । स्मार्तेऽपि 'नर्मदोत्तरभागे तु कर्तव्यं विन्ध्यपर्वते । कृष्णीरसंस्थिते भावानुनाकुर्यात् दक्षिणे ॥' इति बृहस्पतिः । बाल. पृ. १८. ● देशतो व्यवस्थारूपः प्रतिषेधो यथा 'पृष्णपत्रादिकं पात्रं नाङ्गीकुर्वन्ति केचन । केऽपीच्छन्ति न तेषामर्वाक्तो विन्ध्यस्य दक्षिणे ॥' इति सिद्धान्तमण्डने । बाल. पृ. ३४.

● देशपरिमाणम् । 'तिर्यग् यवोदराण्यष्टावूर्ध्वा वा व्रीहयस्त्रयः । प्रमाणमङ्गुलस्योक्तं वितस्तिर्द्वादशाङ्गुला ॥ हस्तो वितस्तिद्वितयं दण्डो हस्तचतुष्टयम् । तत्सहस्रद्वयं क्रोशो योजनं तच्चतुष्टयम् ॥' सु. पृ. १२८.

¶ देशपात्रादीनामुपयुक्तानां प्रयोगान्तरे उपादानेऽपि न दोषः ॥

लौकिकेषु यथाकामी, संस्कारार्थालोपात् । ११।३।१२।३५ ॥

भाष्यम्— इह लौकिकार्था उदाहरणम् । यथा देशः 'समे दर्शपूर्णमासाभ्यां यजेत'। कर्तारः 'दर्शपूर्णमासयोर्यज्ञक्रतोः चत्वार ऋत्विजः' । स्रुगादीनि च पात्राणि । तेषु विचारः । किं प्रतिप्रयोगमन्यान्युपादेयानि, उत तानि यान्यपि तान्युपादाय प्रयोग इति । किं प्राप्तम् ? अन्यान्यन्यानि उपादेयानीति । किं कारणम् ? निरिष्टकेन पुनः क्रियां शिष्टा नाचरन्तीति । एवं प्राप्ते, ब्रूमः । लौकिकेषु यथाकामी, तानि यान्यन्यानि वा, अनियमः । कुतः ? संस्कारानर्थलोपात् । न कश्चित्पूर्वस्मिन् प्रयोगे कर्मादीनां संस्कारः कृतः, योऽन्योपादाने लुप्येत । आध्वर्यवलोपः । अन्यैरपि हि शक्यते प्रयोगः कर्तुम् । तस्मादनियमः । अथ यदुक्तं निरिष्टकेन शिष्टा याग नाचरन्तीति । एतैराचरन्तीति । तस्मान्नैव दोषः । ननु 'ऋत्विगाचार्यौ नातिचरितव्यौ' इति स्मरन्तीति । पुरुषधर्मोऽसौ, न कर्मधर्मः । कर्मसंयोगाभावात् प्रकरणाभावाच्च । देशेषु कर्तृषु च पर्यवसितम् । पात्रेषूक्ता कथा करिष्यते ।

सोम— ब्राह्मणभेदवत् देशादीनामपि भेदः इत्युभिधेः संगतिः । ( निरिष्टकेन इति भाष्यादौ— ) नितरां इष्टं अनेन इति निरिष्टम्, निरिष्टमेव निरिष्टकं यस्मिन् कर्मणि उपयुक्तम् । सूत्रार्थस्तु— लौकिकेषु देशादिषु पूर्वप्रयोगकृतस्य प्रयोगान्तरे उपजीव्यस्य संस्कारस्य अभावे अन्योपादानेऽपि संस्कारलोपाभावात् अन्यैरपि प्रयोगनिर्वृत्त्या अर्थलोपाभावाच्च यथाकामी इति ।

वि— 'देशपात्रर्त्विजोऽन्यस्मिन् प्रयोगेऽन्य उतेच्छिकाः ।, मुक्तपर्णवत् तेऽन्ये, वासोवत् ते स्वैच्छिकाः ॥'

भाट्ट— समादिदेशानामध्वर्य्वादिकर्तृत्विजां स्रुगादिपात्राणां च प्रतिकर्म प्रतिप्रयोगं च भेद एव । इतरथा निरिष्टकोपभोगे शिष्टाचारविरोधात् । इति प्राप्ते, 'कुशा दर्व्यादयो मन्त्रा ब्राह्मणाश्च बहुश्रुताः । न ते निर्माल्यतां यान्ति विनियोज्याः पुनः पुनः ॥' इतिवचनेन अत्र विनियुक्तविनियोगेऽपि शिष्टाचारविरोधाभावादनियमः । न च 'ऋत्विगाचार्यौ नातिचरितव्यौ' इति वचनेनातिचारनिषेधात् ते एवेति नियमः शङ्क्यः । अस्याप्रकरणस्थतया पुरुषार्थरूपस्य क्रत्वर्थत्वे प्रमाणाभावेन अन्यकरणे क्रतुवैगुण्यानापत्तेः । तस्मान्यत्र व्यासक्तत्वे कोपोत्पादकत्यागरूपातिचारार्थत्वेन तदर्थनिषेधस्याप्यतारचेश्च । न चैवमेकत्वपक्षे व्यक्तेरेकत्वेन आतिथ्याबर्हिःप्रोक्षणन्यायेन कृतकृत्यैरेव वरणसंमार्जनादिसंस्कारैः सर्वकर्मसु कार्यसिद्धेः प्रतिप्रयोगं वरणाद्यननुष्ठानापत्तिः, व्यक्त्यैकत्वस्य नैयत्याभावेन आतिथ्याबर्हिःप्रोक्षणन्यायाभावात् । अग्निसंमार्गवत् व्यक्त्यैकत्वनेयत्येऽपि वरणादेः प्रयोगान्तरे प्रसङ्गसिद्ध्यनापत्तेश्च । अवसितमृत्विक्षु देशे च । पात्रेषु तु चिन्त्यते ।

मण्डन— 'देशः कर्ताऽन्यः स च ऽन्यप्रयोगे ।'

शंकर— 'ऋत्विग्देशमिदाऽपि च ।' ऐच्छिकी ।

¶ देशपृथक्त्वान्मन्त्रोऽभ्यावर्तेत । १२।१।२०।४५॥

आतिथ्याया उपसत्सु अग्नीषोमीये च बर्हिः साधारणम् । तस्य 'ऊर्णाम्रदसं त्वा स्तृणामि' इति स्तरणस्य मन्त्रः अभ्यावर्तेत पृथगेव प्रयुज्यते । देशपृथक्त्वात् । आतिथ्यायाः प्राग्वंशः उपसदां च, अग्नीषोमीयस्य [illegible] उत्तरवेदिसमीपः । तस्मात् आवृत्तिः स्तरणमन्त्रस्य इति सिद्धान्तः । के.

• देशवद्गुपांशुत्वे (देशवद इति च पाठः) इति नवमाधिकरणन्यायेन ( १।१।६।२० ) प्रकृतस्य स्वरस्य यज्ञभागधर्मतया स्थितत्वात् यज्ञभागपतितस्य अपूर्वस्यापि अङ्गस्य प्राकृतस्वरस्वधर्मत्वमोपपत्तेः । सु. पृ. ११८२.

• देशभाषाऽपभ्रंशपदानि हि विप्लुतिमूपितानि न शक्यन्ते विवेक्तुम् । या. ११३११११० पृ. २२६.

• देशलक्षणा भवति यथा 'अग्नौ तिष्ठति' 'कूपे तिष्ठति' इति ( अग्निदेशे कूपदेशे इत्यर्थः ) । भा. ७।३।१।२२, • देशलक्षणा ( 'रथो मे कण्डूयति,

सिक्तो मे स्पन्दते ' इति रागाभावे निरूपणाभावे च तद्देशलक्षणया भवन्ति वक्तारः। ८।४।५।२८.

● देशविधिरयं प्रयोगविधिरेव ' अप्सु अवभृथेन चरन्ति ' इति। भाट्ट. ११।१।७. ● देशविधिः दर्शपूर्णमासादौ नियमार्थः। कर्तृदेशकालनियमः इत्यत्र द्रष्टव्यम्। वि. ४।२।९.

● देशविधिस्वरूपः अर्थवादः ' षट्त्रिंशत्प्रक्रमा प्राची त्रिंशज्जघनेन चतुर्विंशतिः पुरस्तात् ' इति विधौ वाक्यशेषः, ' इयति शक्ष्यामहे अस्यां कर्तुम् ' इति। बाल. पृ. ५७.

● देशविशेषो लक्ष्यते ' अर्धमन्तर्वेदि मिनोति, अर्धं बहिर्वेदि ' इत्यनेन। व्यवहारमयूखः पृ. ५१.

● देशसंनिधेः कर्मभेदकत्वं नास्ति। भा. २।३।१३।२६.

● देशसंबद्धमुपांशुत्वम् ( देशबद्ध--इत्यन्यत्र पाठः) इत्यत्र ' स्वरा वा एषा यज्ञस्य तस्मात् यत्किञ्चित् प्राचीनमग्नीषोमीयात् तेनोपांशु चरन्ति ' इति उदाहृत्य यज्ञभागधर्मो वा एतदुपांशुत्वं पदार्थधर्मो वा इति संदिग्धे, यज्ञस्य फलवत्त्वेन धर्मप्रयुक्त्याकाङ्क्षत्वात् यज्ञस्य यत् प्राचीनं इति व्यवहितेनापि यज्ञशब्देन प्राचीनशब्दस्य अन्वयप्रतीतेः श्रुत्या च प्राग्देशवाचिनः प्राचीनशब्दस्य लक्षणया तद्देशपदार्थपरत्वायोगात् यज्ञभागधर्मत्वं पूर्वपक्षयित्वा प्राचीनशब्दस्य वीप्सा किञ्चिच्छब्दसमभिव्याहृतयच्छब्दान्वयात् वीप्सायाश्च बहुविषयत्वेन एकस्मिन् देशे अनुपपत्तेः लक्षणया अग्नीषोमीयशब्देन पदार्थपरत्वस्यैव न्याय्यत्वात् पदार्थधर्मता इति सिद्धान्तितम्। सु. पृ. ७३०.

☒ देशसंबद्धमुपांशुत्वं तेषां स्याच्छ्रुतिनिर्देशात्, तस्य च तत्र भावात्। ३।३।६।२०॥

ज्योतिष्टोमे ' स्वरा वा एषा यज्ञस्य तस्माद् यत्किञ्चित् प्राचीनमग्नीषोमीयात् तेन उपांशु चरन्ति ' इति श्रूयते। अग्नीषोमीयात् पशोः प्राचीनः योऽशः यज्ञस्य, स वै स्वरा छद्मगतिः शनैः पदविन्यासः शकुनिरिवास्येव। तस्मात् तदानीं उपांशुना स्वरेण मन्त्रा उच्चारणीयाः इति श्रुत्यर्थः। अत्र किं अग्नीषोमीयात् प्राक्तनानि यानि कर्माणि, तत्प्रयुक्तं उपांशुत्वम्, उत परमापूर्वप्रयुक्तं इति विचारे सिद्धान्तमाह। उपांशुत्वं देशसंबद्धं श्रुतं अग्नीषोमीयात् पशोः यत् प्राचीनं कर्मजातम्। स उपांशुत्वस्य देशः। तेन तद् संबद्धं श्रुतम्। अग्नीषोमीयात् इति पञ्चमीश्रुत्या येषां कर्मणां निर्देशः, तेषां कर्मणां पञ्चमीश्रुतिनिर्देशात् उपांशुत्वं धर्मः स्यात्। अथवा ' यत्किञ्चित् प्राचीनमग्नीषोमीयात् ' इति श्रुत वाक्यमेव श्रुतिशब्देन गम्यते। श्रुतिनिर्देशात् तेन वाक्येन निर्देशात्। अथवा लक्षणया अग्नीषोमीयप्राग्भाविपदार्थापूर्वे श्रुतिशब्देन प्राप्तम्। तादृशमपूर्वं निर्दिश्य उद्दिश्य उपांशुत्वं विधीयमानं तदर्थं स्यात्। तस्य च अवान्तरापूर्वस्य च तत्र तेषु अग्नीषोमीयप्राग्भाविपदार्थेषु भावात् सत्त्वात्। तस्मात् अग्नीषोमीयपशुप्राक्तनकर्मापूर्वप्रयुक्तं उपांशुत्वं इति सिद्धान्तः।

यज्ञस्य वा, तत्संयोगात्। २१॥

उपांशुत्वं अग्नीषोमपशुप्राक्तनकर्मप्रयुक्तं इति सिद्धान्तरक्षण्यावृत्त्यर्थः वाशब्दः। उपांशुत्वं यज्ञस्य। यज्ञजन्यपरमापूर्वप्रयुक्तमुपांशुत्वम्। तत्संयोगात् ' स्वरा वा एषा यज्ञस्य तस्मात् यत्किञ्चित् प्राचीनमग्नीषोमीयात् तेनोपांशु चरन्ति ' इत्यत्र यज्ञस्य यत् प्राचीनं इति यज्ञपदस्य तेन प्राचीनपदेन यज्ञप्राग्भागवाचिना संयोगात् संबन्धात् भागद्वारा भागिनो यज्ञस्यैव उपांशुत्वप्रयोजकत्वस्य युक्तत्वात्। प्राचीनपदं प्राचीन यज्ञभागं श्रुत्या वदति प्राचीनभागगतकर्माणि तु लक्षणया। श्रुतिलक्षणाविशये च श्रुतिर्ज्यायसी न लक्षणा। तस्मात् परमापूर्वप्रयुक्तमुपांशुत्वं इति पूर्वः पक्षः।

अनुवादश्च तदर्थवत्। २२॥

' स्वरा वा एषा यज्ञस्य तस्मात् यत्किञ्चित् प्राचीनमग्नीषोमीयात् तेनोपांशु चरन्ति ' इत्यत्र ' यज्ञस्य स्वरा एषा ' इत्यन्वयस्वीकारे यद्यपि उपांशुत्वं अग्नीषोमीयप्राग्भागवर्तिपदार्थानामिति ज्ञातुं शक्यम्, तथापि न तद्देशगतानां पदार्थानामर्थेन क्रियते, किन्तु तद्देशाभिमतस्य यज्ञस्यार्थेन गम्यते। ' स्वरा वा एषा यज्ञस्य यत् प्राचीनमग्नीषोमीयात् ' इति हि अनुवादः अनुवादरूपः अर्थवादः। तच्च अर्थवादवाक्यं अर्थवत् परमापूर्वप्रयोजक-

प्रयोगेन सफलम् । तस्मात् परमापूर्वप्रयुक्तमेव उपांशुत्वं इति पूर्वः पक्षः ।

इतः परं ( २३–२५ ) सूत्रद्वय प्रकृताधिकरणशेषत्वेन भाष्यादौ व्याख्यातमपि अनतिसाधिम्नीयत्वेन अधिकरणान्तरत्वेनापि व्याख्यातम् । ततोऽस्माभिः अधिकरणान्तरत्वेनैव व्याख्यायते प्रदेशान्तरे इति ध्येयम् ।

तद्देशानां वा, संघातस्याचोदितत्वात् । २५ ॥

वाशब्दात् पूर्वपक्षस्य व्यावृत्तिः । उपांशु च न परमापूर्वप्रयुक्तम्, किन्तु तद्देशानाम् । यः अग्नीषोमीयात् प्राक्तनः देशः येषां कर्मणां ते तद्देशाः, तेषां तद्देशानां कर्मणां उपांशुत्वं स्यात् प्राचीनपदार्थप्रयुक्तमुपांशुत्वं स्यात्, न महयागसंघातप्रयुक्तम्, न महयागसंघातजन्यपरमापूर्वप्रयुक्तमित्यर्थः । संघातस्य महयागसंघातस्य यो भागः प्राचीनः, तस्य उपांशुत्वसंबन्धेन अचोदितत्वात् चोदनाऽभावात् । 'यावत्या वा एषा यज्ञस्य तस्मात् यत्किञ्चित् प्राचीनमग्नीषोमीयात्' इति वाक्ये यज्ञस्य यत् प्राचीनं इति सान्वयः शब्दः, यज्ञस्येतिपदेन व्यवधानात् । तस्मात् परमापूर्वप्रयुक्तमुपांशुत्वम्, किन्तु यानि अग्नीषोमीयात् प्राक्तनानि दीक्षणीयादिप्रधानवर्जं अङ्गानि, तदपूर्वप्रयुक्तं इति सिद्धान्तः । के.

* देशप्रयोगनिमित्तानामपि भाषाणां देशाभिलापस्य तदाख्या न विरुद्धा । यत एषा योगाख्या योगमात्रापेक्षा न भूतवर्तमानभविष्यत्संबन्धापेक्षा । यतो दृश्यते मथुरामभिप्रस्थितो माथुर इति, मथुरायां वसन्, मथुराया निर्गतश्च । भा. ११३।७।२१.

* देशसंस्कारकं आतिथ्याबर्हिषः अग्नीषोमीयार्थे उत्तरवेदिनिर्मीणे कारणम् । भा. १२।२।२०।४४.

* देशसामान्यम् ( क्रमः ) एकदेशत्वात्स्य इति, बुद्धिविपरिवृत्त्याख्यसंनिधिरूपः क्रमः प्रतीयते । सु. पृ. ११९७. * देशसामान्यात् दैवतसामान्यं बलीयः, तेन शुचिदेवत्ये आग्नेयस्य विध्यन्तः, आग्नावैष्णवे च अग्नीषोमीयस्य । भा ८।३।१।२. * 'तत्र क्रमो द्विविधो देशसामान्यलक्षणः । पाठानुष्ठानसादेश्याद् विनियोगस्य कारणम् ॥' ( पाठसादेश्य अनुष्ठानसादेश्यं चेति ) । वा. ३।३।५।१२.

* देशीयभाषासु काव्ये चतुर्विंशत्यक्षरसंख्यया गायत्रीछन्दस्कत्वं भवति । वि. ८।३।६.

* देह. महाभौतिकः । 'महाभौतिकदेहस्था यथाऽऽत्मानः सचेतनाः । कश्चिदर्थं विवक्षन्ति न विवक्षन्ति चापरम् ॥' वा. ३।१।७।१२ पृ. ७०२, * 'जरायुजादयो देहा दृष्टा भुवि चतुर्विधाः ।' ३।१।७।१३ पृ. ७०२. * देहानां तैजसानामपि 'एवं यः सर्वभूतानि ब्राह्मणो नित्यमर्चति । स गच्छति परं स्थानं तेजोमूर्तिः पथर्जुना ॥' इति मानवाभिधानेन चेतनाधिष्ठितत्वं ज्ञायते । ( यथा ऋजुना देवयानेन ) । सु पृ. २००९.

¶ देहाधोमुखत्वन्यायः । यथा ज्ञानानुपाधिकृतस्य स्वदेहे अधोमुखत्वादेस्तदपगमे अपगमः । साहस्री. ३५१.

¶ देहकेशन्यायः । चेतनत्वेन प्रसिद्धेभ्यः पुरुषादिभ्यः विलक्षणानां केशनखादीनामुत्पत्तिर्दृश्यते, तथा चेतनात् ब्रह्मणः अचेतनस्यापि जगतः उत्पत्तिः स्यात् । इदं २।१।५।६ ब्रह्मसूत्रशांकरभाष्ये स्पष्टमुक्तम् । साहस्री. ८९१.

* 'देहभेदप्रकाराश्च कर्मशक्तिवशानुगाः । प्रकृत्यंशभेदनिष्पाद्यस्तत्वेऽप्यभागत्वात् ॥ पार्थिवास्तत्र प्रायः लोकेऽस्मिन्नवनुमहात् । जरायुजादयो देहा दृष्टा भुवि चतुर्विधाः ॥ भूतान्तरानुषङ्गेन तोयेनैव विनिर्मिताः । श्रूयन्ते वारुणे लोके देहाः स्वच्छातिलक्षणाः ॥ अन्तरिक्षे च बहवः प्राणिनो वातनिर्मितैः । भ्रमन्ति वपुभिः सूक्ष्मैर्देहैर्भूम्यावनुग्रहात् ॥ स्वर्लोके तैजसास्तथा देहाः शुक्रसमाश्रिताः । आप्याय्यन्ते विशीर्णेन मानवीयेन तेजसा ॥ तथा भौमदीप्तोऽपि परमात्मा श्रुतौ श्रुतः । इज्यते सर्वदा नित्यं यः स्वं ब्रह्मेति चोदितः ॥ स्पर्शशब्दादयो येऽपि महाभूतगुणाः स्थिताः । प्रत्येकमात्मनां तेऽपि देहाः संभोगहेतवः ॥ छन्दतोऽति यथेदं तत्र वेदास्त्वमुच्यते । तदप्यधिष्ठितं सर्वमेकेन परमात्मना ॥ तथर्ग्वेदादयो देहाः प्रोक्ता येऽपि पृथक्पृथक् । भोग्या येनाऽऽत्मनां तेऽपि चैतन्यानुगताः सदा ॥' वा. ३।१।७।१३ पृ. ७०२–०३.

■ देहलीदीपन्याय. । अयं न्यायो यथा शाला-द्वयमध्यवर्तिदेहलीनिहितदीपः शालाद्वयं स्वकिरणमण्डितं करोतीति दृष्टान्तभूतः । किंच 'एकाच उपदेशेऽनुदात्तात्' इति सूत्रस्थोपदेशपदार्थस्य एकाच्पदार्थे अनुदात्तपदार्थे चान्वय इति । अयं च न्यायः अन्वयविषये एव प्राय उदाह्रियते वृद्धैरिति बोध्यम् । साहस्री. २४६.

● 'अभयं सर्वभूतेभ्यो मत्तः' इतिमन्त्रस्य 'मत्तः' इति पदं देहलीदीपन्यायेन हृदये निधाय 'मत्तः सर्वं प्रवर्तते' यतः तस्मात् इति हेतुमाह । आरुणेय्युपनिषत्-शंकरानन्दः, ● 'संपश्यन् ब्रह्म परमं याति नान्येन हेतुना ।' न याति इति देहलीदीपन्यायेन संबध्यते ( संपश्यन् याति, नान्येन न याति इति यातिपदस्योभयत्रान्वयः ) । शंकरानन्दः कै. उ. १।१०.

● दैक्षः इत्यग्नीषोमीयः ( पशुः ) उच्यते दीक्षासंबन्धात् । भा. ८।१।६।१३. ● दैक्षः पशुः यो हि प्रकृतिभूतः पशूनाम्, स दर्शपूर्णमासविकारो भवति । इतरे तु प्राणिद्रव्यकत्वसामान्यात् तद्विकाराः । वा. ३।६।७।१९.

※ दैक्षस्य चेतरेषु । ८।१।६।१३॥

दीक्षाया भवः दैक्षः अग्नीषोमीयः पशुः । तस्य विध्यन्तः इतरेषु पशुषु सवनीये निरूढे सौम्यादौ च । आलभतिचोदनासामान्यात् पशुत्वचोदनासामान्याच्च । तस्मात् पशूनां प्रकृतिः अग्नीषोमीयः पशुः । के.

● दैक्षे भवति प्रतिप्रस्थातुः उपाकरणमेव, न सर्वेषाम् । सकर्प. ३।८।१. ● दैक्षे पशौ उपभृद्द्वयं शुक्लावसूपदाज्यधारणार्थं आर्धं एककाले एव च ग्रहणम् । न तु प्रयाजान्तसमानयनोत्तर तस्यामेव उपभृति पृषदाज्यग्रहणम् । भाट्ट. ५।२।८. ● दैक्षे पशौ ( अग्नीषोमीये ) श्रुतं पशोः शामित्रदेशो नयनकाले वपाऽऽनयनकाले च यत् उल्मुकस्य नयनं प्रत्याहरणं च, तत् वाजपेये प्राजापत्यानां ऋतुपशूनां च तन्त्रम्, तस्य अश्रणार्थत्वात् । संकर्प. १।१।१९. ● दैक्षे पशौ स्वरुः अञ्जनमोक्षणादीनां ■ प्रयोजकः । भाट्ट. ४।२।१. ● दैक्षे हृदयाद्यभिघारणार्थं प्रयाजशेषधारणं तस्याञ्च न कर्तव्यम् । वि. ४।१।१४.

● दैक्षानुबन्ध्यक्रमविचारे आदौ दैक्षस्य तदुत्तरमनुबन्ध्यस्य प्रकृतिवदपौर्वापर्यस्यैव नियामकान्तराभावे नियामकत्वाङ्गीकारात् । साद्यस्के सह पश्वालम्भे सवनीयोत्तरम् । के. ( ५।१।६।१३ वर्णकम् २ भा. )

● दैक्षादिनाम्ये पशोर्विनष्टत्वेन साक्षात् देवताऽन्वयायोगात् अगत्या सापेक्षतद्धिताङ्गीकारेण प्रदेयप्रकृतित्वोपपत्तिः । सु. पृ. १५३७.

※ दैक्षन्यायः । अग्नीषोमीयस्य पशोः धर्माः सवनीयादिषु अतिदेष्टव्याः ॥

दैक्षस्य चेतरेषु । ८।१।६।१३॥

भाष्यम्— ■ पशुबन्धा उदाहरणम् । सवनीयो निरूढः पशुः, सौम्यादयश्च । तेषु किं दार्शपौर्णमासिको विध्यन्तः, उत दैक्षस्येति । दैक्ष इत्यग्नीषोमीय उच्यते, दीक्षासंबन्धात् । किं प्राप्तम् ? यथोक्तेन न्यायेन ( प्रयाजानुयाजाघारादिलिङ्गदर्शनरूपेण ) दार्शपौर्णमासिक इति । तथा प्राप्ते, उच्यते । दैक्षस्य च इतरेषु पशुषु सवनीयादिषु अग्नीषोमीयस्य विध्यन्तः । आलभतिचोदनासामान्यात् पशुत्वचोदनासामान्याच्च । तथ दर्शयति 'वपया प्रातःसवने चरन्ति, पुरोडाशेन माध्यंदिने, अङ्गैस्तृतीयसवने' इति । वपापुरोडाशाङ्गप्रचारं दर्शयति । भेदेन च तथा कश्चित् 'औदुम्बरो यूपो भवति' इति यूपं दर्शयति । तस्मात् अग्नीषोमीयः पशूनां प्रकृतिः ।

सोम— पूर्वेण न्यायेन सवनीयादिषु वैदिकविध्यन्तप्राप्तेः संगतिपूर्वपक्षौ ।

वि— 'सवनीयादिके दार्शो दैक्षो वा, प्रकृतिस्ततः । आद्यो, ऽन्त्यो लिङ्गतोऽन्यत्र विकृतिः प्रकृतिर्भवेत् ॥'

भाट्ट— अन्येषु तु पशुषु सवनीयादिषु दैक्षस्यातिदेशः, आलभतिचोदनाकत्वपशुद्रव्यकत्वाद्यधिकतरसादृश्यात् यूपाद्यधिकधर्मलाभाच्च । अत एव 'वपया प्रातःसवने चरन्ति' 'औदुम्बरो यूपः' इत्यादि लिङ्गम् । ८।१।२.

मण्डन— 'दैक्षस्य चान्ये पशवो विकाराः ।'

शंकर— 'दैक्षात्त्वान्यपशुव्ययम्' अयं विध्यन्तः । ७.

● सवनीयादिष्वपि साङ्गं प्रयोगं त्रेधा विभज्य मन्त्रानुधारणाना दैक्षन्यायेन वचितत्वात् तदतिक्रमेण

अनूबन्ध्याऽऽदिषु दैक्षन्यायातिदेशो न युक्तः इत्याशयस्य । सु. पृ. ११८०.

• दैक्षप्रकरणे दार्शपौर्णमासिकप्रयाजादिदर्शनात् दैक्षे पौर्णमासधर्मातिदेश–( दर्शधर्मातिदेश– )देशावगतेः स्तोककारस्य स्वप्रकरणे प्राकृतप्रमाणसिद्धस्य उपक्रमः । सु.पृ.११९४.

• दैवानि कर्माणि उदगयन-पूर्वपक्ष-अहः-पुण्याहेषु कर्तव्यानि । के. ६।८।५।२३, • दैवात् एकस्य स्वकालाद् भ्रंशोऽपि तदनुसारेणान्येषां भ्रंशो न कार्यः । यथा चातुर्मास्येषु शालस्याः भ्रंशेऽपि अग्निष्टोमस्य स्वकालात् भ्रंशो न कर्तव्यः । ५।१।१७।३०–३४.

• दैवस्य अधिकः पुरुषकारात् प्रभावः । सु. पृ. १३२.

• दैवे कर्मणि दर्भाणां प्रागग्रत्व उदगग्रत्वं वा, पैतृके कर्मणि तु दक्षिणाग्रत्वम् । वि. ३।४।४.

• दैवतैरवदानैः देवताना शौविष्टकृतैः शौविष्टकृताना ऐडैश्चैडानां अनुसमयः एकदेवताकपशुगणे वाजपेये प्राजापत्यपशुषु । भा. ५।२।६।१०–१२.

• दैवतावदानं शौविष्टकृतावदानं ऐडावदानं इति पदार्थभेदः 'दैवतान्यवदाय' इत्यादिवाक्यात् क्रमान्यत्वविधायकत्वात् । अर्थान्विपदार्थान्तरव्यवधाने च एकपदार्थता न संपद्यते । अतश्च एकदेवत्ये पशुगणे दैवतावदानादिना प्रत्येकमनुसमयः, अन्ते च तन्त्रेण देवताहोमः । स्विष्टकृदिडाभक्षणे तु तन्त्रेणैव । वस्तुतस्तु अर्थान्विपदार्थान्तरव्यवधानेऽपि पश्चाच्चहोमसंपादकत्वेन दैवतावदानस्यापि प्रदानावयवत्वोपपत्तेः विभिन्नदेवताकस्थलेऽपि दैवतावदानादिप्रदानान्तेन अनुसमयः, एकदेवताके तु पदार्थावयवाभेदेनानुसमय इति न कोऽपि विरोधः । भाट्ट. ५।२।६.

• दैवतावदानेषु पदार्थानुसमयः पक्षे । वि. ५।२।६.

• दैवतैक्यवत् 'अग्नीषोमौ देवता' इत्यत्र यथा व्यासक्तयोर्देवत्वात् दैवतैक्यम्, तथा 'यजेत' इत्यत्र दंपत्योरेकमेव कर्तृत्वम् । वि. ६।१।४.

■ 'दोषो नानुमिते त्वसौ' इति न्यायेन आर्थिके प्रतिपत्तिविधौ शास्त्रप्रयोजकत्वस्य अदोषत्वात् । ( प्रथमदोषाभिकरणवाक्ये ) । मुरारि. भा. पृ. ११७३.

• महाश्चैव दोषो यच्छिष्टा वर्जयन्ति । भा. ६।२।९।२०, • यत्रोभयोः पक्षयोर्दोषः, न तत्रैकश्चोद्यो भवति । १०।१।९।२१, • यत्र दोषः, तत्र दोषविघातार्थेन भवितव्यम् । १०।८।१८।६३. • 'दोषात् त्विष्टिर्लौकिके' इत्यादिसूत्रेण अश्वप्रतिग्रहेष्टिः लौकिकाश्वदाननिमित्ता इति पूर्वपक्षं कृत्वा 'अर्थवादो वा' इत्यादिसूत्रेण 'वैदिकाश्वदाननिमित्ता' इति सिद्धान्तितम् । पद्यक्रमः.२।१।१–२.

■ दोषात् त्विष्टिर्लौकिके स्याच्छास्त्राद्धि वैदिके न दोषः स्यात् । ३।४।१०।२८॥

'वरुणो वा एतं गृह्णाति, योऽश्वं प्रतिगृह्णाति, यावतोऽश्वान् प्रतिगृह्णीयात् तावतो वारुणाञ्चतुष्कपालान्निर्वपेत्' इति अश्वप्रतिग्रहेष्टिराम्नाता । सा किं लौकिके अश्वप्रतिग्रहे कर्तव्या, वैदिके वा इति विचारे, पूर्वपक्षमाह । इष्टिः अश्वप्रतिग्रहेष्टिः लौकिके मित्रादिसंप्रदानके अश्वदाने स्यात् । दोषात् तत्रैव जलोदरात्मकवरुणग्रहरूपदोषसंभवात् । वैदिके तु पौण्डरीकादौ अश्वदाने शास्त्रात् दानविधायकशास्त्रवशादेव दोषः न स्यात् । तस्मात् लौकिके अश्वप्रतिग्रहे दाने वा इयमिष्टिः स्यात् इति पूर्वः पक्षः ।

अर्थवादो वाऽनुपपातात्, तस्माद्यज्ञे प्रतीयेत । २९ ॥

अश्वप्रतिग्रहेष्टिः लौकिके अश्वप्रतिग्रहे अश्वदाने वा इति पूर्वपक्षं सूत्रेण प्राप्तं वाशब्देन परिहरन् सिद्धान्तमाह । 'वरुणो वा एतं गृह्णाति' इत्यादिः अर्थवादः इष्टिप्रशंसाऽर्थवादः, न तु दोषनिर्घातार्थवादः । कुतः ? अनुपपातात् 'स एवैनं वरुणपाशान्मुञ्चति' इति वाक्यशेषस्य मुख्यार्थे समावेशासंभवात् । नहि वस्तुतः अश्वप्रतिग्रहात् वरुणग्रहस्य जलोदरकरूपस्य उपपातः प्राप्तिः संभवति । ततश्च अश्वप्रतिग्रहस्य जलोदरस्य अनुपपातात् अप्राप्तेः अर्थवाद एव [illegible] इष्टिप्रशंसार्थः । तस्माद्धेतोः यज्ञे वैदिके अश्वप्रतिग्रहे विधित्वात् प्रायश्चित्तेष्टिः प्रतीयेत, न लौकिके अश्वप्रतिग्रहे । इति सिद्धान्तः । के.

• 'दोषात् त्विष्टिर्लौकिके स्यात्' इत्यधिकरणे अश्वप्रतिग्रहेष्टिः अश्वप्रतिग्रहवतः कर्मणः अङ्गम्, न स्वतन्त्रमिति स्थितम् । पद्यक्रमः. ८।१.

* दोषापनयेन यजमानस्य फलप्रतिग्रहणयोग्यता भवति। तपश्च दोषनिर्घातं करोति। बा. ३।८।३।९.

* दोषार्थस्तत्स्नार्थवादकल्पः प्रतिषेधो यथा 'मिथ्याभिशंसने दोषो द्विः समो भूतवादिनः। मिथ्याभिशस्तदोषं च समादत्ते मृषा वदन्॥' इति। बाल. पृ. ३०.

* दोषनिर्घातार्थं अनियतनिमित्तकं नैमित्तिकं वैदिकं कर्म यथा 'योऽमावास्यां पौर्णमासीं वाऽतिपातयेत्, अग्नये पथिकृतेऽष्टाकपालं निर्वपेत्' इति। 'योऽमावास्यां पौर्णमासीं वाऽतिपातयेत् वैश्वानरं द्वादशकपालं निर्वपेत्' इति च। अनयोर्विकल्पः। बाल. पृ. ८९. * दोषनिर्घातार्थः नैमित्तिकः फलार्थः अधिकारविधिः द्विविधः विहितातिक्रमनिमित्तकः निषिद्धाचरणनिमित्तकश्चेति। पृ. १८. * दोषनिर्घातार्थानां प्रायश्चित्तानां एकार्थत्वेन विकल्पः। विकल्पशब्दे अधिकरणम्। भा. १२।३।५।१६.

* 'दोष्णः (दोस्-शब्दस्य दोषन् आदेशः) पूर्वार्धभागेऽवद्यति, गुदस्य मध्यतः, श्रोण्या जघनतः' इति अनिज्यागौरिस्यग्ने: [illegible] षष्ठौ। भा. १०।७।३। १०–११.

* दोहः प्राचीनावीतिना प्रेताग्निहोत्रे कार्यः। दर्शादौ तु यज्ञोपवीतिना कार्यः। चि. ३।४।४, * दोहौ द्वौ। अमावास्यायां रात्रावेको दोहः प्रतिपदि प्रातरपरः। ३।६।८.

¶ दोहयोः कालभेदादसंयुक्तं शृतं स्यात्। ३।६।८।२८॥

दर्शे सायंदोहः प्रातर्दोहश्चेति द्वौ दोहौ उक्तौ। शाखाहरणगोप्रस्थापनादयश्च दोहधर्मा उक्ताः। ते धर्माः प्रातर्दोहस्यापि भवन्ति, न वेति विचारे, अनेन सूत्रेण पूर्वपक्षोपन्यासः क्रियते। शृतं प्रातर्दुग्धं पयः दोहधर्मैः असंयुक्तं स्यात् संयुक्तं न स्यात्। प्रातर्दोहस्य ते धर्मा न भवेयुरित्यर्थः। कुतः? दोहयोः द्वयोः यौ द्वौ कालौ तयोर्भेदात्। धर्माणां च सायंदोहसमीपे एव च पाठात्। सायंदुग्धस्य पयसः दधि क्रियते। प्रातर्दुग्धं पयश्च तथैव गृह्यते। दध्यर्थमेव दोहधर्माः, न पयोऽर्थाः। इति पूर्वः पक्षः।

प्रकरणाविभागाद्वा तत्संयुक्तस्य कालशास्त्रम्। २९॥

पूर्वपक्षस्य निषेधाय वाशब्दः। प्रकरणस्य दर्शप्रकरणस्य अविभागात् विभागाभावात्। उभयोरेव दोहयोः प्रकरणं समानम्। न तत्र कश्चित् प्रकरणस्य विभागः। 'ऐन्द्रं दधि अमावास्यायाम्, ऐन्द्रं पयोऽमावास्यायाम्' इति उभयं साङ्गं अमावास्याया प्रकरणाविभागेन चोदितम्। यदिदं कालशास्त्रं तत्संयुक्तस्य उभयप्रधानसंयुक्तस्य शाखाहरणादेरेव, न तु सायंदोहसंयुक्तस्यैव। दोहधर्माश्च सायंदोहस्य क्रमे आम्नाताः इति वक्तुं न शक्यते। तस्मात् उभयदोहार्था एव शाखाहरणादयो धर्माः। अत्र सुबोधिन्याम् 'ऐन्द्रं दधि' इत्यादिकालशास्त्रं तत्संयुक्तस्य प्रधानस्यैव इति व्याख्यातम्। तत्संयुक्तस्य दधिपयःसंयुक्तस्य धर्मजातस्य अनुष्ठाने पूर्वेद्युःकालस्य शास्त्रं विधायकं इति तदनुष्ठानम्, न तु तावता दधिमात्रार्थता इति तु कुतूहले व्याख्यातम्। अस्माभिस्तु वार्तिकानुसारेण व्याख्यातम्। के.

* दर्शे सायंप्रातर्दोहयोरेकहविर्नाशेऽपि पञ्चशराव ओदनः प्रायश्चित्तम्। चि. ६।४।६.

* दोहाधिकारे अग्निहोत्रप्रकरणस्थे 'वत्समालभेत' इति न यागविधिः किन्तु स्पर्शमात्रविधिः। चि. ९।३।६.

* दोहधर्माः शाखाहरणम्, वत्सापाकरणम्, गोप्रस्थापनम्, गोदोहनं इत्येवमादयः। भा. ३।६।८।२८.
* दोहधर्माः सायंप्रातरुभयदोहार्थाः, न केवलं सायंदोहार्थाः एव। ३।६।८।२८–२९.

* दोहनं न स्त्रियामेव गवाम्, किन्तु स्वगृहस्थितसर्वासामेव कार्यं हविर्भूयस्त्वार्थं सान्नाय्यविषये सायम्। चि. ११।१।९, * दोहनं सान्नाय्याङ्गम्, तत्साधन वत्सापाकरणम्, तदर्थं पलाशशाखाहरणम्। ४।३।१०.

* दोहनातञ्चनादयः सान्नाय्यधर्माः। चि. २।१।४.

* दोहननिर्वापादयो धर्माः यजुर्वेदे समाम्नाताः। चि. २।३।६.

■ द्यावापृथिव्य एककपालः आग्रयणे। स वैश्वदेविकेककपालप्रकृतिकः। तत्र धर्मः प्रसूः बर्हिः। भा. १२।२।१४।३४. ● द्यावापृथिव्यस्य अग्नीषोमीयविकृतित्वं भ्रष्टव्यश्रवणात्। बाल. पृ. १२०. ● द्यावापृथिव्यस्य जघन्यत्वानुरोधेन मुख्यस्याप्यैन्द्राग्नादेः प्रसूनबर्हिर्नियमो विरोधाभावात्। आग्रयणे। आग्रयणेष्टिन्यायः। भा. १२।२।१४।१४.

● 'द्यावापृथिव्यां धेनुमालभेत, मारुतं वत्सम्, ऐन्द्रमृषभम्'। तत्र धेनुशब्दो नवप्रसूतिकामभवते, वत्सशब्दो बालम्, ऋषभशब्दः पुमांसम्। एते धेनादिशब्दाः गोगतानेव तान् गुणानाहुः। अतस्ते मुख्यवृत्त्या गा विधिपन्तः छागं बाधन्ते। तस्मादेते गोजातीया एव। वि. १०।२।१९.

● द्यावापृथिव्यानुरोधेन ऐन्द्राग्नवैश्वदेवयोः वैश्वदेवत्वस्य न नियमः आग्रयणे। भा. १२।२।१५। ३५-३७.

● द्यावापृथिव्याद्येककपालेषु सकृदेव होतव्यम्, नावदानधर्मः। संक्षे. २।२।१६.

● चातुर्मास्यवैश्वदेविकस्य विपरीतस्य आग्रयणगते द्यावापृथिव्येककपाले वरुणप्रघासकायेककपाले च अतिदेशः। भा ७।३।१०।२६-२७.

▓ द्युभ्वाद्यधिकरणन्यायेन (१।३।१।१ ब्रसू.) आत्मशब्दस्य परमात्मन्येव मुख्यार्थं इति न च वाच्यम्। (द्युभ्वाद्यधिकरणे 'यस्मिन् द्यौः पृथिवी चान्तरिक्षम्' इतिमन्त्रगत आत्मशब्दः परमात्मवाचकः इति साधितम्। के.)। अद्वैत. ११२२२२.

● द्योतकः उपसर्गः इत्येकः पक्षः, वाचक इत्यपरः। बाल. पृ. ४१.

● द्योत्यः अर्थः प्रतीनामुपसर्गाणाम्। सु. पृ. १४३६.

● द्रवद्रव्यस्यावदाने स्रुवः करणं सामर्थ्यात्। वि. १।४।२०. ● द्रवद्रव्याणां लौकेऽपि कश्चित् चमसादी उपयोक्ष्यमाणानां ईषत्प्रमाणलेकार कुर्वन्ति। वा. ३।४। ३।४ पृ. ९११. ● द्रवद्रव्यादिकं स्रुवादिना अवदानम्। स्रुवस्याऽविकरणम्। भा. १०।१४।१५.

● द्रवसमानवर्णद्रव्यत्वं इष्टिप्रकृतिलिङ्गम्। बाल. पृ. ११९.

● द्रविडानां राज्याधिकारयोग्येषु क्षत्रियेषु (राजन् शब्दस्य) प्रयोगो न विरोत्स्यते। वा. १।३।२।३ पृ. ५८४.

▓ द्रविडप्रणामन्यायः। एकुना शिष्यतोऽर्थस्य गुरुणा साधनमर्थकम्। द्रविडब्रह्मचारिणः प्रणामं कुर्वन्तः गोत्रप्रवरादिकं सर्वं पठन्ति, तेन प्रणामो दीर्घो भवति। अत लोके 'द्रविडी प्राणायामः' इति पठन्ति तदद्युतम्। नहि द्रविडानां प्राणायामस्तादृशः। वै.

● द्रविडप्रसिद्धेस्तु म्लेच्छप्रसिद्धिरिवेन अनादरकत्वात्। साट. २।३।१२.

● द्रव्यं एव विशिष्टसत्त्वपेतं व्यापारशब्दवाच्यं भवति इत्यनेन न्यायेन क्रियाऽऽत्मनोः अत्यन्तभेदाभावेन आत्मनवैतस्य अपूर्वस्य क्रियातः अत्यन्तभेदाभावात् साध्यसाधनतया योपपादकत्वं संभवति। सु. पृ. ६०५. ● द्रव्यं क्रियार्थम्, यदि प्रयोजनवती क्रिया स्यात् सा द्रव्येण निर्वर्तयितव्या। तस्याः निर्वृत्तिः द्रव्याद्दते न भवति इति तन्निर्वृत्तये द्रव्यमेपितव्यं भवति। तस्मात् क्रियार्थं द्रव्यम्। (इति द्रव्यस्य शेषत्वम्)। भा. ३।१।३।३.

▓ द्रव्यं चोत्पत्तिसंयोगात् तदर्थमेव चोद्येत। ३।१।५।११॥

दर्शपूर्णमासयोः 'स्फ्यश्च कपालानि च' इत्यादिना दश यज्ञायुधानि समाम्नातानि। 'स्फ्येनोद्धन्ति' 'कपालेषु श्रपयति' इत्यादिभिश्च तदुपयोगोऽप्युक्तः। किं योग इह शक्यते एभिः कर्तुं तस्मैतस्मै पदार्थाय एतानि उपयोज्यानि, उत यत् येन संयुक्तं तस्मै एव इति विचारे यत् शक्यते तस्मै इति पूर्वपक्षे सिद्धान्तमाह। चशब्दः पूर्वाधिकरणोक्तावहननादिदृष्टान्तार्थः। अवहननादिधर्मवत् स्फ्यादि द्रव्यं येन संयुक्तं तदर्थमेव चोद्येत चोदनया प्रतीयेत। उत्पत्तिसंयोगात् 'स्फ्येन उद्धन्ति' इत्यादिषु उत्पत्तिविधिवाक्येषु उद्धननादिकार्यविशेषेण संयोगस्य श्रवणात्। तस्मात् स्फ्यादीनां व्यवस्थयैव शेषत्वम्। के.

द्रव्य त्यागाङ्गभूतत्वात् उद्देश्याङ्गभूतदेवताऽपेक्षया प्रबलम् । भाट्ट. ४।१।७. ● द्रव्यं नाम लिङ्गसंख्यायोग्योऽर्थः । वा. २।३।११।२८ पृ. ६१६, ● द्रव्यं प्रज्ञानोत्तरकालमपि क्रियाया व्याप्यते । गुणस्तु न पृथक् द्रव्यव्यतिरेकेण व्याप्रियते । ३।१।६।१२ पृ. ६९२, ● द्रव्यं यत् इन्द्रवसुभ्यां दातव्यमिति संकल्पितम्, तस्य त्यक्तप्रायत्वात् अनीशो यजमानः कथमिव वक्ष्यति मित्रावरुणाभ्यामेतद्देवेति । २।२।६।१९ पृ. ५२०. ● द्रव्यं यागे गुणभूतं चोद्यते । भा. १०।४।१७।६५. ● द्रव्यं व्यक्तिः इति पर्याय एव । बाल ● द्रव्यं साक्षात् ( क्रियायाः ) साधनं गुणस्तत्परिच्छेदार्थः । वा. ३।१। ६।१२ पृ. ६९५. ● द्रव्यं भावाद्धि क्रिया मनुगृह्णाति, गुणस्तु विशिनष्टि साधनम् । भा. ३।१।६।१२ पृ. ६९५. ● द्रव्यं रूपरसगन्धस्पर्शवत्, तस्य चोदनं संभवति । वि. ३।१।१. ● द्रव्यं हि प्रत्यक्षं चाक्षुपमेव इति नैयायिकाः । दर्शनस्पर्शनाभ्यां हि गुणत्यागेनापि द्रव्यग्रहणेन अन्वयव्यतिरेकाभ्यां द्रव्यस्यापि प्रत्यक्षता भवति । ऋजु. पृ. २५३. ● द्रव्यं हि स्वभावत एव शेषभूतम् । वा. ३।१।३।६, ● कार्ये हि प्रवर्तमानं द्रव्यं संस्कारं गृह्णाति नोदासीनम् । न च प्रकृतानन्यातिरिक्तस्य हविषः कार्यमस्तीति न संस्कारमपेक्षते । ३।८।१४।४० पृ. ९७६. ● गुणसमुदाय एव पृथिव्यादि द्रव्यं नातिरिक्तमिति केचित् । तन्न । गणि. पृ. २२. ● नापि द्रव्यं स्वरूपेण सिद्धाभावत्वात् कर्तव्यम् । वा. १।४।६।९ पृ. ३४१. ● न लोकमेव द्रव्यं अवक्रुप्तं त्यज्यते । ३।२।१२।३२, ● न हि जात्या गुणेन च विना द्रव्यं उपलक्षयितुं शक्यम् । २।३।९।२०. ● नियमादनियमाच्चार्जितं द्रव्यं पुरुषं प्रीणयति । भा. ४।१।२।२ वर्णक २, ● भूतं द्रव्यम्, भव्यं कर्म । भूतस्य च भव्यार्थता व्याख्या । ६।१।१।१ पृ. १३४८, ● द्रव्याणि अर्थं ( प्रयोजनं ) प्रति शेषभूतानि । ६।३।१९।३९. ● द्रव्याणि कारकत्वेन प्रतीयन्ते तथापि तत्पदानि अविधायकान्येव । वा. ३।१।६।१२ पृ. ६९४.



※ द्रव्याणि त्वविशेषेणानर्थक्यात् प्रदीयेरन् । ४।१।४।७॥

तुशब्दः पूर्वाधिकरणोक्तप्रजापतिव्रतेभ्यः स्फ्यादिद्रव्याणां विशेषमाह । पूर्वपक्षसूत्रमिदम् । दर्शपूर्णमासयोः 'स्फ्यश्च कपालानि च' इत्यादिवाक्योक्तानि यज्ञायुधानि नाम स्फ्यादीनि द्रव्याणि अविशेषेण श्रुतानि । अङ्गत्वेन प्रधानत्वेन वा विशेषेण नैतानि श्रुतानि । 'यज्ञायुधानि' इति हि नैषां विशेषणं नामधेये श्रुतम् । तेननाङ्गत्वे तु यज्ञायुधत्वस्य आनर्थक्यं प्रसज्येत । तथात्वे तु एतानि उद्धननायुधानीति वक्तव्यं स्यात् । तस्मात् अविशेषेण श्रुतानि द्रव्याणि वाक्यवैयर्थ्यप्रसङ्गात् प्रदीयेरन् अग्नौ प्रदेयद्रव्याण्येतानि स्युः । प्रजापतिव्रतानि तु यज्ञोपश्लिष्टत्वाभावात् मा भूवन् प्रदेयानि । स्फ्यादीनि द्रव्याणि तु यज्ञायुधत्वाद् अवश्यं प्रदेयान्येव साक्षात् । तस्माद् प्रदेयानीति पूर्वः पक्षः ।

स्वेन त्वर्थेन संबन्धो द्रव्याणां पृथगर्थत्वात्, तस्माद् यथाश्रुति स्युः । ८ ॥

सूत्रेण पूर्वपक्षे प्राप्ते सिद्धान्तसूत्रमिदम् । तुशब्दः पूर्वपक्षव्यावृत्त्यर्थः । द्रव्याणां स्फ्यादीनां स्वेन अर्थेन स्वीयेन-स्वीयेन उद्धननादिना प्रयोजनेन संबन्धः 'स्फ्येनोद्धन्ति' 'कपालेषु श्रपयति' 'अग्निहोत्रहवण्या हवींषि निर्वपति' इत्यादिश्रुत्या पृथगर्थत्वात् पृथक्पृथक्प्रयोजनत्वात् ज्ञायते । तस्मात् स्फ्यादीनि द्रव्याणि यथाश्रुति 'स्फ्येनोद्धन्ति' इत्यादिश्रुतिं अनतिक्रम्य स्वस्वार्थसाधकानि स्युः, न तु प्रदेयानि इति ।

चोद्यन्ते चार्थकर्मसु । ९ ॥

स्फ्यादीनि द्रव्याणि न प्रदेयानि, किन्तु उद्धननादिक्रियाङ्गानि इति सिद्धान्तोपष्टम्भकं सूत्रमिदम् । अर्थकर्मसु दर्शपौर्णमासिकेषु आग्नेयाष्टाकपालादियागेषु पुरोडाशादिद्रव्याणि चोद्यन्ते । स्फ्यादीनामपि प्रदेयत्वे तु पुरोडाशादीनां स्फ्यादीनां च समुच्चयो वा विकल्पो वा स्वीकर्तव्यः । तत्तु उभयमपि न संभवति, पुरोडाशादीनामुत्पत्तिशिष्टत्वात् स्फ्यादीनां चोत्पन्नशिष्टत्वात् । उत्पत्तिशिष्टस्य न उत्पन्नशिष्टाद् बलीयस्त्वात् । तस्मात् स्फ्यादीनां उद्धननाद्यर्थत्वमेव न प्रदेयत्वम् । चकारः पूर्वोक्तहेतुना समुच्चयार्थः ।

अथवा अर्थकर्मशब्देन परिधानीयं नाम अन्त्येष्टिकर्म उच्यते। तत्र 'आहिताग्निमग्निभिर्दहन्ति यज्ञपात्रैश्च' इत्युक्तम्। स्फ्यादीनां प्रदेयत्वे तु प्रेतस्य यजमानस्य यज्ञपात्रैर्दहनं न स्यात्, तस्मात् न तानि प्रदेयानि।

लिङ्गदर्शनाच्च। १०॥

लिङ्गमेतत् हेत्वन्तरपरं सूत्रम्। चकारो हेतुसमुच्चयार्थः। 'चतुर्दश पौर्णमास्यामाहुतयो हूयन्ते, त्रयोदशामावास्यायाम्' इति आहुतिसंख्यारूपस्य लिङ्गस्य दर्शनात् स्फ्यादीनि न प्रदेयानि। तेषां प्रदेयत्वे तु चतुर्विंशतिराहुतयः पौर्णमास्यां स्युः, त्रयोविंशतिश्च अमावास्यायाम्। तस्मात् स्फ्यादीनि यजमानार्थान्येव न प्रदेयानि। के.

* द्रव्याणि पृथिव्यप्तेजोवाय्वाकाशकालदिगात्ममनोऽन्धकाराख्यानि एकादश। गुणसमुदाय एव पृथिव्यादि द्रव्यं नातिरिक्तमिति केचित्। तन्न। पृथिव्यादौ पाकादिना पूर्वरूपनाशस्य उत्तररूपोत्पत्तेश्च अनुभवसिद्धत्वात्। अन्ये तु अवयवसमुदायमेव अवयविनमाहुः। तदपि न। 'उत्पन्नो घटः' 'विनष्टो घटः' इत्यादिप्रतीतेः। मणि. पृ. २८–२९.

* द्रव्याणि हि द्विविधानि स्थावराणि जङ्गमानि च। [illegible] स्थावरेषु विच्छेदो भवति। यथा वनस्पतौ पर्णे गृहीत्वा पुष्यमाणे न हानिः, वृष्यते स्थावरत्वात्। भा. ९।१। ८।२७ पृ. १६७१. * प्रतिपत्तिः द्रव्यं न प्रयोजयति। ११।४।१।१४ (१७ के.), * संस्काराः हि द्रव्य कर्मयोग्यं कुर्वन्ति। ६।३।१८।३८, * गुणाश्चामूर्तत्वात् न क्रियया संबध्यन्ते। द्रव्येण एषां संबन्धो भवति। १०।२।२१।४८, * द्रव्यस्य अपचारे वैकल्पिकं द्रव्यान्तरं नोपादेयम्। ६।३।२।१२।२८–३०, * द्रव्यस्य अपूर्वविधिर्यथा 'गोदोहनेन पशुकामस्य प्रणयेत्'। बाल. पृ.२२, * द्रव्यस्य इतिकर्तव्यताकाङ्क्षा संख्याऽधिकरणवार्तिके निराकरिष्यते। सु. पृ. ७९७. * द्रव्यस्य औपदेशिकप्रतिनिधिकत्वेन भेदे सत्यपि कर्मभेदो नास्ति। व्रीहिग्रहणे नीवारग्रहणे वा न दर्शपूर्णमासयोर्भेदः। के. ६।३।३।११–१२. * द्रव्यस्य कार्येण निर्वापादिना प्रकारान्तरद्रव्यैः समाप्तिप्रतिपत्त्या अभिव्यज्यते। सु.

* द्रव्यस्य गुणेन न बाधः। वाक्यप्राप्तोपदिष्टश्वेतगुणेन प्राकृताजद्रव्यस्य न बाधः॥

नैमित्तिके तु कार्यत्वात् प्रकृतेः स्यात् तदापत्तेः। १०।२।३०।७०॥

भाष्यम्— इदमामनन्ति 'वायव्यं श्वेतमालभेत भूतिकामः' इति। अत्र संशयः किमिहापि नाजः पशुः कर्तव्यः, उताजः पशुरिति। उच्यते। औत्पत्तिकोऽयं श्वेतगुणसंबन्धे श्वेतशब्दः। अतो यः कश्चित् श्वेतगुणसंबद्धः, स आलभ्यः। नहि श्वेतशब्दः प्रत्यक्षः सन् कुतश्चित् श्वेतद्रव्यचोदकेन आनुमानिकेन निवर्तयितव्यः। तस्मात् अजो गौरश्वो वा श्वेत आलब्धव्यः इति। एवं प्राप्ते, ब्रूमः। नैमित्तिके एतस्मिन् श्वेतगुणनिमित्तके द्रव्ये श्वेतशब्दे सति गुणमात्रं विक्रियते। न ह्यत्र जातिविशिष्टं द्रव्यं प्रतीयते। यदेव आलम्भसाधनभूतम्, तदेव परिच्छेत्तव्यमिति एतद्वाक्यादवगम्यते। यथाप्रकृति चोदकप्राप्तं द्रव्यं साधनमविनश्यमान भूत्वा प्राप्नोति, तदयं श्वेतशब्दः परिच्छेत्स्यति। ननु अजान् अन्यान्यपि द्रव्याणि परिच्छेत्तुमयं शक्नोति। न ब्रूमो न शक्नोतीति, न तेन परिच्छिन्नेन प्रयोजनमस्ति। तस्मात् प्रत्यक्षोऽपि श्वेतशब्दः छागमेव परिच्छिन्द्यात् नान्यं पशुमिति।

सोम— श्वेतादिशब्दानामपि न गुणमात्रपरत्वम्। तथा सति द्रव्यदेवतासंबन्धाभावेन यागस्यैव अलाभापत्तेः। अतो द्रव्यपर्यन्तव्यापकत्वाभावे श्वेतगुणकद्रव्यमात्रस्यैव उपदेशतः अवगमात् अतिदिष्टाजद्रव्यनियमबाधः इति पूर्वः पक्षः। उपदेशस्य द्रव्यपर्यन्तत्वेऽपि पूर्ववत् द्रव्ये जातिविशेषाक्षेपकत्वे प्राकृताजद्रव्यग्रहणेऽपि उपदेशाविरोधात् तत्रैव पर्यवसानमिति न बाधः इति सिद्धान्तः। सूत्रार्थस्तु— नैमित्तिके गुणमात्रनिमित्तके श्वेतादिशब्दे तु प्रकृतेः स्यात् प्राकृतद्रव्यस्यैव ग्रहणं स्यात्, तत्रैव श्वेतगुणस्य संपादयितुं शक्यत्वेन, तदापत्तेः तस्यैव श्वेतगुणेन परिच्छेदापत्तेरिति। नैमित्तिके इत्यनेन पूर्ववत् उत्पत्तेः जातिविशेषाविनाभावो नास्ति। किंतु गुणमात्रमेवात्र निमित्तम्, तच्च चोदकप्राप्तेऽपि उपपन्नमिति दर्शयति।

वि-- 'वायव्यं श्वेतमित्यत्र यः कोऽपि (पशुः) छाग एव वा।, विशेषानुक्तितः कोऽपि, च्छाग एवा-स्त्वबाधनात्॥'

भाट्ट-- यत्र तु 'वायव्यं श्वेतमालभेत' इत्यादौ श्वेतादिशब्दानां अजादिसाधारणगुणवाचित्वम्, तत्र नाजत्वस्य बाधः इति प्रत्युदाहरणमेवात्। २९.

मण्डन-- 'श्वेतोऽजो वायुदेवतः।' ३०.

शंकर-- 'श्वेतादौ नाजबाधः स्यात्।' ३१.

卐 द्रव्यस्य चाकर्मकालनिष्पत्तेः प्रयोगः सर्वार्थः स्यात्, स्वकालत्वात्। ११।३।२।२॥

पैत्रिकपाशुकादिकर्मार्थतया वसन्तकर्मकादेः किं पृथक् अन्याधानं कर्तव्यम्, उत सर्वकर्मार्थे एकमेव स्वकाले कर्तव्यं इति विचारे सिद्धान्तमाह। द्रव्यस्य चाहवनीयादेः अकर्मकालनिष्पत्तेः। इष्टिपश्वादिकर्मणः काले निष्पत्ति-र्नास्ति, किन्तु वसन्ते एव वसन्तादिकाले अग्नेर्निष्पत्ति-र्भवति। तस्मात् कर्मकालनिष्पत्तेरभावात् प्रयोगः आधान-प्रयोगः सर्वार्थः सर्वकर्मार्थः स्यात्। स्वकालत्वात् स्वस्य आधानस्य वसन्तो ग्रीष्मः शरद् इति स्वकाल एव काले विहितः। तथा च स्वीयस्वतन्त्रकालत्वात् आधानं सर्वकर्मार्थमेकमेवेति। के.

* द्रव्यस्याकर्म-- (स्य चाकर्म--) कालनिष्पत्तेः इति एकादशे आधानस्य अनुष्ठानसाधारण्यं वक्ष्यते। वा. ३।६।५।१५, * द्रव्यस्याकर्मकालनिष्पत्तेः। (११।३।२।२) इति कृत्वाचिन्ता इति तत्रैव वक्ष्यते। (परन्तु तत्र किमपि नोक्तम्। 'अष्टौ अधिकरणानि अतिक्रम्य लिख्यते' इति हि तृतीयचरणाद्यावेव उक्तं तत्र)। ३।६।५।१९ पृ. १०८०, * सर्वे एव अग्नयः अवश्यं धारणीयाः, प्रतिदिवसं तेषां कर्मोपयोगात् द्रव्यस्याकर्मकालनिष्पत्ते-रिति न्यायात्। संकर्ष. ३।२।५.

* द्रव्यस्य [] कर्मार्थता स्वभावतः। भा. ६।१।१।१ पृ. १२४६, * द्रव्यस्य देवतां प्रति उत्सर्गः कर्म। ८।१।१७।३२. * द्रव्यस्य देवतोद्देशपूर्वकद्रव्यत्यागाय विना देवताऽन्वयायोगात्। सु. पृ. ४६३, * द्रव्यस्य धात्वर्थनिष्पादकत्वं भूतभव्यसमुच्चारणन्यायात् अवसीयते। पृ. ६२२. * द्रव्यस्य नियमविधिः 'सोमेन यजेत' इति। वि. ४।२।९, * द्रव्यस्य प्रतिषिद्धस्य माषादेः प्रतिनिधित्वं न भवति। ६।३।६, * द्रव्यस्य प्रधान-निर्वाहकत्वे अङ्गनिर्वाहासमर्थस्यापि उपादानम्। ६।३।२१. * द्रव्यस्य प्राकृताजस्य गुणेन श्वेतेन न बाधः वायव्यपशौ। भा. १०।२।३०।६९. * द्रव्यस्य शुद्धस्य विशेषणत्वे द्रव्यविशिष्टक्रियाविधिना द्रव्यविशेषणानाक्षेपः। सु. पृ. १०१२. * द्रव्यस्य शेषकार्यार्थमवत्तस्य नाशे शेषकार्यलोपः। भा. ६।४।३।१, * द्रव्यस्य श्रुतस्यापचारे तत्सदृश एव प्रतिनिधिः। श्रुतन्यायः। ६।३।११।२७, * द्रव्यस्य श्रुतस्यापचारे नित्यकर्मणः प्रारब्धकाम्यकर्मणश्च प्रतिनिधिना समापनम्। प्रतिनिधिन्यायः। ६।३।४।११-१७. * द्रव्यस्य सावयवस्य अनेकेनापि भक्षणं संभवति। वा. ३।५।१२।१४. * द्रव्यस्य स्थैर्यं च प्रत्यभिज्ञाऽधीनः। ऋजु. पृ. १७२. * 'ब्राह्मणान् प्रतिग्रहादिना द्रव्यमर्जयेत्' इत्यादिनियमस्य क्रत्वर्थत्वेन भूमिखननादिवत् तदार्जितद्रव्यस्य क्रत्वर्थत्वेऽपि भोजना-र्थत्वे अनिष्टोपायाक्षेपप्रतिबन्धे प्रमाणाभावात् न सर्वस्य द्रव्यस्य क्रत्वर्थता। भाट्ट. ४।१।२ वर्णकम् ३. * द्रव्ययोः द्वयोर्विभुनोः संयोगो नास्ति संयोग-हेत्वभावात्। अन्यतरकर्मजः उभयकर्मजः संयोगजश्च संयोगो भवति। न च द्वयोरपि सर्वगतयोः कर्मास्ति। न च अवयवाना संयोगजोऽपि संयोगो घटते। न च समवायोऽपि युक्तः, द्वयोर्द्रव्ययोः आरम्भारम्भकभाव-हीनयोः परस्परासमवायात्। इत्येति युक्त्यनुत्पादात्। ऋजु. पृ. २४२.

卐 द्रव्याणां कर्मसंयोगे गुणत्वेनाभिसंबन्धः। ६।१।१।१॥

'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' 'ज्योति-ष्टोमेन स्वर्गकामो यजेत' 'चित्रया यजेत पशुकामः' इत्यादिवचने द्रव्याणां स्वर्गपश्वादीनां कर्मभिः दर्शपूर्ण-मासचित्रादिकर्मभिः संयोगे साध्यसाधनभावरूपे संबन्धे श्रूयमाणे द्रव्याणां कर्मजननसामर्थ्यात् गुणत्वेन अभि-संबन्धः स्यात्। तथा च स्वर्गादिद्रव्यं साधनम्, यागः प्रधानम्। इति पूर्व. पक्षः।

असाधकं तु तादर्थ्यात् । २ ॥

'स्वर्गकामो यजेत' इत्युक्तम्, तत्र यागः प्रधानं स्वर्गो गुणः । स्वर्गशब्दः सुखसाधनद्रव्यपरः, द्रव्यं क्रियासाधनम्, इति यागः साध्यः, स्वर्गः तत्साधनं इति पूर्वपक्षे सिद्धान्तसूत्रम् । तादर्थ्यात् यागस्य स्वर्गार्थत्वात् याग एव स्वर्गस्य साधकः । स्वर्गस्तु यागस्य असाधकं न साधकः । तुशब्दः पूर्वपक्षव्यावर्तकः ।

प्रत्यर्थं चाभिसंयोगात् कर्मतो ह्यभिसंबन्धस्तस्मात् कर्मोपदेशः स्यात् । ३ ॥

यागः स्वर्गार्थः, न तु स्वर्गो यागार्थः । अतः स्वर्गः प्रधानं कर्म गुणः, इति सिद्धान्ते 'यजेत इत्येकपदश्रुत्या यागस्य भाव्यत्वेन स्वर्गकामपदोपात्तस्य न भाव्यत्वम्' इति शङ्का । तन्निरासार्थं सूत्रमिदम् । प्रति अर्थे इति पदभेदः । अर्थ्यते अभिलष्यते इति अर्थः स्वर्गपश्वादिः । अर्थं प्रति स्वर्गादिकं प्रति विधेः अभिसंयोगात् अन्वयात्, कर्मतः हि कर्मणा एव साधनत्वेन अभिसंबन्धः अन्वयः । तस्मात् हेतोः 'यजेत स्वर्गकामः' इत्यत्र स्वर्गादिसाधनत्वेन कर्मोपदेशः कर्मणः एव यागादेः उपदेशः स्यात् । तथा च प्रीतिरूपस्य स्वर्गस्य प्राधान्यम्, यागादेश्च गुणत्वं इति सिद्धान्तः । एवं च फलभोगसंबन्धेन कर्मकर्तुः अधिकारोऽस्ति इति अधिकाराध्याय आरभ्यते, इति भावः । चशब्दः हेत्वन्तरसमुच्चायकः सन् शङ्कानिरासार्थः । के.

● द्रव्याणां क्रियासु व्यवस्था । यथा–'स्फ्येनोद्धन्ति', 'कपालेषु श्रपयति', 'अग्निहोत्रहवण्या हवींषि निर्वपति', 'शूर्पेण विविनक्ति', 'कृष्णाजिनमधस्तादुलूखलस्याध्यूहति', 'शम्यायां दृषदमुपदधाति', 'उलूखलमुसलाभ्यामवहन्ति', 'दृषदुपलाभ्यां पिनष्टि' इति । वि. ३।१।५. ● द्रव्याणां क्रियार्थानां संस्कारः क्रतुधर्मः । सूत्रम् ४।३।४।८.

द्रव्याणां तु क्रियार्थानां संस्कारः क्रतुधर्मः स्यात् । ४।३।४।८॥

अग्निष्टोमे 'पयो व्रतं ब्राह्मणस्य, यवागू राजन्यस्य, आमिक्षा वैश्यस्य' इति श्रुतम् । इदं व्रतं पुरुषार्थं क्रत्वर्थं वेति संशये वाक्येन विनियुक्तत्वात् पुरुषार्थं इति पूर्वपक्षं तुशब्देन निरस्य सिद्धान्तयति । द्रव्यशब्देनात्र ब्राह्मणराजन्यादयः पुरुषा गृह्यन्ते । क्रियार्थानां क्रत्वर्थानां क्रतुसाधनानां द्रव्याणां ब्राह्मणादिरूपाणां इदं व्रतं संस्कारः स्यात् शरीरधारणार्थं, बलकरणार्थं च । तथा च क्रतुगत-पुरुषद्वारा क्रतुधर्मः स्यात् । न केवलपुरुषार्थः ।

पृथक्त्वाद् व्यवतिष्ठेत । ९ ॥

पयोयवाग्वामिक्षाः दीक्षितानां व्रते ब्राह्मणराजन्यवैश्यानां क्रमेण भवन्ति । स च क्रतुधर्मः न केवलपुरुषधर्म इति सिद्धान्तितम् उक्ते, यदि पुरुषसंयोगः 'पयो व्रतं ब्राह्मणस्य' इत्यादिना किमर्थं उक्तः ? इत्याशङ्कायां उत्तरमाह । ब्राह्मणराजन्यवैश्यकर्तृकाणां प्रयोगाणां पृथक्त्वात् व्रतव्यवस्थार्थं पुरुषसंयोग उक्तः, ब्राह्मणकर्तृकस्य अग्निष्टोमस्य अङ्गं व्रतं पयः, राजन्यकर्तृकस्य यवागूः, वैश्यकर्तृकस्य आमिक्षा इति । एवं प्रयोगाणां पृथक्त्वात् तत्तत्कर्तृके अग्निष्टोमे व्रतं व्यवतिष्ठेत व्यवस्थितं स्यात् इति पुरुषसंयोग उक्तः । तस्मात् क्रत्वर्थमेव व्रतम् । के.

● द्रव्याणां (खादिरः स्रुवः, पर्णमयी जुहूः, आश्वत्थी उपभृत्, वैकङ्कती ध्रुवा इ०) न फलप्रयुक्तत्वम् । भा. ४।३।१।१–४, ● द्रव्याणां येषामनवगतोत्पत्तीनां भाव एव लक्ष्यते, तेषामपि केषाञ्चित् अनित्यता गम्यते, येषां विनाशकारणमुपलभ्यते यथा अभिनवं घटं दृष्ट्वा । १।१।६।२१. ● 'द्रव्याणां कर्मसंयुक्तक्रिया-निर्वर्तनादिना । न प्रयोजनमस्त्यन्यत् कथम्भावाख्य-चोदितैः ॥' यथा होमः क्रियात्मकः सन् किमित्यपेक्षमाणः प्रधानकथम्भावेन इत्थमनुग्राहकत्वेन गृह्यते, नैवं द्रव्यम् । न च तस्यादृष्टकल्पना । क्रियानिर्वर्तनादपूर्वाणाम् । भा. २।१।४।१२ पृ. ४११. ● द्रव्याणां सोमक्रय-साधनानां समुच्चयः । भा. १२।४।६।५–७. ● द्रव्ये फलश्रुतिः 'यस्य पर्णमयी जुहूर्भवति न स पापं श्लोकं शृणोति' इति । अर्थवादः । मीन्या ● श्रुते द्रव्ये अपचारे प्रतिनिधिमुपादाय प्रयोक्तव्यं इति स्थितम् । भा. ६।३।११।२७. ● द्रव्येष्वेवारम्भगामित्वादर्थे विकारसामर्थ्यम् (१०।४।१४।२९) ( द्रव्येष्वारम्भगामित्वादर्थेऽविकारे सामर्थ्यात् ) इत्यनेन आरम्भेण स्वरूपेण द्रव्येषु क्रियावाचित्वात् विकारमहितस्यापि शब्दस्य

द्रव्यरूपे अर्थे सामर्थ्यमस्ति इति वैषम्यं वदता द्रव्येषु अर्थरूपेण कर्मणि समवायाभ्युपगमात् विधिरुतशब्द-प्रयोगनियमो नास्तीत्यर्थः । सु पृ. ४६१.

☒ द्रव्येषु गुणश्रुतिर्नियमविधानार्था ॥

तथा द्रव्येषु गुणश्रुतिरुत्पत्तिसंयोगात् । ४।२।१०।२५ ॥

भाष्यम्— अधिकरणातिदेशोऽयम् । इदमाम्नन्ति 'वायव्यं श्वेतमालभेत भूतिकामः' । तथा 'सोमारौद्रं घृते चरुं निर्वपेच्छुक्लानां व्रीहीणां ब्रह्मवर्चसकामः' तथा 'नैर्ऋतं चरुं निर्वपेत्कृष्णानां व्रीहीणाम्' इति । तत्र संदेहः किं श्वेतादिवर्णो विधीयते, उतानूद्यते इति । किं प्राप्तम्? अनूद्यते । द्रव्यश्रुतिगृहीतत्वात् । विधिर्वा, पक्षे प्राप्तस्य वर्णस्य नियमार्थः इति । पशोक्तं प्रयोजनं गुणयोरपि अधिकरणयोः ।

सोम— सूत्रार्थस्तु—द्रव्ये गुणश्रुतिरपि नियमविधिः तत्परया क्रियोत्पादकेन द्रव्येण तत्परिच्छेदकतया संयोगादिति ।

वि— 'श्वेतालम्भोऽनुवादो वा श्वैत्यस्य विधिः, नियमात् द्रव्यद्वारेण तत्प्राप्तेः, पूर्ववत् तन्नियम्यते ॥'

भाट्टे तु इदं पूर्वाधिकरणेन एकीकृतम् ।

मण्डन— 'द्रव्ये गुणानां नियमस्तथैव ।'

शंकर— 'द्रव्ये गुणश्रुतिश्चैवम् ।' एष नियमविधिः ।

● द्रव्येषु वसतौ न यः संस्कारः सोऽपूर्वप्रयुक्तः । अतिदेशेन द्रव्याणां च तदीयत्वेन धर्मैरभिसंबन्धो न स्वेन आत्मना । भा. ५।१।१।२ वर्णकम् २. ● न च द्रव्येषु अर्थसमवायात् विधिशब्दप्रयोगनियमः ( देवताया तु अस्ति ) । वा. २।४।८।११ पृ. २४५.

☒ द्रव्याधिकरणम् । स्फ्याधिकरणम् । द्रव्यविषयकोद्देश्यताऽवच्छेदकनिरूपणम् ॥

द्रव्यं चोत्पत्तिसंयोगात् तदर्थमेव चोद्येत । ३।१।५।११॥

भाष्यम्— स्तो दर्शपूर्णमासौ । तत्र समाम्नन्ति 'स्फ्यश्च कपालानि च अग्निहोत्रहवणी च शूर्पं च कृष्णाजिनं च शम्या च उलूखलं च मुसलं च दृषच्च उपला च, एतानि वै दश यज्ञायुधानि' इति । तत्र संदिह्यते किं येन इह शक्यते एभिः कर्तुम्, तस्मै तस्मै पदार्थाय एतानि समाम्नातानि, उत यत् येन संयुक्तं तस्मै एवेति । किं तावत् प्राप्तम्? यत् येन शक्यमिति । कुतः? एवं विषयो भविष्यन्ति, तथा अर्थवन्तः । इतरथा ते अनुवादा निष्प्रयोजनाः । प्रकरणाविशेषश्च सर्वपदार्थान् प्रति । यज्ञायुधानि इति च यज्ञसंयोगः अविशिष्टः । तस्मात् सर्वे सर्वत्रेति । एवं प्राप्ते, ब्रूमः । द्रव्यं चोत्पत्तिसंयोगात् तदर्थमेव चोद्येत । यो येन पदार्थेन सह उत्पत्तिवाक्येन संयुक्तः, स पदार्थस्तेनैव कर्तव्यः । यथा 'स्फ्येनोद्धन्ति' इति उद्धननार्थता स्फ्यस्य वाक्येन । नतु उद्धननं च स्फ्यादन्येन कर्तव्यम् । यदा चैवम्, तदा प्राप्त एव स्फ्यः । तस्यायमनुवादो भवितुमर्हति 'एतानि वै दश यज्ञायुधानि' इति । एवं एकैकस्यानुवादः तेनतेन वचनेन प्राप्तस्य । यथा 'कपालेषु श्रपयति, अग्निहोत्रहवण्या हवींषि निर्वपति, शूर्पेण विविनक्ति, कृष्णाजिनमधस्तादुलूखलस्य अवस्तृणाति, शम्यायां दृषद-मुपदधाति, उलूखलमुसलाभ्यामवहन्ति, दृषदुपलाभ्यां पिनष्टि' इति । प्रकरणात् सर्वाणि सर्वत्र प्राप्नुयुः । वचनात्तु यथावचनम् । यज्ञायुधशब्दोऽपि सामान्येन प्रयोजनं विदधत् तत् बाध्येतैव । परोक्षं हि सामान्यवचनेन विशेषविधानं भवति । प्रत्यक्षं तु विशेषवचनेन विशेषविधानम् । तस्मात् यत् येन उत्पत्त्या संयुक्तम्, तत् तत्रैव विनियुज्यते इति सिद्धम् ।

वा— अवघातादिवदेव द्रव्याणामपि यथासंयोगं विनियोगे सिद्धे किमर्थः पुनरारम्भः । उच्यते । यावत् तावत् तत्र दृष्टप्रयोजनवशेन यथासंयोगं विनियोगं पूर्वपक्षवादी मन्यते । स त्वाशारि विना दृष्टेन प्रयोजनेन नैवाश्रयितव्यः । सति हि दृष्टार्थत्वेन अन्यत्र अप्रवृत्ते न कश्चिदपि यथासंयोगं व्यवस्थाहेतुरस्ति । यथा च तस्य व्रीह्यादिसंबन्धात् भिक्षापूर्वप्रयुक्तत्वम् ( भिक्षापूर्वेति विशेषापूर्वेत्यर्थः ), नैवं चेदुद्धननादिषु एकं किंचिदपूर्वं प्रयोजकम् । एक एव च तत्र संयोगः ( विनियोजकवाक्यम्, संयुज्यते अनेनेति ) इह तु द्वौ संयोगौ 'एतानि वै दश यज्ञायुधानि' इत्येकः, 'स्फ्येनो-

दन्ति' इत्येवमादिरपरः। तयोश्च एको विधिः, अपरोऽनुवादः। तत् यदि पूर्वो विधिः, ततः साक्षात् यागसंबन्धे चतुर्थाधिकरणेन ( ३।१।४ ) व्यावर्तिते समस्तयागनिमित्तत्वात् आनर्थक्यात् तदङ्गेष्वेव अवतरन्ति प्रकरणाविशेषात् यथासामर्थ्यं सर्वार्थानि इति विज्ञायन्ते। ततश्च उद्धननादिसंयोगानां अवयुत्यानुवादत्वम्। अथ पुनः उद्धननादिसंयुक्ता एव विधयः, इतरोऽनुवादः, ततः पूर्वाधिकरणन्यायेनैव यथासंयोगं व्यवस्थेति। किं प्राप्तम्। अपूर्वभेदसंबन्धाभावात् दृष्टार्थत्वाविशेषाच्च यथासामर्थ्यं विनियोगः। एवं यज्ञायुधसंयुक्ता विधयो भूत्वा अर्थवन्तो भविष्यन्ति। बहुवचनं च ( आप्यार्थं ) विधेयार्थशब्दबहुत्वाभिप्रायम् ( विधेयार्थवाचिना ' स्फ्यश्च कपालानि च ' इत्यादीनां बाहुल्यम् )। इतरथा तु एकवाक्यत्वात् एक एव विधिः। तस्मात् यथासामर्थ्यं विनियोगः। इति प्राप्ते, अभिधीयते। 'स्फ्यादेरुत्पत्तिसंबन्धः कार्यैरुद्धननादिभिः। तत्र यज्ञायुधानीति प्राप्तमेवानुकीर्त्यते॥' 'एतानि वै दश यज्ञायुधानि' इति वैशब्दसंयोगात् अस्यानुवादत्वम्। न चात्र भावनान्तरे विधायकोऽस्ति, यो विनियुञ्जीत विदध्यात् वा इति। बहूनि च वाक्यानि तस्मिन् पक्षे अनर्थकानि भवेयुः। न चैषामनुवादत्वे किञ्चित् प्रयोजनमस्ति। साक्षाच्च एतानि स्वाभिधानैः उद्धननादिष्वेव विनियुज्यन्ते, परोक्षवृत्त्या यज्ञायुधवाक्ये। यज्ञशब्दस्य अङ्गलक्षणापेक्षत्वात् आयुधशब्दस्य च गुणवादपरत्वस्य क्रियासाधनत्वमेतेषु औपचारिकत्वात्। न चात्र समस्तयागनिमित्तत्वं ( आनर्थक्यतदङ्गन्याय. ) अवकल्पते। नहि अत्र 'यज्ञस्य' इतिवत् संबन्धमात्राभिधायिनी षष्ठ्यन्तात् पदात् षष्ठी दृश्यते। सत्यपि च आनर्थक्यात्तदङ्गावतरणे सामान्यशास्त्राणि विशेषशास्त्रैः उद्धननादिसंयुक्तैः उपसंह्रियमाणानि न कर्मान्तरैः संबध्येरन्। तस्मात् उद्धननादिवाक्यप्रापितानां सतां यावदर्थं यज्ञायुधत्वं पदार्थः, तदयम् 'एतानि वै दश' इत्यनेनानूद्यते। ननु अपूर्वभेदः प्रयोजको नास्तीति, अत्र ब्रूमः। कपालादीनां तावत् अस्त्येव पुरोडाशापूर्वभेदः। इतरेषामपि उद्धननादिद्वारत्वात् अन्यत्र तद्द्वारकाभावात् भेदः। ननु यथा अवघातादयः समानापूर्वनिबन्धनेष्वपि सुपादिषु कारकान्तरत्वात् न क्रियन्ते। तस्मात् एतेषामपि यथासंयोगमेव विनियोग इति सिद्धम्।

शब—'तस्मादस्यानुवादत्वादितरे विधयो मताः। तेन स्फ्यादेर्व्यवस्था स्यात् कार्येषूद्धननादिषु॥'

सोम— उद्धननादिवाक्यस्य विधायकत्वाभावात् व्रीह्यादीनामवघातादिसंयोगवत् इह संयोगाभावात् न व्यवस्थितिः इति प्रत्यवस्थानात् संगतिः। सूत्रार्थस्तु— द्रव्यमपि येन संयुक्तं तदर्थमेव कल्प्यते 'स्फ्येनोद्धन्ति' इति उत्पत्तौ संयोगात् इति।

वि— 'द्रव्यस्य स्फ्यकपालादेः सांकर्यं वा व्यवस्थितिः।, यज्ञायुधं सर्वेषां सर्वं तेनात्र संकरः॥, स्फ्यस्योद्धननादेः स्याद् वैयर्थ्यं संकरे सति। अनुवादो यज्ञायुधोक्तिर्व्यवस्था तेन पूर्ववत्॥'

भाट्ट— दर्शपूर्णमासयोः 'स्फ्यश्च कपालानि च' इति दश द्रव्याण्यनुक्रम्य 'एतानि वै दश यज्ञायुधानि' इति श्रुतेन वाक्येन दशानामपि द्रव्याणां यज्ञसाधनत्वेन विधानात्, उत्पत्तिशिष्टपुरोडाशाद्यवरोधेन च साक्षाद्यागसाधनत्वायोगात् अङ्गेषु अवतारात् प्रकृतापूर्वसाधनीभूतद्रव्यसाध्यत्वरूपविधेयतावच्छिन्नोद्देशेन द्रव्याणि विधीयन्ते। 'स्फ्येनोद्धन्ति' इत्यादिविशेषविनियोगास्तु अवयुत्यानुवादाः। इति प्राप्ते, तेनैव प्रत्यक्षविधिना तृतीयाश्रुतिवशादेव स्फ्यादीनां विशिष्यविनियोगात् यज्ञायुधवाक्यमेव एकप्रसुतविधिकं वैशब्दोपबद्धमनुवादकम्, बहूनामनुवादानां वैयर्थ्यात्। अस्य च 'यज्ञायुधानि संभरति' इत्येतद्विध्यर्थवादत्वेन सार्थक्यात्। तस्मात् उद्धननाद्यनन्यव्यापारकप्रकृतापूर्वसाधनत्वाभावत्वमेव उद्धननपदेन स्थापयित्वा तदुद्देशेनैव स्फ्यादिविधिः।

मण्डन— 'स्फ्यादिरुद्धननादिनः।' शेषः।

शंकर— 'व्यवस्थितं स्फ्यादिकार्यम्।'

* द्रव्याधिकरणे ( ३।१।५।११ ) द्रव्याणां विनियोगः कथ्यते। स च वाक्येन इति केचित्। वस्तुतस्तु श्रुत्यैव। ( संक्षेपभेदः )। द्रव्यसंस्कारकर्मसूद्धाराधिकरणमिदम्। शा ३।१।४।७ पृ. ६६५.

* द्रव्यान्तरं अस्तीति तत्र गम्यते, यत्रैकस्मिन्नवयवे गृहीत्वा कृष्यमाणे कृत्स्नः कृष्यते। नहि अबद्धे काष्ठपूलके काष्ठे एकस्मिन्नाकृष्यमाणे काष्ठान्तराणि कृष्यन्ते। यत्र हि परस्परव्यतिषङ्गजनिता एका बुद्धिर्भवति, नावयवबुद्धिर्दृश्यते, नापि केनचिदनुमानेनानुमीयते तत्र द्रव्यान्तरं स्यादित्युच्यते। भा. 9।1।7।26। यत्रयत्र द्रव्यान्तरबुद्धिर्भवति तत्रतत्र द्रव्यान्तरम्। यत्र एकस्मिन्नवयवे कृष्यमाणे कृत्स्नोऽवयवी आकृष्यते तत्र यथादृष्टम्। यत्रैकस्मिन् कृष्यमाणे एकः कृष्यते, तत्रापि यथादृष्टम्। टुप्. 27. * द्रव्यान्तरं वैकल्पिकं नोपादेयं द्रव्यापचारेऽपि। के. 6।3।12।28–30, * द्रव्यान्तरेण प्रतिनिधिना यागे कृतेऽपि ऐककर्म्यमेव, न कर्मभेदः इति सिद्धान्तः। 6।3।3।11–12.

द्रव्यान्तरे कृतार्थत्वात् तस्य पुनःप्रयोगमन्त्रस्य च तद्गुणत्वात् पुनःप्रयोगः स्यात्, तदर्थेन विधानात्। 11।4।13।46 ॥

राजसूये नानाबीजेष्टौ एकस्मिन् बीजे अवहननस्य कृतार्थत्वात् तुषविमोकस्य अर्थस्य निष्पादितत्वात् द्वितीयादिबीजे तस्य अवहननस्य तुषविमोकार्थं पुनःप्रयोगात्, मन्त्रस्य च तद्गुणत्वात् अवहननशेषत्वात् तस्यापि पुनःप्रयोगः स्यात्। तदर्थेन अवहननाङ्गत्वेन चोदकेन विधानात्। तस्मात् प्रतिबीजं मन्त्रावृत्तिः इति सिद्धान्तः। के.

* द्रव्यान्तरागमनन्यायः। अयमेव प्रतिनिधिन्यायः। (6।3।4।11)। प्रक्षेपानिष्पत्तौ यागस्यापि अनिष्पत्त्यवगमेन प्रक्षेपस्य अप्रयोजकत्वेऽपि यागेन प्रयोक्तुं शक्यत्वात् नागादिषु द्रव्यान्तरागमनन्यायाविरोधः। सु. पृ. 1535.

* द्रव्यापचारे प्रतिनिधिना समापनम्। के. 6।3।4।13–17.

* द्रव्याभिधानं आनुकम्प्ययागे लिङ्गेषु विधिगतोक्षाशब्देन ज्योतिष्टोमे। भा. 10।4।16।32–31.

* द्रव्यार्जनं पुरुषार्थं न क्रत्वर्थम्। 'न्यायागतेन द्रव्येण कुर्यात् कर्माणि वै द्विजः' इत्यादिवचनैः मुख्यगौणसाधारणपुरुषाकाङ्क्षा अधिकारितारतम्येन क्रत्वर्थत्वस्यापि बोधनात् प्रयोगप्रकृत्यन्वयेन उभयार्थत्वेऽपि न दोषः। भाट्ट. 4।1।2 वर्णकं 3 पृ. 86, * द्रव्यार्जनस्य प्रयोगबहिर्भूतानुष्ठानाङ्गीकारेण प्रयोगान्तःपातेऽपि स्मृतिवचनप्रयाजादिवदेव प्रतिप्रयोगानुष्ठानाङ्गीकारेण अतिपातदर्शने न काचिदनुपपत्तिः। 4।1।2 वर्णकं 3 पृ. 85. * द्रव्यार्जने उपायनियमः उपायान्तरेषु प्रत्यवायनिवृत्तये। तत्र ब्राह्मणस्य प्रतिग्रह–याजन–अध्यापनान्येव द्रव्यार्जनोपायः, राजन्यस्य जयादिकम्, वैश्यस्य कृष्यादिकम्, शूद्रस्य सेवादिकं इति। वि. 4।1।2 वर्णकं 4.

द्रव्यार्जनवर्णकम्। द्रव्यार्जनं पुरुषार्थम् ॥

यस्मिन् प्रीतिः पुरुषस्य, तस्य लिप्साऽर्थलक्षणाऽविभक्तत्वात्। 4।1।2।2 वर्णकं 3 ॥

भाष्यम्— एवं वा। द्रव्यार्जनमुदाहरणम्। इह द्रव्यार्जनं तैस्तैर्नियमैः श्रूयते। ब्राह्मणस्य प्रतिग्रहादिना, राजन्यस्य जयादिना, वैश्यस्य कृष्यादिना। तत्र संदेहः किं क्रत्वर्थो द्रव्यपरिग्रहः, उत पुरुषार्थः इति। किं प्राप्तम्? क्रत्वर्थो नियमात्। यदि एष पुरुषार्थः स्यात्, नियमः अनर्थको भवेत्। प्रत्यक्षेण एतदवगम्यते नियमात् अनियमाच्च अर्जितं द्रव्यं पुरुषं प्रीणयति इति। तस्मात् क्रत्वर्थः। कामश्रुतिभिश्च अस्य सह एकवाक्यता दृष्टा। इतरथा अनुमेयेन फलवाक्येन सह एकवाक्यता यायात्। लिङ्गं चापि भवति 'अग्नये क्षामवते पुरोडाशमष्टाकपालं निर्वपेत्, यस्याहिताग्नेः सतः अग्निर्गृहान् दहेत्' 'यस्य हिरण्यं नश्येत् आग्नेयीमिति निर्वपेत्' इत्येवमादि। यदि द्रव्योपघाते चोद्यते। यदि द्रव्यपरिग्रहः क्रत्वर्थः, ततः एतदपि सति संबन्धे कर्माणि इत्युच्यते। इतरथा असति संबन्धे कर्माणि इति अनुमीयते (अनुमीयेत), फलं चास्य कल्प्येत। तस्मात् यथाश्रुतिगृहीतं द्रव्यार्जनम्। येन विना यागो न निर्वर्तते, स यागस्य श्रुत्या परिगृहीतः इति गम्यते। तस्मात् क्रत्वर्थः इति। एवं प्राप्ते, ब्रूमः. पुरुषार्थः इति। एतस्मिन् कृते पदार्थे, प्रीतिः पुरुषस्य भवति। तस्मात् अस्य लिप्सा अर्थलक्षणा शरीरधारणार्था। यस्य शरीरं ध्रियते, यत्तत् तस्यास्ति द्रव्यम्। शरीरेणैव यागः श्रूयते। तस्मात् नियमाद्द्रव्यस्य विनियोग उच्यते। न द्रव्यार्जनं काम-

श्रुतिगृहीतम्, विनाऽपि हि द्रव्यार्जनवचनत्वेन शब्दस्य, यागो निर्वर्तत एव। तस्मात् पुरुषार्थो द्रव्यपरिग्रहः।

अपि च यदि साक्षात् कर्मार्थं द्रव्यार्जनम्, तत् न अन्यत्र विनियुज्येत तथा अर्जितम्। तत्र सर्वतन्त्रपरिलोपः स्यात्। अपि च उपक्रान्तानि सर्वकर्माणि द्रव्यार्जनेन भवेयुः। तत्र एतत्नोपपद्यते 'अप वा एष सुवर्गात् लोकात् छिद्यते, यो दर्शपूर्णमासयाजी सन् अमावास्यां वा पौर्णमासीं वा अतिपातयेत्' इति। एवं च सति प्रयोगकालात् बहिः एतदङ्गं सत् अनुपकारकं स्यात्। न च आधानवत् भवितुमर्हति। तत्र हि वचनम् 'वसन्ते अग्निमादधीत' इति। न चैतत् अङ्गम्। अथ यदुक्तम् 'नियमवचनं अनर्थकं पुरुषार्थे द्रव्यपरिग्रहे सति' इति। उच्यते। नैतावता पुरुषार्थता व्याहन्यते। प्रत्यक्षा हि सा। त्वया च परोक्षं श्रुतिवृद्ध्या व्यपदिश्यते। न च परोक्षं प्रत्यक्षस्य बाधकं भवति। तस्मात् नियमवचनात् कामं अपरमदृष्टं कल्प्येत, न तु दृष्टहानम्। तस्मात् यत् पुरुषस्य प्रयोजनं प्रीतिः, तदर्थं धनस्य अर्जनमिति। एवं च सति व्रीहिणा यागः कर्तव्य. प्रीत्यर्थे अर्जितेन वा क्रत्वर्थे अर्जितेन वा, नात्र कश्चित् विशेषः। प्रीत्यर्थं उपार्जितोऽपि व्रीहिः व्रीहिरेव, कर्मार्थं उपार्जितोऽपि व्रीहिः व्रीहिरेव। तस्मात् न प्रयोगचोदनागृहीतं द्रव्यार्जनम्। अथ यदुक्तम् 'अनुगेयेन अप्रकृतेन वा शब्देन श्रुत्यर्थे नियमस्य एकवाक्यता, असत्यर्थे तु दृष्टेन प्रयोगवचनेन' इति। नैष दोषः। असत्पक्षेऽपि दृष्टेन श्रुतिना, न फलवचनेन (एकवाक्यता)। कथं तर्हि नियमात् अदृष्टं भवति इति गम्यते? यथैव भवदीये पक्षे। आह, असत्पक्षे एकता एकवाक्यभावात् फलतः उपक्रोति इति गम्यते। उच्यते। असत्पक्षेऽपि फलवनैव एकवाक्यभावः। एतावांस्तु विशेषः, तव श्रुतं फलम्, मम तु दृष्टमिति। अथ यत् लिङ्गमुक्तम्, 'गृहदाहादिषु कर्म श्रूयते' इति, तत्रोच्यते। यद्यपि न क्रत्वर्थं द्रव्यार्जनम्, तथापि दाहे निमित्ते फलस्य वा कर्माङ्गभावस्य वा क्षामवत्यादीनां विधानं उपपद्यते एव। तस्मात् पुरुषार्थं द्रव्यार्जनम्, प्रीत्या हि तत् भविष्यति इति।

टुप्— एवं वा। द्रव्यार्जननियमः क्रत्वर्थः। तेन हि (क्रतुना) द्रव्यमाकाङ्क्षितम्। (तस्मात् क्रतुना सह अस्यैकवाक्यता, अपेक्षितत्वात् इति ग्रन्थसंबन्धः। कथमेकवाक्यता, तत्राह– अपेक्षितं द्रव्यम्) तत् इत्यमुपादेयम्। प्रतिग्रहादिनैव। (इत्येवं क्रत्वेकवाक्यता। तस्मात् क्रत्वर्थः) यथा अवघातादयः। (इति युक्त्या नियमस्य क्रत्वर्थता। तस्मात् अर्जनाङ्गमेव नियमः, न स्वयं फलवान्। कथमेकान्ततः फलवत्त्वं अत आह–) इतरत्र (पुरुषार्थत्वपक्षे सत्यं द्रव्यमाकाङ्क्षितम्, ततु–) क्षुत्प्रतिघातार्थम्। अनियमेनापि उपात्तं क्षुधं विहन्त्येव। तस्मात् न तत्र (अर्जनस्य पुरुषार्थत्वपक्षे) नियमस्य (विधीयमानस्य) फलम् (अर्जनाङ्गता घटते। अथ अदृष्टं एवमुपात्ते द्रव्ये भवति इति कल्प्यते, तथा सति अश्रुतफलवचनेन एकवाक्यतादोषः। तदाह–) अश्रुतमपि अध्याहृत्य तेन सह एकवाक्यता कल्पयितव्या (सा च अन्याय्या)। [इतः परं नञ्‌घटितपाठमनुसृत्य व्याख्यानमाह–] (येषु नञ् न पठ्यते, तेषां पक्षमन्धतेव 'अनियमेनापि उपात्तं क्षुधं विहन्त्येव। तस्मात् तत्र नियमस्य फलं अश्रुतमपि अध्याहृत्य तेन सह एकवाक्यता कल्पयितव्या इति)।

इतरत्र (क्रत्वर्थत्वपक्षे) श्रुतेन (क्रतुना) एकवाक्यता (पक्षद्वयेऽपि तदेकवाक्यता कल्प्या, त्वत्पक्षे अश्रुतेन, मम तु श्रुतेन। क्रत्वर्थे च द्रव्यार्जने सति–) हिरण्यादिनाशे च क्रत्वर्थ- (द्रव्य-) नाशात् क्रतुवैगुण्ये क्षामवत्यादीनां क्रतुसमाधानार्थं उपदेशो युक्तः (भवति)। इतरत्र (पुरुषार्थत्वपक्षे) न वैगुण्याभावात् (समाधानापेक्षा नास्तीति–) फलकल्पनैव (दोषत्वेन उक्ता प्राप्नोति)।

इत्येवं प्राप्ते ब्रूमः। श्रुत्यभावात् (अर्जनं) अनङ्गं क्रतो.। पुरुषस्य तु प्रीतिमुत्पादयन्ति (अर्था.) कामश्रुतिनिरपेक्षाः। शरीरधारणार्थमेव असौ (पुरुष, द्रव्यं) उपादत्ते। अन्यथाऽनुपपत्त्या कामश्रुतिभिः आक्षिप्येव। तत्र पुरुषार्थेन उपार्जितमस्ति इति अन्यथाऽनुपपत्तिः क्षीयते यथा आधाने (न काम-

श्रुतीनां तदाक्षेपकत्वं वसन्तादिवाक्यैर्लम्भात् )। अपिच क्रत्वर्थे द्रव्यार्जने क्रतुविघातः स्यात् ( कुतः ? ) देवतोद्देशेन च स्वद्रव्यपरित्यागे ( क्रियमाणे ) यागो भवति, ( चशब्दो हेतौ देवतोद्देशेन द्रव्यतः प्राक् संबध्यते ) क्रत्वप्रयुक्तत्वे तु ( स्वीय- ) द्रव्याभावात् परित्यागो नास्ति इति ( क्रतुविघातः स्यात् )।

( अथ अनन्तरम् 'अपि च ' इत्यादि भाष्यं ' एवं च सति प्रयोगकालात् बहिः ' इत्यनेन संगतार्थत्वात् तत्रैव सत्कृत्यं इत्यभिप्रेत्य ' अप वा एष सुवर्गात् ' इत्यादि लिङ्गदर्शनभाष्यं अनुसंधत्ते- ) द्रव्यार्जने च प्रक्रान्ते सर्वक्रतूनां प्रक्रमात् ' अप वा एष स्वर्गात् लोकाच्छिद्यते ' इति ( आक्षिपति- ) यदि आरम्भविषयं अतिपातनम्, ततो न घटते । ( समाधत्ते- ) अथवा अङ्गारम्भेणैव प्रधानस्य आरब्धत्वात् अतिपातनाभावः । [ अतिपातनं इति दकारः तैत्तिरीयानुसारी लिखिते, मुद्रिते तु भाष्यानुसारि ]। यागाकरणात् अतिपातनं यत्, तत् इतरथापि ( पूर्वपक्षेऽपि ) घटते एव । क्रत्वर्थे तु (द्रव्यार्जने बहिःप्रयोगेण अनुष्ठीयमाने सर्वक्रत्वर्थत्वप्रसङ्गात् ) सर्वक्रतूनां प्रक्रमात् ( युगपदनुष्ठानासंभवात् अन्यतरानुष्ठानेऽपि अनध्यवसायात् ) अशक्यनीयोऽर्थः स्यात् । [ एवं लिङ्गभाष्यं व्याख्याय प्राचीनम् ' अपि च यदि ' इत्यादि भाष्यं व्याचष्टे- ] तथा ( क्रत्वर्थत्वेन ) अर्जितस्य अन्यत्र ( जीवनादौ ) अविनियोगात् शरीरनाशात् सर्वतन्त्रविपरिलोपः स्यात् । ( ननु स्वातन्त्र्येण पुरुषार्थार्जितेन जीवनादि स्यात् इति चेत् तत्राह- ) न च ( पूर्वपक्षवादिनः ) द्वे द्रव्यार्जने ( विधीयेते ) एकं क्रत्वर्थे अपरं पुरुषार्थे ( इति )। किं तर्हि ? एकमेवेद ( क्रत्वर्थं ) द्रव्य उपादानस्य एते नियमाः ( प्रतिग्रहादयः ) उपदिश्यन्ते पुरुषस्येति ।

' एवं च सति प्रयोगकालात् बहिः एतदर्हं सत् अनुपकारकं स्यात्' इति अनन्तरेण अतिपातनग्रन्थेन नायं ( भाष्य- )ग्रन्थः संबध्यते । कथं तर्हि ? ' सर्वतन्त्रपरिलोपः स्यात् ' इत्यस्य शेषः । ( यद्यप्यवस्थितो वा पूर्वग्रन्थे तथापि एवायं ग्रन्थो व्याख्यातुं इति मत्वा व्याख्यानान्तरमाह— ) अथवा प्रयोगवचनबहिर्भावात् ( आप्रकरणस्थत्वात् ) नेदं फलवतः ( क्रतोः ) अङ्गं श्रुत्याद्यभावात् । ( ननु अनुपकारकं इति भाष्यं कथं अनर्हं इति व्याख्यायते तत्राह- ) अङ्गत्वे च अपनीते अनुपकारकं स्यात् इति फलेन अयं ( भाष्य- ) ग्रन्थः । ( व्याख्यानान्तरमाह- ) अथवा प्रधानकालत्वात् अङ्गानां अन्यस्मिन् काले क्रियमाणं अनुपकारकं स्यात् इति । ' न चैतत् आधानवत् भवितुमर्हति ' इति ( भाष्यं चरमे व्याख्याने तदेकवाक्यतया व्याचष्टे- ) यथा आधानं अन्यकालमपि प्रधानस्य उपकारकम्, नैवं इदं द्रव्यार्जनम्, कालविशेषाभावात् । तस्मात् क्रत्वर्थं सत् अन्तरालं उत्पाद्यं स्यात् । ( तदेव दर्शयति- ) य एव क्रतुः प्रक्रान्तः, तमेव उररीकृत्य द्रव्यमुपादद्यते ( उपादेयं इत्यर्थः ) एवं च द्रव्यार्जने ( क्रियमाणे ) न [ ' द्रव्यार्जनेन न ' इति मुद्रितपाठः ] सर्वकर्माणि प्रक्रान्तानि भवेयुः । यथा आहवनीयः पौर्णमासे क्रियमाणः न सौर्यस्योपकरोति, एवमिहापि । तस्मात् ( क्रत्वर्थत्वे सति कालविशेषाभावात्, सर्वकर्मप्रक्रमदोषपरिहाराय ) प्रतिकर्म द्रव्यार्जनम्, न सर्वकर्मणां सकृत् इति ( युक्तम् । न चैतदिष्टम्, न च संभवति । तस्मात् न क्रत्वर्थमिति )। ( व्याख्यानान्तरमाह-) ' न च आधानवत् भवितुमर्हति '। यथा आधानं ( अग्न्यर्थं ) न क्रत्वर्थम्, नापि पुरुषार्थं ( एवं द्रव्यार्जनमपि केवलं द्रव्यार्थम् ) एवं कस्मात् न भवति ? उच्यते । आधानस्य वाक्येन अग्न्यर्थता अवगता । अस्य पुनः ( द्रव्यार्जनस्य ) अन्यार्थत्वे प्रमाणं नास्ति । प्रत्यक्षेण तु अस्य पुरुषार्थता ( अवगम्यते )। ( अस्यैव भाष्यस्य अभिप्रायान्तरमाह-) अथवा आधानेन अग्नयः उत्पाद्यन्ते ( ततः तस्य तदर्थता युक्ता ) न तु एतेन ( अर्जनेन ) व्रीह्यादयः ( अतो न स्वरूपार्थं अर्जनम् । अथ अपरितोषात् एतदेव भाष्यं उत्तरत्वेन योजयति- ) अथवा द्रव्यार्जननियमः फलवत्त्वात् पुरुषार्थः । आधानं तु न पुरुषार्थम् ( तत्र फलाभावात्, अग्निमात्रार्थमेव तत् । व्याख्यानान्तरमाह-) अथवा आधानशब्देन आहवनीयादयः अभिधीयन्ते ( लक्षणया )। यथा ( पूर्वग्रन्थे द्वितीयव्याख्याने- ) बहिःप्रयोगे अर्जिताः अङ्गत्वं प्रतिपद्यन्ते, [ आहिताः इत्यत्र श्रुताः इति लिखितमुद्रितयोः

पाठ । आहिताः इत्येव तु तन्त्र ने ] एव कस्मात् न भवति इति परिचोदिते आह—'आधानवत् भवितुमर्हति' इति । न चैतत् आहवनीयादिवत् भवितुमर्हति इत्यर्थः । तत्र हि आहवनीयादयः ( आधानेन ) उत्पन्नाः ( प्रयोजन- ) साकाङ्क्षाः सन्तः वाक्येन ( यदाहवनीये जुहोति इत्यादिना ) अङ्गता ( होमाङ्गता ) प्रतिपद्यन्ते ( विनाऽपि प्रकरणेन ) । इह ( द्रव्यार्जने ) तादृशं नास्ति वाक्यम् ( यत् द्रव्यार्जनं कर्मणि विनियुङ्क्ते । 'अथ यत् लिङ्गमुक्तम्' इत्यादि भाष्यं अनुसन्धेयम्–) यद्यपि- ऽपि अङ्गत्वाय वा क्रत्वर्थ वा इति, ( तथापि– ) अङ्गत्वे नास्ति प्रमाणम् । ( तदभिधानं तु अनालम्ब्य । तस्मात् द्रव्यार्जनं पुरुषार्थमिति ) ।

शा— किं क्रत्वर्थो पुरुषस्य द्रव्यप्राप्तिः उत पुरुषार्थेति । तत्र 'नियमस्यार्थवत्त्वाय क्रत्वर्थो द्रव्यसंग्रहः । पुरुषार्थत्वपक्षे हि नियमोऽनर्थको भवेत् ॥' एवं प्राप्ते, ब्रूमः । 'पुरुषार्थत्वमेतस्य प्रत्यक्षेणावगम्यते । क्रत्वर्थताऽनुमानेन प्रत्यक्षात् तच्च दुर्बलम् ॥'

सोम— प्रयोजनं पूर्वपक्षे प्रतिग्रहाद्यर्जितस्यैव द्रव्यस्य क्रतौ उपयोगः, सिद्धान्ते तु यथाकथञ्चिदर्जितस्यापीति ।

वि— 'द्रव्यार्जनं स्यात् क्रत्वर्थं पुमर्थं वा, क्रत्वर्थम् । नियमस्यात्, पुमर्थं तु दृष्ट क्रत्वर्थताऽऽर्थिकी ॥' ४।१।२ वर्णक ४.

भाट्ट— यत्तु भाष्यकारादिभिः 'ब्राह्मणः प्रतिग्रहादिना द्रव्यमार्जयेत्, जयादिना राजन्यः' इत्यादिविधि- मुदाहृत्य अनारभ्याधीतस्यापि प्रतिग्रहादिनियमस्य फल- कल्पनाभिया क्रत्वर्थत्वावसायात् तादृशविशिष्टोपायार्जित- द्रव्यमपि सर्वं क्रत्वर्थमेव । अत एवान्यमित्रविहिरण्यादि- संबन्धात् तत्क्रतौ इष्ट्यादीनामपि क्रत्वर्थत्वसिद्धिरिति पूर्वपक्षयित्वा श्रुत्याद्यभावात् अदृष्टकल्पनस्य क्रत्वर्थत्व- पक्षेऽपि तुल्यत्वात् नियमस्य क्रत्वर्थत्वानुपपत्तेः आर्जनस्य रागप्राप्तत्वेन अविधेयत्वात् तदार्जितद्रव्यस्य दृष्टार्थत्वात् विहिताविहितसाधारणपुरुषकृत्यमात्रोपयोग्यत्वमेव, इतरथा जीवनलोपात् सर्वतन्त्रपरिलोपापत्ते । किञ्च द्रव्यार्जन- रूपाङ्गोपक्रमणे सर्वक्रतूनामनुपपत्तेः 'यो दर्शपूर्णमासयाजी सन् अमावास्यां वा पौर्णमासीं वाऽतिपातयेत्' इत्य- नारम्भरूपातिपातदर्शनानुपपत्तिः । अतः आर्जनं तावत् पुरुषार्थम्, नियमोऽपि अदृष्टार्थत्वेऽपि पुरुषार्थ एव । एवं क्षामवत्यादयोऽपि पुरुषार्था एव, क्रत्वर्थत्वे प्रमाणा- भावादिति सिद्धान्तितम् । तत्र प्रतिग्रहनियमस्य फल- कल्पनाभयात् क्रत्वर्थत्वे हिरण्यधारणादेरपि क्रत्वर्थतापत्तेः, तेन गतार्थत्वाच्चोपेक्षितम् । किञ्च नियमस्य क्रत्वर्थत्वेन भृतिवननादिवत् तदार्जितद्रव्यस्य क्रत्वर्थत्वेऽपि भोजना- द्यर्थमनियतद्रव्योपादानोपपत्तिवन्न्ये प्रमाणाभावात् न सर्वस्य द्रव्यस्य क्षामवत्यादीनां वा क्रत्वङ्गता । अत एव सिद्धान्ते जीवनलोपापादनमप्रसक्तम् । किञ्च अस्तु वा तत्, तथापि अतिपातनस्य अनारम्भरूपत्वे प्रमाणाभावात् यागाकरणस्य अवगमात्रस्यैव अतिपातनत्वाङ्गीकारेण तद्दर्शनोपपत्तिः । अनारम्भरूपत्वेऽपि वा द्रव्यार्जनस्य प्रयोगबहिर्भूताङ्ग- त्वाङ्गीकारेण, प्रयोगान्त पातेऽपि भृतिवननप्रयाजादिवदेव प्रतिप्रयोगमनुष्ठानाङ्गीकारेण अतिपातदर्शने न काचिदनुपपत्तिः ।

वस्तुतस्तु नाय प्रतिग्रहादिनियमविधिः फलकल्पना- वसे, 'प्रतिग्रहसमर्थोऽपि प्रसङ्गं तत्र वर्जयेत्' इति तस्य पापजनकत्वश्रुतेश्च । नापि प्रतिग्रहव्यतिरिक्तोपायान्तरपरि- संख्या, चौर्यादीनां सर्वसाधारणनिषेधेनैव परिसंख्यातत्वात्, शिलोञ्छादीनां मुख्यवृत्तित्वेन परिसंख्यानुप- पत्तेश्च, कृषिवाणिज्यादीनां ब्राह्मणपुरस्कारेण आपद्वृत्तित्व- विधानादेव अनापदि प्रतिषेधाच्च । अतो ब्राह्मणस्य प्रति- ग्रहविधिः शिलोञ्छायसम्भवे दोषाभावमात्रबोधकतया अभ्यनुज्ञाविधिरेव । शिलोञ्छादीनां तु निषिद्धत्वा- भावात् मुख्यवृत्तित्वमेव । सोऽपि च 'त्रीणि कर्माणि जीविका' इत्यादिवचनात् प्रकरणाद्यभावाच्च पुरुषार्थः । 'न्यायागतेन द्रव्येण कुर्यात् कर्माणि वै द्विजः । अन्यायोपगतं द्रव्यं गृहीत्वा यो यजेद्विज । धर्माभासदृशी तु यजते न धर्मफलमश्नुते ॥' इत्यादिवचनेषु मुख्य- गौणसाधारणवृत्त्युपायानां अधिकारितारतम्येन क्रत्वर्थ- त्वस्यापि बोधनात् संयोगपृथक्त्वन्यायेन उभयार्थत्वेऽपि न दोषः । यदि तु शिलोञ्छादेः क्वचित् फलश्रवणं भवेत्, तदा जीवनाश्रितयावज्जीवशिलोञ्छनियमस्यैव फलजनकत्वं

बोध्यम्, न तु प्रतिग्रहस्येति स्वर्थोऽयं विचारः, कृत्वाचिन्तांशेन वा बोध्यः ।

मण्डन— ' नार्जने नियमः क्रतोः । '

शंकर— ' पुमर्थं द्रविणार्जनम् । ' ५.

* द्रव्यार्जनविधिः अयं विनियोगविधिः पुरुषार्थः । बाल. पृ. ११.

* द्रव्यादीनि प्रति यत्रैव क्रियाणां प्रधानत्वम्, तत्रैव तद्भेदनिमित्तापूर्वभेदसिद्धिः । शा. २।१।१।१ पृ. ३७१. * ' द्रव्यादेर्यत्र शेषत्वम्, तत्र नेवास्ति शेषिता । फलयागनराणां तु व्याकारत्वं परस्परम् ॥ ' द्रव्यगुणसंस्कारा हि फलवन्तं यागं प्रति नियोगतः शेषभूताः । सत्यपि स्वाङ्गानि प्रति शेषित्वे, न प्रति नान्तरीयकत्वमभिधीयते । शा. ३।१।३।६ पृ. ६६४.

* द्रव्यादिमत् । क्रियाविशेषणत्वात् ' दध्ना जुहोति ' इति होमक्रियाविशेषणतया दधि द्रव्यं यथा विधीयते, तथा क्रमः क्रियाविशेषणतया विधीयते । के. ५।१।१।१.

* द्रव्यादिशब्दानां निष्पन्नार्थाभिधायिनां फलसाधनत्वयोग्यत्वात् प्राप्नोति फलसंगतिः । वा. २।१।१।१ पृ. ३७५.

* द्रव्यादेशो तद्द्रव्यः । ( द्रव्यस्योपदेशो यत्र यत्रोपदेशः स यागः तद्द्रव्यक एव निश्चेयः ) । के. ७।३।५।१६.

द्रव्यादेशे तद्द्रव्यः श्रुतिसंयोगात् पुरोडाशस्त्वनादेशे तत्प्रकृतित्वात् । ७।३।५।१७ ॥

वरुणप्रघासगतः अवभृथः सौमिकावभृथधर्मग्राहकः इत्युक्तम् । स किं पुरोडाशद्रव्यकः, उत तुषनिष्काशद्रव्यकः इति विचारे सिद्धान्तमाह । द्रव्यादेशे कस्मिंश्चिद्यागे द्रव्यादेशे द्रव्यस्य आदेशे उपदेशे सति स यागः तद्द्रव्यः स्यात् । यत् द्रव्यं यस्मिन् यागे स यागः तद्द्रव्य एव स्यात् । श्रुतिसंयोगात् श्रुत्या उक्तत्वात् । वरुणप्राघासिके, चावभृथे ' वारुण्या निष्कासेन तुषैश्च अवभृथं यन्ति ' इति तुषनिष्कासौ श्रौतमेव द्रव्यम् । तस्मात् तुषनिष्काशद्रव्यक एव वारुणप्राघासिकोऽवभृथः स्यात्, न पुरोडाशद्रव्यकः । पुरोडाशस्तु आतिदेशिकः आनुमानिकः । अतिदेशादुपदेशो बलीयान् । पुरोडाशस्तु अनादेशे । यदि अत्र प्रत्यक्षश्रुतं द्रव्यं न स्यात्, ततः पुरोडाशः स्यात् तत्प्रकृतित्वात् सौमिकावभृथप्रकृतिकत्वात् वारुणप्राघासिकावभृथस्य । तस्मादयमवभृथः न पुरोडाशद्रव्यकः किन्तु तुषनिष्काशद्रव्यक इति सिद्धान्तः । के.

* द्रव्याश्रयेण देवताधर्म बाध्यते अप्राप्तबाधः । शा. ३।३।७।१४ पृ. ८९०.

* द्रव्याश्रितानां स्वातन्त्र्येण अग्रहणम् । बृहती. पृ. २४१.

द्रव्यैकत्वे कर्मभेदात् प्रतिकर्म क्रियेरन् । ३।५।४।१६ ॥

सर्वपृष्ठा नाम काचिदिष्टिः । तत्र विशेषणभेदात् भिन्नाः षट् इन्द्राः देवताः ( ' इन्द्राय राथंतराय, इन्द्राय बार्हताय, इन्द्राय वैरूपाय, इन्द्राय वैराजाय, इन्द्राय शाक्वराय, इन्द्राय रैवताय ' इति वचनात् ) अत्र पेषाविमतेन भिन्नान्येव हवींषि इति वार्तिकम् (पृ. ९९६) । अन्येषां तु मतेन एक एव रथचक्रमात्रः पुरोडाशः । एवं द्रव्यैक्येऽपि देवताभेदात् अवान्तरकर्मभेदः । तत्र स्विष्टकृदादि शेषकार्यं भेदेन कर्तव्यम्, उत तन्त्रेणेति विचारे भेदेन कार्यं इति पूर्वपक्षप्रतिपादनार्थं सूत्रमिदम् । द्रव्यस्य हविर्द्रव्यस्य एकत्वेऽपि देवताभेदेन कर्मभेदात् हेतोः प्रतिकर्म कर्मभिन्नकर्मणि शेषकार्याणि क्रियेरन् ।

अविभागाच्च शेषस्य सर्वान् प्रत्यविशिष्टत्वात् । १७ ॥

सर्वपृष्ठेष्टौ षण्णामिन्द्राणां कृते शेषकार्यं प्रतिकर्म कर्तव्यं इति पूर्वपक्षं पुरोडाशस्थानवर्ती वचनो वारयति । न षट्वारं भेदेन स्विष्टकृदर्थं अवदातव्यम्, किन्तु सकृदेव । शेषस्य अविभागात् अविभक्तत्वात् पुरोडाशस्य सर्वान् षट् इन्द्रान् प्रति शेषस्य अविशिष्टत्वात् एकत्वात् । सर्वेषामेक एव उत्तरार्धः । तस्मात् सकृदवदातव्यम् । के.

* द्रव्यैकत्वे सत्यपि सगुणनिर्गुणभेदात् देवतान्तरम् । आह च ' आचार्यो माधुच्छन्दसमिति द्रव्येऽत्रे

ऽपि दृश्यते । अपेक्षाहेतुभेदेन व्यवहारः पृथक्तथा ॥' वा. २।१।५।१७ पृ. ४२४.

● द्रव्योत्सर्गे अन्येन क्रियमाणे न किञ्चित् यजमानेन कृतं स्यात् इति यजमानः द्रव्योत्सर्गं करोति । वा. ३।७।८।१९.

● द्रव्योद्देश्यक एव प्रतिपत्तिविधिः नियमविधिः । बाल. पृ. २३.

● द्रव्यकर्मणोः एकत्वेऽपि ईषद्भेदोऽपि । द्रव्यमाश्रयः, कर्म आश्रितम् । आश्रयाश्रितयोः भेदाभेदौ अभ्युपगम्य तादात्म्यसंबन्धो वर्ण्यते । तस्मात् द्रव्यभेदेऽपि न कर्म भिद्यते । वि. ६।२।३. ● द्रव्यकर्मणां साध्यवैरूप्यप्रतिपादनप्रतिज्ञा । भा. ४।१।८।२१.

● द्रव्यकर्मसंयोगन्यायः । ६।१।१।१–३॥ पशुमालभेत । पशो द्रव्यस्य निष्प्रयोजनत्वात् तदनुक्त अविवक्षितेप्सितार्थया द्वितीयया कारकसामान्यं लक्षयित्वा तद्विशेषाकाङ्क्षायां सत्यां भूतभव्यसमुच्चारण–द्रव्यकर्मसंयोगन्यायेन करणत्वेन गुणभावे अवगमिते... । वा. ३।१।७।१५. ● द्रव्यकर्मसंयोगन्यायेन अधिकरणतया अपादानतया च अङ्गत्वेन विशेषण गार्हपत्यः इन्द्रोपस्थाने । पूर्वपक्षे । ( स्वर्गकामाधिकरणम् ) । सु. पृ. १०८८. ● 'राजा राजसूयेन स्वाराज्यकामो यजेत ' इत्यत्र राजा द्रव्यकर्मसंयोगन्यायेन क्रियां प्रति शेषभूतः । रत्न. ६।२।१।४.

● न हि द्रव्यकार्येषु गुणो वर्तितुमर्हति । भा. १०।२।२।६.

● द्रव्यगुणयोः प्रधानत्वाप्रधानत्वप्रतीतिस्तु स्वाभाविकी । नित्य हि रूपादिषु स्वप्राधान्येन अभिधीयमानेषु द्रव्य विशेषणत्वेनोच्यते, शुक्लादिषु विशेष्यत्वेन । वा ३।१।६।१२ पृ. ६८४, ● द्रव्यगुणयोः यत्रार्थैकत्वं श्रूयते तत्र द्रव्यगुणौ एकस्मिन् पदार्थे नियम्येयाताम् । भा. ३।१।६।१२ । ' यत्र द्रव्यगुणैकार्थ्यं श्रवणादेव गम्यते । अन्योन्यनियमस्तत्र तयोः स्वात्यादिवद्भवेत् ॥ ' वा. पृ. ६९१.

● द्रव्यगुणादिवत् कर्मस्यापि पदार्थविशेषणत्वेन विधानम् ( दध्ना जुहोति, अरुणया एकहायन्या क्रीणाति, शुक्लानां व्रीहीणाम् ) । भाट्ट. ५।१।१ पृ. १५४.

● द्रव्यगुणशब्दाः नामानि इत्युच्यन्ते । भा. २।१।१।३, ● द्रव्यगुणशब्देभ्यो द्रव्यगुणप्रत्ययो न भावनायाः अतस्ते न भावशब्दाः । २।१।१।१ पृ. १०५.

● द्रव्यगुणसंस्काराः फलवन्तं यागं प्रति नियोगतः शेषभूताः, तत्रापि स्वाङ्गानि प्रति शेषित्वे तं प्रति नास्ति इत्यभिधीयते । वा. ३।१।१।६ पृ. ६६४.

● द्रव्यगुणसंस्कारेषु बादरिः । ३।१।३।३॥

द्रव्येषु व्रीह्यादिषु, गुणेषु अरुणत्वादिषु, संस्कारेषु अवघातादिषु एव शेषत्वं यागं प्रति वर्तते, न तु फलपुरुषकर्मस्विव शेषत्वं शेषित्वं चेत्युभयम् । इति बादरिराचार्यो मन्यते स्म ।

कर्माण्यपि जैमिनिः, फलार्थत्वात् । ४ ॥

न द्रव्यगुणसंस्कारा एव शेषलक्षणलक्ष्याः किन्तु कर्माण्यपि यागयागादीनि । फलार्थत्वात् फलसाधकत्वात् कर्मणाम् । इति जैमिनिराचार्यो मन्यते । न केवलं द्रव्यगुणसंस्काराणामेव शेषत्वं किन्तु कर्मणामपि शेषत्वं इति ।

फलं च पुरुषार्थत्वात् । ५ ॥

कर्मवत् फलमपि शेषभूतम्, तस्य पुरुषार्थत्वात् । पुरुषोपभोगार्थं हि फलम् । एवं च फलमपि शेषलक्षणलक्ष्यम् । इति जैमिनिराचार्यो मन्यते । न केवलं द्रव्यगुणसंस्काराणामेव शेषत्वं किन्तु फलस्यापि शेषत्वमिति ।

पुरुषश्च कर्मार्थत्वात् । ६ ॥

कर्मवत् फलवच्च पुरुषोऽपि शेषभूतः, कर्मार्थत्वात् औदुम्बरीसंमानादिकर्मार्थः सन् । इति जैमिनिराचार्यो मन्यते । न केवलं द्रव्यगुणसंस्काराणामेव शेषत्वं किन्तु पुरुषस्यापि इति । के.

● द्रव्यघटितशास्त्रस्य देवताघटितशास्त्रापेक्षया बलीयः । भा. ८।१।१७।२२–२४.

● द्रव्यचिकीर्षया यत्र गुणभावः तत्र नापूर्वभेदः प्रतिपत्तव्यः । वा. २।२।४।१०.

* द्रव्यदेवतेन हि यागोऽभिव्यज्यते । भा. ८।१।२।१६, * द्रव्यदेवतयोरभावः चोदनासु अव्यक्तता । ८।१।२।१६. * द्रव्यदेवतयोर्यागसंपादनद्वारा अन्वयः सांप्रदायिकैरुक्तः । मीन्या. * द्रव्यदेवतयोः संनिपाते द्रव्यस्य बलीयस्त्वम् । भाट्ट. ८।१।८.

* द्रव्यदेवताऽन्वयः देवतोद्देशपूर्वकद्रव्यत्यागाख्यक्रियागर्भः । सु. पृ. १५२१.

* द्रव्यदेवताऽऽदिभिः विकृतावुपदिष्टैः प्राकृतद्रव्यदेवताऽऽदीनां बाधः । ( काम्यासु विकृतिषु इत्यधिकरणम् ) । भा. १०।७।१७।५८–६०.

* द्रव्यदेवतोभयश्रवणे सति यागविधिः स्वीकर्तव्यः । 'वायव्यं श्वेतमालभेत' 'सौर्यं चरुं निर्वपेत्'। द्रव्यदेवतोभयसंयोगः यागविधेः प्रयोजकः । के. २।३।५। १२–१५.

* द्रव्यदेवताक्रियं यजतिचोदना । ( सूत्रम् ) यजतिचोदना तावत् द्रव्यदेवताक्रियम् ( भाष्यम् ) । के. ४।२।१२।२७.

* द्रव्यदेवतायुक्तानां यागान्तरत्वम् । भा. २।२। ५।१२–१५.

* द्रव्यदेवतालक्षणस्य रूपस्य भिन्नत्वात् कर्मान्तरम् । चातुर्मास्यवैश्वदेवपर्वणि 'सा वैश्वदेव्यामिक्षा, वाजिभ्यो वाजिनम्' इत्यत्र । वि. २।२।९.

* द्रव्यदेवतासंबन्धो हि यज्यर्थः । भा. १०।२। १०।४२, * द्रव्यदेवतासंबन्धेन पञ्चशारदे कर्मान्तरं गम्यते । यथा च पशुगणेष्वाम् । ६।५।१।१.

* द्रव्यदेवतासंबन्धन्यायेन क्रियाकारकसंबन्धस्य फलसंबन्धे प्राप्ते... ( वैश्वदेवीशब्देनैव संनिहितस्य द्रव्यविशेषस्य देवताऽन्वये अभिहितेऽपि आमिक्षाशब्दो विशेष्यान्वयार्थः वदत् इति ) । वा. २।२।११।२६ पृ. ५५१.

* द्रव्यदेवतासंबन्धप्रतिपादकतद्धितान्तपदाक्षरसाम्यं चोदनालिङ्गं अतिदेशकरम् । 'आग्नावैष्णवमेकादशकपालं निर्वपेत्' इत्येतेषां पञ्चाक्षरतद्धितान्तपदवत्त्वं चोदनालिङ्गम् । बाल. पृ. १२०, * द्रव्यदेवतासंबन्धप्रतिपादकतद्धितान्तपदाक्षरसाम्यं प्रकृतिलिङ्गम् । पृ. ११३.

* द्रव्यदेवतासंबन्धसमुदाययोर्विधौ 'संबन्धो हि विधीयमानः संबन्धिनं तावत् आक्षिपेत् धात्वर्थे पुनः स विधातव्य एव संबन्धी, अन्यथा संबन्धस्यैव संबन्धी शेषः स्यात् न क्रियायाः' इति आधाराग्निहोत्राधिकरणवक्ष्यमाणन्यायेन (वा. २।२।५।१६ पृ. ५०२) द्रव्यदेवतयोरपि विधापत्तेः वाक्यभेदः । सु. पृ. ७४२.

* द्रव्यदेवतासंयोगस्तु न कथंचिद् यागाद्विना सिध्यति । वा. २।२।६।१८ पृ. ५१६.

* द्रव्यनाशे दर्शपूर्णमासयोः आज्येन न समापनम्, वचनात् ( स्विष्टकृतः ) । भाट्ट. ४।१।७.

* द्रव्यनियमविधिः प्रतिनिधिनियमेन बाध्यते । बाल. पृ. १४४.

* द्रव्यन्यायः । द्रव्याधिकरणम् ३।१।५।११ इत्यत्र, द्रव्यसंख्याहेतुसमुदायन्यायः ३।१।५।११–१९ इत्यत्र च द्रष्टव्यः । तथा च द्विविधोऽयम् । के. * संख्यासमुदाययोरपि द्रव्यन्यायेनैव अप्रयोजकत्वं द्रष्टव्यम् । द्रव्यसंख्याहेतुसमुदायन्याय एवायम् । सोम. ३।१।५.

* द्रव्यपदार्थो हि अद्रव्याश्रितो भवति परमाण्वाकाशादिः । अनेकद्रव्याश्रितोऽपि भवति घटादिः । ऋजु. पृ १९८.

* यदा शब्दः केवलगुणवचनतायां प्रवर्तमानः नाम्येन संबन्धं लभते, तदा अनुपदेशकरणात् आनर्थक्यं मा भूत् इति द्रव्यपरतामापद्यते । भा. ३।१।६।१२ पृ. ६८६.

* द्रव्यपरिच्छेदद्वारा आरुण्यस्य क्रयसंबन्धो लभ्यः । वा. ३।१।२।३ पृ. ७५२.

* द्रव्यप्रतिनिधिनियमविधिः प्रत्यक्षविधिः 'यदि सोमं न विन्देत् पूतीकानभिषुणुयात्' इत्यादि... 'यदि सत्राय दीक्षितानां प्रमीयेत योऽस्य नेदिष्ठः स्यात् तं तस्य स्थाने दीक्षयित्वा' इति । नेदिष्ठशब्दस्य यौगिकत्वेन द्रव्यवाचित्वात् । बाल पृ. २३.

* 'द्रव्यप्रयुक्त्वाभावात् वाजिनयागस्य लोपः' इति न्यायः । तेन वाजिनयागात् पूर्वं वाजिनापचारे पुनर्दध्यानयनेन वाजिनं न संपादनीयम् । स्विष्टकृत्स्तु आज्येनानुष्ठानम् । सोम. ४।१।९.

* द्रव्यभेदेन संख्याभेदेन वा अपूर्वान्तरं न भवति। किं तर्हि? प्राकृती संख्या प्राकृतं च द्रव्यमपनीयते। उपकारस्तु स एव। टुप् १२।१।१४ पृ. २२२१.

द्रव्यभेदेऽपि कर्म न भिद्यते ॥

क्रियाणामाश्रितत्वाद् द्रव्यान्तरे विभागः स्यात्। ६।३।३।११॥

भाष्यम्— दर्शपूर्णमासयागः पुरोडाशेनोक्तः। स च पुरोडाशो व्रीहिमयः कर्तव्य इति श्रूयते। तत्रैतच्चिन्त्यते यदि नीवारमयेन पुरोडाशेन यागः क्रियेत, किं स एव यागः स्यात् उतान्य इति। किं प्राप्तम्? द्रव्यान्तरे विभागः स्यात्। अन्यो यागः। कुतः? आश्रितत्वात्। आश्रयभेदाद्धि गम्यते विशेषः। अयमन्यो नीवाराश्रयो व्रीह्याश्रयादिति। आश्रयभेदस्तावत् विस्पष्ट एव। तद्भेदात् रूपमपि भिन्नं गम्यते। तस्मादन्यो यागो द्रव्यान्तरे इति।

अपि वाऽव्यतिरेकाद् रूपशब्दाविभागाच्च गोत्ववदैककर्म्यं स्यान्नामधेयं च सत्त्ववत्। १२॥

भाष्यम्— अपिवेति पक्षव्यावृत्तिः। ऐककर्म्यं स्यात् द्रव्यान्तरेऽपि। यदा क्रिया भवति चलनं पतनं वा, तदाऽपि तावानेव सोऽर्थः। न च कश्चित् व्यतिरिक्तो विशेषो हीनो वा। नो खल्वपि अन्यदेव रूपम्। न च शब्दान्तरं वाचकम्। ननु आश्रयभेदो विस्पष्टः। उच्यते। भिन्नमेव वयमाश्रयं प्रतिजानीमहे, न तु तद्भेदादाश्रितस्य भेदः, अन्यत्वात्। न हि क्वचित् वासांसि वा भिन्ने तद्भेदात् पुरुषभेदो गम्यते। सोऽपि तस्य आत्मा भिन्न इति चेत्, नैवमेवम्। विशेषानुपलम्भनात्, एवं शक्यं वक्तुम्। न चास्य विशेष उपलभ्यते।

ननु अयमेव विशेषः, यत् एको विनष्टः एको वर्तते। न विनष्ट इति यदुच्यते, तच्च। प्रमाणस्य अनुपलम्भनात् तत्त्वे प्रमाणं नास्ति। तस्मात् विनष्टः। न च प्रत्यभिज्ञायते (तद्द्रव्यातिरिक्तं, इत्यर्थः कश्चित्) भेदानुपलम्भनात् (विनष्टस्य रूपात् भेदेन स्थितस्य रूपानुपलम्भनात् इत्यर्थः)। कथं तर्हि चलतीति प्रत्यय इति चेत्, उच्यते। देशान्तरे संप्रतिपत्तिदर्शनात्। तत् देशान्तरं गच्छन् आगच्छंश्च चलतीत्युच्यते। उत आगन्ताऽपि प्रत्ययः, देशान्तरमपि (प्रत्यक्षम्)। तेन गतः इति चोच्यते, आगतः इति चोच्यते। ('ननु अयमेव' इत्यारभ्य ग्रन्थः विनष्टाविनष्टप्रत्ययभेदात् क्रियाभेदप्रतिपादनपरः)।

अन्यं विनष्टादविनष्टः अन्यः। योऽपि तु असामान्यः, सोऽपि यजतिशब्दगम्य एव। यजतिसामर्थ्यं न भिद्यते। न च शब्देन नोच्यते। तस्मात् योऽपि नीवारैर्यागं कुर्यात्, तेनापि चोदितमेव कृतम्। चोदितं च कुर्वतः ईप्सितं भवति, नापूर्वकृतम्। नामधेयं च दर्शयति। दर्श इति वा पूर्णमास इति वा अयमेव सामान्यस्य नामधेयम्, न व्यक्तीनाम्। किं प्रयोजनं चिन्तायाः? उत्तरेणाधिकरणेन एतद्विचार्यते।

टुप्— (अतः प्रभृति आपादपरिसमाप्तेः यथाशक्तिप्रयोगगतविशेषचिन्ता (पूर्वाधिकरणं तु यथाशक्तिप्रयोगस्यैव अविप्रकृष्टनिरूपणमेतया शेषभूतम्। सिद्धान्तमाह–) अपि वाऽव्यतिरेकात्। दर्शपूर्णमासौ यथा कालान्तरदेशान्तरपुरुषान्तरेषु क्रियमाणौ नातिरिच्येते, न (चापि) न्यूनौ भवतः। एवं द्रव्यान्तरेऽपि (अन्यूनानतिरिक्तावेव। अनेन 'अव्यतिरेकात्' इति सूत्रपदं विवृतम्। रूपाविभागं विवृणोति–) न च द्रव्यान्तरेऽपि 'तावेव दर्शपूर्णमासौ' इत्यस्य प्रत्ययस्य प्रत्यक्षावगतस्य बाधोऽस्ति, शब्दान्तरादीनाम् (भेदकारणानाम्) अभावात्। नहि नीवारैः क्रियमाणस्य शब्दान्तरादि–(निमित्तो–)भेदः अवधार्यते, येन 'सदेवेदम्' इति (प्रत्यभिज्ञा–)प्रत्ययो बाध्येत। (शब्दाविभागं विवृणोति–) द्रव्यान्तरेणापि च क्रियमाणस्य (क्रियमाणे इति मुद्रिते पाठः) दर्शपूर्णमासाद्यभिधेयता अस्त्येव। यथा नैव नैमित्तिकप्रयोगात् नैत्यिकप्रयोगो भिद्यते। तेन (भेदाभावेन) तौ दर्शपूर्णमासाभिधेयता न जहीतः। तथा तत्सामान्यात् नीवारैरपि क्रियमाणयोः अस्त्येव (तदभिधेयता)। तस्यैव सामान्यं फले चोद्यते इति चेत्, तदयुक्तम्। नहि शासनादिवत् (आसनादिभिरिव योज्यम्) सामान्यं अत्राभिव्यज्यमानमुपलभ्यते (तस्माच्च सामान्यं फले विधीयते) किं तर्हि? षड् आग्नेयादयो व्यक्तिविशेषाः सप्रकाराः फले विधीयन्ते।

दर्शपूर्णमासशब्दवाच्यायाश्च व्यक्तय एव। अतो द्रव्यान्तरेणापि (नीवारादिना) क्रियमाणे (कर्मणि) व्यक्त्यन्तरबुद्धिर्नोपजायते।

शा— अतः परं अतिप्रसङ्गनिराकरणेन नैमित्तिके स्थापितस्य यथाशक्तिप्रयोगस्य शेषत्वेन प्रतिनिधिविचारः प्रस्तूयन्ते। तदुपोद्घातत्वेन तु इदं चिन्त्यते। तत्र 'द्रव्यस्यैव क्रिया नाम रूपं नार्थान्तरं ततः। तदात्मनश्च तद्भेदे न भवेद् भिन्नता कथम्॥' उच्यते, 'तदात्मनोऽपि स्वस्यैव व्यतिरेकः क्रियात्मनोऽपि। जातिवद् गुणवद्वापि तद्भेदेऽपि न भिद्यते॥' अतो द्रव्यान्तरेऽपि क्रियाभेदाभावात् सिद्धः प्रतिनिधिः।

सोम— सूत्रार्थस्तु— क्रियाणां द्रव्याव्यतिरेकात् द्रव्यान्तरे विभागो भेदः स्यादिति।

वि— 'नीवारादिद्रव्यभेदात् कर्मान्यत् स्यात् तदेव वा।, द्रव्यकर्मैक्यतः पूर्वं, व्यक्तेरभेदतोऽन्तिमः॥'

भाट्ट— एवं यथाशक्त्युपपत्त्ये निरूपिते तच्छेषत्वेन प्रतिनिधिविचारे कर्तव्ये तदुपोद्घातत्वेनेदं विचार्यते। तत्र मूले तावत् द्रव्यस्य क्रियातोऽत्यन्तभेदाभावात् द्रव्यभेदे कर्मभेदापत्तेः न नीवाराद्युपादाने विहितक्रियासिद्धिरिति पूर्वपक्षिते अत्यन्तभेदाभावेऽपि अत्यन्ताभेदस्यापि अभावात् कर्तृदेशकालादिवत् द्रव्यभेदेऽपि तदेवेदं यजनमित्यादिप्रत्यभिज्ञाबलात् क्रियैक्यप्रतीतेः प्रतिनिध्युपादानेऽपि न क्षतिः। तत्र च जातीतत्त्ववर्तिनी एकैव यागव्यक्तिः अभिव्यक्तिमात्रं तु भिद्यते। अथवा शब्दान्तरादिप्रमाणैरेव व्यक्तिभेदः, द्रव्यदेशकालकर्तृयक्त्यादिभिस्तु तस्या एव व्यक्तेरभिव्यक्तिभेदमात्रम्। अथवा मास्तु तथापि व्यक्तिभेदः शब्दान्तरादिप्रमाणैश्च आग्नेयत्वादिजातय एव भिद्यन्ते इति सिद्धान्तितम्।

तत्र द्रव्याश्रितत्वेऽपि क्रियायास्तद्भेदे भेदाभावस्य शङ्कितुमशक्यत्वात् नानन्यैकसिद्धान्ते चापूर्वोत्पत्तेः। तस्याभिव्यक्तिजन्यत्वे च यत्किंचिदे तत्सम्भवात्ऽऽपत्तेरुपेक्षितम्।

अत एवं विचारो वाच्यः— सत्यपि शब्दान्तरादिप्रमाणैः आग्नेयत्वादिरेवास्ये विधेयतावच्छेदकविजातीययागत्वावच्छिन्नं प्रति व्रीहित्वादिनैव कारणतावगतेः, तस्यैव तज्जात्यभिव्यञ्जकत्वावसायात् न नीवाराद्युपादाने तज्जात्यवच्छिन्नसिद्धिः। इति प्राप्ते, यद्यपि तज्जात्यवच्छिन्नं प्रति तत्त्वादिना कारणत्वे, न तस्य प्रत्येकं तज्जात्यभिव्यञ्जकत्वम्, व्रीहित्वादिना कर्मान्तरेऽपि कारणत्वेन व्यभिचारात्। अपि [illegible] सामग्रीत्वेनैव। सामग्री च यागस्य व्रीहिघटिता। अयागस्य तु तदघटिता। अतश्च व्रीह्यभावे नीवाराद्युपादानेऽपि विजातीययागत्वावच्छिन्नं जायते एव। फलं पर नित्ये एव तारतम्येन जायते। काम्ये तु आरम्भोत्तरमशक्तस्य शिष्टविगर्हणदोषपरिहारार्थं समापनेऽपि न फलोत्पत्तिः। सर्वाङ्गोपसंहारेणैव तदुत्पत्तेः। प्रयोगसमाप्त्यकरणे दोषमात्रोत्पत्तेः। करणे फलान्तराभावात् नापूर्वोत्पत्तिरिति केचित्। नैमित्तिकत्वाविशेषात्तु तत्रापि पापक्षयकल्पनेऽपि तत्रापि तारतम्यमित्यपि ध्येयम्।

मण्डन— 'कर्म नान्यत् प्रतिनिधौ।'

शंकर— 'कर्माभेदो द्रव्यभेदे (अपि)।'

● द्रव्यरहितस्याप्यधिकारः कर्मसु, द्रव्यार्जनसंभवात्। भा. ६।१।८।३९–४०.

● द्रव्यवचनः शिष्टप्रशब्दः। संकर्ष. ४।३।१३, ● द्रव्यवचनः बृहतीशब्दः। शब्दो द्रव्यं इत्यर्थः। ४।४।४. ● द्रव्यवचनत्वं पिङ्गाक्ष्यादीनाम्। वा. ३।१। ६।१२ पृ. ६७९.

☐ द्रव्यवच्चोपचार इति न्यायः। द्रव्यवदुपचाराः प्राप्नुवन्ति। उपचाराः व्यवहाराः। यथैकेन घटेन उदकाहरणादिक्रिया युगपदनेको न करोति एवं प्रकृतेऽपि बोध्यमिति प्रत्यक्षाह्निके इति। साहस्री. ८२७.

● द्रव्यवत्त्वं स्त्रीणामपि। 'अर्थेन च समवेतत्वात्' (६।१।३।१४)। एवं दानकाले संवादः 'धर्मे चार्थे च कामे च नातिचरितव्या' इति भाष्यम्। 'स्ववत्तामपि दर्शयति' (६।१।३।१६) 'पत्नी वै पारिणाह्यस्येष्टे' (इति श्रुतेः) भाष्यम्। के.

● 'द्रव्यविकारं तु पूर्ववदर्थकर्म' इति न्यायः. बाधनीसमुच्चयन्यायः इति हिन्दी दृष्टव्य.। के.

☐ द्रव्यविकारं तु पूर्ववदर्थकर्म स्यात् तथा विकल्पे नियमः प्रधानत्वात्। १२।४।६।१०॥

पशुयागे पत्नीसंयाजेषु जपत्नीनां समुच्चयो विकल्पो

वेति विचार्यते । द्रव्यविकारं द्रव्यस्य पशोः विकारः अवयवः जाघनी यस्मिन् तत् द्रव्यविकारं पत्नीसंयाजनं कर्म पूर्ववत् पूर्वस्मिन् इव प्रकृतौ दर्शपूर्णमासयोरिव अर्थकर्म स्यात् न प्रतिपत्तिकर्म । एवं च तथा प्रकृतिवत् विकल्पे आज्येन सह जाघन्याः विकल्पे प्राप्ते 'जाघन्या पत्नीः संयाजयन्ति' इति अग्नीषोमीये पशौ पुनःश्रुत्या जाघन्याः नियमः स्यात् । कर्मणः प्रधानत्वात् जाघन्याश्च गुणत्वात् । तस्मात् जाघन्या पत्नीसंयाजनं अग्नीषोमीये पशाविव पशुगणेऽपि अर्थकर्म । अर्थकर्मणि च एकार्थीनां जाघनीनां समुच्चयो न युक्तः । तस्मात् पशुगणे पत्नीसंयाजेषु जाघनीनां विकल्पः इति सिद्धान्तः ।

द्रव्यत्वेऽपि समुच्चयो, द्रव्यस्य कर्मनिष्पत्तेः, प्रतिपत्तु कर्मभेदादेवं सति यथाप्रकृति ॥११॥

पत्नीसंयाजे कर्मणि जाघनी हविर्द्रव्यम्, इति जाघनी गुणभूता । एवं पशुगणे जाघनीनां द्रव्यत्वेऽपि गुणत्वेऽपि समुच्चय स्यात् । द्रव्यस्य जाघन्या कर्मनिष्पत्तेः कर्मणा विशसनेन निष्पत्तेः उत्पन्नत्वात् प्रयोजनापेक्षायां पत्नीसंयाजनं प्रयोजनम् । पशुगणे च प्रतिपत्तु कर्मणो भेदात् सम्पन्नस्य पशोः विशसनेन निष्पन्ना जाघनी पत्नीसंयाजार्था स्यात् । एवं सति यथाप्रकृति अग्नीषोमीयपशुवत् इह भविष्यति । तस्मात् अर्थकर्मत्वेऽपि जाघनीनां समुच्चयः इति पूर्वः पक्षः ।

कपालेऽपि तथेति चेत् । १२ ॥

कश्चित् पूर्वपक्षं प्रतिबन्द्या आक्षिपति । कपालेऽपि तथा जाघनीवत् समुच्चय स्यात् । विशसनकर्मनिष्पन्नत्वात् चेत् जाघनीनां समुच्चयः, तदा 'पुरोडाशकपालेन तुषानुपवपति' इति प्रयोगकर्मणा कपालं प्रयुज्यते तस्यापि तुषोपवपनं प्रयोजन मभिनुपतति, इति पुरोडाशगणे प्रतिपुरोडाशं कपालेन तुषोपवपनं कर्तव्यं प्राप्नोति । इति तत्रापि समुच्चयः स्यात् । अथ यदि कपाले न समुच्चयः, तर्हि जाघन्यामपि मास्तु ।

न, कर्मणः परार्थत्वात् । १३ ॥

आक्षेपं च पूर्वपक्षं चोभयं प्रतिक्षिपति सिद्धान्ती । कपाले प्रयोगकर्मणः परार्थत्वात् पुरोडाशश्रपणार्थत्वात् । तथा च तुषोपवपनार्थं कपालानामुत्पत्तेरभावात् न तेषां समुच्चयः । एवं जाघनीषु विशसनकर्मणः परार्थत्वात् हृदयादिनिष्पत्त्यर्थत्वात्, तथाच जाघन्यर्थं विशसनाभावात् तासामनुनिष्पन्नत्वात् न जाघनीनां समुच्चयः ।

प्रतिपत्तिस्तु शेषत्वात् । १४ ॥

पूर्वपक्षी आह । जाघन्या पत्नीसंयाजनं न अर्थकर्म, प्रतिपत्तिस्तु एषा । शेषत्वात् जाघन्याः उपयुक्तपशोः शेषत्वात् । पशुना यागे निर्वर्तिते शेषभूता जाघनी पत्नीसंयाजेषु निक्षिप्यते । तस्माज्जाघनीकर्म प्रतिपत्तिः । तस्मात् पशुगणे पत्नीसंयाजेषु जाघनीनां समुच्चयः ।

शृतेऽपि पूर्ववत्त्वात् स्यात् । १५ ॥

प्रतिबन्द्या कश्चित् शङ्कते । शृतेऽपि 'शृते चरुम्', 'दधनम्' इति शृतेऽपि दधन्यपि च प्रतिपत्तिः स्यात् । पूर्ववत्त्वात् अन्यपूर्वकत्वात्तयोः । शृतं दधि च दर्शे इन्द्रायोत्पन्नम् । तयोः चन्द्रोदयेन निमित्तेन विष्णुं शिपिविष्टं प्रति गमनम् । तत् गमनं प्रतिपत्तिः स्यात् । यदि तदिष्टम्, तदा जाघन्याः पशुयागपूर्वकत्वेऽपि पत्नीसंयाजेषु न प्रतिपत्तित्वम् । तस्मान्न समुच्चयः ।

विकल्पे त्वर्थकर्म नियमप्रधानत्वाच्छेषे च कर्मकार्यसमवायात्, तस्मात् तेनार्थकर्म स्यात् । १६ ॥

अत्र सूत्रे द्वौ विभागौ, तत्र 'विकल्पे तु' इत्यादिना 'प्रतिपत्तिस्तु शेषत्वात्' (१४ सू.) इत्यस्य निरासः । 'शेषे च' इति द्वितीयेन विभागेन 'शृतेऽपि' (१५ सू.) इत्यस्य निरासः । दर्शपूर्णमासयो जाघन्या आज्येन सह विकल्पः । पशौ च तथैव विकल्पे प्राप्ते, 'जाघन्या पत्नीः संयाजयन्ति' इति अग्नीषोमीयपशुगतपुनःश्रुतेः नियमप्रधानत्वात् । पुनःश्रुत्या आज्यं निवर्त्य जाघन्या नियमः कृतः । सा च पुनःश्रुतिः जाघन्याः अर्थकर्मत्वं न बाधयति । इति जाघन्याः पत्नीसंयाजनं अर्थकर्म । ततश्च पशुगणे जाघनीनां विकल्पः । अथ सूत्रे उच्यते । यदुक्तं शृतस्य इन्द्रार्थमुत्पन्नस्य विष्णुं प्रति गमनं प्रतिपत्तिरिति तत्र । शेषे च कर्मकार्यसमवायात् । य उपयुक्तस्य शेषः तस्मिन् संस्कारात्मकं कर्मकार्यं समवैति । न च शृतं कस्मिंश्चिदुपयुक्तम् । यस्मै यागाय तदुत्पन्नं

सः चन्द्राभ्युदयेन निमित्तेन नैव निर्वर्त्यते। तस्मात् तेन श्रुतेन अर्थकर्म स्यात्, न प्रतिपत्तिः। अर्थकर्मत्वाच्च पशुगणे पत्नीसंयाजेषु आपत्नीनां विकल्पः इति सिद्धान्तः। के.

* द्रव्यविधयः सर्वे नियमविधयः इति मीमांसकमर्यादा। रमायनम्. ४०.

द्रव्यविधिसंनिधौ संख्या तेषां गुणत्वात् स्यात्। १०।३।११।३९॥

ज्योतिष्टोमे 'गौश्च अश्वश्च अश्वतरश्च गर्दभश्च अजाश्च आवयश्च व्रीहयश्च यवाश्च तिलाश्च माषाश्च तस्य द्वादशशतं दक्षिणा' इति श्रुतम्। द्वादशाधिकं शतं द्वादशशतम्। द्रव्यविधिसंनिधौ द्रव्याणां गवादीनां विधेः संनिधौ विधीयमानानां द्रव्याणां संनिधौ श्रूयमाणा द्वादशाधिकशतरूपा संख्या तेषां गवादीनां प्रत्येकं स्यात्। द्वादशशतं गावः, द्वादशशतं गर्दभाः, द्वादशशतं माषाः इत्येवम्। गुणत्वात्। गवादीनां प्रधानत्वात्, संख्यायाश्च गुणत्वात्, प्रतिप्रधानं गुणावृत्तिः इति न्यायात्। तस्मात् प्रतिद्रव्यं द्वादशशतसंख्याऽन्वयः कर्तव्यः इति पूर्वः पक्षः।

समत्वात्तु गुणानामेकस्य श्रुतिसंयोगात्॥ ४०॥

पूर्वपक्षं सूत्रेण प्राप्तं निषेद्धुं तुशब्दः। गुणानां समत्वात् गवादयोऽपि दक्षिणायाः अङ्गाः संख्याऽपि। तस्मात् उभयोरपि दक्षिणागुणत्वेन समत्वात् न संख्यायाः गवादिना अन्वयः। ततो न प्रत्येकं संख्याऽन्वयः। तस्मात् एकस्य कस्यचित् द्वादशशतसंख्यान्वयः। संख्यायाः दक्षिणया अन्वयस्तु श्रुतिसंयोगात्। द्वादशशतशब्दस्य दक्षिणाशब्देन सांनिध्यात्। तस्मात् एकं किञ्चित् द्रव्यं द्वादशाधिकशतसंख्याकं देयम्। इति द्वितीयः पूर्वपक्षः।

यस्य वा संनिधाने स्याद्वाक्यतो ह्यभिसंबन्धः॥ ४१॥

वाशब्दः पूर्वसूत्रोक्तद्वितीयपूर्वपक्षनिरासार्थः। ज्योतिष्टोमे गवाश्वादीनां तिलमाषान्तानां दशानां द्रव्याणां यस्य कस्यचित् द्वादशाधिकशतसंख्याकत्वं इति न युक्तम्। किन्तु यस्य द्रव्यशब्दस्य संनिधाने संख्याशब्दो वर्तते तस्य सा संख्या स्यात्। माषशब्दस्य च संनिधाने द्वादशशतं इति शब्दः श्रूयते। तस्मात् द्वादशाधिकशतसंख्या माषाणामेव स्यात्। हि यस्मात् वाक्यतः अभिसंबन्धः एकवाक्यतया संनिहितस्य माषशब्दस्यैव संख्यायामन्वयः। इति तृतीयः पूर्वपक्षः।

असंयुक्तास्तु तुल्यवदितराभिर्विधीयन्ते, तस्मात् सर्वाधिकारः स्यात्॥ ४२॥

तृतीयं पूर्वपक्षं सूत्रेण प्राप्तं निरसितुं तुशब्दः। संख्या केवलैर्माषैः असंयुक्ता, न संयुक्ता। इतराभिः द्रव्यश्रुतिभिः माषा अपि तुल्यवदेव विधीयन्ते। गौश्च अश्वश्च इति प्रत्येकं चशब्दः श्रुतौ पठ्यते, तेन सर्वेषामेव द्रव्याणां तुल्य एव संबन्धो भवति संख्यया। तस्मात् सर्वाधिकारः स्यात् सर्वेषां दशानामपि द्रव्याणां अधिकारः स्यात्। तस्मात् सर्वव्यापिनी संख्या। यस्मात् इतराभिः द्रव्यश्रुतिभिः तुल्यवत् माषा विधीयन्ते। तस्मात् संख्यायां सर्वाधिकारः स्यात्। तस्मात् सर्वाणि गवादीनि माषान्तानि दश द्रव्याणि मिलित्वा द्वादशशतसंख्याकानि भवेयुः। इति चतुर्थः पूर्वपक्षः।

असंयोगाद्विधिश्रुतावेकजाताधिकारः स्याच्छ्रुतिकोपात् क्रतोः॥ ४३॥

चतुर्थं पूर्वपक्षं सूत्रेण प्राप्तं निरस्यन् पञ्चमं पक्षमाह। विधिश्रुतौ विधिवाक्ये असंयोगात् दशद्रव्यसमुदायस्य संख्यया असंयोगात् समुदायप्रबोधकपदाभावेनासंबन्धात् एकजाताधिकारः स्यात् एकस्य जातस्य जातेः एकजातीयस्यैव अधिकारः स्यात् संख्यायाम्। क्रतोः श्रुतिकोपात्। 'तस्य दक्षिणा' इत्यत्र तस्य इति पदस्य क्रतोरित्यर्थः। तस्य च एकवचनान्तत्वम्। 'गौश्चाश्वश्च' इत्यत्रापि एकवचनान्तत्वमेव। तत्र समुदायस्य संबन्धे स्वीकृते एकवचनश्रुतेः कोपः स्यात् विरोधः स्यात्। एकजातीयस्यान्वये तु कोपो न स्यात्। तस्मात् गौश्चाश्वश्च इत्यनेन, तस्येति क्रतुवाचकेन च उक्तस्य एकत्वस्य अविरोधाय समुदायान्वयो न स्वीकर्तव्यः। किन्तु एकजातीयस्यैव संख्यायामन्वयः स्वीकर्तव्यः। इति पञ्चमः पक्षः।

शब्दार्थश्चापि लोकवत्॥ ४४॥

ज्योतिष्टोमे गवाश्वादीनि तिलमाषान्तानि दश द्रव्याणि दक्षिणात्वेन उक्तानि। तत्र च द्वादशाधिकशतसंख्या

श्रुता । कस्यचित् एकजातीयस्य स्यात् इति पञ्चमः पक्ष उक्तः । तत्र युक्त्यन्तरमाह । अपिच लिङ्गोत्थैः । शब्दार्थैः शब्दादर्थस्य प्रत्ययः एकजातीयस्यैव भवति असति बाधके । लोकवत् यथा लोके 'शतमश्वा दीयताम्' इत्युक्ते एकजातीयानां शतं प्रतीयते न भिन्नजातीयानां तद्वत् । तस्मात् एकजातीयस्यैव कस्यचित् संख्यायामन्वयः ।

सा पशूनामुत्पत्तितो विभागात् । ४५ ॥

इयं संख्या कस्यचित् एकजातीयस्य इति पूर्वसूत्राभ्यामवगतम् । एकजातीयस्यापि किं पशूनाम्, उत धान्यानां इति विचारे आदितः षष्ठ पक्षमाह । सा द्वादशाधिकशतसंख्या गवादीनां पशूनां स्यात्, न तु व्रीह्यादीनां धान्यबीजानाम् । उत्पत्तितो विभागात् । स्वाभाविकेन विभागेन पशव. व्यवहारेषु संख्यायन्ते पञ्चभिरश्वैः क्रीतः, पञ्चभिर्गोभिः क्रीतः इति । नहि व्रीह्यादिबीजानां तथा व्यवहार । तस्मात् सा संख्या पशूनां स्यात्, न धान्यानाम् ।

अनियमोऽविशेषात् । ४६ ॥

अथ पशूनामपि कस्य पशुविशेषस्येयं संख्या इति विचारे, आदित. सप्तम पक्षमाह । अविशेषात् विशेषस्य अनुक्तत्वात् अनियमः स्यात्, गवां वा अश्वानां वा इत्यादिः ।

भागित्वाद्वा गवां स्यात् । ४७ ॥

सप्तमं पक्ष सूत्रेण मात्र वाशब्देन निरस्यन् सिद्धान्तमाह । सा संख्या गवां स्यात् । भागित्वात् गावो महाभागत्वात् । अश्वानां च दानप्रतिग्रहविक्रयाः प्रतिषिद्धाः । सर्वपक्षापेक्षया तु गवामेव महाभागत्वम् । तस्मात् गवामेव द्वादशशतसंख्या प्रत्येतव्या इति सिद्धान्त. ।

प्रत्ययात् । ४८ ॥

सिद्धान्ते हेत्वन्तरमाह । 'गौश्च अश्वश्च अश्वतरश्च' इत्यादिदक्षिणावाक्ये आदौ गवामेव प्रत्ययो ज्ञानं भवति । तस्य त्यागे कारणाभावात् गवामेव सा संख्या प्रत्येतव्या ।

लिङ्गदर्शनाच्च । ४९ ॥

सिद्धान्ते तत्र हेत्वन्तरमाह । लिङ्गस्य दर्शनाच्च गवामेव सा संख्या । 'त्वा वा एता द्वादशी समाम्नन्ति इडे रन्ते हव्ये काम्ये चन्द्रे ज्योतेरदिति सरस्वति महि विश्रुति एता ते अघ्न्ये नामानि देवेभ्यो मा सुकृतं ब्रूतात्' इति गवामेतानि नामानि । सहस्रतमीं च दक्षिणामेवमाह एतानि ते नामानीति । यदि सा गौः एवमेतदवकल्पते । तस्मात् ज्योतिष्टोमे द्वादशशतसंख्या गवामेव । इति सिद्धान्तः । के.

* द्रव्यविशेषा अंतं स्त्री पुमान् नपुंसकमिति । भा. ३।१।६।१२ पृ. ६८९.

* द्रव्यविषये उद्देश्यताऽवच्छेदकनिरूपणाधिकरणम् । भा. ३।१।५।११.

* द्रव्यविषयक–उद्देश्यताऽवच्छेदकनिरूपणाधिकरणम् । द्रव्याधिकरणमेवेदम् । श्रुत्याधिकरणम् । भा. ३।१।५।११.

* द्रव्यशब्दः छन्दोगैकेषु आचरितः । भा. ७।३।१।१४.

द्रव्यसंख्याहेतुसमुदायं वा श्रुतिसंयोगात् । ९।१।५।११ ॥

'व्रीहीन् प्रोक्षति' इति प्रोक्षणं किं व्रीहिरूपद्रव्यस्वरूपार्थम्, किंवा अपूर्वसाधनत्वप्रयुक्तम् । तथा 'त्रीन् परिधीन्, तिस्रः समिधः' इति मन्त्रः किं परिधिभिन्नसंख्यार्थः, उत अपूर्वसाधनत्वार्थः । तथा 'शूर्पेण जुहोति, तेन ह्यन्नं क्रियते' इति होमः किं अन्नकरणसंस्कारार्थः, किंवा अपूर्वार्थः । तथा 'चतुर्होत्रा पौर्णमासीमभिमृशेत्, पञ्चहोत्रा अमावास्याम्' इति अभिमर्शनं किं पौर्णमास्यादिसमुदायस्वरूपार्थम्, किंवा तदुभयापूर्वार्थम् । इति विचारे पूर्वपक्षमाह । द्रव्य व्रीह्यादि च, संख्या परिच्छादिगतत्रित्वादिः, शूर्पगतान्नहेतुत्वम्, पौर्णमास्यादिगतसमुदायश्च एषां समाहारः द्रव्यसंख्याहेतुसमुदायं प्रोक्षणादेः प्रयोजकं स्यात् । श्रुतिसंयोगात् द्वितीयाश्रुतिसंयोगात् हिशब्दश्रुतिसंयोगाच्च । वाशब्दः अविवक्षितोऽत्र । ऊहो न सिध्यति इति भाव. ।

अर्थकारिते च द्रव्येण न व्यवस्था स्यात् ।१२॥

द्रव्यसंख्याहेतुसमुदाया प्रोक्षणादीनां प्रयोजका इति पूर्वपक्ष उक्त । अत्र विपक्षे दोषमाह । अर्थकारिते । अपूर्वे इति अर्थः अपूर्वम् । अर्थेन कारिते प्रयुक्ते

प्रोक्षणादिधर्मे अभ्युपगम्यमाने द्रव्येण व्यवस्था न स्यात्। द्रव्येण व्यवस्था नाम मैत्रावरुणस्य पयसा श्रयणम्, मन्थिग्रहस्य सक्तुभिरेव श्रयणम्, इत्यादि। सेयं व्यवस्था द्रव्यप्रयुक्तत्वे एव सिध्यति। अपूर्वप्रयुक्तत्वे तु मन्थिग्रहस्य सक्तुभिः पयसा वा, मैत्रावरुणस्य पयसा सक्तुभिर्वा श्रयणं इति अव्यवस्था स्यात्, सर्वत्र अपूर्वस्य सत्त्वात्। तस्मात् द्रव्यप्रयुक्तत्वेन। किञ्च द्रव्येण व्रीह्यादिनैव प्रोक्षणादीनां संबन्धः इति व्यवस्था न स्यात् सुरादिष्वपि प्रसङ्गात्। तस्मात् प्रोक्षणादेः व्रीह्यादिद्रव्यसंस्कारमेव प्रयोजकं इति द्रव्यान्तरादौ लोपसिद्धिः इति पूर्वः पक्षः।

अर्थो वा स्यात् प्रयोजनमितरेषामचोदना-ऽर्थस्य गुणभूतत्वात्॥१३॥

प्रोक्षणमन्त्रहोमाभिमर्शनानि क्रमेण द्रव्यसंख्याहेतु-समुदायप्रयुक्तानि इति पूर्वपक्षं व्यावर्तयति वाशब्दः। अर्थः इत्यपूर्वं मुच्यते अर्थ्यते इति सतः। प्रोक्षणादीनां द्रव्यादिकं न प्रयोजनम्, किन्तु अर्थः अपूर्वमेव प्रयोजनम्। अपूर्वार्थानि प्रोक्षणादीनि। प्रोक्षणादीनां अपूर्वं प्रयोजकम्। इतरेषां द्रव्यसंस्कारादीनां अचोदना कर्तव्यतया न चोदना। प्रोक्षणादिकं द्रव्यादिसंस्कारत्वेन विधयं न विधि। अर्थस्य गुणभूतत्वात् अपूर्वनिरूपितगुण-त्व-ब्राह्मादिरित्यर्थः। अर्थे प्रति अपूर्वं प्रति गुणभूता भवेत द्रव्यादयः। तस्मात् अपूर्वप्रयुक्ताः प्रोक्षणादय इति सिद्धान्तः।

अपूर्वत्वाद् व्यवस्था स्यात्। १४॥

यदुक्तं पूर्वपक्षिणा 'पयसा मैत्रावरुणं श्रीणाति' इति पयसा श्रयणं ऐन्द्रवायवादावपि प्राप्नोति अपूर्वप्रयुक्तत्वे स्वीकृते इति, तत्रोत्तरमाह। अपूर्वत्वात् मैत्रावरुणसंबन्धपूर्वत्वात् मैत्रावरुणजन्यापूर्वस्य उद्देश्यतावच्छेदकत्वात् व्यवस्था स्यात्। नहि मैत्रावरुणापूर्वेण ग्रहान्तरापूर्वेऽस्ति, यतः अव्यवस्था स्यात्। तथाच अपूर्वप्रयुक्तत्वे न कश्चिद्दोषः। इदं सूत्रं कुतूहले न व्याख्यातम्।

तत्प्रयुक्तत्वे च धर्मस्य सर्वविषयत्वम्। १५॥

प्रोक्षणादिधर्माणां व्रीहिद्रव्यादिप्रयुक्तत्वे स्वीकृते दोषमाह सिद्धान्ती। धर्मस्य प्रोक्षणादेः तत्प्रयुक्तत्वे व्रीहिद्रव्यादिप्रयुक्तत्वे स्वीकृते सर्वविषयत्वं स्यात् ओदनार्था ये व्रीहयः तेष्वपि प्रोक्षणं प्राप्नुयात्। तस्मात् न द्रव्य-प्रयुक्तत्वम्।

तदुक्तत्वेति चेत्। १६॥

प्रोक्षणादिधर्मस्य व्रीह्यादिद्रव्यप्रयुक्तत्वे ओदनार्थव्रीहिष्वपि प्रोक्षणं प्राप्नुयात् इति यदुक्तं सिद्धान्तिना तत्र। तदुक्तस्य प्रकरणयुक्तस्य यागीयव्रीहिद्रव्यस्य प्रोक्षणे स्वीकृते सर्वविषयता दोषो न स्यात्। यागीयव्रीहित्वस्य उद्देश्यताऽवच्छेदकत्वात् न दोषः। इति चेत्।

नाश्रुतित्वात्। १७॥

यत् पूर्वपक्षिणा उक्तं तन्न। अश्रुतित्वात् यागीया एव व्रीहयो निर्वप्तव्या इति नास्ति श्रुतिः। अभिघारणादिलिङ्गा हि व्रीहयो न यागार्था एव भवन्ति किन्तु ओदनार्था अपि। शब्दाना तु व्रीहीणां देवतार्थत्वेन सुहिद्यत्वं निरूप्यते। तस्य उद्देश्यतावच्छेदकत्वं न यागीयव्रीहित्वं किन्तु व्रीहित्वसामान्यमेवेति प्रोक्षणस्य द्रव्यप्रयुक्तत्वे स्यादेव सर्वविषयत्वं दोषः।

अधिकारादिति चेत्। १८॥

प्रोक्षणस्य द्रव्यप्रयुक्तत्वेऽपि सर्वविषयत्वं न प्राप्नोति। कथम्? अधिकारात् प्रकरणात् शास्त्रात् अध्वर्युः इमे ओदनार्थाः व्रीहयः, इमे यागार्था इति। तत्र ये यागार्थाः तान् प्रोक्षिष्यति इति न सर्वविषयत्वप्रसङ्गः। इति चेत्।

तुल्येषु नाधिकारः स्यादचोदितश्च संबन्धः, पृथक् सतां यदार्थेनाभिसंबन्धस्तस्मात् पक्षः प्रयोजनम्। १९॥

प्रकरणात् ओदनार्थयागार्थव्रीहीणां भेदं शास्ति अध्वर्युः इति यदुक्तं पूर्वपक्षिणा तन्न। व्रीहयः तुल्याः समाना एव ओदनार्थाः यागार्थाश्च। ये ओदनार्थास्त एव कर्मार्थाः, न केचित् पृथक् कर्मार्था नाम निर्वापकाले। तथा निर्वापकाले सर्वविषयत्वं प्राप्नोत्येव। एवं तुल्येषु सत्सु व्रीहिषु अधिकारः प्रकरणं निर्वापकाले नास्ति। अचोदितश्च संबन्धः। निर्वापात् पूर्वं व्रीहीणां संबन्धः कर्मसंबन्धः कश्चित् अचोदितः न चोदितः। तत्रश्च निर्वापस्य लौकिकसाधारणत्वं स्यात्। पृथक् सतां लौकिककर्मभ्यः पृथक् कृतानां व्रीहीणामेव यदार्थेन

निर्देशेन अभिसंबन्धो भवति। यस्मात् तुल्येष्वधिकारो नास्ति, संबन्धश्च न चोदितः, पृथक् कृतानामेव यथा-र्थेन अभिसंबन्धः, तस्मात् प्रोक्षणस्य यत्र अपूर्वमेव प्रयोजनं न द्रव्यस्वरूपम्। इति सिद्धान्तः। के.

* द्रव्यसंख्याहेतुसमुदायं चाश्रुति- (वा श्रुति) संयोगात्। ९।१।५।११। 'व्रीहीन् प्रोक्षति' इति श्रुत्या द्रव्यसंयुक्तं प्रोक्षणम्, 'त्रीन् परिधीन्' इतिमन्त्र-लिङ्गात् संख्यासंयुक्तम्, 'शूर्पेण जुहोति तेन ह्यन्नं (अदनं) क्रियते' इतिवाक्यात् हेतुसंयुक्तं होमम्, 'चतुर्होत्रा पौर्णमासीमभिमृशेत्' इतिश्रुत्या आग्नेयादि-समुदायसंयुक्तं मन्त्रं चोदाहृत्य प्रोक्षणादयो द्रव्यादिस्वरूप-प्रयुक्ता अपूर्वप्रयुक्ता वा इति संदेहे श्रुतिसंयोगात् तद्रूप-लक्षणात् लिङ्गात् वाक्यसंयोगाच्च द्रव्यादिस्वरूपप्रयुक्तत्वं पूर्वपक्षयित्वा 'अर्थो वा स्यात् प्रयोजनमितरेषाम-चोदनार्थस्य गुणभूतत्वात्' (९।१।५।१३) इत्यनेन अप्यमानमपूर्वं प्रयोजनं द्रव्यादीनामप्यमानमपूर्वं प्रति गुणभूततया कर्तव्यत्वेन अचोदनात् इति सिद्धान्तिते भाष्यकृता श्रुत्यादिस्वरूपान्वयविरोधात् प्राकरणिका-पूर्वान्वयायोगमाशङ्क्य आनर्थक्यभयात् स्वरूपान्वय-विवक्षया अपूर्वसाधनत्वमाख्या भवति। सु पृ. १४६९.

* 'द्रव्यसंख्याहेतुसमुदायं वा' इत्यधिकरणन्यायेन स्वरूपसंगतौ आनर्थक्यात् यदि अश्रूयमाणत्वेन अपूर्वसाधनत्वं लभ्यते। वा ३।४।५।१५ पृ २४७.

¶ द्रव्यसंख्याहेतुसमुदायन्यायः। द्रव्यन्याय.। द्रव्यसंख्यान्यायः। दर्शपूर्णमासादौ प्रोक्षणादयो धर्मा अपूर्वप्रयुक्ता.॥

द्रव्यसंख्याहेतुसमुदायं वा श्रुतिसंयोगात्। ९।१।५।११॥

भाष्यम्—दर्शपूर्णमासयोरामनन्ति 'व्रीहीन् प्रोक्षति' इति। तत्रैव 'त्रीन् परिधीन्, तिस्रः समिधः' इति मन्त्रम् (आमनन्ति इति सर्वत्र अनुषङ्गः)। 'चतु-र्होत्रा पौर्णमासीमभिमृशेत्, पञ्चहोत्रा अमावास्याम्' इति। चातुर्मास्यानां द्वितीये पर्वणि वरुणप्रघासेषु आम्नायते 'शूर्पेण जुहोति, तेन ह्यन्नं क्रियते' इति। तत्र संशयः किं द्रव्यसंख्याहेतुसमुदायप्रयुक्ता. प्रोक्षणादयो धर्माः, उत अपूर्वप्रयुक्ता इति। किं तावत् प्राप्तम्? द्रव्यादिप्रयुक्ता इति। [illegible] 'व्रीहीन् प्रोक्षति' इति प्रकरणेन अपूर्वप्रयुक्तता स्यात्, वाक्येन द्रव्यप्रयुक्तता। द्रव्येण हि प्रोक्षणस्य समभिव्याहारः। तस्मिन्नपि समभिव्याहारे द्रव्यगता द्वितीया विभक्तिः प्रोक्षणस्य द्रव्यप्रयुक्ततां वदति। तथा 'त्रीन् परिधीन्' इति यत् त्रिशब्दस्याभिधेयम्, तदिह मन्त्राम्नानसामर्थ्यात् कर्तव्यमिति गम्यते। संख्या च त्रिशब्दस्यार्थः। तस्मात् श्रुतिसाधिका। तथैवदे अपूर्वे लक्षणा स्यात्। 'यावन्तः परिधयः, तावन्तो वक्तव्या.' इति।

तथा हेतुना धर्मः संयुज्यते वाक्येन 'शूर्पेण जुहोति' इति। किं कारणम्? यतः, तेन अन्नं क्रियते। तद् होमेन संबद्धव्यम्। अप्रकरणद्रव्यं होमे विधीयते। प्रकरणात् अपूर्वप्रयुक्तता स्यात् यस्मात् अनेन होमेन अपूर्वं क्रियते तस्मादेतत् शूर्पेण निर्वर्तयितव्यमिति। प्रकरणात् वाक्यं बलीय., अत. प्रकरणं बाध्येत। येनयेन द्रव्येण दर्विपिठरादिनाऽपि अन्नं क्रियते, तेनतेन होमः कर्तव्य इत्येव अप्रकरणं प्रयुक्तं भवतीति। ननु प्रथमे-ऽध्याये (हेतुवन्निगदाधिकरणे १।२।२) प्रतिपिद्धा हेत्वर्थता, शूर्पस्यार्थवादोऽयं वक्तव्यम्। सत्यमुक्तम्। अपूर्वप्रयुक्ततायां हि सिद्धायां नैकस्मिन् वाक्ये होमे शूर्पविधानं हेतुविधानं चावकल्पते, इत्यर्थवादः प्रकल्पते नान्यथा।

'चतुर्होत्रा पौर्णमासीमभिमृशेत्, पञ्चहोत्रा अमा-वास्याम्' इति समुदायसमभिव्याहारात् वाक्येन तत्प्रयु-क्तता, प्रकरणसामर्थ्यात् त्वेवमपूर्वसमभिव्याहारात् अवगता अपूर्वप्रयुक्तता भवते। तस्मात् द्रव्यादिप्रयुक्ताः प्रोक्षणादयो धर्मा.।

टुप्—'प्रोक्षिताभ्याम्' इति वाक्यात् हन्त्यर्थे प्रोक्षणम्। स च वाक्यसंयोग. श्रौतादेन निराकृतः (श्रौतेन हन्तिरूपेण यो वाक्यात् प्रोक्षणस्य संयोग, स निराकृत.)। लिङ्गसंयोगश्च श्रौतादेन (स्वर्गाग्न्यादि-रूपेण) निराकृत एव। अस्मिन्नधिकरणे लिङ्गवाक्य-संयोगा नोदाहरणम्, निराकृतत्वात्। श्रुत्या तु येषां तादर्थ्यम्, ते इहोदाहरणम्। तान् श्रुत्या तदर्थान्

( व्रीह्यादिस्वरूपार्थान् ) मन्यमानः पूर्वपक्षं करोति। व्रीहीन् इति द्वितीया ( विभक्तिः ) श्रुत्या व्रीह्यर्थतां प्रोक्षणस्य प्रतिपादयति अपूर्वसंबन्धः प्रकरणात् स्यात् । श्रुतिश्च प्रकरणाद् बलीयसी। 'पौर्णमासीम्' इत्यत्रापि समुदायार्थमभिमर्शनं श्रुत्यैव द्वितीया प्रतिपादयति । 'व्रीन् परिधीन्' इति द्वितीया । साऽपि श्रुत्यैव मन्त्रस्य संख्यार्थतामाह । ( अत्र कन्नरत्नम्— "ननु मन्त्रगतेयं द्वितीया कथं मन्त्रस्य तादर्थ्यं प्रतिपादयेत्, स्वात्मनि क्रियाविरोधात् । सत्यम्, मन्त्रकल्पिता श्रुतिरियमुक्ता। सा हि त्रिसंख्यप्रकाशनसमर्थमन्त्रवशात् कल्प्यमाना ईदृशी कल्प्येत 'मन्त्रेणानेन त्रीन् परिधीन् प्रकाशयेत्' इति । न चैव लिङ्गविनियोगोऽत्र स्यात्, स च निराकृतः । सत्यम्, उदाहरणान्तरं तु दातव्यम्, यत्र प्रत्यक्षैव ईदृशी श्रुतिः।" एतेन गानश्रामगपुस्तकस्था अमत्या टिप्पणी व्याख्याता ) तस्मात् त्रिसंख्याप्रयुक्तोऽयं मन्त्रः, नापूर्वप्रयुक्तः। 'शूर्पेण जुहोति, तेन ह्यन्नं क्रियते' इत्यत्र शूर्पं तावत् अनुदाहरणम्, करणविभक्तिनिर्देशात् । यथा 'व्रीहिभिर्यजेत' इति । 'अन्नकरणेन जुहोति' इत्येतदपि करणविभक्तिनिर्देशादेव अनुदाहरणम् । अथोच्येत हिशब्दयोगात् अन्नकरणमुदाहरणं स्यात् । ( निराकरोति— ) तत्र, शूर्पस्य विधीयमानस्य अर्थवादोऽयमित्युक्तम् । उच्यते । हिशब्दश्रुत्या हेतुत्वेन अन्नकरणम् । यस्मादनेन अन्नं क्रियते, तस्मादनेन होमः कर्तव्यः इति ( न स्तुतिलक्षणप्रसङ्गात् ) । ननु असिद्धसंबन्धो हेतुर्भवति । न ■ होमान्नकरणयोः संबन्धः अवगतः प्रमाणान्तरेण, यथा कृतकत्वानित्यत्वयोः । उच्यते । सत्यमेवं लोके ( प्रमाणान्तरेण संबन्धोऽपेक्षितः ), वेदे तु हिशब्दश्रवणात् वाक्यमनुमीयते होमान्नकरणयोः संबन्धकर्तृ ( 'यद्यत् अन्नकरणम्, तत्तद् होमेन संबद्धव्यम्' इति ) । तेनानुमितेन ( वाक्येन ) हेतुश्रवणमुपपत्स्यते । सति च हेतुश्रवणे अन्नकरणं संस्कार्यम्, होमः संस्कारकः । यद्यदन्नकरणं तत्तत् होमेन व्याप्यते । यथा यद्यत् कृतकम्, तत्तदनित्यत्वेन व्याप्यते । यथा च यत्रयत्र धूमः, तत्राग्निना व्याप्यते । ( प्रधानं चाङ्गेन व्याप्यते ) । तस्मात् हिशब्दश्रुत्या अन्नकरणार्थो होमः इति मन्यमानः पूर्वपक्षं करोति । ( यत्तु प्रथमेऽध्याये अर्थवादत्वं साधितं इत्युक्तम्, तत्राह— ) इह अपूर्वार्थे होमे स्थिते प्रथमेऽध्याये किं अन्नकरणं विधीयते, शूर्पं प्रदर्शनार्थं ( एकदेशानुवादः ) उत शूर्पं विधीयते, ( तस्य ) अन्नकरणं स्तुतिः इत्ययं विचारः ( इत्यपुनरुक्तता ) ।

**अर्थकारिते च द्रव्येण न व्यवस्था स्यात् । १२ ॥**

भाष्यम्— अपूर्वप्रयुक्ते एवंजातीयके धर्मे सति द्रव्येण च धर्मव्यवस्था न स्यात् । 'पयसा मैत्रावरुणं श्रीणाति, सक्तुभिर्मन्थिनम्, धानाभिर्हारियोजनम्, हिरण्येन शुक्रम्, आज्येन पात्नीवतम्' इति । यस्मान्मैत्रावरुणः अपूर्वस्य ( साधकः ), तस्मात्पयसा अधिगन्तव्यः इति । ऐन्द्रवायवोऽपि अपूर्वस्य । सोऽपि पयसा अधिगन्तव्यः प्राप्नोति । एवं सर्वाणि श्रयणादीनि सर्वेषां ग्रहाणाम् । तत्र मैत्रावरुणादिग्रहणमविवक्षितं स्यात् । तस्मादपि द्रव्यादिप्रयुक्ताः प्रोक्षणादय इति ।

**अर्थो वा स्यात्, प्रयोजनमितरेषामचोदनात्, तस्य च गुणभूतत्वात् । १३ ॥**

भाष्यम्— वाशब्दः पक्षं व्यावर्तयति । न द्रव्यादिप्रयुक्ता भवेयुः । किं तर्हि ? अर्थ एषां प्रयोजनम् । अर्थ इत्यपूर्वं ब्रूमः । तदर्थास्ते । तद्धि कर्तव्यतया श्रूयते । तदितिकर्तव्यतया अनुबध्यते । इतरेषां द्रव्यादीनां कर्तव्यतया न चोदना । किं तर्हि ? अर्थस्य गुणभूतत्वेन । अर्थं प्रति, अपूर्वं प्रति गुणभूतानामेषां श्रवणम् । किमतो यद्येवम् ? अकर्तव्यानां इतिकर्तव्यतया नास्ति संबन्ध इति ।

ननु व्रीह्यादिसमभिव्याहारात् वेदिं संबन्धः । तत्र द्वितीयया व्रीहिसमुदायप्रयुक्तता गम्यते । लिङ्गवाक्याभ्यां संख्याहेतुप्रयुक्तता । नेत्याह ; एवं सति फलं कल्पनीयं स्यात् । तस्मादपूर्वप्रयुक्तता । नन्वेवमपि सति अपूर्वोपकारः कल्पयितव्यः । सत्यं कल्पयितव्यः, प्रकृतेन तु एकवाक्यता नीत्वा । त्वत्पक्षे तु अप्रकृतेन फलवचनेनैकवाक्यता स्यात् । ननु प्रकरणं वाक्यस्य श्रुतेर्वा न बाधकम् । सत्यमबाधकम् । फलाभावात्तु मदीयः पक्षो युज्यते । तस्मिन् नानर्थक्येनाविवक्षिते प्रकरणवत्त्वप्रयोगवचनेनापरिपन्थि प्रोक्षणादि विधायिष्यते । आह । अपूर्वसंबन्धे-

ऽपि तदर्थैर्व्रीह्यादिभिरेव धर्मः प्रयुज्यते । किमेव भविष्यति ? द्रव्यादिविधानपक्षेण हि नाथवतो भविष्यति । फलं च न कल्पयितव्यम् । उच्यते । नैव शक्यम् । व्रीहीन् प्रोक्षतीति हि व्रीहिजातिर्निर्दिश्यते, व्रीहिद्रव्यलक्षणार्था वा, अपूर्वसाधनविशेषलक्षणार्था वा । अन्यतरलक्षणया कृतार्थेति, नोभयलक्षणार्था स्यात् । द्रव्यलक्षणा वा, तत्र च स एव दोषः । फलकल्पनेति कृत्वा साधनविशेषलक्षणार्था जातिरवसीयते । व्रीहिजातिलक्षितं यत् साधनम्, किं तत् ? यतस्तण्डुला भवन्ति, तत् प्रोक्षितव्यमिति । तण्डुलनिर्वृत्तिपरता हि तत्र साधनत्वम्, न द्रव्यता । एवं सत्यादिष्वपि योजयितव्यम् । तस्माद् पूर्वप्रयुक्ता प्रोक्षणादीनामिति ।

टुप्— यदि व्रीहिस्वरूपप्रयुक्तं प्रोक्षणं ( स्यात् ) तथा सति फलकल्पना ( स्यात् ) । नहि स्वरूपार्थत्वे परम्पराऽपि (प्रकृत–) अपूर्वप्रयोजनत्वं अभिहारेणेव आधानस्य प्रावपूर्वप्रयोजनता संभवति । ( नैव शक्यम् इत्यादिभाष्यं व्याचष्टे–) न च वाक्यस्य द्वौ अर्थौ, यदि वा तण्डुलनिर्वृत्तिसाधकत्वम् अपूर्वं लक्ष्यते तस्यैव धर्म, यदि वा व्रीहिजातिलक्षितस्य द्रव्यस्य । ( न तु द्वयमपि लक्ष्यते । नहि सकृदुच्चरितं व्रीहिपदं स्वरूपं च तदधिकं च साधनविशेषं प्रतिपादयितुं शक्तम् । तत्र–) स्वरूपपरत्वे आनर्थक्यात् साधनविशेषलक्षणम् ( विज्ञायते ) ।

अत्र ( भाष्य– ) प्रश्न – व्रीहिजातिलक्षितं यत् साधनम्– किं तत् ? यतस्तण्डुला भवन्ति– तत् प्रोक्षितव्यम् इति ( शास्त्रार्थः । कुतः ? ) तण्डुलनिर्वृत्तिपरता हि तत्र साधनत्वम्, न द्रव्यता । ( अस्य भाष्यस्य– ) कोऽभिप्रायः ? ( उत्तरम्– ) तण्डुलनिर्वृत्तिसाधकं यत् साधनं लक्षयति, तदर्थं प्रोक्षणम् । यद्यपि तण्डुलनिर्वृत्तिविशिष्टा । न चान्यद् द्रव्यं तण्डुलनिर्वृत्तिकरणत्वेन शक्यते लक्षयितुम् । तस्मात् अन्येषु द्रव्येषु प्रोक्षणाभाव ।

अपूर्वत्वाद् व्यवस्था स्यात् । १४ ॥

भाष्यम्— अथ यदुक्तम् ' अर्थैकत्वे च द्रव्येण च व्यवस्था स्यात् ' इति । साधनविशेषलक्षणार्था जातिरित्येव सति गत्वा भविष्यति । मैत्रावरुणेन संश्रयते, तत्र यस्य श्रवणम्, न तत् ऐन्द्रवायवेन । अतो न मैत्रावरुणापूर्वात् ऐन्द्रवायवस्य धर्माः । अपूर्वो हि ऐन्द्रवायवः । तस्मात् अपूर्वत्वाद् व्यवस्था स्यादिति ।

तत्प्रयुक्तत्वे च धर्मस्य सर्वविषयत्वम् । १५ ॥

भाष्यम्— यश्च मन्यते ' द्रव्यादिप्रयुक्ता प्रोक्षणादयो धर्माः ' इति, तस्य सर्वविषयत्वं धर्मस्य प्राप्नोति । येऽपि यज्ञार्था व्रीहयः नेऽप्येव प्रोक्षिता प्राप्नुवन्ति । न चैतत् न्यायोऽपीष्यते । तस्मादस्मिन् पक्षे दोष इति ।

तद्युक्तस्येति चेत् । १६ ॥

भाष्यम्— इति चेत्पश्यसि, सर्वविषयता धर्मस्य भविष्यतीति । तद्युक्तस्य प्रकरणयुक्तस्य भविष्यति । एवं प्रकरणमनुगृह्यते । न च सर्वविषयता धर्मस्येति ।

नाश्रुतित्वात् । १७ ॥

भाष्यम्— नैतदेवम् । न हि श्रूयते, प्रकरणयुक्ता व्रीहयो निर्वपति वा, प्रोक्षितव्या इति । ननु प्रकरणानुग्रहाय एतदध्यवसानम् । नेत्याह । नहि वाक्येन बाधितं प्रकरणमुत्सहते धर्मान् नियन्तुम् । अथापि न बाध्यते, तथापि न प्रकरणस्य विशेष्टुं सामर्थ्यमस्ति । कर्तव्यतया हि तत् क्रियमाणं चोद्यते, न प्रसिद्धसंबन्धमिव विशेषणत्वेन । तस्मात् प्रकृतयागाविशेषितानां व्रीहीणां निर्वापः प्रोक्षणं वा चोद्यते इति ।

टुप्— न प्रकरणस्य विशेष्टुं सामर्थ्यमस्ति । कर्तव्यतया हि तत् क्रियमाणं चोद्यते, न प्रसिद्धसंबन्धमिव परविशेषणत्वेन इति ( भाष्यम् ) कोऽभिप्रायः ? ( उत्तरम्– ) भावयेत् स्वर्गम् । केन ? यागेन । कथं इति प्रकाराकाङ्क्षा भवति । स च प्रकारः अनिर्ज्ञातस्वरूपत्वात् भव्य । यश्च निर्ज्ञातस्वरूप उपादीयते, स परविशेषणं यथा ' शुक्लं पट ' इति । इह यत् कथम्भावाकाङ्क्षायां अवघातादि उपनिपतति, तस्य संबन्धित्वे कारणम् ( तत् कथम्भावाकाङ्क्षा प्रकरणं अवघातादेः इतरभावेन संबन्धित्वे कारणं भवति ) । न चास्य भवितुमर्हति । ( न स्वरूपेण प्रकरणमस्य संबन्धित्वे कारणं भवति इत्यर्थः । ) आनन्दा भवीते तु अत्र ' नायस्य भवति, न चायस्य भवति '

इति पाठः। तत्स्वद्रव्यमपि च टिप्पण्या व्याख्यातम्। परन्तु तत् अस्मदीये लिखिते तन्त्ररत्ने वा नास्ति)।

**अधिकारादिति चेत्॥ १८॥**

**भाष्यम्**— इति चेत्पश्यसि, न प्रकरणं विशेषकं व्रीहीणामिति। बाढम्। अधिकारात् साम्यस्य भवेत्। इमे मन्त्रार्थाः, इमे कर्मार्थाः। तत्र कर्मार्थान् प्रोक्षिष्यतीति।

**तुल्येषु नाधिकारः स्याद्चोदितश्च संबन्धः, पृथक् सतां यज्ञार्थेनाभिसंबन्धस्तस्माद्यज्ञः प्रयोजनम्॥ १९॥**

**भाष्यम्**—तुल्या एते व्रीहयः। य एव मन्त्रार्थास्त एव कर्मार्थाः, न पृथक् केचित् कर्मार्था नाम। ननु ये निरुप्तास्ते कर्मार्थाः। सत्यं भवेदेतत्। प्रोक्षणादिषु दोषो न स्यात्। निर्वापे तु दोषः। न तत्र केचन प्रकृता विद्यन्ते। पृथक्सतां यज्ञार्थेन निर्वापः श्रूयते। कथम्? अपरेण गार्हपत्यं प्राचीनमनोऽवस्थितं भवति। तस्य दक्षिणं चक्रमारुह्य कस्मिंश्चिदपि निर्वपति इति। तस्मात् सर्वेषामेवैतदुपयुक्तं प्रोक्षणम्। पूर्वेण हेतुनाऽपूर्वप्रयुक्तत्वं प्रोक्षणादीनामिति।

शा— 'तत्र श्रुतिबलीयस्त्वाद् व्रीह्यादिद्रव्यशेषता। प्रक्रियाऽवगता पूर्वशेषत्वस्यापबाधिनी॥ व्रीह्यादिरूपशेषत्वे सत्यानर्थक्यमापतेत्। प्रोक्षणस्य, विनाऽप्यस्मात् तत्स्वरूपस्य सिद्धितः॥ तस्मात् साधनरूपं यद् व्रीहीणां शास्त्रचोदितम्। तेन रूपेण संबन्धः प्रोक्षणादेर्विधीयते॥' तस्मात् सर्वेषामेव भूतभव्यद्रव्यविनियोगानां द्रव्यादीनां संस्काराः अपूर्वसाधनाङ्गभूताः तद्विकृतिषु प्रकृतार्थकरेषु द्रव्यान्तरेषु संस्कारेषु ऊहितव्याः।

**सोम**— सूत्रार्थस्तु— द्रव्यादि प्रोक्षकं द्वितीयाश्रुतेः व्रीहिशब्दश्रुतेश्च संयोगात्। बाह्यः वाक्यलिङ्गसंयुक्तापेक्षया श्रुतेः विरोधकोऽतन्त्रार्थः।

**वि**—'व्रीह्यादयः प्रोक्ष्यन्तेऽपूर्वे न प्रोक्षणादिषु। वाक्यश्रुतिभ्यामाद्यः स्यात्, चोदिताङ्गत्वतोऽन्तिमः॥'

**भाट्ट**— अत्र मूले द्रव्यसंख्याहेतुसमुदायानां यत्र श्रुत्या उद्देश्यता, तत्र व्रीहित्वादिनैव, न तु अपूर्वसाधनत्वेन, प्रकरणेन श्रुतिसंकोचायोगात् इत्याद्युक्त्वा स्वरूपे आनर्थक्यापत्तेः अपूर्वसाधनत्वेनेति सिद्धान्तितम्। तत्र 'व्रीहीन् प्रोक्षति' इति द्रव्योदाहरणस्य 'चतुर्दशा पौर्णमासीम्' इति समुदायोदाहरणस्य च कथञ्चित् समन्वयेऽपि संख्योदाहरणस्य 'त्रीन् परिधीन्' इति मन्त्रस्य 'अग्नेः सुवः' इति मन्त्रवत् अपूर्वसाधनीभूतपरिधीयत्वाप्रकाशनार्थत्वस्य सिद्धत्वात् अनुदाहरणत्वमिति वार्तिककारेणोक्तम्, तथा हेतूदाहरणेऽपि। यत् 'शूर्पेण जुहोति, तेन ह्यन्नं क्रियते' इत्यत्र करणहेतुना तस्य स्थाप्यत्वावगमात्, स्थाप्यस्य च सर्वत्र प्राधान्यदर्शनात्, अन्नकरणोद्देशेन होमः संस्कारकतया विधीयते इत्याशङ्क्य तृतीयया होमं प्रति शूर्पस्य करणत्वावगतेः 'तेन ह्यन्नं क्रियते' इत्यस्य चार्थवादत्वात्, होमोऽयं आरादुपकारकः अपूर्वार्थ इति निराकृतम्, तत् स्थाप्यस्यापि जुह्वादेः क्रतुं प्रति प्राधान्यादर्शनात् अर्थवादस्य च हेत्वधिकरणे स्थापितत्वात् तद्विचारस्य च ऊहानुपयोगित्वाच्चोपेक्षितम्।

किञ्च सर्वस्यैवास्य विचारस्य आद्याधिकरणेन गतार्थत्वस्य न्यायवर्त्मने। यद्यपि गमकमेति सूत्रेण (९।१।१।१) संनिपत्योपकारकमात्रे अपूर्वसाधनत्वलक्षणा सिद्धा। संस्कारे चेति सूत्रेण (२) च आनन्तर्यादिकानां यागादिकारणत्वाऽवच्छेदकत्वाना अविवक्षा सिद्धा, तथापि श्रुतस्य व्रीहित्वादेः कारकताऽवच्छेदकस्य त्यागे प्रमाणाभावः। न च युगपद्वृत्तिद्वयविरोधः, अपूर्वसाधनीभूतव्रीहित्वावच्छिन्नस्यैव लक्षणया उद्देश्यत्वाङ्गीकारात्। अतश्च साहचर्यस्य नीवारादौ अभावात् नोहसिद्धिः। इति प्राप्ते, तादृशताऽवच्छेदके गौरवापत्तेः श्रुतस्य व्रीहित्वस्य च लक्षणोपयोगितावच्छेदकत्वेनापि चरितार्थत्वान्न विवक्षा। अत एव तत्तद्व्यापारविशिष्टविजातीयापूर्वसाधनताया एव लक्षणेति कौस्तुभे स्पष्टम्। तत्तद्व्यापारकसाधनतानावच्छेदकसाधनताया एव लक्षणाच्च व्रीहित्वनिष्ठकारणताया गुणादिप्रमाणेन भेदेऽपि यागसाधारणत्वाभोऽपीत्यपि तदेव स्पष्टम्। अतश्च व्रीहित्वादेरविवक्षितत्वात् युक्तो नीवारादिषु ऊहो विकृतौ। एवं यत्रापि नापूर्वसाधनत्वम् 'व्रीहीनवहन्ति' इतिवत् पूर्वश्रुतम्, तत्राप्येवं तु संस्कारविशिष्टस्य व्रीह्यादेः साधनत्वविधानं यथा 'व्रीहि-

ऽपि तदीयैर्व्रीह्यादिभिरेव धर्मः प्रयुज्यते । कियेवं भविष्यति ? द्रव्यादिसंख्ययैव हि नावगतो भविष्यति । फले च कल्पयितव्यम् । उच्यते । नैव शक्यम् । व्रीहीन् प्रोक्षतीति हि व्रीहिजातिर्निर्दिश्यते, व्रीहिद्रव्यलक्षणार्था वा, अपूर्वसाधनविशेषलक्षणार्था वा । अन्यतरलक्षणया कृतार्थेति, नोभयलक्षणार्था स्यात् । द्रव्यलक्षणा वा, तत्र च लक्षणैव दोषः । फलकल्पनेति कृत्वा साधनविशेषलक्षणार्था जातिरवसीयते । व्रीहिजातिलक्षितं यत् साधनम्, किं तत् ? यतस्तण्डुला भवन्ति, तत् प्रोक्षितव्यमिति । तण्डुलनिर्वृत्तिपरता हि तत्र साधनत्वम्, न द्रव्यता । एवं संख्यादिष्वपि योजयितव्यम् । तस्मादपूर्वप्रयुक्तता प्रोक्षणादीनामिति ।

टुप्— यदि व्रीहिस्वरूपप्रयुक्तं प्रोक्षणं ( स्यात् ) तदा सति फलकल्पना ( स्यात् ) । नहि स्वरूपार्थत्वे परम्परयाऽपि ( प्रकृत- ) अपूर्वप्रयोजनत्व अभिद्वारेणैव आधानस्य क्रत्वपूर्वप्रयोजनता संभवति । ( नेदं शक्यं इत्यादिभाष्यं व्याचष्टे- ) न च वाक्यस्य द्वौ अर्थौ, यदि वा तण्डुलनिर्वृत्तिप्रणाड्या यत् अपूर्वं लक्ष्यते तदर्थं धर्मः, यदि वा व्रीहिजातिलक्षितस्य द्रव्यस्य । ( न तु द्वयमपि लभ्यते । नहि तण्डुलपरित्व व्रीहिरद स्वरूपं च तत्समवेतं च साधनविशेषं प्रतिपादयितुं शक्तम् । तत्र- ) स्वरूपपरत्वे आनर्थक्यात् साधनविशेषलक्षणम् ( विज्ञायते ) ।

अत्र ( भाष्य- ) ग्रन्थ.– व्रीहिजातिलक्षितं यत् साधनम्- किं तत् ? यतस्तण्डुला भवन्ति- तत् प्रोक्षितव्यं इति ( तत्रार्थः । कुत. ? ) तण्डुलनिर्वृत्तिपरता हि तत्र साधनत्वम्, न द्रव्यता । ( अस्य भाष्यस्य- ) कोऽभिप्राय. ? ( उत्तरम्- ) तण्डुलनिर्वृत्तिप्रणाड्या यत् साधनत्वं लक्ष्यति, तदर्थं प्रोक्षणम् । यद्वेष्वपि तण्डुलनिर्वृत्तिरविशिष्टा । न चान्यत् द्रव्य तण्डुलनिर्वृत्तिकरणत्वेन शक्यते लक्षयितुम् । तस्मात् अन्येषु द्रव्येषु प्रोक्षणाभाव ।

अपूर्वत्वाद् व्यवस्था स्यात् । १४ ॥

भाष्यम्— अथ यदुक्तम् ' अर्थकारिते च द्रव्येण न व्यवस्था स्यात् ' इति । साधनविशेषलक्षणार्था जातिरित्येवं सति व्यवस्था भविष्यति । मैत्रावरुणेन यत्क्रियते, तत्र पय.श्रयणम्, न तत् ऐन्द्रवायवेन । अतो न मैत्रावरुणापूर्वात् ऐन्द्रवायवस्य धर्मा. । अपूर्वो हि ऐन्द्रवायवः । तस्मात् अपूर्वत्वाद् व्यवस्था स्यादिति ।

तत्प्रयुक्तत्वे च धर्मस्य सर्वविषयत्वम् । १५ ॥

भाष्यम्— यश्च मन्यते ' द्रव्यादिप्रयुक्ता. प्रोक्षणादयो धर्मा. ' इति, तस्य सर्वविषयता धर्मस्य प्राप्नोति । येऽपि यज्ञार्था व्रीहय. तेऽप्येव प्रोक्षिता वा. प्राप्नुवन्ति । न चैतत् न्याय्याऽपीष्यते । तस्मादयमस्मिन् पक्षे दोष इति ।

तद्युक्तस्येति चेत् । १६ ॥

भाष्यम्— इति चेत्पश्यसि, सर्वविषयता धर्मस्य भविष्यतीति । तद्युक्तस्य प्रकरणयुक्तस्य भविष्यति । एवं प्रकरणमनुगृह्यते । न च सर्वविषयता धर्मस्येति ।

नाश्रुतित्वात् । १७ ॥

भाष्यम्— नैतदेवम् । न हि श्रूयते, प्रकरणयुक्ता व्रीहयो निर्वस्तव्याः, प्रोक्षितव्या वेति । ननु प्रकरणानुग्रहाय एतदध्यवसानम् । नेत्याह । नहि वाक्येन शक्यं प्रकरणमुपादातुं धर्मान् नियन्तुम् । यद्यपि न बाध्यते, तथापि न प्रकरणस्य विशेष्टुं सामर्थ्यमस्ति । कर्तव्यतया हि तत् क्रियमाणं चोद्यते, न प्रसिद्धसंबन्धमिव विशेषणत्वेन । तस्मान्न प्रकृतयागविशेषितानां व्रीहीणां निर्वापः प्रोक्षणं वा चोद्यते इति ।

टुप्— न प्रकरणस्य विशेष्टुं सामर्थ्यमस्ति । कर्तव्यतया हि तत् क्रियमाणं चोद्यते, न प्रसिद्धसंबन्धमिव परविशेषणत्वेन इति ( भाष्यम् ) कोऽभिप्राय. ? ( उत्तरम्- ) भावयेत् स्वर्गं । येन ? यागेन । कथं इति प्रकाराकाङ्क्षा भवति । स प्रकार. अनिर्ज्ञातस्वरूपत्वात् कर्तव्य । यत्र निर्ज्ञातस्वरूप उपादीयते, स परविशेषणं यथा ' शुक्ल पट. ' इति । इह यत् कथंभावाकाङ्क्षायां अन्यत्र्याधानादि उपनिपतति, तदस्य संनिधित्वे कारणम् ( तत् कथंभावात्मकं प्रकरणं अन्यन्वाधानादे इत्थंभावेन संनिधित्वे कारणं भवति ) । न चा यस्य भवितुमर्हति । ( न स्वरूपेण प्रकरणं अन्यस्य संनिधित्वे कारणं भवति इत्यर्थः । आनन्दाश्रमीये तु अत्र ' नान्यस्य भवति, न चान्यस्य भवति '

इति पाठः। वाक्यद्वयमपि च टिप्पण्यां व्याख्यातम्। परन्तु तत् अस्मदीये लिखिते तन्त्ररत्ने वा नास्ति)।

**अधिकारादिति चेत्॥ १८॥**

**भाष्यम्**— इति चेत्पश्यसि, न प्रकरणं विशेषकं व्रीहीणामिति। कथम्। अधिकारात् आध्वर्यवम्। इमे भक्षार्थाः, इमे कर्मार्था इति। तत्र कर्मार्थान् प्रोक्षिष्यतीति।

**तुल्येषु नाधिकारः स्याद्चोदितश्च संबन्धः, पृथक् सतां यज्ञार्थेनाभिसंबन्धस्तस्माद्यज्ञः प्रयोजनम्॥ १९॥**

**भाष्यम्**—तुल्या एते व्रीहयः। य एव भक्षार्थास्त एव कर्मार्थाः, न पृथक् केचित् कर्मार्था नाम। ननु ये निरुप्तास्ते कर्मार्थाः। सत्यं भवेदेतत्, प्रोक्षणादिषु दोषो न स्यात्। निर्वापे तु दोषः। न तत्र केचन प्रकृता विद्यन्ते। पृथक्सतो यज्ञार्थेन निर्वापः श्रूयते। कथम्? अपरेण गार्हपत्यं प्राचीनमनोऽवस्थितं भवति। तस्य दक्षिणं चक्रमारुह्य अनसोऽधिनिर्वपति इति। तस्मादर्थस्य सर्वेनिपयत्वं प्राप्नोत्येव। पूर्वेण हेतुनाऽपूर्वप्रयुक्तत्वं प्रोक्षणादीनामिति।

**शा**— 'तत्र श्रुतिफलीयस्त्वाद् व्रीह्यादिद्रव्यशेषता। प्रक्रियाऽवगता पूर्वशेषत्वस्यापवाधिनी॥ व्रीह्यादिरूपशेषत्वे तत्स्यानर्थक्यमापतेत्। प्रोक्षणस्य, विनाऽप्यस्मात् तत्स्वरूपस्य सिद्धितः॥ तस्मात् साधनरूपं यद् व्रीहीणां शास्त्रचोदितम्। तेन रूपेण संबन्धः प्रोक्षणादेर्विधीयते॥' तस्मात् सर्वेषामेव श्रुतप्रकरणादिविनियोगानां द्रव्यादीनां संस्काराः अपूर्वसाधनांशभूता, तद्विकृतिषु प्राकृतार्थकरेषु कृष्णलादिषु संस्कारेषु ऊहितव्याः।

**सोम**— **सूत्रार्थस्तु**—इत्यादि प्रयोजकं द्वितीयाश्रुतेः हिशब्दश्रुतेश्च संयोगात्। वाशब्दः वाक्यलिङ्गसंयुक्तापेक्षया श्रुतेः विशेषद्योतनार्थः।

**वि**—'व्रीह्यादयः प्रयोक्तारोऽपूर्वं वा प्रोक्षणादिषु।, वाक्यश्रुतिभ्यामाद्यः स्यात्, चोदितत्वादथान्तिमः॥'

**भाट्ट**— अत्र सूत्रे द्रव्यसंख्याहेतुसमुदायानां यत्र श्रुत्या उद्देश्यता, तत्र व्रीहित्वादिनैव, न तु अपूर्वसाधनत्वेन, प्रकरणेन श्रुतिसंकोचायोगात् इत्याशङ्क्य तत्रापि आनर्थक्यापत्तेः अपूर्वसाधनत्वेनेति सिद्धान्तितम्। तत्र 'व्रीहीन् प्रोक्षति' इति द्रव्योदाहरणस्य 'चतुर्होत्रा पौर्णमासीम्' इति समुदायोदाहरणस्य च कथञ्चित् संभवेऽपि संख्योदाहरणस्य 'त्रीन् परिधीन्' इति मन्त्रस्य 'अगन्म सुवः' इति मन्त्रात् अपूर्वसाधनीभूतपरिधीयत्तावगमनार्थत्वस्य सिद्धत्वात् अनुदाहरणत्वमिति वार्तिककारेणयोक्तम्, तथा हेतूदाहरणेऽपि। यत् 'शूर्पेण जुहोति, तेन ह्यन्नं क्रियते' इत्यत्र करणहेतुना तस्य व्याप्यत्वावगमात्, व्याप्यस्य च सर्वत्र साधनत्वदर्शनात्, अन्नकरणोद्देशेन होमः संस्कारकतया विधीयते इत्याशङ्क्य तृतीयया होमं प्रति शूर्पस्य करणत्वावगतेः 'तेन ह्यन्नं क्रियते' इत्यस्य चार्थवादत्वात्, होमोऽयं आरादुपकारकः अपूर्वार्थं इति विचारितम्, तत् व्याप्यस्यापि जुह्वादेः क्रतुं प्रति प्राधान्यादर्शनात् अर्थवादत्वस्य च हेत्वधिकरणे साधितत्वात् तद्विचारस्य च ऊहानुपयोगित्वाच्चोपेक्षितम्।

किञ्च सर्वस्यैवास्य विचारस्य आद्याधिकरणेन गतार्थतेत्यपि वर्ण्यते। यद्यपि यजतीति सूत्रेण (९।१।१।१) संनिपत्योपकारकमात्रे अपूर्वसाधनत्वस्य सिद्धा। संस्कारे चेति सूत्रेण (२) च आन्तरालिकानां याग गादिकारणताऽवच्छेदकानां अविवक्षा सिद्धा, तथापि श्रुतस्य व्रीहित्वादेः कारणताऽवच्छेदकस्य त्यागे प्रमाणाभावः। न च युगपद्वृत्तिद्वयविरोधः, अपूर्वसाधनीभूतव्रीहित्वावच्छिन्नस्यैव लक्षणया उद्देश्यत्वाङ्गीकारात्। अतश्च तादृशत्वस्य नीवारादौ असत्त्वात् नोहसिद्धिः। इति प्राप्ते, व्रीहित्वावच्छेदके गौरवापत्तेः श्रुतस्य व्रीहित्वस्य च लक्षणोपयोगिशक्यप्रतिपादकत्वेनापि चरितार्थत्वात् विवक्षा। अत एव तत्तद्व्यापारिकाया विजातीयापूर्वसाधनताया एव लक्ष्यत्वेति कौस्तुभे स्पष्टम्। तत्तद्व्यापारकसाधनतात्वावच्छिन्नसाधनताया एव लक्ष्यत्वे व्रीहित्वनिष्ठकारणताया गुणादिप्रमाणेन भेदेऽपि सर्वसाधारण्यलाभोऽपीत्यपि तत्रैव व्यक्तम्। अनश्च व्रीहित्वादेरविवक्षितत्वात्, युक्तो नीवारादिषु ऊहो विकृतौ। एवं यद्यपि नापूर्वसाधनत्वम् 'व्रीहीनवहन्ति' इतिवत् पूर्वप्रमितम्, स्ववाक्ये एव तु संस्कारविशिष्टस्य व्रीह्यादेः साधनत्वविधाने 'प्रोक्षि-

लाभ्यामुलूखलमुसलाभ्याम्' इत्यादौ तत्समानजातीयवाक्यान्तरे वा, तत्रापि प्रोक्षणविशिष्टस्य व्रीहित्वविशिष्टस्य च विधेयक्रियाविशेषणत्वेन विधौ कृते पश्चादरुणैकहायनीन्यायेन परस्परान्वयात् प्रकृतौ तज्जातीयस्य प्रोक्षणेऽपि विकृतौ तज्जातिलोपेऽपि तत्स्थानापन्नद्रव्यान्तरे तत्प्रोक्षणानात् सिध्यति ऊहः। प्रोक्षणं प्रति विशेषणविधित्वेऽपि अपूर्वसाधनत्वस्यैव उद्देश्यतावच्छेदकत्वम्, लक्षणा परं (केवलम्) न तत्रास्ति, व्रीहिपदेन व्रीहित्वस्यैव अभिधानात्। अपूर्वसाधनत्वस्य कल्पितत्वविधानेन स्वपदेनैवाभिधानात्।

एवं यत्रापि संस्कारविध्युत्तर तच्छब्देन संस्कृतस्य विनियोगः यथा 'तप्ते पयसि' इत्यादौ तत्रापि संस्कारवाक्ये पयस्त्वसमानाधिकरणधर्मावच्छिन्नोद्देशेनैव दध्यानयनविधिः, न तु पयस्त्वावच्छिन्नोद्देशेन आनर्थक्यात्। स च धर्मः उत्पत्तिवाक्ये द्रव्यसामान्यमिव सामान्यतः एव पयःपदेन प्रथमं प्रतीयते, पश्चाच्च तच्छब्देन पयस्त्वावच्छिन्नस्य अपूर्वसाधनत्वे प्रमिते स धर्मः अपूर्वसाधनत्वरूपः इति प्रतीयते। तत्र च पयःपदस्य लक्षणेति पश्चादवगम्यते इति न कश्चिद्विरोधः। वस्तुतस्तु यद्यपि सप्तमीश्रवणात् तापविशिष्टपयोऽधिकरणकदध्यानयनस्य विहितस्य प्रयोजनापेक्षायां उद्देश्यत्वावच्छेदकं सामर्थ्यात्पयस्त्वपदमनुमीयते। तथापि मन्त्रवर्णाद्यनुरोधात् अवस्थाविशिष्टपयोवाच्याभिधायकपदसमभिव्याहृत—तच्छब्दवाच्यपयस्याया एव उद्देश्यत्वावगतेः, तद्भिन्नविजातीयापूर्वसाधनत्वनाचिपदार्थैर कल्पनात् न तल्लक्षणाऽपीति ध्येयम्।

मण्डन— 'न द्रव्यसंख्यादिरपि प्रयोक्ता।'

शंकर— 'भोज्याङ्गापूर्वकेवलम्।'

* द्रव्यसंप्रदानादिना कारकत्वेन दानादिवाक्यनिरूपणे न तन्निष्पादकवाक्यान्तरापेक्षा। मु पृ. ७०९.

¶ द्रव्यसंयोगाचोदना, पशुसोमयोः प्रकरणे ह्यनर्थको द्रव्यसंयोगो नहि तस्य गुणार्थेन। २।२।६।१७॥

'अग्नीषोमीयं पशुमालभते' इति 'हृदयस्याग्रेऽवद्यति, अथ जिह्वाया अथ वक्षस.' इति च श्रूयते। तथा ''सोमेन यजेत' इति, 'ऐन्द्रवायवं गृह्णाति, मैत्रावरुणं गृह्णाति, आश्विनं गृह्णाति' इत्यादि च श्रूयते। तत्र अवद्यतिगृह्णातिचोदिताना कर्मणामेव समुदायस्य आलभतियजती अनुवादकौ, किंवा अपूर्वयोः कर्मणोः विधायकौ इति विचारे इदं सूत्रं पूर्वपक्षमाह। हृदयादिवाक्यं गृह्णातिवाक्यं च चोदना कर्मचोदना प्रत्येतव्या। अन्यत्र अवदानविशेषस्य हृदयादेः द्रव्यस्य संयोगात्। पशुसोमयोः पशुसोमवाक्ययोः उत्पत्तिचोदनात्वे यस्मात् प्रकरणे प्रत्यक्षावद्यतिगृह्णातिवाक्येषु द्रव्यसंयोगः हृदयग्रहादिद्रव्यसंस्कारः विधीयमानः अनर्थकः स्यात्, अपूर्वं प्रतिपन्नेन उत्पत्तिशिष्टपशुसोमावरोधेन हृदयादीनां साधनत्वानुपपत्तेः। नहि तस्य उत्पत्तिशिष्टद्रव्यस्य अवदानग्रहणादि गुणार्थत्वेन संस्कारकत्वेन उपयुज्यते, नाशकत्वात्।

अथवा भाष्यरीत्या सिद्धान्तसूत्रमिदं तस्यार्थ इत्थम्— पशुसोमयोः पशुसोमवाक्ययोरेव चोदना कर्मचोदना द्रव्यसंयोगात् पशुसोमरूपापूर्वद्रव्यसंयोगात्। द्रव्यसंयोगः पशुशब्दः सोमशब्दश्च प्रकरणे प्रकृते हृदयादौ अनर्थकः, लक्षणाप्रसङ्गात्। नहि हृदयादिवाक्यविहितयागे एव तस्य पशोः सोमस्य च द्रव्यस्य गुणार्थेन प्रदेयप्रकृतित्वेन विधिः संभवति। इति।

"पशुसोमवाक्ययोः चोदना यथाग्नीषोमलक्षणद्रव्यदेवताविशिष्टस्य सोमविशिष्टस्य च यागस्य विधिः। द्रव्यसंयोगात् पशुसोमद्रव्यश्रवणस्य प्रयोजनेन संयोगात्। हि यस्मात् प्रकरणे प्रकृतहृदयाद्यवदानग्रहणादिवाक्यविहिते कर्मयागे सति पशुसोमद्रव्यसंयोगः अनर्थकः स्यात्। ननु पशुसोमशब्दयोः गौण्या वृत्त्या तत्प्रकृतिकद्रव्यपरत्वात् तदनुवादकत्वं संभवति इत्यत आह— नहीति। गुणः अवयवः, अर्थः वृत्तिः, गुणद्वाराऽर्थो गुणार्थः गौणी वृत्तिः। तस्य हि पशुशब्दस्य सोमशब्दस्य च मुख्यार्थेन्वे संभवति गौण्या वृत्त्या तद्विकृतिद्रव्यपरत्वं न युक्तमाश्रयितुमित्यर्थः।" इति कुतूहलम्। तस्मादपूर्वकर्माणौ विधीयेयातां न प्रकृतानामनुवादौ इति सिद्धान्तः।

अचोदकाश्च संस्काराः। १८॥

पूर्वस्य सूत्रस्य पूर्वपक्षपरत्वे इदं सिद्धान्तसूत्रम्। चकारः तुशब्दार्थः पूर्वपक्षव्यावर्तकः। पूर्वस्य सूत्रस्य

सिद्धान्तसूत्रे । इदं सूत्रं सिद्धान्ते युक्त्यन्तरपरम्। चकारः समुच्चयार्थः । अथ प्रकृता एव यागा न सन्तीत्युच्यते । 'हृदयस्याग्रेऽवद्यति' 'ऐन्द्रवायवं गृह्णाति' इति श्रवणनिग्रहणादयः यागानां अचोदकाः न चोदकाः । किन्तु संस्काराः संस्कारमात्रविषयः तन्मात्रपर्यवसानात् । प्रकृतानां यागानामभावात् न समुदायशब्दो यजतिः तथा आलभतिः । तस्मात् पशुसोमवाक्ये यागविधायके ।

तद्भेदात् कर्मणोऽभ्यासो द्रव्यपृथक्त्वादनर्थकं हि स्याद्, भेदो द्रव्यगुणीभावात् । १९ ॥

' दशैतानध्वर्युः प्रातःसवने ग्रहान् गृह्णाति ' इति समुच्चयो दृश्यते । तथा ' आश्विनो दशमो गृह्यते, तृतीयो हूयते ' इति च क्रमः श्रूयते । यदि च ' सोमेन यजेत ' इति अपूर्वो यागो विधीयेत ततः ऐन्द्रवायवादिभिः देवता विधीयेरन्, ता एकार्थाः सत्यो विकल्पेरन् । तत्र क्रमसमुच्चयौ नोपपद्येयाताम् । अथ यजतौ समुदायवचने सति समन्वेतत् अवकल्पते भवति, तस्मात् समुदायानुवादः यजतिः इति पूर्वपक्षी । तत्रोत्तरमाह सिद्धान्ती । तद्भेदात् देवतासंयोगभेदात् कर्मणः ग्रहणकर्मणः अभ्यासः द्रव्यपृथक्त्वात् देवतासंयुक्तग्रहणसंस्कार्यद्रव्यपृथक्त्वात् अनर्थकं हि संयोगान्तरभवनं अननुष्ठीयमानं अनर्थकं स्यात् । तेन ग्रहणस्य भेदः संस्कार्यं द्रव्यं प्रति गुणभावात् । एतद्देवतावन्ति ग्रहणानि यागप्रक्रमात्मकत्वात् न यागादृते देवतार्थं द्रव्यं संस्कर्तुं शक्नुवन्ति इत्येवमपेक्षिते, भविष्यति कश्चिद्यागः, य एतानि द्रव्याणि देवतासंबन्धं आपादयिष्यति इति । यागोऽपि च अविहितदेवताकः श्रुतिलिङ्गवाक्यैः देवतामलभमानः प्रकरणस्य च ईदृशे वस्तुनि अक्रियात्मके व्यापाराभावात् ग्रहणेषु तावत् विनियोजक भवति । तानि च अपर्याय-विधानात् भिन्नादृष्टसंबन्धित्वाच्च युगपत् गृह्यन्ते तद्वशेन देवतानामपि समुच्चयसिद्धिः ।

ग्रहणाभ्यासवत् यागाभ्यासेऽपि सूत्र योज्यं यथा— "तद्भेदात् प्रकल्पितहोमभेदात् यागकर्मणः अभ्यासः, स्वीकृतद्रव्यपृथक्त्वात् अशेषं त्यज्यमानं अनर्थकं स्यात् । अतः तद्वचो सकृच्छ्रुतस्यापि वाक्यान्तरप्रकल्पितावस्थौत्पत्तिकद्रव्यगुणत्ववशेन अनुष्ठानभेदः । तद्धि द्रव्यं अनवयं यथागृहीतमेव दातव्यम् " इति वार्तिकम् । तस्मात् क्रमसमुच्चयौ युक्तौ एव भवतः ।

संस्कारस्तु न भिद्येत परार्थत्वाद् द्रव्यस्य गुणभूतत्वात् । २० ॥

- ननु ' सोमेन यजेत ' इति सोमवाक्यस्य यागविधायकत्वे यूपे खादिरादिवत् इन्द्रवाय्वादिदेवतानां विकल्पः स्यात् इत्याशङ्कायामाह सिद्धान्ती । तुशब्देन शङ्कानिरासः । खादिरादियूपेषु संस्कारः पशुनियोजनं प्रतियूपं न भिद्यते । नियोजने तेषां समुच्चयो न भवति इत्यर्थः । तेषां परार्थत्वात् पशुनियोजनार्थत्वात् । द्रव्यस्य खादिरादेः बन्धनक्रियां प्रति गुणभूतत्वात् । तस्मात् खादिरादीनां न समुच्चयः । ग्रहदेवतास्तु न यागे गुणाः, तस्मात् समुच्चीयेरन् । तस्मात् ' पशुमालभते ' ' सोमेन यजेत ' इति अपूर्वयोः कर्मणोर्विधानम्, नानुवादः इति सिद्धम् । कै.

द्रव्यसंयोगाचोदना पशुसोमयोः, प्रकरणे ह्यनर्थको द्रव्यसंयोगो नहि तस्य गुणार्थेन । २।२।६।१७ ॥

ज्योतिष्टोमे श्रूयते ' यो दीक्षितो यदग्नीषोमीयं पशुमालभते ' इति । तथा ' हृदयस्याग्रेऽवद्यत्यथ जिह्वाया अथ वक्षसः ' इति । तथा ' सोमेन यजेत ' ' ऐन्द्रवायवं गृह्णाति, आश्विनं गृह्णाति ' इत्येवमादि । तत्र संशयः किमयमालभतियजतिचोदितानां कर्मणां समवायात् आलभतियजती समुदायस्यानुवदितारौ, अथापूर्वयोः कर्मणोर्विधातारौ इति । इदानीं पूर्वाधिकरणवैषम्यात् पुनः प्रत्यवतिष्ठते ।

अत्राय पूर्वपक्षिणोऽभिसंधिः । भवतु कण्वादिसंयुक्तद्रव्यादिविशिष्टवाक्यानां प्रकृते कर्मणि गुणविधायकत्वेनैव उपपत्तेः कर्मानुवादकत्वम् । इह तु ' हृदयस्याग्रेऽवद्यति ' इत्यादिवाक्येषु हृदयादिसंबन्धेन अवदानं श्रूयते । तत्र हृदयादीनां वाक्यान्तरविहितत्वेन संस्कारप्रधानरूपगुणविधानासंभवात् हृदयादिसाधनकर्मोत्पादकत्वमेव युक्तम् । ' ऐन्द्रवायवं गृह्णाति ' इत्यादिवाक्येषु रससंबन्धेन ग्रहणं श्रूयते । तत्र रसस्य वाक्यान्तराविहितत्वेन तत्संस्कारग्रहणरूपगुणविधानासंभवात् रससाधनककर्मोत्पादकत्वम् । एवं च सति ' यो दीक्षितो यदग्नीषोमीयं पशुमालभते ' इत्यत्र अग्नीषोमदेवताविधानाय पशुशब्देन लक्षणया

हृदयादिसमुदायानुवादः। द्रव्यदेवतासंबन्धानुमितेन यजिना आलम्भवाक्ये हृदयादिसाधनकयागानुवादः। तथा 'सोमेन यजेत' इत्यत्रापि हविःप्रकृतिसोमलताविधानाय यजिना ऐन्द्रवायवादिवाक्येषु द्रव्यदेवतासंबन्धानुमित-यागसमुदायानुवादः इति। अत्रापि पौर्णमासीवत् समुदायानुवादत्वमेव।

ननु 'हृदयस्याग्रेऽवद्यति' इत्यादिवाक्येषु न तावत् यजिः श्रूयते। नाप्यनुमीयते, द्रव्यदेवतासंबन्धानवगमात्। हृदयादिसंबन्धस्य अवदानस्य संस्कारकत्वात् याग-मन्तरेणापि संभवाच्च यागानुमापकत्वम्। कथम्? पशु-द्रव्याग्नीषोमदेवताकयागविधानेनैव मुख्यपशुशब्दार्थोपपत्तौ दीक्षितवाक्ये लक्षणया पशुशब्देन हृदयाद्यनुवादः। अतः यजौ तावत् सर्वथा पूर्वपक्षो न समञ्जति। तथा 'सोमेन यजेत' इति प्रत्यक्षयागविधौ सति कथं ऐन्द्रवायवादि-वाक्येषु द्रव्यदेवतासंबन्धानुमितस्य यागस्य विधानम्? 'प्रत्यक्षविधिसद्भावात् लभ्यते नानुमानिकम्' इति न्याय-विरोधात्। ऐन्द्रवायवादिवाक्यानां चैन्द्रवायुदेवताकसोम-ग्रहणविधानेनैव उपपन्नत्वात् नाश्रुतयागविधानमुप-पद्यते। भवतु वा द्रव्यदेवतासंबन्धेन ऐन्द्रवायवादिवाक्येषु यागविधानम्, तथापि 'सोमेन यजेत' इत्यत्र सोमद्रव्यक-यागविधानोपपत्तेः कथं यजतेः सम्बन्धाद्युपगमाभावेऽपि यागानुवादकत्वं संभवति, अतः कथं सोमेऽपि पूर्वपक्षः? इति। उच्यते, यजौ तावत् यद्यपि हृदयादिसंबन्धेन अवदानं श्रूयते, तथापि 'साम्नाय्यं वा तत्प्रभवत्वात्' ( सू. ८।१।४० ) इत्यनेनैव न्यायेन अवयवावदानेः सान्नाय्यावदानप्रकृतिः। सान्नाय्यावदानस्य यागीय-द्रव्यसंस्काररूपत्वात् एतस्यापि यागीयद्रव्यसंस्कारकत्वम्। तच्च तदैव संभवति, यदि हृदयादीनि यागसाधनानि भवन्ति। तेन यथायागसाधनसंस्कारविषयसंबन्धेन पूर्वो-क्तानां यागसाधनत्वं कल्प्यते, यथा वा स्वर्गसंबन्धेन फल-चमसस्य अश्रूयमाणमपि यागसाधनत्वं कल्प्यते, तथै-हापीति पशुशब्देन हृदयादीनि अनूद्यन्ते, यजिना च तत्संबन्धिना यागमनूद्य अग्नीषोमौ देवतात्वेन विधीयेते। न च पशुशब्दस्य हृदयाद्यनुवादत्वे लक्षणैव दोषः, यतो विधौ हि लक्षणा दोषमावहति, नानुवादे। अथवा सोदीक्षितवाक्ये देवताविधिदर्शनादेव हृदयादिवाक्येषु यागानुमानम्।

ननु सोदीक्षितवाक्ये देवताविशिष्टयागविधिरेवास्तु कथं देवतामात्रविधानम्? नैवम्। एवं हि मन्यते, अवश्यं सिद्धान्तिनाऽपि हृदयादिगतावदानसंस्कारवैय-र्थ्यात् पशुशब्दस्य लक्षणया हृदयादिपरत्वं वक्तव्यम्। तत्र यदि सोदीक्षितवाक्ये यागोत्पत्तिः, तदा विधौ लक्षणा, सा चायुक्ता 'न विधौ परः शब्दार्थः' इति न्यायात्। अवदानवाक्यानां तु यागोत्पादकत्वे अनुवादे लक्षणा, सा न दोषाय। दृष्टा च भाविनीमपि अङ्गप्राप्तिमालोच्य उत्पत्तिव्यवस्था। यथा संस्थाऽधिकरणे भाविनीमाति-देशिकावदानप्राप्तिमालोच्य सान्नाय्ययागोत्पत्तिः। तेन पशुशब्देन हृदयादीनि अनूद्य यजतिना तत्संबन्धिना यागमनूद्य अग्नीषोमौ देवतात्वेन विधीयेते इति सिद्धम्। तथा सोमेऽपि ऐन्द्रवायवादिवाक्येषु द्रव्यदेवतासंबन्धेन तावद्यागोऽनुमातव्यः। नहि द्रव्यदेवतासंबन्ध-प्रतिपादकस्य यागं विना स्वार्थे पर्यवसानमस्ति। तदुक्तम्—
'यथाऽऽग्नेयादिवाक्यानां न प्राग्यागानुमानतः।
स्वार्थपर्यवसायित्वं तथा सोमेऽपि दृश्यताम्॥'
इति। ( वा. पृ. ५१० )।

ननु एवं श्रुतानुमितैकदेशमेवेदं वाक्यं निष्पन्नम् 'ऐन्द्र-वायुदेवत्येन द्रव्येण यजेत' इति। तथा सति सोमवाक्य-विहितयागानुवादेन अग्नीषोमवाक्ये इव हृदयाद्यनुवादेन देवताविधानमेवास्तु, किमत्र विशिष्टविधिस्वीकारेण? नैवम्। सोमवाक्योपात्तयागानुवादेन ऐन्द्रवायवादिवाक्ये-देवताविधौ एकयागसंबन्धेन सविरुद्धानामपि एकस्मिन् यागे विकल्पः स्यात्। तदुक्तम्— 'सर्वेकबन्धनार्थत्वात् पलाशखदिरादयः। तत्संबन्धे विकल्प्यन्ते यागे-ऽस्मिन् देवतास्तथा॥' इति। (वा. पृ. ५१२)। तथा सति 'आश्विनो दशमो गृह्यते, तृतीयो हूयते' इति क्रमदर्शनम्। तथा 'दशैतानध्वर्युः प्रातःसवने ग्रहान् गृह्णाति' इति समुच्चयदर्शनं च नोपपद्यते। ऐन्द्रवायवादिवाक्यानां तु यागोत्पादकत्वे भिन्नयागसंबन्धित्वात् देवतानां समुच्चये सति क्रमसमुच्चयदर्शनमुपपद्यते। तथा सति रूपाभावेन यागविधानाभावात् यजिशब्दाद्यभावेऽपि ऐन्द्रवायवादि-

वाक्यविहितयागसमुदायानुवाद एवाय 'सोमेन यजेत' इत्यत्र यजतिशब्दः । सोमशब्दः ऐन्द्रवायवादिवाक्यावगतरसप्रकृतिसोमलताविधानार्थ इति । एवं प्राप्ते, अभिधीयते । भवेदयं यद्यत्र पौर्णमासीवत् वाक्यान्तरोत्पन्नयागप्रत्यभिज्ञानं भवेत् । सर्वत्र खलु प्रत्यभिज्ञानबलेन अनुवादो भवति । पुनरनुवादसिद्ध्यर्थं प्रत्यभिज्ञाकारणं कल्प्यते । न च अवदानिगृह्णातिवाक्येषु यागः श्रूयते, येनात्र प्रत्यभिज्ञानम् । तदुक्तम् 'प्रकृतप्रत्यभिज्ञानं वाक्ये यत्रोपलभ्यते । तत्र स्यादनुवादत्वं नचात्रैवं प्रतीयते ॥' इति । (शा. पृ. ५१२) । तेन योदीक्षितवाक्ये एव द्रव्यदेवतासंबन्धानुमितस्य यागस्य विधानम् । सोमवाक्ये तु प्रत्यक्षसिद्धगोव द्रव्यविशिष्टयागविधानम् । न च वाच्यम्, पशुद्रव्यकसोमद्रव्यकयागोत्पत्तौ हृदयादीनां रसस्य च अविनियुक्तत्वात् तत्संबन्धिनोः अवदानग्रहणरूपसंस्कारयोर्विधानमनर्थकमेव स्यादिति । न हि पशुसोमयागावतीतिः, यतः अवद्यतिगृह्णातिवाक्य दर्शनेन तयोरविकृतयोर्देवतोद्देशेन यागविधानात् । किं तर्हि ? हृदयादिपर्यन्तो रसपर्यन्तश्च, तेन सोमविनियोगेन तदन्तर्गतपशुहृदयसोमरसयोरपि विनियुक्तत्वात् विनियुक्तगोचरमेव संस्कारविधानम् । यथा व्रीहिप्रोक्षणस्य तण्डुलाविपर्यन्तत्वात् 'तण्डुलान् पिनष्टि' इत्यादिसंस्कारविधानम् । न चैवं सति विधौ पशुसोमशब्दः संस्कारज्ञापनार्थः, तदुक्तम् 'द्रव्येणात्यन्तभिन्नेन सह चिन्त्यं बलाबलम् । हृदयादिरसाद्यारम्भकत्वं पशुसोमयोः ॥' इति । (शा. पृ. ५१६) । किञ्च विशेषतः पशूदाहरणे अवद्यतौ यागः संभावयितुमपि न शक्यते । यदपि हृदयाद्यवदानस्य सान्नाय्यावदानप्रकृतित्वेन तद्धर्मलाभे सति यागीयद्रव्यसंस्कारत्वात् यागानुमानमित्युक्तम्, तदपि अयुक्तम् । सान्नाय्यावदानेऽपि प्रकृतौ अचोदितत्वेन धर्मसंबन्धाभावात् । न च 'द्विर्हविषोऽवद्यति' इत्यनेन तावदवदानं विधीयते । किं तर्हि ? अर्थप्राप्तानुवादेन द्वित्वमात्रम् । एतच्च कर्मभेदाधिकरणे (२।४।१८ शा. १४।३७) विस्तरेण वक्ष्यामः । भवतु वा हृदयाद्यवदानस्य तत्प्रकृतित्वम्, तथापि न यागसाधनसंस्कारत्वं तस्य । निकर्षन्यता चातिदिश्यते, न धर्ममात्रम् । अतो न तद्बलेनापि यागकल्पना । पूतीकाभिषवफलचमसभक्षणयोस्तु यागसाधनद्रव्यसंस्कारयोरेव प्रकृतयोर्वाक्यप्रकरणाभ्यां पूतीकफलचमससंबन्धेन उपादानमिति वैषम्यम् । यदपि योदीक्षितवाक्ये पशुशब्दस्य लक्षणया हृदयादिपरत्वमापाद्य विधौ लक्षणाऽभावात् भाविदेवतासंबन्धनिरीक्षणेन अवद्यतिवाक्ये एव यागानुमानमित्युक्तम्, तदपि यागविधौ पशुशब्दस्य हृदयादिपर्यन्तत्वेन मुख्यार्थस्य अपरित्यागात् निरस्तम् । पशूदाहरणं तावन्निरूपादम् ।

एवं 'सोमेन यजेत' इति प्रत्यक्षे यजौ ऐन्द्रवायवादिवाक्येषु यागः संभावयितुमेव न शक्यते । न च आग्नेयादिवाक्यानामिव ऐन्द्रवायवादिवाक्येष्वपि न यागमन्तरेण स्वार्थपर्यवसानमस्तीति वाच्यम् । यतः इन्द्रवायुदेवतोद्देशेन द्रव्यग्रहणविधानेनैव वाक्यपर्यवसानात् । आग्नेयादिवाक्येषु तु पुंव्यापारस्य विधिविषयत्वात् भवत्यर्थस्य च अपुंव्यापारत्वात् अवश्य कल्पनीये पुंव्यापारे द्रव्यदेवतासंबन्धेन यागः एव कल्प्यते इत्युक्तम् । इह ग्रहणरूपस्य पुंव्यापारस्य श्रुतत्वात्तत्पर्यवसानं वाक्यस्येति । ननु त्यज्यमानं हविः प्रति उद्देश्यत्वं देवतात्वं न किञ्चिदात्मा समस्ति । अतः कथं ग्रहणे देवताऽन्वयः ? इति । उच्यते, न हीदं ग्रहणमर्थान्तरभूतम्, किं तर्हि ? यागावयवभूतमेवैतत् । न हि देवतोद्देशेन त्यज्यते । न च अन्योद्देशेन गृहीतस्य अन्योद्देशेन त्यागे यागः संपद्यते । तेन देवतोद्देशेन गृहीतस्यैव हविषस्त्यागो याग इति न यागावयवभूते ग्रहणे देवतोद्देशो विरुध्यते इति । एवञ्च यागापेक्षाया 'सोमेन यजेत' इत्ययमेव प्रत्यक्षश्रुतो यागोऽस्तीति नात्र यागकल्पनाप्रसक्तिः इति । तथा च सति इयमेव यागैकदेशभूतग्रहणसंबन्धिनी देवता प्रकृतयागे देवतापेक्षिणि सम्बध्यते इति । न च एवं सति खादिरपालाशादीनामिव एकबन्धनार्थत्वे देवतानामपि एकयागार्थत्वे विकल्पः इति वाच्यम् । यतो नात्र खादिरपालाशादीनामिव बन्धने, देवतानां यागे वाक्येन विधानम्, येन विकल्प आपद्येत । किं तर्हि ? ग्रहणमुखेन देवतानां यागान्वयः । ग्रहणानि तावत् भिन्नकार्याणि युगपदेव प्रकरणिना गृहीतानि भिन्नकार्यत्वात् समुच्चेय-

ण्यानि। तेन ग्रहणद्वारा देवतानामपि समुच्चयो युक्तः। अयमयं विशेषः, ग्रहणयागयोरेका देवता, येन यदुद्देशेन गृहीतं तदुद्देशेनैव त्यक्तव्यम्। तेन प्रतिग्रहणं सोमयागस्य अभ्यासः। एवं च सति भिन्नवर्णद्व्यद्व्यचमसादीनां प्रत्यभ्यासं भिन्नो यागः 'सोमेन यजेत' इत्यनेन शास्त्रेण सकृदुत्पादित इति मन्तव्यम्। तथा सति 'आश्विनो दशमो गृह्यते, तृतीयो हूयते' इति क्रमदर्शनम्, तथा 'धृवैतानध्वर्युः प्रातःसवने ग्रहान् गृह्णाति' इति समुच्चयदर्शनमुपपन्नं भवतीति सोमोदाहरणमपि अनवद्यम्।

प्रयोजनम्--पूर्वपक्षे द्रव्यादीनामैन्द्रवायवादियागाना पृथक्त्वात् स्वार्थत्वात् विशेषचोदनालिङ्गात् तद्धर्मातिदेशो सति न सकलधर्मप्राप्तिः। सिद्धान्ते तु पशुयागस्य सोमयागस्य एकत्वात् विकृतौ सकलधर्मोपसिरिति।

सूत्रं तु--पशुसोमद्रव्यसंयोगात् पशुवाक्ये सोमवाक्ये च यागचोदना यागविधानम्, यस्मात् प्रकृतयागेषु अनर्थको निष्प्रयोजनो द्रव्यसंयोगः। 'नहि तस्य गुणार्थेन' इति सूत्रावयवो भाष्यकारेण सोमोदाहरणे सोमलतायाः प्रदेयत्वेन गुणार्थत्वमाशङ्क्य श्रौतत्वावरोधेन तन्निराकरणपरतया व्याख्यातः। 'नहि तस्य गुणार्थेन' इति सूत्रावयवस्तात्पर्यमनाकलितं भाष्यकारेण। नहि गुणाधिकरणविरुद्धा प्रदेयत्वेन गुणत्वाशङ्का जैमिनेर्मनसि संभाव्यते। व्रीहिषयवत् प्रदेयप्रकृतित्वेनैव तु सोचिता। तदुक्तम्-- 'यथैवाष्टाकपालादौ श्रौतेऽपि सति भाष्यमतः। व्रीह्यादयो विधीयन्ते तथा सोमो विधास्यते॥' इति। (वा. पृ. ५१२)।

अत्रैके समाधानमभिदधति-- 'आग्नेयोऽष्टाकपालो भवति' इति अत्र अग्निदेवतासंबन्धपुरोडाशप्रतिपादकवाक्यदोषः संभवति। 'पुरोडाशं कूर्मं भूत्वं सर्पन्तमपश्यन्, तमब्रुवन्, इन्द्राय प्रियस्व बृहस्पतये प्रियस्व विश्वेभ्यो देवेभ्यो प्रियस्व' इत्यादि। अस्य च स्तुतिपरत्वेऽपि स्वान्यपुरोडाशप्रतिपादनावरोधात् स्वनाम्नस्सपुरोडाशे एव आग्नेयतद्धितपर्यवसानम्। तथा सति किंप्रकृतिकः पुरोडाश इति प्रकृतिद्रव्यापेक्षायां 'व्रीहिभिर्यजेत' इति पुनः प्रकृतितया व्रीहीणां विधिः। अत्र तु 'ऐन्द्रवायवं गृह्णाति' इति वाक्यस्योपादानगमात् प्रकरणनिरीक्षणेन च 'सोमं पुनाति' इति सप्रकृतिकस्यैव रसस्य प्रतीतेस्तत्रैव तद्धितपर्यवसानमिति प्रकृतिरूपापेक्षाभावाच प्रकृतित्वेन 'सोमेन यजेत' इति सोमस्ताविधिः संभवति। न च 'त्वाष्ट्रं पात्नीवतमालभेत' इत्यत्र यथा आलम्भस्य अर्थाक्षिप्तालम्भ्यमात्रे तद्धितपर्यवसानम्, तथा 'ऐन्द्रवायवं गृह्णाति' इत्यत्रापि स्ववाक्ये एव ग्रहणाक्षिप्तग्रह्यमाने तद्धितपर्यवसानम्। अव्यवहितश्रुतेश्च 'अंश्या धारया गृह्णाति' इति वाक्ये गौणशब्दस्यैव अव्यभिचारिग्रहणविशेषाभिधायकत्वात्, अव्यभिचरितोपस्थितद्रव्येणैव तद्धितपर्यवसानमिति वक्तव्यम्। येनान्यपरशब्दोपनीतो अप्रामेन अर्थाक्षिप्तेनार्थेन अभिधानमिति व्युत्पत्तेः, परमते च नित्यं शब्दाशब्दयोरसंबन्धात् अर्थाक्षिप्तस्यापि तद्वाचकशब्दकल्पनाव्यतिरेकेण अन्वयात् प्रकरणे च 'सोमं पुनाति' इति अनन्यपरशब्दोपनीतस्य सोमरसस्यैव प्रतिलाभेन पर्यवसानम्। न च लक्षणत्वात् सोमशब्दस्य 'सोमं पुनाति' इत्यत्र सोमशब्दो न रसपर इति वाच्यम्। द्रवद्रव्यकल्पापहरणाभिधायकस्योत्पुनातिशब्दस्य लतासमभिव्याहारानुपपत्तौ लाक्षणिकस्य प्रथमश्रवणपरत्वस्य अवश्यमभ्युपेयत्वात्। न च प्रथमावगतसोमशब्दानुरोधेन उत्पुनातिशब्दः एव लक्षणाश्रयणाच्च सोमलक्षणार्थत्वं वक्तव्यम्। उत्पुनातिशब्दगतलक्षणाया सोमरूपसंबन्धोचितक्रियाविशेषे विनिगमनाप्रमाणाभावात्। सोमशब्दे तु उत्पवनसंबन्धोचितत्वप्रभवरसस्यैव सोमत्वादस्ति विनिगमनाप्रमाणमिति तद्वैव लक्षणेति। एवं सति उत्पवनप्रधानकर्मत्वे च उभयथापि सोमशब्दस्य रसपरत्वात् किमैन्द्रवायवं इत्यपेक्षायां अनुपपत्त्यात् सोमरसः एव संबध्यते। नच धारावाक्यव्यवधानात्प्रसङ्गः, तथापि किं धारया गृह्णातीत्यपेक्षाया सोमरससंबन्धात्। यथा 'या ते अग्नेरजाशया' इत्यनेन संबद्धं 'तनूः' इति पदं द्वाशयेत्यत्र न व्यवधीयते, तथेहापि सोमरसस्य धारावाक्येन ऐन्द्रवायवसंबन्धो व्यवधीयते इति। तथाच सति सोमरसे एव तद्धितश्रुतेः पर्यवसानात् प्रकृतिद्रव्यापेक्षाऽभावाच्च तत्प्रकृतितया लतादिविधिः संभवति। तदुक्तम्--'पुरोडाशो दन्निरूपितप्रकृतिद्रव्यतया आग्नेयादिषु प्रतीयते इति युक्तं प्रकृतिद्रव्यविधानम्। इह

निरूपितप्रकृतिकः सोमरस एव गम्यते, नहि भवति सोमरसः किंप्रकृतिक इत्यपेक्षा ' इति ।

अत्रोच्यते— भवतु सोमरसे एव वह्निश्रुतिपर्यवसानम्, तथापि नियमेन क्रयणाभिषवसंस्कृतसोमप्रभवरसद्रविषयत्वसिद्ध्यर्थं अङ्गतया सोमविधानं अर्थवदवतिष्ठते । इतरथा तु अनङ्गस्य नियमेन उपादानाभावात् प्रतिग्रहं क्रयणादिसंस्कारेणापि यागः क्रियेत । न च अनङ्गत्वेऽपि प्रसङ्गादेव क्रीतादभिषुतात् पूतात् तथाभिषवादिनाऽपि सोमादुद्भूत पयसो रस ऐन्द्रवायव इति वक्तव्यम् । विकल्पासहत्वात् । किं क्रयणादीनां संस्कारकर्मत्वमाभिप्रेत्योच्यते ? प्रधानकर्मत्वं वा ? न तावदाद्यः कल्पः, तस्य विनियुक्तगोचरत्वेन असंभवात् । नापि द्वितीयः, तथापि यागस्य पानं प्रसङ्गः ( ? ), तदा क्रीतसोमापचारे अभिषवादीनां रसापचारे च प्रधानस्य लोप एवेति ।

किंच, सामान्यशास्त्रं हि प्रसङ्गेन विशेषशास्त्रं अपेक्षायत्वादुपजीवति । यथा पदकर्मशास्त्रं क्रयापनीयमानैकहायन्युपपदनिरोधनासम् । क्रयाभिषवादिसंस्काराणां तु लोकसिद्धसोमप्राप्तिर्त्वेन तुल्यत्वात् 'तुल्येषु नाधिकारः स्यात्' इति न्यायेन न प्रसङ्गविषयत्वमिति युक्तः प्रकृतित्वेन सोमविधिरिति । तदुक्तम्— ' सोमेन यजेतेत्येतद्विधिमन्तरेणापि क्रयणाभिषवादिसंस्कारविध्युपपत्तेः ' ( इति ) । न चाविनियुक्तत्वेन सोमस्य अनङ्गत्वादसंस्कार्यत्वम्, ' सोमं पुनाति ' इत्यत्र सप्रकृतिकस्यैव अवगतस्य ऐन्द्रवायवादिवाक्येषु विनियुक्तत्वात्, सविशेषणान्वयस्य कार्योपयोगित्वेन तत्संभवे सति प्रतीतिमात्रोपयुक्तस्य उपलक्षणस्य अन्याय्यत्वात् । विशिष्टविधौ च विशेषणानां औपादानिकाङ्गभावस्य सर्वत्र स्थितत्वात् । न च औपादानिकस्य सोमाङ्गभावस्य कल्पनीयत्वात्, प्रत्यक्षाया च श्रुतौ कल्पनाऽनवकाशात्, 'सोमेन यजेत' इति प्रत्यक्षश्रुतेरेव अङ्गभावप्रतिपादकत्वमिति वक्तव्यम् । यतोऽभिव्यक्ते यागे तदनुवादेन सोमविधिर्वक्तव्यः । यागाभिव्यक्तिश्च ऐन्द्रवायवमद्धितस्य उत्पवनवाक्यावगतसोमविशिष्टरससंबन्धपूर्विका, तत्र विशिष्टविशेषणविशेष्ययोरैकरूप्यम्, किन्तु आकाङ्क्षायोग्यतावशाद्देवता (तान्वेन) रसस्याङ्गभावो न सोमाङ्गभावमन्तरेण संभवतीत्यौपादानिके सोमाङ्गभावे पृथगसिद्धे तदुपजीवी सोमविधिः प्रत्यक्षोऽपि अकिञ्चित्कर एवेति । न चैवं सति त्वाषा अपि प्रदेयत्वप्रसङ्गः । नहि सर्वत्र विशिष्टविधौ विशेषणविशेष्ययोरैकरूप्यम्, किन्तु आकाङ्क्षायोग्यतावशाद्देवतात्वेनोद्देश्यत्वमेव । तत्रापि रसस्य प्रदेयत्वेऽपि तत्प्रकृतित्वेनैव सोमस्तत्संबन्ध इति । अथवा सोमस्य अविनियुक्तत्वेऽपि अङ्गभूतरसोपकारकतया अभिषवादिसंस्कार्यत्वम्, यागस्येव विनियुक्तदोहोपकारकतया ' वत्समालभेत ' इत्यत्र आलम्भसंस्कार्यत्वम्, ऋचां वा यथा विनियुक्तस्तुत्युपकारितया सामसंस्कार्यत्वम्, स्वाध्यायस्य वा परमते विनियुक्ततदर्थोपकारकतया अध्ययनसंस्कार्यत्वम् ।

ननु सोमस्य अविनियुक्तत्वेन अनङ्गत्वात् अनङ्गस्य च अप्रतिनिधेयत्वात्, ' यदि सोमं न विन्देयुः पूतीकानभिषुणुयुः' इत्यत्र पूतीकानामभावविधित्वं भवेत्, न सोमप्रतिनिधिनियमः । तथा सति पूतीकापचारे तत्सदृशोपादानं भवेत्, न सोमसदृशोपादानम् । अतो युक्तः सोमसदृशोपादानार्थमपि सोमविधिरिति चेन्मैवम् । न सोमरसस्य विनियुक्तत्वेन तत्सदृशपूतीकान्तर्गतरसनियमात् प्रतिनिधिनियम एव । अथवा अनङ्गत्वेऽपि सोमस्य तत्प्रकृतिकरसस्यैव विहितत्वेन रसस्येव रसप्रकृतेरपि सोमस्य यागार्थत्वात्, यागार्थस्यैव प्रतिनिध्युपयोगित्वात् सोमप्रतिनिधिनियमोऽपि युक्त एव, किमङ्गता करिष्यति ? न च गुणाधिकरणन्यायेन प्रदेयत्वमपि आशङ्कनीयम् । तत्र हि ' वैश्वदेव्यामिक्षा ' इति इत्यावाक्यवत्आमिक्षाऽवरोधात पुनः 'ऐन्द्रवायवं गृह्णाति' इत्यादिप्रकृतिवाक्येषु रसस्य अप्रतीतत्वेन वैषम्यात् । अतो युक्ता भाष्यकारस्य लतायाः प्रदेयत्वाशङ्केति ।

अत्रोच्यते— यत्तावदुक्तम्, उत्पवनवाक्ये सोमरसस्यैव शाब्दत्वात् तद्धितश्रुतिपर्यवसानम्, तथा च सति न प्रकृतितया सोमविधानं संभवतीति । तदयुक्तम्, न तावदुत्पवनवाक्ये सोमरसः श्रूयते । नापि उत्पवनसमभिव्याहारानुपपत्त्या सोमशब्देन लक्ष्यते । संस्कारकर्मत्वे हि उत्पवनस्य लतायामुत्पवनरूपसंस्कारासंभवात् रसो लक्षणीयः । तथा विनियुक्तत्वेन सोमलतारसयोरसंयो-

वर्म वा एतद् यज्ञस्य क्रियते वर्म यजमानस्य भ्रातृव्याभिभूत्यै ' इति प्रयाजादिरूपे कर्मणि फलश्रुतिः । पर्णः पलाशवृक्षः । पापः श्लोकः अपकीर्तिः । यदाङ्क्ते नेत्रयोः अञ्जनं कुरुते । भ्रातृव्यस्य शत्रोः । वृङ्क्ते नाशयति । वर्म कवचम् । अभिभूतिः पराभवः इति श्रुतिपदार्थः । द्रव्येषु संस्कारेषु अङ्गकर्मसु च येषां फलस्य श्रुतिः श्रवणम्, सः अर्थवादः स्यात् न विधिः । उक्तानां द्रव्यसंस्कारकर्मणां परार्थत्वात् अन्यशेषत्वात् क्रत्वर्थत्वात् । नैतानि पुरुषार्थानि किन्तु क्रत्वर्थानि । तस्मात् फलार्थवादोऽयम् ।

उत्पत्तेश्चातत्प्रधानत्वात् । २ ॥

द्रव्यसंस्कारकर्मसु फलश्रुतिरर्थवादः इति सिद्धान्तिना उक्ते, ननु पुरुषमुद्दिश्य फलं श्रूयते ' न स पापं श्लोकं शृणोति ' इति, कथमयमर्थवादः स्यादिति चाशङ्कायां सिद्धान्ती उत्तरयति । उत्पत्तेः पर्णमयी इति विधेः उत्पत्तिवाक्यस्य अतत्प्रधानत्वात् तत्प्रधानत्वाभावात् फलपरत्वाभावात् पुरुषप्रधानत्वाभावात् इति वा । पर्णतापरमेतत् वाक्यम् । तस्मादर्थवादः फलश्रुतिः ।

आनर्थक्यमक्रियार्थत्वात् । इति सूत्रं (४।३।१।३) पुस्तके । कुतूहलवृत्तौ च तत् एवं व्याख्यातम्— ननु ' यस्य पर्णमयी जुहूर्भवति न स पापं श्लोकं शृणोति ' इत्यस्य फलपरत्वाभावे ' प्रतितिष्ठन्ति ह वै य एता रात्रीरुपयन्ति ' इति रात्रिसत्रवाक्यमपि फलपरं न स्यात् इति, अत आह । प्रतितिष्ठन्ति इत्यस्य विपरिणामेन फलपरत्वाभावे रात्रिसत्रविधेरानर्थक्यं स्यात् अक्रियार्थत्वात् स्वतन्त्रे क्रतूपस्थापकपदाभावेन क्रत्वर्थत्वाभावात् प्रकारान्तरेण फलाकाङ्क्षाशान्तेरभावात् इति यावत् । तत्र तत्र अगत्या फलपरत्वं इति ।

भाष्येऽपि ' अर्थवादे तु सति भवति प्रयोजनम्, रात्रिसत्रादेः सत्रादिषु कर्मसु प्रयोजनवत्सु ' इति व्यतिरेकेण व्याख्यानमिदम् । सिद्धान्तपक्षीयं सूत्रम् ।

फलं तु तत्प्रधानायाम् । ४ (३) ॥

सिद्धान्तपक्षीयं आशङ्कानिराकरणार्थं सूत्रम् । ' यस्य पर्णमयी जुहूर्भवति न स पापं श्लोकं शृणोति ' इत्यादेः द्रव्यसंस्कारकर्मसु फलश्रुतेरर्थवादत्वे ' स्वादिरं वीर्यकामस्य यूपं कुर्यात् ' इत्यादेरपि अर्थवादत्वमेव स्यादिति चेत्र । तुशब्दः शङ्कानिरासार्थः । अत्र तत्प्रधानायां विधिप्रधानायां चोदनायां वीर्यादि फलं अन्वेति इति चोदनैवेयं नार्थवादः । अपापश्लोकश्रवणादिकं तु कर्मिपदाभावात् न चोदनाया फलत्वेन अन्वेति इति वैषम्यम् । के.

* अगत्या प्रयोजनाकाङ्क्षायां यद्यपि क्वचित् फले श्रुतिर्भवेत्, साऽपि द्रव्यसंस्कारकर्मसु इत्यनेन न्यायेन अर्थवादतया ज्ञायते । (न्यायस्वरूपं तु) ' नहि समानाध्वनो. परस्मिन् फलवति श्रुते पूर्वस्यापि फलवत्ता श्रूयते ' इति वर्णितमेतत् । भा. १।३।८।२४ पृ. २९७, * किमेतदेवास्य फलमिति ? ( पुरोडाशस्य कपालेषु ' उरु ते यज्ञपतिः प्रथताम् ' इत्यत्र ) नेत्याह । स्तुत्यर्थमेव तद् — द्रव्यसंस्कारकर्मसु इति न्यायात् । ३।२।४।३५ पृ. २५३. * गर्गत्रिरात्रब्राह्मणे ' शोभतेऽस्य मुखं य एवं वेद ' इति नैष विधिः, द्रव्यसंस्कारकर्मसु इति चिन्तयिष्यति एतदुपरिष्टात् । भा. १।२।१।३, * न च तस्य ( वेदस्य ) अध्ययनमात्रात् तमभवन्तो याज्ञिकाः फलं समामनन्ति । यदपि च समामनन्तीव तदपि द्रव्य.... स्यात् इति अर्थवादता भवति । १।१।१।१ पृ. ९, * द्रव्यसंस्कारकर्मसु फलश्रुतिः अर्थवादः अयं न्यायः पर्णमयीन्यायः इत्यत्र । ४।३।१।१–३.

¶ द्रव्यसंस्कारन्यायः । बर्हिर्न्यायः । दर्शपूर्णमासयोः बर्हिर्धर्मा वेदिधर्माश्च अङ्गप्रधानोभयार्थाः ।।

द्रव्यसंस्कारः प्रकरणाविशेषात् सर्वकर्मणाम् । ३।८।१५।३१॥

भाष्यम्— दर्शपूर्णमासयोः बर्हिर्धर्मा वेदिधर्माश्च । तेषु सन्देहः किमङ्गप्रधानार्थाः, उत प्रधानार्थाः इति । प्रकरणात् प्रधानार्थाः । इति प्राप्ते । उच्यते । नैवम् । द्रव्यसंस्कारः अङ्गप्रधानार्थः यथा व्याख्यातमेव । उत्तरविवक्षया प्रतिरेषा क्रियते इति ।

वा— गतः समाख्याविरोधाविरोधविषयः । सर्वेश्च श्रुत्यादिविरोधाविरोधविचारः प्रकृताविव विकृतिष्वपि द्रष्टव्य. । यत्तु धर्माणां सामान्यविध्यं अङ्गप्रधानेषु पूर्वोक्तम् ( ३।७।१।१–९ ), तद् विकृतिषु कथमिति विचारे प्राप्ते सूत्रमेतत् । शक्यं तु पूर्वपक्षेऽपि एतद् समर्थयितुम्,

यस्मात् प्रकृतौ बर्हिरादिसंस्कारः सर्वकर्मणाम् । तस्मान् विकृतावपि तथैव स्यादिति ।

शा— बर्हिर्धर्माणां अङ्गप्रधानार्थत्वं उत्तरविवक्षया प्राप्यते । ( अथवापक्षेण इदमादिसूत्रद्वयम् ' यूपावट-स्तरणबर्हिर्न्याय. ' इत्यत्र व्याख्यातं द्रष्टव्यम् ) ।

वि— ' यूपावटस्तरणबर्हिर्न्याय. ' इत्यत्र निवेशितः । यद्यपि ' द्रव्यसंस्कारस्य अङ्गप्रधानार्थत्वं ' इत्येव अधि-करणशीर्षकमुपन्यस्तं निस्तारपुस्तके, तथापि ग्रन्थकारेण यूपावटबर्हिर्विषये एव अधिकरणं व्याख्यातम् ।

भाट्टदीपिकाऽपि यूपावटस्तरणबर्हिर्न्याय इत्यत्रैव निवेशिता, तावद्यात् ।

मण्डन— ' साङ्गप्रयोगाय पृषदाज्यमर्माः । ' १७.

शंकर— ' बर्हिर्धर्मोऽङ्गाङ्गिनो स्यात् । ' १९.

* द्रव्यसंस्कारविरोधे द्रव्यं तदर्थत्वात् इत्यधिकरण भाष्यीय द्रव्यसंस्कारविरोधाधिकरणे द्रष्टव्यम् । के.

द्रव्यसंस्कारविरोधे द्रव्यं तदर्थत्वात् । ६।३। १८।३८॥

पशुकर्मणि यूपार्थे महत् कदरद्रव्यं तक्षणादिसंस्कार-क्षमं लब्धम् । खदिरद्रव्यमपि लब्धम्, परन्तु तत् पशु-नियोजनक्षममपि तक्षणादिसंस्कारे अक्षमम् । तत्र द्रव्य-संस्कारयोर्विरोधः प्राप्तः । एवं द्रव्यसंस्कारविरोधे सति द्रव्यं आदद्यात् । द्रव्यादरः कर्तव्यो न संस्कारादरः । तदर्थ-त्वात् संस्काराणां द्रव्यार्थत्वात् । संस्कारा हि द्रव्यं कर्मयोग्यं कुर्वन्ति । तस्मात् उक्ते स्थले संस्काराक्षममपि पशुनियो-जनक्षमं खदिरद्रव्यमेव स्वीकार्यं इति सिद्धान्तः । के.

* द्रव्यसंस्कारविरोधे द्रव्यं प्रबलम् । संस्कारवशात् प्रतिनिधे संस्कारार्होऽपि प्रयोजनसामर्थ्येन मुख्य एव ग्राह्य । यूपे खदिर. मुख्य , कदर प्रतिनिधि. । के. ६।३।१८।३८. * द्रव्यसंस्कारविरोधे द्रव्यस्यैव उपा-दानम् । मा ६।३।१८।३८.

■ द्रव्यसंस्कारविरोधाधिकरणम् । द्रव्यसंस्कारयो-र्विरोधे द्रव्यस्यैवोपादानम् ॥

द्रव्यसंस्कारविरोधे द्रव्यं तदर्थत्वात् । ६।३। १८।३८॥

भाष्यम्— प्रकृते पशुकर्मणि यूपकाले अस्ति महत् कदरद्रव्यं तक्षणादिसंस्कारक्षमम् ( कदरः श्वेतखदिरे सिते इत्यमर. ) । अस्ति खादिरद्रव्यं अनेकजातीयकम् । तत्र किमुपादेयमिति । संस्कारा न परिलोप्स्यन्ते इति कदरः उपादीयेतेति । एवं प्राप्ते, ब्रूम. । द्रव्यसंस्कारविरोधे द्रव्यं प्रति आद्रियेरन्, न संस्कारान् । कुतः ? तदर्थत्वात् । संस्कारा. हि द्रव्यं कर्मयोग्यं कुर्वन्ति । तत्र संस्कारपरिलोपे द्रव्यमपि तावत् शक्यते । द्रव्याभावे न द्रव्यम्, न संस्कारा । द्रव्यं तेषां द्वारम्, वचनप्रामाण्यात् । तदभावे नष्टद्वारा नापूर्वं गच्छेयु. । तस्मात् खदिरमुपाददीरन्निति ।

शा— ' द्रव्यार्था एव संस्कारास्तेषां नान्यत् प्रयोजनम् । तद्दर्शनेन ततो द्रव्यपरित्यागो न युज्यते ॥ तत संस्कारहीनेऽपि खदिरे स्यान्नि-योजनम् । तक्षणादीनि लुप्येरन् प्रधानेन विरोधत ॥ ' १९.

सोम— पूर्वेण गुणानुरोधेऽपि इह तदनुरोध. इति प्रत्यवस्थानात् सङ्गति । सूत्रे तदर्थत्वात् संस्काराणां द्रव्यार्थत्वादित्यर्थः ।

वि— ' अमुख्यमुख्ये संस्कारयोग्यायोग्ये तदा नु किम् ।, आद्यो बहुगुणत्वेन, न मुख्यत्वात्तु ( य अ ) स्त्रोपनम् ॥ ' १९.

भाट्ट— यदा नियोजनादिकार्यमात्रयोग्यो मुख्य. तक्षणादिसकलसंस्कारयोग्यस्तु प्रतिनिधिस्तदा मुख्यस्यै-वोपादानम् । संस्काराणां तु ' गुणलोपे च मुख्यस्य ' इति न्यायेन लोपेऽपि न दोष । न च अन्यत्र तथात्वेऽपि यूपस्य तक्षणादिसंस्कारसमुदायरूपत्वात संस्काराणां त्यागानुपपत्तिरिति वाच्यम् । लाघवेन सकलसंस्कारजन्यपरमापूर्वविशिष्ट-काष्ठस्यैव यूपपदार्थत्वात् । अत एव ' यूप तक्षति ' इत्यादौ काष्ठस्यैव संस्कार्यत्वात काऽप्यनुपपत्ति । यत्र तु प्रधानभूतनियोजनासमर्थमेव मुख्यं तत्र तद्नादरेण प्रति-निधिनैव कार्यसंपादन द्रष्टव्यम् । १५.

मण्डन— ' आद्य न्यूनमपि श्रुतम् । '

शंकर— ' संस्कारयोग्य मुख्य स्यात् । ' १९. [ संस्कारायोगि ( अपि ) मुख्य स्यात् इति पाठस्तु आवश्यक. । ]

• ' अर्थद्रव्यविरोधे अर्थं • । ( सूत्र ) भाष्यम्— अर्थद्रव्यविरोधे अर्थं प्रति आदर्तव्यम् । इति । के.—अर्थः

रपि संस्कार्यत्वं संभवति । संस्कार्यत्वेन च विनियोगकल्पनायामितरेतराश्रयप्रसङ्गात् । तेन भूतभव्यसमुच्चारणन्यायेन प्रधानकर्मत्वमेव स्यात् । तथा च सति मुख्यार्थस्यैव सोमस्य द्रवद्रव्यकल्पापहरणरूपोत्पवनसाधनत्वासंभवः । नासौ लक्षणा,...... । न च द्रवद्रव्यान्तरस्य कल्पनीयत्वात् सोमशब्दस्यैव लक्षणया रसोपस्थापकत्वमिति वक्तव्यम् । पक्षद्वयेऽपि कल्पनासमानत्वात् । उत्पवनसाधनत्वेन रसलक्षणायामपि पार्थिवं द्रव्यान्तरं कल्पनीयमेव । इयांस्तु विशेषः, एकत्रोत्पवनाविनाभूतद्रव्यस्वीकारेण मुख्यसोमशब्दार्थस्य उत्पवनसाधनत्वम्, अपरत्र च उत्पवनाविनाभूतसाधनस्वीकारेण सोमशब्दे लाक्षणिकत्वम् । तथाचोक्तम् ।

अथवा अस्तु उत्पवनवाक्ये शाब्दी रसावगतिः, न तत्र तद्धितपर्यवसानम् । न च तथा सति सोमस्याप्येवं तद्धितपर्यवसानमिति वक्तव्यम् । धाराग्रहस्य व्यवधानेन असंबद्धत्वात् । धाराग्रहत्वे पुनर्ग्रहणस्य गुणकर्मत्वे प्रधानकर्मत्वेऽपि वा धाराऽऽद्रवद्रव्यस्य आदेयलभ्यत्वेन तस्यैव ग्रहाभिचोदनासाम्यात् । आनन्तर्याच्च बुद्धिसारतम्यात् शब्दस्थापनयाऽपि तत्रैव तद्धितवृत्तिः । तेनायमर्थो भवति 'ऐन्द्रवायव द्रवद्रव्य गृह्णीयात्' इति । द्रवद्रव्यं च द्विविधं भवति निर्यासनिर्योग च । तत्र भयस्थानाच्च किं द्रवद्रव्यं निर्यासरूपं कुतश्चिद्वृत्तिविशेषादुपादेयम् । अनिर्यासं वा कुतश्चित् तद्याकादिपक्षाद्यथाकृपादेयम् । इत्यपेक्षायां 'व्रीहिभिर्यजेत' इतिवत् 'सोमेन यजेत' इति प्रकृतितया सोमविधिरपवर्ग एवेति व्रीहिमुद्गादिः ( १ ) । भवतु वा यथाकथञ्चित् उत्पवनवाक्यगतसोमप्रकृतित्वे एव तद्धितपर्यवसानम्, तथापि अविनियुक्तस्य अनङ्गभूतस्य संस्काराभावात् क्रयणाभिषवादिसंस्कारसिद्धये सोमविधिरर्थवान् भवि ष्यति । न च विशिष्टविधानेन सोमोऽपि विनियुक्त एवेति वक्तव्यम् । यतः शाब्दत्वलोभेन संनिहितधारावाक्यासिद्धद्रवद्रव्यपरित्यागेन उत्पवनवाक्यलक्षितसोमरसेन तद्धितपर्यवसानं युक्तम् । तर्हि रसस्यैव सोमस्यापि लक्षणया शाब्दत्वम्, श्रुतिवृत्त्या वा । न तावल्लक्षणया, उत्पवनक्रियासंबन्धानुपपत्तिम्या हि लक्षणावृत्त्या सोमशब्दः संबन्धयोग्यमेव लक्षणमात्रं लक्षयतीति हास्यास्पदमेव । नापि श्रुतिवृत्त्या, एकस्य शब्दस्य संभवासंभवकृतयुगपद्वृत्तिलक्षणाविरोधात् । तेन विशिष्टत्वासंभवात् यथा 'गङ्गायां घोषः प्रतिवसति' इत्यत्र गङ्गापदार्थलक्षिततीरमात्रस्यैव निवासयोग्यस्य लक्षणाविषयत्वम्, न त्वयोग्यस्यापि जलस्य, तथात्रापि सोमप्रकृत्युपलक्षितरसस्यैव लक्षणाविषयत्वमिति अशाब्दत्वात् लताया न विशेषणत्वेन रसान्तर्भावो घटते, इति क्रयणादिसंस्कारसिद्धये युक्तः 'सोमेन यजेत' इति प्रकृति विधिरिति ।

अथ अविनियुक्तस्यानङ्गस्यापि अङ्गभूतरसोपकारकतया मन्त्रादिवत् संस्कारार्हत्वात् तदर्थमनर्थकः सोमविधिरित्युच्यते । तदयुक्तम् । उपकारकस्य हि संस्कारो भवन् अव्यभिचरितोपादानस्यैव भवति, नित्यवच्छ्रुतानां संस्काराणामनित्यसंयोगविरोधात् । तेन विनियुक्तापूर्वविदोहस्य प्रत्नवत्सोपावान्तरनिषेधेन मन्त्रोपादानस्य अव्यभिचारात् 'साम्ना स्तुवीत' इति स्तुतिविनियुक्ताना [illegible] साम्ना 'कव्यपूढ साम गायति' इति ऋगधिष्ठानाव्यभिचारात् मन्त्रस्य च ऋचा च संस्कारो युक्त एव । स्वाध्यायस्य तु न विनियुक्तार्थोपकारकतया अध्ययनसंस्कार्यत्वम्, किन्तु अध्ययनसंस्कृतस्यैव तथाभूतार्थज्ञानहेतुत्वात् । तथा आधानसंस्कृताहवनीयविनियोग, यत् सामर्थ्यात् संस्कृतविनियोग एवाधम् । यथा चैतत् तथा अर्थवादाधिकरणे प्रोक्तम् । सोमरसस्य तु अविनियुक्तत्वेऽपि प्रकारान्तरेणापि तदुपादानाविरोधेन नियमेन तदुपादानार्थभावात् संस्कृतविनियोगस्य चासंभवात् मन्त्रवदनिमित्तत्वाच्च न मन्त्रादिसाम्यम्, नापि स्वाध्यायसाम्यमिति क्रयणाभिषवसंस्कारार्थे युक्तः 'सोमेन यजेत' इति सोमविधिः । न च क्रयणाभिषवादिसंस्कारवाक्यैरेव विनियोगभङ्गिया अङ्गभावः सोमस्याक्षिप्यते इति वाच्यम् । मध्ये हि सोमविधौ तैरङ्गकल्पनाऽसंभवात् । तदुक्तम्—'स एवाय युक्तः सोमेन यजेत' इति । न च विनापि विधानात् संस्कारवशादेव सोमाङ्गभावप्राप्तौ किं विधिनेति वाच्यम् । यतः अन्यथासिद्धेनापि

यक्तम् 'सौर्यं चरु निर्वपेद् ब्रह्मवर्चसकामः' इति -तदधिकाराक्षेपादेवोत्पत्तिशस्तौ किं सर्वत्र विधिनेति ।

अथ आम्नानसामर्थ्येन श्रुतशब्दाज्ज्ञातोत्पत्तेरेव अनुष्ठितस्य कर्मणः अपूर्वसाधनत्वम्, तर्हि अत्रापि श्रुतशब्दावगताङ्गभावस्यैव सोमस्य अनुष्ठानमपूर्वसाधनमिति -नानुपपन्नम् । अतो युक्ता प्रकृतित्वेनैव सोमविधिशङ्का, न तु प्रदेयत्वेन युक्ता, तदधिकरणविरोधात् । वाक्यान्तरोपात्तत्वेऽपि रसस्य एकवाक्योपात्ते सा वैश्वदेव्यामिक्षेतिवत् तत्र तद्धितपर्यवसाने प्रदेयत्वावरुद्धत्वाविरोधात् इत्यलमतिविस्तरेणेति । तेन 'नहि तस्य गुणार्थेन' इति -सूत्रावयवस्य अयमर्थः, पशौ प्राप्ते कर्मणि द्रव्यदेवतोभयविधानार्थमवाम्न पशुद्रव्यस्य गुणार्थे विधानम्, नापि -सोमयागानुवादेन प्रकृतितया सोमस्य, ऐन्द्रवायवादिवाक्याना ग्रहणमात्रपर्यवसितत्वेनैव यागानुवादासंभवादिति । टीका.

* द्रव्यसंस्कारः अङ्गप्रधानार्थः । भा. ३।८।१५।३०.

द्रव्यसंस्कारः प्रकरणाविशेषात् सर्वकर्मणाम् । ३।८।१५।३१ ॥

दर्शपूर्णमासयोः बर्हिर्धर्मा वेदिधर्माश्च उक्ताः । स च द्रव्यसंस्कारः बर्हीरूपस्य वेदिरूपस्य च द्रव्यस्य संस्कारः प्रकरणाविशेषात् प्रकरणस्य अङ्गेषु प्रधानेषु च समानत्वात् सर्वकर्मणा अङ्गकर्मणा प्रधानकर्मणा च समान एव स्यात् । यथा प्रकृतौ तथा विकृतावपि द्रव्यसंस्कारः सर्वकर्मणा स्यात् इति सिद्धान्तः ।

भाष्ये तावत् अनेन सूत्रेण पृथगधिकरणमारभ्य 'उत्तरविवक्षया प्रारिरेपा क्रियते' इत्युक्तम् । वार्तिके -तु "यत्तु धर्माणा समानविध्य अङ्गप्रधानेषु पूर्वोक्तं (३।७।१।२) तत् विकृतिषु कथमिति विचारे प्राप्ते सूत्रमेतत्" इत्युक्त्वा पुनरुक्त "शक्यं तु पूर्वपक्षेऽपि (उत्तराधिकरणस्य पूर्वपक्षेऽपि) एतत् समर्थयितुं यस्मात् -प्रकृतौ बर्हिरादिसंस्कारः सर्वकर्मणा तस्मात् विकृतावपि तथैव स्यादिति" इति । इतरग्रन्थेषु तु उत्तराधिकरणे एवैतत् सूत्रं समावेशितम् । तदनुसारेण तु एवं योजनीयम्– ज्योतिष्टोमे अग्नीषोमीये पशौ 'बर्हिषा यूपावटमवस्तृणाति' 'आज्येन यूपमनक्ति' इति श्रुतम् ।

[illegible] आज्ये बर्हिषि च प्राकृता बर्हिराज्यधर्माः कर्तव्या नवेति विचारे पूर्वपक्षमाह, यथा प्रकृतौ प्रकरणाविशेषात् द्रव्यसंस्कारः वेदिधर्मबर्हिर्धर्मरूपः सर्वकर्मणां अङ्गानां प्रधानानां च कर्मणां क्रियते, एवं यूपावटबर्हिषि बर्हिर्धर्माः कर्तव्याः यूपाञ्जनाज्ये च आज्यधर्माः कर्तव्याः इति । अस्मिन् पक्षे सर्वं सूत्रमिदं दृष्टान्तार्थमेवेति ध्येयम् । के.

* द्रव्यसंस्कारो मन्त्रः, न कर्तृसंस्कारः । वा. १।५।८।२६ पृ. १००४.

* द्रव्यसंस्कारकर्मणां फलप्रयुक्तत्वं नास्ति । तानि तु क्रत्वर्थानि । भा. ४।१।१।१–४.

* 'द्रव्यसंस्कारकर्मसु' (४।३।१।१) 'यस्य पर्णमयी' 'शीर्षे स्नाति शीर्षेणैव समानानां भवति' 'वर्म वा एतद्यज्ञस्य' इत्यादीनि द्रव्यादिविषयाणि वाक्यानि उदाहृत्य किमेते फलविधयः, फलार्थवादा वा । तत्र पर्णतादेः अप्राप्तत्वेन अवश्यविधेयस्य फलाकाङ्क्षायां साक्षात् पुरुषार्थरूपश्रुतफलसंभवे पारम्पर्यपुरुषार्थरूपक्रतूपकाराख्यफलकल्पनाऽयोगात् फलविधित्वेन पूर्वपक्षयित्वा यथाकथंचित् पुरुषार्थस्वरूपफलत्वेन विध्यनुपपत्तिपरिहारात् रात्रिसत्रादिवत् विपरिणामकल्पनाऽनुपपत्तेः, यथाभूतवर्तमानफलत्वसंकीर्तनस्य च अनुपलब्धिविरोधात्, न फलविधित्वं इति सिद्धान्तयिष्यते । सु. पृ. १५–१६.

* 'द्रव्यसंस्कारकर्मसु परार्थत्वात्' (४।३।१।१) इति न्यायेन 'तेऽसुरा हेऽलवो हेऽलव इति कुर्वन्तः पराबभूवुः' इति अर्थवादेन 'ब्राह्मणेन [illegible] म्लेच्छितवै' इति म्लेच्छननिषेधस्य प्राशस्त्यमात्र बोध्यते । मानदूकौ. १ शाब्दत्वनिर्वचने. * 'द्रव्यसंस्कारकर्मसु परार्थत्वात्' इत्यनेन न्यायेन ज्ञानस्य पुरुषशब्दसंस्कारत्वेन निराकाङ्क्षस्य फलसंबन्धासंभवात् । भा १।३।८।२७ पृ. २८८.

द्रव्यसंस्कारकर्मसु परार्थत्वात् फलश्रुतिरर्थवादः स्यात् । ४।३।१।१ ॥

'यस्य पर्णमयी जुहूर्भवति न स पापं श्लोकं शृणोति' इति द्रव्ये पर्णाख्यपर्याये पलाशे फलश्रुतिः । 'यदाङ्क्ते चक्षुरेव भ्रातृव्यस्य वृङ्क्ते' इति नेत्राञ्जनरूपे संस्कारे फलश्रुतिः । 'वनयाजानुयाजा इज्यन्ते

वर्म वा एतद् यज्ञस्य क्रियते वर्म यजमानस्य भ्रातृव्याभिभूत्यै' इति प्रयाजादिरूपे कर्मणि फलश्रुतिः। पर्णः पलाशवृक्षः। पापः श्लोकः अपकीर्तिः। आङ्क्ते नेत्रयोः अञ्जनं कुरुते। भ्रातृव्यस्य शत्रोः। घृङ्क्ते नाशयति। वर्म कवचम्। अभिभूतिः पराभवः इति श्रुतिपदार्थः। अन्येषु संस्कारेषु अङ्गकर्मसु च येयं फलस्य श्रुतिः श्रवणम्, सः अर्थवादः स्यात् न विधिः। उक्तानां द्रव्यसंस्कारकर्मणां परार्थत्वात् अन्यशेषत्वात् क्रत्वर्थत्वात्। नैतानि पुरुषार्थानि किन्तु क्रत्वर्थानि। तस्मात् फलार्थवादोऽयम्।

उत्पत्तेश्चातत्प्रधानत्वात्। २ ॥

द्रव्यसंस्कारकर्मसु फलश्रुतिरर्थवाद इति सिद्धान्तिना उक्ते, ननु पुरुषमुद्दिश्य फलं श्रूयते 'न स पापं श्लोकं शृणोति' इति, कथमयमर्थवादः स्यादिति शङ्कायां सिद्धान्ती उत्तरयति। उत्पत्तेः पर्णमयी इति विधेः उत्पत्तिवाक्यस्य अतत्प्रधानत्वात् तत्प्रधानत्वाभावात् फलपरत्वाभावात् पुरुषप्रधानत्वाभावात् इति वा। पर्णतापरमेतत् वाक्यम्। तस्मादर्थवादः फलश्रुतिः।

आनर्थक्यमक्रियार्थत्वात्। इति सूत्रं (४।३।१।३) यदुक्तं। कुतूहलवृत्तौ च तत् एवं व्याख्यातम्— ननु 'यस्य पर्णमयी जुहूर्भवति न स पापं श्लोकं शृणोति' इत्यस्य फलपरत्वाभावे 'प्रतितिष्ठन्ति ह वै य एता रात्रीरुपयन्ति' इति रात्रिसत्रवाक्यमपि फलपरं न स्यात् इति, अत आह। प्रतितिष्ठन्ति इत्यस्य विपरिणामेन फलपरत्वाभावे रात्रिसत्रविधेरानर्थक्यं स्यात् अक्रियार्थत्वात् तत्पक्षे क्रतुप्रस्तावकपदाभावेन क्रत्वर्थत्वाभावात् प्रकारान्तरेण फलाकाङ्क्षाशान्तेरभावात् इति यावत्। ततश्च तत्र अगत्या फलपरत्वं इति।

भाष्येऽपि 'अर्थवादे तु सति भवति प्रयोजनम्, न्यादिवादेः स्रुवादिषु कर्मार्थेषु प्रयोजनवत्सु' इति व्यतिरेकेण व्याख्यातमिदम्। सिद्धान्तपक्षीयं सूत्रम्।

फलं तु तत्प्रधानायाम्। ४ (३) ॥

सिद्धान्तपक्षीयं आशङ्कानिराकरणार्थं सूत्रम्। 'यस्य पर्णमयी जुहूर्भवति न स पापं श्लोकं शृणोति' इत्यादेः द्रव्यसंस्कारकर्मसु फलश्रुतेरर्थवादत्वे 'खादिरं वीर्यकामस्य यूपं कुर्यात्' इत्यादेरपि अर्थवादत्वमेव स्यादिति चेन्न। तुशब्दः शङ्कानिरासार्थः। अत्र तत्प्रधानायां विधिप्रधानायां चोदनायां वीर्यादि फलं अन्वेति इति चोदनैवेयं नार्थवादः। अपापश्लोकश्रवणादिकं तु यस्मिन्पदाभावात् न चोदनाया फलत्वेन अन्वेति इति वैषम्यम्। के.

● अमत्यां प्रयोजनाकाङ्क्षायां यद्यपि काचित् फले श्रुतिर्भवेत्, साऽपि द्रव्यसंस्कारकर्मसु इत्यनेन न्यायेन अर्थवादतया ज्ञायते। (न्यायस्वरूपं तु) 'नहि समानाध्वनोः परस्मिन् फलवति ज्ञाते पूर्वस्यापि फलवत्ता ज्ञायते' इति वर्णितमेतत्। या. १।३।८।२४ पृ. २९७, ● किमेतदेवास्य फलमिति ? (पुरोडाशस्य कपालेषु 'उरु ते यज्ञपतिः प्रथताम्' इत्यत्र) नेत्याह। स्तुत्यर्थमेव तत् – द्रव्यसंस्कारकर्मसु इति न्यायात्। १।२।४।२९ पृ. १९१. ● गर्गत्रिरात्रब्राह्मणे 'शोभतेऽस्य मुखं य एवं वेद' इति नैव विधिः, द्रव्यसंस्कारकर्मसु इति चिन्तयिष्यति परस्तादुपरिष्टात्। भा. १।२।१।१, ● न च तस्य (वेदस्य) अध्ययनमात्रात् तत्रभवन्तो याज्ञिकाः फलं समामनन्ति। यदपि च समामनन्तीव तत्रापि द्रव्य... स्यात् इति अर्थवादतां वक्ष्यति। १।१।१।१ पृ. ६, ● द्रव्यसंस्कारकर्मसु फलश्रुतिः अर्थवादः अयं न्यायः पर्णमयीन्यायः इत्यन्न। ४।३।१।१–३.

ह्र द्रव्यसंस्कारन्यायः। बर्हिर्न्यायः। दर्शपूर्णमासयोः बर्हिर्धर्मा वेदिधर्माश्च अङ्गप्रधानोभयार्थाः ॥

द्रव्यसंस्काराः प्रकरणाविशेषात् सर्वकर्मणाम्। ३।८।१५।३१॥

भाष्यम्— दर्शपूर्णमासयोः बर्हिर्धर्मा वेदिधर्माश्च। तेषु सन्देहः किमङ्गप्रधानार्थाः, उत प्रधानार्थाः इति। प्रकरणात् प्रधानार्थाः। इति प्राप्ते ? उच्यते। नैवम्। द्रव्यसंस्काराः अङ्गप्रधानार्थाः यथा व्याख्यातमेव। तत्र विवक्षया प्रतिरेषा क्रियते इति।

वा— गत समाख्याविरोधाविरोधविषयः। एवं च श्रुत्यादिविरोधाविरोधविचारः प्रकृताविव विकृतिष्वपि द्रष्टव्यः। यत्तु धर्माणां सामानविध्यं अङ्गप्रधानेषु पूर्वोक्तम् (३।७।२।१–५), तत् विकृतिषु कथमिति विचारे प्राप्ते सूत्रमेतत्। शक्यं तु पूर्वपक्षेऽपि एतत् समर्थयितुम्,

यस्मात् प्रकृतौ बर्हिरादिसंस्कारः सर्वकर्मणाम् । तस्मात् विकृतावपि तथैव स्यादिति ।

शा — बर्हिर्धर्माणां अङ्गप्रधानार्थत्वं उक्तविवक्षया प्राप्यते । ( अध्यायपदेन इदमादिसूत्रद्वयम् ' यूपावट-स्तरणबर्हिर्न्यायः ' इत्यत्र व्याख्यातं द्रष्टव्यम् ) ।

वि— ' यूपावटस्तरणबर्हिर्न्यायः ' इत्यत्र निवेशितः । यद्यपि ' द्रव्यसंस्कारस्य अङ्गप्रधानार्थता ' इत्येव अधिकरणशीर्षकमुपन्यस्तं विस्तरपुस्तके, तथापि ग्रन्थकारेण यूपावटबर्हिर्विषये एव अधिकरणं व्याख्यातम् ।

भाट्टदीपिकाऽपि यूपावटस्तरणबर्हिर्न्यायः इत्यत्रैव निवेशिता, तादर्थ्यात् ।

मण्डन— ' साङ्गप्रयोगाय घृतादिधर्माः । ' १७.

शंकर— ' बर्हिर्धर्मोऽङ्गाङ्गिनोः स्यात् । ' १९.

* द्रव्यसंस्कारविरोधे द्रव्यं तदर्थत्वात् इत्यधिकरण भाष्यीय द्रव्यसंस्कारविरोधाधिकरणे द्रष्टव्यम् । के.

॥ द्रव्यसंस्कारविरोधे द्रव्यं तदर्थत्वात् । ६।३। १८।३८॥

पशुकर्मणि यूपार्थे महत् कदरद्रव्यं तक्षणादिसंस्कारक्षमं उपलब्धम् । खदिरद्रव्यमपि लब्धम्, परन्तु तत् पशुनियोजनक्षममपि तक्षणादिसंस्कारे अक्षमम् । तत्र द्रव्यसंस्कारयोर्विरोधः प्राप्तः । एवं द्रव्यसंस्कारविरोधे सति द्रव्यं ग्राह्यम् । द्रव्यादरः कर्तव्यो न संस्कारादरः । तदर्थत्वात् संस्काराणां द्रव्यार्थत्वात् । संस्कारा हि द्रव्यं कर्मयोग्यं कुर्वन्ति । तस्मात् उक्ते स्थले संस्काराक्षममपि पशुनियोजनक्षमं खदिरद्रव्यमेव स्वीकार्यं इति सिद्धान्तः । के.

* द्रव्यसंस्कारविरोधे द्रव्यं प्रबलम् । संस्कारसहात् प्रतिनिधेः संस्कारासहोऽपि प्रयोजनसमर्थश्चेत् मुख्य एव ग्राह्यः । यूपे खदिरः मुख्यः, कदरः प्रतिनिधिः । के. ६।३।१८।३८. * द्रव्यसंस्कारविरोधे द्रव्यस्यैव उपादानम् । भा. ६।३।१८।३८.

॥ द्रव्यसंस्कारविरोधाधिकरणम् । द्रव्यसंस्कारयोर्विरोधे द्रव्यस्यैवोपादानम् ॥

द्रव्यसंस्कारविरोधे द्रव्यं तदर्थत्वात् । ६।३। १८।३८॥

भाष्यम्— प्रवृत्ते पशुकर्मणि यूपकाले अस्ति महत् कदरद्रव्यं तक्षणादिसंस्कारक्षमम् ( कदरः खदिरे श्विते इत्यमरः ) । अस्ति खादिरद्रव्यं अनेकजातीयकम् । तत्र किमुपादेयमिति । संस्कारा न परिलोप्स्यन्ते इति कदरः उपादीयेतेति । एवं प्राप्ते, ब्रूमः । द्रव्यसंस्कारविरोधे द्रव्यं प्रति आदरो यत्न:, न संस्कारान् । कुतः । तदर्थत्वात् । संस्कारा हि द्रव्यं कर्मयोग्यं कुर्वन्ति । तत्र संस्कारपरिलोपे द्रव्यमपि तावत् गृह्यते । द्रव्याभावे न द्रव्यम्, न संस्काराः । द्रव्यं तेषां द्वारम्, वचनप्रामाण्यात् । तदभावे नष्टद्वारा नापूर्वं गच्छेयुः । तस्मात् खदिरमुपादद्यादिति ।

शा— ' द्रव्यार्था एव संस्कारास्तेषां तान्यम् प्रयोजनम् । तद्वशेन यतो द्रव्यपरित्यागो न युज्यते ॥ ततः संस्कारहीनेऽपि खदिरे स्यान्नियोजनम् । तक्षणादीनि लुप्येरन् प्रधानेन विरोधतः ॥ ' १९.

सोम— पूर्वत्र गुणानुरोधेऽपि इह तदनुरोधः इति प्रत्यवस्थानात् संगतिः । सूत्रे तदर्थत्वात् संस्काराणां द्रव्यार्थत्वादित्यर्थः ।

वि— ' अमुख्यमुख्ये संस्कारयोग्ययोग्ये तदा नु किम् ।, आद्यो बहुगुणालोपा, न मुख्यायाग्यु ( य अ ) योपनम् ॥ ' १९.

भाट्ट— यत्र नियोजनादिकार्यमात्रयोग्यो मुख्यः तक्षणादिसकलसंस्कारयोग्यस्तु प्रतिनिधिस्तत्र मुख्यस्यैवोपादानम् । संस्काराणां तु ' गुणलोपे च मुख्यस्य ' इति न्यायेन लोपेऽपि न दोषः । न च अन्यत्र तथात्वेऽपि यूपस्य इहाइष्टसंस्कारसमूहरूपत्वात्र संस्काराणां काष्ठाङ्गत्वमिति वाच्यम् । लाघवेन सकलसंस्कारजन्यपरमापूर्वविशिष्टकाष्ठस्यैव यूपपदार्थत्वात् । अत एव ' यूप तक्षति ' इत्यादौ काष्ठस्यैव संस्कार्यत्वात काऽप्यनुपपत्तिः । यत्र तु प्रधानभूतनियोजनासमर्थमेव मुख्यं तत्र तदनादरेण प्रतिनिधिनैव कार्यसंपादनं द्रष्टव्यम् । १५.

मण्डन— ' ग्राह्यं न्यूनमपि श्रुतम् । '

शंकर— ' संस्कारयोग्यं मुख्यं स्यात् । ' १९.

[ संस्कारायोगि ( अपि ) मुख्यं स्यात् इति पाठस्तु आवश्यकः । ]

* ' अर्थद्रव्यविरोधे अर्थः० । ( सूत्र ) भाष्यम्— अर्थद्रव्यविरोधे अर्थं प्रति आदर्तव्यम् । इति । के.—अर्थः

प्रयोजनम् । द्रव्यं खदिरादि मुख्यम् । मुख्यग्रहणे अर्थाईभवे फदरादिः अमुख्य एव ग्राह्यः । ६।२।१९।३१.

● द्वंद्वः समासः । एतद्विषये भूयान् ग्रन्थः द्वाधानाधिकरणे ६।१।५।२२–२३ मध्ये टुपटीकायां च द्रष्टव्यः । के. ● द्वंद्वः सर्वः विभाषया एकवद् भवति । टुप्. ● युगपदधिकरणे द्वंद्वः । तेन पदद्वयमपि लक्षणावृत्ति स्यात् । शा. । अधिकरणं द्रव्यं अभिधेयमिति यावत् । तस्य युगपदभिधाने द्वंद्व इत्यर्थः । तथाच 'एकेन पदेन अर्थद्वयप्रतिपादने द्वंद्वः' इति कात्यायनोक्तेः द्वंद्वे पदद्वयलक्षणा कार्येत्यर्थः । सोम. ६।११२.

● द्वंद्वानि द्वादश दर्शपूर्णमासयोः आध्वर्यवं कर्म, न याजमानम् । भा. ३।८।९।१९–२०.

● यो हि द्वंद्वस्य धर्मः इतरेतरयोगो नाम, स एकशेषस्यापि । इयांस्तु विशेषः एकत्र शब्दश्चार्थश्च द्वावपि भिन्नौ, इतरत्रार्थौ भिन्न शब्द एक एव । टुप्. ६।१।५।२२. पृ. १३६६. ● द्वंद्वे च स्वार्थाभिधानात् । ( बहुव्रीहौ तु परार्थाभिधानम् ) । भा. १०।६।३।४. ● द्वंद्वे यथा 'धवखदिरावानय' इत्यादौ इतरेतरयुक्तमर्थद्वयं क्रियान्वयि गम्यते, तथा 'पयसानय' इत्यादौ एकशेषे इतरेतरयुक्तमेवार्थद्वयं गम्यते । बल. ६।१।५।११.

● द्वंद्वान्ते श्रूयमाणं पदं प्रत्येकं संबध्यते इति प्रवाद०, यत्र उद्देश्यत्वेन साहित्याविवक्षा तत्रैव । भाट्ट. ३।१।१५.

● द्वंद्वापवादत्वाच्च एकशेषस्य । भा. ६।१।५।२२ पृ. १३६६.

● द्वंद्वतत्पुरुषयोः उत्तरपदे नित्यसमासवचनम् ( पा० २।१।५१ सूत्रे वार्तिकम् ) वाक्पञ्चपिषः, पञ्चगववधनः, दशगवधनः इति । टुप्. १०।६।३।४.

● द्वंद्वता ( शब्दानां द्वंद्वानाम् ) न समभ्यासक्रिया । भा ३।८।९।१२० । समासकरणं हि द्वंद्वता । वा.

● द्वंद्वभाविनोः प्राधान्यात् सत्वापेक्षाया भवति समासः । भा. १०।६।४।८.

● द्वंद्वविचारः 'समासवादः' इति हिन्दी ग्रन्थे द्रष्टव्यः । के.

● युगपदधिकरणवचनतया द्वंद्वस्मृतेः यत्र द्वौ बहवो वा युगपदभिधातुं इष्यन्ते तत्र द्वंद्वसमासो भवति । टुप्. ६।१।६।२५ पृ. १३७२. ● इतरेतरयोगे चार्थे ( द्वंद्व– )समासविधानात् । भा. ६।१।५।२२ पृ. १३६६. ● युगपदधिकरणवचनतया द्वंद्वस्मृतेः द्विवचनबहुवचनोपपत्तेश्च प्रभिन्नयोर्द्रव्ययोः इति च दर्शनात् । यथैव खदिरो च धवौ चेति निदर्शनं क्रियते । ६।१।५।२२ पृ. १३६६.

● द्वादश एव दीक्षा द्वादशाहे । टुप्. ६।५।९।२९. ● द्वादश द्वंद्वानि दर्शपूर्णमासयोः आध्वर्यवं कर्म, न याजमानम् । भा. ३।८।९।१९–२०. ● द्वादश द्वंद्वानि दर्शपूर्णमासयोर्ब्राह्मणकाण्डे उक्तानि १ वत्सोपावसर्जनं च उखाधिश्रयणं च, २ अधिश्रयणं कपालोपधानं च, ३ अवहननं च दृषत्समाहननं च, ४ पुरोडाशाधिश्रयणं च आज्याधिश्रयणं च, ५ स्तम्बयजुर्हरणं च अभिग्रहणं च, ६ वेदिपरिग्रहश्च पत्नीसंनहनं च, ७ प्रोक्षण्यासादनं च आज्यासादनं च, ८ स्फ्यश्च कपालानि च, ९ अग्निहोत्रहवणी च शूर्पं च, १० कृष्णाजिनं च शम्या च, ११ उलूखलं च मुसलं च, १२ दृषदुपले च इति । वि. ३।८।१०. ● 'द्वादश द्वादशानि जुहोति' अत्र '१२ × १२ = १४४' होमा भवन्ति इति कर्मभेद. सख्यया । तत्र 'अग्नाविष्णू सजोषसा' ( तैसं. ४।७।१ ) इत्याद्याः १३५ मन्त्राः 'कूप्याश्चमे' इत्यन्ता चाहुत्या संख्यापूरणं इति बौधायनीयाः । सोम. २।१।७ पृ. १४१. ● द्वादश मासाः ( द्वादशाहे ) सह फलेन चोदितत्वात् सह कर्तव्याः । तेषां अग्नीषोमीयाया इतिकर्तव्यता अगृह्यमाणविशेषत्वात् सर्वेण कर्तव्या । अवभृथादीन्यपि सर्वेणैव । ये संनिपत्योपकारकास्ते आवर्तन्ते । टुप्. १०।१।८।२२. ● द्वादश स्तोत्राणि अग्निष्टोमस्य । प्रातःसवने बहिष्पवमानमेकम्, आज्यस्तोत्राणि चत्वारि, माध्यंदिने माध्यंदिनपवमानः एकः, पृष्ठस्तोत्राणि च चत्वारि । तृतीयसवने आर्भवपवमानः एकम्, यज्ञायज्ञीयसामसाध्यं अग्निष्टोमस्तोत्रं द्वितीयम् । संकलने द्वादश स्तोत्राणि अग्निष्टोमे । अधिकैस्त्रिभिः उक्थ्यस्तोत्रैः उक्थ्यः संतिष्ठते । षोडशेन स्तोत्रेण समाप्य-

मानस्तु षोडशी । अतिरात्रस्तोत्रेण अतिरात्रः संतिष्ठते । वि. ८।३।५.

● द्वादशः अध्यायः तन्त्रावापेन शेषेयत्तायाः प्रसक्तायाः तदपवादत्वेन आरभ्यते । अन्यादृशी इयत्ता प्रसङ्गेन भवति । टुप्. ७।१।१।१ पृ. १५२४.

● द्वादशाध्यायार्थः । 'प्रसङ्गस्तन्त्रनिर्णीतिः समुच्चयविकल्पने । द्वादशाध्यायपादार्थाः (इति पादार्थसंग्रहः) ॥' प्रथमे पादे पशुधर्माणां पशुपुरोडाशे प्रसङ्गः । सौमिकवेदेः उत्तरकालीनकर्मसु प्रसङ्गः इत्यादिर्विचारः । द्वितीये स्वकीयपशोस्तन्त्रित्वम्, न तु सवनीयपुरोडाशानाम् । विकृतिस्तन्त्रिणी, न प्रकृतिः । अन्वारम्भणीया विकृतिष्वपि स्यात्, न तु प्रकृतावेव । इत्यादिर्विचारः । तृतीये आघारहोमयोः समुच्चयः । आघारगतानां ऋग्गणसंततत्वादीनां समुच्चयः । इत्यादिकं प्राधान्येन, यवव्रीह्योर्विकल्पः इत्यादिकं समुच्चयापवादत्वेन इत्युभयं चिन्तितम् । चतुर्थे च ऐन्द्राबार्हस्पत्ययाज्याऽनुवाक्यायुगलयोर्विकल्पः इत्यादिकं प्राधान्येन, याज्याऽनुवाक्ययोः समुच्चयः इत्यादिकं विकल्पापवादत्वेन इत्युभयं चिन्तितम् । वि. प्रस्तावना श्लो. २४.

● द्वादशाध्यायार्थनिरूपणम् । एवं तन्त्रावापस्वरूपे प्रयोगपरिमाणे चिन्तिते तत्परिमाणमेव प्रसङ्गरूपं द्वादशे चिन्त्यते । प्रयोगपरिमाणत्वाविशेषेऽपि तन्त्रप्रसङ्गप्रयोजकानां भाष्यकारेण विशेषोऽभिहितः 'साधारणं भवेत् तन्त्रं परार्थे त्वप्रयोजकः । एवमेव प्रसङ्गः स्याद् विद्यमाने स्वके विधौ ॥' इति । यत् अनेकोद्देशेन अनुष्ठीयते तत् तन्त्रम् । यत्तु अन्यार्थमनुष्ठितं तदनुनिष्पन्नं वा अन्यस्य साधनं भवति प्रतिपाद्यं वा, तत्र अप्रयोजकत्वम् । यथा पुरोडाशकपालं तुषोपवापस्य, यथा च पदं अक्षाञ्जनस्य, वाजिनं वाजिनयागस्य शकृल्लोहिते न निरसनस्य । तत्र अविद्यमानमपि कपालादि तुषोपवापादिना न प्रयोक्तुं शक्यते, इति अप्रयोजकत्वम् । यत्र तु उभयत्रापि अन्योन्यनैरपेक्ष्येण अङ्गविनियोगे सत्यपि एकार्थानुष्ठितैरेव अङ्गैः अन्यस्यापि उपकारसंपत्तेः अन्यस्य प्रयोजकत्वक्षमस्यापि तल्लोपः (तत्कृतो व्यर्थः) यथा पश्वर्थानुष्ठितैरेव प्रयाजादिभिः उपकारसंपत्तेः पशुपुरोडाशः पशुसंबन्धानादरेणैव स्वार्थतया अतिदेशेन विनियुक्तान्यपि प्रयाजादीनि न पृथक् अनुष्ठापयति, तत्र प्रसङ्गः । अत्र च अन्यार्थालाभे स्वयमपि प्रयोजकं भवति । अत एव च आज्यभागौ पशौ अविद्यमानौ पशुपुरोडाशेन अनुष्ठाप्येते ।

आह । यदि पश्वर्थानुष्ठिता एव प्रयाजादयः पशुपुरोडाशस्योपकुर्वन्ति, न तु तदर्थमनुष्ठीयन्ते— 'कथं तर्हि तदङ्गत्वम्, तादर्थ्यं ह्यङ्गतेष्यते । उद्देशेन च तादर्थ्यं नोपकारात्, न चात्र सः ॥' ३३ ॥ यदुद्देशेन यत् अनुष्ठीयते, तत् तदर्थम्, तदेव च अङ्गमुच्यते, न तु उपकारकमात्रम् । न च प्रयाजादयः पशुपुरोडाशोद्देशेन अनुष्ठीयन्ते, इति कथं तदङ्गत्वम् ? ।

ननु एवं सति तुषोपवापाङ्गत्वं वा 'पुरोडाशप्रयुक्तस्य कपालस्य कथं भवेत् । व्यापार्यते तुषाणां तदुपवापप्रसिद्धये ॥' ३४ ॥ यद्यपि पुरोडाशप्रयुक्तमेव कपालस्वरूपम्, तथापि तुषोपवापसिद्धौ व्यापार्यते एव, इति युक्तमेव परोद्देशप्रवृत्तव्यापारगोचरत्वलक्षणं शेषत्वम् । प्रयाजादयस्तु न कथंचिदपि पशुपुरोडाशोद्देशप्रवृत्तपुरुषव्यापारगोचराः, इति न तच्छेषत्वमेषां संभवतीति । 'उच्यते, न प्रयाजानां पुरोडाशोऽस्ति शेषता । तद्योग्यत्वेन तेषां तु तदङ्गत्वं प्रतीयते ॥' ३५ ॥ यथैव अदहत्यपि वह्नौ दाहकत्वव्यपदेशः, तथैव प्रयाजादिष्वपि पशुपुरोडाशार्थमनुष्ठीयमानेष्वपि तद्योग्यतया तदङ्गत्वव्यपदेशः । शक्नोत्येव पुरोडाशः ताननुष्ठापयितुम्, अन्यतस्तु सिद्धत्वात् नानुष्ठापयति, तेन अन्यशेषभूतेष्वपि योग्यतया शेषत्वव्यवहारः । अन्ये तु 'योग्यतैव शेषत्वम्, अतः पुरोडाशेऽपि प्रयाजादीनां मुख्यमेव तदस्ति' इति वर्णयन्ति । तथा वा अस्तु । सर्वथा तावत् उपपन्नः शेषत्वव्यवहारः, इति सर्वं समञ्जसम् ।

तदेव संक्षेपार्थः । भावना तावत् स्वशब्देन प्रथममभिधीयते, तस्याश्च विधिना समानाभिधानेन अन्वयः प्रतीयमानोऽपि अयोग्यतया न झगित्येव निष्पद्यते । इयं चावस्था 'विधिप्रक्रमः' इत्युच्यते । विधिप्रक्रमाच्च सदा एव श्रूयते 'काष्ठौघैः पूर्वेव विधानमर्हति', तादृशोः

पूरयितव्या' इति। ततः किमस्याः भाव्यं इत्यपेक्षायां समानपदोपात्तमपि धात्वर्थं अयोग्यत्वादुल्लङ्घ्य पदान्तरोपात्तं स्वर्गादि स्वीक्रियते। तच्च पश्चाद् श्रुतादितम्। तदभावे च अर्थवादस्थम्, तदभावे च अध्याह्रियते। तच्च रात्रिसत्राधिकरणे विश्वजिदधिकरणे च (क्रमेण) प्रतिपादितम्। तत्र करणापेक्षायां समानपदोपात्तो धात्वर्थ एव करणतया अन्वीयते इति भावार्थाधिकरणार्थ.। तस्य च करणस्य क्षणिकस्य कालान्तरभावि फलं प्रति साक्षात् न संभवति इति स्वव्यापारापेक्षायां देवताऽऽराधनकर्तृसंस्कारयो देवताऽधिकरणे, कर्मण्यारम्भभाव्यत्वात् (११।१।४।२०) इत्यत्र च निराकृते तद् द्वारत्वे अपूर्वमेव आश्रयितव्यम्, इति नञ्छब्दमध्याहृत्य यागेनापूर्वं कृत्वा स्वर्गं भावयेत् इति, अपूर्वेतिकर्तव्यतायुक्तो यागो यथाऽवेक्षकाष्ठादिवत् पाकमिव फलं प्रति करणतया विनियुज्यते इति अपूर्वाधिकरणेऽक्तं 'कथमनेन अपूर्वं कर्तव्यम्' इति पुन' इतिकर्तव्यताऽऽकाङ्क्षा काष्ठादीनामिव उपकारसिद्ध्यर्थं जायते। तत्र षड्विधेन उपदेशेन, द्विविधेन चातिदेशेन, स्मृत्याचाराभ्याम्, श्रुत्यादिभिश्च, यथायथं तेन द्वारेण समर्पितं जाति-द्रव्य-गुण-क्रिया-कर्मात्मकमङ्गजातं स्वभावेन शुष्कत्वादिवत् (ज्वालाऽर्थे काष्ठे शुष्कत्व यथा तद्वत्) स्वीक्रियते। अत एव प्रधानं फलप्रयुक्तम्। तत्र प्रकल्पिते अपूर्वं दीक्षणीयादिवत् अकल्पिते चावान्तरापूर्वं प्रधानापूर्वं फलं प्रति विनियुज्यते। तेन दीक्षणीयेव परमापूर्वप्रयुक्ता, फलप्रयुक्तमेव प्रधानम्। अङ्ग तु कल्पिते अपूर्वे तदङ्गत्वेन दीक्षणीयाङ्गवाद्विनियमवत् अवान्तरापूर्वाङ्गत्वेन विनियुज्यमाने तद्देव अवान्तरापूर्वप्रयुक्तम्, न परमापूर्वप्रयुक्तमिति वेदितव्यम्। तत्र सर्वविशेषणविशिष्टभावनाऽनुष्ठानं प्रयोजनवाक्यप्रयोजकवशात्तावत् प्रकृतदर्शपूर्णमासादावगतपरिमाणं मुख्यर्थावगततत्समवहितं फलार्थिना सकलाङ्गानुष्ठानपूर्वं काम्येषु। नित्यनैमित्तिकेषु तु किञ्चिदङ्गानुष्ठानाशक्तमपि पुरुषं प्रति विधिर्विधत्ते इति। एतत् सर्वं वाक्यार्थसंग्रहरूपेण वार्तिकेन 'भावनायचन स्तावत् तां स्मारयति लोकवत्' इत्यादिना (वाक्याधिकरणे २४८) 'तस्मात् प्रकारास्तोऽपि विधिस्तावत् प्रतीक्षते। यावद् योग्यत्वमापन्ना भावनाऽन्यानपेक्षिणी॥' इत्येवमन्तेन (२७६) दर्शितमिति वेदितव्यम्। न्यायरत्नमाला.

* द्वादशोपसत्ता अहीनस्य धर्म., न ज्योतिष्टोमस्य। वि. ३।३।८.

* द्वादशोपसत्ताऽधिकरणम्। अहीनाधिकरणन्याय.। भा. ३।३।८।१४–१५.

* द्वादशोपसत्त्वं द्वादशाहिकं धर्मं गवामयने दर्शयति 'हन्या लोमावद्यति०' इति। भा. ८।१।१०।१७.

* द्वादशकपाल. अष्टौ अष्टाकपालविभिन्नो, स्तूयते 'वैश्वानरं द्वादशकपालं निर्वपेत्' इत्यत्र। वि. १।४।१२. * द्वादशकपाल. तृतीयसवने सवनीयपुरोडाश.। भा. १०।५।२६।८८. * द्वादशकपाले अष्टाकपालादीनामर्थवादता (काठेशे)। वि. १।४।१२, * द्वादशकपालशब्द न संख्यापर. किन्तु पुरोडाशद्रव्यपर., द्वादशसु कपालेषु संस्कृत इति व्युत्पत्तेः। एवमष्टाकपालादिशब्दा अपि। १।४।१९.

* द्वादशदीक्षानियमो ज्योतिष्टोमस्य (भाष्यमते)। भा ६।५।८।२८–२९.

* द्वादशप्रथमप्रयमरूपो न्याय. (१२।१।१।१–६) 'न कृतस्य गुणानुग्रहार्थं अनुनिरपेक्षि' इति। भा १२।२।९।१९.

* द्वादशमानं हिरण्यं दक्षिणा पवित्रेष्टीक्षणीयायाम्। भा. ८।१।६।१६.

* द्वादशलक्षण्या धर्मो व्युत्पाद्य.। वि. प्रस्तावनाश्लो. ११.

* द्वादशशत-(११२)गोरूपा दक्षिणा अध्वर्युवेदे उद्गातृवेदे च समाम्नाता। वि ३।८।१ * द्वादशशतदक्षिणाया विभाग अध्वर्य्वादिसमाख्याऽनुरोधेन ज्योतिष्टोमे। भा १०।३।१२।५३–५९.

* द्वादशशतन्यूनधनस्य विश्वजिति नाधिकार। भा ६।७।३।१८–२०.

* द्वादशशतसंख्यामात्रस्य नित्यप्रयोगीयगोशतस्य ज्योतिष्टोमे नैमित्तिकैकादियोदक्षिणया बाध.। भा. १०।३।१९।५९–६२.

* द्वादशसंख्यायां अष्टत्वादयः संख्याविशेषा अविभक्ताः सन्ति । भा. १।४।११।२०.

* द्वादशाहः अहर्गणानां प्रकृतिः । भा. ८।१।१०।१७, * द्वादशाहः इति द्वादश एतानि कर्माणि अहोभिः परिमितानि एकत्र समाहृतानि इति अनेन रूपेण तद् कर्मगणस्य नामधेयं न कर्मानुपूर्व्यमात्रेणेति । द्वादशाह इति अर्थान्वयेन नामधेयं नार्थाभावेन । १०।६।१३।४१. * द्वादशाहः ज्योतिष्टोमस्य विकृतिः व्यक्तलिङ्गत्वात् इति तद्धर्मातिदेशः । वि. ६।७।९, ८।१।९, * द्वादशाहः द्विविधः अहीनरूपः सत्ररूपश्च । 'द्वादशाहेन प्रजाकामं याजयेत्' इति यजतिचोदना, यजमानबहुत्वनियमाभावः, ऋत्विग्यजमानभेदश्च अहीनलिङ्गम् । अहीनाः यजतिचोदनाः भवन्ति । 'द्वादशाहमृद्धिकामा उपेयुः' 'द्वादशाहमृद्धिकामा आसीरन्' इति चोदनाद्वयम्, यजमानबहुत्वनियमः, ऋत्विग्यजमानैक्यं च सत्रलिङ्गम् । सत्राणि आसनचोदनानि उपायिचोदनानि च भवन्ति । ८।२।५. * द्वादशाहः द्विविधः व्यूढः समूढश्च, तत्र व्यूढः समूढविकारः । भा. १०।५।२४।७९–८०. * द्वादशाहः द्विविधः समूढो व्यूढश्च । व्यतीकामभेदाच्च तयोर्भेदः । वि. १०।५।२४. * द्वादशाहः । प्रकृतो व्यामेनाहःशब्देन उपाश्वादिहारियोजनपर्यन्तो यागः परिच्छिन्नः । श्वाप्येवं द्रष्टव्यम् । द्वादश यागाः सह फलेन चोदितत्वात् सह कर्तव्याः । तेषामग्नीषोमीयादा इतिकर्तव्यता अगृह्यमाणविशेषत्वात् तन्त्रेण कर्तव्या । अवभृथादीन्यपि तन्त्रेणैव । ये प्रतिपत्त्युपकारकास्ते आवर्तन्ते । टुप्. ९।१।९।२१.

§ द्वादशाहो व्यूढः समूढस्य विकारः ॥

द्वादशाहस्य व्यूढसमूढत्वं पृष्ठवत् समानविधानं स्यात् । १०।५।२४।७९॥

भाष्यम्— द्विविधो द्वादशाहः व्यूढः समूढश्च । समूढस्तावत् 'ऐन्द्रवायवाग्रौ प्रायणीयोदयनीयौ दशमं चाहः, अथेतरेषां नवानामह्नामैन्द्रवायवाग्र प्रथममहः, अथ शुक्राग्रम्, अथाग्रयणाग्रम् । अथैन्द्रवायवाग्रम्, अथ शुक्राग्रम्, अथाग्रयणाग्रम् । अथैन्द्रवायवाग्रम्, अथ शुक्राग्रम्, अथाग्रयणाग्रम्' इति । अथ व्यूढः 'ऐन्द्रवायवाग्रौ प्रायणीयोदयनीयौ, अथेतरेषां दशानामह्नामैन्द्रवायवाग्रं प्रथममहः, अथ शुक्राग्रम्, अथ द्वे आग्रयणाग्रे, अथैन्द्रवायवाग्रम्, अथ द्वे शुक्राग्रे, अथाग्रयणाग्रम्, अथ द्वे ऐन्द्रवायवाग्रे' इति । तत्र संदेहः किमुभयप्रकारमपि द्वादशाहं प्रकृत्य धर्मा आम्नाताः, उत समूढं प्रकृत्य आम्नाताः, तद्विकारो व्यूढः इति । किं प्राप्तम् ? द्वादशाहस्य व्यूढसमूढत्वं समानविधानं स्यात् । कुतः ? उभयप्रकारस्य प्रकृतत्वात् नास्ति विशेषः, कस्य धर्माः कस्य नेति । तस्मात् समानविधानौ । पृष्ठवत् । यथा बृहद्रथंतरे पृष्ठे प्रकरणस्य तुल्यत्वात् समानधर्मणी, एवं व्यूढसमूढं स्यादिति ।

व्यूढो वा लिङ्गदर्शनात्, समूढविकारः । ८० ॥

भाष्यम्— वाशब्दः पक्षं व्यावर्तयति । न व्यूढसमूढौ समानविधानौ । किन्तु व्यूढः समूढविकारः स्यात् । कुतः ? लिङ्गदर्शनात् । लिङ्गमिदं भवति, 'ऐन्द्रवायवस्य वा एतदायतनं यच्चतुर्थमहः' इति व्यूढे श्रूयते । न च व्यूढे चतुर्थेऽहनि ऐन्द्रवायवाग्रता । का तर्हि ? आग्रयणाग्रता । तत्र ऐन्द्रवायवस्य वा एतदायतनमिति वचनं नावकल्पते । यदि व्यूढः समूढविकारः ततः प्रकृतिमपेक्ष्योपपद्यते वादः । ऐन्द्रवायवस्यैतदायतनं प्राप्तम् । तत्र आग्रयणस्योच्यते इति । तस्माल्लिङ्गदर्शनात् व्यूढः समूढविकारः इति ।

कामसंयोगात् । ८१ ॥

भाष्यम्— 'यः कामयेत बहु स्यां प्रजायेयेति' । काम्यो वा नैमित्तिको वा नित्यमर्थं विकृत्य निविशते । यथा अभ्यामये मुद्गौदनभोजनं नित्यातद्यथा चेति ।

तस्योभयथा प्रवृत्तिरैककर्म्यात् । ८२ ॥

भाष्यम्— इदं प्रयोजनसूत्रम् । तस्योभयप्रकारस्य अहर्गणेषु प्रवृत्तिरविशेषेण । ऐककर्म्यात् यथा पूर्वः पक्षः । यथा तर्हि सिद्धान्तः, यत्र वचनं लिङ्गं च, [illegible] व्यूढः प्रवर्तते । अन्यत्र अविशेषेण समूढः इति ।

सोम— पूर्वत्र अनैमित्तिकत्वे विधानं 'अपि वाऽहर्गणेष्वग्निवत् समानविधानं स्यात्' इति सूत्रे समानविधानत्वेन व्यवहृतम् । एवं च पूर्ववत् इहापि व्यूढसमूढयोः समानविधानत्वं इत्युत्थानाद् संगतिः ।

द्वादशाहविकारेषु व्यूढस्य अप्रवृत्तिः इति प्रयोजनम्। सूत्रार्थस्तु— द्वादशाहस्य व्यूढत्वं समूढत्वं च रथंतर-बृहत्पृष्ठवत् समानविधानं स्यादिति।

वि— 'व्यूढोऽपि प्रकृतिः किंवा विकृतिः स्यादिह, पृष्ठवत्। विधिसाम्यादादिमो, ऽन्त्यो लिङ्गात् कामे विधेरपि॥'

भाट्ट— पूर्वोक्तग्रहसमूहविशेषः समूढपदार्थः। तं विधाय 'अथ व्यूढः ऐन्द्रवायवाग्रौ प्रायणीयोदयनीयौ, अथैतेषां दशानामह्नां ऐन्द्रवायवाग्रं प्रथममहः, अथ शुक्राग्रम्, अथ द्वे आग्रयणाग्रे, अथैन्द्रवायवाग्रम्, अथ द्वे शुक्राग्रे, अथाग्रयणाग्रम्, अथ द्वे ऐन्द्रवायवाग्रे' इत्यनेन व्यूढात्मकः ग्रहसमूहविशेषो विहितः। अत्र च ग्रहसमूहविशेषवाचकयोरपि समूढव्यूढपदयोर्द्वादशाहेऽपि प्रयोगः साहचर्यात् उक्थ्याग्निष्टोमपदप्रयोगवत्। तत्र समूढस्य तावत् फलाश्रवणात् प्रकरणात् क्रत्वङ्गत्वं निर्विवादमेव। व्यूढस्य तु 'यः कामयेत बहु स्यां प्रजायेयेति, स व्यूढेन यजेत' इति वचनेन द्वादशाहाश्रितव्यूढप्रकारस्य फलोद्देशेन विधानात् काम्यत्वम्। अत्र च आश्रयस्य अनेककर्तृकत्वेऽपि एककामनयाऽपि गुणानुष्ठानं भवतीति सूचयितुमेकवचनम्। अहीनाभिप्रायं वा तत्। व्यूढस्य च क्रत्वर्थत्वमपि अस्ति न वेति चिन्तायाम्, इन्द्रियकामवाक्येन दध्नः पुरुषार्थत्वेऽपि 'दध्ना जुहोति' इत्यनेन तस्य क्रत्वर्थत्ववत् व्यूढस्य कामवाक्येन पुरुषार्थत्वेऽपि क्रत्वर्थत्वस्यापि नित्यवाक्येन उपपत्तेः संयोगपृथक्त्वन्यायेन उभयार्थत्वम्। इति प्राप्ते, दध्नः स्वरूपेण दधिपदवाच्यत्वेन च लोकावगततया इन्द्रियकामवाक्यमात्रेण तस्य पुरुषार्थत्वावगतेः अनन्यार्थेन 'दध्ना जुहोति' इत्यनेन युक्तं क्रत्वर्थत्वम्। प्रकृते तु व्यूढस्वरूपस्य तत्पदवाच्यत्वस्य च अन्यतः अनवगतेः नित्यवाक्यस्य तद्बोधकत्वेन सत्त्र्यादिस्वरूपबोधकवाक्यवत् अन्यार्थत्वात् न क्रत्वर्थत्वम्। अत्र च ग्रहविशेषस्य ग्रहणाङ्गत्वात् क्रत्वर्थत्वेऽपि तदानुपूर्वीघटितग्रहसमूहविशेषस्य व्यूढपदवाच्यस्य पुरुषार्थत्वात् न क्रत्वर्थत्वम्। अतश्च तस्य विकृतौ अप्रयोगः। प्रकृतावपि कामनाभावेन समूढग्रह-क्रममिति नात्रोपयोगिताऽपि।

मण्डन— 'व्यूढः समूढस्य भवेद् विकारः।' २५.
शंकर— 'अनङ्गं व्यूढ इष्यते।' २६.

• द्वादशाहः सत्ररूपः सत्राणां प्रकृतिः। वि. १०।२।१९. (गवामयनादीनां आसंवत्सरात् यानि सत्राणि, तेषां प्रकृतिर्द्वादशाहः इति सत्याषाढः (८।२)। • द्वादशाहेन प्रजाकामं याजयेत्। भा. १०।५।१२।१. • 'द्वादशाहेन यजेत' इति द्वादशानामह्नां सह प्रयोगो विहितः। तत्र दीक्षोपसदादिकं तन्त्रेण क्रियते। वि. ९।१।५. • द्वादशाहात् त्र्यनीका गवामयने प्राप्ता। तत्र अर्थप्राप्तोऽभ्यासः। तत्र च स्वस्थानविवृद्धिः न दण्डकलितवत्। अहरधिकारश्च नास्त्येव। भा. १०।५।१९। ८६-८७. • द्वादशाहस्य अहीनभूतस्य तत्र प्रवृत्तिः, यत्र यजतिः श्रूयते। सत्रभूतस्य च तत्र प्रवृत्तिः, यत्र आसनं उपायिश्च श्रूयते। ८।२।५।२५. • द्वादशाहस्य अहीनरूपस्य विकृतयः द्विरात्रत्रिरात्रादयः। वि. १०।५।४. • द्वादशाहस्य आदिमसप्तानामह्नां क्रमेण जनकसप्तरात्रे धर्मातिदेशः। तत्र चाग्निमचतुरहे त्रिवृता विधीयते। भा. ८।१।१३-९. • द्वादशाहस्य द्वादशसु अहःसु दीक्षाः, द्वादशसु उपसदः, द्वादशसु सुत्याः इति षट्त्रिंशता अहोभिः समाप्तिः इति स्वस्थानविवृद्धिः सिद्धान्तः। वि. ११।४।५. • द्वादशाहस्य यत् द्वितीयमहः, तत् द्विरात्रस्य प्रथममहः। यत् तृतीयम्, तत् द्वितीयम्। एवं त्रिरात्रादौ शेयम्। १०।६।४.

¶ द्वादशाहस्य व्यूढसमूढत्वं पृष्ठवत् समानविधानं स्यात्॥ १०।५।२४।७९॥

द्वादशाहस्य व्यूढसमूढत्वं व्यूढत्वं समूढत्वं च समानविधानं स्यात्। न तत्र प्रकृतिविकृतिभावः कश्चित्। पृष्ठवत्, यथा बृहद्रथंतरे पृष्ठे प्रकरणस्य तुल्यत्वात् समानधर्मणी स्याताम्। इति पूर्वः पक्षः।

व्यूढो वा लिङ्गदर्शनात् समूढविकारः स्यात्॥ ८०॥

पूर्वपक्षव्यावर्तको वाशब्दः। व्यूढः द्वादशाहः समूढविकारः समूढस्य विकारः स्यात्। लिङ्गदर्शनात्। 'ऐन्द्रवायवस्य वा एतदायतनं यच्चतुर्थमहः' इति व्यूढे श्रूयते। न च व्यूढे चतुर्थेऽहनि ऐन्द्रवायवाग्रता, किन्तु आग्रयणा-

ग्नता । यदि व्यूढः समूढविकारः स्यात् ततः प्रकृतिमपेक्ष्य उपपद्यते वादः । ऐन्द्रवायवस्य एतदायतनं मासं तत्र आग्रयणस्य लभ्यते इति । तस्मात् व्यूढः समूढस्य विकारः इति सिद्धान्तः ।

**कामसंयोगात् । ८१ ॥**

व्यूढे द्वादशाहे कामसंयोगः श्रूयते 'यः कामयेत बहुः स्यां प्रजायेयेति' इति । ततश्च व्यूढः काम्यः । काम्यो वा नैमित्तिको वा नित्यमर्थे विकृत्य विधीयते । तस्मात् व्यूढः समूढस्य विकारः । इति सिद्धान्तः ।

**तयोरुभयथा प्रवृत्तिरैककर्म्यात् । ८२ ॥**

इदं प्रयोजनसूत्रम् । तस्य द्वादशाहस्य व्यूढसमूढरूपस्य अहर्गणेषु अविशेषेण प्रवृत्तिः ऐककर्म्यात् एकरूपत्वात् इति पूर्वपक्षे फलम् । सिद्धान्ते तु उभयथा प्रवृत्तिभेदेन । यत्र वचनं लिङ्गं वा व्यूढस्य तत्र व्यूढस्य प्रवृत्तिः, अन्यत्र तु अविशेषेण समूढस्य इति । के.

* द्वादशाहस्य सत्राहीनात्मकस्य धर्माणामतिदेशः सत्राहीनयोर्यथास्वम् । भा. ८।२।९।२५–२६, द्वादशाहस्य सत्रात्मकस्य धर्माणामतिदेशः पञ्चदशरात्रकुण्डपायिनामयनयोः, सत्रत्वात् । ८।२।६।२९–३२.

**⌘ द्वादशाहस्य सत्रत्वमासनोपायिचोदनेन यजमानबहुत्वेन च, सत्रशब्दाभिसंयोगात् । १०।६।१६।६० ॥**

सत्रस्य लक्षणमुच्यते । आसनोपायिचोदनेन द्वादशाहस्य सत्रत्वम् । आस उपवेशने इति धातुना उपउपसर्गपूर्वकेण इण् गतौ इति धातुना च यस्य चोदना तत् सत्रम् । यजमानबहुत्वेन च नियतेन सत्रत्वम् । सत्रशब्दाभिसंयोगात् 'य एवं विद्वांसः सत्रमासते' 'य एवं विद्वांसः सत्रमुपयन्ति' इति आसउपायोः उपायिधात्वोर्वा सत्रशब्देन अभिसंयोगात् नित्यसंबन्धात् । 'चतुर्विंशतिपरमाः सप्तदशावराः सत्रमासीरन्' इति यजमानबहुत्वस्य च नित्यसंबन्धात् ।

**यजतिचोदनादहीनत्वं स्वामिनां चास्थितपरिमाणत्वात् । ६१ ॥**

अत्र अहीनस्य लक्षणमुच्यते । द्वादशाहस्य द्विरात्रादीनां च यजतिचोदनात् यजधातुना विधानात् अहीनत्वम् । स्वामिनां यजमानानां अस्थितपरिमाणत्वात् अनियतपरिमाणत्वाच्च अहीनत्वम् । द्वौ बहवो वा अहीनेन यजन्ते । एवं च यजतिचोदनत्वे सति यजमानानियतपरिमाणत्वं अहीनस्य लक्षणम् । अहर्गणसाध्यसुत्याकत्वे सति इत्यपि विशेषणं देयमेव । यजतिचोदनत्वमात्रे लक्षणे ज्योतिष्टोमादौ अतिव्याप्तिः । अहर्गणसाध्यसुत्याकत्वमात्रे तु सत्रे अतिव्याप्तिः इति द्वयोरपि निवेशः, यजमानानियतपरिमाणकत्वं तु स्वरूपकथनं न लक्षणघटकम् । के.

* द्वादशाहस्य समूढस्यैव अहर्गणेष्वतिदेशः । वि. १०।५।२३, * द्वादशाहस्य समूढस्य विकृतिर्गवामयनं संवत्सरसत्रम् । १०।५।२५, * द्वादशाहस्य स्वरूपम्–१ प्रायणीयोऽतिरात्रः, २–७ पृष्ठ्यः षडहः, ८–१० त्रयः छन्दोमाः, ११ अविवाक्यमहः, १२ उदयनीयोऽतिरात्रः इति द्वादश अहानि इति । ८।२।५. * द्वादशाहे अधिकारेऽग्निचित्येष्यः कैश्चिद्धर्मा उच्यन्ते 'अभिलवः अन्वहं भवति, गौरिवीतमन्वहं भवति' इति । भा. ७।४।१। ११, * द्वादशाहे 'अध्वर्युर्गृहपतिं दीक्षयित्वा ब्रह्माणं दीक्षयति' इत्यादिः क्रमविधानार्था श्रुतिः । ५।१।१।१ वर्णक १. * द्वादशाहे अहर्गणे सत्रमाहात् प्राक् पत्नीसंयाजान्तत्वम् । उत्तमे हारियोजनादि शेषं तन्त्रेण सर्वेम् । दशमस्य तु मानसान्तत्वमेव वचनात् । ९।१।९। २९–३२. * द्वादशाहे अहीनात्मके 'अन्वहं द्वादशशतं ददाति'। अत्र द्वादशगुणितद्वादशशतसंख्या दक्षिणा ( १३४४ गावः ) । वि. १०।६।२८, * द्वादशाहे आग्नेयाय हिरण्यदानं पशुमांसाचरणं च अहरहर्न कर्तव्यम् । १०।२।२६. * द्वादशाहे आद्यस्याह्नो दक्षिणानयनकालादूर्ध्वं विषाणाकण्डूयनमेव स्यात् । भा. ११। ३।६।१४, * द्वादशाहे उपसत्कालीनं सुब्रह्मण्याह्वानं कार्यम् । ११।३।१०।२१.

**⌘ द्वादशाहे उपसत्कालीनसुब्रह्मण्याह्वाने विवृद्धसुत्याह्वानुपलक्षणम् ॥**

सुत्याविवृद्धौ सुब्रह्मण्यायां सर्वेषामुपलक्षणम्, प्रकृत्यन्वयाद्यथाह्नयत् । ११।४।७।३०॥

भाष्यम्— उपसत्काले सुब्रह्मण्याह्वानम् 'चतुरहे सुत्यामागच्छ मघवन्' इति द्वादशाहे चोदकेन प्राप्यते ।

तत्रेदं विचार्यते द्वादशाहे सुत्यादानि उपलक्षयितव्यानि, उताविकारेणैव प्रयोगः कर्तव्य इति । किं प्राप्तम् ? सुत्याविवृद्धौ एतस्या सर्वेषामदा उपलक्षणं कर्तव्यम् । कुतः ? प्रकृत्यन्वयात् । प्रकृतौ सौत्यमहः उपलक्षितम् । सर्वाणि चैतानि तत्प्रकृतीनि । अतः सर्वाण्युपलक्षणीयानि । ननु एकैवासौ देवता इन्द्रः सकृदुपलक्षणेन संस्कृतः संस्कृत एव । तस्य पुनरुपलक्षणमनर्थकमिति । उच्यते । अघोपलक्षणकृत ( आघोष इति तु आनन्दाश्रमीयादौ पाठः । अघोष इति तु निर्णयसागरीये । स एव च शुद्धः । अघशब्दोऽध्याय उपलक्षण अघोपलक्षणम्, तेन कृतः इति तदर्थः । के. ) संस्कारः सोऽध्याननस्य प्रधानस्याङ्गम् । तस्मादुत्तरार्थं पुनःपुनरुपलक्षयितव्यः । आवाहनवत् । तद्यथा 'आग्नेय कृष्णग्रीवमालभेत, सौम्यं बभ्रुम्, आग्नेयं कृष्णग्रीवं पुरोधाया स्पर्धमानः' इत्येकत्वेऽपि अग्नेर्देवताया. कर्मभेदात् भेदेन आवाहनं क्रियते । एवमिहापि ।

टुप्—( 'इन्द्राहे सुत्यामागच्छ मघवन्निति ब्रूयात्' इति ज्योतिष्टोमे विहितम् । तत्र द्वादशाह. परिमाणमाची यत आह— ) प्रकृतौ 'चतुरहे सुत्यामागच्छ मघवन्' इति कालैकत्वा विवक्षिता । इह तु तथैव प्राप्नोति ( चोदकेन ) । सा च ( अह शब्दस्य अभ्यासात्मक ) ऊहमन्तरेण न शक्यते निवक्तुम् । तस्मात् ऊहः कर्तव्य, द्वादशाहे त्रयोदशाहे इति । न चैकत्वादेव तावा तद्वदुपलक्षणं कर्तव्यमित्ययमर्थो लभ्यते । कथम् ? या प्रथमस्य यागस्य संस्कृता देवता, सा द्वितीयस्य संस्कृता न भवति, कालभेदात् ।

अपिवेन्द्राभिधानत्वात् सकृत् स्यादुपलक्षणम्, कालस्य लक्षणार्थत्वात् । ३१ ॥

भाष्यम्——अपिवा न स्यात् सर्वेषामुपलक्षणम् । अविकारेणैव प्रयोग. स्यात् । कुत. ? इन्द्राभिधानत्वात् । इन्द्र अघोपलक्षणेन संस्क्रियते । स सकृत्संस्कृत. संस्कृत एव, [illegible] पुन. संस्कर्तव्यः । ननु चतुरहेऽसौ संस्कृत, 'चतुरहे सुत्यामागच्छ' इति वचनात् । अविवक्षितोऽत्र काल, इन्द्र आगच्छ इत्येतावदेव विवक्षितम् । विवक्षिते सति काले वाक्य भिद्येत । आगच्छ मघवन्, चतुरहे आगच्छेति सकृदुच्चरिताऽऽगच्छतिर्विभक्ति. उभौ संबन्धो न शक्नोति वदितुम् । अथ कस्मात् इन्द्रागमनसंबन्धो विवक्षितः, न पुनः कालाभिसंबन्धः ? आगच्छ मघवन्निति प्रत्यक्षः संयोग. । चतुरहे आगच्छेति परोक्षः, सुत्याशब्देन व्यवायात् । [illegible] च सुत्यामागच्छेत्यपि प्रत्यक्ष. । स विवक्षितो भवतु । नैवं कश्चिद्विरोध. । सुत्यात्वस्य अविशेषात् । ननु चतुरहे इति सुत्याविशेषो गम्यते । न स्यात् । किं कारणम् ? कालस्य लक्षणार्थत्वात् । चतुरहकालोऽत्र सुत्यालक्षणार्थः । चतुरहादिसुत्यामागच्छेति । किं कारणम् ? नात्र देवता आगच्छति । यजमानो नूद्देशेन केवलमङ्गीभवति । स यजतौ अङ्गभावो ऽयमुपलक्ष्यते । सर्वसुत्यासु चासौ तुल्यः । तत्र चतुरहवचन प्रदर्शनमात्रम्, मुख्यत्वात् । मुख्येन हि प्रदर्शनं भवति यथा 'इडान्ता आतिथ्या संतिष्ठते, नानुयाजान् यजति' इति ।

टुप्—( भाष्योक्त व्याख्यानमनुभाषते— ) 'इन्द्र आगच्छ' इति ( एतावदेव ) विवक्षितम्, चतुरहे इति ( कालवचनम् ) अविवक्षितम्, वाक्यभेदभयात् ( इन्द्र आगच्छ, तत्र चतुरहे इति ) एवं '[illegible] आगच्छ, अत्र सुत्यामागच्छ' इति वाक्यभेदः । एवं वाक्यभेदभयात् सुत्याग्रहणमपि अविवक्षितमेव । तस्मात् प्रकृतावपि अविवक्षितत्वात् विकृतावपि अविकारेणैव प्रयोग इति । ( एवमनुभाष्य दूषयति— ) एतदयुक्तम् । ( कथम् ? ) यदि ईदृशोऽपि ( क्रियाकारकभावेन विशिष्टविधिविषयेऽपि ) वाक्यभेदो भवता आश्रीयते, ( तदा ) सर्वत्रैव वाक्यभेदः स्यात्, 'व्रीहीन् प्रोक्षति' इति ( अत्र ) प्रोक्षण कर्तव्यम्, तच्च व्रीहीणां इति । अपिच प्रकृतौ 'चतुरहे, त्र्यहे' इति किमर्थमुच्चार्यते ? अविवक्षितत्वादेतेषाम् ( नोच्चार्यम् । किन्तु— ) 'सुत्यामागच्छ' इति ( एव ) प्रयोग कर्तव्यः ( स्यात् ) । एवं स्थिते विकारेण अविकारेण वेति ( संशयाभावात् ) अधिकरणमेव नोत्तिष्ठति । तस्मादन्यथा वर्ण्यते । 'इन्द्राहे सुत्यामागच्छ मघवन् इति ब्रूयात्' इति । इतिशब्दोऽयं प्रकारवाची ( लोके ) । अस्मिन् ( तु ) वाक्ये अस्य प्रकारवाचित्व नोपपद्यते, प्रकारस्याश्रवणात् । किं तर्हि ? इयत्तावाची वाक्यशेषा-

दवगम्यते ( वाक्यशेषे चतुरहादिशब्दानां इयत्तावाचिनां श्रवणात् । इतिशब्दस्य— ) अहःशब्देन सामानाधिकरण्यात् अहर्गतेयत्ता अवगम्यते । तच्च अहः आगमनक्रियाविशेषणार्थमुच्चार्यते । सुत्याशब्दोऽपि आगन्तिक्रियाविशेषणार्थमेव । इन्द्रस्य करिष्यमाणयो यनत्वात् आगमनक्रिया तदर्था ( तत्संस्कारार्था )। ह्यहे इति सामान्येन परिमाणवाची । न च सामान्येन व्यवहारः ( भवति )। तस्मात् ( तस्य परिमाणविशेषवचनत्वात् विशेषवाचकशब्दस्य— ) अध्याहारं कृत्वा ( तेन अहःशब्दः ) विशेषणीयः । अध्याहारे ( च कर्तव्ये ) यः समवेतार्थः ( शब्दः ) सोऽध्याह्रियते कालेयत्तां प्रकाशयितुम् । तस्मात् यत्र चतुर्षु अहःसु ( चतुर्थे अहनि ) सुत्या, तत्र 'चतुरहे' इत्यध्याहारः, यत्र त्रिषु ( तृतीये ), तत्र 'त्र्यहे' इति । तस्मात् अध्याहारविशिष्टं अहः आगन्तिक्रिया प्रति विशेषणभूतम् । तथा सुत्यापदमपि । अतो प्रकृतिवाक्यार्थौ इतः । यत्र प्रकृतौ चोद्यते प्रधानं ( प्रकृतौ यत् समवेतम्, यच्च स्वार्थं प्रकाशयते ) तस्योहो भवति । अहःसुत्याशब्दौ तु परार्थौ । ( तस्मात् अहर्गणे आद्ये औपसदे अहनि 'त्रयोदशाहे सुत्यामागच्छ मघवन्' इति, द्वितीये तु 'द्वादशाहे सुत्यामागच्छ मघवन्' इतिरीत्या तृतीयादौ ) तस्मात् अनेन प्रकारेण ( पाराथ्यात् इतिकारणेन ) ऊहाभावः, ( अभ्यासात्मकस्य ऊहस्याभावः ) न वाक्यभेदभयेन ( भाष्योक्तेन ) इति ।

अविभागाच्च ॥ २२ ॥

भाष्यम्—अथ यदुक्तमाबाहवदिति । तत्र ब्रूमः । विभक्तः कालः कृष्णग्रीवयोः, सौम्येन व्यवायात् । तत्र गृह्यते विशेषः, पूर्वस्य कृष्णग्रीवस्यैतद्देवतावाहनं नोत्तरस्येति । अथ इह अविभक्तकालाः सुत्याः अन्ववेताः । केनचित्तासु न गृह्यते विशेषः । चतुरहग्रहणं च अविशेषकमित्युक्तम् । तस्मादविकारेण प्रयोगः ।

शा— किं सर्वेषामह्नां पृथक्पृथगुपलक्षणं त्रयोदशाहे चतुर्दशाहे आगच्छ इति अहःशब्दस्य एकवाशब्दस्येव अभ्यासात्मक ऊहो भवति, उत अविकारेण प्रयोगः इति । ( तत्र अहःशब्दस्य किं अभ्यासात्मक ऊहो भवति इति पूर्वपक्षकोटिः । अविकारेण प्रयोगः इति सिद्धान्तकोटिः । पृथगुपलक्षणं तु अभ्यासोपपादकत्वात् उपन्यस्तम् )।

सोम— ऊहविचारत्वादस्य आवापविचारात्मकत्वात् अध्याये संगतिः । सुत्याकालाह्वानामावृत्तिवत् अहःशब्दस्यापि आवृत्तिः इति उत्थानात् अवान्तरसंगतिश्च । सूत्रार्थस्तु— सुत्याविवृद्धौ उपसत्कालसुब्रह्मण्यायां सर्वेषामह्नामुपलक्षणम् । प्रकृतौ सौम्यस्य उपलक्षणीयत्वेन इहापि सर्वेषु तदन्वयात् । न च देवतासंस्कारार्थत्वात् अहरुपलक्षणस्य सकृदुपलक्षणेनापि तत्संस्कारसिद्धिः इति वाच्यम् । 'आग्नेय कृष्णग्रीवमालभेत, सौम्यं बभ्रुम्, आग्नेय कृष्णग्रीवम्' इत्यत्र अग्निदेवताऽऽवाहनलक्षणसंस्कारावृत्तिवत् इहापि तदावृत्तिसंभवात् इति ।

वि— 'उपसत्काल आह्वानं द्वादशाहे विकारभाक् । न वा, आद्य उपलक्ष्य-वाचनाद्वा प्रकृताविव ॥, सुत्याऽऽगमनमात्रस्य विवक्षा प्रकृतौ यतः । विकारमन्तरेणाय तत् सिध्येत् तेन तन्नवा ॥'

भाट्ट— द्वादशाहादौ उपसत्कालीनं सुब्रह्मण्याह्वानं तन्त्रमित्युक्तम् । सुब्रह्मण्यामन्त्रे च 'त्र्यहे सुत्यामागच्छ मघवन्निति ब्रूयात्' इति विहितम् । अधिकरणेन च उपसद्दिनानधिकसुत्यागतदिनसंख्योच्यते । तेन प्रथमोपसद्दिने 'चतुरहे सुत्यामागच्छ' इति । द्वितीयोपसद्दिने त्र्यहे सुत्यामिति । तृतीयोपसद्दिने द्व्यहे इति प्रकृतौ प्रयोगः । द्वादशाहे च उपसदां द्वादशत्वात् आद्योपसद्दिने त्रयोदशाहे इति प्रयोक्तव्यम् । द्वितीयाद्युपसद्दिने द्वादशाहे इत्यादि । तेन च आद्यसुत्याया एवोपलक्षणत्वापत्तेः सुत्यान्तरोपलक्षणार्थं एकैकस्मिन् दिने त्रयोदशाहे चतुर्दशाहे इत्यादि चतुर्विंशाहादिपर्यन्तमहःशब्दावृत्त्या प्रयोक्तव्यम् ।

न च सुत्यागमनसंबन्धमात्रमिह विवक्षितं न तु सुत्यासंबन्धोऽपि वाक्यभेदापत्तेः इति भाष्यकारोक्तं युक्तम्, विशिष्टस्य न्युपलत्वेन विशिष्टशब्दबोधोपपत्तेः अवाक्यभेदात् । न च तथापि सर्वसुत्यासु एकस्यैव इन्द्रस्य देवतात्वात् एकसुत्यासंबन्धित्वेनापि आहूतस्य सर्व-

सुत्योपकारकत्वोपपत्तेः नानुत्पत्तिरिति वाच्यम्। चतुर्थे निर्थौ निमन्त्रणसंस्कृतस्य देवदत्तस्य तदुत्तरदिनकर्तव्यश्राद्धभोजने निमन्त्रणसंस्कृतत्वाभाववत् आवसन्यायामाहूतस्य इन्द्रस्य सुत्याऽन्तरे उपकारकत्वानुपपत्तेः। न च एवमपि प्रकाशनीये सुत्योद्देश्यकाह्वाने चतुरहादिशब्दानां विशेषणत्वेनोपादानात् यज्ञपतिशब्दवत् परार्थत्वावगतेः नाहःशब्दस्य अभ्यासात्मकोहमिद्धिरिति वार्तिकोक्तं युक्तमिति वाच्यम्। 'गमने जुष्ट' इत्यादिवत् क्रियां प्रति विशेषणत्वमात्रेण परार्थत्वानुपपत्तेः। इतरथा चतुःशब्दस्थानेऽपि त्रयोदशपदोहानुपपत्तिः। यज्ञपतिपदे तु यथा परार्थत्वम्, तथा तदधिकरणे स्पष्टम्। अतः कर्तव्यैव त्रयोदशाहे चतुर्दशाहे इत्येवमहःपदावृत्तिः। इति प्राप्ते, श्वोऽहे इयत्र इतिशब्दः छेदापाठः। इत्यहे इति च समाहारोऽयम्, तेन त्यात्संख्याकेषु दिनेष्वित्यर्थः। तथा च अतीतेषु इत्यध्याहार्यम्। तेन प्रथमेऽपसदि श्वोऽहे सुत्यामिति, द्वितीयायां द्वाहे, तृतीयायां त्र्यहे इति प्रयोक्तव्यम्। छन्दोगग्रन्थे धर्मिपसूतिभिरपि एवमेव व्याख्यातम्। याज्ञिकाश्चैवमेवानुतिष्ठन्ति। ततश्च प्रकृतौ 'श्वोऽहे अतीते सुत्यामागच्छ' इत्यर्थावगतेः द्वादशाहे च प्रथमोपसद्दिने त्र्यहपदस्थाने द्वादशाहपदोहेन 'द्वादशाहे अतीते सुत्यामागच्छ' इत्यर्थाङ्गीकारेण सुत्यागतैकत्वस्य अविवक्षितत्वात् सर्वसुत्योद्देश्यकागमनप्रकाशनोपपत्तेः अनभ्यासेनैव प्रयोगः।

यदि तु 'चतुरहे सुत्यामागच्छ मघवन्निति ब्रूयात्' इतिभाष्यवार्तिकधृतवचनान्तरानुसारात् इत्यहे इत्यादेः पूरणार्थकत्वे उपगमाङ्गीकृत्य 'चतुर्थेऽहनि सुत्यामागच्छ' इत्यर्थोऽङ्गीक्रियते तदा भाष्यवार्तिकोक्तसमाधानस्य त्वयैव दूषितत्वात् कथञ्चिदेवं समाधेयम्। नावसन्ये देवताया आगमनं संभवति, तेन देवस्यत्वादिपदार्थवत् चतुरहाधिकरणकसुत्योद्देश्यकागमनमन्यत्र प्रसिद्धमाहार्यमिन्द्रे प्रकाशनीयम्। तच्च [illegible] देवस्य त्वादिवत् अदृष्टार्थम्, अपि तु इन्द्रस्य प्रकृतसुत्यासंबन्धार्थम्। अतो लाघवात् अवसानाऽऽदिना सुत्यासंबन्धे एवात्र तात्पर्यम्, न तु चतुरहादिवृत्तिसुत्यासंबन्धे। अतश्च अनभ्यासप्रयोगेऽपि प्रकृतसर्वसुत्यासंबन्धप्रकाशनोपपत्तेः नाहःपदावृत्तिः। न चैव द्वादशाहे आहार्यस्य चतुरहाधिकरणत्वस्यैव प्रकाशनोपपत्तेः न तत्स्थाने त्रयोदशाहपदोहापत्तिः, चतुरहाधिकरणकसुत्योद्देश्यकागमनप्रकाशनेन इन्द्रे द्वादशाहीयसुत्यासंबन्धबोधानुपपत्तेः प्रयोजनानुरोधेन तदूहाङ्गीकारात्।

मण्डन— 'गाने नाह्ना पृथग्भावः।' गाने सुब्रह्मण्याह्वाने। गाने इत्यत्र ह्वाने इत्येव पाठः स्यात्।

शंकर— 'सुब्रह्मण्याहःशब्दतन्त्रम्।'

● द्वादशाहे एकवत् क्रतोः पञ्च एव परिक्रयः। भेदस्तु वचनात् सुत्यासंबन्धप्रयोजनः दक्षिणासंस्कारप्रयोजनश्च। न तस्मिन् भिद्यमाने परिक्रयैकत्वं भिद्यते। भा. १०।६।१७।६८, ● द्वादशाहे दैकादशिनाना पशूना प्रायणीयोदयनीययोः क्रमेण पञ्च षट् इति विभज्य अनुष्ठानम्। 'ऐकादशिनाना पशूनाम्' इत्यत्र अधिकरणम्। १०।६।४।६–१२, ● द्वादशाहे कृष्णविषाणया कण्डूयनं प्रथमाहे दीक्षामारभ्य उत्तमाहे दक्षिणानयनपर्यन्तं कार्यम्। चात्वाले प्रासनं च अन्तिमाहे दक्षिणानयनोत्तरम्। ११।३।६।१३–१४. ● द्वादशाहे चतुर्थेऽहनि त्रैशोकं नाम साम। तस्य योनिर्ऋक् 'विश्वाः पृतनाः०' इति। उत्तरे च द्वे ऋचौ उत्तराग्रन्थपठिते बृहत्यौ एव ग्राह्ये न तु कुत्रचित् अतिजगत्यौ समानेऽन्ये। उत्तरे बृहती च 'नेमि नमन्ति' 'सनी रेभासो अस्वरन्' इति। वि. ९।२।९ वर्णक २.

■ द्वादशाहे तत्प्रकृतित्वादेकैकमहरपवृज्येत, कर्मपृथक्त्वात्। ११।४।५।१७॥

द्वादशाहे एकैकं अहः द्वादशदीक्षाद्वादशोपसत्सहितं अपवृज्येत समाप्तं भवेत्। एकैकं अहः पञ्चविंशतिरात्रं पृथक् पृथक् कर्तव्यम्। कर्मपृथक्त्वात् पृथगेतानि द्वादश कर्माणि। तत्प्रकृतित्वात् ज्योतिष्टोमप्रकृतिकत्वात् द्वादशानां अह्नाम्। तस्मात् द्वादश पञ्चविंशतिरात्राः कर्तव्याः इति प्रथमः पूर्वपक्षः।

अह्नां वा श्रुतिभूतत्वात् तत्र साङ्गं क्रियेत, यथा माध्यंदिने। १८॥

प्रथमपूर्वपक्षं वाशब्देन निरस्य द्वितीयं पूर्वपक्षमाह। अह्नां श्रुतिभूतत्वात् 'द्वादशाहेन' इति अह्नां द्वादशसंख्या प्रत्यक्षश्रुता। तस्मात् तत्र एकैकस्मिन् अहनि

नवानामह्नां ऐन्द्रवायवाग्रं प्रथममहः, अथ शुक्राग्रम्, अथाग्रयणाग्रम् । अथैन्द्रवायवाग्रम्, अथ शुक्राग्रम्, अथाग्रयणाग्रम् । अथैन्द्रवायवाग्रम्, अथ शुक्राग्रम्, अथाग्रयणाग्रम्' इति । तत्र प्रथमद्वितीययोः अह्नोः ऐन्द्रवायवाग्रता शुक्राग्रता च श्रूयते । सा चोदकेनैव तयोः प्राप्ता, रथंतरसामत्वात् बृहत्सामत्वाच्च । तत्र संदेहः किं इदितं अनुवदितुं पुनः श्रूयते, किमन्यत् परिसंख्यातुम्, उतार्थवादार्थम्, अथवा समानविध्यर्थम् । किं प्राप्तम् ? अर्थवादार्थेति । कुतः ? उदिते अनुवदितुं हि उच्यमाने प्रवृत्तिविशेषक्रिया नास्ति । त्रिदोषा परिसंख्या । तस्मात् अर्थवादार्थेति । कः पुनरत्र गुणवादः ? औचित्यम् । आग्रयणाग्रत्वं हि तृतीये अहनि न्याय्यम् । कथमिव ? प्रथमद्वितीययोः अह्नोः ऐन्द्रवायवाग्रता (शुक्राग्रता) च चोदिता, न तृतीये अहनि । तत्र तु आग्रयणाग्रता न्याय्येति ।

अपिवाऽहर्गणेष्वभिवत् समानविधानं स्यात् ॥ ७८ ॥

भाष्यम्— अपिवा इति पक्षव्यावृत्तिः । न गुणार्थं श्रवणम्, समानविध्यर्थमिति । न ह्यत्र वदितुं चोदकेन प्राप्तम् । तत्र पुनर्वचनमनर्थकम् । तस्मात् तदन्यार्थमिति । कथं तर्हि वाक्यम् ? वाक्येनेदं ज्योतिष्टोमे रथंतरसाम्नि प्रवृत्त चोदकेन प्राप्यते । तस्मात् समानविधिं करिष्यामीति पुनरुच्यते । अग्निवत् । यथा 'अथातोऽग्निमग्निष्टोमेनैवा-नुयजति, तमुक्थ्येन, तमतिरात्रेण, तं चतूरात्रेण, तं पञ्चरात्रेण, तं सप्तरात्रेण, तमष्टरात्रेण, तं नवरात्रेण, तं दशरात्रेण, तमेकादशरात्रेण' इति । प्रयोजनं पक्षोक्तं परिसंख्या भवतीति ।

शा— इदं तु अनैमित्तिकार्थं वचनम् । तस्य च प्रयोजनं वचनविकृतिषु अवत्यपि रथंतरबृहत्सामत्वे ऐन्द्र-वायवशुक्राग्रतयोः सिद्धिः ।

सोम— प्रदानक्रमस्य बाधाभावेऽपि इह परिसंख्यया अङ्गान्तराणां बाध, इत्युक्तेः संगतिः । अनीकशब्दः अग्रवाचनः, लोके शताग्रे शतानीकः इति व्यवहारात्, वेदे च 'चित्रं देवानामुदगादनीकम्' इति प्रयोगाच्च । त्र्यनीका इति अजादेः आकृतिगणत्वात् टाप्, न नु ङीप् । उक्तं च 'स्मृत्याऽजादिगणे मुक्ता टाबुत्पत्ति-र्द्वियोरपि । त्र्यनीकेति गणे कीर्त्यः स्यादाकृतिगणो हि सः ॥' इति । न चात्र गृहमेधीयाज्यभागन्यायेन चोदकपरिक्लृप्तत्वेन अप्राप्तपरिसंख्यासंभवः, अग्रतायाः संनिपातिधर्मत्वेन साक्षात् उपकारासंबन्धात् इति भवनाथादयः । सूत्रार्थस्तु— त्र्यनीकायां चोदकप्राप्तेषु ऐन्द्रवायवाग्रत्वादिषु यत् पुनराम्नानम्, तत् अर्थवादार्थं स्यात् इति ।

वि— 'त्र्यनीकायामैन्द्रवायव-शुक्राग्रानुवादतः । परि-संख्या वाऽर्थवादो वा विधिर्वा, नहि प्रथम ॥ वैयर्थ्येन त्रिदोषत्वात् कथंचाऽऽपत्तितस्तथा । विधिराग्रयणाग्रस्य इवानैमित्तिको हि सः ॥' अत्र पक्षमयं पूर्वपक्षः इति ज्ञेयम् ।

भाट्ट— द्वादशाहे द्वादशस्वपि अहस्सु ग्रहाग्रता विहिता 'ऐन्द्रवायवाग्रौ प्रायणीयोदयनीयौ दशमं चाहः, अथैतरेषां नवानामह्नामैन्द्रवायवाग्रं प्रथममहः, अथ शुक्राग्रम्, अथाग्रयणाग्रम् । अथैन्द्रवायवाग्रम्, अथ शुक्राग्रम्, अथाग्रयणाग्रम् । अथैन्द्रवायवाग्रम्, अथ शुक्राग्रम्, अथाग्रयणाग्रम्' इति । सेयं नवाहःसंबन्धग्रता त्र्यनीका । नवतु आद्यानि षट् रथंतरबृहद्वैरूपवैराज-शाक्वररैवतसामकानि । अतश्च तत्र अहस्स्वन्त्येषु बृहद्रथंतर-सामकत्वाभावात् अग्रताविधिः अपूर्वविधिरेव । आद्ययोस्तु रथंतरबृहत्सामकत्वात् सनैमित्तिकयोः ऐन्द्रवायवाग्रत्व-शुक्राग्रत्वयोः अतिदेशेनैव प्राप्तिसंभवे पुनरत्र शब्दश्रवणं किमर्थमिति प्रयोजनविवक्षया चिन्त्यते । तत्र आज्यभाग-न्यायेन अङ्गान्तरपरिसंख्यार्थं इत्याद्यः पक्षः । द्वितीयस्तु स हि गृहमेधीयन्यायमपक्षन्यायेन प्राप्तपरिसंख्या वा स्यात्, तदीयाद्यपक्षन्यायेन अपूर्वस्थापनद्वारा अप्राप्तपरिसंख्या वा ? नाद्यः, त्रैदोष्यापत्तेः । नान्त्यः, सति अन्यस्मिन् प्रयुभूते प्रयोजने परिसंख्याफलकत्वस्य अन्याय्यत्वात् । तथात्वे ग्रहणानामपि प्राप्यभावेन ऐन्द्रवायवाग्रत्वादेरपि विधातुमशक्यत्वाच्च । अतः एकवाक्यतालाभाय 'एक वृणीते' 'द्वादशाहीनस्य' 'वपायुक्तस्य' इत्यादिवत् आग्रयणाग्रताविधेरेव अयमर्थवादः औचित्येन तत्स्तुत्यर्थः, न तु विध्यन्तरत्वं वाक्यभेदप्रसक्तेरिति । सिद्धान्तस्तु,

अधिकारार्थकाथशब्दबलेन उत्तरस्मिन् पूर्वस्यानन्वयप्रतीतेः। अन्यथा 'इदं तु आग्रयणाग्रम्' इत्युक्त्यापत्तौ वा अथशब्दानिरस्यत्वात् वाक्यत्रयमेवेदं अनीकान्तरवाक्ये स्यात्। तत्प्रयोजनं च अतिदेशात्प्राप्तेः पूर्वं एतद्वाक्येन ऐन्द्रवायवाग्रत्वशुक्राग्रत्वयोर्विधौ अतिदेशस्य एतद्विषयत्वाकल्पनात् अनैमित्तिकत्वसिद्धिरेव। तत्फलं च वत्सद्विकृतिषु अनयोरपि निमित्ते तत्तद्ग्रतासिद्धिः। यथा गर्गत्रिरात्रे 'द्वितीयमहर्यामदेव्यपृष्ठम्' इति। तत्र अनयोरपि बृहत्साम्नः शुक्राग्रत्वनियमसिद्धिः। अन्यथा अनियमेन यत्र कथंचिद्ग्रहस्य प्राथम्ये प्रकृतिदृष्टपाठानुरोधात् ऐन्द्रवायवस्य स्यादिति पूर्वपक्षे अग्राग्रत्वाणां परिसंख्यात्मत्वात् बाधोपयोगिता।

मण्डन—'समं विधत्ते पुनरग्रतोक्तिः।'

शंकर—'नित्यं त्वनीके शुक्राग्रा।'

● द्वादशाहे दक्षिणा अन्वहं द्वादशाधिकं शतं विभज्य दीयते। वि. १०।६।१८. ● द्वादशाहे दश सौमिकानि अहःसंयुक्तानि कर्माण्युत्पद्यन्ते। अपरौ प्रायणीयोदयनीयौ। तावपि लक्षणया कर्म प्रतिपादयतः। तस्माद् द्वादश कर्माणि उत्पद्यन्ते। तानि उत्पन्नानि साकाङ्क्षाणि 'द्वादशाहेन प्रजाकामं याजयेत्' इति फले विधीयन्ते। टुप्. ११।४।५।१५. ● द्वादशाहे दशमस्याह्नो मानसग्रहेण समापनं वाचनिकम्। वि. ९।१।९. ● द्वादशाहे दीक्षा पृथक्कालत्वात् तन्त्रम्। भा. ११।३।१०।२१.

■ द्वादशाहे दीक्षा. द्वादशैव ॥

[ अत्रत्यं भाष्यं वार्तिकं च 'ज्योतिष्टोमे एकादीना दीक्षाणां विकल्पः' (६।५।८।२८—२९ मी. को. पृ. १७५० ) इति विन्दौ गृहीतम्। ]

शा— द्वादशाहे 'षट्त्रिंशदहो वा एषः, यद् द्वादशाहः' इति लिङ्गात् दीक्षा द्वादश इति गम्यते।

वि—'द्वादशाहे किमेकादिविकल्पा द्वादशैव वा ?, आद्यः प्रकृतिवत्, षष्ठ्या द्विकाभाम्रुक्तितोऽनियमः ॥'

भाट्ट—द्वादशाहेषु 'द्वादशरात्रीर्दीक्षितः स्यात्' इति वाक्येन यत्रयत्रश्रवणमित्युक्त् द्वादशदीक्षाकल्पस्यैव नियमनात् विकल्प इति प्रत्युदाहरणमात्रम्। अत एव 'षट्त्रिंशदहो वा एष द्वादशाहः' इति लिङ्गं उपसत्सुत्यानां द्वादशत्वस्य प्रमाणान्तरसिद्धत्वात् दीक्षा अपि द्वादशेति गमयति। तथा 'अभीन्धते एव दीक्षाभिः' इति दीक्षाबहुत्वं विधाय 'द्वाभ्यां लोमावद्यन्ति द्वाभ्यां त्वचं द्वाभ्यामसृक् द्वाभ्यां मांसं द्वाभ्यामस्थि द्वाभ्यां मज्जानम्' इति तद्वाक्यशेषे षड्द्विकानुक्रमणमपि।

मण्डन—'द्वादशाहे द्वादशैताः।' एताः दीक्षाः।

शंकर—'द्वादश द्वादशाहके।' दीक्षाः।

● द्वादशाहे दीक्षाणामुपसदां च तन्त्रम्। द्वादशानामह्नां सहप्रयोगविधानात्। वि. ९।१।९. ● द्वादशाहे दीक्षणामुपसदां च सस्थानविवृद्ध्या प्रयोगः। टुप्. ११।४।५।१८. ● द्वादशाहे दीक्षाणां क्रमविशेषनियमः। शौनकमाधिकरणं द्रष्टव्यम्। वि. ५।२।१ वर्णकं २:

■ द्वादशाहे दीक्षोपसत्सुत्यानां प्रत्येकं द्वादशदिनसाध्यत्वम्, तेन षट्त्रिंशदहत्वम् ॥

द्वादशाहे तत्प्रकृतित्वादेकैकमहरपवृज्येत, कर्मपृथक्त्वात्। ११।४।५।१७॥

भाष्यम्— 'द्वादशाहेन प्रजाकामं याजयेत्' इति श्रूयते। तत्र विचार्यते किमेकैकशः पृथक्पृथक् दीक्षोपसदेन (द्वंद्वस्य दकारान्तत्वात् अच् समासान्तः 'द्वंद्वाच्चुदषहान्तात्' इत्यनेन) अहः संपाद्य द्वादश पञ्चविंशतिरात्राः कर्तव्याः (दीक्षाः १२, उपसदः १२, एका सुत्या इति एकैकमहः पञ्चविंशतिरात्रम्), अथवा द्वादश सात्रस्काः, (एकैकस्मिन्नेव अहनि एकैक दीक्षोपसत्सुत्यमिति), अथवा चतुरहे दीक्षाः, चतुरहे उपसदः, चतुरहे सुत्याः, अथवा स्वस्थाना दीक्षोपसत्सुत्यानां विवृद्धिरिति। किं प्राप्तम् ? तत् सूत्रेणैवोपक्रमः 'द्वादशाहे तत्प्रकृतित्वात् एकैकमहरपवृज्येत कर्मपृथक्त्वात्'। एकैकं सदीक्षोपसदं (दीक्षोपसदेन सहितम्) अहः अहः अपवृञ्ज्येत। द्वादश पञ्चविंशतिरात्राः कर्तव्याः। कुतः ? तत्प्रकृतित्वात्। सदीक्षोपसदं अहः अपवर्जितं ज्योतिष्टोमे। यतः तत्प्रकृतीन्येतानि द्वादशाहानि पृथग्भूतानि कर्माणि पृथक्त्वेनैव धर्मानाकाङ्क्षन्ति। तस्मात् ज्योतिष्टोमवत् सदीक्षोपसदं एकैकमहः कर्तव्यमिति।

टुप्—प्रकृतौ उपाकरणादेः हारियोजनपर्यन्तस्य यागस्य अहःशब्दो परिच्छेदको दृष्टः। तेन तत्परिच्छेदद्वारेण

कर्मणि वर्तते अहःशब्दः। इहापि द्वादशाहे 'प्रथममहः, द्वितीयमहः' (इत्येवमादि 'दशममहः' इत्यन्तम्) श्रूयते। सोऽयं अहःशब्दः श्रूयमाणः (अहःपरिमित) कर्म लक्षयति। यत्र तत् कर्म लक्ष्यते, अनेन (वाक्येन) तदुपपद्यते। एवं दश सौमिकानि अहःसंयुक्तानि कर्माणि उत्पद्यन्ते, अपरौ प्रायणीयोदयनीयौ (अतिरात्रौ अभितो दशाहं श्रूयेते), तावपि लक्षणया कर्म प्रतिपादयतः। तस्मात् द्वादश कर्माणि उत्पद्यन्ते। तानि च उत्पन्नानि (कर्म पति) साकाङ्क्षाणि 'द्वादशाहेन प्रजाकामं याजयेत्' इति (वचिना) फले विधीयन्ते तत्र द्वादशाहशब्दः सामानाधिकरण्यात् यागेन अयमपि कर्मवचनो न लौकिकमहर्ब्रवीति। संख्याशब्दस्तु द्वादश यागान् प्रतिपादयति। तत्र एकैको यागः फलसाधनत्वात् ज्योतिष्टोमात् विध्यन्तं गृह्णाति। तत्र (प्रत्येकमेव) चोदकेन ज्यौतिष्टोमिके दीक्षोपसत्परिमाणे (दीक्षोपसत्परिमाणे एका दीक्षा तिस्र उपसदः इति) प्राप्ते वचनेन द्वादश दीक्षा विधीयन्ते, (द्वादश) उपसदश्च। तस्मात् एकैको यागः पञ्चविंशतिरात्रः।

अह्नां वा श्रुतिभूतत्वात्तत्र साङ्गं क्रियेत यथा माध्यंदिने। १८॥

भाष्यम्— न चैतदस्ति, यदुक्तं द्वादश पञ्चविंशतिरात्राः कर्तव्या इति। किं तर्हि? द्वादश सावस्काः कार्याः। किं कारणम्? अह्नां श्रुतिभूतत्वात्। द्वादशाहेनेति द्वादशसंख्या अह्नां प्रत्यक्षश्रुता। सा बाध्येत, यदि द्वादश पञ्चविंशतिरात्राः क्रियेरन्। तस्मात् द्वादशसु अहःसु एकैकेन प्रधानं प्रयुज्येत। प्रधानकालत्वादङ्गानां तत्काल तदीय दीक्षोपसदम्। यथा माध्यंदिने। तद् यथा 'सावनीयस्य माध्यंदिने निरूप्यते' इति वचनात् माध्यंदिनकालान्येवाङ्गानि भवन्ति, एवमिहापि। तस्मात् द्वादश सावस्काः कर्तव्याः।

टुप्— यागाश्चात्र फले विधीयन्ते इति तुल्यम् (आचमो.)। संख्याशब्दः (तु) अहर्विशेषणार्थं मुख्यार्थो 'द्वादशाहानि भवन्ति' इति। द्वादशशब्दोऽपि श्रुतिभूतः। अहःशब्दोऽपि (श्रुत्यैव) लौकिकमहः ब्रवीति इति न कर्म, लक्षणाऽर्थो (कल्पितो) भवि-ष्यति। द्वादशाहेन इति द्वादशभिरहोभिः ते यागाः कर्तव्याः। (गुणविधिर्द्वादशाहशब्दः, न नामधेयमित्यर्थः)। तस्मात् द्वादशाहेन इति (कालविधानेन) साङ्गानां द्वादशाहकालत्वं प्रतिपाद्यते। याऽसौ चोदकेन अन्यादृशी प्राप्तिः (अन्यस्मिन्नहनि दीक्षाः, अन्यस्मिन् उपसदः, अन्यस्मिन् सुत्याः इति) सा प्रत्यक्षया अहर्गतया संख्यया निवार्यते।' (तस्मात् द्वादश सावस्काः)। एवं च प्रधानसंनिधौ अङ्गानि कृतानि भविष्यन्ति।

अपि वा फलकर्तृसंबन्धात् सहप्रयोगः स्यादाग्नेयाग्नीषोमीयवत्। १९॥

भाष्यम्— अपि वा नैव स्यात् 'द्वादश सावस्काः' इति। कथं तर्हि? सहप्रयोगः स्यात् चतुरहे दीक्षाः, चतुरहे उपसदः, चतुरहे सुत्याः। कुतः? फलकर्तृसंबन्धात्। फले कर्तृषु च एतेषां प्रधानकर्मणां समेतानां संबन्धः। द्वादशाहशब्देन समुदायवचनेन संयोगात् फले संबन्धः। सत्रे स्वयंकर्तृत्वात् अहीने च दक्षिणैक्यात् कर्तृषु च। एकफलत्वात् एककर्तृत्वाच्च सहप्रयोगो भवति। आग्नेयाग्नीषोमीयवत्। यथा आग्नेयाग्नीषोमीययोः एकफलत्वात् एककर्तृत्वाच्च सहप्रयोगो भवति। सहप्रयोगे च विशेषाग्रहणात् तन्त्रं दीक्षोपसदम्। द्वादशाहश्रुतिश्च अनुगृह्यते। तद् उभयं एवमुपपादितं भवति सहप्रयोगः अहःसंख्या च। तस्मादेष पक्षः श्रेयान्।

टुप्— यागाः फले चोद्यन्ते। तेषां (अङ्गभूतदीक्षोपसदाम्) द्वादशसंख्या प्रत्यक्षा श्रूयते। सा चोदकप्राप्तां संख्यां कालापरत्वा बाधते। तत्र ये संख्यायुक्ताः, ते बाध्यन्ते। ते च दीक्षणीयादयः संख्यायुक्ताः, नाग्नीषोमीयादयः। अपि च एकस्मिन् फले चोदितानां तन्त्रेण इति-कर्तव्यता भविष्यति। (ननु एकफलानामपि राजसूयवत् तन्त्रभेदः स्यात्, अत आह—) दक्षिणैक्यात् कर्तृभेदो नास्ति। तस्मात् (अहीने तावत्) सहप्रयोगः सिद्धो भवति। सत्रे च यजमाना एव कर्तारः, (अतः) तत्रापि कर्तृभेदो नास्ति (इति) तत्रापि तन्त्रम् (दीक्षोपसदः)।

साङ्गकालश्रुतित्वाद्वा स्वस्थानानां विकारः स्यात् । २० ॥

भाष्यम्— अथवा एतदपि न युक्तम् । कुतः ? साङ्गकालश्रुतित्वात् । यदि अत्र प्रधानानामेव कालश्रुतिः स्यात् नाङ्गानाम्, तत एवं स्यात् । अत्र तु साङ्गानां कालः श्रुतः । ( 'द्वादश दीक्षाः, द्वादशोपसदः' इति दीक्षाणां उपसदां च पृथक्पृथक् कालः श्रुतः । यदि चतुरहे क्रियेत, ततो बाध्येत । तस्मात् स्वस्थानानां विवृद्धिः ।

टुप्— ( द्वादशाहशब्दो न गुणविधिः, किन्तु नामधेयमित्याह– ) भावयेत् प्रजाम् ( प्रजाः इति मुद्रिते पाठः ) । केन ? यागेन । कतरेण ? द्वादशाहसंज्ञकेन । ( इत्येवं याग– ) सामानाधिकरण्यात् अहःशब्दः कर्म ब्रवीति । संख्याशब्दः ( अपि ) 'संख्यया कर्मभेदः' इत्यनेन न्यायेन द्वादश यागान् प्रतिपादयति । तत्र एकैको यागः चोदकेन धर्मान् गृह्णाति । तत्र प्रत्यक्षेण ( द्वादश दीक्षाः इत्यादिना ) संख्यावचनेन ( बाध्यते इत्यन्वयः ) चोदकेन या दीक्षोपसत्संख्या प्राप्नोति, सा बाध्यते । ( ननु एवं द्वादश पञ्चविंशतिरात्राः स्युः, अत आह– ) दक्षिणैकत्वात् तन्त्रेण प्रयोगः । तस्मात् दीक्षाणामुपसदां च स्वस्थानविवृद्धया प्रयोगः ।) द्वादशसंख्या च या द्वादशश्रुतेः ( द्वादशस्येत्यर्थः ), सा कर्मोपकर्मभेदेन उपपन्ना भवति ( कर्मशब्देन प्रधानस्याभिधानम्, उपकर्मशब्देन अङ्गस्य ) एवं च 'षट्त्रिंशदहो वा एष यद् द्वादशाहः' इति दर्शनमनुगृहीतं भवति ।

तदपेक्षं च द्वादशत्वम् । २१ ॥

भाष्यम्— दीक्षोपसत्तुल्याऽपेक्षम् । प्रथमं दीक्षाः, तासां तत्रैव द्वादशत्वम् । तत उपसदः, तासामपि तदपेक्षाणामेव ( द्वादशत्वम् ) । अन्ये सुत्याः, तस्या अपि स्वस्थाना एव विवृद्धिः । तदपेक्षं द्वादशत्वम् ।

दीक्षोपसदां च संख्या पृथक्पृथक्, प्रत्यक्ष-संयोगात् । २२ ॥

भाष्यम्— अपि च 'द्वादशाहेन प्रजाकामं याजयेत्' इत्युक्त्वा त्रिवृदादीनि अनुक्रान्तानि । तस्मादपि तदपेक्षा द्वादशसंख्या ।

वसतीवरीपर्यन्तानि पूर्वाणि तन्त्रमन्यकालत्वादवभृथादीन्युत्तराणि दीक्षाविसर्गार्थत्वात् । २३ ॥

भाष्यम्— एवं च वसतीवरीपर्यन्तानि पूर्वाणि अन्यकालत्वात् अवभ्रमाणविशेषाणि तन्त्रं भवन्ति । अवभृथादीनि चोत्तराणि । तस्य दीक्षाविसर्गार्थत्वात् । स हि दीक्षोन्मोचनार्थः । एवं ह्याह 'अप्सु दीक्षा प्रवेशयित्वा देवाः स्वर्गं लोकमायन् । यदप्सु स्नाति, तामेव दीक्षामालभते । अथ यदपोऽवभृथमभ्यवयन्ति, तामेव दीक्षां पुनरप्सु प्रवेशयन्ति' इति । तन्त्रं च दीक्षीयसा । सा तन्त्रमेवोपलक्षयते । विशेषाग्रहणात् ।

तथा चान्यार्थदर्शनम् । २४ ॥

भाष्यम्— एवं च सति अन्यार्थदर्शनमिदं युक्तं भविष्यति, 'षट्त्रिंशदहो वा एष द्वादशाहः' इति ।

चोदनापृथक्त्वे त्वैकतन्त्र्यम्, समवेतानां काल-संयोगात् । २५ ॥

भाष्यम्— यथ आग्नेयाग्नीषोमीयवदिति । युक्तं तत् आग्नेयाग्नीषोमीययोः चोदनापृथक्त्वेऽपि ऐकतन्त्र्य सहप्रयोगः । कुतः ? समवेतानां कालसंयोगात् । समवेतानामङ्गप्रधानानां कालसंयोगात् । पौर्णमास्यां पौर्णमास्या यजेत साङ्गयेति । तस्मात्तन्त्रम् । पौर्णमास्यामेवाङ्गानि च प्रधानानि च क्रियन्ते । इह पुनः, साङ्गकालश्रुतित्वादित्येवं अपविद्धो हेतुः । तस्मादत्र द्वादशाहे अङ्गप्रधानानि पौर्णमासीवत्सह कर्माणि ।

सोम— पूर्ववत् इहापि तन्त्रता इत्युत्थितेः संगतिः । सूत्रार्थस्तु— द्वादशाहे एकैकमहः सदीक्षोपसत्कं अपवृज्येत, कर्मणां पृथक्त्वेन तेषां प्रत्येकं ज्योतिष्टोमप्रकृतिकत्वात् इति ।

वि— 'द्वादशाहे सदीक्षोपसदहे दिनमानकम् । शतत्रय– द्वादश वा–षट्त्रिंशद् वा, इमिमो मतः ॥ एकैककर्मणोऽह्नोऽस्य ज्योतिष्टोमविकारतः । एकैकं तदनुष्ठानं दिनाना पञ्चविंशतिः ॥ अह्नां द्वादशतासुत्या मध्यपक्षस् तदाऽपि किम् । कर्मा द्वादश तावत्का धतुष्काणामुत त्रिकम् ॥ एकैकस्यैव यागस्य विकृतित्वादिहादिमः । अगुरुत्वकालाङ्गकथाचतुष्कं भिद्यते त्रिधा ॥, दीक्षा उपसदः सुत्याः प्रत्येकं द्वादश स्मृताः । साङ्गस्य द्वादशाहस्य

षट्त्रिंशद् दिवसा मताः ॥' अतिदिष्टानामुपसदां दीक्षाणां च प्राकृतसंख्याबाधनाय पृथक् द्वादशत्वं श्रुतम् । ततो दीक्षोपसदर्थे चतुर्विंशतिर्दिनानि, सुत्यार्थमेकं दिनमिति पञ्चविंशतिः । ईदृशस्य कर्मविशेषस्य द्वादशभिरावृत्तिभिः ( दिनानाम्– ) सत्रत्वं स्यात् । इत्याद्यः पक्षः । तथा सति अह्ना द्वादशत्वं श्रूयमाणं बाध्येत । तस्मात् द्वादश दिवसाः इति मध्यमः पक्षः । तदाऽपि दीक्षोपसद्भ्यां सुत्यैकस्य एकैकस्याहः साङ्गज्योतिष्टोमविकारत्वात् तत्र सर्वे त्रयः एव कर्तव्याः ( इति द्वादश आवृत्तयः ) । इत्येकः पक्षः । प्रकृतौ दीक्षोपसदोर्मुख्यकालत्वात् प्रत्येक अनुष्ठितत्वात् इहापि तथैवानुष्ठानं प्राप्तम् । तत्र मुख्यकाले अनुष्ठाने बाध्येत । तस्मात् अहरूपस्य प्रधानस्य च द्वादश दिनानि विभज्य अनुष्ठानम्, इति पक्षान्तरम् । 'द्वादशैव दीक्षाः, द्वादशोपसदः' इति अङ्गयोः मुख्यवत् पृथक् द्वादशाहयुत्या षट्त्रिंशत् इति सिद्धान्तः ।

भाट्ट— द्वादशाहे द्वादशदीक्षाः द्वादशोपसदः द्वादशसुत्याश्च विहिताः । तत्र 'द्वादशाहेन प्रजाकामं याजयेत्' इत्यनेन द्वादशानां सुत्यानां फलसम्बन्धे अवगते प्रत्येकातिदेशप्राप्तदीक्षोपसदनुवादेन द्वादशत्वसंख्याविधौ एकैका सुत्या प्रत्येकं द्वादशसंख्याकदीक्षोपसद्युक्ता कर्तव्येति द्वादश पञ्चविंशतिरात्राः संपद्यन्ते । न च द्वादशाहपदस्य द्वादशदिनात्मककालविधायित्वात् कथमेतावद्दिनसाध्यत्वेति वाच्यम् । अहःशब्दस्य सुत्यात्मकमहर्वाचित्वेन द्वादशसंख्याकसुत्यात्मकत्वस्य प्रशस्त्येन तस्य नामधेयत्वादिति प्रथमः पक्षः । न अहःशब्दस्य क्वचित् रूढिः, अपि ■ दिने एव तस्य क्रतुविशेषे निरूढलक्षणया प्रयोगात् । अतो लक्षणायां प्रमाणाभावात् द्वादशदिनात्मककालविधिरेवायम् । अतश्च सादण्डिप्रान्यायेन ( ५।१।१७ ) आतिदेशिककालबाधात् साङ्गानां द्वादशसुत्यानां द्वादशदिनसमाप्त्यन्तर्भावात् एकस्मिन्नहनि द्वादशसंख्याकदीक्षोपसद्युक्तैकैका सुत्या समापनीयेति द्वादश आवृत्तयः कर्तव्या इति द्वितीयः । साद्गुण्येन एकफलसाधनानां द्वादशानामपि सुत्यानां प्रयाजवत् तन्त्रेणैव निरूढसंख्याकदीक्षोपसदुपकारोपपत्तेः कदाचित् प्रमाणाभावः । अतश्च औपदेशिककालानुरोधात् आद्यदिने एव निरूढसंख्याकदीक्षोपसदादिकं समुदायं सर्वं समाप्य द्वादश सुत्या एकैकस्मिन्दिने कर्तव्याः इति तृतीयः । यत्तु अस्मिन् पक्षे 'चतुरहं दीक्षाः, चतुरहं उपसदः, चतुरहं सुत्याः' इति मूले अनुष्ठानमुक्तम्, तत् प्रमाणाभावादुपेक्षितम् । सिद्धान्तस्तु— अहःपदस्य कालपरत्वे द्वादशाहमित्यापत्तेः यागनामत्वाधिकरणेन अहःशब्दस्य निरूढलक्षणया यागपरत्वानवसरभावात् तस्य च सुत्यात्मकत्वेन अहःशब्दस्य प्रमाणान्तरेणैव प्राप्तेः नात्रैव साङ्गे कालविधिः । किंतु सर्वप्रधानानां द्वादशदिनात्मककालसाध्यत्वात् तत्प्रख्यन्यायेन नामधेयमेव द्वादशाहशब्दः । अतश्च अतिदेशानुरोधात् सुत्यातो बहिरेव द्वादशाहं दीक्षाः द्वादशाहं चोपसदः कृत्वा द्वादशाहं द्वादश सुत्याः कर्तव्याः । एवं च 'षट्त्रिंशदहो वा एषः यद् द्वादशाहः' इति लिङ्गमप्युपपद्यते ।

मण्डन— 'सत्रत्वाद्वृद्धिर्दीक्षाऽऽद्यैः ।'

शंकर— 'द्वादशाहः षट्त्र्यहः स्यात् ।' षट् च त्रीणि च अहानि यस्य सः षट्त्र्यहः ' अङ्गानां चामतो गतिः' इति रीत्या षडङ्गस्य त्र्यङ्गस्य च निवेशो ३६ इति षट्त्रिंशद्दिनात्मकत्वं सिध्यति ।

* द्वादशाहे दीक्षोपसत्सुत्यानां त्रयाणां विवृद्धिः । प्रथमं दीक्षाः, तासां तत्रैव द्वादशत्वम् । ततः उपसदां ■ तासामपि तद्देशानामेव । अन्ते सुत्याः, तासां अपि तत्स्थानाया एव निवृद्धिः । भा. ११।४।५।१८.
* द्वादशाहे दीक्षावाक्ये 'पदार्थोच्चारणात् यः क्रमः प्रतीयते, स एव विधीयते'। टुप्. ५।१।१।१ पृ. १२८८.
* द्वादशाहे 'पत्नीसंयाजान्तान्यहानि संतिष्ठन्ते' । अत्र प्रागुत्तमादहः यानीतराण्यहानि तेष्वेव इदामनर्थं पत्नीसंयाजान्तार्थं संतिष्ठते । तत्रापि न पत्नीसंयाजोत्तरस्य लोपः किन्तु तादृशस्य हारियोजनादेः बर्हिःप्रहरणान्तस्य द्वादशेऽहनि पत्नीसंयाजान्ते अनुष्ठानम् । पूर्वेषु तु अहःसु पत्नीसंयाजेऽवरमः । वि. १०।१।९. ■ द्वादशाहे पुरस्तात् पर्यासात् आगन्तवो भवन्ति वदिष्यमाने । भा. ६।३।८।७ । द्वादशाहस्य पाठक्रिके द्वितीयेऽहनि स्तोत्रियानुरूपौ पठित्वा अपूर्वास्तृचाः पठ्यन्ते, ततः उत्तरः पर्यासः पठितः । तस्मात् पर्यासात् पूर्वमेवैषां

निर्देशो दृष्टः । 'स्तोत्रियानुरूपौ तृचौ भवतः, वृषण्वन्तस्तृचा भवन्ति, तृच उत्तमः पर्यासः' इति । टुप्. * द्वादशाहे 'पृश्निप्राणभृतान् व्यतिषजति' इति श्रुतम् । तत्र 'वायुरसि' इत्यादयः दश मन्त्राः पृश्नयो नाम, 'अयं पुरो भुवः' इत्यादयः दश मन्त्राः प्राणा नाम । अत्र मन्त्रेषु ग्रहशब्दो गौणः । ( इदम् 'पृश्निप्राणग्रहमन्त्राः' इति शब्दे द्रष्टव्यम् ) । संकर्ष. ३।३।१९. * द्वादशाहे पृष्ठ्यः षडह उत्पन्नः, स प्रकृतिरूपः । गवामयने पृष्ठ्यः षडहः तद्विकृतिः । वि. १०।६।२. * द्वादशाहे अत्यहं सुब्रह्मण्याभेदः 'संस्थितेसंस्थितेऽहनि' इति वीप्सावचनात् । आ. ११।४।६।२५.. * द्वादशाहे प्रथममहः प्रायणीयम्, उत्तममहः उदयनीयम् । इमौ द्वावपि अतिरात्रौ । वि. १०।५।४, * द्वादशाहे प्रथममहः प्रायणीयम्, गवामयने च प्रथममहः प्रायणीयम्, तयोः प्रकृतिविकृतिभावो नास्ति । इति न धर्मातिदेशः । ७।३।२. * द्वादशाहे प्रायणीयातिरात्रे ज्योतिष्टोमिको विध्यन्तः । वा. ७।४।३।१९. * द्वादशाहे मानसो ग्रहः 'अनया त्वा पृथिव्या पात्रेण समुद्रस्य प्रजापतये त्वा जुष्टं गृह्णामि इति मानसं प्रजापतये गृह्णाति' इति विहितः । अयं मानसः दशमस्याह्नोऽङ्गं न भिन्नः इति दशमेऽहन्येव कर्तव्यः । वि. १०।६।११. * द्वादशाहे योगविमोकौ 'अहरहर्युनक्ति, अहरहर्विमुञ्चति' इति प्रात्यहिकयोगदर्शनं प्रधानमार्थत्वे तद्भेदेन भेदोपपत्तेरुपपन्नम् । इतरथा सर्वान्तयोः सकृदेव अभियोगविमोकयोः प्राप्तापत्तेः इति भाष्यकारेण सिद्धान्तितम् । भाट्ट. ११।३।६. * द्वादशाहे व्यूढे श्रुतिः 'ऐन्द्रवायवाग्रौ प्रायणीयोदयनीयौ, अथैतरेषां दशानामह्ना ऐन्द्रवायवाग्रं प्रथममहः, अथ शुक्राग्रम्, अथ द्वे आग्रयणाग्रे । अथैन्द्रवायवाग्रं अथ द्वे शुक्राग्रे । अथाग्रयणाग्रं अथ द्वे ऐन्द्रवायवाग्रे' इति । अत्र प्रथमे द्वितीये षष्ठे दशमैकादशद्वादशेषु च ऐन्द्रवायवाग्रत्वम् । तृतीये सप्तमाष्टमयोश्च शुक्राग्रत्वम्, चतुर्थपञ्चमयोर्नवमे च आग्रयणाग्रत्वम् । वि. १०।५।२४.

¶ द्वादशाहे व्यूढे भक्षपवमानपरिधिकपालमन्त्रगतानां गायत्र्यादिशब्दानामेव व्यतिक्रमो नार्थानाम् ॥

छन्दोव्यतिक्रमाद् व्यूढे भक्षपवमानपरिधिकपालस्य मन्त्राणां यथोत्पत्तिवचनमूहवत् स्यात् । १०।५।२६।८८ ॥

भाष्यम्— अस्ति द्वादशाहः, समूढो व्यूढश्च । तत्र व्यूढः 'ऐन्द्रवायवाग्रौ प्रायणीयोदयनीयौ, अथैतरेषां दशानामह्नामैन्द्रवायवाग्रं प्रथममहः, अथ शुक्राग्रम्, अथ द्वे आग्रयणाग्रे, अथैन्द्रवायवाग्रम्, अथ द्वे शुक्राग्रे, अथाग्रयणाग्रम्, अथ द्वे ऐन्द्रवायवाग्रे' इति । तत्र व्यूढे इदं समामनन्ति 'छन्दांसि वा अन्योन्यस्य लोकमभिध्यायन्ति, गायत्री त्रिष्टुभः, त्रिष्टुब् जगत्याः, जगती गायत्र्याः' इति । तत्र सन्ति भक्षपवमानपरिधिकपालानि । भक्षमन्त्राः 'भक्षेहि ( ओमाङोश्च इति पररूपम् ) मा ( मां प्रति ) विश दीर्घायुत्वाय शन्तनुत्वाय, एहि वसो पुरोवसो प्रियो मे हृदोऽसि, अश्विनोस्त्वा बाहुभ्यां सघ्यासम्, वसुमद्गणस्य रुद्रवद्गणस्य आदित्यवद्गणस्य (इति पदत्रयं सवनत्रये क्रमेण योज्यम्) सोम देव ते मतिविदः प्रातःसवनस्य माध्यंदिनस्य सवनस्य तृतीयसवनस्य (सवनत्रये यथायथं क्रमेण योजनीयानि) गायत्रच्छन्दसः त्रिष्टुप्छन्दसः जगतीछन्दसः ( सवनत्रये क्रमेण योजनीयानि त्रीणि पदानि ) अग्निष्टुत इन्द्रपीतस्य मधुमत उपहूतस्योपहूतो भक्षयामि' इति । तथा पवमानः, 'श्येनोऽसि गायत्रच्छन्दाः, सुपर्णोऽसि त्रिष्टुप्छन्दाः, सघाऽसि जगतीछन्दाः, अनु माऽऽरभ्य स्वस्ति मा संपारय' इति च । तथा परिधयः, गायत्रो मध्यमः परिधिः, त्रैष्टुभो दक्षिणः, जागत उत्तरः इति । तथा कपालानि, अष्टाकपालः प्रातःसवने, एकादशकपालो माध्यन्दिनीयः, द्वादशकपालस्तार्तीयसवनिकः इति । तत्र संदेहः किं छन्दोव्यतिक्रमे व्यतिक्रमो भक्षमन्त्राणां भक्षणस्य च, पवमानमन्त्राणां पवमानस्य च, तथा परिधीनां कपालानां च, अथवा मन्त्राणां छन्दोव्यतिक्रम इति । किं प्राप्तम् ? मन्त्राणां मन्त्रार्थानां च । कुतः ? अविशेषवचनात् । अविशेषेण भवति वचनम् । 'छन्दांसि वा अन्योन्यस्य

लोकमभिध्यायन्ति, गायत्री त्रिष्टुभः, त्रिष्टुब् जगत्याः, जगती गायत्र्याः' इति । न विशेषः श्रूयते मन्त्राणां व्यतिक्रम इति । तस्मान्मन्त्राणामर्थानां चेति । अतो मध्यमः परिधिर्दक्षिणस्थाने स्थापयितव्यः, दक्षिणः उत्तरस्य, उत्तरो मध्यमस्येति । अष्टाकपालो माध्यन्दिनीयः कार्यः, एकादशकपालस्तार्तीयसवनिकः, द्वादशकपालः प्रातःसवनीय इति । तथा, प्रातःसवनीयो भक्षो माध्यन्दिनस्य भक्षणस्य स्थाने भक्षयितव्यः, माध्यन्दिनस्तार्तीयसवनिकस्य, तार्तीयसवनः प्रातःसवनीयस्येति । तथा, बहिष्पवमानो माध्यन्दिनस्य पवमानस्य लोके, [ स्थाने ] माध्यन्दिन आर्भवस्य, आर्भवो बहिष्पवमानस्येति ।

एवं प्राप्ते, ब्रूमः । नाविशेषेण छन्दसा व्यतिक्रमः स्यात् । मन्त्रगतो ह्येष व्यतिक्रमः । मन्त्रगतान्येव व्यतिक्रमेयुः । किं कारणम् ? शक्नुवन्ति मन्त्रगतानि विपर्येतुम् । भक्षादयः पुनर्विपर्यस्ता अपि त एवेति । माध्यन्दिनस्य भक्षस्य कालेऽपि प्रातःसवनीयो भक्षो भक्ष्यमाणो नैव त्रैष्टुभः कृतः स्यात् । एवं सर्वत्र । कथम् ? स्वकालेऽपि ह्यसौ न गायत्रः । गायत्री हि त्रिष्टुभः स्थानमभ्येति, नाऽगायत्री । न भक्षादयो गायत्र्यादयः । तस्मादशक्यो भक्षादीनां व्यतिक्रमः । मन्त्रगतानि तु छन्दांसि शक्नुवन्ति अन्योन्यस्य लोकं व्यतिक्रमितुम् । तस्मात् मन्त्रगतानां छन्दसां व्यतिक्रमः इति ।

सोम— पूर्वत्र प्रातिलोम्यवचनात् उत्तरपक्षमपि छन्दःप्रभृतीनां व्यतिक्रमः, तथैवाऽपि भक्षपवमानादीनां व्यतिक्रमात् स्वस्थानत्याग इत्युचितैः सङ्गतिः । सूत्रार्थस्तु— भक्षादीनां मध्ये यथाशक्ति छन्दःशब्दश्रुत्युत्सर्गानुसारेण छन्दसामेव व्यतिक्रमात् तेषां वचनं उत्सृष्टं स्यादिति ।

वि— 'व्यूढे भक्षादिमन्त्राणामर्थानां च व्यतिक्रमः । मन्त्राणामेव वा, ऽऽद्यः स्यादविशेषेण कीर्तनात् ॥, छन्दसां व्यत्ययः प्रोक्तो नार्थानां तेन मन्त्रगाः । गायत्र्याद्या विपर्यस्ता अर्थोक्तिः प्रशंसये ॥'

भाट्ट— व्यूढाख्ये द्वादशाहे छन्दोव्यतिक्रमः समाम्नातः 'छन्दांसि वा अन्योन्यस्य लोकमभ्यध्यायन् गायत्री त्रिष्टुभः, त्रिष्टुब् जगत्याः, जगती गायत्र्याः' इति । लोकं स्थानम् । त्रिष्टुप्स्थाने गायत्री कर्तव्या इत्यर्थः । सोऽयं छन्दोव्यतिक्रमः किं गायत्र्यादिरूपेण अर्थवादेषु मन्त्रेषु वा स्तुतानामर्थानामपि भवेत्, उत मन्त्राणामेवेति चिन्तायाम्, अर्थानामपि केषाञ्चित् गौण्या वृत्त्या अर्थवादेषु गायत्र्यादित्वेन सङ्कीर्तनात् तेषामपि व्यतिक्रमं मन्यते । तत्र 'गायत्रो मध्यमः परिधिस्त्रैष्टुभो दक्षिणो जागत उत्तरः' इत्यर्थवादात् तेषामपि गायत्र्यादित्वम् । अतश्च 'त्रिवृत्पञ्चदशगुणको मध्यमः परिधिः दक्षिणस्य स्थाने, दक्षिणश्चोत्तरस्य उत्तरो मध्यमस्य' इति व्यतिक्रमः । तथा सवनीयपशुरोडाशाङ्गभूतः प्रातःसवनिकोऽष्टाकपालः अष्टाक्षरत्वाद् 'अष्टाकपालो भवति गायत्र्यैवैनं ब्रह्मवर्चसेन पुनाति' इत्यर्थवादे गायत्रीत्वेन संस्तवात् 'गायत्रो माध्यन्दिनस्यैकादशकपालस्य त्रैष्टुभत्वेन संस्तुतस्य स्थाने कर्तव्यः, स च तार्तीयसवनिकस्य द्वादशकपालस्य जागतत्वेन संस्तुतस्य स्थाने, स च प्रातःसवनिकस्य स्थाने' इति व्यतिक्रमः । एवं पवमानानामपि सवनत्रयस्थानां व्यतिक्रमः । तेषामपि 'श्येनोऽसि गायत्रछन्दाः, सुपर्णोऽसि त्रिष्टुप्छन्दाः, सघाऽसि जगतीछन्दाः' इति मन्त्रेषु गायत्र्यादित्वेन संकीर्तनात् । अत्र च स्तुतिस्वरूपस्य व्यतिक्रमः स्पष्ट एव । एवं च तत्तत्पवमानाङ्गभूतः सर्वोऽपि मन्त्रो व्यतिक्रमयितव्यः । एवं भक्ष्याणां सवनत्रयगतस्य व्यतिक्रमः । तेषामपि 'गायत्रछन्दसस्त्रिष्टुप्छन्दसो जगतीछन्दसः' इति मन्त्रे गायत्र्यादित्वेन संस्तवात् । यद्यपि च भक्षव्यतिक्रमे न भक्षस्वरूपे कश्चिद् व्यतिक्रमः, तथापि तत्तद्भक्षमन्त्राणामेव पूर्वोत्तरपदापेक्षयो व्यतिक्रमात् व्यतिक्रम इति ध्येयम् । सिद्धान्ते तु न पूर्वोत्तरपदानां व्यतिक्रमः, अपितु गायत्र्यादिपदानामेवेति विशेषः । एवं मन्त्राणामपि । इति प्राप्ते,

अर्थानां स्वतो गायत्र्यादित्वे प्रमाणाभावात् गौणार्थग्रहणस्य च सत्यां गतौ अन्याय्यत्वात् गायत्रीछन्दः एव त्रिष्टुप्स्थाने कुर्यादिति वाक्यार्थावगतेः यत्र मन्त्रे स्वातन्त्र्येण वा अन्यविशेषणत्वेन वा त्रिष्टुप् प्रकाशिता, तत्र गायत्रीप्रकाशनं कार्यम् । अतश्च तत्र त्रिष्टुप्पदलोपो गायत्रीप्रकाशनार्थं तत्पदप्रक्षेपश्चार्थिकः । तेन 'श्येनोऽसि

त्रिष्टुप्छन्दा ' इत्येवमादिमन्त्रप्रयोगः प्रातःसवनादौ कार्य इति न तदर्थेषु स्थानबाधः ।

मण्डन— ' छन्दोविप्लुत्या न निवर्ततेऽर्थे । ' २७.

शंकर— ' छन्दोऽन्यत्वात्तथा मतौ । ' मन्त्रे ।

* द्वादशाहे षाडहिके द्वितीयेऽहनि, त्रिवृत्स्तोमके पञ्चदशे बहिष्पवमाने, चोदकप्राप्त–अनुरूप–पर्यासयोर्मध्ये वृषण्वन्त तृचाः आम्नायन्ते 'स्तोत्रियानुरूपौ तृचौ भवतः, वृषण्वन्तः तृचा भवन्ति, तृच उत्तमः पर्यासः' इति वचनात् । वि ५।३।४. ● द्वादशाहे सत्यास्तोत्राण्यनाम्नातानि इतरतो यथाम्नातानि तत आकाङ्क्षन्ति । वैकृतेषु अह तु तानि नाम्नातानि । ज्योतिष्टोमे च ताम्नातानि । तस्माज्ज्योतिष्टोमादुपचय । भा ८।३।७।११, ■ द्वादशाहे ' दीक्षिते पृष्ठ्ये षडहे मध्वाशयेत् घृत वा ' इति श्रूयते । तत्र मधु ऋत्विग्भिर्भक्षयितव्य क्रत्वर्थत्वात् । १०।६।१२।३१–३३, ■ द्वादशाहे सत्रे धर्ममात्र ऋतु पाण्याचरण आश्रेयाय हिरण्यदान च कर्तव्यमेव । १०।२। २६।६२.

※ द्वादशाहे सत्रात्मके सत्रिभि मधुभक्षणं कर्तव्यं क्रत्वर्थत्वात् ॥

मधु न दीक्षिता ब्रह्मचारित्वात् । १०।६।१२। ३२ ॥

भाष्यम् — द्वादशाहे श्रूयते ' दीक्षिते पृष्ठ्ये षडहे मध्वाशयेद् घृत वा ' इति । तत्र संशय किं सत्रिभिर्मधु भक्षयितव्यम्, नेति । किं प्राप्तम् ? नेति । कुतः ? दीक्षिता हि ते ब्रह्मचारिण । ब्रह्मचारिणा च मधु प्रतिषिध्यते, ' मधु मांसं च वर्जयेत् ' इति । तस्मान्न प्राश्नीयुरिति । ननु नैतद्वचन सामान्य प्रतिषेध बाधेत । न बाधते इति ब्रूमः । कथम् ? यदि सामान्यप्रतिषेधात् द्वादशाहेऽनर्थक भवेत्, ततो बाधेत । न त्वनर्थकम् । कथम् ? उभयविध द्वादशाहमङ्गीकृत्य उभयमाम्नातम्, घृत मधु वा । तत्र सत्रिणो घृतप्राशनं भविष्यति, अहीने मधुनः प्राशनम् । एवमुभय द्वादशाहेऽवकल्प्स्यते भविष्यति विषयभेदेन । न च विरुद्धस्य आचारो भविष्यतीति । तस्मान्न प्राश्नीयुरिति ।

प्राश्येत वा, यज्ञार्थत्वात् । ३३ ॥

भाष्यम्— न चैतदस्ति, सत्रिभिर्मधु न भक्षयितव्यमिति । किं तर्हि ? भक्षयितव्यम् । कथम् ? अविशेषेणोच्यते कर्तृमात्रस्य उभयप्रकारमङ्गीकृत्य द्वादशाहम्, ' दीक्षिते पृष्ठ्ये षडहे मध्वाशयेद् घृत वा ' इति । उभयं विकल्पेन, न कर्तव्यमन्यथा । तस्मात् सत्रिणोऽपि मधु भक्षयेयुः । यदुक्तम्, विषयभेदेनार्थवत्त्वात् बाधो न्याय्यः, द्वादशाहाङ्गभावस्यैव सति न विरोधः इति । अत्रोच्यते । षडहे अविकृते सत्रहीनयोः अहीनसत्रयोः वा अविशेषेण मध्वशने घृताशने चोच्यमाने येन व्यवस्था ब्रूम । विरोधेनेति चेत् । न । विषयभेदेन विधिप्रतिषेधयोः समाम्नानात् । पुरुषार्थेन प्रतिषेध, कर्माङ्गत्वेन विधानम् । यदि च प्रतिषेधप्रतीयमानमिहाङ्गीक्रियते, वचनमनर्थकमेव स्यात् । पक्षे अर्थवदिति चेत् । न । नानाविषयत्वात् । तुल्यार्थयोर्हि तुल्यविषययोर्विकल्पो भवति, न नानाऽर्थयोः । नानाऽर्थता चेहाधिगम्यते । कुतः ? विधेः कर्मगतादृष्टप्रयोजनत्वात् । प्रतिषेधस्यापि नियमानुष्ठानात् पुरुषस्यादृष्टसिद्धिरिति । तस्मात् प्राश्नीयुरिति ।

सोम— ब्रह्मचर्यप्रसङ्गात् संगतिः । ब्रह्मणो वेदस्य चर्यं चरणं अध्ययनं इति व्युत्पत्त्या वेदाध्ययनम्, ' आहूतो ब्रह्मचारी ' इत्यादिदर्शनात् मैथुनवर्जनं वा ब्रह्मचर्यशब्दार्थः । मधुमांसवर्जनादिकस्य ब्रह्मचर्यशब्दार्थत्वे ' ब्रह्मचारी मधु नाश्नीयात् ' इत्यादिब्रह्मचारित्वेन हेतुवचनविधानानुपपत्ते । तत्र च वेदाध्ययनं दीक्षितस्य न विवक्षितम्, कृतवेदाध्ययनस्यैव कर्मण्यधिकारात्, किन्तु मैथुनवर्जनमेव । तथा च मधुनिषेधस्य ब्रह्मचर्यशब्दार्थत्वाभावेन मैथुनवर्जनरूपब्रह्मचर्यमात्रस्य चोदकप्राप्तावपि न मध्वशनप्रतिषेधस्य प्राप्तिः । न च चोदकात् ब्रह्मचर्यमात्रप्राप्तावपि ब्रह्मचारिण आहत्य मध्वशननिषेधादेः तत्प्राप्तिरस्ति इति वाच्यम् । आहत्य तस्य पुरुषार्थत्वेन तद्विधेयार्थकत्वात् तदुद्देन क्रत्वर्थमध्वशनप्राप्तकवचनस्य संकोचायोगात् । ' अथ वा ब्रह्मचर्यशब्देन मधुमांसवर्जनादिकमप्युपादीयताम्, तथापि चोदकस्य आनुमानिकत्वेन संकोच' प्रत्यक्ष-

वचनात् युक्तः, न तु चोदनात् प्रत्यक्षवचनस्य संकोचः' इत्यभ्युपगमः।

वि— 'मद्यमद्यं भक्ष्यते वा सत्रिभिर्, ब्रह्मचारिणः। निषिद्धत्वादादिमो,ऽन्त्यः पुंभक्ष्यविभेदतः॥'

भाट्ट— द्वादशाहे गृहपतिव्रतानि 'न बहु वदेत्, दीक्षिते पदके मधाशयेत् घृतं वा' इत्यादीनि। अत्र आशयेत् इत्यस्य णिजन्तत्वात् भक्ष्यान् अध्वर्य्वादीनिति संबध्यते। अतश्च अध्वर्य्वादिकर्तृकं मधुप्राशनमपि गृहपतित्वेनादृष्टार्थे आर्थिकेन विधिना विधीयते। तच्च तेषां सत्रात्मकद्वादशाहे भवेत् न वा, इति चिन्तायाम्, सत्रे अध्वर्य्वादीनां यजमानत्वेन दीक्षितत्वात्, दीक्षितानां च ब्रह्मचर्यविधानात्, ब्रह्मचारिणश्च मधुभक्षणप्रतिषेधात्, पदहस्य च शूद्रभक्षणेनापि चाङ्गोपपत्तेः, मधुप्राशनविधेश्चाहीनविषयत्वेनाप्युपपत्तेः, न सत्रे मधुदानम्। इति प्राप्ते, ब्रह्मचर्याश्रमपुरस्कारेणोक्तस्य मधुवर्जनस्य गृहस्थाधिकारके सत्रे अप्रवृत्तेः, दीक्षितपुरस्कारेणोक्तस्य ब्रह्मचर्यस्य च मैथुनवर्जनरूपत्वेन मधुवर्जनरूपत्वाभावात्, तद्रूपत्वेऽपि वा रागप्राप्तमधुभक्षणविषयत्वेन तस्य वैधमधुभक्षणविषयत्वाभावात्, तद्विषयत्वेऽपि वा तस्यैहातिदेशप्राप्तत्वेन औपदेशिकमधुभक्षणे अहीनमात्रविषयतायाः कल्पयितुमशक्यत्वात् अहीनवत् सत्रेऽपि मधुभक्षणयोग्यत्वम्। ...

मण्डन— 'दीक्षितैः प्राश्यते मधु।'

शंकर— 'सत्रे मधुप्राशनं भवेत्।'

* द्वादशाहे सत्ररूपे दीक्षावाक्ये आनुपूर्व्येण श्रीयमाणानां दीक्षाणां वितृतिविशेषः प्रतीयते स एव विधीयते। विहृतिविशेषैकार्थविधानादेकं वाक्यम्। अनभिहितोऽपि प्रातिस्विकेन विधिना विधीयमानत्वात् श्रुतिक्रम इत्युच्यते। यदा तु पौर्वापर्यं क्रमः तदा क्त्वा शब्देन तदभिधानात् अनभिधानं नास्ति प्रतिदीक्षं च तद्भेदात् नाना वाक्यानि इति विवेक. । के. ५।१।११.

* द्वादशाहे समूढे त्र्यनीका 'ऐन्द्रवायवाग्रो प्रायणीयोदयनीयौ दशमं चाहः। अथेतरेषां नवानामह्नां ऐन्द्रवायवाग्रः प्रथमोऽहः, अथ शुक्राग्रम्, अथाग्रयणाग्रम्। अथैन्द्रवायवाग्रम्, अथ शुक्राग्रम्, अथाग्रयणाग्रम्। अथैन्द्रवायवाग्रम्, अथ शुक्राग्रम्, अथाग्रयणाग्रम्' इति। त्रयाणामनीकानां समाहारः त्र्यनीका। द्वितीयादिनवमान्तानि अहो एकादशं चेति नवसु अहःसु मध्ये द्वितीये पञ्चमे अष्टमे चाहनि ऐन्द्रवायवाग्रत्वम्। तृतीये षष्ठे नवमे चाहनि शुक्राग्रत्वम्। चतुर्थे सप्तमे एकादशे चाहनि आग्रयणाग्रत्वम्। प्रायणीयं उदयनीयं दशमं चाहः ऐन्द्रवायवाग्रमेव इति। वि. १०।५।२१.

* द्वादशाहे उपसत्सदादिकमङ्ग भेदेनैवानुष्ठेयं न तु सकृत्, सुत्याकालानां भेदात्। ११।४।६.

द्वादशाहे सुत्याकालीनानामङ्गानामावृत्तिः॥

भेदस्तु तद्भेदात्, कर्मभेदः प्रयोगे स्यात्, तेषां प्रधानशब्दत्वात्। ११।४।६।२६॥

भाष्यम्— अथ यानि प्रधानैः अपृथक्कालानि अङ्गानि तेषु चिन्त्यते किं तान्यपि तन्त्रं अथवा भेदेनेति। किं प्राप्तम्? तन्त्रमिति। किं कारणम्? एवं सहत्वस्य वचनं प्रयोगवचनोऽनुग्रहीष्यते 'द्वादशाहेन प्रजाकामं याजयेत्' इति। तदुक्तं 'विधिप्रकरणाविभागे प्रयोगं बादरायणः' (११।१।१०।६५) इति। एवं प्राप्ते, ब्रूमः। भेदस्तु स्यात्। कुतः? तद्भेदात्। तदित्यनेन पूर्वसूत्रनिर्दिष्टः कालः प्रतिनिर्दिश्यते। कालभेदात्। काले भिद्यमाने तन्त्रभेदो भवति। यथा दर्शे पूर्णमासेऽपि। इहापि कालभेदः। अथ इवः परश्व इति। तत इहापि कर्मभेदः स्यात्। करणभेदः इत्यर्थः। कथ पुनरङ्गानां कालभेदो विज्ञायते? तेषां प्रधानशब्दत्वात्। प्रधानशब्दगृहीतान्यङ्गानि यत्र प्रधानं तत्र विज्ञायन्ते। यदा प्रधानं तदा अपृथक्कालान्यङ्गानि। पृथक्कालान्य तत्कालानि। तस्माद्भेदः।

तथा चान्यार्थदर्शनम्। २७॥

भाष्यम्— 'पत्नीसंयाजान्तान्यहानि संतिष्ठन्ते' इति भेदेनाह्नां पत्नीसंयाजान्ततां दर्शयति।

इव सुत्यावचनं तद्वत्। २८॥

भाष्यम्— 'श्वःसुत्यामिति श्वःसुत्याम् इत्यग्नीदाग्नीध्रागारं प्रविश्य सुब्रह्मण्य सुब्रह्मण्यामाह्वयेति प्रेष्यति' इति, श्वःसुत्यामिति श्वःसुत्याम् इति वीप्सावचनात् सुब्रह्मण्याभेदं दर्शयति।

पश्वतिरेकश्च ॥ २९ ॥

**भाष्यम्**—पश्वतिरेकश्च दृश्यते 'य एकः पशुरतिरिच्यते, स ऐन्द्राग्नः कार्यः' इति । न तावदतिरिच्यते, यद्येकैको न भवति एकादश एते पशवः, द्वादशाहानि । तत्पश्वालम्भभेदः उपपद्यते । तदभावे सकृदेव ऐकादशिनानामेव । तस्मादपि भेदः ।

**सोम**—दीक्षादिवत् सुत्याकालीनामङ्गानामपि तन्त्रत्वं इत्युत्थितेः संगतिः । सूत्रार्थस्तु—यतः कालभेदात् प्रधानकर्मणामनुष्ठानभेदः, अतः प्रयोगे अङ्गानामपि भेदः स्यात्, तेषां प्रधानविधिविधेयत्वात् इति ।

**वि**—'तावतीनामिह तन्त्र तद्वत् स्याद् भिद्यतेऽथवा ।, प्रयोगैक्यात् सकृ, न्नेन मुख्यकाले विधानतः ॥'

**भाट्ट**— तदेव सुत्याबहिर्भूताना दीक्षोपसदादीनामग्नीषोमीयाङ्गाना तन्त्रत्वात्, पत्नीसंयाजोत्तरकालीनाना च तन्त्रत्वात्, एकोपक्रमावसानत्वेन द्वादशानामपि सुत्यानामेकप्रयोगत्वं तावदविवादम् । अहीनत्वपक्षे न तस्मिन् दक्षिणैकत्वस्य स्वारसिकत्वादपि तथा । अतश्च सुत्याकालीनानामपि आरादुपकारकाणामङ्गानां सवनीय पशुसवनीयहविरादीनामपि तन्त्रत्वमेव । न च गृह्यमाणविशेषत्वात् तेषामावृत्तिः, सन्निपत्योपकारका अग्नीषोमीयादिसन्निपत्योपकारस्येव द्वादशाहपरमापूर्वं यावत् अवस्थितेरावश्यकत्वेन पुनःपुनः करणे प्रयोजनाभावात् । यदि तु प्रकृतौ परमापूर्वस्य अतिरिक्तस्याभावात्, सर्वाभ्यासापूर्वजन्यसुत्यापूर्वे प्रत्येव तदैपायुपयोगात्, द्वादशाहे तत्सुत्यापूर्वाणां भेदात् सुत्याकालीनाङ्गानामावृत्तिरित्युच्येत, ततस्तत्कालीनाङ्गानामपि प्रकृतौ तदपूर्वप्रयुक्तत्वात् तद्भेदेन तद्भेदापत्तिः । अथ एतद्भेदेऽपि प्रधानाद्याविक्रमविधिनापूर्वेणैव अग्नीषोमीयादिसन्निपत्योपकारस्याश्रयात् सकृदेव करणमित्युच्येत, ततः सवनीयादिसन्निपत्योपकारस्यापि तेनैव न्यायात् प्रतिसुत्यं करणे प्रमाणाभावः । नहि अग्नीषोमीयादौ परमापूर्वप्रयुक्तत्वं सवनीयादौ च सुत्यापूर्वप्रयुक्तत्वं इत्यत्र प्रमाणमस्ति, प्रकृतौ एतापूर्वे प्रत्येव सर्वेषामुपयोगात् । अभ्यासापूर्वान्यवहितापूर्वं येनैव प्रकृतौ प्रयोजकत्वात् । इति प्राप्ते, 'प्रायणीय प्रथमम्अहः' इत्याद्युपदिष्टादेषु अहःपदेन अहःसाध्यसुत्याऽभिधानात् अहःकालविशिष्टसुत्याख्यकर्मविधिप्रतीतेः, कालविधौ च सत्यपि महाप्रयोगैक्ये सुत्यामात्रकालीनाङ्गविशिष्टसुत्याप्रयोगविधेरावश्यकत्वात् तावत्प्रयोगविधिभेदादेव तत्कालीनाङ्गानामावृत्तिः । अत एव सुत्याकालबहिर्भूताङ्गाना अन्तिमसुत्याऽपूर्वेणैव नाशः । सुत्याकालीनाङ्गाना तु तत्तत्सुत्याऽपूर्वेणेत्यपि प्रयोगभेदादवसीयते । अत एव 'पत्नीसंयाजान्तान्यहानि संतिष्ठन्ते, संस्थितेसंस्थितेऽहनि अग्नीदाग्नीध्रागार प्रविश्य सुब्रह्मण्य सुब्रह्मण्यामाह्वयेति प्रेष्यति' इत्यादिलिङ्गदर्शनान्यपि आरादुपकारकाङ्गावृत्तौ उपपद्यन्ते । संनिपत्योपकारकाङ्गावृत्तिस्तु अविवादैव ।

**मण्डन**—'सुत्याङ्गं पृथग्भवेत् ।'

**शंकर**—'सुत्याकालाङ्गमिद् भिद ।' इह द्वादशाहे । भिद् भेदः ।

* द्वादशाहे सुत्याकालीनसुब्रह्मण्याह्वानस्यावृत्तिः । भा ११।३।११।२२–३२. * द्वादशाहे सोमोपावहरणं द्वादशेऽहनि मानवासस्येव, न तस्मिन् अहनि वासः पृथक् । इतरेषु अहःसु तु तत् प्रत्यह भिन्नम् । के. १०।६।२१।७८.

* द्वादशाहान्तर्गतदशमाहाङ्गं मानसो ग्रहः । भा. १०।६।१३।२८–४४.

* द्वादशाहादौ अहर्गणे उपसत्कालीनं सुब्रह्मण्याह्वानं प्रधानभेदेऽपि न भिद्यते, किन्तु तन्त्रम् । वि. ११।३।१०, * द्वादशाहादौ अहर्गणे प्रत्यहं क्रियमाणसोमोपावहरणवासः उपावहरणकाले एव कर्तव्यं न मानकाले । १०।६।२२, * द्वादशाहादौ अहर्गणे यद्विवमाने वृद्धात्रायपरिच्छेदे सर्वोऽहर्गणो नावर्तनीयः, किन्तु तदेवैकमहरावर्तनीय यस्मिन्नपच्छेदः । ६।५।२१. * द्वादशाहादौ अहर्गणे सोमोपावहरणवस्त्रस्य प्रतिसुते दानविधानम् । भाट्ट. १०।६।१९. * द्वादशाहादौ अहर्गणे हविर्धानशकटे अवस्थितात् सोमात् प्रत्यहं क्रियमाण सोमभागः पृथक्त्वोपावहरणीयः । तदर्थ पृथक् पृथक् वासः संपादनीयम् । तत्र वासःसंपादनं उपावहरणकाले एव न मानकाले, उत्तमाहनि तु मानवाससैवोपावहरणम् । वि. १०।६।२१–२२.

* द्वादशाहगतस्य दशमस्याह्नः मानसान्वता (मानसग्रहान्वता) वचनेनोक्ता । भा. ९।२।८।२९,
* द्वादशाहगते पृष्ठ्ये षडहे चतुर्थेऽहनि नैधोकं नाम साम उत्तराग्रन्थपठितयोरुत्तरयोर्बृहत्योरेव गेयम् । ९।२।५।२१–२४ वर्णके २. * द्वादशाहगते पृष्ठ्ये षडहे प्रकृतिरूपे, षट्सु अहःसु क्रमेण रथन्तर–बृहत्–वैरूप–वैराज–शाक्वर–रैवतानि सामानि विहितानि । वि. १०।६।३, * द्वादशाहगते पृष्ठ्ये षडहे मध्यमानं मध्यन्दिनेऽहनि कर्तव्यम्, गवामयने उत्तरे पक्षसि तु त्रिवृत्सु निधौ कर्तव्यम् । १०।६।१.

* द्वादशाहगतप्रायणीयनाम्ना धर्माणां गवामयन-गतप्रायणीये नातिदेशः । भा. ७।३।१।१.

* द्वादशाहधर्माणां षडोक्थ्य–द्व्युक्थ्य–अग्निष्टोम–गतागतिप्रभृतिषु संस्थान्तरेषु अतिदेशः, परन्तु तत्रतत्र बलवत्ता । भा. ८।१।४।८–९.

* द्वादशाहधर्मातिदेशः अहर्गणेषु । भा. ८।१।१०।१७.

* द्वादशाहन्यायः । सारस्वते हि (मध्ये मित्रा-वरुणयोरयने नाम) द्वादशाहन्यायेनैव उभयोः पक्षयोः (दर्शने) ज्योतिष्टोमपूर्वकत्वात् । वा. २।७।२।२८.

* द्वादशाहप्रकरणे 'द्वादशोपसत्कः' इति विहित-त्वात् तत्प्रकृतित्वेन सर्वाहीनेषु तत्प्राप्तिः । वा. ३।३।८।१६ पृ. ८१४.

* द्वादशाहप्रकृतिकेष्वपि सत्राहीनेषु सुपण्यताप्येव सुत्यानां चोदकवशात् प्राक् पयोधर्मनिवेशः, अन्येषां तु पयोदोहस्यैव प्रतिप्रस्थानं । रत्न. ५।१।५।१.

* द्वादशाहविकृतिषु रथन्तराद्यनिमित्ताभावेऽपि ऐन्द्रवायवाग्रता । वि. १०।५।२३.

* द्वादशाहसंबन्धिपवमानग्रहप्रोक्षणोद्देशेन विहितं बर्हि-रादि नैमित्तिकं निमित्ताभावे अनुलोमादिविकारके प्रयोगे न प्राप्नम् । निमित्तसमवायेऽपि अनुष्ठाने निमित्तसंबन्धस्य नैयत्याविशेः । भाट्ट. ४।३।२.

■ द्वादशाहिकमहर्गणे तत्प्रकृतित्वादैकाहिक-मधिकागमात् तदाख्यं स्यादेकाहवत् ।७।४।३।१३॥

गवामयने ज्योतिः गौः आयुः इति त्रीण्यहानि । एवं ज्योतिर्गौरायुः इति स्वतन्त्रा एकाहविशेषाः । तत्र गवामयनिकेषु ज्योतिरादिषु द्वादशाहिकधर्माः प्राप्यन्ते ऐकाहिकाश्च । तत्र ऐकाहिकैरविरुद्धा द्वादशाहिका यथा-प्राप्त क्रियन्ते । विरुद्धेषु तु संशयः, किं द्वादशाहिकः स्यात् ऐकाहिको वेति । तत्र सूत्रेण पूर्वपक्षमाह । अह-र्गणे गवामयनगते ज्योतिरादौ द्वादशाहिक धर्मजातं स्यात् । तत्प्रकृतित्वात् गवामयनस्य द्वादशाहिकप्रकृति-कत्वात् । ननु तर्हि कथं तत्र ऐकाहिकसमाख्यायाः प्रवृत्तिः ? उच्यते । अधिकागमात् ऐकाहिक तदाख्यं स्यात् । ऐकाहिक एकाहसदृशि ज्योतिर्गौरायुः इति समा-ख्यानं ज्योतिष्टोमात् अधिकानां धर्माणां आगमात् स्यात् । एकाहवत् । यथा एकाहेष्वपि ज्योतिरादिषु ज्योतिर्गौरायुः इति आख्या ज्योतिष्टोमात् अधिकाना धर्माणां आगमादेव भवति, तद्वत् इहापि । तस्मात् अहर्गणे ज्योतिरादौ द्वादशाहिकं धर्मजातं स्यात् इति पूर्व. पक्षः ।

अत्र भाष्यम्– अधिकागमात् तदाख्यं स्यादेकाहवत् तत्सख्यापरा ख्याता । ये द्वादशाहे अधिकाः ऐकाहिकेभ्यः केचिद्धर्माः 'अग्निष्टोमोऽन्त्यहं भवति' 'गौरिवीत (साम) अन्त्यहं भवति' इति । तेषामधिकानां आग-मात् तदाख्यं स्यात् एतत् द्वादशाहिकमहः, ज्योतिराख्यं आयुराख्यं वा । एकाहवत् । यथा षडहगतानां पृष्ठानां भावात् एकाहो विश्वजित् 'षडहः' इत्युच्यते 'सर्वैकाहं षडह इत्याचक्षते' इति तद्वत्–इति ।

लिङ्गाच्च । १४ ॥

पूर्वपक्षे हेत्वन्तरे लिङ्गमाह । 'द्वादशोपसदो भवन्ति' इति द्वादशोपसत्त्वाख्यात् लिङ्गात् द्वादशाहिक एव विध्यन्त इति गम्यते । पक्षेनावधि वा द्वादशाहिको धर्मः प्रत्यह-मेकैक इति विभज्य विधानमपि पिहादर्शनरूपं लिङ्गम् ।

न वा सत्यदृष्टत्वादधिकानामशब्दत्वम् । १५ ॥

गवामयनगते ज्योतिरादिष्वहरूपे अहर्गणे द्वादशाहिक-धर्माः कर्तव्या इति पूर्वपक्षं सूत्राभ्यां प्राप्तं न वा इति शब्दाभ्यां निषिध्य सिद्धान्तमाह । न वा द्वादशाहिकं धर्मजातं कार्यम्, किन्तु ऐकाहिकम् । चोदकेन द्वादशाहिकं

* द्वादशाहिकदशाहधर्माणां द्विरात्रादहर्गणेषु अनुष्ठानम्। द्विरात्रन्यायः। भा. १०।५।४।१२–१३.

* द्वादशाहिकधर्माणां अहर्गणेषु अतिदेशः। भा. ८।१।१०।१७, * द्वादशाहिकधर्माणां गवामयनादिषु सत्रायणेषु अतिदेशः। ८।३।४।८–९.

* द्वादशाहिकसत्राहधर्माणां जनकसप्तरात्रे अतिदेशः, तत्र अग्निष्टुदहे त्रिवृता विधीयते। जनकसप्तरात्राधिकरणम्। भा. ८।३।२।३–५.

* द्विरवदानं दध्नो गृहीत्वा पयसो मात्रम्। उपस्तरणाभिघारणयोस्तु तन्त्रम्। कल्पसूत्रेषु तु पयसो द्विरवदान गृहीत्वा पश्चात् दध्नः इत्युक्तम्, तैत्तिरीयश्रुतौ तादृशक्रमस्य नानिकत्वात्। होमस्तु तन्त्रेणैव। भाट्ट. ५।२।३.

## द्विरुक्तत्यापत्तिलक्षणो न्याय. (३।६।१।२)।

'प्रकृतौ वा' (३।६।१।२) इति अनारभ्यवादाधिकरणसिद्धान्तसूत्रेण एकादिरुक्तावेः प्रकृतिविकृत्यर्थत्वे (बाधकतया) द्विरुक्तत्वापत्तिलक्षणो न्यायो न उक्तः, स एव 'तत्प्रकृत्यर्थम्' इति आधानाधिकरणपूर्वपक्षसूत्रेण (३।६।१।१४) आधाने अतिदेशात् स्पष्टीकरणेन प्रतिपादितः। सु. ३।७ पृ. ४१.

## द्विरुक्तत्वन्यायः। 'प्रकृतौ वाऽद्विरुक्तत्वात्' इति सूत्रोक्तो हेतुरेवायं न्यायः। सूत्रार्थस्तु अनारभ्याधीतं पर्णमयीत्वादि प्रकृतौ एव निविशते न विकृतौ। विकृतौ तु अतिदेशेनैव प्राप्नोति। एवं सति अद्विरुक्तत्वं भवति। विकृतावपि विधाने तु द्विरुक्तत्व दोषः, अतिदेशेन सिद्धे पुनर्विधानात् इति। के. ३।६।१।२.

* अनारभ्याधीतः प्रवर्ग्यः श्रुतः। तस्य च 'पुरस्तादुपसदां प्रवर्ग्यं प्रवृणक्ति' इति ज्योतिष्टोमाङ्गत्वेन विनियोगः अव्यभिचरितक्रतुसंबन्धपदकृतद्विरुक्तत्वन्यायेन वद्वुपस्थितेः। भाट्ट. ३।३।१२. * विधिः अतिदिष्टेष्वपि अङ्गेषु ग्रहादिषु उपदेशात् एव प्रवर्तते न द्विरुक्तत्वन्यायात्, अतिदेशतः कर्तव्यत्वेन उद्दिश्य आवमनविधानात् कर्तव्यतायाश्च अतिदिष्टेष्वपि औपदेशिकत्वात्। बाल. पृ. ३६. * पशुवत्तु सूत्रोद्देशेन विहितस्य कालस्य द्विरुक्तत्वन्यायसहकृताव्यभिचरितक्रतुसंबन्धादेव देशार्थत्वसंभवे। भाट्ट. ११।३।३.

## द्विर्बद्धं सुबद्धं भवतीति न्यायः। स्पष्टोऽभिप्रायश्चायम्। किञ्च– चन्द्रेन्दुशेखरे औपत्यप्रकरणे श्रोत्रविषये हि उक्तार्थानामप्रयोग इति पूर्वोक्तन्यायो न संभवतीत्यभिप्रेत्य हृदि व्यतिष्ठन्ते इत्यादौ द्विर्बद्धं सुबद्धं भवतीति न्यायेन समुच्चयस्य इष्टत्वादित्युक्तमिति। साहस्री. ५८१.

* 'द्विर्हविषोऽवद्यति' इत्यत्र अवदानस्य विशेषमात्रस्य विधानम् 'हविषो द्विः' इति। के. ५।२।४।६. * 'द्विर्हविषोऽवद्यति' इति उपस्तरणाभिघारणाभ्यां सह यत् चतुरवत्तम्, तस्मिन् हविर्विषयं अवदानद्वित्वं विधातुं शक्यते। वि. ५।२।४.

* 'द्वौ अग्नी प्रणयतः।' अत्र कर्मतः साचनिको अनरियमविकल्पः। बाल. पृ. १६०. * द्वौ आनय इत्युक्तः यथा पुमांसौ आनयति न स्त्रीपुंसौ, तथा 'ब्राह्मणौ' इत्युक्ते पुमांसौ इति गम्यते न तु स्त्रीपुंसौ। भा. ६।१।५।२२ पृ. १३६५.

## द्वौ नञौ प्रकृतमर्थं गमयतः इति न्यायः। 'करणेषूपदिष्टेषु याऽर्थात् साध्यत्वकल्पना। सा च गुणविधाने न नास्ति मत्वर्थलक्षणा॥' (वा. पृ. ३३७) करणेषु उपदिष्टेषु यातु वा अर्थात् साध्यत्वकल्पना, तया च गुणविधाने मत्वर्थलक्षणा न नास्ति, किन्तु अस्ति, इति 'द्वौ नञौ०' इति न्यायेन योज्यः। सु. पृ. ४४७.

* 'द्वाभ्यां लोमावद्यति द्वाभ्यां मांसम्' इत्यादिना द्वादशोपसत्त्वं द्वादशाहिकं धर्मं गवामयने दर्शयति। भा. ८।१।१०।१७, * द्वयोः एकार्थत्वात् समुच्चयो न संभवति। ८।३।१५।२६. * 'द्वयोः प्रणयन्ति' इत्यनेन मध्यमयोर्द्वयोः पर्वणोः प्रणयनम्। बिन्दु. ७।३।९।२३–२५. * द्वयोर्हि साकाङ्क्षयोः संबन्धो भवति। टुप्. ११।१।२।६.

* द्व्यर्थत्वं च (वाक्यस्य) विप्रतिषिद्धम्। भा. ७।१।१।६.

● अवदानं यदैव आहवनीये निक्षिप्यते, तदैव याज्याऽनुवाक्याभ्यां समस्तविषयदेवतासंकल्पोत्थापनं क्रियते । शा. ३।४।१४।४१ पृ. ९८२. ● अवदानं होमसंबद्धम् 'अवदानं जुहोति' इति । भा. ६।४।१।२. ● अवदानस्य हविःसंस्कारकस्यापि अवचोद्देशेन होमविधानात् लाघवेन अवत्तहोमस्यैव प्रयोज्यत्वे अवदानांशेऽपि पृथक्प्रयोज्यत्वाकल्पनात् न पृथक्पदार्थत्वम् । भाट्ट. ५।२।७. ● अवदाने अधिकमपि प्रक्षेपांश गते सति उत्पत्तिवाक्यशिष्ट यागसाधनत्वं समस्तेनाष्टाकपालेन प्रतिपन्नमेवेत्यविरोधः । वा. ३।४।१४।४१ पृ. ९८२.

● अवदानमात्रेण अनुसमयं पूर्वपक्षयित्वा अवदानादिना पदार्थान्तरेण अनुसमयं सिद्धान्तयिष्यति । 'मुष्टिकपालावदान' इत्यत्राधिकरणे ( ५।२।३।४ ) । सु. पृ. १३१७.

● अवदानवाक्यं ( द्विर्हविषोऽवद्यति ) नावदानविधायकं चतुरवत्तवाक्ये ( चतुरवत्तं जुहोति ) अवदानविशिष्टहोमविधानात्, किन्तु 'द्विः' इति संख्यामात्रमेव विदधाति । सोम. ५।२।३.

● अव्यक्तकालता नाम प्रकृतौ दर्शे पर्वणि अन्वाधानादिना प्रतिपत्त्यर्थं इष्टिः इति । वि. ५।१।११, ● अव्यक्तकालत्वं चोदकप्राप्त विकृतिषु 'य इष्ट्या पशुना' इत्यादिवचनेन बाध्यते । ५।४।७, ● अव्यक्तकालत्व पर्वण्यन्वाधाने इध्माबर्हिषोः संपादनं च, प्रतिपदीष्टिः, इति प्रकृतौ दृष्टम् । ५।४।७.

卐 आधानं च द्विपुरुषवत् । ६।१।५।२२ ॥

'क्षौमे वसानौ अग्निमादधीयाताम्' इति वाक्ये यत् अग्न्याधानमुक्तं तत् आधानम्, द्वयोः पुरुषयोः संभूय आधानं स्यात् । यथा दम्पत्योः संभूय कर्म तद्वत् इति चशब्दार्थः । वसानौ आदधीयाताम् इति द्विवचनेन द्वयोः पुरुषयोरुक्तत्वात् । द्वियज्ञवत् इति दृष्टान्तः । 'एतेन द्वौ राजपुरोहितौ यजेयाताम्' इति राज्ञः पुरोहितस्य चेति द्वयोः कुलायः नाम याग उक्तः, तद्वत् । इति पूर्वः पक्षः ।

गुणस्य तु विधानत्वात् पत्न्या द्वितीयशब्दः स्यात् । २३ ॥

पूर्वपक्षं सूत्रेण प्राप्तं तुशब्देन निरस्यन् सिद्धान्तमाह । नात्र वाक्ये द्वयोः पुरुषयोः संभूय एकमाधानमुक्तम् । वसानौ आदधीयाताम् इति द्वितीयशब्दः द्वित्ववाचक-द्विवचनरूपः शब्दः द्वितीयं पुरुषमभिप्रेत्य न प्रयुक्तः स्यात् किन्तु पत्न्या द्वितीयशब्दः स्यात् द्वितीयां पत्नीमभिप्रेत्य द्विवचनं प्रयुक्तम् । तत्र अग्न्याधानं अन्यतः प्राप्तम् । वस्त्रपरिधानं च लोकत एव प्राप्तम् । क्षौमत्वरूपो गुणस्तु अन्यतो न प्राप्तः । तदर्थमेतद्विधानम् । विधीयते इति विधानं विधानत्वं विधीयमानत्वं इत्यर्थः । 'अतसी स्यादुमा क्षुमा' इत्यमरः । अतसी तन्तुभिः ( अतसी-आळशी, जवस ) निर्मितं वस्त्रं क्षौमम् । वस्त्रगतस्य क्षौमत्वरूपस्य गुणस्य दंपत्योर्विधानार्थत्वात् वाक्यस्य नात्र द्वयोः पुरुषयोराधानस्य विधानं इति सिद्धान्तः । के.

卐 आधानाधिकरणम् । आधाने स्त्रीद्वितीयस्य एकस्यैव पुरुषस्याधिकारः ॥

आधानं च द्विपुरुषवत् । ६।१।५।२२ ॥

भाष्यम्— अस्त्याधानम् 'य एवं विद्वानग्निमाधत्ते' इति । तत्रेदमामनन्ति 'क्षौमे वसानौ अग्निमादधीयाताम्' इति । तत्रैषोऽर्थः सांशयिकः किं द्वौ पुरुषौ आदधीयाताम्, उत एकः पुरुष इति । कथं संशयः ? उच्यते । इह एतत् श्रूयते 'वसानौ आदधीयाताम्' इति । तत्र वचनसामर्थ्यं पुनः श्रूयते । तत् किं पुल्लिङ्गसंबन्धार्थम्, उत क्षौमसंबन्धार्थमिति । उभयोर्विद्यमानत्वात् भवति संशयः । यदि लिङ्गसंबन्धार्थम्, उभौ पुरुषौ आधास्येते । अथ क्षौमसंबन्धार्थम्, तत एकः । किं प्राप्तम् ? आधानं द्वियज्ञवत् स्यात् । यथा 'एतेन द्वौ राजपुरोहितौ आयुष्कामौ यजेयाताम्' इति द्वयोः पुरुषयोः द्वियज्ञो भवति, एवं आधानं द्वयोः पुरुषयोः स्यात्, ततः अविशेषात् । वसानौ इति श्रवणादेव पुरुषौ गम्येते । न पदान्तरगतेन क्षौमेण अस्य संबन्धः । श्रुत्यवगतं हि श्रवणादवगतम्, पदान्तरसंबन्धः वाक्यादवगतम्, श्रुतिश्च वाक्याद् बलीयसी ।

वसानशब्दगतश्चार्थः आधानेन संबध्यते, न क्षौमशब्दगतः। आह, वसानौ इति नायं केवलं पुल्लिङ्गे एव, स्त्रीपुंसयोरपि अभिधायको भवति। यथा कुक्कुटश्च कुक्कुटी च कुक्कुटौ, शूकरश्च शूकरी च शूकरौ इति। एवं वसानश्च वसाना च वसानौ स्यातामिति। अत्रोच्यते। यत्र नार्थः प्रकरणं वा विशेषकम्, विधायकश्च शब्दो नानुवादः, तत्र द्वौ पुमांसौ गम्येते। यथा 'द्वौ आनय' इत्युक्तः पुमांसौ आनयति, 'द्वे आनय' इति स्त्रियौ। तेन स्त्रियोर्वाचकमेकारान्तं द्विवचनं इति गम्यते, औकारान्तमपि द्वयोः पुंसोर्वाचकमिति। यत्र इदानीं स्त्रीपुंसयोः प्रयुज्यमानं ओकारान्तं दृश्यते तत्र किं पुमान् सद्वितीयः तस्य निमित्तम्, उत स्त्री सद्वितीया इति। उच्यते। पुंसि सद्वितीये दृष्टं, यथा 'ब्राह्मणौ आनय' इति। इहापि पुमान् सद्वितीयोऽर्थः। तस्मात् पुंनिमित्तः इति गम्यते। अत्राह, प्रयोगो यदि दृष्टं प्रमाणं द्वयोः पुंसोर्दृष्टः, कथमेकस्मिन् स्यात्? अत्रोच्यते। पुंसि च द्वित्वे च दृष्टः इति शक्यते वदितुम्, न द्वयोर्द्रव्ययोरिति। पुंस्त्वं द्वित्वं च एष शब्दो न व्यभिचरति, द्रव्यं पुनर्व्यभिचरति। अपि च युगपदधिकरणवचनतायां द्वंद्वस्मृतेः द्विवचनबहुवचनोपपत्तेश्च। 'प्र मित्रयो वरुणयोः' इति च दर्शनात्। इतरेतरयोगे चार्थे समासविधानात् द्वन्द्वमवाद्भाव एकशेषस्य। यथैव खदिरो च धवो च इति निदर्शनं क्रियते, एवमत्रापि द्रष्टव्यम्। तस्मात् पुंसि द्वित्वे च वर्तेते इति गम्यते। न च स्त्रीद्वित्वे दृष्टः। अत्राह, ननु अत्रैव दर्शनात् स्त्रीपुंसयोर्वाचक इति गम्यते। अत्रोच्यते। उक्तमेतत् अन्याय्यश्चानेकार्थत्वमिति, इति पुमान् सद्वितीय अभ्यार्थो भविष्यति। स्त्रीपुंसौ चेदन्याय्यम्। अथ इदानीं सद्वितीयस्य पुंसो विधौ, कोऽस्य सहायः इति, स्त्रिया अनभिधेयत्वात् अवश्यम्भावित्वाच्च द्वितीयस्य, अपरः सद्वितीयः पुमान्। एवं इतरोऽपि इतरेण सद्वितीयः, इतरोऽपि इतरेण इति द्वावेव पुमांसौ उपादीयेते। तस्मादिह द्वौ पुमांसौ आधाने विधीयेते इत्युच्यते। ननु स्त्रीपुंसयोर्वाचकं औकारान्तं द्विवचनं स्मरन्ति। नैषा स्मृतिरस्तीति ब्रूमः। आह भगवतः पाणिनेर्वचनात् स्मृतिमनुमास्यामहे 'पुमान् स्त्रिया' (पा० १।२।६७) इति। उच्यते, न पाणिनेर्वचनम् 'कुक्कुटौ इति औकारः स्त्रीपुंसयोर्वाचकः' इति। कथं तर्हि? यत्र स्त्रीपुंसयोः सहवचनम्, तत्र सद्वितीयो वा पुमान् इति कृत्वा अकारान्तस्य औकारः प्राप्नोति, सद्वितीया वा स्त्री इति कृत्वा एकारः। पुंशब्दस्तत्र साधुः, न स्त्रीशब्द इति पाणिनेर्वचनम्। पुमान् शिष्यते इति च ब्रूते, तेन पुंसा गम्यते पुंसोर्वाचक औकार इति। तस्मात् द्वयोः पुंसोरधिकार इति। ननु क्षौमविधानपरमेतत् वाक्यम्, क्षौमवसनस्य अर्थवत्त्वात्। इतरथा क्षौमवचनमनर्थकं स्यात्। अत्रोच्यते। वसानौ आदधीयाताम् इत्यस्ति संबन्धः, न क्षौमे आदधीयातामिति। तस्मात् सन्निकृष्टमपि न तत् संबद्धमाधानेन। आह, वसानशब्देन सह संबध्यमानं अर्थवद् भविष्यति, वसानसन्निकृष्टे अपि क्षौमे न विधीयेते, विधायकस्य शब्दस्याभावात्। नहि वसानशब्दो विधायकः, न क्षौमशब्दः, नानयोः समुदायः। कस्तर्हि विधातुं शक्नोति? आदधीयाताम् इत्यत्र या लिङ्। आह, सा खलु विधास्यति, उच्यते, सा स्वशब्दगतमाधानं शक्नोति विधातुं अश्रवणात्। विहितत्वादाधानस्य आनर्थक्ये, वसानौ इति शक्नोति वाक्येन विधातुम्। भवति हि वसानयोराधानसंबन्धः, तत्र वाक्यतायां स्वार्थः परित्यक्तो भवति। क्षौमवसानसंबन्धे तु विधानार्थे 'आदधीयाताम्' इत्याधानस्य अस्त्येव विदधानः अवगम्यते श्रुतिं जह्यात्। आधानसन्निकृष्टे च लिङ्गे विधातव्ये श्रुतिः विप्रकृष्टं क्षौमवसानसंबन्धं विधातुमुत्सहते, अर्थविप्रकर्षात्। अपि च उच्यमाने श्रुतिं क्षौमवसानसंबन्धे विधीयमाने क्षौमं वसानस्य अङ्गं स्यात्, नाधानस्य। तत्र क्षौमाभावेऽपि नाधानं विगुणं इति क्षौमाभावेऽपि आधानं स्यात्। आह, वसानगुणतायां तर्हि कोऽर्थो विवक्ष्यते? उच्यते। न कश्चित्। अत एव अस्य पक्षस्य परित्यागः। आह, क्षौमवसानवचनमिदानीं किमर्थमिति? उच्यते। न शक्यते उभयं विधातुं क्षौमं लिङ्गं च। भिद्येत हि तथा वाक्यम्। तस्मात् क्षौमाक्षौमयोः क्षौमशब्दोऽनुवादः। अर्थप्राप्ते च वसने, वसानौ पुमांसौ इत्यर्थः।

ते न प्रायेण विचेष्टमानस्य मलिने क्षौमवद्दशे भवत. । विचेष्टमानस्य वा वसने शब्दवती भवतः । तस्मात् द्वयोः पुंसोरधिकार इति ।

टुप्--- ( व्यवहारसंगतिमाह- ) यत्नेन इति मत्या मिथुनाभिधाया ( इदं कारकशक्तेरपि उपलक्षणम् ) । आधानेऽपि प्राप्तं वसानौ इति मिथुनद्वयम्, तत् निवार्यते । अत्र पूर्वः पक्षः । यत् आदधीयाताम् ( इति अनूद्य ) तत् वसानौ इति ( पुंद्वय विधीयते, वसनमपि अनूद्यते प्राप्तत्वात् । ननु क्षौमविधान पुष्पमत्र आह- ) आधाने द्वित्वविधाने ( सति ) धात्वर्थे किञ्चित् विहितम्, इति श्रुत्यनुग्रहः ( स्यात् । ननु क्षौमविधानेऽपि अस्ति श्रुत्यनुग्रहः इति चेत् तत्राह- ) इतरथापि ( पक्षे ) यदि आधाने क्षौमं विधीयते, तत्र क्षौमं अधिकरणत्वेन प्राप्नोति ( आदधातिना अन्वयार्थं वसानेत्येकवचनान्तःवस्य स्वीकार्यत्वात् । ततश्च क्षौमोपरि अग्निराधेयः स्यात् ) । अथ वसने क्षौमं विधीयते ( नाधाने ) ततः क्षौम वसनमात्राद्वा ( सत् ) आधानस्यादृष्टत्वात् अनर्थक स्यात् । ( किञ्च ) वसानप्रातिपदिकस्यैव औकारेण श्रुत्या सम्बन्धः । ( एवकारो भिन्नक्रमः औकारेणैव श्रुत्या सम्बन्ध. इति ) पदान्तरत्वात् ( तु ) क्षौमसम्बन्धे वाक्य स्यात् ( तच्च दुर्बलं श्रुतेः । किञ्च ) तादृशस्य ( वाक्यगम्यस्य क्षौमवसानसंबन्धस्य विधि- )प्रत्ययेन परामर्शात् अत्यन्तं वाक्यम् ( स्यात् ) । वसानौ इति सख्यासम्बन्धः ( द्वित्वपुंस्त्वयोः सम्बन्धः ) शब्देन ( गम्यते ) तत्र सख्यया नान्यत् संख्येयं प्राप्तम् ( किन्तु पुमानेव । तथा ) सख्येयेन च नान्या सख्या, इति (द्वयोरपि एतयोः) इतरेतरनियमः यथा कुम्भैकदाऽन्योः । तस्मात् द्वावेव पुमांसौ ( आधातारौ ) प्राप्तौ । ( सख्या-पूरणार्थम् ) स्त्रीग्रहणे ( क्रियमाणे सति ) सख्यासंख्येययोः ( द्वित्वपुंस्त्वयोः ) सेरथो बाध्येत । ( ननु स्त्रियाऽपि संख्यार्थलोपसम्बन्धसिद्धिः, अत आह- ) द्वितीयस्य पुंसः अस्ति पर्युपस्थापकः ( औकारः ) यथा घटौ आनीयेतामित्युक्ते द्वितीयो घट एवानीयते नाश्वादिः, एवमिहापि ।

'आह । वसानौ इति नायं केवलं पुंलिङ्ग एव ( पुंलिङ्गस्यैव ), स्त्रीपुंसयोरपि अभिधाता ( अभिधायकः । भाष्ये तु अभिधायकः इत्येव पाठ. ) भवति' इति ( भाष्यम् ) । अस्य ( द्विवचनस्य ) न पुंलिङ्गविशिष्ट द्रव्यमभिधेयम्, न च स्त्रीपुंलिङ्गविशिष्टम् ( चशब्दः अप्यर्थः ) । तस्मात् उभयोः ( अपि ) यत् सामान्यम्, तत् वाच्यम् । किं तत् ? पुंस्त्वं द्वित्वं च । तत्र प्राप्तम्, न विधेयम् । तस्मात् क्षौमं विधीयते इति अन्तर्णीताभिप्राय. परिचोदयति । अथवा शब्दार्थमेव उभयप्रकार ( स्त्रीपुंसयोर्द्वित्वं पुंद्वित्वं चेति ) मन्यते, ( उभयो. ) प्रयोगदर्शनात् । ( भाष्योक्ता शङ्का पूर्वपक्षी परिहरति- ) 'अत्रोच्यते । यत्र नार्थः प्रकरणं वा विशेषकम्, विधायकश्च शब्दो नानुवादः' इति ( परिहार-भाष्यस्य-- ) कोऽभिप्रायः ? । ( अभिप्राय दर्शयति- ) 'कुक्कुटौ आनय मिथुनं करिष्यामः' इत्यत्र सामर्थ्यात् द्वितीया स्त्री आनीयते । यत्र वा स्त्रीपुंसौ अधिकृतौ, यत्र वा औकाराभिधेय प्राप्तत्वात् न विधीयते, [illegible] स्त्रीपुंसौ गृह्येते । इह तद् नियममपि नास्ति । अतः ( कारण-अभावात् ) औकारः ( स्वशक्त्या ) द्वितीयं पुमांसं शक्नोति पर्युपस्थापयितुम्, न स्त्रियम् । अन्वयव्यतिरेकाभ्यां पुंस्त्व द्वित्वं चाभिधेयम् । ( एतदेव व्यनक्ति- ) द्वयोरपि पुंसोः प्रयुक्तः ( द्वौ पुरुषौ इति, तथा ) स्त्रीपुंसयोरपि । ( तत्रोभयोरर्थयोः ) अनेकशक्तिकल्पनाभयात् पुंस्त्वं द्वित्वं चास्य अर्थः इत्यवसीयते । युगपदधिकरण-वचनतायां द्वन्द्वस्मृते. इत्येवमादिना ( भाष्येण ) विग्रहपर्यालोचनयाऽपि यथा वंशपूरणी स्त्री न गृह्यते, तत् प्रतिपाद्यते । कथम् ? ( धवखदिरौ इत्यादौ ) द्वन्द्वे धवशब्दः आत्मीयमर्थं इतरापेक्ष ( खदिरापेक्षम् ) अभिधत्ते । खदिरोऽपि ( खदिरशब्दोऽपि ) इतरापेक्षं ( धवापेक्ष ) इति द्वन्द्वोऽर्थे ( द्वन्द्वः ) स्मर्यते । 'द्विवचन-बहुवचनोपपत्तेश्च' इति ( भाष्य व्याचष्टे- ) यदि धव-शब्दः खदिरनिरपेक्षमात्मीयमर्थं अभिधत्ते, तत एकत्वात् तस्य एकवचनबहुवचने न स्याताम् । दृश्येते च (द्विवचन-बहुवचने ) । तस्मात् द्वन्द्वे द्वितीयं प्रातिपदिकार्थमपेक्ष्य द्वित्वादिविभागः । 'प्र मित्रयोर्वरुणयोः' इति च दर्श-

नात् ( ऋग्. ७।६६।१ ) इति । न द्वौ मित्रौ स्तः, न वरुणौ, अत्र (प्रत्येकम्) द्विवचनं नोपपद्यते, अन्योन्यापेक्षायाम् (तु) घटते (ततश्च द्वन्द्वे युगपद्वचनता निश्चीयते इति । इतश्चैतदित्याह– ) 'इतरेतरयोगे चार्थे द्वन्द्वविधानात्' ( समासविधानात् इति भा–पाठः ) इति चकारः समुच्चय– अन्वाचय– इतरेतरयोग– समाहारेषु वर्तते । तत्र समुच्चयान्वाचययोः नास्ति समासः, समाहारेतरेतरयोगयोरेव ( तु समासः )। तत्रोऽपि युगपदधिकरणतायाम् ( एव ) द्वन्द्वः ( एवितव्यः । प्रवृत्ते क्रियायाम्, इतश्च आह– ) द्वन्द्वापवादत्वाच्च एकशेषस्य इति । (तद् व्याचष्टे–) यो हि द्वन्द्वस्य धर्मः (अनेकेषाम्) इतरेतरयोगो नाम, स एकशेषस्यापि । द्वयोस्तु विशेषः ( द्वन्द्वैकशेषयोः ), एकत्र ( द्वन्द्वे ) शब्दश्च अर्थश्च द्वावपि भिन्नौ, इतरत्र ( एकशेषे ) अर्थो भिन्नः, शब्द एक एव । ( यत्र शब्दश्च अर्थश्च द्वावपि भिन्नौ तत्र द्वन्द्वः धवखदिरादौ । यत्र तु अन्यतरस्यापि ऐक्यम्, तत्र एकशेषः अक्षाः पादाः इत्यादौ वक्रदण्डौ इत्यादौ च )। यजमानौ इत्येकशेषत्वात् द्वितीयेन पुंसा भवितव्यम् । पुमान् हि श्रूयते द्विवचनश्रवणात् । स इतरसव्यपेक्षः, तस्य पुमानेव द्वितीयः । पुंसः अस्ति पर्युपस्थापकम् ( औकारः ), न स्त्रियाः । यत्र स्त्रीपुंसौ वक्ष्येते, तत्र पुमान् सद्वितीयः इति औकारान्तः प्राप्नोति, स्त्री सद्वितीया इति एकारान्त । ( यजमानौ इत्यत्र तु– ) औकारः प्रयुज्यमानः ( पुंस्त्वे ) साधुः, ( तस्य ) न स्त्रीपुंसौ वाच्यौ ।

[ अत्रैव सूत्रस्य द्युम्नीकाद्दृत्तैव द्वितीया व्याख्या कृता । सा च अस्मदाश्रमीये पुस्तके चतुर्विंशसूत्रव्याख्योत्तर मुद्रिताऽपि अस्माभिः योग्यतया अत्रैव लिख्यते । एवमुत्तरसूत्रेऽपि । सा चैव व्याख्या अस्मदीये लिखिते पुस्तके नास्ति । तथापि तन्तरनेन व्याख्यास्थाने सङ्गृह्यते ]।

टुप्– ( एतदेव सूत्र विस्पष्टीकरणाय वार्तिककारेण पुनर्व्याख्यातम् ) पूर्वाधिकरणे एकवचन मिथुनाभिधाय संसर्गाभिप्रायं ( दम्पतीनिष्ठ-याजमान्यकृतिसर्गाभिप्रायम् ) चा ऽयुक्तम् । इदानीं ( यजमानौ इति– ) द्विवचनं तथैव द्वे कारकशक्ती द्वे च ( वाक्यार्थे चशब्दः ) मिथुने ब्रवीति इत्यनेन प्रसङ्गेन आरभ्यते । ( पूर्वपक्षाद्यर्थम् । वदनेन अधिकरणप्रवृत्तिः पूर्वपक्षहेतुश्च प्रदर्शितः )। क्षौमाधानयोरन्यो न ( विधीयते ) वसान–( शब्द– ) व्यवधानात् । ( इतश्चैतदित्याह– ) 'वसानौ आदधीयाताम्' इति सामानाधिकरण्यात् उपपद्यते संबन्धः । 'क्षौमे आदधीयाताम्' इति सामानाधिकरण्याभावात् नास्ति संबन्धः । ( दोषान्तरमाह– ) संबध्यमानं च आधानस्य अधिकरणं स्यात् ( क्षौमे इति सप्तमी स्यात्, तदधिकरणकं च अग्न्याधानम्, इति । तथानिष्टम् । शङ्कते–) क्षौमवसानसंबन्धे ( सति ) न सामानाधिकरण्यम् ( बाधकम्, ) अधिकरणदोषश्च नास्ति, इति चेत् । ( उत्तरम्– ) वसनक्रिया कर्तृविशेषणभूतत्वात् नाग्न्येन संबन्धयितुं शक्यते । ( अथ प्रधानभूतेन कर्त्रा क्षौमं संबध्यते, तत्राह– ) कर्त्राऽपि नास्ति संबन्धः । ( कुतः ? ) नहि कारकाणां मिथः संबन्धः । ( अथ– ) वसनक्रिया कर्तृविशेषणभूताऽपि पुनर्विपरिवृत्य ( क्षौमेण ) संबध्यते इति चेत् ( उत्तरम्– ) न । ( कुतः ? ) विधीयमाना हि क्रिया आख्यातत्वात् ( कर्तव्यत्वात् ) कारकैः संबध्यते । अविधीयमानायाः ( तु ) न कारकैर्भवति संबन्धः । ( कस्मात् इत्यत आह– ) अविधीयमाने ( वसने ) क्षौम संबध्यमानं लौकिकेऽपि स्यात् । तत्र अदृष्टार्थता ( क्षौमस्य ) स्यात् । ( तस्माच्च विपरिवृत्यापि संबन्धः )। किञ्च ( अस्मिन् पक्षे ) क्षौमवसानयोः संबन्ध आदधीयाताम् इति ( विधिः ) कुर्यात् । इति अन्यत्तं वाक्यम् ( स्यात् इति श्रुतिबाधः । बाधमेवाह– ) प्रत्ययः कर्मकेन्द्रभूतया ( प्रकारद्वयस्थानस्थितभूतया ) श्रुत्या भावार्थे विधत्ते, तदङ्ग वा ( किञ्चित् )। इह द्वयमपि न विधत्ते धात्वर्थम्, धात्वर्थस्य वा अन्यत्, तस्यास्य श्रुते. ( धात्वर्थतदङ्गपरायाः विधिश्रुते. ) अभावात् । ( मत्पक्षे तु आधानाङ्गतया ) वसानौ इति ( पुंद्वये ) विधीयमाने धात्वर्थे लिङ्गद्विधानात् श्रुतिः अनुगृहीता ( भवति । किञ्च ) वसानशब्दस्यापि एकपदोपात्तत्वात् औकारेण श्रुत्या संबन्धः । क्षौमेण ( तु संबन्धे ) पदान्तरोपात्तत्वात् वाक्यम् । श्रुतिश्च वाक्यात् बलीयसी ।

तस्मात् द्वौ पुमांसौ आधाने विधीयेते। (भाष्यकारेण यजमानौ इत्यत्र पुंद्वयं प्रतिपादितम्, तत्र चोदयति–) कस्मात् पुनः पूर्वपक्षवादिना अनुमानेन द्वितीयः पुमान् निष्पद्यते, न पुनः औकारेण द्वौ पुमांसौ अभिधीयेते इति ब्रवीति, येन सिद्धान्तवादिनः परिचोदनैव नोत्तिष्ठति। उच्यते। यदि (द्वौ) पुमांसौ वाच्यौ इति ब्रूयात्, ततः अनैकान्तिकत्वं भवति। यथा (हि) द्वयोः पुंसोर्दृष्टः, तथा स्त्रीपुंसयोरपि दृष्ट एव। तत्र इह क्षौमस्य विधानात् स्त्रीपुंसयोरर्थप्राप्तत्वात् पूर्वपक्षानुत्थानम् (स्यात्)। तन्मा भूत् इति न्यायात् पुरुष प्रतिबाध्यते (न शब्दात्)। 'यत्र नार्थः प्रकरणं वा विशेषकम्, विधायकश्च शब्दो नानुवादः' (इति न्यायप्रतिपादनार्थं भाष्यं आक्षिपति–) इति पूर्वपक्षविपरीतोऽयं ग्रन्थः। कथम्? यत्र एतानि कारणानि (मध्यादन्यतममपि वा अस्ति–) तत्र स्त्रीद्वितीयो गृह्यते (पुमान् स्वयमुद्युक्त भवति) इह च प्रकरणात् स्त्रीद्वितीयः पुमान् प्राप्तः। एवं चेत् स्त्री (एव प्रकरणवशेन द्वितीया) ग्रहीष्यते। किञ्च क्षौमपदानुग्रहात् (सैव ग्रहीष्यते, इति पूर्वपक्षविपरीतोऽयं ग्रन्थः। समाधत्ते–) उच्यते। (विधि–)प्रत्ययविप्रकर्षात् यत्र हितकल्पनात् सामानाधिकरण्याभावाच्च युक्त (यत्) न विधीयते क्षौमम् (इति)। यजमानौ इति चोद्यमान स्वरनेन द्वौ पुमांसौ अवगमयति। अतः (न्यायात्) एतस्मिन् (यजमानशब्दस्य विधायकत्वे) स्थिते इदमुक्तम् 'औकारस्य पुंस्त्वं द्वित्वं च वाच्यम्' इति। कथम्? ब्राह्मणौ इति द्वयोः पुंसोः औकारः प्रयुक्तः, कुक्कुटौ इति स्त्रीपुंसयोः। तत्र यदि द्वे (अपि) अभिधेये स्याताम् (ततः) द्विरुक्तं भवेत् (तच्चान्याय्यम्)। उच्चरिते न संशयः स्यात् कतरद्वेन अभिहितमिति। अतो यदनयोः सामान्यम्, तद् वाच्यम्। (किं पुनस्तत्? आह–) तत्र पुमान् उभयत्रापि विद्यते द्वित्वं च। तस्मादेतदेवास्य वाच्यम्। (एवमपि–) पुमान् एव कथं द्वितीय इति चेत्, उच्यते। यत्र द्वित्वं तत्र पुमान्, यत्र पुमान् तत्र द्वित्वम्, (इति) अनयोः परस्पर नियमः (एतदेव भनक्ति–) एकशब्दोपादानात्

यस्या क्रियाया द्वित्वं तस्य पुंस्त्वं अनयोः परस्परसंबन्धः अरुणाऽऽदिवत्। (सर्वथा तावत्) द्वित्वस्य (गुणस्य द्रव्येण) आश्रयेण भवितव्यम्। (तत्र) क्रिया अवबोधकं नास्ति। द्वित्वं तावत् नावबोधयति, विनाऽपि क्रिया उपपद्यमानत्वात्। पुमानपि न शक्नोति अवबोधयितुम्, असंबन्धात्। औकारो ब्रूते पुलिङ्ग द्वित्वं च। (द्वित्वेन च) संख्यापूरकं ग्राह्यम् (शब्दार्थभूतं किमपि आक्षेप्यम्) तत्र कतरः प्रकारः स्यात्? पुमान्। (कुतः?) पुमान् शक्नोति पुमांसमवबोधयितुम्। तस्मात् न्यायात् द्वौ पुमांसौ। ('युगपदधिकरणवचनतायाम्' इत्यादिभाष्यार्थमाह–) न च विग्रह वाक्येऽपि क्रियाः श्रवणम्, 'यजमानश्च यजमाना च' इति ईदृशस्य (विग्रहस्य) अभावात्। कथमभावः? युगपदधिकरणवचनतायां द्वन्द्वस्मृतेः। (उक्तवचनतामेव दर्शयति–) यत्र द्वौ बहवो वा युगपदभिधातुमिष्यन्ते, तत्र द्वन्द्वसमासो भवति। (तदेव उपपादयितुं अन्तरा किञ्चित् प्रस्तौति) अयुक्तमिदमुच्यते (द्वन्द्वसमासो भवतीति। कथम्?) समासः प्रमाणान्तरेण (समस्यमानयोः) संबन्धे (ज्ञाते) भवति। यजमानपत्न्योश्च अङ्गाङ्गित्व–स्वस्वामित्व–आश्रयाश्रयिसंबन्धः (तावत्) नास्ति। क्रियया च संबन्धः समासोत्तरकालभावी। सर्वे च समासाः संबन्धोत्तरकालम्। यथा 'राजपुरुषः' इति स्वस्वामिभावे अवगते, 'चित्रगुः' इति चित्राभिर्गोभिः संबन्धे अवगते, 'पञ्चपूली' इति समाहारसंबन्धोत्तरकालम्, 'उपकुम्भम्' इति सामीप्यसंबन्धोत्तरकालम्। (द्वन्द्वेऽपि संबन्धेन भवितव्यम्)। न चेह यजमानपत्न्योः संबन्धः अस्ति (प्रमाणान्तरतः। तस्मात् द्वन्द्वः अनुपपन्नः)। उच्यते, एकशब्दाभिधेयत्वमनयोः (यजमानपत्न्योः) संबन्धः। तत्र (स च द्वन्द्वे–) समासे अभिप्रेते भवति। (तदा न युगपदधिकरणता सिद्धा इति।) विग्रहस्तु ईदृशः (कार्यः) पत्नी च यजमानश्चेति। 'द्विवचनमनुपपन्नं च' इति (भाष्यस्य अयमर्थः), यदि एकेन पेरकेन यत्र एवाभिधीयते, तदिदेन तादृशः। एवम् (सति) तादृशम् पर द्विवचन न प्राप्नोति। अतो द्वावपि

अभिधीयेते । लौकिकोऽयं न्यायः प्रदर्शितः । ( वैदिकमपि लिङ्गं प्रदर्श्यते— ) 'प्र मित्रयोर्वरुणयोः' इति दर्शनात् ( इति भाष्यम् ) इह मित्रस्य एकत्वात् वरुणस्य च, द्विवचनं न प्राप्नोति ( तेन युगपदभिधानता गम्यते ) । 'इतरेतरयोगे चार्थे द्वंद्वविधानात्' इति ( भाष्येण ) 'चार्थे द्वंद्वः' इति सूत्रस्यार्थः प्रदर्श्यते । चशब्दः समुच्चय–अन्वाचय–इतरेतरयोग–समाहारेषु । तत्र समुच्चये 'धवमानय, खदिरमानय' इति ( निरपेक्षयोः क्रियान्वयात ) समासो नास्ति । अन्वाचये ( अरण्यं गच्छ ) काष्ठान्यानय, शाकमपि आहर्तव्यं इति । ( तत्रापि समासो नास्ति इत्यनुषङ्गः । समुच्चयान्वाचययोर्विशेषमाह— ) तत्र काष्ठानि आरण्य गमनप्रयोजकानि इतरदप्रयोजकम् । समुच्चये द्वयमपि प्रयोजकम् । द्वयोः सह आनीयमानयोः इतरेतरयोग उत्पद्यते । चकारस्य तत् फलम्, तत्कृते 'चार्थे द्वंद्व' इति ( नेदं तन्मताने ) । तत्र कदाचित् इतरेतरयोगो विवक्षितः, समाहारः प्रत्ययादवगम्यमानः अविवक्षितः । कदाचित् समाहारो विवक्षितः इतरेतरयोगो नान्तरीयकः । एतयोरर्थयोर्द्वंद्वः । ( तत्र ) समाहारविवक्षायाम् 'धवखदिरम्' इति प्रयोगः, इतरत्र 'धवखदिरौ' इति । ( प्रकृते सङ्गमयन्, तदाह— ) 'द्वंद्वापवादत्वाच्च एकशेषस्य ( इति भाष्यम् ) । यथा द्वंद्वे यौगपद्येन द्वौ अभिधीयेते, विग्रहश्च ( यथा ), तथा एकशेषेऽपि ब्रह्मणौ इति च एकशेषः । तत्र द्वौ पुमांसौ । ( ब्रह्मणौ च ब्रह्मणौ च इति विग्रहः । ) इति न स्त्रीद्वितीयत्वम् । एवं भाष्यं व्याख्याय चोदयति— ) ननु यदि घवौ द्व्यभिधायी खदिरश्च, ततो बहुवचनं स्यात् । उच्यते । द्वयोर्द्विवचनयोः बहुवचनम्, न द्वयो द्विवचनयोः । यदि हि द्वयोर्द्विवचनयोः बहुवचनं स्यात्, 'ब्राह्मणौ शोभनौ विद्वांसौ' इत्यत्रापि बहुवचनं स्यात् । ( पुनश्चोदयति— ) सैषा युगपदधिकरणता दुर्ज्ञा ( बुद्धौ अनारोहात् ) दुरुपपादा च ( युक्त्यभावात् ) । कथम् ? ( तस्यामभ्युपगतायाम् ) एकैकशब्दस्य द्वेद्वे अभिधेये स्याताम् । यदि च स्याताम् 'उक्तार्थानामप्रयोगः' इति धवस्यैव ( धवशब्दस्यैव ) प्रयोगः स्यात् । ( परिहरति— ) तस्मादेवं वर्णयन्ति । धवः आत्मीयमभिधेयं इतरसहितं ब्रवीति एवं खदिरोऽपि । ( तत्र ) कतरो द्वितीयः इति तत्र खदिरशब्देन धवो विशेष्यते, धवेनापि इतरः ( अतो नान्यतरप्रयोगदोषः । वस्तुतस्तु युगपदधिकरणता न पारमार्थिकी । तन्त्ररत्ने अत्र विषये विस्तरेण प्रतिपादितम् । विस्तारभयात् नोद्ध्रियते ) ।

ननु तत्र ( औकारान्ते द्विवचने ) पाणिनिस्मरणम् 'पुमान् स्त्रिया' इति । उच्यते । न पाणिनिना अर्थानुशासनं कृतम् । किं तर्हि ? यथा लोके अवस्थितोऽर्थः, तथाऽवस्थितस्य शब्दानुशासनं कृतम् । तत्र ( नियमः क्रियते इति परेणान्वयः । ) अकारात् परः औकारः श्रूयमाणः पुमांसं सद्वितीयं वदति । यदा स्त्री सद्वितीया, तदा औकारः एकीभवति । यदा पुनः स्त्रीपुंसौ अभिधेयौ, तदा पकारौकारौ प्राप्नुतः, द्वयोरभिधेययोर्विद्यमानत्वात्, तत्र औकारः क्षिप्यते इत्ययं नियमः क्रियते । न तु पुंसा सद्वितीया स्त्री अभिधीयते ( तस्मात् द्वौ पुमांसौ अग्निमादधीयाताम् इति पूर्वः पक्षः ) ।

गुणस्य तु विधानत्वात् पत्न्या द्वितीयशब्दः स्यात् । २३ ॥

भाष्यम्— तुशब्दः पक्षं व्यावर्तयति । नैतदस्ति, यदुक्तम् 'द्वौ पुरुषौ आदधीयाताम्' इति । एक एवादधीत 'वसन्ते ब्राह्मणोऽग्निमादधीत' इति एकवचनं हि विवक्षितम् । तस्मादेक एवादधीत । ननु इदं वचनं द्वौ पुमांसौ आदधीयाताम् इति । नेत्याह । गुणस्य तु विधानत्वात् । स्त्रीपुंसविधानं अस्मिन् वाक्ये न्याय्यम् । तथाहि अपूर्वोऽर्थो विहितो भवति । गम्यते हि विशेषनियमः । इतरथा स्त्रीपुंसवचनं अनुवादमात्रं स्यात् । वादमात्रं चानर्थकम् ( १।२।२।१९ ) । पक्षे चानुवादः । न च एकान्तवचनं एष शब्दः । गौणत्वे च साधारणसादृश्यम् । तस्मात् प्रमाणान्तरमनपेक्ष्य विधेर्हेतुः । आह ननु पुमांसौ विधेयौ । तद्विधाने च न स्त्रीपुंसविधानम् । वाक्यभेदो हि तथा स्यात् । श्रुतिगम्यौ च पुमांसौ वाक्यगम्यं च स्त्रीपुंसं वाधेयातामिति । अत्रोच्यते । न पुमांसौ विधेयौ, प्राप्त एवात्र सद्वितीयः पुमान्, सोऽनूद्यते । कथम् ? एकोऽत्र पुमान् श्रूयते ।

तस्य पत्न्या द्वितीयशब्दः स्यात् । न च यत् प्राप्नवचना दृश्यते तद् विधेयं भवति । तस्मात् क्षौमविधानम्, न वाक्यभेदो भवति । यदुच्यते न क्षौमस्य नियमकोऽस्तीति । तदुच्यते । आदधीयाताम् इति तद् विधास्यति । ननु एतत् आधानं श्रुत्या विधातुं समर्थम्, नान्यदिति । उच्यते । शब्दान्तरेण विहितस्याधानस्य न विधायकम्, विहितत्वाच्च पुंसः सद्वितीयस्य तस्यापि न विधानम् । अतस्तदसंभवात् क्षौमस्य विधायिका लिङ् भविष्यति, वाक्यसामर्थ्यात् । यत्तु अस्मिन् पक्षे अत्यन्ताय स्वार्थे जहातीति, नात्यन्ताय हास्यति । आधाने वासः क्षौमं कुर्यात् इति । अस्मिन् पक्षे पुंशब्दः स्त्रीपुंसयोर्वृत्त इति गम्यते । अस्ति हि तत्र तस्य निमित्तं पुमान् सद्वितीयः । एतस्मादेव न दृष्ट्वा भगवता पाणिनिना सूत्रं प्रणीतम् 'पुमान् स्त्रिया' इति । तस्य विषयः पुंशब्दः शिष्यमाणः साधुर्भवति, न स्त्रीशब्द इति । तस्मादेकः पुमानादधीत, न द्वाविति ।

तुप्—क्षौमशब्दस्य अनुवादो न घटते अप्राप्तत्वात् । न लक्षणया अनुवादः सादृश्येन वा (गौण्या वृत्त्या वा इत्यर्थः) । नहि क्षौमं मलिनत्वेन विना आत्मानं न लभते, येन तल्लक्षयेत् । यथा शुक्लादिर्गुणः द्रव्येण विना न भवति इति अविनाभावात् द्रव्यं लक्षयति, नैवमिह । विनाऽपि मलिनत्वेन क्षौमस्य सद्भावोऽस्त्येव । अतो नास्ति लक्षणया अवबोधः । अथ विद्यते क्षौमे मलिनतेति, सा हि कार्पासादावपि विद्यते । असाधारण्येन हि लक्षणा भवति । नहि सादृश्यं हेतुः उपपदाभावात् । सामानाधिकरण्येन हि भवति सादृश्यं यथा सिंहो देवदत्त इति । अथ च प्रसिद्धिरपि समुदायप्रसिद्ध्या बाध्यते । तस्मात् (अनुवादाभावात्) विधेयमेतत् । यः प्रकरणगतः पुरुषः, तस्य अर्थप्राप्ते वसने क्षौमं नियम्यते । स प्रकरणगतः शक्नोति अपूर्वं लब्धुम् । तत्र एतत् विधीयते, न पुरुषान्तरे । यथा व्रीहयः शक्नुवन्ति अपूर्वं लब्धुम्, एवमिहापि । वसानौ इति उत्पत्तिवाक्ये स्त्रीपुंसयोः प्राप्तत्वात् अनुवादः ।

(अस्यैव सूत्रस्य वार्तिककारीया द्वितीया व्याख्या इत उत्तरं निवेद्यते । [illegible] च असतीये द्वितीयान्तिमे नास्ति । तन्त्रत्वे [illegible] ता व्याख्यातेति अत्र उद्भियते । के. । न पुरुष आधाने विधातुं शक्यते, 'वसन्ते ब्राह्मणोऽग्नीनादधीत' इति—) कर्तृविशेषणविशिष्टेन एकत्वेनावरुद्धत्वात् द्वित्वस्यावकाशाभावात् (वाजिनवत्) कर्मान्तरं प्राप्नोति । न चेष्यते कर्मान्तरम्, (प्रकृताधानप्रत्यभिज्ञानात्) । न च क्षौमयोरनुवादो घटते । तत्र (अनुवादपक्षे) शब्दवती वा क्षौमे (स्याताम्) मलिने वा । (द्वेधाऽपि अयुक्तमित्याह—) 'क्षु शब्दे' इति (अस्मात् धातोः) अवयवव्युत्पत्त्या वर्तेत । (तदयुक्तम्) रूढ्या (हि) क्षौममेव प्रतीतिः (अतसी स्यादुमा क्षुमा इत्यमरः । अतसी = आळशी, जवस इति भाषा) । रूढ्या च अवयवव्युत्पत्तिर्बाध्यते । व्युत्पत्तौ (चेष्यमाणायाम्) आश्रीयमाणायां शङ्खादीनामपि क्षौमशब्दवाच्यता स्यात् (शब्दवत्त्वात्), न च तेषु वर्तते (क्षौमशब्दः । नापि मलिनत्वप्रतिपादकत्वमित्याह—) मलिनवचने (सति) कार्पासादीनामपि मलिनत्वस्य विद्यमानत्वात् क्षौमशब्दाभिधेयता स्यात्, न च तेषु क्षौमशब्दः । (किञ्च एवम्—) अमलिने क्षौमे (क्षौमशब्दस्य) प्रयोगो न स्यात्, अस्ति च प्रयोगः । अमलिनपक्षे च विधिं प्रयोजयेत् । न च उपपदेन सह अनुच्चरितत्वात् क्षौमसदृशं कार्पासादि शक्नोति अवबोधयितुम् । यथा 'सिंहो देवदत्तः' इति सिंहशब्दोच्चारणे सिंहसादृश्यं देवदत्ते (अवगम्यते), एवमिहापि । तस्मात् उपपदाभावात् सादृश्ये गृह्यमाणे साधारणशब्दता (अनेकार्थता) स्यात् । अविनाभावेन मलिनत्वं अवबोधयेताम् (क्षौमशब्दाभिप्रायं द्विवचनम्) । न च मलिनत्वेन विना क्षौमं नोपपद्यते । तस्मात् (अनुवादत्वानुपपत्तेः) अप्राप्तत्वात् क्षौमं विधीयते । (ननु पुरुषप्रतिपादकस्य शब्दस्य का गतिः ? अत आह—) वसानौ इति पुंस्त्वं द्वित्वं च वदति, तच्च (द्वयमपि) प्रकरणेन प्राप्तत्वात् अनूद्यते । यदुक्तं आधानवैरूप्यं न करोतीति, तदोच्यते । आधाने क्षौमं कुर्यात् इति विधीयते (न तु वसने, तस्माददोषः इति । चोदयति—) तत् कथमाधाने भवति ? (उत्तरम्—) तदाधानकर्तृ (पुरुषस्य) सन् तदर्थं भवति । अथवा अस्तु (वसनेन) क्षौमस्याधानेऽन्वयितत्वात् । ननु

वसनमात्रे स्यात्, उच्यते। आधानप्रकरणे समाम्नानात् तदीयस्य पुरुषस्य यत् वसनम्, तत्र भविष्यति, यथा 'प्रकरणविशेषाद्वा तद्युक्तस्य संस्कारो द्रव्यवत्' (३।४।१५) इत्यत्रापि। इति सिद्धम्। (ततश्च क्षौमे वाससी दंपत्योः इति ज्ञेयम्)।

शा— किं आधानं द्वौ पुमांसौ अस्त्रीकौ सह कुर्यातां उत एकः। तत्र 'पूर्वत्राख्यातसंख्यायाः कर्तृरूपान्वयः स्थितः। तेनेह कर्तृरूपस्य भेदो द्विवचनाद्भवेत्॥ वसानाविति चौकारात् पुंद्वयं संप्रतीयते। द्वित्वपुंस्त्वे हि तद्वाच्ये नियम्येते च ते मिथः॥' तस्मात् द्वौ पुमांसौ अस्त्रीकौ। एवं प्राप्ते, अभिधीयते। 'क्षौमशब्दो न मुख्यः सन् मुख्यमर्थं परित्यजेत्। नापि धात्वर्थयोगेन वर्तते रूढिसंभवात्॥ वसान क्षौमशब्दौ च तत्र स्यातामनर्थकौ। द्वित्वमात्रविधायित्वात् तस्मात् क्षौमं विधीयते॥ तद्विधाने च पुंद्वित्वं विधातुं नैव शक्यते। उत्पत्तिवाक्यादन्यत्र नानेकार्थविधिर्यतः॥ संनिकर्षश्च शब्दस्य धर्मो, न तदनुग्रहात्। प्रधानभूतशब्दार्थपरित्यागोऽवकल्पते॥ कर्तृरूपस्य चैक्येऽपि तदधिष्ठानभेदतः। युक्तं द्विवचनं यद्वदग्नीषोमौ हि देवते॥ अप्राप्तत्वात्तु वसने यदा क्षौमं विधीयते। वसानावादधीयातामित्येतावनुवादकौ॥ अनुवादो यथाप्राप्ति सा च स्त्रीपुंसयोर्द्वयोः। तेन प्राप्तिवशाच्छब्दाविमौ तावेव वक्ष्यतः॥ एक एव पुमांस्तस्मादादधीत सह स्त्रिया। उत्पत्तिवाक्ये ह्येकत्वमुपादेयं विवक्षितम्॥'

सोम— 'एतेन राजपुरोहितौ यजेयाताम्' इतिद्विवचनवत् आधाने पुंद्वयाधिकार इति पूर्वपक्षसूत्रार्थः।

वि— 'पुंसोरेकस्य चाऽऽधानम्, वसानावित्यतो द्वयोः। एवं क्षौमविधिर्दृष्टो दम्पत्योरेकता ततः॥'

भाट्ट— आधानप्रकरणे 'क्षौमे वसानौ अग्निमादधीयाताम्' इति श्रुतम्। तेन च आधाने कर्तृद्वित्वविधानात् द्वौ पुमांसौ अस्त्रीकौ आधाने अधिकारिणौ 'एतेन राजपुरोहितौ सायुज्यकामौ यजेयाताम्' इतिवत्। न चात्र 'कुक्कुटावानय मिथुनं करिष्यामि' इतिवत् 'पुमान् स्त्रिया' इत्याद्यनुशासनानुरोधेन स्त्रीसद्वितीयतया विरूपैकशेषस्यापि उपपत्तेः, वाक्यस्य क्षौमविधिमात्रपरत्वेनापि उपपत्तौ रूपविशिष्टकर्त्रनुवादानुपपत्तिः इति वाच्यम्। तथैकशेषाभ्युपगमे दृष्टश्रुताऽऽपाद्यविरूपैकशेषस्य अन्याय्यत्वात्। तथाहि, औकारस्तावत् द्वित्वं पुंस्त्वं चाभिधत्ते इति अदोषहायनीवत् क्रियावच्छिन्ने पुंस्त्वम्, पुंस्त्वावच्छिन्ने द्वित्वं इति परस्परनियमात् पुरुषस्त्रीभिः गुम्फा। विरूपैकशेषे तु पितरौ इत्यादौ मातृत्वादेः, कुक्कुटौ इत्यादौ स्त्रीत्वस्य च प्रत्यायकाभावात् लक्षणा आवश्यकी इति तस्य ततो दौर्बल्यम्। न च मतमतेऽपि उभयमप्यस्त्रीभावे भक्तित्वशब्दवत् गौणी, 'टुक्षु शब्दे' इत्यनुशासनाद्वा अवयवयोगः इति वचनमुख्यत्वभङ्गः, अनुवादवैयर्थ्यम्, उत्पत्तिवाक्यस्थैकवचनस्य साधुत्वमात्रार्थत्वं इति अनेकदोषवत्वादयुक्तं इति वाच्यम्। क्षौमशब्दस्यैव उभयविशिष्टाधारविधानाङ्गीकारात्। वसनादिवाक्ये तु आह्वनीयादिसंज्ञकत्वे निमित्ते वसनादिकालविधानम्। अत एव 'ब्राह्मणः' इति एकत्वं पुंस्त्वं चाविवक्षितम्। आदधीत इत्यपि च। ब्राह्मणो यदि शूद्रसहित आदधीत तदा वक्ष्ये इत्येवं शास्त्रविरुद्धत्वेनानुवादः। तस्मात् द्वौ पुमांसौ अस्त्रीकौ अधिकारिणौ। यत्तु भाष्यादौ एकशेषप्रमाणान्तरमुपन्यस्तम्। द्वन्द्वापवादत्वादेकशेषस्य द्वन्द्वार्थ एव अर्थः इत्यनाम्नाते। द्वन्द्वश्च 'युगपदधिकरणे द्वन्द्वो भवति' इति कात्यायनस्मरणात् युगपदधिकरणवाची (अत्र 'सिद्धं तु युगपदधिकरणवचने द्वन्द्ववचनात्' इति २।२।२९ पा० सूत्रे द्वितीयं वार्तिकम्। तत्र महाभाष्यपङ्क्तिः 'युगपदधिकरणवचने द्वन्द्वो भवति इति वक्तव्यम्' इति)। अधिकरणं शब्दप्रतिपाद्योऽर्थः, स यत्र अनेको युगपदेकेन पदेन वोच्यते तत्र द्वन्द्वः। तथा च मातापितरौ इत्यत्र मातृपदं लक्षणया स्वेतरसहितपरं इतरसहितपरपरं वा। इतरत्तु स्वेतरपदार्थनिर्णीयते। एवं स्वेतरपदमपि। सेयं युगपदधिकरणता। इतरेतरयोगोऽप्ययमेव अभिप्रेतार्थे द्वन्द्वः। चकारस्य हि चत्वारोऽर्थाः- समुच्चय- अन्वाचय- इतरेतरयोग- समाहाराः। तत्र विभक्त्यर्थान्वये परस्परनिरपेक्षत्वेऽपि, क्रियाऽन्वये

दण्डचक्रादिवत् परस्परसापेक्षत्वे सति सम्भूय समुच्चयः । अतश्च न इतरेतरयोगे, न विकल्पे, न वा अन्वाचये अतिव्याप्तिः । यथा 'अहरहर्नयमानो गामश्वं पुरुषं च' [ अयुक्तः पाठोऽयं चशब्दस्य ] इत्यादौ । अन्वाचये तु एकस्य प्रयोजकत्वम्, अपरस्य न इति न साम्यम्, यथा 'काष्ठान्याहर शाकं चाहर' इति । इतरेतरयोगे तु एकावच्छिन्नप्रतिविभक्त्यर्थे परस्परसाहित्येनान्वयः, यथा 'अग्निश्च सोमश्च देवता' इत्यादौ । अत्र धवं च खदिरं च इत्यादौ इतरेतरयोगविवक्षाया युगपदधिकरणवचनता आवश्यकी । अन्यथा प्रत्येकं विभक्त्यर्थान्वयेन इतरेतरयोगस्य समुच्चयाच्छेदानापत्तेः । अत एव निरपेक्षयोः एकक्रियाऽन्वयित्वे समुच्चयः इति तन्त्रान्तरोक्तमपास्तम् । 'अमावास्यायां पौर्णमास्यां वा' इत्येकवाक्योक्तविकल्पे अतिव्याप्तेः । इतरेतरयोगसमाहारयोस्तु साहित्यस्य पदार्थान् प्रति गुणप्रधानभावकृतो विशेषः, इतरेतरयोगत्वं तुल्यम् । एषु चार्थेषु इतरेतरयोगे एव द्वंद्वः । अत एव च अर्थानामनेकत्वेऽपि इतरेतरयोगरूपमर्थे एव द्वंद्वः इति 'चार्थे द्वंद्वः' इति सामान्यसूत्रं महाभाष्यकारादिभिः विशेषपरतया व्याख्यातम् । अतश्च युगपदधिकरणवाचिद्वन्द्वापवादत्वात् एकशेषस्यापि तद्वाचित्वप्रतीतेः 'यजमानौ' इत्यत्र पुंद्वयप्रतीतिरिति" । तन्न । विरूपैकशेषाङ्गीकारेऽपि स्त्रीसहितपुंसः पुंसहितस्त्रियाश्च युगपदभिधानोपपत्तेः । न चैवं पुंद्वयं स्त्रीद्वयं च इति चतुष्टयापत्तिः, धवखदिरद्वयवत् स्त्रीपुंद्वयोपपत्तेः । वस्तुतस्तु कात्यायनोक्तं युगपदधिकरणवाचित्वं पतञ्जलिभिरेव दूषितम् । तत्रायमाशयः । धवपदे खदिरपदे च लक्षणाया प्रमाणाभावात् इतरेतरयोगस्य चशब्देनैव तात्पर्ये सति बोधोपपत्तेः । अत एव धवं च खदिरं च इत्यादौ तात्पर्यानुरोधेन धवपरिच्छिन्नखदिरकर्मत्वे लक्षणा इत्यपि ध्येयम् । द्वंद्वे तु विभक्तेरेकत्वादेव इतरेतरयोगो लक्षणां विनैव निरवबाधः । यत्तु 'प्र मित्रयोर्वरुणयोः' इति वेदे क्वाचित्कं विग्रहप्रदर्शनं तच्छान्दसम् । अत एव विभक्त्यर्थासत्त्वयुक्तिधर्मपरत्वे द्वंद्वः एव तादृशस्थले तात्पर्यग्राहकः इत्यपि बोध्यम् । किञ्च द्वंद्वापवादत्वेऽपि एकशेषस्य तदुक्तविभक्त्यर्थान्वयानुकूलधर्मपरत्वम्, वचनान्यथा विभक्त्यर्थान्वयोत्तरकालीनत्वेन ततः पूर्वं एकशेषत्वग्राहकप्रमाणाभावात् । वस्तुतस्तु एकशेषानुशासनमपि परिभाषामात्रमेव, सरूपद्वंद्वनिराकरणार्थं एकमात्रपदिकार्थम्येव द्विवचनादिबलेन अनेकत्वप्रतीत्युपपत्तेः । विरूपैकशेषत्वे तु तात्पर्यग्राहकानुरोधेन आनुशासनिकी गौणत्वे लक्षणा इति विशेषः । अतस्तत्रिया सरूपैकशेषस्यैव अङ्गीकारात् पुंद्वयाधिकारः । इति प्राप्ते, वसन्तादिवाक्ये 'आदधीत' इत्येकवचनस्य पाक्षिकानुवादत्वापत्तेः, ब्राह्मणद्वयकर्तृकाधाने वसन्तप्राप्त्यनापत्तेश्च वसन्तादिवाक्येष्वेव आधानविधानम् । यजमानवाक्ये तु एककर्तृत्वविशिष्टाधाने कर्तृद्विनिष्ठोभयविध्ययोगात् आनुशासनिकीं लक्षणामङ्गीकृत्य परं विरूपैकशेषः अविवक्षितलक्षणया । तस्मिन् द्विगान्वयेऽपि पार्ष्णिको युक्तः समाश्रयितुम् । अत एव तत्र क्षौममस्त यजमानक्षौमोद्देशेन विधीयते । युक्तश्च कृदुपात्तभावनायामपि कारकसंबन्धः । विधायकस्तु आदधानिपर एव प्रत्ययः । उपक्रमस्थक्षौमपदे युग्मार्थलाभाय च विरुद्धार्थस्यापि विधायकः । अन्यत्तु सर्वं प्रकरणगतत्वादनूद्यते । यद्यपि च दम्पती पुंस्त्वश्रवणात् लिङ्गाद्वय द्वित्वं न लभ्यते, तथापि विशिष्टविधौ गौरवपरिहाराय यजमानवाक्ये वाक्यभेदपरिहाराय च ब्राह्मणादेः अविवक्षितत्वेनैव अन्वयाङ्गीकारात्, तस्य चोद्देश्यत्वेन तद्विशेषेण पुंस्त्वस्याविवक्षोपपत्तेः स्त्रियमादाय द्वित्वप्राप्त्यविघातः । द्विवचनं चात्र अविवक्षितानेकत्वमात्रपरम् । तेन पत्न्यनेकत्वेऽपि न कश्चिद्विरोधः । अतः एक एव पुमान् स्त्रीद्वितीयः आधाने अधिकारी ।

मण्डन— 'यजमानौ दंपती प्रोक्तौ ।'

शंकर— 'आधाने पुंद्वयस्य वा ।' वा अधिक्रिया ।

* द्व्याम्नातेषु ( अध्वर्युकाण्डे यजमानकाण्डे च पठितेषु ) सुम्न्यूहनादिमन्त्रेषु उभौ कर्तारौ । अध्वर्युः एतेन यजमानमनुशास्मीति, यजमानो प्रवदिष्यामीति । भा. ३।८।३।१७.

ह्याम्नातेषूभौ, ह्याम्नानस्यार्थवत्त्वात् । ३।८।७।१७॥

दर्शपूर्णमासयोः 'पशूनां त्वा याजमानं यन्नाय गृह्णामि' इत्यादय आज्यग्रहणमन्त्राः, 'वाजस्य मा

प्रस्तवेन' इत्यादौ स्रुग्व्यूहनमन्त्रौ च आध्वर्यवे याजमाने च काण्डे इति द्विराम्नातौ। इति द्व्याम्नातेषु मन्त्रेषु उभौ अध्वर्युश्च यजमानश्च द्वावपि अधिकारिणौ। ते मन्त्राः द्वाभ्यामपि पठनीयौ। तत्र अध्वर्युः, एतेन प्रभाशित-मनुदास्यामि इति संधाय, यजमानस्तु न प्रमदिष्यामि इति संधाय ब्रूयात्। कस्मात्? द्व्याम्नानस्य अर्थवत्त्वात् मूलत्वात् हेतो, द्वाभ्यां पठनीयौ। समाख्याद्वयस्य समानबलत्वात् इति भावः।

अथ सुधा— द्विःपाठार्थवत्त्वान्यथाऽनुपपत्त्या द्वि-प्रयोगावगमात् भिन्नविषयत्वेन सामान्यसमाख्याया अपि बाधाभाव, इति। के.

द्व्याम्नाताधिकरणम्। दर्शपूर्णमासयो आध्व-र्यवयाजमानकाण्डयोर्द्विराम्नाता मन्त्राः उभाभ्यामपि प्रयोक्तव्याः॥

द्व्याम्नातेषूभौ, द्व्याम्नानस्यार्थवत्त्वात्। ३।८।७।१७॥

भाष्यम्— स्तो दर्शपूर्णमासौ, तत्र द्व्याम्नाता मन्त्रा आध्वर्यवे काण्डे याजमाने च। आज्य वैगृहणे 'पञ्चानां त्वा वातानां यन्त्राय धर्त्राय गृह्णामि' इत्येव मादय। तथा स्रुग्व्यूहनमन्त्राः। 'सुचौ व्यूहति, वाजस्य मा प्रसवेन' इति। तत्र संदेहः किं ते उभाभ्यामपि कर्तव्या, उताध्वर्युणैवेति। किं प्राप्तम्? समाख्याना-दाध्वर्यवाः। इति प्राप्ते, उच्यते। उभावपि तान् प्रयुञ्जीयातामिति। कुतः? द्व्याम्नानस्यार्थवत्त्वात्। द्वाभ्यां समाख्यानात् द्वावपि कर्तारौ गम्येते। तस्मात् द्वौ ब्रूयाताम्। अध्वर्युः एतेन प्रभाशितमनुदास्यामीति। यजमानो न प्रमदिष्यामीति।

प्र— आज्यग्रहणादिमन्त्रेषु सामान्येन आध्वर्यवे पुनर्विशेषेण याजमाने काण्डे पठ्यमानेषु किमुभौ प्रयो-क्तारौ विकल्पेन समुच्चयेन वा, अथान्यतरः इति। तत्र आध्वर्यवत्वे विकल्पे वा प्राप्ते, द्वावित्याह। ननु च विशेषसमाख्यानात् वैयर्थ्यात्सामान्यमेव स्यात्। यत्र तत्र विशेषसमाख्या यत्र सीविषिन्दामो यत्र सकृदाम्नानम्। ये तु सामान्ये विशेषे च भेदेन आम्नायन्ते, तेषु यदि विशेषसमाख्या अङ्गीक्रियते, ततः सामान्यपाठस्य आनर्थक्यमेव स्यात्। एकविषयत्वे च सामान्य विशेषो बाधते। सत्यपि त्वत्र मन्त्राभेदे पाठभेदात् विषयान्तरम्। पाठस्य हि भेदेन प्रयोजनं कल्पयितव्यम्। न च तदुभय-प्रयोज्यत्वात् अन्यत् संभवति। तस्मादुभावपीति। ननु द्वयोः पाठयो. एकः स्वरूपज्ञापनार्थः, इतरो विनि योगार्थः स्यात्। तत्रापि मन्त्राणां कर्मतत्कालार्थत्वादङ्ग-प्रधानानां च समानकर्तृकत्वात् यत्रैव आज्यग्रहणादि कार्य-माम्नातम्, तत्रैव समाख्यानेनैव कर्त्रा विनियोगो युक्तः। तत्रैव च मन्त्रस्य प्रयोज्यत्वेन आनयनस्य कर्तृविशेषाकाङ्क्षा भवति, नेतरत्र। स्वरूपमात्रप्रज्ञापनस्य अन्तरेणापि कर्म-काल प्रयोगम्, अध्ययनमात्रेणैव सिद्धत्वात्। आज्यग्र-हणादि च असंदिग्धमाध्वर्यवम्। तस्मान्न यजमानेन प्रयो-क्तव्या इति। उच्यते। याजमानेऽपि स्वरूपमात्रादेव अन्त-रेणापि कार्यं प्रयोगान्वेषणावधारणात् अवश्यमेव कर्मापेक्षेति यजमानकर्तृत्वसिद्धिः। किं पुनस्तेषां प्रयुज्यमानानां प्रयोजनम्? उच्यते। यथैवाध्वर्युणा पदार्थाः कर्तव्याः, तथैव यजमानेन अप्रमादार्थं प्रत्यवेक्षितव्याः। तदर्थं मन्त्रा नाम्नायन्ते तत्प्रयोगान्तरेण प्रत्यवेक्ष्यते, इह तु मन्त्रैरित्यर्थवत्ता।

सोम— समाख्याबाधापवादात् संगतिः।

वि— 'याजस्य मेलस्तु ब्रूयादेको द्वौ वा, कृतार्थतः। एक., काण्डद्वये पाठादध्वर्युस्याजमानावुभौ॥' ८.

भाट्ट— ये मन्त्राः सामान्यतः आध्वर्यवसमाख्याते काण्डे समाम्नाताः, पुनश्च याजमानेऽपि विशेषतः समा-म्नायन्ते, यथा आज्यग्रहणमन्त्राः स्रुग्व्यूहनमन्त्राश्च, ते तावत् सत्यपि अभ्यासे प्रयमिताधमानत्वात् विध्य-भावाच्च अभिधा.। अतः गुणभूतकर्तृद्वयस्य विकल्पः। विशेषसमाख्याबलाद्वा यजमान एव कर्ता। आज्यग्रहण-स्रुग्व्यूहनादेर्वा निःसंदिग्धमाध्वर्यवत्वात् तदङ्गभूता मन्त्रा अपि तत्कर्तृका एव। न चैव द्विपाठवैयर्थ्यम्, एकत्र स्वरूपज्ञानं अन्यत्र विनियोग, इत्येवं सार्थक्यात्। इत्येवं प्राप्ते, एकपाठेनैवोभयसिद्धा द्वितीयस्य वैयर्थ्यापत्ते. पर्योच्चारणान्तरविधाविनाभावात्, तस्य च समाख्याऽन्तरेण कर्मान्तरसिद्धिः। उच्चारणान्तरप्रयोजनं तदीक्षणप्रत्यवेक्षणमिति नादृष्टकल्पनाऽपि। यद्यपि च तत्

नियमेन यजमानस्य न प्राप्तम्, तथापि द्विपाठबलादेव तत्कल्पनमिति न दोषः। यत्र तु नैवंविधं प्रयोजनं कर्तृभेदो वा संभवी यथा 'अथ महाप्रमानवः' इत्यस्याम्नौद्गात्रे एव प्रगीताप्रगीतभेदेन समाम्नातायाम्, तत्राम्नाता अभ्युदयशिरस्कत्वं परिकल्प्य उत्पत्तिविनियोगपरत्वेन सार्थक्यमिति विशेषः। ('यज्ञाना त्वा भागानाय्' इत्यादय आध्वर्यवे, 'वाजस्य मा प्रसवेन' इति सामयुदये)।

मण्डन— 'द्व्याम्नातमन्त्रा उभयप्रयोज्याः।' ८.

शंकर— 'द्व्याम्नातमुभयोर्मतु.।' १०.

* व्यार्षेयस्य कर्माधिकारो नास्तीति जैमिनिमतम्, अस्ति तस्यापि कर्माधिकार इति ऋष्यन्तरमतम्। जै. ६।१।११.

* द्व्येकयोर्बहुशब्दाः संख्यावचनाः। तामनभिधाय संख्येये वृत्त्यसंभवात्। धा. ३।४।४।२१ पृ. ९२४.

* द्विकपाले आश्विने आग्नेयाष्टाकपालानन्तरप्रथम कपालद्वयविध्यन्तः। मा. १०।९।१।१-६.

* द्विकर्मकत्वं अविवक्षितविशिष्टकर्मद्वयाकाङ्क्षधातुत्व इति द्विकर्मकस्यापि एककर्मत्वे 'विनाय' इत्यादौ न क्षतिः। मणि पृ. १०९.

¶ द्विगता अपि हेतवो भवन्तीति न्यायः। द्व्यर्थी गताः प्रयोजनद्वयस्य संपादका इत्यर्थः। यथा 'आम्राश्च सिक्ताः पितरश्च प्रीणिताः। एका क्रिया द्व्यर्थकरी प्रसिद्धा' इति महाभाष्यम्। साहस्री ४२२.

¶ द्विगोत्राणां प्रवरवरणे एको द्वौ अन्यत एकः इति त्रयः॥

द्व्यामुष्यायणानां शैशिरादीनामुभयगोत्रीयत्वे त्रिसंख्याधिकप्रवरैरस्पृष्टत्वेनैव 'त्रीन् वृणीते' इति विध्यर्थानुष्ठानसिद्धिः। इति प्राप्ते, विकल्पस्य जघन्यत्वेन 'एकतो द्वावन्यत एकम्' इत्यादिवचनसिद्धत्वात्त्रयाणामेव प्रवरणम्। अत एकमतो द्वयोर्वान्यतो वरणे त्रिसंख्यायाः चतुःपञ्चार्षेयप्राप्तौ नियमः सम्पद्यते। अन्यथा चतुःपञ्चप्रवराणामभावादेव सिद्धेः निषेधवैयर्थ्यापत्तिः। संकर्ष. ३।४।८.

* द्वित्वम्। अवान्तरसामान्यावच्छेदं विना द्वित्वानवधारणात्। सु. पृ. ७२६.

* द्वित्वादीनां अपेक्षाबुद्धेरेव अनेकता। मणि. पृ. १७.

* द्वित्वबहुत्वयोः आविर्भूतपदार्थनिष्ठत्वम्। मणि. पृ. १६.

■ द्वित्वबहुत्वाधिकरणम्। ज्योतिष्टोमे श्रुतयोः यजमानद्वित्वबहुत्वसम्बन्धयोः प्रतिपदोः कुलायकल्पयोः उत्कर्षः।

द्वित्वबहुत्वयुक्तं वाचोदनात्तस्य। ३।३।९।१७॥

भाष्यम्— ज्योतिष्टोमे श्रूयते 'युवं हि स्थः स्वर्पती इति द्वयोर्यजमानयोः प्रतिपदं कुर्यात्, एते असृग्रमिन्दव इति बहुभ्यो यजमानेभ्यः' इति। तत्र संदेहः ज्योतिष्टोमे एव निविशेते प्रतिपदौ, उत द्वियज्ञ कश्चित् कुलायादिं बहुयज्ञं च विशालादिं उत्कृष्येते इति। ▮ प्राप्तम्। द्वित्वबहुत्वयुक्ते ज्योतिष्टोमेन अर्थयोगात् अकृष्येयाताम् प्रतिपदौ। नहि ज्योतिष्टोमस्य द्वौ यजमानौ श्रूयेते, यथा कुलायस्य 'एतेन राजपुरोहितौ सायुज्यकामौ यजेयाताम्' इति।

वा— पूर्ववदेव विचारः। फलमपि सिद्धते। पूर्वत्र प्रधानान्तरेण प्रकृतासमर्थशब्दाभिधेयेन सह संबन्ध आसीत्, इह तु गुणेन यजमानद्वित्वादिना कथञ्चिदाशङ्कितप्रकृतसंबन्धेन। तत्र पूर्वन्यायेनैव सिद्धान्तोत्कर्षं सूत्रम्। न तावत् इह यजमानद्वित्वबहुत्वे विधीयेते, सिद्धवत्तादेन निमित्तीकृत्य प्रवृत्तेः प्रतिपद्विधिपरत्वात्, अनेकविधौ च वाक्यभेदात्। अविहितं चापि न ज्योतिष्टोमे यजमानद्वित्वबहुत्वे विद्येते। कुलायादिषु ■ एकाहेषु अहीनेषु च प्रत्यक्षविहिते विद्येते। 'राजपुरोहितौ यजेयाताम्' 'एतेनैव द्वौ याजयेत्' 'एतेनैव त्रीन् याजयेत्' 'एको द्वौ बहवो वाऽहीनेनेर्यजेरन्' इति। तस्मादुत्कर्षः।

पक्षेणार्थकृतस्येति चेत्। १८॥

भाष्यम्— इति चेत् पश्यसि प्रतिपदौ उत्कृष्येते इति। नैतदेवम्। प्रकृतं हि बाध्येत। बाध्यताम्, अर्थयोगात् द्वाभ्यां यजमानाभ्यां बहुभिश्च यजमानैर्ज्योति-

यत्तु क्रतुसंबन्धो नाभिहित इति, नैष दोषः, प्रतिपच्छब्दादेव क्रतुगामित्वप्रतिपत्तौ सत्यां द्वित्वादिना विशेषप्रतिपत्तिसिद्धेः। यजमानशब्दो वा अन्यथाऽनुपपत्त्या यज्ञमुपस्थापयिष्यति। तस्मात् व्यतिरिक्तसंयोगे सति अस्ति प्रकरणविरोधः। तत्र च श्रुतेर्बलीयस्त्वम्।

शा— 'हीनाङ्गस्यापि नित्यस्य प्रयोगो येन वक्ष्यते। तेनैकत्वं विहाय द्वौ बहवो वा प्रयुञ्जते॥ नैतदेवमशक्यात्वमुपादेयं हि लुप्यते। अनुपादेयमेकत्वं यजमानस्य काम्यवत्॥' तस्मादुत्कर्षः प्रतिपदोः।

सोम— पूर्ववैपरीत्येन प्रत्यवस्थानात् संगतिः। सूत्रार्थस्तु— द्वित्वबहुत्वयुक्तं च प्रतिपद्द्वयं विकृतौ उत्कृष्येत तस्य द्वित्वबहुत्वस्य प्रकृतौ अचोदनात् इति।

वि— 'युवं हीति द्वयोः कर्त्रोर्बहूनां चैत इत्यमूम् (एते इति)। कुर्यात् प्रतिपद ज्योतिष्टोमे साहर्गणेऽन्यथा॥, एकस्य शक्तिराहित्ये ताभ्यां बहुभिरेव वा। ज्योतिष्टोमस्य कार्यत्वात् प्रकृतेऽनैव सा भवेत्॥, यजमानस्य नानात्वं साक्षात् विकृतिषु श्रुतम्। उत्कृष्य प्रतिपत् तेन कुलायादिषु नीयताम्॥' १४.

भाट्ट—ज्योतिष्टोमे 'उपास्मै गायता नरः' इति नित्यां प्रतिपदं विधाय 'युवं हि स्थः स्वर्पती इति द्वयोर्यजमानयोः प्रतिपदं कुर्यात्। एते असृग्रमिन्दवः इति बहुभ्यो यजमानेभ्यः' इति श्रुतम्। तत्र आद्यवाक्ये 'द्वयोर्यजमानयोः' इति यदि सप्तमी, तदा सा निमित्तपरा। यद्यपि च पृथक् विभक्तिश्रवणम्, तथापि हविरार्त्यधिकरणन्यायेन (६।४।६।२२) पार्ष्णिकत्वाभावेन प्रत्येकं निमित्तत्वापर्यवसानात् प्रधानभूतनिमित्तत्वानुरोधेन मिलितयोरेव द्वित्वावच्छिन्नयजमानत्वावच्छिन्नयोः निमित्तत्वं प्रतिपाद्यते। यदि तु षष्ठी, तदा अधिकारित्वाख्यसंबन्धानुवादिका सती स्ववैयर्थ्यपरिहारार्थं पदद्वयेऽपि लक्षणामङ्गीकृत्य लाघवात् द्वियजमानत्वयोरेकं व्याप्यत्वेन निमित्तत्वं प्रतिपादयति, विशेषणविशेष्यभावेऽपि विनिगमनाविरहात्। एवं 'बहुभ्यो यजमानेभ्यः' इति तादर्थ्यचतुर्थ्याऽपि अधिकारित्वसंबन्धानुवादिकया उपनिषन्निमित्तत्वे लक्षणा। अतश्च न अन्यतराविवक्षाप्रसङ्गः। निमित्ते च प्रतिपदुद्देशेन मन्त्रविधानेऽपि विनातीयत्वान्न अनेकोद्देश्यता। प्रकरणाद्वा अधिकारसंबन्धलाभः इति पक्षद्वयेऽपि अविवादम्।

तदिह इमौ मन्त्रौ ज्योतिष्टोमे एव निविशेते, उत द्विबहुयजमानके कुलायाऽहीनादौ इति चिन्तायाम्, प्रकरणाविशेषात् प्रकृते एव निवेशः। न च तत्र निमित्ताभावः, आख्यातेन 'वसन्ते वसन्ते ज्योतिषा यजेत' इत्यादिना उपादेयकर्तृविशेषणत्वेनोक्तस्य एकत्वस्य विवक्षायामपि नित्यत्वेन ज्योतिष्टोमे यथाशक्त्युपबन्धस्य वक्ष्यमाणत्वात्, यदि एको न शक्नुयात्, तदा द्विबहुयजमानकर्तृकप्राप्तेः प्रतिपद्विधानसंभवात्। अथवा यजमानशब्दस्य यागकर्तृमात्रवचनस्य पत्न्यामपि संभवात् आद्यवाक्ये तासत् स्त्रीलिङ्गत्वे बाधकाभावात् पत्नीद्वित्वे स मन्त्रः। द्वितीयवाक्येऽपि पाशाधिकरणन्यायेन लिङ्गानुरोधेन प्रकरणबाधानुपपत्तेः व्यत्ययानुशासनेन पुंलिङ्गस्य स्त्रीत्वपरत्वावगतेः पत्नीबहुत्वे द्वितीयो मन्त्रः। नित्या तु प्रतिपत् पत्न्येकत्वे। इति प्राप्ते, नित्यत्वेऽपि ज्योतिष्टोमस्य न एकत्वे यथाशक्तिन्यायविषयता, उपस्त्यादिवाक्येषु समानाभिधानश्रुत्या भावनायामन्वितस्य तस्य अन्तरङ्गत्वेन अशक्तौ दक्षिणापरिमाणाद्यङ्गान्तरबाधेन अस्यैव अनुग्राह्यत्वात्। किञ्च यद् कृतिसाध्यत्वेनानुष्ठेयतया प्रक्रान्तम्, तत्रैव यथाशक्त्युपबन्धः, न तु अनुष्ठेये कालादौ। अतश्च तद्वदेव अस्यापि न तन्न्यायविषयता, इति प्रकृते यागे द्वित्वबहुत्वे। न च यजमानशब्दः पत्नीपरः, पुंस्येव प्रचुरप्रयोगेण शक्त्यवगमेन लक्षणाया प्रमाणाभावात्, यजमानेभ्य इति पुंलिङ्गस्य 'मास्मै' इत्यस्य मेष्यामिव निषिद्धत्वेन अप्रामाणिकव्यत्ययानुशासनाङ्गीकारानुपपत्तेश्च। अतश्च वाक्येन प्रकरणबाधात् यत्र 'एतेन राजपुरोहितौ सायुज्यकामौ यजेयाताम्' 'एको द्वौ बहवो वा यजेरन्' इति आदत्वेव कुलायाहीनादिषु द्वित्वबहुत्वविधानम्, तत्रैव अस्योत्कर्षः। न चात्र तत्क्रतूपस्थापकाभावः, प्रतिपत्संबन्धेनैव सामान्यतः क्रतुसंबन्धेऽवगते निमित्तघटेन तद्विशेषोपस्थितौ बाधकाभावात्।

मण्डन—'द्वियज्ञे प्रतिपद्विधिः ।' १४.

शंकर—'द्विबहुप्रतिपत् तथा ।' प्रकृते आख्या ।

ॐ द्वित्वबहुत्वयुक्तं चाचोदनात् तस्य । ३।३।९।१७ ॥

'युवं हि स्थः स्वर्पती इति द्वयोर्यजमानयोः प्रतिपदं कुर्यात्' 'एते असृग्रमिन्दव. इति बहुभ्यो यजमानेभ्यः' इति ज्योतिष्टोमे श्रूयते । एतत् द्वित्वबहुत्वयुक्तं मन्त्रजातं राजपुरोहितोभयकर्तृके कुलायाख्ये बहुकर्तृके च अहीने अपकृष्यते । ज्योतिष्टोमे तस्य द्वित्वबहुत्वयुक्तकर्तृकत्वस्य अचोदनात् अविधानात् । तस्मात् ज्योतिष्टोमादपकर्षः । चशब्दो दृष्टान्तार्थः । यथा द्वादशोपसत्ता अपकृष्यते तथा इदमपि अपकृष्यते । इति सिद्धान्तः ।

पक्षेणार्थकृतस्येति चेत् । १८ ॥

पूर्वपक्षी आह । पक्षेण कदाचित् विकल्पेन अर्थकृतस्य अर्थात् प्राप्तस्य द्विबहुयजमानकत्वस्य ज्योतिष्टोमे संभवात् प्रतिपद्द्वयस्य नोत्कर्षः । एकस्य यजमानस्य कदाचित् दक्षिणादिमत्यादानात्तौ एकस्याप्यनेकयजमानकत्वं संभवेत् इति भावः । इति चेत् पूर्वपक्षी ब्रूयात् ।

न, प्रकृतेरेकसंयोगात् । १९ ॥

नेत्याह सिद्धान्ती । कुत. ? प्रकृतेः निखिलसोमप्रकृतेः ज्योतिष्टोमस्य एकसंयोगात् एकेनैव कर्त्रा संबन्धात् । 'सोमेन यजेत' इति उत्पत्तिविधिगतस्य कर्तुरेकत्वस्य बाधासंभवात् । तथा च ज्योतिष्टोमस्य एकमात्रकर्तृकत्वात् प्रतिपदो. उत्कर्ष एव इति । मै

* द्वित्वबहुत्वयुक्तं (३।३।९।१७–१९) इत्यधिकरणे तु यजमानस्य आग्नीध्रमैकत्वमपि अनुपादेय इत्युक्तम् । बाल. पृ १७. * 'द्वित्वबहुत्वयुक्तं चाचोदनात्तस्य' इत्यधिकरणे च एकशेष. 'पुमान् स्त्रिया' इति, स अस्यणाध्याय एवेति भाष्यकारेणोक्तम् । सोम. ६।१।८.

* द्विदेवत्याश्चमसाः ऐन्द्रवायवादयः । चि. ३।२।१३.

* द्विदेवत्यानां शेषाः आग्रयणस्थाल्यामुपनीताः, तत. पात्नीवतो गृह्यते । भा. ३।२।१५।३३ । द्विदेवत्यानां ऐन्द्रवायवादीनां शेषाः आदित्यस्थाल्यां निक्षिप्यन्ते । ततोऽपि पुनः आग्रयणस्थालीमागच्छन्ति । ततश्च पात्नीवतस्य ग्रहणम् । बा. * द्विदेवत्ये आग्नेयशब्दो अग्नीषोमीयपुरोडाशधर्माणामतिदेशः, द्विदेवतात्वसामान्यात् । भा. ८।१।११–२.

* द्विदेवतात्वव्यवहारो मीमांसायाम् । 'सर्वत्र शास्त्रे द्विदेवत्यत्वाभ्युपगमात् ( तद्यथा चतुर्धाकरण–इन्द्रपीत–पूषप्रपिष्टभागविचारेषु सापेक्षाग्निदेवत्यादीनां ऐन्द्राग्न–अग्नीषोमीयादीनां आग्नेयादिशब्दैः केवलाग्न्यादिदेवताकैः असामर्थ्यादग्रहणं इति वक्ष्यति' इति वार्तिकम् ( पृ ४१० ) । अत्र सुधा– न केवलं वार्तिकानां द्विदेवत्यत्वव्यवहारः किन्तु मीमांसकानामपि । 'आग्नेयं चतुर्धा करोति' इत्याग्नेयशब्देन सापेक्षाग्निदेवत्ययोः ऐन्द्राग्नाग्नीषोमीययोः पुरोडाशयोः अग्रहण '*यवस्था वा' ( ३।१।२७ ) इति सूत्रे वक्ष्यते । इन्द्रपीतशब्दगतेन इन्द्रशब्देन सापेक्षेन्द्रदेवताक ऐन्द्राग्नादेः सोमस्य अग्रहणं 'एकस्मिन् वा देवतान्तरात्' ( ३।२।४१ ) इति इन्द्रपीतविचारसिद्धान्तसूत्रे वक्ष्यते । पूषशब्देन सापेक्षपूषदेवत्यस्य ऐन्द्रापौष्णादेरग्रहण 'एकस्मिन्नेकसंयोगात्' ( ३।३।२९ ) इति पूषप्रपिष्टभागविचारे वक्ष्यति । द्विदेवत्यानां दार्शपौर्णमासिकद्विदेवयागप्रकृतिकत्वम् 'ऐन्द्राग्न्यादा०' ( ८।१।२८ ) इति सूत्रे वक्ष्यते । 'आग्नावैष्णवं मेषपतिभ्यां मेषम्' इति श्रुतिगतमेषपतिशब्देन द्विवचनान्तमेषपतिशब्दवाच्यं अग्नीषोमाख्यदेवताद्वय अर्थद्वय आभाष्यते । 'त्वं ह्यग्ने प्रथमो मनोता' इति मनोताख्यो मन्त्रः अन्यदेवत्ययागे ऊहितव्यो न वा इति संदेहमुपन्यस्य 'ननु प्रकृतौ अग्नावेकोऽयं निगदः ( अग्न्यर्थनिगदोऽयम् ) अग्नीषोमौ हि प्रकृतौ देवता । अपरस्त्वाह. । अतस्तावताभिधानात् अविकारेण प्रयोक्तव्य.' इत्याशङ्क्य 'सर्वे अग्नीषोमौ देवता प्रकृतौ, न तु अग्निश्च सोमश्च' इति भाष्यकृत् वक्ष्यति ( भा. पृ १८३८–३९ ) 'मनोतायां तु वचनादविकारः स्यात्' १०।४।४२ इत्यत्र ।

*ब्राह्मणशास्त्रेऽपि द्विदेवत्यत्वव्यवहारोऽस्ति । 'देवताद्वन्द्वे च' ( पा० ६।३।२६ ) इत्यधिकृत्य 'इदमोः सोम वरुणयो.' ( २७ ) इति सोमशब्दे वरुणशब्दे च परभूते अग्निशब्दस्य देवताद्वन्द्वनिमित्त ईत्वं ( अग्नीषोमौ अग्नीवरुणौ इति ) स्मृतम् । सूर्यं चाधिकारे च 'अग्नेः

स्तुत्स्तोमसोमाः' ( पा० ८।३।८२ ) इत्यत्र अग्निशब्दात् परस्य सोमशब्दस्य मूर्धन्यादेशेन षत्वस्मृतेः सोमशब्दस्य अग्निशब्दान्देदावगमात् अर्थात् द्वन्द्वावगतिः । पूर्वपदप्रकृतिस्वराधिकारे 'उभे वनस्पत्यादिषु युगपत्' ( पा० ६।२।१४० ) इत्यनुवर्तमाने 'देवताद्वन्द्वे च' (पा० ६।२।१४१) इत्यनेन इन्द्राग्नी इन्द्रावरुणौ इत्यादिषु उभयपदप्रकृतिस्वरस्य उक्तम् । वृद्ध्यधिकारे च 'इद्धगसिन्ध्वन्ते पूर्वपदस्य च' (पा० ७।३।१९) इत्यनुवर्तमाने 'देवताद्वन्द्वे च' ( पा० ७।३।२१ ) इति आग्नावैष्णवादिशब्दे उभयपदवृद्धिरुक्ता । 'आनङ् ऋतो द्वन्द्वे' ( पा० ६।३।२५ ) इत्यनुवर्तमाने 'देवताद्वन्द्वे च' ( पा० ६।३।२६ ) इत्यानङादेशः मित्रावरुणौ इत्युक्तः । इति । पृ. ६४७–४८.

* द्विपत्नीकः बहुपत्नीकश्चास्ति यजमानः । भा. ९।१।६।२०.

* द्विपश्वादिविकृतौ देवताऽनुसारेण मेधपतिशब्दस्य वचने ऊहः कर्तव्यः ( मेधपतये मेधपतिभ्यां मेधपतिभ्यः इति यथायथम् ) । भा. ९।३।१२।३३–४१.

* द्विपशुकयागे अग्निगुप्रैषे एकधाशब्दस्य अभ्यासः 'एकधैकधा अनयोस्त्वचो' इति । वि. ९।४।११,

* द्विपशुकयागे पाशमन्त्रयोः एकवचनान्तबहुवचनान्तपाशशब्दस्य द्विवचनान्तेन ऊहः । ९।१।४.

ꣿ द्विपुरोडाशायां स्यादन्तरार्थत्वात् । १०।८।१८।६२ ॥

सोमात् प्राक् पौर्णमासी एकपुरोडाशा, सोमादूर्ध्वं द्विपुरोडाशा, अग्नीषोमीयपुरोडाशस्यापि सत्त्वात् । उपांशुयाजः पौर्णमास्यां भवति इत्याम्नानम् । स च द्विपुरोडाशायां आग्नेयैन्द्राग्नपुरोडाशद्वयमध्ये स्यात् अन्तरार्थत्वात् अन्तरापदेन उक्तस्य द्वयोर्मध्यदेशस्य अर्थस्य द्विपुरोडाशायामेव संभवात् । 'उपांशुयाजमन्तरा यजति' इति हि श्रुतम् । एकपुरोडाशायां अन्तरापदार्थ एव नास्ति । इति सोमात् प्राक् एकपुरोडाशायां उपांशुयाजो न स्यात् इति पूर्वपक्षः ।

अजामिकरणार्थत्वाच्च । ६३ ॥

जामि आलस्यम्, जामिकरणं आलस्योत्पादनम्, अजामिकरणं आलस्योत्पत्तिर्यथा न स्यात् तथा करणम्, अजामिकरणार्थं पुरोडाशयोर्मध्ये उपांशुयाजः इत्युक्तम् 'जामि वा एतद् यज्ञस्य क्रियते यदन्वञ्चौ पुरोडाशौ, उपांशुयाजमन्तरा यजति अजामित्वाय' इति वाक्ये । तदेतत् पुरोडाशद्वये संभवति । तस्मात् द्विपुरोडाशायां पौर्णमास्यां उपांशुयाजः न तु सोमात् प्राक् एकपुरोडाशायाम् । इति पूर्वपक्षे हेत्वन्तरम् ।

तदर्थमिति चेत् । ६४ ॥

तदर्थम्, उपांशुयाजस्य तदर्थं पुरोडाशयोरन्तरालत्वसिद्ध्यर्थं द्विपुरोडाशायामेव सोमोत्तरं पौर्णमास्यां उपांशुयाजः स्यात् । इति चेत् । सूत्रत्रयेणोक्तस्य पूर्वपक्षस्य अनुवादोऽयम् । त्रिभिर्हि सूत्रकारस्य कृतिर्भवति इति प्रवादः ।

न, तत्प्रधानत्वात् । ६५ ॥

न द्विपुरोडाशायामेव पौर्णमास्यां उपांशुयाजः, किन्तु एकपुरोडाशायामपि । तत्प्रधानत्वात् पौर्णमासीप्रधानत्वात् उपांशुयाजस्य । अन्तराले ▮ तस्य गुणः । तस्मात् असत्यपि अन्तराले एकपुरोडाशायामपि उपांशुयाजः कर्तव्यः इति सिद्धान्तः ।

अविहितेन च संबन्धात् । ६६ ॥

अन्तरालस्य आवश्यकत्वे तु अविहितेन अविहितेन अन्तरालेन विहितस्य उपांशुयाजस्य संबन्धः कर्तव्यः स्यात् । न च विहितस्य अविहितेन संबन्धो युक्तः । तस्मात् एकपुरोडाशायामपि उपांशुयाजः कर्तव्यः । इति सिद्धान्ते युक्त्यन्तरम् ।

उत्पत्तेस्तु निवेशः स्याद्, गुणस्यानुपरोधेनार्थस्य नियमानत्वाद्, विधानादन्तराऽर्थस्य नैमित्तिकत्वात्, तदभावेऽश्रुती स्यात् । ६७ ॥

अन्तरालस्य विधानं नास्तीति सिद्धान्तोक्तं पूर्वपक्षी निरस्यति । अन्तराऽर्थस्य अन्तरालस्य 'अन्तरा यजति' इति वाक्येन नैमित्तिकत्वात् अपूर्वसाधनत्वेन विधानात् न अविधानम् । तस्य अन्तरालस्य गुणस्य अनुपरोधेन अविरोधेन अर्थस्य द्विपुरोडाशायाः पौर्णमास्या नियम-

तु यदा अग्निः तदा गुणकामाना प्रवृत्तिः इति । टुप्. १०।८।११।२७. * द्विरात्रादौ अहर्गणे चोदकप्राप्त कृष्णविषाणाप्रासन विहितं कण्डूयनमनाधितु चरमे अहन्येव कर्तव्यम् । वि. ११।३।६. * द्विरात्रादौ द्वितीयादिरूपे एव अन्तिमे ॥ पत्नीसंयाजान्तत्वम् । भाट्ट. ९।१।९ पृ. ६५.

* द्विरात्राद्यहर्गणेषु अहीनद्वादशाहगतमध्यदशाहस्य प्रथमद्वयहादेर्विध्यन्तो ग्राह्यः । भा १०।५।४।२२–२३.

* द्विरात्रादिविकृतौ अभिचरणार्थादिदेशो भवति । आन्यत्रिप्राद्यधिकरणम् । भा. २०।८।११।२३–२८.

* द्विरात्रादिविकृतिषु द्वादशाहिकदशरात्रगतानां द्वितीयादीनामन्त्येऽपि यथाप्रकृति पत्नीसंयाजान्ततैवानुष्ठान इति पूर्वपक्षे नोहः, सिद्धान्ते तु द्वितीयतया पत्नीसंयाजान्तस्यापि इह अन्त्यतया सकलानुष्ठानं इति प्रयोग निकारात् ऊहः । सोम. ९।१।८.

* द्विरात्रत्रिरात्राद्यो दीर्घसोमाः सोमाहृत्याः । दीर्घयोगे अविषयणफलकयोः छेतदन कार्यम् । वि. ३।३।१६, * द्विरात्रत्रिरात्रादीनां द्वादशाहः अहीनरूपः प्रकृतिः । १०।५।४.

* द्विरात्रत्रिरात्रादिविकृतिषु द्वादशाहस्य आदितः क्रमेण ( द्वितीयमहरारभ्य ) अह अहो. अहा प्रवृत्तिः । अवशिष्टाना तु लोपः । वि. १०।५।१.

**द्विरात्रन्यायः** । द्विरात्राद्यहर्गणेषु अहीनद्वादशाहगतमध्यमदशाहस्य प्रथमद्वयहादेर्विध्यन्तो ग्राह्य. ॥

चोदनासु त्वपूर्वत्वाल्लिङ्गेन धर्मनियम. स्यात् । १०।५।४।१२॥

भाष्यम्— सन्ति द्विरात्राद्योऽहर्गणाः 'द्विरात्रेण यजेत' इत्येवमादयः । तेषु किं कृत्स्नस्य द्वादशाहस्य विध्यन्त. प्रवर्तते, उत प्रायणीयोदयनीये वर्जयित्वा दशरात्रस्येति । किं प्राप्तम् ? अविशेषात् कृत्स्नस्येति । एवं प्राप्ते, ब्रूमः । चोदनासु तासु प्रायणीयोदयनीययो. पूर्वत्वेन असंभवात् दशरात्रस्य विध्यन्तः प्रवर्तते । केन हेतुना ? लिङ्गेन विध्यन्तो नियम्येत । किं लिङ्गं भवति ? एवमाह 'यत्प्रथमं तद्द्वितीयं यद्द्वितीयं तत्तृतीयम्, जगतीमन्तर्गच्छति' इति । एवं ज्ञापयति, यत्प्रथमं द्विरात्रस्य, तद्द्वितीयं द्वादशाहस्य गायत्रम् । यद् द्वितीयं द्विरात्रस्य, तत्तृतीयं त्रैष्टुभम् । जगतीमन्तर्गच्छतीति षडहतृतीयं जागतमहः अन्तरीयमाणं दर्शयन् दशरात्रस्य प्रवृत्तिं दर्शयति । यत्प्रथममिति द्विरात्रस्य वादः, प्रकरणात् । तत्तृतीयमिति द्वादशाहस्य, द्विरात्रे तृतीयाभावात् । अपिच इदमपरं लिङ्गम्, गायत्रं प्रथममहस्त्रैष्टुभं द्वितीयं जगतीमन्तर्गच्छतीति, अन्तराये षडहतृतीयं जागतं दर्शयति । तस्मात् दशरात्रस्य प्रवृत्तिः ।

प्राप्तिस्तु रात्रिशब्दसंबन्धात् । १३ ॥

भाष्यम्— द्विरात्रेण यजेतेति रात्रिशब्दः । इहापि दशरात्र इति स एव । तदेतस्मात् प्रकृतिलिङ्गात् दशरात्रस्य विध्यन्तः इति प्राप्ते लिङ्गदर्शनम् ।

सोम— आद्योपादानापवादात् संगतिः । सूत्रार्थस्तु— द्विरात्रादिचोदनासु प्रायणीयोदयनीययोः अपूर्वत्वात् प्रकृतिवदसंभवात् लिङ्गेन मध्यमदशरात्रधर्मनियमः स्यादिति ।

वि— 'द्विरात्रादौ द्वादशाहप्रायणीयादितः क्रमः ? आद्यन्तौ वर्जयित्वा वा, विशेषाभावतोऽग्रिम. ॥, द्वादशाहे द्वितीयस्य द्विरात्रे प्रथमत्वतः । जागतस्यान्तरायाच्च विध्यन्तो दशरात्रगः ॥' (आगतस्य उदयनीयस्येत्यर्थ. ) ।

भाट्ट— द्विरात्रादिष्वहर्गणेषु तुल्यागणत्वसामान्यात् द्वादशाहस्य प्रवृत्तिरित्युक्तम् । अतश्च प्रायणीयोदयनीययोरपि द्वादशाहे प्रकरत्वेन धर्मग्राहकत्वात्तयोरपि गणनान्तर्गतत्वाविशेषात् द्विरात्रादिप्रकृतित्वम्, अतश्च 'प्रथमस्य प्रथमम्' इत्येव क्रमेण स्वावस्थामात्रादपि प्रकृतिविकारभावनियमात् द्विरात्रादौ तृतीयादिप्रभृति द्वादशाहिकाहर्धर्मालोपः । इति प्राप्ते, प्रायणीयोदयनीये वर्जयित्वा मध्यमस्य दशरात्रस्य पृथगुपपात्तो दशरात्रसमाख्या च भवति 'पृष्ठ्यषडहाद्यारम्भेत्र ऐन्द्रवायवाग्र प्रथममहश्चतुर्थं छन्दोमं अविवाक्यं दशममहः' इत्यादिव्यवहारात् । तस्य च प्रयोजनान्तरासंभवात् द्विरात्राद्यहर्गणान्तराणां स्वनामप्रकृति वनिश्चयफला । अत एव यत्र प्रयोजनान्तरसंभवः, यथा दशरात्रमध्येऽपि षडहस्य पृथगुपपात्तफलत्वं । तथा हि गवामयनादौ पृष्ठ्यषडहस्य पञ्चदिशवत्पठितिरेव प्रयोजनमिति न तथा द्विरात्रादीनां षडहप्रकृति तनियमः ।

प्रकृते ॥ प्रयोजनान्तराभावात् वैयर्थ्यपरिहारार्थं सत्यपि धर्माणां प्रकृतौ अहर्गणाङ्गत्वे विकृतौ गणत्वसामान्येन धर्मप्रदेशकता दशरात्रस्यैवेति विज्ञायते । अत एव प्राथम्ययोगाभावे प्रायणीयोदयनीययोर्नामातिदेशेन धर्मप्रेरकत्वेऽपि न क्षतिः । न चैव दशरात्रस्याविकृतत्वेन दशरात्रस्य नामातिदेशविधया चोदनालिङ्गातिदेशविधयैव वा सार्थकत्वोपपत्तेः सर्वत्रातिदेशे प्रमाणाभावः । द्विरात्रे 'यत्प्रथमं तद् द्वितीयम्, यद्द्वितीयं तत्तृतीयम्, जगतीमन्तर्गच्छति' इति लिङ्गोपवृंहितात् रात्रान्तशब्दवत्त्वसामान्यात् शब्दसादृश्यविशेषादेव सार्वत्रिकत्वमवगतं । द्विरात्रे यद् प्रथममहः तत् द्वादशाहिकस्य द्वितीयस्याह्नो विकारः इति तदर्थात् । जगतीमन्तर्गच्छति त्यजतीत्यर्थः । प्रायणीयातिदेशो हि द्विरात्रे पञ्चाहद्वितीयस्य त्रिष्टुभस्यैव स्थानं स्यात्, न तु जागतस्य पञ्चाहतृतीयस्य । अत इदमप्यपरं लिङ्गम् । तथा द्विरात्रान्तरे 'गायत्रं प्रथमं त्रैष्टुभं द्वितीयम्' इत्यपि लिङ्गम् । प्रायणीयातिदेशे हि तस्य नानाच्छन्दस्कत्वात् नानाच्छन्दस्कं प्रथमं पञ्चाहप्रथमस्य च गायत्रत्वात् गायत्रं द्वितीयमिति वाच्यं स्यात् । अतो लिङ्गवशात् सार्वत्रिकत्वसिद्धिः । तेन द्विरात्रादौ चतुर्थप्रभृति द्वादशाहिकधर्मोणा भाव. ।

मण्डन— 'अहर्गणे स्युर्दशरात्रधर्माः ।'

शंकर— 'दशाहो मध्यमो गणे ।'

• द्विरात्रप्रकरणे 'यत् प्रथममहः तद् द्वितीयम्, यद् द्वितीय तत्तृतीयम्' इति श्रुतम् । द्विरात्रस्य यत् प्रथममहः, तत् द्वादशाहस्य द्वितीयम्, यच्च द्विरात्रस्य द्वितीयमहः, तत् द्वादशाहस्य तृतीयमहः इति तदर्थः । अनेन प्रकृतिविकारभाव उक्तः । वि १०।६।८.

• द्विवचनान्तेन मेधपतिशब्देन बहुदेवत्ये पशौ एकवचनान्तस्य विकल्प । भा ९।३।१९।४१–४२.

• द्विपाद्वर्त्म द्वितीय चित्यन्तर्धिन्वीनेति अत्रो नैमित्तिकमेव, न नित्यम् । भा ५।३।२।४.

• द्विसामके सहप्रयोगवादे रथन्तरबृहद्धर्माणा व्यवस्था । रथन्तरे प्रयुज्यमाने तद्धर्माः प्रयोक्तव्याः, बृहति प्रयुज्यमाने बृहद्धर्माः इति । भा. ९।२।१७।४९–५०

• 'पशुहिंसादिर्मयन्ये यज्ञे तुष्यन्ति हि द्विजाः ।' 'शूद्रान्नभोजनेनापि तुष्यन्त्यन्ये द्विजातयः ।' वा. १।३।३।७ पृ. २०४. • द्विजानां ऋणत्रयापाकरणम् नित्यता । विन्दु. ६।२।१।३१.

• द्विजन्मा । 'त्रिर्ह वै यजमानो जायते, मिथुनादन्यत् जायते यज्ञादन्यत् । यदग्निं मिथुनाज्जायते, तदस्मै लोकाय जायते, अथ यद्यज्ञाज्जायते, तदमुष्मै लोकाय जायते' । जैब्रा. १।२५९.

• द्वितीयमध्यायं 'नानाकर्मलक्षणम्' इत्याचक्षते । भा. २।१।१।१ पृ. ३७९.

• द्वितीयाध्यायस्य द्वितीये पादे निश्चितविधेयत्वस्य गुणस्य च पूर्वनाऽसमवात् भेदकत्वम्, च या पुनः विधानेन अवसाद्यत्वेन वा पूर्वत्र संभवात् अभेदकता, इति निर्णीतम् । सु. पृ. ८८५, • द्वितीयाध्यायस्य तृतीये पादे संदिग्धविधेयत्वस्य च विधेयत्वात् भेदकत्वम्, च वा तदभावात् अभेदकता इति वक्ष्यते । पृ. ८८५, • द्वितीयाध्याये अङ्गाङ्गिभावावधारणार्थत्वेन अनुष्ठानोपयोगित्वात् शास्त्राधेयरूपकर्मभेद एव विचार्यः, नानुपयोगी शास्त्रभेदः, अनुष्ठानपर्यवसायित्वात् मीमांसाशास्त्रस्य । प्रभाकरास्तु शास्त्रभेदमध्यायार्थमाचक्षते । पृ ५४०. • द्वितीयाध्याये उत्पत्तिरूपा विधेरवस्था निरूपिता । कणिका पृ. ४१२.

• द्वितीयाध्यायार्थः 'अनन्तरं प्रधानाप्रधानानि परीक्षिष्यन्ते भिन्नान्यभिन्नानि चेति' । भा. २।१।१।१ पृ. ३७१. • द्वितीयाध्यायार्थः । 'उपोद्घातः कर्मभेदमानं तदपवादश्च । प्रयोगभेद इत्येते द्वितीयाध्यायपादकाः ॥' द्वितीयाध्यायस्य प्रथमे पादे आख्यातमेव अपूर्वबोधकम्, अपूर्वसद्भावश्च इत्यादिकं कर्मभेदचिन्तोपयुक्तः उपोद्घातो वर्णितः । द्वितीये धातुभेदपुनरुक्त्यादिभिः कर्मभेदः । तृतीये रथन्तरादीनां कर्मभेदप्रामाण्यापवादः । चतुर्थे नित्यकाम्ययोः प्रयोगयोर्भेदः । वि प्रस्तावनायां श्लो.१४। 'मानाधीनस्य धर्मस्य द्वितीये भेद उच्यते ।' द्वितीयाध्यायारम्भे । • द्वितीयाध्यायार्थः । कर्मभेदाभेदवत् फलपूर्वभेदाभेदावपि लक्षणार्थौ इति । वा. २।२।१३।२८ पृ. ५६४. • द्वितीयाध्यायार्थ. । तदिह षड्विधः

कर्मभेदो वक्ष्यते शब्दान्तरम्, अभ्यास, संख्या, गुणः, प्रक्रिया (प्रकरणं), नामधेयं इति। तदेतत् नानाकर्मलक्षणं इत्यध्याय आचक्षते। एतच्चात्यर्थेन। अतोऽन्यत् उपोद्घात प्रसङ्गानुप्रसक्तं चेति। भा. २।१।१।१ पृ. ३७२. ● द्वितीयाध्यायार्थः। 'शब्दान्तरादिभिर्भेदो लक्षणार्थोऽभिधीयते।' या. २।२।१।१ पृ. ४६१.

■ द्वितीयाध्यायोत्तरं तृतीयः। कुतः? 'भेदो यावन्नावधृतः तावच्छेषशेषिभावो नास्ति' इति। या. ७।१।१।१ पृ. १५२४.

● द्वितीयादिषु प्राप्तेन अध्यायव्यूहेन उत्पत्तिविनियोगप्रयोगरूपविधिनिरूपणपरेण कर्तव्यताविषयः कर्म साङ्गमनुष्ठेयं समर्पितम्। कणिका. पृ. ४२९.

● द्वितीयतृतीयाध्याययोः संबन्धः 'यस्माद्भेदमविज्ञाय न शक्यं शेषलक्षणम्। विज्ञातुमत एतस्य तदानन्तर्यमुच्यते॥ भिन्नानां हि पदार्थानां शेषशेषित्वसंभवः। एकत्वे नापदिश्येत कः शेषः कस्य शेषिणः॥ भेदानन्तरवक्तव्यं शेषलक्षणमेव च। प्रयोजकत्वादीनां शेषत्वाधीननिरूपणात्। अयमेव च संबन्धः समतोऽध्याययोर्द्वयोः॥' या. ३।१।१।१ पृ. ६४८–४९.

● द्वितीया गुणभूतेऽपि भवति यथा 'सक्तून् जुहोति' 'माषान् जुहोति' 'एककपालं जुहोति' इति। भा २।१।४।११. ■ द्वितीया चतुर्थ्या बाध्यते। मुख्यमुदाहरणम्। बाल पृ. १४४. ● द्वितीया तद्धितेन बाध्यते। मुख्यमुदाहरणम्। पृ. १४४. ● द्वितीया तावत् गुणभावं नैव ब्रवीति इति व्याख्यातं सक्त्वधिकरणे (२।१।४।१२)। या. ११।१।७।१४ पृ. ७२१. ● द्वितीया मन्त्रवर्णेन बाध्यते यथा उपांशुयाजे अग्नीषोमीययाज्यामन्त्रवर्णेन 'तावग्नीषोमावाज्यस्येव नौ' इति। बाल. पृ. १४४. ● द्वितीया विभक्तिः ईप्सिततमे भवति। भा. १०।१।७।१४.

● द्वितीया विभक्तिः। किं गुणकर्मणि द्रव्ये द्वितीया दृष्टेति यतो द्वितीयादर्शनात् (अग्निं संमार्ष्टि) इत्यपि सामान्यतोदृष्टेन गुणकर्मता? नेति ब्रूमः। द्वितीया विभक्तिः कर्तुरीप्सिततमे स्मर्यते। भा. २।१।४।१०। इति चेत् पश्यामि द्वितीयादर्शनात् प्रधानभूतमेव द्रव्यमिति। नैतदेवम्। गुणभूतेऽपि द्वितीया भवति। तथाहि दृश्यते 'सक्तून् जुहोति, माषान् जुहोति' इति। ११. वा—यस्तु आह, 'अन्वयव्यतिरेकाभ्यामुपकारानुसारिता। शेषत्वस्य, द्वितीया तु प्राधान्यव्यभिचारिणी॥' तत्रास्य प्रमाणं युक्तम्, यदैकान्तिकम्। अनैकान्तिकी च प्राधान्ये द्वितीया, गुणभूतद्रव्योपदेशेऽपि दृष्टत्वात् 'सक्तून् जुहोति' इति। तथा 'प्रयाजशेषेण हवींष्यभिघारयति' इति अन्तरेणापि द्वितीयां आज्यप्राधान्यं दृष्टम्। अतो 'व्रीहीनवहन्ति' इत्यत्र उभयसंभवेऽपि उपकारदर्शनकृतमेव द्रव्यप्राधान्यम्, न द्वितीयाकृतम्। न च तत् संमार्गप्रोक्षणादिषु अस्ति, इति इहापि द्वितीयया द्रव्यमेव अपदिश्यतामिति।

भा—न गुणभूतेऽपि द्वितीया। एवं हि अभियुक्ता उपदिशन्ति 'कर्मणि द्वितीया' 'कर्तुरीप्सिततमं कर्म' इति। न च लोके गुणभूते कश्चित् द्वितीयां पश्यामः। यदपि च 'तण्डुलानोदनं पच' इति, ओदनार्थं तण्डुलान् संस्कुरु इति ईप्सिता एव तण्डुलाः। 'मत्स्यजात् शिलण्डकान् कुरु' इति मत्स्या एव तेनाकारेण संस्कृता ईप्सिता इति समाभिप्रायः। लौकिकश्च प्रयोगः शब्दार्थपरिच्छेदे हेतुः, न वैदिकः। या लौकिके जुहोति इति प्रयोगे द्वितीया, शक्यते तत्र वक्तुं ईप्सिततमे एव स प्रयोग इति, 'तण्डुलानग्नौ जुहुधि' तण्डुलानग्नौ होमेन संपन्नय इति। लोके भवति हि बहुप्रकारा विवक्षा। अन्यायश्चानेकार्थत्वम्। तेन प्रधानभावेन सिद्धा सती द्वितीया गुणभावेन कल्प्येत। वेदे तु कथं द्वितीयानिर्दिष्टे गुणभावः इति? द्वितीयानिर्देशात् प्राधान्यमेवावगच्छामः। १२। वा—विद्वत् लाघवं प्रयोगाः। किं कारणम्? 'आचारत्वात् प्रयोगो हि स्मृत्या सर्वत्र बाध्यते। विवक्षाऽनेकधा चात्र स्मरणे त्वेकरूपता॥' यदि हि आचारस्य ऐकरूप्यं भवेत्, नैव स्मृतयः प्रवर्तेरन्। स एव तु संकीर्णत्वात् अस्फुटः स्मरणेन प्रतिपाद्यते। स्मर्यते च द्वितीयायाः प्राधान्यमर्थः। 'कर्मणि द्वितीया', 'कर्तुरीप्सिततमं कर्म' इति। तथा लोकवेदयोः प्रयुज्यते 'घटं करोति', 'व्रीहीनवहन्ति' इति। यानि च लोके व्यभिचारवदुदाहरणानि तान्युदाहृतानि (भाष्ये) 'तण्डुलानोदनं पच', 'मत्स्यजान् शिल-

पचकान् कुरु', 'तण्डुलानन्नं कुरु' इति । तण्डुलैः पचस्व इति च प्रयोक्तव्ये या द्वितीया प्रयुज्यते, सन्नं तृतीयासमानार्था सा इति गम्यते । तथोच्यते । 'सर्वे पाकादिसंबन्धे द्रव्यभावात्तण्डुलादयः । प्राधान्यांश-मुपादाय द्वितीया तत्र वर्तते ॥' यदा पदार्थान्तर-भूतौदनशिवण्डकसाधनत्वेन तण्डुलप्रत्ययाः विवक्ष्यन्ते, तदा तृतीयाऽन्तपदभाजो भवन्ति । यदा तु भोजनयोग्यौ-दनावस्थाविरहितत्वेन तण्डुलाः, माङ्गल्यार्थं च शिवण्डकाकारेण पररूपा दृश्यन्ते । तथा वेदवाक्यावगत-गुणभावाश्च ते तु यवाधनके अग्निहोत्रे गुणभूतास्तण्डुलाः रमणीयत्वात् कस्मिंश्चित् प्राधान्याः स्वकर्मसंयोगदर्शनार्थं तण्डुलाः होमसंबन्धित्वेन अभिप्रेताः । स एवं प्रेष्यति गुणरामा वा 'यवमात्र तण्डुलानन्नं कुरु' इति, तदा द्वितीयाऽर्थमाक्षं भवति । भवति हि लोके बहुधरता विवक्षेति । गुणभूतेऽप्यर्थे केनचित् कारणेन कश्चित् प्राधान्यादौ विवक्ष्यते, तथा प्रधानभूतेषु गुणांशः । कदाचिदुभौ, कदाचिदुभौ । न च यत् विवक्ष्यते, तत् शब्देनाभिधातव्यं इत्यत्र प्रमाणम् । विवक्षासंचयार्थं तु लक्षणाद्युपायान्तराश्रयणम्, न स्वार्थत्यागः । तस्मात् प्राधान्यमेव द्वितीयाऽर्थः ।

* द्वितीया विभक्तिः क्रियासंबन्धे भवति । कारक-विभक्तिर्हि सा । कारकं क्रियाया एव भवति, न द्रव्यस्य । भा. १०।२।२८।६९, * द्वितीया विभक्तिः प्रधानविधि-लक्षणम् । यथा 'रथंतरं गायति' 'बृहत् गायति' इति । ९।२।२।३. * 'प्रातिपदिकादुत्पन्ना द्वितीया विभक्तिः प्रातिपदिकार्थो विशेषक इत्याह' इत्युक्तं भाष्ये । श्यामा. एकादशाध्यायार्थविचारे । द्वितीयया कर्मकारकविभक्त्या प्राधान्यमवगम्यते कर्मणः । त्रि २।१।३, * द्वितीयया ( यहं संमार्ष्टि ) ग्रहस्य उद्देश्यतया प्रयोजनवत्तया च प्राधान्यं गम्यते । ३।१।७. * द्वितीयया देवताविधिः । 'देवताविधिरपि तद्धित—चतुर्थी—मन्त्रवर्ण—द्वितीया—सर्वनामभेदात् पञ्चविधः ।' बाल. पृ. २२, * द्वितीयायाः ईप्सितानीप्सितकर्मणो. अनुगतं साध्यत्वं शक्यतावच्छे-दकम् । पृ. ७५. * द्वितीयायाः उत्पाद्य—आप्य—विकार्य—संस्कार्यात्मकचतुर्विधकर्मसाधारण्यम् । सु. पृ ९१३.

* द्वितीयायाः कर्मत्वमर्थः । तच्च क्रियाजन्यफलशालि-त्वम् । 'घटं पश्यति' इत्यत्र दर्शनजन्यज्ञातताया घटनिष्ठ-त्वात् कर्मत्वमन्वयः । ननु एवं 'चैत्रो ग्रामं गच्छति' इत्यादौ चैत्रस्य कर्मत्वापत्तिः, क्रियाजन्यसंयोगशालित्वात् । किं च त्यजतिगच्छत्योः पर्यायत्वापत्तिः । इति चेत् । अत्र नैयायिकाः । परसमवेतं क्रियाविशेषणम्, धात्वर्थता-ऽवच्छेदकं फलविशेषणम् । परत्वं च द्वितीयाप्रकृत्यर्था-पेक्षया । एवं 'चैत्रो ग्रामं गच्छति' इत्यादौ चैत्रसमवेत-व्यापारजन्यधात्वर्थताऽवच्छेदकसंयोगशालितया ग्रामस्य कर्मता । शाब्दबोधोऽपि ग्रामसमवेतधात्वर्थताऽवच्छेदक-संयोगानुकूलग्रामान्यसमवेतव्यापाराश्रयत्वमिति चैत्रः इति । त्यजतेः विभागजनकव्यापारे शक्तिः इति नोक्तदोषः इत्याहुः ।

तच्च कर्म द्विविधम् । 'कर्तुरीप्सिततमं कर्म' ( पा. १।४।४९ ) 'तथायुक्तं चानीप्सितम्' ( ५० ) इति व्याकरणात् । तत्र आद्यं चतुर्धा । उत्पाद्य—प्राप्य—विकार्य—संस्कार्यभेदात् । उत्पत्तिर्नाम येनाकारेण कारकं अभि-धातोपात्तम्, तस्य अवस्था एवोत्पादनम् । तस्यैव सतः अप्राप्तस्य प्राप्यं प्राप्तिः । वस्तुतत्त्वातिशयोत्पादनं विकृतिः । तस्यैव अदृष्टातिशयोत्पादनं संस्कारः इति । यथा यूपं छिनत्ति, घटं कुरुते, पयो दोग्धि, व्रीहीनवहन्ति, व्रीहीन् प्रोक्षति इति । एतदुक्तं वाक्यपदीये 'यदसज्जायते सद्वा जन्मना यत् प्रकाश्यते । तन्निर्वर्त्यं विकार्यं तु द्वेधा कर्म व्यवस्थितम् ॥ प्रकृत्युच्छेदसंभूत किंचित् काष्ठादि भस्मवत् । किंचिद्गुणान्तरोत्पत्त्या सुवर्णादिविकारवत् ॥ क्रियाकृतविशेषाणां सिद्धिर्यत्र न गम्यते । दर्शनादनुमानाद्वा तत्प्राप्यमिति कथ्यते ॥' इति । ( चौखम्बामुद्रिते नोपलब्धमिदमस्माभि. । के. )

अनीप्सितमपि चतुर्विधम् । उदासीनम्, द्वेष्यम्, संज्ञान्तरैरनाख्यातम्, अन्यपूर्वकं च । यथा तृणं स्पृशति, विषं भुङ्क्ते, गां दोग्धि, ग्राममनुरुणद्धि, अग्निमनुभवति इति च । अत्र ईप्सितत्वानीप्सितत्वयोः अनिरूप्यं इति सोमेश्वरः । ईप्सितानीप्सितानुगतसाध्यत्वं न द्वितीयार्थो गौरवात् । न च शक्तिद्वयानर्थक्यम् । 'वारणार्थानामीप्सितः' ( पा० १।४।२७ ) इति 'यवेभ्यो गां वारयति' इत्यत्र

यवानामीप्सितत्वेन अपादानतया ईप्सिततमे गावि द्वितीया-प्राप्त्यर्थत्वात् आवश्यं, 'विप मद्यवति' इत्यादौ द्वितीय स्यापि सार्थक्यात् ।

'अकथितं च' (पा० १।४।५१) । दुह्याद्यादि-द्विकर्मकधातूना अपादानादिकारके, अविवक्षितत्वं धात्वर्थताऽवच्छेदकफलशालि व्याप्यमानं द्वितीय कर्म । गां पयो दोग्धि, राजानं याचते वसुधाम्, अजां ग्रामं नयति । गोकर्मकदोहेन पयो भावयति इति बोधः । (पयःकर्मकदोहेन गां भावयति इति—) विपरीतं वा । अत्र धात्वर्थव्याप्यमानमेकं कर्म, व्याप्यव्याप्यमानं द्वितीयम् । अत एव 'तां पयसि दध्यानयति' इत्यत्र द्वितीयकर्मा-पेक्षया पयसः कर्मत्वेनैव अन्वयः ।

'गतिबुद्धिप्रत्यवसानार्थशब्दकर्माकर्मकाणामणि कर्ता स णौ' (पा० १।४।५२) गत्यर्थकबुद्ध्यर्थकप्रत्यव-सानार्थकाना शब्दकर्मकाणां अकर्मणा च धातूनाम् धातुना अण्यन्तानां समभिव्याहारे यः कर्ता, स तेषां ण्यन्तानां समभिव्याहारे कर्म । गुरुं ग्रामं गमयति, शिष्यं शास्त्रं बोधयति, मन्त्रं यजमानं पाठयति, विष्णुं शाययति । अत्रापि व्याप्यमानत्वम् ।

'हृक्रोरन्यतरस्याम्' (पा० १।४।५३) हरणार्थकानां करणार्थकानां च समभिव्याहारे द्वितीया तृतीया च । शिष्येण शिष्यं वा भारं हारयति कारयति च । तस्मात् साधकत्वं द्वितीयार्थः इति पार्थसारथिः ।

यत्र च द्वितीयाऽर्थस्य न साक्षात् क्रियाऽन्वयः तत्र उपपदविभक्तित्वम् । यथा 'अन्तराऽन्तरेणयुक्ते' (पा० २।३।४) त्वां मां च अन्तरा अन्तरेण वा हरिरस्ति । अत्र संबन्धे द्वितीयाया लक्षणा । उभयसंबन्ध्यन्तराळवर्ती हरिः इति बोधः ।

'कालाध्वनोरत्यन्तसंयोगे' (पा० २।३।५) कालाध्व वाचिपदसमभिव्याहृतद्वितीयायाः अत्यन्तसंयोगो व्याप्तिरर्थः । 'मासमधीते, क्रोशं पर्वतस्तिष्ठति' । मासाभिव्याप्ति विशिष्टमध्ययनम्, क्रोशाभिव्याप्तिविशिष्टपर्वतस्थितिः इति बोधः । अभिव्याप्तेः पर्वतसंबन्धित्वात् उपपदविभक्तित्वम् ।

'कर्मप्रवचनीययुक्ते द्वितीया' (पा० २।३।८) उप-लक्षणार्थक— अनु—प्रति— पर्यादिसमभिव्याहृतकर्मप्रवच-नीयसंज्ञकानां योगे द्वितीया । जपमनु प्रावर्षत्, नदी-मन्ववसिता सेना, अनु हरिं सुराः, उप हरिं सुराः, वृक्षं प्रति परि अनु वा विद्योतते विद्युत्, भक्तो विष्णुं प्रति परि अनु वा, लक्ष्मीर्हरिं प्रति परि अनु वा, वृक्षंवृक्षं प्रति परि अनु वा सिञ्चति, हरिमभि वर्तते ।

'गत्यर्थकर्मणि द्वितीयाचतुर्थ्यौ चेष्टायामनध्वनि' (पा० २।३।१२) अध्वभिन्ने गत्यर्थानां कर्मणि एते स्तः चेष्टाया गम्यमानायाम् । ग्रामं ग्रामाय वा गच्छति । मणि. पृ. १२९–१३४.

* द्वितीयायाः त्यागप्रवेशोपाश्रविषयीभवादिक्रियाप्रत्यवा-भिधानकत्वकर्मवाचित्वम् । सु. पृ. ६३२.

* द्वितीयाऽन्तेन ईप्सिततमं यत् साधनम्, तत् उच्यते । भा. २।२।५।१४. * द्वितीयान्तेन शब्देन नहि देवता उद्दिश्यते प्रमाणाभावात् । टुप्. १०।२।७।१४ पृ. १८११.

* द्वितीयाऽन्तादिपदानां यावत् क्रियापदं विना निराकाङ्क्षत्वाभावस्य उभयवादिसिद्धतया क्रियाप्रतिपादक-पदस्य विशेष्यप्रतिपादकत्वस्य अवश्यम्भावात । रहस्य. पृ ४१.

* द्वितीयाऽर्थस्तु 'कर्मणि द्वितीया' (पा० २।३।२) इति सूत्रात् कर्मत्वम् । तदपि भावनायामेव अन्वेति । अत्र विवदन्ते । तत्र नवीननैयायिकास्तावत् (वयाहुः इति वरस्तात् दूरान्वयः) धात्वर्थानधिकरणत्वे सति धात्वर्थताऽवच्छेदकफलशालित्वं कर्मत्वम् । धात्वर्थो हि फलावच्छिन्नो व्यापारः, तदवच्छेदकीभूतफलस्य विक्लृप्त्यादेः देवदत्तवृत्तिव्यापारानधिकरणीभूततण्डुल-वृत्तित्वात् ओदनादेः कर्मत्वं इति लक्षणसमन्वयः । गमनफलस्य संयोगस्य ग्रामे इव चैत्रेऽपि सत्त्वात् धात्वर्थानधिकरणत्वे सति इति, चैत्रस्य गमनरूपधात्वर्थाधिकरणत्वात् । गमन-जन्यपूर्वदेशविभागशालिनि पूर्वदेशे गमनानधिकरणत्व-विशिष्टधात्वर्थजन्यफलशालित्वस्य सत्त्वात् अतिव्याप्तिः । एवम् 'वृक्षात् भूमौ पर्णं पतति' इत्यत्र पतनक्रियाजन्य-संयोगविभागरूपफलाश्रययोः भूमिवृक्षयोः अतिव्याप्तिः । अतो धात्वर्थताऽवच्छेदकेति फलविशेषणम् । एवं च गमेः संयोगः एव, त्यजेर्विभागः एव (फलम्) । पतति-

स्पन्दत्यादेः नैव किञ्चित् फलं धात्वर्थताऽवच्छेदकं इति नोक्तातिव्याप्तिः । फलपदं च क्रियाजन्यफलपरम् । तेन धात्वर्थताऽवच्छेदकव्यापारत्वमादाय व्यापारे, अधोदेशमादाय अधोदेशावयवे च नातिव्याप्तिः । "पततेः अधोदेशसंयोगः फलम् । अत एव 'नरकं पतति' इत्यादिप्रयोगः" इति केचित् ।

ननु 'ग्रामं गमयति चैत्रो मैत्रम्' इत्यत्र मैत्रे कर्मत्वलक्षणस्य अव्याप्तिः, मैत्रस्य गमनरूपफलवत्त्वेऽपि परसमवेतक्रियाजन्यफलशालित्वाभावात् । न च 'सनाद्यन्ता धातवः' (पा० ३।१।३२) इति वचनात् णिजन्तस्य धातुसंज्ञाऽवगतेः णिजन्तगमिधात्वर्थस्य गमनानुकूलव्यापारस्य मैत्रे अभावात् नाव्याप्तिः, तदर्थताऽवच्छेदकस्य गमनाख्यफलस्य मैत्रे सत्त्वेन विशेषणदलस्यापि सत्त्वात् इति वाच्यम् । तथात्वे ग्रामस्य कर्मत्वानुपपत्तेः । न च 'णिजन्तस्य धातुत्वेऽपि गमेरपि धातुत्वानपायात् ग्रामस्य तत्कर्मत्वोपपत्तिः' तथात्वे 'पाचयति चैत्रो मैत्रेण' इत्यत्रापि मैत्रस्य कर्मत्वापत्तेः । न चेष्टापत्तिः, द्वितीयाऽनापत्तेः । 'गतिबुद्धिप्रत्यवसानार्थशब्दकर्माकर्मकाणामणि कर्ता स णौ' (पा० १।४।५२) इत्यनेन सूत्रेण गत्यादीनां धातूनां अण्यन्तानां यः कर्ता, स ण्यन्तानां कर्म इत्यर्थकेन गत्यादिभिन्नधातुयोगे कर्मसंज्ञानिषेधेन तथापि इष्टापत्तेः कर्तुं अशक्यत्वात् । 'हृक्रोरन्यतरस्याम्' (पा० १।४।५३) इति सूत्रेण हारयतिकारयतिधातुयोगे विकल्पेन कर्मसंज्ञाविधानात् 'हारयति कारयति कटं भृत्येन, हारयति कारयति कटं भृत्यम्' इति प्रयोगद्वयापत्तेः । भूये धात्वर्थताऽवच्छेदकीभूतगमनव्यापारस्य फलस्याभावात् कर्मता सत्त्वेन कर्मत्वसंभावयोः वक्तुमशक्यत्वात् । एतेन स्वप्रकृत्यर्थभिन्नसमवेतक्रियाजन्यधात्वर्थताऽवच्छेदकफलशालित्वं कर्मत्वं इत्यपास्तम् । 'पाचयति चैत्रो मैत्रेण' इत्यादौ अतिव्याप्तेः । इति चेत्, न । तत्तत्क्रियाव्यक्तिभेदेन कर्मत्वानां भेदात् । इतरथा उभयकर्मसंयोगस्थले चैत्रस्य स्वभिन्नमैत्रसमवेतकर्मजन्यसंयोगाश्रयत्वात् 'चैत्रो मैत्रं गच्छति' इत्यत्र चैत्रस्य कर्मत्वापत्तेः । अन्यथा मैत्रस्यापि क्रियासमानाधिकरणफलाश्रयत्वात् कर्मत्वापत्तिः । अतः तत्तत्क्रियान्तर्भावेनैव (एव) लक्षणं निर्वाच्यम् । तथात्वे चैत्रनिष्ठक्रियायाः परसमवेतत्वाभावादेव तत्र नातिव्याप्तिः । ततश्च यत्क्रियाजन्यधात्वर्थताऽवच्छेदकफलशालि सत् यत् यत्क्रियानधिकरणम्, तत् तत्क्रियाकर्म इति विशिष्यैव कर्मत्वनिरुक्तिः । परसमवेतयत्क्रियाजन्यधात्वर्थताऽवच्छेदकफलशालि यत्, तत् तत्क्रियाकर्म इति वा निरुक्तिः । स्पन्दादिक्रियामादायैव लक्षणसमन्वयः स्पष्ट एव । 'चैत्रो मैत्रं गच्छति, मैत्रश्चैनम्' इत्यत्र तत्तत्कर्तृनिष्ठक्रियामादाय गमयति इत्यादौ च गमिक्रियामादाय ग्रामस्य तदनुकूलव्यापाररूपणिजर्थमादाय मैत्रस्य कर्मत्वं निर्वाच्यम् । 'घटं भावयति' इत्यादौ तु णिजर्थमादायैव, भूधातोरकर्मकत्वात् । पाचयति इत्यादौ च पच्यर्थमादायैव ओदनस्य, न तु अनुकूलव्यापारमादाय मैत्रस्य, उक्तसूत्रानुरोधात् । अत एव तत्र णिजर्थः अकर्मक एव । अथवा तत्रापि ओदन एव कर्म, विक्लित्त्यनुकूलत्वाविशेषात् । एवं च हारयतिकारयतिनिरूपितकर्मत्वनिरुक्तौ तृतीयाऽन्तपदानभिधेयत्वमपि देयम् । तेन हरणादिकर्तुः पाक्षिककर्मत्वाविघातः । एवं गमिपतनादौ विवक्षा समभ्यन्तरादानभिधेयत्वं वा देयम् (परसमवेतगमिक्रियाजन्यफलशालित्वेन विवक्षितं यत्, तत् गमिक्रियाकर्म इति विवक्षा लक्षणे देया, परसमवेतगमिक्रियाजन्यफलशालित्वे सति सप्तम्यन्तपदानभिधेयत्वं गमिकर्म इति सप्तम्यन्तपदानभिधेयत्वं वा देयं इत्यर्थः) । तेन 'ग्रामे गच्छति, नरके पतति' इत्यादिप्रयोगस्यापि उपपत्तिः । न चैवं तत्तत्कर्मत्वानां भेदात् द्वितीयायाः शक्तिग्रहानुपपत्तिः, लाघवेन शुक्तित्वे अभावे च द्वितीयायाः शक्तेः । पदार्थान्तराणां अनन्तत्वेन तत्र शक्तिकल्पनायां गौरवात् । तथाहि । 'ग्रामं गच्छति' इत्यत्र द्वितीयार्थो वृत्तित्व धात्वर्थताऽवच्छेदके संयोगे अन्वेति । तज्जनकं गमनं धात्वर्थ एव । (एवं द्वितीयार्थो भावोऽपि प्रतियोगितासंबन्धेन धात्वर्थ एव ।) ग्रामादिश्च प्रकृत्यर्थो द्विविधेऽपि द्वितीयार्थे । एवं च ग्रामनिष्ठाभावप्रतियोगित्वसमवृत्तिसंयोगजनकगमनानुकूलकृतिमान् इत्यादिः शाब्दबोधः । यदि तु गमनाद्यन्तिकाभावोऽपि चैत्रे कालिकाव्याप्त्यनुमितात् आदात् इत्येत, तदा परसमवेतेत्यादिअन्योन्याभावघटितलक्षणमादाय भेदो द्वितीयाऽर्थः । स च प्रतियोगितासमवायोभयघटितसामानाधिकरण्यसंबन्धेन

गमनान्वयी। ततश्च ग्रामनिष्ठभेदप्रतियोगिसमवेतग्रामवृत्तिसंयोगजनकगमनवान् इत्यादिः शाब्दबोधः। वस्तुतस्तु भेदाव्याप्यवृत्तित्वमते चैत्रे गमनवद्भेदस्य तुल्यत्वात् तद्वारणाय प्रकृत्यर्थो ग्रामो भेदे प्रतियोगितासंबन्धेन अन्वेति। भेदश्च अभावीयविशेषणतासमवायोभयघटितसामानाधिकरण्यसम्बन्धेन गमने अन्वेति। ततश्च ग्रामप्रतियोगिकभेदवत्समवेतग्रामवृत्ति इत्यादिः शाब्दबोधः। अत एव आधेयत्वापरपर्यायवृत्तित्वार्थकमतमपीतः वृत्तित्वार्थकद्वितीयायाः भेदः, भेदार्थकस्य अधिकत्वात्। अयं चापरो विशेषः। यत् द्वितीयाऽर्थो वृत्तित्वं धात्वर्थतावच्छेदके फले एवान्वेति, भेदस्त्वर्थस्तु वृत्तित्व धात्वर्थे नामार्थे वा इति। एवं 'ग्रामस्य गन्ता' इत्यादौ कर्मणिषष्ठीस्थलेऽपि बोध्यम्। एवं 'चैत्रेण ग्रामो गम्यते' इत्यात्मनेपदेन फलं भेदश्च अभिधीयते। तत्र प्रथमाऽन्तपदोपस्थाप्यो ग्रामः प्रतियोगितासंबन्धेन भेदान्वयी। स च धात्वर्थगमने सामानाधिकरण्यसंबन्धेन, स च धात्वर्थो गमनं पुनः आत्मनेपदार्थे फले अन्वयसंबन्धेन, तच्च आश्रयत्वेन नामार्थे ग्रामे। ततश्च चैत्रकर्तृक–ग्रामभिन्नसमवेतसंयोगजनकगमनजन्यसंयोगाश्रयो ग्रामः इत्येवं शाब्दबोधः। एवम् 'पक्व ओदनः' इत्यत्र कर्मक्तप्रत्ययस्थलेऽपि। तत्र तु अयं विशेषः, कृदर्थः प्रतियोगी भेदः वृत्तित्वं आश्रयश्च। ओदनः अभेदेन प्रतियोगिनि, स च स्वनिष्ठप्रतियोगितानिरूपकत्वसंबन्धेन भेदे, स च सामानाधिकरण्येन क्रियायाम्, सा च स्वजन्यफलद्वारा (फलवृत्तित्वसंबन्धेन) वृत्तित्वे, तच्च निरूपकत्वसंबन्धेन आश्रये, स च अभेदेन ओदने इति ओदनाभिन्नप्रतियोगिकभेदवद्वृत्तिक्रियाजन्यफलनिष्ठाधेयतानिरूपकाश्रयाभिन्नः ओदनः इति विशिष्टबोधः। मनुमतानुसारेण व्युत्पत्तिवैचित्र्यस्य अदोषत्वात्।

ननु एवं भेदे प्रतियोगिनः प्रतियोगितामात्रेण वा अन्वयः, अन्वयिताऽवच्छेदकावच्छिन्नप्रतियोगिताकत्वेन वा? नाद्यः वैशिष्ट्यस्याव्यासज्यवृत्तिधर्मावच्छिन्नप्रतियोगिताकभेदस्य चैत्रेऽपि सत्त्वेन 'स्व गच्छति चैत्रः' इति प्रयोगापत्तेः, अन्वयिताऽवच्छेदकावच्छिन्नप्रतियोगिताकत्वव्युत्पत्तिभङ्गापत्तेश्च। नान्त्यः। 'जलं गच्छति' जले जलत्वावच्छिन्नप्रतियोगिताकभेदस्य जले अभावात्। इति चेत्– (न) धात्वर्थताऽवच्छेदकफलाश्रयत्व यद्व्यक्तेः तद्व्यक्तित्वावच्छिन्नप्रतियोगिताकत्वेन प्रतियोग्यन्वयस्य वाच्यत्वात्। एवं च व्युत्पत्तिभङ्गभिया जलपदं जलविशेषे लाक्षणिकम्। तत् सिद्धं वृत्तित्वं भेदश्च द्वितीयार्थ इति। न चैवं तृतीयाऽन्तपदानभिधेयत्वादेरपि वाच्यत्वापत्तिः, तस्य अन्यलभ्यत्वेन वाच्यत्वे गौरवात्। 'कारयति फलं मैत्रम्' इत्यादिप्रयोगस्य इष्टत्वेन वाच्यतया प्रवेशे प्रयोजनविरहात्। भेदस्य अवाच्यत्वे 'स्वं गच्छति' इति प्रयोगापत्तिर्बाधिका। न तु अत्र तथा किञ्चित् बाधकम्। अतो न तस्य वाच्यत्वं इति दिक्।

एवं च यत्र एतादृशकर्मत्वबाधः तत्र 'घटं जानाति मैत्रः, इच्छति, कुरुते' 'घटस्य ज्ञाता' इत्यादौ सविषयपदार्थाभिधायिधातुयोगे द्वितीयाषष्ठ्योः विषयत्वे लक्षणा। घटविषयकज्ञानाश्रयो मैत्रः इति शाब्दबोधः। 'मैत्रेण ज्ञायते' इत्यादौ तु कर्मप्रत्ययेन विषयत्वं लक्ष्यते। मैत्राभिन्नज्ञानविषयो घटः इति च बोधः। 'ज्ञातो घटः' इत्यादिकर्मकृत्सु तु विषये लक्षणा, तस्य च घटे अभेदान्वय इति द्रष्टव्यम्। नत्र इत्यादौ प्रतियोगिनि। न तु अत्र परसमवेतत्वप्रवेशो वैयर्थ्यात्, 'स्वात्मानं जानाति' 'आत्मानमात्मना वेत्थि' इत्यादिप्रयोगाच्च। एवं अकथितकर्मादौ कर्मप्रवचनीययोगनिमित्तकद्वितीयाया च लक्षणैव। इत्याहुः (नवीनतार्किकाः इत्यस्य अभिप्रायः)।

अत्रेदमवधेयम्। यदि फलावच्छिन्नो व्यापारो धात्वर्थः, तदा द्वितीयाऽर्थवृत्तित्वस्य पदार्थैकदेशे संयोगादौ फले अन्वयात् एकदेशान्वयानिरूपतो व्युत्पत्तिभङ्गः। न च चैत्रस्य गता, चैत्रगम्यः इत्यादावपि तदाश्रयणम्, षष्ठ्याद्यर्थस्य परपदार्थताया निर्दोषत्वे एव अन्ययोगपदेः, षष्ठ्यर्थस्यापि प्रतियोगित्वादेः परपदासक्त्वेन अन्वयाङ्गीकाराच्च। किञ्च। किमिदं फलस्य अवच्छेदकत्वम्? न तावत् तत्तद्धातुवाच्यताऽवच्छेदकत्वम्, विशिष्टशक्तौ प्रमाणाभावात्। 'चैत्रो ग्रामं गमयति मैत्रम्' इत्यादिणिजर्थरूपव्यापारस्य अवच्छेदकीभूते गमनरूपे फले अन्वयात्। अथ फले पृथगेव धातोः शक्तिः, तस्य च व्यापारे प्रकारत्वमेव अवच्छेदकत्वं इति चेत्, न,

तृतीयाऽऽश्रयेऽकरणवादे, पाचयति इत्यत्र णिजर्थविशेषणीभूते पाके च अतिव्याप्तेः। अतः स्वरूपसम्बन्धविशेषः अवच्छेदकः पदार्थान्तरमेव वा कल्प्यम्। यच्च धर्मिग्राहकप्रमाणेन यदाश्रये द्वितीया प्रामाणिकी, तत्रैव कल्प्यते नान्यत्र इति वाच्यम्। न च तत्र शाब्दव्यवहारातिरिक्तं किञ्चित् प्रमाणमस्ति। तद्देव वक्ष्यमाणविषया कर्मत्वाद्विकारकाणाम् अखण्डोपाधिरूपाणां द्वितीयादिवाच्यत्वकल्पनोपपत्तेः, न आधेयत्वादेः अनेकव्युत्पत्तिकल्पनाऽऽपादिका वाच्यत्वकल्पना युक्ता समाश्रयितुम्। तथाहि। द्वितीयायास्तावत् वृत्तित्वे भेदे च शक्तिः इत्यनेकशक्तिकल्पना। धातोश्च फलावच्छिन्नव्यापारे एका, फले व्यापारे च नाना शक्तिः इति कल्पना। अस्मन्मते तु पूर्वोक्तदिशा तत्तत्फलावच्छिन्नव्यापारवृत्तिधर्मः गमनत्वादिकमेव तत्तद्धातुशक्यताऽवच्छेदकम् इति न अनेकशक्तिकल्पना। पुनश्च भवन्मते फलस्य तत्त्वेन बोधे पूर्वदेशविभागस्यापि क्रियाजन्यत्वाविशेषात् 'पूर्वदेशं गच्छति' इति प्रयोगापत्तिः। संयोगवादिना बोधे वृक्षस्थितस्यैव खगस्य मूलदेशात् अग्रदेशं गच्छत 'वृक्षं गच्छति' इति प्रयोगापत्तिः तत्तत्संयोगस्य विनाशेन अव्यवहितसंयोगात् नाशात् तथा निरुक्ता अविभागसंयोगेन अभिनवस्यैव अवयविसंयोगस्य उत्पत्तेः। नहि अत्र अवयविसंयोगः न आश्रयतावच्छेदकः, 'ग्रामं गच्छति' इति प्रयोगानापत्तेः। अत तदुत्तरदेशसंयोगस्यैव फलत्वं वाच्यम्। तत्तत्त्वं च तत्तत्क्रियापूर्वदेशापत्तिः इति अनन्तशक्तिकल्पना लक्षणा वा। न च तत्फलानुभवबलादेव सा न दोषः, अनुभवस्य अनुमानादिनाऽपि सम्भवेन शाब्दत्वे एव विप्रतिपत्तौ धातुजन्ये सुगम प्रमाणाभावात्। इतरथा फलस्य धातुवाच्यत्वं द्वितीयावाच्यत्वं वा इति भवद्ग्रन्थे नानापदप्रतिपाद्यत्वानुपपत्तेः। नहि 'घटमानय' इत्यत्र घटो धातुवाच्यः नामपदवाच्यो वा इति पश्चात् कश्चित् प्रतिपादयति। अत एव गमनत्वादिरेव क्रियायां धातुना अनुभवात् वस्तुत तत्फलावच्छिन्नक्रियावृत्तिगमनत्वादिकमेव तत्तद्धातुशक्यताऽवच्छेदकम् इत्युक्तं प्राक्। तदेव भवन्मते शक्यतानन्त्यं तावत् स्फुटमेव। व्युत्पत्त्यानन्त्यमपि। 'ग्रामं गच्छति' इत्यत्र तावत् प्रातिपदिकार्थस्य ग्रामस्य तत्संसर्गभेदेन वृत्तित्वे भेदे च अन्वयात् व्युत्पत्तिद्वयम्। पुनश्च अन्वयिताऽवच्छेदकावच्छिन्नप्रतियोगिताकत्वव्युत्पत्तिभङ्गः, तदभङ्गाय वा ग्रामप्रातिपदिकेन ग्रामविशेषलक्षणा इति दोषः। द्वितीयाऽर्थस्य च भेदस्य निरूपकसामानाधिकरण्यसंबन्धेन क्रियायाम्, वृत्तित्वस्य च साक्षात्संबन्धेन फले इति व्युत्पत्तिद्वयम्। 'स गच्छति' इति प्रयोगवारणार्थं भेदो वा द्वितीयाऽर्थः, समवायो वा, ग्रामस्य च तस्मिन् समवाये स्वप्रतियोगिकभेदवद्वृत्तित्व संसर्गः, समवायस्य च साक्षात्संबन्धेन क्रियायामन्वयः इत्यादि युक्तत्वेन विनिगमनाविरहश्च।

एतेन— फलं भेदश्च द्वितीयाऽर्थः, आधेयत्वं फले प्रकृत्यर्थसंसर्गः, फलस्य च जनकत्वेन अवच्छेदकत्वेन वा व्यापारे अन्वयः, व्यापारमात्रं धात्वर्थः, तत्तद्धातुसमभिव्याहाराच्च द्वितीयायाः फलविशेषबोधकत्वम् इत्यपास्तम्। अनेकशक्तिकल्पनादेः तदवस्थत्वात्। एवं 'ग्रामस्य गन्ता' इत्यादिकर्मषष्ठीस्थले शक्त्यनेकत्वव्युत्पत्त्यनेकत्व विनिगमनाविरहश्च इति बोध्यम्। 'ग्रामो गम्यते' इति कर्माख्याते च आत्मनेपदस्य फले भेदे च शक्त्यन्तरकल्पनम्, ग्रामस्य प्रथमाऽन्तपदोपस्थाप्यस्यापि आख्यातार्थे भेदे अन्वयकल्पनम्, तस्य भेदस्य प्रत्ययार्थस्यापि धात्वर्थव्यापारे अन्वयकल्पनम्, तस्य च व्यापारस्य धातूपस्थापितफलं प्रति विशेष्यभूतस्यापि पुनः जनकत्वेन आत्मनेपदार्थे फले अन्वयकल्पनम्, तस्य फलस्य च आश्रयतासंबन्धेन प्रथमाऽन्तपदोपस्थाप्ये ग्रामे अन्वयकल्पनम् इति दोषाः।

किञ्च ग्रामपदस्य आत्मनेपदस्य च न तावत् युगपदेव प्रकारतया विशेष्यतया च बोधजनकत्वं विरोधात्। विशेषणताऽवच्छेदकप्रकारकविशेषणविधेयस्य अनुदयेन विशिष्टवैशिष्ट्यबोधात्मकस्य अनुभूयमानस्य अपलापापत्तेश्च। नापि क्रमिकबोधद्वयजनकत्वम्, तन्निष्ठान्वयबोधे नैराकाङ्क्ष्यात्। एकतरशाब्दबोधवेलायाम् इतरशाब्दबोधानुत्पत्तौ प्रतिबन्धकान्तरकल्पनाऽऽपत्तेश्च। एवं 'पच्यते ओदनः' इत्यत्र कर्मकर्तृस्थलेऽपि द्रष्टव्यम्।

यत्तु— भेदो न द्वितीयाऽर्थः अपितु आधेयत्वादिकमेव । न चैवं 'चैत्रश्चैत्रं गच्छति' इति प्रयोगापत्तिः 'आ कडारादेका संज्ञा' ( पा० १।४।१ ) इति सूत्रेण एकसंज्ञाप्रयुक्तकार्यकरणे संज्ञाऽन्तरप्रयुक्तकार्यनिषेधात् । प्रकृते च परत्वात् कर्तृसंज्ञाप्रयुक्तकार्यस्य आवश्यकत्वेन कर्मसंज्ञाप्रयुक्तद्वितीयाऽऽपत्तेः । अतो न तत्प्रयुक्तशक्त्यन्तरकल्पनापत्तिः इति— तन्न । 'स्वं जानामि' 'चैत्रोऽहं स्वात्मानं जानामि' 'आत्मानमात्मना वेत्ति' इत्यादौ एकसंज्ञाऽवरोधेऽपि संज्ञान्तरप्रयुक्तकार्यदर्शनात् । न च शरीरमनोरूपावच्छेदकभेदमादाय तत्र भेदाकर्मोपपादनम्, तथात्वे स्वपदप्रयोगानुपपत्तेः । 'चैत्रश्चैत्रं गच्छति' इति प्रयोगेऽपि शरीरप्रदेशान्तरावच्छिन्नात्मादिभेदकल्पनोपपत्तेश्च । इतरथा 'चैत्रो ग्रामं गच्छति' इति प्रयोगस्यापि अनापत्तेः ( अनवच्छिन्नस्यात्मनो गमनाद्यभावात् ) । वस्तुतः कर्माभावत्वत्वे चैत्रेऽपि द्वितीयाप्रसक्तौ सूत्रद्वयेनापि संज्ञान्तरप्रयुक्तकार्योपस्थितेः अ-प्रतिबन्धकत्वकल्पने तथापि गौरवस्य सत्त्वाच्च । मम तु अखण्डोपाधिरूपस्य कर्मत्वस्य परसमवेतक्रियाजन्यफलशालित्वसमनियतस्यैव कल्पनात्, चैत्रे तस्य अप्रसक्तत्वादेव न प्रतिबन्ध्यप्रतिबन्धकभावकल्पना इति विशेषः । अतः उक्तयुक्त्या लाघवात् कर्मत्वम् अखण्डोपाधिरूपमेव द्वितीयाऽर्थः । तच्च तत्कर्मत्वलक्षणसमनियतमेव । तथैव गोकर्मकमानयनम्, ओदनकर्मकः पाकः, ग्रामकर्मकं गमनं इतिव्यवहारात् । तच्च गर्भिताद्यप्रमाणेन सम्बन्धि कर्मत्वं कल्प्यते इति तस्य तत्तद्धात्वर्थनिरूपितत्वसिद्धिः । तत्तद्धात्वर्थं तु तत्तत्फलानवच्छिन्नव्यापारविशेषत्वसमनियता खण्डोपाधिरूपशक्यतावच्छेदकधर्मावच्छिन्नो व्यापारविशेषः इत्युक्तमेव । तत्तद्धात्वर्थनिरूपिततत्तत्कर्मत्वानां भेदेऽपि भवन्मते आधेयत्वस्येव कर्मत्वस्यापि अखण्डस्य स्वीकारात् तस्य एकस्यैव शक्यताऽवच्छेदकत्वेन न अनेकशक्तिकल्पना । निरूपकीभूतधात्वर्थतावच्छेदकावच्छिन्नगमनाद्यन्वयलाभाय 'चैत्रस्य घटः' इतिवत् कर्मत्वविशेषलाभः । अतश्च 'चैत्रश्चैत्रं गच्छति' 'चैत्रः पाचयति मैत्रम्' इत्यादिप्रयोगापत्तिशङ्कैव दुर्लभा । 'ग्रामे गच्छति कारयति चैत्रो मैत्रेण' इत्यादौ तु कर्मत्वाविवक्षया अधिकरणत्वादिविवक्षया सप्तम्यादिप्रयोगोऽपि अविरुद्धः । एवं च द्वितीयाया एकैव शक्तिः । प्रातिपदिकार्थस्य च तृतीयादिसाधारण्येन पुरुषे कर्मत्वादौ अन्वयात् एकैव व्युत्पत्तिः । तस्य च उद्देश्यत्वेन वा स्वनिरूपकधात्वर्थजनकत्वेनैव वा आख्यातार्थकृतौ अन्वयात् अपरा इति लाघवम् । एवं कर्मणिषष्ठीस्थलेऽपि । कर्माख्यातस्थले तु पूर्वोक्तरीत्या आख्यातेन कर्मत्वलक्षणायामपि प्रथमाऽर्थस्य पूर्वोक्तविधया ( पाणिनिमतेन ) प्रातिपदिकार्थस्य स्ववृत्तिकर्मत्वनिरूपकधात्वर्थजनकत्वसंसर्गेण कृतौ अन्वयः । ( कात्यायनमतेन— ) कर्मत्वस्य प्रथमाऽर्थत्वे तु स्वनिरूपकधात्वर्थजनकत्वसंसर्गेणैव । कर्मकृत्स्थले तु 'पक्व ओदनः' इत्यादौ आश्रय कृत्प्रत्ययलक्षणया कृतौ, तस्याश्च निरूप्यत्वसंसर्गेण तद्धये एव कर्मत्वे, तस्य च आधारत्वसंबन्धेन कृत्प्रत्ययार्थे कर्मणि, तस्य च अस्तीत्याख्यातार्थे इति वक्ष्यते । कर्मकृतस्यापि 'पाककर्तृकः' इति विवरणानुरोधेन कारकान्यथानुरोधेन च कृतिलक्षणायाः वक्ष्यमाणत्वात् । अतश्च लाघवात् द्वितीयाऽर्थकर्मत्वस्य उक्तसंसर्गेण कृतौ एवान्वयः इति सिद्धम् ।

न च द्वितीयाऽर्थकर्मत्वस्य निरूपकतासंबन्धेन धात्वर्थे एव अन्वयोऽस्तु इति वाच्यम् । धात्वर्थस्यापि कारकत्वेन भावनाऽन्वयस्य उपपादितत्वात् तत्साधारण्येन कारकान्तरप्रकारकशाब्दबुद्धित्वावच्छिन्नं प्रति भावनाविशेष्यतासंबन्धेन लिङ्गानन्यविषयकप्रयोगशिष्टिः कारणं इति एकेनैव कार्यकारणभावेन कर्मत्वादीनामपि अन्वयोपपत्तौ तदनेककल्पने गौरवात् । धात्वर्थान्वयार्थे उपस्थितस्य भावनाविशेष्यत्वस्यैव कर्मत्वसुप्तिप्रकारतानिरूपकत्वकल्पनोपपत्तौ अनुपस्थितस्य धात्वर्थविशेष्यत्वस्य तत्कल्पनाऽनुपपत्तेश्च । 'काष्ठैरोदनं पचति' इत्यस्य 'काष्ठैः पाकेन ओदनं करोति' इति विवरणात्, विवरणवाक्ये ■ काष्ठादीनां कृत्यर्थे अन्वयावश्यकत्वेन पचति इत्यत्रापि तथैव अन्वयप्रतीतेश्च । तत् सिद्धं कर्मत्वादि आख्यातार्थे द्वितीयार्थो भावनाऽन्वयी इति ।

यत्तु— न कर्मत्वं आश्रयत्वं वा द्वितीयाऽर्थः, तथात्वे आश्रयत्वादेः गुरुभूतस्य शक्यताऽवच्छेदक-

व्याप्यते, कर्मत्वादिरूपाखण्डोपाधिमत्त्वे प्रमाणाभावाच्च। अपि तु आश्रयत्वेन द्वितीयाऽर्थत्वम्। तस्य च धात्वर्थे फले अन्वयः। एवं करणादिरेव तृतीयाऽऽद्यर्थः। एवं च 'कर्तृकरणयोस्तृतीया' (पा० २।३।१८) 'कर्मणि द्वितीया' (पा० २।३।२) इत्याद्यनुशासनमपि संगच्छते इति केचिदुक्तम्— तन्न। संबन्धसामान्यषष्ठीस्थले प्रातिपदिकार्थस्य प्रत्ययार्थे संबन्धे भेदेन अन्वयाङ्गीकारात् इहापि व्युत्पत्त्यन्तरकल्पनागौरवपरिहारार्थं भेदसंबन्धबोधाय कर्मत्वादावेव द्वितीयादेः शक्तिकल्पनात्। न चैवम् 'ऐन्द्रं दधि' इत्यादौ तद्धितस्य देवतानिरूपितद्रव्यत्वाद्विशेषेऽर्थे देवताया इन्द्रप्रातिपदिकार्थस्य इन्द्रस्य अभेदेनापि अन्वयदर्शनात् व्युत्पत्त्यन्तरस्यापि आवश्यकत्वम्, तद्धितस्यापि देवतात्वविशिष्टद्रव्ये एव शक्तत्वस्वीकारेण तत्रापि इन्द्रस्य आधेयतासंबन्धेनैव अन्वयाङ्गीकारात्। न च एवं षष्ठ्यादौ सर्वत्र लाघवात् धर्मिण्येव शक्तिकल्पनात् अभेदान्वयेनैव सर्वत्र प्रकृत्यर्थप्रकारता अस्तु इति वाच्यम्। तथात्वे ग्रामामिन्नो य आश्रयस्तद्वान् तदाधेयसंयोगजनकं गमनं इत्यादिशाब्दबोधापत्तेः (बोधोत्पत्तेः इति तु मुद्रितम्) आश्रयत्वादिकं किंनिरूपितं इति जिज्ञासायाः अपरिहार्यत्वात्। अतो न धर्मी द्वितीयाऽर्थः, अपि तु आधेयत्वं कर्मत्वमेव वा अखण्डम्। उभयथाऽपि फलस्य व्यापारस्येव वा निरूपकस्य शाब्दबोधे एव लब्धत्वात् न निरूपकजिज्ञासाऽऽपत्तिः। कर्मत्वस्याखण्डस्यापि च अखण्डस्य एकस्यैव वाच्यताऽवच्छेदकत्वाङ्गीकारात् न गौरवम्। आश्रयत्वमेव च तत्तन्निरूपकभेदेन भिन्नं इति तत्त्वेन (आश्रयो द्वितीयाऽर्थः इति आश्रयत्वस्य वाच्यताऽवच्छेदकत्वे वक्तव्ये) गौरवं इति दिक्।

अत एव 'समर्थः पदविधिः' (पा० २।१।१) इति सूत्रे 'क्रियाकारकयोः संबन्धस्य द्वितीया वाचिका भवति' इति महाभाष्यं संगच्छते। एवंविधकर्मत्वरूपे तु तद्विषयकधातुसमभिव्याहारे आकाङ्क्षावशेन विषयत्वादिकं द्वितीयाऽऽदिना लक्षयित्वा आख्यातेन च आश्रयत्वं लक्षयित्वा 'घटविषयकज्ञानाश्रयत्ववान् चैत्रीयम्' इति 'चैत्रो जानाति घटम्' इत्यत्र शाब्दबोधः। एवं कर्मषष्ठीकर्माख्यातकर्मकृत्स्वपि बोध्यम्। न तु [illegible] परसमवेतत्वस्य आवश्यकता। अत एव 'स्वात्मानं जानामि' इत्यादिप्रयोगः। नहि अत्र मुख्यं कर्मत्वमस्ति क्रियाजन्यफलमात्रात्, अपि तु विषयित्वे लक्षणा। साऽपि नानुशासनिकी, येन तदर्थमपि कर्मसंज्ञा प्रवर्त्येत। अपि तु 'गङ्गायां घोषः' इतिवत् सार्वजनिकी। अतश्च कर्मत्वाभावेन कर्मसंज्ञाया अभावात् न 'आ कडारादेका संज्ञा' (पा० १।४।१) इत्यस्य बाधः।

ननु विभक्तौ लोके न लक्षणा 'सुपां कर्मादयोऽप्यर्थाः संख्या चैव तथा तिङाम्। प्रसिद्धो नियमस्तत्र नियमः प्रकृतेषु वा॥' इति कात्यायनवार्तिकविरोधात्। अत्र हि सुपां तिङां च कर्मत्वादि संख्या च एकत्वादिकाः येन शास्त्रेण अर्थं इति प्रतिपाद्यते, तत्र अर्थनियमः प्रसिद्धः इति तृतीयचरणस्यार्थः। स च एकत्वे एकवचनमेव, कर्मणि द्वितीयैव इत्याकारकः। चतुर्थचरणे तु प्रकृत्यर्थापेक्षया प्रत्ययनियमः। [illegible] च 'कर्मण्येव द्वितीया, एकत्वे एव एकवचनम्' इत्याकारकः। उभयथाऽपि विभक्तेः अर्थान्तरे वारणात् न विभक्तौ लक्षणा। अत एव 'छन्दसि सुपां सुपो भवन्ति' इति लक्षणाप्रतिप्रसवरूपे व्यत्ययानुशासनं छन्दसि उपपद्यते। इतरथा लोकवदेव वेदेऽपि तदुपपत्तेः व्यत्ययानुशासनवैयर्थ्यापत्तिः। एवम् 'कर्मणि षष्ठी' इत्यादिलक्षणानुशासनस्यापि वैयर्थ्यं शक्यसंबन्धावगमस्य प्रमाणान्तरेणैव सिद्धेः। अतो न लोके विभक्तौ अनुशासनं विना क्वापि लक्षणा इति चेत्। न। प्रातिपदिकादिष्विव विभक्तावपि लक्षणायां बाधकाभावात् उक्तवार्तिकस्य लक्षणागामपि अविरोधात्। तथाहि। अर्थनियमपक्षे तावत् कर्मणि द्वितीयैव न तु तृतीयाऽऽदिविभक्त्यन्तरं इति सजातीयशब्दान्तरव्यावृत्तावपि द्वितीयायाः अर्थान्तरे निरासो मानस्य महाभाष्ये स्पष्टत्वात्। इतरथा नि.संख्येभ्यः अव्ययेभ्योऽपि सुपामनापत्तेः। एवं च करणत्वादौ तृतीयैव इत्यस्यापि नियमात् विभक्त्यन्तरार्थे विभक्त्यन्तरस्य एव न लोके लक्षणा, न तु विषयत्वादावपि। प्रत्ययनियमपक्षेऽपि प्रकृत्यर्थं वेदकादिरूपसुप्तिङर्थापेक्षयैव तन्नियमकरणात् अप्रकृतविषयत्वादिलक्षणायां न कोऽपि दोषः। स्पष्टं च इदमपि तत्रैव। अत एव 'जानाति' इत्यादितिङोऽपि

आश्रयत्वादौ लक्षणा इत्युक्तं प्राक्। एवं च छन्दसि व्यत्ययानुशासनमपि प्रकृतिविभक्त्यन्तरार्थविषये प्रतिप्रसवरूपतया नावश्यकम्। कर्मणि षष्ठी इत्यादिकं च लोकवेदसाधारण्येन। न चैवं लोके 'अक्षीणि मे दर्शनीयानि, पादा मे सुकुमाराः' इत्यादिमहाभाष्योदाहृतप्रयोगेषु प्रतिप्रसवाभावात् प्रकृतद्वित्वे बहुवचनस्य प्रयोगानुपपत्तिः, तत्र अक्षित्वादिजातिविवक्षया 'जात्याख्यायामेकस्मिन् बहुवचनमन्यतरस्याम्' (पा० १।२।५८) इति वचनेन प्रतिप्रसवात्। अतः सिद्धं विभक्त्यन्तरार्थभिन्ने विषयत्वादौ युक्तैव लक्षणेति। यदा तु 'सामान्यापेक्ष एव प्रत्ययनियमः' इति महाभाष्यकारीय व्याख्या नान्तरा अभ्युपगम्यते, तदा कात्यायनीयं नियमद्वयमपि इदं शक्तिनियामकं निरूढलक्षणानियामकं च तस्याः शक्तितुल्यत्वात्। तथा च प्रकृते अप्रकृते वा अर्थे अनुशासनं विना न शक्तिः निरूढलक्षणा वा। साम्प्रतिकलक्षणायास्तु न क्वापि प्रकृते अप्रकृते वा निषेधः।

नन्वेवं अव्ययेभ्योऽपि संख्याभिन्नेऽर्थे साम्प्रतिकलक्षणया सुबुत्पत्तेः 'अव्ययादाप्सुपः' (पा० २।४।८२) इति शास्त्रफलादव्ययेषु सुबुत्पत्तिपक्षो महाभाष्यकारीयो न संगच्छते इति वाच्यम्। तस्य प्रामाणिकार्थाविवक्षायामपि शब्दसाधुत्वार्थमपि सुबुत्पत्तिः इत्येव ज्ञापनार्थत्वात्। न चैव छन्दसि व्यत्ययानुशासनवैयर्थ्यम्, तस्य निरूढलक्षणात्वज्ञापनार्थत्वात् निषिद्धलक्षणाप्रतिप्रसवार्थत्वाच्च। तथाहि। साम्प्रतिकी लक्षणा क्वचिदेव भवति। अत एव भट्टवार्त्तिके 'यत्र आर्षे लौकिके अर्थे प्रयोगानुपपत्तिस्फुरणं विनाऽपि अर्थस्मरणम्, तत्र निरूढलक्षणा, यत्र तत्स्फुरणपूर्वकं काव्याद्याधुनिकप्रयोगः, तत्र साम्प्रतिकी लक्षणा' इति लक्षणाभेदमुपपाद्य 'काश्चिन्नैव प्रयोगतः' इत्यनेन प्रयोगमार्गे न लक्षणा इत्युक्तम्। उदाहृतं च रूपं वक्तं इति। इतरथा भ्वर्गेलक्षणया प्रयोगः केन वार्येत। अत एव एता निषिद्धलक्षणा इत्युच्यते। तस्याश्च वेदेऽपि प्रयोगो प्रतिप्रसवार्थं व्यत्ययानुशासनमिति। सर्वथा सिद्धम् 'घट जानामि' इत्यादौ विषयत्वे लक्षणा इति। वस्तुतस्तु नात्र लक्षणा, मुख्यकर्मत्वस्यैव उपपत्तेः। तथाहि, ज्ञातो घट इत्यादिप्रतीत्या ज्ञानजन्या ज्ञेयनिष्ठा ज्ञाततापरनामविषयता फलम्, तच्छालित्व च घट इति मुख्यकर्मत्वोपपत्तिः। न च भावकार्यस्य समवायिकारणजन्यत्वनियमात् भूतभाविकाले च तदभावात् फलाभावः। ध्वंसस्य प्रामाणिकत्वे भावत्वस्य व्याप्यताऽवच्छेदककोटिप्रवेशात् विषयताया अपि प्रामाणिकत्वे लघुना समवेतत्वेनैव कार्यत्वस्य विशेषणात्। अतश्च ध्वंसवदेव विषयताया अपि निमित्तकारणमात्रजन्यत्वमेव इत्यन्यत्र विस्तरः।

एवं च परसमवेतत्वसिद्ध्यर्थम् 'स्वं जानाति' इत्यादौ शरीरमनोभेदकल्पनात् 'आ कडारादेका संज्ञा' इत्यस्यानुपपत्तिः। अथवा परसमवेतत्वाविवक्षितलक्षणसमनियताखण्डोपाधिरूपकर्मत्वे शक्तिः, तथा च 'स्वं जानाति' इत्यादौ धात्वर्थताऽवच्छेदकफलशालित्वमात्रे विवक्षितमात्रे वा लक्षणा इति न विरोधः। 'चैत्रः स्वं गच्छति' इत्यादौ तु न लक्षणयाऽपि प्रयोगः, अप्रयोगेण निषिद्धलक्षणात्वात् इति ध्येयम्।

तत् सिद्धं 'कर्मणि द्वितीया' इति सूत्रात् कर्मत्वं अखण्डोपाधिरूपं द्वितीयाऽर्थः आख्यातार्थोन्वयी इति। उक्तं च तन्त्रवार्त्तिके 'विभक्तयो हि कारकशक्तिं निष्कृष्य अभिधाय क्रिया विशिंषन्ति' इति।

न्यायसुधाकारस्तु 'कर्तुरीप्सिततमं कर्म' इति सूत्रात् ईप्सितकर्मत्वमेव द्वितीयार्थः। 'तथायुक्तं चानीप्सितम्' इतिसूत्रात् अनीप्सितत्वे निरूढलक्षणा इत्याह। तन्न। ईप्सितानीप्सितत्वरूपविशेषस्य प्रमाणागतत्वाभावेन लाघवात् कर्मत्वे एव शक्तेः। यथा चैवं सति न सूत्रद्वयवैयर्थ्यम्, तथा कौस्तुभे विचारः।

तच्च कर्म चतुर्विधम्, उत्पाद्यं आप्यं विकार्यं संस्कार्यं चेति। घटं करोति, घटं जानाति, व्रीहीनवहन्ति, व्रीहीन् प्रोक्षति इत्युदाहरणानि। पार्थसारथिस्तु, साध्यत्वमेव द्वितीयाऽर्थः। आप्यकर्मादावपि तत्फलोपहितत्वेन साध्यता इत्याह। तदपि जन्यत्वस्य शक्यताऽवच्छेदकत्वे गौरवात् उपेक्षितम्। शक्यताऽवच्छेदक द्वितीयायाः आप्यादिनिष्ठो व्यापको धर्मः। एवमग्रेऽपि।

यानि तु अन्यानि द्वितीयाऽर्थानुशासनानि, तानि मनुष्यप्रयोगाभावात् स्वाधिकानुशासनानि। तथाहि। दुह्

याच् पच् दण्ड् रुधि प्रच्छ् चि ब्रू शासु (जि) मथि मुष् नी ह्र कृष् वह्—रूपधातुसमानार्थकधातूनां यत् कर्मकारकं तत्संबन्धिनः अपादानादिकारकत्वाविवक्षायाम् 'माणवकमभीयात्' इतिवत् भावयसंबन्धमात्रविवक्षायां संबन्धसामान्यविवक्षानिषष्ठीप्राप्तौ 'अकथितं च' (पा० १।४।५१) इत्यनुशासनेन कर्मसंज्ञाविधानात् द्वितीयाऽपि यथा 'गां दोग्धि पयः' इत्यादौ। अत्र च गोदोहनसंबन्धः एव द्वितीयाऽर्थः। स च निष्पन्न-दोहनानुकूलव्यापारेण भावनायामेव अन्वेति, न तु धात्वर्थे व्युत्पत्त्यन्तरकल्पनाऽऽपत्तेः। तथोपपत्तिप्रतिपादकानुशासनं च संसर्गप्रतिपादनपरम्। गोः अपादानत्वविवक्षायां तु 'गोः पयो दोग्धि' इति पञ्चम्यन्तप्रयोगः। गोः पयोरूपकर्मकारकसंबन्धविवक्षायां तु षष्ठ्यन्तप्रयोगोऽपि। अत्र पयसः संबन्धसामान्येन धात्वर्थोपान्वय-विवक्षायां पयसः कर्मत्वाभावात् तत्संबन्धितया अपि गोः न कर्मत्वं इत्येतदर्थम् 'कर्मसंबन्धिनः' इति विशेषणम्। अत एव 'गां वत्सो दोग्धि' इति न प्रयोगः। अतः तदा 'गोः पयो दोग्धि' इत्येव प्रयोगः। न च स्वजन्योपलब्धेन स्वाधन दुहेरर्थः, तथा च धात्वर्थतावच्छेदकत्वाभावात् मुख्यमेव गोः कर्मत्वम्, इति कथमत्र द्वितीयायाः संबन्धे लक्षणा इति वाच्यम्। तथा विवक्षायां मुख्यकर्मत्वेऽपि धात्वर्थसंबन्धसामान्यविवक्षायां आनुशासनिकद्वितीयाया संबन्धलक्षणोपपत्तेः। अत एव न 'अकथितं च' इत्याद्यनुशासनवैयर्थ्यम्। अत एव वस्तुतः अत्र अपादानत्वाख्य एव गोः संबन्धः संबन्धत्वेन रूपेण द्वितीयाऽर्थः इति बोध्यम्। अन्ये तु 'अकथितं च' इतिसूत्रवैयर्थ्यापत्तिभियैव याचयति इत्यादिवत् दुहेरपि स्वजन्यं धात्वर्थतावच्छेदकं न मन्येरन् इति का मुख्यकर्मत्वक्षतिः इत्याहुः।

एवं अकर्मकधातुयोगे 'देशः कालो भावो गन्तव्योऽध्वा च कर्मसंज्ञः' इत्यनुशासनात् 'कुरून् स्वपिति, मासमास्ते, गोदोहमास्ते, क्रोशमास्ते' इत्यादौ द्वितीया। अत्र द्वितीयाऽर्थः अवच्छेदकत्वम्। तच्च देशस्य अध्वनश्च। कालभावयोश्च आधेयत्वं कालिकं साक्षात् भावनाऽन्वयि। एवम् 'अधिशीङ्स्थासां कर्म' (पा० १।४।४६) 'अभिनिविशश्च' (४७) 'उपान्वध्याङ्वसः' (४८) इत्याद्यनुशासनात् 'अधिशेते अधितिष्ठति अध्यास्ते वा वैकुण्ठं हरिः' इत्यत्र द्वितीयाऽऽदेः आधेयत्वमर्थः, 'अभिनिविशते सन्मार्गम्' इत्यत्र च। क्वचित् पापेऽभिनिवेशः। 'उपवसति अधिवसति अनुवसति आवसति वा वैकुण्ठं हरिः' इत्यत्र च। अभुक्त्यर्थस्य न 'वने उपवसति'। अत्र सर्वत्र आधेयत्वस्य स्वाश्रयकर्तृकत्वसंबन्धेन भावनायामन्वयः। एवं 'क्रुधद्रुहोरुपसृष्टयोः कर्म' (पा० १।४।३८) इति सूत्रात् 'क्रूरमभिक्रुध्यति अभिद्रुह्यति' इति द्वितीया। उपसृष्टयोः उपसर्गयुक्तयोः। अत्र उद्देश्यत्वं द्वितीयाऽर्थः, साक्षात् संबन्धेन भावनाऽन्वयी। अकर्मकत्वाच्च न मुख्यकर्मत्वम्। एवम् 'उभसर्वतसोः कार्या धिगुपर्यादिषु त्रिषु। द्वितीयाऽऽम्रेडितान्तेषु' 'अभितः-परितः-समया-निकषा-हा-प्रतियोगेऽपि' 'अन्तराऽन्तरेणयुक्ते' (पा० २।३।४) इत्यनुशासनात् 'उभयतः कृष्णं गोपाः, सर्वतः कृष्णं गोपाः, धिक् कृष्णाभक्तम्, उपर्युपरि लोकं हरिः, अध्यधि लोकम्, अधोऽधो लोकम्, अभितः कृष्णम्, परितः कृष्णम्, ग्रामं समया, ग्रामं निकषा, हा कृष्णाभक्तम्, बुभुक्षितं न प्रतिभाति किञ्चित्, अन्तरा त्वां मां हरिः, अन्तरेण हरिं न सुखम्' इत्यादौ उपपदयोगे तत्तल्लक्षणिकार्थेषु द्वितीया। तत्र आद्ययोः प्रतियोगित्वं द्वितीयाऽर्थः। स च साक्षात्संबन्धेन नास्ति एव अन्वेति उपपदविभक्तित्वात् इति बहवः। वस्तुतस्तु व्युत्पत्त्यन्तरकल्पनाऽऽपत्तेः तथापि भावनायामेव आक्षिप्तायां श्रुतायां वा अन्वयः। स च स्वनिरूपकोभयपार्श्वस्थित-गोपवृत्तित्वेन इति उपपदार्थस्य संसर्गघटकत्वात् उपपदविभक्तित्वम्। एवम् 'अभितः कृष्णम्, परितः कृष्णम्' इत्यत्रापि द्रष्टव्यम्। 'धिक् कृष्णाभक्तम्' इत्यत्र आधारत्वं तदर्थः। तस्य च स्वनिरूपकधिक्काराश्रयत्व-संबन्धेन तस्यामेवान्वयः। नैवम् 'धिङ् मूर्ख' इति प्रथमाऽऽपत्तिः, तत्र मूर्खस्य संबोधनद्वारा क्रियाऽन्वयेन विभक्त्यर्थघटितसंसर्गेण क्रियाऽन्वयविरहात्। 'उपर्युपरि लोकम्' इत्यादौ च निरूपितत्वं द्वितीया-

ऽर्थः । 'लोकनिरूपितोपरितनत्वविशिष्टदेशनिरूपितोपरितनत्वविशिष्टतद्देशस्थहरिकर्तृका क्रिया' इति शाब्दबोधः । 'उपर्युपरि बुद्धीनां चरन्तीश्वरबुद्धयः' इत्यादौ 'उपरिबुद्धीनां उत्तानबुद्धीनां उपरि ईश्वरबुद्धयश्चरन्ति' इति अर्थकरणेन आम्रेडितत्वाभावात् न द्वितीया । एवं 'ग्रामं समया, ग्रामं निकषा' इत्यत्रापि निरूपितत्वं द्वितीयाऽर्थः । तस्य च समयाऽऽदिपदार्थसामीप्ये अन्वयः । 'हा कृष्णाभक्तम्' इत्यत्र विषयत्वं तदर्थः, हाशब्दार्थः खेदाश्रितत्वम्, तद्विषयकः खेदोऽस्तीत्यर्थः । 'बुभुक्षितम्' इत्यत्र च आधेयत्वं द्वितीयाऽर्थः, विषयत्वं च आख्यातार्थः, स्वरूपसंबन्धः प्रथमाऽर्थः । तथा च किंचित्प्रतिभाविषयत्वं बुभुक्षितत्वाभावप्रतियोगिप्रतिभानिष्ठविषयितानिरूपितं (इदं 'यत् किंचित् प्रतिभाति तत्र बुभुक्षितम्' इति वचनव्यक्त्यङ्गीकारे बोध्यम्), किंचिन्निष्ठाभावप्रतियोगि या प्रतिभाविषयत्वं बुभुक्षितत्वप्रतिभानिष्ठविषयितानिरूपितम्, इति शाब्दबोधः । (इदं द्वितीयं तु 'यत् बुभुक्षित प्रतिभाति तत्र किंचित्' इति वचनव्यक्त्यङ्गीकारे । अतः उभयत्र प्रतिभाविषयत्वं इत्ययं आख्यातार्थः । प्रतिभानिष्ठविषयितानिरूपितं इति धात्वर्थप्रतिभायाः आख्यातार्थविषयत्वे संसर्गमर्यादया लभ्योऽर्थः । सोऽपीह द्वितीयाऽर्थविषयत्वस्य आख्यातार्थविषयत्वे संसर्गतया भासते इति ध्येयम्) । अन्तराशब्दस्य मध्यवाचित्वात् त्वां मां इत्यत्र संबन्धित्वं द्वितीयाऽर्थः, तव मम च मध्ये इत्यर्थः । 'अन्तरेण हरिम्' इत्यत्र प्रतियोगित्वं द्वितीयाऽर्थः । तत्र योग्यतया संबन्धान्वय इति ध्येयम् ।

एवं कर्मप्रवचनीयसंज्ञकशब्दप्रयोगेऽपि द्वितीया तत्तदर्थेषु साधनीया । तथाहि । कर्मप्रवचनीयास्तावत् अनु उप प्रति परि अभि अधि सु अति अपि इत्यादयः (अप आ) । तत्र हेतुत्वसमानाधिकरणं लक्षणं अनोरर्थः । यथा जपमनु प्रावर्षत्, जपरूपहेतूपलक्षितं वर्षणं इत्यर्थः । अत्र द्वितीयाऽर्थः आधेयत्वम्, तस्य हेतुत्वे लक्षणत्वे च अन्वयः, तयोश्च निरूपकतासंसर्गेण वर्षणे, तस्य च कृतौ इत्येवं संसर्गः । (अत्र 'अनुर्लक्षणे' पा० १।४।८४ इति सूत्रम् । अथ 'तृतीयाऽर्थे' पा० १।४।८५ इति सूत्रात्–) एवं तृतीयाऽर्थश्च अनोरर्थः, नदीमनु अवसिता सेना । अत्र व्याप्तिस्वरूपः तृतीयाऽर्थः अनोरर्थः, स्थितिर्धात्वर्थः, निरूपितत्वं द्वितीयाऽर्थः । नद्या सह संबध्य स्थिता इत्यर्थः । ('हीने' पा० १।४।८६) हीनत्वं च अनोरर्थः । 'अनु हरिं सुराः' हरेर्हीना इत्यर्थः । अत्र प्रतियोगित्वं द्वितीयाऽर्थः । हीनत्वं अधिकत्वं च उपार्थः ('उपोऽधिके च' पा० १।४।८७) । 'उप हरिं सुराः' । बोधः प्राग्वत् । अधिकत्वे सप्तमी वक्ष्यते । प्रति-परि-अनूनां च सामान्यतो लक्षणमर्थः । 'वृक्षं प्रति परि अनु वा विद्योतते चन्द्रमाः' । अत्र द्योतकत्वं प्रत्यादेरर्थः, आधेयत्वं द्वितीयाऽर्थः स्वाश्रयद्योतकत्वनिरूपकद्योतनानुकूलत्वं कृतौ संसर्गः । 'वृक्षनिरूपितद्योतनाश्रयः चन्द्रकृतिः' इति शाब्दबोधः । पूर्वं हेतुत्वसमानाधिकरणं लक्षणं अनोरर्थः इति सामान्यतो लक्षणार्थे अनोः पृथक् ग्रहणम् । एवं इत्थंभूताख्यानेऽपि एते त्रयः । 'भक्तोऽयं विष्णुं प्रति परि अनु वा' । इत्थंभूतः इत्यर्थः । विषयत्वं प्रत्याद्यर्थः, निरूपितत्वं द्वितीयाऽर्थः । भागेऽपि एते, 'लक्ष्मीः हरिं प्रति परि अनु वा' । हरेर्भाग इत्यर्थः । भागः स्वत्वं प्रत्याद्यर्थः, निरूपितत्वं द्वितीयाऽर्थः । वीप्सायां चैते, 'वृक्षंवृक्षं प्रति परि अनु वा सिञ्चति' । अत्र मुख्यकर्मत्वं यद्यपि जलादेः, तदा 'जलं सिञ्चति' इति प्रयोगः । यदा तु वृक्षनिरूपितसंयोगाश्रयत्वं विवक्षितम्, (जलनिरूपितसंयोगाश्रयत्वमेव वृक्षेऽपि विवक्षितम्) तदा 'वृक्षं जलेन सिञ्चति' इति प्रयोगः । तदा तस्य मुख्यमेव कर्मत्वम् । यदा तु जले मुख्यकर्मत्वं विवक्षित्वा प्रत्यादेश्च लक्षणार्थत्वं अङ्गीक्रियते, तदा 'वृक्षं प्रति जलं सिञ्चति' इत्यपि प्रयोगः । न चैवं वीप्साऽभावेऽपि प्रत्यादेः कर्मप्रवचनीयसंज्ञात्वे 'लक्षणेत्थंभूताख्यानभागवीप्सासु प्रतिपर्यनवः' (पा० १।४।९०) इत्यनुशासनवैयर्थ्यम्, प्रत्यादेर्लक्षणार्थत्वाभावेऽपि आभिमुख्यादिरूपान्तरार्थकत्वे (क्रियान्तरार्थकत्वे ?) वीप्सायां मन्यानेव कर्मप्रवचनीयसंज्ञा स्यादेवेत्वात् । अत एव वीप्साया न प्रत्याद्यर्थत्वं द्विर्वचनेनैव लाभात् । प्रत्यक्ष तत्र आभिमुख्यादिकं प्रत्याद्यर्थः, निरूपितत्वं द्वितीया-

ऽर्थः । एवं भागभिन्नेषु लक्षणादिषु अभिरपि कर्मप्रवचनीयसंज्ञः स्यात् ('अभिरभागे' पा० १।४।९१) 'हरिमभि वर्तन्ते भक्ताः, हरिमभि, देवं देवमभि सिञ्चति'। एवं अधि परि अति सु अपि इत्यादीनामपि उदाहरणानि बोध्यानि। एवं 'कालाध्वनोरत्यन्तसंयोगे' (पा० २।३।५) अपि द्वितीया। 'मासमधीते, क्रोशमास्ते'। अत्र निरन्तरसंनिकर्षो द्वितीयाऽर्थः। स च साक्षात् संबन्धेनैव भावनाऽन्वयी। तदेवं तत्रतत्र शाब्दिकानुशासनान्यपि द्रष्टव्यानि। मुख्यकर्मत्वसंभवे तु तदेव द्वितीयाऽर्थः। यत्र तु मुख्यस्य अमुख्यस्य वा विशेषणम् 'शुक्लमोदनं पचति, शुक्लां गां दोग्धि पयः' इत्यादौ, तत्र पदद्वयेन शुक्लगुणविशिष्टौदनकर्मत्वस्यैव लक्षणात् तस्य च भावनायामन्वयेऽपि 'गुणवचनानामाश्रयतो लिङ्गवचनानि भवन्ति' इत्यनुशासनात् अवस्थितत्वात् विशेषणविभक्तिः शुक्लपदोत्तर द्वितीया साधुत्वमात्रार्थी, न तु अरुणैकहायन्यादिवत् विशेषणस्य पृथगेव भावनाऽन्वयः। गव्याः एककर्मत्वमप्यापत्तेः। नापि शुक्लपदार्थस्य अभेदेन ओदनान्वयः, नामार्थस्य स्वोत्तरविभक्त्यर्थेन सहान्वयस्य नामार्थान्तरेणान्वये व्युत्पत्त्यन्तरकल्पनाऽऽपत्तेः। अत एव भावनायाः एककर्मकत्वभङ्गभिया द्विकर्मकधातुस्थलेऽपि एकमेव कर्मत्वेन भावनाऽन्वयि। अपरं तु द्वितीयान्तमधिकरणत्वादिनैव भावनाऽन्वयि। साक्षात्फलधात्वर्थान्वयस्तु कर्मत्वेनैव इति न धातो द्विकर्मकत्वहानिः इति भूषणे कौस्तुभे। तत् सिद्धं सर्वत्र द्वितीयाऽर्थस्य भावनाऽन्वय इति।

(क्रियाविशेषणानि द्वितीयान्तानि)। ननु एवम् 'मृदु ओदनं पचति, स्तोकमोदनं पचति' इत्यादौ कर्मकारकविशेषणत्वात् द्वितीयोपपत्तावपि यत्र 'क्रियाविशेषणानां नपुंसकम्' इत्यनुशासनात् 'मृदु पचति, स्तोकं पचति' इत्यादि नपुंसकलिङ्गनिर्देशः, तत्र क्रियाविशेषणत्वात् अभेदसंबन्धेन क्रियान्वयेऽपि द्वितीयोत्पत्तौ प्रमाणाभावः। नहि किंचिदनुशासनं तथास्ति। साधुत्वार्थं तत्र द्वितीया इति चेत्, साधुत्वार्थं चतुर्थ्यादेरपि आपत्तेः। प्रथमाऽतिक्रमे कारणाभावेन प्रथमाया एव आपत्तेश्च। किञ्च नामार्थस्य स्वोत्तरविभक्त्यर्थे एवान्वयस्य अभेदसंबन्धेनापि धात्वर्थान्वयाभ्युपगमे व्युत्पत्त्यन्तरकल्पनाऽऽपत्तिः। 'सुखं स्वपिति, सुखमास्ते, सुखं गच्छति' इत्यादौ अभेदान्वयानुपपत्तिश्च। न चात्र कर्मणि द्वितीया, धात्वर्थतावच्छेदकफलशालित्वस्य सुखे अभावात्, 'सुखमोदनं पचति' इत्यादौ द्विकर्मकताऽऽपत्तेश्च। अकर्मकस्यापि द्विकर्मकत्वस्य अनुचितत्वाच्च। सुखादेः कर्मत्वे 'सुखमोदनः पच्यते, स्तोकमोदनः पच्यते' इत्यादौ द्वितीयाऽनापत्तेश्च। कृद्योगे ओदनस्येव षष्ठ्यापत्तौ 'सुखमोदनस्य पक्ता' इत्यादौ द्वितीयाऽनापत्तेश्च। अतः कथं क्रियाविशेषणानामन्वयः इति चेत्। अत्र वैयाकरणाः (इत्याहुः इति अग्रे अन्वयः) धात्वर्थीभूतफूत्कारादिव्यापारस्य फलं विक्लित्तिरपि धात्वर्थः। तद्विशेषणं च स्तोकादिकम् इति तस्य कर्मत्वात् तद्विशेषणस्य द्वितीयाऽन्वयः। न च विक्लित्त्यादिफलस्यैव क्रियाजन्यफलाश्रयत्वरूपमुख्यकर्मत्वाभावः, विक्लित्तेरिव तण्डुलेष्वपि 'विक्लित्तिमुत्पादयन्ति' इति विवरणानुरोधेन धात्वर्थव्यापारजन्यफलाश्रयत्वेन विक्लित्तेरपि मुख्यकर्मत्वात् तद्विशेषणे द्वितीयोपपत्तेः। न चैवं 'विक्लित्तिं पचति' इति प्रयोगापत्तिः, तस्याः धातुनैव उक्ततया उक्तार्थानामप्रयोगात्। अकर्मकधातुस्थलेऽपि धात्वर्थफलस्य शरीरसंयोगादेः सुखसाधनत्वात् सुखपदेन सुखसाधनं लक्षयित्वा तस्य द्वितीयाऽन्वयोपपत्तिः। न चैवं तस्य धातोः अकर्मकत्वानापत्तिः, व्यधिकरणफलाश्रयत्वव्यापारजन्यत्वाभावेन अकर्मकत्वोपपत्तेः। अतस्तस्य सकर्मकाकर्मकतासाधारण्येन उपपत्त्या प्रयत्नप्रकर्षत्वेऽपि न क्षतिः। अतो धातुकैव एतादृशकर्मणि सर्वत्र द्वितीया। अत एव तादृशलिङ्गे एव 'क्रियाविशेषणानां नपुंसकम्' इत्यादिना नपुंसकत्वम्। तच्च अनियतलिङ्गविषयम्। नियतलिङ्गानां तु तत्तल्लिङ्गत्वे सत्येव द्वितीयाऽन्वयम्। अत एव 'आर्द्रं पचति' इत्यादि प्रयोगः। आर्द्रभूता या विक्लित्तिः, तज्जनको व्यापारः इत्यर्थः। न च तादृशकर्मकारकमादाय कर्मणि लकारः कृद्योगनिमित्तिका षष्ठी वा आपद्येत इति वाच्यम्। व्यापारव्यधिकरणधातुवाच्यफलाश्रयस्यैव कर्मणो तयोः प्रवृत्तेः, उपपदः अमुख्यकर्मत्वेन तदाश्रये तयोरप्रवृत्तेः।

'लः कर्मणि च भावे चाकर्मकेभ्यः' (पा० ३।४।६९) 'कर्तृकर्मणोः कृति' (पा० २।३।६५) इत्यादिसूत्रेषु कर्मपदेन तादृशकर्मग्रहणस्यैव निर्णीतत्वात्। इतरथा सर्वेषामेव सकर्मकत्वेन 'अकर्मकेभ्यः' इति पदोपादानानुपपत्तेः। अतश्च 'स्तोकमोदनः पच्यते, स्तोकमोदनस्य पक्ता' इत्यादौ द्वितीयाऽन्तत्वोपपत्तिः। यत्र तु विधिवशात् धात्वर्थस्य करणत्वम्, तत्र तद्विशेषणे तृतीया। यथा 'ज्योतिष्टोमेन यजेत' इति। तत्र 'अतिसमीचीनं ज्योतिष्टोमेन यजेत' इति यद्विशेषणम्, न तत् धात्वर्थस्य, अपितु भावनायाः। अत एव सा प्रथमा न द्वितीया। इत्याहुः ( वैयाकरणाः ) तन्न। व्यापारव्यधिकरणधातुवाच्यमुख्यफलाश्रयत्वरूपकर्मण्येव लकारकृत्ययोः प्रवृत्तौ 'चैत्रेण आस्यते मासः, सुप्यते रात्रिः' इति कर्मलकारानापत्तेः। नहि तत्र तादृशं फलमस्ति। तथात्वे तस्य स्वाभाविकाकर्मकत्वानापत्तेः। धातूपात्तफलसमानाधिकरणव्यापारवाचित्वं हि भवन्मते अकर्मकत्वम्। अतस्तत्र तादृशफलाप्रसिद्धेः न द्वितीयाकर्मलकाराद्यापत्तिः। अत एव न परसमवेतक्रियाजन्यधात्वर्थतावच्छेदकीभूतफलशालित्वं कर्मत्वम्, नापि तत्सम-नियतान्यतरोपाधिः कर्मत्वम्। तदभावेऽपि 'चैत्रो मासमास्ते' 'आस्यते मासः' इत्यादौ कर्मत्वव्यवहारेण व्यभिचारात्। अपितु तद्व्यापकं तत्समानाधिकरणमात्रं वा, अथवा किंचिद्धात्वाकाङ्क्षापूरकत्वमनियतमेव अखण्डोपाधिरूपं कर्मत्वम्। तच्च पचतीत्यादौ ओदनस्यैव आस्यते इत्यादौ मासादेरपि अविशिष्टं इति युक्तमेव अत्र द्वितीयाऽऽदि। तच्च तत्तद्धातुसमभिव्याहारगम्यं इत्युक्तं कौस्तुभे। सुखादिरूपक्रियाविशेषणानां तु न क्रियाकारकाकाङ्क्षापूरकत्वम्, अपितु कथमाकाङ्क्षापूरकत्वमेव। अत एव 'कथं पचति स्वपिति वा, सुखम्' 'कीदृशं पचति, स्तोकं मृदु वा' इत्यादिप्रश्नोत्तरभावोऽपि संगच्छते। अतो न तत्र कर्मत्वाविर्भावः। नापि तद्रूपेण उपस्थितेः फलस्य वा धातुवाच्यत्वकल्पनम्, अन्यलभ्यत्वात् तयोः। अत एव पाकत्यागत्वादिनैव धातोः शक्तिः इत्युक्तं प्राक्।

कथं तर्हि तत्र द्वितीयानियमः ? 'उभसर्वतसोः कार्या धिगुपर्यादिषु त्रिषु। द्वितीयाऽऽम्रेडितान्तेषु ततोऽन्यत्रापि दृश्यते॥' इत्यनुशासनात् इति गृहाण। अत्र ततोऽन्यत्रापि इति प्रतिपदोक्तात् अन्यत्र क्रियाविशेषणेऽपि इत्यर्थः। अत एव 'अन्यत्रापि दृश्यते' इत्युक्तम्। तदेतदाह 'अभितः परितः समया निकषा हा प्रति' इति अभिधस्य प्रतिपदोक्तपरतया व्याख्यानात् व्याख्यानमपि अप्रमाणं वैयर्थ्यापत्तेः। तस्मात् सिद्धं क्रियाविशेषणेषु द्वितीयाया अनुशासनम्। अत एवात्र द्वितीयाग्रहणात् न लकारषष्ठ्यौ। अतस्तेषामपि तात्पर्यानुरोधेन फलद्वारको धातूपात्तव्यापारद्वारकः साक्षादेव वा भावनायामन्वयः। सर्वथैव द्वितीयाऽन्तत्वम्। तत्र स्तोकं मृदु समीचीनं इत्यादौ द्वितीयाऽर्थो लक्षणया आश्रयित्वम्। स्तोकत्वादिकं च लक्षणया शक्त्यैव वा प्रातिपदिकार्थः। तदाश्रयित्वं च यदि फलसंबन्धे तात्पर्यम्, तदा स्वनिरूपकफलजनकव्यापारानुकूलत्वसंसर्गेण कृतौ अन्वेति। यदि व्यापारसंबन्धे, तदा स्वनिरूपकव्यापारानुकूलत्वसंसर्गेण, यदि तु भावनासंबन्धे तदा साक्षादेव इति विवेकः।

एतेन 'भावनासंबन्धे प्रथमैव' इति परास्तम्। भावनायाः संबन्धविवक्षया 'आढ्यः पचति' इति प्रयोगापत्तेश्च। न चासौ इष्टः। महद्वाक्येऽपि अदर्शनात्। ज्योतिष्टोमेन इत्यत्रापि न क्रियाविशेषणत्वम्, अपितु धात्वर्थस्य करणत्वेन भावनाऽन्वयवत् नामार्थस्यापि करणत्वेनैव अन्वयः। नामार्थो हि यद्यपि धात्वर्थ एव, तथापि धातुना विजातीयभावत्वादिना बोधात्, नाम्ना च ज्योतीरूपस्तोमकत्वादिना बोधात् न पर्यायत्वम्। अभेदबोधस्तु अदोषायैव ( पार्थिकः ) इति वक्ष्यते। अत एव 'ज्योतिष्टोमेन इत्यत्र अभेदार्थिका तृतीया' इति तार्किकमतमपास्तम्, अभेदस्य कारकत्वे प्रमाणाभावात्। 'धान्येन धनी' इत्यादावपि धनशब्दे नामार्थस्य करणत्वोपपत्तेः अभेदस्य तृतीयार्थत्वस्य क्वापि अदर्शनात्। कथमन्य-विवक्षाभावे एव च क्रियाविशेषणस्य निर्विवादं द्वितीया 'स्वाहाकारं यजति' इतिवत् लौकिकवाक्ये न विरुध्यते। स्वाहाकारवाक्ये तु छन्दस्यनुशासनेन कर्मत्व-

लक्षणा । 'सुप्तं स्वपिति' इत्यादावपि जनकत्वं द्वितीयाऽर्थः । सुप्तजनकः स्वापः इत्यर्थः । यद्वा सुप्तपदं अनायासपरम् । द्वितीयाऽर्थः पूर्वकत्वम् । आयासाभावपूर्वकः स्वापादिः इत्यर्थः ।

सर्वथा सिद्धं सर्वत्र द्वितीयाऽर्थो भावनाऽन्वयी इति । भावना च लिङ्गानन्वयिदोषस्वाप्ता । तत्र सिद्धक्रियासापि । न तु प्रथमायामिव निराशेव । अत एव 'ओदनं पचति, ओदनं परिध्नन्, ओदनं भुङ्क्ते' इत्यादौ सर्वत्र द्वितीयायाः भावनाऽन्वयः इति संक्षेपः । रहस्य. पृ. ६७–९१.

• द्वितीयाऽर्थः साध्यत्वमेव न साधनत्वं इति विचारः ग्रहैकत्वाधिकरणे । के २।१।४।१२.

• द्वितीयादिश्रुतीनां 'व्रीहीन् प्रोक्षति' इत्यादिवाक्येषु स्वसमवताऽवच्छेदकधर्मत्वव्याप्यच्छिन्नतात्पर्यकत्व संमार्गाधिकरणादौ निर्णीतम् (कौस्तुभे) । सुपरि. पृ. ११६८.

• द्वितीयाश्रुतमेव प्राधान्यम् 'ऐन्द्या गार्हपत्यमुपतिष्ठते' इत्यत्र । वा ३।१।४।१२ पृ. ४१३.

• द्वितीयाचतुर्थ्यौ तस्या भावनाया आत्मार्थे क्रिया कुरुत', तृतीयायाश्च भावनायामेव तस्या आत्मानं क्रियार्थमेव कुर्वन्ति । अथवा द्वितीया उद्भूत शक्तिकर्म प्रतिपादयति, तिष्ठा न्यग्भूतम् । न च द्वितीयाऽन्त कारककारकान्तरेण सम्बुध्यते, उद्भूतशक्तित्वात् । भा ६।१।२।२.

• द्वितीयाया आप्यत्वं अभीप्सितत्वस्य तत्त्वधिकरणे निषिद्धम् । सु. पृ. १०८७.

• द्वितीयाश्रवणात् गार्हपत्यस्य ईप्सिततमत्वम्, ऐन्द्याश्च तृतीयाश्रुत्या करणत्वम् । वा. ३।२।७।१४ पृ. ८१५.

• द्वितीयासयोगात् कर्मणः प्राधान्यं विज्ञायते, निष्कासस्य तु सांशयिकात् गुणभावः । भा. ११।२।१६।६६.

• द्वेधा संभवे वाक्यी प्रमाणातिशयवणीया या प्रमाणान्तर न बाधते । वा. ३।४।१।५.

• द्वेषः अप्रशस्तप्रत्ययाधीनोत्पत्तिः । वा. १।२।१।७ पृ. ११५. • द्वेषः अप्रीतिः । सु. पृ. १३५. • द्वेषात् कृते विद्वान् न निवर्तते । वा. १।२।१।७ पृ. ११५.

• द्वेषमन्त्रः 'योऽस्मान् द्वेष्टि, यं च वयं द्विष्मः' इति कर्मसु नित्यः । भा. ६।८।८।२८.

• द्वेष्यं अनीप्सितं कर्म यथा 'विषं भुङ्क्ते' । मणि. पृ. १३०. • 'द्वेष्ये चाचोदनात् दक्षिणाऽपनयः स्यात्' (१०।२।१६।४७) इत्यत्र दर्शादौ प्राकृतवैकृतदक्षिणासमुच्चय उक्तः । बाल. पृ. १७७.

द्वेष्ये चाचोदनाद्दक्षिणाऽपनयः स्यात् । १०।२।१६।४७ ॥

दर्शपूर्णमासयोः 'यदि पत्नीः संयाजयन् कपालमभिजुहुयात्, वैश्वानरं द्वादशकपालं निर्वपेत्, तस्यैकहायनो गौर्दक्षिणा, तं तु द्वेष्याय दद्यात्' इति श्रूयते । द्वेष्ये च इदं दान धर्ममात्रं न परिक्रयार्थं इति चशब्देन अन्वादिश्यते । द्वेष्यस्य ऋत्विजः अचोदनात् चोदनाऽभावात् । नहि द्वेष्यः ऋत्विक् कर्तुं शक्यते 'ऋत्विजाचार्यौ नातिचरितव्यौ' इति निषेधात् । परिक्रयार्थत्वे दानस्य स्वीकृते तु दक्षिणायाः चोदकप्राप्तस्य अन्वाहार्यस्यापि अपनयः स्यात् । तत्र चोदको बाध्येत । धर्मार्थं एकहायनस्य दानं अनुत्विजे कस्मैचित् विप्राय दातव्यम् । इति सिद्धान्तः । के

• द्वेष्यसंप्रदानकदानस्य अदृष्टार्थत्वमेव कपालाभिहोमनिमित्तकवैश्वानरेष्टौ । भा. १०।२।१६।४६.

• द्वैपायन. अनूढाया सत्यवत्या पराशरात्. । पश्चादूढाया शंतनोः विचित्रवीर्यः । सु. पृ. १९१.

• द्वैरशन्यात् लिङ्गात् ऐकादशिनेषु पशुषु सौम्यस्य विधानं, सुप्रशस्तत्वात् । भा ८।१।७।१४.

• द्व्यामुष्यायणानां शैशिरादीनां एकतो द्वौ अन्यत एक इति व्यवस्थया आर्षेयवरणम् । संकर्ष. ३।४।८.

घ.

घटारोहणन्याय. । साहस्री. २११ । व्यवहारे दिव्यविशेषोऽयम् । अत्र याज्ञवल्क्यः— 'तुलाधारणविद्भिरभियुक्तस्तुलाऽऽश्रितः । प्रतिमानसमीभूतो रेखां कृत्वाऽवतारितः ॥' सुवर्णकारप्रभृतिभिः प्रतिमानेन मृदादिना समीभूतः समीकृतः तुलामाश्रितः आरूढः अभियुक्तः अभियोक्ता वा दिव्यकारी रेखां कृत्वा येन

संनिवेशेन प्रतिमानसमीकरणदशाया शिक्यतले अवस्थितः तस्मिन् पाण्डुलेखेन अङ्कयित्वा अवतारितः तुलामभिमन्त्रयेत् 'त्वं तुले सत्यधामाऽसि पुरा देवैर्विनिर्मिता । सत्यं वद वरारोहे संशयान्मां विमोचय ॥ यद्यस्मि पापकृन्मातस्ततो मां त्वमधो नय । शुद्धश्चेद् गमयोर्ध्वं मां तुलामित्यभिमन्त्रयेत् ॥' २।१००–१०२ ॥ ( किञ्चिदपि ऊर्ध्वंगमने शुद्धिः ) । के.

* धनम् । मध्यमं छीदे दंपत्योर्धनम् । भा. ६।१।४।१७.

* धनार्जनं न शास्त्रविधिभिराक्षिप्तम्, भोजनादिभिर्भिन्नकार्यैरेव तस्याक्षिप्तत्वात् । धनार्जनस्य तु न कोऽपि विधिः । याजनाध्यापनादिविधयस्तु नियमार्थाः । वि. ६।१।८.

* धनभिक्षा यज्ञार्थं धनवताऽपि कर्तव्या, अपूर्वार्थत्वात् । के. ६।८।७।२६–२७.

* धनवताऽपि भृतिर्यजनीया ज्योतिष्टोमे । भा. ६।८।७।२६–२७.

* धनहीनस्यापि कर्माधिकारः । अधिकारशब्दे अधिकरणम् । भा. ६।१।८।३९–४०.

धनञ्जयन्यायः । यथाहुः–' नित्यमोहपरिपीडित जगद्विभ्रमं हरति मानवस्य मतिः । वासुदेवनिहतं धनञ्जयो हन्ति कौरवकुलं यथा पुनः ॥' इति । ( ' वासुदेवसहितो धनञ्जयः ' इति सग्रहे पाठः ) । साहस्री. २१४.

* धनियत्वं निपादस्य प्रभवति । के. ६।१।२।३।५९.

धनुर्गुणन्यायः । अयं न्यायो यथा, कुटिलेऽपि धनुषि दृढं गुणं आरोपयन्ति, तद्वन्महान्तस्तु स्वभावतोऽतिकुटिलेऽपि जने गुणमारोपयन्तीति विषयेऽवतरति । उक्तं च शार्ङ्गधराचार्यैः 'आजन्मतोऽतिकुटिलेऽपि जने महान्तस्त्वारोपयन्ति हि गुणं धनुषीव शूराः' इति । साहस्री. ८९६.

* धन्वति निरुक्ते कृताः प्रयाः परेषामुपकुर्वन्ति । चा. १।३।१।२ पृ. १६६.

* 'धर्मोऽपि च धनेनैव नर संसारवर्तिनाम् । न हि केवलापेन देहेनाभ्यस्यते नरः ॥' सा. २।७।१०।२९. * धर्मः अर्थत्वे सति चोदनागम्यः । यद्यपि चैत्यवन्दनादौ घटादौ च अतिव्याप्तिव्यवच्छेदाय चोदनागम्यः इत्युक्तम् । त्रिविधाम्ये अनर्थफलत्वेन अनर्थरूपे श्येनाद्यभिचारकर्मणि अतिव्याप्तिव्यवच्छेदाय अर्थः इत्युक्तम् । वि. १।१।२. * धर्मः (कर्मरूपः) चोदनालक्षण एव, न प्रत्यक्षादिप्रमाणकः । भा. ५।१।१।१ वर्णक २ पृ. १२८९. * धर्मः जिज्ञासितव्यः । योऽयं (पुरुषः) अविचार्य प्रवर्तमानः कश्चिच्छ्रेयोपादास्यतो विहन्येत, अनर्थं च ऋच्छेत् । तस्माद्धर्मो जिज्ञासितव्यः । १।१।१।१ पृ.११. * धर्मः शाबरभाष्ये व्युत्पाद्यः । वि. मङ्गलम् ११, * धर्मः नाम अपूर्वम्, अपूर्वस्यैव धर्मत्वात् । २।१।१. * धर्मः निःश्रेयसेन पुरुषं संयुनक्ति इति प्रतिजानीमहे । भा. १।१।२।२ पृ. ११. * धर्मः प्रत्यक्षानुमानयोरविषयः । वि. १।१।२, * धर्मः विधिनैव गम्यते, न प्रत्यक्षानुमानादिना । १।१।४. * धर्मः वेदेन प्रयोजनमुद्दिश्य विधीयमानोऽर्थः । यथा यागादिः । मीन्या. * धर्मः शब्दलक्षण इत्युक्तं चोदनालक्षणोऽर्थो धर्म इति । भा. १।३।१।१ पृ. १६०. * अस्मिन् शास्त्रे ( मीमांसायाम् ) जिज्ञास्यत्वेन धर्मः प्रमेयः प्रकान्तः । भा. २।१।१।१. पृ ३७०.

* धर्माः (अङ्गानि) अपूर्वार्थाः इति स्विन संनिपत्योपकारका आरादुपकारकाश्च प्रकरणेन प्रमाणेन । टुप्. ९।१।१।१ वर्णक २. * धर्माः (अङ्गानि) अपूर्वनिमित्ताः अपूर्वप्रयुक्ताश्च । भा. ९।१।१।२ पृ. १६३८, * धर्माः (अङ्गानि) अपूर्वप्रयुक्ताः । ततो यदाप्रकरणं प्रयत्नमिष्टन्ते । ७।१।१।१ पृ. १५२४, * धर्माः अर्थप्रयुक्ताः । ( यूपधर्माः परिधिधर्माः इत्यादौ । अर्थः फलम् ) । १२।२।१०।२६. * धर्माः ये संनिपत्योपकारकाः तेऽपि अपूर्वार्थाः इति नवमे प्रतिपाद्यते ऊहसिद्धये । टुप्. ९।१।१।२ पृ. १६३८, * धर्माः ( अङ्गानि ) यत्र सादृश्यं तत्र प्राप्यन्ते, असति सादृश्ये नास्ति धर्मप्राप्तिः । ८।१।२।२ पृ. १५८५. * धर्मं केचित् बुद्धिगुणं मन्यन्ते केचिदात्मगुणम् । बृहती. पृ. २६. * धर्मं प्रति हि विप्रतिपन्ना बहुविदः केचिदन्यं धर्ममाहुः केचिदन्यम् । भा. १।१।१।१ पृ. १०. * धर्मं विषयी-

कृत्य चिन्त्यते । धर्मस्य न किञ्चित् प्रमाणमस्ति, किंवा प्रत्यक्षादिकमेव प्रमाणम्, उत चोदनैव, अथवा विकल्पः, अथवा समुच्चयः इति । तत्र शब्दस्य प्रमाणान्तरप्राप्तप्रापकत्वेन स्वयमप्रमाणत्वात् प्रत्यक्षादीनां च असामर्थ्यात् अप्रमाणको धर्मः इत्येकः पक्षः । योगिनां प्रत्यक्षगम्यः, अर्वाचीनानां तु चोदनागम्यः इत्यपरः । जगद्वैचित्र्यार्थोपपत्त्या किमपि अदृष्टमस्ति इति सामान्येन प्रसिद्धो धर्मः चोदनया अग्निहोत्रादिविशेषरूपेण गम्यते, तस्मात् समुच्चयः इति पक्षान्तरम् । चोदनैव, सा च प्रमाणमेव इति सिद्धान्तः । तदिदं चोदनैव प्रमाणम्, सा च प्रमाणमेव इति अवधारणद्वयं प्रतिज्ञायते । ...... चोदनालक्षणमात्रस्य धर्मत्वं मा भूत् इति अर्थशब्देन विशेष्यते । चोदनाशब्देन च प्रवर्तकं निवर्तकं च वाक्यमुच्यते । ततश्च निषेधवाक्यैः 'न हिंस्यात्' इत्यादिभिः अनर्थत्वेन लक्ष्यमाणानां हिंसादीनामपि धर्मत्वं स्यात् तद्व्यावृत्त्यर्थं य एव अर्थरूपेण प्रवर्तकवाक्यैर्लक्ष्यते तस्यैव धर्मत्वं वक्तुं अर्थग्रहणम् । भाष्ये च श्येनादिग्रहणं साध्यहिंसादिलक्षणार्थम् । उपरिष्टात् 'हिंसा हि सा, सा च प्रतिषिद्धा' इति विवरणात् । शा. चोदनासूत्रे पृ. १८-२६ किञ्चित् किञ्चित्. ● साक्षात् फलसाधनमात्रस्य धर्मत्वानुपगमात् । यच्च फलपदेन सह सम्बध्यते तस्यार्थे धर्मं अपूर्वसाधनं च मन्यन्ते । वा. २।१।१।१ पृ. ३७१. ● धर्मान् मान्यमान आकाङ्क्षति करणानुग्रहत्वेन । तुप्. ३।१।१।१ पृ. १६२७.

※ धर्माद्वा स्यात् प्रजापतिः ।१०।८।१५।५१॥

दर्शपूर्णमासयोः उपांशुयाजे प्रजापतिर्देवता स्यात् । उपांशुत्वरूपात् धर्मात् । उपांशुयाजमन्तरा यजति, 'यत् किंचित् प्राजापत्यं यज्ञे क्रियते उपांश्वेव तत् क्रियते' इति वचनाच्च प्रजापतेरपि उपांशुत्वम् । तस्मात् प्रजापतिः स्यात् । इत्येकः पक्षः । वाशब्दः पक्षविशेषमाह ।

देवतायास्त्वनिर्वचनं तत्र, शब्दस्येह मृदुत्वम्, तस्मादिहाधिकारेण ॥ ५२ ॥

तुशब्दः उपांशुयाजे प्रजापतिदेवताकत्वपक्षं व्यावर्तयति । तत्र 'प्रजापतिं मनसा यजेत्' इति वाक्ये देवतायाः प्रजापतेः अनिर्वचनं तूष्णींभावः धर्मः अवगम्यते । इह प्राजापत्यवाक्ये उपांशुत्वं नाम शब्दस्य मृदुत्वं अस्पष्टत्वं उक्तम् । न तूष्णींभाव उक्तः । किञ्च 'प्रजापतिं मनसा यजेत्' इत्यस्य विधेः 'तस्माद्यत् किंचित् प्राजापत्यं यज्ञे क्रियते उपांश्वेव तत् क्रियते' इति अनुवादस्वरूपः अर्थवादः । तस्मात् उपांशुयाजे न प्रजापतिः । किन्तु इह उपांशुयाजे अधिकारेण प्रकरणेन देवता ग्राह्या, अग्निः । इति द्वितीयः पक्षः ।

विष्णुर्वा स्याद्धौत्राम्नानादमावास्याहविश्च स्याद्धौत्रस्य तत्र दर्शनात् ॥ ५३ ॥

उपांशुदेवता नाग्निः स्यात् इति वाशब्दार्थः । किं तर्हि ? विष्णुः स्यात् देवता । हौत्राम्नानात् । अमावास्यां प्रकृत्य 'इदं विष्णुर्वि चक्रमे, प्र तद्विष्णुः स्तवते वीर्येण' इति वैष्णवं हौत्रमाम्नायते । तस्मात् विष्णुः स्यादुपांशुयाजदेवता । किञ्च पौर्णमासीहविर्वत् अमावास्याहविश्च उपांशुयाजः स्यात् । तत्र अमावास्यायां वैष्णवस्य उपांशुयाजहौत्रस्य दर्शनात् । हौत्रमुक्तमेव ।

अपिवा पौर्णमास्यां स्यात् प्रधानशब्दसंयोगाद् गुणत्वान्मन्त्रो यथाप्रधानं स्यात् ॥ ५४ ॥

उपांशुयाजे विष्णुर्देवता इति यदुक्तम्, तद् उच्यते । अमावास्यायां उपांशुयाजः इति तु न गम्यते । किन्तु सः पौर्णमास्यां स्यात्, 'आज्यस्य वै उपांशु पौर्णमास्यां यजन्' इति प्रधानशब्दस्य पौर्णमासीशब्दस्य संयोगात् । ननु वैष्णवहौत्रमन्त्रो अमावास्यायामुक्तो तत् कथं उपांशुयाजः अमावास्यायां न स्यात् इति चेन्न, मन्त्रः गुणत्वात् यथाप्रधानं स्यात् । प्रधानं न मन्त्रस्य किन्तु मन्त्र एव यथाप्रधानं गुणत्वात् । तस्मात् नामावास्यायां उपांशुयाजः । सिद्धान्तपक्ष एवायम् ।

आनन्तर्यं च सांनाय्यस्य पुरोडाशेन दर्शयत्यमावास्याविकारे ॥ ५५ ॥

अमावास्यायाः विकारे दाक्षायणीये नाम यागे सांनाय्यस्य पुरोडाशेन आनन्तर्यं दर्शयति 'आज्यभागाभ्यां प्रचर्य आग्नेयेन पुरोडाशेन आग्नीध्रे स्रुचौ प्रदाय सह कुम्भीभिरभिक्रामन्नाह' इति श्रुतिः । अत्र हि आग्नेयात् पुरोडाशात् सांनाय्यस्य आनन्तर्यं दर्शितम्, न उ

उपांशुयाजस्य । तस्मात् अमावास्यायां नोपांशुयाजः । इति सिद्धान्तपक्षे हेत्वन्तरमुक्तम् ।

**अग्नीषोमविधानात्तु पौर्णमास्यामुभयत्र विधीयते । ५६ ॥**

पौर्णमास्यामेव उपांशुयाज इति पक्षं तुशब्दो व्यावर्तयति । 'उपांशुयाजमन्तरा यजति' इति वाक्येन अविशेषेण उपांशुयाजः उभयत्र पौर्णमास्याममावास्यायां च विधीयते । 'तावब्रूतामग्नीषोमौ ... उपांशु पौर्णमास्याम्' इति पौर्णमास्यां अग्नीषोमयोर्विधानात् अग्नीषोमदेवत्यः उपांशुयाजः पौर्णमास्याम्, मन्त्राम्नानात् वैष्णवः उपांशुयाजः अमावास्यायां इति देवताविकल्पः स्यात् । इति अन्यः पूर्वपक्षः ।

**प्रतिषिध्यविधानाद्वा विष्णुः समानदेशः स्यात् । ५७ ॥**

पौर्णमास्याममावास्यायां च उपांशुयाजः इतिपक्षं वाशब्दो व्यावर्तयति । प्रतिषिध्य अमावास्यां वर्जयित्वा पौर्णमास्यां उपांशुयाजस्य विधानात् । विष्णुः प्रजापतिना अग्नीषोमाभ्यां च समानदेशः स्यात् । तयोर्यो देशः पौर्णमासी स एव देशो विष्णोरपि । तस्मात् पौर्णमास्यामेव उपांशुयाजः तत्रैव च देवताविकल्पः इति सिद्धान्तवादी । 'आज्यस्यैव नौ उपांशु पौर्णमास्यां यजन्' इति प्रकृत्य आम्नायते 'जामि वा एतद् यज्ञस्य क्रियते यदन्वञ्चौ पुरोडाशौ उपांशुयाजमन्तरा यजति' इति । अन्वञ्चौ पुरोडाशौ पौर्णमास्यामेव नामावास्यायाम् । तत्रैव चेदं वचनम् 'विष्णुरुपांशु यष्टव्योऽजामित्वाय, प्रजापतिरुपांशु यष्टव्योऽजामित्वाय, अग्नीषोमावुपांशु यष्टव्यावजामित्वाय' इति । तस्मात् युक्तः सिद्धान्तः ।

**तथा चान्यार्थदर्शनम् । ५८ ॥**

तथा च अमावास्यायां उपांशुयाजाभावे अन्यार्थदर्शनं भवति । 'चतुर्दश पौर्णमास्यामाहुतयो हूयन्ते, त्रयोदशामावास्यायाम्' इति । अमावास्यायामुपांशुयाजसत्त्वे चतुर्दश आहुतयः स्युः, न त्रयोदश । तस्मादमावास्यायां नोपांशुयाजः । इति सिद्धान्तः । पञ्च प्रयाजाः, द्वौ आज्यभागौ, आग्नेयाग्नीषोमीयौ द्वौ, उपांशुयाज एकः, स्विष्टकृत्, त्रयोऽनूयाजाः, इति चतुर्दश आहुतयः पौर्णमास्याम् । अमावास्यायां [illegible] आग्नेयः सानाय्यं चेति द्वे इति विशेषः, उपांशुयाजश्च नास्ति इति त्रयोदश आहुतयः ।

**न चानर्थ्यं सकृच्छ्रुतावुभयत्र विधीयेतासंबन्धात् । ५९ ॥**

इतश्च नामावास्यायामुपांशुयाजः । अनङ्गं अङ्गाभिन्न प्रधानं उपांशुयाजः सकृत् पौर्णमास्यां श्रुतौ श्रवणे सति उभयत्र पौर्णमास्यां अमावास्यायां च न विधीयेत, सकृत् श्रवणे उभयत्र न स्यात् । असंबन्धात् प्रधानस्य प्रधानेन संबन्धाभावात् ।

**गुणानां च परार्थत्वात् प्रधानेषु प्रवृत्तौ विधिलिङ्गानि दर्शयति । ६० ॥**

गुणानां च परार्थत्वात् प्रधानेषु प्रवृत्तौ विधिलिङ्गानि दर्शयति । न प्रधानानां अपरार्थत्वात् । कथम् ? 'अनुमन्त्रयमाणो यजति' 'एकादश प्रयाजान् यजति एकादशानुयाजान्' इति । उपांशुयाजश्च प्रधानम् । इति तस्य प्रवृत्तौ विधिलिङ्गं न स्यात्, इति तस्य अमावास्यायां न प्रवृत्तिः ।

**विकारे चाश्रुतित्वात् । ६१ ॥**

अमावास्याया विकारे साकंप्रस्थायीये उपांशुयाजस्य अश्रुतित्वात् अश्रवणात् अमावास्यायामपि नोपांशुयाजः । इदमुक्तम् 'आनर्थ्यं च' इति सूत्रे (५५) । तस्मात् पौर्णमास्यामेव उपांशुयाजः । तत्रैव च प्रजापतिः विष्णुः अग्नीषोमौ इति देवता विकल्पेन इति सिद्धान्तः । कौषीतकिब्राह्मणे तु अमावास्यायामपि उपांशुयाज उक्तः । प्रकृतविचारस्तु शाखान्तरविषये, कृत्वाचिन्तया वा । के.

● धर्मस्य अग्निहोत्रादिरूपस्य प्रत्यक्षादिभिरनवगतस्य निमित्त (ज्ञापकं) उपदेशः । 'तस्य ज्ञानमुपदेशः' । मा. १।१।५।५ पृ. २२.

**ह्रूं धर्मस्यार्थकृतत्वाद् द्रव्यगुणविकारव्यतिक्रमप्रतिषेधे चोदनाऽनुबन्धः समवायात् । ९।२।१२।३९ ॥**

प्राकृत व्रीहिषु प्रोक्षणं वाजपेये 'बार्हस्पत्यं चरुं नैवारं सप्तदशशरावं निर्वपति' इति नीवारेषु भवति न वा । 'संस्थिते यज्ञे मध्वाश्नीयात् घृतं वा' इति मध्वाशने 'न बहु वदेत् नान्यं पृच्छेत नान्यस्मै ब्रूयात्'

इति पदद्वयधर्मा भवन्ति न वा। शाखभूते 'नैकत्नं चरुं न जातपूतानां परिहृत्यै गृहे' इति नखेषु प्राकृत मुक्तोद्धरणयोः प्रोक्षणं भवति न वा। चातुर्मास्येषु 'परिधौ पशुं नियुञ्जीत' इति परिधौ यूपधर्माः कर्तव्या न वा। 'न गिरागिरेति ब्रूयात् ऐरं कृत्वोद्गेयम्' इति इरापदे गिरापदधर्मो (अभीभावः) भवति न वा इति विचारे सिद्धान्तमाह। द्रव्यं च गुणश्च विकारश्च व्यतिक्रमश्च प्रतिषेधश्च तेषां समाहारः तस्मिन्। तत्र द्रव्ये नीवारादौ, गुणे मध्वञ्जनादौ, विकारे नखेषु, व्यतिक्रमे यूपं व्यतिक्रम्य नियोजनसाधनतया विहिते परिधौ, प्रतिषेधे प्रतिषिध्य विहिते इरापदे च चोदनाऽनुबन्धः। चोद्यते इति चोदना चोद्यमानम्। तादृशस्य चोद्यमानस्य प्रोक्षणादेर्धर्मस्य अनुबन्धः अतिदेशः स्यात्। समवायात् प्राकृतधर्मस्य वैकृतेऽपि संबन्धात्। धर्मस्य प्रोक्षणादेः अर्थेन अपूर्वेण कृतत्वात् प्रयुक्तत्वात्। अपूर्वोत्पादकत्वस्य चोभयत्र समानत्वात्। तस्मात् प्रोक्षणादेः अतिदेशः इति सिद्धान्तः। के.

* धर्मस्यार्थकृतत्वात्०। फलचमसे सोमत्वाभावात् कथमनुच्छिष्टत्वं संभवति। न चैष दोषः, स्थानापत्त्या सोमधर्मलाभात्। वक्ष्यति हि 'धर्मस्यार्थकृतत्वात्' इति। मी. ३।५।२०।५३ पृ. १०२४, * धर्मस्य चोदनालक्षणत्वमुक्तम्। २।१।१।१ पृ. ३७०. * धर्मस्य प्रत्यक्षं तावत् अनिमित्तम्। सति इन्द्रियार्थसंबन्धे पुरुषस्य बुद्धिर्जायते तत् प्रत्यक्षम्, भविष्यश्चैषोऽर्थः, न ज्ञानकालेऽस्तीति। अतः प्रत्यक्षमनिमित्तम्। प्रत्यक्षपूर्वकत्वाच्च अनुमानोपमानार्थापत्तीनामपि अकारणत्वम्। अभावोऽपि नास्ति। शा. १।१।४।४. * धर्मस्य प्रमेयत्वेऽपि प्रत्यक्षयोग्यता नास्ति, प्रत्यक्षस्य वर्तमानमात्रविषयत्वात्। यत्तु धर्मो प्रत्यक्षस्य अत्यन्तमविषयः तत्र अनुमानादीनां का कथा। तस्मात् विधिनैव धर्मो गम्यते। वि. १।१।४.

धर्मस्य शब्दमूलत्वादशब्दमनपेक्षं स्यात्। १।३।१।१॥

'अष्टकाः कर्तव्याः' इत्यादयः स्मृतयः धर्मे प्रमाणं न वेति विचारे पूर्वपक्षमाह। धर्मस्य 'चोदनालक्षणोऽर्थो धर्मः' (१।१।२) इति लक्षितस्य शब्दमूलत्वात् वैदिकशब्दप्रमाणकत्वात् अशब्दं वैदिकशब्दभिन्नं स्मृतिः धर्मे अनपेक्षं स्यात् निर्मूलत्वान्नापेक्षितव्यम्। अनपेक्ष्यं इति तु मुद्रितेषु भिन्नेषु पुस्तकेषु पाठः। अर्थस्तु न भिन्नः।

अपि वा कर्तृसामान्यात् प्रमाणमनुमानं स्यात्। २॥

स्मृतयो धर्मे न प्रमाणं इति पूर्वपक्षं व्यावर्तयति अपिवाशब्दः। अनुमानं मानं प्रमाणं श्रुतिरूपमनुमाय प्रमाणत्वात् स्मृतिः धर्मे प्रमाणं स्यात्। कर्तृसामान्यात् वैदिककर्मानुष्ठानस्मृत्योः कर्तारः समानाः अभिन्नाः। समानकर्तृकत्वात् स्मृतिः प्रमाणम्। वेदेभ्य उपलभ्य तद्धर्मनिर्णयाः प्रतिपादिताः स्मृतिकारैः। तेन स्मृतीनां श्रुतिमूलकत्वमनुमीयते। तेन स्मृतीनां धर्मे प्रामाण्यमुपपन्नम्। तस्मात् स्मृतयः प्रमाणं इति सिद्धान्तः। के.

धर्मस्य शब्दमूलत्वादशब्दमनपेक्ष्यं स्यात्। १।३।१।१॥

एवं तावत्कृत्स्नस्य वेदस्य प्रामाण्यमुक्तम्। अथेदानीं यत्र वैदिकं शब्दमुपलभन्ते, आर्याश्च स्मरन्ति एवमयं पदार्थोऽनुष्ठातव्य एतस्मै प्रयोजनायेति, किमसौ तथैव स्यादिति भवति विचारणा। यथा 'अष्टकाः कर्तव्याः' 'गुरुरनुगन्तव्यः' 'तडागं खनितव्यम्' 'प्रपाः प्रवर्तयितव्याः' 'शिखाकर्म कर्तव्यम्' इति। अत्र प्राभाकरेण उपपत्तिलेशमात्रं इत्थमधिकरणमुपवर्णितम्— अत्र सर्वेषामेव स्मृतिवाक्यानां यथासंभवं विध्यर्थवादमन्त्रैकवाक्यता प्रतीयते। यथाहि 'आचान्तेन कर्म कर्तव्यम्' 'दक्षिणाचारेण कर्तव्यम्' 'यज्ञोपवीतिना कर्म कर्तव्यम्' इत्यादिस्मृतिवाक्यानां वेदविहितसकलकर्मोद्देशेन आचमनादिविधानात् सकलविध्युद्देशैकवाक्यत्वम्। तथा 'प्रपाः प्रवर्तयितव्याः' इत्यादिस्मृतिवाक्यस्य 'अल्पोदकं परिगृह्णन्ति' इति प्रशंसार्थवादेन आकाङ्क्षया योग्यतया च एकवाक्यता। एवं अष्टकाकर्मणो रात्रिदेवतत्वात् 'अष्टकाः कर्तव्याः' इति स्मृतिवाक्यस्यापि अष्टकाकर्मप्रतिपादकस्य 'यां जनाः प्रतिनन्दन्ति रात्रिं धेनुमिवायतीम्। संवत्सरस्य या पत्नी, सा नो अस्तु सुमङ्गली॥' इति मन्त्रेण रात्रिरूपदेवताप्रकाशनेन आकाङ्क्षया योग्यतया

वा एकवाक्यत्वम् । ननु 'यदि रक्षोभ्यो बिभियाद्देवता निशि यजेत' इति प्रत्यक्षवेदविहितस्यैव निशीष्टिरूपकर्मणो रात्रिकाले विहितस्य विद्यमानत्वात् तत्र कालप्रकाशनेनैव निराकाङ्क्षस्य कथं स्मृत्येकवाक्यत्वम् । नैतत्, प्रतिनन्दन्तीति मन्त्रलिङ्गविरोधात् । देवता हि जना. पूजादिभिः प्रतिनन्दन्ति, न तु कालम् । इष्टार्थत्वाच्च । देवताप्रकाशने हि अनुष्ठानाङ्गत्वं भवति, कालस्य च अननुष्ठेयत्वाददृष्टार्थत्वम् । कार्यप्रत्यासत्तेश्च साक्षात् यागशरीरसंपादकत्वेन देवता कार्यप्रत्यासन्नतरा, न काल. । अतो मन्त्रस्य देवताभूतरात्रिप्रकाशनेन रात्रिदेवताकाष्टकाकर्मप्रतिपादकस्मृत्येकवाक्यत्वमेव । न चैवं सति नित्यानित्यसंयोगविरोधाद्संभव , स्मृतिपरम्पराया अपि प्रवाहनित्यत्वेन संबन्धोपपत्ते । स्मृतिश्च निर्मूलत्वादप्रमाणम् । अतश्च तदेकवाक्यतापन्नस्य मिथ्यार्थत्वेन वेदस्य अप्रामाण्यमिति पूर्वः पक्षः ।

**सिद्धान्तस्तु—** आप्ततया मन्वादीनां भ्रान्तिविप्रलम्भासंभवात् अतीन्द्रियार्थविषयत्वेन च प्रत्यक्षादिमूलत्वानुपपत्ते. पारिशेष्यात् अनुमानसिद्ध वेदमूलत्वमेव । स च वेद' पर्वशाखासु केनापि अनधीयमानत्वेन नित्यानुमेय एव । अतो वेदमूलत्वात् स्मृतीनां तदेकवाक्यत्वेऽपि मिथ्यात्वस्य वेदस्य प्रामाण्यमेवेति । तदेतदयुक्तम् । किमत्र पूर्वपक्षी मन्त्रादिशब्देषु अपूर्वकार्याभिधानं स्वीकुरुते न वा ? न तावत् स्वीकुरुते । यो हि पुराणेषु क्रियाकार्याभिधानमपि नानुमन्यते, स निर्मूलेषु मन्त्रादिपुरुषवाक्येषु वक्तृज्ञानानुमानेनापि अर्थप्रतिपादकेषु अपूर्वकार्याभिधानं वदन् आत्मनो योगवियुक्त एव प्रतिभाति । अथ न स्वीकुरुते, तदा कथमाचमनादिस्मृतीनां अष्टकार्थानां वा गोमैत्रिकत्वादेकवाक्यत्वम् । कथं च प्राग्. प्रवर्तयितव्या इति स्मृत्या सह श्रुतिद्वारेण 'स्वल्पोदक परिगृह्णन्ति' इत्यर्थवादस्यैकवाक्यत्वम् ? कथं च अष्टकास्मृत्या सह वैदिकमपि निशीष्टिविषयं मार्गं परित्यज्य अन्यत्रविहितकार्यसंबन्धेन देवताभूतरात्रिप्रकाशनेन 'या जना' मन्त्रस्य एकवाक्यत्वम् । तस्मात् त्रिविधस्यापि वेदस्य स्मृत्येकवाक्यताभावात् निर्मूलत्वेन स्मृतेरप्रामाण्येऽपि न वेदस्याप्रामाण्यमिति पूर्वपक्षस्याप्यनुपपत्ति. । तथा नित्यानुमेयवेदमूलत्वेन सिद्धान्तोऽपि हृदयङ्गमो नैवावभाति । न हि वर्णमात्रं पदमात्रं वा वेद, किन्तु नियतस्वरानुपूर्वीकमपौरुषेयं वाक्यम्, तत्रैव वेदशब्दप्रयोगात् । न च अनुमीयमानस्य नित्यानुमेयस्य वाक्यस्य एवंरूपत्वं संभवति, स्वरक्रमादीनामुच्चारणाधीनत्वात् । अत एव लिङ्गानुमेयोऽपि श्रुतिर्न वेदः । किं तर्हि ? लिङ्गवत् मन्त्रानुमानात् वेदवत्प्रमाणता । तेन यत् यावत् श्रुतार्थापत्त्या कल्प्यते, तत् तदन्यथानुपपद्यमानशब्दभागाध्ययनं न आत्पर्यम । तस्माद्वेद इव वेद, न तु वेद इति स्थिति. । अथवा भवतु यथातथाऽपि वेदत्वम्, तथापि गौणत्वेनाह्वयनात् 'एषोऽयं पुरुषो वेद' इत्यनुमीयते । वक्तृधीहेतुनिश्चयाद् अर्थनिश्चयः इति भवतो दर्शनम् । स्मृतिवाक्ये च अर्थनिश्चयाय वक्तृधीहेत्वनुमाने क्रियमाणे न साक्षादर्थसमर्पको वेदो लभ्यते, किन्तु प्राक्तनस्मृतिकारवाक्यमेव । तस्यापि वक्तृधीहेतुनिश्चयावधारणपूर्वकत्वात् अर्थनिश्चयस्य स्मृतिकारान्तरवाक्यम्, तस्याप्येवमित्यन्धपरम्परायां व्यवस्थाहेत्वभावात् अप्रामाण्यमेव सिद्धान्तेऽपि स्मृतीनामिति यथावार्तिकमेव अधिकरणं सम्पद्यते इति । अत्र हि चोदनासूत्रे धर्मे वेद एव प्रमाणमिति प्रतिज्ञातम् । इदानीं मन्वादिस्मृतिविहितानामष्टकादिकर्मणां धर्मत्वेन त्रैवर्णिकपरिगृहीतानां प्रमाणभूतवेदानुपलम्भात् न वेदप्रमाणकः कृत्स्नो धर्म, इत्याशङ्क्य किमष्टकादयो धर्मा एव न भवन्ति, अथवा स्मृतिमूलभूतो वेदोऽस्ति, ततश्च धर्मा एव इति चिन्त्यते । अत्र पूर्वपक्षिणोऽभिप्राय. । न तावदत्र स्मृतिमूलभूतो वेद. श्रूयते. नाप्यन्यशाखास्वध्येतृभिरुपलभ्यते । न चैतावतैव शाखासु अध्ययनेऽनुपलभ्यमानो मन्वादिभिस्तत्र दृष्ट इति संभावयितुमपि शक्यते । न च अनन्तासु शाखासु उपलब्धोऽसौ शाखेति कल्पना उपपत्तिमती, प्रमाणाभावात् । न च वेदैकप्रमाणत्वमेव धर्मस्य स्मृतिमूलत्वमुच्छेदकत्वेनास्या प्रमाणम्, इह अष्टकादीनां धर्मत्वमेव विवादास्पदत्वेन एतदधिकरणप्रवृत्त्यात् । नापि नित्यानुमेयवेदमूलत्वम्, तस्य वेदत्वासंभवेन पूर्वमेव दूषितत्वात् । नापि अनेकशाखाविप्रकीर्णवेदमूलत्वम्, पठ्यमानशाखासु तथाभूतवेदानुपलम्भात् ।

किञ्च तथा सति विप्रकीर्णवेदाध्यायेनैव निर्विचिकित्स-मेवार्थिकव्यवहारसिद्धौ स्मृतिनिबन्धनप्रयासवैयर्थ्याच्च । तदुक्तम् 'येन यत्नेन मन्वाद्यैरत्सवाक्यं प्रपाठितम् । कस्मात्तेनैव तन्मूलं चोदना न समर्पिता ॥' इति । ( वा. पृ. १६२ ) । अतो धर्मस्य वेदशब्दैकमूलत्वात् अविद्यमानमूलभूतवेदशब्दं अष्टकाऽऽदिकं धर्मत्वेन अनपेक्षितव्यम्, न भवत्येव धर्मः इत्येवं प्राप्ते, अभिधीयते—

अपि वा कर्तृसामान्यात् प्रमाणमनुमानं स्यात् । २ ॥

अयमभिप्रायः— सर्वथा तावत् अविगानेन मन्वादिस्मृतयः पूर्वविज्ञानपूर्विकाः । तत्र न तावत् स्मृतेर्भ्रान्तिविज्ञानपूर्वकत्वं संभवति । भ्रान्तिर्हि कल्प्यमाना व्यामोहनिबन्धना वा वक्तव्या, दुःश्रुतशब्दनिबन्धना वा । न च सकलव्यायतत्त्ववेदिषु षडङ्गवेदवेदार्थाध्यायिषु तथाविधानेकमुनिजनोपाख्यानेषु तदुभयमपि संभवति । नापि मन्वादीनामनुभवपूर्वकत्वम्, तेषामतीन्द्रियविषयत्वाभावात् । नापि स्मृत्यन्तरपूर्वकत्वम्, तस्यापि स्मृत्यन्तरापेक्षत्वेन अन्धपरम्परान्यायेनाप्रामाण्यात् । तदुक्तम् 'योयो गृहीतो जात्यन्धः स स्वयं नोपलब्धवान् । स्मानन्त्येनागृहीते च प्रामाण्यं नावतिष्ठते ॥' इति । ( वा. पृ. १६२ ) । नापि विप्रलम्भपूर्वकत्वम्, नहि एकान्तेन सकलवेदव्यवहारिभिः तत्त्वेन अवधारितेषु परमधार्मिकेषु दानमतत्त्वादिषु तथाविधानेकमुनिप्रणीतानां धर्मशास्त्रप्रणयनप्रवणेषु निष्कारणं विप्रलम्भाभिप्रायमभिधानं शङ्कास्पदमपि अर्हतीति, सर्वशास्त्रव्यवहारोच्छेदप्रसङ्गात् । न च विप्रलम्भः अन्यापि वेदवेदाङ्गविद्भिः शिष्टैः अस्वरूपानैः नावधार्यते इति गरीयसी कल्पना । तथा कल्पनीय यत्र विरोधो न भवति, अदृष्टान्तरकल्पनं च नापतति । अतो वेदवाक्यमेव पूर्वविज्ञानस्मृतेर्मूलमिति कल्पनीयम् । तदुक्तम्— 'भ्रान्तेरनुभवाच्चापि पुंवाक्याद् विप्रलम्भनात् । दृष्टानुगुण्यसामर्थ्यात् चोदनैव लघीयसी ॥' इति । (वा. पृ. १६३) । ननु योग्यानुपलम्भात् वेदोऽपि मूलं न भवतीत्युक्तम् । नैवम्, विप्रकीर्णानां शाखागतत्वेन अध्ययनानामुपलम्भयोग्यताऽभावात् । नहि अर्वाचीनैः सर्वा वेदशाखा अधीयन्ते, अधीत्य च मीमांस्यन्ते, येन नानाशाखासु क्वचित्प्रधानं क्वचिदङ्गं प्रतीत्य मीमांसया निर्णीय संकलय्य 'इदमनेनेत्थं कुर्यात्' इति प्रत्येतुं शक्यते । शक्नुवन्ति तु साङ्गसमस्तवेदाध्यायिनः तपःप्रभावाहितविज्ञानातिशयशालिनः करतलामलकमिव सकलवेदार्थतत्त्वं निरीक्षमाणा महर्षयो मन्वादय एव । न च स एव वेदः स्मृतिमूलतः संकलय्य किमिति तैर्नोक्तारित इति वक्तव्यम्, क्रमाभ्यासेन स्वाध्यायविनाशप्रसङ्गात् । किञ्च, नहि सर्वाः स्मृतयो विधिनिषेधश्रुतिमूला एव, अर्थवादमूलानामपि दर्शनात् । तथाहि 'प्राची हि देवानां दिक्' इत्येतदर्थवादमूला स्मृतिः 'न प्रतीचीशिराः शयीत' इति । न च एवम्भूतार्थवादाध्ययनेऽपि एवम्भूतनिषेधोन्नयनं अशक्तानां सम्भवति । तेन मन्दबुद्धीनां लोकानामनध्ययन पश्यन्तः अधीतवेदानामपि प्रमादबाहुल्येन विस्मरणमाशङ्कमाना नानाशाखासु प्रकीर्णं पुरुषार्थविधिनिषेधसङ्कीर्णं तत्तद्वाक्यमधीत्य मीमांसानिरुक्तकल्पनादिभिर्निर्णीय संकलय्य जगदुपकृतये स्वकीर्तिख्यापनाय च स्वनिबन्धनैर्मन्वादय एव वेदार्थमुपदर्शितवन्त इत्येवैव सरसता उपपद्यतीति । तेन भाष्येऽपि उक्तम् 'अथेदानीं यत्र न वैदिकं शब्दमुपलभन्ते' ( १।३।१।१ पृ. १५९ ) इति, तद्विदानीन्तनपुरुषाभिप्रायम् । 'अथ च स्मरन्ति' इति मन्वाद्यभिप्रायमिति । प्रयोजनम्— यदि पूर्वपक्षः, तदा अष्टकादयो नानुष्ठेयाः । सिद्धान्ते त्वनुष्ठेया इति । सूत्रे तु— य एव वेदाध्ययनस्य कर्तारस्त एव स्मृतिनिबन्धनानां मन्वादयः । अतो वेदार्थज्ञानवतां तेषां स्मृतिमूलान्तरेण अनुपपद्यमाना सती श्रुतिमूलत्वमेव अर्थापत्त्या कल्पयतीति । अनुमानवाचोयुक्तिस्तु पक्षान्मानसाम्येनेति न किञ्चिदनुपपन्नमिति । कौता.

• धर्मस्य शब्दमूलत्वादशब्दमनपेक्षं स्यात् ( १।३।१।१ ) । ननु प्रकरणाम्नानादङ्गमित्यवगम्यते, सामर्थ्याद्विनियोग: इति । नैतदस्ति, उक्तमेवैतत् 'धर्मस्य०' इति, यदेतत् प्रकरणं लिङ्गं च उभयमप्येतत् अशब्दम् । भा. ३।१।५।१४ पृ ८४४.

* धर्माणां अग्नीषोमीयपशुगतनिर्मन्थ्यमातानां इष्टकापाकार्थेनिर्मन्थ्ये, दर्शपूर्णमासगताहिंगव्यमतानां च यूपावटास्तरणार्थबर्हिषि यूपाञ्जनाज्ये च, नातिदेशः। भा. ७।३।७।१८.

* धर्माणामङ्गप्रधानसाधारण्यं इति बर्हिर्न्यायस्यापवादः 'विकृतौ सर्वार्थः शेषः प्रकृतिवत्' (३।८।१९।३५) इति। सु. ३।७ पृ. ८२.

* धर्माणां अपूर्वमेव प्रयोजकं निमित्तं च। भा. ९।१।१।१ पृ. १६४१, * धर्माणां अविरुद्धानां समुच्चयो वैश्यस्तोमे कण्वरथंतरे बृहद्रथंतरयोः। ९।२।१६।४८, * धर्माणां एकाहकाण्डपठितज्योतिरादिगतानामतिदेशः गवामयनगतज्योतिरादिषु। ७।४।३।१३–२०, * धर्माणां ऐष्टिकानामतिदेशः सोमे न भवति। ८।१।३।३–१०, * धर्माणां दार्शपूर्णमासिकानामतिदेशः अग्नीषोमीये पशौ। ८।१।५।१२, * धर्माणां दार्शपूर्णमासिकानामतिदेशः ऐन्द्राग्नादिषु। ८।१।४।११, * धर्माणां देवताप्रयुक्तत्वाभावः। ९।१।४।६–१०, * धर्माणां बृहद्रथंतरगतानामविरुद्धानां कण्वरथंतरे समुच्चयः। ९।२।१६।४७, * धर्माणां बृहद्रथंतरगतानां उभयसामके संवादो प्रकृतिवत् व्यवस्था। ९।२।१७।४८, * धर्माणां यूपीयानाम् 'उपशयो यूपो भवति' इति यूपशब्देन एकादशिनीगते उपशयाख्ये यूपे नातिदेशः। ७।३।१३।३३–३४, * धर्माणां व्यवस्था बृहद्रथंतरयोः उभयसामकाक्रतौ ज्योतिष्टोमे। ९।२।१७।४५–४६.

* धर्मे अनुमानोपमानार्थापत्तीनामपि अकारणत्वं प्रत्यक्षपूर्वकत्वात्। भा. १।१।४।४. * धर्मे अर्थवादाः क्रियास्तुतिद्वारा प्रमाणम्। के. १।२।१।१–१८, * धर्मे अलौकिकेऽपि प्रसिद्धपदसमभिव्याहारेण विधिवाक्यस्थपदानां व्युत्पत्तिः संभवति। १।१।२।२. * धर्मे गम्ये गमकं विधिवाक्यं प्रमाणम्। वि. १।१।२. * 'धर्मे चार्थे च कामे च नातिचरितव्या' एवं दानकाले संवादः क्रियते। भा. ६।१।३।१४। एवं हि स्मरन्ति 'धर्मे चार्थे च कामे च नातिचरितव्या' इति तया सह धर्मश्चरितव्यः सहापत्यमुत्पादयितव्यमिति। भा. ६।१।४।१७, ६।८।१।१८. * 'धर्मे चार्थे च कामे च मोक्षे च भरतर्षभ। यदिहास्ति तदन्यत्र, यन्नेहास्ति न तत् क्वचित्॥' इति जनमेजयस्य भारतश्रवणप्रवृत्तिः सिद्धा। सु. पृ. ४०. * धर्मे चोदनैव प्रमाणम्। (तस्य ज्ञानमुपदेशः। १।१।५।५) तस्य अग्निहोत्रादिलक्षणस्य धर्मस्य प्रत्यक्षादिभिरनधिगतस्य उपदेशः ज्ञापकः। भा. १।१।५।५ पृ. २३. * धर्मे पुरुषबुद्धेः न प्रवेशः। के. १।१।२।२. * धर्मे प्रत्यक्षादि अनिमित्तम्। भविष्यंश्चेदोऽर्थः (वैदिकः) न ज्ञानकालेऽस्तीति। सतश्चैतदुपलम्भनं (प्रत्यक्षेण) नासतः। अतः प्रत्यक्षमनिमित्तम्। प्रत्यक्षपूर्वकत्वाच्चानुमानोपमानार्थापत्तीनामप्यकारणत्वम्। अभावोऽपि नास्ति। न चैव सति (उपदेशो धर्मस्य निमित्तं सति) प्रमाणान्तरमपेक्षितव्यं पुरुषान्तरं वापि। भा. १।१।४।४. * धर्मे प्रमाणानि विधि–अर्थवाद–मन्त्र–नामधेय–स्मृति–शिष्टाचाररूपाणि षट्। मणि. पृ. १३. * धर्मे प्रमाणपरीक्षा कर्तव्या, अन्यथा सम्यक् मीमांसा न स्यात्। के. १।१।३।३. * धर्मे प्रामाण्यपरीक्षाऽधिकरणम्। निमित्तपरीक्षाधिकरणम्। भा. १।१।३।३. * धर्मे वेदः प्रमाणम्। मणि. पृ. ११.

* धर्माङ्गताबोधकानि प्रमाणानि श्रुति–लिङ्ग–वाक्य–प्रकरण–स्थान–समाख्यारूपाणि षट्। मणि. पृ. १३.

* धर्मातिक्रमे। अवश्यं कर्तव्ये अन्यतरधर्मातिक्रमे गुणधर्मः अतिक्रमितव्यः, (न प्रधानधर्मः) तथाहि प्रधानं अविगुणं कृतं भवति। भा. ३।३।२।९ पृ. ८१०.

* धर्मातिदेशः अविहितेतिकर्तव्यताकेषु सौर्यादिषु। भा. ७।४।१।१. * धर्मातिदेशः कार्यापत्तिपुरःसरः इष्टः। भा. ३।८।१६।३२. * धर्मातिदेशः नैयमिकाग्निहोत्रस्य अग्निहोत्रनाम्ना कौण्डपायिनामयनगताग्निहोत्रे। भा. ७।३।१।१–४, * धर्मातिदेशः सादृश्यविशेषेण नियतप्रकृतिकः। ८।१।२।२, * धर्मातिदेशः सौत्रिकामणीयस्य नाम्ना चरकसौत्रामण्याम्। ७।३।४।११–१६.

* धर्मातिदेशकं नास्ति प्रायणीयमिति नाम द्वादशाहप्रथमाहविषयकं गवामयनगतप्रथमेऽहनि प्रायणीये। भा. ७।३।२।५.

* **धर्माधर्मौ** । अथ किं नाम धर्मत्वं अधर्मत्वं वा ? न तावत् विहितक्रियात्वं निषिद्धक्रियात्वं वा तत्, विहित निषिद्धद्रव्यादौ तदनापत्तेः । नहि फलार्थगुणानुष्ठातृणा यज्ञे रजनाद्यनुष्ठातृणा च धार्मिकः अधार्मिक इति व्यवहाराभावः । तथात्वे इन्द्रियप्रमाणाधिकरणादौ ज्ञाश्च मगत्यनापत्तेश्च । तस्य धर्मत्वाभावे तज्जन्यादृष्टस्य धर्मत्वाभावेन कीर्तनाद्यप्रमाणापत्तेश्च । नापि क्रियात्वरहितम्, विवाहार्थानृतवचनादौ अभ्यनुज्ञाविधिविषये धर्मत्वापत्तेः, षोडशिग्रहणे अधर्मत्वापत्तेश्च । इति चेन्न । वेदबोधितत्वेन साधनताकत्वं धर्मत्वम्, तद्बोधितानिष्टसाधनताकत्वं अधर्मत्वं इत्येव लक्षणोपपत्तेः । ज्योतिष्टोमकलञ्जभक्षणादीनां हि इष्टानिष्टसाधनता वेदबोधिता इति तत्र लक्षणसमन्वयः । अत्र वेदबोधितत्व ग्रहणं स्वर्गनरकादावपि इष्टानिष्टत्वम् । अन्नविषभक्षणादेः इष्टानिष्टसाधनत्वेऽपि तस्य वेदबोधितत्वाभावात् अधर्मत्वम् । श्येने च इष्टसाधनताया एव वेदबोधितत्वात् धर्मत्वमेव । अनिष्टजनकत्वं तु श्येनफलस्य वैरिमरणानुकूलव्यापारादिरूपहिंसात्मकाभिचारस्यैव । तस्यैव च वेदबोधितानिष्टसाधनताकत्वात् अधर्मत्वं न तु श्येनस्य इति व्यक्तं चतुर्थे । यत्र तु 'वैरिमरणकामो यजेत' इत्येव विधि तत्रापि विधिना इष्टसाधनताबोधनात् यागादेर्धर्मत्वमेव । न च तत्र यागस्यैव मरणानुकूलव्यापारत्वेन हिंसात्वात् 'न हिंस्यात्' इति निषेधविषयत्वम्, निषेधस्य रागप्राप्तहिंसाविषयत्वेनापि उपपत्तौ विहिते अप्रवृत्तेः । न चैव तादृशस्थले श्येनयाग् अपरयोऽपि प्रत्यवायानुत्पत्तेः हिंसाया अत्र निष्कृष्टप्रत्यवायि । 'परस्योत्सादनार्थं यत् (वा) तत् तामसमुदाहृतम्' (भ गी. १७।१९) इत्यादिवाक्यपर्यालोचनया अभिचारजनकत्वेनवत् अभिचारस्यापि कर्मफलस्य चैव विहितत्वात् तदुद्दीननिषेधबलेन फलांशे विहितस्यापि तस्य अनिष्टजनकत्वेन अधर्मत्वस्यापि स्वरसात् तदनापत्तेः । अत एव धर्मत्वाधर्मत्वयोः उपाधिरूपत्वात् साङ्कर्येऽप्यदोषः । यत्तु धर्मलक्षणे बलवदनिष्टाननुबन्धित्वस्यापि प्रवेशात् श्येनादौ च तदभावात् न धर्मत्वमिति । तन्न । तत्प्रवेशे प्रयोजनाभावात्, अनिष्टगतद्वेषोत्पत्त्यर्थ बलवत्तरस्य प्राचीनकर्मा-

धीनतया उक्तविधानानुबन्धित्वस्य श्येनेऽपि कदाचित् संभवाच्च । इतरथा श्येने सामग्र्यभावेन प्रवृत्त्यनापत्तेः । किञ्च श्येनादौ धर्मत्वाभावे सामग्र्यधर्मत्वकथनानुपपत्तिः । अत उक्तलक्षणे युक्तस्यापि समन्वयः । अभ्यनुज्ञाविधिना च दोषाभावमात्रस्यैव आक्षेपात् इष्टसाधनताऽनाक्षेपेण रागप्राप्तेष्टसाधनताकस्यापि अनृतवदनस्य वेदबोधितेष्टसाधनताकत्वाभावात् न धर्मत्वापत्तिः । षोडशिग्रहणे च निषेधेन अनिष्टसाधनत्वाऽऽक्षेपः प्रमाणाभावात् गौरवाच्च । अपितु एतदभावेऽपि इतराङ्गैः क्रतुमहोपकारसिद्धिमात्रस्यैव तात्पर्यमात्रेणैव पुरुषस्य निवृत्त्युपपत्तेः । अत एव तत्र प्रवृत्तौ विधिना फलाधिक्याक्षेपः । अतस्तत्रापि नाधर्मत्वापत्तिः । वेदबोध्यत्वं च वेदातिरिक्तप्रमाणेन साकल्येन अबोध्यत्वे सति वेदबोध्यत्वम् । तेन तत्त्वसाक्षात्कारस्वरूपब्रह्मज्ञानस्य ब्रह्मविषयकत्वविलक्षणनिवृत्तिरूपमोक्षजनकत्वस्य प्रमाणान्तरसिद्धस्य उपनिषद्बोध्यत्वेऽपि न तस्य धर्मत्वापत्तिः । यद्यपि प्रपञ्चस्य सत्यत्वेन नाशानर्हत्वम्, मोक्षश्च प्रपञ्चनिवृत्तिरूपः अस्मदादिरूपः तत्त्वज्ञानजन्यः इति मतमपि प्रामाणिकम्, तदा मोक्षजनकत्वस्य प्रमाणान्तरागम्यत्वात् तत्र धर्मत्व परिहारार्थं वेदबोधितत्व विहाय विधिबोधितत्वं देयम् । ज्ञानस्य प्रमाणवस्तुपरतन्त्रत्वेन प्रवर्तनाविषयत्वाभावात् न विधिबोध्यत्वम् । वस्तुतस्तु 'अयं तु परमो धर्मो यद्योगेनात्मदर्शनम्' इत्यादौ ज्ञानेऽपि धर्मशब्दप्रयोगात् तस्य धर्मत्वेऽपि न क्षतिः । न च तत्त्वदर्शनहेतौ ध्यानपरः लक्षणाया प्रमाणाभावात्, ध्याने चित्तवृत्तिनिरोधरूपस्य योगत्वसंभवाच्च । वस्तुतस्तु शब्दस्य ज्ञानस्य धर्मत्वेऽपि ब्रह्मणो वेदबोधितश्रेयःसाधनसाधनताकत्वाभावेन धर्मत्वाभावात् धर्ममीमांसातो ब्रह्ममीमांसाया भेदोपपत्तिः । अस्तु वा ब्रह्मणि धर्मलक्षणस्य अतिव्याप्तिपरिहारार्थं पुरुषकृतिव्याप्यत्व वेदबोधितश्रेयःसाधनताकत्वविशेषणम् । गुणस्यापि च आश्रयविशिष्टस्य कृतिव्याप्यत्वात् नाव्याप्तिः । ज्ञानस्यापि च स्वरूपेण कृतिव्याप्यत्वाभावेऽपि सम्यग्ज्ञानादिवत् तदनुकूलमनःप्रणिधानादेः कृतिव्याप्यत्वेन परम्परया तद्विशिष्टस्य कृतिव्याप्य बोधपत्तेः नाव्याप्तिः । अत एव 'आत्मा वा अरे

द्रष्टव्यः' इति विधिप्रत्ययोऽपि एतदभिप्रायकः इत्यपि एतन्मते सुवचम् । असाधारणो वा कारणता लक्षणे प्रवेशनीया, तत्तल्लक्षणमेव धर्माधर्मपदशक्यताऽवच्छेदकम् । तस्य च क्रियातज्जन्यादृष्टसाधारण्येन एकयैव शक्त्या धर्माधर्मशब्दौ क्रियातज्जन्यादृष्टपरौ इति संक्षेपः । रहस्य. पृ. २-३.

* धर्माधर्मौ अदृष्टविशेषात्मकौ, न क्रियारूपौ । अत एव 'धर्मः क्षरति कीर्तनात्' इत्यादौ वैशेषिकतन्त्रे च क्रियाजन्यादृष्टे धर्माधर्मशब्दस्य प्रयोगः, तथापि 'धर्मः स्वनुष्ठितः पुंसाम्' (विष्वक्सेनकथासु यः । नोत्पादयेद् यदि रतिं श्रम एव हि केवलः ॥ ) इत्यादौ तज्जनकविहितनिषिद्धक्रिययोरपि धर्माधर्मशब्दप्रयोगः । रहस्य. पृ. १, * धर्माधर्मौ द्वादशलक्षण्या जैमिनिना अनुष्ठानोपयोगितया विचारितौ । पृ. १. * धर्माधर्मयोः अन्तःकरणवृत्तित्वात् । शा. १।१।५।५ पृ. ११४ पं. २. * धर्माधर्मयोः विधि–अर्थवाद–मन्त्र–स्मृति–आचार–नामधेय–वाक्यशेष–सामर्थ्यरूपाणि अष्टौ प्रमाणानि प्रथमाध्याये निरूपितानि । भाट्ट. १।४।१०.

※ धर्माधर्मग्रहणन्यायः । व्यवहारे दिव्यविशेषोऽयम् । संग्रह. । अत्र मिताक्षरा (याज्ञ. २।११३) धर्माधर्माख्यदिव्यविधिः पितामहेनोक्तः–'राजतं कारयेद् धर्ममधर्मं सीसकायसम्' इति प्रतिमाविधानम् । सीसकं वा आयसं वेति विकल्पः । पक्षान्तरमाह–'लिखेद् भूर्जे पटे वाऽपि धर्माधर्मौ सितासितौ । अभ्युक्ष्य पञ्चगव्येन गन्धमाल्यैः समर्चयेत् ॥ सितपुष्पस्तु धर्मः स्यादधर्मोऽसितपुष्पधृक् । एवं विधायोपलिप्य पिण्डयोस्तौ निधापयेत् ॥ गोमयेन मृदा वाऽपि पिण्डौ कार्यौ समं ततः । मृद्भाण्डकेऽनुपहते स्थाप्यौ चानुपलक्षितौ (अभियुक्तेन अनुपलक्षितौ) ॥ उपलिप्ते शुचौ देशे देवब्राह्मणसंनिधौ । आवाहयेत् ततो देवान् लोकपालांश्च पूर्ववत् ॥ धर्मावाहनपूर्वं तु प्रतिज्ञापत्रकं लिखेत् ।' (एतावत् सर्वं प्राड्विवाकेन कर्तव्यम् ) । ततः अभियुक्तः अभिमन्त्रयेत् 'यदि पापविमुक्तोऽहं धर्मस्त्वायातु मे करे । अशुद्धश्चेन्मम करे पाप आयातु धर्मतः ॥' 'अभियुक्तस्ततश्चैकं प्रगृह्णीयादविलम्बितः । धर्मे गृहीते शुद्धः स्यादधर्मे तु स हीयते ॥ एवं समासतः प्रोक्तं धर्माधर्मपरीक्षणम् ॥' इति ।

* धर्माधर्मत्वं निःश्रेयसप्रत्यवायलक्षणम् । बृहती. पृ. २७.

* धर्मार्थं मेवकस्य शूद्रस्य विश्वजिति न देयत्वम् । भा. ६।७।५।६.

* धर्मजिज्ञासा इति 'धर्मशब्दः वेदार्थमात्रपरः' । ऋजु. पृ. १६. * धर्मजिज्ञासा 'को धर्मः कथंलक्षणः, कान्यस्य साधनानि, कान्यस्य साधनाभासानि, किंपरश्च' इति चतुर्विधा प्रथमसूत्रेण उपक्षिप्ता । सु. पृ. ५३५. * धर्मजिज्ञासा । धर्माय जिज्ञासा धर्मजिज्ञासा । धर्मज्ञानस्य धर्मार्थत्वात् धर्मस्यापि इच्छां प्रति प्राधान्यम् । अतो धर्मार्था जिज्ञासा । एवं च तादर्थ्यस्य प्रतीयमानत्वात् चतुर्थीसमास एवायम् । ऋजु. पृ. १३, * धर्मजिज्ञासा प्रारभ्यते, तत्त्वेन अपरिज्ञातोऽर्थः अनुष्ठीयमानोऽपि विहन्ति अनुष्ठातारं अधिकारसिद्धिं न प्रापयति । ज्ञात्वा च अनुष्ठितो निःश्रेयसेन अधिकारिणं योजयति इति । पृ. १५.

* धर्मजिज्ञासाऽधिकरणं अथातो धर्मजिज्ञासा इति । भा. १।१।१।१.

* धर्मज्ञानं शास्त्रात् स्वरूपप्रमाणसाधनप्रयोजनविचारद्वारेण । मणि. पृ. ५, * धर्मज्ञानाय शास्त्रमारम्भणीयम् । पृ. ५, * धर्मज्ञानस्य सामान्यतो ज्ञातस्य विशेषधर्मप्रकारकज्ञानेच्छाहेतुत्वम् । 'धर्मेण पापमपनुदति' इति वाक्येन सामान्यतो धर्मज्ञाने तदुत्तर तदनुव्यवसाये धर्मज्ञानत्वसामान्यप्रत्यासत्त्या सकलधर्मज्ञानम्, ततः तद्विषयकेच्छा इति क्रमेण सामान्यधर्मप्रकारकज्ञानस्य विशेषधर्मप्रकारकेच्छाप्रयोजकत्वम् । सा चेच्छा सप्रमाणकं धर्मज्ञानं जायतां इत्याद्याकारिका शाब्दबोधसाधनताज्ञानजन्या च । शाब्दज्ञानं न धर्मज्ञानत्वसामान्यलक्षणप्रत्यासत्त्या इति । पृ. २.

* धर्मत्वं न तावत् यागापूर्वोभयनिष्ठा जातिः, यागस्य क्रियेच्छाऽन्यतररूपतया क्रियात्वेन इच्छात्वेन च सांकर्यात् । अतः अपूर्वमात्रवृत्ति सुखकारणताऽवच्छेदिका धर्मत्वं जातिः इति नैयायिकाः । अपूर्वप्रकाशसमति

यागादिकर्तरि धार्मिकोऽयं इति प्रयोगात् वेदबोधितेष्टसाधनत्वरूपः यागापूर्वोभयनिष्ठोपाधिरेव धर्मत्वं इति केचित् । वस्तुतस्तु अलौकिकश्रेयःसाधनत्वेन विहितक्रियात्वे विहितत्वे वा धर्मत्वम् । सोमादिषु अङ्गत्वेन विहितेषु अति॰व्याप्तिवारणाय तृतीयान्तम् । अलौकिकत्वं च वेदतदुपजीविप्रमाणातिरिक्तप्रमाणागम्यत्वे सति प्रमितिविषयत्वम् । अनिष्टसाधनकलञ्जभक्षणादौ व्यभिचारवारणाय श्रेयःपदम् । अपूर्वे व्यभिचारवारणाय विहितेति । फलसाधनत्वेन विहितक्रियाद्रव्यगुणादीनां धर्मत्वम् । श्येनेऽपि हिंसाजन्यत्वात् धर्मत्वासिद्धिः । विवाहाद्यर्थमिथ्यावादस्य विधानेऽपि धर्मत्वं नास्ति, तस्य विवाहादिमात्रसाधनतया अलौकिकत्वाभावात् । उपनिषज्जन्यात्मज्ञानस्य अविद्यानिवृत्तिद्वारा मोक्षजनकस्य प्रमाणान्तरप्राप्तत्वात् न धर्मत्वम् । अस्तु वा तत्र धर्मत्वम् । मणि. पृ. ७–९. ● धर्मश्च निःश्रेयसहेतुत्वेनोक्तम् । अर्थत्वेन चोदनालक्षणत्वमुक्तम् । ऋजु पृ २७. ● धर्मस्य प्रवर्तकवेदवाक्यबोधितश्रेयःसाधनताकत्वम् । कु १।१।२।२ । अलौकिकश्रेयःसाधनताकत्वमेव हि धर्मस्वरूपम् । १।१।२।४.

※ धर्मधर्मिविरोधे च धर्मिणो बलवत्त्वम् इति न्यायेन ( वा १।३।३।५ ) आचमनादीनां बलवत्त्वमाश्रयते । कौ. १।३।१।६ पृ. ३२.

● धर्मप्रणिहितमनसो राणायनीयाः । मु पृ. १३१०.

● धर्मप्रमाणानि विध्यर्थवादमन्त्रनामधेयस्मृतिशिष्टाचाररूपाणि षट् । मणि. पृ. ११.

● धर्मप्रमाणपरीक्षा कर्तव्या । वि. १।१।३.

● धर्मप्राप्तिः (अङ्गप्राप्तिः) उपमानेन यत्र सादृश्यम्, तत्र धर्माः प्राप्यन्ते, असति सादृश्ये नास्ति धर्मप्राप्तिः । टुप्. ८।३।५।२ पृ १५८५, ● धर्मप्राप्तिः कर्त्राऽत्र विकृतिषु उपमानेन । १०।८।१।१ पृ. १९०७, ● धर्मप्राप्तिः सादृश्यात् भवति, अलौकिकत्वात् धर्माणाम् । ९।१।५।१ पृ. १६५६. ● धर्मप्राप्तौ साधनबलाद्वा तन्त्रम्, न तु साधनिकत्वम् । सोम. ९।२।१४.

● धर्मभेदाच्च संज्ञाव्यवस्था यथा ब्राह्मणः, परिव्राट्, वानप्रस्थः इति । भा. ८।२।५।१४, ● धर्मभेदाच्च सत्रं अहीन इति संज्ञाव्यवस्था । ८।२।५।२४.

● धर्मभेदकानि प्रमाणानि शब्दान्तर–अभ्यास–संख्या–नाम–गुण–प्रकरणान्तराणि इति षट् । मणि. पृ. १३. ( तत्र यजति–ददाति–जुहोति इति शब्दान्तरेण कर्मभेदः । २।२।१, 'समिधो यजति, तनूनपातं यजति' इत्यादि यजतिपदस्य अभ्यासेन प्रयाजभेदः । २।२।२, 'तिस्र आहुतीर्जुहोति' इति संख्यया कर्मभेदः । २।२।७, 'अथैष ज्योतिः, अथैष विश्वज्योतिः, अथैष सर्वज्योतिः' इति नामभेदेन (संज्ञाभेदेन) कर्मभेदः । २।२।८, 'सा वैश्वदेव्यामिक्षा, वाजिभ्यो वाजिनम्' इति गुणभेदेन कर्मभेदः । २।२।९, नित्याग्निहोत्रात् मासाग्निहोत्रस्य प्रकरणान्तरेण भेदः । २।३।११ । इति विस्तरे तत्तत्र द्रष्टव्यम् । के. )

※ धर्ममात्रे त्वदर्शनाच्छब्दार्थेनापवर्गः स्यात् । ११।१।६।२८॥

अग्निचयने 'औदुम्बरमुदूखलं सर्वौषधस्य पूरयित्वाऽवहन्ति अथ तदुपदधाति' इत्यनेनोक्ते धर्ममात्रे अदृष्टमात्रफलके अवहनने तु द्रव्यस्य तण्डुलनिष्पत्त्यादेः फलस्य अदर्शनात् शब्दार्थेन सकृत्कृतेनैव अपवर्गः समाप्तिः विरामः स्यात् । तस्मात् सर्वौषधावघातस्य नाभ्यासः इति सिद्धान्तः । तुशब्दः पूर्वाधिकरणोक्तात् तण्डुलनिष्पत्तिपर्यन्तमावर्तमानात् व्रीह्यवघातात् भेदमस्माह । के.

● 'धर्ममात्रे त्वदर्शनाच्छब्दार्थेनापवर्गः स्यात्' ( ११।१।६।२८ ) इत्यधिकरणे 'औदुम्बरमुदूखलं सर्वौषधस्य पूरयित्वाऽवहन्ति अथैनदुपदधाति' इत्यवघातस्य तण्डुलसाध्यपुरोडाशादिप्रयोजनाभावात् अदृष्टार्थत्वात् सकृदवघात एव क्रियते । [illegible] पृ. ६२६. ● 'धर्ममात्रे त्वदर्शनाच्छब्दार्थेनापवर्गः स्यात्' इत्यनेन न्यायेन ( प्रथमावर्ता ) सकृत्प्रयोगः प्राप्तः । भाष्यसङ्क्षेपः ११।१।७।२९.

卐 धर्ममात्रे तु कर्म स्यादनिर्वृत्तेः प्रयाजवत् । २।१।४।९ ॥

'स्रुचः संमार्ष्टि' 'अग्निं संमार्ष्टि' 'पुरोडाशं पर्यग्नि करोति' इति श्रुतं संमार्जनं पर्यग्निकरणं च प्रधानकर्म गुणकर्म वा इति विचारे पूर्वपक्षमाह । धर्ममात्रे संमार्गपर्यग्निकरणादिरूपे सर्वस्मिन् कर्मणि कर्म स्यात् प्रधानकर्मैवं स्यात् । दृष्टस्योपकारस्य अनिर्वृत्तेः । दृष्टोपकारकत्वं गुणकर्मलक्षणम्, तदत्र नास्ति इति संमार्गादीनां प्रधानकर्मत्वं स्यात् । प्रयाजवत् । यथा प्रयाजाः प्रधानकर्म दृष्टोपकारकत्वाभावात् तद्वत् ।

तुल्यश्रुतित्वाद्वेतरैः सधर्मं स्यात् । १० ॥

पूर्वपक्षं वाशब्देन परिहरन् सिद्धान्तमाह । संमार्गादिधर्मजातं इतरैः अवघातादिभिः गुणकर्मभिः सधर्मं समानधर्मकं स्यात् । गुणकर्मत्वमित्यर्थः । तुल्यश्रुतित्वात् यथा 'व्रीहीनवहन्ति' इति द्वितीयाश्रुतिः ईप्सिततमत्वार्था, तथा 'स्रुचः संमार्ष्टि' 'पुरोडाशं पर्यग्नि करोति' इत्यपि द्वितीया । ईप्सिततमत्वाच्च संमार्गादिधर्मजातं गुणकर्मैव, व्रीहिस्रुगादि द्रव्यं च प्रधानभूतं तत्कार्यत्वात् । इति सिद्धान्तः । अत्र सधर्मः सधर्मा इति पाठौ अन्यत्र । तथापि अनिश्चयत्वादत्र न कुतः । नपुंसकपाठ एव साधीयान् ।

द्रव्योपदेश इति चेत् । ११ ॥

पूर्वपक्षी आह । गुणभूतद्रव्योपदेशोऽपि 'सक्तून् जुहोति' इत्यादौ द्वितीयानिर्देशो दृश्यते । तथा स्रुच: पुरोडाश इत्यादौ द्वितीयया निर्देशोऽपि गुणभूतत्वं स्यात्, ततश्च संमार्गादेः प्रधानकर्मत्वम् ।

'अनैकान्तिकी प्राधान्ये द्वितीया गुणभूतद्रव्योपदेशेऽपि दृष्टत्वात् सक्तून् जुहोति इति' इति वार्तिकात् द्रव्योपदेशो इति सप्तम्यन्तं पदम् । 'सक्तुद्रव्यस्य होमं प्रति साधनत्वेन गुणभूतस्य द्वितीयया उपदेशः कथम्' इति कुतूहलात्तु द्रव्योपदेशः इति प्रथमान्तं पदम् । सुबोधिनीवृत्तेः कस्तूरिवृत्तेश्च प्रथमान्तमेव ।

न, तदर्थत्वाल्लोकवत्, तस्य च शेषभूतत्वात् । १२ ॥

'सक्तून् जुहोति' इति द्वितीया गुणभूतद्रव्योपदेशोऽपि दृश्यते इति यदुक्तं पूर्वपक्षिणा तत्र । सक्तूनां तदर्थत्वात् होमार्थत्वात् गुणभूतत्वं इति सत्यम् । द्वितीया तत्र लक्षणया करणत्वमाह इति द्वितीया न गुणभूते । तस्य स्रुक्पुरोडाशादेः शेषभूतत्वात् अदृष्टोपकारविशिष्टत्वेन संमार्गपर्यग्निकरणादिसाध्यत्वात् तत्र द्वितीया प्राधान्यमेव बोधयति । अदृष्टोऽपि संस्कारोऽस्तीत्यवगम्यते । लोकवत् । लोके यथा ग्रामान्तरादागतानां पुरुषाणां पर्यग्निकरणेन अदृष्ट उपकारः क्रियते इत्युच्यते तद्वत् । तस्मात् संमार्जनपर्यग्निकरणादि गुणकर्म, न प्रधानकर्म इति सिद्धान्तः । के.

卐 धर्ममात्रे तु कर्म स्यादनिर्वृत्तेः प्रयाजवत् । २।१।४।९ ॥

'स्रुचः संमार्ष्टि' 'परिधीन् संमार्ष्टि' 'अग्नीन् संमार्ष्टि' 'पुरोडाशं पर्यग्नि करोति' इति श्रूयते । तत्र संदेहः किं पर्यग्निकरणं संमार्जनं च प्रधानकर्म, उत गुणकर्मेति । पूर्वाधिकरणे 'तानि द्वैधम्' इत्यभिधाय प्रधानकर्मगुणकर्मलक्षणं सप्रपञ्चेनोक्तम् । इदानीं क्वचित् विषयविशेषे संमार्गादौ प्रधानकर्मापवादः क्रियते । तत्रायं पूर्वपक्षिणोऽभिसंधिः । 'यैस्तु द्रव्यं न चिकीर्ष्यते तानि प्रधानभूतानि द्रव्यस्य गुणभूतत्वात्' इति प्रधानकर्मलक्षणमुक्तम् । न च स्रुगादिषु संमार्गादिजन्यः चिकीर्षितो दिष्टव्यपेक्षितः कश्चिदुपकारो दृश्यते । अतो 'द्रव्याणां कर्मसंयोगे गुणत्वेनाभिसंबन्धः' तथा 'भूतभव्यसमुच्चारणे भूतं भव्यायोपदिश्यते' इति न्यायेन स्रुगादिद्रव्याणामेव संमार्गादिरूपकर्मार्थत्वात् प्रयाजादिवत् प्रधानकर्मत्वमेवेति । ननु मा नाम अवहन्त्रादिवत् प्रमाणान्तरेण द्रव्यगतं चिकीर्षितमवगम्यताम्, तथापि द्वितीयाश्रुतिरेव ईप्सिततमार्थाभिधायिनी स्रुगादिगतमदृष्टं चिकीर्षितमवगमयिष्यतीति । नैवम्, स्यादेवं यदि द्वितीया ईप्सिततमत्ववाचिनी भवेत् । सा तु 'सक्तून् जुहोति' इत्यादिषु व्यभिचरतीति पूर्वाधिकरणे प्रोक्तम्, तथापि सामान्यपि ईप्सितानीप्सितसाधारणम् । तथाहि 'कर्तुरीप्सिततमं कर्म' (पा. १।४।४९) इति स्मर्यते 'तथायुक्तं चानीप्सितम्' (पा. १।४।५०) इत्यपि । तेन क्रियाजन्यत्वमेव

धर्मेऽव्यभिचारात् द्वितीयाऽर्थः । तथाप्यनर्थकत्वेऽपि अविरुद्धमेव । ननु यागवान्तरदृष्टप्रयोजनमत्र स्रुगादिद्रव्यम्, अदृष्टप्रयोजनं च संमार्गादि कर्म । दृष्टप्रयोजनयोश्च संबन्धः, दृष्टप्रयोजनार्थत्वेनैव अदृष्टप्रयोजनं विधीयते इति युक्तम् । 'अपेक्षितविधेरनपेक्षितविधानं दुर्बलम्' इति न्यायेन दृष्टोपकाराभावेऽपि द्वितीयाया ईप्सिततमाभिधानमपि तत्सम्बन्धादेव दृष्टप्रयोजनस्रुगादिद्रव्यार्थत्वात् संमार्गादीनां (न) गुणकर्मत्वं संभवतीति । उच्यते, स्यादेवं यदि अदृष्टाधिकरणं विधिरनुमन्यते । स हि स्वरसतः साध्यस्य साधनमितिकर्तव्यतां च आकाङ्क्षत् तदुपायभूतं द्रव्यादिकमपि आकाङ्क्षति, तेन विना तदसिद्धेः । यत्तु द्रव्यगतं संस्कारादिकं दृष्टार्थद्रव्यासङ्गया संबध्यमानं तदपि आकाङ्क्षोत्थापनेन अनुमन्यते । न च 'स्रुचः संमार्ष्टि' इत्यादिषु स्रुगादीनां प्रोक्षणादिवत् दृष्टोपकारार्थमन्यथासिद्धेषु संमार्गादिष्वपि अपेक्षा सम्भवति । न च द्वितीयाश्रुतिबलेनैव स्रुगादीनां संमार्गादिषु आकाङ्क्षोत्थापनेन आकाङ्क्षया चाधिकारविधेरपि आकाङ्क्षोत्थापनेन अनुमतिरिति वक्तव्यम् । द्वितीयाश्रुतेः ईप्सितानीप्सितसाधारणत्वेन समर्पकत्व संस्कारकर्मत्वे प्रमाणाभावशोकत्वात् । अतः सर्वथा संमार्गादीनां स्रुगादिपदार्थत्वे प्रमाणाभावात् तदनिर्णीयाऽभावेन धर्ममात्रमेवापूर्वीयफलं संमार्गादि प्रयाजादिवत् प्रधानकर्मत्वेनैव विधीयते । इत्येवं प्राप्ते, अभिधीयते ।

तुल्यश्रुतित्वात्त्वितरैः सधर्म स्यात् । १० ॥

अयमभिप्रायः । भवेदेवं यद्यत्र द्वितीयाश्रुतिमभिव्याहृतसंमार्गादिक्रियापेक्ष स्रुगादि प्राधान्यं नाभिदध्यात् । सा हि 'कर्तुरीप्सिततमं कर्म' इत्यनुशासनात् 'ओदनं पचति' 'कटं करोति' इत्यादिप्रयोगदर्शनाच्च ईप्सिततमत्वलक्षणं स्रुगादीनां प्राधान्यमेवाभिधत्ते । तथा च सति विधेः सामान्येन अप्रतिपन्नोपमावादीनां संमार्गादीनां स्रुगादिसमभिव्याहृतानां स्रुगादिगतमेव शेषित्वं बोधयतीति गुणकर्मत्वे द्वितीयाश्रुतिरेव प्रमाणमिति । ननु 'सक्तून् जुहोति' इत्यादिषु द्वितीया ईप्सिततमत्वलक्षणं प्राधान्यं व्यभिचरती युक्तम् । नैवम् । तत्रापि ईप्सिततमत्वरूपप्राधान्याव्यभिचारात् । यत्तु करणत्वरूपं गुणत्वम्, तल्लक्षणयैव । यदुक्तम् 'प्राधान्यमेव तत्रापि द्वितीया वदति स्वतः । विरोधात् तेन संबन्धो गुणभावस्तु लक्ष्यते ॥' इति । ( वा. पृ. ४१० ) । ननु मुख्यानभिधाने लक्षणा भवति । तदुक्तम् 'अभिधेयाविनाभूते प्रवृत्तिर्लक्षणेष्यते ॥' इति । ( वा. पृ. ३९४ ) । कथं पुनः सक्तुप्राधान्यं विरुध्यते, येन विरोधाद् गुणभावो लक्षणीयः । उच्यते, यस्य कश्चिदुपयोगो निर्वृत्तो भविष्यतीति वा वधार्यते, तस्यैवकारार्थत्वात् कर्मप्राधान्यं प्रतिपद्यते । न च सक्तूनां भूतभाव्युपयोगः । तदुक्तम् 'भूतभाव्युपयोगं हि संस्कार्यं द्रव्यमिष्यते । सक्तवो नोपयोक्ष्यन्ते नोपयुक्ताश्च ते क्वचित् ॥' इति । ( वा. पृ. ४११ ) । अतो गुणभावलक्षणया सक्तुसाधनकहोमविधानमेवैतत् इति सिद्धम् । सा च लक्षणा मुख्यार्थतात्पर्यानुपपत्त्या भवति । इह मुख्यार्थपरत्वस्यैव अर्थमवाङ्लक्षणेति । तेन ईप्सिततमत्वरूपप्राधान्याभिधायिद्वितीयाबलेन गुणकर्मत्वमेव संमार्गादीनामिति । ननु कर्मणि द्वितीया स्मर्यते । कर्मत्वं तु यथा ईप्सिततमस्य, तथा अनीप्सितस्यापि विहितम्, 'तथायुक्तं चानीप्सितम्' ( पा. १।४।५० ) इत्यनुशासनविरोधात् । अतः कथमीप्सिततमत्वमेव द्वितीयार्थः इति । उच्यते– न ह्यलौकिकं कर्मत्वरूपमत्र पाणिनिना अभिहितम्, किन्तु नियतं इति व्युत्पत्त्या मनिप्रत्ययतोऽयं कर्मशब्दः । येनैव च तदेव क्रियते यदीप्सिततमम्, इच्छापूर्वकत्वात् क्रियायाः । अतस्तदेव मुख्यं कर्म । तेनोक्तम् 'कर्तुरीप्सिततमं कर्म' इति । अन्येषां तु अनीप्सितादीनां क्रियाव्याप्यत्वसामान्यतोऽयं कर्मशब्दो द्वितीयापदोत्पत्त्यर्थमेव पाणिनिना प्रयुक्तः इति विवेक्तव्यम् । अतः सिद्धं संमार्गादीनां गुणकर्मत्वमिति ।

यत्तु प्रभाकरेण ईप्सितानीप्सितसाधारणं क्रियाजन्यफलभागित्वमेव कर्मत्वं तदेव च द्वितीयाऽर्थ इत्युक्तम् । तत्र अपादानस्यापि विभागलक्षणस्य क्रियाजन्यफलभागित्वेन कर्मत्वप्रसङ्गः । अथ मतम्, चतुर्विधं हि कर्म उत्पाद्यम्, प्राप्यम्, विकार्यम्, संस्कार्यं चेति । अतो नान्यत् कर्मत्वम्, किन्तु उत्पत्तिप्राप्तिविकृतिसंस्कृतिरूपफलचतुष्टयभागित्वमेव । तदुक्तम्, 'गां दोग्धि

गोपालकः' इत्यत्र उक्तोऽपरयोरन्यतमस्याविवक्षाभावात् गोरकर्मत्वप्रसङ्गात् । तस्याश्च कर्मत्वम् 'अकथितं च' (पा० १।४।५१) इत्यनेन सूत्रेण भणितम् । अथ दोहे दुग्धयुक्तावस्थाऽभावेन दुग्धवियुक्तावस्थाऽऽपत्त्या विकारकर्मत्वमेव गोरित्युच्यते, तर्हि 'नगराद्ग्रामं राजा गच्छति' इत्यत्रापि राजवियुक्तावस्थाऽऽपत्त्या नगरस्यापि कर्मत्वात् अपादानत्वं न स्यादिति यत्किञ्चिदेतत् ।

अत्र संमार्गस्य प्रधानकर्मत्वे गुणकर्मत्वे च अनुष्ठानाविशेषात् प्रकृतौ विचारप्रयोजनस्यादर्शनात् भाष्यकारेण विकृतौ वरुणप्रघासे प्रयोजनमुक्तम् । तत्र 'शमीमय्यः स्रुचो भवन्ति' इति विधीयमाना शमी प्रकरणेन प्रधानीभूतवरुणप्रघासार्था । तत्रादि प्रधानकर्मत्वं संमार्गस्य तदा तदर्थं प्रकृतिवत् नानावृक्षीया एव स्रुच उत्पादयितव्याः, प्रधानज्ञानासम्बन्धाभावात् । गुणकर्मत्वे तु प्रधानग्रहीताना शमीमयीनामेव कार्योपयोगात् तासामेव संमार्ग इति । तदेतत् वार्तिककारपादा नानुमन्यन्ते । अयं च तेषामभिसन्धिः, यथा 'बर्हिषि हवींष्यासादयति' इति प्रकृतौ प्रकरणेन प्रधानसंबन्धिना अङ्गप्रधानहविरासादनार्थम्, तथात्रापि स्रुङ्मात्रानुवादेन विधीयमाना शमी पूर्वपक्षेऽपि अङ्गप्रधानार्थैवेति । तदुक्तम् 'स्रुङ्मात्रमनुवादेन शमीमय्यादि चोदितम् । ज्ञायतेऽङ्गप्रधानार्थं पूर्वसिद्धान्तपक्षयोः ॥' इति । (वा. पृ.४१३) । अथ प्रकृतावयं न्यायः, विकृतौ तु प्रधानमात्रसंगतिरेव शक्याश्रया, तदा प्रयाजादिरूपतामपि प्राकृतनानाजात्युत्पादनप्रसङ्गः । तदुक्तम् 'यदि प्रधानमात्रेण शमीमय्यादिसंगतिः । प्राकृत्यस्तु प्रसज्यन्ते प्रयाजादेः स्रुचस्ततः ॥' इति । (वा.पृ.४१४) । किञ्च यदि प्रधानस्रुङ्मात्रसंबन्धोऽपि शम्या भवेत् तथापि यथा सौमिकी त्रिंशद्धस्तपरिमाणा महावेदिः अतिदेशप्राप्तदीक्षणीयादिसंबद्धदार्शपौर्णमासिकचतुर्हस्तवेदिकार्ये परिमाणानादरेण प्रसङ्गेन साधयति, तथा प्रधानार्थोपात्तशमीमयस्रुग्भिरेव जातिभेदादस्य आतिदेशिकनानावृक्षीयस्रुक्कार्यसिद्धेर्न तदर्थं नानावृक्षीयस्रुगुत्पादनमिति । अत्रैके समाधानमेवमभिदधति, सर्वत्र खलु अङ्गाना करणोपकारसंबन्धद्वारार्थे अङ्गविधानं भवति, तत्तु अपूर्वीयानिरूढकार्यत्वात्

संनिहितपदार्थाश्रयत्वेनैव अङ्गविधिर्व्यवतिष्ठते । विकृतौ तु प्रकृतिवत्करणोपकारसंबन्धद्वारकार्येण अतिदेशप्राप्तत्वात्, इतरथा प्रकृतिवत् विकृतावपि तस्य भवलानीयत्वप्रसङ्गात् तत्सिद्धेव विधिरिति स्थितम् । तदेवं सति 'शमीमय्यः स्रुचो भवन्ति' इति विधीयमाना शमी प्रकरणेन प्रधानार्था सती प्रकृतिवत्प्रधानीयकरणोपकारसंबन्धद्वारकार्यमेव स्रुक्संबन्धोपस्थापितमपेक्षमाणा प्रकृतिप्राप्तपर्णताऽऽदिनानाजातीयस्रुङ्निराकाङ्क्षसमार्गस्रुक्कार्ये परित्यज्य तत्रैव विधीयते इति युक्तम् । न च संमार्गस्रुचामपि प्रकृतौ प्रधानीयकरणोपकारकत्वम्, दीक्षणीयाप्रायणीयवत् स्रुचः समार्गोत्पत्तिवाक्योपादानबलेन समार्गापूर्वग्रहीतत्वेन प्रधानापूर्वेण गृहीतत्वात् । अतो न तत्कार्ये शमीविधिरिति । तदर्थं नानाजात्युत्पादनमेव । बर्हिषा तु प्रकरणेन प्रधानापूर्वग्रहीतत्वेऽपि अङ्गहविरासादनस्य च अङ्गापूर्वगृहीतत्वेन प्राकृताना करणोपकारकार्ये निधानासंभवात् द्वयोरपि अङ्गप्रधानहविरासादनयोः आश्रयाकाङ्क्षत्वात् वाक्यात् प्रकरणबाधेन युक्तमुपकारकत्वमपुरस्कारेणोभयार्थत्वम् । न च 'वेद्यां बर्हिषि हवींष्यासादयति' इत्यावयवैराकाङ्क्षये सति प्रकरणात् प्रधानहविरासादनसंबन्ध एव बर्हिषो नाङ्गहविरासादनसंबन्धः इति वक्तव्यम् । द्वयोरेकवाक्योपात्तयोर्वेदिबर्हिषोः युगपदङ्गप्रधानहविरासादनाश्रयत्वात् अविरोधेन समुच्चयेन संभवात् । विकृतौ तु प्राकृताङ्गसंबन्धोत्तरकालीनत्वात् वैकृताङ्गसंबन्धस्य नैराकाङ्क्षयमिति वैषम्यम् । न च अत्रापि वैकृतप्रधानापूर्वगृहीतत्वेऽपि शम्याः उपकारकतानपुरस्कारेण उभयार्थत्वमिति वक्तव्यम् । वैकृतप्रकृतिवत्प्रधानीयकरणोपकारसंबन्धद्वारकार्यापन्नस्य व्यवस्थितत्वात् संमार्गस्य प्रकृतिवत्प्रधानीयकरणोपकारसंबन्धिस्रुक्कार्यसंबन्धस्य त्यक्तत्वात् दीक्षणीयावत् प्रधानापूर्वगृहीतत्वात् संमार्गस्रुचाम् । किञ्च वैकृतौ हि शमीविधिः अतिदेशप्राप्तपर्णतामबाधमानो निविशते, तत्र प्रकरणानुरोधेन प्रधानीयस्रुक्प्रकृतिवत्स्थानेनैव तत्रत्यौ नाङ्गस्रुक्प्रकृतिद्रव्यबाधनमप्युचितम् । यदि सौमिकमहावेद्युद्देशेन दीक्षणीयादिषु आतिदेशिकदार्शपौर्णमासिकवेदिकार्यं परेणापि स्वीक्रियते । तथा सति वेदिप्रसङ्ग-

औपदेशिकबाधदर्शनात् । यावदुपदेशो योग्यानुपलम्भो न भवति, तावत् संदिग्धत्वात् तस्या चावस्थायां बलवदसंदिग्धप्रमाणेन बाध एवेति नास्ति बर्हिर्मुष्टानिःस्तरणम् । किञ्च यथा अङ्गप्रधानसाधारणानुवादेनापि विधीयमानस्य प्रकृतिलब्धसाधननिराकाङ्क्षे अङ्गे प्रदेशो न भवति, तावत् संदिग्धत्वात् तस्या चावस्थाया बलवद् संदिग्धप्रमाणेन बाधात् 'ये यजमानास्त ऋत्विजः' 'यो होता सोऽध्वर्युः' इत्यत्र अङ्गकार्येषु प्राकृतकर्तृत्विगध्वर्युनिराकाङ्क्षेषु यजमाने होतृसंबन्धो न स्यात् । तथा च सति वरणमात्रमनार्थत्वात् तेन (?) न स्यात्, 'विप्रतिषेधे करणं समवायविशेषादितरमन्यस्तेषां यतो विशेषः स्यात्' इति न्यायविरोधः स्यात् । अतो यत्किञ्चिदेतदिति । अत एव आतिदेशिकबाधभयेनापि नोपदेशसंकोचः, तथापि अङ्गशेषभूतेनि ऋत्विगन्तर्युक्कार्ये बाधभयेनैव यजमानहोतृनिवृत्तिप्रसङ्गात् । सौमिकमहावेदिनिमित्तु दीक्षणीयाऽऽतिथ्यादेर्नैष्यत एव । 'विकर्षया च संयोगात्' इत्यत्र महावेदिः सर्वाङ्गार्थ एकाग्न्योतिष्टोमार्थं तस्यैव क्षतिश्वकारपादेरुक्तत्वात् । वेदेरपि प्रकृतेष्वङ्गभाष्यकारोपप्रयोगमनदूषणाय भाष्यकारमतेनैवोक्तः । न च नन्मनेऽपि अतिदेशबाधभिया महावेदिविधिर्दीक्षणीया-ऽऽदिपरित्यागः, किन्तु क्वचित् बाधकाय क्वचित् बाधाभावेन च क्वचित् प्राकृतकार्याश्रयकर्मिसादिविधिरेकत्व-भयेनैव । एवं 'दशभिर्दीक्षयन्ति' इत्यत्रापि नातिदेश-बाधभयेन उपदेशसंकोचः । किन्तु प्राकृततन्त्रकार्यासु दीक्षाऽऽदिषु वैकृतमन्त्रसंबन्धे 'द्वादश जुहोति' इति वैकृतावयवानां षड् जुहोतेष भूयन्ते । तत्र हि वैकृतैरेव मन्त्रैरभ्यासः क्रियताम्, प्राकृतैर्वा इति संदेहे उपदेशा-भावेन कल्पनीयोऽयमभ्यासस्तत्र, अतिदेशानुग्रहार्थं प्राकृतातिदिष्टमन्त्रसहकृत्यैव कल्प्यते । इह तु उपदेशतः एव स्वरूपसंबन्धो नातिदेशबाधभिया संकोचमर्हतीति वैषम्यम् ।

यत्तु कैश्चित् 'यत्रोभयं हविरार्तिमार्च्छेत्, ऐन्द्रं पञ्चशरावमोदनं निर्वपेत्' इत्यत्र विकृतौ अतिदेशप्राप्तस्य चतुर्मुष्टिनिर्वापस्य अन्यतरबाधेनोपपत्तौ नोभयबाध इति मुष्टिमात्रबाधनस्य दृष्टान्तत्वेन दर्शितम्, तदयुक्तम् । नहि तत्रौपदेशिको बाधः, किं तर्हि उभयथापि चतुर्मुष्टिनीहीणां पञ्चशरावौदनानिष्पत्तेः अर्थापत्त्यैव आवश्यके अन्यतरबाधे प्राथम्यात् मेल्याऽनुग्रहेण मुष्टिमात्रबाधो युक्त एव । अत्र तु औपदेशिकत्वात् बाधस्य अनुत्पत्ति-मिति न किञ्चिदनुपपन्नमिति । अथ अङ्गानामेव आतिदेशिकी प्राप्तिः, अनङ्गाना तु समार्गस्रचा विकृतावपि औपदेशिकी, इतरथा पवमानेष्टेरपि अतिदेशप्रसङ्गः । तेन उपदेशयोस्तुल्यबलत्वात् दुर्बलातिदेशोपनीतप्रधान-स्रुचामेव बाध इति । नैवम् । किमनिदिष्टाङ्गाक्षेपलभ्य-त्वात् अङ्गानामौपदेशिकत्वम्, अथ समार्गोद्देशेन विहिताना स्रुचां प्रकृतिविकृतिसाधारण एवोपदेशः इति । न तावदाद्यः कल्पः, अतिदेशाक्षेपलभ्यस्य अतिदेशतोऽपि जघन्यत्वेन सुतरां बाध्यत्वात् । नापि द्वितीयः, तथा च सति विकृतिभूतेऽपि प्रयाजोद्देशेन कृष्णलहोम-प्रवृत्तौ अप्रकृतत्वेऽपि प्रसज्येत । न च पवमानेष्ट्यतिदेश-प्रसङ्गः, प्रकृतस्यैव 'यदाहवनीये जुहोति' इति हविर्निष्पन्नस्य आहवनीयस्य अङ्गत्वविधानात् विकृतावपि तथाभूतस्यैव तथा प्राप्तत्वात् । अथोच्यते आतिदेशिकत्वेऽपि अस्ति प्राप्तिकालवैषम्यम्, यतः करणोपकारस्य अङ्गत्वेन प्रथमं संबन्धः, पश्चादङ्गाभिसंबन्धः । तत्र प्रथमप्राप्तहोमः स्रुङ्निराकाङ्क्षोऽयं शमीमयीविधिः न चरमभाविसमार्ग-स्रुक्प्राप्तिकालमपेक्षते इति । तदयुक्तम् । तथा सति बर्हिर्निधिरपि आहवनीयकरणत्वात् प्रथमं प्राप्तानीयहविरासा-दनस्यैव प्राप्तत्वात् उपकारकत्वेन चरमभाविनीमङ्ग-हविरासादनमपि अभिलङ्घयात् (अभिलङ्घयेत्) बर्हिरा समानयाभसबन्ध स्यात् । यदा च तत्र तथा अभावेऽपि प्राप्तिकालवैषम्येऽपि न बर्हिर्मुष्टार्थः । विशेषतश्च अत्र प्राप्तिकालवैषम्यमपि न संभवति । यतो येन उपकारेण भावेन हि अङ्गसंबन्धो भवन् यथाभूतानामेव उपकार-जननसामर्थ्यं प्रकृतौ अवगतम्, तथाभूतानामेव आति-देशिकः संबन्धो वक्तव्यः । साङ्गसहितस्यैव प्रकृतौ उप-कारजनकत्वावगमात् सहैव प्राप्तेः । यदपि यत्कि-ञ्चिदिति । एतच्च सर्वं समार्गस्रुचां दीक्षणीयादाहुति-गमकत्वात् समार्गापूर्वगृहीतामभ्युपेत्योक्तम् । परमार्थतस्तु न एतत्संभवति, यत. अधिकारविधिविनिविष्टभूतानामङ्गानां

प्रथममनभिव्यक्तस्वापूर्वाणामेव अधिकारविधिगृहीतत्वात् संमार्गस्रुचामपि अधिकारापूर्वीयत्वमेव । किञ्च एकवाक्योपात्तानां सर्वेषां एककार्यपरत्वव्युत्पत्तेः एकस्मिन्नेव 'स्रुचः संमार्ष्टि' इति वाक्ये संमार्गस्य प्रधानापूर्वपरत्वं स्रुचां संमार्गापूर्वपरत्वमिति व्युत्पत्त्यनुरोधादपि अयुक्तम् । तेन सर्वेषां प्रधानापूर्वपरत्वमेवेति ।

ननु स्ववाक्यस्था हि कार्यान्वयनिर्वर्तकत्वमित्युक्तम् । तत् एकवाक्यगतसर्वपदार्थानां श्रुत्यनुसारेण एककार्यपरत्वाविरोधे सतीति द्रष्टव्यम् । दीक्षणीयायां तु 'आग्नावैष्णवमेकादशकपालं निर्वपति दीक्षिष्यमाणः' इति वाक्येन द्रव्यदेवताविशिष्टस्यैव दीक्षणीयायाः अधिकारापूर्वान्वयोत्तरकाले संभूतोपकारजननार्थं अपूर्वान्तराभिमुख्ये ज्ञाते 'यावत्या वाचा कामयेत, तावत्या दीक्षणीयायामनुब्रूयात्' इत्यनेन वाक्येन अन्तरङ्गलक्षणया अपूर्वान्वयमात्रपरेण युक्तं वाङ्नियमस्य तन्मात्रप्रतिष्ठितत्वम्, न चेह तथेति वैषम्यम् । एवं च सति संमार्गस्रुचामपि प्रधानापूर्वीयत्वात् होमस्रुचामपि अविशेषात् शमीमयीत्वमेवेति । यद्यपि प्रसङ्गन्यायनिराकरणार्थं स्रुचां प्रयोगात् बहिर्भावादानं लौकिकवैदिकवैषम्यमुक्तम्, तदयुक्तमुक्तम्, विकल्पासहत्वात् । तथाहि, यदेतत् प्रयोगानुपात्तानामपि नानाद्रुमीयस्रुचां यज्ञदेशानयनम्, तत् किं संमार्गार्थेन प्रयोगविप्रयुक्तं संपाद्यते वा ? पूर्वस्मिन् कल्पे यज्ञप्रवासार्थानीतानां शमीमयीनां तत्रापि प्रसङ्गो दुर्वारः । एवमेव अग्निहोत्रोपात्तानां यजमानगृहवर्तिनीनामपि नानाद्रुमीयस्रुचां यज्ञदेशानयनं संपाद्यमानत्वं च निराकरणीयमित्यलमतिविस्तरेणेति । तस्मात् यथावार्तिकमेव स्रुग्ग्रहणप्रयोजनमभिधीयते । तथाहि स्रुक्संमार्गस्य प्रवृत्तौ कपिञ्जलन्यायेन तिसृभिः स्रुग्भिः साधितत्वात् वाजपेयादावपि प्रवृत्तौ बहुस्रुक्कर्मसु तिस्र एव संमार्ष्टव्याः प्रसज्यते । सिद्धान्ते तु प्रयोजनवत्त्वेन सर्वा एव स्रुचः संमार्ष्टव्याः, संस्कारस्य प्रतिप्रधानावृत्तित्वात् । उदाहरणान्तरप्रयोजनानि तु वार्तिके एव सुगमानीति । सूत्रं तु—अवहन्त्यादिवत् द्वितीयाश्रुतेस्तुल्यत्वात् इतरैरवहन्त्यादिभिः संमार्गादिसमानधर्मं स्यात् गुणकर्मत्वम् । तौता.

* धर्ममीमांसाशास्त्रं षोडशभिरध्यायैः षट्सप्तत्या पादैः सिद्धम् । संकर्ष. ४।४।१०.

* धर्ममोक्षसंबन्धि यत् तद्वेदप्रभवम्, यत्तु अर्थसुखविषयं तल्लोकव्यवहारपूर्वकं इति विवेक्तव्यम् । या. १।३।१।२ पृ. १६६.

ॐ धर्मलक्षणम् । चोदनासूत्रम् ॥

चोदनालक्षणोऽर्थो धर्मः । १।१।२।२ ॥

भाष्यम्— स हि ( धर्मः ) निःश्रेयसेन पुरुषं संयुनक्ति इति प्रतिजानीमहे । तदभिधीयते । चोदनालक्षणोऽर्थो धर्मः । चोदनेति क्रियायाः प्रवर्तकं वचनमाहुः । आचार्यचोदितः करोमि इति हि दृश्यते । लक्ष्यते येन, तत् लक्षणम्, 'धूमो लक्षणमग्नेः' इति हि वदन्ति । तया यो लक्ष्यते सोऽर्थः पुरुषं निःश्रेयसेन संयुनक्ति इति प्रतिजानीमहे । चोदना हि भूतं भवन्तं भविष्यन्तं सूक्ष्मं व्यवहितं विप्रकृष्टम् इत्येवंजातीयकमर्थं शक्नोति अवगमयितुम्, नान्यत् किञ्चन इन्द्रियम् । ( अत्र वैद्यनाथी— "नान्यत् किञ्च इति पदच्छेदः । तया च शब्दाद्यैव तादृशार्थबोधनसामर्थ्यम्, न तु तद्व्यतिरिक्तप्रमाणमात्रस्य । तत्रैव हेतुः नेन्द्रियं इति । अथवा 'नान्यत्' समर्थमित्यर्थः । 'किञ्च' इति प्रश्नार्थे कुतः इत्यर्थः । 'नेन्द्रियम्' इति तु पूर्ववदेव हेतुः ।" इति । अत्र 'नान्यत् किञ्चन इन्द्रियम्' इत्यत्र 'प्रदर्शनार्थमन्योक्तमिन्द्रियं सूत्रकारवत् । नान्यत् किञ्चेति वा छेदः सामान्यार्थः प्रयुज्यते ॥' ( १।१।२।२ श्लो. १५ ) 'तदसामर्थ्यसिद्धौ च पुनरिन्द्रियकीर्तनम् । किञ्चेति मध्यमच्छेदो हेतुप्रश्ने प्रयुज्यते ॥' १६ ॥ अत्र वार्तिके एवं व्याख्यातम् । 'नान्यत् किञ्चन इन्द्रियम्' समर्थं इति । 'नान्यत् किञ्चन प्रमाणं समर्थं यथा इन्द्रियम्' इति । 'नान्यत् प्रमाणं समर्थम् । किञ्च कस्मात् इत्यर्थः, यस्मात् नेन्द्रियं समर्थम्, तस्मात् इन्द्रियपूर्वकत्वात् इतरस्य प्रमाणस्य न तत् समर्थम्' इति—कै. ) ।

नन्वतथाभूतमप्यर्थं ब्रूयात् चोदना, यथा यत्किञ्चन लौकिकं वचनम् 'नद्यास्तीरे फलानि सन्ति' इति । तत् तथ्यमपि भवति, वितथमपि भवतीति । उच्यते ।

विप्रतिषिद्धमिदमुच्यते 'ब्रवीति, वितथं च' इति। 'ब्रवीति' इति उच्यते 'अवबोधयति, बुध्यमानस्य निमित्तं भवति' इति। यस्मिंश्च निमित्तभूते सति अवबुध्यते, सोऽवबोधयति। यदि च चोदनायां सत्याम् अग्निहोत्रात् स्वर्गो भवति इति गम्यते, कथमुच्यते 'न तथा भवति' इति। अथ न तथा भवतीति, कथमवबुध्यते। असन्तमर्थमवबुध्यते इति विप्रतिषिद्धम्। न च 'स्वर्गकामो यजेत' इत्यतो वचनात् संदिग्धमवगम्यते 'भवति वा स्वर्गो न वा भवति' इति। न च निश्चितमवगम्यमानम् इदं मिथ्या स्यात्। यो हि जनित्वा प्रध्वंसते 'नैतदेवम्' इति, स मिथ्या प्रत्ययः। न चैष कालान्तरे पुरुषान्तरे अवस्थान्तरे देशान्तरे [illegible] विपर्येति, तस्मादवितथः (प्रत्ययः)। यत्तु लौकिकं वचनम्, तच्चेत् प्रत्ययितात् पुरुषात् इन्द्रियविषयं वा, अवितथमेव तत्। अथ अप्रत्ययितात् अनिन्द्रियविषयं वा, तावत् पुरुषबुद्धिप्रभवमप्रमाणम्। अशक्यं हि तत् पुरुषेण ज्ञातुम्, ऋते वचनात्। अपरस्मात् पौरुषेयात् वचनात् तदवगतमिति चेत्, तदपि तेनैव तुल्यम्। नैवंजातीयकेषु अर्थेषु पुरुषवचनं प्रामाण्यमुपैति, जात्यन्धानामिव वचनं रूपविशेषेषु। ननु अविदुषामुपदेशो नावकल्पते, उपदिशन्तश्च मन्वादयः। तस्मात् पुरुषाः सन्तो विदितवन्तश्च। यथा चक्षुषा रूपमुपलभ्यते, इति दर्शनादेव अवगतम्। उच्यते। उपदेशा हि व्यामोहादपि भवन्ति, असति व्यामोहे वेदादपि भवन्ति। अपि च पौरुषेयात् वचनात् 'एवमयं पुरुषो वेद' इति भवति प्रत्ययः, न 'एवमयमर्थः' इति। विप्लवते हि खल्वपि कश्चित् पुरुषकृतात् वचनात् प्रत्ययः। न तु वेदवचनस्य मिथ्यात्वे किञ्चन प्रमाणमस्ति। ननु सामान्यतोदृष्टं पौरुषेयं वचनं वितथमुपलभ्य वचनसामान्यात् इदमपि वितथमवगम्यते। न, अन्यत्वात्। नहि अन्यस्य वितथभावे अन्यस्य वैतथ्यं भवितुमर्हति, अन्यत्वादेव। नहि देवदत्तस्य श्यामत्वे यज्ञदत्तस्यापि श्यामत्वं भवितुमर्हति। अपि च पुरुषवचनसाधर्म्यात् वेदवचनं वितथं इत्यनुमानं व्यपदेशात् अवगम्यते। प्रत्यक्षस्तु वेदवचनेन प्रत्ययः। न च अनुमानं प्रत्यक्षविरोधि प्रमाणं भवति।

तस्मात् चोदनालक्षणोऽर्थः श्रेयस्करः। एवं तर्हि श्रेयस्करो जिज्ञासितव्यः, किं धर्मजिज्ञासया? उच्यते। य एव श्रेयस्करः, स एव धर्मशब्देनोच्यते। कथमवगम्यताम्? यो हि यागमनुतिष्ठति तं धार्मिक इति समाचक्षते। यश्च यस्य कर्ता स तेन व्यपदिश्यते। यथा पाचको लावक इति। तेन यः पुरुषं निःश्रेयसेन संयुनक्ति स धर्मशब्देनोच्यते। न केवलं लोके, वेदेऽपि 'यज्ञेन यज्ञमयजन्त देवाः। तानि धर्माणि प्रथमान्यासन्' इति यजतिशब्दवाच्यमेव धर्मं समामनन्ति। उभयमिह चोदनया लक्ष्यते, अर्थः अनर्थश्चेति। (अत्र वार्तिककुमारिल न्यायरत्नाकरे उक्तम्—'साध्य चैव योजनीयम्। उभयमिह चोदनया लक्ष्यते साध्य साधनं च। साध्यमपि द्विविधं अर्थोऽनर्थश्च इति। श्लोक. २२४। वृत्त्या तु नेव यदृच्छा स्वीकृता, किन्तु यस्तयैव अर्थोऽनर्थश्चेति उभयं चोदनया लक्ष्यते' इत्यर्थग्रन्थेनैवोक्तम्। के) कोऽर्थः? यो निःश्रेयसाय ज्योतिष्टोमादिः। कोऽनर्थः? यः प्रत्यवायाय श्येनो वज्रः इषुः इत्येवमादिः। तत्रानर्थो धर्म उक्तो मा भूदित्यर्थग्रहणम्। कथं पुनरसौ अनर्थः? हिंसा हि सा। हिंसा च प्रतिषिद्धेति। कथं पुनरनर्थः कर्तव्यतया उपदिश्यते। उच्यते। नैव श्येनादयः कर्तव्या विज्ञायन्ते। यो हि हिंसितुमिच्छेत् तस्यायमभ्युपाय इति हि तेषामुपदेशः। 'श्येनेनाभिचरन् यजेत' इति हि समामनन्ति 'आभिचरिष्यन्' इति।

ननु अशक्यमिदं सूत्रम् एवमर्थो अभिवदितुम्। चोदनालक्षणो धर्मो नेन्द्रियादिलक्षणः अर्थश्च धर्मो नानर्थ इति। एकं हीदं वाक्यम्, तदेवं सति भिद्येत। उच्यते। यत्र वाक्यादर्थः अवगम्यते तत्रैवम्। तत्तु वैदिकेषु, न सूत्रेषु। अध्यस्ते अवगते अर्थे सूत्रमेवमर्थमिदं इत्यवगम्यते। तेन च एकदेशः सूच्यते इति सूत्रम्। तत्र विभागेनैव वाक्ययोः इमौ एकदेशौ इत्यवगन्तव्यम्। अथवा अर्थस्य सतः चोदनालक्षणस्य धर्मत्वमुच्यते इत्येकार्थमेवेति।

बृहती — सर्वविचाराणां प्रतिज्ञापूर्वकत्वात् तदभिधीयते। 'चोदनेति क्रियायाः प्रवर्तकं वचनमाहुः' इति। कार्येऽर्थे वेदस्य प्रामाण्यं दर्शयति 'तल्लक्षणो धर्मः'

इति वदन् । ( न कार्यावगमं विना प्रवृत्तिरुपपद्यते । तेन कार्याभिधायकतयैव वचनस्य प्रवर्तकता । कार्याभिधायकेन च कार्यमेव लक्ष्यते । तेन कार्ये एव वेदः प्रमाणम् । चोदनालक्षणसूत्रेण चोदनालक्षणः कार्यरूप एवार्थो न सिद्धरूपः इति प्रतिज्ञातम् । तदनेन भाष्येण व्याख्यायते । धर्मशब्दश्च वेदार्थमात्रपरः ) । कार्यरूप एवेति दर्शयति 'चोदना हि भूतम्' इति । यदि कार्ये एव कार्ये वेदस्य प्रामाण्यम्, कथं तर्हि भूताद्यर्थावगतिः मन्त्रार्थवादेषु । तेषामपि हि कार्यार्थता द्वितीये पादे वक्ष्यते । तदुक्तम् 'शक्नोति अवगमयितुम्' इति । न च प्रमाणान्तरावगम्योऽयमर्थः इति 'नान्यत् किंचनेन्द्रियम्' इति दर्शयति । ( भूतादिरूपोऽप्यर्थः कार्यान्वयित्वात् तेन रूपेण कार्यं एव । तेन चोदनैव कार्यप्रतिपादकत्वेन वाक्यं भूतादिकमपि अवगमयितुं शक्नोति इति कार्यरूप एव वेदार्थः इति न प्रतिज्ञाहानिः ) । 'ननु अतथाभूतमपि अर्थं ब्रूयात् चोदना' इति शब्दस्य अर्थासंस्पर्शितां वदन् प्रतिज्ञादोषमाह । कथं पुनः अर्थासंस्पर्शिता शब्दस्य ? उच्यते । अर्थसंस्पर्शि हि इष्यते प्रमाणम् । तस्य बाधकज्ञानोत्पत्तौ सत्यां पुनः प्रतिपत्तृविज्ञानं तन्निमित्तमेवोत्पद्यते । शब्दे पुनः स्पष्टेऽपि बाधकज्ञाने पुनः शब्दनिमित्तमेव प्रतिपत्तृविज्ञानमुदेति अङ्गुल्यग्रे हस्तियूथमिति । तथा न शुक्तिकारजतादिषु अन्यार्थस्य संभवः । तस्मात् अर्थासंस्पर्शित्वात् चोदनायाः 'तल्लक्षणो धर्मः' इति प्रतिज्ञा नोपपद्यते । उच्यते । अर्थं च अवबोधयति अर्थासंस्पर्शि च इति चित्रम् । यदि तावत् बाधकज्ञानावगम्य अर्थासंस्पर्शित्वम्, नैव तत् प्रमाणान्तरम् । विशेषाग्रहणात् स्मृतिज्ञानं तत् इति प्रतिपादयिष्यामः । वेदे पुनः बाधकज्ञानाभावात् अर्थासंस्पर्शिताशङ्काऽपि नास्ति । ननु च सत्यपि बाधकज्ञाने लौकिकेषु वाक्येषु शब्दादेव ज्ञानमुत्पद्यते निमित्तभावात् अङ्गुल्यग्रे हस्तियूथशतमिति । तदद्य परिहृतेव अर्थासंस्पर्शिताशङ्का [ परिहारोऽयमुक्तः ] । नैवम् । अनभिज्ञो भवान् बाध्यबाधकभावस्य । अङ्गुल्यग्रे हस्तियूथशत इति प्रमाणान्तरदर्शनं अत्र बाध्यते, न पुनः हस्तियूथशतमिति (वाक्यं वस्तु) । तदिदमाह 'विप्रतिपिद्धमिदमभिधीयते, ब्रवीति वितथं च' इति । अत एव 'तच्चेत् प्रत्ययितात्' इत्युक्तम् । प्रत्ययितस्य हि वचनं अव्यभिचारि प्रमाणान्तरपूर्वकं यथोपलभ्यमानविषयम् । यत्र तु द्वयं नास्ति, तत्र प्रमाणान्तरविपर्ययात् विपर्ययः । वाक्यार्थे पुनः कुतो विपर्ययः । ( योऽयं विपर्ययः नासौ वाक्यार्थे, किं तर्हि लिङ्गार्थे ) । कस्मात् पुनः पौरुषेये वचसि प्रमाणान्तरविपर्ययात् विपर्ययः ( न पुनः शब्दविपर्ययात् । अयोत्तरम् ) ज्ञातं च अर्थं परस्मै प्रतिपादयितुं पुरुषाः प्रयुञ्जते वाक्यानि । न च अप्रतीतोऽर्थो ज्ञातो भवति इति प्रमाणान्तरसंवादिना पौरुषेयेण वचनेन भवितव्यम् । ( तेन विपर्ययोऽपि अनुमानस्यैव, न शब्दस्येति ) तदिदमुक्तम् 'अशक्यं हि तत् पुरुषेण ज्ञातुं ऋते वचनात्' इति । ( यत् पुरुषेण वाक्यं प्रयुज्यते, तत् प्रतीतार्थप्रतिपादनाय । न च प्रमाणान्तरं विना प्रतीतिरस्ति । तस्मात् प्रमाणान्तरसापेक्षं लौकिकं वचनमस्ति ) । ननु अशक्यं हि तत् पुरुषेण ज्ञातुं ऋते प्रमाणान्तरात् इति वक्तव्ये 'ऋते वचनात्' इति कोऽभिप्रायः ? उच्यते । ननु च कार्यार्थे वेदेऽपि पौरुषेयत्वेन वचसः प्राप्नोति इत्यस्य परिहारार्थमिदमुच्यते 'ऋते वचनात्' इति । ( कः परिहारः ? अयमुच्यते, यदि चोदना कार्यमर्थं प्रतिपादयति तदा न पौरुषेयी । पुरुषा हि प्रमाणान्तरप्रतीतार्थप्रतिपादनाय वाक्यं प्रयुञ्जते । न च कार्यं प्रमाणान्तरप्रमेयम् । तेन तत्प्रतिपादकस्य न पौरुषेयत्वम् इति ) । ननु च प्रमाणान्तरसंवादिता एवं न प्रदर्शिता भवति ( बाधकमेव एवं इति मन्वानस्य चोद्यमिदम् ) । बाढं प्रदर्शिता, सापेक्षत्वनिराकरणदर्शनात् । ( सापेक्षत्व निराक्रियमाणं दृश्यते यस्मात् वचनस्य, तस्मात् नान्तरीयकं अनपेक्षत्वं सिध्यतीत्यर्थः ) । नान्तरीयकानपेक्षत्वसिद्ध्यर्थं तु विशेषोदाहरणम् । ननु 'ऋते वचनात्' इत्युक्तेऽपि अपरस्मात् पौरुषेयाद्वचनात् प्राप्नोत्येव पौरुषेयत्वं चोदनायाः । उच्यते । वचनादित्युक्ते प्राप्नोत्येव कार्येऽर्थे वचनस्य स्वातन्त्र्यम् । अतः पुरुषपरम्परायामपि न प्रमाणान्तरगोचरो धर्मः इति सिद्धम् । कथं पुनरिदं सिध्यति, पुरुषपरम्परोपदेशान्यथाऽनुपपत्त्या

निगदि उपलम्भकस्मरित इति शक्यते कल्पयितुम्, न स्वातन्त्र्यं वचनस्य । नैतदेवम्, 'उपदेशो हि व्यामोहादपि भवति । असति व्यामोहे वेदादपि भवति' । मूलद्वये सम्भवत्येतस्मिन् परिगणितप्रमाणव्यतिरिक्तं न प्रमाणान्तरमस्ति इति शक्यते वक्तुम् । अतः प्रमाणान्तरविषयत्वासंभवात् न स्वतन्त्रार्थाविसंवादिता शक्यते वक्तुं चोदनायाः । तस्मात् सुष्ठु प्रतिज्ञातं 'चोदनालक्षणोऽर्थो धर्मः' इति ।

किञ्च पुरुषवचनाद्विज्ञातोऽयमनेनार्थः इति निश्चयो भवति, न पुनः प्रमाणान्तरबुद्धिरुपजायते । तदुक्तम् "अपि च पौरुषेयाद्वचनात् 'एवमयं पुरुषो वेद' इति भवति प्रत्ययः, न 'एवमयमर्थः'" इति । किं वा अर्थान्तरावगतो प्रमाणान्तरावगतिर्भवति ? कथम्, अर्थानुसारि हि तदा प्रमाणमवकल्पते ( किं अर्थावगत्यनुमानात् प्रमाणान्तरं शाब्दं इत्यवगतिर्भवति । शाब्दं भवति, कारणभूतमर्थं उपस्थापयत् शाब्दं अनुमानात् प्रमाणान्तरं इत्यवकल्पते )। ननु 'वेद' इत्येतदपि कल्पनीयमेव, न, प्रसिद्धकारणत्वात् संविदः अप्रसिद्धमूलत्वाच्चार्थस्य ( 'वेद' इत्यपि वक्तृबुद्धिः कल्पनीया पौरुषेयाद्वाक्यात् । ततश्च तत्कल्पकतया किमिति प्रमाणान्तरं न भवति ? न, प्रसिद्धं हि कारणं वाक्यस्य वक्तृबुद्धिः, अतस्तत्कल्पना, कार्यतः कारणानुमानम् । अप्रसिद्धं च कारणं अर्थः । अतः तदवगतिर्नानुमानम् )। 'वेद' इत्येतदपि तावत् पुरुषवचनात्प्रतीतिर्भवति, विक्षेपस्य संभवात् निश्चायाम्, किमुतार्थे, तदर्शयति 'विप्लवते खल्वपि कश्चित् पुरुषकृतात् वचनात् प्रत्ययः' इति ( प्रतारकाः अन्यथा जानन्तोऽपि अन्यथा वाक्यानि प्रयुञ्जते । तथा प्रमादिनो दुष्टसामग्रीकाश्च अन्यवाक्यविवक्षया अन्यदेव वाक्यमुच्चारयन्ति । तेषां वाक्यात् वक्तृबुद्धिरपि निश्चेतुं न शक्यते, दूरेणार्थः । वक्तृवचनान्नार्थावगतिः, विक्षेपस्य प्रतारणाप्रमादलक्षणस्य चित्तगस्य संभवात् । एतच्चोपन्यासे उपारणदोषोऽपि द्रष्टव्यः । न वेदवचनस्य मिथ्यात्वे निबन्धनं प्रमाणमस्तीत्युक्तम् )।

किमिदं सामान्यतोदृष्टम् । द्विविधस्यापि निराकरणात् । किमन्यदवशिष्यते, येन इदमुच्यते 'ननु सामान्यतोदृष्टम्' इति । ( द्विविधस्यापि प्रत्यक्षान्तरापेक्षित्व-सर्वार्थस्पर्शित्वलक्षणस्य अप्रामाण्यहेतोर्निरस्तत्वात् ) । सत्यमेतत् । किन्तु विषयान्तरे सामान्यतोदृष्टमनपाकृतं मन्यते । 'विप्लवते खल्वपि कश्चित् पुरुषकृतात् वचनात्' इत्युक्तम्, तदा 'शब्दपूर्वार्थः अन्यथा शब्दादिज्ञानम्' तदिदमुपपन्नार्थं भवति । [ शङ्कते— ] अस्या विप्लुतौ प्रयुक्ता खलु अर्थाविसंवादिता, शब्दस्य अशब्दत्वात् विप्लुतार्थत्वम् इति । [ परिहरति— ] सत्यम्, यदि विप्लुतौ शब्दादयथार्थत्वम्, अयथार्थस्य विषये शब्दादवगम्ये सति, नायथार्थत् । तदिदमुक्तं 'नान्यत्वात्' इति । अत एवायथार्थत्वे हेतुः शब्दाविषये स्यात् । ( यत्र विप्लवः, तत्र यदि शब्दात् अयथार्थप्रत्ययस्यावगमः स्यात् । किन्तु शब्दस्तत्र लिङ्गम्, तेन तत्र तस्य वक्तृबुद्धिव्यवस्थापकत्वम् । वक्तृबुद्धिमुखेन चार्थावगमः । तेन अयथाऽर्थत्वस्य वक्तृबुद्धिर्निमित्तम्, न शब्दः )। अथापि शब्दादेव विप्लवः, तथापि पादानुमानं नैवोपपद्यते । अदुष्टप्रतिज्ञापनतापेक्षं वेदवचनं भवति । दुष्टमार्यं पदः, संविदः प्रत्यक्षत्वात् । तदिदमुक्तम् 'प्रत्यक्षस्तु वेदवचनात् प्रत्ययः' इति । प्रतीतिः प्रत्ययः ।

ननु च नैव कार्यो धर्मः । कस्तर्हि ? गुणः । तथाच केचित् बुद्धिगुणं मन्यन्ते, केचिदात्मगुणम् । तस्मात् 'क्रियायाः प्रवर्तकं वचनम्' 'चोदनालक्षणोऽर्थो धर्मः' इति वचनं च नोपपद्यते, अकार्यत्वाद्धर्मस्य । अतः तन्निराकरणाय चोदनालक्षणस्य उपसंहारमुखेन दर्शयन्नाह भाष्यकारः 'तस्माच्छ्रेयस्करो धर्मः' इति । एवमपि कथं पुनर्निरासः ? शब्दार्थसंबन्धस्य लोकव्यवहारगम्यत्वात् । कार्ये चार्थे धर्मशब्दं लौकिकाः प्रयुञ्जते । 'यो यागमनुतिष्ठति' इत्येवमादिना प्रदर्शिते अर्थशब्दस्य अन्यप्रयोजनप्रदर्शनार्थं भाष्यकारेण 'उभयमिह चोदनया लक्ष्यते अर्थः अनर्थश्च' इति । पुनरपि च प्रश्नपूर्वकमिदमुक्तम् 'कोऽर्थः ? यो निःश्रेयसाय ज्योतिष्टोमादिः । कोऽनर्थः ? यः प्रत्य-

धायाय श्येनादिः' इति निःश्रेयसप्रत्यवायलक्षणं धर्माधर्मत्वमुक्तम्। एवं चोपदर्शयता चोदनालक्षणं इत्युक्तं भवति (उभयमपि अर्थानर्थत्वेन चोदनालक्षणमित्युक्तम्) तत्र यो निःश्रेयसाय तस्यैव प्रत्यवायहेतोर्मा भूत् इति इदं तर्हि अयुक्तं (तथाच सति अयुक्तम्, यदुक्तं तत्र यो निःश्रेयसाय तस्यैव धर्मता कथं नाम स्यात्, प्रत्यवायहेतोर्मा भूत् इति 'इदं तर्हि' इति पूर्वेण सह एकान्वयः)। 'कथं पुनः अनर्थः कर्तव्यतया उपदिश्यते' इति (भाष्य), कथं कर्तव्यतया अनुपदिश्यमानोऽर्थः चोदनालक्षणो भवति, कथं वा चोदनालक्षणस्य सतः धर्मत्वनिवृत्त्यर्थं अर्थशब्दान्वय उपपद्यते। (अयमभिप्रायः। यत् किल चोदनालक्षणं तत् कर्तव्यतया उपदिश्यते। यच्च कर्तव्यतया उपदिश्यते न तदनर्थः। कर्तव्यतावगमादेव अनर्थत्वनिवृत्तेः। अथोच्येत, अनर्थ एव श्येनादिनियोगः, न तर्हि कर्तव्यतयोपदिश्यते। यच्च कर्तव्यतया नोपदिश्यते न तत् चोदनालक्षणम्। अतः चोदनालक्षणनिवृत्त्यर्थं अर्थग्रहणमिति। तन्नोपपद्यते। अचोदनालक्षणत्वेनैव व्यावृत्तिसिद्धेः। एतच्च अपेक्षाऽनुगुणं इति कृत्वा व्याख्यातम्)। पुनरपि च स्पष्टीकरोति 'नैव श्येनादयः कर्तव्यतया विज्ञायन्ते' इत्युत्तरेण कर्तव्यतया च नोपदिश्यते चोदनालक्षणश्च इति संकटमिदोपलक्ष्यते। यदपि च 'कथं पुनरसौ अनर्थः' इति प्रश्नमुत्क्षिप्य 'हिंसा हि सा, सा च प्रतिषिद्धा' इत्युक्तम्, तदपि पूर्वापरविरुद्धम्। प्रत्यवायलक्षणं अनर्थत्वं उक्त्वा पुनः प्रतिषेधलक्षणमुक्तत्वात्, तस्मादसामञ्जस्यम्। अथ प्रतिषेधप्रत्यवाययोरपि अविरोधिता उच्यते, प्रत्यवायस्य प्रतिषेधहेतुत्वात्, तदयुक्तम्, नञर्थस्य अनन्यार्थत्वात्। नञर्थपरैवासौ एव प्रतिषेधविधिः, न पुनः तदर्थस्य अन्यार्थतामवगमयितुं क्षमः। (नहि निषेधेन नञर्थस्याकरणे प्रत्यवायपरिहारार्थता। यदि नञ्विधिः नञर्थस्य प्रत्यवायपरिहारार्थतां गमयेत् ततो गम्येत अकरणे प्रत्यवाय इति। तदा चैतदपि सिध्येत् 'प्रतिषिद्धं प्रत्यवायाय' इति, न त्वेवमस्ति। इयं भाष्याक्षरयोजना— 'उभयमिह चोदनया लक्ष्यते, अर्थोऽनर्थश्चेति।' अर्थः अनिषिद्धफलः, अनर्थश्च निषिद्धफलः। 'कोऽर्थः? यो निःश्रेयसाय' अनिषिद्धफलः 'ज्योतिष्टोमादिः'। 'कोऽनर्थः? यः प्रत्यवायाय' निषिद्धफलः श्येनो वज्रः इषुः इत्येवमादिः। तत्र, अनर्थो धर्म उक्तो मा भूत् इति एतदर्थम् 'अर्थग्रहणम्। कथं पुनरसौ अनर्थः' इति औपादानिकीं फले प्रवृत्तिं मन्वानस्य चोद्यम्। हिंसा हि सा, सा च प्रतिषिद्धेति। कामिनो स्वतः फले प्रवृत्तत्वात् तदर्थितयैव कर्मणि प्रवृत्तेः न हिंस्यात् इति प्रतिषेधाविरोधात्। 'कथं पुनरनर्थः कर्तव्यतयोपदिश्यते' इति पूर्वोक्तमेव चोद्याभिप्रायं विवृणोति। 'उच्यते, नैव श्येनादयः कर्तव्यतया विज्ञायन्ते' इति नैव विधिना श्येनादयः कर्तव्याः इति प्रतिपाद्यन्ते, फलार्थितयैव प्रवृत्तेः। 'यो हि हिंसितुमिच्छेत् तस्यायमभ्युपायः इति हि तेषामुपदेशः' इति फले स्वयं प्रवृत्तेः तदिच्छयैव कर्मण्यपि प्रवर्तते इति भावः। एतदेव स्फुटीकरोति 'श्येनेनाभिचरन् यजेत' इति हि समामनन्ति नाभिचरितव्यं इति अभिचारे स्वतः प्रवृत्तिं दर्शयति)। (आक्षेपमिदानीं परिहरति—टीकाकारः—) अथाह— अनिरूपितनियोगव्यापारस्य इदं चोद्यम्। कर्तव्यताविषयो नियोगः, न पुनः कर्तव्यतामाह। (न निरूपितः उपादानलक्षणो नियोगव्यापारो येन, तस्येदं चोद्यम्। यागकर्तव्यताऽनुष्ठानविषयो नियोगः, तेन नियोगः साध्यते, न तु नियोगो यागस्यानुष्ठानं ज्ञापयति)। कथं तर्हि कार्येऽर्थे प्रामाण्यं वेदस्येत्युक्तम् (यदि यागादेः कर्तव्यता न ज्ञाप्यते कथं तर्हि कार्येऽर्थे वेदस्य प्रामाण्यम्, कार्यप्रतिपादकत्वात्)। युक्तम्, तद्विषयत्वान्नियोगस्य (यद्यपि यागादेः कर्तव्यता न ज्ञाप्यते तथापि यागविषयो नियोगः कर्तव्यतया प्रतिपाद्यते इति कार्यप्रतिपादकत्वात् युक्तं कार्ये प्रति प्रामाण्यात्)। कोऽयं विषयविषयिभावः? यस्मिन्नयं पुरुषो नियुज्यते स विषयः। (कर्मणि प्रेरकत्वात् नियोगस्य, कर्मणो विषयत्वं नियोगस्य च विषयित्वम्। तथाच विहित एव कर्मणि प्रवृत्तिः इति भावः। अपर तु, यस्मिन्नर्थे पुरुषो नियुज्यते स विषयः इति नैव कर्मणि प्रेरकतया विषयिभावः। किं तर्हि? यत्र कर्मणि पुरुषो नियुज्यते कार्यं बोध्यते इति कार्यबोधनमेव हि पुरुषस्य नियोजनम्।

अबोधात्; बोधे वा शुभाशुभफलाक्षेपकविधिनिषेधविषयत्वे धर्माधर्मत्वे । शुभपद फलनुपकारस्वर्गादिजनकादृष्टसाधारणम् । अशुभपद दुःखजनकादृष्टजनकवैगुण्यसाधारणम् । अभ्यनुज्ञाविधिविषयस्तु न धर्मो नाप्यधर्मः । अत एव पूर्वसूत्रे धर्मपदेन साधर्म्योऽधर्मस्यापि गतविचारविषयो लक्ष्यते । अपौरुषेयवाक्यतात्पर्यविषयीभूतवाक्यार्थान्वयित्वस्य लक्ष्यताऽवच्छेदकत्वात् । सगुणनिर्गुणोपासनविधिशेषत्वादिना क्रतुविध्यपेक्षितसंसारात्मस्वरूपवदेव ब्रह्मणोऽपीह विचार्यत्वमिष्टमेव । लक्षणताऽवच्छेदककोटिनिविष्टवाक्यार्थे संसर्गात्मकत्वं वा विशेषणीयम् ।

मण्डन—'(आदौ,) द्वितीयसूत्रेण जिज्ञास्य कुरुतेऽधुना ॥ प्रमाणाभासरूपादीन् मेकरेण निरूपयन् ।'

शंकर—'धर्मे मान च चोदना ।' २. 'धर्मोऽर्थश्चोदनागम्यः ।' ३.

* धर्मलक्षणा कार्यलक्षणया बाध्यते । बाल. पृ. १४१.

* धर्मविचारशास्त्रम् 'चोदनालक्षणोऽर्थो धर्मः' इत्यारभ्य 'अन्वाहार्ये च दर्शनात्' इत्येतदन्तं जैमिनिप्रोक्तं सूत्रजातम् । वि. १।१।१, * धर्मविचारशास्त्रं साक्षात् अध्ययनविधिप्रयुक्त इति भाट्टाः, अध्यापनविधिप्रयुक्तमध्ययनम्, तत्प्रयुक्तं धर्मविचारशास्त्र इति प्राभाकराः । १।१।१, * धर्मविचारशास्त्रस्य 'स्वाध्यायोऽध्येतव्यः' इति विधिः प्रयोजकः । १।१।१. * धर्मविरोधे अङ्गप्रधानयोः प्रधानस्यैव धर्मानुग्रहः । भा. १२।२।९।२५.

☞ धर्मविषयकप्रमाणपरीक्षाप्रतिज्ञा । निमित्तपरीक्ष्याधिकरणम् ॥

तस्य निमित्तपरीष्टिः ॥ १।१।३।३ ॥

भाष्यम्— उक्तमस्माभिः चोदनानिमित्तं धर्मस्य ज्ञानमिति । तद् प्रतिज्ञामात्रेणोक्तम् । इदानीं तस्य निमित्तं परीक्षिष्यामहे किं चोदनैवेति, अन्यदपीति । तस्मात् न तावत्सिध्यति चोदनालक्षणोऽर्थो धर्म इति । तदुच्यते ।

श्लोका— 'प्रतिज्ञाव्यतिरेकेण भाष्यकारेण यद्यपि । वक्ष्यमाणा स्वपक्षस्य युक्तिः पूर्वं निदर्शिता ॥ १ ॥ प्रतिज्ञामात्रमित्येतज्जैमिनेर्मतमुच्यते । वृत्तिकारोऽधिकं वाऽपि भूतादि द्वारमब्रवीत् ॥ २ ॥

बृहती— तस्य निमित्तपरीष्टिः इति हेत्वभिधानावसरः कथ्यते । कथं पुनः कार्येऽर्थे चोदनैव निमित्तम् ? अन्यस्य प्रत्यक्षादेरसंबन्धात् । कथमसंभवः (तदुत्तरसूत्रे वक्ष्यामः) ।

ऋजु— चोदनालक्षणसूत्रेण श्रुत्यर्थाभ्यां वेदार्थस्वरूपम्, तत्र च प्रमाणं प्रतिज्ञातम् । तत्र [illegible] स्वरूपं तावत् भेदाभेदरूपेण कथ्यताम्, उत प्रमाणप्रतिज्ञाया हेतुः इति संशये प्रधानत्वात् स्वरूपस्य, तदेव भेदाभेदाभ्यां कथनीयं इति प्राप्ते, भेदाभेदनिर्णयस्य अनपेक्षत्वस्य अपेक्षत्वात् प्रामाण्ये हेत्वनपेक्षत्वमधुना कथनीयं इति सूत्रेण कथ्यते । तथा च भाष्यम् 'इदानीं तस्य निमित्तं परीक्षिष्यामहे' इति । तस्मात् अनपेक्षत्वरूपप्रामाण्यहेत्वभिधानावसरकथनं सूत्रेण क्रियते इति ।

शा— अनेन सूत्रेण चोदनारूपस्य निमित्तस्य परीक्षणं अस्मिन् पादे वक्ष्यमाणम् 'अथातः शेषलक्षणम्' 'अथ विशेषलक्षणम्' इतिवत् सुखग्रहणार्थमनुकीर्त्यते ।

चन्द्रिका— अयमत्र सूत्रार्थः, तस्य धर्मस्य ज्ञाने यन्निमित्तं प्रमाणं चोदनाऽभिधानम्, तस्य परीष्टिः परीक्षा कर्तव्या इति । 'इषु गतौ' इत्यस्माद्धातोः 'इषेरनिच्छार्थस्य' इति युचि विहिते 'परेर्वा' इति क्तिन्युचोर्विकल्पस्मरणात् युज्विधौ पर्येषणा इति रूपं क्तिन्विधौ तु परीष्टि इति रूपं सिध्यति । अत्र धर्मप्रमाणं परीक्ष्यं न वेति संदेहे, प्रमाणोपदेशेनैव प्रमेयसिद्धेः किं परीक्षया इति पूर्वः पक्षः । नात्र सिद्धवत् स्वरूपकथनमात्रं किन्तु विचारशास्त्रत्वादस्य सर्वथा प्रमाणपरीक्षा कर्तव्या इति सिद्धान्तः ।

वि— 'धर्मस्य ज्ञापकं मानं यदुक्तं चोदनात्मकम् । एतत् किं न परीक्ष्यं स्यात् किंवा सम्यक् परीक्ष्यताम् ॥, मानोद्देशात्प्रमेयस्य सिद्धत्वात् किं परीक्षया ।, मैवं विचारशास्त्रेऽस्मिन् परीक्षोपेक्ष्यते कुतः ॥'

गुरुमतमाह— 'आदौ परीक्ष्यो वेदार्थश्चोदनामानताऽपरा ।, वेदार्थस्य प्रधानत्वात् प्रथमं तत्

परीक्ष्यताम् ॥, चोदनामात्रैवात्र प्रथमं साध्यतां गता । अनपेक्षतया तस्य ततो मुख्यत्वमाश्रितम् ॥'

भाट्टे— इदं सूत्रं उत्तरसूत्रेण सह एकाधिकरणत्वेन स्वीकृतम् ।

मण्डन— 'निवृत्त्याध्यायतात्पर्यं ब्रवीति सुख-सिद्धये ।'

शंकर— 'न तस्मात्परीक्ष्यता ।' अपरीक्ष्यता न किन्तु परीक्ष्यमेव कल्याणम् । ४.

* धर्मचोपनं नाम साम अनुष्टुभम् । बाल. पृ. ७२.

* धर्मशब्दः अपूर्ववाची इति कौशाम्बा: । अपूर्व-साधनयागादिवाची इति मीमांसकाः । बाल. पृ. १.
* धर्मशब्देन यः पुरुषं निःश्रेयसेन संयुनक्ति स उच्यते । भा. १।१।२।२, * य एव श्रेयस्करः स एव धर्मशब्देनोच्यते । यो हि यागमनुतिष्ठति तं धार्मिक इति समाचक्षते । तेन यः पुरुषं निःश्रेयसेन संयुनक्ति स धर्मशब्देनोच्यते । १।१।२।२ पृ. १७–१८.

* धर्मशास्त्रातिक्रमेण यत् क्रियते न तस्य (सवनप्रवृत्तेः) निमित्तत्वं स्यात् यथा शूद्रकृताधानस्य न आहवनीयादिप्रयोगनिमित्तत्वम् । बा २।३।२।३ पृ. ५८२.

* धर्मसंहिता. प्रायेण मनुगौतमवसिष्ठादिप्रणीताः स्मार्तग्रन्थेषु वर्तन्ते । बा १।३।८।२४ पृ. २५६.

* धर्मसाधारण्यस्य स्तमात्र निषेत्स्यमानत्वेन ..। सु. पृ. ३३४.

* धर्मसूत्रं गौतमीयं छन्दोगैरेव परिगृहीतम्, वासिष्ठं बह्वृचैरेव, शङ्खलिखितोक्तं वाजसनेयिभिरेव, आपस्तम्बीयबौधायनीये तैत्तिरीयैरेव प्रतिपन्ने । वा. १।३।७।१५ पृ २४४, * धर्मसूत्राणां सर्वेषां वर्णाश्रमधर्मोपदेशित्वात् धर्माणां चैकरूपप्रतिपत्तेः परस्परमवादित्वं युक्तम् । १।३।८।२७ पृ २८५.

* धर्मिकल्पनातो धर्मकल्पनैव वरं इति न्याय. । संग्रह:.

☞ धर्मिकल्पनातो धर्मकल्पना वरीयसीति न्याय. । धर्मकल्पनायाः श्रेष्ठत्वं च लाघवप्रयुक्तमिति । स्पष्टोऽयम् । साहस्री. ४२.

☞ धर्मिकल्पनातो धर्ममात्रकल्पना लघीयसी इति न्यायश्चेह बोध्यः । ईश्वरपदयोः हि धर्मिण एव तथा पाठ्याः, मया तु तदपरपठनीयस्य ईकारस्य कलत्वमात्रं कल्प्यमिति । शब्दकौस्तुभः १ अन्ते. * ननु वह्निनिष्ठा जाति. प्रमाणसिद्धा । तथा च 'धर्मिकल्पनातः' इति न्यायात् तस्या एव अवच्छेदकत्वं कल्प्यते न शक्ति. । शक्तिवादे रुचिदत्तः न्यायचिन्तामणिटीकाकार:.

☞ धर्मिभेदाद्धर्मभेदो लघीयान् । भेदशून्यत्वधर्मेऽपि 'धर्मि० यान्' इति न्यायेन यागादीनां समूय देहव्याप्त्यादिहेतुसामान्यव्यापारसंभवात् न प्राणात्वं पदार्थान्तर कल्प्यम् (पूर्वपक्षे) । न्यायनि. २।४।५।१ अमृ.

* 'धवं च खदिरं च छिन्धि' इत्यादौ वाक्ये यथा क्रमाभिहितयोरपि धवखदिरयोर्द्वित्वान्वयः तथा समासेऽपि धवखदिराभ्यां स्मृत्यारूढाभ्यां द्वित्वान्वयसंभव. । रत्न. ६।८।१०।२२ वर्णक २, * 'धवखदिरावानय' इति वाक्ये यथा युगपद्वचनताभावेऽपि चकारवशादेव इतरेतरयोगो गम्यते तथा 'धवखदिरौ' इति वाक्ये विधीयमानेन द्वंद्वेनैव तन्निर्देशं युगपदभिधानं कल्प्यम् । ६।१।५।२२ वर्णक २.

* धातुः (अभिधायी श्रुतिः) द्विविध भूवादिक: सनाद्यन्तश्च । बाल. पृ. ४१. * धातुः इति लवणचयः अभिधीयते । (लवणानां वह्निपिण्डः लवणचयः) यथा-लवणं वह्निं निधातु पञ्चधातु वा इति संकल्प्य लवणविधानात् । बा. १।८।१७।३२, * धातुः यस्य कारकस्य अवान्तरव्यापारं प्राधान्येनाह, स कर्ता । ३।४।८।१३ पृ. ९१७. * धातवः अनेकार्थाः । 'क्रियावाचित्वमाख्यातुमेकैकोऽर्थो निदर्शितः । प्रयोगतोऽनुमन्तव्या अनेकार्था हि धातवः ॥' इति स्मृतिः । सु पृ. ११३५. * धातवोऽपि भावना न मुञ्चन्ति तथा चाहुः 'करोतिरर्थेष्विव सर्वधातुः' इति । (विभज्य सेनां परमार्थकर्मा सेनापतीनामपि पुरंदरो यः । नियोजयामास स शत्रुसैन्ये करोतिरर्थेष्विव सर्वधातून् ॥) बा. २।१।१।१ पृ. ३८०, * धातवो नामशब्दाश्च बहव एव प्रतिदेशं अर्थभेदेषु व्यवस्थिता दृश्यन्ते । तथा चोक्तम् 'शवतिर्गतिकर्मा कम्बोजेष्वेव दृष्टो विकारमस्य आर्या. प्रयुञ्जते 'शवम्' इति

मृतशरीराभिधानात्' इत्यादि । १।३।४।८. * धातवः । प्रकृतयः एव एकेषु जनपदेषु प्रयुज्यन्ते, विकृतय एव एकेषु इत्युपक्रम्य निरुक्तकृता (प्रकृतय एवैकेषु भाष्यन्ते विकृतय एकेषु इति निरुक्तम् २।१।२ पृ. १२७) शवतिर्गतिकर्मा कम्बोजेष्वेव भाष्यते, विकारमस्य आर्याः (आर्येषु इति मूले) भाषन्ते 'शवः' इति इत्युक्तम् । कम्बोजेष्वेव जनपदविशेषेषु शवतिर्धातुः गतिवाची दृष्टः । आर्यास्तु जनपदविशेषाः 'शवोऽप्' इति अप्-प्रत्ययान्तत्वेन विकारापन्नं शवतिमात्रं न गतौ प्रयुञ्जते, शवत्वेन मृतस्याभिधानात् । महाभाष्यकृता तु 'विकारापन्नमार्या भाषन्ते' इति पाठान्तरमुदाहृतम् । (पृ. २९) मुद्रितमहाभाष्ये नकैयटे तु 'विकारमेनमार्या भाषन्ते' इति पाठः । न केवलं शवतिरेव देशविशेषे व्यवस्थितः, किन्तु अन्येऽपि बहवो धातवो नामशब्दाश्च व्यवस्थिता एव दृश्यन्ते । प्राच्येषु हि जनपदेषु दातिर्धातुः लवनार्थो दृश्यते, लुनाति इत्यस्मिन्नर्थे दाति इति प्रयोगात् । तमेव दात्र इति ष्ट्रन्-प्रत्ययान्तत्वेन विकारापन्नं उदीच्याः प्रयुञ्जते । 'प्राच्येषु गच्छत्यर्थे मध्यमेषु च रंहतिः ('मध्यमेषु चर इति' इति सुपाठस्तु अशुद्धः) । हम्मतिश्च (हम्मतिश्च इति महाभाष्यपाठ एव अत्र ग्राह्य.) सुराष्ट्रेषु गमिगत्यर्थेषु भाष्यते ॥' सु. पृ. २०८, * धातवः यथा धात्वर्थं न व्यभिचरन्ति तथा भावनामपि । पृ. ५६५. * धातवः विविधशक्तयः क्रोऽन्यमयोभयव्यापारयोगित्वेन भावार्थाधिकरणे दर्शिताः । तेषां प्रकारविशेषणत्वविधानात् कदाचित् कश्चित् प्रसिद्धि-मतिरेकेणापि प्रक्रियाभिप्रेयते । वा. १।४।११।३१ पृ. ३६८, * धातुं इकृद्भिरन्त्य अर्थेऽपि कश्चित् प्रयुङ्क्ते यजिः यजतिः इति च । तद् शब्दे अभिहिते लक्षणया अर्थप्रतीतिः इत्यवगन्तव्यम् । २।१।१।१ पृ. ३७९, * धातोः अनुवादता—'सर्वत्राख्यातसंबद्धे श्रूयमाणे पदान्तरे । विधिसन्त्युपपत्तेभ्यो स्याद्धातोरनुवादता ॥' २।४।२।३ पृ. ३२८. * धातोः उद्देश्यपरत्वे संभवति उपपदस्य अन्याय्यत्वात् । भाट्ट. ७।३।१. * धातोः एकस्य अर्थभेदेन सकर्मकत्वाकर्मकत्ववत् नपर्यायाणामपि कल्प्याद्दृतम् । मणि. पृ. १०३.

* धातोः अर्थस्य भेदेनार्थे कथ्यमाने यागेन इति विशेषरूपं करणात्मना निष्पृष्टम्, इतरत्तु भावनात्मकं सामान्यरूपं शब्दान्तरे भावयेत् इति अनेन कथ्यते । वा. २।१।१।२ पृ. ३८०. * धातोः फलभावनाकरणवाचित्वे श्येनादिशब्दानां तत्त्वामानाधिकरण्यात् नामधेयता सिध्यति । सु. पृ. ६२१, * धातूनां अनेकार्थत्वात् । स्त्रीसंपृक्तस्य गमेः मैथुनवाचित्ववत् स्पर्शवाचिनोऽपि आलभतेः प्राणिसंयुक्तस्य यागवाचित्वकल्पना न विरुद्धा । पृ. ९१३. * धातूनां अस्ति अनेकार्थत्वम् । वा. १।३।८।२५ पृ. ७८३. * धातुना उत्पत्त्यादिरूपं फलं तदनुकूलो व्यापारश्च वाच्यः इति वैयाकरणाः । मणि. पृ. १०० । फलमेव धात्वर्थः । अनुकूलव्यापारः प्रत्ययार्थः इति मण्डनः । पृ. १०१ । व्यापार एव धात्वर्थः इत्यन्ये । १०२ । व्यापारो धात्वर्थः इति रत्नकोशकारः । १०७. * धातूनां विविधशक्तित्वम् 'कदाचिदभिधीयमानकर्मशक्त्याक्षिप्तप्रयोज्यव्यापारः स्वयमाक्षिप्तप्रयोजकव्यापारो वा' इत्यादि भावार्थाधिकरणवार्तिके दर्शितम् । (वा. पृ. ३७५-७८) । सु. पृ. १५०५.

* 'धात्वर्थोऽपि यथाऽऽख्याते यत्नभूतः प्रतीयते । तत्राभिधायिना नाम्ना शाब्दनैवोपनीयते ॥' वा. २।३।११।२८ पृ. ६१६, * धात्वर्थोऽपि स्वपक्षितिकर्तव्यताकाङ्क्ष. सन् गुणार्थमपि प्रक्षिप्तामेतां (इतिकर्तव्यतां) ग्रहणसमर्थः सन् निमिति परित्यजेत् । ६।३।१३।४१ पृ. १०९९, * धात्वर्थः भवनाभूतः अत्र (मास जुहोति) जुहोतिना विधेयत्वेनोपदिष्टः । न च तादर्थ्येन तत्प्रकृतसिद्धार्थस्य होमस्य योगिपादिभिः अभिहोत्रादिपदैः अभिधीयमानत्वं इत्यत्यभिधानात् सोऽपि भिद्यते । २।३।११।२४ पृ. ६१६, * धात्वर्थ एव न भाव इत्युक्तम् । ३।४।४।१२ पृ. ९०३, * धात्वर्थः तदनुरक्ता च भावना सर्वत्र आख्याते विज्ञायते । २।१। १।१ पृ. ३७६, * धात्वर्थः तावत् प्रकृत्यैव साध्यात्मकः, विशेषतस्तु आख्यानगतेन धातुना उच्यमानः । स यदि फलसाधनत्वेन चोद्यते, ततः अविरुद्धरूपत्वात् तस्य साधनाकाङ्क्षायां सत्यां नामपद गुणविधित्वेन नामधेयत्वेन वा उभयथाऽपि दृष्टेनैव तादर्थ्यं लभते । ... 'यत्का-

त्मकोऽपि धात्वर्थो यदा नाम्नाऽभिधीयते। तदा द्रव्यवदेवासौ निष्पन्नात्मा प्रतीयते॥' यद्यपि वस्तुस्वरूपेण धात्वर्थः साध्यः, तथापि नामपदेनोच्यमानो लिङ्गसंख्यायोगित्वात् सिद्धरूपोऽभिधीयते। अभिधानकृता च आकाङ्क्षोत्पत्तिः, न वस्तुकृता। तस्मात् युक्ता धातोरेव आकाङ्क्षा, न नाम्न इति। २।१।१।१ पृ ३८८-८९. * धात्वर्थः न क्रिया मीमांसकमते। सोम. ३।४।८ पृ. २५७. * धात्वर्थः न फलमात्रम्, नापि व्यापारमात्रम्, त्यजिगम्योः पर्यायतापत्तेः। अव. फलव्यापारौ धात्वर्थः। मणि. पृ. १०४. * धात्वर्थः पाकः-पक्तिः-पचन इत्यादिशब्दैर्व्यवह्रियमाणो लिङ्गसंख्याकारकयोग्यः सिद्धस्वभावः। 'करोति' इति शब्देन व्यवह्रियमाणो लिङ्गसंख्याऽऽद्यपेतः साध्यस्वभावः। तत्र सिद्धस्वभावद्योतनाय यथा घञ्प्रत्ययादयो विहिताः, तथा साध्यस्वभावद्योतनाय आख्यातप्रत्ययविधिः। वि. २।१।१ वर्णक १. * धात्वर्था यस्या भावनायाः करणं भवन्ति, तस्या ते भावान्तरनिरपेक्षाः यथाप्तन भवनैकदायनीत्यायलब्धं इतिकर्तव्यतासंबन्धं लभन्ते। यस्याः पुनः गुणानां करणत्वम्, तस्याः धात्वर्थविशेषविहीना करणत्वानुपपत्तेः साध्यभूतो धात्वर्थः अवश्यं अपेक्षितव्यः। नहि व्यापारसामान्यस्य गुणैरुत्पत्तिः शक्या। धा ३।६। १६।४३ पृ. १०६९. * धात्वर्थमनुपनीय गुणः स्वतन्त्र इतिकर्तव्यतां ग्रहीतुं न शक्नोति, इति धात्वर्थमाश्रयति। ३।६।१६।४३ पृ. १०६९. * धात्वर्थमुल्लङ्घ्य गुणाभिमुखं गच्छन्ती इतिकर्तव्यता न शक्नोति गन्तुं इति धात्वर्थमुखे तावत् पतति। ३।६।१६।४३ पृ. १०६९. * धात्वर्थं प्रति भावनाया विशेष्यत्वम् 'प्रकृतिप्रत्ययौ प्रत्ययार्थं सह ब्रूतः, तयोः प्रत्ययः प्राधान्येन' इति स्मृतिबलादेव अविवादम्। अत एव न तस्य प्रत्ययार्थं प्रति प्रकारता। विशेष्यगामित्वे संसर्गप्रकारगामित्वस्य अन्याय्यत्वात्। रहस्य. पृ. ४६-४७. * 'अनूद्य चापि धात्वर्थे गुणः क्वचिद् विधीयते'। वा. १।४।२।८ पृ. २३४, * धात्वर्थेनैव भावनोपसर्जनधात्वर्थनिरूपणत्वात् कारकाणां संबन्धसिद्धिः। २।१।१।१ पृ. ३८२, * धात्वर्थेन फलकरणभूतेन अन्यथाऽनुपपत्त्या अपूर्वं भाव्यते। २।१।१।१ पृ. ३७६. * धात्वर्थेन हि सा (करणापेक्षा) शीघ्रं निवर्त्यते। वा. २।२।१।२६ पृ. ५४९। धात्वर्थस्य व्यापाररूपत्वात् साक्षात् कारकत्वोपपत्तेः भावनाऽवच्छेदकत्वोपपत्तेश्च शीघ्रं करणाकाङ्क्षानिवर्तकत्वम्। सु. पृ. ८४७, * धात्वर्थस्य अनिष्पन्नस्य करणत्वायोगः। पृ. ७६७, * धात्वर्थस्यैव करणत्वम्। ननु आख्यातस्य भावनावाचिनः कल्पयापेक्षायां करणाकाङ्क्षया नामार्थस्यापि करणत्वोपपत्तेः कथं धात्वर्थस्य करणत्वसिद्धिः? उच्यते। धात्वर्थानुरक्तभावनावाचितया धात्वर्थद्वारा स्वर्गोत्पादनाभिधायित्वात् प्रत्यासत्तेः धात्वर्थस्यैव करणत्वावगतिः इति। ननु एकप्रत्ययोपादानभूत्या धात्वर्थनिरपेक्षायाः भावनायाः विषयत्वात् स्वर्गादिपुरुषार्थफलत्वेऽवगते करणाकाङ्क्षायामपि निष्पन्नत्वेन अयोग्यत्वात् प्रत्यासत्तमपि धात्वर्थं भावाश्रयन् करणाकाङ्क्षादपि प्रत्यासत्त्या नामार्थेनैव अन्वयावगमात् कुतो धात्वर्थस्य करणत्वम्? उच्यते। प्रकृतिप्रत्ययोरर्थैक्यनियमात् शुद्धभावनाऽनवगतेः अनुष्ठानापेक्षश्च धात्वर्थानुरक्ताया एव फलोद्देशेन विधीयमानत्वात् विधिगम्यत्वाच्च करणत्वस्य 'केन भावयेत् स्वर्गम्' इत्यपेक्षायां यागादिना इत्येवान्वयो युक्त इति। पृ. ५५१. * धात्वर्थस्यैव करणत्वादिसंसर्गेण भावनायां प्रकारता इति मतम्। धात्वर्थलक्षितकरणत्वादेः भावनायां प्रकारता इति मतान्तरम्। मुरारि. (भा.) पृ. १४५०. * धात्वर्थस्यैव भावनाकरणत्वं न द्रव्यगुणयोः। मीन्या. * धात्वर्थस्य करणत्वेनैवान्वयः इति न नियमः 'दध्ना जुहोति' इत्यादौ साध्यत्वेनान्वयात्। 'दध्नेन्द्रियकामस्य जुहुयात्' इत्यादौ चाश्रयत्वेनान्वयात्। मीन्या. * धात्वर्थस्य फलाय प्रवृत्तिः अपूर्वभावनाया प्रत्यासत्तेः। अतस्तेनैव फलकरणभूतेन अन्यथाऽनुपपत्त्या अपूर्वं भाव्यते। शा. २।१।१।१ पृ ३७६. * धात्वर्थस्य कर्तुः अवाच्यत्वे प्रधानत्वावगमात् वाक्यार्थान्वयवत्त्वात् प्राधान्यासिद्धेः न धात्वर्थस्य साक्षात् पुरुषार्थत्वापत्तिः। सु पृ. १२८४. * धात्वर्थस्य कर्मत्वकरणत्वान्यतरसंसर्गेणैव सर्वत्र भावनायामन्वयः। रहस्य. पृ. ५३. * धात्वर्थस्य कारकत्वेऽपि

तदवच्छिन्नाया भावनायाः निरूपणासंभवतेः विध्ययोगात् पदश्रुत्यैव धात्वर्थविधिः। सु. पृ. १००६. ❀ धात्वर्थस्य च धर्माणां च नहि परस्परेण आकाङ्क्षा विद्यते। प्रययार्थेन हि इतिकर्तव्यता आकाङ्क्ष्यते कर्तव्य कथं इति। न यजिः कीदृशः इति। भा. ५।१।१।२ पृ. १६३९. ❀ धात्वर्थस्य नित्यं करणभूतस्य न कदाचित् प्राधान्यं आख्यातेषु भावप्रधानत्वात् इति स्थितं भावार्थाधिकरणे। वा. ३।४।४।१२ पृ. ९०३, ❀ 'धात्वर्थस्य प्रधानत्वं न तावदिह जन्मनि'। ३।४।४।१२ पृ. ९०२.

❀ धात्वर्थस्य भावनाया प्रकारत्वेन अन्वयः। प्रत्ययार्थप्राधान्यस्मृतेः संकोचे प्रमाणाभावात्। भावप्रधानमित्यस्य आख्यातार्थेषु अनेकेषु कस्य प्राधान्य इत्यपेक्षिते भावपदवाच्यभावनाप्राधान्य इत्यपेक्षितार्थविधायकत्वोपपत्तौ प्रत्ययार्थप्राधान्यस्मृतिसंकोचानुपपत्तेः। अतो निरुक्तस्मृतौ भावपदेन वैयाकरणपरिभाषितधात्वर्थस्य न ग्रहणं इत्युक्तमेव। न च प्रत्ययार्थप्राधान्यस्मृतेः सुबर्थलिङ्गसंख्यादेः प्रकृत्यर्थं प्रति प्रकारतया संकोचावश्यकत्वे यत्र करणत्वादौ प्रमाणान्तरेण प्रकृत्यर्थं प्रति प्राधान्यं प्रमितम्, तदनुवादमात्रतया भावनाविषयेऽपि बाधकाभावः (इति वाच्यम्)। 'प्रत्ययार्थे सह ब्रूतः तयोस्तु प्रत्ययः प्राधान्येन' इत्येकवचनश्रवणेन प्रत्ययार्थत्वसामानाधिकरण्येन प्रकृत्यर्थं प्रति प्राधान्यनियमात् सुबर्थलिङ्गसंख्यादीना अप्राधान्येऽपि क्षतिविरहात्। वस्तुतस्तु लिङ्गसंख्यादीनामपि प्रत्ययार्थान्तराणा न प्रकृत्यर्थप्रकारता, अपितु समानाभिधानश्रुत्या करणत्वादिरूपप्रत्ययार्थान्तर प्रत्येव इति वक्ष्यते। अतः सिद्धं धात्वर्थस्य भावनाया प्रकारतेति।

धात्वर्थश्च क्वचित् ध्यर्थे एव प्रकारः, यथा 'श्येनेन यजेत' इत्यादौ। क्वचित् त्यथे एव यथा 'अग्नीषोमीय पशुमालभेत' इत्यादौ यागः। स्वध्यार्थोऽपि क्वचित् शानार्थयुक्तः यथा 'पृष्ठैरुपतिष्ठते' इत्यादौ। आत्मनेपदानुरोधेन समीपस्थितिरूपवाक्यार्थविशिष्टमभिधानम्। वस्तुतस्तु 'श्येनेन यजेत' इत्यादौ सर्वादिष्वपि अपि विजातीययागत्वादिनैव लक्षणा इति शब्दार्थान्वयः अन्यथानुपपत्तेः। तस्य च कृतौ संसर्गः नानुकूलत्वम्, 'पचति, पाकं करोति' इति पाककर्मत्वस्यैव विवरणबलेन समर्गान्वयप्रतीतेः। अत एव 'ओदनं पचति' इत्यादौ 'पाकेन ओदनं करोति' इति विवरणात् पाककरणत्वस्यापि प्रतीतेः तस्यापि संसर्गत्वम्। अतश्च कर्मत्वकरणत्वान्यतरसंसर्गेणैव सर्वत्र भावनाया धात्वर्थस्य अन्वयः। यद्यपि कृतिं प्रति पाकस्य करणत्वं बाधितं कृतिसाध्यत्वात् पाकादेः, तथापि स्वनिष्ठकरणत्वनिरूपकौदनोद्देश्यकत्वसंबन्धेन पाकस्य कृत्यन्वयात् करणत्वस्यापि संसर्गघटकतया संसर्गोपपत्तिः। अस्ति च ओदनस्यापि कृतौ उद्देश्यताऽऽख्या विषयता इति नैयायिकसंसर्गेणान्वय। तत्र च यत्र विध्यश्रवणम्, तत्र द्वितीयान्तपदाश्रवणे 'पचति चैत्रः' इत्यादौ धात्वर्थस्य इष्टसाधनत्वाज्ञानेऽपि तस्य कर्मत्वमेव। आख्यातोपात्तभावनायाः करोत्यर्थतया तद्वदेव सकर्मकत्वनियमात्। अत [illegible] अकर्मकधातुस्थलेऽपि आख्यातोपात्ताया भावनायाः सकर्मकत्वमेव। अत एव तस्याः तदाकाङ्क्षायाम् 'स्वर्गकामः यजेत' इत्यादौ कामपदोपात्तस्वर्गादेरेव कर्मत्वेन अन्वयः, स्वर्गकामपदेनैव लक्षणया स्वर्गादेः। धातुस्तु अकर्मक एव। अत एवात्र न भावनाकर्मणि द्वितीया। सा तु धात्वर्थकर्मण्येव। सकर्मकधातुस्थले यथा 'व्रीहीनवहन्ति' इत्यादौ। तत्र तेषां प्रथमतो भावनाया कर्मत्वेन अन्वयेऽपि वाद्धिक धात्वर्थेऽपि कर्मत्वम्, इति तेषां धातूनां सकर्मकत्वोपपत्तिः। अतो भावनायाः नित्यकर्मकत्वात् 'पचति चैत्रः' इत्यादिनिरुक्तस्थले भावनायाः कर्माकाङ्क्षायां समभिव्याहारश्रुत्या धात्वर्थस्यैव कर्मत्वम्। लौकिकवाक्यत्वात् तस्य वैयर्थ्येऽपि न दोषः। वेदे तु विध्यन्तरैकवाक्यत्वादिना साधकत्वासंभवेन स्वाध्यायविध्यवगतप्रयोजनवत्त्वानुरोधेन लडादेरेव केवलं लेडर्थत्वं वा लक्षणया परिकल्प्य भावनायाः स्वर्गादिभाव्यान्तरपरिकल्पनया धात्वर्थस्य तत्र करणत्वेन अन्वयः। विधेः प्रवर्तकत्वान्यथाऽनुपपत्त्या तत्समभिव्याहृताया भावनाया इष्टभाव्यकत्वावश्यंभावात्। 'घटं पटं चानय' इत्यादौ चकारं विना कर्मद्वयान्वयादर्शनात् करोतेरिव आख्यातोपात्तभावनाया अपि एककर्मकत्वनियमेन यागादेरपि तस्या कर्मत्वानुपपत्तेश्च। अत एव यत्र विधिसमभिव्याहारस्य सत्त्वे अश्रवणे वा द्वितीया-

ऽऽदिना भाव्यान्तर निर्दिष्टं यथा 'व्रीहीनवहन्यात्' 'ओदनं पचति' इत्यादौ, तत्र धात्वर्थस्य करणत्वमेव। यत्र तु तादृशस्थले आश्रयकरणान्तरश्रवणम्, धात्वर्थस्य च प्रकरणादिना प्राप्तिः यथा 'गोदोहनेन पशुकामस्य प्रणयेत्' 'दध्नेन्द्रियकामस्य जुहुयात्' इत्यादौ तत्र आश्रयतया प्रकरणप्राप्तधात्वर्थानुवादमात्रम्। धातु तद्विदर्थे धातुः। न तु तदर्थस्य परत्वेन अन्वयः, वा आश्रयत्वेन, कर्मत्वातिरिक्तस्य आश्रयस्य निर्यन्तृमशक्यत्वेन भावनाया इन्द्रियरूपकर्मावरुद्धाया होमस्यापि कर्मत्वेन अन्वये एककर्मकत्वभङ्गापत्तेः। अत एव अनेकोद्देश्यनिमित्तवाक्यभेदेऽपि एककर्मकत्वभङ्ग एव दूषकताबीजमुक्तं कौस्तुभादौ।

एककर्मकत्वं च न एककर्मत्वक्त्वं एककर्मताश्रयकर्मकत्वं वा 'सर्वेभ्यो दर्शपूर्णमासौ' 'घटान् आनय' इत्यादौ तदनापत्तेः। तत्र पुत्रादिसृष्टिकर्मणां कर्मत्वाश्रयघटादीनां वा अनेकत्वात्। नापि एककर्मत्वावच्छेदकत्वं 'सर्वेभ्यो दर्शपूर्णमासौ' इत्यादौ 'व्रीहीन् प्रोक्षति' इत्यादौ च तदनापत्तेः। पुत्रपश्वादीनां तद्व्रीहिसाधनत्वानां च कर्मताऽवच्छेदकानां भेदात्। किन्तु एकबोधविषयकर्मत्वपर्याप्त्यधिकरणताऽवच्छेदकधर्मवत्त्वमित्युक्तं कौस्तुभे। निरुक्तस्थलेषु च सर्वत्र कर्मत्वपर्याप्त्यधिकरणताऽवच्छेदकधर्माणां एकेन पदेन एकस्यैव समुदायरूपेणानामकस्य बोधस्य जननात् एककर्मकत्वोपपत्तिः। 'अध्वर्युयजमानौ वाचं यच्छतः' इत्यत्र च अध्वर्युत्वयजमानत्वयोः कर्तृत्वादिकारणताऽवच्छेदकयोः एकबोधविषयत्वाभावात् द्विकर्मकत्वापत्तिः, अत एवोक्तमिति। तत्र इष्टोत्पत्तिभक्त्या देवतात्वादेरिव कर्मत्वादेरपि व्यासज्यवृत्तित्वावगमात् तत्पर्याप्त्यधिकरणताऽवच्छेदकधर्मस्य अध्वर्युयजमानोभयत्वस्य द्वन्द्वजन्यैकबोधविषयत्वेन एककर्मकत्वोपपत्तेः। उपपादितं चैतत् कौस्तुभादौ। एवं 'शुक्लं घटमानय' इत्यादौ शुक्लस्य घटे अभेदान्वयात् पदद्वयेन घटपदेनैव वा शुक्लगुणविशिष्टघटस्य लक्षणात् एककर्मकत्वोपपत्तिः। एवं 'घट पट चानय' इत्यादौ इतरेतरयोगार्थकचकाररूपतात्पर्यग्राहकानुरोधेन द्वितीयान्तपदद्वये लक्षणया तदुपपत्तिः। यथा च एवं सति निमित्तद्वयस्थले उद्देश्यानेकत्वनिमित्तवाक्यभेदस्य दूषकताबीजं एककर्मकत्वभङ्गापत्तिः, तथा कौस्तुभे व्यक्तम्। तत सिद्धं यत्र द्वितीयाऽऽदिना भाव्यान्तर भावनाया अन्वययोग्यमुपात्तम्, तत्र न धात्वर्थस्य कर्मत्वम्। यत्र तु तन्नोपात्तम्, धात्वर्थस्य च इष्टसाधनत्वं प्रमाणान्तरेण प्रमितम्, तत्र स्ववाक्यविधेयगुणान्तरसत्त्वे धात्वर्थस्य कर्मत्वमेव यथा 'दध्ना जुहोति' इत्यादौ। न चैवम् 'जुह्वा जुहोति' इत्यादौ जुहोतेः सकर्मकत्वात् कर्मान्तराकाङ्क्षाभावेन भावनायाः द्विकर्मकत्वापत्तिः, सकर्मकस्यापि भाव्यत्वाभावे इव कर्माविनश्योपपत्तेः। एतादृशेऽपि विषये यदि तृतीयाऽन्तनामधेयश्रवणं तदा करणत्वमेव, यथा 'समे दर्शपूर्णमासाभ्यां यजेत' 'उद्भिदा यजेत' इत्यादौ। यत्र तु तादृशगुणश्रवणाभावः, तत्र धात्वर्थस्यैव कर्मत्वेन प्रयोजनान्तरार्थं अनुवादः यथा विश्वजिद्वाक्ययोः। तदभावे (प्रयोजनान्तराभावे) तु 'तनूनपातं यजति' इत्यादौ कर्मान्तरमेव करणत्वेन इत्यादि आकरे व्यक्तम्। यत्र तु नेष्टसाधनत्वं प्रमितम्, न वा स्ववाक्ये च उद्भिदादिवत् तृतीयाऽन्तनामधेयश्रवणं यथा 'सोमेन यजेत' 'अग्निहोत्रं जुहोति' इत्यादौ, तत्र स्ववाक्ये द्रव्यविशेषानवगमेऽपि विधित्सेन भावनायाः इष्टसाधनत्वावगमात् इष्टसाधनत्वस्यैव तत्र भाव्यत्वपरिहृत्य धात्वर्थस्य करणत्वमेव। 'अग्निहोत्रम्' इत्यत्र द्वितीयाऽपि तत्र करणत्वलक्षणार्थैव इति सांप्रदायिकाः। एतादृशे विषये समानपदश्रुत्या भावनापेक्षित कर्म धात्वर्थ एव जुहोत्यग्निहोत्रं इति द्वितीयाऽन्तश्रवणे। न च इष्टसाधनत्वेन अज्ञातस्य कर्मत्वानुपपत्तिः, अनीप्सितकर्मत्वेन अन्वयोपपत्तेः। न च विधेः प्रवर्तकत्वव्याघातः, विध्यन्तरेष्टसाधनत्वज्ञानस्य प्रवृत्तिं प्रति कारणत्वेऽपि शास्त्रीयं प्रति अकारणत्वात् तदभावेऽपि होमकर्मकभावनाशाब्दज्ञानोपपत्तेः। न च भाव्यत्वेन अन्वितस्य तस्य भाव्यान्तराकाङ्क्षत्वात् फलान्वयेऽपि स्वर्गसाधनत्वबोधनापत्तिः, साधनत्वेन अन्वितस्य अर्थात् विध्यनुरोधेन कृतिसाध्यत्वज्ञानवत् कृतिसाध्यत्वेन बुद्धस्यापि विध्यपेक्षाऽनुरोधेनैव इष्टविशेषसाधनतया वाक्यान्तरेण निष्कर्षन्यायेन वा बोधोपपत्तेः। अतः 'उत्पत्तिवाक्ये धात्वर्थस्य कर्मत्वेनैव अन्वयः' इति

प्राभाकरोक्तमपि युक्तम् इति तर्करसिकाः । सर्वथा सिद्धं धात्वर्थस्य कर्मत्वकरणत्वान्यतरसंसर्गेण भावनाया प्रकारता इति । सांप्रदायिकास्तु धातुना स्वार्थवृत्तिकर्मत्वकरणत्वान्यतरत् लक्षणया प्रतिपाद्यते । तस्यैव स्वनिरूपकत्व-स्वनिरूपकोद्देश्यकत्वान्यतरसंसर्गेण भावनायामन्वयः । न तु कर्मत्वादेरपि संसर्गत्वम् । तथात्वे 'प्रकृतिप्रत्ययौ प्रत्ययार्थं सह ब्रूतः' इति साहित्यरूपान्वयानुशासनवैयर्थ्यापत्तेः । नहि पदार्थानुशासनप्रवृत्तानां तेषां अन्वयानुशासकत्वं युज्यते । अतः कर्मत्वकरणत्वादिरूपान्वयोऽपि द्वारैव पदार्थविधया भासते । अत एव ज्योतिष्टोमेन इति तृतीयाऽपि पदार्थविधया भाव्यमानकरणत्वानुवादिका इति संगच्छते । विशेषणविशेष्ययोः प्रकारतया भासमानकारकत्वस्य औत्सर्गिकत्वात् इत्याहुः । तत् सिद्धं धात्वर्थस्य सर्वत्र भावनायां प्रकारता इति । सा च आख्यातोपात्ता कृदादिउपात्ता च लिङ्गान्वयिनी इति वक्ष्यते । तेन वस्तुपदोपात्तायां भावनायां नान्वयः । रहस्य. पृ. ५२–५७.

❋ धात्वर्थस्य यथा करणत्वाऽनन्वयरूपद्वयेन अन्वयो न संभवति, एवं विषयत्वकरणत्वरूपद्वयेनापि अन्वयो न संभवति न्यायसाम्यात् । मीम. १।४।४ पृ. ६७.

❋ धात्वर्थस्य विषयत्वेन करणत्वेन च अन्वयमिच्छन्ति प्राभाकराः । तथाहि, प्रवृत्तिहेतुभूतकार्याभिधान लिङादीनां व्युत्पत्तिः । प्रवृत्तिहेतुत्वं च विलक्षणकार्यस्यैव, कार्यसामान्यज्ञाने प्रवृत्त्यदर्शनात् । एवं च विशेषतः कार्यप्रतिपत्त्यर्थं अवच्छेदकापेक्षायां धात्वर्थः अवच्छेदकतया संबध्यते । यद्यपि धात्वर्थः साक्षात् कार्यमवच्छेत्तुं न क्षमते, तथापि यागकृतिसाध्यं अपूर्वं इत्येवं कृत्यवच्छेदद्वारा कार्यं अपूर्वं अवच्छेत्तुं शक्नोति इति धात्वर्थः अवच्छेदकत्वेन संबध्यते । अवच्छेदकत्वमेव विषयत्वम् । इति धात्वर्थस्य यागादेः लिङाद्यर्थे कार्ये प्रतिपत्त्यनुबन्धितया विषयत्वेन अन्वयः । तथा कार्यम्, कृतिसाध्यम्, साध्यं इति पर्यायाः । ततश्च साध्यरूपापूर्वोद्देशप्रवृत्ता या कृतिः सा भावना इत्युच्यते । सा च क्रियात्वात् करणमन्तरेण अनुपपन्ना इति कृतिसाध्यत्वरूपकार्यस्य स्वनिष्पत्त्यर्थं स्वसाधनापेक्षप्रवृत्तकृतिरूपभावनामुखेन करणापेक्षायां धात्वर्थ एव अपूर्वानुबन्धित्वेन करणतयाऽपि संबध्यते । परोद्देशप्रवृत्तकृतिसाध्यत्वं हि करणत्वम् । संभवति च धात्वर्थस्य अपूर्वोद्देशप्रवृत्तकृतिसाध्यस्य करणत्वम् । तस्मात् धात्वर्थः विषयतया करणतया च अन्वीयते । इति ।

अत्र पार्थसारथिमिश्राः ( शा. ६७–६८ ) । विषयभूतेन हि कथं करणवाचिना नामधेयाना सामानाधिकरण्यम् । आर्थिकेन करणत्वेन सामानाधिकरण्यमिति चेत्, साध्यत्वमपि तर्हि आर्थिकमस्ति इति गुणविधिरपि विनैव मत्वर्थलक्षणया, विना च वैरूप्येण स्यात् इति समस्तमेव नामधेयप्रतिपादनं अनुपपन्नं स्यात् । अथ विषयत्वद्वारेण करणत्वपर एव शब्दः, ततः अन्यपरेण शास्त्रेण उपायमात्रत्वेनोपात्तं विषयत्वं न शास्त्रार्थः स्यात्, अतत्परत्वात् । अथ शब्द एव प्रथमं विषयतया अभिधाय पुनः करणतयाऽपि अभिधत्ते, कथं सकृदुच्चरितो द्विरभिदध्यात्, अभिधाने वा साध्यत्वमपि पुनरभिदधीत । नहि नियामकमस्ति द्विरेवाभिधत्ते न त्रिरिति । 'सकृत् प्रवृत्तायाः किमवगुण्ठनेन' इति न्यायात् । अतः करणत्वेनैवान्वयो धात्वर्थः, न विषयत्वेन इत्यास्तां तावत् । तस्मात् विषयत्वस्य शाब्दत्वे करणार्थकतृतीयान्तनामधेयसामानाधिकरण्यानुपपत्तेः तन्निर्वाहाय करणत्वमेव शाब्दम् । मीम. १।४।४ पृ. ६७–६८. ❋ धात्वर्थस्य सर्वत्र क्रियात्वम् । मणि. पृ. १६७. ❋ धात्वर्थस्य सर्वत्र भावनायां प्रकारता । अस्य सिद्धिः 'आख्यातार्थः' इति विन्दौ भाट्टरहस्यविभागे द्रष्टव्या । के. ❋ धात्वर्थानां नामधेयत्वेन अवस्थितानि सामानाधिकरण्येन यदि नामधेयानि, न भावनायाः । वा. २।१।१।२४ पृ. ५१५.

❋ धात्वर्थे पुनः स विधातव्यः संबन्धी इत्यनेन न्यायेन क्रियाङ्गत्वसिद्ध्यर्थं विशेषणस्यापि विधाने वाक्यभेदः । ( संबन्धो हि विधीयमानः संबन्धिनं तावदाक्षिपेत् धात्वर्थे पुनः स विधातव्य एव संबन्धी, अन्यथा संबन्धस्यैव संबन्धी शेषः स्यात् न क्रियायाः' वा. २।१।५।१६ पृ. ५०२ ) । सु. पृ. ७४१.

❋ धात्वर्थानवच्छिन्नभावनायाः धर्मान्वयः पंचमेऽधिकरणे निराकरिष्यते । सु. पृ. १२१६.

इत्यादिप्रयोगोऽपि विवक्षया संगच्छते । अतः सर्वोऽपि व्यापारो धात्वर्थः । आख्यातार्थस्तु यगादिविकरणस्थले कर्म शबादिविकरणस्थले च कर्ता । अकर्मकधातुत्तरयगादिविकरणस्थले च भावरूपो धात्वर्थ एव, 'लः कर्मणि' (पा० ३।४।६९) इत्याद्यनुशासनात् । कर्त्रादि च धात्वर्थं प्रति योग्यतावच्छेदेन गुणत्वम् । 'भावप्रधानमाख्यातम्' इति स्मृत्या (निरुक्तम्) भावपदवाच्यधात्वर्थस्य आख्यातार्थं प्रति प्राधान्योक्तेः । प्रत्ययार्थप्राधान्यस्मृतिस्तु सुबादिविषया इति वैयाकरणाः । तदपि न । फूत्कारत्वादेः 'पचति' इत्यतः अप्रतीतेः, अप्रामाणिकस्य शक्यताऽवच्छेदकत्वायोगात् । फूत्कारादिकं विनाऽपि चैत्रनिष्ठक्रियान्तरमादाय स्वत:सिद्धतण्डुले आवमाने ओदने 'चैत्रः पचति' इति प्रयोगाच्च । तत्तद्व्यापारस्य सत्त्वेन तावत्सु अनुभवे 'पाकः इत्थं भवति ना' इति वादिविप्रतिपत्त्यनुपपत्तेश्च । अतः अनुभूयमानं पाकव्यापारव्यक्तिकमेव तत्तत्फलोपधायकत्वात् व्यापारत्वव्याप्योपाधिरूपसामान्य पचादिपदशक्यताऽवच्छेदकम् । तत्पक्षे 'पाकः पाकः' इत्याद्यनुगतप्रतीतिः प्रमाणम् । फलोपधायकताऽवच्छेदकतया तत्सिद्धिः । फलोपधायकव्यापारादेः प्रमाणान्तरतो बोधः, न तु शाब्दबोधः । अत एव पाकस्यापि न द्वितीयदा बोधः । खण्डोपाधिरूपधर्मत्वस्यैव तदर्थतया आपाविधेयमाणत्वात् । शक्यताऽवच्छेदकं च तत्तदनुगमम् । पाकत्वादिकं च विक्लित्तिजनकव्यापारवृत्त्येव, न ▮ तत्पत्नादिवृत्त्यपि । 'पाकं करोति' इत्यादिना यत्नादेः पाकात् पृथक् विधीयमानत्वात् । न च यत्नादिसमभिव्याहृतपातो, फले एव शक्तिकल्पनात् पृथक् विधानोपपत्तिः, अनेकशक्तिकल्पने व्यापारविशेषकशक्तिप्रतिबन्धकल्पने वा गौरवात् । 'आसो गमनवान्' इति प्रतीत्यर्थविशेष्यत्वेन व्यापारप्रतीतेरपि आवश्यकत्वाच्च । अत एव विक्लित्तिजनकव्यापारसमूह एव पाकपदार्थः, न तु तज्जनकयत्नादिरपि, तस्य पृथक् विधीयमानत्वेन पच्यर्थत्वाभावात् । अत एव 'देश.संयोगमात्रं पच्यर्थः, न तु विक्लित्त्यनुकूलव्यापारसामान्यम्' इत्यपि अयुक्तम् । अभिसंयोगानुकूलत्वाभावस्यापि भक्तविक्लित्त्यनुकूलव्यापारकर्तरि 'पचति' इति प्रयोगात् । अत एव पाकात् पृथक् विधीयमानयत्नादेः साध्यमानस्य भावकत्वजिज्ञासया पारिशेष्यात् आख्यातार्थत्वमेव । तस्मिंश्च पाकादेः प्रकारत्वं प्रकृत्यर्थत्वादेव । एवं च प्रत्ययार्थप्राधान्यस्मृतिरपि न संकोचिता भवति । रहस्य. पृ. ४७–४९.

• धात्वर्थविधानं क्रिया यावत् स्वपदेनोपात्तत्वात् भौतम् । शा. २।१।३।४ पृ. ५९३.

• धात्वर्थविशेषादिना भावना इतिकर्तव्यता न शक्नोति ग्रहीतुम् । शा. ३।६।१८।४३ पृ. १०६९.

• 'धात्वर्थव्यतिरेकेण यद्यर्थेना (भावना) न लक्ष्यते । तथापि सर्वसामान्यरूपेणेऽवगम्यते ।।' सर्वत्र हि अधिश्रयणादौ 'करोति' इत्यपि सामान्यव्यापारागः प्रतीयते । शा. २।१।१।१ पृ. ३८२.

• धात्वर्थसत्ताविधानेन उपसर्गार्थसत्ताविधानं बाध्यते । प्रथमेन हि श्रुत्या धात्वर्थस्य सत्ता उच्यते, विप्रकृष्टा उपसर्गार्थस्य सत्ता अर्थविप्रकर्षात् दुर्बला भवति । शा. १०।८।६।९.

• धात्वर्थसामान्यं भावना इत्येतदपप्रम्, तस्य श्यामार्था सामान्यम्, न तु गोत्वादिरूपेण । शा. २।१।१।१ पृ. ३८३.

• धात्वादीनां भावाभिधाना स्वरूपमात्राभिधायित्वं इत्यभिहितान्वयवादः । प्रत्यये अन्विताभिधानम् । वस्तुतस्तु अन्विताभिधान क्वापि नास्ति । बाल.

• धात्वादिगुणिलक्षणः वाक्यभेदः । बाल. पृ. १८१.

• धातूपसर्गयोरर्थे अभिधानसामर्थ्यमन्यत्राप्य विद्यते । टुप्. ७।२।१८।२६.

• धातुप्रत्यययोः सहप्रयोगनियमेऽपि अर्थभेदात् विध्यनुवादविभागोपपत्तिः । सु. पृ. ७७६.

• 'धातुलक्षितयत्नत्वादेः भावनायां प्रकारता' इति मतम् । यत्नत्वादिसंसर्गेण धात्वर्थस्यैव भावनायां प्रकारता इति च मतान्तरम् । मुरारि. (मा.) पृ. १४५०.

• धातुवाच्यत्वमात्रात् क्रियात्वासिद्धिः । 'वदि वन्दनैकदेशे', 'शकि शङ्कायाम्', 'लिशि अवयवे' इत्यादौ अक्रियायामपि धातुसूत्रे: गण्यादिशब्दाच्च क्रियाऽनव-

गतेः । तथापि प्रायेण धातुना क्रियावाचित्वम् । सु. पृ. ८६२.

* धातुसामानाधिकरण्यं विना नामधेयत्वायोगः । सु. पृ. २९६.

* धातुसाम्यार्थं ( भक्षणेषु दानेषु च ) लौकिकं सोमपानम् । भा. ३।४।१२।३२ । वमनार्थेव हि त पिबन्ति ( तेन धातुवैषम्यनिवृत्तिः ) । ३३.

* धानाभिर्हारियोजन श्रीणाति ज्योतिष्टोमे । आसु धानासु प्रदेयधर्मा न कार्याः । भा. ३।४।१२।४९–५०. * धानानां सवनीयपुरोडाशेषु निघमानानमेव आश्विन पात्रे निधानं ज्योतिष्टोमे, न तु निधानार्थमपूर्वधानासंपादनम् । के. ३।८।१८।३१, वि. ३।८।१९. * धानासु अवघातस्य न बाधः इति भाष्यमतेन, मन्ये पेषणस्य न बाधः इति वार्तिकमतेन । के. १०।१।३४।७५. * धानासु पूर्वं हविः कृत्वा पाकः कार्यः महापितृयज्ञे । तत्र हि हविः पाकार्थो भविष्यति, न धानार्थं विहन्तिष्यते । भा १०।२।२३।७४.

* धानाऽऽदिषु सवनीयेषु पुरोडाशशब्दो भाक्तः संनिहितेषु प्रयुक्तः ज्योतिष्टोमे । भा. ३।८।२२।४४.

§ धान्याधिकरणम् । शाक्यानामयने प्रकृतधान्यमसीतिमन्त्रगतधान्यपदस्य माषशब्देन ऊहः ॥

गुणशब्दस्तथेति चेत् । ९।१।१३।३८ धर्मके १ ॥

भाष्यम्—एवं वा । दर्शपूर्णमासयोरामनन्ति 'धान्यमसि धिनुहि देवान् इति हवि तण्डुलानावपति' इति । तत्र धान्यशब्द प्रति संशयः किं समवेतवचनो न वेति । किं प्राप्तम् ? योऽयं गुणशब्द लक्ष्यते धान्यशब्दः, नासौ समवेतवचनः स्यात् । धान्यशब्दो हि धान्यमभिवदति, न तु धान्यमेवोप्यते । तुषे हि धान्यशब्दो वर्तते । तण्डुलेष्वेव उप्यमानेषु धान्यप्रकाशनं क्रियते । तदसमवेतस्य प्रकाशने अदृष्टं यथा स्यादिति । तस्मात् निवृत्तिषु नोदितव्यमिति ।

न, समवायात् । ३९ ॥

भाष्यम्— नैतदेवम् । समवेतो हि धान्यशब्दार्थः । स हि तण्डुलेषु वर्तते तद्विकारत्वात् लक्षणया । यथा 'कार्तिकेषु शालयो भुज्यन्ते' 'गावः पीयन्ते' इति । श्रुत्युपादाने अदृष्टं कल्पयितव्यम्, इति लक्षणाशब्दः परिकल्प्यते । तस्मात् समवेतवचनः, विकारे चोदितव्य इति ।

प्रयोजनं अस्ति शाक्यानामयनं षट्त्रिंशत्संवत्सरम् । तत्रेदं समाम्नायते 'संस्थिते संस्थितेऽहनि गृहपतिर्मृगया याति, स तत्र यान् मृगान् हन्ति तेषां तरसाः सवनीयाः पुरोडाशा भवन्ति' इति । तत्र अविकारेण 'धान्यमसि धिनुहि देवान्' इति प्रयोगः कर्तव्यः यथा पूर्वः पक्षः । यथा सिद्धान्तः, ऊहः कर्तव्यः, 'मांसमसि धिनुहि देवान्' इति ।

टुप्— अत्र प्रयोजने चोद्यते । प्रकृतिशब्देन (धान्यशब्देन) विकारा. (तण्डुलाः) प्रकाशिताः प्रकृतौ लक्षणया, इहापि (शाक्यानामयने) चोदकः तथैव (लक्षणया प्रकृतिशब्देन मांसं) प्रापयति । तस्मात् मृगशब्देन मांसं प्रकाश्यं लक्षणया । नैतदेवम् । विकृतौ अर्थः चोदकेनातिदिश्यते । न शब्दो वाचकः इति अत्रैव (तृतीये पादे) वक्ष्यामः । स च अस्मदायत्ते प्रयोगे निमित्ति अवाचकेन प्रकाश्यते । प्रकृतौ (धान्यपदस्य) आम्नानसामर्थ्येन अवाचकेनापि शब्देन विकारप्रकाशनं कृतम् । तत्र (धान्यपद इव) अर्थात् निवृत्तम्, न चोदकः प्रापयति । न च वचनमस्ति प्रकृत्या विकारः प्रत्याय्य इति । तस्मात् मांसशब्दस्यैव प्रयोगः । (परमार्थतस्तु मांसस्य अधिवापो नास्त्येव) ।

सोम— इहे च मांसस्याप्यधिवापोऽस्ति इति कृत्वाचिन्तया उक्तम् । वस्तुतस्तु पेषणार्थस्याऽधिवापस्य मांसे च पेषणाभावात् तदर्थाधिवापः तन्मन्त्रश्च निवर्तते इति द्रष्टव्यम् ।

वि— 'नोद्यः ऊहोऽपत्र धान्यशब्दो, नाहतोक्षितः ।, ऊह्यो लक्षणयाऽर्थस्य योगस्यैव संगतेः ॥' 'गावः पीयन्ते' इत्यत्र गुरुयाच्यभावेऽपि नाममवेतार्थं लोका प्रयोजयन्ति, किन्तु (गोशब्देन) दुग्धं लक्षयित्वा अर्थं समवेतमेव प्रतियन्ति, तद्वत् ।

भाट्ट— एव वा । दर्शपूर्णमासयोः 'धान्यमसि धिनुहि देवान्' इति मन्त्रः श्रुतः । स च 'धान्यमसीति

ह्यपदि तण्डुलानविषयति ' इति वचनेन तण्डुलाविनापे विनियुक्तः । धान्यशब्दः सतुषद्रव्यवचनः तण्डुला-वस्थायां प्रयुज्यमानः धान्यत्वारोपेण प्रत्यर्यः सविशादिपद-वदेव असमवेतार्थः इति माषेऽपि तदारोपेण प्रयोक्तव्यः । इति प्राप्ते , ' शालयो भुज्यन्ते ' इति वत् प्रकृतिवाचक-पदप्रयोगात् प्रयुक्तलक्षणोपपत्तेः असिवद्याख्यितण्डुलरूप-कर्तृसमानाधिकरणतया लक्षणया धान्यशब्दः तण्डुलपरः सन् समवेतार्थक एव । ननु एवं समवेतार्थकत्वेऽपि माषेऽपि लक्षणयैव माषशब्दप्रयोगोपपत्तेः नोहप्रसक्तिः । धान्यपदस्यैव प्रकृतौ तण्डुलस्मारकत्वात् , विकृतौ माष-स्मारकत्व प्रोक्षणादिवत् कथञ्चित् तल्लक्षणाङ्गत्वेऽपि वा धान्यपदवाच्येन मांसपदप्रक्षेपरूपोहानापत्तिः । यथैव हि प्रकृतौ अग्निपदेन शक्त्या अपूर्वसाधनीभूता देवता प्रकाशयेत् इति लिङ्गकल्पितश्रुत्या मन्त्रविनि-योगात् , विकृतौ अग्निदेवत्यायां शक्त्या अग्निपदेनैव उक्तदेवताप्रकाशनोपपत्तेः न पदान्तरप्रक्षेपः । सत्या गत्यौ प्राकृतवृत्तितद्वत्पदयोः बाधे प्रमाणाभावात् । अपि तु अन्यदेवत्यायामेव सः । तत्र शक्त्या अग्निपदेन तत्प्रकाश-नानुपपत्तेः प्रकृतौ वृत्तिविषयाभावात् । विकृतौ च वृत्त्यन्तरस्वीकारे अन्यत्वेनैव अग्निपदरूपपदार्थप्राप्तेः न लक्षणया विना अग्निपदेन तत्प्रकाशनम् । अतस्तत्र प्राकृतशक्तिनिर्वाहार्थं सूर्यादिपदान्तरप्रक्षेप एव शरणम् । न तु अग्निदेवत्याया विकृतौ । तथैव धान्यपदेन लक्षणया प्रदेयप्रकृतिभूतं प्रकाशयेत् इति गौणसामर्थ्यकल्पित-श्रुत्या मन्त्रविनियोगात् विकृतावपि माषे उपकारप्रत्य-भावेन श्रुतेः तत्प्रत्यभावेन च धान्यपदस्य अतिदेशात् तद्वाचाय धान्यपदेनैव माषप्रकाशनोपपत्तेः न पदान्तर-प्रक्षेपः । इति चेत् । सत्यं प्राकृतप्रकाशनरूपोपकार-प्रत्यभावेन प्राकृतवृत्तिरूपव्यापारातिदेशः तत्प्रत्यभावेन च अन्यादिपदरूपपदार्थातिदेशः , इतरथा कृत्यनतिदेशे प्रकाशनप्रत्यभावेन अतिदिष्टस्य पदस्य विकृतौ लक्षणयाऽपि प्रकाशकत्वोपपत्तेः पदान्तरप्रक्षेपानापत्तिप्रसङ्गात् । तथापि प्राकृतपदनिष्ठप्राकृतवृत्तिरेव विकृतौ अतिदिश्यते , न तु वृत्तिमात्रम् , प्रमाणाभावात् । अत एव सौर्ये प्रकृत-पदस्यैव प्राकृतवृत्तेरपि बाधत्वेऽपि सूर्यप्रकाशनकार्यानु-रोधेनैव मन्त्रपदान्तरानुरोधात् सूर्यपदप्रक्षेपः । अतश्च धान्यप्रकृतित्वरूपलक्षणसंबन्धाभावात् प्राकृतलक्षणावृत्तेः माषे बाधे संबन्धान्तररूपलक्षणावृत्तिकल्पने प्रमाणाभावात् धान्यपदस्य बाधात्तदभावे मांसप्रकाशनरूपकार्यानुरोधेन मन्त्रपदान्तरानुरोधादेव माषपदप्रक्षेपः । अत एव न प्रकृतिवाच्यत्वमूलकपदप्रक्षेपोऽपि । तत्त्वपदप्रक्षेपसंभवे अप्राकृतलक्षणया पदान्तरप्रक्षेपस्य अन्याय्यत्वात् । अतः शाक्यानामयने ' वरसमयाः हवनीयाः पुरोडाशा भवन्ति ' इत्यत्र मन्त्रे अधिवापे क्रियमाणे ' मांसमसि ' इत्यूहि-तव्यम् ।

इदं च कृत्वाचिन्तया । तृतीये ( ३।८।२३ भाट्ट. ) हवनीयोद्देशेन हविष्ट्वेनैव तद्विधानस्य साधितत्वात् । तत्रापि वा प्रदेयप्रकृतित्वे अर्थलोपेन तत्र अविनाशस्य चरावेव साधितत्वाच्च । विस्तरेण चैतत् न्यायसुधा-कारमतनिरासपूर्वकं उपपादितं द्वितीये ' धर्ममात्रे तु कर्म स्यात् ' ( २।१।९ सू. ) इत्यत्र कौस्तुभे ।

मण्डन—' ऊहं व्रजेद्धान्यमसीति वाक्यम् ।' १४.

शंकर—' वर्तते धान्यशब्दवः ।' ऊहः । २१.

● धान्याधिकरणप्रयोजनभाष्ये तु हवनीयशब्द-घटितस्योदाहरणमनादृत्य इति परिहारसूचनार्थम् ' यथा ' इत्याद्युक्तम् । सु. पृ. ६३९.

धान्यपलालन्यायः । यथैतत् स्मृतम् ' शास्त्राण्यधीत्य मेधावी अभ्यस्य च पुनःपुनः । परमं ब्रह्म विज्ञाय उल्कावत् तान्यथोत्सृजेत् ॥ ग्रन्थमभ्यस्य मेधावी ज्ञानविज्ञानतत्परः । पलालमिव धान्यार्थी त्यजेद्-ग्रन्थमशेषतः ॥ ' इति पञ्चदश्यामुक्तम् । अयं न्यायः ' तस्यापत्यम् ' ( पा० ४।१।९२ ) इत्यादिसूत्रमहाभाष्ये-ऽप्यभिहितः । साहस्री. २४०, ● धान्यपलालन्यायः । यथा कश्चिद्धान्यार्थी शालिकलापं सतुषं सपलालमाहरति नान्तरीयकत्वात् , यावदादेयं तावदादाय तुषपलाला-न्युत्सृजति । महाभाष्ये ' तस्यापत्यम् ' इत्यत्र । भूतिः. पृ. २६८ परि. ७४.

● धान्यशब्दः सतुषे वर्तते । स हि तण्डुलेषु वर्तते तद्विकारत्वात् लक्षणया । यथा ' नारिकेषु शाल्यो भुज्यन्ते ' ' माषाः पीयन्ते ' इति । भा. ९।१।११।

३८-३९, * धाय्याशब्दस्य दर्शपूर्णमासाप्यपेक्षणमन्त्रगतस्य विकृतौ धाय्यान्तरापत्ते 'मांसमसि' इति ऊहः । ९।१।१२।३८-३९ वर्णकं १.

* 'धा'प्रत्ययः प्रकारवाची सन् एकवार इत्यर्थम्, बहूनां सहभावं वा ब्रूते । कृष्णलेषु 'एकधा ब्रह्मण उपहरति' इत्यत्र तु सहभावमेव ब्रूते । वि. १०।२।४.

* धाय्या नामाग्निशब्दवत्यः द्वे ऋचौ अतीते सौम्यारौद्रीयौ अनागते मनोर्ऋचः सामिधेनीषु धाय्या इत्युच्यन्ते । तथा 'पृथुपाजाः, तं सबाधः' इति द्वे धाय्ये सामिधेनीषु कल्प्येते । भा. ३।२।७।२० पृ. ७७२, * काः पुनरेता धाय्याः नाम ? नास्य शब्दस्य प्रसिद्धिमुपलभामहे । उच्यते, सामिधेन्यो धाय्याः । कुतः ? एवं हि भगवतः पाणिनेर्वचनम् 'पाय्यसान्नाय्यनिकाय्यधाय्यामानहविर्निवाससामिधेनीषु' इति । अस्माद्वचनात् श्रुतिमनुमिमीमहे । विशिष्टासु अपि (सामिधेनीषु) वचनमुपपद्यते एव । ५।३।३।५. * धाय्यानां समिध्यमानवतीसमिद्धवत्यन्तरालनिवेशः 'इयं वै समिध्यमानवती, असौ समिद्धवती, यदन्तरा तद्धाय्याः' इत्यर्थवादप्रामाण्याधीनः । तत्र 'समिध्यमानो अध्वरे' इति समिध्यमानवती, 'समिद्धो अग्ने' इति समिद्धवती । अधिकरणं दर्शपूर्णमासषट्के । के.

* धाय्याशब्दः सामिधेनीषु निपात्यमानः तास्वेवेत्यवधारणात् नान्यासु धीयमानास्वपि धाय्याशब्दवाच्यत्वं भजति । भा. ३।७।१७।३७.

* धाय्याशब्दिता एव ऋचः मध्ये स्युः, अन्यास्तु आनन्तर्याः अन्ते स्युः, शब्दसामर्थ्यात् । दर्शपूर्णमासयोः सामिधेनीविवृद्धौ पञ्चदशानामधिकानामृचामन्ते निवेशः । रत्न. ५।३।३।५-६. * धाय्याशब्दितानां ऋचां समिध्यमानवतीसमिद्धवत्यन्तरालनिधानस्य अपेक्षितविधित्वसिद्धये धाय्याशब्दस्य धीयमानवाचित्वनिपातनात् 'यत्पत्नं ने देवा यज्ञस्य छिद्र निरवानंस्तद् धाय्याभिरपिदधुः तद्धाय्यानां धाय्यात्वम्' इत्यर्थवादात् छिद्रपिधाननिमित्तधाय्याशब्दवत्त्वावगतेः पृथुपाजआदीनां सामिधेनीनामेव आवश्यकत्वनिमित्तधाय्यान्तरापत्त्यविरोधः । मु. ३।७ पृ. २८.

* धाय्यासमाख्यत्वं मनोर्ऋचाम् 'अग्निर्दूतं पुरोहितः' इत्यादीनाम् (ऋक्. ८।२७।१) 'पृथुपाजाः' इति द्वयोश्च (पृथुपाजाः, तं सबाधो) सामिधेनीषु प्रक्षेप्यानाम् । मु. पृ. १११९.

* धारणं प्रयाजशेषस्य तदर्थं च न कर्तव्ये सानपेक्ष्यापत्यज्ञेषु अग्निधारणार्थम् । वि. ४।१।१४.

धारणे च परार्थत्वात् ।९।४।७।२९॥

'धार्यो गतश्रिय आहवनीयः' इति पठ्यते । अयं धार्योऽग्निः यदा अनुगच्छति, तदा ज्योतिष्मतीष्टिः अनुगमनप्रायश्चित्तं कर्तव्यं न वा इति विचारे यथा पर्युक्षणं परिसमूहनं तृणापचयः इत्येवमादयः पदार्था धार्येऽग्नौ अहन्यहनि क्रियन्ते, तथा अनुगमने प्रायश्चित्तमपि क्रियेत इति प्राप्ते, उच्यते । धारणे अग्नेः कृते सति प्रायश्चित्तं न कर्तव्यम् । चकारेण 'प्रायश्चित्तं न विद्यते' इत्यनुकृष्यते । कुतो न कर्तव्यम् ? परार्थत्वात् । नहि तदा अग्निहोत्रार्थमुद्धरणं यस्मिन् काले अनुगच्छतो गतश्रीः । तत्र अन्यार्थमुद्धृतोऽग्निः सर्वार्थे धार्यते । न च धारणे अग्निहोत्रार्थे अनुगमने प्रायश्चित्तं विहितम् । तस्मान्नेदं प्रायश्चित्तम् । 'एषो वै गतश्रीः शुश्रुवान् ग्रामणी राजन्यः' इति गतश्रीपदस्यार्थः उक्तः । प्राप्तश्रीः गतश्रीः ।

क्रियार्थत्वादितरेषु कर्म स्यात् । ३० ॥

'आहितमाहवनीयमुत्सृजति अपराह्णापराह्णेऽग्निं प्रणयति, नित्यो गतश्रियो धार्य आहवनीयः' इत्याम्नातम् । अत्र पूर्वपक्षिणा यदुक्तम् 'पर्युक्षणपरिसमूहनादिवत् होमात् प्रागग्नेर्धार्यस्य अनुगमने प्रायश्चित्तं कर्तव्यमिति' तत्राह सिद्धान्ती । इतरेषु प्रायश्चित्तादितरेषु पर्युक्षणादिषु क्रियार्थत्वात् संस्कारार्थत्वात् कर्म अनुष्ठानं स्यात् । इति प्रायश्चित्तस्य पर्युक्षणादिभ्यो वैलक्षण्यम् । तस्मात् धार्येऽग्नौ अनुगते ज्योतिष्मतीष्टिर्न कर्तव्या इति सिद्धान्तः । के.

* धारणार्थमग्न्यन्वाधानं दार्शपौर्णमासिकं सौमिकेषु पैष्टिकेषु न कर्तव्यम् । सौमिकेन प्रयुक्तत्वात् । के. १२।१।१२।२४-२८.

■ धारणार्थत्वात् सोमेऽग्न्यन्वाधानं न विद्यते। १२।१।१०।१९ ॥

सोमे दीक्षणीयाऽऽदिषु ऐष्टिकेषु कर्मसु चोदक्यासं अग्न्यन्वाधानं न विद्यते, न कर्तव्यम्। धारणार्थत्वात्, विहृतस्य अग्नेः धारणार्थं तत्। सोमार्थेन च विहृतस्य तत् कृतम्। न च धृतस्य धारणम्। तस्मात् दीक्षणीया-ऽऽदिषु अग्न्यन्वाधानं नास्ति इति सिद्धान्तः। के.

● 'धारयेद्वैणवं दण्डं शुभे रौक्मे च कुण्डले। न जीर्णमलवद्वासा भवेच्च विभवे सति॥' इति स्नातक-व्रतम्। मु. पृ. १४७७.

● धाराग्रहाः ऐन्द्रवायवमैत्रावरुणादयो ज्योतिष्टोमे। 'धारया गृह्णाति'। वि. १०।१।१७. ● धाराग्रहेभ्यः पूर्वे अंशुग्रहः। (प्रकरणानामयो प्रादनं कृत्वा ततः दधि- अंशु- अदाभ्य- उपांशु- अन्तर्यामाः नाम ग्रहा गृह्यन्ते। तदनन्तरं धाराग्रहाः ऐन्द्रवायवादयो गृह्यन्ते)। भा. ५।३।६।१५-१६. ● धाराग्रहाणामेव काम-संयोगः। इदंकामः एतं ग्रहं गृह्णीयात् इति। वि. १०।५।१८.

● धारावाहिकेषु ये कालातिरेकेण प्रामाण्यमाहुः ते निराकृताः। क्षणभेदस्य अवेद्यत्वात्। येऽपि तत्र तदाद्य-दर्शनमेव प्रमाणमिति बौद्धा आहुः, तेऽपि सर्वथा तुल्यत्वेन निराकृताः। ऋजु. पृ. ८०.

● धारावाहिकज्ञानस्य गृहीतविषयकस्य कथं प्रामा-ण्यम्, कालस्य षडिन्द्रियवेद्यत्वेन पूर्वक्षणविशिष्टघटस्य विषयीकरणेन तादृशस्य उत्तरज्ञानाविषयतया अनधि-गतार्थविषयकत्वात्। मणि. पृ. १३.

● धार्मिकः। यो यागमनुतिष्ठति तं धार्मिक इति समाचक्षते। भा. १।१।२।२ पृ. १७-१८.

● धार्यो गार्हपत्य. (ग्रामणी. राजन्यस्य गार्हपत्यश्च) आहवनीयः। अत्र ग्रामणीराजन्ययोरेव आहवनीय-धारणविधानम्। संकर्ष. ३।२।५. ● धार्येऽग्नौ परिसमूहनं पर्युक्षणं तृणापचयः इत्येवमादयः पदार्थाः अहन्यहनि क्रियन्ते। चोदितानि हि तानि संस्कारार्थत्वेन, शक्यानि च, अकृतप्रयोजनानि च। अनुगमने तु ज्योति-ष्मतीष्टिः प्रायश्चित्तं न कर्तव्यम्। (अधिकरणं अग्नि-चयनप्रघट्टके द्रष्टव्यम्।) भा. ११।४।७।१९-२०.

● धावनं दन्तानां ज्योतिष्टोमे संस्कारः न फलश्रुतः। तत्र फलश्रुतिरर्थवादः। तच्च क्रत्वर्थं याजमानम्। के. ४।३।१।१-२.

● धिष्ण्यानां अग्नीनां विहरणं आग्नीध्रीयादेव, न औपासनवेदिकात्। संकर्ष. ३।२।१५. ● धिष्ण्यानां पणानामग्नीनां यजमाने अग्निष्टोमसमकाले चेति चतुर्णां विहरणात् चतुर्विंशतिर्धिष्ण्याग्नयः। ३।२।१६.

● धिष्ण्यव्यापारणसंपातेन आज्येन पत्नीसंयाजं श्रीणाति। संकर्ष. ३।२।२०.

● धिष्ण्याग्निव्यापारणं परिस्तरणेन। संकर्ष. ३।२।१९.

● धुरिसामानि नाम 'गीतिविकारो गायत्रस्य धुरः' इति वचनात् गायत्रविकारात्मकानि धूर्गानशब्देनोच्यन्ते। सोम. १०।१।३.

● धूर्गानं एकत्रिके नाम यागे 'आद्युर्यं धूर्षु स्तुवते' इत्यादिना विहितम्। तच्चैकस्यामृचि, न तृचे। वि. १०।५।३.

● धूर्नामसामानि गायत्रगानविशेषात्मकानि सामानि। कु. १०।५।३।१०.

● धूमो बुद्धिविषयतामापन्नः अग्नेर्लिङ्गम्, न विद्य-मानः। भा. ८।१।१७।३३. ● 'यादृशस्य हि धूमस्य गमकत्वावधारणा। न तादृक् बहुरूपो वा वह्निं गमयति ध्रुवम्॥' वा. १।३।४।११ पृ. ८१६.

● धूमादिव्यवहारे हि सामान्येन उपाधिना अविशिष्टत्वात् अग्निव्यक्तिमेव गमयति। ऋजु. पृ. २३५.

▣ धूल्यन्धकारधूमाभ्रविमुक्तगगनमिति न्यायः। अथ वस्तुनः अतिशुद्धत्वविवक्षायामवतरति। यथा चोक्तम् 'निर्विकारं परं ब्रह्म निर्धूताखिलकल्मषम्। धूल्यन्धकारधूमाभ्रविमुक्तगगनोपमम्॥' इति। माहुली. ६११.

● धृतराष्ट्रस्य अन्धस्य इज्या पाण्डुवर्जितैर्धनैः इति अनधिकृतक्रिया (धर्मव्यतिक्रमः)। वा. १।३।३।७

पृ. २०४ । अत्र सुधा पृ. १८५–८६ । धृतराष्ट्रस्य अन्धत्वेन अनधिकृतस्य यागकरणात् धर्मव्यतिक्रमः । अन्धस्य निरंशत्वेन धनाभावात् यागार्थमन्यायागतस्य 'तस्य वीरस्य विक्रान्तैः सहस्रशतदक्षिणैः । अश्वमेधशतैरीजे धृतराष्ट्रो महामखैः ॥' इति दर्शनात् पाण्डवार्जितैः धनैः इत्युक्तम् । 'सुहृद्भ्यश्चापि धर्मात्मा धनेन समतर्पयत्' इति च पाण्डुना धृतराष्ट्रादिभ्यः स्वार्जितधनसमर्पणात् नापहारः शङ्कनीयः । पाण्डवार्जितधनोपजीवनं ज्येष्ठस्य धृतराष्ट्रस्य अनुचितं इति न्यतिक्रमान्तरं वार्तिकेनोक्तम् ।

वार्तिकम्— धृतराष्ट्रोऽपि व्यासानुग्रहात् आश्चर्यपर्वणि पुत्रदर्शनवत् क्रतुकालेऽपि दृष्टवानेव । शापानुग्रहसमर्था महर्षयः श्रूयन्ते । तत् यथैव तद्वचनात् अस्मौ अन्धो जातो विज्ञायते, तथा यज्ञानुज्ञानवचनात् तावति काले दृष्टवान् इत्यर्थापत्त्या सुज्ञानम् । यद्वा 'यज देवपूजासंगतिकरणदानेषु' इति दानार्थं एवाय यजिर्भविष्यति, क्रतुफलसमानि च दानतपश्चरणादीन्यपि श्रूयन्ते, तत्कारणात् क्रतुक्रियोपचारः । पृ. २०८–०९.

* धृतिः । पादेषु अक्षराणि १२।१२।८।८।८।१६।८ उदा० 'अवर्मह इन्द्र०' ( ऋसं. १।१३३।६ ) । कै

* धृतिमन्त्रेषु 'इह धृतिः स्वाहा, इह विधृतिः स्वाहा' इत्यादिषु धृत्यादिशब्दानां चतुर्थ्यन्तपाठो न कर्तव्यः किन्तु यथासमाम्नातं प्रयोगः । संकर्ष. २।४।२१.

* धेनुः एका कृत्स्नस्य क्रतुदाक्षिण्यस्य कार्ये भवति भूर्नामके यागे । स च यागः 'अथैष भूर्वैश्वदेवः, त्रिवृदेव सर्वः, तस्य विश्वस्तः ( विश्वशब्दघटिताः ) स्तोत्रीयाः, धेनुर्दक्षिणा' इति विहितः । कै. १०।६।१४।५६–५८.

* धेनुर्दक्षिणा । 'गौश्चाश्वश्चाश्वतरश्च गर्दभश्चाजाश्चावयश्च व्रीहयश्च यवाश्च तिलाश्च माषाश्च तस्य ( अग्निष्टोमस्य ) द्वादशशतं दक्षिणा' इति वाक्ये चशब्देन इतरेतरयोगस्य गवादिशब्दस्य दक्षिणाशब्दान्वयावगमात् समुदितानां गवादीनां एकदक्षिणात्वावगतेः 'धेनुर्दक्षिणा' इति विकृतौ ( भूनामके यागे ) विहिताया धेनोः समस्तदक्षिणाविकारत्वं दशमे ( १०।३।१४।५६–५८ ) वक्ष्यते । सु. पृ. ७८६.

* धेन्वादयः शब्दाः उभयोः ( गौः धयन्ती चेति ) असाधारणवचना एव । गोणादय इव अनपेक्ष्य च पदान्तरं एते पदावस्थायामेव असाधारणमर्थं प्रतिपादयन्ति । केचित् पदान्तरमपेक्ष्य साधारणं प्रतिपादयन्ति । यथा शुक्लः पट इति । टुप्. १०।१।२९।६८.

☐ धेनुकिशोरन्यायः । 'यथा धेनुः किशोरेण' । तद्यथा, कृष्णकिशोरा धेनुः इति । यद्यपि धेनुशब्दो गोधेन्वा दृष्टप्रवृत्तिः, तथापि अभिधानसामान्यात् अश्वधेन्वामपि गामी इति किशोरेण लिङ्गेन अश्वधेनुर्विज्ञायते । भागित्वात्तु नियम्येत 'गुणानामभिधानत्वात् संबन्धादभिधानवद् यथा धेनुः किशोरेण' । भा. ७।४।२।७.

☐ धेनुन्यायः । भूसंज्ञकैकाहे औपदेशिकधेनुदक्षिणया आतिदेशिककृत्स्नक्रतुदक्षिणायाः बाधः ॥

तस्य धेनुरिति गवाम्, प्रकृतौ विभक्तं चोदितत्वात्, तत्सामान्यात् तद्विकारः स्यात्, यथेष्टिर्गुणशब्देन ॥ १०।३।१४।५६ ॥

भाष्यम्— इदमामनन्ति 'अथैष भूर्वैश्वदेवः, त्रिवृदेव सर्वः, तस्य विश्वस्तः स्तोत्रीयाः, धेनुर्दक्षिणा' इति । ( अत्र सत्याषाढः– 'भूः उक्थ्यः रथंतरसामा, भूतिकामो यजेत, धेनुर्दक्षिणा' इति । १७।३।२४ । बृहस्पतिसवम् आश्वमिन्युक्तं आश्वलायनेन ९।५।१५ ) । अत्र संदेहः किं धेनुः गवां निवर्तिका, उत कृत्स्नायाः दक्षिणायाः इति । तत्र इदं तावत् परीक्ष्य किं प्रकृतौ विभक्तं दाक्षिण्यम्, उत समस्तमिति । ततः इदं तस्य संहत्य अधिकरणं क्रियते । किं प्रकृतौ विभक्तं दाक्षिण्यम्, धेनुर्गवां निवर्तिका, उत अविभक्तं कृत्स्नाया दक्षिणायाः निवर्तिकेति । किं प्राप्तम् ? 'तस्य धेनुः' इति श्रूयमाणे सम. ? धेनुर्गवां निवर्तिकेति । ततः एतत् तावत् विचार्यते प्रकृतौ विभक्तं दाक्षिण्यमिति । किमिदं विभक्तमिति ? गवादीनामेकैकं द्रव्यं दक्षिणेति । कथम् ? गौश्चाश्वश्चाश्वतरश्च दक्षिणा, इति प्रकृतौ गवादिभिर्दक्षिणाशब्दः प्रत्येकं परिसमाप्यते । निर्दिष्टा हि गवादयो न तेषां समुदायः । चशब्दः समुच्चयार्थो भवति, न तु समुच्चयस्य निर्देशकः । परपदविशेषणार्थं तु समुच्चयमुपादत्ते । यदि हि निर्दिशेत्, क्रियागुणैः समुच्चयः

एवध्येत । 'समुच्चयः शोभनः, समुच्चयो द्रष्टव्यः' इति यथा भवति एवम्, 'न शोभनः' 'च द्रष्टव्यः' इति वा भविष्यति ।

तथा, यथेह समुच्चेययोः षष्ठी भवति 'धवखदिरयोः समुच्चयः' इति, एवं धवः खदिरश्चेत्यत्राप्यभविष्यत् । न तु भवति । तस्माच्च चशब्दः समुच्चयं निर्दिशति । भूत्वा निर्दिष्टेन चैकस्यावयवत्वा स्यात्, न गवादिलक्षितेन समुच्चयेन । तस्मात् 'गौर्दक्षिणा, अश्वो दक्षिणा' इत्येवं संबन्धः । लक्षयित्वा हि गवादीन् तेषां दक्षिणात्वं विधीयते । तत्र गुणभूतं प्रतिप्रधान मिद्येत । चशब्दश्चैव समर्पितो भविष्यति, 'गौर्दक्षिणा, अश्वश्च दक्षिणा' इति । न गोरश्वादिविशिष्टो गवादीना वा समाहार इति ।

यदा विभक्त दाक्षिण्यम्, तदा प्राप्ता गोर्दक्षिण्ये । पुनर्विशेषार्थमुच्चार्यते 'धेनुर्दक्षिणा' इति । याऽसौ गौर्दक्षिणा सा धेनुरिति । अन्यास्त दक्षिणानामविकारेण यथाप्रकृतिभावेन चोदकानुग्रहो भविष्यति । शब्देनैव गव्येव गुण उच्यते, धेनुत्वं नाम । गौरेव हि धेनुर्नान्या । धर्मैर्हि गुणभावेन । गौर्यं निर्वपेदिति सूर्यसम्बन्धं कुर्यात् द्रव्यस्येति विवक्षिते निर्वपणाश्रयः एव प्रयोगः शब्देन निर्दिश्यते इति, तन्निर्देशनवशात् प्रयोगादनेन निर्वपण-शब्देन ऐष्टिको विधिरन्यो निवर्त्यते । एवमिहापि गोर्गुण-वचनेन धेनुशब्देन गोदक्षिणाविकारः क्रियते, नान्या दक्षिणा विक्रियते इति ।

टुप्—तस्य धेनुरिति ( सर्वे सूत्रम् )। ( वाक्यान्तर-वाक्यमङ्गीकृत्य चिन्त्यते यत्र गवादीनि द्रव्याणि [ इति ], 'तस्य द्वादशशतम्' इति न एकवाक्यभूत श्रूयते । भाष्योक्त संदेह दर्शयति— ) विकृतिसिद्ध्यर्थं प्रकृति तावन्निरूपयामः । यदि ( प्रकृतौ ) गवादयः प्रधानभूताः ( दक्षिणा प्रति ) ततः एकद्रव्यनिवर्तिका धेनुः ( एक-द्रव्यस्यैव निवर्तिका इति विग्रहः ) । अथ दक्षिणा ( प्रधानभूता ततः ) कृत्स्नस्य दाक्षिण्यस्य निवर्तिका ( धेनुः । पूर्वपक्षमाह— ) गवादयोऽत्र प्रधानभूताः । ( कुतः ? ) ते अत्र निर्दिश्यन्ते । दक्षिणा तान् प्रति ( एकैकमुद्दिश्य ) विधीयते । 'चशब्दः समुच्चयार्थो भवति, न तु समुच्चयस्य निर्देशकः' ( इति भाष्यस्य )

कोऽभिप्रायः ? ( केचिदाहुः प्रमाणान्तरसिद्धस्यार्थस्य अनुवादकोऽयं चशब्दः, न तु विधायक इति । अपरे पुनः द्योतकाः चादयः, न तु वाचकाः इति व्याचक्षते । तद्भ्रमापनोदनाय अर्थतत्त्वं वक्तुमाह— ) शब्दास्तावत् द्विप्रकाराः, केचित् वाच्यम् ( अर्थम् ) स्वप्रधान-माहुः, गौणत्वेनत्वेन यथा 'वृक्षौ' इति वृक्षशब्दः स्वार्थवान् उच्चार्यते ( स्वप्रधानभूतार्थवानित्यर्थः ) केचित् ( तु वाच्यमर्थम् ) अन्योपसर्जनीभूतं ब्रुवते ( न प्रधान-भूतम् ) यथा अनेन 'वृक्षौ' इति द्विवचनं प्रातिपदिको-पसर्जनं स्वार्थं प्रवीति द्विवचनार्थे द्वित्वमेव अजहत् ( अजहदेव इत्यन्वयः ) । एवं चशब्दः समुच्चय-मुच्चन् ( नियमेन शब्दान्तरात् पर उच्चार्यमाणः ) परोप-सर्जनत्वेन प्रवीति, न स्वप्राधान्येन । तस्मात् परोप-सर्जन चशब्दः, सोऽपि क्रियागुणाभ्यां संबध्यते । प्रधाने कार्यसंप्रत्ययात् सिद्धं इति । ( 'इति अभिप्रायः भाष्यस्य' इति अनुकृष्टेन अभिप्रायपदेन इतिशब्दस्यान्वयः । किं तत् प्रधानमित्यत आह— ) ते च गवादयः । न चशब्दः समुच्चयस्य पर्यायवचनः । समुच्चयशब्दः ( हि ) समुच्चयं प्राधान्येन निर्दिशति, नान्यत्र गुणभावेन । ( तत्र दर्शितं भाष्ये । एवं स्वमतेन व्याख्याय परमतं दूषयति । तत्रापि अनुवादपक्षं उपेक्ष्य द्योतकत्वपक्षं दूषयति— ) वाचकः स्वार्थस्य चशब्दः, न द्योतकः । कथम् ? शब्दस्तावत् अदृष्टया शक्त्या अर्थमभिधत्ते । ( तेन ) स एव ( चशब्दः समुच्चयाभिधायी कल्पयितुम् ) न्याय्यः, एकशक्तिकल्प-नात् । ( अन्यथा शब्दान्तरस्य तदभिधायिना, चशब्दस्य च द्योतकत्व इति शक्तिद्वय स्यात् ) । अपि च वृक्षशब्दे उच्चरिते वृक्षार्थः एव मनसि विपरिवर्तते, नान्यत्सहितः प्राक् ( च— ) शब्दोच्चारणात् । उच्चरिते तु चशब्दे इतरेतरयोगः प्रतीयते । यस्य चोच्चारणात् योऽर्थः प्रतीयते, स तस्यार्थः । गवादीनामुद्दिश्यमानानां विशेषण-मविवक्षितम् । तस्मात् ( गवाश्वाधवरादीनाम् ) एकैकस्य दक्षिणया संबन्धः ।

सर्वस्य वा, ऋतुसंयोगादेकत्वाद् दक्षिणाऽर्थस्य, गुणानां चार्थैकत्वादर्थे, विकृतौ श्रुतिभूता स्यात्, तया समवायाद्धि कर्मभिः ॥ ५७ ॥

भाष्यम्— चशब्दः पक्षं व्यावर्तयति । सर्वस्य क्रतुदाक्षिण्यस्य निवर्तिका धेनुरिति प्रतिज्ञायते । ननु तद्वर्ण्यते समस्त दाक्षिण्यमिति । किमिदं समस्त दाक्षिण्यमिति ? न प्रतिद्रव्यं दक्षिणाशब्दः संबध्यते, गौर्दक्षिणा, अश्वो दक्षिणा, अश्वतरो दक्षिणा इति । कथं तर्हि ? गवादयो दक्षिणेति । नहि गवादीनुद्दिश्य दक्षिणासंबन्धो विधीयते, ये गवादयस्ते दक्षिणेति । तथाहि दक्षिणाशब्दो गवादीनां दक्षिणासंबन्धविधानार्थे यौगपद्येन अन्तर्णीतसंबन्धमभिवदन् बहुवचनान्तः स्यात्, गवादयो दक्षिणाः इति । यथा 'अग्नीषोमौ देवते' 'प्राणापानावभितुन्नमवताम्' इति । गुणवचनाना शब्दानामाश्रयतो लिङ्गवचनानि भवन्ति । कथं तर्हि ? दक्षिणामुद्दिश्य गवादयो विधीयन्ते । का दक्षिणा ? गवादय इति । दक्षिणा नाम दक्षतेरुत्साहकर्मणः । दक्षिणा उत्साहिका, इति । एकः स गुणः । स च प्राधान्येन विवक्षितः । तद्विशेषणत्वेन गवादयः । गुणवचनाना च शब्दानामाश्रयतो लिङ्गवचनानि भवन्ति, न द्रव्यवचनानामाश्रितगुणवशेन । यथा, 'विश्वे देवा देवता' इति । का पुनर्दक्षिणा ? गौश्चाश्वश्चाश्वतरश्चेति । दक्षिणाशब्दो दाने संबध्यते, ऋत्विग्भ्यो दक्षिणा ददातीति, न गवादयः । एको हि दक्षिणानामर्थः, ऋत्विजामानमनम् । सहृत्य आनताश्चे भवन्ति, भूय आनमनेन अर्थो नास्ति, गवादीनामपि गुणानामेकं कार्यं दक्षिणात्वम् । यदा समस्तं दाक्षिण्यम्, तदा विकृतौ श्रुति तस्मिन् प्राकृतेऽर्थे धेनुः श्रुतिभूता । सा च प्राकृत कार्यमभिनिर्वर्तयति । क्रतुसंयोगेन हि श्रूयते तस्य क्रतोर्धेनुर्दक्षिणा, इति । तस्मिन्निर्वृत्ते सर्वं चोदकप्राप्तमानुमानिकं निवर्तते । तथा समवायाद्धि कर्मभिर्ऋत्विजः संबध्यन्ते श्रुतिभूतया । अपि च चशब्दश्रुत्या सहदानं गोद्रव्यमिति प्रतीयते । दक्षिणासंबन्धोऽश्वस्य वाक्येन । श्रुतिश्च वाक्याद्बलीयसी । तस्मात् पूर्वं धेनोः, पश्चाद्दक्षिणासंबन्धः । इतरेतरयुक्ता दक्षिणात्वेन संबध्यन्ते गवादयोऽर्थाः । तस्मात् कृत्स्नस्य क्रतुदाक्षिण्यस्य निवर्तिका धेनुरिति ।

टुप्— सर्वस्य [illegible] क्रतुसंयोगादेकत्वं दक्षिणार्थगुणानां चार्थैकत्वादर्थे विकृतौ श्रुतिभूतं स्यात् तस्मात् समवायो हि कर्मभिः ॥ ( लिखितटुप्टीका पुस्तके एतादृशः सूत्रपाठः । किञ्चिदक्षरभेदेन एतादृश एव पाठः अनेकत्र दृश्यते । तथापि नासौ भाष्यानुसारी । टुप्टीकामूले तु नैव सूत्रं प्रायो व्याख्यायते । भाष्यानुसारी प-घ-पुस्तकानुसारी च पाठः प्रायोऽस्माभिः स्वीकृतः इति ज्ञेयम्— के. ) इतरेतरयुक्ताः ( गवादयः ) दक्षिणां प्रति विधीयन्ते । कुतः ? संख्यासामर्थ्यात् ( शब्दगतसंख्योपादानसामर्थ्यादित्यर्थः ) । यदि गवादीनुद्दिश्य दक्षिणा विधीयते ( तथा सति ) न संख्या दक्षिणां प्रति विधीयेत, वाक्यभेदप्रसङ्गात् ( दक्षिणाशब्दस्य विरुद्धत्रिकद्वयापत्तेश्च ) । यदि च गवादयः ( संख्यां प्रति ) प्रधानभूताः ( तथा सति 'तस्य' इत्यत्र ) तेषामिति बहुवचनं प्राप्नोति । किञ्च गवादीनां प्राधान्ये ( सति विधेः ) भेदकल्पना प्राप्नोति अन्यथाशेषभावात् ( शेषभावात् इति मुद्रिते ) गवादीनाम् । दक्षिणाप्राधान्ये ( तु ) नाहत्यम् ( कल्प्यम् ), 'ऋत्विग्भ्यो दक्षिणा ददाति' इति विहितत्वात् । अपि च गुणवचनोऽयम् ( दक्षिणाशब्दः ), [illegible] यदा द्रव्ये उपसर्जनीभूतः, तदा द्रव्यस्येव यत् लिङ्गसंख्यम्, तत् लभते । इह च बहूनि द्रव्याणि ( गवादीनि ) तस्मात् बहुवचनेन भवितव्यम् ( दक्षिणाः इति ) । यदा तु स्वप्राधान्येन विवक्षितो गुणः, तदा द्रव्यस्य यत् लिङ्गसंख्यम्, तन्न लभते । भवितव्यं च गुणस्यापि ( केनचित् ) वचनेन, तस्मात् ( प्रथम्यात् ) 'दक्षिणा' इति एकवचनं युक्तम् । ( तस्मात् कृत्स्ननिवर्तिका धेनुरिति ) ।

चोदनानामनाश्रयाल्लिङ्गेन नियमः स्यात् ॥ ५८ ॥

भाष्यम्— यदुक्तं यथेष्टिर्गुणशब्देनेति, अत्रोच्यते । आग्नेयोपांशुयाजाग्नीषोमीयानां प्राकृतानां सौर्यैन्द्रमप्राजापत्यानैन्द्रीनां चोदनानां न किञ्चिदेकं कार्यम्, यदेकवती चोदना आश्रयेत् । तत्र वक्ष्यते 'एकस्य कर्मणो वैकृतं कर्म निष्पन्नं गृह्णाति' इति । तत्र कस्य प्रहीष्यतीति संदेहे युक्तो लिङ्गेन नियमः । इह तु अपदिष्टो हेतुः । गवादीनामेकं कार्यं दक्षिणात्वम् । तस्मिंश्च धेनुः श्रुतिभूता चोदकप्राप्तम् निवर्तयितुमर्हतीति ।

सा— गवामेव निवर्तिका धेनुर्नाश्वादीनाम् । इति प्राप्ते, अभिधीयते । 'गवादीनां प्रधानत्वे दृष्टं

नास्ति प्रयोजनम् । ऋत्विगानमनार्था तु दक्षिणा मप्रयोजना ॥' तस्मात् समस्तगवादिनिवृत्तिः ।

सोम— वृत्ताधिकरणत्रयस्य करिष्यमाणबाधोपोद्घातत्वात् अध्यायसंगतिः, करिष्यमाणविचारस्य अवसरलक्षणा संगतिः । सूत्रार्थस्तु— तस्य धेनुरिति श्रुतधेनुः गवां निवर्तिका स्यात्, प्रकृतौ गवाश्वादीनां प्रत्येकमेव दक्षिणात्वस्य चोदितत्वात् । तथापि गोभिरेव सामान्यात्, यथा गुणशब्देन निर्वपत्यादिना सामान्यात् इष्टिः सौर्यादिः आग्नेयविकारः, तद्वदिति ।

वि— 'भूताभिन (यागे) धेनुर्भवेत्त गाः किंवा कृत्स्नदक्षिणाम् ।, वेश्या विरोधितत्वाद् गाः, दक्षिणैकत्वतोऽखिलाम् ॥'

भाट्ट— 'अथैष भूर्ते भवेत्' इत्यनेन विहिते भूर्तसके पक्षे 'धेनुर्दक्षिणा' इत्याम्नातम् । सा किं अश्वादीनां निवर्तिका न वेति चिन्तायाम्, यद्यपि न मूलोक्तरीत्या गवाद्युद्देशेन प्रकृतौ दक्षिणात्वस्य 'गौश्चाश्वश्च' इत्यनेन विहितत्वात् उद्देश्यविशेषणस्य साहित्यस्य अविवक्षितत्वेन प्रत्येकं गवादीनां दक्षिणात्वावगतेः धेनुर्गवांशेन स्थानापत्त्या निवर्तिकेति शङ्कितुं शक्यम्, गवादीनामप्राधान्येन उद्देश्यत्वायोगात्, अनेकोद्देशे वाक्यभेदाच्च, दक्षिणात्वस्य आनतिकरत्वातिरिक्तस्य दुर्वचनत्वेन आनतेः फलरूपतया विधेयत्वायोगाच्च । अत एव गवादिद्रव्यविशिष्ट गोत्वविशिष्टद्रव्यविशिष्ट च दानमेव दक्षिणापदवाच्यानतिजनकत्वेन विधीयते । निष्कदानस्य च 'ऋत्विग्भ्यो दक्षिणां ददाति' इत्यनेन ऋत्विगुद्देशेन विनियोगः । ऋत्विग्विशिष्टस्य वा तस्यानत्यर्थत्वेन विनियोगेनैव वा आनत्यर्थत्वस्य प्राप्ततया दानानुवादेन ऋत्विक्सम्बन्धविधिरित्यादि पूर्वमुक्तम् । तथापि 'गौश्चाश्वश्च' इत्यत्र गवादीनामानतिजनकत्वं प्रत्येकमेव, न तु व्यासज्य वृत्ति आग्नेयादिवत्, तथाकल्पने प्रमाणाभावात् । न च चशब्देन इतरेतरयोगप्रतीतेः परस्परसहितानां करणत्वावगतिः, तस्य समुच्चयप्रतिपादकत्वेनापि उपपत्तौ इतरेतरयोगाप्रतिपादकत्वात् । अतश्च योग्यतावलेन प्रत्येकमेव गवादीनां प्रकृतौ दक्षिणात्वम्, तेन दक्षिणोद्देशेन विधीयमानं विकृतौ धेनुत्वं विधेयसामर्थ्यानुसारात् गोद्वारेणैव निविशते इति नात्र कस्यापि बाधः । धेनुशब्दस्य गोमात्रवृत्तिगुणविशेषे गुणविशिष्टगव्येव वा शक्तिरस्य स्थापितत्वात् । इति प्राप्ते, न तावत् गोरनुवादेन धेनुत्वविधिः, एकप्रसरताभङ्गापत्तेः । नापि दक्षिणानुवादेन धेनुत्वविधिः, तथात्वे एकत्वस्यापि अप्राप्ततया विधेयत्वे वाक्यभेदापत्तेः । अतोऽवश्यं दक्षिणादानोद्देशेन धेनुत्वैकत्वविशिष्टं गोद्रव्यमेव विधेयम् । तच्च यद्यपि प्रकृतौ गवादीनां प्रत्येकं दक्षिणादानसाधनता, तथापि निष्कवत् धेनुसाधनतया प्रकृतसर्वसाधनताया बाधात् सर्वत्र बाधक भवेदेव । वस्तुतस्तु गवादिद्रव्याणां न प्रकृतौ प्रत्येकसाधनता, समुच्चयस्य 'अग्नये कृत्तिकाभ्यः पुरोडाशमष्टाकपालम्, माष्ट्र पात्नीवतम्' इत्यादिवदेकवाक्योपादानादेव सिद्धेः चशब्दवैयर्थ्यापातात् । अतश्च गवादीनां चशब्दबलेन इतरेतरयोगप्रतीतेर्व्यासज्यवृत्त्या एकसाधनताकत्वात् धेनुसाधनतया प्रकृतदक्षिणादानसाधनताबाधात् सर्वबाधनिवृत्तिः । एतेन साधनताभेदपक्षे गोदक्षिणासाधनतैव अतिदेशत. पूर्वप्रवृत्त्यङ्गीकारेण धेनुत्वादिविशिष्टा विधीयते इति मान्यता यत्र इत्यपास्तम्, अधनतायाः अप्येकत्वेन गोद्रव्येण द्रव्यान्तरनिवृत्तेरावश्यकत्वात् ।

मण्डन— 'धेनुः समस्तस्य निवर्तिका स्यात् ।'

शंकर— 'धेनुरेषा बाधिका स्यात् ।' गवां गवाश्वादीनामित्यर्थः ।

● उपहव्ये एकाहे 'अश्वः श्यावो (बो–भाष्ये) रुक्मललाटो दक्षिणा' इत्युक्तम् । तत्र दक्षिणाशब्दसंयोगात् धेनुन्यायेन कृत्स्नस्य क्रतुदाक्षिण्यस्य अश्वेन बाधः । नि. १०।३।१८.

♦ धेनुवद्वाश्वदक्षिणा, सब्राह्मण इति पुरुषापनयो यथा हिरण्यस्य । १०।३।१८।६५ ॥

उपहव्ये श्रूयते 'अनभ्यो यज्ञः अनिरुक्तस्तोमो बृहत्पृष्ठः अश्वः श्यावो रुक्मललाटो दक्षिणा' 'स ब्रह्मणे देय.' इति श्रूयते । किमयमश्वः प्राकृतदाक्षिण्यस्य निवर्तक., उत कृत्स्नस्य क्रतुदाक्षिण्यस्य इति विचारे कृत्स्नस्य निवर्तक. इति पूर्वाधिकरणसिद्धान्तन्यायेन उत्सूत्रे पूर्वपक्षे सिद्धान्तमाह । अश्वदक्षिणा ब्रह्मरूपा दक्षिणा कृत्स्नायाः प्राकृताः क्रतुदक्षिणाया निवर्तिका । धेनुवत् (१०।३।१४)

५६–५७ ) । 'स ब्रह्मणे देयः' इत्यनेन च पुरुषापनयः ब्रह्मभिन्नानां पञ्चदशानां ऋत्विक्पुरुषाणां अपनयः क्रियते । यथा हिरण्यस्य यथा शतकृष्णलचरौ शेषभक्षाणां हिरण्यभक्षाणाम् 'सर्वं ब्रह्मणे परिहरति' इत्युक्तम् ( १०।२।५।१९–२० ) तद्वत् ।

एके तु कर्तृसंयोगात् स्रग्वत्, तस्य लिङ्गविशेषेण । ६६ ॥

अनया अश्वदक्षिणया कृत्स्नक्रतुदक्षिणागता एके केचित् पदार्थाः ब्रह्मभागरूपा एव निवर्तेरन् न कृत्स्नक्रतुदक्षिणाया निवृत्तिः । कर्तृसंयोगात् धर्मकर्तुः ब्रह्मणः संबन्धात् । 'स ब्रह्मणे देयः' इति वाक्येन ब्रह्मसंबन्धज्ञानात् । एवं तस्य अश्वस्य कर्तृसंयोगात् लिङ्गविशेषेण धर्मकर्तृब्रह्मसंबन्धरूपविशेषलिङ्गेन एके केचित् पदार्था ब्रह्मभागरूपा एव निवर्तन्ते । स्रग्वत् । यथा दशपेये 'स्रजमुद्गात्रे' इत्युद्गातृभागस्यैव निवर्तिका स्रक्, न कृत्स्नायाः क्रतुदक्षिणायाः तद्वत् । इति पूर्वः पक्षः । तुशब्दः सिद्धान्तपक्षव्यावर्तकः ।

अपि वा तदधिकाराद्धिरण्यवद्विकारः स्यात् । ६७ ॥

पूर्वपक्षस्य सूत्रस्थस्य व्यावृत्त्यर्थः अपिवाशब्दः । अयं स्याद्वोऽश्वः हिरण्यवत् शतकृष्णलचरौ यथा भक्षविषयहिरण्यशब्दश्रवणेन इतरेषां भक्षाणामपि ऋत्विजां व्यावृत्तिः तथा विकारः स्यात् कृत्स्नक्रतुदक्षिणाया बाधकः स्यात् । तदधिकारात् दक्षिणाऽधिकारात् । दक्षिणाशब्देन दक्षिणामधिकृत्य अश्वसंबन्धः कृतः । तस्मात् कृत्स्नक्रतुदक्षिणाविकारः अश्व इति सिद्धान्तः । के.

धेनुवत्सर्षभाधिकरणम् । द्यावापृथिव्यादौ धेन्वादिशब्दोपदिष्टगोद्रव्येण प्राकृतागद्रव्यस्य बाधः ॥

औत्पत्तिके तु द्रव्यतो विकारः स्यादकार्यत्वात् । १०।२।२९।६९ ॥

भाष्यम्— कश्चित् श्रूयते ( पशुविकृतौ ) 'द्यावापृथिव्यां धेनुमालभेत, मारुतं वत्सम्, ऐन्द्रमृषभम्' इति । तदत्र संशयः, किमजाः धेनुवत्सर्षभाः, उत गाव इति । किं प्राप्तम् ? चोदकानुग्रहाय अजा इति । गुणनिमित्तास्ते शब्दाः । स गुणः चोदकेन प्राप्ते प्राकृते द्रव्ये आवेशयितव्यः । ननु गवि गुणशब्दाः एते शब्दाः । सत्यं गवि व्याहुः, न तु गोरन्यं प्रत्यक्षेण वचनेन चोदकेन वा । स एष गुणवचनो यद्यपि श्रुत्या गोऽधिष्ठानं गुणं वदति, वाक्येन आलम्भद्रव्यं आस्कन्दति, तथापि गोद्रव्यस्य अभावात् आलम्भनिवाक्यमेव गृह्यते न श्रुतिः । अपिच धानयोगवचना एते शब्दाः । गुणाश्च अमूर्तत्वात् न क्रियया संबध्यन्ते । द्रव्येण एषां संबन्धो भवति । चोदकप्राप्तं च द्रव्यम् । तेनैषां सामानाधिकरण्यम् । यथा 'अवी द्वे धेनू ददाति' 'तस्य पुरुषी धेनुर्दक्षिणा' । तथा 'अवर्षभस्याजिनमवस्तृणाति' इति । धानयोगवचनः शब्दः तदेकवाक्यतयानेनैव द्रव्येण संबध्यते । एवमिहापि चोदकप्राप्तेन द्रव्येण संभन्त्स्यते इति । तस्मात् अजाः धेनुवत्सर्षभाः इति । एवं प्राप्ते, ब्रूमः । औत्पत्तिके एतस्मिन् उपदेशेन जातिविशिष्टे गुणशब्दे द्रव्यतो विकारः स्यात् । द्रव्यमपि विकुर्यात्, न गुणमात्रम् । यदेतत् जातिविशिष्टं धानं वयश्च, न तत् अजापशुषु शक्यं कर्तुम्, गोपशुष्वेव तत् भवति । ननु अत्र यद्यपि स्यात् अशक्यमावेशयितुम्, तदावेशयिष्यते, यत्र शक्यम्, तत् प्रमादिष्यते यथा अजा धेनुवत्सर्षभा इति । उच्यते । विस्पष्टमत्र अजाशब्देन धेन्वादीनामेकवाक्यता । इदं चोदकेन अजद्रव्यम् । चोदकश्च विरोधे सति नाजद्रव्यं प्रापयति । न च धेन्वादीनां द्रव्येण संबन्धः । कारकविभक्तिरेषां न लम्भेन संबन्धं करोति, गवि सा च श्रुतिः । द्रव्यसंबन्धो वाक्येन स्यात्, तच्च दुर्बलं श्रुतेः । तस्मिंश्च जातिविशिष्टे गुणे आलम्भसंयुक्ते सति न शक्यं अजाद्रव्येण भवितुम् । न च चोदकापेक्षया प्रत्यक्षा जातिः उत्स्रष्टुं शक्यते । तस्मात् गावो धेन्वादयो भविष्यन्तीति ।

टुप्— औत्पत्तिके तु० ॥ धेन्वादयः शब्दाः उभयोः ( अपि अजादिगोः गवादीनाम् ) असाधारणवचनाः एव, श्रोणादय इव ( नात्र विवादः ) अनपेक्ष्यैव पदान्तरं एते ( धेन्वादिशब्दाः ) पदार्थस्वरूपमेव असाधारणमर्थं प्रतिपादयन्ति । ( तेनामी गुणविशेषवचनाः ) केचित् पदान्तरमपेक्ष्यैव ( अर्थं प्रतिपादयन्ति ) यथा शुक्लः पट इति । ( तेन ते सामान्यगुणवचनाः )

कार्ये इति नार्थः शक्तिपूरणेन । वा. ३।५।१।१२. * ध्रुवाया उपांशुयाजार्थत्वाधारत्वेऽपि असाधारण्याभावात् प्रधानकालविप्रकर्षाच्च प्रधानविप्रकर्षः । सु. पृ. ६२६. * ध्रुवाया एव ( सकाशात् ) स्विष्टकृते अवदीयते । वा. ३।५।२।४.

* ध्रुवाऽऽज्यादिभिः स्विष्टकृदादिशेषस्य नानुष्ठानम् । चि. ३।५।१.

* ध्रुवाऽऽप्यायनं वचनमन्तरा नोपपद्यते । संकर्ष. ३।४।७.

* ध्रौवमाज्यं साधारणम्, दर्शयति च ' सर्वस्मै वा एतद् यज्ञाय गृह्यते यद् ध्रुवायामाज्यम् ' इति । साधारणं हि तत्, उपांशुयाजाय अन्येभ्यश्च प्रयोजनेभ्यः । यावदाज्येन सर्वत्र तत्तदाज्यं प्रयोजयति । तस्मात् सर्वस्य सर्वम्, तस्मात्तस्मात् एव ग्रहीतव्यं संस्कर्तव्यं च ( प्रत्यभिधारयितव्यम् ) । भा. ३।५।१।६, * ध्रौवेण आज्येन दर्शपूर्णमासयोः उपांशुयाजे इज्यम् । १०।८।१५।४७-४८, * ध्रौवाज्यात् सर्वसाधारणात् उपांशुयाजार्थे अवद्यतिते परिशिष्टं अन्यदेवतार्थं भवति । १२।२।१।७, * ' सर्वस्मै वा एतद् यज्ञाय गृह्यते यद् ध्रुवायामाज्यम् ' । तेन उपांशुयाजः ध्रौवाज्यात् । १०।८।१५,४७-४८.

* ध्वंसः नाभावरूपः, किन्तु चरमक्षणस्थ एव भावः । तस्योत्तरकालेनैव नाशावच्छिन्नत्वम् । अत एव ' नष्टो घटः ' इति प्रतीतिः । नहि ' नाशोऽस्ति ' इति कश्चित् प्रत्येति । अतो ध्वंसो नास्तीति केचित् । मणि. पृ. २९. * ध्वंसः । ' नास्तिता पयसो दध्नि प्रध्वंसाभाव इष्यते । ' श्लोवा. अभावप्रामाण्यवादे २

ध्वजनिखननन्यायेन तस्य बुद्धेर्दृढतामात्रादयितुमपि शास्त्रे नास्तिकमतनिरसनावताराः । स्थूणानिखनन्यायसमानार्थक एवायम् । सिद्धान्तदर्शने निरसनभाष्ये ३।४।२२.

* ' ध्वजिनो गच्छन्ति ' ' छत्रिणो गच्छन्ति ' इति लिङ्गसमवायात् शब्दप्रवृत्तिः । भा. ३।८।२२।४५.

* ध्वनिः नादः । न वाय्वात्मा तत्संयोगविभागात्मा वा नादः, किन्तु वायुगुणः शब्दविशेषो नादो ध्वनिरिति चोच्यते । रत्नाकरः स्फोटवादे श्लो. ३८. * ध्वनयः अर्थान्तरभूताः शब्दस्य द्रुतादिबुद्धिमपारमार्थिकीं कुर्वन्ति । वा. ३।२।१।१ पृ. ४६५. * ध्वनयः नानादेशस्थाः युगपदागच्छन्तः इतरेतरनिरपेक्षा एव युगपत् संस्कारानारभन्ते श्रोत्रस्य । तत्संस्कारानुरोधाच्च एकमपि शब्दं अनेकमिव गृह्णाति । एकैकसंस्कारोपजननाच्छब्दतः । बृहती. पृ. २२८. * ध्वनीनां भेदः उभयवादिसिद्धः । मणि. पृ. १६८. * ध्वनीनां वर्णाभिव्यञ्जकानामेव अनित्यत्वाङ्गीकारात् । रथंतरादिगीतिरूपाणां तु ध्वनीनां नित्यताऽङ्गीकारः । पृ. १७०.

* ध्वनिधर्माणां अदृष्टत्वेऽपि वर्णेषु अभिव्यङ्ग्याभिव्यञ्जकसंबन्धनिमित्तारोपदर्शनात् सादृश्यादिना केनचित् संबन्धेन आरोपो भवति इति ज्ञायते । सु. पृ. ५०८.

---

## न.

[ अत्र प्रथमं न-शब्देन स्वतन्त्रेण आरब्धा सपुच्छन्यायो निवेशिताः । ततः परं नञ्-शब्दारब्धाः । ततः परं न्यायसुधाकारेण नहि इति निषेधार्थकमखण्डं पदमिति स्पष्टमेवोक्तत्वात् नहिशब्दारब्धाः निवेशिताः । तदनन्तरं नञ्शब्दारब्धसामासिकपदघटिताः नकारारब्धाश्च निवेशिताः । के. ]

* ' नाग्निं मन्थेत् अग्नीषोमीये पशौ ' इति शतपथे । अत्र विकृतिगतदृष्टार्थप्रतिपत्तिव्यतिरिक्तसंनिपातिक्रियानिषेधः । बाल. पृ. ३७

नाज्ञातविशेषणविशिष्टबुद्धिर्विशेष्यमुपसंक्रामति इति न्यायः । यथा विशेषणज्ञानस्य विशिष्टज्ञानहेतुत्वात् तदन्तरेण तत्सिद्धिः । नहि दण्डज्ञानं विना दण्डीति ज्ञानं संभवति, न चाज्ञातविशेषणं तद्विशेष्यं वशीकरोतीति तदर्थः । साहस्री. १८७.

नातिरात्रे इत्यत्र नशब्दः प्रतिषेधार्थक एव, न पर्युदासार्थकः, न वा अर्थवादः ॥

शिष्ट्वा तु प्रतिषेधः स्यात् । १०।८।३।६॥

भाष्यम्— आह । प्रथमेऽधिकरणे नशब्दः पर्युदासार्थः, द्वितीये तु अर्थवादार्थः । अत्र किंलक्षणकः प्रतिषेध इति । लक्षणमुच्यते । शिष्ट्वा [illegible] प्रतिषेधः स्यात् । यथा ' नातिरात्रे गृह्णाति षोडशिनम् ' इति ।

न तत्र शक्यं वक्तुं पर्युदास इति । संबन्ध एव हि न स्यात्, अतिरात्रवर्जिनातिरात्रे गृह्णाति षोडशिनमिति । नापि कस्यचिदर्थवादत्वेन संभवति । तस्मात् नञो गृह्णातीत्यत्र संबन्धः ।

ननु परस्पर विरुद्धौ विधिप्रतिषेधौ न संभवतः । उच्यते । वचनप्रामाण्यात् प्रतिषेधो विधिं बाधिष्यते, विधिरपि प्रतिषेधम् । नान्या गतिरस्तीति पक्षे मिथ्याप्रत्ययः कल्पयिष्यते । तदा विधिर्यदा न प्रतिषेधः । तदा प्रतिषेधो यदा न विधिरिति । ननु सर्वदा विधिः प्रतिषेधश्च प्राप्नोति । उच्यते । उक्तमेतत् वचनप्रामाण्याद्विरोधाच्च मिथ्याप्रत्ययः प्रयोगवचन एकं कल्पं गृहीत्वा न द्वितीयमपि ग्रहीष्यतीति । तस्मादन्यतरेण कल्पेन सिध्यतीति । ननु कल्पान्तरभावे वैगुण्यम् । अत्रोच्यते । सत्यं वैगुण्यम् । वैगुण्येऽपि सांनिध्यादिरेव वाक्यात् प्रमाणादवगम्यते । तस्माददोषः । यत्र पुनरन्या वचनव्यक्तिरस्ति वाक्यस्य, तत्र न विकल्पो भवति । यथा नानुयाजेषु येयजामहं करोतीति ।

दुप्— ( प्रथमेऽधिकरणे पर्युदासः, द्वितीये अर्थवादः ) तृतीये प्रतिषेधः । नहि तत्र पर्युदासो भवति । ( तथाहि, ) यदि 'अनतिरात्रे गृह्णाति' इति पर्युदासः स्यात्, तत्र विधानानर्थक्यम् ( षोडशिनः ) । अथ अषोडशिनम् ( अतिरात्रे गृह्णाति ) इति तथापि अयमेव ( विधानानर्थक्यम् ) दोषः । ( तस्मात् प्रतिषेधः नञर्थः ) ।

शा— सामान्यविषये विधौ विशेषविषयो नञ् पर्युदासरूपेण निषेधेव वाक्यशेष इत्युक्तम् ( प्रथमे ), अप्राप्तविषयस्तु नञ् अर्थवादः इति ( उक्तं द्वितीये ) । अथ कोऽयं प्रतिषेधो भवति इति तत उच्यते ( इति संगतिः ) ।

वि—'नातिरात्रे पर्युदासो वादो वाऽथ निषेधनम् ।, आद्योऽनुयाजवत्, नैवं विध्येकविषयत्वतः ॥ अत एवार्थवादोऽपि न युक्तः पशुसोमवत् ( न तौ पशौ करोति, न सोमे इतिवत् ) । निषेधः स्याद् विकल्पोऽत्र ग्रीहाद्विव युज्यते ॥'

भाट्ट— यत्र तु नत्रिवेशाग्रे प्रसक्तो विधिः तस्मिन् एव च निषेधः, यथा 'अतिरात्रे षोडशिनं गृह्णाति, नातिरात्रे षोडशिनं गृह्णाति' इति, तत्र विकल्पस्यावश्यकत्वात् प्रतिषेध एव । न तु पर्युदासः, लक्षणाया प्रमाणाभावात् । नाप्यर्थवादः प्राप्त्यभावात् । न च तत्र 'समिधो यजति' इतिवत् विधिना क्रत्वादृगुण्यजनकत्वाक्षेपात्, निषेधेन च 'नानृतं वदेत्' इतिवत् क्रतुवैगुण्यजनकत्वाक्षेपात् एकस्यैव षोडशिग्रहणस्य क्रतावादृगुण्यवैगुण्यजनकत्वं विरुद्धमिति वाच्यम् । एतादृशविषये निषेधेन षोडशिग्रहणाभावेऽपि इतराङ्गैः क्रतुसादृगुण्योत्पत्तिः इत्यस्यैवाक्षेपात् । विधिना च षोडशिग्रहणस्यापि क्रतुसादृगुण्ये सहकारित्वमित्याक्षेपात् । अतश्च षोडशिग्रहणे प्रवृत्तिसिद्ध्यर्थं करणपक्षे फलभूमाऽपि कल्प्यते इति ध्येयम् । अत एव प्रथमतो विधिप्रवृत्त्या प्रतियोगिप्रसिद्धौ जातायाम्, निषेधेन निषेधे कृते पश्चात् विधेयस्य फलभूमकल्पनमिति विशेषः ।

मण्डन— 'सिद्धे नञ् प्रतिषेधार्थः ।'

शंकर— 'विकल्पः षोडशिन्युक्तः ।' ४.

* नातिरात्रे षोडशिनमित्यादौ विकल्पः । भाट्ट. १०।८।३. * नातिरात्रे षोडशिनं गृह्णाति अयं क्रत्वर्थभावनिषेधकः प्रतिषेधः श्रौतः । बाल पृ. ३२, * नातिरात्रे षोडशिनं गृह्णाति अयं क्रियाप्रतिषेधः प्रत्ययार्थः । पृ. ३२, * नातिरात्रे षोडशिनं गृह्णाति अयं षोडशिग्रहनिषेधः विकृतिगत-उपदिष्ट-भावनार्थसंनिपातिक्रियानिषेधः । पृ. ३७.

* न अनङ्गं प्रधानगुणभावं कस्यचित् प्रयोजनाय कल्पते । भा. ७।४।२१.

卐 नानुपहत्य भूतानि भोगः संभवति इति न्यायः । यथा 'अद्रोहेणैव भूतानामल्पद्रोहेण वा पुनः । या वृत्तिः स परो धर्मस्तेन जीवामि जाजले ॥' इति महाभारतशान्तिपर्वीयवचन संगच्छते । साहस्री.९०.

卐 'नानुमिते हसौ' इति न्यायः । अनुमितप्रतिपत्तेरेव वाक्यप्रयोक्तृकल्पनादोषः 'नानुमिते हसौ' इति न्यायात् अनुमानस्य न्यूनबलत्वाच्च । भाट्ट. ४।१।१३ । 'श्रूयमाणस्य वाक्यस्य न्यूनाधिक-

विकल्पने । लक्षणावाक्यभेदादिदोषो नानुमिते ह्यतो ॥' या. १।४।२।३ पृ. ३२९.

७ नानुयाजेषु । ननु अनुयाजभिन्नेषु इति पर्युदासाश्रयणे अनूयाजशब्देन नञः समासः स्यात् । 'नञ्' इति सूत्रेण नञ् सुबन्तेन समस्यते इत्यर्थकेन तस्य समासविधानात् । ततश्च 'न लोपो नञः' इति नशब्दे आद्यवर्णस्य नकारस्य लोपे परिशिष्टात् अकारात् 'तस्मान्नुडचि' इति नुडागमे सति अनश्वः इत्यादिवत् अननुयाजेषु इति स्यात् । न च पाणिनिना सूत्रकृता 'विभाषा' इत्यधिकृत्य तद्विधानात् समासाभावपक्षे नानुयाजेषु इति न दुष्यति इति वाच्यम् । कात्यायनेन वार्तिककृता 'वावचनानर्थक्यं स्वभावसिद्धत्वात्' (समर्थसूत्रे वार्तिकम्) इति विभाषाऽधिकारस्य प्रत्याख्यातत्वात् । विग्रहवाक्यसमासयोः भिन्नार्थकतया तदर्थप्रतिपादनाय तदुभयोः स्वभावसिद्धत्वात् विभाषाऽधिकारो व्यर्थः इति तदर्थः । वावचनपर्यायात्मकं विभाषावचनं हि समासेन विग्रहवाक्यस्य निवृत्तिर्मा भूत् इत्येतदर्थं पाणिनिना कृतम् । विग्रहवाक्यस्य समासेन निवृत्तिश्च तयोरेकार्थत्वे प्रसज्येत । व्याससमासयोर्भिन्नार्थत्वे तु स्वार्थप्रतिपादनाय व्यासवाक्यप्रयोगावश्यम्भावात् तन्निवृत्तिः समासे न सम्भाव्यते । तथा च व्याससमासयोरेकार्थत्वे सति समासेन व्यासवाक्यस्य निवृत्तौ प्रसक्तायां वावचनं कर्तव्यं स्यात् । तदानर्थक्यवचनात्तु कात्यायनस्य एकार्थत्वं व्याससमासयोः अनिष्टमवगम्यते । सति च तयोः भिन्नार्थत्वे तत्तदर्थप्रतिपादनाय व्याससमासयोः स्वभावसिद्धत्वात् विभाषावचनं (न) कर्तव्यं इत्युपपन्नम् । अत एव 'ऋद्धस्य राज्ञः पुरुषः' इत्यत्र समासो [illegible] प्रयुज्यते, भिन्नार्थत्वात् । विग्रहवाक्ये हि राजपदं ऋद्धपदान्वयसहिष्णु, समासवाक्ये [illegible] [illegible] । तस्य पदान्तरसहिष्णुत्वासहिष्णुत्वप्रयोजकं वैजात्यं सर्वानुभवसिद्धं इत्यस्ति व्याससमासयोर्भिन्नार्थत्वम् । अत एव च राजपुरुष इत्यत्र राज्ञोः पुरुष इति वा राज्ञां पुरुष इति वा द्वित्वबहुत्वयोरप्रतीतेः वृत्तौ एकत्वमौत्सर्गिकं इत्युपपन्नम् । न च नानूयाजेषु इत्यत्र समासाभावेऽपि पर्युदासः कुतो न प्रतीयते इति वाच्यम् । अब्राह्मणः इत्यादौ हि समासे पर्युदासो गम्यते इत्यत्र न विवादः । यच्च समासगम्यम्, तत् तदेकलभ्यं इत्यभ्युपेयम्, अन्यथा वाक्येनापि समासगम्यार्थप्रतीतौ तयोर्भिन्नार्थत्वानुपपत्तेः । अतः पर्युदासपक्षे समासप्रसङ्गात् अननूयाजेषु इति स्यात् । अतोऽत्र नञः प्रतिषेधार्थकत्वमेव युक्तम् । इति चेत्, नैष दोषः । नञः पर्युदासार्थकत्वेऽपि बाधकाभावात् । न च नञ्समासापत्तिः, तस्य विकल्पितत्वात् । पाणिनिना 'विभाषा' इत्यधिकृत्य तद्विधानात् । 'वावचनानर्थक्यम्' इति कात्यायनवचनं तु न्यायविरोधादुपेक्ष्यम् । अस्त्येव हि व्याससमासयोरैकार्थ्यम् । न च एवं सति 'ऋद्धस्य राज्ञः पुरुषः' इति विग्रहवाक्य इव समासेऽपि राज्ञः ऋद्धपदविशेषणसहिष्णुत्वं स्यात् । तथा च 'ऋद्धस्य राजपुरुषः' इत्यपि स्यादिति वाच्यम् । न ह्येतावता व्याससमासयोर्भिन्नार्थत्वमायाति, प्रतिपाद्यभेदाभावात् । उभयत्रापि राजसम्बन्धिपुरुषस्य प्रतिपाद्यस्य अनपायात् । नहि वाक्यत्वसमासत्वाभ्यां प्रतिपाद्यभेदोऽस्ति । यथा 'ब्राह्मणाः शतम्' 'ब्राह्मणानां शतम्' इत्यभिधानप्रकारभेदेऽपि शतसंख्याकब्राह्मणभोजनलक्षणप्रतिपाद्यभेदादर्शनात् । यदि च 'राज्ञः पुरुषः' इत्यादौ व्याससमासयोः प्रतिपाद्यभेदाभावेऽपि राजादिपदस्य ऋद्धपदादिविशेषणसहिष्णुत्वतदसहिष्णुत्वकृतवैजात्यकल्पनामात्रेण वैलक्षण्यमाश्रित्य तादृशवैलक्षण्यावच्छिन्नस्वस्वार्थप्रतिपादनाय वाक्यसमासयोः स्वभावसिद्धत्वात् समासेन वाक्यनिवृत्तेरप्रसक्तत्वात् तन्निवृत्त्यर्थो विभाषाधिकारः प्रत्याख्यायेत, तर्हि विभाषाऽधिकारात् प्राग्विहितेनापि समासेन वाक्यनिवृत्तिर्न स्यात् । 'अव्ययं विभक्ति' इत्यादिसूत्रप्रबन्धानन्तरं हि विभाषाऽधिकारः क्रियते । ततश्च 'अव्ययं विभक्ति' इत्यादिभिर्विधीयमानेषु अधिहरि, उपकुम्भम्, यावच्छ्लोकं इत्यादिसमासैः वाक्यनिवृत्तिर्न स्यात् । इष्यते तत्र वाक्यनिवृत्तिः कात्यायनस्याप्यभिप्रेता । तथा विभाषाऽधिकारस्य पश्चात् 'नित्यं क्रीडाजीविकयोः' इत्यतः नित्यग्रहणानुवृत्तौ 'उपपदमतिङ्' इति विहितेन 'घटकारः' इत्यादिसमासेनापि वाक्यनिवृत्तिर्न स्यात् । कात्यायनमते विभाषाऽधिकारस्यप्रतिसप्रत्याख्याने तु तेन

वाक्यव्यावृत्तेरसंभवात् । अतो विभाषाधिकारप्रत्याख्यानमन्याय्यम् । इत्यसमासपक्षमाश्रित्य नानूयाजेषु इति पर्युदासाश्रयणं युज्यते । अस्तु वा विभाषाऽधिकारप्रत्याख्यानम्; तथापि न दोषः । कात्यायनेन हि समासे विशेषणान्तरानहिंष्णुविशिष्टार्थत्वात्मकम् एकार्थीभावलक्षणं सामर्थ्यम्, असमस्तत्वे च तत्सहिष्णुस्वरसतोऽन्वितावयवपदार्थकव्यासाख्यं व्यपेक्षालक्षणं सामर्थ्यमाश्रित्य विशिष्टार्थविवक्षायां समासः, अन्यथा तु वाक्यं इत्याश्रितम्, पतञ्जलिना एवमेव व्याख्यातत्वात् । अत एव 'ऋद्धस्य राज्ञः पुरुषः' इत्यर्थे 'ऋद्धस्य राजपुरुषः' न भवति । समासस्य विशिष्टैकार्थप्रतिपादकतया तदेकदेशेन राजपदेन ऋद्धपदस्य अन्वयासंभवात् । 'पदार्थः पदार्थेन अन्वेति, न तु तदेकदेशेन' इति न्यायात् । अत एव 'राज्ञः पुरुषो देवदत्तस्य च' इत्यर्थेऽपि न राजपुरुष इति समासः । अत एव 'राज्ञो विराजते पुरुषः' इत्यादौ असमर्थपदयोः पदान्तरव्यवधानेऽपि न समासः । एवंजातीयकस्थले विशिष्टैकार्थप्रतिपादनाशक्तेः स्वभावसिद्धत्वात् । 'उपकुम्भम्' इत्यादौ तु नित्य एव समासः । तत्र वाक्यतो विशिष्टैकार्थप्रतीत्यभावस्य स्वभावसिद्धत्वात् । अत एव क्वचित् समासविधौ नित्यग्रहणमपि न कर्तव्य इत्यादि महाभाष्यकैयटादौ स्पष्टम् । एवं च एकार्थीभावलक्षणसामर्थ्ये सति 'राजपुरुषः' इति समासः । व्यपेक्षालक्षणसामर्थ्ये तु 'राज्ञः पुरुषः' इति वाक्यमेव । तथा नानूयाजेषु इत्यत्रापि व्यपेक्षाया वाक्यमेवास्तु । न चैवं सति पर्युदासो न लभ्येतेति वाच्यम् । नहि वाक्ये नञः पर्युदासार्थत्वं नास्ति 'निश. पचे न' इत्यत्र व्यभिचारात् । भूतले घटो नास्तीतिवत् प्रतिषेधार्थकनञाश्रयणे तु सत्यपि अष्टदोषदुष्टविकल्पापत्तिः । तस्मादिह पर्युदास एव आश्रयणीयः । अनूयाजानां तु भेदप्रतियोगित्वेन तेषां भेदप्रतियोगिताऽऽपाद्यत्वविवक्षया सप्तमी । तथा च 'अनूयाजनिष्ठप्रतियोगिताकभेदवत्सु यजतिषु येयजामहं कुर्यात्' इति वचनार्थः । 'नार्षेयं वृणीते' इत्यत्रापि नञ् भेदमेव वर्तते, आर्षेयवरणमिव अङ्गजातं प्रकृतिवत् महापितृयज्ञे भवति इति स्पष्टम् । वृणीते इत्याख्यातस्य यत्नस्तु तात्पर्यार्थः, धातोः केवलस्य प्रयोगानर्हत्वात् । नानूयाजेषु इत्यत्रापि 'येयजामहं करोति' इत्यनुवादमात्रम् । तु. १०।८।१४.

* 'नानुयाजेषु येयजामहं करोति' इत्यत्र पर्युदासः । पर्युदासन्यायः । भा. १०।८।२।१-४.

* 'नानृतं वदेत्' अयं क्रत्वर्थपुरुषार्थोभयविषयकः प्रतिषेधः दर्शपूर्णमासयोः । बाल. पृ. ३१.

* 'नानृतं वदेत्' इति उपनयनकाले एव बालस्य उपदेशो भवन्ति । भा. ३।४।३।१२ पृ. ९०९.

* 'नान्यामाहुतिं पुरस्ताज्जुहुयात् । यदन्यामाहुतिं पुरस्तात् जुहुयात् अन्यन्मुखं कुर्यात्, स्रुवेणाघारमाघारयति' इति । नान्यामाहुतिं पुरस्तात् जुहुयात् प्राकृतीभ्यः, यता हि आघारादिका आहुतयः सर्वासां मुखम् । यदन्यामाहुतिं औपसदीं अन्यादिका पुरस्तात् जुहुयात् अन्यन्मुखं कुर्यात् । तस्मात् स्रुवेणाघारमाघारयति । भा. १०।७।१४।४५ । 'नान्यामाहुतिं पुरस्ताज्जुहुयात्' आग्नेय्याः 'अग्निर्हि मुखम्' इत्यभिप्राय 'यदन्यामाहुतिं पुरस्ताज्जुहुयात्' वैकृतीं 'अन्यन्मुखं कुर्यात्' आग्नेय्या. अग्निर्हि मुखम् 'स्रुवेणाघारमाघारयति' नान्य गजते 'अग्निरनीक सोम भाग्यं विष्णुदेवनम्' इति । ४५.

कु— प्राकृतीभ्य आहुतिभ्यः अन्या प्रधानभूता औपसदाहुतिः प्राकृतीराहुतीरहुत्वा पुरस्तात् न जुहुयात्, किन्तु प्राकृती. आघाराद्याहुतीः पुरस्तात् हुत्वैव औपसदाहुतीर्जुहुयात् । यदि प्राकृतीभ्य आहुतिभ्यः अन्या औपसदाग्नेय्याहुतिं प्राकृतीराहुतीरहुत्वा पुरस्तात् जुहुयात् यदा अन्यत् यज्ञस्य मुखं कुर्यात् । तन्नानुचितम् । आघाराद्याहुतयो हि सर्वासां मुखम् । तस्मात् स्रुवेण आघारमाघारयति । (इति भूतार्थः) । १०।७।१४।४५.

* नान्यार्थत्वात् । १२।२।१५।३२ ॥ सोमभक्षस्य द्रव्यप्रतिपत्त्यर्थत्वात् ऋत्विक्पुरुषसंस्कारार्थत्वात् पयआदिवताद् अन्यार्थत्वात् न इडादिशेषभक्षः पयआदिव्रतेन निवर्तते इति सिद्धान्तः । सु. पृ. २९४५.

नान्यदृष्टं स्मरत्यन्यः इति न्यायः। यथा कस्य-चिदुत्तरदेहस्य पूर्वस्माद्भिन्नतया पूर्वेणानुभूतस्योत्तरेणा-ऽस्मरणमिति तथा प्रकृतेऽयं न्यायः। साहस्री. २६.

● 'नाधान्तरक्रियायोगादृते वाक्योपकल्पितान्। गुणद्रव्ये कथम्भावैर्गृह्णन्ति प्रकृताः क्रियाः॥' (वा. पृ. ३३१)। बाल. पृ. १०.

नाश्मनि स्यात्क्षुरक्रिया इति न्यायः। अक्षरार्थः स्पष्टः। साहस्री. ८०४.

नासाधितं करणं इति न्यायेन 'अग्निहोत्रं जुहोति' इति द्वितीया फलभावनाकरणस्यापि यागस्य अर्थाक्षिप्तसाध्यत्वाभिप्राया इति प्राञ्चः। कु. १।८।४।४ पृ. ९५, ● 'यदेता इष्टका उपदधाति' इत्यादौ द्वितीया तु 'अग्निहोत्रं जुहोति' इत्यादिवत् 'नासाधितं करणम्' इति न्यायेन अर्थाक्षिप्तसाध्यत्वाभिप्राया।११४।१७।१९.

● 'नासोमयाजी संनयेत्' अयं क्रतौ व्यवस्था-र्थः प्रतिषेधः। बाल. पृ. १४, ● 'नासोमयाजी संनयेत्' अयं विधिनामः पुरुषार्थमात्रविषयकः पुरुषार्थप्रति-निषेधः। पृ. ३३, ● 'नासोमयाजी संनयेत्' अयं व्यक्तिनिषेधः प्रत्ययः क्रत्वर्थः। पृ. ३२. ● 'नासोम-याजी संनयेत्' इति सान्नाय्यं सोमादूर्ध्वमनुष्ठाने। सान्नाय्यविकारः सामिक्षाऽपि सोमादूर्ध्वमेव। वि. ५।४।८.

नास्ति नष्टे विचार इति न्यायः। यत्र प्राक्तनस्वकृतजन्यपरिपाकप्राप्तानर्थपरम्परायातः कुमङ्ग-निलीनता प्रतीयते तत्रायमवतरतीति। तथा 'भिक्षो कथा श्लथा ते नहि शफरिवधे जालमश्नासि मत्स्यान्ते मधोन्मदत्ता मधु पिबसि कथं वेश्यया यासि वेश्याम्। दत्त्वाङ्घ्रि मूर्ध्न्यरीणां तव किमु रिपवो भित्तिभेत्ताऽस्मि येषां चौरोऽसि द्यूतहेतोस्त्वयि सकलमिदं नास्ति नष्टे विचारः॥' इति। साहस्री ५५५.

● नाश्नायन्ति (अनुवषट्कारे) शाखाऽन्तरे इदम्। संकर्ष २।३।१५.

● 'नेक्षेतोद्यन्तमादित्यम्' अयं पर्युदासविधिः पुरुषार्थः। बाल. पृ. २०. ● 'नेक्षेतोद्यन्तमादित्यम्' इति प्रजापतिव्रते नञ्-ईक्षतिभ्यां ईक्षणाभावसंकल्प-रूपक्रियैव भावना विधीयते। उदयादिनिमित्तप्राप्त-संकल्पभावनैव उदये निमित्ते विधीयते। पर्युदासोऽयम्, न निषेधः। भाट्ट. ४।१।३. ● 'नेक्षेतोद्यन्तमादित्यम्' इत्यादौ नञ्धात्वोरन्वये सति ईक्षणविरुद्धानीक्षणसंकल्पो विधेयः पर्युदासेन। वि. ६।२।५.

नेष्टं परनिष्पत्तये इति न्यायः। 'भिक्षा-चरणाय दण्डं प्रयच्छति' इति द्वितीया तु 'तथायुक्तं चानीप्सितम्' इति भविष्यति। शा ४।२।६। (नेष्टं० इति न्यायेन ईप्सिततमेन अन्यस्य अभिप्रेयमाणत्वा-योगात् 'कर्मणा यमभिप्रैति' इति सूत्रे कर्मशब्देन अनीप्सितकर्मण एव विवक्षणीयत्वात् इति भाव.। सोम.)

नोदाहरणमादरणीयं इति न्यायं अनुसृत्य दर्शपूर्णमासपदस्याने ज्योतिष्टोमपदं निवेशितम् (कल्प-तरौ)। परिमल. १।३।१।१८ नग्.

● नोपदेशानर्थक्यस्य एतत् सामर्थ्यम्, यत् अन्तरेण फलवचनं यागस्य प्रीतिः फलत्वमाप्नुयात्। काम-मस्य आनर्थक्यं भवेत्, न त्वाहुचित् सामर्थ्यमस्य जायते। भा. ६।१।१।३ पृ. १३५३.

'नोपादेयत्वमेवैकं कारणत्वेन संमतम्। विशेषणविवक्षायां कारणं हि महद् विधिः॥' इति न्यायात् (वा. १।२।३।७ पृ. ११२) विवक्षित-विशेषणतया बहुत्वनियमस्य सिद्धता। सु. ३।७ पृ. २६.

● 'न ऋतुं पृच्छेत् न नक्षत्रम्' इत्यनेन सोमस्यैव कालानादरः। भाट्ट. ५।४।९.

न ऋषीणामार्षेयाभावात्। इत्यपि अधिकं सूत्रं पठ्यते। परन्तु तत् कुतूहले व्याख्यातं न दृश्यते। तदर्थस्तु ऋषीणामपि कर्मस्वधिकारो नास्ति। आर्षेयाभावात्। आर्षेयाणि प्रवराः। गोत्रप्रवर्तकऋषीणां प्रवरा एव न सन्ति इति तेषां यज्ञकर्माधिकारो न संभवति। इति। के. ६।१।२।७

'नैकदा त्रयाणां विवादः' इति न्यायात् पक्षैकं प्रत्येत अनुमानं वाच्यम्। चन्द्रिका. पृ. ६२८.

नैवाश्रितेषु गुणदोषविचारणा स्यात् इति न्यायः। अयं पद्येनोपनिबद्धः, तथाहि 'दोषाकरोऽपि कुटिलोऽपि कलङ्कितोऽपि मित्रावसानसमये विहितोदयो-

ऽपि । चन्द्रस्यापि हरवल्लभतामुपैति नैवाश्रितेषु गुणदोषविचारणा स्यात् ॥' इति । साहस्री. ८९९.

'नैव हि द्रव्यमात्रस्य तद्धितैर्देवतोच्यते । अस्य शब्दाभिधेयस्य विशेषस्यैव देवता ॥' इत्यनेन न्यायेन अष्टाकपालपदार्थोऽपि तद्धितान्त एव शब्दान्तरेण. । सु. पृ. ४६२ । 'नैव हि' इति श्लोकस्तु ( वा. पृ. ५३३ ) वार्तिकस्य. । तदर्थस्तु तत्रैव ' विश्वे देवा देवता अस्याः इति हि न सर्वेणास्य द्रव्यमात्रस्याभिधीयते । किं तर्हि ? संनिहितो विशेषः । स एव व्यवहारक्षमो नानिरूपितं द्रव्यमात्रम् । अतः प्रातिपदिकेन योऽर्थ उपात्तः, स प्रमाणान्तरलभ्यस्य द्रव्यविशेषस्य देवता इत्येतद् तद्धितेन श्रुत्यैवोच्यते ' इत्युक्तः । के.

नैष स्थाणोरपराधो यदेनमन्धो न पश्यति इति न्यायात् । ( निरुक्त. १।१६ ) सनातनध प्र. प्रमाणप्र. ३३५. * 'सृण्येव जर्भरी' इत्यादिमन्त्रेषु, तत्र विद्यमानस्यैवार्थस्य तज्ज्ञानोपायभूतनियमनिरुक्तव्याकरणाद्यध्ययनाभावे सति पुरुषमविज्ञानम्, नैतावता तदर्थस्य अप्रत्यक्ष वक्तुं शक्यम्, नैष० इति न्यायात् । कु. १।२।४।३९.

न कदाचित् पवित्रं स्यात् गोक्षीरं मद्यसौ धृतं इति न्यायः । अतस्तादृशः सदुपदेशोऽपि व्यर्थतामातीति भावः । साहस्री. ३३५.

' धर्मधारयान्मत्वर्थीय बहुव्रीहिर्लाघवार्थप्रतिपत्तिकरः ' इति न्यायस्य 'प्रत्ययस्थात्' इति सूत्रे अनुपरत इति प्रयोगमुदाहरता भाष्यकृता अनादृतत्वात् । वै. भू. सारदर्पणे प्रथमश्लोके

* ' न कलञ्जं भक्षयितव्यम् ' एतस्मिन् द्वयमापतति । यदि वा अभक्षणं कर्तव्यमिति, यदि वा भक्षणं न कर्तव्यमिति । यदि नञ्प्रतिषिद्ध भक्षणं कर्तव्यं इत्यस्मिन् पक्षे नत्र अभक्ष शुत्या तयोः विद्याति, नञ् भक्षयतिविशेषणम् । तदाप्राप्ताच कर्तव्यतया नञ् न संबध्यते । अथ नञर्थं कर्तव्य, ततो वाक्येन विधानम् । भक्षयतिश्च नञ्विशेषणम् । तत्र कलञ्जादि न भक्षयितव्य इति नियमः । भा. ६।२।५।१९. * 'न कलञ्ज भक्षयेत् ' अयं रागप्राप्तपुरुषार्थभक्षणविषयकः पुरुषार्थः श्रौतनिषेधः । बाल. पृ. ३२. * 'न कलञ्जं भक्षयेत्' इत्यादौ नञर्थः प्रसज्यप्रतिषेध एव, न पर्युदासः । के. ६।२।१९, * 'न कलञ्ज भक्षयेत्' इत्यादौ रागप्राप्ता प्रवृत्तिमनूद्य निषेधो विधीयते । ६।२।५. * 'न कलञ्ज भक्षयेत् न लशुनं न गृञ्जनम्' अयं पुरुषार्थो जातिनिषेधः । बाल. पृ. ३२.

'न कार्यमन्यार्थं भवति' इति न्यायात् प्रयाजपूर्वं स्वप्रधानभूतं न प्रयोजनान्तरमपेक्षते । रत्नमाला. पृ. १३८.

शैवदीक्षाऽनन्तर जीवत्वप्रेतत्वाभावेन सञ्जाताश्रमधर्माणां प्रयोजनाभावात् 'न कुर्यान्निष्फलं कर्म' इति न्यायेन विधिनिषेधतिरस्कारापेन... । श्रीकर. १।१।१ ब्रह्म, * सगुणेश्वरस्य उपासनेन परब्रह्मसाक्षात्कारायोगात् 'न कुर्यान्निष्फलं कर्म' इति न्यायात् वेदान्तश्रवणमननादिकमेव कर्तुं युक्तं इत्याशङ्कायाम् । १।३।१ ब्रह्म.

' न कृतस्य गुणानुग्रहार्थं आवृत्तिरस्ति ' । कथं पाशुका प्रधाना तिष्ठति यतो क्रियमाणा, सन्तः तस्य पुरोडाशत्योपकुर्वन्ति ? उच्यते न्यायः. 'न कृतस्य० ' इति । भा. १२।२।५।१५. ( १२।१।१।१-६ इति पशुपुरोडाशाधिकरणन्यायोऽयम् ) ।

न केवला ( प्रकृति. प्रयोक्तव्या ) इत्यादिन्यायेन साधुत्वार्थमेकवचनमेव । भूषणसार-दर्पणे धात्वर्थनिर्णये कारिका २.

न क्रियासंबन्धात्ते संबन्धनं कश्चित् इत्यनेन न्यायेन क्रियाद्वारत्वात् सर्वसंबन्धानाम् । सु. पृ. ४६३. * ऐन्द्रवायवमिति देवतासंबन्धि द्रव्य प्रतीयते । न च संबन्धः 'न क्रिया० कश्चित्' इत्यनेन न्यायेन क्रियया घटयितव्यः । सा च यागः, नान्या । सोम. २।२।६ पृ. १२७.

न खलु धीमतां कश्चिदविषयो नाम इति न्यायः । अगमपिशाचनकुन्तले चतुर्थेऽङ्के उक्तः । साहस्री. ७८०.

न खलु प्रेम चलं सुहृज्जने इति न्यायः । साहस्री ९५२.

न चान्यार्थं प्रकृतमन्यार्थं भवति इति न्यायः। यथा नहि शोभा मर्पन्ती सर्पणादहिर्भवतीत्येवं प्रकृतेऽपि। साहस्री. ४२६.

● न चार्थात् कृतं चोदकेन प्राप्यते। भा. १२।१।१।३.

'न चाविज्ञातलिङ्गानां [न चाऽलिङ्गानां इति वार्तिके पाठः पृ. ८२०] प्रक्रिया विनियोजिका' इति न्यायः। (अधीत्यस्य च सामर्थ्यं संनिधानुपपन्नम्॥ 'दक्षिणासिऽसि' इति अस्पष्टलिङ्गोऽयम्। न च ईदृशं मन्त्रं प्रकरणं विनियोक्तुं समर्थम्। भागं तु असिशब्दः युष्मदर्थविषयत्वात् संनिहितमभिमुखं वा अभिधत्ते नान्यम्)। सु पृ. १२१०.

न चाविहितमङ्गं भवति इति न्यायेन नियतस्य (हीप् कर्फे ऊ इति–) निधनस्य अङ्गत्वात् समाम्नायात् साधारण्यतः प्राप्तस्यापि विध्यर्थवत्त्वोपपत्तिः। सु. पृ. ८७४. ● निषेधवाक्यपर्यालोचनया भर्त्रनुज्ञानस्य प्रतिग्रहाङ्गत्वं यदन्यैः तदङ्गत्वेन तद्विधिपरत्व वाक्यस्याश्रयणीयम् 'न चाविहितमङ्गं भवति' इति न्यायात्। संस्कारकौस्तुभ. दत्तक

● न चाश्रितगुणे वाक्यं नद्विरोधि गुणान्तरम्'। तत्र अनूद्यमान एव अवश्यं गुणोऽपि अनुवदितव्यः, तत्र नैरपेक्ष्यदर्शनात् व्याकाङ्क्षाऽपीनत्वं गुणान्तरविधानानुपपत्तिः। वा. १।४।२।१ पृ. २३०

● न चैकः शब्दः अनेकार्थो युक्तः। भा. १२।१।१।४.

● न चैकं प्रति शिष्यते इति सर्वशास्त्रोपसंहाराभिधानात् जैमिनेरपि पौर्वापर्यस्य यज्ञाङ्गकारणत्वमनभिमतम्। सु. पृ. १४४. ● न चैकं प्रति शिष्यते इति हि सर्वश्रुतीनां सर्वपुरुषान् प्रति प्रामाण्यात् अध्ययनवत् स्मृतेरपि श्रुतिधारकसामर्थ्यात्। वा. १।३।२।३ पृ. १७०. ● अध्ययनस्य उपनयनादीनां च न्यायाऽन्तरन्यायेनैव अभेदावगमात् तदङ्गानामपि 'न चैकम्' इति न्यायेनैव दर्शपूर्णमासाङ्गवत् सर्वपुरुषसाधारण्योपपत्तेः स्मृत्यन्तराणां प्रमाणाभावात्। कौ. १।३।७।१५. पृ ९८–९९. ● अन्यत्राविहितानां पार्वणस्थालीपाकादीनां न्यायाऽन्तरन्यायेन अभेदावगमात् सर्वविषयत्वप्रतीतेः तदङ्गानामपि च दर्शपूर्णमासाङ्गवदेव 'न चैकं०' इति न्यायेनैव सर्वविषयत्वप्रतीतेः न व्यवस्थाङ्गोपपत्तिः। इति न्यायसुधाकारः। तत्र। १।३।७।१५ पृ. ९८. ● पौर्वापर्यश्रवणमनाश्रित्य 'न चैकं प्रति शिष्यते' इत्यनेन न्यायेन सर्वपुरुषान् प्रति निष्प्रत्यवस्थितप्रामाण्यमानसर्वमाप्यवेदप्रामाण्यज्ञानैः शिष्टमुनिः आत्मीयशक्तिमात्रकारितपूर्वापरग्रहणविभागैः एकवाक्यगतपूर्वोत्तरवर्णपदवद्वक्ष्यमाणमनपेक्ष्य मातापितृप्रणीतोपदेशवत् निर्विचिकित्समेव प्रामाण्यमभ्युपगन्तव्यम् (स्मृतीनाम्)। वा. १।३।२।३ पृ. १७८। मातापितृप्रणीतोपदेशवत् पौर्वापर्यश्रवणमनाश्रित्य सर्वान् पूर्वश्राविणः पश्चाच्छ्राविणश्च पुरुषान् प्रति निर्विचिकित्समेव प्रामाण्यम् 'न चैकं प्रति शिष्यते' इति न्यायेन शिष्टमुनिः अभ्युपगन्तव्यं इत्यन्वयः। सु पृ. १४४. ● सर्वशाखागतानां सौभरविशेषाणाम् 'न चैकं प्रति शिष्यते' इत्यनेन (न्यायेन) व्यवस्थया प्राप्तेः एकस्माच्च फलविद्धेः समुच्चयायोगेऽपि विकल्पेन प्रयोगोपपत्तिः। (पूर्वपक्षे शिक्षा)। सु. पृ. ८८३.

● न च गुणानुग्रहार्थं प्रधानानुनिर्युक्ता। भा. १२।१।१।४.

● न च गुणवशवर्ति प्रधानम्। भा. १२।१।१।४.

● न च दृष्टे सति अदृष्टकल्पना संभवति। भा. ११।२।१६.६६.

'न च निमित्तं विधिरपबाधते' इति न्यायात् न नियोगविशेषणस्य साध्यता नियोगस्य साध्यत्वमुपहन्ति, नियोगसाध्यत्वनिमित्तत्वात् नियोगविशेषणसाध्यस्य। (इति प्राभाकरा आहुः)। मणिप्र. पृ. ३२७.

'न च भिक्षुको भिक्षुकान् याचते' इति न्यायात् न विकृतेर्विकृतिरस्ति, विना वचनम्। वैजयन्ती. ३।८।८०.

● न च भिक्षुका भिक्षुकशब्दाद्दान्ति सत्यन्यस्मिन् प्रधानसमर्थे अभिक्षुके। भा. ८।३।५।११.

☞ 'न च यत् समित्संबन्धेन क्रियते तत् चमूतपात्रसंबन्धेन' इत्यनेन न्यायेन भेदेन श्रुता देवता ग्रहणसंबद्धा नोपपद्यते यदि ग्रहणं नाऽऽवर्तेत इति प्रतिदेवतं सोमो ग्रहीतव्यः । ( न्यायः भाष्यपङ्क्तिरियम् ३।२।२।९ पृ. ४७२ ) । वा ३।२।६।१९ पृ. ५१९.

* न च सकृदुच्चारित (शब्द.)शक्नोति अर्थद्वयं विधातुम् । भा १२।१।२।४.

* न च सुबन्तसम्बन्धे नञ्समासापत्तिः ( नेमेतो-ग्रन्थ इत्यत्र ), 'नानुयाजेषु' इतिरत्युपपत्ते. । भाट्ट. ४।१।३.

* 'न चतुस्त्रिंशदिति ब्रूयात्' अत्र लिङ् श्रौते प्रतिषेधे । बाल. पृ. ४०.

☞ अत्र च विश्वमन्त्रस्य पारमार्थिकस्य देवताऽधिकरणन्यायेन कल्पनीयतया तन्न्यायस्य च श्रुतिविरोधे अप्रवृत्तेः न प्रविप्रवार्यत्व इति 'न चतुस्त्रिंशत् इति ब्रूयात्' इति न्यायोऽपि न प्रवर्तते । चतुर्मन्थी. चन्द्रिका पृ. ४३३.

☞ न चेदन्यं प्रकल्पयेत् प्रक्लृप्तावर्थवादः स्यादानर्थक्यात् परसामर्थ्याच्च । १०।८।४।७॥

अग्निहोत्रे श्रूयते 'जर्तिलयवाग्वा वा जुहुयात्, गवीधुकयवाग्वा वा जुहुयात्, न ग्राम्यान् पशून् हिनस्ति नारण्यान् । अथो खल्वाहुः अनाहुतिर्वै जर्तिलाश्च गवीधुकाश्च, पयसाऽग्निहोत्रं जुहोति' इति । अत्र जर्तिलादियवागूद्वयस्य विधानात् अनाहुतिर्वै इति प्रतिषेधाच्च विकल्पः इति पूर्वपक्षः । 'पयसाऽग्निहोत्रं जुहोति' इत्येव विधिः इतरत् सर्वमर्थवादः इति सिद्धान्तः । 'अनाहुतिर्वै' इति अनेन प्रतिषेधः न चेत् अन्यं विधिं पयोविधिं इदं वाक्यं प्रकल्पयेत् । प्रक्लृप्तौ पयोविधेः सिद्धौ तु अनाहुतिवचनं यवागूवचनं च अर्थवादः स्यात् आनर्थक्यात् स्वार्थे तात्पर्यशून्यत्वनिश्चयात् । जर्तिलगवीधुकयोः अनाहुतित्वं च परसामर्थ्यात् । परेण 'पयसाऽग्निहोत्रं जुहोति' इत्यनेन विधिना सह सामर्थ्यात् अपेक्षारूपसामर्थ्यात् एकवाक्यत्वादित्यर्थः । ग्राम्यारण्यपशुहिंसापेक्षया जर्तिलगवीधुकयवाग्वोः प्राशस्त्यं, पयसस्तु सर्वापेक्षया प्राशस्त्यम् । तस्मात् पयसैव होतव्यं न यवाग्वा, नापि पशुना इति सर्वस्य एकवाक्यता । जर्तिलाः आरण्यमुद्गाः । गवीधुकाः तृणविशेषबीजानि ( कसाड-कस्साव इति कोङ्कणे भाषा ) । के.

* 'न चेदन्यं प्रकल्पयेत्०' इत्यधिकरणे 'अनाहुतिर्वै जर्तिलाश्च गवीधुकाश्च' इति निन्दया निषेधकल्पना पूर्वपक्षयित्वा नहिनिन्दान्यायेन 'यत् पयसाऽग्निहोत्रं जुहोति' इति पयोविधिशेषत्वात् न निषेधकल्पना इति सिद्धान्तितम् । जर्तिलयवाग्न्याय. । बाल. पृ. ५७.
* या निन्दा कर्मान्तरार्थप्रसाविनी, सा निषेधफला भवति । विधिपरा तु स्तुत्यर्था जायते तदुपपादनस्य स्तुत्यर्थत्वात् । यथा वक्ष्यति 'न चेदन्यं प्रकल्पयेत् प्रक्लृप्तावर्थवादः स्यात्' इति । वा. १।२।१।११.

* न चेदन्येन शिष्टाः ( १।४।६।१९ ) इति कथञ्चिदनुवादत्वे संभवति विशिष्टविधानानुपपत्तेः । वा. ३।५।१०।२१ पृ. १०६.

☞ न चेदन्येन शिष्टाः इति न्यायेन अप्राप्तविशेषणस्यैव कल्प्यविशेषणविधिविधेयत्वेन... । भाट्ट. ६।५।५.
* न चेदन्येन शिष्टा. इत्यनेन न्यायेन ( १।४।३।९ जै. ) येऽन्येन न विहिताः तान् विदधाति । टुप्. १२।१।१।२ पृ. ११११. * न चेदन्येन शिष्टाः । यदि अन्येन वचनेन शिष्टा विहिता न भवन्ति गुणाः, तदा गुणविधिः न नामधेयम् । यथा 'आग्नेयोऽष्टाकपालोऽमावास्यायां पौर्णमास्यां चाच्युतो भवति' इत्यादौ । यत्र पुनः अन्येन वचनेन शिष्टा गुणा भवन्ति, भवति तत्र नामधेयम् । यथा अग्निहोत्रं जुहोति इति । के. * ('एतस्यैव रेवतीषु वारवन्तीयमग्निष्टोमसाम कृत्वा पशुकामो ह्येतेन [ विहृ-दमिहुखा ] यजेत' इत्यत्र-) अपूर्वकर्मविधिवाद साम्यभेद विनैव यद्यपि सर्वमेव विधातुं शक्यम्, तथापि 'न चेदन्येन शिष्टा.' इति न्यायेन गदपाठं तदेव विधीयते, इतरत्तु मासमनूद्यते इति लाघवगौरवम् । कौ. २।३।१२।२६ पृ. २८९. * अस्ति चेद् भावनैव प्रत्यायितस्य धर्मः विशेषणत्वशक्तिः इति नाभिधानमपेक्षते । सर्वत्र विशिष्टप्रत्ययेषु चैतदवस्थितम् 'न चेदन्येन शिष्टा.' इति । वा. १।४।४।१२ पृ. ११६. * ( एतस्यैव रेवतीषु वारवन्तीय अग्निष्टोमसाम कृत्वा इत्यत्र–) वावा॰

शब्देनैव तदर्थविधौ 'न चेदन्येन शिष्टाः' इत्यनेन न्यायेन विशिष्टयागभावनाविध्ययोगापत्तेः ...। सु. पृ. ८६६.

* एतेनैव उत्कालकथनं प्रत्युक्तम् । ब्राह्मणप्रकृतिवच्छब्दयोः तुल्यहेतुत्वेन विशिष्टवर्जनासंभवात् ( क्वचित्तु सामान्यशास्त्रप्रवृत्तिहेतोः ब्राह्मणशब्दस्य पदार्थेषु च अतिदेशशास्त्रप्रवृत्तिहेतोः प्रकृतिवच्छब्दस्य ) । तथा च 'तद्वर्जं तु वचनप्राप्ते' इति ( पूर्वपक्षम् ) उक्त्वा 'न चोदनार्थकार्त्स्न्यात्' इत्युत्तरं दास्यति । वा. ३।३।७। १४ पृ. ८६०.

* 'न तौ ( आज्यभागौ ) पशौ करोति' अत्र विकृतिगामः अतिदिष्टः आरादुपकारकक्रियानिषेधः। बाल. पृ. ३५–३६. * 'न तौ पशौ करोति, न सोमे' इति आज्यभागौ प्रकृत्य आम्नाते वाक्ये 'न सोमे' इति 'न तौ पशौ करोति' इत्यस्यार्थवादः । ( सोमे तावत् नैवाज्यभागौ स्तः, पशौ अपि नैव तौ स्तः इति )। के. १०।८।२।५.

* न तैरेव धर्मैः प्रयोगान्तरमपि क्रियते । भा. ११।३।४।६.

* 'स्वेच्छया मरणं विप्रात्' इत्यादिना भविष्योत्तरे आत्मघात्यादीनुक्त्वा 'न तेषां स्नानसंस्कारौ' इति संस्कारशब्देन दाहो निषिद्धः । अयं अपूर्वकर्मगतप्रतिपत्तिनिषेधः । बाल पृ. ३७.

* एतौ च परिचोदनापरिहारौ सूत्रकार एव वक्ष्यति 'आराद्पीति चेत्' ( ३।७।१।३ ) 'न तद्वाक्यं हि तदर्थत्वात्' । ४ इति । या. ३।८।५।१५ पृ. १४७, * ननु 'न तद्वाक्यं हि तदर्थत्वात्' ( ३।७।१।४ ) इत्युत्तरं वक्ष्यति, तेन अग्नीषोमीयापूर्वमनुपकारकत्वात् व्यवस्था स्यादिति । ३।६।१०।३१.

न सूक्तके यस्य चोदनाऽप्राप्तकालत्वात् । ९।४।८।३१ ॥

अग्निहोत्रार्थे अग्न्युद्धरणे 'वाचा त्वा होत्रा, प्राणेनोद्गात्रा, चक्षुषाऽध्वर्युणा, मनसा ब्रह्मणा, श्रोत्रेणाग्नीधा, एतैस्त्वा पञ्चभिर्दैवैर्ऋत्विग्भिरुद्धरामि' इति मन्त्रः । सोऽयं मन्त्रः दर्शपूर्णमासार्थे अग्न्युद्धरणे पठितव्यो न वेति विचारे, उद्धते हि तस्मिन्नग्नौ पर्वणि सायं प्रतिपदि च प्रातः अग्निहोत्रमनुष्ठीयते एव । यदि तु मन्त्रो न पठ्येत अग्निहोत्राङ्गमुद्धरणं विगुणं स्यात् । तस्मात् दर्शपूर्णमासार्थेऽपि अग्न्युद्धरणे स मन्त्रः पठनीयः इति पूर्वपक्षे सिद्धान्त उच्यते । दर्शपूर्णमासार्थमुद्धृते अग्नौ यस्य अग्निहोत्रं प्रवर्तते, तस्य परार्थे उद्धरणे मन्त्रस्य न चोदना न कर्म । मन्त्रो न कर्तव्यः । नहि तदग्निहोत्रार्थमुद्धरणम् । अप्राप्तकालत्वात् अग्निहोत्रार्थोद्धरणस्य यः कालः, तस्य दर्शाद्यर्थे उद्धरणे अभावात् । अधिवृक्षसूर्ये सायं उपसि च प्रातः अग्निहोत्रार्थमग्न्युद्धरणं विहितम् । दर्शपूर्णमासार्थं तु पर्वणि प्रातरग्निहोत्रहोमे हुते पश्चात् अग्निमुद्धृत्य अन्वाधानं क्रियते । तथा च दर्शाद्यर्थे उद्धरणकाले अग्निहोत्रार्थोद्धरणकालस्याभावः । तस्मात् अग्निहोत्राग्न्युद्धरणमन्त्रः दर्शाद्यर्थोद्धरणे न पठनीयः इति सिद्धान्तः । तुशब्दः उक्तपूर्वपक्षव्यावृत्त्यर्थः । के.

* 'न दीक्षितस्यान्नमश्नीयात्' अयं पर्युदासः इति पक्षः । बाल. पृ. १७, * 'न दीक्षितस्यान्नमश्नीयात्' इति निषेधे 'जीवितात्ययमापन्नो योऽन्नमत्ति यतस्ततः । आकाश इव पङ्केन न स पापेन लिप्यते ॥' इति मनूक्तः अयं सामान्यरूपः निषिद्धविषयकः व्यावृत्तविषयः अभ्यनुज्ञाविधिः । पृ. १६.

न देवानां देवतान्तराभावात् । इति सूत्रं मपुस्तके वर्तते । कुतूहले च व्याख्यातम् । ( ६।१।२।४ )। ननु अस्तु तर्हि स्वपरभावविदां अधिकारः । तत्राह । देवतानामपि नाधिकारः । देवताऽन्तराभावात् । नहि इन्द्रादिभ्योऽन्ये इन्द्रादयः सन्ति येभ्यो हविर्दीयेत । न च प्राक्तनकल्पवर्तिनां देवानां यजनं संभवति, अतीतत्वात् । तस्मात् देवतानामपि न कर्माधिकारः । के.

न देवताऽग्निशब्दक्रियमन्यार्थसंयोगात् । ६।३।५।१८ ॥

मुख्यद्रव्याभावे प्रतिनिधिर्भवति इत्युक्तम् । तत्र अग्न्यादयो देवताश्च, आहवनीयादयः अग्नयश्च, मन्त्ररूपाः शब्दाश्च, प्रयाजादिरूपाः क्रियाश्च तेषां समाहारः देवताऽग्निशब्दक्रियम्, तत् प्रतिनिधिं नार्हति । देवतादीनां प्रतिनिधिर्न भवतीत्यर्थः । कुतः । अन्यार्थसंयोगात् । अर्थः प्रयोजनम् । अन्यस्य देवतादेः अन्येन

अर्थेन प्रयोजनेन संयोग. स्यात् । स च प्रकृते कर्मणि अबाधकम् । तस्मादेतेषां प्रतिनिधिः । 'अर्थशब्दो न्यायपरः । प्रतिनिधिसाधकात् न्यायात् अन्येन न्यायेन देवतादेर्युक्तत्वात् । प्रतिनिधिसाधकन्यायस्यान्यत्वात् इति तात्पर्यम् ।' इति सुबोधिनी । 'देवताश्च अग्निश्च शब्दक्रिया मन्त्रोच्चारणं च तेषां त्रयाणां समाहारद्वंद्वः । देवतादि न प्रतिनिधानमर्हति । अन्यार्थसंयोगात् । अन्यस्य प्रतिनिधित्वाभावसाधकस्य न्यायस्य संयोगात् इति कुतूहलम् ।

देवतायां च तदर्थत्वात् । १९ ॥

देवताऽग्निशब्दक्रियाणां प्रतिनिधिर्नास्तीत्युक्तं पूर्वसूत्रे । तत्र देवताया विशेष उच्यते । चकारः हेत्वन्तरसमुच्चयार्थः । देवताया अग्न्यादिदेवताया तदर्थत्वात् हविरुद्देश्यत्वात् । तत्र हविरर्थे सूर्यादौ योजिते वह्न्यादिशब्दे वा योजिते हवींयागो न स्यात् । तस्मात् देवताया नास्ति प्रतिनिधिः । इति सिद्धान्तः ।

'देवता च तदर्थत्वात्' इति कुतूहले पाठः । देवता न प्रतिनिधानमर्हति । तदर्थत्वात् उद्देश्यतया विहिताया एव देवताशब्दार्थत्वात् । चकारः अनुक्तसमुच्चयार्थः । देवतात्वं शब्दाधीनम् । ततश्च विहितदेवताविस्मरणेऽपि देवताऽन्तरं न प्रतिनिधातव्यम् । तदर्थं हि प्रतिनिधातव्यम् । ततश्च मुख्यदेवताशब्दं स्मृत्वैव तदुद्देशेन हविस्त्याज्यम् । मुख्ये च स्मृते किं प्रतिनिधानेन इति सुवक्तव्यम् । इति सूत्रार्थः । के.

● 'न देवताऽग्निशब्दक्रियमन्यार्थसंयोगात्' इति षष्ठाधिकरणे कर्मणामदृष्टार्थत्वात् तत्र प्रतिनिधिना सिद्धो प्रमाणाभावात् प्रतिनिध्यभावो वक्ष्यते । सु. पृ. ६२१. ● पिण्डपितृयज्ञे उपस्थानमन्त्रः 'यदन्तरिक्षं पृथिवीमुत द्याम्०' इति । तत्र अविकारेण प्रयोगे गार्हपत्यपदस्थाने आहवनीयपदप्रक्षेपे प्राप्ते, नोभयमपि किन्तु गार्हपत्यपदलोपमात्रं कार्यं इति सिद्धान्तमुक्त्वा "अत एव 'न देवताऽग्निशब्दक्रियम्' इति पाठो न्याय. संगच्छते" इत्युक्तं संकर्षे (१।२।१५)। के.

न द्वेष्यकुशलं कर्म कुशले नानुषज्जते इति न्याय । ज्ञानी हि अकुशलं कर्म न द्वेष्टि, कुशले कर्मणि अनुरागो न भवति, समबुद्धित्वादिति भावः । साहस्री. ५२१.

न धर्मवृद्धेषु वयः समीक्ष्यते इति न्यायः । तथोक्तं मनुना 'न तेन वृद्धो भवति येनास्य पलितं शिरः । यो वै युवाऽप्यधीयानस्तं देवाः स्थविरं विदुः ॥' इति । तन्मूलोऽयं न्यायः । साहस्री. ९५५.

न निमित्तं विधिरपेक्षते इति न्यायः । अप्राप्तांशपूरणेन यत् अवघातादेः नियमादृष्टप्रतिपादनम्, तदुपपत्तये तण्डुलादिगतं अदृष्टं कल्प्यमानं 'न निमित्त०' इति न्यायेन न दृष्टार्थत्वं अबाधितं अधिकरोति । तौता. २।१।३।६, ● 'न निमित्तं विधिरपेक्षते' इति न्यायात् न मान्त्रवर्णिकत्वमिन्द्रदेवताया वाक्यविहितत्वमूलत्वादादिदेवताभिः (पूर्वपक्षे इदमुक्तम्)। १।१।२।२.

● 'न पृथिव्यामग्निश्चेतव्यो नान्तरिक्षे न दिवि' इति 'हिरण्यं निधाय चेतव्यम्' इत्यस्य विधेः शेषः । भा. १।२।१।१८.

न प्रतिनिधौ समत्वात् । (६।३।१४।३२) इति न्यायः । प्रतिनिधौ उपात्ते अपचरिते प्रतिनिधिद्रव्यमुद्दिश्य मुख्यद्रव्यं वा इति संदेहे प्रतिनिधिद्रव्यस्यापि शास्त्रपरिगृहीतत्वात् तदलोपादाने प्राप्ते 'वचनात् त्वन्याय्यमभावे तत्सामान्येन प्रतिनिधिरभावादितरस्य' (६।३।१३।३१) इति सूत्रात् अभावे, तत्सामान्येन, प्रतिनिधि. इति पदत्रयानुवृत्त्यैव प्रतिनिधौ उपात्ते तदभावे तत्सामान्येन प्रतिनिधिः नोपादेयः मुख्यापचारोपादित्सया उपात्तस्यापि प्रतिनिधेः अचोदितत्वेन इतरत्वाभावात् इति षष्ठे वक्ष्यते । सु पृ. ५११.

न प्रतिनिधौ, समत्वात् । ६।३।१४।३२॥

प्रतिनिधि. इति पदं पूर्वसूत्रादनुवर्तते । मुख्यद्रव्यस्यापचारे प्रतिनिधिना प्रयोग. प्रवृत्तः । अथ दैवात् प्रतिनिधिरपि विनष्टः । एवं सति प्रतिनिधौ अपचरिते सति तस्य प्रतिनिधिर्न भवति । न प्रतिनिधेः प्रतिनिधि. । समत्वात्, मुख्यप्रतिनिधेः प्रतिनिधिप्रतिनिधेश्च समत्वात् । यथैव तो पूर्वं प्रतिनिहितः श्रुतचिकीर्षया, न प्रतिनिधिचिकीर्षया, एवमयमपि श्रुतचिकीर्षया, न प्रतिनिधि-

चिकीर्षया । तस्मान्न प्रतिनिधिमदृष्टमुपादेयम्, किन्तु मुख्यमदृष्टमेव अन्यद्वेष्टव्यम् । इति सिद्धान्तः । इदं च यत्र प्रतिनिधिः शास्त्रे श्रुत. तद्विषयकम् । के

■ न प्रत्यक्षविरुद्धमनुमानमुदेति स्वकार्यं वा साधयति । भा. १।१।६।२०.

● 'न प्रथमयज्ञे प्रवृञ्ज्यात्' अयं प्रकृतिगतः आरादुपकारकक्रियानिषेधः । बाल पृ. ३५, ● 'न प्रथमयज्ञे प्रवृञ्ज्यात्' इत्यस्य 'अग्निष्टोमे प्रवृणक्ति' अयं पर्युदस्तप्रतिप्रसवविधिः । पृ. १६.

● न प्राजापत्येन पशुना अनिष्ट्वा इष्टकाः कारयेत् । संकर्ष. २।१।२९.

ꕥ 'न बृहत्या वषट्कुर्यात्' इति अक्षरव्यूहनविध्यर्थवादः ॥

ज्योतिष्टोमे 'त्वष्टारमन्वाह' इत्यादिना 'देवतामिमर्यासिषमति' इत्यनेन द्वयोर्द्वयोर्ऋचोरभ्यासं व्यतिषङ्गं विधाय 'इन्द्राय रथन्तरायानुब्रूहीति रथन्तरस्यर्चमनूच्य बृहतः ऋचा यजेदिन्द्राय बार्हताय अनुब्रूहीति बृहतः ऋच मनूच्य रथन्तरस्यर्चा यजेत्' इत्यादिना मध्ये विहृतम् । तत्रैव 'न बृहत्या वषट्कुर्यात्' इत्यपि प्रतिषिद्धम् । तत्र बृहतीशब्दस्य छन्दोवचनत्वेन त्रिष्टुब्बाधाऽधिकरणन्यायेन बृहद्रथन्तरयोरेव उपलक्षितत्वेन तयोर्याज्यात्वप्रतिषेधात् विकल्पः । इति प्राप्ते, अक्षरसंख्याऽवच्छेदकधर्मविशेषस्य बृहतीपदवाच्यतया तस्यैव प्रदानकालतावच्छेदकत्वप्रतिषेधोऽयम् । अनुवाक्याऽन्तिमाक्षरमनुष्टुभस्य याज्यायामप्यूहनविधेरर्थवादमात्रम् । 'अनुष्टुभ च ह वा एता संपादयति' इतिवत् । तथा च 'अभि त्वा शूर' इत्यारभ्य 'ईशानम्' इत्यन्तामनुष्टुभमनूच्य 'इन्द्र तस्थुषस्त्वामिद्धि हवामहे' इति पङ्क्त्या यजेत् । एवम् 'त्वामिद्धि' इत्यारभ्य 'त्वा काष्ठा' इत्यन्तामनुष्टुभमनूच्य 'सर्वतो अभि त्वा शूर नोनुम' इति पङ्क्त्या यजेत् इत्यर्थः । संकर्ष. ४।४।४.

● 'न ब्रह्मा सामानि गायति' इति अन्वाधेये सामगानं निषिध्यते । अयं अपूर्वकर्मगतः आदिष्टः आरादुपकारकक्रियाप्रतिषेधः । बाल. पृ. ३६.

● न ब्रूमः एकस्योभय प्रयोजनमभिनिष्पादयितुं सामर्थ्यं नास्तीति । भा २।२।११।२५ पृ. ५४५.

ꕥ न भूमिः स्यात् सर्वान् प्रत्यविशिष्टत्वात् । ६।७।२।३ ॥

विश्वजिति सर्वस्वदाने भूमिर्न देया स्यात् । कुतः ? सर्वान् प्रति मनुष्यादिस्थावरान्तानां प्राणिनां संचरणजीवनाद्यर्थं भूमिः अविशिष्टा समाना । राज्ञा तु सा संरक्षणीया, न तु तां दातुमसौ समर्थः । तस्मात् महाभूमिः न देया । किंचित् क्षेत्रादिकं तु विशिष्टविभिना दातुं शक्यम् । सर्वान् प्राणिनः प्रति अविशिष्टत्वात् विश्वजिदादौ महाभूमिर्न देया स्यात् इति सिद्धान्तः । के.

● 'न वाऽर्थधर्मत्वात् संघातस्य गुणत्वात्' । ७।४।३।१० । अत्र द्वादशशब्देन संख्यावाचिना अपौरुषेयस्यापि संघातस्य फलसाधनीभूताहःशब्दोक्तयागविशेषणत्वेन गुणभूतत्वात् साधनत्वाभावेन धर्माप्रापकत्वात् न संघातस्यार्थवत्ता धर्मप्रसक्तिरुक्ता इत्यर्थः । मु पृ. ७११.

● 'न वा क्रत्वभिधानादधिकानामशब्दत्वम्' (७।४।३।१५) इति चोदकनामधेययोर्बलाबलपरीक्षाया ऐकाहिको धर्मः (पञ्चदशायामयमाहे अभिप्लुति) कर्तव्यः इत्युक्तम् । भा. १२।२।७।२२, ● यद्यनन्तर (आधानमासोत्तर पवमानेष्टिभ्यः प्राक्) अग्निहोत्रादयः स्युः, यः पूर्वोक्तो न्यायः स निवर्तिष्यते 'न वा तासां तदर्थत्वात्' (३।६।४।१२) इति । (■ आधानमित्युक्तम्, तासां पवमानेष्टीनां तदर्थत्वात् अग्निसंस्कारार्थत्वात् इति सूत्रार्थः) । ५।३।९।२५.

● न वायवीयानवयवान् शब्दे सतः प्रत्यभिजानीमः यथा पटस्य तन्तुमयान् । न वायवीयानवयवान् शब्दगतान् स्पृशाम. । तस्मान्न वायुकारणकः शब्दः । भा. १।१।६।२२.

● 'न वायुक्रिये पृथगसमवायात्' इत्यधिकरणे (२।४।१९-१२ अ.) वायुप्राणयोः तत्त्वाभेदेऽपि अवान्तरवैलक्षण्यमुक्तम् । आभरणम्. २।२।१४।४२ मृ.

ॐ 'न विदुषामुपदेशो नावकल्पते' इति न्यायेन उपदेशान्यथाऽनुपपत्त्या मन्वादेः पूर्वज्ञानकल्पना। मु. पृ. ११८.

ॐ न विधौ परः शब्दार्थः इति न्यायः। शब्दार्थे शक्यार्थस्यैव। 'गुप्तिज्' इत्यादावपि समवायविरुद्धः इत्येवार्थः, न ▪ नकारेत्संज्ञकः सः भवतीति 'न विधौ परः शब्दार्थः' इति न्यायात्। भूतिः पृ. ३२. ● 'न विधौ परः शब्दार्थः' इति न्यायात् 'त्रिष्टोऽनुष्टुभः चतस्रो गायत्रीः करोति' इत्यत्र विधौ गायत्री शब्दो न गौणः। 'पृष्ठैरुपतिष्ठते' इत्यत्र तु विधावपि स्तोत्रविशेषवाचकस्य पृष्ठशब्दस्य स्तोत्रसाधनीभूतासु लक्षु गौणत्वं इष्टम्। कु ८।३।६।२२. ● 'न विधौ परः शब्दार्थः' इति न्यायात् विधौ लक्षणा अयुक्ता। तौता. १।१।४।२७. ● विधावेव हि लक्षणा दुष्यति (न तु विधिशेषेऽपि) 'न विधौ परः शब्दार्थः' इति न्यायात्। कु. १।२।४।२७. ● विध्युद्देशस्य प्रधानत्वात् अप्राप्तविषयत्वेन 'न विधौ परः शब्दार्थः' इति न्यायात् न तत्र लक्षणा, किन्तु अर्थवादस्य गुणत्वात् अनुवादत्वेन लक्षणासहिष्णुत्वात् तत्रैव लक्षणा युक्ता। इति पूर्वपक्ष.। परात्रम. ११२,३।१. ● 'न विधौ परः शब्दार्थः' इति न्यायविरोधात् 'असपिण्डा या मातुरसपिण्डा च या पितुः' इत्यत्र पितृपदस्य गौण्या वृत्त्या प्रतिग्रहीतृपरता न युक्ता। दमी पृ ९२ ● न विधौ परः शब्दार्थः। विधौ हि न परः शब्दार्थो प्रतीयते। भा. १।२।३।२९.

● न वैदिकमर्थनिर्देशात्। ७।३।१२।२१॥ यदपि वेदविहिताग्निकार्यसर्वार्थेन्यः प्रकृतिविकृत्योः, तदपि 'अग्निमुपनिधाय स्तुवते' इत्युदाहृत्य विशये॰ न वैदिक॰ नयोत्पत्ति॰ इति निर्णीतवादविचार्यम्। वा. ३।७।१९।३९ पृ. ११०३.

● न शास्त्रपरिमाणत्वात्। (२।३।३६) इति न्यायेन पदार्थैकत्वनियमात् अविकृतपदार्थकरणे च इयत्ताबाधापत्तेः। मु. पृ. १२४७.

● 'न संशयं प्रपद्येत नाकस्मादप्रियं वदेत्। नाहितं नानृतं चैव न स्तेनः स्यान्न वार्धुषी॥' इति स्मार्तो निषेधः। मु. पृ. १३९३.

● न सर्वस्मिन्निवेशात्। ३।३।१।७॥ ▪ पाठमात्रेण वेदान्तरव्यपदेशो भवति। यत् येन वेदेन विधीयते तत् तेनैव प्रमाणेन क्रियते। ततश्च यस्यैव मन्त्रस्य यत्र विधानम्, स एव तेन व्यपदेक्ष्यते। या. ऋग्वेदविहितानां यजुषां यजुर्वेदपाठमात्रेण उपांशुत्वे, यजुर्वेदविहितानां च ऋचां ऋग्वेदपाठमात्रेण उच्चैस्त्वे सति विधिविरोधात् दोषः स्यात्। सर्वस्मिंस्तु ऋग्जाते यजुर्जाते च ऋग्वेदविहिते उच्चैस्त्वनिवेशात् यजुर्वेदविहिते च उपांशुत्वनिवेशात् एकवेदविहितस्य धर्मद्वयसंबन्धाभावे न दोषः इति सूत्रव्याख्या। मु. पृ. ११७४.

ॐ न साहसमनारुह्य नरो भद्राणि पश्यति इति न्याय। स्पष्टार्थोऽयम्। साहस्री. ९३३.

ॐ न सेव्यः केवलो नृप इति न्यायः। (किन्तु अमात्योऽपि सेव्य.। अन्यथा विरोधी अमात्य. राजबुद्धिं विपरिवर्त्य केवलं राजसेवक नाशयेदपि इति भाव.। के.) साहस्री १९६.

ॐ 'न स्वामिनि स्थिते कश्चिद् दासात् प्रार्थयते फलम्।' स्तुतशस्त्रयो. देवताप्रकाशनार्थत्वे तु देवता प्रत्येव फल प्रार्थ्येत 'न स्वामिनि॰' इति न्यायात्। कु. २।१।५।२६.

● 'न हिंस्यात् सर्वा भूतानि' अथ क्रियाप्रतिषेध प्रत्यक्ष. पुरुषार्थ। धाल. पृ. ३१, ● 'न हिंस्यात् सर्वा भूतानि' अत्र रागप्राप्तपुरुषार्थहिंसानिषेधक पुरुषार्थः श्रौतनिषेधः। पृ. ३२, ● 'न हिंस्यात् सर्वा भूतानि' अयं सामान्यप्रतिषेध.। पृ. ३३, ● 'न हिंस्यात् सर्वा भूतानि' इत्यस्य 'गोरनुबन्ध्यः' इति बाधे प्रसक्ते 'अथवा गोपशुरेव' इति प्रतिप्रसवरूप. प्रतिषेधः। पृ. ३३.

● 'न होतारं वृणीते' इति महापितृयज्ञे पर्युदास, न विकल्पः। के. १०।८।२।१-४. ● 'न होतारं वृणीते नार्षेयम्' इति पर्युदास महापितृयज्ञे। भा. १०।८।२।१-४.

[ इतः परं नञ्-शब्दारम्भाः उपसिद्धान्तादयो निवेश्यन्ते ]

* नञ् 'नातिरात्रे' इत्यत्र प्रतिषेधार्थकः । के. १०।८।३।६. * 'अब्राह्मणमानय' इत्यत्र नञ् ब्राह्मणपदं च अन्यस्य लक्षणार्थमुच्चार्येते क्षत्रियादेः, न स्वार्थम्। टुप्. १०।८।१।१ पृ. २०५७. * नञश्च एष स्वभावः, यत् स्वसंबन्धिप्रतिपक्षबोधकत्वम् । मीम्या. * नञः धात्वन्वयेन धात्वर्थाभावसंकल्पभावनाविधिः 'न चारित्र्यम्' ( आदित्यमीक्षेत ) 'एकादश्यां न भुञ्जीत' इत्यादौ आवश्यकः । भाट्ट. ४।१।१. * नञः पर्युदासार्थत्वे समासनियमः । यथा–'अब्राह्मणमानयति' 'अधर्मं करोति' इति । के. १०।८।२. * नञः प्रधानान्वयस्य अभ्यर्हितत्वात् भावनाऽन्वयसंभवे, धात्वर्थान्वयस्य लक्षणादिभिया अनुपपत्तेः पर्युदासत्वायोगात् । भाट्ट. ४।१।३. * नञः प्रसज्यप्रतिषेधार्थत्वे समासो न भवति । यथा–'न गौ ( आज्यभागौ ) यजौ करोति' इति । के. १०।८।२. * नञः भावप्रत्ययसमभिव्याहृतस्य प्रकृत्यर्थमात्रवृत्तित्वविशिष्टप्रतियोगिताकाभावबोधकत्वस्योपपत्तेः 'घटे घटत्वं नास्ति' इत्यत्र नञर्थस्य घटमात्रवृत्तित्वविशिष्टभावप्रत्ययार्थे धर्मे अन्वयः इति केचित् । मणि. पृ. १६१. * नञः लाघवेन अभावत्वेनैव वाचकता, न तु भेदत्वादिना, अनेकशक्तिकल्पनाऽऽपत्तेः । अत एव 'तदन्यतद्विरुद्धतदभावेषु नञ्' इत्यनुशासनमपि न वृत्तिपरम्, अन्यलभ्यत्वात् । रहस्य. पृ. १२२.

* नञर्थः प्रत्ययार्थेन संबध्यते । यदा तु तदन्वये किञ्चिद् बाधकम्, तदा अगत्या धात्वर्थेनान्वयः । बाधकं च द्विविधम् 'तस्य व्रतम्' इत्युपक्रमो विकल्पप्रसक्तिश्च । तत्र च पर्युदासाश्रयणम् । बाधकाभावे च निषेध एव नञर्थः । 'नानुयाजेषु' इत्यत्र विकल्पप्रसक्तिः । 'पर्युदासः स विज्ञेयो यत्रोत्तरपदेन नञ्' । उत्तरपदं चात्राव्यवहितोत्तरपदं प्रकृतिरित्यर्थः । 'प्रतिषेधः स विज्ञेयः क्रियया सह यत्र नञ्' । क्रिया लिङ् । 'नामधात्वर्थयोगी तु नैव नञ् प्रतिषेधकः' । तदन्य-तदभाव-तद्विरुद्धेषु नञ् । मीम्या. * नञर्थः प्रसज्यप्रतिषेध एव 'न कलञ्जं भक्षयेत्' इत्यादौ । 'तस्य व्रतम्' इत्युपक्रमबलात्तु 'नेक्षेतोद्यन्तमादित्यम्' इत्यादौ नञर्थः पर्युदासः । के. ६।२।५. * नञर्थो भावनाऽन्वयी । मणि. पृ. ११३.

* नञर्थो विचार्यते । घटो नास्ति इत्यादौ घटपदस्य घटप्रतियोगिकाभावे लक्षणा । नञ् तु उपसर्गवत् लक्षणातात्पर्यग्राहकः इति नान्यैव नञर्थः इति केचित् । 'तत्सादृश्यमभावश्च तदन्यत्वं तदल्पता । अप्राशस्त्यं विरोधश्च नञर्थाः षट् प्रकीर्तिताः ॥' इत्युक्तेः षट्सु शक्तिः इत्यन्ये । अब्राह्मणः इत्यादौ सादृश्यम्, अपापं इत्यादौ अभावः, अघटः इत्यादौ तदन्यत्वम्, अनुदरा कन्या इत्यादौ अल्पता, अपशवः इत्यादौ अप्राशस्त्यम्, अधर्मः इत्यादौ विरोधः नञर्थः इति श्लोकार्थः । संसर्गाभाव एव नञर्थः, न भेदः, 'घटो न पटः' इत्यादौ नञर्थभेदस्य अभेदातिरिक्तसंबन्धेन पटे अन्वयासंभवात् तद्वदिति लक्षणाया आवश्यकत्वात् । अतः संसर्गाभाव एव नञर्थः इत्यन्ये ।

संसर्गाभावः अन्योन्याभावश्च नञर्थः । तादात्म्यसंसर्गावच्छिन्नप्रतियोगिताकाभावत्वम्, तादात्म्यारोपजन्यप्रतीतिविषयाभावत्वम्, प्रतियोग्यवच्छेदकदेशकालावच्छेदेन प्रतियोगिसमानाधिकरणाभावत्वं वा अन्योन्याभावत्वम् । तदन्याभावत्वं संसर्गाभावत्वम् । आरोपश्च प्रत्यक्ष इव शाब्दोऽपि ग्राह्यः । तेन अतीन्द्रियप्रतियोगिकाभावे नाव्याप्तिः । अभावबुद्धौ प्रतियोग्यारोप एव नियामकः, न तु तदारोपसंबन्धो नियामकः, तत्संसर्गगौरवात् । 'घटो भविष्यति', 'नष्टः' इत्यादौ प्रतीतिविषययोः प्रागभावध्वंसयोः नञर्थत्वायोगात् 'कपाले घटो न' इत्यादौ अत्यन्ताभावस्यैव प्रतीतेः । 'अत्यन्ताभावान्योन्याभावावेव नञर्थौ, न संसर्गाभावत्वेन तस्य शक्तिः' इति पितृचरणाः । एतेन पीतघटवति नीलघटो नास्ति इति ( न ? ) प्रयोगप्रसङ्गो, न वा घटवति 'नीलो घटो नास्ति' इति प्रयोगः । तत्र च नञर्थान्वयिताऽवच्छेदकस्य प्रतियोगिताऽवच्छेदकत्वनियमः । 'घटो नास्ति' इत्यत्र घटत्वस्य तथात्वात् । 'कम्बुग्रीवादिमान् नास्ति' इत्यत्र कम्बुग्रीवादिमत्त्वमेव तथा । न च तस्य अन्वयिताऽवच्छेदक-

त्वेऽपि गौरवान्न प्रतियोगिताऽनवच्छेदकत्वं इति वाच्यम् । उपस्थितत्वेन प्रतियोगितावच्छेदकत्वे लाघवात् । अननुप्रविष्टत्वेन गौरवाभावात् । अन्वयिताऽवच्छेदकता च पर्याप्तिसम्बन्धेन बोध्या । तेन प्रकृते 'घटपटौ न स्तः' इति प्रत्ययप्रयोगौ, घटत्वपटत्वयोः अन्वयिताऽवच्छेदकत्वेऽपि तत्पर्याप्त्यनधिकरणत्वात् । द्वित्वस्यैव तादृशत्वेन प्रतियोगिताऽवच्छेदकत्वात् इति केचित् । अन्ये तु 'कम्बुग्रीवादिमान्नास्ति' इत्यत्र अन्वयिताऽवच्छेदक न प्रतियोगिताऽवच्छेदकं गौरवात् । 'घटपटौ न स्तः' इत्यत्र अन्वयिताऽवच्छेदकमपि प्रतियोगिताऽवच्छेदकं प्रतीतिबलादित्याहुः ।

अत्र च अभावाधिकरणभूतलादिप्रकारकाभावविशेष्यकबोधे अधिकरणप्रकारकप्रतियोगिविशेष्यकबोधसामग्री हेतुर्मा सप्तम्यन्तभूतलादिपदसमभिव्याहारः । एवं अभावप्रकारकाधिकरणविशेष्यकबोधेऽपि । तेन 'भूतलं घटे' ('भूतले घटः') 'भूतले न घटः' 'चैत्रः पचति' 'न पचति चैत्रः' इत्यादिप्रयोगप्रत्ययाः । अन्यथा 'भूतल न घटः' 'चैत्रो न पाककृतिः' इत्यत्र अधिकरणवाचिसप्तम्यन्तपदाभावेऽपि अत्यन्ताभावबोधः स्यात् । अत एव 'पृथिव्यां गन्धः, न जले' इत्यादौ गन्धविशेष्यक एव बोधः । अन्ये तु नञः अभावमात्रे शक्तिः । शक्यताऽवच्छेदकं च लाघवात् अभावत्वम् । अतो न अन्योन्याभावे लक्षणा । न च एवमपि घटपदात् नीलघटत्वप्रकारकप्रतीतौ घटपदलक्षणेव अन्योन्याभावप्रकारकप्रतीत्यर्थं नञः लक्षणा आवश्यकी, अन्यथा 'न घटः' इत्यत्र अभावप्रकारकप्रतीतौ 'घटः पटो न' इति प्रतीत्यनन्तरम् 'घटः पटो न वा' इति संशयः स्यात्, विधायकत्वेन अभावनिश्चयस्य साधकत्वात् । एवं वाक्ये प्रतिषेधस्थलेऽपि संसर्गाभावप्रतीत्यर्थं लक्षणा आवश्यकी इति वाच्यम् । प्रतियोग्यधिकरणवाचकपदयोः समानविभक्तिकत्वस्य अन्योन्याभावबोधहेतुत्वस्य, तयोः प्रथमादिविभक्तिकत्वस्य अत्यन्ताभावबोधे हेतुत्वस्य च कल्पनया लक्षणाया अभावात् । यत्र नञ्समभिव्याहारे नामार्थयोः आधाराधेयभावसंसर्गेण अन्वयः, तत्र अत्यन्ताभावप्रत्ययः । यत्र अभेदसंसर्गेण अन्वयः, तत्र अन्योन्याभावमात्र इति व्युत्पत्तिः । तेन 'न पचति चैत्रः' इत्यत्र अत्यन्ताभावबोधः सुवचः । किञ्च अत्र अत्यन्ताभावबोधो न निरूढः । कदाचित् अस्मादेव वाक्यात् 'पाकानुकूलकृतिमद्भिन्नः चैत्रः' इति अन्योन्याभावस्यापि बोधात् । अतः तादृशतात्पर्यज्ञानात् तादृशो बोधः इति न लक्षणा आवश्यकी इति । न चैवं प्रतिषेधपर्युदासयोः तुल्यत्वापत्तिः, इष्टापत्तेः । 'नानुयाजेषु' 'न होतारं वृणीते' इत्यत्र वाक्यभेद-कल्प्यानुपपत्ति-विकल्पपरिहाराणां पर्युदासबीजत्वात् । 'न तौ पशौ' इत्यत्र पशुप्रकरणस्थस्य निषेधबीजत्वात् । एवं च समासे वाक्ये वा क्वापि न लक्षणा इति केचित् । **दीधितिकारास्तु** संसर्गाभाववत् अन्योन्याभावत्वं न नञः शक्यताऽवच्छेदक इति नञो नानार्थत्वम् । तथापि अघटः इति समासे अन्योन्याभावप्रतिपत्त्यर्थं नञो लक्षणा । अत एव प्रतिषेधापेक्षया पर्युदासो दुर्बलत्वेन गीयते । 'नानुयाजेषु' इत्यत्र प्रतिषेधेऽपि न विकल्पापत्तिः । अन्वयिताऽवच्छेदकावच्छिन्नप्रतियोगिताकत्वस्यापि विशेषविधिनिषेधयोः विशेषनिषेधस्य सामान्यविषयकत्वनियमस्य व्युत्पत्तिसिद्धतया विधिप्रतिषेधयोः उद्देश्यताऽवच्छेदकैक्ये विधेयप्रतियोगिताऽवच्छेदकैक्ये च विकल्पस्य युक्तत्वात् । यथा 'अतिरात्रे षोडशिनं गृह्णाति' 'नातिरात्रे षोडशिनं गृह्णाति' इत्यादौ 'न गौ पशौ करोति' इत्यत्र च । तत्रापि अतिदेशप्राप्तस्य पशूद्देशेन आज्यभागप्रयोगप्रकारविशेषविधिपरत्वेन विधिनिषेधयोः एकविषयत्वात् । 'नानुयाजेषु' इत्यत्र तदभावेन वैषम्यात् । अतोऽत्र पूर्वोक्तयुक्त्यैव पर्युदाससिद्धिः इत्याहुः । **केचित्तु** निषेधस्य प्रसक्तिपूर्वकतया इष्टसाधनत्वेन प्रमितस्य निषेधविषयत्वनियमः । एवं च विध्यर्थव्यतिरेकबोधकनिषेधेन अनिष्टसाधनत्वं निष्फलत्वं वा निषेधस्य बोध्यते इति उभयोः प्रामाण्यायोगात् व्रीहियवयोरिव अंशतः पाक्षिकप्रामाण्याङ्गीकारेण विकल्पापत्त्या सामान्यविधेः विशेषविधिसमभिव्याहारेण तदितरपरत्वरूपपर्युदासाङ्गीकार इत्याहुः । **अभेदाभावास्ति** । सर्वत्र नञर्थस्य अन्वयिताऽवच्छेदकावच्छिन्न-प्रतियोगिताकत्वमुपपत्तिः,

अन्यथा नीलघटवति 'नेह घटः' इति अत्यन्ताभाव व्यवहारस्य 'नीलघटो न घटः' इति अन्योन्याभावव्यवहारस्य च आपत्तिः। न च पदार्थैकदेशस्य घटस्य कथमभावान्वयः ? अभावस्येव घटेन समं अन्वये घटत्वावच्छिन्नप्रतियोगिताया: संसर्गत्वात्। सा च भिन्नभिन्नप्रतियोगिताविशेषः इति केचित्। यत्रानुयोगिवाचकपदे सप्तमी, [illegible] अत्यन्ताभावबोधः, यत्र प्रथमा तत्र अन्योन्याभावबोधः इति व्युत्पत्तिमाहुः। परे तु तादृशव्युत्पत्तेः 'न पचति चैत्रः' इत्यादौ अत्यन्ताभावस्थले व्यभिचारात् एवं वाच्यम् – नञ्समभिव्याहाराभावे यत्पदार्थयोः आधाराधेयभावसंसर्गेण अन्वयः, तत्र अत्यन्ताभावप्रत्ययः। यत्र अभेदसंसर्गेण अन्वयः, तत्र अन्योन्याभावभानमिति। एवं च 'चैत्रः पचति' इत्यादौ आख्यातार्थयत्नस्य समवायेन चैत्रे भानम्। 'न पचति' इत्यत्र यत्नाभावः तत्संसर्गावच्छिन्न एव आधाराधेयभावनियामकत्वरूपसंसर्गत्वेन चैत्रे भासते इति। एवं 'चैत्रस्य धनम्' (चैत्रस्य न धनं) इत्यत्रापि षष्ठ्यर्थस्वामित्वस्य धने निरूपकत्वसंसर्गावच्छिन्नप्रतियोगिताकाभावो विशेषणतया भासते। यदि तु स्वत्वं षष्ठ्यर्थः, तदा चैत्रनिरूपितस्वत्वाभावः आश्रयतासंबन्धेन भासते इति। एवं नञ्समभिव्याहाराभावे यादृशप्रतियोग्यनुयोगिवाचकपदयोः विरुद्धविभक्त्यर्थानवरुद्धयोः अभेदान्वयव्युत्पत्तिः, तत्समभिव्याहृतनञा अन्योन्याभावबोधः। अत एव समानविभक्तिकप्रतियोग्यनुयोगिवाचकसमभिव्याहृतनञ्पदजन्यबुद्धिविषयत्वं अन्योन्याभावलक्षणं इत्याहुः। अन्ये तु 'भूतले न घटः' 'घटो न पटः' इत्यत्र भूतलाधिकरणको घटप्रतियोगिकः अभावः, घटप्रतियोगिकभेदवान् पटः इति बोधः। यत्र तु 'घटो नास्ति' 'घटपटौ न स्तः' इति क्रियासमभिव्याहारः, तत्र लडर्थवर्तमानत्वेन नञर्थान्वयः, तस्यैव च मूलत्वेन वाऽन्वयः। एकत्वान्वयस्तु प्रथमाऽर्थघटपदार्थे, तथा च भूतलवृत्तिवर्तमानत्वाभावाश्रयः एकत्वाश्रयो घटः, भूतलवृत्तिवर्तमानत्वाभाववन्तौ द्वित्वावच्छिन्नौ घटपटौ इति बोधः। एवं 'जातौ सत्ता नास्ति' इत्यत्र सत्ताऽभावः जातौ इति बोधः जात्याधेयः इति वा बोध इत्याहुः।

अत्र च सर्वत्र प्रातिपदिकार्थे नञर्थे घटपदार्थाना अभेदातिरिक्तेन प्रतियोगित्वसंबन्धेन अन्वयः। निपातेषु भिन्नव्युत्पत्तिस्वीकारात् इति केचित्। घटपदस्य घटप्रतियोगिके लक्षणाङ्गीकारे न कोऽपि दोष इति दिक्। मणि. पृ. १५४–१५५.

● नञर्थपर्यवसायी एव प्रतिषेधविधिः। बृहती. पृ. ९८.

३ नञिवयुक्तमन्यसदृशाधिकरणे तथा ह्यर्थगतिः इति न्यायः। नञ्युक्त इवयुक्त च यत्किञ्चिद्दृश्यते, तत्र तस्माद्भिन्ने तत्सदृशे अधिकरणे द्रव्ये कार्यं विज्ञायते। हि यतस्तथा अर्थगतिरस्ति, तादृशस्यैवार्थस्य लोके प्रतीतिरस्तीति भावः। तथथा 'अब्राह्मणमानय' इत्युक्ते ब्राह्मणसदृशं क्षत्रियमेव आनयति, नासौ लोष्टमानीय कृती भवतीति नञ्युक्तस्योदाहरणम्। न चायं न्यायः प्रसज्यप्रतिषेधविषयः, तस्य निषेधपरत्वात्। तथोक्तं हरिणा–'द्वौ नञौ समाख्यातौ पर्युदासप्रसज्यकौ। पर्युदासः सदृग्ग्राही प्रसज्यस्तु निषेधकृत्॥' इति। इवयुक्तोदाहरणं तु लोके प्रसिद्धमेव 'चन्द्रमिव मुखं पश्य' इत्यादि। अयम् 'मृडादिभ्यो गुणवचनेभ्यश्च इत्' इतिसूत्रमहाभाष्ये स्पष्टः। 'पुगन्त-लघूपधस्य च' इतिसूत्रमहाभाष्ये तु अस्य न्यायस्य 'नञ्युक्तमिवयुक्तं च अन्यस्मिन् तत्सदृशे कार्यं विज्ञायते' इति स्वरूपान्तरमुक्तं इति ज्ञेयम्। परिभाषेन्दुशेखरे लौकिकन्यायसिद्धपरिभाषात्वेन व्यवहृतोऽयं इति तत्रैव विस्तरः। साहस्री. ४४७.

● नञिवयुक्तोऽन्यसदृशे (नञ् इव)। 'अणोऽप्रगृह्यस्यानुनासिकः' (पा० ८।४।५७) इत्यण् पूर्वेण। अप्रगृह्यस्येति पर्युदासाश्रयणात् अनुनासिकः। नञा ग्रहणसामर्थ्यात् नञिवयुक्तन्यायस्य बाधः, तस्य पूर्वेणापि (इवाकारेण) अप्रसक्तत्वात्। शब्दकौस्तुभ. २ अध्याय, हल्.

● नञ्टीकायामुक्तम् 'नोपादेयत्वमेवैक कारणत्वेन संमतम्। विशेषणविवक्षातः कारणं हि मनीषिभिः॥' (चा. पृ. २१२। नञ्टीका तु १।३।१ सूत्रे 'न सुरां पिबेत्' इति नञ्विवरणपर वार्त्तिकम्)। बाल. पृ. १३,
● नञ्टीकाया वार्त्तिकद्वारा पुरुषार्थः श्रौतः क्रियानिषेधः

'न हिंस्यात् सर्वभूतानि' इत्युक्तः। पृ. ३२ ( नञ्र्थीका १।३।७ सूत्रे ).

* नञ्-धातुपदयोर्यदा संबन्धः तदा स्वार्थं हित्वा वस्त्वन्तरं प्रवदन्ति ( तदा पर्युदासः )। वा. ४।१।३।१.

* नञ्पदं अभिधावृत्त्या प्रतिषेधं ब्रूते। प्रज्ञापतिव्रत-शब्दे तु पर्युदासोऽर्थस्तस्य। वि. ४।२।१.

* नञ्समासे हि सति अव्ययपूर्वपदप्रकृतिस्वरत्वात् अहीनशब्दस्य आद्युदात्तत्वं स्यात् ( अहीनः इति ) मध्योदात्तस्तु अयं पठ्यते ( अहीनः इति )। वा. ३।३।८।१६ पृ. ८६४.

* नञ्संबन्धात् 'यदनृतवदनेन वञ्चयेत् तत्र' इति वचनं लभ्यते। तस्मात् दर्शपूर्णमासोपकाराय वदतो यदनृतं प्रसज्यते तत्प्रतिषेधो विधीयते। ततश्च यावत् कर्मार्थः संवादः तत्र सर्वत्र अनृतं वर्जनीयम्। वा. ३।४।४।१२ पृ. ९४१.

[ इत. परं 'नहि' इति अखण्डेन पदेन आरभ्यमाणा लघुसिद्धान्ता निवेश्यन्ते। के. ]

* नहि अकारणोत्कर्षः कार्यमनुविधत्ते। लब्धे आगरे न ह्रस्वफलघोनदर्शनात् अल्पं सुखम्, अल्प-सर्पादिदर्शनाच्च अल्पं भयादि दृश्यते। निरवस्थाकारणत्वे तदुत्कर्षानुविधानं कार्ये न स्यात्, 'नहि ..धत्ते' इति न्यायात्। अद्वैत. १।१८।४४५.

* नहि अगृहीतयोः संबन्धिनोः संबन्धग्रहणं संभवति। रत्नाकर अनुमान श्लो. १४६.

* नहि अनवगतविशेषणो विशिष्टमवगच्छति। कणिका. पृ. ३२५.

* नहि अनुपलम्भमात्रेण नास्तीत्यवगम्य नष्टः इत्येव कल्पयन्ति। भा. २।२।६।२०.

* नहि अन्यार्थात् संनिहितात् अन्यत् संपादयितुं शक्यते। यथा 'भार्या राज्ञः पुरुषो देवदत्तस्य' इति न भार्याविशेषणार्थमुच्चरितेन राज्ञा पुरुषो विशेष्यते। रत्न. ५।३।१।२.

* नहि अयं स्थाणोरपराधो यदेनमन्धो न पश्यति इति न्याय.। स्पष्टार्थः। साहस्री. ४१३.

* नहि अविद्वान् विहितोऽस्ति। ( शाने च याचन नह्यविद्वान् विहितोऽस्ति ३।८।८।१८ ) इत्यनेन न्यायेन यजमानस्येव ऋत्विजामपि अविदुषामनधिकारात्। कौ. ११२।४।३५. * नह्यविद्वान् विहितोऽस्ति इत्यवश्य तावत् अमीषा आत्मीयाः पदार्थाः प्रागेव कर्मभ्य आवगन्तव्याः। तत्र प्रैषः विशेषणन्यायेन अर्थं ज्ञापयितुमशक्नुवन् अदृष्टार्थो भवति। वा. ३।२।४।३१-३ पृ. १४७.

* नहि अशाब्देन शाब्दार्थैकवाक्यता भवति। याज्ञ. पृ. १३०.

* नहि अष्टकृत्वः एक घटमानीय 'मद्गृहे सन्ति अष्टौ घटाः' इति व्यवहरन्ति। वि. १०।९।६.

* नहि अस्ति वचनस्यातिभारः। वि. १।८।२.

* नहि आगमाः सहस्रं ( अपि ) घटं पटयितुमीशते। अतिशस्य यागस्य यावत्कार्यारम्भ भवस्थानमपि सर्वप्रमाणविरुद्धं न परयितुं शक्यम् 'नहि आगमाः' इति न्यायात्। कु २।१।२।१.

* नहि आढ्ये वदान्येऽपि विद्यमाने क्षुत्क्षामो भिक्षुको भिक्षुकान्तरं याचितुमर्हति। ननु देवा-दयितेषु दैवस्यैव विधस्तो न श्वनीयश्च, तस्य स्वयम-र्थकत्वात्। 'नहि आढ्ये॰ मर्हति' इति न्यायात्। सोम ८।१।७.

* 'नहि' इति पदाद्वयो निषेधार्थत्वात्। सु. पृ. १०५६.

* 'नहीश्वरव्याहृतयः कदाचित् पुष्णन्ति लोके विपरीतमर्थम्' इति न्याय.। अयं कालिदासेन कुमारसंभवे ( ३।६३ ) व्यवहृतः। साहस्री. ७२८.

* नहि उपासना वस्तुतत्त्वमपेक्षते किं तर्हि यथावचनमनुष्ठेया इति न्याय.। ब्रैआसा. ३।१।८.

* नहि एकमुदाहरणं योगारम्भं प्रयोजयति इति न्याय.। 'नामि' इति सूत्रे ( पा० ६।४।३ ) महाभाष्ये 'नैकमुदाहरणं ह्रस्वमहर्णं प्रयोजयति' इत्युक्तम्। तच प्रकृतन्यायव्यञ्जक इति ज्ञेयम् )। साहस्री. ४५०.

* नहि एकमेव सविशेषं निर्विशेषं च भवति इति न्याय.। अयं न्याय. अद्वैतकौस्तुभेऽभिहितः। तत्र

हि– 'सत्यकामः सत्यसंकल्पः' 'अस्थूलमनण्वह्रस्वम्' इत्यादुभयविधश्रुतिसंभवादुभयलिङ्गं ब्रह्मेति प्राप्ते, अभिधीयते। नोभयलिङ्गं ब्रह्म, एकस्य वस्तुनो द्वैरूप्यायोगात्। न ह्येकमेव सविशेषं निर्विशेषं च भवतीति युक्त्या इत्युक्तमिति। साहस्री. ७५४.

नहि एकं किञ्चिज्जनकम्, सामग्री वै जनिका इति न्यायस्य अन्यत्र व्यवस्थापितत्वात्। संमतितर्क. भाग १ पृ. १२.

नहि कठोरकण्ठीरवस्य कुरङ्गशावः प्रतिभटो भवति इति न्यायः। कण्ठीरवः सिंहः। कुरङ्गस्य मृगस्य शावः, शिशुरित्यर्थः। प्रतिभटः संमुखयुद्धकर्ता। अयं न्यायो बलवता सह निर्बलो नैव योद्धुं क्षमते इत्यर्थविवक्षया प्रवर्तते। साहस्री. ६७१.

नहि करकङ्कणदर्शनाय आदर्शापेक्षा इति न्यायः। यथा मणिबन्धोर्ध्वं करे स्थितं कङ्कणं प्रत्यक्षेणैव दृश्यते, न तद्दर्शनाय आदर्शापेक्षा। एवं प्रत्यक्षसामग्रीसत्त्वे सत्येव पदार्थप्रतीतिः, नानुमित्यादिसामग्र्यपेक्षेति विवक्षायामस्य प्रवृत्तिरिति। 'नहि करिणि दृष्टे चीत्कारेण तमनुमिमते अनुमातारः' इति वाचस्पतयुक्तमेतन्न्यायमूलकमेव। अनुमित्सायां तु तदपेक्षा, 'प्रत्यक्षपरिकलितमप्यर्थमनुमानेन बुभुत्सन्ते तर्करसिकाः' इति वाचस्पत्युक्तेरिति। साहस्री. ३६१.

'नहि कर्मणि धर्मान्तरारम्भः'। लिङ्गोक्तकामिकाग्नागमानां पञ्चजीवलिङ्गधारणविधायकत्वात् 'नहि कर्मणि' इति न्यायेन नित्योपासनादिपौरन्दरीकान्तश्रौतस्मार्तकर्मणां निरवकाशत्वात्। श्रीकर. १।१।१ अव.

'नहि कल्याणकृत्कश्चिद्दुर्गतिं तात गच्छति' इति न्यायः। अयं भगवद्गीताषष्ठाध्यायचत्वारिंशश्लोकोत्तरार्धरूपः, स्पष्टार्थः। साहस्री. ५०८.

'नहि कश्चित्क्षणमपि जातु तिष्ठत्यकर्मकृत्' इति न्यायः। अयं श्रीमद्भगवद्गीतातृतीयाध्यायपञ्चमश्लोकपूर्वार्धरूपः पातञ्जले न्यायत्वेन व्याहृतः। साहस्री. ७२५. ● 'नहि कश्चित्क्षणमपि जातु तिष्ठत्यकर्मकृत्। कार्यते ह्यवशः कर्म सर्वः प्रकृतिजैर्गुणैः॥' इति स्मृत्युक्तन्यायेन अवशेनापि जीवता पुरुषेण कर्म कर्तव्यमेव। उपदेशसाहस्री पद्य. १।८ रामतीर्थ.

नहि कृतमुपकारं साधवो विस्मरन्ति इति न्यायः। स्पष्टः। साहस्री. ९८१.

नहि क्रियारहितं वाक्यमस्ति इति न्यायेन 'धेनुर्दक्षिणा' इत्यत्र क्रियापदाध्याहारः आवश्यकः। मुरारि. पृ. ११७८.

● नहि गमनसाधनस्य रथस्य चक्रादावङ्गेषु अन्यतमस्य वैकल्ये गमनसाधनत्वं भवति। चि. ६।३।२.

● नहि गुणलोपेऽपि मुख्यो लोपमर्हति। यजमानेष्विषु अग्निहोत्रहवण्यभावेऽपि निर्वापो न लुप्यते। चि. १०।२।२७.

● ०नहि तयोर्धर्मशास्त्राणाम् (६।४।७।९५) इत्येवं सहितयोः (होमाभिचरयोः) निमित्तत्वात्। बा. ३।५। १३।३९.

नहि त्रिपुत्रो द्विपुत्रः (कथने–संग्रहः) इति न्यायः। त्रित्वस्य द्वित्वव्यापकत्वेऽपि वाक्यस्य नातिप्रसञ्जकत्वात् पुत्रत्रयवतः पुत्रद्वयवत्त्वेऽपि न तस्य द्विपुत्रशब्दवाच्यता। न्यूनसंख्यावच्छेदकत्वेन त्रिपुत्रस्य न यथा द्विपुत्रवाचकत्वं तथैव यत्र विवक्षा तत्रास्य प्रवृत्तिरिति। साहस्री. २९.

● नहि दग्धुकामस्य दहनोपादानं भवति इति अनर्थक इति दहनशक्तिमत्त्व नयेत्। भा. ६।१।१।३ पृ. ११५३.

● नहि दुःखरूपं तपो विना दुःखप्रदं पापं नश्यति। यथा पाकमन्तरेण विपच्यमाना नोपशाम्यति। चि. ३।८।४.

नहि दृष्टेऽनुपपन्नं इति न्यायः। नहि प्रत्यक्षविषये प्रमाणान्तरापेक्षमिति यत्र विवक्षा तत्रास्य प्रवृत्तिः। तथाहि– प्रत्यक्षस्य सर्वप्रमाणबाधकत्वात्, अनुपपत्तेरर्थापत्तिरूपतया व्यतिरेकानुमितिरूपतया वा प्रत्यक्षेण बाध्यत्वात् प्रत्यक्षविषये विरोधिन्याः अनुपपत्तेर्न संभव इति। साहस्री. १६०.

* 'नहि दृष्टेऽनुपपन्नं नाम'। लोके राजभृत्योऽपि सर्वजनदत्तधनादिकं स्वद्रव्यवत् परिगृह्य तदन्तर्यामिराजसमर्पणं करोतीति दृष्टम्। श्रीकर ३।२।४० व्यास.

* नहि दृष्टे संभवति अदृष्टकल्पना न्याय्या। बृहती. पृ. २०८.

卐 नहि देवदत्तस्य हन्तरि हते देवदत्तस्य पुनरुन्मज्जनं भवति। 'अतो हलादेः' इति सूत्रे अदुग्रहणस्य न तावत् सप्तक्षरादिकं व्यावर्त्यम्, ल्युग्रहणेनैव निरासात्। इन्–ध्न्–ज्ञान: परस्मैपदेष्वन्ते अचेतीत्, अकोपीत्, अवधीत् इति। तेऽपि अन्तरङ्गेण गुणेनापहृताश्चेत् तर्हि व्यर्थं अदुग्रहणं स्यात्। न च अकुटीत् अपुटीत् इत्यादौ उकारस्योपरागाय तदिति वाच्यम्। तत्रापि अन्तरङ्गेण गुणेन वृद्धिबाधे सति गुणे निषेधविधिनिर्देऽपि वृद्धेरप्रवृत्तेः 'नहि देवदत्तस्य०' इति न्यायात्। शब्दकौस्तुभ. इको गुण.

* नहि निन्दा निन्द्यं निन्दितुं प्रयुज्यते किं तर्हि निन्दितादितरत् प्रशंसितुम्। तत्र न निन्दितस्य प्रतिषेधो गम्यते, किन्तु इतरस्य विधि. (यथा अग्निहोत्रस्य 'उदिते जुहोति, अनुदिते जुहोति' इति कालद्वयस्य प्रत्येकं निन्दा)। भा. २।४।२।२१.

卐 नहि निन्दा निन्द्यं निन्दितुं प्रवर्तते अपि तु विधेयं स्तोतुं इति न्यायः। यथा– तत्तद्विग्रहात्मिकोक्ष्यानादिस्तुतये तदन्यविग्रहाधिक्षेपावकर्षवर्णनं केवलया निन्दाया प्रयोजनाभावान्नुपपत्तौ वाक्यभेदप्रसङ्गाच्च। अवतार्यैतद् स्पष्ट.। अयमभिप्रायः–निन्दाऽर्थवादस्य तदितरस्य प्राशस्त्यविधानार्थमेव प्रवृत्तिर्न तु तस्य निन्दार्थम्, निन्दायां प्रयोजनाभाव इति। एव मीमांसायां लोके च प्रसिद्धमुदाहरणान्तरमन्यत्र ज्ञेयमिति। साहस्री. १५७.

* 'नहि निन्दा० स्तोतुम्' इति न्यायः शाखान्तराधिकरणे प्रसङ्गादुक्तः। वाल पृ ५७. * 'नहि निन्दा० स्तोतुम्' इति न्यायेन 'स्तेन मनः, अनृतवादिनी वाक्' इति निन्दया 'हिरण्यं हस्ते भवति' इति हिरण्यस्य स्तुतिः। कौ. १।२।१।११. * 'नहि निन्दा० स्तोतुम्'। नहि स्तुतिनिन्दे नाम व्यवस्थिते। निन्दारूपासु स्तुतिषु, स्तुतिरूपास्वपि च निन्दासु विपर्ययदर्शनात्। यथा वक्ष्यति 'नहि० ... स्तोतुम्' इति। वा. १।२।१।७ पृ. ११५. * 'अथो खल्वाहुरनाहुतिर्वै जर्तिलाश्च गवेधुकाश्च' इति। दशमे 'अनाहुतिः' इति निन्दया निषेधकल्पना पूर्वपक्षयित्वा 'नहि० स्तोतुम्' इति शाखान्तराधिकरणे प्रसङ्गादुक्तेन न्यायेन 'यत् पयसाऽग्निहोत्रं जुहोति' इति पयोविधिशेषत्वात् न निषेधकल्पना इति सिद्धान्तितम्। वाल. पृ. ५७. * अनाहुतिनिन्दा च नहिनिन्दान्यायेन विधेयगवाश्वस्तुत्यर्था। कौ. १।४।४।२६. * अत्र नहिनिन्दान्यायेन येनानयर्थमार्थोऽसमर्थवाद इति केषाचित् समाधानमसाधु। परिमल. २।१।८।४४ व्यास. * 'अनाहुतिर्वै जर्तिलाश्च' इति निन्दा नहिनिन्दान्यायेन पयोविधिस्तुत्यर्थैव। भाट्ट. १०।८।४. * उदितानुदितहोमस्थले इव नहिनिन्दान्यायेन तत्तच्छ्रुतिस्मृत्यादिपठितशिवप्रसादनिषेधवचनानां अग्निहोत्रादिकर्मस्तुतिपरत्वेन अन्यथासिद्धत्वात् ... । पूर्वोक्तनहिनिन्दान्यायेन निषेधवचनानां तत्र तात्पर्याभावात्। श्रीकर १।२।७ भाष्. * कद्रूनिन्दाऽपि नहिनिन्दान्यायेन विधेयसामस्तुत्यर्थैव। भाट्ट. ९।२।७ पृ. ११२. * पञ्चमप्रयाजे 'अग्न आज्यस्य व्यन्तु इति मन्त्रपाठं विनिन्द्य आज्यस्य हविषो व्यन्तु इत्येव ब्रूयात्' इति कौषीतकिब्राह्मणे (३।४) विधानेऽपि नहिनिन्दान्यायेन विधेयस्तुतिमात्रार्थत्वेन द्वयोरपि सिद्धान्तसिद्धत्वात्। संकर्ष. २।२।१. * विहितजर्तिलादिनिषेधस्य ग्रहणाग्रहणवत् विकल्पार्थत्वात् विकल्पस्य च 'पयसा जुहुयात्' इति द्रव्यान्तरविधानादेव सिद्धेर्निषेधानपेक्षयात् नहिनिन्दान्यायेन पयोविधिस्तुत्यर्थतैव। पराक्रम. ४।१।२. * शाखाऽन्तरे पाथिकृतादेः अविपक्षेन पूर्णमासेन दर्शेन च समानतन्त्रतानिन्दा नहिनिन्दान्यायेन पथिकृत्यादीनां ■ तु समानतन्त्रानिषेधार्था। कु. १।३।७।१२. * श्रुद्रपृथिवीवत्सनिषेधः 'हिरण्यं निधाय चेतव्यम्' इत्यस्य विधेः नहिनिन्दान्यायेन स्तुत्यर्थो नित्यानुवादः वाङ्मनसयोरिव। कौ. १।३।२।१८. * सप्तशती (दुर्गा)-नवशतीमध्ये शाखतीनिन्दावचनं तु उदितानुदितहोमनिन्दाश्रुतिवत् नहिनिन्दान्यायेन नवशतीप्रशंसापरम्।

व्रतराजः. ● 'मेनमीश्वा प्रदह:' इत्यादे: केवलवायुनिन्दायाः नहिनिन्दान्यायेन निशुत्वरवगुणकवायुस्तुत्या तदेकवाक्यत्वम् ('वायवे नियुत्वते आलभेत' इत्यनेनैकवाक्यत्वम्)। सोम. १।२।१ पृ. ५ प १९. ● ('यथापि ज्ञानप्रशंसा भवति अज्ञाननिन्दा च'। १।१७) 'स्थाणुरयं भारहारः किल्माभूदधीत्य वेदं न विजानाति योऽर्थम्' (१।१८) इत्यादि निन्दा तु 'नहिनिन्दान्यायेन' ज्ञानप्रशंसार्था इति निरुक्ते यास्काचार्यैः स्पष्टमेवाभिहितम्। कु. १।२।४।४३ पृ ४८.

● नहि निमन्त्रितो विप्रादिः अभोजितः मंतुष्यति, प्रत्युत शपत्येव। एतदेवाभिप्रेत्य उच्यते 'देवताभ्यो वा एष आवृश्च्यते यो यक्ष्ये इत्युक्त्वा न यजते' इति। वि. १०।१।१ वर्णकं १.

■ नहि प्रतिज्ञामात्रेणार्थसिद्धिः इति न्यायः। यथा प्रतिज्ञामात्रकरणेन प्रतिज्ञातोऽर्थो न सिध्यति, किन्तु प्रमाणान्तरमेवेति भावः। साहस्री १४१.

● नहि प्रत्यक्षदृष्टं मुहूर्तमदृष्ट्वा पुनरुपलभ्यमानं प्रत्यभिजानन्तो विनष्टं परिकल्पयन्ति। भा. १।१।६।२०.

■ नहि प्रत्यक्षविरुद्धं शास्त्रसहस्रेणापि बोधयितुं शक्यं इति न्यायः। यथा न जलादेर्वन्हीत्यत्रनकत्वादिकं बोध्यते इति। साहस्री. ९१२.

■ नहि प्रमाणसत्त्वात् प्रतीयमानं प्रयोजनानुसारेण परित्यक्तुमुचितं इति न्यायः। कु २।२।२ पृ. १५८.

■ 'नहि प्रयोजनापेतं वाक्यमुच्चार्यते क्वचित्। प्रयोजनक्षमं नापि पदमास्यानवर्जितम्॥' (श्लोवा. १।१।७,१४६) नीदाहरणमिदम् (तुटो मी.) यथाश्रुतमादरणीयम्। यतः पदार्थानामपि परस्पर संबन्धः इत्येतावन्मात्रप्रतिपादनपरमिदं भाष्यम्, न तु पारमार्थिकम्। 'नहि०...र्जितम्' इत्यादिवार्तिकप्रदर्शितन्यायात्। अतोऽत्रापि 'आनीयताम्' इत्यादिक्रियापदाध्याहारेणैव वाक्यपूरणम्। वैद्यनाथी. १।१।७।२५ पृ. ९६–९७.

■ नहि प्रियं प्रवक्तुमिच्छन्ति मृषा हितैषिणः इति न्यायः। मारविर्प्रातकरुपोऽयम् (१।२)। साहस्री. ९६०.

● नहि ब्राह्मणविशेषः परिव्राजकादिरब्राह्मणो भवति। मीन्या.

■ नहि भवति कुण्डं बदरं इति न्यायः। आधेयभावे एकाश्रयत्वे वा न सामानाधिकरण्यं नहि भवति कुण्ड बदरमिति। साहस्री. ६९०.

■ 'नहि भिक्षुर्भिक्षुं याचते'। साके प्रस्तावोयस्य अथावाभ्याविकारत्वमेव, तत्र नित्यं सोनाव्यदर्शनात्। द्वादशाहत्वविकारत्वं तु नास्ति 'नहि भिक्षुर्भिक्षुं याचते' इति न्यायात्। वैजयन्ती. २।६।५३.

■ नहि भिक्षुकोऽपि भिक्षुकान्तरं याचितुमर्हतिसत्यन्यस्मिन्नभिक्षुके इति न्यायेन कारकाणि फलं त्यक्त्वा मानमात्रमेवाश्रियन्ति इति मीमांसका मन्यते। भूषणसारः वाक्यर्थनिर्णये का. १७. ● नहि भिक्षुको भिक्षुकं याचितुमर्हति सति अन्यस्मिन् अभिक्षुके इति न्यायः। साहस्री ५८.● 'नहि भिक्षुको भिक्षुकान्तरं याचते' इति न्यायेन शतोक्थ्यादौ तेषुतेषु अद्यतु वाचनिकानि स्तोत्राणि ज्योतिष्टोमस्यान्येव कार्याणि। भाट्ट ८।३।९. ● नहि भिक्षुको भिक्षुकान्तरं याचितुमर्हति सत्यन्यस्मिन्नभिक्षुके। यत्र चोदयत्तिरात्र एवागमनं युक्तम्, न यथातिदिष्टः। 'नहि भिक्षु०... अभिक्षुके'। भामती. ८।३।५।१०–११ प्रघृ. ● उक्थ्यशब्दश्रवणमात्रेण प्रकृत्यनपेक्षज्योतिष्टोमगतानामेव प्रथमप्रतीतिः इति वहिकल्पनैव, न तस्यापेक्षद्वादशाहगतोक्थ्यविकारत्वम्। 'नहि भिक्षुकः' इति न्यायात्। सोम.८।३।९. ● (ज्योतिष्टोमात्) पत्नीसत्त्वानि स्तोत्राणि तत्र पर वैकृतान्यपि आकाङ्क्षितुमर्हन्ति न द्वादशाहात्, 'नहि भिक्षुते॰ अभिक्षुके'। सत्न. ८।३।४।८–९.

■ नहि भिक्षुकाः सन्तीति स्थाल्यो नाधिश्रीयन्ते इति न्यायः। भामती १।१।१ प्रघृ. पृ. ७४.

■ नहि भुञ्जानान् पुनर्भुङ्क्ते इति न्यायः। उक्तभाष्यम् 'इकोऽसवर्णे शाकल्यस्य ह्रस्वश्च' (पा० ६।१।१२७) इतिसूत्रभाष्ये। साहस्री. ४८२.

■ नहि मत्सरीचिसरसी प्रसृता पुष्यति इति न्यायः। अत्र प्रामितिविषयविशेषाभावप्रत्यावृत्तिस्तरः। साहस्री. ९२१.

नहि मृगाः सन्तीति शाक्यो नोप्यन्ते इति न्यायः । भामती. १।१।१ ब्रह्. पृ. ७४

'नहि मृता दग्धा च भार्या पुनः प्रसवायोद्भवति इति न्यायः । प्रमाणतो निवृत्ता प्रमाणतो दग्धा सा अविद्या भूयः पुनः कथं प्रसूयेत नैव । 'नहि मृता॰ द्भवति ' तद्वदित्यर्थः । उपदेशसाहस्री. पद्य १।१८ रामतीर्थ ( 'निवृत्ता सा कथं भूयः प्रसूयेत प्रमाणतः' इति मूलम् ) ।

नहि परघाताय कन्यामुद्वहन्ति इति न्यायः । संग्रहः ॰ नहि परघाताय कन्यावरणं इति न्यायः । संग्रहः ॰ नहि परघाताय कन्योद्वाहः । वि १०।२।३२.

नहि वस्तूनां स्वभावानुसारेण किञ्चिदुपासनं प्रवर्तते, किन्तु वचनानुसारेण इति न्यायः । जैआसा. ३।१।४.

नहि विपाकानन्तरं घटपरीक्षा इति न्यायः । व्यर्थत्वात् इति भावः । साहस्री. ३०९.

नहि शाब्दमशाब्देन ( अन्वेति ) इति न्यायः । इच्छायोग्यत्वस्य मोक्षसाधारणत्वात् तत्रैव विध्यादिविनियोगः कुतो न स्यादिति शङ्कानिरासाय अयं न्यायः प्रवर्तते । साहस्री. २३८.

॰ नहि । 'सत्यम्, नहि कश्चिदत्र दोषः' इति वार्त्तिकम् ( पृ. ९९९ ) । अत्र सुधा 'निषेधार्थे नहि इत्यखण्डं पदम्' इति । पृ. ६०९ । पूर्वपाठे तु 'नहि' इत्यखण्डं पदं इति च । पृ. ६१६.

नहि सर्वः सर्वं जानाति इति न्यायः । साहस्री. ४७८.

नहि सर्वत्रानीशशक्तिः इति न्यायः । अनीशस्य जीवस्य शक्तिः सर्वत्र प्रवर्तते, परिमितत्वात् इत्यर्थः । साहस्री ४७९.

नहि सार्वभौमानन्दमनुभवन्राजा ग्रामाधिपतिसुखं तुच्छमपेक्षते इति न्यायः । अयमधिकृतगुणस्य अस्वसुगत्यादिविरुद्धस्यागतत्तीति । तथा गुणम्– एवं सुगुणैकरसपरमानन्दमनुभवन् नान्यसुखमपेक्षते इति तत्त्वमुक्ताकलापटीकायामिति । साहस्री. ७६०.

नहि सुतीक्ष्णाऽप्यसिधारा स्वयं छेत्तुमाहितव्यापारा इति न्यायः । अथ कर्तारं विना करणस्य कार्याक्षमत्वविवक्षायां प्रवर्तते । साहस्री २२१.

नहि सुशिक्षितोऽपि वटुः स्वस्कन्धमारोढुं पटुः इति न्यायः । आत्माश्रयस्य दोषत्वविवक्षया स्पष्टोऽयम् । साहस्री. २२०

नहि सोपानत्के पादे पुनरप्युपानहं प्रतिमुञ्चति इति न्यायः । साहस्री ८७४.

नहि स्थाल्यानि संपन्नानि इति भुक्तवताऽपि पुनर्भोक्तव्यं इति न्यायः । कल्पतरु. ३।२।२।७ ब्रह्.

नहि स्वयमसिद्धः परं साधयति इति न्यायः । नहि क्रियैव आत्मानं ( क्रिया ) कारयति अनिर्वर्तितायाः स्वरूपाभावात् इति । उपदेशसाहस्री. गद्य. १०५.

नहि स्वल्पो दोषः अमितगुणाभिभावक इति न्यायः । साहस्री ७००.

नहि स्वस्कन्धं स्वयमारोढुं शक्नोति इति न्यायः । यत्र तु एकस्यैव कर्तृकर्मभावो लोकशास्त्रविरुद्धः प्रतीयते, तत्रायं प्रवर्तते इति । साहस्री. ५२३.

अवान्तरप्रकरणादेव निविशमानपि सामिधेन्यङ्गत्वात् न व्यवधायकत्वम् 'नहि स्वाङ्गं स्वव्यवधायकम्' इति न्यायात् । कु. ३।१।११।२१ अवतरणे, ॰ अस्तु वा प्रत्यन्तरपूर्वम्, तथापि व्यापारत्वेन यागस्य साधनत्वं न तत् ( अपूर्वे ) व्याहन्तुमीष्टे 'नहि स्वाङ्गं स्वव्यवधायकम्' इति न्यायात् । २।१।२।३.

'नहि हस्तिनि दृष्टेऽपि तत्पदेनानुमेयता' ( अनुमा इष्यते । इति न्यायः ) । 'प्रत्यक्षे भूयमाणे तु न विद्यानुमानिकम् ।' इति पूर्वार्धम् । वा. १।३।२।३ पृ. १७२.

[ इत परं नञ्शब्दारब्धसामासिकपदघटिता नञारब्धाश्च सुप्सिद्धान्तादयो निवेश्यन्ते । ]

॰ नकारोऽयं निवृत्तिं ब्रवीति । सा च प्रवृत्तिमन्तरेण न संभवति । सा सामान्यशास्त्रेण वा भवेत् विशेषशास्त्रेण वा । टुप्. १०।८।१।१ पृ. २०५७

॰ नक्षत्रं क्रतुं च न प्रतीक्षेत यदि आधानसमनन्तरं सोमेन यक्ष्यमाणः स्यात् । ५।४।३।६ । प्रतीक्षा-

मार्गोऽयं भाषान्तविषयकः— अधानस्य ऋक्चादि न गतीक्षेत इति सूत्रकारभाष्यकारौ । सोमविषयकः— सोमस्य ऋत्वादि न प्रतीक्षेत, इति वार्तिक तन्त्ररत्न च । के. ॥ नक्षत्राणि आकाशे दृश्यमानानि । नक्षत्रेष्टिवाक्यशेषे अभिहितम् 'ये हि जनाः पुण्यकृतः स्वर्गे लोके यन्ति तेषामेतानि ज्योतींषि यन्नक्षत्राणि' इति । पा. ३।१।७।१३ पृ. ७०२.

॥ नक्षत्रेष्टिषु ( नक्षत्रसत्रे ) प्रधानोत्तरं नारिष्ठहोमाः कर्तव्याः, यतः 'अग्नये स्वाहा कृत्तिकाभ्यः स्वाहा' इत्यादयः उपहोमाः कर्तव्याः ( न तु प्राक्तनतर्पणान्ते इति मीमांसाविशेषात् । नारिष्ठहोमाद् कृत्वा नारिष्ठहोमान् कुर्वन्ति । के. ५।२।१।१७–१९.

● नक्षत्रेष्टयादौ उपरिष्टैरुपहोमादिभिः अतिदेशिकानां नारिष्ठहोमादीनां समुच्चयः । भा. १०।४।१।१–२.

● नक्षत्रेष्टयुपहोमन्यायः । उपहोमन्यायः द्रष्टव्यः । भा. ५।२।१।१७–२०.

● नक्षत्रेष्टिन्यायः । नक्षत्रेष्टयुपहोमन्याय । उपहोमन्यायः । ( ५।२।१।१७–२० ) दीक्षणीयायां नारिष्ठहोमात् प्राक्तनतर्पणं नक्षत्रेष्टयुपहोमन्यायात् इति पूर्वपक्षे । सू. ५।२।११।२२.

● नक्षत्रसत्रे प्रधानहोमाः 'अग्निर्नः पातु कृत्तिकाः' इत्यादिवाक्यानुवाक्यापुरःसर हूयन्ते । वि. ५।२।९.

● नखेषु प्रकृतोत्पत्त्यनुप्रकधर्मः प्रोक्षणं भवति राजसूये नैर्ऋते चरौ । भा. ९।२।११।४°. ● 'कृष्णानां व्रीहीणां नखनिर्भिन्नानाम्' इति नैर्ऋते चरौ । तत्र नखेषु प्रोक्षणोऽस्ति । वि. ९।१।२.

● नखावपूतानां नैर्ऋतश्चरुः राजसूये रविकृष्टे गृहे । भा. ९।२।११।२।४०.

● नखनिकृन्तनं ज्योतिष्टोमे यजमानसंस्कारः । भा. ३।८।२।३–८, ● नखनिकृन्तनं ( ज्योतिष्टोमे ) संस्कारः, न फलप्रयुक्तः, तत्र फलश्रुतिरर्थवादः तथा फलवर्जम् । ४।३।१।३–४.

○ नगरं नैयायानं नाम । भा. ११।४।३।१–९.

● नद्दृश्यति इत्यत्र नाशो भावार्थः । वर्तमानप्रागभावप्रतियोग्युत्पत्तिकत्वरूपं भविष्यत्वं प्रतियोगितासंबन्धेन धात्वर्थे अन्वेति । तेन वर्तमानप्रागभावप्रतियोग्युत्पत्तिकघटाधिकरणकनाशप्रतियोगी घटः इति बोधः । इति शिरोमणिः । मणि. पृ. २८.

※ नटाङ्गनान्यायः । यथा रङ्गभूमौ आगता नटमार्या योषा नटः पृच्छति कस्य भार्याऽसि मुखोमि, सा तं प्रति तवैवेति वदतीति प्रसिद्धम् । अथम् 'अजादेः द्वितीयस्य' ( पा० ६।१।२२ ) इतिसूत्रमहाभाष्येऽभिहित । तद्यथा— 'व्यञ्जनानि पुनः नटभार्यावद्भवन्तीति । यथा नटानां स्त्रियो रङ्गगता योषा पृच्छति कस्य यूयं कस्य यूयमिति तं तवतवेत्याहुः, एवं व्यञ्जनान्यपि यस्यपस्याऽचः कार्यमुच्यते तं तं भजन्ते' इति । साहस्री. ३७०.

※ नद्यवनोदकं पादरोगः इति न्यायः । पादरोगनिमित्तमिति गम्यते । साहस्री. १९५

※ नदीक्षिताधिकरणम् । ज्योतिष्टोमे 'दीक्षितो न ददाति' इत्यादिवाक्यं पुरुषार्थदानादेः प्रतिषेधकं पर्युदासो वा ॥

दीक्षितस्य दानहोमपाकप्रतिषेधोऽविशेषात् सर्वदानहोमपाकप्रतिषेधः स्यात् । १०।८।७।१२ ॥

भाष्यम्— ज्योतिष्टोमे श्रूयते 'दीक्षितो न ददाति, न जुहोति, न पचति' इति । अत्रैषोऽर्थः सांशयिकः किं सर्वदानहोमपाकानां प्रतिषेधः, उत अक्रतुयुक्तानाम्, अथवा क्रतुयुक्तानामपि चोदकप्राप्तानां प्रतिषेधः अपरा पर्युदास इति । किं प्राप्तम् ? सर्वदानहोमपाकानां प्रतिषेधः । कुतः ? अविशेषात् । नास्ति विशेषवचनः शब्दः । तस्मात् सर्वेषां प्रतिषेध इति ।

अक्रतुयुक्तानां वा धर्मः स्यात्, क्रतोः प्रत्यक्षशिष्टत्वात् । १३ ॥

भाष्यम्— वाशब्दः पक्षं व्यावर्तयति । न सर्वेषां प्रतिषेधः । केषां तर्हि ? अक्रतुयुक्तानां धर्मः स्यात् । कुतः ? क्रतोः प्रत्यक्षशिष्टत्वात् । प्रत्यक्ष हि क्रतौ दानादीनां शासनमस्ति । तस्मात् प्रत्यक्षं सर्वेषां प्रतिषेधः स्यात् ।

तस्य वाऽप्यानुमानिकमविशेषात् ॥ १४ ॥

भाष्यम्— अपिवा तस्य क्रतोर्यदानुमानिकं चोदक प्राप्तम्, तत् प्रतिषिध्यते । आनुमानिकं हि तद् न प्रत्यक्षम् । प्रत्यक्षश्रुतश्च प्रतिषेधः ।

अपितु वाक्यशेषत्वादितरपर्युदासः स्यात्, प्रतिषेधे विकल्पः स्यात् ॥ १५ ॥

भाष्यम्— ( अपि— ) तुशब्दोऽयमालोचकम् । वाक्यशेषः स्यात् प्रतिषेधः । उक्तानामविशेषेण दानादीनां ज्योतिष्टोमिकपर्युदासेन प्रतिषेधो वाक्यशेषः स्यात् । 'अहरहर्दद्यात्' इत्यस्य शेषः 'न दीक्षितः' इति । एवं होमवाक्ययोरपि । अमति पर्युदासे, प्रतिषेधे विकल्पः स्यात् । स चान्याय्यः इत्युक्तम् । तस्मात् पर्युदास इति ।

शा— सूत्रभाष्यकाराभ्यां पर्युदासोऽभ्युक्तम् । वस्तुतस्तु लक्षणापरिहाराय पर्युदासपक्षं परित्यज्य श्रुत्यर्थानुगुण्याय प्रतिषेधत्वमेव अङ्गीकृत्य, क्रत्वर्थप्रतिषेधे विकल्पप्रसङ्गात् पुरुषार्थानामेव ( दानपाकहोमानाम् ) प्रतिषेधः क्रत्वङ्गतया विधीयते इत्येतदेव समञ्जसम् ।

सोम— पूर्ववत् विकल्पः इत्युत्थितेः संगतिः । प्राभाकरैस्तु पुरुषार्थानामपि न प्रतिषेधः विकल्पप्रसङ्गात् किन्तु पर्युदास इति सिद्धान्तितम् ।

चि— 'दीक्षितो न ददातीति प्राप्तं सर्वं निषिध्यते । अनिर्दिष्टे पुमर्थे वा पुमर्थे वो, ( वा व ) क्रतोऽपि वा ॥ उपदेशार्थवत्त्वाय मध्यमो, ऽन्त्यस्तु संमितः । एकवाक्यत्वलोभश्चेत् पुमर्थं पर्युदस्यताम् ॥'

भाट्ट— ज्योतिष्टोमे 'दीक्षितो न ददाति न जुहोति न पचति' इत्यादि श्रुतम् । तत्र किमयं सर्वेषामेव पुरुषार्थानां क्रत्वर्थानां चोपदिष्टानामनिर्दिष्टानां च होमादीनां प्रतिषेधः पर्युदासो वा, उतोपदिष्टवर्जं सर्वेषाम्, उत पुरुषार्थानामेव अग्निहोत्रहोमादीनाम् । इति चिन्तायाम्, अविशेषात् सर्वेषामेवेति प्राप्तौ विकल्पप्रसङ्गात् आदत्यविहितानां ग्रहादिहोमानां प्रतिषेधपर्युदासयोः अनुपपत्तेः तद्वर्जं सर्वेषामेव पर्युदासः, प्रतिषेधे विकल्पापत्तेः । इति प्राप्ते, ज्योतिष्टोमस्य अपूर्वत्वेन तत्रातिदेशिकहोमानामभावात्, पदकभूतोद्दिष्टहोमस्य अन्यातिदेशिकानां च

'न सोमे' इतिवत् प्रतिषेधपर्युदासानुपपत्तेः, कथञ्चित् प्रसक्तावपि वा प्रतिषेधविकल्पापत्तेः, पर्युदासाङ्गीकारे च लक्षणाप्रसङ्गात् पुरुषार्थानामेव अग्निहोत्रादीनां प्रतिषेधः । न च तत्राऽपि विकल्पापत्तिः, पुरुषार्थत्वेन प्राप्तानां क्रत्वर्थत्वेन प्रतिषेधात्, भिन्नविषयत्वेन विकल्पानापत्तेः । यत्र हि एकार्थावेव विधिप्रतिषेधौ यथा 'न तौ पशौ करोति' इत्यादौ, तत्र विकल्पः । यत्र तु पुरुषार्थो विधिः क्रत्वर्थो निषेधः, यथा स्त्रीगमनमांसभक्षणादेः पुरुषार्थः स्मार्तो विधिः, क्रत्वर्थश्च श्रौतः प्रतिषेधः, न च तत्र विकल्पः । तदुक्तं प्रकृतेऽपीति पार्थसारथिः । प्रकरणान्तराधिकरणादौ वार्तिकस्वरसोऽप्येवम् । वस्तुतस्तु— सामान्यतः पुरुषार्थतया प्राप्तस्यापि दीक्षितपुरस्कारेण क्रत्वर्थतया प्रतिषेधोऽपि तेन रूपेण यदि नैव प्राप्तिः, तदा प्रतियोगिप्रसिद्ध्यभावादेव न प्रतिषेधः । यदि तु तद्रूपे प्राप्त्यङ्गीकारः, तदा तस्याः शास्त्रीयत्वावश्यम्भावात् 'न तौ पशौ करोति' इत्यादिवत् विकल्पो दुरुद्धर एव । न च मांसभक्षणादिप्रतिषेधतुल्यत्वम्, मांसभक्षणे तावत् यत्र श्राद्धेऽभक्षणादौ विधिः, तत्र विहिते निषेधाप्रवृत्तेनैव निषेधः, तस्य रागप्राप्तमांसभक्षणविषयत्वेनापि उपपत्तेः । यत्तु श्राद्धे 'देवान् पितॄन् समभ्यर्च्य खादन् मांसं न दोषभाक्' इत्यादौ च मांसभक्षणविधिः, सोऽप्यनुज्ञाविधिमात्रम्, न तु अत्र मांसभक्षणस्य वस्तुतो वैधता । श्राद्धेऽपि रागप्राप्तस्यैव अभ्युदयः । भोक्तृस्तु महाश्राद्धभोजनवत् राग एव प्रवृत्तिः । अतो क्वापि विहितमांसभक्षणप्रतिषेधाभावात् न तत्र विकल्पप्रसक्तिः । स्त्रीगमने तु यद्यपि 'ऋतौ भार्यामुपेयात्' इत्यत्र ऋतुविशिष्टभार्यागमनस्यैव विधिः, न तु रागप्राप्तभार्यागमनमनूद्य तेन कालमात्रविधिः, 'ऋतुस्नातां तु यो भार्यां संनिधौ नोपगच्छति' इति अगमने निन्दाश्रवणात्, तथापि गुणभूतकालानुरोधेन प्रधानभूतगमनावृत्तेः अन्याय्यत्वात् षोडशदिनात्मकऋतुकालमध्ये सकृदेकस्मिन् कस्मिंश्चिद्दिने त्रिषु वा दिनेषु गमनविधानेऽपि अनुदिनीयप्रवृत्तेः ऐच्छिकत्वात्, तस्याः क्रत्वर्थनिषेधेन निषेधेऽपि न विकल्पप्रसक्तिः । अत एव दैवादिना पञ्चदशदिनपर्यन्तमगमने दोषोऽस्ति

क्रतुप्रसक्तौ पुरुषार्थत्वात् गमनमेव क्रत्वर्थनिषेधोल्लङ्घनेनापि कार्यमिति धर्मशास्त्रविदः। सर्वथा यत्किञ्चिद्वैधनिषेधे विकल्प एवेति, प्रकृतेऽपि विकल्पप्रसङ्गो दुरुद्धरः।

किञ्च, एवं यावज्जीववाक्येन दीक्षितस्यापि अग्निहोत्राकरणे प्रत्यवायबोधनात् क्रतुमध्ये तेनाकरणेऽपि प्रत्यवायपरिहारार्थं प्रायश्चित्तप्रतिहोमयोरापत्तिः। एतेन वैधक्रियानिषेधविकल्पः न तु तत्कारकनिषेधेऽपि। अत एव 'रात्रौ श्राद्धं न कुर्वीत' इत्यादौ श्राद्धानुवादेन रात्र्यधिकरणनिषेधेऽपि न विकल्पः। अतः प्रकृतेऽपि अग्निहोत्राद्यनुवादेन दीक्षितकर्तृनिषेधः क्रत्वर्थतया विधीयते इति कारकनिषेधान्न विकल्प इति केषाञ्चिदुक्तं अपास्तम्। एवमपि दीक्षितस्य प्रतिहोमाद्यापत्तेरनिवारणात्। किञ्च, कारकस्यापि दीक्षितादेर्नेच्छातः प्राप्तिः, अपि तु वैधी। अतस्तत्रापि विकल्पापत्तिरनिवार्यैव। अत एव यत्र कारकस्य शास्त्रदेशक्षेपतो यत्र कस्यचिदनियता प्राप्तिः, तत्र रात्रिविषये प्रवृत्तेः ऐच्छिकत्वात् तन्निषेधेऽपि न विकल्प इत्युक्तं सूरिभिः। यत्र तु कारकस्यापि दीक्षितादेः अदीक्षितसाधारण्येन समुच्चयेनैव वा यावज्जीवादिवाक्यतः प्राप्तिः, तत्र तत्प्राप्तेर्वैधत्वावश्यम्भावात् क्रत्वर्थे पुरुषार्थे एव वा तन्निषेधे विकल्पो दुष्परिहार एव। यदि चैवं नेष्यते, तदा यजनानुवादेन होतृरूपस्य कर्मकारकस्यैव निषेधात् तत्रापि विकल्पानापत्तिः। किञ्च, एवं नञर्थस्य न तावत् पुरुषविशेषणता, आख्यातार्थमुख्यविशेष्यकत्वस्यैव सिद्धान्तात्। नापि दीक्षितादौ प्रतियोगितासम्बन्धेनान्वयः, तस्य आख्यातातिरिक्तान्वये पर्युदासत्वापत्तेः। नापि दीक्षितप्रतियोगिकाभावस्य विधेयतया कृत्यन्वयः, अभावस्य कृतिविषयत्वानुपपत्तेः। अत एवमादिस्थले सर्वत्र दीक्षितकर्तृकाग्निहोत्रादिकृतिरेव अभावप्रतियोगिनी वाच्या। अतश्च विशिष्टक्रियानिषेधः एवायम्, फलतो विशेषणविषयत्वात्तु कारकनिषेधः इत्युच्यते। तत्र च कारकस्य नियतप्राप्तौ विकल्पः, अनियतप्राप्तौ तु ऐच्छिकत्वादेवेति विवेकः। अतः कथमपि प्रतिषेधे विकल्पस्य परिहर्तुमशक्यत्वात् सूत्रभाष्यन्यायसुधाकारादिमतेः पर्युदास एवायम्। न च दूरस्थैरपि अग्निहोत्रादिविधिभिर्वाक्यैकवाक्यतामभ्युपगम्य 'न दीक्षितोऽग्निहोत्रं जुहोति' इत्येवंरूपः। न तु संनिहितैरपि इष्टिपशुप्रकृतिवचनैः एकवाक्यतामङ्गीकृत्य होमादिवर्जं प्रकृतिवत् इत्येवंरूपः। तथात्वे होमत्वस्य भेदप्रतियोगितावच्छेदकस्य औपदेशिकहोमसाधारण्येन तेषामपि पर्युदासे निवेशस्य अनिवार्यत्वात्। आतिदेशिकहोमत्वे लक्षणाऽऽपत्तेः। अस्मन्मते तु होमत्वसामानाधिकरण्येन दीक्षितनिराकाङ्क्षत्वे सिद्धे, दीक्षितमात्रपुरस्कारेण होमाः प्रामाणिकाः तद्विधहोममादाय तत् (निषेधवाक्यं) पर्यवस्यति, इति न लक्षणा। न च मन्मतेऽपि 'घटमिह गृहस्थमानय' इत्यादौ घटस्य गृहस्थत्वप्रतीतिवत् होमधर्मप्रकृतिवत् कुर्यादित्युक्ते प्राकृतहोमत्वस्यैव प्रतियोगितावच्छेदकत्वप्रतीतेर्न लक्षणा इति वाच्यम्, तथापि दीक्षितपदश्रवणेन दीक्षितकर्तृकप्राकृतहोमत्वस्यैव प्रतियोगितावच्छेदकत्वापत्तेः, तादृशस्य चाप्रसिद्धतया निरुक्तपर्युदासानुपपत्तेः। न च दीक्षितकर्तृकत्वस्य प्रतियोगितावच्छेदककोटिप्रवेशानङ्गीकारात् प्राकृतहोमत्वस्यैव तदङ्गीकारेण प्राकृतहोमविधेयोद्देशेन दीक्षितकर्तृविधिः प्राकृतहोमादिषु तत्परिशेषपालको न विरुध्यते इति वाच्यम्। तथात्वे प्राकृतहोमादिभिन्नपदार्थेषु प्रयोजककर्तृतया दीक्षितप्राप्तावपि अध्वर्य्वादित्वेन साक्षात्कर्तृत्वेन प्रतिप्रसवविधेरेवापत्तेः। प्राकृतहोमेषु च आध्वर्यवादीनामेव कर्तृत्वसिद्ध्यर्थं पर्युदासोपपत्तेर्न होमपरिसंख्यापत्तिः। न चेष्टापत्तिः। तथात्वे 'एतया पुनराधेयसंमितया इष्ट्वा इष्ट्वा अग्निहोत्रं जुहोति' इति विधौ प्रकरणान्तरन्यायेन कर्मान्तरत्वापत्तेः कालविशिष्टकर्मान्तरविधाने गौरवापत्तेः। अतो विकल्पभिया निषेधे निवृत्ते पुरुषार्थाग्निहोत्राद्यनुवादेन अदीक्षिताधिकारकत्वस्यैव विधानरूपः पर्युदासः। तदा च पर्युदसनीयत्वेनोपस्थितत्वात् अग्निहोत्रस्य प्रकरणान्तरन्यायासंभवेन कर्मान्तरत्वानुपपत्तेः, तस्यैव अवभृथोत्तरं कर्मप्राप्तौ अवश्यं कालमात्रविधाने लाघवम्। अत एव अग्निहोत्राद्यकर्तृविधिः ज्योतिष्टोमप्रकरणे एतत्प्रयोजनक एव। अत एव दीक्षादशायां अग्निहोत्रहोमस्य न प्रतिहोमः इत्युक्तम्।

मण्डन — ' पर्युदासेऽन्यता भवेत् ।'

शंकर— ' दीक्षिते पर्युदासाः स्यु ।' ८. ' निषेधा इति केचन ।' ९.

* नदीक्षिताधिकरणम् । ( १०।८।७।१२–१५ )। यदि च ' विकल्पप्रसक्त्यभावेऽपि प्रदेशान्तरस्थवाक्यदोषमात्रेण तदन्वयादपि विकल्पः पापीयान् ' इति न्यायव्युत्पादनार्थे नदीक्षिताधिकरणं स्यात् तदा ..। परिमल १।१।१५।२६ मसू.

※ नद्यम्बुवेगन्यायः । अत्र श्रीमद्भगवद्गीतावाक्यं विवृतः । तथाहि , ' यथा नदीनां बहवोऽम्बुवेगाः समुद्रमेवाभिमुखा द्रवन्ति । तथा तवामी नरलोकवीरा विशन्ति वक्त्राण्यभिविज्वलन्ति ॥ ' इति । साहस्री. ९२८.

* नदीतरणार्थो मन्त्रः ' देवीराप ०' इति । यदा अनेकस्रोतसं नदीं तरति , तदा मन्त्रस्य नावृत्तिः, किन्तु आदौ एव सकृन्मन्त्र. । ज्योतिष्टोमे । के ११।४।१७।१०.

* नदीसमुद्रदृष्टान्तेन जीवभावनिवृत्तिपूर्वकशिवप्राप्तिरेव स्पष्टमुपदिष्टत्वात् । श्रीकर ३।२।३१ मसू.

※ नदीसमुद्रन्यायः । अयं मगी. ८।८ कोष्टीकाया नीलकण्ठेनोदाहृत । तथाहि , अहमेव भगवान् सर्वात्मा वासुदेव इति सततमात्मोपदेशं अनुध्यायन् तमेव नदीसमुद्रन्यायेन याति । हे पार्थ , तथा च श्रुति ' यथा नद्यः स्यन्दमानाः समुद्रेऽस्तं गच्छन्ति नामरूपे विहाय । तथा विद्वान् पुण्यपापे विधूय परात्परं पुरुषमुपैति दिव्यम् ॥ ' इत्युक्तम् । साहस्री ९१६ * नदीसमुद्रन्याय. । यथा नदी समुद्रश्च भिन्नौ , तथा जीवेश्वरौ भिन्नौ । साहस्री. ८१८. * नदीसमुद्रन्यायेन पुण्ये काले विलीयन्ते । न्यायलि. ४।२।८ मन्. * अमूर्तशिवज्ञाननिष्ठाना इहैव शरीरे शिवज्ञानसामर्थ्येन पाशरूपाविद्यापटलं छित्वा नदीसमुद्रवदनिभागेन शिवसायुज्यमुक्तिर्लभ्यते । श्रीकर. ४।१।१६ मसू . * आत्मपरमात्मनोर्जीवब्रह्मणोर्नदीसमुद्रवत् परस्परसत्तामात्रभेदसत्त्वेऽपि मोक्षदशायां प्राप्यप्रापकत्वेन भेदाभेदव्यपदेशश्च तदैव युक्तम् । १।२।२६ मसू., * संसारदशायां नदीसमुद्रवत् स्वाभाविकजीवभावनिवृत्तिपूर्वकपरतत्त्वप्राप्तिः । ४।४।१३ मसू.

※ ननु वस्तुविशेषनिस्पृहा गुणगृह्या वचने विपश्चितः इति न्यायः । इति भारविः २।५ । साहस्री. ९६३.

* नन्दान्तं क्षत्रियकुलं इत्यादिः पौराणव्यवहारः । मणि पृ. ४७.

* नपुंसकं स्त्री पुमान् इति द्रव्यविशेषा वेदे । भा. ३।१।६।१२ पृ. ६८१. * अर्थविकारानुवृत्तसत्त्वरजस्तमोगुणानुगतगुण समानाग्र्यं स्थितिलक्षितं नपुंसकलिङ्गं इति शाब्दिकमर्यादा । पराक्रमः. ६०।२.

* नवनस्य एकत्वयन्थाः अथाभ्यञ्जनादि न प्रयोजक ज्योतिष्टोमे । के. ४।११।१०।२५.

※ ' स्वमपीको भवति ' इति हि स्वरूपसंबन्धमेनमामनन्ति । स्वरूपसंबन्धस्य च अनपायित्वात् नरत्वगार न्यायेन संबन्धो घटते । शाभा. ३।२।२५ मसू.

* नरकपरिहारार्थोऽयं प्रतिषेधः ' यो ब्राह्मणायागुरेत् ०' इत्यादिः । स च पुरुषगत एव नरकावः संकीर्तितः , न तु क्रतुगतः । शा. ३।४।६।१७.

* नरकप्राप्तिः अनृतवदनात् भवति । ' नानृतं वदेत् ' इत्यनेन प्रतिषेधात् । शा. ३।८।८।१३ पृ. ९११.

* नरसिंहवत् । ' अथवा नैव मिथेते भागहोमौ परस्परम् । पूर्वापरौ हि सदृशौ भागौ नरसिंहवत् ॥ ' शा. ३।४।१४।४ ' पृ. ९८३ । नरसिंहाख्यस्य एकस्यांशस्य पूर्वापरौ भागौ मनुष्यसिंहाकारौ सदृशौ भेदभ्रान्तिं कुरुत. । सु. पृ. १५३७.

* ' नर्मदोत्तरभागे तु कर्तव्यं सिंहकर्कटे । कूर्मीरे उत्थिते भागावुपकुर्यात्तु दक्षिणे ॥ ' बृहस्पतिः । इयं देशतः कालनिष्ठा व्यवस्था स्मार्ती । बाल. पृ. १८.

* नलस्य दमयन्ती ( पत्नी ) । शा. ३।८।१।९ पृ. ८९५.

* ' नव त्रिवृन्त्यहानि भवन्ति ' इति । अत्र चोदकप्राप्तानां द्वादशाहिकानां नानाऽहां निवृत्ता विधीयते , न तु प्रथमस्य त्रिवृतोऽभ्यासोऽभ्यासः । भा. ८।१।२।३–५.

* नवान्नप्रथमप्राशनप्रयोगविशिष्टवसन्तादिकालजीवित्वस्यैव आग्रयणाधिकारित्वाऽवच्छेदकत्वेन मुमुक्षादेः

तद्घटकत्वे मानाभावात् इष्टिपरिमितनवान्नाभेऽपि अप्रतिहतोऽधिकारः । संकर्ष. ३।१।२४.

☞ **नववैधव्यमसह्यवेदनमिति न्यायः** । असह्या दुःसहा वेदना यस्मिन् तत्तथोक्तम् । विधवाया मृतभर्तृकाया भावो वैधव्यम् । नवं च तद्वैधव्यं चेति नववैधव्यम् । नवग्रहणं तु महत्त्वद्योतनार्थम् । अन्यत् स्पष्टमिति । साहस्री. ९५.१.

* 'नवनीतमाज्यं भवति' इति प्राकृतं कार्यं लक्ष्यते प्रकृतिलिङ्गेन द्रव्यशब्देन । भा. १२।३।२।८. * नवनीतं ज्योतिष्टोमे दीक्षार्थाभ्यङ्गे । तत्स्तुतये च 'घृतं देवानाम्, मस्तु पितॄणाम्, निष्पक्वं मनुष्याणाम्' इत्यनुवादः । वि. ३।४।७. * नवनीतेन अभ्यञ्जनं दीक्षाकाले सुखप्रचाराय स्नेहनार्थम् । भा. १०।४।६।१२, * नवनीतेन । यथा 'नावनीतेन अभ्यङ्क्ते' इति अचिरनिर्दग्धेनेति गम्यते । (सर्वघृतानां च नवनीतविकारत्वात् पुनःश्रुतेः अचिरनिर्दग्धनवनीतार्थता स्यात् । वा. ) । १।४।९।१२ पृ ३४५.

* **नवनीताभ्यञ्जनस्य** प्राकृतस्य आञ्जनाभ्यञ्जनावयवत्वोपदिष्टगोगुग्गुलवाभ्यञ्जनादिना समुच्चयः । भा १०।४।६।१०–१२.

■ नवमे अध्याये ऊहलक्षणं वर्णयिष्याम. । त्रिविधः ऊहः: मन्त्रसामसंस्कारविषयः, स इह प्राधान्येन वक्ष्यते । अन्यदपि किञ्चित् उपोद्घातेन प्रसङ्गेन च । (उपकारातिदेशे सति ऊहोऽवकल्पते । शास्त्रातिदेशे सति ऊहाभावः )। भा. ९।१।१।१ पृ. १६३९ । 'ऊहस्तन्त्रोऽत्र साम्नोऽपि मन्त्रोहश्च प्रसङ्गतः । नवमाध्यायपादेषु चतुर्ष्वेते प्रकीर्तिताः ॥' नवमाध्यायस्य प्रथमे पादे उपोद्घातपूर्वकमूहविचारारम्भः । तत्र प्रधानादयो धर्मा अपूर्वप्रयुक्ताः । अवघातमन्त्रादिषु अविवक्षितं व्रीह्यादिस्वरूपं साधनविशेषलक्षणमात्रं विवक्षितमित्यादिरुपोद्घातः । अविकृतिप्रकृतिकानां विकृतिषु नास्त्यूहः । अग्निशब्दस्य अत्यूहः, इत्यादिकः ऊहविचारारम्भः । द्वितीये सपरिकर. सामोहः । तृतीये मन्त्रोहः । चतुर्थे मन्त्रोहप्रसङ्गागतो विचारः । वि. प्रस्तावना श्लो. २१. * नवमे अध्याये प्रथमेऽधिकरणे 'सन्निपत्योपकारका ये धर्माः तेऽपि अपूर्वार्था इति प्रतिपाद्यते ऊहसिद्धये' । वा. ९।१।१।१ पृ. १६३८. * नवमे (९।४।११) अभ्युदयेष्टौ (पशुसमेष्टौ) इज्यार्थत्वेन अपणानह्रभूतयोरपि दधिपयसोः प्रणीतास्थानापत्त्या प्रणीताधर्मप्राप्तिः स्थापिता । बाल. पृ. १६९.

* **नवमाधिकरणपूर्वपक्षन्यायेन** मन्त्रादेः यज्ञभागधर्मता अवगम्यते । सु पृ. ११८२.

* **नवमाद्यन्यायेन** धर्मस्य कार्यप्रयुक्तत्वात् । सु. पृ. १३७९, * नवमाद्यन्यायेन मन्त्राणामपि अपूर्वगुणत्वावगतेः । पृ. १२५६. * नवमाद्यन्यायेन (व्रीहीन् प्रोक्षति इति) व्रीहिस्वरूपे आनर्थक्यापत्तेः अपूर्वसाधनत्वलक्षणाया आवश्यकत्वात् । कौ. ३।१।४।८ पृ. १४४. * पात्रप्रोक्षणविधिनैव उलूखलमुसलयोरपि प्रोक्षणं प्राप्तम्, तत्तु पूर्वाधिकरणन्यायेनैव नवमाद्येन उलूखलमुसलनिष्ठापूर्वसाधनत्वप्रयुक्तम् । भाट्ट. ९।१।२.

* नवरात्रे चयनाग्निः कर्तुं शक्यते । भा. १०।८।११।२३.

* नशब्दः प्रथमेऽधिकरणे (१०।८।१) पर्युदासार्थः (महापितृयज्ञे 'न होतारं वृणीते नार्षेयम्' 'नानुयाजेषु' इत्यत्र) । द्वितीये तु अर्थवादार्थः ('न तौ–आज्यभागौ–पशौ करोति न सोमे' इत्यत्र) । अथ क्रियमाणः प्रतिषेधः इति । (तृतीये अधिकरणे नञ्शब्दः 'नातिरात्रे षोडशिनं गृह्णाति' इत्यत्र प्रतिषेधार्थः. ) । भा. १०।८।३।५, * निषेधो हि अस्य 'नञ्शब्दस्य' सुबन्तेनैकार्थ्येन समासः इति वार्तिककारो भगवान् कात्यायनो मन्यते स्म । 'वावचनानर्थक्यं च स्वभावसिद्धत्वात्' इति । नेति भगवान् पाणिनिः । स हि 'विभाषा' इति प्रकृत्य ईदृशं समासमुक्तवान् । सद्वादित्वाय पाणिनेर्वचनं प्रमाणम्, असद्वादित्वाय कात्यायनस्य । १०।८।१।४ पृ २०६१.

* 'नश्यति' इत्यत्र दर्शनाभावरूपत्वमेव वाच्यम् । मणि. पृ १०२.

☞ **नष्टाश्वदग्धरथन्यायः** । यथा द्वौ रथिनौ कश्चित् ग्रामं प्रविश्य रथाश्वमरतीयं अश्वौ च ताभ्यां मोचयित्वा स्वाभीष्टग्रहणादौ निविष्टौ। ततो दैवेन अग्निना

भाट्ट— अह्न्याभाविरूपे अहीने चतुर्थेऽहनि षोडशिनं गृहीत्वा पुनरपि चतुर्थाच्चतुर्थे अष्टमे ग्राह्यः । अन्यथा वीप्साऽनुपपत्तेः अहीनान्तराभिप्रायत्वे न्याय-प्राप्तत्वेन वीप्सावैयर्थ्यापत्तेः । इति प्राप्ते, अहीनस्य चतुर्थेऽहनि ग्राह्यत्वेन भुक्तः षोडशी न तस्याष्टमे ग्रहीतव्यः । नहि तदहीनस्य चतुर्थम्, अपितु चतुर्थस्य, अतश्च चतुर्थपदानुरोधात् अहीनान्तराभिप्रायेण वीप्सा न्यायप्राप्तानुवादः । विधाने वाक्यभेदापत्तेः । अहीनस्य इत्येकवचनं तु सामान्याभिप्रायेण बहुत्वलक्षणार्थम् ।

मण्डन— ' चतुर्थवीप्सा त्वनु चाहीने । '

शंकर— ' चतुर्थवीप्सा त्वन्याहीने । ' १५.

* नानाकर्मलक्षणं इति ( द्वितीयं ) अध्याय-माचष्टे । भा. २।१।१।१ पृ. ३७२.

* नानाकार्यत्वाच्च विकल्पः । भा. २।२।८।१९.

* नानाछन्दस्के गायत्र्यच्छन्दस इत्यादिपदघटित-मन्त्रस्य विनियोगः । भा. १।२।१८।४२–४३. * नाना-छन्दस्के सोमे ऐन्द्रपशौ मन्त्रमन्त्रो नान्यत्र । कुत्वा-चिन्ता । वि. ३।२।११९.

* नानाजातीयेषु ( एकादशिनेषु ) पशुषु शोभा-मध्या च पाकभेदात् कुम्भीशूलवपाश्रपणीनां भेदः । भा ११।४।१०।३७–३८

* नानात्वम् । यद् यस्य ग्राह्यम्, गृहीते च तस्मिन् ग्राह्यान्तरासमर्थो नानात्वम् । बृहती. पृ. २२७ । न नानात्वं नाम अन्यदेव, किन्तु स्वभावत एव ये विलक्षणा अर्थाः, तेषु गृहीतेषु यदिदं वैलक्षण्यं विमृश्यते, तदिदं नानात्वम् । ऋजु. पृ. २२७

* नानाप्रदानाधिकरणम् । भिन्नगुणकदेवताभेदे प्रदानभेदः ॥

धौत्रेष्टानि ( इन्द्राय राज्ञे, पुरोडाशमेकादशकपालं निर्वपेत्, इन्द्रायाधिराजाय, इन्द्राय स्वराज्ञे इति ) हवींष्य-वदानैकत्वात् सोमनिष्पन्नदेवताकत्वात् सहैव प्रदीयेरन् । इति प्राप्ते, विशेष्यस्वैक्येऽपि राजादिगुणभेदेन देवता पृथक्त्वात् अवदानादेर्येकत्वयोगात्तथापि प्रदानानि भिद्येरन्नेव, एवं सति विराज्ञमेषां याज्यानुवाक्यात्वं च संगच्छते । संकर्ष. २।२।१५.

* ' नानाबीजेष्वेकमुलूखलं विभवात् ' इति न्यायः । कृष्णाजिनास्तरणन्यायः । भा ५।२।७।१३.

* नानाबीजेष्वेकमुलूखलं विभवात् । ५।२।७।१३ ॥

राजसूये नानाबीजेष्टिः ' अग्नये गृहपतये पुरोडाशमष्टा-कपालं निर्वपति कृष्णानां व्रीहीणाम्, सोमाय वनस्पतये श्यामाकं चरुम्, सवित्रे सत्यप्रसवाय पुरोडाशं द्वादश-कपालमाशूनां व्रीहीणाम्, रुद्राय पशुपतये गावीधुकं चरुम्, बृहस्पतये वाचस्पतये नैवारं चरुम्, इन्द्राय ज्येष्ठाय पुरोडाशमेकादशकपालं महाव्रीहीणाम्, मित्राय सत्याय आम्बानां चरुम्, वरुणाय धर्मपतये यवमयं चरुम्' इति । एषां व्रीहिश्यामाकादीनां अवहननं कर्तव्यं भवति । तत्र कृष्णाजिनं अवस्तरणाय, उलूखलं मुसलं च अव-घाताय, शूर्पं च परावपनाय विवेकाय च उपयुज्यते । तदे-तदुलूखलादिकं प्रतिबीजं भिद्यते, किंवा एकमेव क्रमेण उपकुर्यात् इति विचारे सिद्धान्तमाह । सूत्रे उलूखलशब्दः कृष्णाजिनोलूखलमुसलशूर्पाणां ग्राहकः । तथा च सूत्रार्थः नानाबीजेषु अवहननार्थमुलूखलं उलूखलादि एकमेव स्यात् न तु प्रतिबीजं पृथक् । विभवात् प्रभुत्वात् नाना जातीयानामपि बीजानां अवहननादेः करणे समर्थत्वात् ।

विवृद्धिर्वा नियमानुपूर्व्यस्य तदर्थत्वात् । १४ ॥

राजसूये नानाबीजेष्टौ कृष्णाजिनं उलूखलं मुसलं शूर्पं चैकमेव क्रमेण सर्वबीजानामवहननार्थं स्यात् इति सिद्धान्ते उक्ते पूर्वपक्षमाह । वाशब्दः पक्षव्यावृत्त्यर्थः । विवृद्धिः उलूखलादेः स्यात् । प्रतिबीजं भेदः स्यात् । नियमानुपूर्व्यस्य ' कृष्णाजिनमवस्तृणाति, तस्मिन् उलू-खलमधिवर्तयति, तस्मिन् बीजान्यावपति, मुसलमादत्ते, अवहन्ति, शूर्पे उद्वपति, परापुनाति, विविनक्ति, पात्र्यां तण्डुलान् प्रस्कन्दयति, पिष्टीकरोति ' इति यत् नियमेन नियतं तेन पदार्थानां आनुपूर्व्यं क्रमः उक्तः, तस्य तदर्थत्वात् तत्तदर्थपरत्वात् ते पृथक् पदार्थाः । ततश्च एकजातीयबीजस्य कृष्णाजिनास्तरणं कृत्वा अन्य-जातीयबीजस्य तत् कर्तव्यम् । एवं अवहननादपि । तत्र उलूखलादेर्भेदे सत्येव संभवति । तस्मात् प्रतिबीजं भिन्नमुलूखलादि इति पूर्वः पक्षः ।

अथ सुबोधिन्यां नियमादानुपूर्व्यस्य इति पठित्वा आनुपूर्व्यस्य पाठक्रमस्य नियमात् प्रकृतौ कॢप्तत्वात् इति व्याख्यातम्। तदर्थत्वात् इत्यस्य च उलूखलस्य हविःशालापार्थत्वात् इत्यर्थ उक्तः। कुतूहले तु आनुपूर्व्यस्य पदार्थानुसमयेन अनुष्ठानक्रमस्य पाठेन नियमात् नियमनात् कृष्णाजिनास्तरणादिः पृथक् पदार्थः। कुतः? तदर्थत्वात् 'कृष्णाजिनमास्तृणाति' इत्यादिपदैः तेषां पृथगेव अभिधेयत्वात् विधिभेदे पृथक्पदार्थत्वात् इति व्याख्यातम्। भाष्ये तु 'नियतं ह्यानुपूर्व्यं पाठकृतं सहत्वे सति उपपद्यते। पदार्थानां चानुसमयः। पृथक्पदार्थाश्च अवस्तरणादयः। यतीभावस्य (समापनस्य) पर्यवसानात्। अवहननादेश्च पदैरभिधानात्' इति।

एकं वाऽऽतण्डुलभावाद्धन्तेस्तदर्थत्वात्॥ १५॥

राजसूये नानाबीजेष्टौ उलूखलादि प्रतिबीजं भिन्नं इति पूर्वपक्षे सूत्रेण अनेन सिद्धान्तमाह। वाशब्दः पूर्वपक्षव्यावर्तनाय। एकमुलूखलं कृष्णाजिनोलूखलमुसलशूर्पं एकमेव सर्वबीजार्थं स्यात्, न प्रतिबीजं भिन्नम्। हन्तेः इति पदस्य पूर्वेण च परेण च अन्वयः। हन्तेः अवहननपदार्थस्य आ तण्डुलभावात् तण्डुलभावपर्यन्त मेकत्वात्। हन्तेः कृष्णाजिनास्तरणमुपक्रमः फलीकरणान्तश्च तस्यैव शेषः। हन्तेस्तदर्थत्वात् अवहननस्य तण्डुलनिष्पत्त्यर्थत्वात्। तथा च नानेकः पदार्थः। तथा च प्रतिबीजं अवहननपदार्थकाण्डानुसमयः प्रतीतेः। तेन एकमेव उलूखलादि सर्वबीजानां पर्यायेण अवहननादि कर्तुं शक्नोति इति न विरुद्धिः। के.

❀ नानाबीजेषु कृष्णाजिनास्तरणादितण्डुलप्रक्षालननिनयनान्तेन अनुसमयः। कृष्णाजिनास्तरणन्यायः द्रष्टव्य.। भा ५।२।७।१३–१५.

० नानाबीजाधिकरणम्। नानाबीजन्याय. द्रष्टव्य। के.

● नानाबीजाधिकरणन्यायस्य स्वरूपम् 'सत्यपि विधिभेदे तन्त्रत्वेन विधानात् पदार्थान्यत्वं नास्ति' इति। के.

० नानाबीजेष्टिरेवमाम्नाता तैत्तिरीयके। 'अग्नये गृहपतये पुरोडाशमष्टाकपालं निर्वपति कृष्णानां व्रीहीणाम्, सवित्रे सत्यप्रसवाय पुरोडाशं द्वादशकपालमाशूनां व्रीहीणाम्, रुद्राय पशुपतये गावीधुकं चरुम्, बृहस्पतये वाचस्पतये नैवारं चरुम्, इन्द्राय ज्येष्ठाय पुरोडाशमेकादशकपालं महाव्रीहीणाम्, मित्राय सत्यायाम्बानां चरुम्, वरुणाय धर्मपतये यवमयं चरुम्' इति।

काठकसंहितायाम् (१५।५।७) 'अग्नये गृहपतये आशूनामष्टाकपालः, सवित्रे प्रसवित्रे श्वेतानामष्टाकपालः, सोमाय वनस्पतये श्यामाकश्चरुः, बृहस्पतये वाचस्पतये नैवारश्चरुः, इन्द्राय ज्येष्ठाय हायनानामेकादशकपालः, मित्राय सत्यस्य पतये आम्बानां चरुः, वरुणाय धर्मस्पतये यवमयो द्वादशकपालः, रुद्राय पशुपतये गावीधुकश्चरुः' इति।

मैत्रायणीये (२।६।१५) 'अग्नये गृहपतये आशूनामष्टाकपालं निर्वपेत्, सोमाय वनस्पतये श्यामाकं चरुम्, सवित्रे प्रसवित्रे श्वेतानामष्टाकपालम्, बृहस्पतये वाचस्पतये नैवारं चरुम्, इन्द्राय ज्येष्ठाय हायनानामेकादशकपालम्, मित्राय सत्यस्य पतये आम्बानां चरुम्, वरुणाय धर्मस्य पतये यवमयं चरुम्, रुद्राय पशुपतये गावीधुकं चरुम्' इति। अत्र आशवो व्रीहयः ये मासद्वयेनैव पच्यन्ते। गावीधुकाः तृणविशेषः। आम्बाः (आवेमोहोर इति भाषा), श्वेता इति वर्तुलबीजानि। नाम्बाः आम्बाः एव। के.

☐ नानाबीजेष्टौ अन्त्यबीजसंबन्धिहविरुद्वासनकाले एव वाग्विसर्गः॥

वाग्विसर्गो हविष्कृता बीजभेदे तथा स्यात्। ११।२।७।१७॥

भाष्यम्— राजसूये नानाबीजेष्टिः 'आग्नेयं गृहपतये आशूनामष्टाकपालं निर्वपेत्, सोमाय वनस्पतये श्यामाकं चरुम्, सवित्रे प्रसवित्रे श्वेतानामष्टाकपालम्' इति। 'नानाबीजेष्वेकमुलूखलं विभवात्' (५।२।७।१५) इत्युक्तम्। अतः तस्मिन् क्रमेणावहन्ति क्रियते। प्रकृतौ च श्रूयते 'अतः प्रोष्य वाचं यच्छति, तां हविष्कृता विसृजति' इति। हविष्कृदाह्वाने च कालनियमार्थं उक्तम् 'तथाह्वानमपीति चेत्' (३।२।१५) 'न कालविधिश्चोदितत्वात्' (३।२।३।६) इति। इह अनेको

हि मन्त्रः । स च येन बीजेन संनिपतितस्तदेव संस्करोति । तदेव चेत् संस्करोति, उत्तरसंस्कारार्थं पुनः प्रयोक्तव्यः । तस्य पुनःप्रयोगाभ्यन्तरस्यापि पुनःप्रयोगः । तद्गुणत्वात् । तस्यावहन्तेः स मन्त्रो गुणः, तदर्थेन विधानात् । तस्यापि चासौ प्रतिकर्माविभागिना चोदकेन विहितः । तस्मात् प्रतिबीजं मन्त्रस्य आवृत्तिः ।

सोम—सूत्रार्थस्तु— द्रव्यान्तरेषु मन्त्रस्य पुनःप्रयोगः स्यात् पूर्वस्मिन् बीजे कृतार्थत्वात्तस्य बीजान्तरे पुनःप्रयोगात् मन्त्रस्य प्रतिकर्मावसायिना चोदकेन तदर्थत्वेनापि विधानात् तद्गुणत्वात् इति ।

वि— 'नानाबीजेषु तन्मन्त्र ( अवघातमन्त्रः ) सकृद्वाऽथवा सकृत्, बहिम. । विशेषाग्रहणात्, न्यैवमवघातस्य भेदतः ॥'

भाट्ट— एवं तर्हि नानाबीजेष्वपि सत्यपि तण्डुलीभावभेदे सकृत्पठितमन्त्रस्य स्मृतेः सर्वावघातेषु उपकारकत्वोपपत्तेः नावृत्तिः । इति प्राप्ते, कृष्णाजिनास्तरणादिपत्नीकरणान्तेन अनुमन्त्रणयोगत्वात् मन्त्रमध्यपाठे तु असंनिधानादिपदार्थान्तरान्तराकालेन अवघातमन्त्रजन्यस्मृतेर्नाशात् आवृत्तिरेव तन्मन्त्रस्य ।

मण्डन—'नानाबीजे पृथक्पृथक् ।' अवघातमन्त्र ।

शंकर—'नानाबीजेषु तद्भिदा ।' अवघातमन्त्रभेदः ।

● समन्त्रकप्रथमसकृन्निर्वापेण ये संस्कृतास्तण्डुलास्तेभ्योऽन्ये मुष्ट्यन्तरनिर्वापेण संस्कार्याः । अतस्तत्संस्कारसिद्धये नानाबीजन्यायेन मन्त्रावृत्तिः । के. ११।४।१५.

● नानाबीजवत् । यथा वा 'सदाऽऽप्नोति' 'गाः पिन्वन्ति' इति क्वचित् नानाबीजेषु वचनात् सर्वावघातस्य एककाल्यात् 'इदमन्यः' इति कर्मान्तरं प्राप्नोति । रत्न. ५।१।१३।२५.

☞ नानापुष्परसन्यायः । उक्तं च महोपनिषदि 'यथा पत्री न सूत्र च नानापुष्परसा यथा । यथा नद्यः समुद्राश्च समुद्रोदन्वति यथा ॥ जीवात्मानो च यथा यथा पुंविग्रहावपि । तथा सर्वेश्वरो भिन्नो सर्वत्रैव विलक्षणः ॥' इत्यादि पूर्णप्रज्ञदर्शने प्रसिद्ध न्यायार्थः । साहस्री. ८२२.

● नानाशाखासु विहिताग्निहोत्रादिकर्मणामैक्यम् । शाखाऽन्तराधिकरणम् । सू. २।४।२।८-१०.

● नान्तरीयकम् । यद्विना यन्नोपपद्यते तत् तस्य नान्तरीयकम् इत्युच्यते । के.

☞ नान्तरीयकन्यायः । नान्तरीयमवश्यम्भावीत्यर्थः । यत्र प्रतिबन्धकाभावे नान्तरीयकार्योत्पत्तिः अवश्यम्भाविनीत्यर्थं इत्युक्तम् । यथा च कश्चिदन्नार्थी शालिकलापं सपलालं सतुषमाहरति नान्तरीयकत्वात् न यावत् आदेयं तावदादाय तुषपलालानुत्सृजति । तथा कश्चित् मांसार्थी मत्स्यान् सकण्टकान् सशल्कानाहरति नान्तरीयकत्वात् । स यावदादेयं तावदादाय शल्ककण्टकानुत्सृजतीति, प्रकृतेऽप्येवमिति 'स्वरितात्संहितायामनुदात्तानाम्' ( पा० १।२।३९ ) इतिसूत्रमहाभाष्ये उक्तोऽयम् । साहस्री. ६१९

● नापितकर्तृकत्वं तीर्थं केशश्मश्रुवपनस्येति नापितक्षुरप्रदानावसिः । या. ३।८।२।४.

[ इतः उत्तरं नामपदारब्धानि विधानवाक्यानि 'नामैकस्य विभक्तयः' इत्यत्रानि निवेश्य ततः परं नामधेयपदारब्धानि निवेशितानीति ज्ञेयम् । के. ]

● नाम अतिदेशे प्रमाणम् । मणि. पृ. ११. ● 'नाम च धनहारार्थेनार्थमभ्युपगम्यते ।' या. ११३।८।२६ पृ २७७ ● नाम धर्मभेदे प्रमाणम् । मणि. पृ. १३, ● 'सर्वमाख्यातश्च नाम' इति स्मृतिः । पृ. १११. ● नाम्ना अतिदेशः अभिहितः ( सप्तमस्य तृतीये पादे ) । इदानीं आनुमानिकेन वचनेनातिदेश उच्यते । या ७।४।१।१ पृ. १५६९. ● नाम ( द्वादशाहगतप्रथमाहविषयकप्रायणीयनाम ) गवामयने प्रथमेऽहनि न धर्मातिदेशः । या ७।३।२।५. ● नाम तत्र निवेशः प्रतीयते, यत्र कश्चिद्विशेषमुपादाय नामानि प्रवर्तन्ते । या २।२।५।१७ पृ. ५०० ● नाम ( अग्निहोत्राख्या ) धर्मातिदेशः कौण्डपायिनामयनगते अग्निहोत्रे । भा. ७।३।१।१-४. ● 'नाम्ना यद्यर्थमात्र च संनिधाप्येत दर्शितम् ।' । तामानाधिकरण्येन हि सर्वनामधेयानि धात्वर्थानां नामधेयत्वेन अवस्थितानि, न भावनायाः । या. २।१।११।२४ पृ. ६१६. ● नाम

( अग्निहोत्रनाम्ना ) नित्याग्निहोत्रधर्माणां कौण्डपायिना-मयनगते अग्निहोत्रे अतिदेशः । के. ७।३।१।१–४, ● नाम्ना (दर्शपूर्णमासगताज्यनाम्ना) पशुगतयूपसंबन्धिनि अञ्जनाज्ये धर्माणां नातिदेशः । भा. ७।३।७।१९, ● नाम्ना ( यूपनाम्ना ) यूपसंस्काराणां यूपैकादशिनगते शरणये नातिदेशः । ७।३।१३।३२–३४, ● नाम्ना ( सर्वपृष्ठनाम्ना ) षडहपृष्ठानां विश्वजिति सर्वपृष्ठे अतिदेशः । ७।३।३।१९–२१, ● नाम्ना ( अवभृथ-नाम्ना ) सौमिकावभृथधर्माणां वरुणप्रघासावभृथे अति देशः । ७।३।४।१३–१६, ● नाम्ना ( वैष्णवनाम्ना ) सौमिकातिथ्येष्टिगतवैष्णवधर्माणां राजसूये पूर्वाग्निरमन-वैष्णवनिर्वापे नातिदेशः । ७।३।६।१७, ● नाम्नः अर्थवादगतस्य नातिदेशाय गम् । भाट्ट ५।३।१९. ● नाम्नः । ज्योतिरादौ च ' एतेन सहस्रदक्षिणेन यजेत ' इत्यादि-गुणान्वयव्यापारेण ' एतेन स्वर्गकामो यजेत ' इत्यादि-फलान्वयव्यापारेण च श्रुतस्यापि आख्यातस्य भेदाभेद-योरुदासरात् तदर्थितस्यापि नाम्नोऽपि भेदकत्वं अविरुद्धम् । शु. पृ. ७१२, ● नाम्न. पूर्वकर्मोपस्थाप-कत्वस्य पूर्वकर्मसंनिधिजनिमित्तकत्वम् । आख्यातस्य च पूर्वकर्मविषयत्वं विना नाम्नः पूर्वकर्माभिधानत्वाभावात् । पृ. ९५३. ● नाम्नः प्रयोजन तु सर्वत्र व्यवहार एव । नहि अन्तरेण नामधेयं कर्मविधानादिषु ' अनेनाह यक्ष्ये ' इति व्यपदेशोपायो लघुः कश्चिदस्ति । वि. १।४।२.● नाम्नां धर्मभेदो गुणफलोपबन्ध संकल्पनापरं च प्रयोजनम् । मणि. पृ. ५. ● 'नाम्ना द्विविध संबन्धः सर्ववाक्येष्ववस्थितः । सामानाधिकरण्येन षष्ठ्या वा प्रतिपाद्यते ॥ ' वा. २।१।५।२३ पृ. ५६६. ● नाम्ना स्वप्रकारकप्रमितिजनकत्वेन प्रामाण्यम् । मणि पृ. १२, ● नामसु प्रातिपदिकार्थप्राधान्यम् । पृ. १०५

● नामातिदेशः इत्यत्र नाम त्रिविध कर्मनाम संस्कारनाम यौगिकं चेति । बाल. पृ ११०–११९. ● नामातिदेशः एकत्र मुख्यस्य हि नाम्नः अपरत्र गौणत्वे । न तु सर्वत्र प्रवृत्तिनिमित्तसत्त्वेन मुख्यत्वेऽपि । भाट्ट. ८।१।३ पृ ५, ● नामातिदेशः प्रकार । यथा–अथर्वैकदेशो प्रथमाहे विश्वजिति सत्रनैकाहविश्व-जिन्नाम्ना तद्धर्मातिदेशात् सर्वस्वं दक्षिणा इति भाष्यम् । वार्तिककारस्तु द्वादशशतं इत्येव सिद्धान्तितवान् । के. ६।७।८.

● नामार्थस्य स्वोत्तरविभक्त्यर्थेन अन्वयः कर्तृतः । व्युत्प. पृ. ८६.

नामार्थयोरभेदान्वय इति न्यायः । नामात्र 'अर्थवदधातुरप्रत्ययः प्रातिपदिकम्', 'कृत्तद्धितसमासाश्च' इति सूत्रद्वयलक्षितप्रातिपदिकापरपर्यायत्वेन गृह्यते । अर्थः, अभिधेयः, वाच्य इति पर्यायः । तयोर्भेदस्ता-दात्म्यसंबन्ध इति भावः । अत एव पुरोवर्तिपदार्थं दृष्ट्वा शाब्दजिज्ञासया कोऽयमिति पृष्टे देवदत्तोऽयमित्युत्तरम् । अत एव ' रामेति द्व्यक्षर नाम मानभङ्गः पिनाकिनः । वीर्यभङ्गं रावणस्य मदभङ्गं तु वालिनः ॥ ' इत्यादौ शब्दार्थयोरप्यभेदेन व्यवहारः । ' ओमित्येकाक्षरं ब्रह्म ' इत्यादावपि अभेदेनैव निर्देशः । अत्र द्विधा नियमः नामार्थयोरभेद एवेति, अभेदो नामार्थयोरेवेति । आद्ये राज्ञः पुरुष्य धनमित्यादौ व्यभिचारः । द्वितीये तु स्तोकं पचतीत्यत्र । साहस्री. ४६१.

● नामार्थयो. भेदेन अन्वयस्य विभक्त्यर्थद्वारक-त्वात् । सोम ६।१।१३. ● नामार्थयोः भेदान्वया-नुपपत्तिः । मणि. पृ. ११४. ● नामार्थानां यत्र कारक-त्वेन विभक्त्युपस्थाप्यत्वम्, तत्रैव परस्परासंबद्धाना आख्यातसंबन्धः, कारकाणां मिथः संबन्धाभावात् । सोम. ६।४।६ पृ ४८५.

● नामार्थधात्वर्थयोः अभेदातिरिक्तसंबन्धेन अन्वयस्य अनुपपन्नत्वात् । मणि. पृ. ११०.

● नामोपदेशः शब्दस्य व्यवहारार्थः । पौर्णमासी, अमावास्या, वैश्वदेवं पर्व इत्यादि । के. १।४।११.

● नामैकदेशेन नामोपलक्षणस्य लोके सिद्धत्वात् भीमसेनोपलक्षणभीमशब्दवत् । कणिका. पृ. ३१२.

'नामैकदेशो नामग्रहणम्' इति न्यायः एकप्रकरणकल्पावितात्पर्यग्राहकप्रमाणसत्त्वे एव । यथा ज्योतिष्टोमप्रकरणगते 'वसन्तेवसन्ते ज्योतिषा यजेत' इति वाक्ये ज्योतिःशब्देन ज्योतिष्टोमस्य ग्रहणम् । सना ध. प्र. विवादप्रकाश पृ. १९९. ● नामैकदेशो नामग्रहणमिति

न्याय । यथा— दत्त.—देवदत्त , भामा—सत्यभामा , भीमः भीमसेन इत्यादि ज्ञेयम् । साहस्री. ६०१.

* नामपदं चाख्यातानुसारित्वात् यत्राख्यातं तत्र वर्तते । वा. ४।४।१।२, * नामपदम् । ( निरूढा-निरूढत्वेन द्विविधस्यापि नामधेयस्य विचारितत्वात् उत्तराधिकरणद्वया ( १।४।२–४ )नर्थकत्वमाशङ्क्ते— ) ननु सर्वेम द्विप्रकारमेव नामपद सांविज्ञायिक ( रूढम् ) यौगिकं च । उभयमपि च अधिकरणद्वयेन ( १।४।१–२ ) प्रतिपादितम् । किमिदानीमवशिष्यते , येन पुनर्विचार्यते । उच्यते । यौगिकानामेव मत्वर्थलक्षणापरिहारेण अत्र चिन्ता ( ३ ) उत्तराधिकरणे तु ( ४ ) सांविज्ञायिकानां वाक्यभेदासंभवात् । ( तथा च निरूढानि नामपदानि सांविज्ञायिकानि, अनिरूढानि च यौगिकानि इति भेदः । के. ) । १।४।१।४ पृ ३३२. * नामपद सर्वं तावत् व्यक्त्याकृतिनिबन्धनम् । व्यक्तिमात्रे तु यन्नाम, तदेक-त्रैव वर्तते । देवदत्तादिवत् । के. * नामपदानि वाय्वादेयार्थानि तानि तावत् आख्यातपदकृत्वात् तदनु कारीणि सन्ति तद्वृत्तिं प्रतीक्षन्ते । 'प्रायेणाख्यातसंबन्धि नामेह पारतन्त्र्यभाक्' । वा. २।२।१।२ पृ ४६७. * नामपदस्य नहि आख्यातं कृत्य वा अन्तरेण विधिशक्तिरस्ति । सु. पृ. ७७६. * नामपदस्य विधिशक्तिर्नास्ति । वा १।४।२।३ पृ. ३३२.

* नामप्रयोजनामार्थविशेषकनामार्थप्रकारतामेद-संसर्गकबोधत्वावच्छिन्नं प्रति एकविभक्त्यन्तत्वप्रातिपदि-कार्थताऽवच्छेदकनामद्वयसमभिव्याहारस्य द्वाभिधनाम-द्वयसमभिव्याहारस्य वा तन्त्रत्वम् । भाट्ट. ६।१।१२.

* नामयुक्तकर्मविधाने सामानाधिकरण्यात् कदाचित् धर्मविशेषो नाम्ना निरूप्यते कदाचिन्नामार्थो धर्मेण । यो यत्र पूर्वंतरप्रसिद्धार्थो भवति , स इतरं स्वविषये व्यवस्थापयति । यथा राजसूयेन इत्यत्र नाम यागाभ्यासविषयत्वेन उपलक्ष्यमाणं प्रकृतयागप्रसिद्धेन धर्मेणा स्वविषयं नीयते । वा २।२।३।२ पृ ४७६.

¤ नाम-रूप-धर्मविशेष-पुनरुक्ति- निन्दाऽ-शक्ति – समाप्तिवचन – प्रायश्चित्त – न्यायदर्शना-च्छाखाऽन्तरेषु कर्मभेदः स्यात् । २।४।२।८॥

इह शाखाऽन्तराण्युदाहरणं काठक कालापकं पैप्पला-दक इत्येवमादीनि । तत्र संदेहः किमेकस्यां शाखायां यत्किञ्चिदग्निहोत्रादि श्रूयते , तच्छाखाऽन्तरे पुनःश्रूय-माणं भिद्यते, उत न भिद्यते इति । पूर्वं प्रयोगभेदं प्रतिपाद्य इदानीं भेदापवाद क्रियते । अत्रायं पूर्वपक्ष । " एतस्यैव पुनःश्रुतिरविशेषादनर्थकं हि स्यात् ' इति न्यायेन अभ्यासात् कर्मभेदः प्रतिपादित एव । स चाभ्यासोऽपि अविशिष्ट एव । न च शाखाऽन्तरे गुण-फलवचनान्तर...........र्था पुनःश्रुतिर्भवेत् । तेन कर्मैव विधेयम् । तच्च विहितविधानासंभवात् कर्मान्तर-मेवेति । न च कर्मैक्येऽपि भिन्नाध्येतृबोधनेनैव शाखाऽन्तरेषु श्रुतेरर्थवत्त्वात् नाभ्यासाद्भेद इति वक्तव्यम् । प्रतिशाखमध्येतृभेदविषये प्रमाणाभावात् । यद्यपि 'स्वाध्यायमधीयीत' इति स्वाध्यायगतमेकत्वं श्रूयते , स्वाध्यायशब्देन च स्ववेदशाखा अभिधीयते, तथापि सामर्थ्यतोऽर्थज्ञानार्थत्वेन प्राप्तस्य स्वाध्यायस्य अध्ययनेन संस्कारविधौ उद्देश्यत्वात्, उद्देश्यविशेषणस्य च 'ग्रहं संमार्ष्टि' इतिवत् अविवक्षितत्वात् एकस्य नानाशाखा-ऽध्ययनमविरुद्धम् । किञ्च , यदि एकस्य एकशाखाध्ययन-मेव नियत भवेत् , तदा वेदान्तरीयशाखाऽध्ययनमपि न प्राप्नोति । तथा च सति 'वेदानधीत्य वेदौ वा वेदं वापि यथाक्रमम् । अविप्लुतब्रह्मचर्यो गृहस्थाश्रम-माविशेत् ॥' ( मनु ३।२. ) इति व्याहन्येत । तेन पुनःश्रुतेरनन्यार्थत्वात् अभ्यासात्तावत् भेदः । किञ्च यत्र एकस्यामेव शाखायां कथञ्चित् विच्छेदमात्रेण अनुपादेयं प्रति उपादानात् अग्निहोत्रादीनां कर्मान्तरत्वम्, [illegible] शाखाऽन्तरेषु सुतरामेव बुद्धिविच्छेदादनुपादेयं प्रति उपादानात् प्रकरणान्तरादपि कर्मभेदः । तथा काठकादि-कर्मनामभेदादपि भेद , एकस्मिन्नर्थे अनेकनामधेयानुपपत्तेः । तथा गुणादपि भेदः । एकस्यां शाखायामग्नी-षोमीयमेकादशकपालमामनन्ति, अपरस्यां द्वादशकपालम् । तदुक्तम्— रूपात् इति । तथैकस्यां कारीरीवाक्यमधीया-नास्तैत्तिरीया भूमिभोजनमाचरन्ति , अपरस्तां नेति । तदुक्तम्— धर्मविशेषात् इति । तथा कस्यांचित् उदित-होमनिन्दा , कस्यांचित् अनुदितहोमनिन्दा । तदुक्तम्—

रूपभेदात् कर्मभेदः । एकस्यां शाखायां अग्नीषोमीयमेकादशकपालमामनन्ति, अन्यस्यां द्वादशकपालम्। एवं भिन्नरूपत्वात् कर्मणो भेदः ।

धर्मविशेषात् कर्मभेदः । 'मारुतमसि मरुतामोजः ।' इत्यादि कारीरेष्टिमन्त्रब्राह्मणं अधीयानाः तैत्तिरीयाः चोपासनमनुसारिणः भूमौ भोजनमाचरन्ति, चोपासनीयेभ्योऽन्ये तु तैत्तिरीयाः कारीरेष्टिमधीयाना अपि भूमिभोजनं नाचरन्ति । तस्मादेतादृशात् धर्मविशेषात् धर्मभेदात् कर्माणि भिद्यन्ते ।

पुनरुक्तेः कर्मभेदः । अग्निहोत्रादि कर्म प्रतिशाखं प्रतिपाद्यते । कर्मैकत्वे तु इयं प्रतिशाखं पुनरुक्तिः नोपपद्येत । तस्मात् पुनरुक्त्या अभ्यासेन कर्मभेदः सिध्यति ।

निन्दया कर्मभेदः । 'उदिते होतव्यम्' इति प्रस्तुते अनुदितहोमः निन्द्यते 'प्रातः प्रातरनृतं ते वदन्ति पुरोदयाज्जुह्वति येऽग्निहोत्रम् । दिवाकीर्त्यमदिवा कीर्तयन्तः सूर्यो ज्योतिर्न तदा ज्योतिरेषाम् ॥' इति अनुदिते सूर्ये 'सूर्यो ज्योतिर्ज्योतिः सूर्यः स्वाहा' इत्यभिधानं अनृतं संपद्यते इत्यर्थः । अन्यस्यां तु शाखायां अनुदितहोमप्रस्तावे उदितहोमो निन्द्यते 'यदुदिते सूर्ये प्रातर्जुहुयात् । यथाऽतिथये प्रद्रुताय शून्यायावसथायाहार्यं हरन्ति । तादृगेव तत्' । अस्यायमर्थः- 'अग्निं वाव आदित्यः सायं प्रविशति । उद्यन्तं वाव आदित्यमग्निरनु समारोहति' इति पूर्वमुक्तम् । अतो यजमानस्य गृहे सूर्यः अग्निं प्रविष्टः रात्रौ वसति । उदयकाले तु अग्निं विहाय गच्छति । ततश्च यथा अतिथये प्रद्रुताय वैमुख्येन गृहात् दूरान् गताय आहार्यमन्नं शून्याय आवसथाय अतिथिरहिते शून्ये गृहे अतिथ्यर्थे चतुर्थी । किंवा अतिथिशून्याय केवलायैव जडाय गृहाय दातव्यम्, तादृक् स उदितहोमः संपद्यते । इति । तस्मात् उभयनिन्दया उदितानुदितहोमौ भिन्नौ भवतः । एवं निन्दया कर्मभेदः ।

अशक्त्या कर्मभेदः । अनेको वेदशाखासु विहितानां भिन्नभिन्नानामङ्गानामेकस्मिन् कर्मणि उपसंहारे मनुष्यस्य न शक्तिः । कर्मभेदे तु कथंचित् संभवति ।

समाप्तिवचनभेदेन कर्मभेदः । मैत्रायणीशाखाया अग्निचयनमन्त्रसमाम्नाये अन्वारोहा नाम स्थण्डिलारोहणमन्त्रविशेषा अन्ते पठ्यन्ते । क्वचित् शाखायां तु न ते मन्त्राः सन्ति । तत्र अध्येतारो याज्ञिकाश्च इत्थं व्यपदिशन्ति अन्वारोहेषु मैत्रायणीयानामग्निः समाप्यते, इतरेषां तु अन्यत्र समाप्यते इति । तस्मादपि कर्मभेदः ।

प्रायश्चित्तभेदात् कर्मभेदः । क्वचित् उदितहोमव्यतिक्रमे प्रायश्चित्तमामनन्ति 'यस्याग्निहोत्रमहुतं सूर्योऽभ्युदियात्' इत्यादिना । एवं अनुदितहोमेऽपि । व्यृद्धे हि प्रायश्चित्तम् । न च कर्मैकत्वे उभयथा व्यृद्धिः संभवति । तस्मात् कर्मभेदः ।

अथ अन्यार्थदर्शनं कर्मभेदकम् । यथा कस्याञ्चिच्छाखायां द्वादशाहसत्रे श्रूयते 'यदि पुरा दिदीक्षाणा एतमेव बृहत्सामानमुपेयुः अपेतं होता रथन्तरम् । अथ यदि अदिदीक्षाणा रथन्तरसामानमुपेयुः' इति । यदि पुरा पूर्वं दिदीक्षाणाः दीक्षावन्तः कृतप्रथमसोमाः स्युः, तदा एतमेव अतिरात्रं बृहत्सामानं उपेयुः । हि यस्मात् प्रथमसोमे रथन्तरसामभिः प्रयुक्तम् । यदि तु अदिदीक्षाणाः अकृतप्रथमसोमाः, तदा रथन्तरसामानमुपेयुः । 'न रथन्तरसामानमकृत्वा बृहत्सामानमाहरेत्' इति नियमात् । तदिदं अनिष्टप्रथमसोमानामपि द्वादशाहसत्रवचनं प्रतिशाखं कर्मभेदमवगमयति । अथ द्वितीयमन्यार्थदर्शनम् । तैत्तिरीयके यूपैकादशिन्यां श्रूयते 'यत् पशुसमितां मिनुयात् कनीयांसं यज्ञक्रतुमुपेयात्, पापीयसी अस्यात्मनः प्रजा स्यात् । वेदिसंमितां मिनोति, ज्यायांसमेव यज्ञक्रतुमुपैति, नास्यात्मनः पापीयसी प्रजा भवति' इति । पक्षः अग्निचयनवेदेर्यः पक्षः, स समशो दशधा विभज्य मध्ये अग्निष्ठं यूपं पार्श्वयोश्च पञ्चपञ्च इति एकादशयूपपङ्क्तिं यदि मिनुयात् तथा कनीयांसं अल्पतरं यज्ञक्रतुं प्राप्नुयात्, किञ्च अस्य यजमानस्य आत्मनः सकाशात् पापीयसी दरिद्रतरा प्रजा भवति । तस्मात् वेदिसंमितां अग्निवेदिपूर्वापरतिर्यक्प्रमाणं दशधा समं विभज्य पूर्ववत् यूपैकादशिनीं मिनुयात्, तेन यज्ञादेः ज्यायस्त्वसिद्धिः । सेयं पशुसंमितायाः निन्दा, वेदिसंमितायाश्च स्तुतिः शाखान्तरे कर्मभेदं गमयति । अथ तृतीयमन्यार्थदर्शनम्—ज्योति-

होमाभिषवे 'द्वे संस्तुतानां विराजोऽतिरिच्येते' इति, शाखान्तरे तु 'तिस्रः संस्तुतानां विराजोऽतिरिच्यन्ते' इति श्रूयते । संस्तुताः स्तोत्रियाः । विराट् इति एकमनेकं वा दशाक्षं उच्यते । सोऽयं द्वयोस्त्रयाणां वा अतिरेकः शाखान्तरेषु कर्मभेदे एव संभवति इति । अथ चतुर्थमन्यार्थदर्शनम् — कारस्यते सत्रे श्रूयते 'ये पुरोडाशिनः ते उपवसन्ति, ये सान्नाय्यिनस्ते वत्सान् वारयन्ति' इति । ये यजमानाः पुरोडाशिनः अनिष्टप्रथमसोमतया केवलैन्द्राग्नपुरोडाशद्रव्यकदर्शेष्टिमन्तः । ये तु सान्नाय्यिनः इष्टप्रथमसोमाः, ते वत्सान् वारयन्ति मातृसकाशं न गमयन्ति दोहाय । तदिदं अनिष्टप्रथमसोमानामपि सारस्वतसत्रदर्शनं कर्मभेदमवगमयति । अथ पञ्चमम् — उपहव्ये नाम सोमे 'अग्निष्टोमो रथन्तरसामा, अश्वः श्यावो दक्षिणा' इत्येकस्यां शाखायां श्रुतम्, शाखान्तरे तु 'उपहव्य उक्थ्यो बृहत्सामा, अश्वः श्वेतो दक्षिणा' इति श्रुतम् । तच्च शाखाभेदेन कर्मभेदे एवोपपद्यते, न कर्मैक्ये । तदेवं नामादिभिः कारणैः शाखाऽन्तरे भिन्नासु शाखासु उक्तानां कर्मणां भेदः स्यात् ।

एकं वा संयोगरूपचोदनाऽऽख्याऽविशेषात् । ९ ॥

नामरूपधर्मविशेषादिभिः अग्निहोत्रादिकर्मणां भेदः इति पूर्ववद् पक्षो व्यावर्तयति । नामादिभेदेन शाखाऽन्तरेषु न कर्मभेदः । किन्तु सर्वशाखाप्रत्ययं सर्वब्राह्मणप्रत्ययं च एकं कर्म संयोगस्य रूपस्य चोदनायाः आख्यायाश्च अविशेषात् अभेदात् । तत्र संयोगः प्रयोजनस्य । एकस्यां शाखायां अग्निहोत्रस्य कर्मणो यत् फलं स्वर्गः, तदेव अन्यस्यामपि शाखायामुद्दिष्टम् । एवमेकफलकत्वात् सर्वासु शाखासु एकमेवाग्निहोत्रं कर्मेति ज्ञायते । एवं सोमरूपेन्द्रवायवादिद्रव्यदेवतारूपस्य कर्मरूपस्य अभेदो भवति शाखाभेदेऽपि । एवं यजेत इति तात्पर्यानुरक्तभावनात्मिकायाः चोदनायाः सर्वशाखासु अविशेषः । ज्योतिष्टोमादिसमाख्यायाश्च शाखाभेदेऽपि न विशेषः । तस्मात् शाखाभेदेऽपि संयोगरूपचोदनाख्यानां भेदाभावात् शाखाभेदेऽपि अग्निहोत्रस्य कर्मणो न भेदः । एवं ज्योतिष्टोमादेरपि अभेदो ज्ञेयः । तथा च सर्वशाखाप्रत्ययमेकं कर्म ।

न नाम्ना स्यादचोदनाऽभिधानत्वात् । १० ॥

यदुक्तं पूर्वपक्षिणा काठककालापकादिनामभेदात् कर्मभेद इति तत्राह सिद्धान्ती । भिन्नेनापि ईदृशेन नाम्ना न कर्मभेदः स्यात् । अचोदनाऽभिधानत्वात्, चोदना कर्मोत्पत्तिवाक्यम् । तद्गतमभिधानं नामधेयं चोदनाभिधानम् । तादृशत्वाभावात् काठकादिनाम्नः । उत्पत्तिवाक्यगतं संज्ञा कर्म भिनत्ति । काठकादिसंज्ञा तु नोत्पत्तिवाक्यगता । अतो न सा कर्म भेत्तुं शक्नोति । तथा च काठकादिनाम्ना न कर्मभेदः ।

सर्वेषां चैककर्म्यं स्यात् । ११ ॥

काठकादिनाम्ना न कर्मभेद इत्यत्रैव हेत्वन्तरमाह । यदि शब्दभेदात् भेदो भवेत्, तर्हि शब्दैक्यात् कर्मैक्यं स्यात् । तथा च काठकशब्दैक्यात् काठकोक्तानां सर्वेषां अग्निहोत्रदर्शपूर्णमासज्योतिष्टोमानां कर्मणां ऐककर्म्यं स्यात् । तदनिष्टम् ।

कृतकं चाभिधानम् । १२ ॥

काठकादिनामभेदात् न कर्मभेदः इत्यत्रैव हेत्वन्तरमाह सिद्धान्ती । काठकादि अभिधानं कृतकं इदानीन्तनम् । यतः प्रभृति कठस्य प्रवचनं ततः प्रभृति काठक इति नाम प्रवृत्तम् । न च कृतकेन अनादीनां कर्मणां भेदः कर्तुं शक्यते । तस्मात् न नाम्ना भेदः ।

एकत्वेऽपि परम् । १३ ॥

रूपभेदात् कर्मभेदः इति यदुक्तं तत्रोत्तरमाह सिद्धान्ती । एकत्वेऽपि कर्मैकत्वे सत्यपि परमुक्तं कर्मभेदकारणत्वेन पूर्वपक्षिणा उक्तं संभवति । कर्मैकत्वेऽपि वचनात् व्रीहियववत् विकल्पेन अग्नीषोमीयस्य पुरोडाशस्य एकादशकपालद्वादशकपालयोरुपपत्तिः । तस्मात् न रूपभेदादपि कर्मभेदः ।

विद्यायां धर्मशास्त्रम् । १४ ॥

भूमिभोजनादिधर्मविशेषात् कर्मभेद इति यदुक्तं पूर्वपक्षिणा तत्रोत्तरमाह सिद्धान्ती । धर्मशास्त्रं कारीरीशाखाध्ययनकाले भूमिभोजनादिधर्मोपदेशकं विद्यायाम्,

न कर्मणि । अध्ययनधर्मः एषः न कर्मधर्मः । अतो न तेन कर्मभेदः सेद्धुमर्हति ।

आग्नेयवत् पुनर्वचनम् । १५ ॥

पुनरुक्त्या कर्मभेदः इति यदुक्तं तत्रोत्तरमाह सिद्धान्ती । पुनर्वचनं शाखाऽन्तरे विहितस्य साङ्गस्य ज्योतिष्टोमादेः कर्मणः अन्यस्यां शाखायां पुनरुक्तिः विद्यमानापि आग्नेयवत् न कर्मभेदिका । 'यदाग्नेयोऽष्टाकपालोऽमावास्यायां भवति' इति पुनर्वचनं ऐन्द्राग्नस्तुल्यर्थत्वात् यथा न कर्मभेदस्य कारणं तद्वत् ।

अद्विर्वचनं वा श्रुतिसंयोगाविशेषात् ।१६॥

पुनरुक्त्या कर्मभेदः इति यदुक्तं पूर्वपक्षिणा तत्र प्रकारान्तरेणोत्तरमाह सिद्धान्ती । वाशब्दः प्रकारान्तरार्थः । अद्विर्वचनं नैव तत् द्विर्वचनम् । नैव सा पुनरुक्तिः । एकं पुरुषं प्रति पुनःपुनः कथने स्यात् पुनरुक्तिः । भिन्नं पुरुषं प्रति पुनर्वचने तु नैव सा पुनरुक्तिर्नाम । श्रुतिसंयोगाविशेषात् भिन्नैः पुरुषैः सह तत्तच्छाखायाः संयोगात् । श्रुतिसंयोगस्य भिन्नैः पुरुषैः सह तत्तच्छाखायाः संयोगस्य विशेषत्वात् । तस्मात् तत्तच्छाखासु अग्निहोत्रादिकर्मणः भिन्नं पुरुषं प्रति उक्तिः न द्विर्वचनं न द्विरुक्तिः न पुनरुक्तिः । तस्मात् तादृश्या पुनरुक्त्या न कर्मभेदः ।

वाक्यासमवायात् । १७ ॥

अत्र वार्तिकम् "अत्रान्तरे भाष्यकारस्य सूत्रं ग्रहम् 'वाक्यासमवायात्' इति । तदेवं व्याख्येयम्, 'नैकस्मिन् पुरुषे शाखान्तरवाक्य समवैति' इति" । तथा च वाक्यस्य शाखाऽन्तरवाक्यस्य एकस्मिन् पुरुषे असमवायात् संबन्धाभावात् पौनरुक्त्यम् । तस्मात् पौनरुक्त्याभावादेव पूर्वपक्षिणा यदुक्तं पुनरुक्त्या कर्मभेद इति मतं मूलत एव निरस्तम् ।

अर्थासंनिधेश्च । १८ ॥

अर्थ्यते प्रधानेन इति अर्थः अङ्गकाण्डम् । तस्य सर्वस्य अङ्गकाण्डस्य एकस्यां शाखायामसंनिधेः संनिधेरभावात् एकैकस्यां शाखायां केषांचिदेव अङ्गानां विधानात् सर्वासु शाखासु मिलित्वा एकैकं कर्म उच्यते इति सर्वशाखाप्रत्ययमेकं कर्म । इति सिद्धान्ते हेत्वन्तरपर सूत्रम् । 'अथवा पौनरुक्त्यपरिहारार्थमेव सूत्रम् । तत्र नाम पुनरुक्तता भवति, यत्र पूर्वोक्तोऽर्थः तस्यैव पुंसः संनिहितो भवति । न तु इह शाखाऽन्तरगतस्य संनिधानं इत्यपुनरुक्तता' इति वार्तिकम् ।

न चैकं प्रति शिष्यते । १९ ॥

नशब्दः समुच्चये । शाखाभेदेषु एकस्यापि कर्मणः पुनःपुनरुक्तेः कर्मभेदः इति यदुक्तं पूर्वपक्षिणा तत् निरस्यति प्रकारान्तरेण सिद्धान्ती । अग्निहोत्रादि कर्म प्रतिशाखं नैकमेव पुरुषं प्रति शिष्यते विधीयते । किन्तु अर्थिमात्रं प्रति सर्वशाखासु विधीयमानं एकमेकं पुरुषमुपतिष्ठते । तत्र एकस्य अनेकशाखाश्रवणात् पुनर्वचनतः प्रतिशाखं कर्मभेदे एकार्थत्वात् समुच्चयानुपपत्तौ विकल्पः स्यात् । ततो वर प्रत्यभिज्ञया कर्मैक्ये सति शाखानामेव पुरुषव्यवस्थया सद्भावः इति एकस्य अनेकशाखाऽध्ययनासंभवात् न पुनरुक्तिः ।

समाप्तिवच्च संप्रेक्षा । २० ॥

कर्मभेदहेतु समाप्तिवचननिरासार्थमेव सूत्रम् । नहि प्रतिशाखं साङ्गोपाङ्गमेकैकं कर्म पठितम् । क्वचित् कानिचिदङ्गानि अन्यत्र ततो न्यूनानि वा अधिकानि वा पठ्यन्ते । तत्र यत्र यावत् पठितम्, तत्रैव तच्छाखायां तत् कर्म समापितम् । संप्रेक्षा उत्प्रेक्षा व्यपदेशोऽपि 'अनास्माकं कर्म समाप्यते' इत्येवंरूपः तत्र भवति । न च तावता तावदेव तत् कर्म इति निश्चेतव्यम् । ऐतरेयके हि द्वादशाहगतानि होतुरेव शस्त्राण्युक्तानि न मैत्रावरुणादीनाम् । न च तावता मैत्रावरुणादीनां शस्त्राणि नैव सन्तीति वक्तुं युक्तम् । तथाच यथा समाप्तिः अनियता तथा संप्रेक्षाऽपि अनियतैवेति क्रमप्राप्तम् । सर्वथाऽपि समाप्तिवत् संप्रेक्षाऽपि न कर्मभेदिकेति निश्चेतुं शक्यते । अत्र वार्तिकम्– असमाप्तिवत् इति वा च्छेदः । ( न चैकं प्रति शिष्यते समाप्तिवत् इति सूत्रसंहितायां अकारप्रश्लेषेणापि विच्छेदसंभव । इति सुधा. ) ।

एकत्वेऽपि पराणि निन्दाऽशक्तिसमाप्तिवचनानि । २१ ॥

पूर्वपक्षिणा कर्मभेदकानि यानि उक्तानि तत्र निन्दाऽऽदित्रयं कर्मभेदाभेदयोः समानत्वात् नाहत्य भेदसाधक-

मित्याह सिद्धान्ती । पराणि पुनरुक्तेः परस्तात् पठितानि निन्दा च अशक्तिश्च समाप्तिवचनं चेति त्रीणि कर्मणामेकत्वेऽपि उपपन्नानि इति न भेदसाधकानि । तथाहि, नहि निन्दा निन्द्यं निन्दितुं प्रयुज्यते किं तर्हि निन्दितादितरत् प्रशंसितुम् । तत्र न निन्दितस्य प्रतिषेधो गम्यते किन्तु इतरस्य विधिः । तत्र एकस्मिन् अग्निहोत्रहोमे प्रातःकालीने द्वौ कालौ विहितौ सूर्योदयात् प्राक् पश्चाच्चेति । तौ विकल्प्येते । अतो न कश्चित् विरोधः । तथा एकस्मिन्नपि वेदे असमर्थानां विहितं कृत्स्नमङ्गजातं उपसंहर्तुं अशक्तिः । समर्थानां तु सर्वशाखाभ्योऽपि आगमितमधिकं विधिं उपसंहर्तुं शक्तिरस्तीति । तेन एककर्मत्वेऽपि न विरुद्धमिति । तथा एकस्मिन्नपि कर्मणि किञ्चिदङ्गं समाप्तमिति कृत्वा समाप्तिशब्दः प्रयुज्यते । यथा आध्वर्यवे समाप्ते होमे वा 'संस्थिते अग्निष्टोम' इति भवति । न च तावता सर्वोऽग्निष्टोमः समाप्तो भवति ।

प्रायश्चित्तं निमित्तेन । २२ ॥

निमित्तेन उदितानुदितकालातिक्रमेण यत् प्रायश्चित्तमुक्तं तेन कर्मभेदः सिध्यतीति यदुक्तं तस्य कः परिहार इति । आकाङ्क्षायामिदं सूत्रम् । अथवा निमित्तेन निमित्तविशेषेण प्रायश्चित्तं भविष्यति । न च तावता कर्मभेदसिद्धिः, कर्मैक्येऽपि संभवात् । इति सामान्यपरिहारसूत्रमिदम् ।

प्रक्रमाद्वा नियोगेन । २३ ॥

पूर्वपक्षोक्तकर्मभेदसाधकप्रायश्चित्तहेतोः विशेषरूपेण निरासमाह सिद्धान्ती । वाशब्दः उक्तसामान्यपरिहारवैलक्षण्यार्थः । नियोगेन वैकल्पिकानां पदार्थानां प्रयोगादौ एकतरनिर्धारणेनैव प्रयोगस्य प्रक्रमात् उपक्रमात् उदिते होष्यामीति निर्धार्य प्रक्रान्ते प्रातरग्निहोत्रहोमे उदयात् प्रागेवानुदिते सति दोषः । एवं अनुदिते होष्यामीति प्रक्रम्य उदितहोमप्रयोगेऽपि । अत्र उभयथाऽपि प्रायश्चित्तविधानं कर्मैकत्वेऽपि उपपद्यते । तस्मात् प्रायश्चित्तविधानात् न कर्मभेदः ।

समाप्तिः पूर्ववत्त्वात् यथाज्ञाते प्रतीयेत । २४ ॥

'एकत्वेऽपि पराणि०' इति सूत्रे (२१) पराणि इति सामान्यतः परिहार्येन उपक्षिप्तानि । विशेषगौरवन्यायेन पुनः समाप्तिं उपपादयति । समाप्तिः मैत्रायणीयानां अन्तरोक्तेषु अग्निसमाप्तिवचनम्, यथाज्ञाते यावत् पदार्थज्ञानं तच्छाखायामाम्नातम्, तद्विषयतया प्रतीयते । पूर्ववत्त्वात् शब्दप्रयोगस्य तात्पर्यपूर्वकत्वात् । तात्पर्यं चात्र तच्छाखाविहितपदार्थजातसमाप्तिपरत्वम् । इति कर्मैकत्वेऽपि न विरोधः । 'समाप्तिवच्च संप्रेक्षा' (२०) इत्यत्र कर्मैकत्वे लिङ्गमुक्तमादिमम्, इह तु कर्मैकत्वे विरोधपरिहार इत्यपौनरुक्त्यम् ।

लिङ्गमविशिष्टं सर्वशेषत्वान्नहि तत्र कर्मचोदना, तस्माद् द्वादशाहस्याहारव्यपदेशः स्यात् । २५ ॥

पूर्वपक्षोक्तं प्रथमं लिङ्गदर्शनं निराचष्टे । यत् लिङ्गमुक्तं अनिष्टप्रथमसोमानामपि द्वादशाहसत्रवचनमिति, तत् अविशिष्टं समैव तदपि अनुपपन्नम् । कुतः ? सर्वशेषत्वात् काण्डके सर्वशाखागतज्योतिष्टोमानुवादेन प्राथम्यविधानात् । नहि तत्र काण्डे अपरस्यापि ज्योतिष्टोमस्य चोदना उत्पत्तिरस्ति, येन तत्रत्यज्योतिष्टोमप्राथम्यविषयं प्राथम्यविधानं स्यात् । तस्मात् कर्मभेदपक्षेऽपि अनिष्टप्रथमसोमानां द्वादशाहे दर्शनस्य विरोधात् तत्परिहारार्थम् 'यदि पुरा द्वादशाहेन दीक्षाणाः, यदि पुरा द्वादशाहेन अदीक्षाणाः' इति वाक्यान्तरेण द्वादशाहस्य पश्चादर्थेऽपि आहारस्य अनुष्ठानस्य व्यपदेशः स्यात् ।

द्रव्ये चाचोदितत्वाद् विधीनामव्यवस्था स्यात्, निर्देशाद् व्यवतिष्ठेत, तस्मान्नित्यानुवादः स्यात् । २६ ॥

द्वितीयं लिङ्गदर्शनं निराह । द्रव्ये चयनाग्निरूपे वेदिसंमितत्वस्य अचोदितत्वात् चोदनाया अभावात् पक्षसंमितत्वस्य विधेः आर्थिकत्वेन, वेदिसंमितत्वस्य विधेः स्तुतिकल्पनया कल्पितस्य, रथाक्षान्तरसंमितत्वस्य विधेश्च श्रौतत्वेन अव्यवस्था विधीनां स्यात् संभाव्येत । संभावनायां लिङ् । ननु रथाक्षान्तरसंमितवाक्यस्य तर्हि कोऽवकाशः ? तत्राह— निर्देशात् काम्याग्नित्वेन सर्वस्तोमादिरूपौ पृथेन दक्षिणायाः निर्देशात् तत्र व्यवतिष्ठेत । तत्र तद्वाक्यस्य सार्थक्यम् । तस्मात् वेदिसंमितत्वरथाक्षान्तरादिवचसोर्विहितत्वात् पक्षसंमितायाः नित्यानुवादः स्यात् 'नान्तरिक्षे न दिवि' इतिवत् ।

**विहितप्रतिषेधात् पक्षेऽतिरेकः स्यात् । २७ ॥**

द्विरस्तोत्रियातिरेकरूपं तृतीयं लिङ्गदर्शनं निराचष्टे । अतिरात्रे विहितस्य षोडशिग्रहस्य पुनः प्रतिषेधात् पक्षे ग्रहणपक्षे तिसृणाम् अग्रहणपक्षे च द्वयोः अतिरेकः स्यात् । तथा च अतिरात्रकर्मणः अभेदेऽपि अतिरेकभेदः संभवति । तथाहि, षोडशिग्रहणपक्षे, बहिष्पवमाने नव स्तोत्रिया ऋचः, चतुर्षु आज्यस्तोत्रेषु माध्यंदिने पवमाने च पञ्चदशस्तोमकत्वात् मिलित्वा पञ्चसप्ततिः, पृष्ठस्तोत्रेषु चतुर्षु, आर्भवे च पवमाने सप्तदशस्तोमकत्वात् पञ्चाशीतिः, अग्निष्टोमसाम्नि त्रिषु उक्थ्यपर्यायेषु षोडशिनि च एकविंशस्तोमकत्वात् पञ्चोत्तरं शतम्, अतिरात्रस्तोत्रेषु द्वादशसु पञ्चदशस्तोमकत्वात् अशीत्युत्तरं शतम्, रथंतरे नव । तत्र सर्वेषां मेलने ( ९+७५+८५+१०५+१८०+९=४६३ ) त्रिषष्ट्युत्तरशतचतुष्टयोपजननात् दशकेन भागे दत्ते तिस्रः अवशिष्यन्ते । षोडशिग्रहणाभावपक्षे तु एकस्याः षोडशिग्रहार्थायाः एकविंशतेः अपगमे 'द्विचत्वारिंशदुत्तरचतुःशतोपजननात् दशकेन भागदाने द्वे अवशिष्येते इति ।

**सारस्वते विप्रतिषेधात् यदेति स्यात् । २८ ॥**

अनिष्टप्रथमस्तोमानामपि सारस्वतसत्रदर्शनं इति चतुर्थं मन्त्रार्थदर्शनं उच्छिनत्ति । सारस्वते सत्रे मित्रावरुणयोरयनाख्ये विप्रतिषेधात्, सर्वेषामेव ज्योतिष्टोमविकाराणां क्रतूनां अग्निष्टोमपूर्वकत्वेन 'ये पुरोडाशिनः' इति पुरोडाशदर्शनविरोधस्य कर्मभेदवादिमतेऽपि दुर्वारत्वात् *सर्वैरेव तद्विरोधपरिहाराय 'यदा' इति पदं अध्याहर्तव्यं* स्यात् । यदा पौर्णमास्या पुरोडाशिनः, यदा अमावास्यया सान्नायिनः इत्यर्थो वक्तव्यः । तथा च भेदमन्त्रार्थदर्शनं कर्मभेदसाधकम् ।

**उपहव्ये प्रतिप्रसवः । २९ ॥**

पञ्चमकर्मभेददर्शनं निरासाय सूत्रकारोऽनुवदति । प्रतिप्रसवः अप्रतिप्रसवः इति उभयथा छेदः । वार्तिकेन नञ्वर्जितः पाठः सूचितः इति सुधा । प्रतिप्रसवः पुनर्विधानम् । उपहव्ये रथंतरबृहत्साम्नोः शाखाद्वयविहितयोः प्रकृतितः प्राप्तत्वात् कर्मभेदे तत्तच्छाखाव्यवस्थया तत्सिद्ध्यर्थं प्रतिप्रसवः पुनर्विधानं इति पूर्वपक्षी ब्रूते । अप्रतिप्रसवः प्रतिप्रसवाभावः पुनर्विधानानर्थक्य इति सिद्धान्ती ब्रूते ।

**गुणार्था वा पुनःश्रुतिः । ३० ॥**

एवमाशङ्क्य उत्तरमाह । वाशब्दः शङ्कानिवृत्त्यर्थः । पुनःश्रुतिर्गुणार्था स्यात् । यदा रथंतरसामा तदा अश्वः श्यावो दक्षिणा, यदा बृहत्सामा तदा अश्वः श्वेतो रुक्मललाटः इति दक्षिणाविशेषरूपगुणार्था गुणविधानार्था पुनःश्रुतिः इति ।

**प्रत्ययं चापि दर्शयति । ३१ ॥**

सर्वशाखाप्रत्ययमेकं कर्म इत्यत्र प्रमाणमाह । चापि अपि च इति निपातसमुदायः पूर्वोक्तैः प्रमाणैः समुच्चयार्थः । सर्वास्वपि शाखासु एकस्यैव कर्मणः प्रत्ययं विधानं दर्शयति वेदः । मैत्रायणीयानां समिदादयः प्रयाजा न समाम्नायन्ते गुणास्तु श्रूयन्ते 'ऋतवो वै प्रयाजाः समानीय होतव्याः' इति । तथा येषां शाखिनां 'कुक्कुटोऽसि' इति अश्मादानमन्त्रो नाम्नातः तेषामपि 'कुक्कुटोऽसि इत्यश्मानमादत्ते, कुक्कुटोऽसि इति वा' इति । तस्मादेकं कर्म इति प्रतीमः ।

**अपि वा क्रमसंयोगात् विधिपृथक्त्वमेकस्यां व्यवतिष्ठेत । ३२ ॥**

अपिवाशब्दः पक्षव्यावृत्त्यर्थः । शाखान्तरेषु कर्मभेद एव इति पूर्वपक्षी प्रतिपादयति । न प्रतिशाखं एकमेव कर्म । विधिशब्दः कर्मोत्पत्त्या विधेयपरः, एकस्यां इति पदे च वीप्सा विवक्षिता । एकैकस्यां शाखायां सर्वासु शाखासु इत्यर्थः । *कस्मात् क्रमेण संयोगात् संबन्धात् विधिपृथक्त्वं* विधेयपृथक्त्वं कर्मपृथक्त्वं व्यवतिष्ठेत । सर्वोपसंहारे क्रियमाणे तु क्रमकालपरिमाणभेदापत्तिः । भेदे [illegible] स्वशाखाविहितानामेव अङ्गानां पाठाविरोधितः क्रमः पूर्वाह्णादिकालः अङ्गपरिमाणं चानुगृहीतं भवति ।

**विरोधिनां त्वसंयोगादैककर्म्ये तत्संयोगाद् विधीनां सर्वकर्मप्रत्ययः स्यात् । ३३ ॥**

तुशब्दः पूर्वपक्षं व्यावर्तयति । ऐककर्म्ये सर्वशाखासु एककर्मत्वे सति विधीनां सर्वशाखास्थानां विधिपदोक्तानां विधेयानामङ्गानां तत्संयोगात् तेन एकेन कर्मणा संयोगावगतेः विरोधिनां पूर्वपक्षोक्तानां क्रमकालपरिमाणानां

असंयोगात् संयोगाभावात् सर्वप्रत्ययः सर्वशाखाख्यान-मह्नाना एककर्मादिप्रत्ययः स्यात् । तस्मात् सिद्धः शाखाऽन्तरे उत्पत्तिप्रयोगभेदवत् विनियोगभेदोऽपि । ततश्च सर्वशाखाप्रत्ययमेकं कर्म इति सिद्धान्तः । के.

• नामलक्षणम् 'येषामुत्पत्तौ स्वे प्रयोगे रूपोपलब्धिस्तानि नामानि' (सूत्रम्) । येषां शब्दानां उत्पत्तौ उच्चारणोत्पत्तौ स्वे अर्थे प्रयुज्यमानानाम् (न तु लाक्षणिकादीनाम्) रूपमुपलभ्यते, यत् सकृदुत्पन्नं कालान्तरं तिष्ठति, न क्रियेव उत्पन्नमात्रं विनश्यति, तानि नामानि द्रव्यगुणशब्दाः । ... ते द्रव्यगुणशब्दा इति वक्तव्ये नानि नामानीति सूचितं अतो नामानीत्येषा पर्यायशब्दः । भा. २।१।१।२.

• नामशब्दः ईषदर्थे । सु. पृ. १३५. • नामशब्दाः प्रातिपदिकवत् शब्दः प्रतिदेश अर्थभेदेषु व्यवस्थिता दृश्यन्ते । तथा चोक्तम् 'शवतिर्गतिकर्मा कम्बोजेष्वेव दृष्टः, विकारमस्य आर्याः प्रयुञ्जते 'शवम्' इति मृतशरीराभिधानम्, इत्यादि' । वा १।३।४।९ पृ. २१७.

• नामसंबन्धः पदशक्तिना नावकल्पते । वा ३।११।७।१४ पृ. ७१०.

• नामिनाम्नोः संबन्धः औत्पत्तिक इत्युक्तम् । भा. ६।८।१०।४१.

• नाम्निकस्य विभक्तयः, पुंसः पुंसौ पुंसः, शुक्लः शुक्लौ शुक्लाः इत्येवमादयः । भा. २।१।१।३.

• नामधेयं अग्निहोत्रशब्दः (१।४।३) पुनरुच्यमाणो धर्मातिदेशकः कुण्डपायिनामयने । वा. ७।३।१।२, • नामधेय अप्रसिद्धार्थे आख्यातवशा भवेत् । श्रा. ४।४।११. • नामधेय अर्थवादार्थं न धर्मातिदेशक इत्यस्मै वक्तव्यम् । रत्न ५।३।९।२९—३५. • नामधेयं 'आज्यम्' इति स्तोत्रविशेषस्य । के. १।४।२।३. • नामधेय आदित्यस्य आख्यातपरतन्त्रत्वात् नैव भेदाभेदयोर्याधियते । के. • नामधेयं कश्चिद् वेदभागः उद्भिद् बलभिद् इत्यादि. । के. • नामधेयं गोशब्दः यागस्य 'गवाभिचरमाणो यजेत' । वि. १।४।५. • नामधेय ग्रहविशेषयोः अदाभ्यांशुशब्दौ । के. ३।३।९।२०. • नामधेयं चित्रापदं यागविशेषस्य 'चित्रया यजेत पशुकामः' इति । वि. १।४।३. • नामधेयं चोदकात् बलीयः । कुतः ? प्रत्यक्षत्वात् । प्रत्यक्षं नामधेयम्, चोदकं तु आनुमानिकम् । भा. ७।४।२।१५ । नामधेयं श्रूयमाणं लक्षणया शक्नोति इतिकर्तव्यतामवगमयितुमाग्नेयीनाम् । चोदकस्तु उपमितलक्षितप्रापणेन अवगमयति । टुप्. • नामधेयं दर्विहोमशब्दः कर्मणः, न गुणविधिः । भा. ८।४।१।१,५—९, • नामधेयं दर्विहोमशब्दः जुहोतिचोदनानाम्, न तु यजतिचोदनानाम् । ८।४।२।४, • नामधेयं दर्विहोमशब्दः स्मार्तानां स्थालीपाकादीनां वैदिकस्य च वास्तुहोमादेः । ८।४।२।२—३. • नामधेयं धर्मे प्रमाणम् । मणि. पृ. ११. • नामधेयं न 'आग्नेयोऽष्टाकपालः' इति आग्नेयादिशब्दाः, किंतु गुणविधयः । वि. १।४।७ • नामधेयं निरूढानिरूढत्वेन द्विविधम् । सु. पृ. ४१०. • नामधेयं बहिष्पवमानशब्दः स्तोत्रविशेषस्य । वि. १।४।३. • नामधेयं (तत्) यत्र यजमानऋत्विगादीनां नामग्रहणम्, यथा सुब्रह्मण्यायां 'देवदत्तो यजते' इत्यादि । स न मन्त्रः । वा. २।१।९।३४ पृ. ४३७. • नामधेयं यागस्य उद्भिदादिशब्दाः उद्भिद् बलभिद् विश्वजित् इति । वि. १।४।२. • नामधेयं यागपरिच्छेदकतया धर्मे प्रमाणम् । के. १।४।१. • नामधेयं यागविशेषस्य आघारशब्दः 'आघारमाघारयति' । भा. १।४।८।८. • नामधेयं यागविशेषस्य श्येनशब्दः । वि. १।४।५. • नामधेयं लक्षणया धर्माणां ग्राहकमुक्तम् । भा. ७।४।२।५, • नामधेयं वाजपेयशब्दः यागविशेषस्य । वाजपेयाधिकरणम् । १।४।९।६—८. • नामधेयं वैश्वदेवशब्दः चातुर्मास्यप्रथमपर्वणः । वि. १।४।११, • नामधेयं संदंशशब्दः यागविशेषस्य 'संदंशेनाभिचरन् यजेत' । १।४।५. • नामधेयं समित् तनूनपात् इत्यादयः शब्दाः । 'समिदादिशब्दवत्त्वात् यजीनां समिदादिशब्दाः वाचकाः (यागविशेषणाम्) उपपद्यन्ते' । भा. ७।२।२०।६०. • नामधेयं स्तोत्रविशेषस्य पृष्ठशब्दः । वि. १।४।२. • नामधेयस्यापि वेदत्वेन अप्रमाणत्वापत्तेरभावात् । (विधि अर्थवादः मन्त्रः इत्यंत्रयम् । तत्र कर्मपरिच्छेदकतया त्रिषो अन्तर्भावः) । सु. ३९४, • नामधेयस्य गुण

फलोपबन्धोपयोगित्वेन अर्थवत्त्वं भविष्यति (इति चेत्), विहित एव यागविशेषावधारणसिद्धेः गुणफलोपबन्धोऽपि सेत्स्यति इति। पृ. २९४. * नामधेयस्य विध्यंशे करणे अन्तर्भावः। वि. २।४।१. * नामधेयानां कर्मभेदो गुणफलोपबन्धः संव्यवहारार्थं च प्रयोजनम्। मणि. पृ. ५. * नामधेयानां विधेयार्थपरिच्छेदकतया अर्थवत्त्वम्। मीन्या.

* नामधेये गुणश्रुतेः स्याद्विधानमिति चेत्। १।४।६।६॥

अस्ति वाजपेयो 'वाजपेयेन स्वाराज्यकामो यजेत' इति। तत्र गुणविधिः कर्मनामधेयमिति संदेहः। उद्भिदधिकरणे यौगिकशब्दानां मत्वर्थलक्षणादोषेण, चित्राऽधिकरणे च सातिशायिकशब्दानां वाक्यभेददोषेण नामधेयत्वे व्युत्पादिते यौगिकसातिशायिकशब्दयोरेव उदाहरणविशेषेषु अपवादमाशङ्क्य तत्प्रख्यतद्व्यपदेशाभ्यां समाधाने कृते, इदानीं उद्भिदधिकरणचित्राधिकरणसिद्धान्तहेत्वाक्षेपेण पुनः प्रत्यवतिष्ठते। अत्रायं पूर्वपक्षिणोऽभिसंधिः। सामानाधिकरण्येन हि गुणविधाने मत्वर्थलक्षणादोषो भवति, न तु वैयधिकरण्येन। तेनेह 'वाजपेयेन स्वाराज्यकामो यजेत' इति तन्त्रोच्चारितोऽयं यजिः 'यागेन स्वाराज्यं वाजपेयेन तु यागम्' इत्येवं संबध्यते, मत्वर्थलक्षणा च न भविष्यति। तदुक्तम् 'करणेषूपदिष्टेषु याऽर्थात् साध्यत्वकल्पना। तस्यां गुणविधानेन नास्ति मत्वर्थलक्षणा॥' इति। (वा. पृ. ३३७)। न च एवं सति विरुद्धत्रिकद्वयापत्तिलक्षणो वाक्यभेदोऽपि। यतो गुणत्वेन प्रधानत्वेन वा एकपदोपात्तस्य पुनरुपादाने पदावृत्तिलक्षणो वाक्यभेदो भवति। इह तु गुणप्रधानसाधारणरूपेण तन्त्रोच्चारितस्यैव उभयरूपप्राप्तेः न पदावृत्तिलक्षणो वाक्यभेदः। एवम् 'पञ्चदशान्याज्यानि' इत्यत्रापि तन्त्रोच्चारिताज्यपदोपनीतस्याज्यस्य स्तोत्रपञ्चदशसंख्याऽन्वयसहिष्णुत्वात् कुतो वाक्यभेदः?। एवं च सति उद्भिदधिकरणचित्राधिकरणोक्तमत्वर्थलक्षणावाक्यभेदयोरसंभवात् अप्रसिद्धिकल्पत्वेन प्रयोजनवत्तया च प्रवृत्तिविशेषकरत्वेन च गुणविधित्वमेव युक्तम्। तदुक्तम् 'करणेषूपदिष्टेषु' इति। ननु एवं सति उद्भिदादिवाक्यान्येव उदाहृत्य विचारयितुमुचितम्, वाजपेयोदाहरणं कुतः? सत्यम्। तान्यप्यत्रोदाहरणान्येव। किन्तु वाजपेयशब्दमपि परिशोधितं भवति इत्येतदर्थमुदाहृतम्। तेन नामधेयत्वेन सिद्धान्ताभिमतेषु पदेषु अवश्यं कस्यचिदुद्भिदादिषु वाजपेयलक्षणस्य गुणस्य श्रुतस्य असम्बद्धत्वाद्यायेन विधानमेव। इत्येवं प्राप्ते, अभिधीयते।

ऐकशब्द्ये परार्थवत्। ८॥

अयमभिप्रायः। भवेदेवं यदि अत्रापि यजिपदावृत्तिलक्षणो वाक्यभेदो न भवेत्। तथाहि, 'वाजपेयेन स्वाराज्यकामो यजेत' इत्यत्र यद्यपि यजिना गुणप्रधानसाधारणो यागरूपोऽर्थोऽभिहितः, तथापि न तद्रूपं वाक्यार्थान्वययोग्यम्। तेन वाक्यार्थान्वययोग्यं तद्रूपमस्य तत्परत्वमेव यदुच्चारणस्य वक्तव्यम्। तत्र रूपं फलसम्बन्धाय साधनत्वेन गुणरूपं तावदवश्याभ्युपेतव्यम्। एवं विधेयमुपादेयं च। न च तेन रूपेण गुणसंबन्धः संभवति, गुणस्यापि साधनत्वेनान्वयात्। ततश्च गुणसंबन्धाय साध्यत्वेन प्रधानरूपमपि वक्तव्यम्। एवमुद्देश्यमनुवाद्यं च। न चैकोच्चारणस्य विरुद्धगुणप्रधानाद्युभयपरत्वं संभवति इति यजिपदोच्चारणावृत्तौ पदावृत्तिलक्षणो वाक्यभेदो दुष्परिहर एव। यत्र पुनः प्रधानरूपपरं गुणरूपपरं वा एकमेवोच्चारणं नानापदार्थसंबन्धयोग्यम्, तत्रागृह्यमाणविशेषत्वात् भवतु तन्त्रत्वमुच्चारणस्य। यथा 'अरुणया पिङ्गाक्ष्यैकहायन्या सोमं क्रीणाति' इत्यत्र द्रव्यगुणसंबन्धाय क्रयस्य प्रधानत्वेनैव तन्त्रोच्चारणम्। यथा वा 'दशापवित्रेण ग्रहं संमार्ष्टि' इत्यत्र दशामहसंबन्धाय संमार्गस्य गुणत्वेन तन्त्रोच्चारणमिति। तदुक्तम् 'तन्त्रत्वमैकरूप्येण अवेतुल्योपकारतः। उपकारान्यथात्वे तु अवश्यावृत्तिलक्षणम्॥' (वा. पृ. ३३८) इति। प्रसिद्ध्यादयश्च नामधेयत्वेऽपि अविशिष्टा एव। अतो वाजपेयादिपदानामपि नामधेयत्वमेवेति। प्रयोजनं पूर्वपक्षे वाजपेयशब्दस्य यवागूवचनत्वात् ओषधिद्रव्यत्वेन दार्शपूर्णमासिकविध्यन्तप्रवृत्तिः। सिद्धान्ते तु नामधेयत्वेन द्रव्यदेवताऽभावात् अव्यक्तचोदनात् सौमिकविध्यन्तप्रवृत्तिरिति। भाष्यकारेण पुनः सर्वनामधेयानामेव यथायथं गुणफलोपबन्धः प्रयोजनमुक्तम्। तदुक्तं भाष्य-

कारेण 'नामधेयमपि गुणफलोपबन्धेनार्थवत्' इति (भा. १।४।१।२ पृ. ३२६)। सूत्रे तु— ऐकशब्द्ये सकृदुच्चरितशब्दाभिधेयत्वे परार्थवत् परप्रत्ययवत् उद्देश्यत्वमनूद्यमानत्वं प्रधानत्वं च स्वार्थत्वेन उपादेयत्वं विधेयत्वं गुणत्वं चेति विरुद्धत्रिकद्वयापत्तिरेव सूचिता इति प्रतिपत्तव्यम्। सौता.

🕮 नामधेये गुणश्रुतेः स्याद् विधानमिति चेत्। १।४।५।६॥

'वाजपेयेन स्वाराज्यकामो यजेत' इति वाजपेयशब्दः किं गुणविधिः, कर्मनामधेयं वेति विचारे पूर्वपक्षमाह। नामधेये नामधेयत्वेन संभाविते वाजपेयादिशब्दे गुणश्रुतेः गुणस्य अन्नरूपस्य वाजस्य श्रुतेः, तस्यैव विधानं स्यात्।

तुल्यत्वात् क्रिययोर्न। ७॥

वाजपेयशब्दो गुणविधिः इति यदुक्तं पूर्वपक्षिणा तत् न। क्रिययोः वाजपेयशब्दलक्ष्ययागस्यादिक्रियकायाः अस्या वाजपेयक्रियायाः दर्शपूर्णमासक्रियायाश्च तुल्यत्वात् तुल्यत्वप्रसङ्गात् 'सप्तदशदीक्षो वाजपेयः' 'सप्तदशोपसत्को वाजपेयः' इति दीक्षोपसद्दर्शनं नावकल्पेत। गुणविधित्वपक्षे अयं दोषः प्रसज्येत। तस्मान्न गुणविधिः।

अथवा न गुणविधिः। कुतः? क्रिययोः वाजपेयक्रियायाः ज्योतिष्टोमक्रियायाश्च तुल्यत्वात् वाजपेये दीक्षाणामुपसदां च दर्शनमुपपद्यते। तस्मात् कर्मनामधेयम्।

ऐकशब्द्ये परार्थवत्। ८॥

हेत्वन्तरेण गुणविधिपक्षं निरस्यति। पूर्वसूत्रात् नेतिपदमनुवर्तते। 'यजेत' इति ऐकशब्द्ये सति तस्य परार्थवत् तदारम्भो न युक्त इति सूत्राक्षरार्थः। यजेत इति अपूर्वविधित्वेन उपादेयत्वेन गुणत्वेन च अभिहितस्य यागस्य, परार्थवत् गुणविध्यर्थवत् अनुवादत्वेन उद्देश्यत्वेन प्राधान्येन च अभिधानं न युक्तं विरुद्धत्रिकद्वयप्रसङ्गात् इति भावः। तस्मान्न वाजगुणविधिः। किन्तु कर्मनामधेयं वाजपेयशब्दः। के.

• सर्वेष्वेव कर्मनामधेयेषु अर्थसम्बन्धेन अनुवादभूतो नामशब्दो वर्तते न लौकिकार्थतिरस्कारेण परिभाषामात्रेण वृद्धिगुणवत्। यथा अग्निहोत्रं श्येनः ज्योतिष्टोमः इति। एवं द्वादशाहः इति अर्थान्वयेन नामधेयं नार्थाभावेन। भा. १०।६।१३।४१.

• नामधेयाधिकरणे विधिस्तुतिस्मृतिवत् नामधेयत्वमपि प्रामाण्यद्वारं भवति वा न वा इति चिन्तयिष्यते। उद्भिदधिकरणं द्रष्टव्यम्। सु. पृ. ११५.
• वार्णिकचायाणां पदार्थोपस्थितेः पदशक्तिसाध्यत्वात् तदर्थं सर्वत्र पदाध्याहाराङ्गीकारेऽपि नामधेयान्वये व्युत्पत्त्यन्तराश्रयणमन्येन। तथा च स्वयमेव व्युत्पादितं नामधेयाधिकरणे। अद्वैत. २।२।६।१०–६११

• नामधेयाधिकरण – सिद्धान्ताभिधानार्थस्यापि सूत्रस्य आवृत्त्या 'तत्र अन्यथा क्रियाऽर्थवत्त्वासंभवात् पारिशेष्यात् गुणविधिः' इत्यध्याहारेण एतदधिकरणपूर्वपक्षेऽपि योजना शक्या इति मत्वा तत्सिद्धान्तार्थत्वेन अभिधानाभावो व्याख्यातः। सु पृ. ४०२. • आद्याधिकरणोक्त- (नामधेयाधिकरणोक्त-) उत्पत्तिशिष्टगुणविधि–नामधेयत्वरूपप्रकारद्वयस्य (वैश्वानराधिकरणे) अपवादात्। सौ ११८।१२।१७.

• नामधेयत्वं गुणविधित्वेन बाध्यते निरूढपु॰ बाल पृ. १४५. नामधेयत्वं च निमित्तचतुष्टयात्। १ मत्वर्थलक्षणाभयात् उद्भिद् शब्दो नामधेयम् 'उद्भिदा यजेत पशुकामः'। २ वाक्यभेदभयात् चित्राशब्दो नामधेयम् 'चित्रया यजेत पशुकामः'। ३ तत्प्रख्यशास्त्रात् अग्निहोत्रशब्दो नामधेयम् 'अग्निहोत्रं जुहोति' 'समिधो यजति'। ४ तद्व्यपदेशात् श्येनशब्दो नामधेयम् 'श्येनेनाभिचरन् यजेत'। उत्पत्तिशिष्टगुणबलीयस्त्वात् 'वैश्वदेवेन यजेत' इति वैश्वदेवशब्दो नामधेयं इति केचित्। के. • नामधेयस्य तत्प्रख्यशास्त्रात्। तत्र हि विधित्सितो गुणोऽन्यतः प्राप्तः अभिप्रेतः। निभाष्यं— यः शब्दो यत्र कर्मणि यद्गुणसंबन्धं बोधयति, स चेत् संबन्धः शास्त्रान्तरप्राप्तः, तदा तस्य शब्दस्य तन्नामधेयत्वं तत्प्रख्यशास्त्रात्। तस्य शास्त्रान्तरं विधिर्वा अर्थवादो वा। अग्निहोत्रशब्दे विधिः। वैश्वदेवशब्दे चार्थवादः। ज्योतिष्टोमशब्देऽपि अर्थवाद एव। मीन्या.

* **नामधेयत्वेन** गुणविधित्वं बाध्यते यौगिक–प्रसज्ञाक्रमभेद–तत्प्रख्य–तद्व्यपदेशेषु । बाल. पृ. १४५.

* धातुनामनाधिकरण्यं विना **नामधेयत्वायोगः** । सु पृ. ३९६.

* **नामधेयन्यायः** । नामधेयप्रामाण्याधिकरणम् । उद्भिदधिकरणे द्रष्टव्यम् । भा. १।४।१।१ वर्णके १,२. .

* **नामधेयपादः** नाम प्रथमाध्यायस्य चतुर्थः पादः । फे. * **नामधेयपादे** ( १।४ ) नामधेयानां धर्मप्रमोपयोगोऽस्ति न वा इति इह विचारार्थः । उद्भिदादयो च एषा विध्यादिवाक्यसमान्वयोऽस्ति, उत नेति चिन्तनीयम् । सु. पृ. २९२. * आद्येऽधिकरणे ( नामधेयप्रामाण्याधिकरणे ) गुणविधित्वनामधेयत्वरूपान्यतरप्रकारेण सर्वेषामुपपदानां प्रामाण्यं साधितम् । कौ. १।४।८।१० पृ. ९२४.

* **नामधेयपलीगस्त्वं** चोदकनामधेययोर्विरोधे सिद्धान्तित मतमाग्ये । मु. पृ. ४८१.

* **नामधेयभेदात्** कर्मभेदः । फे. २।१।१।१.

* अपूर्वनामधेयसंयोगो भेदहेतुः । सु पृ १४५.

* **नामनघाकिः** अङ्गुलिभिः एकमपि भिन्नमिव पश्यति ( सन्ध्यादिकम् ) । बृहती. पृ. २२८.

卐 **नारिकेलजलन्यायः** । नारिकेले जलं कथमागतं इति न ज्ञायते तद्वत् । संग्रहः.

卐 **नारिकेलफलाम्बुन्यायः** । यथा दृढावयवतरोर्वर्तमाने नारिकेलफले कथं जलमायातमिति न अर्कगोचरतामेति, तथा आगता लक्ष्मीर्नैव लक्ष्यते । उक्तं च 'आगता लक्ष्यते नैव नारिकेलफलाम्बुवत्' इति । लक्ष्मीरिति शेषः । साहस्री. २६८.

* **नारिष्ठाधिकरणप्रतिपाद्यः** न्यायः 'आगन्तूनामन्ते निवेशः' इति । के. ५।२।९।१७–२०.

■ **नारिष्ठन्यायः** । उपहोमन्यायः इति विन्दौ द्रष्टव्यम् । के. ५।२।९।१७–२०, * अभिषेचनीये चोदकप्राप्तमङ्गजातं नारिष्ठन्यायेन प्रथमं समाप्य पश्चात् विदेवनादयः कर्तव्याः इति पूर्वः पक्षः । वि. ५।२।१०.

* **नारिष्ठहोमः** प्रकृतौ प्रधानहोमादूर्ध्वं विहितः 'नारिष्ठान् होमान् जुहोति' इत्युक्तत्वात् 'दश वै पशुको यज्ञियाः' इत्यादयस्तत्र मन्त्राः । वि. १०।४।१.

* **नारिष्ठहोमाः** सर्वेष्टिषु सर्वपशुबन्धेषु प्रवर्तमाना दृष्टाः । भा. ८।४।५।१८, * **नारिष्ठहोमेभ्यः** परास्तः उपहोमा नक्षत्रेष्टिषु । ५।२।९।१९, * **नारिष्ठहोमेऽपि** हि जुहोतिचोदना 'नारिष्ठान् जुहोति' इति । ८।४।५।१९, * **नारिष्ठहोमेषु** प्रकरणेन वषट्कारः प्राप्नोति तन्मन्त्रपदैरेकवाक्यत्वात् स्वाहाकारः । वाक्यं च प्रकरणाद् बलीयः । ८।४।५।१७.

卐 **नारिष्ठहोमादीनां आतिदेशिकानां नक्षत्रेष्ट्यादौ उपदिष्टैरुपहोमादिभिः समुच्चयः ॥**

प्रकृतिलिङ्गासंयोगात् कर्मसंस्कारं विकृतावधिकं स्यात् । १०।४।१।१॥

**भाष्यम्**— अस्ति अग्निः 'य एवं विद्वान् अग्निं चिनुते' इति । तत्र नक्षत्रेष्टिः 'अग्नये कृत्तिकाभ्यः पुरोडाशमष्टाकपालं निर्वपेत्, सोऽत्र जुहोति अग्नये स्वाहा, कृत्तिकाभ्यः स्वाहा, अम्बायै स्वाहा, दुलायै स्वाहा, नितत्न्यै स्वाहा, अभ्रयन्त्यै स्वाहा, मेघयन्त्यै स्वाहा, वर्षयन्त्यै स्वाहा, चुपुणीकायै स्वाहा' इति । सन्ति तु प्रकृतौ नारिष्ठहोमाः 'नारिष्ठान् होमान् जुहोति' इति । तत्र संशयः किं नारिष्ठहोमानां निवृत्तिः, अथवा अनिवृत्तिः समुच्चय इति ।

तथा श्येने श्रूयते 'लोहितोष्णीषा लोहितवसना निवीता ऋत्विजः प्रचरन्ति' इति । अस्ति प्रकृतौ 'निवीतं मनुष्याणाम्, प्राचीनावीतं पितॄणाम्, उपवीतं देवानाम्, उपव्ययते देवलक्ष्ममेव तत् कुरुते' इति । तदिह चोदकेन प्राप्तम् । तत्र संशयः किमुपवीतस्य निवृत्तिः, उत अनिवृत्तिः समुच्चय इति ।

तथा वृषभे पठ्यते श्रूयते 'मस्त्वाद्यमेन भुज गा' इति । अस्ति तु प्रकृतौ 'पयो व्रतं ब्राह्मणस्य, यवागू राजन्यस्य, आमिक्षा वैश्यस्य' इति । तदिह चोदकेन प्राप्तम् । तत्र संशयः, किं तस्य निवृत्तिः उतानिवृत्तिः समुच्चयः इति । किं प्राप्तम् ? तस्य निवृत्तिरिति । प्रत्यक्षश्रुता उपहोमादयः चोदकप्राप्तानां आनुमानिकानां निवर्तकाः इति । अपि च प्रकृतिलिङ्गसंयोगो भवति जुहोति, निवीताः प्रचरन्ति, आश्नीयात् इति । यथा

'शरमयं बर्हिर्भवति' इति, शराः कुशान् निवर्तयन्ति । एवं प्राप्ते, ब्रूमः । अनिवृत्तिः समुच्चय इति । कुतः ? प्रकृतिलिङ्गासंयोगात् । प्राकृतेन लिङ्गेन कार्येण संयोगः एषामुपहोमादीनां नास्ति । स हि प्रत्यक्षदर्शनेन वा भवति यथा 'नैशरथ्यः' इति । अभावे विधानेन वा भवति यथा 'तूष्णीं वा एतर्हि वाग् भवति, यर्हि पृष्ठ्यः षडहः संतिष्ठते, न वदु वदेत्, नान्यं पृच्छेत्, नान्यस्मै प्रतिब्रूयात्, संज्ञापयेत् मृत वा' इति । विकारेण वा यथा 'नैर्ऋतश्चरुर्नरोऽवघ्नातानाम्' इति । स्वशब्देन वा भवति यथा 'परिधौ पशुं नियुञ्जीत' इति । प्रतिषेधेन वा भवति यथा 'न गिरागिरेति ब्रूयात्, यद् गिरागिरेति ब्रूयात् आत्मानं तदुद्गाता गिरेत्, ऐरं कृत्वोद्गेयम्' इति । अन्येन वा येनाशक्यते प्रकृत कार्यं अभिनिर्वर्तयितुम् इति । तदिह न किञ्चिदपि अस्ति । न चैतावता निवृत्तिः, इद प्रत्यक्षश्रुतमिद चोदकेन प्राप्तमिति । प्रकृतिलिङ्गसंयोगे निवृत्तिर्भवति नान्यथा । ननु इदानीमेवोक्तं भवतीह प्रकृतिलिङ्गसंयोगः जुहोति, निवीताः प्रचरन्ति, आदधीत इति । उच्यते । प्राकृताना जुहोत्यादीनां जुहोत्यादयोऽन्यत्रापि इमानि विधीयन्ते । तत्र तावत् जुहोतिः अदृष्टार्थः, कथमसौ गम्येत प्रकृतस्यार्थे वर्तते इति । तथा उपवीत अदृष्टार्थे कथं तस्य कार्ये निवीतं वर्तते इति गम्यते । तथा यत् कृष्णर्यम्, मध्वशन घृताशन च तस्मिन्नर्थे वर्तते इत्येतत् ज्ञायते एव । तस्मादप्राप्ति प्रकृतिलिङ्गसंयोगः । अथोच्यते, नैतेषु होमा जुहोत्यन्तरम्, प्राकृते होमे मन्त्रो विधीयते इति । तच्च न । विधायकस्याभावात् । 'सोऽत्र जुहोति' इति परिसमाप्ते वाक्ये केवलस्य मन्त्रस्य आम्नानम्, नास्ति वचनं एवं जुहोतीति । भिद्यन्ते तानि वाक्यानि, 'सोऽत्र जुहोति' इति विधिवाक्यम्, 'अग्नये स्वाहा, कृत्तिकाभ्यः स्वाहा' इत्येवमादीनि मन्त्रवाक्यानि । तस्मात् न मन्त्रविधानार्थं जुहोतेः पुनःश्रवणम् । होमविधानार्थे श्रुतिर्विधायिका भवति, मन्त्रविधाने वाक्यम् । तस्मादपि न मन्त्रविधानम् । अतः समुच्चयः । उभयमपि प्रमाणेन प्राप्तम्, प्रत्यक्षश्रवणं प्रमाणम्, चोदकोऽपि प्रमाणम् । नानाकार्यत्वात् नैतयोर्विरोधः । तस्मात् यथा प्रयाजादीन् न बाधन्ते, एवं नारिष्ठहोमानपि न बाधेरन् । अत एवंजातीयकं कर्मसंस्कार विकृतौ अधिकं स्यादिति ।

टुप्— 'निवीता ऋत्विजः' इत्येतदनुदाहरणम् । कथम् ? ज्योतिष्टोमे उपवीताभावात् । न (हि) प्रत्यक्षेण, न (अपि) चोदकेन ज्योतिष्टोमे उपवीतम् (अस्ति । यस्य निवीतेन बाधसमुच्चयौ चिन्त्येयाताम्) । तत्प्रकृतिकश्च श्येनः, न दर्शपूर्णमासप्रकृतिकः । (ननु अङ्गानि ऐष्टिकानि, तेषु उपवीत प्राप्नोति, निवीतमपि तेषु प्रधानादवतीर्णम् । इति युक्ता चिन्ता, अत आह—) 'आनर्थक्यात् तदङ्गेषु' इति न्यायोऽत्र नास्ति (येन अङ्गेषु निवीतमवतरेत्) । प्रधाने हि असंभवन् (धर्मः) अङ्गे अर्थात् क्रियते । सम्भवति चात्र प्रधाने एव निवीतम् । तस्मात् भिन्नविषयत्वात् निवीतोपवीतयोर्नैवंसा (न बाधः समुच्चयो वा) । तत् (तस्मात्) अनुदाहरणमिदम् । उपहोमास्त्वेव (तु) उदाहरणम् । ननु उपहोमाना प्रत्यक्षविधानात् चोदक एव नास्ति नक्षत्रेष्टौ यथा पारमेष्ठ्यस्य आरभ्यमाणस्य. प्रत्यक्षाम्नानात् । यथा च सोमस्य प्रत्यक्षविधानात् । उच्यते । सर्वास्वेव विकृतिषु उपमानेन धर्मप्राप्तिः । च सोमस्य केनचित् (धर्मवता कर्मणा) सादृश्यमस्ति । तस्मात् सोमे ये एव धर्मा विधीयन्ते, ते एव भवन्ति, नान्ये इति । नक्षत्रेष्टावपि (तुशब्दार्थे अपिशब्दः) प्रथमं तावत् उपकारापेक्षा भवति, तत्र सादृश्येन धर्मप्राप्तिः । न च अपूर्वमङ्ग उपकारयत् दृष्टम् । सादृश्य चास्या आग्नेयेन (अस्ति) । तत्र प्रकारा अनन्तराः (अव्यवहिताः) आग्नेये विधन्ते । ते च उपकारमन्तरेण न संभवन्ति । तस्मात प्रकारादनन्तर उपकारा विधन्ते । तानु प्रकृति विकृतिः । इमे चोपहोमा नोपकारपूर्वकाः । तस्मात् प्राकृतमङ्गजात प्रवर्तते । पारमेष्ठ्ये तु दृष्टोपकारी आरभ्यमाणो पुन श्रूयते, तौ शक्नुतो पारमेष्ठ्यं निराकाङ्क्षीकर्तुम् । न च उपहोमाना श्रुत्याद्यभावात् स उपकारः शक्यते कल्पयितुम् । ननु श्रुत्याद्यभावात् अनङ्गत्वमेव उपहोमानां प्राप्नोति । उच्यते । सत्य श्रुत्याद्यभावः (श्रुत्यादिनियमाभावः), किन्तु (प्राकृताङ्ग—) प्रदेशोपदेशेन तेषा ग्रहणम् । (यथादि,) पूर्वेऽपि पदार्थाः

प्राकृताः श्रूयन्ते, ( तथा ) परेऽपि ( प्राकृताः ) मध्ये उपहोमाः तस्मात् तेषाम् ( अपि आश्वङ्गवैव ) ग्रहणम्। ( यद्यपि संदेशाभावः, तथापि क्रमादेव अङ्गत्वमिति )।

( पूर्वपक्षमाह— ) जुहोतिशब्दसामान्यात् स्थानसामान्याच्च ( इति प्रकृतिलिङ्गद्वयात् ) नारिष्ठाश्च । उच्यते । नात्र बाधः । कुतः ? कार्यापत्त्यभावात् । प्रत्यक्षेण तावत् कार्यापत्तिर्नास्ति यथा नैवारश्चरुः इति व्रीहीणां कार्ये नीवाराः वर्तन्ते । ननु शब्देनैव कार्यापत्तिः ( कथं प्रत्यक्षेणेत्युच्यते ? ), नहि, ( कथम् ? ) नीवारप्रातिपदिकं नीवारान् ब्रवीति, तद्धितो विकारम्, चरुशब्दः चरुम्, बृहस्पतिशब्दः तस्य देवतात्वमात्रम् । न केनचिच्छब्देन ( व्रीहि- ) कार्यापत्तिर्गम्यते । प्रत्यक्षेण त्ववगम्यते । ( तथाहि ) व्रीहयः पुरोडाशं निर्वर्तयन्ति, पुरोडाशो यागम्, एवं नीवाराः चरुं साधयन्ति, चरुश्च यागमिति ( उभयेषामपि हविर्निर्वर्तकत्वं प्रत्यक्षम् )। न च अनुमानेन कार्यापत्तिः यथा नखावपूतानां चरुः इति । तत्र तुषकणविमोकं दृष्ट्वा कल्प्यम्, नूनं अवघातकार्ये वर्तते ( नखा— ) अवपवनमिति ( अवहन्यते अनेन इत्यवघातः उलूखलमुसलम् । अवपूयते अनेन इति अवपवनं नखाः )। न च प्रतिषेधेन कार्यापत्तिरनुमीयते यथा 'न गिरा गिरेति ब्रूयात्' इति । ननु परस्परनिराकाङ्क्ष ( इदम् ) वाक्यद्वय विधायक— ( इव— ) मवाकत् 'ब्रूयात्, ऐरंकृत्य उद्गेयम्' इति ( अतः कथमिह एकस्य कार्ये अपरस्य निधानमिति )। उच्यते । एवं सति वाक्यभेदः प्राप्नोति, विधायकशक्तिकल्पना च एकैकस्य ( स्यात् )। तस्मात् गिरापदस्य प्रतिषिध्यमानस्य यत् कार्यं ( साधनाकाङ्क्षम् ) लक्ष्यते, तत्र इरावद् विधीयते । तस्मात् कार्यलक्षणार्थं गिरापदमुच्चार्यते, न प्रतिषेधार्थं वाक्यभेदादिदोषात् । न च ( अपि ) लक्षितलक्षणया कार्यापत्तिः यथा 'पृषदाज्येन पशुः संतिष्ठते' इति । अत्र हि अभावः प्रेक्ष्यः । ( तेन च ) अभावेन ( संस्थाशब्दाभिधेयेन ) प्रतिषेधो लक्षणया गम्यते, प्रतिषेधेन ( च ) लक्षणया कार्यम् ( गम्यते )। कार्ये ( च ) मन्वन्तरधृताज्ये ( विधीयेते )। नापि स्वशब्देन कार्यापत्तिः यथा 'परिधौ पशुं नियुञ्जन्ति' इति । तस्मात् पञ्चप्रकाराऽपि कार्यापत्तिः नास्ति उपहोमानां येन बाधेरन् । प्राकृतं येन वा केनचित् इति निरूपयन्ति ( भाष्यमूले तु 'अन्येन वा येन अवगम्यते प्राकृतं कार्यमभिनिर्वर्तयन्ति' इति पङ्क्तिः । तस्या अयमनुवादो वार्तिके ) इति कोऽयं ग्रन्थः ? ( पञ्चप्रकारातिरिक्तकार्यापत्तिप्रमाणादर्शनात् अनादरोक्तेन तु भाष्यम् ।

अथ नेदं होमान्तरम्, प्राकृते एव तु होमे मन्त्रविधानं इत्युच्यते, अत आह— ) न च होमानुवादेन मन्त्रविधानम् । शुद्ध एव हि होमो विधीयते अनेन वाक्येन 'सोऽत्र जुहोति' इति ( न तु अत्र मन्त्रग्रहणम् ) । द्वितीयेन तु ( वाक्येन ) मन्त्राः ( केवलाः पठिताः ) अग्नये ( स्वाहा ), कृत्तिकाभ्यः ( स्वाहा ) इत्यादिना । तयोः ( मन्त्रयोः ) संबन्धः प्रकरणेन ( भवति ) न वाक्येन । तस्मात् नारिष्ठोपहोमयोः समुच्चयः ।

**चोदनालिङ्गसंयोगे तद्विकारः प्रतीयेत प्रकृतिसंनिधानात् ॥ २ ॥**

भाष्यम्— अथ यदुक्तम् 'शरमयं बर्हिर्भवति' इति यथा शराः कुशान् निवर्तयन्ति एवमिहापीति । अत्रोच्यते । युक्तं शरमये । भवति हि तत्र प्रकृतिलिङ्गेन संयोगः बर्हिःशब्देन एवंविशिष्टं वा बर्हिर्भवति, शरा वा बर्हिषः कार्ये वर्तन्ते इति । इह तु प्रकृतिलिङ्गासंयोगः । तस्मात् विषमं बर्हिरिति ।

शा— 'सति प्राकृतकार्यत्वे भवेद् बाधो न चास्ति तत् । साधारणं च होमत्वं तस्योपस्थापनक्षमम् ॥' सर्वसाधारणं हि होमत्वं न नारिष्ठकार्यं उपस्थापयितुमर्हति । तस्मादुभयेषां समुच्चयः ।

वि—'नक्षत्रेष्ट्युपहोमादिर्नारिष्ठादेर्निवर्तकः । समुच्चितो वा, कार्यैक्याद्बाधो, ऽस्त्यो, ऽपूर्वभेदतः ॥'

भाट्ट— 'अग्नये कृत्तिकाभ्यः पुरोडाशमष्टाकपालं निर्वपेत्' इति नक्षत्रेष्टि विधाय उपहोमाः समाम्नाताः । 'सोऽत्र जुहोति, अग्नये स्वाहा, कृत्तिकाभ्यः स्वाहा, अम्बायै स्वाहा, दुलायै स्वाहा, नितत्न्यै स्वाहा, अभ्रयन्त्यै स्वाहा, मेघयन्त्यै स्वाहा, वर्षयन्त्यै स्वाहा, चुपुणीकायै स्वाहा' इति । प्रकृतितश्च 'नारिष्ठान् जुहोति' इति नारिष्ठहोमाः प्राप्ताः । ते किं उपहोमैर्बाध्यन्ते उत समुच्चीयन्ते इति चिन्तायाम् । नारिष्ठहोमानां प्रकृतौ प्रधानो-

परकाल्पात् अत्र शब्दत्वेन प्रधानेनत्वोविनामेषां समानस्थानकत्वेन एककार्यजनकत्वावगतेः उपदिष्टैरुपहोमैः नारिष्टहोमाना अतिदिष्टाना स्वल्पत् बाधः इति प्राप्ते । शरा हि बर्हिःशब्दलक्षिते तत्कार्ये विहिताः युक्त यत् तत्कार्यद्रुमावेन प्राप्यमाना बर्हिर्बाधन्ते, उपहोमास्तु नारिष्टहोमकार्यापन्नाः इत्यत्र न किंचित् प्रमाणमस्ति, प्रत्यक्षादेस्तावत् अदृष्टार्थेषु अप्रवृत्तेः । न च समानस्थानकत्वात् एककार्यत्वावगतिः, उपहोमवाक्ये अतिदेशप्राप्तिनारिष्टकार्यस्य उपस्थापकत्वाभावेन अनुद्देश्यत्वात् तदुद्देशेन उपहोमविध्यप्रतीतेः अतिदेशेन कार्यद्रुमावेन नारिष्टानामपि प्राप्त्युपपत्तौ शब्दस्यावैलक्षण्येन समानस्थानकत्वमात्रस्य अप्रयोजकत्वात् । न च उपहोमवाक्ये कर्मान्तरविधावेव प्रमाणाभाव., नारिष्टानुवादेनैव मन्त्रविधानोपपत्ते. इति वाच्यम् । प्राप्तकर्मानुवादेन अनेकमन्त्रविधौ वाक्यभेदप्रसङ्गस्यैव भेदकत्वात् । एकं हीद वाक्य इतिकरणेन तैत्तिरीयशाखाम्नातेन मन्त्राणां गुणत्वेनैव अन्वयप्रतीतेः । अत एव म्याङ्काङ्काताना मन्त्राणां लिङ्गादेव नारिष्टहोमेषु विनियोगप्राप्तौ पुनर्विनियोगान्तरवैयर्थ्यप्रसङ्गादपि कर्मान्तरम्, नच एकवाक्योपादानावगतत्वाहुत्यन्तरमन्त्रसमुच्चयभङ्गेन अनेकं आहुत्यं वा इत्यन्यदेतत् । न च तथापि उपदिष्टोपहोमैरेव विकृतेः निराकाङ्क्षत्वात् अतिदेशकल्पकत्वाभावेन नारिष्टाप्राप्तिः । उपहोमानां अदृष्टोपकारकतया उपकारकाकाङ्क्षया विकृत्या प्रथम आतिदेशिकस्यैव ग्रहणेन नारिष्टाना प्राप्त्युपपत्तेः । अत एव उपहोमादीना वैकृताना अन्यतराकाङ्क्षयैव ग्रहणं अनुपस्थितपरमान्तत्वकल्पने गौरवात् । अत एव यत्र दृष्टोपकारकपदार्थाकाङ्क्षे पुनःश्रवण निवृत्तिप्रकरणे, यथा गृहमेधीयाज्यभागादौ तत्रैव विकृते. निराकाङ्क्षत्वापादनेन अतिदेशलोप. । यत्र वा संनिपत्योपकारकाङ्गसमवायीत्यत्र । न तु अत्र द्वयमप्यस्ति । अतः उपहोमै. नारिष्टाना न बाधः ।

यत्तु अत्र भाष्यकारेण स्वेन 'निवीता कण्ठेन. प्रचरति' इत्याम्नातेन प्रयोगाङ्गभूतकर्तृसंस्कारकेण निवीतेन अतिदेशप्राप्तस्य सर्वकर्माङ्गत्वेन विहितस्य चोपवीतस्य बाधमाशङ्क्य अदृष्टार्थत्वात् समुच्चय इति सिद्धान्तितम् । तदस्य अदृष्टार्थत्वे श्राद्धादावपि प्राचीनावीतेन सह उपवीतस्य समुच्चयापत्तेः प्राकृतौपदेशिकमिथ्यावतत्त्वकयज्ञोपवीतधारणाश्रितसंस्कारविशेषस्य । उपवीतत्वनिवीतत्वादेः तत्तत्कर्माङ्गतया विहितस्य समुच्चयासंभवात् उपेक्षितम् ।

यदपि 'संस्थिते पशौ मध्याशयेत्' इति विहितमध्वाशनेन प्राकृतपयोव्रतस्य तस्मिन्नहनि निवृत्तिमाशङ्क्य अदृष्टार्थत्वादेव समुच्चय इत्युक्तम् । तत् मध्वशनस्य दृष्टत्वसंभवेन पयोव्रतार्थप्रतिपत्त्यनुपपत्तेः पूर्वपक्षोत्थानाभावात् मुख्याया पयोव्रताभावाच्च उपेक्षितम् । अस्तु वा तदपि इहोदाहरणम् ।

मण्डन-- 'उपहोमा न बाधन्ते ।' नारिष्टहोमान् ।

शंकर-- 'उपहोमैर्न नारिष्टा बाध्याः ।'

● नारिष्टहोमपूर्वकत्वं दर्विहोमानाम् । भा. ८।४। ५।२०.

● नावनीतं आज्यम् । पुराणनूतनयोः घृतयोर्नवनीतजन्यत्वे समानेऽपि योगरूढ्या नूतनमेव 'नावनीतम्' इति व्यवह्रियते । वि. १।४।१०.

● 'नाशः कारणलयः' इति न्यायेन प्रलयेऽपि प्रपञ्चस्य मायात्मकत्वेन स्थिरत्वोपदेशात् । श्रीकर. २।१। २७ सू.

● नाशाधिकरणम् । ६।४।२।३ ।। इदमधिकरणम् 'दर्शपूर्णमासादौ स्विष्टकृदादिशेषकार्यार्थमवत्तस्य द्रव्यस्य नाशे शेषकार्यलोपः' इत्यत्र ( मीको. पृ. १०७३ ) द्रष्टव्यम् ।

● 'यस्य पुरोडाशौ क्षायतः' इत्यत्र एकदेशनाशे तु प्राकरणनाशाधिकरणन्यायेन ( ६।४।२ ) आज्येन द्रव्यावशिष्टेन वा प्रयोगसमाप्तिमात्रम् । भाट्ट. ६।४।५.

● नास्तिकैः 'अग्निहोत्रं त्रयो वेदास्त्रिदण्डं भस्मगुण्ठनम् । बुद्धिपौरुषहीनानां जीविकेति बृहस्पतिः ॥' इति अग्निहोत्रादीना व्यर्थत्वमुक्तम् । सु. पृ. १३५.

● निकान्त. नितरां कान्त. नितान्तं प्रिय. । 'कामनिकान्ता हि पशव.' । के २।३।६।१६–१७.

● निकायः इति संघस्य. औत्तराधर्येणावस्थित उच्यते । स येषां ते निकायिनः । यथा याज्ञाः

सायस्काः । भा. ८।१।१२।१९. ■ निकायः एकेन शब्देन युगपदुपादानलक्षणः संघः । सु. पृ. ८६०.

* निकायिनां च पूर्वस्योत्तरेषु प्रवृत्तिः स्यात् (८।१।१२।१९) इत्याष्टमिकन्यायात् अतिदिष्ट-पूर्वाग्निष्टुद्धर्मकयागान्तरस्य पश्वर्थमनुष्ठान इति सिद्धान्ते प्रयोजनम् । कस्तूरि. २।२।१२।२६.

⚜ निकायिनां च पूर्वस्योत्तरेषु प्रवृत्तिः स्यात् । ८।१।१२।१९ ॥

निकायः इति संघात उच्यते । स येषां ते निकायिनः साद्यस्काः सायस्काश्च । तत्र निकायिनां मध्ये पूर्वस्य पूर्वं पठितस्य प्रवृत्तिः उत्तरेषु निकायिषु स्यात् । निकायित्व सामान्यात् । पुनरपि साद्यस्काणां सहस्रदक्षिणासामान्यात् साद्यस्काणां च सद्यस्कालसामान्यात् । ततश्च प्रथमः साद्यस्क उत्तरसाद्यस्कानाम्, प्रथमः सायस्कश्च उत्तर-सायस्कानां प्रकृतिः । के.

* निकायिनां च पूर्वस्योत्तरेषु प्रवृत्तिः स्यात् । सायस्काः साद्यस्काः इति च एकेन शब्देन युगपदु-पादानलक्षणसंघरूपनिकायवतां अग्निष्टुदादीनामेकाहानां निकायिनामवान्तरसामान्येन सुग्रहत्वात् पूर्वस्याग्निष्टुतो विकृतेः ऐषुद्यादिफलेषु उत्तरेषु प्रवर्तने इति सूत्रे 'निकायिनाम्' इत्यत्र वक्ष्यमाणत्वात् तदीयधर्मप्राप्तिः । सु. पृ. ८६०

* निकायित्वं सोमप्रकृतिलिङ्गम् । बाल पृ. ११९.

* निकृन्तनं नखानां ज्योतिष्टोमे संस्कारो न फल-प्रयुक्तः । तत्र फलश्रुतिरर्थवादः । तस्य फलार्थं यजमाना-र्थम् । के. ४।२।१।१–८.

■ ब्रह्मणः प्रधानत्वे अप्रधानत्वे वा ब्रह्मैव फलदं इति श्रुतेरुपपत्तौ सत्यां 'निकृष्टे उत्कृष्टदृष्टिः कर्तव्या' इति लौकिको न्यायो न बाधनीयः । आभरणम् ४।१।५।५ ब्रह्म.

⚜ निकृष्टदृष्टिर्नोत्कृष्टे इति लौकिको न्यायः । आदित्यादिदृष्टयो ब्रह्मण्येव कर्तव्याः, न तु ब्रह्मदृष्टि-रादित्यादिषु । न चैवंविधे अवधृते शास्त्रार्थे निकृष्ट०... न्यायोऽपवादाय प्रभवति, आगमविरोधेन तस्यैवापो-दितत्वात् । भामती. ४।१।५ ब्रह्म.

* निखननं यूपधर्मः, औदुम्बरीधर्मश्च । के.

* निगदः । 'नितरां गद्यमानत्वान्निगदो ह्येष गद्यते ।' (तस्य परप्रत्यायनार्थत्वात् उच्चैष्ट्वम्) । वा. ६।२। ५।१२ पृ. ७६२.

⚜ निगदो वा चतुर्थं स्याद्धर्मविशेषात् । २।१। १४।३८ ॥

अथ निगदा नाम किं यजूंषि ? उत यजुर्भ्योऽन्ये ? इति ऋक्सामयजुःशब्दपदार्थेषु निरूपितेषु निगदानामनु-प्रसङ्गेनैव 'उच्चैर्निगदेन' इत्येवमादिनिर्देशावगत निगदपदार्थो निरूप्यते । अत्रायं पूर्वपक्षिणोऽभिसंधिः 'उपांशु यजुषा' इति यजुषामुपांशुधर्मशालित्वं प्रतीयते । अस्य च 'उच्चैर्निगदेन' इति विशेषः श्रूयते । स चास्य यजुष्ट्वे नोपपद्यते, विध्यनुवादगौरवप्रसङ्गात् । विधित्वे सति 'उपांशु यजुषा' इति सामान्यशास्त्रप्राप्त-मुपांशुत्वम् 'उच्चैर्निगदेन' इति विशेषशास्त्रेण बाधनीयम् । बाधश्च गत्यन्तरासंभवे भवेत् । तेन 'ब्राह्मणेभ्यो दधि दीयतां तक्रं कौण्डिन्याय' इत्यत्र कौण्डिन्यगतब्राह्मणत्वस्य प्रमाणान्तरसिद्धत्वात् भवतु गत्यन्तरासंभवेन बाधः, यजुष्ट्वस्य प्रमाणान्तरसिद्धत्वात् 'शेषे यजुःशब्दः' इति लक्षणस्य कचनामनिगदशेषपरत्वेनापि संभवात् निगदोऽ-न्यत्वेनैव उपपत्तेर्न बाधसंभवः । न च यजुष्ट्वेऽपि परसंबोधरूपत्वेन निगदानां अर्थप्राप्तमुच्चैष्ट्वम् 'उच्चै-र्निगदेन' इत्यनूद्यते । यजुष्ट्वे सति वाक्यनिषेधेनोपांशुत्वेन अर्थप्राप्तस्य उच्चैष्ट्वस्य बाधितत्वात् अनुवादासंभवात् । किञ्च, व्यपदेशभेदश्चापि अभियुक्तानां दृश्यते 'निगदा वर्तन्ते न यजूंषि, अथ यजूंषि न निगदाः' इति । अतो न यजूंषि निगदाः, किन्तु चतुर्थमेव निगदा इति मन्त्रजातमिति । एवं प्राप्ते, अभिधीयते ।

यजूंषि वा तद्रूपत्वात् । ४० ॥

अयमभिप्रायः, भवेदेवं यदि 'उच्चैर्निगदेन' इत्यत्र अनुवादो न संभवेत् । न च यजुष्ट्वे सति अर्थप्राप्त-मुच्चैष्ट्वम् उपांशुत्वविधिना बाधितत्वात् नानूद्यते इति वाच्यम् । उपांशुत्वविधेर्निगदेषु प्रवृत्त्यसंभवात् । तथाहि, 'अग्नीदग्नीन् विहर बर्हिः स्तृणाहि' इत्येवंरूपा हि निगदाः । ते च परसंबोधनार्थत्वेन प्रयोगेषूच्चार्यमाणेषु स्वकार्यक्षमा

अर्थाच्च ॥ ४२ ॥

भाष्यम्— अस्ति च तैः पुरुषान्तरैः प्रत्यायितैः प्रयोजनम्। नोपांशूच्चार्यमाणाः पुरुषान्तरं प्रत्याययेयुः। तस्मात् धर्मविशेषोऽर्थवान्। यानि च यजूंषि उच्चैरुच्चार्यन्ते, ते निगदाः। कुतः? निशब्दः प्रकर्षस्य वक्ता। यथा प्रकर्षेण रक्तं नितरां रक्तमित्युच्यते। गदतिर्वदनार्थः पाठवचनः। एष एव हि प्रकर्षः, यदुच्चैस्त्वावच्छिन्नत्वम्। ननु वाचनिको गुणो यजुषामुपांशुत्वम्। नेति ब्रूमः। गुणो नाम स भवति, यः स्वार्थं कुर्वन्नुपकारे वर्तते। न च परसंबोधनार्थानां यजुषामुपांशुत्वं साद्गुण्ये वर्तते। तद्धि स्वकर्मविघातं करोति। तेन पुरुषान्तरसंबोधनार्थमुच्चैस्त्वं गुणः। इतरार्थं तु वचनं भविष्यति। इतराणि यानि यजूंषि न परसंबोधनार्थानि, तेषु उपांशुत्वं निवेक्ष्यते।

वा— अपि च 'अग्नीत् अग्नीन् विहर' इत्यादि वचनेन अर्थे, अन्यथा अनुष्ठानानुपपत्तेरिति धर्मविशेषप्राप्तिः। तथा च निगदशब्दावयवव्युत्पत्तिसिद्धिः। वाचनिकमपि च उपांशुत्वमनुपकारत्वेन अनङ्गत्वात् निगदव्यतिरिक्तयजुर्विषयं विज्ञायते।

गुणार्थो व्यपदेशः ॥ ४३ ॥

भाष्यम्— अथ यदुक्तं व्यपदेश इति, स एकत्वेऽपि गुणतो भवति। यथा, 'इतो ब्राह्मणा भोज्यन्ताम्, इत परिव्राजकाः' इति। एवमुच्चैस्त्वेन गुणेन तान्येव यजूंषि व्यपदिश्यन्ते निगदा इति।

वा— ब्राह्मणपरिव्राजकवत् गुणेन व्यपदेशभेदः।

सर्वेषामिति चेत् ॥ ४४ ॥

भाष्यम्— यदि य उच्चैर्गद्यते स निगदः, ऋगपि निगदः प्राप्नोति।

वा— अतिप्रसङ्गद्वारेण गुणस्य व्यपदेशनिमित्ततां व्यभिचारयति।

न, ऋग्व्यपदेशात् ॥ ४५ ॥

भाष्यम्— न ऋचो निगदा इति व्यपदिश्यन्ते। 'अयाज्या वै निगदा ऋचैव यजन्ति' इति पृथक्त्वनिमित्ता हि व्यपदेशा भवन्ति। उच्यते। व्यपदेशो लिङ्गम्, प्रातिरूप्यतामिति। अपादबद्धे गदतिर्वर्तते, अपादबद्धो हि गद्य इत्युच्यते।

वा— न तावदतिप्रसङ्गोऽस्ति, निगदं निर्दिश्य ऋचो विधानात्। नहि तमेव निर्दिश्य तस्यैव विधित्वं कल्प्यते। न च व्यभिचारित्वम्। गदतिवशेन यजुष्ट्वे सति धर्मविशेषस्य व्यपदेशभेदनिमित्तत्वात्।

सोम— प्रयोजनं तु यजुष्ट्वे यजुर्भ्रेषप्रायश्चित्तम् 'सर्वाणि यजूंषि' इति वाचःस्तोमे पारिप्लवशंसने विनियोगश्च। यजुर्भेदे तु न तदुभयमिति। सूत्रार्थस्तु— निगदश्चतुर्थं मन्त्रजातं स्यादेव उच्चैस्त्वरूपधर्मविरोधात् इति।

वि— 'प्रोक्षणीरासादयेति निगदस्त्रिविधाद् भिदः। यजुरुच्चैस्त्वधर्मस्य भेदादस्य चतुर्थता॥, परप्रत्यायनार्थत्वादुच्चैस्त्वं यजुरेव सः। वचनेन गुणत्वात् त्रैविध्यमिति सुस्थितम्॥'

भाट्ट— निगदसंज्ञकानां मन्त्राणां संज्ञाभेदात् 'उपांशु यजुषा। उच्चैर्निगदेन' इति विप्रतिषिद्धधर्मभेदाच्च भेदो यजुर्भ्यः। इति प्राप्ते, 'ऋचः सामानि यजूंषि' इति वेदे त्रयाणामेव मन्त्रभेदानां संकीर्तनम् 'स स एव सत्त्वप निगदभूतो भवति तस्मात्.' ( यमा. १–२ ) इति च लिङ्गात् निगदानां यजुष्ट्वमेव। संज्ञा तु ब्राह्मणपरिव्राजकन्यायेन अभेदेऽप्युपपन्ना। निगदत्वं च यजुष्ट्वावान्तरधर्मः। न तु नितरामुपांशुत्वातिरिक्तस्वरेण गदनत्वम्। 'नमः प्रवक्त्रे' इत्यादिनिगदेषु उपांशु पठ्यमानेष्वभावात्। न च धर्मभेदात् भेदः, विशेषविहितेन उच्चैस्त्वेन सामान्यविहितस्य उपांशुत्वस्य अपवादसंभवात्। 'उपांशु यजुषा' इत्यस्य वेदोपक्रमानुरोधेन यजुर्वेदविहितकर्ममात्रे उपांशुत्वविधायकत्वस्य वक्ष्यमाणत्वेन अन्यथाऽपि संकोचस्यावश्यकत्वाच्च। न चैवमुपक्रमवशेन यजुःपदे वेदलक्षणावत् निगदपदेऽपि यजुर्वेदलक्षणापत्तेः एकस्मिन् कर्मणि धर्मद्वयविकल्पापत्तिः, 'वायोर्यजुर्वेदः' इत्युपक्रमस्य यजुःपदे एव लक्षणातात्पर्यग्राहकत्वात्। अन्यथा 'वायोर्निगदवेदः' इत्यपि किं नावदत्। अतश्च 'उच्चैर्निगदेन' इति स्वतन्त्र एव निर्धारकोऽयमुच्चैस्त्वनियमविधिः विशेष-

विहितातिरिक्तनिगदोद्देशेन । तेषु हि परार्थत्वात् कार्यवशेन उपांशुत्वनियमस्य मन्द्रत्वानेकस्वरप्राप्तो उच्चैस्त्वनियमो नानुपपन्नः । अतो निगदप्रेषेऽपि यजुर्धर्मनिमित्तप्राप्तमिदम् । आश्विनादौ पारिप्लवशंसनं वा । १४.

मण्डन— 'यजुर्विशेषो निगदो न भिद्यः ।' १३ (१४).

शंकर— 'निगदत्वा यजुष्ट्वं स्यात् ।' १६.

* निगदाधिकरणे नियमविधित्वमनुसारात् 'उपांशु यजुषा' इति वाक्यं निगदातिरिक्तयजुर्विषयं स्वीकृतम् । रसायनम् . पृ. ७५.

* नवमे पेदोक्तस्य याधिकरणविषयवाक्यात् निगदाधिकरणविषयवाक्यभेदोऽभ्युपगत । पराक्रम . १८।२। यत्रानियमेनोपांशुत्व प्राप्तम्, तत्र नियममात्रम् 'उपांशु यजुषा' इत्यनेन क्रियते निगदव्यतिरेकेणेव च यजुषु येनकेनचित् स्वरेण कार्यसिद्धेः उपांशुत्वानियमप्राप्ति इति तद्विषयमेव इद वचनं ( उच्चैर्निगदेन इति ) अनुवादमात्रम् । ४०।२.

* निगदपादः संकर्ष ४।२।१–१९। तत्र १ आग्निधीनीषु 'श्रीणदुत्वादनुब्रूयात्' इति शिष्टिके प्रथमोत्तमे द्वौ तृचौ, 'आ आ याहि' इत्यादिका तृतीया, २ आग्निधीनीषु 'सर्वाणि च्छन्दांसि अनुब्रूयात्' इति आग्नीध्रीयमुखजगत्य एव सर्वाणि च्छन्दांसि, ३ बहुपाठी नाम होमयाजी एव, ४ निविदामनवानत्व वाचनिकमेव, ५ संतानः, ६ वषण्मः ऊर्ध्वंशु चादिः होतुरेव न एवैषामृत्विजाम्, ६ प्रवर. होतुरेव पूर्व अध्वर्योस्ततः, ७ आवाहननिगदे 'आवह देवान्' इति अन्यमानाना सर्वदेवानामेव वादः, ८ 'अग्निमग्न आवह' इति संयोग्योऽग्निः आहवनीय., ९ 'अग्निं होत्रायावह' इत्युक्तोऽग्निः आहवनीयादन्यः, १० अग्नि. स्विष्टकृत् गार्हपत्याधिष्ठाता देवताविशेष एव, ११ अग्नेः स्विष्टकृत्, आवाहन हव्यवहनार्थमेवेति तत्रैव 'अग्निं होत्राय' इति निगदः, १२ 'स्वं महिमानमावह' इति गार्हपत्यवादः, १३ 'अयाट्तो होता नृणेडुन्ययाट्' इति आहवनीयवादः, १४ आहवनीयवाद. 'आ चाग्ने देवान् वह' इति मन्त्रे, १५ 'स्वाहाऽग्नि होत्रजुषाणा' इति हविष्कृदादः, १६ 'अग्निर्होतेनेदं हविरजुषत' इति गार्हपत्यवादः, १७ स्विष्टकृद्यानिगदे 'अयाडग्निरग्नेः' इति गार्हपत्यस्यैव वाद., १८ 'अग्निर्देवो होता देवान् यक्षत्' इति आहवनीयवादः, १९ 'अग्निर्होता वेत्तु' इति स्रुगादापननिगदे आहवनीयवाद । इत्यधिकरणशीर्षकाणि । कें.

* निगदरूपा मन्त्रास्तु यजुषि अन्तर्भवन्ति परसंबोधनरूपा. । बाल पृ ५८.

* निगमाः अर्थज्ञानोपायः । सु. पृ. १११.
* निगमः दुर्जपूर्णमामयोः । 'अग्नाइग्निरग्नेः प्रिया धामानि' इत्यादि मयाट्–निगमः, 'अग्निमग्न आवह' इत्यादिः आवाहननिगमः, 'अग्नेरहमुज्जितिमनूज्जेषम' इत्यादिः उज्जितिनिगमः, 'अग्निरिदं हविरजुषत' इत्यादिः जोषणनिगमः, 'स्वाहाग्निं स्वाहा सोमम्' इत्यादि. स्वाहाकारनिगम. । वि १०।४।१४,२७.
* निगमा निघण्टवः शब्दकोशाः । कें. ११।७.
* निगमाः पौरुषेयाः वेदमूलत्वात् प्रमाणम् । वि. १।३।७.
* निगमानां लोकमूलपदार्थज्ञानं प्रयोजनम् । सु. पृ. १२९. * निगमेषु अयाडादिषु अग्निरग्ना स्वाहाकारे च देवतानिर्देशः विधिगतशब्देनैव । यथा 'आग्नेयोऽष्टाकपाल.' इत्यत्र अग्निशब्देनैव, न तु तद्भ्यादिशब्देन । कें १०।४।१२।२३–२४. * निगमेषु अवभृथे स्विष्टकृद्यागीयेषु स्विष्टकृद्गुणत्रयीवरुणयोरभिधानम् । भा. १०।८।१७।३४–३५, * निगमेषु आनुवत्मनिगति-यागयोः विधिवाक्येऽन्तनिर्दिष्टशब्देनापि प्रत्यक्षेणयोरभिधानम् । १०।४।१६।३२–३३.

* निगमनिरुक्तव्याकरणानां वशादर्थवत्ता भविष्यति, न यत्र म्लेच्छैरव्यवहृत शब्दार्थः । अपि च निगमादिभिरर्थे कल्प्यमाने अव्यवस्थितः शब्दार्थो भवेत् । भा. १।३।५।१० पृ २२७.

* निगमनं च प्रतिज्ञाया हेतोश्च पुनर्वचनम् । भा. ७।२।१।१२, * निगमनम् । 'अक्ता. शर्कराः, तेजो वै घृतम्' इत्यत्र अञ्जनसामान्येन वाक्यस्योपक्रमः, घृतेन विशेषेण निगमनम् । यथोपक्रम च निगमविनम्यमेकस्मिन् वाक्ये । १।४।१३।२४..

● निगमनत्वं व्याप्तिविशिष्टवैशिष्ट्यहेतुकसाध्यविशिष्टपक्षप्रतिपादकवाक्यत्वम् । यथा वह्निव्याप्यधूमवत्त्वात् वह्निमान् इति । मणि. पृ. ४०.

● निग्रह., अपराधिन. 'शारीरो निग्रहो यत्र तत्र प्रत्येकमिच्छा' च समुदाये समाप्तिः । वा. ३।३।६।१२ पृ. ६९७.

● प्रकृतं दूषयितुं अशक्नुवतः तत्सिद्धान्तान्तरदूषणे निग्रहस्थानमापद्यते असाधकत्वात् । स हि वक्ष्यति 'दुष्यतु यदि दुष्यति, किं तेन दुष्टेन अदुष्टेन वा प्रकृतं स्वदा साधितं भवति ? मदीयो वा पक्षो दूषितो भवति ?' इति । भा. २।१।५।१५ पृ. ५१. ● सिद्धान्तान्तरदूषणत्वात् निग्रहस्थानम् । वा. ३।३।६।१२ पृ. ९९४.

[इतः परं नित्यशब्दस्य मर्यपान्तस्य द्वितीयान्तस्य च नपुंसकस्य प्रथमं निवेशः, ततस्तादृशस्य पुंल्लिङ्गस्य, ततः लिङ्गभविचार्य तृतीयाऽऽदिसप्तमीविभक्त्यन्तस्य, ततः स्त्रीलिङ्गस्य, ततः समासघटकनित्यशब्दस्य निवेश, इति क्रमो ज्ञेयः । के. ]

● नित्यमाच्छादनं वाजपेये 'दर्भमय वासो भवति' इति विद्यमानेऽपि सूक्ष्मपं वासकि । भा. १०।८।८।२८. ● नित्यमूलकशापाकरण नाकाणत्रिप्रवैश्यानाम् । वि. ६।१।११. ● नित्यमेव नैमित्तिक यत्र संयोगपृथक्त्वम्, अग्निहोत्रहोमे दधि, अग्नीषोमीयपशोर्यूपे च खादिरः इति । के. ४।३।१।६–८, ● नित्य कर्म अग्निहोत्र दर्शपूर्णमासौ इत्यादि । तत्र यथाशक्ति अनुष्ठेय संभवे सकलाङ्गमेव, असंभवे तु विकलाङ्गमपि कर्तव्यम् । वि. ६।३।१. ● नित्य देवमन्त्रस्य 'योऽस्मान् द्वेष्टि, यं च वयं द्विष्मः' इत्यस्य कर्मणि पठन अद्विषन्तं अद्विष्यमाणमपि कुर्यात् । भा. ६।८।८।२८. ● नित्य न अवरार्थे (पयोव्रताभावादि) यत्र ज्योतिष्टोमे । के. १०।८।३।२९. ● नित्य न कश्चन् अर्थस्य (अर्थापत्तेः) प्रापकमस्ति, उपायान्तरेणापि सुलभत्वात् । वा. २।१।३।४ पृ. ५८९.

'नित्यं न भवनं यस्य, नित्यं चापि न भूतता । न तस्य क्रियमाणत्वं खपुष्पाकाशयोरिव ॥' इति न्यायात् कर्म अपद्यमानमेव भवति करोतिश्च उत्पादनार्थः सकर्मकः (कु २।१।१।२. (वा. २।१।१।१ पृ. ३७७ 'य एव हि प्रवृत्तभवनः संभावितभवनो वा अन्येन प्रयुज्यते, स एव क्रियमाणत्वेन अवधार्यते नान्यः । तथा च न कश्चित् खपुष्पमाकाशं वा कुर्वन्नुपलभ्यते ।' इति न्यायश्लोकार्थः ।)

● नित्यं नैमित्तिकेन बाध्यते, शास्त्रबाधोऽत्र । वा. ३।३।७।१४ पृ. ८६०. ● नित्यं नैमित्तिकेन बाध्यते, यथा दर्शपूर्णमासयोः सामिधेनीपञ्चदशत्वं नित्यं वैश्यनिमित्तकेन सप्तदशत्वेन वैश्यकर्तृके प्रयोगे । बाल. पृ. १३१. ● नित्यं (तत्), यत् सत् अकारणं इति लोकप्रसिद्धं यथा गगन आत्मा इत्यादि । कुतु. पृ. २३५.

'नित्यं विशिष्ट स्वार्थे प्रत्ययो यत्र प्रवर्तते । तत् पूर्वतरविज्ञातप्रकृत्यर्थविशेषणाम् ॥' इत्यनेन न्यायेन, अनिवतामिधानेऽपि 'प्रत्यय' इति प्रत्ययस्य प्रकृतिप्रत्ययमूले, वृद्धप्रयोगरूपाच आचारात्, स्वार्थाभिधाने प्रकृतिप्रत्ययक्रमस्य नित्यं विवक्षितत्वाभ्युपगमे, अनर्जनीया विशिष्टार्थावगतिः । मु. पृ. ७०८.

● नित्य सामान्यरूपतया व्यापकत्वेन च दुर्बलम्, नैमित्तिकं तु विशेषरूपतया नियतकालत्वाभ्यां प्रबलम् । तस्मात् वैश्यनिमित्तकं सप्तदशत्वं नित्यस्य पञ्चदशत्वस्य बाधकम् । नि. ३।६।१ ● नित्यं सोम-विद्या-प्रजैश्वर्यादिस्य । भा. ६।२।१३।३०, ● नित्यानि अग्निहोत्रादीनि कर्माणि । तानि यदि निमित्ते विधीयन्ते, नित्यत्वमेषां व्याहन्येत । तत्र नित्यत्वचोदना यावज्जीविकाया उपरुध्येरन् । १२।१।१।१ पृ. २०९८.

● नित्यस्तु स्याद् दर्शनस्य परार्थत्वात् । १।१।६। १८ ॥ शब्दो नित्यः स्यात्, दर्शनस्य उच्चारणस्य परार्थत्वात् अनित्यत्वात् इत्यर्थः । मणि. पृ. १७०. ● नित्य. दधिग्रहो ज्योतिष्टोमे । भा. ४।४।५।८–११, ● नित्यः दर्शपूर्णमासयोः प्रैषः ३ प्रोक्षणीरासादय ' इत्यादिः । ९।८।८।१८, ● नित्यः न वैश्वानरो द्वादशकपालश्चयने, नित्य नैमित्तिकः । ४।४।६।११–१३, ● नित्यः न षड्चितिक अग्निः, षष्ठी चितिः । ४।४।७। १४–१८, ● नित्य. नैमित्तिकादन्यः । 'तस्मात् सततम

अन्यत् नैमित्तिकात् नित्यः’ । ४।३।२।४, * नित्यः पशौ संज्ञप्तहोमः. ‘यत् पशुर्मायुमकृतोरो वा पद्भिराहते । अग्निर्मा तस्मादेनसो विश्वस्मात् मुञ्चत्वंहसः ॥’ इति मन्त्रेण कार्यः पशुना मायुकरणादौ कृते अकृतेऽपि वा । ६।८।८।२८, * नित्यो भक्षो ज्योतिष्टोमे विद्यमानेऽपि अन्यस्मिन् भोजने । ‘पयो व्रतं ब्राह्मणस्य, यवागू राजन्यस्य, आमिक्षा वैश्यस्य’ इति । ६।८।८।२८, *,नित्यः शब्दः । १।१।६।६–२३, * नित्यः सोमभक्षः ज्योतिष्टोमे सोमयागमकृतोऽपि । ६।८।७।२६–२७

※ ‘नित्याः शब्दार्थसंबन्धा यथाऽवस्थित शासिनः.’ इत्यनेन न्यायेन ( वा. २।३।२।३ पृ. ५८१ ) नित्यानित्यसंयोगविरोधपरिहारार्थं राज्यशब्दस्य राजविहितकर्मवाचितया अभ्युपगमान्यत्वात् । सु. पृ. ९०७.

* नित्यमर्थं विकृत्य निविशते काम्यो गुणः श्रूयमाणः । भा. ३।६।१५।४२ पृ. १०६५, * नित्येन अनित्यस्य न संबन्धः । ‘न चानित्यस्य कामस्य नित्यै रन्न्यादिकर्मभिः । कथञ्चिदपि संबन्धः साध्यसाधनरूपतः ॥’ वा. २।३।१२।२५. * नित्येन नैमित्तिकं असमानविधानम् । भा. ३।६।१४।३७. * नित्येन साध्यते इतिकर्तव्यता, काम्ये तु अतिदेशेन । के. ३।६।१६।४३. * नित्यस्य उपस्थाग्नेर्नित्यधारणाभावः । भा १२।४।१०।१०–११, * नित्यस्य उपस्थाग्नेः काम्येन आहवनीयेन बाधः । १२।४।७। १७–२५. * नित्यस्य ऋतुकालगमनस्य पितृभक्त्या ब्रह्मचर्यव्रतग्रहणात् नैमित्तिकेन च व्रतेन बाधात् ‘धर्मे-णार्थमहं भार्यां परिणेष्यामि’ इति परिभाष्य परिणीतायामगमनेऽपि अदोषः । ( मीमांसा ) । सु. पृ. ११२. * नित्यस्य स्वरूपयोग्यस्य फलवत्त्वाभावात् इति नियमः । मणि. पृ. ७५. * ‘काम्यनैमित्तिकाभ्यां हि तथा नित्यस्य बाधनम्’ । वा. २।६।३।१० पृ. १०३३. * न काम्यसंयुक्तस्य धर्मा नित्यस्य भवितुमर्हन्ति । भा. ६।३।१।५. * नित्ये कर्मणि भाष्यकारः फलमिच्छति ‘प्रधानादिदमन्यत् फलम्, एकदेशाद्युक्तात् प्रधानात् फलं भविष्यति’ इति वदन् । सूत्रकारो नित्ये इतिकर्तव्यतामिच्छति प्रयाजवत् ( इष्ट्यावृत्तौ प्रयाजवदावर्तेताऽऽरम्भणीया ९।१।३४ ) इति दृष्टान्तोपादानात् सिद्धवदङ्गत्वं दर्शयति । वा. ६।३।१।२. * नित्ये कर्मणि यथाशक्त्यनुष्ठानेऽपि अधिकारः । यथाशक्त्यधिकरणम् । भा. ६।३। १।१–७. * नित्ये न फलसाधनत्वेन विधिः, किन्तु जीवनरूपनिमित्तसंयोगेन । वि. ६।३।१. * नित्ये प्रयोगे एकदेशेनापि अधिक्रियते । काम्ये तु कृत्स्नामितिकर्तव्यतां यः शक्नोति कर्तुम्, सोऽधिक्रियते इति षष्ठे ( तृतीयपादे प्रथमद्वितीयाधिकरणयोः ) स्थितम् । टुप्. ११।२।३।११. * नित्ये ( कर्मणि ) विधिसहकृतनिमित्ताक्षिप्तप्रत्यवायजनकाकरणप्रतियोगित्वज्ञाने जातेऽपि नाकाङ्क्षा, अनपेक्षितत्वात् । अपितु तदुत्तर प्रधानकरणकभावनायाः भाव्यापेक्षायां पूर्वकृतपापक्षयस्य भाव्यत्वे अन्वयः ( अङ्गान्वयः ) । भाट्ट. ६।३।१ पृ. २५०. * नित्येषु अङ्गलोपसंभवेऽपि काम्येषु अङ्गलोपो न सोढुं शक्यः । वि. ६।३।२, * नित्यानां ( कर्मणाम् ) आहिताग्निना स्वस्तुमशक्यत्वात् ईषदङ्गलोपं सोढ्वाऽपि नित्येषु अधिकारोऽस्ति । ६।१।१०.

* नित्यां चिकीर्षां नैमित्तिकी चिकीर्षा बाधते । भा. १२।२।१३।३३.

* नित्याकरणे प्रत्यवायः प्रायश्चित्तं च । वि. ३।३।१२.

* नित्याग्निहोत्रस्य काम्येन अग्निहोत्रेण प्रसङ्गसिद्धिः । बाल. पृ. १२२.

* नित्याग्निहोत्रधर्माः मासाग्निहोत्रे अतिदिश्यन्ते । के. ७।३।१।१.

※ नित्यानित्ययोर्नित्यविधिर्बलवानिति न्यायः । कृताकृतप्रसङ्गि नित्यम् । तद्विपरीतमनित्यम् । अत एव ‘तुदति’ इत्यादौ परादपि गुणात् नित्यत्वात् शप्प्रत्ययो विर्भवति । एवं लोकेऽपि व्यवहारः । साहसी ६१.

* ‘नित्यानित्ययोर्विरुद्धः संबन्धः । भा. १०।८। १४।३१. * नित्यानित्ययोः संयोगाभावात् । वा. २।३। २।३ पृ. ५८३.

* असति प्रसक्ते प्रतिषेधो नित्यानुवादः ( यथा ‘न पृथिव्यामग्निश्चेतव्यो नान्तरिक्षे न दिवि’ इति ) । भा. ३।२।२।१८. * नित्यप्राप्तानुवादोऽयम् ‘नान्तरिक्षे न

दिवि ' अग्निश्चेतव्यः इति । न चत्वा गतो नित्यानुवादः । के. ● यो निषेधः प्राप्तिं नापेक्षते, किन्तु स्वतःसिद्धेव निषेधरूपता शब्देन बोध्यते स नित्यानुवादः, यथा 'नान्तरिक्षे न दिवि' अग्निश्चेतव्यः इति, यथा वा 'न सोऽयं आज्येनाभिघारयति' इति । के. ● यत्र अर्थवादत्वेन प्रतिषेधः तत्र नित्यानुवादो भवति । टुप्. ७।३। ८।२१ पृ. १५५९. ● यथा सोमे गोऽश्वाश्वतरादीनां देयानां सत्त्वेऽपि प्राप्ते 'न क्रय गोर्दीयते न वासो न हिरण्यम्' इति येषां विदेव निषेधः इतरेषदाने फलवति इति पूर्वपक्षः । तत्रोच्यते उक्तम् 'नित्यानुवादो न फलकः' इति । के. १०।२।११.

● नित्योद्दीपस्य नित्यनिवेशस्य नित्यानुवादत्वापत्तिः । सु. पृ. ३१८.

■ नित्यकर्मणः विहिताकरणजन्यप्रत्यवायपरिहारपरिपालनार्थत्वं नित्यत्वविधिबलात् पापक्षय एव फलं कल्प्यते इति व्यवस्थापितं सर्वशक्त्यधिकरणे (६।३।२) टुप्टीकाकारप्रभृतिभिः । न्यायसुधाकृतस्तु नित्यकर्मणः पापक्षयो न फलम्, किन्तु विहिताकरणजन्यप्रत्यवायप्रागभावपरिपालनमेव फलमित्याहुः । मोम. २४।१. ● नित्यकर्मणां विधिः प्रायश्चित्तं नियतानुष्ठानं नियतं फलं विना अनुष्ठानमिति अकाम्यमानमपि फलं अनुमन्यते । चाल. पृ. १७४, ● नित्यकर्मणि अधिकारप्रश्नाः षष्ठे स्थापितः । पृ. १५७, ● नित्यकर्मसु नारम्भन्यायः । के. १२।३।७।१८–१९.

● नित्यकाम्ययो. पौर्णमासीनैमित्तिकत्वायेन पूर्वबाध. । ( यथा धाम्यदर्शविदात्मनुवचनयोः ) । टुप्. १।५।११।५४.

● नित्यकाम्यकर्मणोः श्रुतस्य ब्रीह्यादिद्रव्यस्याभावे सामान्याधेयस्य वार्धक्यमशक्यत्वात् काम्यान्यं यदिद्वितीये पर्यवस्यति इति प्रमाणत्वात् अस्ति प्रतिनिधि । वि. ११३।४.

● नित्यकाम्यनैमित्तिकानि कर्माणि यथोक्तविकाम्भि । मा. ११।३।४२.

● नित्यकाम्यविवेक । 'दृष्टा पार्थिकस्यास्य विशेषः काम्यनित्ययोः । अङ्गसाकल्यवैकल्यलक्षणः प्रतिपाद्यते ॥' १ ॥ केचित् किल नाम्नैव नित्यकाम्ययोर्वैषम्यं उभयथापि सकलाङ्गोपसंहारात् इति मन्यन्ते । एकदेशिभिश्च केश्चित् अनतिप्रपत्नेन दुर्बलहेत्वभिधानात् तेषामेव प्रश्नः स्थिरीकृत । 'उभयेषां निरासेन मन्यद् न्यायः प्रदर्श्यते । येन सिध्येत् स्फुटो भेदः कर्मणोः काम्यनित्ययोः ॥' २ ॥ तत्र पूर्वपक्षः । 'अधिकारे हि सर्वत्र विनियोगानुसारतः । अन्यथा ह्यनिशायां स्याच्छूद्रादेरप्यधिक्रिया ॥' ३॥ सर्वत्र, न केवलं काम्ये अपितु नित्येऽपीत्यर्थः । यस्मिन् कर्मणि यत् अङ्गजातं श्रुत्यादिभिः प्रमाणैः क्रमेण वचननामधेयचोदनालिङ्गनिमित्तातिदेशेन च प्रापितम्, तदुपसंहारपूर्वकमनुष्ठानेन तत्राधिकारः इति निर्णयाधिकरणे (६।१।२) स्थापितम् । सामग्र्यधीनत्वात् फलसिद्धेः इतिकर्तव्यतायुक्तस्यैव च कारणस्य साधकत्वात् (करणत्वात्) समुदितानामङ्गानां उपसंहरणात्, अन्यथा हि अङ्गविधीनां निरर्थकत्वापत्तेः । विकलितस्य च अननुष्ठेयत्वात् कुतो यथाशक्तिप्रयोगसिद्धिः । यदि च कतिपयाङ्गोपसंहारेऽपि फलसिद्धिः स्यात्, काम्येऽपि स्यात् अविशेषात् । ननु यावज्जीवादिवाक्येषु निमित्तभूते तस्मिन् सति अवश्यकर्तव्यत्वावगमात् अकरणे च तद्विरोधात् तद्बलेन अङ्गहीनस्यापि फलसाधनत्वावगमात् तथैवानुष्ठीयते । काम्ये तु एवं विशेषाभावात् सर्वाङ्गोपसंहारेण अनुष्ठानम् । इति चेत्र । निमित्तवशादपि आवश्यकत्वं अधिकारिण एव । सर्वाङ्गोपेतस्य अधिकारी, नान्यः । निमित्तवाक्ये एतेषामधिकारावगमात् तदनुसारेण अङ्गोपसंहारः । 'यो यावन्ति उपसंहर्तुं समर्थः, तस्य तावद्भिरेव फलसिद्धिः' इति यदि कल्प्येत, तर्हि काम्येऽपि स्वर्गकामनामात्रस्य अधिकाराधायकत्वे तथैवानुष्ठानप्रसङ्गः । यदि च निमित्तबलेन अङ्गलोपोऽपि स्यात्, तत्र शूद्रस्य अनाहिताग्नेः अग्निहोत्रादौ च विद्याविरहितानां कर्माणि अनुष्ठानशक्तिशालिनामपि अधिकारः स्यात् । तस्मात् सर्वाङ्गशक्तिः अधिकारिविशेषणमिति । अत [illegible] पक्षमाध्यमस्य पदं अधिकारनिरूपणम्, सकलवेदशास्त्रविदाम्, यद्वेषु शास्त्रानुष्ठेयाधीननिरूपणात्, तस्य च अध्यापनादिमेव अनधारणात् । तदुक्तम् 'कार्ये

ज्ञाते ऽधिकारः स्यात्' इति । एतेन ज्ञाप्यज्ञापकभाव संबन्धं निराकृत्य अवसरलक्षणं अधिकारस्य आचक्षाणाः निरस्ता वेदितव्याः । तत् उभयत्रापि ( नित्ये काम्ये च ) मर्यादोपसंहारः इति ।

'केचित्तु विषयीभावः करणीभावपूर्वकः । काम्ये तेनाङ्गसाकल्यमाहुर्नित्ये विपर्ययम् ॥' ४॥

'कार्यरूपं तावदपूर्वं प्रधानवाक्यार्थः' इति स्थितम् । तच्च कृत्यधीनात्मलाभम्, कृतिश्च एतद्विषयेषु पुरुषप्रयत्न एव । स च चेतनं कर्तारमपेक्षते । तस्य च कर्तृत्वमधिकारापेक्षम् । यो हि 'मदर्थमिदं कर्म, अहमत्र स्वामी' इति विजानाति, स तत् अनुतिष्ठति नान्यः । स च अधिकृतः इत्युच्यते । अधिकारश्च एवंविधेषु नियोज्यताऽपेक्षः । तद्धि कर्म तस्य स्वं भवति, यत् यस्य कार्यं साधयति । तेन 'ममेदं कार्यम्' इत्येवं कार्यमपेक्ष्य तत्साधने कर्मणि पुरुषस्य अधिकारावगमः । यश्च कार्ये स्वकीयत्वेन बुध्यते, स नियोज्यः । न च अपूर्वं कार्यं सुखदुःखपरिहारवत् कस्यचित् इच्छागोचरः । यतः प्रमाणान्तरेणैव तदर्थिनः कार्यत्वावगमात् तत्साधने कर्मणि अधिकारः स्यात् । अतो वचनेनैव 'अस्येदं कार्यम्' इति प्रतिपादयितव्यम् । तदेव नियोज्यापेक्षं कार्यम्, स च अनुपादेयविशेषणविशिष्टः । स च ( अनुपादेयविशेषण ) फलनिमित्तभेदेन द्विविधम् । तत्र फलमनुत्पन्नं न स्वरूपेण विशेषणीभवितुमर्हति इति स्वकामनामुखेन नियोज्यं विशिनष्टि । फलकामश्च स उच्यते, यः फलमात्मनः साधयितुमिच्छति । स च तदेव कार्यं बुध्यते, यत् स्वकामनाऽनुगुणमिति । ( 'ननु अपूर्वस्य फलं प्रति जनकत्वेन अन्वये विशेषणताऽऽपन्नः नियोगः एव प्रधानं वाक्यार्थः इति सिद्धान्तासिद्धिः' इति । अत आह— नियोगस्येति । प्रधानस्यापि नियोगस्य स्वसिद्ध्यर्थं यः फलकामनाविशिष्टनियोज्येन संबन्धः, तदर्थं फलानुकूल्यमात्मन्येवं स्वीकार्यमित्यर्थः' । [illegible] इव टिप्पणी—के. ) नियोज्यस्य ( नियोगस्य ) फलानुकूल्यं प्रधानस्यापि स्वसिद्ध्यर्थं विशिष्टनियोज्यसंबन्धार्थमाश्रयम् । तच्च कार्यं प्रधानभूतम्, प्रधानस्य अनवच्छिन्नस्य अनिरूपणात् तदवच्छेदकमपेक्षते । अवच्छेदकश्च प्रायेण भावार्थः, तस्यैव स्वरूपेण तत्संबन्धत्वात् । न खलु अलब्धपाकादिभावार्थविषयः प्रयत्नो लोके दृश्यते । क्वचित्तु चान्दनेन द्रव्यदेवतासंबन्धादिः भावार्थनिर्वर्तितप्रयत्नसंबन्धः अवच्छेदको भवति । तदेवं कार्यस्य कृत्यवच्छिन्नत्वात्, कृतेश्च भावार्थावच्छेदकमन्तरेण अप्रतीतेः कृतिप्रणाडिकया कार्यस्य भवति भावार्थादिः अवच्छेदकः । अवच्छेदकश्च विषयः इत्युच्यते । प्रतीत्यनुबन्धो हि विषयः । अनवच्छिन्नं च कार्यं प्रत्येतुमशक्यमिति तदवच्छेदकं तत्प्रतीत्यनुबन्धितया भवति विषयः । स च भावार्थः कामनाऽनुगुणस्य कार्यस्य विषयाभावात् पुरस्कृतकामोपायभावः शक्यः अभिसन्धातुमिति उपायत्वेन रूपेण विषयीभवति । तदुपायता च निखिलाङ्गग्रामसंपादितोपकारस्य, इति अङ्गानुपसंहारे समस्ताङ्गजन्योपकारस्य असंपत्तेः उपायत्वाभावे विषयत्वाभावात् विषयिणोऽपि कार्यस्य अप्रतीतेः न अङ्गवैकल्येन हीनाङ्गकर्मानुष्ठानं भवेत् । नित्ये तु नायं प्रकारः संभवति । नहि तत्र फलकामी नियोज्यः, येन अनुपायं कार्यं कार्यतया न बुध्येत । सिद्धविशेषणविशिष्टस्तु भावार्थावच्छिन्नत्वेन कार्यं प्रथममवगच्छति । प्रतीतविषयककार्यस्तु कृतिं विना कार्याभावात् कृतेश्च अकरणिकाया असंभवात् करणमपेक्षमाणः संनिहितस्य भावार्थस्य विषयीभूतस्य करणतामुपकल्पयति । कथं पुनः कृतिनिर्वर्त्य एव भावार्थः तां प्रति करणं इति चेत्, तदवच्छिन्नायास्तस्याः तदपूर्वं क्रियेकृतित्वात् तथाविधस्य च लोके करणत्वप्रसिद्धेः । तथाहि, यथा छेत्तुः उद्यमननिपातनलक्षणया क्रियया परशुः व्याप्यमानोऽपि तामेव प्रति करणम्, तद्विषयात्वात्तस्याः द्वैधीभावफलत्वात् । नहि लोकविषये उद्यमननिपातने द्वैधीभावं फलतः [ फलति फलतः ] एवं यद्यपि कृत्या भावार्थो व्याप्यते, तथापि अपूर्वविशेषकृतित्वं तस्याः तद्विषयत्वाधीन इति युक्त एव करणभावो भावार्थस्य । अपूर्वस्य तु उद्देश्यत्वात् कार्यत्वम् । तदेवं नित्ये विषयीभूतस्य भावार्थस्य पश्चात् करणत्वं इतिकर्तव्यतासाहित्यं च तस्य प्रतीयते, इति नाङ्गलोपेऽपि विषयाभावः, ततश्च विषयाधीनप्रतीतेः कार्यस्य विषयाविरहे अविरहात् तत्साधने कर्मणि अधिकारप्रवृत्तेः अङ्गलोपेन हीनाङ्गकमपि

कर्म अनुष्ठापयति नियोगः वैकृतः इव प्रत्याम्नातप्रतिविहितार्थाङ्गव्यतिरिक्ताङ्गानुष्ठानं इति सिद्धः काम्यनित्यविशेषः ।

तदेतत् आपातकल्याणं सूक्ष्मन्यायदृष्ट्या निपुणं निरूप्यमाणं आरुक्ष्यते । कथम् ? 'फलस्य विप्रकृष्टत्वादपूर्वानभिधानतः । तत्प्राधान्यप्रहाण्या च विषयत्वोपपत्तितः ॥ ५ ॥ समप्रधानभावेन स्वरूपस्यानपायतः । अप्रयोजकभावेन जातेष्टौ च प्रसङ्गतः ॥' ६ ॥ विप्रकृष्टं हि पदान्तरोपात्तं फलं भावार्थस्य, संनिकृष्टं तु स्वपदोपात्तमपूर्वम् । तत्र विप्रकृष्टेन प्रथमं साधनतया अन्वीय विप्रकृष्टतरैः वाक्यान्तरोपात्तैरङ्गैः संबध्य तदन्वितेन रूपेण स्वपदप्रतिपाद्यमपूर्वं पश्चादवच्छिनत्ति इति कः श्रुतिवाक्यबलाबलज्ञः अभिदधीत । यद्यपि कामोपायस्य कार्यस्य विषयीभवतो भावार्थस्य तत्साधनत्वमवश्यम्भावि, तथापि न तत् प्रथमं निरूपयितव्यम् । नहि येन विना यद् वस्तु नोपपद्यते, तन्निरूपणपुरःसरमेव तद् वस्तु प्रत्येतव्यम्, प्रतिपन्नेऽपि च वस्तुनि तदुपपादकं वस्तु पश्चादपि प्रतीयते एव धूमे इव धूमध्वजः । तेन प्रथमं पदश्रुत्या भावार्थमात्रविषयमपूर्वं प्रतिपद्य पश्चात् फलोपायभूतकार्यविषयत्वान्यथाऽनुपपत्त्या तत्साधनभावः तदुपकारे च अङ्गान्वयः प्रतीयते इति नास्ति अङ्गलोपे विषयविलोप इति । यदि च विप्रकृष्टप्रमाणकं साधनत्वमपि साधनत्वमनवद्यं भवति इति कृत्वा नियोगसिद्धौ विशेष्येत, ततो नित्येऽपि विषयीभवतः तत्करणत्वावश्यम्भावात्, अङ्गैरपि च तादात्म्यात् तथैव विषयत्वं इति अङ्गाभावे विषयविलयः प्रसज्येत ।

यत्तु भवति नावश्यं नित्ये नियोगविषयस्य तत्करणत्वं अकरणभूतस्यापि तदर्थस्य नियोगविषयत्वदर्शनादिति, स वक्तव्यः काम्यनियोगविषयस्यापि नैकान्तिकं तत्करणत्वम्, द्रव्यदेवतासंबन्धस्य अकरणभूतस्यापि सोपाधिकाम्येषु विषयत्वदर्शनादिति । न चेदेवमुक्तः प्रतिज्ञायात् 'अकरणभूतोऽपि द्रव्यदेवतासंबन्धः तदविनाभूतः तेन रूपेण विषयः' इति, प्रतिपादनं एवं तदर्थस्यापि तदविनाभूतस्य तेनैव रूपेण विषयत्वमिति तुल्या चर्चा ।

तस्मात् यथा नित्येषु भावार्थमात्रे विषयीभूते पश्चात् करणत्व इतिकर्तव्यता तु पश्चात् प्रतीयते, तथा काम्येष्वपि । 'श्रुत्या भावार्थमात्रस्य विषयत्वे निरूपिते । पश्चात् फलादिसंबन्धो वाक्यादेः संप्रतीयते ॥' ७ ॥

एवं पदान्तरोपादानलक्षणस्तावद् एको विप्रकर्षलक्षणनिमित्तप्रकारः । तथाहि, न स्वर्गकामशब्देन स्वर्गस्य साध्यत्वमभिधीयते । कामसंबन्धात्तु स्वर्गस्य साध्यत्वमनुमाय ततः स्वर्गसाधनत्वं यागस्य निरूपयितव्यं इति विप्रकर्षः । यत्र च द्रव्यदेवतासंबन्धो नियोगविषयः तत्र तस्य करणत्वानभ्युपगमात् अकरणीभूतस्य विषयत्वानुपपत्तेः एवं वक्तव्यम् 'करणीभूतयागसंपाद्यो द्रव्यदेवतासंबन्धो नियोगस्य विषयः, अङ्गाभावे च करणीभूतयागाभावात् तत्संपाद्यद्रव्यदेवतासंबन्धाभावेन विषयविलयः' इति । तत्र द्रव्यदेवतासंबन्धेन यागमनुमाय तस्य च करणत्वं परिकल्प्य तत्संपाद्यद्रव्यदेवतासंबन्धस्य विषयत्वनिरूपणमिति विप्रकर्षः । विश्वजिदादौ च यत्र फलकामो नियोज्यो न श्रूयते, तत्र नियोज्यं कल्पयित्वा तत्संबन्धे यागस्य करणत्वं परिकल्प्य तादृशस्य विषयत्वं निरूपयितव्यं इत्यपि विप्रकर्षः । किञ्च तत्र नियोज्यापरिकल्पने निमित्तं तावत् न नियोगः, तस्य अप्रतिपन्नत्वात् । नहि अप्रतिपन्नं कल्पकं कल्पनाय कल्पते । अप्रतिपन्नश्च नियोगः, विषयानिरूपणात् अविषयकार्यप्रतीत्यनुपपत्तेः । करणीभूतो हि यागो नियोगविषयः । न च अकल्पिते नियोज्ये फलकामे करणीभूतयागसिद्धिः । तत्सिद्धौ च नियोगसिद्धिः, तदधीना च करणीभूतयागसिद्धिः इति चक्रकमनिश्चितमापद्येत । तेन तत्र प्रथमं भावार्थमात्रविषयमपूर्वं प्रतीत्य ततो नियोज्याद्यवकल्पनं इति अङ्गलोपे विषयाविलयात् यथाशक्तिप्रयोगप्रसङ्गः । किञ्च, सोमादिषु साधनेषु स्वशास्त्रेषु श्रूयमाणेष्वपि न साध्यरूपेण विषयत्वमभ्युपगम्य फलभागत्वेन तत्साधनरूपस्य विषयत्वनिष्कर्षः स्वदर्शनानुरागः अतीवातिरूढः । कः खलु पदान्तरेण अन्वये विशेषः । तदधीनसिद्धित्वमिति चेत्, व्याघातात् । स्यादेवम् । फलकामिनियोज्यसंबन्धबलेन हि यागस्य तत्साधनत्वानुपपत्त्या

तद्व्यतिरिक्तमपूर्वं सिध्यत् तदानुकूल्येन सिध्यतीत्यवश्य तद्विषयस्य तत्साधनत्वेन भवितव्यमित्यस्ति पदान्तरेभ्यः फलपदस्य विशेषः। तन्न, व्याघातात्। यस्मात् क्षणिकस्य यागस्य फलसाधनत्वं नोपपद्यते। तस्मात् फलकामी न तत्कार्यतया बुध्यते, अपितु फलसाधनभूतयागविषयमपूर्वं बुध्यते इति कथमिद परस्पर व्याहतं बुद्धिमन्तः अभिदधीरन्। कश्चित्तु निपुणमन्यः प्रभाकरदर्शनं शिक्षयन् इद महाशमुत्सृजति 'नैव भावार्थस्य फलकरणभूतस्य विषयत्वम्, किं तर्हि फलकामस्य यत् कार्यं तत् तत्काम-त्वावच्छिन्नमेव तेन कर्तव्यम्। सामग्री च करणेति-कर्तव्यतारूपा तेन हविष्कर्तव्यतायोगे विषयविलयः इति। न चैवं यागस्य अविषयत्वम्, सामान्यावच्छिन्नस्यापि तद्विशेषापरिज्ञाने साकाङ्क्षत्वात्। तेन स्वपदावगतो नियोगः पश्चात् यागेनावच्छिद्यते, न तु याग एव फलान्वितः कामस्यैकता' इति। तस्यापि तदेव भयमेव प्रत्यवतो भवते 'फलस्य विप्रकृष्टत्वात्' इति। न खलु पदान्तरो-पात्तफलाविनाभावमनीता तत्सामग्री स्वपदस्थान् यागात् पूर्वमेव अपूर्वमवच्छेत्तु पारयति। यथा न यागः अपूर्वं विहाय फलेन प्रथमं संबध्यते। तथा अपूर्वमपि याग विहाय फलसामग्र्या निराकाङ्क्षस्य मुख्यत्वाविरुपलम्भेन। प्रसिद्ध एव मार्गे दूषणान्तरमुच्यते। यदि च करणीभूतो यागो विषयः ततो नियोगस्य विषयाधीननिरूपणत्वात् अनिरूपिते च विषये तदधीननिरूपणाशक्तेः, नियोग-प्रतिपत्तेः पूर्वमेव फलसाधनत्वं यागस्य निरूपयितव्यम्। निरूपिते तत्साधनभावे च याग फलकामी कार्यतया बोद्धुमलमेव इति न नियोगस्यान्यथानुपपत्त्या क्रियाति-रिक्तकार्याभिधानकल्पनावीज लिङादीना सिध्यतीति सर्वं भवदीयसिद्धान्तकोशागारभूतं अपूर्वाभिधानमुत्सन्नं कथं जातम्। सिध्यतु वा अभिधानम्, न पुनः प्राधान्य संभवति परार्थभूतकारकार्थविषयत्वात् अङ्गप्रधानोपनि-नियोगवत्। यो हि साधिकारवाक्ये प्रधानभूतकार्याभि-धायित्वेन प्रज्ञातानामपि लिङादीनां प्रयाजादिवाक्येषु विनियुक्तविषयतया प्राधान्यं विहाय लक्षणया गुणभूत-कार्याभिधानमाश्रयति, स कथमन्यत्र अविदितप्रधानकार्या-भिधानशक्तीनामेव अधिकारवाक्येषु विनियुक्तविषयत्वे सत्यपि प्रधानकार्याभिधानमाश्रयेत्। तेनापूर्वस्य प्राधान्यं विहीयते इति। किञ्च, उपपद्यते एव यागस्य अकरणभूत-स्यापि विषयत्वम्। नियोगो हि फलसाधनम्, तस्य यागः स्वरूपेणैव विषय इति किं नोपपद्यते। यत्तूच्यते सत्यमपूर्वं फलसाधनम्, तत्तु न स्वरूपेण स्मृतिगोचरम्, भावार्थ-गोचरया तु तया साध्यम्, तथैव च कृत्वा तद्गोचरया अपूर्वद्वारेण फलमपि साध्यते। तेन एकयैव कृत्या एक-भावार्थगोचरया अपूर्वं फलं च साध्यते इति अपूर्व-विषयस्य भावार्थस्य फलकरणत्वमवश्यंभावीति। सत्यमेव किन्तु अपूर्वकरणत्वनिरूपणपुरोभावे एव सति फल-करणत्वमुक्त भवति, तत्करणत्वं विषयपुरःसरमिति विषयभूतस्य करणत्वमनङ्ग। अवश्यं च अपूर्वकारणत्व-पुरःसरमेव क्रियायाः फलकरणत्वं निरूपयितव्यम्, अन्यथा कथं क्षणिकायास्तस्याः कालान्तरभाविनि फले साधनत्व संभाव्येत। ननु अलब्धे द्वारे मा नाम संभूत्, लब्धे तु किमिति न संभवति। किमत्र द्वार लब्धम्। किं तदपूर्वं तदन्यद्वा। तदन्यत्वे तावत् तत यागस्य करणत्वोपपत्तेः दैवहतकाञ्जलि अपूर्वं प्रसज्येत। अपूर्वद्वारेण तु फलसाधनत्वं अपूर्वसाधनत्वनिरूपणाधीननिरूपणम्। तद्धि नाम द्वारमुच्यते यत् येन सफलोदेशप्रवृत्तेन तत्सिद्ध्यर्थं अन्तरा साध्यते। तदेव सत्यपि प्रथम करणी-भूतस्य विषयत्वमुच्यते, ततः फलकरणत्वाधीन नियोग-विषयत्वम्, तदधीन च नियोगं प्रति करणत्वम्, तदधीन च फलकरणत्वमिति चक्रक आपद्येत। किञ्च एवमङ्ग-लोपे विषयविलयो दुर्वारः प्रष्टव्यः किमङ्गविशिष्टस्य विषयत्वम्, उत तदुपलक्षितस्येति। किञ्चातः यदि ताव-दङ्गविशिष्टस्य, ततः सर्वेषामेव प्रयाजादीनामाग्नेयादीना न समप्राधान्यं प्रसज्येत, गुणाविकारवत्। यथा हि दधि-विशिष्टहोमस्य इन्द्रियकामापूर्वसाधनत्वे दधिहोमयोरपि समप्राधान्यम्, न गुणप्रधानभावः, तद्वदिहापि स्यात्। अथ अङ्गोपलक्षितस्य यागस्वरूपस्य, तर्हि पुरोडाश-द्वयोपलक्षितस्यैव अन्तरालकालस्य अङ्गलोपेऽपि एक-पुरोडाशापायेऽपि अनपायात् नास्ति अङ्गलोपे विषय-विलयः। किञ्च एवं अपूर्वप्रवृत्तिः अपूर्वप्रसङ्गं च मज्जाना न स्यात् साधिकारो विधिप्रतिपत्तः सन् स्व-

चनिधिसमाम्नातान् प्रयाजादीन् स्वस्वानुवादशङ्कानिरुद्ध-नियोगान्तरविषयभावात् स्वार्थतया गृहीत्वा स्वगृहीतेष्वेव व्रीह्यादिषु द्वारमृतेषु स्वरूपातिक्रमेणैव स्वसाधनविशेषरूपे विनियुङ्क्ते । अङ्गसंस्पर्शात् प्राक् विषयाभावेन अप्रति-पन्ने नियोगे सर्वमिदं अज्ञातपुत्रश्रीदनकमापद्यते । फलं करणं वा प्रयोजकं स्यादङ्गानाम् ।

' अप्रयोजकभावेन ' इत्यस्य ( पञ्चश्लोकस्थस्य ) अपरा व्याख्या— फलसाधनरूपे भावार्थे नियोगेन संबध्य-माने 'अर्थाभिधानकर्म च' ( ४।१।११।२६ ) इत्यनेन न्यायेन द्रुघोपादिवत् प्रयाजस्य अप्रयोजक शास्त्रस्य यागस्य अपूर्वं प्रसज्येत । ननु इष्टमेव काम्येषु विधेय प्रयोजकत्वम् । अत एव श्येनस्य अविधेयत्वादनर्थत्वम् । यद्यपि स्वविधिसिद्धपर्यन्तमनुमीयेत, तथापि न विधेयत्वम् । यस्य विधिः स्वसिद्ध्यर्थं अनुष्ठानमाक्षिपति, तत् विधेयम्, न तु विधिसाधनमात्रम् । काम्येषु तु फल अनुष्ठीयमान कर्म विधिमपि साधयति इति न विधेयं इति । ( अत्र अपरा व्याख्या समाप्तेति भाति । तथापि विचार्यम् ) किमिदानीं अङ्गेषु अप्रयोजको विधिरिष्यते । शास्त्राय हि फलसाधनस्य विषयश्रोतगमे साध्यस्यैव फल-प्रयुक्तस्य तत्कीर्तनात् अप्रयोजको विधिः अङ्गानामपि स्यात् । ततश्च अग्नीषोमीयहिंसा विधेयत्वाभावात् निषेध-गोचरः अनर्थः स्यात् । अत्र कश्चित् वैतात्यादेवमाह— मा भूत् अङ्गानां विधेयत्वम् । नैतावता अग्नीषोमीयादेः निषेधप्रसङ्गः, द्विविधस्यापि निषेधस्य असंभावनीयत्वात् । द्वेधा हि क्रियास्वरोद्देशेन अनुष्ठीयमानं कर्म निषिध्यते फलपर्यन्तं वा साधनमात्रपर्यवसानं वा । तद्यथा सुखार्थे मदिरास्वादः फलत एव निषिध्यते नानेन सुखमवाप्-स्यम्, अकार्यं एतत्तावत् सुखमिति । क्वचित् साधनमात्र निषिध्यते, तद्यथा रोगार्तः तदुपशामार्थी तदुपकारके एव भेषजमुद्दस्य प्रवर्तमानो निषिध्यते 'मैतत् कार्षीः, नेदं आरोग्यसाधनम्' इति । तत्र न तावत् अग्नी-षोमीये फलपर्यंते निषेधसंभवः । स्वर्गस्य निरतिशय-सुखरूपस्य कार्यत्वेन सर्वजनविदितस्य अकार्यत्वाभिधाने प्रमाणान्तरविरोधप्रसङ्गात् । नापि साधनत्वनिषेधः, वचनविरोधात् । तस्मात् न निषेध्यमिति । तदि-दमतितुच्छं न निराकरणमपि प्रयोजयति । तथाहि, मदिरास्वादेन संपाद्यं सुखं प्रमाणान्तरेण कार्यं विदितमपि अकार्यमुच्यते वचनेन । तथा स्वर्गसुखमपि इति नोच्यते । प्रमाणान्तर हि क्षिप्रमेव अग्रहणतया व्याख्या-यते । तस्मात् अङ्गेष्वपि अप्रयोजकत्वमनिष्टमेव । तच्च आपद्येत अङ्गविशिष्टस्य विषयत्वे । आह— ' सर्वं अङ्गविशिष्टस्य विषयत्वे समप्राधान्यं अप्रयोजकत्वं च स्यात् । न तु मद्विशिष्टो विषयः, करणीभूतस्तु विषयः । तद्भावश्च अङ्गलोपे तुल्यात् इति अङ्गलोपे विषयनिश्चयः इत्युच्यते, न तु अङ्गलोपे तस्यैव विषयत्वम् । तस्मात् अदोषः ' इति । नैतद्युक्तम् । यदि अङ्गलोपे करणत्वं नास्ति, नित्येऽपि तर्हि हीनाङ्गस्य करणत्वं नास्ति इति अननुष्ठानं स्यात् । अथ तत्र विधिना यावत् अङ्ग प्राप्यते, तदुपेतस्यैव करणत्वं भवति । तदितरस्यापि नित्य-श्रुतिबलेतरस्य करणस्य इत्यनवगमात् विधिगृहीतानामेव अङ्गानां संग्रहणात् यावन्ति अङ्गानि विधिना प्राप्यन्ते, तदुपेतस्यैव करणत्वं भवति इति नास्ति अङ्गलोपे विषयविलयः । किञ्च काठेठो संवलिताधिकाराभ्युप-गमात् करणीभूतस्यैव विषयत्व इति न यथाशक्ति प्रयोगः स्यात् । ततश्च अङ्गसंपत्त्यर्थमेव उत्कर्षस्य वस्तु शक्य-त्वात् दोषविशेषेण विनिमत्तस्वभावभङ्गार्थं आधानवि-धानमनर्थकं स्यात् । ननु तत्र निमित्तश्रवणबलात् अङ्ग-हानं स्यात्, न, श्रुतेऽपि निमित्ते नैमित्तिकमेव कर्तव्यम्, नान्यत् । करणीभूतभावार्थविषयं च कार्यं नैमित्तिक इति कुतः अनीदृशस्यानुष्ठानम् । इत्यलमनेन करणीभूतविषय-त्वेन । 'तदेतत् सर्वसिद्धान्तचोद्यसारधनं हरन् । को हि शङ्करनिधिं प्राप्य स्वगृहे स्थापयेत् स्वयम् ॥' ८ ॥ तस्मात् सर्वत्र नित्ये काम्ये च निर्विकल्पोपसंहार इति ।

अथाभिधीयते । ' निमित्तश्रवणान्नित्यं यथाशक्ति प्रयुज्यते । काम्यं च तदभावेन निर्विकल्पाङ्गसम-न्वितम् ॥' ९ ॥ इह हि 'यावज्जीवमग्निहोत्रं जुहोति' इति यावच्छब्दानुबन्धात् जीवन होमनिमित्तत्वेन अवगम्यते । निमित्तस्य च यत् सत्त्वम्, यत् तन्निमित्तं इति नैमित्तिकस्य कार्यम् । निमित्तस्य कार्य-

मिति ? अवश्यमेव कर्तारं अभिप्रेतेन फलेन योक्ष्यतीत्यर्थः । यथा चैतदेव कार्यत्वम्, तथा प्रतिपादितं विधिविवेके । अत एव एष सर्वेषामभिमतः प्रत्यवायपरिहारः प्रयोजनमवकल्पते । यदि हि अन्यथालक्षणं फलं स्यात्, ततः सर्वेषां फलसाधनत्वं श्रुतमुपलभ्येत । ननु च सर्वेषामभिमतः स्वर्गः किमिति न कल्प्यते ? न, तस्य मुमुक्षुभिरप्रार्थितत्वात् । प्रत्यवायपरिहारस्तु तैरपीष्यत एव । कथं तर्हि 'स स्वर्गः स्यात् सर्वान् प्रत्यविशिष्टत्वात्' इति, नन्वेवं विश्वजित्यपि प्रत्यवायपरिहार एव फलं स्यात् । पापक्षयार्थस्य च नित्यत्वे विधुनैमित्तिकादीनामपि पापक्षयार्थानां नित्यत्वं स्यात् । तथा च यथाशक्तिप्रयोगः स्यात् । उच्यते । न तावत् विश्वजिति प्रत्यवायपरिहारः फलं घटते गौरवात् । प्रत्यवायो हि न तावत् स्वरूपेण फलम्, अपुरुषार्थत्वात् । न च तत्प्रागभावः, तस्य स्वयमेव सिद्धत्वात् । न तद्ध्वंसः, क्लेशस्य दुःखस्य स्वयमेव विनाशनात् । तेन प्रत्यवायहेतुभूतादृष्टप्रध्वंसः फलं कल्पयितव्यम् । तेन च प्रत्यवायावच्छिन्नं तद्धेतुं निरूप्य तदभावः फलं कल्पयितव्य इति गौरवम् । सुखस्य तु स्वयमेव साध्यत्वं सुकल्पमिति लाघवम् । तेन सुखरूपे तावत् साध्ये कल्पयितव्ये पशुपुत्रादिसुखविशेषापेक्षया अनवच्छिन्नसुखरूपस्य स्वर्गस्य सर्वान् प्रति अविशिष्टत्वादिति विशेष उच्यते । येऽपि जीवदधिकारं मुक्तिफलत्वाभ्युपगमात् अनिष्ट्वा कामाधिकारमिच्छन्ति, तैरपि प्रत्यवायनिवृत्तिफलगुरुत्वस्य स्वर्गकामकल्पने अयमेव न्यायः समाश्रयितव्यः । विद्यन्ते हि तेषामपि दर्शने शब्दविकरणसिद्धान्तात् केचित् प्रत्यवायकरा निषिद्धाः अभ्युपगम्य एतदुच्यते, न तु जीवने अधिकारविशेषणे किञ्चित् गौरवम् । ननु निमित्ताधिकारे विधेः प्रयोजकत्वं कल्पयितव्यमिति तैरपि विधेः फलसाधनत्वं कल्पयितव्यम्, इत्यविशेषः प्रत्युत प्रयोजकत्वमेव विधेः स्वाभाविकं अप्रयोजकत्वं तु अपवादः । किञ्च आख्यातार्थोऽभिधानप्रतीतकर्तृत्वत्वेनैव अजीवतस्तदनुपपत्तेः जीवनं प्रतिपन्नम् । तस्याधिकारिविशेषणत्वमेव केवलं कल्प्यम्, इतरत्र फलकामनास्वरूपमेव अन्यतः अप्रतिपन्नं कल्प्यमिति महाविशेष इति । प्रकृतमनुसरामः । तदेव विश्वजिति तावत् स्वर्गः फलं यावज्जीवादिषु आवश्यकत्वात् पापक्षय इत्युक्तम् । यत्तु विधुनादीनामपि आवश्यकत्वं तत्फलत्वादिति, तत्र, आवश्यकतया पापक्षयः फलमुच्यते, न तत्फलतया आवश्यकत्वमिति । कः पुनरनयोर्विशेषः ? अयमस्ति विशेषः, यत् फलमवश्यमेव साधयति, तदावश्यकं नैमित्तिकं च तथा । विधुनादि तु नावश्यं फलं साधयतीति शब्दोऽपि, निमित्ताश्रवणात् । फलं तु सर्वेषामिष्टं नाम भवतु, फलसाधनत्वावश्यम्भावश्च अङ्गवैकोचनिमित्तमिति न यथाशक्ति प्रयोगप्रसङ्ग इति गभीरोऽयं न्यायमहाह्रदः । आह, कथं पुनरावश्यम्भावात् आङ्गसंक्षेप इति । उच्यते, अवश्यमेव अस्मिन् सति इदं कृतं फलं साधयति इति प्रतीयते । यदि तु अङ्गलोपे न साधयेत् अवश्यसाधनत्वं विरुध्येत । ननु अधिकारिणा कृतं अवश्यं साधयति इति वक्तव्यम्, इतरथा शूद्रादिकृतमपि साधयेत्, अकाले च । सर्वाङ्गशक्तश्च अधिकारी, इति अन्याहरणेन कृतं असाधनमिति । तदुच्यते । न तावत् शक्तिः अधिकारिविशेषणं संश्रूयते । सा अनुष्ठानोपदेशान्यथाऽनुपपत्त्या अशक्तस्य तदुपदेशासंभवात् कल्प्यते । तत्र यावत् प्रयोगविधिना भूत्यर्थाङ्गा अनुष्ठाप्यते, तच्छक्तिः अधिकारिविशेषणम् । सा च स्वयावयनिमित्ताविरोधि अङ्गमनुष्ठापयति, इति यावन्ति अङ्गानि यदा अनुष्ठातुं शक्यन्ते, तावन्ति तदा अनुष्ठापयति । न चैवं अङ्गोपादानपरित्यागाभ्यां वैरूप्यं प्रसज्यते, 'यथाशक्ति कुर्यात्' इत्येकविधेकरूपस्यैव वचोभङ्ग्या उभयसिद्धेः । एतच्च प्रयोगविध्यनुप्राप्येषु अङ्गेषु उच्यते । यदि 'कुर्यात्' इत्युच्यते, तत् 'यथाशक्ति' इत्युपपद्यते । यानि तु स्वभावसिद्धानि विध्यन्तरसिद्धानि च उपजीव्यन्ते, यथा लोके अर्थार्जनादि, वेदे कालो विद्या अग्निश्च, तेषां स्वरूपेणैव अधिकारिविशेषणत्वं अमाराधार्थसम्बन्धी द्रव्यवान् विद्यावान् अग्निमानिति । एतदुक्तं भवति, अङ्गं हि नाम विधिसम्बन्धात् उपादीयते, निमित्तानुरोधात् त्यज्यते वा उभयानुग्रहार्थं वा शक्तं प्रति उपादीयते, अशक्तं प्रति त्यज्यते इति, नान्या गतिरस्ति । तत्र उभयानुग्रहस्तावत् साधीयान्, यदि संभवति । संभवश्च उपादेयेषु अङ्गेषु

'यथाशक्ति व्रीहीन् संपादयेत् यथाशक्ति वा अवहन्यात्' इति । आहवनीयादिस्वरूपं तु न अनेन विधिना उपादीयते । यद्यपि होमं प्रत्युपादीयते स्वरूपं तु नोपादीयते, तत्र यदि आहिताग्निः आहवनीये जुहुयात्, इतरश्च यत्र क्वचित् इति विधीयते, ततो वैरूप्यं प्रसज्येत । न च 'यथाशक्ति आहवनीयं संपाद्य जुहुयात्' इति उभयसाधारण्येन विधानं संभवति, आहवनीयादिसंपादनस्य अमार्गेऽपि व्रीह्यादिवैतुषीकरणवत् विधानात् । तेन आहवनीयमनादृत्यैव होममात्रमनुष्ठाप्येत, आहवनीयवत्त्वं वा अधिकृत्य आहवनीये होमः । तस्मात् आदरे सति आहवनीयविधेः अनन्यथासिद्धत्वात् । यावज्जीवशब्दस्य तद्विपर्ययजीवनेऽपि कृतार्थत्वेन अत्यन्तपीडाऽभावात्, 'अग्निमान् जीवन् जुहुयात्' इत्येतमाश्रीयते । अनेन काम्यविधावुक्तो व्याख्याताः । ननु एवं अङ्गान्तरेऽपि किमिति जीवनं नोपसंह्रियते 'यच्छक्तिमान् जीवन्' इति, शक्त्यपेक्षयाऽपि उपसंहारे तेषामत्यन्तविरोधाभावात् । तत्र निमित्तं वा अङ्गानुरोधेन निश्चितं बाध्यते, अङ्गानि वा निमित्तानुरोधेन (बाध्यन्ते) इति चिन्तायाम्, प्रधानवाक्ये गुणत्वेन निमित्तं प्रथमं प्रधानमनुरुध्य प्रधानाविरोधेन अङ्गानि संबध्यन्ते । काम्ये तु निमित्तवाक्यस्य कश्चित् विशेषो नास्ति इति अङ्गानि अपेक्षितानि उपसंह्रियन्ते इति निखिलाङ्गयुक्तस्यैव प्रयोगः । नित्ये तु यथोक्तेन न्यायेन विधायिकालार्थैयत्वपरित्यागेन अन्येषामङ्गानां यथा शक्त्युपसंहारः इति सिद्धः काम्यनित्यविशेषः । आह, भवेदेवं यदि निमित्तानन्तरं नैमित्तिकेन अवश्यं भवितव्यम्, न तु तदस्ति । कारणपर्यायो हि निमित्तशब्दः । न चावश्यं कारणानि कार्यवन्ति, सत्यपि कारणे सहकारिण्यपेक्षया कार्यविलम्बदर्शनात् । तदुच्यते । कारणशब्दस्तावत् अनेकेषु अनेकविधेषु च भावेषु कार्यजननं निमित्तीकृत्य प्रवर्तमानो न सातिशयनिर्णयमर्हति । न चानुत्पन्नं पुनः स्थितिमापद्यते । यत्तु अनुत्पत्त्यापि मृत्पिण्डे घटकारणव्यपदेशः, स लक्षणयेति द्रष्टव्यम् । न च यावज्जीवादिशब्दस्य स्वभावकारणप्रतीतिः मुख्यमेव जीवनादीनां निमित्तत्वम्, तादृशं च कार्याव्यभिचारीति मन्यत एव नैमित्तिकस्य अवश्यंभाव इति युक्त एव अङ्गसंकोच इति । 'यस्य नैमित्तिकं कर्म विफलं तस्य तादृशः । अनुष्ठानं कुतः सिध्येद्यथाशक्ति कुतस्तराम् ॥' १० ॥

कार्यस्य किं न फलापेक्षाऽस्ति स्वयमेव कार्यरूपत्वात् । विश्वजिदादावपि न फलापेक्षया स्वर्गः कल्प्यते, किन्तु कार्यस्य कृत्यधीनत्वात्, कृतेश्च कर्तृत्वाधिकारित्वप्रणाडिकया नियोज्यापेक्षत्वात्, तस्य च अविशिष्टस्य अनुपपत्तेः तद्विशेषणापेक्षायां स्वर्गः तद्विशेषणतया कल्प्यते, न फलतया । तथाविधस्य च तस्य तादर्थ्याधिकरणन्यायेन फलत्वं संपद्यते । नैमित्तिकेषु तु निमित्तस्यैव नियोज्यविशेषणस्य लब्धत्वात् तद्विशेषणतया फलसिद्धिः । न च फलतया, अनपेक्षितत्वात् । भावनाया हि वाक्यार्थत्वे स्यात् भाव्यापेक्षा । भावनोपसर्जनस्य तु भाव्यरूपस्यापूर्वस्य वाक्यार्थत्वेन फलापेक्षा नास्तीति नैमित्तिकं कर्म विफलम्, इति यस्य दर्शनम्, तस्य मते तादृग्भूतस्य विफलस्य कर्मणः अनुष्ठानमेव न सिध्यति, प्रागेव तु यथाशक्त्यनुष्ठानम् । कार्यावगमात् प्रवृत्तिः, न फलमपेक्षते इति चेन्न, फलवत्त्वादृते कार्यत्वस्यैव असंभवात् । कृतिप्रधानं हि कार्यमुच्यते । न च सुखदुःखपरिहारसाधनव्यतिरिक्तं कृतेः प्रधानं भवितुमर्हति । नन्विदमनुमानं आगमविरुद्धत्वं नोत्थातुमर्हति । आगमेन हि अपूर्वस्य कार्यत्वमुच्यते । तत् कथमनुमानेन निराक्रियते । सत्यम्, यदि च एवागमोऽनुमानं निरुणद्धि, व्युत्पत्तिरेव तु पदार्थयोग्यत्वाधीना । न च असुखस्य असाधनस्य वा अपूर्वस्य कृतिं प्रति प्राधान्ययोग्यताऽस्ति । एकशब्दवाच्यत्वात् अविरोध इति चेन्न, व्युत्पत्तिविरोधात् । यदि मन्येत एकेन हि प्रत्ययेन कृतिस्तत्प्रधानं च कार्यमुच्यते, अतस्तत्र योग्यत्वमकारणम् । यत्र तु अनन्वितौ स्मृतौ पश्चादन्वितौ अभिधेयौ, तत्र योग्यत्वं कारणमिति । तन्न, व्युत्पत्तिविरोधात् । अन्वयायोग्ययोर्हि अर्थयोरनेनैव शब्देन अन्वितौ अभिधेयाविति व्युत्पत्तिरेव असंभावनीया । तेन अयोग्यता भिन्नशब्दवाच्ययोः अन्वयं निरुणद्धि । एकशब्दवाच्ययोस्तु व्युत्पत्तिमपि । व्युत्पत्त्यवसरे नास्ति अयोग्यत्वमिति चेन्न, इतरत्रापि प्रसङ्गात् । स्यादेतत् । कामाधिकारे हि अपूर्वस्याभिधेयत्वं निरूप्यते । तत्र च

फलानुकूलत्वादन्यैव कृतिप्राधान्ययोग्यत्वं अपूर्वस्येति । तन्न, एवं सति नैमित्तिकेऽपि फलं प्रसज्येत । यदा हि काम्याधिकारे कार्यत्वनिर्वाहकत्वेन फलवत्त्वमङ्गीकृतम्, तदा नैमित्तिकेऽपि कार्यत्वाभ्युपगमेन तन्निर्वाहकं फलवत्त्वमपि नियोज्यवदङ्गीकर्तव्यम् । तदभावे नियोज्याभाव इव कार्यत्वस्यैव प्रविलयात् नानुष्ठानं सिध्यति ततो यथाशक्त्यनुष्ठानम् । इत्यास्तां तावत् ।

ननु च 'निमित्तफलसंबन्ध एकवाक्येन युज्यते । उद्देश्यद्वयसंबन्धे वाक्यभेदः प्रसज्यते ॥' ११ ॥ निमित्तफलयोर्हि द्वयोरुद्देश्ययोः एकवाक्यसंबन्धासंभवात् प्रत्युद्देश्यं वाक्यपरिसमाप्तेः निमित्तवाक्ये दुरभ्युपगमं फलमिति । उच्यते । 'द्वाभ्यां विधेयसंबन्धे वाक्यभेदः प्रसज्यते । उद्देश्येन निमित्तेन विधेयस्य न संगतिः ॥' १२ ॥ विधेयस्य हि द्वाभ्यामुद्देश्याभ्यां संबन्धे वाक्यभेदो भवति, न चेह तथा, विधेयस्य कर्मणः फलेन संबन्धात्, तत्कर्तव्यतायाश्च निमित्तेन । न चैवं सति वाक्यभेदो भवति, साकाङ्क्षत्वात् । भवति हि अस्मिन् सति इदं कुर्यात् इत्युक्ते किमर्थमित्याकाङ्क्षा । तत्र एतदर्थमिति संबध्यमानं फलम्, न वाक्यं भिनत्ति । समानजातीयं हि उद्देश्यद्वयं वाक्यं भिनत्ति, न विजातीयम् । यथा 'यस्य पिता पितामहः सोमं न पिबेत्' इति निमित्तद्वयम् 'यः प्रजाकामः पशुकामः' इति फलद्वयम् । तस्मान्नास्ति वाक्यभेद इति । यत्तु भगवता मण्डनाचार्येण निमित्तस्य उद्देश्यत्वं वाक्यभेदपरिहारार्थं निराकृतम्, तत् विधेयं प्रति उद्देश्यभावाभिप्रायम्, वार्तिके तु निमित्तस्य उद्देश्यत्वाभिधानात् इत्यलमतिविस्तरेण । तस्मात् सिद्धः काम्यनित्यविशेष इति । 'पार्थसारथिना सम्यग्विशेषः काम्यनित्ययोः । आचार्यमतमाश्रित्य न्यायलेशात्प्रदर्शितः ॥' १३ ॥ इति श्रीयज्ञात्मसूरिसुतपार्थसारथिसूरिविरचितायां न्यायरत्नमालायां नित्यकाम्यविवेकः ॥

* नित्यत्वमनित्यत्वं च । कृताकृतप्रसक्ति नित्यम्, तद्विपरीतमनित्यम् । अत एव तुदति इत्यादौ पदादपि गुणात् नित्यत्वात् शप्त्वपादिर्भवति । किञ्च ध्वंसाप्रतियोगित्वं नित्यत्वम्, ध्वंसप्रतियोगित्वमनित्यत्वमिति । किञ्च इदमनित्यत्वं त्रिविधं संसर्गानित्यत्वं परिणामानित्यत्वं प्रध्वंसानित्यत्वं चेति । तत्र स्फटिकस्य लाक्षाऽऽद्युपधाने स्वरूपतिरोधानेन पररूपाभासः, उपधानापगमे स्वरूपप्रतिभासात् परिणामाभावः इति संसर्गानित्यत्वम् । यथा च बदरीफलस्य श्यामतातिरोभावे लौहित्यस्याविर्भावः इति परिणामानित्यत्वम् । यथा च सर्वात्मना विनाश इति प्रध्वंसानित्यत्वमिति । एतत् त्रिविधानित्यत्वप्रतिक्षेपेण नित्यतां प्रतिपादयितुं पतञ्जलिराह– 'ध्रुवं कूटस्थं अविचालि अनपायोपजनविकारि अनुत्पत्ति अवृद्धि अव्ययोगि यत्, तत् नित्यम्' इति । तत्र ध्रुवं कूटस्थमिति संसर्गानित्यता परिहृता । अविचालि इति परिणामानित्यता परिहृता । अनपायेत्यादिना प्रध्वंसानित्यता परिहृता ।

अथवा तदपि नित्यम्, यस्मिन् तत्त्वं न विहन्यते । किं पुनस्तत्त्वम् ? तद्भावस्तत्त्वमिति । किञ्च प्रत्यवायजनकीभूताभावप्रतियोगित्वं नित्यत्वम्, यथा एकादश्यामुपोषणं नित्यमिति । किञ्च ध्वंसप्रागभावाप्रतियोगित्वं नित्यत्वम्, यथा गगनं नित्यम् । किञ्च अहरहर्जायमानत्वमपि नित्यत्वम्, यथा 'नित्यं कुमाराः क्रीडन्ति' इति । साहस्री. १३.

नित्यत्वाच्चानित्यैर्नास्ति संबन्धः । ६।७।४।५ ॥

अनित्यधनस्य यागकालपर्यन्तमवस्थानस्य पश्चात् प्रयोगेन कदाचित् प्राप्यमाणस्य धनस्य निर्देशः । विश्वजिति यागे यथा भूमिर्न देया तथा अनित्यान्यपि देयतया न संकल्पयितव्यानि इति सूत्रार्थः । विद्यमानधर्मस्वत्वस्य नित्यत्वात् अवश्यकर्तव्यत्वेन उक्तत्वात् अनित्यैर्द्रव्यैः यागकाले नास्ति देयत्वेन संबन्धः । कदाचित्तु नैव लभ्यन्ते । तस्मात् यागकाले लभ्यमानत्वेन संभाव्यमानं नाददेयत्वेन संकल्पयितुं शक्यते । विद्यमानं तु अवश्यं वर्जयित्वा सर्वं स्वं देयम् इति सिद्धान्तः । के.

* नित्यद्रव्यविशेषगुणः द्रव्यान्तरसंयोगासमवायिकारणकः । मणि. पृ. १९.

नित्यधारणे विकल्पो नद्युक्तस्मात् प्रतिषेधः स्यात् । १२।४।१०।३०॥

नित्यधारणे उत्पन्नाग्नेः नित्यं धारणे विकल्पः स्यात्

धार्यो वा न वेति । अकस्मात् विना कारणं प्राप्तं धारणं विना 'न प्रतिसमिन्ध्येत्, यत् प्रतिसमिन्ध्यति भ्रातृव्यमस्मै जनयति' इति श्रुत्या कृतः प्रतिषेधो नहि नैव स्यात् । प्रतिषेधात्तु धारणमप्यस्तीति गम्यते । तस्मात् नित्यधारणाधारणयोर्विकल्पः स्यात् इति पूर्वः पक्षः ।

नित्यधारणाद् वा प्रतिषेधो गतश्रियः । २१ ॥

गतश्रियः नित्यधारणात् 'धार्यो गतश्रिय आहवनीयः' इति श्रुत्या गतश्रियः नित्यधारणविधानात् धारणं प्राप्तम् । एवं सति 'न प्रतिसमिन्ध्येत्' इति श्रुत्या प्रतिषेध उपपद्यते । ततो न नित्यधारणे पृथगनुमेयम् । तस्मान्न विकल्पः किन्तु नित्यत्वेन धारणमेव । इति सिद्धान्तः । के.

* नित्यनैमित्तिकयोः न समानविधित्वम् । सोमधर्मासमानविधित्वाधिकरणं द्रष्टव्यम् । भा. ३।६।१।२६.

* नित्यनैमित्तिकयोः पौर्वापर्यं नैमित्तिकन्यायेन पूर्वपक्षः । टुप्. ३।५।११।५४.

* नित्यनैमित्तिकोभयार्थं दध्यादि, 'दध्ना जुहोति' 'इन्द्रियकामस्य जुहुयात्', 'खादिरे पशुं बध्नाति' 'खादिरं वीर्यकामस्य यूपं कुर्यात्' इति । भा. ४।३।३।५-७.

* नित्यप्रयुक्तत्वं नैमित्तिकाना नास्ति । भा. ४।३।२।४.

* नित्यप्रयोगस्य श्राध्ये अन्तर्गतत्वात् । वा. १।३।१।२ पृ. १४०७.

* नित्यस्थले पापक्षयस्यैव आम्नानम् 'धर्मेण पापमपनुदति' इत्यादिवाक्येभ्यः प्रतीयते । भाट्ट. ६।३।१.

* निदानं कलेवरम् । न च कस्यांचित् वैदिकसंहितायां लौकिकः अश्वगतिभेदः निदान श्रूयते, नापि प्रत्यक्षानुमानादिभिर्गम्यते । वा. ३।८।१०।२९ पृ. ९६२.

* निद्रा एनिद्रस्य मनसो दौर्बल्यात् । अचेतयमेव हि सुप्त इत्युच्यते । भा १।१।५।५ पृ २०.

* निधनम् । 'ज्योतिष्टोमे सौभरसुवर्णसाम ब्रह्मसाम (ब्राह्मणाच्छंसिनः साम) विहितम् । ...(तत्र) हीष् इति वृष्टिकामाय निधनं कुर्यात्, ऊर्क् इत्यन्नाद्यकामाय, ऊ इति स्वर्गकामाय' इति । निधनमिति चान्त्या साममक्तिरभिधीयते । वा. २।२।१३।२८ पृ. ५६३.

* निधनं उद्गातृप्रस्तोतृप्रतिहर्तृभिः सर्वैर्गातव्यः अन्तिमः सामावयवः । के. * निधनं नाम पञ्चभिः सप्तभिर्वा भागैरुपेतस्य साम्नः अन्तिमो भागः । [illegible] १।२।१२.

* निधानार्थता पुरोडाशकपालादीनाम् । 'ज्योतिष्टोमे पुरोडाशशकलं ऐन्द्रवायवस्य पात्रे निदधाति, धाना आश्विनपात्रे, पयस्या मैत्रावरुणपात्रे' । अत्र पुरोडाशादयः प्रकृता एव ग्राह्याः । भा. ३।८।१८।३४.

* निनयनमन्तर्वेदि, प्रणीतानामपां न प्रयोजकम्, किन्तु प्रतिपत्तिः । संवपनं तु प्रणयनस्य प्रयोजकम् । के. ४।२।५।१४-१५.

* अभिधारणस्य केवलहविःसंस्कारार्थत्वात् निनयनकालीनपुरोडाशकपालन्यायेन (४।१।११।२६) होमोऽप्यदनाप्रयोजकत्वेऽपि धारणप्रयोजकत्वोपपत्तिः (पुरोडाशकपालन्याय एवायं निनयनकालीनेति अविवक्षितम्-के.) । भाट्ट. ४।२।१४.

II निनयनन्यायः । दर्शपूर्णमासयोः प्रणीतानिनयनं प्रतिपत्तिकर्म ॥

तत्प्रत्ययसंयोगात् प्रणीतानामाज्यवद् विभागः स्यात् । ४।२।५।१४ ॥

भाष्यम्— दर्शपूर्णमासयोराम्नायते, 'अप प्रणयति आपो वै श्रद्धा, श्रद्धामेवाऽऽलभ्य यजते' इति । तासां च प्रणीतानामुत्पन्नानां व्यापारः श्रूयते, 'प्रणीताभिर्हवींषि संयौति' इति, तथा 'अन्तर्वेदि प्रणीता निनयति' इति । तत्र संदेहः किमुभयमासां प्रयोजकं संयवनं निनयनं च, उत संयवनार्थानां निनयने प्रतिपत्तिरिति । किं प्राप्तम् ? उत्पत्तिसंयोगो नासां केनचित् प्रयोजनेन । उभाभ्यामुत्पन्नानां संयोगः । तस्मान्न गम्यते विशेषः । अगम्यमाने विशेषे, उभयार्थानां विभागोऽयम्, काश्चिद्विभाग संयवने, काश्चिन्निनयने इति । आज्यवत् । यथा 'सर्वस्मै वा एतद् यज्ञाय गृह्यते यद् ध्रुवायामाज्यम्' इति ।

टुप्— शुद्धाः (केनचिदपि प्रयोजनेन असंयुक्ताः) प्रणीता उत्पन्नाः केवलमभिलपितो वाक्यद्वयेन ('प्रणीताभिर्हवींषि संयौति' 'अन्तर्वेदि प्रणीता

निनयति ' इति ) । संवपननिनयने प्रयोजने प्रति नीयन्ते । तेन ( उभयार्थत्वेन ) उभयप्रयुक्ताः इति । ननु संवपने तृतीयानिर्देशात् गुणभावः ( अतस्तदेव प्रणीतानां प्रयोजकम् ) निनयने तु द्वितीयानिर्देशात् प्राधान्यम् ( इति तत्प्रयोजकं निनयनम् ) । उच्यते । वचनान्तरेण ( अन्यत्र पूर्वम् ) शेषभावे अवगते ( सति, पश्चात् ) अन्यत्र संयोगे ( सति ) भवति प्रतिपत्तिः । यथा स्विष्टकृत् । ( किञ्च केवल- ) संवपनार्थता च तावतीनामेव ग्रहणं प्राप्नोति, यावतीभिः संवपनं निष्पद्यते, कुतोऽन्यत्र प्रसङ्गः । उभयप्रयुक्ताभिस्तु उभयं निर्वर्तयितव्यम् ( तस्मादुभयप्रयुक्ताः इति । ननु मौनाध्ययनवत् सर्वार्थत्वं गम्यते, तत् कथमुभयार्थत्वमुच्यते, तत्राह- ) सर्वार्था इति पक्षो न कृतः, निष्प्रमाणकत्वात् । श्रुतवाक्येन ( अङ्गाङ्गित्वे ) सम्बन्धविशेषे अवगते प्रकरणात् सर्वार्थत्वम् ( कल्प्यम् । तच्चायुक्तम् ) । कल्प्यमानेऽपि प्रकरणसंबन्धात् तत्र च अन्यत्र च प्राप्ताः, पुनः ( संवपननिनयनयोः- ) वचनात् ( अन्येभ्यः ) परिसंख्यायेरन् । तस्मात् सर्वार्थ- (त्व )पक्षो तु निरस्तः ।

संवपनार्थानां वा प्रतिपत्तिरितरासां तत्प्रधानत्वात् । १५ ॥

भाष्यम्—— संवपनार्थाः प्रणीताः । कुतः ? तृतीयानिर्देशात् । संवपने आपां गुणभावः, द्वितीयानिर्देशाच्च निनयने प्राधान्यम् । चिन्तायाः प्रयोजनं पुरोडाशाभावे प्रणीतानामभावः यथा पयस्यायाम् ।

टुप्—— तृतीयासामर्थ्यात् संवपनार्थत्वेव ( निनयनं तु ) प्रतिपत्तिः । यत्तु तावतीनामेव ग्रहणं प्राप्नोति इत्युक्तम् । तत्राह- ) न तावन्मात्रं शक्यमुपकल्पयितुम् । सूक्ष्ममिदं द्रव्यम् ( अवश्यम् ) अतिरिच्यते । तस्मात् अतिरिक्तस्य प्रतिपत्तिः, न तु अतिरेचयितव्यम् इति शास्त्रमस्ति । अतिरेकश्च अवश्यम्भावी । ( कुतः ? ) अल्पे हि गृह्यमाणे संवपनस्य अकृतत्वात् ( सर्वपिष्टसंवपनस्य अकृतत्वसंभवात् ) पुनः प्रणीतानां संस्कारः कर्तव्यः इति गौरवमपि । क्रमभ्रेषाच्च प्रायश्चित्तम् ( प्रसज्येत ) ।

शा—— ' तन्त्रोत्पत्त्यावसंयोगात् कैमर्थ्याभिलाषिणीः । स्वीकुर्वीत उभे यस्मादुभयार्थास्तदुच्यते ॥ हवि संयवने तासां गुणभावस्तृतीयया । द्वितीयया निनयनं प्रतिपत्तिर्विधीयते ॥ '

सोम—— शास्त्रावा उपयुक्तत्वात् प्रकरणस्य प्रतिपत्त्यपेक्षेऽपि विनीयमानानामपां अन्यत्रोपयुक्तत्वाभावात् निनयनं न प्रतिपत्तिः इति प्रत्यवस्थानात् संगतिः । सूत्रार्थस्तु — उभयतो व्यर्थविशेषासंयोगात् प्रणीतानां प्रोक्षणस्येव अनेकत्र विभज्य विनियोगः स्यादिति ।

वि—— ' प्रणीताभिस्तु संयौति येया निनयतीति किम् । अपां द्वे प्रापके किंवा हविःसंयवनं तथा ॥, अपः प्रणयतीत्युक्तेः समत्वादुभयार्थता । , श्रुत्या संयवनार्थास्ताः निनीतेः प्रतिपत्तिता ॥ '

भाट्ट—— तत्रैव ' अपः प्रणयति ' इत्यनेन विहितप्रणयनसंस्कृतानामपाम् ' प्रणीताभिर्हवींषि संयौति ' इति वचनेन संयवनार्थत्ववत् अन्ते ' अन्तर्वेदि प्रणीता निनयति ' इति निनयनार्थत्वेनापि विनियोगादुभयप्रयुक्तत्वम् । न च निनयनवाक्येऽपि द्वितीयानिर्देशात् प्रतिपत्तित्वाशङ्का, कुशलेनाध्वर्युणा यावत्संयवनोपयोगिनामेवापां प्रणयनेन शेषाभावात् प्रतिपत्तित्वानुपपत्तेः । अतः तत्तुल्यत्वेन निनयनस्य अर्थकर्मत्वात् प्रयोजकत्वम् । इति प्राप्ते, द्वितीयासंयोगादप्रकीर्णकरणात् प्रतिपत्तिरेवेयम् । न च शेषाभावः, अवश्यवर्जनीयत्वात् । अनन्यथासिद्धप्रतिपत्तेरेव धारणप्रयोजकत्वाच्च । अतः संयवनमेव प्रयोजकम् । अत एव आग्नेयादिहविः पाकत्वेनैव संयवनोद्देश्यता । तेन चर्वादावपि प्रणीता भवन्त्येव । अत एव अभ्युदितेष्टौ दधिपयसोरपि प्रणीता भवन्ति । वस्तुतस्तु कपालं प्रति संयोगजन्यपाकत्वेनैव पिण्डसंयवनत्वेनैव उद्देश्यता, अतिप्रसक्तधर्मेण तदङ्गीकारे प्रमाणाभावात् । दधिपयसोः प्रणीताधर्मास्तु कृत्वाचिन्तया । याज्ञिकास्तु चर्वादावपि प्रणीताः कुर्वन्ति । प्रयोजनम्— संयवनोत्तरं प्रणीतानाशे निनयनार्थं तदनुत्पत्तिः ।

मण्डन—— ' अपां निनीतिः प्रतिपत्तिरेव ।'

शंकर — ' प्रणीतानिनये तथा ।' शास्त्रावत् प्रतिपाद्यम् ।

● अवघाते निनयनन्यायस्तु प्रतिशङ्कितुमशक्यत्वादेव अनाशङ्क्यः । कौ. २।१।९.

● निन्दा । या तन्मात्रपर्यवसायिनी सा निषेधफला भवति । विधिपरा तु स्तुत्यर्था वाच्येन, तदुपपादनस्य इष्टार्थत्वात् । वा. १।२।१।११. ● निन्दायाः कस्याश्चित् तदितरस्तुतौ पर्यवसानम्, कस्याश्चित् विधिस्तुतिपूर्वकनिन्दाया अपि महेव विधिस्तुतिव्यतिरिक्तस्तुतौ पर्यवसानम् । यथा 'देवदत्तस्तावदतीव विद्वान्' इत्युक्त्वा 'न तस्य बृहस्पतिरपि समानः' इति च स्तुत्वा 'सोऽपि यज्ञदत्तमपेक्ष्य अविद्वान्' इत्युक्तेः सर्वस्या अपि यज्ञदत्तस्तुतौ पर्यवसानम् । पराक्रमः. ४९।२.

● निन्दाऽर्थवादः निषेधरूपविध्येकवाक्यत्वात् । सु. पृ. ११७१.

● निन्दापदप्रयोगस्य अप्राशस्त्यं नाम तद्वदनिष्टानुबन्धित्वयोग्यता । अर्थवादेषु । भाट्ट. १।२।१ पृ. २२.

● निपातः अर्थद्योतकः । 'उपसर्गनिपातयोः ॥ तयोरर्थाभिधाने हि व्यापारो नैव विद्यते । यदर्थद्योतकौ तौ तु वाचकः स विधार्यते ॥' वा. १।३।९।२१ पृ. १०६. ● निपात, वाचक, इत्येकः पक्षः द्योतक इत्यपरः । द्योतकपक्षेऽपि विनियोजकश्रुतित्वाविघातः । याज्ञ. पृ. ४१. ● निपातेन निङ्निपाताभिहितकर्तृ-कर्मत्वयोः प्रथमा । रहस्य. पृ. ६४-६६. ● निपातस्य उपपदार्थान्वय्युत्पत्तिः सिद्धा । भाट्ट ७।३।४.

● निपातातिरिक्तनामार्थकप्रातिपदिकार्थयोः भेदान्वयबोधः । मणि. पृ. ११२.

● निपातोपसर्गयोः । 'क्रियते (अर्थनिर्णयः) संशयेऽस्मिन्नुपसर्गनिपातयोः । तयोरर्थाभिधाने हि ... विधार्यते ॥' (निपातशब्दो द्रष्टव्यः) । वा. १।३।९।२१ पृ. २०६. ● निपातोपसर्गाणां स्वतन्त्रार्थाभिधायकत्वाभावात् । सु. पृ. १२१. ● निपातोपसर्गेषु लिङ्गसंख्याराहित्यं कारकराहित्यं च । पृ १४४२.

● निमन्त्रणं अनिष्टवत्त्वीभूतकरणप्रतियोगिकावानुभावकप्रवर्तकेच्छा । यथा श्राद्धादौ दौहित्रादेः प्रवर्तनम् । अत्र प्रमाणान्तरेणाभोजने प्रत्यवायावगमात् । रहस्य. पृ. १०. ● निमन्त्रणं अभ्यर्थनं नीचस्य प्रवर्तनम् । बाल पृ. ७५. ● निमन्त्रणं आवश्यके श्राद्धादौ नियोगकरणम् । (आवश्यके श्राद्धभोजनादौ दौहित्रादेः प्रवर्तनम् इति सि. कौमुदी । लिङर्थः ।) मणि. पृ. ११७.

● निमित्तमनुपादेयं तस्य कर्मभेदकत्वम्, उदाहरणं तु 'सत्राय्यागूर्य विश्वजिता यजेत' 'शाम्युत्थाने विश्वजित' इत्यादि । वा. २।४।१२।२५ पृ. ६१७. ● निमित्तमुच्यते सप्तम्या वा यद्वृत्तेन वा यदिशब्देन वा । टुप्. ४।४।५।११. ● निमित्तं च नाम तदुच्यते, यस्मिन् सति नैमित्तिकं भवत्येव । कणिका. पृ. ३३३. ● निमित्त हेतुः काल. फल इत्यादि इत्यनुवादेयत्वम् । बाल. पृ. ८८. ● निमित्त सप्तम्यन्तेनोच्यते यथा 'भिन्ने जुहोति' इति । यद्वृत्तेन वा 'यस्योभयं (हविरार्तिमार्च्छति)' इति । टुप् ११।१।१।८ पृ. २०९८. ● अनुपादीयमानं हि निमित्तं इत्युच्यते । यदि हि विधीयेत, निमित्तमेव तन्न स्यात् । यदि च यस्यापि निमित्तम्, सोऽप्युद्दिश्येत, तत्र द्वयोरुद्दिश्यमानयोः संबन्धः एव न स्यात् । भा. ६।४।४।१३. ● यश्च भावप्रत्ययार्थः, स प्रातिपदिकस्य विशेष्ये वर्तमानस्य निमित्तम् । यच्च निमित्तं तत् विशेषणत्वात् गुणत्वमिवैव, लाक्षणिकं विशेष्यम् । भा. ३।१।६।१२ पृ. ६७८. ● निमित्तेन पूर्वेण भवितव्यं उत्तरेण नैमित्तिकेन इति नैतन्नियोगतः । भवति हि भविष्यदपि हि निमित्तम् । यथा वर्षिष्यतीति कृषिकर्मानुष्ठानम् । भा. २।३।१।२ पृ. ५७७. ● निमित्तस्य अनुष्ठापकत्वाभावेऽप्युद्देश्यत्वेऽपि ईप्सितत्वाद्युद्देश्यत्वाभावात् न यागस्य निमित्तादृष्टत्वम् । भाट्ट. २।२।२. ● निमित्तस्य क्रियान्वयिनोऽपि कारकत्वाभावात् नाख्यातोपात्तिः । ३।२।२. ● निमित्तस्य दर्शपूर्णमासाभ्यां संबन्धो विधीयते, न कर्मान्तरम् 'यावज्जीवं दर्शपूर्णमासाभ्यां यजेत' इति । वि. २।२।११. ● निमित्तस्य नानुष्ठापकत्वं (नैमित्तिके कर्मणि) अपितु विधिबोधितस्यैव अनुष्ठानस्य आवश्यकता बोधकत्वमात्रम् । तद्बोधस्य च फलं नैमित्तिकाकरणस्य प्रत्यवायजनकत्वबोधः । भाट्ट. ६।३।१ पृ. २५०. ● निमित्तस्य विनियोगविधौ

प्रत्यवायः । ६।३।१ पृ. २५०, * निमित्तस्य विनियोगान्वयित्वं यावज्जीवाधिकरणे स्थापितम् । ६।५।१ पृ. २८४. ॐ यत्संबन्धाच्च प्राक् निमित्तत्वमेव नोपजायते, भवति तत् निमित्तस्यापि विशेषणम्, यथा आर्त्यधिकरणे वक्ष्यते– मृण्मयादि हविषा विशेषणं इति । वा. १।३।१।१ पृ. ५७१. * निमित्तानामनेकेषां युगपत् संनिपाते नैमित्तिकसाहित्यं युक्तम् । यथा– युगपत् अनेकचण्डालादिस्पर्शादौ नैमित्तिकस्य सकृदनुष्ठानम्, यथा वा युगपदनेकग्रहदर्शनादौ । भाट्ट. ५।२।२, * निमित्तानां सर्वेषां ज्ञातानामेव नैमित्तिकप्रयोजकत्वं विज्ञानेश्वरादिभिः निरूपितम् । समयमयूखः. * निमित्ते प्राप्ते नैमित्तिकं कर्तव्यं भवति । भा. ६।८।४।१०,१२. * न च शक्यं निमित्ते सति नैमित्तिकेन न भवितुम् । भा. ३।२।१।१ पृ. ७४६.

निमित्तानन्तरमेव नैमित्तिकमिति न्यायः । ( स्पष्टोऽर्थः ) । साहस्री ५६८.

* निमित्तानुरोधेन अग्निहोत्रादिकर्मणा आवृत्तिः । भा. ९।२।८।२७–२८.

* निमित्तापनयें तत्काम अपनीयते यदपनेतुं शक्यते अन्यत्र च योजयितुम् । भा. ३।५।१८।४६.

* निमित्तापाये नैमित्तिकस्याप्यपायः । अकृतव्यूहाः पाणिनीयाः इति परिभाषायाः कैयटमते तात्पर्यमिदम् । लोकन्यायसिद्धश्चायमर्थः । तथाहि, लोके निमित्तं द्विविधं दृष्टम्, कार्यस्थितौ नियामकं तदनियामकं च । आद्यं यथा न्यायनये अपेक्षाबुद्धिः, तन्नाशे द्वित्वनाशाभ्युपगमात् । वेदान्तिनये प्रारब्धस्य विक्षेपस्थितिनियामकत्वं च प्रसिद्धमेव । द्वितीयं यथा, दण्डादि । तन्नाशेऽपि घटनाशादर्शनात् । शास्त्रे लक्ष्यानुरोधात् व्यवस्था । प. शेखर. पृ. २२७.

निमित्तापाये नैमित्तिकस्याप्यपायः इति न्यायः । ( निमित्ताभावे नैमित्तिकस्याप्यभाव इति न्यायः ) । यथा— 'चिदीदं सर्वम्, सदीदं सर्वम्, सर्वं खल्विदं ब्रह्म, ब्रह्मैवेदं सर्वम्' इत्यादिश्रुतिभिः 'हरिरेव जगज्जगदेव हरिर्हरितोऽपि जगद्धि भिन्नतनु' इत्याद्याप्तोक्तिभिश्च इदं सर्वं ब्रह्मैव, ब्रह्मकार्यत्वात् । मृत्कार्यभूतो घटो मृद्यथा । इदं सर्वं ब्रह्मैव ब्रह्मण्यारोपितत्वात्, शुक्तिरजतवदित्यादियुक्तिभिर्मृदादिदृष्टान्तैश्च सम्यग्विचार्यमाणे सर्वं ब्रह्मैवास्तीत्येवं श्रुतिस्मृतियुक्तिदृष्टान्तानुभवैर्जगतो ब्रह्मात्मत्वे सिद्धे जगतः कार्यत्वं निवृत्तम् । तन्निवृत्त्या ब्रह्मणोऽपि निमित्तापायेति न्यायेन कारणत्वं निवृत्तमेव भवतीति कश्चिद्वादी । साहस्री. ५३०.

* निमित्तापाये नैमित्तिकस्याप्यपायः । यथा ज्योतिष्टोमे रथंतरपृष्ठत्वे उपवती प्रतिपत्, बृहत्पृष्ठत्वे तु अग्निवती प्रतिपत् । सोमवसंतवयोस्तु पृष्ठं उभाभ्यामेव निष्पद्यते तत्र उपवत्यग्निवत्योरुभयोरप्यपायः । कै. १०।५।१६। ५९–६१.

निमित्ताभावान्नैमित्तिकस्याप्यभावः इति न्यायेन आत्मतत्त्वज्ञानवतो न कर्मविधिप्रतिपत्तिः । उप.साहस्री. पद्य. १।१७ रामतीर्थः, * ननु न मोक्षार्थिनः शास्त्रेण प्रयोजनमस्ति, कृतकर्मणा संसारनिमित्तानां फलभोगानन्तरनाशे सति 'निमित्ता० भावा' इति न्यायात् अयत्नलभ्यत्वान्मोक्षस्य । पद्य. १।५ रामतीर्थः.

* निमित्ताक्षिप्त – प्रत्यवायजनकाकरणप्रतियोगित्वं प्रधाने एव, न तु साङ्गे । भाट्ट. ६।३।१ पृ. २५०.

* निमित्तानुपूर्व्याच्च नैमित्तिकानुपूर्व्ये क्रमानुरोधः । भा. ३।५।१२।३९.

* निमित्तावृत्तौ फलार्थानां नैमित्तिकानामावृत्तिः । भा ६।२।९।२९, * निमित्तावृत्तौ पुर्वनुगमनादीनामावृत्तिः । ६।२।१०।३०. * निमित्तावृत्तौ नैमित्तिकस्याप्यावृत्तिः । यथा– यावज्जीवाग्निहोत्रे, यावज्जीवदर्शपूर्णमासयोश्च, 'भिन्ने जुहोति' 'स्कन्ने जुहोति' इत्यादौ च । वि. ६।२।८–९, * निमित्तजन्यदोषनाशफलसंवलितपुरुषार्थाधिकारविधिः प्रशस्तनिषिद्धविधः विहिताक्रियानिमित्तकः निषिद्धाचरणनिमित्तकश्चेति । तत्राद्यो यथा 'योऽमावास्यां पौर्णमासीं वाऽतिपातयेत् अग्नये पथिकृते अष्टाकपालं निर्वपेत्' इत्यादि । निषिद्धाचरणनिमित्तको यथा 'यद्येकं यूपमुपस्पृशेत् एष ते वायो इति ब्रूयात्' इत्यादिः । बाल. पृ. १४, * निमित्त-

जन्मदोषनाशेतरफलवत्त्वलितपुरुषार्थाधिकारविधिः 'वैश्वानरं द्वादशकपालं निर्वपेत् पुत्रे जाते' इत्यारभ्य 'यस्मिन् जाते एतामिष्टिं निर्वपति पूत एव तेजस्वी' इत्यादन्तः जातेष्टिविधिः । पृ. १५.

* निमित्ततः. वाचनिको व्यवस्थितविकल्पो यथा 'दन्तजाते एकाहः, अनुजाते अपत्ये यस्मात्तादृशो त्र्यहः, कृतचूडे चतुरहः, उपनीते दशाहः' इति विरोधाधिकरणे वार्तिककृतोक्तः । बाल. पृ. १६०, * निमित्ततः वाचनिको व्यवस्थितविकल्पो यथा 'दशाहं शावमाशौचं सपिण्डेषु विधीयते । अर्वाक् संचयनादस्थ्नां त्र्यहमेकाहमेव वा ॥' पृ. १६०, * निमित्ततः वाचनिकी व्यवस्था यथा 'यदि रथंतरसामा सोमः स्यात् ऐन्द्रवायवाग्रान् ग्रहान् गृह्णीयात्, यदि बृहत्सामा शुक्राग्रान्' इति । स्मार्तेऽपि 'नृणामकृतचूडानामशुद्धिर्नैशिकी स्मृता । निर्वृत्तचूडकानां तु त्रिरात्राच्छुद्धिरिष्यते ॥' इति मनुः । पृ. १६, * निमित्ततः विरोधप्रसङ्ग वैषम्यनिमित्तकशास्त्रद्वयेन नित्यप्राप्तस्य प्रसङ्गसिद्धौ । पृ. १४७, * निमित्ततः व्यवस्थारूपः प्रतिषेधो यथा 'स्नातैकर्मपरित्यागो राहोरन्यत्र सूतके' इति । पृ. ३५.

* यत्र यत् प्रतीत्य उपजायते तत्र तस्य निमित्तत्वं इत्यवधार्यते । वा. १।१।१।५ पृ. १९२.

* निमित्तत्वप्रकारकज्ञानाभावेऽपि अनुष्ठापकत्वसत्त्वात् भावनाऽन्वयः । मणि पृ. ११३.

* **निमित्तत्वप्रयोजकत्वयोः** सिद्धसाध्यरूपता । निमित्तत्वं सिद्धं प्रयोजकत्वं साध्यम् । यस्मिन् विद्यमाने सति क्रियते, तन्निमित्तम् । यस्य सिद्ध्यर्थं क्रियते, तत् प्रयोजकम् । वि. १।१।१ वर्णकं २.

* प्राक् सिद्धिं विना **निमित्तत्वायोगात्** । सु. पृ. ९९६.

■ निमित्तनैमित्तिकावृत्तिन्यायः । 'यावज्जीवं दर्शपूर्णमासाभ्यां यजेत' यावच्छब्दः सामर्थ्यं वदन् निमित्तत्वार्थे पतितः 'निमित्त० न्यायेन' जीवनवत्-सामर्थ्यस्य नैमित्तिकसंबन्धेन प्राप्तत्वात् स्वार्थानुवादको भवति । वी. २।४।१।२ पृ. १०२.

* **निमित्तनैमित्तिकभावस्तु** अनादित्वेऽपि शब्दार्थयोरिव इह (संबन्धेऽपि) अविरुद्धः । वा. ३।२।६।१३.

* **निमित्तफलयोरैकश्रुत्यसंभवात्** । कथमैकश्रुत्यसंभवः ? निमित्तफलयोरनुपादेयत्वात् द्वे प्रतिकर्म उपादीयेते । तत्र अन्यतरोपादाने कृतार्थत्वात् एकं प्रति उपादीयते । उभयोरादाने वाक्यभेदः । निमित्तस्य श्रुतत्वात् तत्प्रति उपादीयते । वा. ६।३।१।२ पृ. १४०८.

* **निमित्तभावश्च** नैव वचनात् भविष्यतीति । यद्धि येन प्रयुज्यते, भवति तत् तस्य निमित्तम्, यथा आरामशोधकस्य आरामो वेतनदाने प्रयोजको निमित्तं च । आरामे सति तस्मै वेतनं दीयते वेतनेन समर्थो भवति आरामं रक्षितुम् । भा. १।१।१।१ वर्णकं २.

* **निमित्तभेदाच्च** नैमित्तिकभेदसिद्धिः । वा. ३।७।१।२४.

* **निमित्तरूपोद्देश्यविशेषणस्यापि** ईप्सितोद्देश्यविशेषणस्येव ग्रहैकत्वाधिकरणन्यायेन अविवक्षा । भाट्ट. ६।४।६.

* **निमित्तविधिः** मन्त्रः नाम्नेव । बाल. पृ. ६५.

* **निमित्तविधिसंरूपः** अर्थवादः 'यो वा अध्वर्युश्च यजमानश्च देवतामन्तरितः तस्मा आवृश्च्यते यत् प्राजापत्यं दधिग्रहं गृह्णाति शमयत्येवैनाम्' । बाल. पृ. ५५.

* 'पञ्चदश सामिधेनीरनुब्रूयात्' 'सप्तदश वैश्यस्य' इति उभयत्रापि सामानाधिकरण्यादेशवाचकत्वे कृते विनियोगे सति **निमित्तविशेषसंयोगात्** आसन्नत्वं बलीयो भवति । वा. ३।३।७।१४ पृ. ८४०.

* **निमित्तविशेषणाविवक्षितम्** 'पयोभयं हविरार्तिमार्च्छेत्' इत्यत्र उभयत्वम् । आचारमयूख. पृ. ५८.

* निमित्तविशेषणमविवक्षितम्, यथा अभ्युदयेष्टौ 'निर्वपं हविरभ्युदेति' इत्यनेन निर्वपहविर्विशिष्टचन्द्रोदयो निमित्तमुक्तम्, तत्र निर्वापो विशेषणम्, तदविवक्षितम्, निर्वापात् प्रागपि चन्द्रोदये सति अभ्युदयेष्टिः कर्तव्या भवति । यथा वा– 'यस्य सर्वाणि हवींषि नश्येयुः ... आज्येन... यजेत' अत्र सर्वत्वं अविवक्षितम्, [illegible]मात्रस्य नाशेऽपि आज्यम् । के. ६।४।१,६।५।२ (विस्तरे द्रष्टव्यम्). * निमित्तविशेषणानामविवक्षा

इति हविरार्त्यधिकरणे ( ६।४।१।२८–२९ ) सिद्धम्। सू. ६।५।३।१३.

* निमित्तसंपातो यत्र भवति तत्र किं अन्यनिमित्तको भक्षः समुच्चीयते अथ विकल्प्यते अथवा बाध्यते इति विचारः। समुच्चयः सिद्धान्तः। वा. ३।५।१२।३३.

* निमित्तसंयोगो निक्षेपः प्रकरणं सामान्यम्। विशेषविधिना चाविशेषविधिर्बाध्यते। भा. ३।६।३।१०.

* निमित्तसूत्रम्। प्रथमपादार्थप्रतिज्ञा 'तस्य निमित्तपरीष्टिः' (१।१।३।३) इति सूत्रेण क्रियते। मन्यकारपृष्ठे तु (शा.) निमित्तमूलकस्य नातीव प्रयोजनम्। सोम. १।१।१ पृ. २. * येन विना निमित्तप्रतीतिर्न पर्यवस्यति तदेव निमित्तस्वरूपान्तर्गतम्, इतरत्तु प्रथमावगतमपि अनपेक्षितत्वात् अविवक्षितम्। सोम. ६।४।६ पृ. ४८५.

卐 निम्नगाप्रवाहन्यायः। अन्यत्र प्रवृत्तस्य जन्मान्तरीयध्यानादिरूपचित्तप्रवाहस्य निम्नगाप्रवाहन्यायेन अन्यत्र नयने अतिक्लेशः। संग्रहः.

* निम्नगाप्रवाहन्यायः। यथा नदीप्रवाहपतिताः कीटाद्या आवर्तादावर्तान्तरमाशु व्रजन्तः शर्म न लभन्ते, तथा जन्मतो जन्म व्रजन्तो जीवाः स्वकर्मभ्रान्ताः सुखं नैव लभन्ते। उक्तं च पद्मपुराणे 'कुर्वते कर्म भोगाय कर्म कर्तुं च भुञ्जते। नद्यां कीटा इवावर्तादावर्तान्तरमाशु ते॥ व्रजन्तो जन्मतो जन्म लभन्ते नैव निर्वृतिम्। सत्कर्मपरिपाकान्ते करुणानिधिनोद्धृता। प्राप्य तीरतरुच्छायां विश्राम्यन्ति यथासुखम्॥' इति। साहस्री. १९१.

* निम्बत्वक् चन्दनगन्धस्येव अभिव्यञ्जिका, न तु गन्धान्तराणाम्। शु. १।१।६।१३.

* नियतनिमित्तकं नैमित्तिकं वैदिकं कर्म, यथा 'यावज्जीवमग्निहोत्रं जुहोति' 'वसन्ते वसन्ते ज्योतिषा यजेत'। बाल. पृ. ८५. * नियतनिमित्तकः नैमित्तिकपुरुषार्थाधिकारविधिः 'यावज्जीवमग्निहोत्रं जुहुयात्' इति। पृ. १४.

* नियतपदक्रमा हि मन्त्रा भवन्ति। भा. १।२।४।३१–२.

* नियमोऽपि (यावज्जीविकाभ्यासरूपः) न कर्मधर्मः, कर्तृधर्मोऽसौ इत्युक्तम् 'कर्तुर्वा श्रुतिसंयोगात्' इति (२।४।१।२)। भा. ८।१।१३।२१. * नियमः कर्तव्यतयोपदिश्यते। यश्च कर्ता स कल्याणोदयः। यो न कर्ता स पापोदयः। ६।२।५।२०.

卐 नियमस्तु दक्षिणाभिः श्रुतिसंयोगात् (जै. ३।७।२७) इति न्यायः। ऋत्विग्वाक्येन सुदक्षिणविधौ ऋत्विक्पदानर्थक्यापत्तेः एकेनैव च वरीतव्येन नैराकाङ्क्ष्यात् विकल्पेन अध्वर्य्वादिवाक्यानां वरीतव्यसमर्पकत्वापत्तेः ऋत्विग्विधिसिद्धविनी तु 'नियमस्तु' इति न्यायेन अध्वर्य्वादीनामेव ऋत्विक्त्वावधारणात् वरीतव्यविशेषज्ञानसिद्धेः। सु. ३।७ पृ. २१.

卐 नियमस्तु दक्षिणाभिः श्रुतिसंयोगात्। ३।७।१७।३६॥

ज्योतिष्टोमे ऋत्विजः सप्तदश इति समधिगतं प्राक्। इदानीं कतमे ते सप्तदश इति चिन्त्यते। सप्तविंशतो ये केचित् सप्तदश इति अनुसूत्रस्य पूर्वपक्षस्य निरासार्थः तुशब्दः। न अनियमः किन्तु नियम एव। स तु दक्षिणाभिः सह श्रुतीनां अमीषामृत्विक्शब्दानां संयोगात् सामानाधिकरण्यरूपात् संबन्धात् अवगन्तव्यः। 'द्वादशशतं दक्षिणा' इति प्रस्तुत्य 'ऋत्विग्भ्यो दक्षिणा ददाति, प्रथमभक्षीये ददाति, ततो ब्रह्मणे, ततो होत्रे' इत्यादिना 'प्रतिहर्त्रे अभ्यन्ततः' इति दक्षिणावाक्ये 'ऋत्विग्भ्यः' इत्यनेन अमीषां ब्रह्मणे, इत्यादीनां सामानाधिकरण्यं श्रूयते। तेन चमसाध्वर्युवर्जिताः सप्तदशैव दक्षिणाभिः संबद्धाः श्रुताः। तस्मात् ते एव सप्तदश ऋत्विजो नाम।

क्रमस्था च यजमानत्वं तेषां दीक्षाविधानात्। ३७॥

सिद्धान्ते हेत्वन्तरप्रतिपादनार्थं सूत्रम्। सत्रे 'ये ऋत्विजस्ते यजमानाः' इति ऋत्विजामेव यजमानत्वमुक्त्वा तेषाम् 'अध्वर्युर्गृहपतिं दीक्षयित्वा ब्रह्माणं दीक्षयति, तत उद्गातारम्, ततो होतारम्, ततस्तं प्रतिप्रस्थाता दीक्षयित्वा अर्धिनो दीक्षयति, ब्राह्मणाच्छंसिनं ब्रह्मणः, प्रस्तोतारमुद्गातुः, मैत्रावरुणं होतुः। ततस्तं नेष्टा दीक्षयित्वा तृतीयिनो दीक्षयति, आग्नीध्रं ब्रह्मणः, प्रतिहर्तारमुद्गातुः, अच्छावाकं होतुः। ततस्तमुन्नेता दीक्षयित्वा

पादिनो दीक्षयति, पोतारं ब्रह्मणः, सुब्रह्मण्यमुद्गातुः, ग्रावस्तुतं होतुः । ततस्तमन्यो ब्राह्मणो दीक्षयति ब्रह्मचारी वा आचार्यप्रेषितः ' इति वाक्येन दीक्षायाः विधानात् तेषामेव ऋत्विक्त्वमवगम्यते । तस्मात् चमसाध्वर्यु-वर्जिता ब्रह्मादयः ऋत्विजः सप्तदशैव । चकारो हेत्वन्तर-समुच्चयार्थः । के.

● नियमः दर्शपूर्णमासतन्त्रगतदेवतान्यतमदेवतायाः उपांशुयाजे । भा. १०।८।१६।४९-५०. ● ' नियमः परिसंख्या वा न व्याख्यार्थाद् विनेष्यते । नित्यवाक्यानु-कारी तु नियमः किं न लभ्यते ॥ ' वा. १।३।८।२७ पृ. २८२.

नियमो बहुदेवते, विकारः स्यात् । ९।३।१३।४२॥

' स एतान् पशून् आशिषेभ्यः कामायालभते ' ' वैश्वदेवं धूम्रमालभेत ' इत्यादयो बहुदेवत्या पशवः । अग्नीषोमीये प्रकृतिपशौ अध्रिगुप्रैषे मेधपतिशब्दः एकवचनान्तो द्विवचनान्तश्च ' मेधपतिभ्यां मेधम् ' ' मेधपतये मेधम् ' इति । तौ च बहुदेवतेऽपि चोदकेन प्राप्तौ । तत्र किं द्विवचनान्त. ( ' मेधपतिभ्यो मेधम् ' इति ) बहुवचनान्तत्वेन ऊहितव्यः एकवचना-न्तस्तु निवर्तेत, किंवा उभावपि विकल्पेन निविशेते इति विचारे पूर्वपक्षमाह । बहुदेवते पशौ द्विवचनान्तस्यैव अतिदेश. इति नियमः । तत्र च विकारः बहुवचनान्तत्वेन ऊहः स्यात् इति ।

विकल्पो वा, प्रकृतिवत् । ४३ ॥

पूर्वपक्ष वाशब्देन व्यावर्तयन् सिद्धान्तमाह । यथा द्विवचनान्तो मेधपतिशब्दः ऊहितव्यः । एकवचनान्तो-ऽपि ॥ प्रकृतिवत् प्रकृतौ इव विकल्पः स्यात्, सोऽपि विकल्पेन प्रवर्तेत । गणाभिप्रायेण एकवचनं न विरुध्यते । तस्मात् द्वावपि विकल्पेन प्रवर्तेते इति सिद्धान्तः । के.

● नियमः वैदिकस्य वैदिकमेव निमित्त इति । अत्र श्यामवत्यादौ व्यभिचारः । पराक्रमः. २२।२.

● नियमाश्च मान्त्रवर्णं कर्म । भा. १०।२।१८।४९.

● नियमेन उपसंहारस्य उपसंहारविषये प्राप्तौ उपसंहार-विधि, । बाल. पृ. १७, ● नियमेन तत्र चान्यत्र च प्राप्तौ परिसंख्याविधिः 'इमामगृभ्णन् रशनामृतस्येत्यश्वाभिधानी-मादत्ते ' । पृ. २६. ● नियमस्य अन्याश्रितस्य अन्यार्थत्वे ' खादिरं वीर्यकामस्य यूपं कुर्यात् ' इत्युदाहरणम् । सु. पृ. १२१. ● नियमस्य अभिप्रवृत्तस्योत्सर्गो आचार-विशेषः स्यात् । भा ११।३।६।१४, ● नियमस्य शाखान्तरीयविकल्पस्य दार्शपौर्णमासिकस्य सौर्यादौ नातिदेशः । ८।१।१३।२०-२२.

● नियमांशे अपूर्वं अवघातस्य, स्वयं तु दृष्टफल-संपादकत्वाच्छपूर्वजनकता । वि. २।१।२.

● नियमादृष्टम् । ' दृष्टे सत्यपि सर्वत्र नियमा-दृष्टमिष्यते । क्रत्वर्थं पुरुषार्थं च तत्संयोगपृथक्त्वतः ॥ ' वा. २।३।८।२७ पृ. २८३.

● नियमादृष्टार्थेन अत्यन्तादृष्टार्थं बाध्यते, अप्रास-ङ्गात् । वा ' ३।३।७।१४ पृ ८९०.

● नियमापूर्वं क्रियाङ्गत्वं न भवति । वा. २।१।१।१ पृ. ३७१. ● नियमापूर्वम् । नियमस्य दृष्टफलका-भावात् तज्जन्यमपूर्वमेव कल्पनीयम् । अवघातनियम-जन्य यथा । के. २।१।२.

● नियमार्थः एष वादः ' यदाहवनीये जुहोति ' इति । अन्तरेणापि च वचनं आहवनीये होमः अन्यत्र च प्राप्तः । तदेतत् नियमशासनम् । भा. १२।२।१।१.

● नियमार्थः कश्चिद्विधि. (६।३।७।१६) । ' सकलसोम-धर्मसंभवे विकल्पात् सोमधर्मानुत्पादयेत् पूतीकादात् ' इति । वक्ष्यति हि ' नियमार्थ॰ ' इति । वा. ३।६।१५।४०.

● नियमार्थः तृतीयसवने प्यापरणे आज्यविधिः । संकर्ष. ३।३।१८. ● अप्राप्तो विधीयमानो न नियमार्थो भवति । भा. ६।३।४।१६. ● नियमार्थाः कर्तृदेशकालविषयः । भा ४।२।९।२३-२८.

नियमार्था गुणश्रुतिः । ३।६।१५।४०॥

अग्निष्टोमे ' यदि सोमं न विन्देत पूतीकानभिषुणु-यात् ' इति सोमस्य प्रतिनिधिः पूतीको नाम साक्षात् श्रुत एव । ■ पूतीकं किं सोमेन समानविधानो न वेति विचारे नेति पूर्वपक्षे उक्ते प्राप्ते सिद्धान्तसूत्र-मिदम् । गुणस्य आगन्तुकस्य पूतीकस्य श्रुतिः नियमार्था । सोमाभावे सोमसदृशे अनेकस्मिन् द्रव्ये प्राप्ते पूतीकस्य

नियमः कृतः, पूतीक एव सोमसदृशो ग्राह्यो नान्य इति। स च पूतीकः सोमत्वेनैव प्रतिनिधीयते न यागद्रव्यत्वेन। तस्मात् सोमेन समानविधानः पूतीकः। सर्वे सोमधर्माः क्रयादय. चोदकेन लिङ्गेन आदित एव पूतीकस्य विधीयन्ते इत्यर्थः। गुणश्रुतिः इत्यत्र पुनःश्रुतिरिति कुतूहले पाठः। अर्थस्तु स एव। के.

* नियमार्था श्रुतिरिति चेन्न, श्रुतिप्राप्ताना नियमेन निमर्तयितुमशक्यत्वात्। सर्व एव तावत् नियमः अन्यथाप्राप्तिपक्षत्वदन्यावयः। तथापि तु यत्र अर्थाक्षिप्ता वस्तूनि वस्त्वन्तराणि भवन्ति तत्र एकवचनवशेन इतरनिवर्त्यते। वा. २।२।१६।२८ पृ. ५६४. * नियमार्था श्रुतिर्भविष्यति। कोऽयं नियमः? अनियतस्य नियमता। भा. ४।२।९।२४। यत्पक्षे विधिमन्तरेण प्राप्नोति तत् श्रूयमाणं अनियतायां प्रविशत् नियमोऽभिधीयते। टुप्.

* नियमपरिसंख्ययो. इतरपरिवर्जनाविशेषेऽपि यत्र प्रयोगे सर्वादिप्राप्ति. (समे यजेत) तत्रापि प्रापणशास्त्रेण प्रकरणे निष्पादितात् प्राप्नुवतो विषमादेः वर्जनागमेन प्रथमोपस्थितत्वात् विधेयसमादिवत्तया प्रत्यासन्नत्वात् भावरूपत्वेन स्फुटतरत्वाच्च अप्राप्तांशपरिपूरणमेव फलम्, विषमादिनिवृत्तिस्तु तद्व्यतिरेकात् अप्राप्तांशपरिपूरणत्वनियमानुमिता इति नास्य न फलम्, परिसंख्यायां तु उभयोरपि निव्राप्तत्वेन अप्राप्तांशपरिपूरणस्य फलत्वासंभवात् इतरपरिवर्जनमेव फलम्, एवं च 'समे एव यजेत' इति एवकारेण फलनिवरणं अयोगव्यवच्छेदार्थम्, न तु परिसंख्यायामिव अन्ययोगव्यवच्छेदार्थमिति नियमपरिसंख्ययोः फलभेदात् अवर्जनीयः तृतीयो विधिप्रकारः। सोम ४।२।१.

* नियमपरिसंख्याविधी प्रायेण निषेधनियमावेव। मणि. पृ ९९.

* नियमविधानार्था द्रव्येषु गुणश्रुति.। 'वायव्यं श्वेतमालभेत' 'सौमारौद्रं चरुं निर्वपेत् शुक्लानां व्रीहीणाम्' 'नैर्ऋतं चरुं निर्वपेत् कृष्णानां व्रीहीणाम्' इत्यादौ। भा ४।२।१०।२९.

* नियमविधिः अदृष्टार्थ एव। यथा– प्रकृतौ वैकल्पिकयो. बृहद्रथंतरयोः अदृष्टार्थयोः अन्यतरस्य कस्यचिद्विकृतौ नियमः श्रूयते। बाल. पृ. २४, * नियमविधि अवघातादिसंस्कारविधिः। भा. ४।२। १।२६, * नियमविधिः कर्तृदेशकालविधिः। 'अग्निहोत्रस्य यज्ञक्रतोरेक ऋत्विक्' 'दर्शपूर्णमासयोर्यज्ञक्रतोश्चत्वार ऋत्विजः' 'चातुर्मास्यानां यज्ञक्रतूनां पञ्च ऋत्विजः' 'पशुबन्धस्य यज्ञक्रतोः षड् ऋत्विजः' 'सौम्यस्याध्वरस्य यज्ञक्रतो. सप्तदश ऋत्विजः' इति। 'समे दर्शपूर्णमासाभ्यां यजेत' 'प्राचीनप्रवणे वैश्वदेवेन यजेत' इति। 'पौर्णमास्यां पौर्णमास्या यजेत' 'अमावास्यायाममावास्यया यजेत' इति। भा. ४।२।९।२३–२४ * नियमविधिर्यथा 'सोमेन यजेत' इति। वि ४।२।१. * नियमविधि। 'नियमः पाक्षिके सति' यत्र तु प्राग्वचनात् पाक्षिकी प्राप्तिः संभाव्यते, तत्र अप्राप्तिपक्षं पूरयन् यो विधिः प्रवर्तते, स नियन्तृत्वात् नियम इत्युच्यते यथा 'व्रीहीनवहन्ति' इति। तण्डुलनिष्पत्त्यर्थमाक्षेपादेव सन्निहितेनं तत्प्राप्तिमात्रं विधेः फलम्, किं तर्हि अप्राप्तांशपूरणम्। यदप्राप्तिपक्षे न तण्डुलैरपायान्तराणि आक्षिप्येरन्। पूरणे सति वा तेषां निवृत्तिः असौ अर्थात् न वाक्यात् न च तद्वारणं नियमः। वा. १।२।३।४ पृ. १५२. * नियमविधिः प्रतिप्रसवविधिना बाध्यते। बाल. पृ. १४४. * नियमविधिर्वचनीयात्। परान्नाः ४०।२. * नियमविधिः यथा वाजपेये 'यजुर्युक्तं रथमध्वर्यवे ददाति' अत्र अध्वर्यवे एवेति। वि. १०।३।२०. * नियमविधिः वाजपेयादिविकृतौ वैकल्पिकाना प्राकृताना मध्ये अन्यतमपुन.श्रुतौ। भा.१०।७।१६।५१–५७. * नियमविधिः वायव्यपशौ श्वेतगुणस्य 'वायव्य श्वेतमालभेत'। वि.४।२।१०. * नियमविधिना अपूर्वविधिर्बाध्यते। यथा 'उपांशु यजुषा' इति निगदेषु अपूर्वविधि.प्राप्तेः यजुरन्तरेषु नियमविधिरेव। बाल. पृ.१४३, * नियमविधिना परिसंख्याविधिर्बाध्यते, यथा 'ऋतौ भार्यामुपेयात्' इति। पृ. १४३.

* नियमविधिभेदाः मते। 'निधिरपि द्विविधः' इति हिन्दी बाल्मीमांसाप्रकाशे द्रष्टव्यम्। के.

* नियमविधिविवेचनं मणिदृष्ट्या 'विधि. त्रिविधः' इति हिन्दी मणिप्रभे द्रष्टव्यम्। के.

* नियमविधिसंभवे अपूर्वविध्ययोगात् । सोम. ६।७।१.

* नियमशास्त्रं यत्र अनियमप्रसङ्गः, तद्विषयो विज्ञायते । भा. १२।२।१।२.

* नियमसंभवे अनियमानुपपत्तिः । सु. पृ. ९२५.

* नियामकं न आनन्तर्यम् । भा. ३।१।१४। २४–२५.

* नियुत्वद्वाक्यस्य नियुत्वत्वगुणकवायुदेवताकश्वेतद्रव्यककर्मान्तरविधिपरत्वम् ( एतमेव श्वेतं वायवे नियुत्वते आलभेत इति )। सोम. १।२।१ पृ ५.

* नियोगः कार्याभिधायी लिङादिः । आचार्यादिवाक्येषु 'देवदत्त समिधमाहर' इत्यादिषु प्रवर्तमाने देवदत्ते पार्श्वस्थ एवमवधारयति 'बुद्धिपूर्विकेयमस्य प्रवृत्तिः, यस्माद् बुद्ध्या प्रवृत्तस्तदयमपि मद्विशेषात्, अहं च न क्रियामात्रात् प्रवृत्तः, नापि फलमात्रावगमात्, नापि फलसाधनत्वावगमात्, किन्तु कार्यावगमात् । स्नानभोजनादिकाऽपि क्रिया यावन्मया कार्यतया नावगता, तावदहं न प्रवृत्तः । न च सा श्रेयःसाधनतैव कार्यता । श्रेयः प्रति साधनत्वमन्यत्, अन्यच्च कृति पुरुषप्रयत्न प्रति प्राधान्यं साध्यत्वलक्षणं कार्यत्वम्, कर्तव्यताऽनन्तु कर्मणः फलसाधनत्वानुविधायिनी कार्यता, इति मन्दा न भेदं प्रतिपद्यन्ते । तथा सुतास्य फलसाधनता विना कार्यतयानिरहित, अतः फलसाधनताऽतिरिक्तकार्यबोधात् प्रवृत्तिर्मम इति देवदत्तोऽपि तदवगमादेव प्रवर्तते इति कल्पयति । तदवगमश्चास्य शब्दानन्तर भवन् शब्दनिबन्धन एवेति कार्याभिधायिता लिङ्शब्दस्य कल्पयति । तच्च कार्यं अग्निहोत्रविधेयं इति स्थिते 'अग्निहोत्रं जुहुयात् स्वर्गकामः' इत्यादिषु वाक्येषु यज्ञ्यायाद्यानुसारेण स्वर्गकामपदेन नियोज्यतया स्वर्गकामः समर्पणीयः इति स्थितम् । यथ कार्यमनुष्ठ्यते ■ नियोज्यः । स्वर्गकामश्च तस्मिन्नेव कार्ये चोद्यमानया अन्वयः, यदैव तस्य काम्यमानसाधनत्वमनुभवितुं क्षमते । न च क्रिया क्षणभङ्गिनी कालान्तरभाविनि फले हेतुर्भवति । येन सा कार्यतया नियोज्येन सह नान्वीयते, यत्तु कालान्तरस्थायि कार्यम्, तदेव तेन सह अन्वय गन्तुमर्हति, इति क्रियाऽतिरेकि मानान्तरानवगतमेव लिङादयः कार्यमभिदधति । तच्च मानान्तरापूर्वत्वात् अपूर्वमित्युच्यते । ननु तस्यापि कार्यस्य कुतः सिद्धिः । यागादेरिति चेत्, अनन्तरभाविता नहि फलस्य प्रत्यक्षा, क्रियाऽनन्तरभाविनस्तस्य फलहेतुत्वात् । उच्यते । अनन्तरभावित्वेऽपि तस्य न फलमव्यवहितं भविष्यति, सहकारि‌अपेक्षया विलम्बनोपपत्तेः । न च सहकार्यपेक्षायां कारणभावहानिः । किं तत् सहकारि इति चेत्, देशकालादिकमिति ब्रूमः । न च तस्य विशेषज्ञानमन्तरेण किञ्चिद्दुष्यति । न च फलजनकतया गुणमात्रत्वात् अपूर्वस्य नाकार्यत्वहानिः, स्वातन्त्र्यगुणनियोज्यलाभाय फलानुकूल्याऽवलम्बनात् । यथा आत्मन एव संविदधानः स्वामी गर्भदासस्योपकरोति, तद्वदेतदपि । तदेवं अन्विताभिधाने स्थिते कार्याभिधायिता लोके नियोगस्य लिङादेरवसेति । ऋजु पृ. २८७–८८.

* नियोगः नियुज्यते अनेन इति व्युत्पत्त्या नियोगशब्दाभिधेयो लिङादिः । ऋजु. पृ. ९६. * नियोगः विधिः प्रेरणा शब्दभावना इत्येकोऽर्थः । वाल. पृ. ७५. * एकश्चाप नियोगः अनुबन्धभेदात् भिद्यते । बृहती. पृ. ९९. * न च अपाधिकारे नियोगो यागस्य कर्तव्यतां वदति, फलस्य एव कर्तव्यतासिद्धेः । ऋजु. पृ. ९९, * यस्मिन्नर्थे पुरुषो नियुज्यते स विषयः इति नैव कर्मणि प्रेरकतया विषयिभावः । किं तर्हि । यत्र कर्मणि पुरुषो नियुज्यते कार्ये चोद्यते इति । कार्यमोचनमेव हि पुरुषस्य नियोजनम् । एतदुक्तं भवति, कर्मणि यागादौ कार्यभूतो नियोगः प्रतीयते, न पुनः कर्मण्येव प्रेरयति । पृ. ३०. * विषयानियोगोऽपि प्रधानकारिणोऽनुचितः । सु. पृ. १८५.

[illegible] 'नियोगेन विकल्पेन द्वे वा सह समुच्चिते । सैनन्यः समुच्चयो वा विदितो नैकधेतरा ॥' ( वा. १।३।८।३० पृ २९३ ) इत्यनेन न्यायेन षट्प्रकारावकल्पत्तीत्याहुः । सु. पृ. ७४२.

* नियोगस्य । प्रमाणान्तरासम्भवेऽपि [illegible] लौकिकेऽर्थे नैव नियोगस्य साध्यसाधनसिद्ध्यपेक्षा अवसीयते । बृहती. पृ. १५८.

लौकिकप्रयोगाविरोधात् । अपूर्वकर्तव्यतायास्तु लौकिकक्रियाकर्तव्यतानान्तरीयकत्वानुपलब्धेः वैपरीत्यानुपपत्तेः । अत्यन्तप्रयोगाभ्यासात् लाक्षणिकस्यापि वाचकत्वाभिमानात् अपूर्वाभिधाननियोगसिद्धिरिति चेत् ? ननु अनेकार्थत्वमन्याय्यं इत्येतदेव कुतः ? अनेकशक्तिकल्पनागौरवात् इति चेत् ? ननु अपूर्वेऽपि नैकविषयाभिधानाङ्गवर्ति नानेति कथमेकार्थो लिङः ? कृतिव्याप्यतायाः प्रवृत्तिनिमित्तस्य सर्वत्राविशेषात् रूपभेदेऽपि अपूर्वाणामेकशक्तिरेव लिङः एकशक्यत्वादिवच्छब्दवदिति चेत् ? हन्त भोस्तपस्विन्या क्रियया किमपराद्धम् ? यदस्याः कर्तव्यतारूपायाः अभिधानाय कः प्रतिरिव लिङादिः शक्त्यन्तरमुखमीक्षः रोचयसे । शब्दशक्त्यैक्येऽपि कर्तव्यताभेदात् अयमदोष इति चेत् ? न । भेदाभावात् ।

यदि मन्येत, यद्यपि कर्तव्यताशब्दवाच्यं तथापि कृतिं प्रति ईप्सिततमतया कर्तव्यता अपूर्वस्य तदुद्देशेन पुरुषप्रयत्नस्येति कृतेः प्रवृत्तेः । तेन च लिङादिप्रवृत्तिनिमित्तम् । न चैवमस्याः क्रियाकर्तव्यता, तस्याः दुःखतया तां प्रति प्रधानभावानुपपत्तेः । भोजनाद्यर्थप्रवृत्तकृतिव्याप्यत्वात् तण्डुलौदनादिहेतोः तस्याः कर्तव्यता, सा तु अन्यत्वाच्च शक्त्यन्तरमन्तरेण लिङादिगोचर इति । तन्न । विशेषाभावात् क्रियाकर्तव्यतायाः । न खलु अपूर्वमुद्दिश्य कृतिः प्रवर्तितुमर्हति । सा हि पुरुषप्रयत्नः । स च इच्छानुयायीति तदेवोद्दिश्येत । यदिच्छाकर्म तदेव च तस्याः कर्म यत्सुखम्, सुखानुषङ्गि वा इच्छायाः । न च अपूर्वं सुखमिति कल्पितम् ? अनिष्टं चेत्, कथं तदुद्देशेन कृतेः प्रवृत्तिः ? शब्दात्तथावगतेः असुखमपि अनिष्टमपि अपूर्वं कृतिं प्रति प्रधानमिति चेत् ? तत्किं शब्दः अवगमयतीति अग्निरप्यस्तु धूमः ? आनन्दस्वभावं वा विज्ञानम्, 'विज्ञानमानन्दम्' इति श्रुतेः । प्रमाणान्तरविरोधाच्चेत्तमिति चेत् ? न । इहापि तस्य तुल्यत्वात् । समिदादिविषयस्य अपूर्वस्य अननुष्ठेयस्य अनुष्ठेयाधिकारापूर्वपरत्वेन कर्तव्यतान्वयावगमनात् । स्वर्गादिनुकूलत्वात् अपूर्वस्य सुखरूपस्यापि इच्छाविषयत्वमिति कुतो मानान्तरविरोध इति चेत् ? न । क्रियायामपि समीहितसाधनताया तत्सद्भावात् । नैमित्तिकनिषेधापूर्वयोश्च फलविरहिणोः तदनुपपत्तेः । एवं च नैमित्तिकनिषेधापूर्वयोः नापूर्वसिद्धिर्लिङादीनाम् । निमित्तवतो निषिध्यमानक्रियाकर्तुश्च लिङ्विशेषणावच्छिन्नस्य नियोज्यस्य क्रियाकर्तव्यतावगमाविरोधात् । प्रधानाङ्गभावमात्रस्य अशब्दार्थभूतस्यापि तदपूर्वद्वारेणापि उपपत्तेः । अपि च साध्यस्वर्गविशिष्टोऽपि नियोज्यः कस्मात् नियमेन नान्यत् कर्तव्याम् ? तथा आशुतरविनाशिनीत्येन तदनुष्ठानाभावात् । नहि तदुत्पादानुकूले यस्मिन् सति यदुत्पद्यते, नश्यति । न च आमुष्मिक स्वर्गादि सति कर्मणि भवति चिरविनष्टे । तस्मिन्स्वर्गानुपपत्तेरिति चेत् ? नियोगेदानीमाग्नेयादिष्वपि न साधनत्वमधिकारापूर्वस्य, भक्तो वा साधनभावस्तेषाम् ? नहि तस्य मात्रत्वे इतिकर्तव्यतासंबन्धो घटते । न खलु उपचरितवह्निभावो माणवको दाहपाकयोरुपयुज्यते । तेषां च नियमानेकम्, नाना च करणत्वं भवद्भिरभ्युपेयते । तयोर्भिन्नप्रस्थानोपपारूपत्वात् । प्रतिशय्यनुबन्धो हि विषयो यथाप्रतीति व्यवतिष्ठते । तमोधारिताश्च आग्नेयादयः 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' इति शब्दवशतः तथैव नियमभावमनुभवन्ति इत्येकमेव एवासमधिकारापूर्वं प्रति विषयत्वम् । उत्पत्त्यनुबन्धस्तु करणत्वम् । स च स्वरूपाधीनः, न प्रतिपत्त्यधीनः । स्वरूपं चैषामाग्नेयादीनाम् 'यदाग्नेयोऽष्टाकपालः' इत्यादिभ्यो अभिन्नभावमवगतमिति तदनुवर्तिनी साधनताऽपि भिन्नैव । न चैव अन्योन्यनिरपेक्षाणामुपायभावः । यथाभूतकरणाधीनसिद्धित्वात् परमापूर्वस्य । बहूनि च अन्यकरणानि श्रूयन्ते, इति नैयोगवशाद्भवता भवितुमर्हति । अनेककरणसाध्यत्वं च एकस्या अपि क्रियाया लोकेऽपि दृष्टमेव । यथा अश्वेन दीपिकया खड्गपाणिभिरश्वारोहैः प्रयाति राजा प्रदोषे इति । अवान्तरव्यापारभेदात् साधनानां भेद इति चेत् ? इहापि उत्पत्त्यपूर्वाण्येव अवान्तरव्यापाराः । ते च प्रत्याग्नेयादि भिद्यन्ते इति समानम् । एवं च आग्नेयोपघातनाशेषु न संकरो धर्माणाम् । परमापूर्वप्रयुक्तत्वेऽपि अवान्तरव्यापारोत्पत्त्यपूर्वभेदेन साधनभावस्य भेदात् अपूर्वसाधननैमित्तिकत्वात् च तेषाम् । अन्यथा तदभेदे संकरप्रसङ्गात् । तस्मात् यथैव अधिकारापूर्वोत्पत्तये आग्नेयादीनामप्यतायपि शब्दावगतसाधनभावानां

'विधिभावनयोश्चैकप्रत्ययवाच्यता युक्ता। धात्वर्थेन प्रथमं तावत् संबन्धोऽध्यवसीयते॥' इति। तत्र। प्रत्ययस्य भावनाऽभिधानमस्मिन्पक्षे दुर्घटं यतः। ननु च सर्वाख्यातानां भावनावचनता करोतिसामानाधिकरण्यात् अध्यवसीयते। तथाहि प्रकृत्यर्थस्य कर्तुः प्रयोजकव्यापारो भावना। सैव च कृतिः। भाव्यमानस्य क्रियमाणत्वात् तस्य कृतिकर्मत्वात्। 'किमकार्षीदपाक्षीत्, किं करोति पचति, किं करिष्यति पक्ष्यति' इति प्रश्नोत्तरदर्शनात्। करोत्यर्थः सर्वाख्यातैरभिधीयते इति गम्यते। अन्यथा करोत्यर्थविषयप्रश्ने तदुत्तरानुपपत्तिः। तथापि सत्यामपि प्रकृतौ पचन्त्यादिषु करोत्यर्थानवबोधात्, आख्यातप्रत्ययसंनिधाने च तदवगमात् आख्यातानामेव सोऽर्थ इति निश्चीयते। तदयुक्तम्। किं करोतीत्यस्य प्रश्नस्य पदार्थः 'यत् करोषि तत् किम्' इति तत्र चेत् पचतीत्युत्तरं स्यात्, तदा पाकं करोतीति स्यात् तस्मिन्नर्थे पचतीति वर्तते। तदा च सिध्येत् आख्यातानां करोत्यर्थता। न चैतदेवम्। अन्तर्गते हि धातुवाच्ये व्यापारविशेषे तद्विशेषः एव एव पृच्छ्यते, तत्र पचतीत्युत्तरम्। तथा च न सिध्यति धात्वर्थातिरिक्तकरोत्यर्थवचनता आख्यातानाम्। सर्वधात्वर्थानां कस्यचित् अभूतस्य भवने अनुकूलता भवत्येव, करोत्यर्थतामापन्नाः करोतिना सहैव निर्देष्टुं च शक्यन्ते इति तद्विषयप्रश्नोत्तरे घटेते। किञ्च, धातुवाच्यव्यापारविशेषविषयत्वेनापि प्रश्नोत्तरयोरुपपत्तौ तदतिरिक्तकरोत्यर्थवचनता आख्यातानां न शक्यते वक्तुम्। अपि च अप्रयत्नविषयेषु देवदत्तादिषु व्यापारभेदासंभवात् परेषां प्रश्नोत्तरे व्यतिरिक्तकरोत्यर्थविषये, 'किं करोति' इति प्रश्ने गच्छतीति चोत्तरे गमनातिरिक्तव्यापाराभावात् अनुपपत्तिरेव स्यात्। धात्वर्थविशेषविषये तत्राप्युपपत्तिः। अथ संयोगविभागौ धात्वर्थः, परिस्पन्दस्तु विभक्त्यर्थ इति, तथापि धात्वर्थव्यतिरिक्तव्यापारसंभवात् नानुपपत्तिः। तन्न। परिस्पन्दस्यैव गमिवाच्यत्वात् केवले संयोगे विभागे वा गमेः प्रयोगः, स्थाणौ श्येनेन वियुक्ते संयुक्ते वा अप्रयोगात्। नापि द्वयोः, उपलनिपतिते श्येने स्थाणौ प्रयोगप्रसङ्गात्। एकक्रियाधीनसम्बन्धौ संयोगविभागौ गमिवाच्याविति यदुच्येत। तर्हि क्रियैवास्तु वाच्या किमसावुपाधिकोटौ निवेश्यते। एवं हि उपाधिसमाश्रयणगौरवमेव परिहृतं भवति। अपि च वृद्धव्यवहारात् शब्दार्थनिर्णयः। न चाख्यातानां भावनावचनत्वमन्तरेण कस्यचित् वृद्धव्यवहारस्यानुपपत्तिः। प्रश्नोत्तरे तु संबन्धज्ञानोत्तरकालभाविनी। अतो न तद्वशेन संबन्धनिरूपणा। कर्त्रादिसंख्यामात्रवाचितया आख्यातप्रयोगोपपत्तौ नाधिकं वाच्यं युक्तं कल्पयितुम्। अपि च पाकं करोति देवदत्त इत्यत्र तावत् पच्यर्थं पाकशब्दो ब्रवीति, तदनुगुणं प्रयत्नं करोतिराचष्टे। आख्यातं तु केवलकर्तृसंख्यां वक्तीति सिद्धं तन्मात्रवाचित्वम्। अतः अन्यथापि तत्रैव वर्तते इति युक्तम्, एवं च 'पचति देवदत्तः' इत्यस्य यत् विवरणं पाकं करोतीति, तदप्यनुपपन्नम्। पचतीत्यत्र यः पुरुषप्रयत्नो यत्नकत्वेन पच्यर्थः साध्यभूतः, तं करोतिना प्रकृतिभूतेनोपादाय विवरणोपपत्तिः। यथापि प्रयोगः 'गमनं करोति' इति न प्रयत्नः स्वपरोऽस्ति, तथापि गमनस्य साध्यतां दर्शयितुं गौणः करोतिप्रयोगो द्रष्टव्यः, पक्षद्वयेऽपि तुल्यत्वात्। यस्तु देवदत्त ओदनं पचतीत्यादौ वृद्धव्यवहारे एव प्रकृत्यर्थातिरिक्ते वस्तुनि प्रयोगात् आख्यातानां तदर्थतामाह। स इत्थं शिक्षयितव्यः। यस्य किं न वेत्सि 'अनन्यलभ्यः शब्दार्थः' इति। इह च प्रकृत्यर्थाक्षेपेणापि प्रयत्नप्रतिपत्त्युपपत्तेर्न शक्यते तद्वाचकता आख्यातानामाश्रयितुमिति। ननु प्राभाकरा अपि भावनावचनतां कथमाख्यातप्रत्ययस्येच्छन्ति। उच्यते। न सर्वाख्यातप्रत्ययानां भावनावचनत्वमभ्युपेमः, किन्तु कार्याभिधायिनो लिङादयः कार्येण अन्यथा अनभिधानात् कृत्यभिधायिनः इष्यन्ते। कृतिसंबन्धि हि कार्यं कृत्यनभिधानेनाभिहितं स्यात्। भवत्वेवम्, कृतिश्च नाभिधीयते कार्यं च आपि (अपि) धीयते इति। अथ मतम्। यथा दण्डीत्यत्र प्रत्ययेन दण्डो नाभिधीयते, अथ च तद्विशिष्टपुरुषप्रतीतिः। एवमिहापि भवेदिति। तन्न। तत्रापि अप्रतीते दण्डे न तद्वति प्रत्ययः। अस्ति च तत्र प्रकृतिभूतो दण्डशब्दः, स च तस्य प्रत्याययिता। न चेह तथा संभवति, प्रकृतीनां पुरुषव्यापाराभिधाननियमात्। पुरुषो हि चेतनः कार्ये लिङादिभिरवबुध्यते,

भूतस्वर्गकामनारूपमर्पणस्तथा कर्तृविशेषणत्वेन स्वर्गकामस्यान्वयोऽभ्युपगम्यते, तथापि स्वप्रवृत्तिपर्यन्तकार्यबोद्धृत्वेन एवान्वयो वर्णनीय इति नियोज्यसमर्पकत्वमेव आश्रीयते इति। एवमपि किमित्याह '**नियोज्यः सर्वकार्ये य स्वकीयत्वेन बुध्यते।**' तथापि किमित्याह '**स्वर्गादिः काम्ययोगाच्च साध्यत्वेनैव गम्यते।**' साध्यविषया एव हि सर्वत्र कामना भवति, तेन तेन तत्संबन्धात् साध्यभूतं स्वर्गादि काम्यमानतया पुरुषं विशिनष्टि। '**तेन साध्यत्वपर्यन्तस्वर्गादीच्छाविशेषितः। तदेव शक्नुयात् कार्यं बोद्धुं यत् काम्यसाधकम्॥**' अत्र कश्चिदाह। यद्यपि कामनायोगात् साध्यता स्वर्गादीनामवगम्यते, तथापि प्रकृतकार्यसाध्यत्वावगमो निष्प्रमाणक एव, अन्यसाध्यस्यापि साध्यत्वसंभवात्। न च यत् काम्यते, तस्यावश्यं साधनमस्ति। मनोरथपरम्पराहृतचेतसो हि तन्नास्ति, यन्न कामनाविषयीभवति। न च तस्य सर्वस्य साधनं भवति। सर्वज्ञत्वमपि केचित्कामयन्ते न च तत्संबन्धोपायसंभवः। अथ 'तदिच्छावतः अतत्साधने कर्तृता नोपपद्यते। तन्न। दृश्यन्ते हि प्राणिगमनकामा हि यादृच्छिकीषु क्रियासु प्रवर्तमानाः। शालेश्च सर्वोऽप्युपायाभी एव पुरुषः, तथापि तत्तद्विरोधिष्येण इन्द्रियार्थेषु प्रवर्तमाना दृश्यन्ते।' अत्रोच्यते। स्वर्गादिकं कामयमानस्य तदेव कार्यतया बोद्धुमवकल्पते। यदेव तस्य कामयमानस्य सिद्ध्यनुगुणम्। अन्यथा हि तत्कामिना सता तत्कार्यतया अनवबुद्धं स्यात्। अपरिच्छिन्नकामनासंबन्धो हि तत्साधनं कार्यतयाऽवबुध्यते। तस्मात् यत्कामिनो यत् कार्यतया उपदिश्यते तत् तस्य काम्यस्य साधकमिति नियोज्यकार्यान्यथानुपपत्त्यैव गम्यते। एवं सति किं फलमित्याह। '**लिङादिस्तत्र कार्यं चेत् क्रियामेवावबोधयेत्। समन्वयो नियोज्येन तदानीमेव हीयते॥**' कथमित्याह '**क्रिया हि क्षणिकत्वेन न कालान्तरभाविनः। स्वर्गादेः साध्यमानस्य न शक्ता जननं प्रति॥ इष्टस्याजनिका सा च नियोज्येन फलार्थिना। कार्यत्वेन न संबन्धमर्हति क्षणभङ्गिनी॥**' कार्यविरोधि कर्मेति प्रमाणान्तरसिद्धम्। परिस्पन्दो हि उत्तरदेशसंयोगोदयापवर्गी इति आशुतरविनाशी। स्वर्गश्च नियतदेशान्तरकालान्तरभोग्यः। ननु प्रीतिमात्रवचनः स्वर्गः (स्वर्गशब्दः) इति पश्चात् साधितम्, प्रीतिसाधनेषु द्रव्येषु स्वर्गशब्दप्रयोगात्। न च तेषु स्वरूपनिबन्धन एव तत्प्रयोगः, प्रीत्यपगमे तदभावात्। न च तत्साधनवचनता तदनभिधाने घटते। तदभिधानाभ्युपगमे न तद्वाचकता एव, लक्षणया तत्साधने प्रयोगोपपत्तेः, तत्र शक्तिकल्पनापरिक्षयात्। अदण्डशब्दतया न दण्डिनामस्यासंभवात्, तदन्तर्गतस्य दण्डशब्दस्य दण्डप्रत्यायकत्वासंभवात्। प्रीतेश्च कर्मानन्तरभावित्वमपि संभवत्येव। उच्यते, न प्रीतिमात्रवचनतया ज्योतिष्टोमादिचोदनासु स्वर्गशब्दस्य प्रयोगोऽवगम्यते, अर्थवादेषु दुःखासंभिन्नचिरतरभोग्याभिलाषोपनीतप्रीतिश्रवणात्। तत्र यदि विध्युद्देशगतः स्वर्गशब्दः तथाविधप्रीतिपरप्रयोगतया वर्ण्यते, तदा अतिपरोक्षार्थवादपदानां श्रुतिराहता न भवेदिति तदानुगुण्येन तादृश्यामेव प्रीतौ स्वर्गशब्दः प्रयुक्त इति निश्चीयते। तथाऽवस्था नियतमेव देशान्तरभोग्या। अतो न कर्मानन्तरभाविनीति न तत्र कर्मणः आशुतरविनाशिनः साधनता अवकल्पते। यस्मिन् हि पूर्ववर्तिनि यत् निष्पाद्यते तत् तस्य साधनमिति लोकप्रतीतिः। अत एव च विनष्टस्यापि कर्मणः शास्त्रेण साधनत्वं बोध्यते इति ये ब्रुवते तेऽपि निरस्ताः। एवं चासौ आशुतरविनाशिनी क्रिया स्वर्गकामिना नियोज्येन सह कार्यतया संबन्धं नार्हति, स्वर्गं प्रति साधनत्वानुपपत्तेः। '**तस्मान्नियोज्यसंबन्धसमर्थं विधिवादिभिः। कार्यं कालान्तरस्थायि क्रियातो भिन्नमुच्यते॥**'

ननु क्रियैव कार्यतयोच्यताम्। अस्तु सैव, स्वर्गसाधनता कथमवकल्प्यते। उच्यते। वरं तस्या एव तदनुरूपस्य चिरतरावस्थायिताकल्पना, न पुनः अदृष्टस्याश्रुतस्य तदतिरेकिणोऽर्थस्य कल्पना। यदि कर्मण एव शक्तिश्चिरस्थायिनीत्यभ्युपगम्यताम्। तदिदमुभयमपि प्रमाणान्तरविरोधाय कल्पनामर्हति। अविरोधि हि प्रतीतिसिद्ध्यर्थं कल्पयितुं शक्यम्। कर्मणश्चाशुतरनाशिनः चिरतरावस्थायिता प्रमाणान्तरनिरस्ता। शक्तिमति

यागीते शक्तिरप्यवतीतेति प्रमाणान्तरसिद्धमिति न सापि स्वाश्रयिणी शक्या कल्पयितुम्। अपि च आश्रये निवृत्ते क्रियाश्रया शक्तिरवतिष्ठताम्। अस्तु सैव स्वर्गसाधनमाश्रितेति चेत्, नान्यदीया शक्तिरन्यत्र वर्तते, प्रमाणान्तरविरोधादेव। किञ्च शक्तिमति सनति शक्तिः फलं न युक्तम्। शक्तिमत् हि साधनम्, न शक्तिः, अन्यथा शक्तित्वं स्यात्। ननु यागादिक्रिया देवताऽऽराधनोपायभूता सती कार्यतया उच्यताम्, सा तत्र यागसिद्धारेण कालान्तरेऽपि फलं जनयितुमलमेव। देवता फलदानसमर्था कर्मभिराराध्यते। सा आराधिता प्रसीदति, प्रसन्ना च कर्तॄन् कालान्तरेऽपि फलेन योजयत्येव। नैतदेवम्। यागादीनां देवताऽऽराधनहेतुत्वे प्रमाणाभावात्। नहि देवताऽऽराधनोपायहेतुभूतो याग इत्यत्र किञ्चित् प्रमाणमस्ति। ननु देवतापूजार्थ एव यागः स्मर्यते। पूजा च सर्वा पूज्यमानार्था इत्यवगतम्। उच्यते। न स्मृतिः प्रमाणम्, स्मृतित्वादेव। प्रमाणान्तरापेक्षया च स्मृतीनामर्थवर्णनम्, तदनुवर्तित्वात् तासाम्। न च प्रमाणान्तरेण देवताऽऽराधनोपायता यागस्येत्युक्तम्। अतो देवतोद्देशेन द्रव्यत्यागो यागः इति गौणं देवतापूजात्मकत्वं अवगमयितव्यम्, पूजा अपि पूज्योद्देशेनैव हि प्रवर्तते इति। अपि च कर्मभिराराध्यते, या आराधनं प्रतिपद्यते; नानादेशगामिना पुरुषेण अनुष्ठीयमानयागादिकपूजाऽऽगमश्च देवताया इति प्रमाणान्तरविरुद्धमेव, तस्यास्तादि-त्वानुपपत्तेः। देवताऽधिकरणे च प्रपञ्चेनायं ग्रन्थो निरस्त इति नातीव यतितव्यम्। अथापि स्यात् पुरुषसंस्कारहेतुभूतैव क्रिया शब्देन कार्यतयोच्यते। तथा च स्वर्गकामादिपुरुषसम्बन्धात् पुरुषसंस्कारादेव कालान्तरे फलं भविष्यतीति। तन्न। पुरुषसंस्कारकल्पने प्रमाणाभावात्। नहि प्रमाणान्तरतः शब्दतो वा पुरुषसंस्कारहेतुत्वं यागादीनामवसीयते इति कर्माण्यारभ्यमाणत्वात् (१।१।४।२०) इत्यत्रोक्तम्। ननु क्रियैव कार्यतयोच्यताम्, फलसाधनता च तस्याः प्रकाशीयताम्, तदन्यथानुपपत्त्या तु किञ्चिदपि अपरं तदन्य फलोदयानुगुणं कालान्तरस्थायि आत्माश्रयं परिकल्प्यताम्, मा भूत् तस्य लिङादिवाच्यतेति। उच्यते। तर्हि तदनुपपत्त्या कल्प्यते, यत् यस्योत्पादकम्। न च क्रियानन्येनान्येन स्वगतभेदेन कल्पितेन क्रियायाः साधनतोपपादिता भवति। नहि साधनसाधनं तस्य साधनं भवति। अवान्तरव्यापारो वा शक्तिर्वा तत्साधनतां निर्वाहयति। व्यापारयोगितयैव शक्तिमतां साधनता यतः। न च आगमप्रमाणादपि अर्थान्तरं कर्मणामवान्तरव्यापारो नास्ति शक्तिरिति न तथार्थापत्तिगम्यता युक्ता। किन्तु अन्विताभिधाने स्थिते नियोगानुगुण्यात् शब्दशक्त्यैव उचिता इति सूत्रम्। 'नियोज्यसम्बन्धसमर्थकालान्तरस्थायि कार्यं क्रियाऽतिरिक्तं लिङादिभिरेवोच्यते' इति।

अत्रैव प्रक्रिया चोदनासूत्रे कार्यार्थतया प्रतिपादिता। पश्चात् तस्यैव कार्यस्य स्वर्गसम्बन्धितया बोध्यः स्वर्गकामादिर्नियोज्य इति प्रत्यपादितम्। तस्य च कार्यस्य नियोज्यविशेषणीभूतकाम्योत्पत्तिहेतुत्वमिति बादर्यधिकरणे राद्धान्तितम्। तच्च तथाभूतं क्रियारूपं न भवति, तस्याः फलसाधनत्वायोगात्, देवताऽऽराधनमुखेन तावत् फलसाधनता नास्तीति देवताधिकरणे प्रत्यपादितम्। पुरुषसंस्कारमुखेन नास्तीति 'कर्माण्यारम्भभाव्यत्वात्' इत्यत्रोक्तम्। कर्मणश्चस्थैर्यं स्वभावो नैवेति च अपूर्वाधिकरणे। नियोगान्यथानुपपत्त्या मानान्तरात् अपूर्वमात्मसमवायि कार्यं लिङादिभिरभिधीयते इति अनेकान्तमापाद्यम्। कार्यं च कृतिसाध्यम्। कृतिश्च पुंसः प्रयत्न एव। न चासौ भावार्थमर्यादामन्तरेणास्तीति तत्सम्बन्ध(स्य)नियोग एवोच्यते इति भावार्थाधिकरणे स्थितम्। स च भावार्थः सम्बन्धमात्रमवच्छिनत्तीति शब्दान्तराधिकरणे निर्णीतम्। विषयभूतश्च भावार्थः करणीभवतीति बादर्यधिकरणे प्रत्युक्तम्। स्वकार्यसाधने भावार्थे पुरुषस्य प्रेरणमिति तथैवोक्तम्।

कालान्तरस्थायिनः कार्यस्य नियोज्यान्वययोग्यतामाह— 'तद्धि कालान्तरस्थायित्वाच्छक्तं स्वर्गादिसिद्धये। संबन्धोऽप्युपपद्येत नियोज्येनास्य कामिना॥' ननु 'भाष्यकारः प्रत्ययार्थतया अपूर्वमित्याह न क्रियाऽऽदिमिव कार्यमिति' यो मन्यते स प्रत्याह— 'क्रियादिभिन्नं यत् कार्यं वेदं मानान्तरैर्न तत्। अतो मानान्तरापूर्वमपूर्वमिति गीयते॥' नन्वेवमपि अपूर्वं

वाक्यार्थः स्यात्, न नियोगः। नियोगश्च वाक्यार्थ इति प्राभाकराणामुल्लाप इत्यत्राह– 'कार्यत्वेन नियोज्यं च स्वात्मनि प्रेरयन्नसौ। नियोज्य इति मीमांसा-निष्णातैरभिधीयते ॥' एवमपि कथं वाक्यार्थत्व-मित्याह– 'कार्यस्यैव प्रधानत्वाद्वाक्यार्थत्वं च युज्यते। वाक्यं तदेव हि प्राह नियोज्यविषयान्वितम् ॥' इत्थं भवेत् यत् प्रधानतया प्रतिपाद्यते, तत् वाक्यार्थ इति, कार्यं च प्रधानतयोच्यते इति इह तस्यैव वाक्यार्थत्वम्। नियोज्यान्विताभिधाने च प्रायिकं प्राधा-न्याच्यवनात्प्रधानोपनिः, नियोगाना नियोज्यशून्याना-मभिधानाभ्युपगमात्। विवरणकारा हि प्राधान-विषयमपि नियोगान्तरमिच्छन्ति। क्रतुनियोगप्रत्यभिज्ञाना-भावात्, असंनिधाने हि तन्नियोगप्रत्यभिज्ञानं नोपपद्यते। नापि वर्णनादिविधिवत् अव्यभिचरितक्रतुसंबन्धात् क्रतुत्वेन प्रत्यभिज्ञोपपत्तिः, प्रागाधानात् आहवनीयादि-शब्दाना अर्थाविज्ञाने क्रतुसंबन्धानवगमात्। गुहा-दीना तु आकृतिवचनत्वात् प्रागेव विनियोगात् प्रत्यभिज्ञा-संभवः। ननु अग्नीनामपि साध्यत्वात् साध्यद्वयं कथ-मेकस्मिन् वाक्ये अन्वीयते। उच्यते। नियोग एव अत्रापि प्रधानं साध्यम्। अनीप्सितकर्मता तु अग्नीनां अनीप्सितकर्मत्वेऽपि तत्प्रधानत्वं क्रत्वर्थत्वमवायि-संयोगिनि आहवनीयादिशब्दे प्रयोगात्, आहवनीयादीनां च क्रतूपयोगित्वात्, तत्सिद्ध्यर्थतयैव पुरुषप्रवृत्त्युपपत्तेः अनुष्ठानलाभात् अलं प्रयोज्याभिधानेनेति। तथा अध्ययनविधौ अपि आचार्यकरणविधिप्रयुक्त्या एव अनु-ष्ठानलाभात् नियोज्यशून्याभिधानमिति स्थितम्। प्रधानो-त्पत्तिनियोगा अधिकारनियोगाक्षिप्तप्रविधानुष्ठानेनैव लब्धसिद्धयः, इति न तत्र नियोज्याभिधानान्वेषणम्। अङ्गोत्पत्तिनियोगा अपि विनियुक्तप्रयाजादिविषयत्वात् अधिकारनियोगा एव सिध्यन्तीति किं तेषु नियोज्या-न्विताभिधानेन। कथं पुनः प्रयाजादिविधीना विनियुक्त-विषयत्वम्? उच्यते। ताधिकारनियोगसंनिधौ प्रयाजादिवाक्यानि श्रुतानि, न तावत् स्वतन्त्रविषय-नियोगान्तरमवगमयितुमीशते। अवघातादिवदनुवाद-कत्वसंभवात् किन्तु स्वरूपमात्रेण योगस्य स्वपदार्थ-

विशिष्टमुपपादयति, तच्च प्रयोजनाकाङ्क्षितया प्रयोजनी-भूतेन साधिकारेण नियोगेनान्वीयते इति अधिकार-वाक्यगत एव लिङ्शब्दः तदन्वितं स्वार्थमभिधत्ते। न त्वन्वयः प्रयाजादीनामैदमर्थ्यमात्रेण ग्राहकग्रहणमित्युच्यते। करणोपकारकाङ्क्षस्य च अपूर्वस्य यत् करणोपकारकत्व-परिकल्पन स प्रकरणव्यापार इति तत्र यद्येषां करणोप-कारजनकत्वकल्पनम्, तदौपादानिकम्। नास्ति बहिः-प्रयाजादिषु नियोगान्तरम्। न च नास्ति क्षणिकाना तेषा संभूयेतिकर्तव्यतात्वानुपपत्तिः, नियोगान्तरस्यावश्याभ्युप-गन्तव्यत्वात्। योऽसौ लिङादिः प्रागनुवादार्थतया शङ्कितः, स इदानीं नियोगान्तरमभिधत्ते। अत एव च अवान्तरा-दिविदेषा तद्धितप्रत्ययानामेव अङ्गवाक्यगतानामधि-कारनियोगान्वितस्वार्थाभिधानं नाभ्युपगम्यते। तथाहि सति उत्पत्तौ एव अङ्गतया अङ्गस्वरूपव्यतिरिक्तत्वात् नियोगान्तरविषयता न स्यात्। उत्पत्तिदशायां तु अनन्य-निष्ठतयाऽभिधानात् युक्तं नियोगान्तरविषयत्वम्। कस्मा-त्पुनरव्यतिरिक्तस्य नियोगान्तराविषयत्वम्, कार्यद्वय-संबन्धावगमानुपपत्तेः। नह्येकं वस्तु युगपत् कार्यद्वय-संबन्धि शक्यमवगन्तुम्। यच्च तत् नियोगान्तरं प्रयाजा-दिषु, तत् पश्चादभिधीयमानं अधिकारनियोगाङ्गतयैव शब्देनाभिधीयते। अन्यथा विषयद्वयविनियोगविरोधात्। इत्यलमतिप्रसङ्गेन।

ननु नियोगस्य काम्यमानफलसाधनत्वाभ्युपगमात् फलस्यैव प्राधान्यात् तस्यैव वाक्यार्थत्वमित्यत आह– 'आत्मसिद्ध्यनुकूलस्य नियोज्यस्य प्रसिद्धये। कुर्वन् स्वर्गादिकमपि प्रधानं कार्यमेव नः ॥' यस्य-पूर्वं कार्यम्, तस्य नियोज्यान्वयं विना कार्यत्वानुपपत्तिः, अनुष्ठानं विना तदसंभवात्, कर्त्रा च विना तदनुपपत्तेः। अधिकारिणां च विना कर्तुरभावात्, नियोज्यत्वं विना तद्योगात् अतत्साधने च नियोगानवगमात् इत्यात्म-सिद्ध्यर्थमेव नियोगः काम्यमानफलसिद्धिहेतुत्वमवलम्बते स्वामिवत्। यथा आत्मन एव प्रतिदानः स्वामी गर्भदासस्योपकरोति, तथा नियोगोऽपि नियोज्यस्येति न प्राधान्यादप्रच्युतिः। ननु नियोगस्य फलसाधनत्वात् तस्य च सेतिकर्तव्यताकस्य करणस्य निष्पत्तिसिद्धित्वात् तदनुष्ठान-

वृत्तिरियं शालिकेनैव ॥' इति श्रीशालिकनाथ-मिश्रकृतायां वाक्यार्थमातृकायां द्वितीये परिच्छेदे (नियोगविधिवाद नाम, प्रकरणपञ्चिका पृ २५-२७, १७२-१९६)।

* नियोगशब्देन क्रियान्यनिमित्तमपूर्वं कार्यतया आत्मनि पुरुषं नियुञ्जानमुच्यते। ऋजु १।२।७।२७ पृ २८८

* नियोजनं उपाकरणानन्तरमेव इति यथाप्रकृति प्राजापत्यपशुषु अनुष्ठानम्। भाट्ट ५।२।१, * नियोजनम् (अग्नीषोमीयस्य पशो विकृतौ) औदुम्बरे श्रूयते। पैतृके तु खादिरे प्रकृतौ 'खादिरे बध्नाति' इति। भा १०।७।१८।६३ * नियोजनं पशो उत्तरवेदिस्थे स्थविष्ठे परिधौ सौमिकेषु चातुर्मास्येषु। 'परिधौ पशु नियुञ्जीत'। गुणविधित्वं न कर्मान्तरम्। वि १०।३।३ * नियोजनं प्राकृतमनूद्य विहितेन परिधिना प्राकृतस्य यूपस्य बाधः सौमिकेषु चातुर्मास्येषु। के १०।३।३।१८-२२ * नियोजनं यूपे पशुधर्मः। भा ३।६।७।१८

* नियोजनादय उत्तरे संस्कारा उपाकरणे स्वीकृतेन क्रमेणैव कर्तव्या न व्युत्क्रमेण, वाजपेये प्राजापत्यपशुषु सोऽयं प्रवृत्तिक्रमः। के ५।१।७।८-१२

卐 निरङ्कुशाः कवयः इति न्यायः। अभियुक्तोक्तिरूपोऽयं स्पष्टः। साहस्री ६७४

* निरसनादेन सामकस्य साध्यते प्रातरनुवाकोऽयम्। या ३।३।७।१४ पृ ८६०

* निरवदानम्। किमिदं निरवदानमिति? निष्कृष्य तस्मादङ्गात् अवदान निरवदानम्, द्विरवद्यतीति। भा १०।७।२।६

* निरवसित वर्णाश्रमाचाररहितः। (भोजनपात्रात् बहिष्कृत, यस्य भोजनपात्रे द्विजो न भुङ्क्ते स निरवसित इत्यन्यभोजनम्)। सु पृ १७२

* निरसनं न लोहितादिप्रयोजकम् 'लोहितं निरस्यति' इति द्वितीयया तस्य प्रतिपत्तित्वावगमात्, किन्तु प्रतिपत्तिः अग्नीषोमीये पशौ। के ४।१।१२।२७, * निरसनस्य लोपः लोहितस्याभावे नाशो वा। लोपनिमित्तं प्रायश्चित्तं भवत्येव अग्नीषोमीये पशौ। ४।१।१२।२७

卐 निरस्तपादपे देशे एरण्डोऽपि द्रुमायते इति न्यायः। यत्र बहुमतसज्जनदुर्लभे अल्पज्ञादरस्तत्राय प्रवर्तते। उक्तम्—'यत्र विद्वज्जनो नास्ति श्लाघ्यस्तत्राल्पधीरपि। निरस्तपादपे देशे एरण्डोऽपि द्रुमायते॥' इति। साहस्री ६४५

* निराकरणं युक्तितो बाधनम्। ऋजु पृ १०२

* निराकाङ्क्षस्य विधेः उपसंहारप्रावल्येन संकोचो न युक्तः। परास्म ४।३।२, * निराकाङ्क्षस्य विधेः मन्त्रलिङ्गानुरोधेण संकोचः इद्व्यपीडाधिकरणे निराकृतः। ४।३।१

* निराकारा बुद्धिः इति मीमांसकाः। साकारा इति बौद्धाः। के

* निरालम्बनवाद। भाष्यम्—'ननु सर्व एव निरालम्बनः स्वप्नवत् प्रत्ययः। प्रत्ययस्य हि निरालम्बनता स्वभावः उपलक्षितः स्वप्ने। जाग्रतोऽपि स्तम्भ इति वा कुड्य इति वा प्रत्यय एव भवति, तस्मात् सोऽपि निरालम्बनः। उच्यते। स्तम्भ इति जाग्रतो बुद्धिः सुपरिनिश्चिता कथं विपर्यस्यतीति? स्वप्नेऽपि एवमेव सुपरिनिश्चिता आसीत प्राक् प्रबोधनात्, न तत्र कश्चित् विशेष इति। न। स्वप्ने विपर्ययदर्शनात्। अविपर्ययाच्च इतरस्मिन्। न कदाचिदितरत्रापि भविष्यति इति चेत्। यदि प्रत्ययत्वात् स्वप्नप्रत्ययस्य मिथ्याभावः, जाग्रत्प्रत्ययस्यापि तथा भवितुमर्हति। अथ प्रतीतिः तथाभावस्य हेतुः, न शक्यते प्रत्ययत्वात् अयमन्य इति वक्तुम् (वदितुं इति बृहतीपाठः)। अपि तु स्वप्नप्रत्ययस्य मिथ्याभावो विपर्ययादवगतः। कुतः इति चेत्, अनिद्रस्य मनसो दौर्बल्यात्, निद्रा मिथ्याभावस्य हेतुः स्वप्नादौ, स्वप्नान्ते च सुषुप्त्याभाव एव। अचेतयमानेन हि सुषुप्त इत्युच्यते। तस्मात् जाग्रतः प्रत्ययो न मिथ्येति। ननु जाग्रतोऽपि कश्चिद्दोषः स्यात्। यदि स्यादवगम्येत। स्वप्नदर्शनकालेऽपि नावगम्यते इति चेत्, तत्र प्रबुद्धो ह्यवगच्छति निद्राऽऽक्रान्तं मे मनः आसीदिति।' पृ २८-३०

**बृहती**— 'ननु सर्व एव निरालम्बनः स्वप्नवत् प्रत्ययः' कुतः तत्प्रयुक्तत्व अवसायुक्तत्वं वा, येन विशेषेण प्रत्यक्षाप्रत्यक्षयोर्विशेष उपलभ्येत । पृ ५३.

**ऋजु**— यदि परमार्थतः अर्थः स्यात् तदा नैव योगज प्रत्यक्षं इति शक्यते वक्तुम् । सर्वस्य यथाना तु निरालम्बनत्वे पारमार्थिकाभावे नेदं सिध्यति इति प्रत्यक्ष-लक्षणाक्षेपेण संगतिरित्यर्थः ।

**बृहती**— कथं पुनः सर्व एव निरालम्बनः प्रत्ययः ? 'प्रत्ययस्य हि निरालम्बनता स्वभावः उपलक्षितः स्वप्ने' । ननु च शुक्तिकायां रजतज्ञानम्, स्मरामीति प्रमोषात् स्मृतिज्ञानमुक्तम् । युक्तं रजतादिषु । तत्र हि शुक्तिकायां यत् भास्वरं रूपं चक्षुषा परिच्छिन्नम्, तत् रजतस्मृतेरुद्बोधकं इत्युपपद्यतापि । स्वप्नादिषु पुनः कस्यचित् अग्रहणात् अर्थान्तरे स्मृत्युद्बोधपरिहारः शक्य, इव प्रतिभाति । तस्मात् वासनानिबन्धनमेवेदं ज्ञानजालं इति प्रतिपद्यामहे । सादृश्यदर्शनात् सदृशे अर्थान्तरे स्मृतेरुद्बोधः । स्वप्ने पुनः कस्यचिदग्रहणादि-त्युक्तम् । तस्मात् वासनैव निमित्त इति लघ्वी कल्पना, नार्थान्तराश्रयणम्, अप्रमाणे: । अतः कुड्यादिष्वपि ज्ञानं वासनानिमित्तमेव, न कुड्याद्यर्थनिमित्तं इति स्थितिः । उच्यते । कार्यसिद्धयर्थं हि कारणं कल्प्यते, न पुनः कार्यविनाशाय । स्वप्नादिषु बहिरवभासा संवित्, सा च बाह्यार्थमन्तरेण न संभवति । येन च विना यन्न संभवति तद् तस्य कारणम् । तस्मात् अर्थ एव कारण इति युक्तं कल्पयितुम् । निरालम्बनता तु नैव संवेद्यते प्रत्यक्षविरोधेन । तस्मात् अत्र ज्ञाने न वासनानिमित्त इत्युक्तम् । ननु स्वप्नोपलब्धं मिथ्या इति प्रतिबुद्धस्य ज्ञानमुत्पद्यते । न च मिथ्याज्ञानस्य कारणकल्पना युक्ता । ननु च अकारणस्य मिथ्या-प्रत्ययस्यापि उत्पादो न घटते । सत्यं न घटते, न तु अगत्यनुगुण तत् । तदनुगुण्ये हि मिथ्याज्ञानतैव न स्यात् । ( यद्यपि ज्ञानोत्पादाय कारणं कल्पनीयं तथापि अर्थ एव न कल्प्यः, किन्तु वासनामात्रम् ) तस्मात् व्यामोहहेतवो मिथ्याप्रत्ययाः । व्यामोहनिबन्धनाश्च सांसारिकयो वासनाः । अतो वासनानिबन्धनमेवेदं ज्ञान-जालं इति तत्त्वविद्भिरुदितम् । ( व्यामोहः अर्थशून्यं मिथ्याप्रत्ययस्य हेतुः । वासनातो व्यामोहः, व्यामोहात् वासना इति अनादित्वात् बीजाङ्कुरवत् अदोषः ) ( सिद्धान्तमुपक्रमते— ) ननु परिहृतमेतत् 'स्मरामीति ज्ञानशून्यानि स्मृतिज्ञानान्येतानि । ननु न स्मृतेः उद्बोधकारणाभावात् नैतत् संभवति इत्युक्तम् । तदसिद्धम् । स्वप्नादावपि हि निन्ताऽदृष्टादिसंभवात् । स्वप्नेऽपि हि सुखदुःखमनुभूयते । सुखदुःखहेतुश्च अदृष्टम् । अतः अदृष्टहेतुकमेव स्वप्नादिज्ञानम्, किञ्चिच्चिन्तादिहेतुक इत्युपपन्नं शुक्तिकादिज्ञानतुल्यत्वं स्वप्नविज्ञानस्य । तदिद-मुक्तम् ( यदिदमस्माभिरुच्यते अग्रहणात्मकः प्रमोषो मिथ्यात्वहेतुरिति तदेव भाष्यकारेणोक्तम् ) 'ज्ञानम् इति जाग्रतो बुद्धिः सुपरिनिश्चिता कथं विपर्येष्यति' । कथमनेन इदमुक्तम् ? ( इत्याशङ्क्य ) निश्चितं अवच्छिन्न-मित्यर्थः । कथं अवच्छिन्नोऽर्थः अनवच्छिन्नो भवति ? ( ननु अग्रहणमिथ्यात्वे सर्वज्ञानानि मिथ्या स्युः, सर्वात्मना अर्थस्य केनचित् ज्ञानेन अग्रहणात् इति पृच्छति— ) कथं तर्हि प्रबुद्धो मिथ्येति जानाति ? ( उत्तर ) उक्तम्, स्मरामीति स्मृतिप्रमोषात् ( स्मृतित्वा-परामर्शात् ) प्रत्यक्षाभिमानं तत् । प्रतिबुद्धस्य न अपैति प्रत्यक्षाभिमानः ( इन्द्रियदौर्बल्ये निश्चिते प्रत्यक्षानुपपत्तेः स्मृतित्वनिश्चयः ) । अमुमेवार्थं ( अग्रहणात्मको भ्रम इति ) स्पष्टीकरोति— 'अथ प्रतीतिस्तथाभावस्य हेतुः, न शक्यते प्रत्यक्षादयमन्य इति वदितुम्' । 'यदि प्रत्ययत्वात्' इति च । तदानीं मिथ्येति मन्यते । 'अन्यतो हि स्वप्नज्ञानस्य मिथ्याभावः' इति प्रमोष-निमित्तता दर्शयति । कुतः ? इन्द्रियदौर्बल्योपलम्भात् 'निद्राक्रान्तं मे मनः' इत्यादिना । दौर्बल्यं च कार्या-क्षमत्वम्, न कार्यान्तरोपजननार्थत्व इत्युक्तम् । ( पृ. ५३–५७ )

**श्लोका**— ( उत्तरग्रन्थस्य प्रयोजनमाह ) 'प्रमाण-त्वाप्रमाणत्वे, पुण्यपापादि, तत्फलम् । विध्यर्थ-वादमन्त्रार्थनामधेयादिकल्पना ॥ १ ॥ सर्वेषु लक्षणेष्वेवं स्वप्रमाणगतैः स्थितिः । वचनव्यक्ति-भेदेन पूर्वसिद्धान्तपक्षता ॥ २ ॥ कर्मभ्यः फल-

नम् । व्यवहारं कथङ्कारं शब्दात् प्रागवबुध्यताम् ॥ व्यवहारमविज्ञाय तन्निबन्धनतद्भवा । प्रतिपत्तिः कथं ज्ञेया शब्दशक्तिः कथन्तराम् ॥' इदमत्राकूतम् । यद्यपि कार्यमात्रमेव प्रवृत्त्युपयोगीति तावन्मात्रमेव शब्दार्थः, तथापि तस्य लोके क्रियागतस्यैव प्रवर्तकत्वदर्शनात् शक्यते क्रियाभिन्नता प्रत्येतुम् । यथा कृतिमात्रस्य शब्दार्थत्वेऽपि व्यक्त्याभिन्नताऽपि न प्रतिषिध्यते, तथा क्रियाभिन्नत्वं प्रमाणान्तरप्रमितं न प्रतिक्षेपमर्हति । तेन क्रियाऽतिरिक्तकार्याभिधायि न प्रसिद्धम् । यदि परं तन्निबन्धनव्यवहारदर्शनमेव स्यात्, तदा तद्दर्शनात् तद्धेतुभूतप्रतिपत्त्यन्यथानुपपत्त्या अनुमानेन शब्दस्य वाचकवाच्यत्वमानं भवेत् । न चैतदस्ति, तस्य शब्दादन्यतः मानानवगमात् तन्निबन्धनव्यवहाराप्रतिपत्तिः । तदप्रतिपत्तौ च तद्धेतुभूतप्रतिपत्त्यनुमानाच्च शक्तिकल्पनोपपत्तिः । तदेव विवृणोति 'कार्यप्रतीतिमात्रं च प्रवृत्तेरनुमीयताम् । किन्तु कार्या क्रियैवेह लोकदृष्ट्याऽवसीयते ॥' लोकप्रतीतं क्रियारूपत्वं च न शक्यते अपाकर्तुं इति कार्यमात्रार्थत्वे क्रियैव कार्यतया लिङाद्यर्थः इति निश्चीयते, न पुनः प्रमाणान्तरात् अपूर्वमिति । अन्ये पुनर्वेदार्थबोधकत्वार्थवचननिबन्धनप्रवृत्तिदर्शनेन अतीन्द्रिये कार्ये लिङादयो व्युत्पद्यन्ते इत्याहुः । यदि आचार्यवचनादपि क्रियैव कार्यतयाऽवगम्यते, तदा तस्याः स्वयं दुःखरूपत्वात् पुरुषार्थान्तरानुबन्धं विना प्रवृत्त्यसम्भवात् नियमेन सुखार्थिनः प्रवृत्तिर्न स्यात्, ततश्च सन्ध्योपासनाऽऽदौ प्रवृत्तोऽस्ति । तस्मात् क्रियाऽतिरिक्तं कार्यं आचार्यवचनेभ्योऽवगम्यते इति । तान् प्रत्याह 'वेदार्थाचार्यवाक्येषु प्रवृत्तिर्याऽपि दृश्यते । तत्राप्येषैव सन्न्यायपरिहारविधा भवेत् ॥' आचार्यवाक्यश्रवणादपि शिष्याणां वा सन्ध्योपासनादौ प्रवृत्तिः, तत्रापि नातः स्वविषयनिरूपितं क्रियाकार्यत्वावगममेव कारणत्वेन परिकल्पयेत् । फलं विना च तदनुपपत्तेः फलावगममपि संभावयेत् । व्युत्पत्त्यनुसारेण वेदार्थमपि प्रतिपद्यमानो नित्यनैमित्तिकाधिकारयोरपि फलं कल्पयेत् । स एव बाल्यदशायां व्युत्पन्नः स्वयमाचार्यपदवीमारूढो वेदार्थं प्रतीत्य शिष्येभ्य उपदिशन् क्रियामेव कार्यतया प्रतिपादयेत् नापूर्वं कार्यम् । उपसंहरति 'तस्माल्लोकानुसारेण व्युत्पत्तिः कार्यमात्रके । तस्य त्वपूर्वरूपत्वं वेदवाक्यानुसारतः ॥'

एवमपूर्वकार्याभिधायित्वे सिद्धे चोदयति 'ननु लोकविरोधित्वं पक्षेऽस्मिन्नपि दृश्यते । सर्वदैव यतो लोके क्रिया कार्यैव गम्यते ॥' परिहरति 'भवेदेवं विरुध्येते कार्येऽपूर्वेऽपि लौकिके । प्रतिपत्तिप्रयोगौ चेत् क्रियाकार्यत्वगोचरौ ॥' यदि क्रियाकार्यत्वगोचरौ लौकिकत्वप्रतिपत्तिप्रयोगौ अपूर्वकार्याभिधायित्वपक्षाङ्गीकारे विरुध्येते, ततो लोकविरुद्धत्वं स्यात् अस्मत्पक्षस्य । न चैतदस्तीत्याह—'अपूर्वं हि क्रियासाध्यं साधिता साधनं क्रिया । तस्मादपूर्वसाध्यत्वं क्रियासाध्यत्वसंगतम् ॥ प्रमाणान्तरगम्यं हि लोकः शब्दैर्विवक्षति । क्रियाकार्यस्य एवातः प्रयोगो लक्षणाऽन्वितः ॥' प्रतिपत्तिप्रयोगौ हि नावश्यं श्रौतवृत्त्यनुसारिणावेव, लक्षणयाऽपि लोके दर्शनात् । तेन यद्यपि उक्तेन न्यायेन अपूर्वमेव कार्यं लिङादीनामभिधेयम्, तथापि तस्य क्रियाकार्यत्वाव्यभिचारात् तत्र लक्षणया तयोर्नानुपपत्तिः । क्रियासाध्यं तु अपूर्वम्, साधिता च सती क्रिया साधनं भवतीत्यपूर्वेण सह क्रियाकार्यत्वं नित्यसंबद्धमिति शक्यते तत् लक्षयितुम् । ननु श्रौतपदार्थे लोके लिङादि न प्रयुज्यते इति, तत्रस्मापूर्वमनः प्रमाणान्तराप्रतीतत्वात् प्रतीतविषयत्वाच्च लौकिकप्रयोगस्य । यद्येवं लक्षणा किमिति तर्हि लोको नावगच्छतीत्याह 'लक्षणाऽनभिमानं तु मुख्यार्थानवधारणात् । यत्तु मुख्यार्थकुशलास्तेषां लाक्षणिकत्वधीः ॥' इति । मुख्यमर्थमविदित्वा लाक्षणिकमपि अर्थं श्रौतमिव मन्यते, म्लेच्छा इव यववराहार्थम् । मुख्यार्थविवेकिनां तु परीक्षकाणां लाक्षणिकत्वधीरिति । उपसंहरति 'तस्मान्मानान्तरापेद्यं कार्यमर्थान्तरान्वितम् । वेदवाक्यं ब्रवीतीति संक्षेपोऽयमुदाहृतः ॥' ग्रन्थस्य कर्तुश्च संज्ञां प्रयोजनं चाह 'वाक्यार्थमातृकेयं प्रभाकरगुरुदर्शनानुसारेण । अनसूयुबोधनार्थं शालिकनाथेन समर्थिता ॥ रचिता सच्चरितानामनुग्रहं कर्तुकामेन । वाक्यार्थमातृकाया

वृत्तिरियं शालिकेनैव ॥' इति श्रीशालिकनाथमिश्रकृताया वाक्यार्थमातृकायां द्वितीयः परिच्छेदः (नियोगविधिवादः नाम, प्रकरणपञ्चिका पृ. २५–२७, १७२–१९६)।

● **नियोगशब्देन** लिङाद्यभिहितमपूर्वं कार्यतया आत्मनि पुरुषं नियुञ्जानमुच्यते। ऋजु. १।२।७।२५ पृ. २८८.

● **नियोजनं** उपाकरणानन्तरमेव इति यथाप्रकृति प्राजापत्यपशुषु अनुष्ठानम्। भाट्ट. ५।२।१. ● नियोजनम् (अग्नीषोमीयस्य पशोः नियोजनं) औदुम्बरे श्रूयते। फेमले च खादिरे यूपे 'खादिरे बध्नाति' इति। भा. १०।७।१८।६३. ● नियोजनं पशोः उत्तरवेदिसंस्थे स्वविते परिधौ सौमिकेषु चातुर्मास्येषु। 'परिधौ पशुं नियुञ्जीत'। गुणविधित्वे न कर्मान्तरम्। वि. १०।३।१. ● नियोजनं प्राकृतमनूद्य विशिष्टेन परिधिना प्राकृतस्य यूपस्य बाधः. सौमिकेषु चातुर्मास्येषु। के. १०।३।३।१८–२२. ● नियोजनं यूपे पशुधर्मः। भा. ३।६।७।१८.

● **नियोजनादयः** उत्तरे संस्काराः उपाकरणे स्वीकृतेन क्रमेणैव कर्तव्याः न व्युत्क्रमेण, प्राजापत्ये प्राजापत्यपशुषु सोऽयं प्रवृत्तिक्रमः। के. ५।१।७।८–१२.

☐ निरङ्कुशा कवयः इति न्यायः। अभियुक्तोक्तिरूपोऽयं स्पष्टः। साहस्री ६२४.

● **निरवकाशेन** सावकाशं बाध्यते अल्पबलोऽपि। या. १।३।७।१४ पृ. ८९०.

● **निरवदानम्**। किमिदं निरवदानमिति। निष्कृष्य तस्मादङ्गात् अवदानं निरवदानम्, द्विरवद्यतीति। भा. १०।७।२।६.

● **निरवसित** कर्माभावाद्यात्रहित.। (भोजनपात्रात् बहिष्कृतः, यस्य भोजनपात्रे द्विजो न भुङ्क्ते स निरवसितः इत्यन्यत्रोक्तम्)। सु. पृ. १७२.

● **निरसनं** न लोहितादिप्रयोजकम् 'लोहितं निरस्यति' इति द्वितीयया तस्य प्रतिपत्तित्वाभावात्, किन्तु प्रतिपत्तिः अग्नीषोमीये पशौ। के. ४।१।१२।२७, ● निरसनस्य लोपः लोहितस्याभावे नाशे वा। लोपनिमित्तं तु प्रायश्चित्तं मन्त्रेण अग्नीषोमीये पशौ। ४।१।१२।२७.

☐ निरस्तपादपे देशे एरण्डोऽपि द्रुमायते इति न्यायः। यत्र बहुश्रुतसज्जनदुर्लभत्वे अल्पज्ञादरस्तत्राय प्रवर्तते। उक्तम्–'यत्र विद्वज्जनो नास्ति श्लाघ्यस्तत्राल्पधीरपि। निरस्तपादपे देशे एरण्डोऽपि द्रुमायते॥' इति। साहस्री ६४५.

● **निराकरणं** युक्तितो बाधनम्। ऋजु पृ. १०२.

● **निराकाङ्क्षस्य** विधेः उपसंहारप्राबल्येन संकोचो न युक्तः। पराक्रमः. ४३।२, ● निराकाङ्क्षस्य विधेः मन्त्रलिङ्गानुसारेण संकोचः इडापीताधिकरणे निराकृतः। ४३।१.

● **निराकारा** बुद्धिः इति मीमांसकाः। साकारा इति बौद्धाः। के.

● **निरालम्बनवादः**। भाष्यम्— ननु सर्व एव निरालम्बनः स्वप्नवत् प्रत्ययः। प्रत्ययस्य हि निरालम्बनता स्वभाव उपलक्षितः स्वप्ने। जाग्रतोऽपि स्तम्भ इति वा कुड्य इति वा प्रत्यय एव भवति, तस्मात् सोऽपि निरालम्बनः। उच्यते। स्तम्भ इति जाग्रतो बुद्धिः सुपरिनिश्चिता कथं विपर्येष्यतीति स्वप्नेऽपि एवमेव सुपरिनिश्चिता आसीत् प्राक् प्रबोधनात्, न तत्र कश्चित् विशेष इति। न। स्वप्ने विपर्ययदर्शनात्। अविपर्ययाच्च इतरस्मिन्। तत्सामान्यादितरस्यापि भविष्यति इति चेत्। यदि प्रत्ययत्वात् स्वप्नप्रत्ययस्य मिथ्याभावः, जाग्रत्प्रत्ययस्यापि तथा भवितुमर्हति। अथ प्रतीतिः तथाभावस्य हेतुः, न शक्यते प्रत्ययत्वात् अयथार्थ इति वक्तुम् (वदितुं इति बृहतीपाठः)। अन्यतस्तु स्वप्नप्रत्ययस्य मिथ्याभावो विपर्ययादवगतः। कुत इति चेत्, सनिद्रस्य मनसो दौर्बल्यात्, निद्रा मिथ्याभावस्य हेतुः स्वप्नादौ, स्वप्नान्ते च सुषुप्तस्याभाव एव। अचेतयन्नेव हि सुषुप्त इत्युच्यते। तस्मात् जाग्रतः प्रत्ययो न मिथ्येति। ननु जाग्रतोऽपि करणदोषः स्यात्। यदि स्यादवगम्येत। स्वप्नदर्शनकालेऽपि नावगम्यते इति चेत्, तत्र प्रबुद्धो ह्यवगच्छति निद्राऽऽक्रान्तं मे मन आसीदिति। पृ. २८–३०.

बृहती— 'ननु सर्व एव निरालम्बनः स्वप्नवत् प्रत्ययः' कुतः तत्संप्रयुक्तत्वं असत्संप्रयुक्तत्वं वा, येन विशेषेण प्रत्यक्षाप्रत्यक्षयोर्विशेष उपलभ्येत । पृ ५३.

ऋजु— यदि परमार्थतः अर्थः स्यात् तदा संप्रयोगज प्रत्यक्षं इति शक्यते वक्तुम् । सर्वप्रत्ययानां तु निरालम्बनत्वे पारमार्थिकाभावे नेदं सिध्यति इति प्रत्यक्षलक्षणाक्षेपेण संगतिरित्यर्थः ।

बृहती— कथं पुनः सर्व एव निरालम्बनः प्रत्ययः ? 'प्रत्ययस्य हि निरालम्बनता स्वप्नः उपलक्षितः स्वप्ने' । ननु च शुक्तिकायां रजतज्ञानम्, स्मरामीति प्रमोषात् स्मृतिज्ञानमुक्तम् । शुक्ति रजतादिषु । तत्र हि शुक्तिकायाः यत् भास्वर रूप चक्षुषा परिच्छिन्नम्, तत् रजतस्मृतेरुद्बोधकं इत्युपपन्नेतापि । स्वप्नादिषु पुनः कस्यचित् अग्रहणात् अर्थान्तरे स्मृत्युद्बोधपरिहारः शक्य,- इत मतिर्भाति । तस्मात् वासनानिबन्धनमेवेदं ज्ञानजालं इति प्रतिपद्यामहे । तदाकारदर्शनात् अन्यत्र अर्थान्तरे स्मृत्युद्बोधः । स्वप्ने पुनः कस्यचिदग्रहणादिन्युक्तम् । तस्मात् ज्ञानमेव निमित्तं इति भाती कल्पना, नार्थागमाश्रयणम्, अव्यापेः । अतः कुड्यादिष्वपि ज्ञानं वासनानिमित्तमेव, न कुड्याद्यर्थनिमित्त इति स्थितिः । उच्यते । कार्यसिद्ध्यर्थं हि कारणं कल्प्यते, न पुनः कार्यविनाशाय । स्वप्नादिषु बहिरवभासा संवित्, सा च बाह्यार्थमन्तरेण न संभवति । येन च विना यत्र संभवति तत् तस्य कारणम् । तस्मात् अर्थ एव कारण इति युक्तं कल्पयितुम् । निरालम्बनता तु नैव संवेद्यते प्रत्यक्षावबोधेन । तस्मात् अत्रत्र ज्ञानं न वासनानिमित्तं इत्युक्तम् । ननु स्वप्नोपलब्धं मिथ्या इति प्रतिबुद्धस्य ज्ञानमुत्पद्यते । न च मिथ्याभावस्य कारणकल्पना युक्ता । ननु च अकारणस्य मिथ्या-प्रत्ययस्यापि उत्पादो न घटते । सत्यं न घटते, न तु अगत्यनुगुणं तत् । तदानुगुण्ये हि मिथ्याज्ञानमेव न स्यात् । ( यद्यपि ज्ञानोत्पादे कारणं कल्पनीयं तथापि अर्थ एव न कल्प्यः, किन्तु वासनामात्रम् ) तस्मात् व्यामोहहेतवो मिथ्याप्रत्ययाः । व्यामोहनिबन्धनाश्च संसारिणो वासनाः । अतो वासनानिबन्धनमेवेदं ज्ञानजालं इति वरमविद्भिरुदितम् । ( व्यामोहः मिथ्याप्रत्ययस्य हेतुः । वासनातो व्यामोहः, व्यामोहात् वासना इति अनादित्वात् बीजाङ्कुरवत् अदोषः ) ( सिद्धान्तमुपक्रमते— ) ननु परिहृतमेतत् 'स्मरामीति ज्ञानशून्यानि स्मृतिज्ञानान्येतानि । ननु च स्मृतेः उद्बोधकारणाभावात् नैतत् संभवति इत्युक्तम् । तदसिद्धम् । स्वप्नादावपि हि निद्राऽदृष्टादिसंभवात् । स्वप्नेऽपि हि सुखदुःखमनुभूयते । सुखदुःखहेतुश्च अदृष्टम् । अतः अदृष्टहेतुकमेव स्वप्नादिज्ञानम्, किञ्चिच्चिन्तादिहेतुकं इत्युपपन्नं शुक्तिकादिज्ञानतुल्यत्वं स्वप्नविज्ञानस्य । तदिदमुक्तम् ( यदिदमस्माभिरुच्यते अग्रहणात्मकः प्रमोषो मिथ्यात्वहेतुरिति तदेव भाष्यकारेणोक्तम् ) 'स्तम्भ इति आगतो बुद्धिः सुपरिनिश्चिता कथं विपर्येष्यति' । आगतो बुद्धिः सुपरिनिश्चिता कथं विपर्येष्यति । ( इत्यमुक्तं ) निश्चितं अवच्छिन्न-कथनेन इदमुक्तम् ? ( इत्यमुक्तं ) निश्चितं अवच्छिन्नमित्यर्थः । कथ अवच्छिन्नोऽर्थः अनवच्छिन्नो भवति ? ( ननु अग्रहणान्मिथ्यात्वे सर्वज्ञानानि मिथ्या स्युः, सर्वात्मना अर्थस्य केनचित् ज्ञानेन अग्रहणात् इति पृच्छति— ) कथ तर्हि प्रबुद्धो मिथ्येति जानाति ? ( उत्तर ) उक्तम्, स्मरामीति स्मृतिप्रमोषात् ( स्मृतित्वा-परामर्शात् ) प्रत्यक्षमितं तत् । प्रतिबुद्धस्य न अपैति प्रत्यक्षाभिमानः ( इन्द्रियदौर्बल्ये निश्चिते प्रत्यक्षानुपपत्तेः स्मृतित्वनिश्चयः ) । अनुमेयार्थे ( अग्रहणात्मको भ्रम इति ) स्पष्टीकरोति— 'अथ प्रतीतिस्तथाभावस्य हेतुः, न शक्यते प्रत्ययादयमन्य इति वदितुम्' । 'यदि प्रत्ययत्वात्' इति च । नावगमिं मिथ्येति मन्यते । 'अन्वतो हि स्वप्नज्ञानस्य मिथ्याभावः' इति प्रमोष-निमित्ततां दर्शयति । कुतः ? इन्द्रियदौर्बल्योपन्यासात् 'निद्राक्रान्तं मे मनः' इत्यादिना । दौर्बल्यं च कार्यक्षमत्वम्, न कार्यान्तरोत्पत्तिसमर्थत्व इत्युक्तम् । ( पृ ५३–५७ )

श्लोवा— ( उत्तरग्रन्थस्य प्रयोजनमाह ) 'प्रमाणत्वाप्रमाणत्वे, पुण्यपापादि, नरकान्यम् । विध्यर्थवादमन्त्रार्थनामधेयादिकल्पना ॥ १ ॥ सर्वेषु लक्षणेष्वेवं स्वप्रमाणगम्ये. स्थितिः । वचनव्यक्तिभेदेन पूर्वसिद्धान्तपक्षता ॥ २ ॥ कर्मभ्यः फल-

संबन्धः पारलौक्यैहलौकिके । सर्वमित्याद्ययुक्तं स्यादर्थशून्यासु बुद्धिषु ॥ ३ ॥ तस्माद्धर्मार्थिभिः पूर्वं प्रमाणैर्लोकसंमते । अर्थस्य सदसद्भावे यत्नः कार्यः क्रियां प्रति ॥' ४ ॥

रत्नाकरः— यदि सर्वा बुद्धयो बाह्यार्थशून्याः स्युः पर्यवसायिन्यो भवेयुः, ततो योऽयं (व्यवहारः), चोदना धर्मे प्रमाणम्, अन्यदप्रमाणम्, सत्संप्रयोगजं प्रत्यक्षम्, अत्र संप्रयोगजमाभासम्, ज्योतिष्टोमादि पुण्यम्, ब्रह्महत्यादि पापम्, तदुभयविलक्षणं अभ्युदयप्रत्यवायाः तेषां फलम्, विधेरर्थे प्रवर्तनम्, अर्थवादस्य प्ररोचनमर्थः, मन्त्राणामनुष्ठेयप्रकाशनम्, नामधेयानां गुणफलविधानार्थविचारः, आदिशब्दोपात्तश्च स्मृत्याचारप्रामाण्याप्रामाण्यविचारः, तथा शब्दान्तराभ्यासश्रुतिलिङ्गश्रुत्यादिभिः कर्मभेदशेषलक्षणनियमाः, वचनव्यक्तिभेदेन वाक्यार्थचिन्ता, कर्माणि कानिचित् आमुष्मिकस्वर्गफलानि, कानिचित् अनियतफलानि, कानिचित् ऐहिकवृष्ट्यादिफलानि इत्यादिः व्यवहारः स सर्वः चोदनादीनामभावात् अयुक्तः स्यात् । अतः अवश्यं धर्मार्थिभिः पुरुषैः सुगताभिहितविज्ञानमात्रवादविचिकित्सया बाह्यार्थसद्भावे लोकसंमतप्रमाणादौ यत्नेन भा. कर्तव्यः । क्रियां प्रति अनुष्ठानसिद्ध्यर्थमित्यर्थः । पृ २१७–२१८.

श्लोका— 'स्वप्नादिभोगवच्चापि योपभोगस्य कल्पना । तत्सिद्ध्यर्थमिदेह परमार्थे प्रयत्यते ॥ ११ ॥ नहि स्वप्नसुखाद्यर्थं धर्मे कश्चित् प्रवर्तते । यादृच्छिकत्वात् स्वप्नस्य तूष्णीमासीत पण्डितः ॥ १२ ॥ परमार्थफलप्राप्तिमिच्छद्भिस्तेन यत्नतः । प्रतिपत्तिर्विधातव्या युक्तिभिर्बाह्यवस्तुषु ॥ १३ ॥ तत्रार्थशून्यं विज्ञानं योगाचाराः समाश्रिताः । तस्याप्यभावमिच्छन्ति ये माध्यमिकवादिनः ॥१४॥ तत्र बाह्यार्थशून्यत्वं तुल्यं तावद् द्वयोरपि । निरूप्यास्य, ततो ज्ञाने वक्ष्यते सर्वकल्पना ॥१५॥ तस्मात् साधारणत्वेन तन्मूलत्वेन चाग्रतः । बाह्यार्थसदसद्भावे यत्नो भाष्यकृता कृतः ॥'१६॥ ज्ञानापह्नववादिनोऽपि प्रथमं अर्थमपह्नुत्य निर्विषयज्ञानानुपपत्तेः ज्ञानमपह्नुवते । तेन अर्थापह्नवः द्वयसाधारणत्वात् ज्ञानापह्नवस्य च तन्मूलत्वात् तन्निराकरणेनैव निराकरणसिद्धेः तदेव निराक्रियते इति । रत्नाकर. निरालम्बनवाद. पृ २१७–२२१.

* निरालम्बनवादे बाह्यो विषयोऽपि नास्ति धीनिर्गता नीलाद्याकारा अपि न सन्ति । बाल पृ. ६.

* निरालम्बनवादनिरासेन बाह्यार्थसद्भावः औत्पत्तिकसूत्रे एव भाष्ये उक्तः । बाल. पृ. ६.

* निरालम्बनवादिन. सर्वाणि बाह्यघटादिविषयकाणि सविकल्पकज्ञानानि मिथ्यार्थविषयकाणि बाह्यार्थविषयकज्ञानत्वात् स्वप्नज्ञानवत् । स्वप्नज्ञाना हि बाह्यघटाद्याकारेण परिणतं ज्ञानमेव विषयः, न घटादि, तदानीमभावात्, मनःप्रत्यासत्त्यभावात्, स्वशिरश्छेदनादीनामसंभवाच्च (अतस्तत्र ज्ञानरूपमेव विषयः) एवं सर्वज्ञानानां इति दृष्टान्तेन न किञ्चिदपि ज्ञानं प्रमा इत्याहुः । तन्न । स्वप्नज्ञानानां आत्मविषयकत्वासिद्ध्या दृष्टान्तासिद्धेः । किञ्च 'नीलोऽयम्' इत्यादिसविकल्पकानां आत्मविषयकत्वे 'नीलोऽहम्' इत्याकारतापत्तिः । अत इदं बाह्यविषयकम् । बाधकाभावेन च प्रमैव । मणि पृ २३–२४.

* निरिष्टकम् । इष्टाभिर्निर्गतः निरिष्टः, कुत्सिता निरिष्टा. निरिष्टका । पुनःप्रयोगानर्हा इत्यर्थः । वि. ११।३।१२ । निरस्तमिष्टमनेन इति निरिष्टं निरिष्टमेव निरिष्टकम्, एकस्मिन् कर्मणि उपयुक्तमित्यर्थः । निरिष्टकानामपि इष्टकानां देशस्य च पुनरुपादानं शिष्टा न निवर्तयन्ति । सोम. * निरिष्टकेन पुनर्नियोगं शिष्टा नाचरन्ति । निरिष्टकेन शिष्टा यागं नाचरन्ति । भा ११।३।१२।३३.

* निरिष्टकोपदेशः । निष्क्रान्ता इष्टका विनियोगाकाङ्क्षा यस्मात् तत् निरिष्टकम् । उपयुक्तमिति यावत् । एकस्योपयुक्तस्य अन्यस्मिन् योगविधिः निरिष्टकोपदेशः । कु ४।३।१४।२९.

* निरर्थं वेदाङ्गम् । पौरुषेयमपि अतिरिक्तव्यापारपर्यवसानतया वेदमूलकत्वाच्च प्रमाणम् । वि. १।३।७.

* निरुक्तं वेदार्थाधिगमोपायः । या १।२।४।४ पृ. १५६.

* निरुक्तेन तावत् लोकव्यवहारप्रसिद्धान्येव पदानि

तद्गतक्रियानिमित्तशब्दप्रयोगभाक्त्वेन निरुच्यन्ते । १।३।५।१० पृ. २२८. ● निरुक्तस्य लोकमूलपदार्थमानं प्रयोजनम् । सु. पृ. १२९. ■ निगमनिरुक्तव्याकरणवशेन धातुतोऽर्थः कल्पयितव्यः यथा ' सृण्येव जर्भरी ' इत्यादौ । भा. ११२।४।४१.

**⊠ निरुप्ते स्यात्, तत्संयोगात् । ६।५।३।१२ ॥**

चन्द्राभ्युदितेष्टिः, हविषि निरुप्ते स्यात् हविर्निर्वापानन्तरं चन्द्रोदये सति स्यात् । तत्संयोगात् । ' यस्य हविर्निरुप्तं पुरस्तात् चन्द्रमा अभ्युदेति ' इति निर्वापसंयोगेन इष्टेरुक्तत्वात् इति पूर्वः पक्षः ।

**प्रवृत्ते वा, प्रापणान्निमित्तस्य । १३ ॥**

पूर्वपक्ष सूत्रेण प्राप्तं वाशब्देन निरस्यन् सिद्धान्तमाह । अकाले कर्मणि प्रवृत्ते एव चन्द्रोदये सति इष्टिरेषा स्यात् । निमित्तस्य चन्द्रोदयस्य प्रापणात् प्राप्तत्वात् । चन्द्रोदयो हि निमित्तम् । तच्चेत् निर्वापात् प्राक् जातम्, तदा निमित्तसत्त्वात् नैमित्तिकं कर्तव्यमेव ।

**लक्षणार्थमितरत् । १४ ॥**

यदि निर्वापात् प्रागपि प्रवृत्तमात्रे दर्शकर्मणि चन्द्रोदये सति अभ्युदयेष्टिः स्यात् तदा ' यस्य हविर्निरुप्तम् ' इति निर्वापसंयोगः किमर्थमिति चेत्, आह सिद्धान्ती । इतरत् निरुप्तमिति पदम्, लक्षणमात्रं कर्मारम्भस्य । कर्मारम्भं लक्षयति निरुप्तमिति पदम् । कर्मारम्भश्च निर्वापात् प्रायेण भवति ।

**तथा चान्यार्थदर्शनम् । १५ ॥**

तथा च निर्वापात् प्रागपि प्रवृत्तमात्रे दर्शकर्मणि चन्द्रोदये सति अभ्युदितेष्टिः स्यात् इत्यत्र अन्यार्थदर्शनं भवति ' स यदि अगृहीत हविरभ्युदियात् तदा व्रतैव व्रतचर्या ' इति । तस्मात् प्रवृत्तमात्रे कर्मणि चन्द्रोदये सति अभ्युदितेष्टिः इति सिद्धान्तः । अगृहीते हविः अभिलक्ष्य स चन्द्रः यदि उदियात्, तदा निर्वापोत्तर या व्रतचर्या उक्ता, एषैव कर्तव्या इति श्रुत्यर्थः । के.

* निरूढानि नाम पदानि लाक्षणिकानि इत्युच्यन्ते, तेषां निरूढ तद्व्यपदेशाधिकरणे । के.

* निरूढादयः पशवः सोमात् प्रागपि कर्तव्याः । रत्न. ५।४।८।२५.

**⊠ निरूढादिष्वपि शालामुखीयो भवति ॥**

पशुप्रधानेषु प्राजहितादेव उत्तरवेदिः प्रणयनवत् निरूढपशावपि सभावात् शालामुखीयो भवेत् । इति प्राप्ते, प्रकृतौ शालामुखीये सौमिकस्य कस्यापि कार्यस्याभावात् पात्नीकार्यार्थमेव तदुपादानेन पशुकृत्याशोदक्षलक्षः शालामुखीयो निरूढादिष्वपि स्यादेव । संकर्ष. ३।१।२१.

* निरूढपशुः अग्नीषोमीयस्य विकारः । सत्याषाढसूत्रे तु वैपरीत्यं स्वीकृतम् । के. ● निरूढपशौ असत्यपि दीक्षिते दण्डसंपादनस्य दण्डदान प्रयोजकम् । तस्मात् मैत्रावरुणसंस्कारार्थं दण्डदानमर्थकर्म । वि. ४।२।६.

* निरूढपश्वादौ दीक्षाहोमरूपसंभावितेऽपि दण्डदानानुष्ठानं तस्य प्रैषानुवचनप्रयुक्तत्वात् नानुपपन्नम् । भाट्ट. ४।२।६. * निरूढपश्वादिषु आग्नीषोमीयादिविकारेषु ( वेदि. ) कर्तव्या । वा. ३।७।४।९.

**⊠ निरूढपशुबन्धे होतृमैत्रावरुणयोर्द्वयोर्वरणम् ॥**

' द्वितीयमस्याश्रावयति द्वौ ह्यत्र होतारौ होता च मैत्रावरुणश्च ' इति दैक्षेऽहन्येव श्रुतं उक्तन्यायेन द्वयोरेवेदं वरणान्तर सोमधर्मः । इति प्राप्ते, द्वाविन्यनेन तृतीयहोत्रभावस्य हेतुकरणात् अत्रेतिपदेन योग्यतया निरूढपशुबन्धः परोच्यते इति तत्र अप्यकर्षः । संकर्ष ३।४।१३.

* निरूढा लक्षणा निरूढशक्तितुल्ययोगक्षेमत्वात् न मुख्यार्थे तात्पर्यानुपपत्तिप्रतिसन्धानमपेक्षते । कु. १।१।६।१२ पृ. २५७. * ' निरूढा लक्षणाः काश्चित् सामर्थ्यादभिधानवत् । ' ■ केषुचिदर्थेषु अभिधानवदेव लक्षणाशक्तिरपि अनादिकालप्रवृत्तत्वेन ( प्रवृत्तिकमेव इति कुतूहले पृ. २५७ पाठः ) निरूढाः यथा कुशलादिषु । वा. ३।१।६।१२ पृ. ६८३.

* निरूढलक्षणया अनिरूढलक्षणा बाध्यते, उदाहरणं मृण्मय । बाल. पृ. १४३.

* निर्गुणं पुनर्वचनं परिसंख्यापकं भवति । भा. ११।२।१२५९१.

* निर्णेजकधौतगर्दभास्ववस्त्रपरिधानं अनाचारः अदीक्षाना दासिशाल्पाना च । वा. १।२।३।७ पृ. २०४.

* कस्मान्निर्णेजनवत् एतद्भविष्यति । निर्णेजनं हि उभयं करोति फाल्गुशुद्धिं पात्रयोश्च निर्मलताम् । भा. २।२।१२।२५ पृ. ५४५.

* निर्दिष्टस्य हि प्रतिनिर्देशकं सर्वनाम । सर्वनामपाठितत्विकस्य निर्दिष्टप्रतिनिर्देशकत्वशक्तिः । टुप्. १२।१।१।१.

* निर्देशः दर्शपूर्णमासयोः अनुपाकृतस्यामेध्यपुरोडाशस्य 'इदं ब्रह्मणः' इत्यादिना क्रियते । कृष्णलेषु तु ब्रह्मण एव सर्वस्य समर्पणीयत्वान्न निर्देशः कर्तव्यः, विभागोऽपि तत्र नास्त्येवेति । के १०।२।७।२२.

* 'आसीना भवति' इति स्त्रीलिङ्गपदसमभिव्याहारेण 'निर्देशादन्यः' इतिन्यायेन बाधितः अध्वर्युकर्तृकत्वोत्सर्गः, तादृक्पदाभावात् कर्मान्तरे लिङ्गे विप्रत्ये इत्यत्र अनुवर्तते । वैजयन्ती. ११।७।२५.

■ निर्देशात्तु विकल्पे यत् प्रवृत्तम् । ६।३।१२।२८ ॥

अग्नीषोमीये पशौ खादिरः पालाशो रौहितकश्च यूपो विकल्पेन श्रुतः । खादिरगुणकश्च प्रयोगः आरब्धः । तत्र च खादिरो विनष्टः । एवं सति खादिरस्य प्रतिनिधिर्भवति । स च खादिरसदृश एव अन्वेष्टव्यः । विकल्पे सति यत् प्रवृत्तम्, यमुद्दिश्य प्रयोगः प्रवृत्तः तत्सदृश एव प्रतिनिधित्वादेयः, न तु वैकल्पिकं द्रव्यं प्रतिनिधिर्भवति । निर्देशात् मुख्यद्रव्यवाचकशब्देन मुख्यसदृशस्यापि प्रतिपन्नावयवानुवृत्तिद्वारा निर्दिष्टत्वात् निर्देशसंभवात् । वैकल्पिकस्य तु न तथा निर्देशः शक्यः । तस्मात् खादिरापचारे कदरः नाम श्वेतखदिरः, व्रीह्यपचारे नीवाराश्च ग्राह्याः । इति सिद्धान्तः ।

अशब्दमिति चेत् । २९ ॥

पूर्वपक्षी यदि ब्रूयात् अशब्दं खादिरसदृशं शब्दरहितत्वात्तु वैकल्पिकमेव ग्राह्यं इति । नास्ति प्रतिपादकः शब्दो यस्य तत् अशब्दं इति बहुव्रीहिः । इति चेत् ।

नानङ्गत्वात् । ३० ॥

यत् पूर्वपक्षिणा उक्तम्, तन्न । अनङ्गत्वात् खादिरसंकल्पयुक्ते प्रयोगे वैकल्पिकस्य पलाशादेः अङ्गत्वाभावात् न तस्य ग्राह्यता । किन्तु खादिरसदृश एव कदरो ग्राह्यः । खदिरस्य साक्षात् मुख्यशब्दावाच्यत्वेऽपि गौण्या वृत्त्या मुख्यसदृशः मुख्यशब्देन बोध्यते एव । तस्मात् प्रतिनिधिः मुख्यसदृश एव, न वैकल्पिकं द्रव्यम् । के.

■ निर्देशात्तु विकृतावपूर्वस्यानधिकारः । ३।८।१६।३२ ॥

अग्नीषोमीये पशौ 'बर्हिषा यूपावटमवस्तृणाति' इति 'आज्येन यूपमनक्ति' इति च श्रुतम् । तत्र यूपावटस्तरणबर्हिषि बर्हिर्धर्माः यूपाञ्जनाज्ये च आज्यधर्माः कर्तव्याः इति पूर्वपक्षे प्राप्ते सिद्धान्तयति । तुशब्देन पूर्वपक्षव्यावृत्तिः । निर्देशात् विकृतौ प्राकृतकार्यमुखेनैव धर्माणां अतिदेशात् विकृतौ अग्नीषोमीये पशौ अपूर्वस्य अप्राकृतस्य यूपावटस्तरणबर्हिषः यूपाञ्जनाज्यस्य च यः संस्कारः, तत्र अनधिकारः, न अधिकारः, नानुवृत्तिः, नातिदेशः । तथा चात्र लौकिकं असंस्कृतमेव बर्हिः आज्यं च ग्राह्यं इति सिद्धान्तः । के.

* निर्देशात्तु विकृतौ (३।८।१६।३२) इत्यधिकरणन्यायस्य स्वरूपम् 'क्लृप्तोपकारकाङ्गसंभवे कल्पनागौरवापादकाक्लृप्तोपकारकाङ्गाना नाकाङ्क्षा' इति । सु. पृ. ६३४, * निर्देशात्तु विकृतौ इत्यत्र बर्हिरादाधिकरणस्य ( ९।४।७ ) प्रयोजनं स्पष्टीकरिष्यते । पृ. ४५५, * निर्देशात्तु विकृतौ इत्यत्र 'बर्हिषा यूपावटमवस्तृणाति' इति अप्राकृतयूपावटस्तरणाख्यकार्यार्थबर्हिरर्थं प्राकृतानां बर्हिर्धर्माणां अस्ति नास्तीति चिन्तायां प्राकृतवैकृताङ्गप्राप्तिपौर्वापर्यचिन्ताधीनत्वात् धर्मप्राप्तेश्चोदकातिदेशयोः समप्रधानत्वे नित्यसमानत्वेन तदभिप्रायपूर्वपक्षयोगात्, प्रत्यक्षत्वेन प्राग्वैकृताङ्गप्रथमोपस्थितेः पश्चादतिदिश्यमानेन 'बर्हिर्लुनाति' इत्यादिवाक्येन सर्वप्राकृतवैकृतबर्हिरनुवादेन लवनादिधर्मविधिर्भवतु यूपावटस्तरणबर्हिषोऽपि धर्मवत्ता इति पूर्वपक्षिते क्लृप्तोपकाराङ्गसंभवे कल्पनागौरवापादकाक्लृप्तोपकाराङ्गानाकाङ्क्षणात् । विकृतौ प्राकृतानामङ्गानां पुनर्निर्देशात् नापूर्वस्य वैकृतस्य

यूपावटस्तरणबर्हिषः प्राकृतधर्मविधौ अधिकारः इति सिद्धान्तो वक्ष्यते । तेन प्राकृतनामद्वारा चोदकेभ्यः प्राक् प्राप्तिः स्यात् इति । पृ ६२४.

• निर्देशाद्वाऽन्यदागमयेत् ( ६।४।१।२ ) इति सिद्धान्तसूत्रे प्रक्षेपात् प्राक् हविर्दानस्य नाशदोषापहारेषु पुरोडाशान्तरोत्पादनं मन्यते । सु. पृ. १५३३. ★ निर्देशाद्वाऽन्यदागमयेत् । यदि च निर्वापचेलायामेव यागनिर्वृत्तिर्भवेत्, तथा सति तदुत्तरकालं नाशदोषापहारेषु द्रव्यान्तर नोपादीयेत, तत्र 'निर्देशाद्वा०' इत्यादि विधास्यते । शा. ३।४।१४।४१ पृ. ९८६.

• 'निर्देशाद्वा वैदिकानां स्यात्' ( १२।२।१।३ ) इत्यत्र वक्ष्यमाणेन भाष्येण लौकिकवैदिकमन्त्रनित्य-निरासन्यायेन प्रवर्तते । सु. ३।७ पृ. ४०. • निर्देशाद्वा वैदिकानां स्यात् । यदि तावत् पुरुषार्थो अपि (अग्नयः) इत्यभिप्रायः, स काम्यर्थत्वादयुक्तः । तथा द्वादशे वक्ष्यति 'निर्देशाद्वा०' इति । शा. ३।७।२१।२१ पृ. ११०२ । यदि च लौकिककार्यविवक्षया सर्वार्थत्वमभिधीयते, ततो 'विहारो०' ( १२।२।१।१ ) इत्युक्त्वा 'निर्देशाद्वा०' ( ३ ) इत्यत्र निर्णीतत्वादविचार्यम् । पृ. ११०२.

**निर्देशाच्छेषभक्षोऽन्यैः, प्रधानवत् । ६।४। ३।४ ॥**

दर्शपूर्णमासयोः शेषस्य यागावशिष्टस्य हविषः भक्षः मार्जन-चतुर्धाकरण-हविराहुतिकालीनः अन्यैः ऋत्विग्भ्यो भिन्नैः कर्तव्यः । इडाभक्षे एव यजमानपञ्चमानां ऋत्विजाम् 'यजमानपञ्चमा इडां भक्षयन्ति' इति निर्देशात् । इतरभक्षेषु तु परिसंख्यातः । तस्मात् अन्यैः भक्षो भक्षयितव्यः । प्रधानवत् यथा हविर्दाननाशे अन्यः पुरोडाशः प्रधानार्थः, तथा इडान्यभक्षे ऋत्विग्भ्योऽन्ये स्युः । इति पूर्वः पक्षः ।

**सर्वैर्वा, समवायात् स्यात् । ५ ॥**

पूर्वपक्षं सूत्रेण प्राप्त वाशब्देन व्यावर्तयन् सिद्धान्तमाह । सर्वैः प्रकृतैरेव ऋत्विग्यजमानैः सर्वो भक्षो भक्षणीयः स्यात्, नान्यैः । समवायात् प्रकृते कर्मणि यजमानपञ्चमानामेव ऋत्विजां समवायात् ऐक्यात् । यागानन्तरभक्षणां यागीयभक्षणं न युक्तमिति भावः । सर्वैः इडादिसर्वभक्षैः ऋत्विजः युज्यन्ते इति पूरणीयम् । समवायात् कर्मकरत्वेन संबन्धात् इति सुबोधिनी । सर्वैः इत्यस्य स्थाने सर्वं इति कुतूहले पाठः । सर्वं भक्षणं ऋत्विग्भिरेव कर्तव्यं स्यात् । समवायात् यागे तेषामेव कर्तृत्वात् इति तदर्थः ।

**निर्देशस्य गुणार्थत्वम् । ६ ॥**

'यजमानपञ्चमा इडां भक्षयन्ति' इति निर्देशः इडाभिन्नभक्षपरिसंख्यार्थः इति यत् पूर्वपक्षिणा उक्तम्, तत्परिहारार्थं सिद्धान्तसूत्रम् । यजमानरूपो यो यागस्य गुणः तस्य भक्षे प्राप्त्यर्थः निर्देशः, न परिसंख्यार्थः । निर्देशस्य गुणार्थत्वम्, निर्देशो गुणार्थः न परिसंख्यार्थः । गुणार्थत्वात् इति पञ्चम्यन्तः पाठः कुतूहले ।

**प्रधाने श्रुतिलक्षणम् । ७ ॥**

पूर्वपक्षिणा प्रधानवत् इति दृष्टान्त उक्तः । तद्वैलक्षण्यप्रदर्शनार्थं सिद्धान्तसूत्रम् । प्रधाने यत् हविर्दानमात्रं निर्दिश्यते, तत् श्रुतिलक्षणं अनन्यथासिद्धायदान-वाक्यप्रमाणकम् । तस्मात् तत् स्यात् परिसंख्यार्थम् । 'यजमानपञ्चमा इडां भक्षयन्ति' इति भक्षणं तु भक्षे यजमानस्य अप्राप्तत्वात् विधानार्थमेव । अतो न तत् परिसंख्यार्थम् ।

**अश्ववदिति चेत् । ८ ॥**

पूर्वपक्षी शङ्कते । अश्ववत् अश्वमेधवत् । अश्वमेधे बहुत्वात् पशूनां सर्वशेषभक्षणे ऋत्विजो म्रियेरन्, तस्माच्च तत्र सर्वशेषभक्षणम् । तद्वदन्यत्रापि न सर्वशेष-भक्षणनियमः इति चेत् पूर्वपक्षी ब्रूयात् । अत्र अर्थवत् इति, पूर्ववत् इति च पाठः । तत्रापि अश्ववत् इत्येवार्थः ।

**न, चोदनाविरोधात् । ९ ॥**

सिद्धान्ती आह । न अश्वमेधे सर्वं भक्षयिष्यन्ति । तत्र पशूनां बहुत्वात् सर्वभक्षणे ऋत्विजो म्रियेरन् । ततश्च 'अश्वमेधेन यजेत' इति चोदनया विरोधः स्यात् । ऋत्विङ्मरणे अश्वमेधसमाप्तेरभावात् । तस्मात् अश्वमेधे सर्वभक्षणाभावो युक्तः । दर्शपूर्णमासयोस्तु तादृशदोषा-भावात् सर्वे शेषभक्षाः ऋत्विग्भिरेव भक्षणीयाः नान्यैः इति सिद्धान्तः । के

* निर्धनस्याप्यधिकारो यागे । के. ६।१।८।३९-४०.

☒ निर्धनमनोरथन्याय. । अयं पद्येनोपनिबद्धः । यथा । ' उत्पद्यन्ते तथैव निर्धनानां मनोरथाः । हृदयेष्वेव लीयन्ते विधवास्त्रीस्तनाविव ॥ ' इति । साहस्री. ८०५.

* निर्धयन्तः निःशेषं पिबन्तः । के.

* निर्धारणं जातिगुणक्रियासंज्ञाभिः समुदायात् एकदेशस्य पृथक्करणम् । रहस्य. पृ. १५५.

* निर्मन्थ्य. अग्निचयनगतेष्टकापाकार्थः मन्थनसाध्यः शास्त्रीयधर्मरहितः लौकिकोऽग्निः । के. ३।८।१।१२. * निर्मन्थ्यः अग्नीषोमीयपशुगतः उपमंकः शास्त्रीयसंस्कारसहितोऽग्निः । ७।३।७।१९. * निर्मन्थ्या. अग्नयः सोमे चत्वारः । संकर्ष. २।४।१६. * ' निर्मन्थ्येन इष्टकाः पचन्ति ' इति निर्मन्थ्यशब्दः पङ्कजादिशब्दवत् योगरूढः । अग्निचयने तत्र एव लौकिकमथनेन जात. अचिरनिर्मथितः । तेन इष्टकाः पच्यन्ते । वि. ३।४।१०. * निर्मन्थ्ययो. अग्निचयनगतेष्टकापाकार्थस्य अग्नीषोमीयपशुगतस्य च प्रकृतिविकारभावो नास्ति इति नास्ति धर्मातिदेशः । के. ७।३।७।१९.

☒ निर्मन्थ्याधिकरणम् । अग्निचयने पठितः ' निर्मन्थ्येनेष्टकाः पचन्ति ' इति निर्मन्थ्यशब्दो यौगिक. । ( निर्मन्थ्यशब्दस्तु एतद्विधायकः ) ॥

तथा निर्मन्थ्ये । ३।४।९।१२ ॥

भाष्यम्— अग्निचयने ' निर्मन्थ्येनेष्टकाः पचन्ति ' इति उदाहृते दर्शनात् संस्कारशब्दो निर्मन्थ्य इति । असंस्कारेऽपि दृश्यते ' निर्मन्थ्य आनय ओदनं पक्ष्यामः ' इति । निर्मन्थनयोगात् पूर्ववत् यौगिक इति संक्षिप्तम् । प्रयोजनम् , संस्कारनिमित्ते सम्कृतेन इष्टकाः पक्तव्याः । जातिशब्दे यथोपपन्नेन । यौगिके अचिरनिर्मथितेन । यथा ' नावनीतेन भुङ्क्ते ' इति अचिरनिर्दग्धेन इति गम्यते ।

वा— निर्मन्थ्येऽपि पूर्वाधिकरणवत् जातिसंस्कारनिमित्तपक्षौ उद्भाव्य अन्तरेण यौगिकत्वं साधनीयम् । ' वैद्युतादग्निमिपात्योय- सूर्यकान्तादिजन्मनाम् । निवृत्तौ चरितार्थः सन् निर्मन्थ्योऽभिनवः कथम् ॥ ' ' लोके कर्मार्थलक्षणम् ' ( ११।१।४।२६ ) इति अनन्यार्थेनापि व्यवहारात् भवेत् अचिरनिर्दिष्टप्रतीतिः । सर्वघृतानां च नवनीतविकारत्वात् पुनःश्रुतेः अचिरनिर्दग्धनवनीतार्थता स्यात् । इह तु शब्दप्रमाणके अन्यक्रियाजनितनिवृत्तिमात्रचरितार्थो निर्मन्थ्यशब्दः चिरविशेषोपादानासमर्थः कथमचिरनिर्मथितविषयः कल्प्यते । नहि अत्र अचिरत्वमपि योगे अन्तर्गतम् , क्रियायोगमात्रनिमित्तत्वात् । तस्मादसदेतत् । नैष दोषः । ' पाकेनाभेरुपात्तत्वात् विशेषणपरा श्रुतिः । तच्च पाकाङ्गभूतत्वात् तदेशादौ करिष्यते ॥ ' यथैव लोहितोष्णीषादिविधिषु विशेष्यस्य प्राप्तत्वात् विशेषणपरत्वम् , एवमिहापि विशेष्यानुवादेन विशेषणभूता क्रियैव पाकाङ्गत्वेन विधीयते । अङ्गानां च प्रधानेन एकदेशकालकर्तृकत्वं वक्ष्यते ( ११।२।१ ) । तेन अचिरनिर्मथितेन अदूरनिर्मथितेन अनन्यकर्तृनिर्मथितेन इति वक्तव्ये प्रदर्शनार्थमचिरग्रहणम् ।

सोम— सूत्रे ब्रीह्यादिवदिति तथाशब्दार्थः ।

वि— ' रूढियोगो योगरूढिर्वा निर्मन्थ्यस्य वर्तनम् । आद्यो पूर्ववद्, दग्धोऽचिरजातेर्नावनीतवत् ॥ '

भाट्ट— ' निर्मन्थ्येनेष्टकाः पचन्ति ' इत्यत्र निर्मन्थ्यशब्दस्य पूर्ववत् संस्कारवाचित्वे ' निर्मन्थ्यमानय पक्ष्यामः ' इति लौकिकप्रयोगेण निरस्ते, मथनकर्मत्वस्य पाकसाधनीभूताग्नौ अभावेन मथनप्रयोज्यत्वस्य पाकनवनीतादावपि सत्त्वेन अतिप्रसङ्गात् अरणिप्रयोज्याग्नित्वव्याप्यजातिवाचित्वे प्राप्ते, मथनप्रयोज्यत्वयोगेनैव उपपत्तौ रूढिकल्पने प्रमाणाभावात् अतिप्रसङ्गस्य पाकादावपि प्राचीनप्रयोगाभावेनैव अबोधकत्वोपपत्तेः निवारयितुं शक्यत्वात् नवनीते वाच्यत्वस्यापि वक्तुं शक्यत्वाच्च यौगिक एव निर्मन्थ्यशब्द. । एवं च ' निर्मन्थ्येनेष्टकाः पचन्ति ' इति वाक्ये. पाकसामर्थ्यादेव प्राप्तत्वात् मथनमात्रविधिः इति तस्यापि प्रयोगमध्ये करणं सिद्धान्ते प्रयोजनम् ।

मण्डन— ' निर्मन्थ्ये योगनियमः । '

शंकर— 'निर्मन्थ्यमपि तद्वत् स्यात् ।' पदं यौगिकम् । १०.

**॥ निर्मन्थ्यादिषु चैवम् । ७।३।७।१९॥**

अग्नीषोमीये पशौ धर्मवान् निर्मन्थ्योऽग्निराम्नातः । अग्निचयने 'निर्मन्थ्येनेष्टकाः पचन्ति' इत्याम्नातम् । तथा दर्शपूर्णमासयोः बर्हिः आज्यं च सधर्मकमाम्नातम्, पशौ च 'बर्हिषा यूपावटमवस्तृणाति' इति 'आज्येन यूपमनक्ति' इति च विहितम् । तत्र अधिकरणातिदेशमाह । यथा वैष्णवशब्दे न धर्मातिदेशकता, एवं निर्मन्थ्यादिषु निर्मन्थ्य-बर्हिराज्यशब्देष्वपि न धर्मातिदेशकता । अग्निचयनगतनिर्मन्थ्यशब्दः पशुगतनिर्मन्थ्यधर्मान् न गृह्णाति । पशुगतौ बर्हिराज्यशब्दौ दर्शपूर्णमासगतबर्हिराज्यधर्मान् न गृह्णीतः । तस्मात् निर्मन्थ्य-बर्हिराज्यशब्दाः न धर्मातिदेशका इति सिद्धान्तः । चकारः पूर्वसिद्धान्तसाहचर्यबोधकः । के.

**॥ निर्मन्थ्यन्यायः ।** अग्निचयनादिप्रकरणस्था निर्मन्थ्यादिशब्दाः अग्नीषोमीयादिगतनिर्मन्थ्यादिधर्माणां न ग्राहकाः ।

**निर्मन्थ्यादिषु चैवम् । ७।३।७।१९॥**

**भाष्यम्**— पशौ अग्नीषोमीये धर्मवान् निर्मन्थ्योऽग्निराम्नातः 'आर्द्रा वै वेद्याः' इत्यारभ्य । अग्नौ श्रूयते 'निर्मन्थ्येनेष्टकाः पचन्ति' इति । तथा दर्शपूर्णमासयोः बर्हिराज्ये धर्मवती, पशौ श्रूयते 'बर्हिषा यूपावटमवस्तृणाति' इति, 'आज्येन यूपमनक्ति' इति । तत्र संदेहः किं निर्मन्थ्यादयः शब्दाः धर्माणां ग्राहकाः, नेति । तत्र अधिकरणातिदेशः क्रियते । निर्मन्थ्यादिषु चैवं यथा वैष्णवशब्दे । अस्त्यपि अयं यौगिको निर्मन्थ्यशब्दः मथो निर्मथितमग्निमाह । तथा बर्हिः आज्य इति द्रव्यशब्दौ । ते त्रयोऽपि स्वार्थं विधाय कृतार्था भवन्ति, धर्मान् ग्रहीतुं न शक्नुवन्ति । तस्मात् न ग्राहकाः ।

**सोम**— पूर्वन्यायातिदेशात् **संगतिः** । पशौ 'अग्नेर्जनित्रमसि इत्यभिमन्थनशकलं निदधाति' इत्यादिना निर्मन्थ्यस्य धर्मा आम्नाताः । तथा दर्शपूर्णमासयोः आज्यस्य उत्पवनादयः बर्हिषश्च लवनादयो धर्मा आम्नाताः । तृतीये ( ३।८।१६ ) 'बर्हिषा यूपावस्तृणाति' इत्यत्र बर्हिर्धर्मा लवनादयः पशौ चोदकप्राप्ताः अङ्गप्रधानसाधारणा अपि अप्राकृतकार्यत्वान्न भवन्ति इत्युक्तम् । इह तु बर्हिःशब्दस्य आतिदेशकत्वाभावात् धर्मा न भवन्ति इत्युच्यते इति विशेषः ।

वि— 'निर्मन्थ्येनेष्टकापाके बर्हिषाऽवटसंस्कृतौ । अतिदेशो न वा, ऽऽद्योऽस्तु धर्मार्थं, मैवं पूर्ववत् ॥' पूर्वाधिकरणोक्तवैष्णवशब्दवत् नातिदेशः ।

**भाट्ट**— अग्नौ 'निर्मन्थ्येनेष्टकाः पचन्ति' इति । पशौ 'बर्हिषा यूपावटमवस्तृणाति' 'आज्येन यूपमनक्ति' इति च श्रुतम् । तत्र पूर्ववदेव निर्मन्थ्यशब्दो मन्थनक्रियाविधायकत्वेन गौणत्वापत्तेः न पाशुकानां मथनधर्माणां अतिदेशार्थः । बर्हिराज्यशब्दौ न द्रव्यविधित्वात् न दार्शपूर्णमासिकबर्हिराज्यधर्मातिदेशार्थौ । न च निरूपकस्य नामातिदेशेन धर्मप्राप्त्यभावेऽपि चैदिकधर्मातिदेशेन निराकाङ्क्षत्वाद् न गौणत्वाङ्गीकारः, प्रकृते तु धर्माकाङ्क्षयैव गौणत्वाङ्गीकारात् नामातिदेशोपपत्तिः इति वाच्यम् । लौकिकोऽपि मथनादिधर्मत्वेन भूत्यर्थत्वे प्रमाणाभावात् । ६.

मण्डन— 'निर्मन्थ्यशब्दोऽप्यनिर्देशको न ।'

शंकर— 'निर्मन्थ्ये नातिदेशः स्यात् ।'

* **निर्मन्थ्यशब्दः** अग्निचयनगतः पशुगतः पशुगतनिर्मन्थ्यधर्मान् न गृह्णाति । के. ७।३।७।१९.

* निर्युक्तिकप्रवादस्य हेयत्वात् । मणि. पृ. १२.

* **निर्वपणे** प्रोक्षणे अवहनने च ऐश्वरमाद्य. औषधधर्मा. । भा. ३।१।८।७. * निर्वपणे प्रयोजनं यनिष्पाणामावापनम् । भा. ११।४।१४।४८.

* **निर्वपणादयः** व्रीहिष्वामेव धर्माः, उत्पवनादयः आज्यस्यैव, दोहनादय सांनाय्यस्यैव इति धर्माणां व्यवस्था । के. ३।१।४।७–१०.

**■ निर्वपणलवनस्तरणाऽऽज्यमहणेषु चैकद्रव्यवत् प्रयोजनैकत्वात् । ११।४।१४।४७ ॥**

दर्शपूर्णमासयोः 'चतुरो मुष्टीन्निर्वपति' इति निर्वपणे 'देवस्य त्वा' इति मन्त्रः, दर्भाणां लवने छेदने 'बर्हिर्देवसदनं दामि' इति मन्त्रः, वेद्यां बर्हिषः स्तरणे 'ऊर्णाम्रदसं त्वा' इति मन्त्रः, आज्यग्रहणे 'धाम-

नामासि ' इति मन्त्रः, तस्य किं सकृत्प्रयोगः, उत आवृत्तिः इति विचारे पूर्वपक्षमाह । निर्वपणं निर्वापः, लवनं दर्भाणां छेदनम्, स्तरणम्, आज्यग्रहणं च तेषु एकद्रव्यवत् व्रीहिष्विव मन्त्रस्य सकृत् प्रयोगः स्यात् । प्रयोजनैकत्वात् फलस्य एकत्वात् । निर्वपणे हविष्याणां व्रीहीणां पूर्वे आदानं फलम् । लवने वेदिस्तरणयोग्यस्य बर्हिषः संपादनम् । स्तरणे वेद्याच्छादनम् । आज्यग्रहणे यागयोग्यस्य आज्यस्योपादानम् । एवं फलैकत्वात् मन्त्रस्य सकृत्प्रयोगः स्यात् इति ।

द्रव्यान्तरवद् वा स्यात् तत्संस्कारात् । ४८ ॥

सिद्धान्तमाह । द्रव्यान्तरवत् नानाबीजवत् स्यात् । प्रतिमुष्टि प्रतिलवनं प्रत्यास्तरणं प्रत्याज्यग्रहणं च तत्संस्कारात् तत्तत्संस्कारार्थे मन्त्रस्य आवृत्तिः स्यात् इति । के.

● निर्वपणशब्देन ऐष्टिको विध्यन्तो निगद्यते 'सौर्यं चरुं निर्वपेत्' इत्यत्र । भा. १०।७।१४।५६.

● निर्वपतिचोदना इष्टिलक्षणभूता । वि. १०।२।१५.

● निर्वपनिर्देश प्रकृतिलिङ्गासादकत्वेन प्राकृतपरिभाषाऽतिदेशसिद्ध्यर्थे अस्मिन् (मत्नीयस्यूपस्य) परित्यागे निवृत्त्यानुवादः । भाट्ट. ४।४।९.

● निर्वपतिशब्दः भूयमाणो दर्शपूर्णमासविध्यन्तं नियमयति पुनःश्रवणात् । टुप्. १०।७।१।२९.

● निर्वपतिशब्देन दार्शपौर्णमासिकविध्यन्तसंयोगिना लिङ्गेन सौर्यो विध्यन्त. प्राप्यते 'सौर्यं चरुं निर्वपति' इत्यत्र । भा. ८।१।१।२.

● निर्वापः अग्नीषोमीयपुरोडाशस्य पूर्वं कार्यः पश्चात् उपांशुयाजस्य निर्वाप., पौर्णमास्या पाठक्रमस्य मुख्यक्रमात् बलीयस्त्वात् । के. ५।१।८।१९, ● निर्वापः अध्वरकल्पाया पूर्वं बार्हस्पत्यस्य चरोर्धर्माः, ततः सारस्वतस्याज्यस्य औपदेशिकमुख्यक्रमापेक्षया आतिदेशिकपाठक्रमस्य बलवत्त्वात् ।५।१।१०।१७–१८, ● निर्वापः अध्वरकल्पाया प्रथमं आग्नावैष्णवस्य ततो बार्हस्पत्यचरोः, वैकृतमुख्यक्रमानुरोधात् । भाट्ट. ५।१।१०, ● निर्वापः अवशिष्टः तूष्णीं कर्तव्यः यागनिरासे चन्द्राभ्युदये सति । भा. ६।५।५।१८–२०, ● निर्वापः गार्हपत्यात् पश्चिमे देशे अग्रिमे नाम शकटे भवति । ज्योतिष्टोमेऽपि ऐष्टिको निर्वापः तत्रैव कर्तव्यः, न हविर्धानशकटयोः । वि. १२।१।७. ● निर्वाप. चतुःसंख्याविशिष्ट एकः पदार्थः । के. ५।२।३।४, ● निर्वापः दर्शपूर्णमासयोः चतुर्भिर्मुष्टिभिर्भवति 'चतुरो मुष्टीन् निर्वपति' इति विधेः वाजपेये सप्तदशशरावे चरौ तु चतुर्भिः मुष्टिभिः शरावपूरणं कार्यम् । वस्तुतस्तु शरावैरेव साक्षात् सप्तदशभिर्निर्वापः कर्तव्यस्तथैव श्रवणात् । के. १०।२।२८।६५–६८. ● निर्वापः वसुपुरोडाशस्य सप्तमीयपुरोडाशाना सौम्यचरोश्च हविर्धानशकटाख्ये भिन्ने शकटे, न तु हविर्धानशकटयोरन्यतरस्मिन् । भा. १२।१।७।१४–१६, ● निर्वापः प्रातःकालिकस्य यागस्य अध्वरकल्पायाम् 'पुरा वाचः प्रवदितोर्निर्वपेत्' । के. ११।२।४।१९, ● निर्वापः वैकृतीभ्य एव देवताभ्यः अभ्युदितेष्टौ दध्यग्रयणस्य निर्वापात् प्रागपि चन्द्राभ्युदये । भा. ६।५।४।१६–१७, ● निर्वापः अग्निहोत्रोपस्तारी । ११।४।१४।४५, ● निर्वापं वदयनीयमर्थनिष्पन्नं प्रति प्रयोजनीयनिष्पन्नो गुणभूतः । निष्कासे निर्वापः । ज्योतिष्टोमे । ११।२।१६।६७–६९. ● निर्वापेण अग्निहोत्रहवणी बाध्यते पयमानेष्टिषु । अत्र अङ्ग प्रधानेन बाध्यते । बाल. पृ. १३२. ● निर्वापात् प्रागपि दर्शमहस्मुत्तर चन्द्रोदये अभ्युदितेष्ट्यनुष्ठानम् । भा. ६।५।३।११, ● निर्वापस्य चतुर्मुष्टित्वमुपायेनानुवादः । ५।२।३।४–५, ● निर्वापस्य देशः, 'अपरेण गार्हपत्यं प्राचीनं अनः अवस्थितं भवति, तस्य दक्षिणचक्रमालम्ब्य अवतोऽपि निर्वपति' इति । १२।१।७।१५. ● निर्वापस्य न बाध. पवमानेष्टिषु अग्निहोत्रहवण्यभावेऽपि । गुणलोपन्यायः । के. १०।२।२७।६४, ● निर्वापयोः आग्नेयाग्नीषोमीययोः पदार्थानुसमयः दर्शपूर्णमासयोः । ५।२।२।४–५, ● निर्वापे अंशत. कृते ततश्च प्रोदयज्ञाने, शेषनिर्वापः तूष्णीमेव कर्तव्यो न प्राकृतीभ्यो देवताभ्यो नापि वैकृतीभ्य. । ६।५।५।१८–२०, ● निर्वापे 'अग्नीषोमाभ्याम्' इत्यत्र 'देवस्य त्वा०' इत्यादेः 'जुष्टं निर्वपामि' इत्यस्य च अग्निमन्त्रस्य पूर्वोत्तरभागयोरनुषङ्गः कर्तव्यः, तेन मन्त्रवाक्यपूरणं भवति । २।१।१६।४८. ● निर्वापे

चतुर्मुष्टिसमुदाय: एकः पदार्थः इति समुदायानुसमयः । भा. ५।२।३।४–५. ● निर्वापे दर्शपूर्णमासादौ 'चतुरो मुष्टीन् निर्वपति' तत्र प्रतिमुष्टि 'अग्नये जुष्टं निर्वपामि' इति मन्त्रावृत्तिः । के. ११।४।१४।४४.

## निर्वापे मुष्टिपरिमाणं अध्वर्योरेव ॥

निर्वापे चतुर्मुष्टिपरिमाणस्यापि अनियमेन यस्यकस्यचित् मुष्टौ प्राप्ते, चतस्रोऽध्वर्युमुष्टिमात्रस्येति प्रैतिन्य वैशादेः स्वमुष्टिपरिमितस्यैव आदानदर्शनात् अध्वर्योरेव मुष्टिः । मंकर्ष. १।४।११.

■ निर्वापे वाजपेये नैवारस्य सप्तदशशरावस्य चरो-र्निर्वापे चतुःसंख्यानुग्रहः मुष्टिभिश्च कर्तव्यः ( कुडवा-दिभिश्चतुर्भिः द्वादश पूरयित्वा निर्वापः एवं सप्तदश-शरावम् ) । के. १०।२।२८।६४–६७.

● निर्वापानुष्ठानं आधाने यजमानेष्टिषु अग्निहोत्र-हवण्यामपिऽपि केनचित् पात्रेण । भा. १०।२।२७।६६.

● निर्वापावघातादयः पुरोडाशधर्माः । वि. ५।१।८.

● निर्वापादिधर्माः चित्रायागे चतुर्थपञ्चमयोर्हविषोः सारस्वतयोर्मध्ये सरस्वत्याः प्रथमं ततः सरस्वतः, 'प्र णो देवी' इति स्त्रीदेवताया याज्याऽनुवाक्ययोः प्रथम होम-काण्डे पाठात् । 'पीपिवांसं सरस्वत.' इति पुंदेवतायाः पश्चात् पाठात् । वि. ५।१।७. ● निर्वापादिधर्माणां व्यवस्थितविषयता । सा च दृष्टार्थेषु प्रत्यक्षेण अदृष्टार्थेषु श्रुत्या । उत्पवनादयः आज्यस्यैव धर्माः न व्रीहिधर्माः, अवघातादयो व्रीहीणामेव धर्माः नाज्यस्येति । के. ३।१।४।७–१०.

● निर्वापालम्भन्यायः । आलम्भनिर्वापन्यायः द्रष्टव्यः । यदि विशेषणमिष्यते ततो दार्शपौर्णमासिक-निर्वापालम्भन्यायेन कर्तव्यतावचनेन लिङ्गेन विशेष्यम् । तद्धि अकर्माङ्गभूतेभ्यो द्रव्यदेवेभ्यः ( मन्त्रेभ्यः ) निवृत्तम्, अत एव विशेषणम् । ( 'आग्नेय्या आग्नीध्र-मुपतिष्ठते' इत्यादौ । वा. ३।२।८।२१ पृ. ७७५.

● निर्वापोत्तरं अध्वर्युणा प्रचरणीहोमादयः अग्नी-षोमीयात् प्राकृतनाः सौमिकाः पदार्थाः आदौ न कर्तव्याः, किन्तु आदौ पैष्टिकाः प्रोक्षणादयः अर्थक्रमात् प्राकृतनाः कर्तव्याः, ततः सौमिकाः । के. ५।१।१३।२५–२६.

● निर्वापकाले 'अग्नये जुष्टं' इति यजमानस्य मन्त्रोच्चारणं नु देवतोद्देशेन त्यज्यमानद्रव्यसंकल्पनात् यथेष्ट-विनियोज्यत्वलक्षण-स्वत्वनिवृत्तिरूपत्यागात्मकयागार्थम् । सुधातात्पर्यम्. पृ. १५३४.

■ निर्वापन्यायः । निर्वापमन्त्रन्यायः । दर्शपूर्णमासयोः निर्वाप–बर्हिर्लवन–वेदिस्तरण–आज्यग्रहणेषु प्रतिनिर्वा-पादि तत्तन्मन्त्रस्यावृत्तिः ॥

निर्वपणलवनस्तरणाऽऽज्यग्रहणेषु चैकद्रव्यवत् प्रयोजनैकत्वात् । ११।४।१४।४७॥

भाष्यम्— दर्शपूर्णमासयोः, चतुरो मुष्टीन्निर्वपति इति । तस्य मन्त्रः 'देवस्य त्वा' इति । तत्रैव च दर्भाणां लवनमन्त्रः 'बर्हिर्देवसदनं दामि' इति । तथा स्तरणमन्त्रः 'ऊर्णाम्रदसं त्वा स्तृणामि' इति । आज्यग्रहणमन्त्रः, 'धामनामासि' इति । तेषु संदेहः किं मन्त्रस्य सकृत्प्रयोगः, अथवा प्रतिमुष्टि प्रतिलवनं प्रतिस्तरणं प्रति-ग्रहणं च आवृत्तिरिति । किं प्राप्तम् ? निर्वपणलवन-स्तरणाज्यग्रहणेषु चैकद्रव्यवत् प्रयोजनैकत्वात् । निर्वपणा-दिषु एकद्रव्यवत् स्यात्, सकृत्प्रयोग इत्यर्थः । कुतः ? प्रयोजनैकत्वात् । सर्वत्र एकं प्रयोजनम् । निर्वपणे तावत् हविष्यता आपादनम् । लवने वेदिस्तरणयोग्यस्य बर्हिष उत्पादनम्, स्तरणे वेद्याच्छादनम् । आज्यग्रहणे यागयोग्यस्य आज्यस्योपादानम् । यावच्च प्रयोजनं तत् चिकीर्षितम्, तदर्थो मन्त्र इत्युक्तम् ।

द्रव्यान्तरवद्वा स्यात्, तत्संस्कारात् । ४८ ॥

भाष्यम्— द्रव्यान्तरवत् वा स्यात्, नैकद्रव्यवत् । भेदः आवृत्तिरित्यर्थः । कुतः ? तत्संस्कारात् । ये व्रीहय एकेन मुष्टिना निरुप्यन्ते ते संस्कृताः । संनिपत्योपकारित्वात् निर्वापस्य । द्वितीयो मुष्टिरपि अन्यान् व्रीहीन् संस्करोति । तत्र यदि मन्त्रो न प्रयुज्येत, मन्त्रकृतेन संस्कारेण तेषां वर्जनं स्यात् । एवं सर्वत्र । तस्मादावृत्तिर्मन्त्रस्यावृत्तिः ।

सोम— पूर्वस्य प्रत्युदाहरणमात्रत्वेन पूर्वतरशेषत्वात् तेन संगतिः । सूत्रार्थस्तु— निर्वपणादिषु एकद्रव्य-कावघातवत् सकृत् प्रयोगः स्यात् चतुर्मुष्टिनिर्वापादेः एकप्रयोजनतया युगपत् चिकीर्षितत्वात् इति ।

वि— ' निर्वापादिषु तन्मन्त्रः सकृद् भेदेन वा–, ऽग्निमः । द्रव्यकर्मैक्यतो, भेदः संस्कारस्य पृथक्त्वतः ॥'

भाट्ट— दर्शपूर्णमासयोश्चतुर्मुष्टिपरिमितस्य विहित-निर्वापस्य 'देवस्य त्वा' इत्यादिर्मन्त्रः । तथा 'अनुप्रा-गुग्रान् मुष्टीन् लुनाति' इति विहितस्य लवनस्य 'बर्हि-र्देवसदनं दामि' इति । तथा 'त्रिधातु पञ्चधातु वा वेदिं स्तृणाति' इति विहितस्य स्तरणस्य 'ऊर्णाम्रदसं त्वा स्तृणामि' इति । 'चतुर्जुह्वां गृह्णाति' इति विहितस्य आज्यग्रहणस्य 'शुक्रं त्वा शुक्रायाम्' इति मन्त्रः समाम्नातः । ते किं प्रतिमुष्ट्यादि निर्वापाद्यावृत्तौ आव-र्तन्ते, न वा इति चिन्तायाम्, न तावदत्र निर्वापादि-भेदः संख्यायाः मुष्ट्यादिद्वारेणैव प्रतीतेः, अभ्यासमात्रं तु निर्वापादेः । अतश्च अभ्यासमात्रे आवृत्तिः । इति प्राप्ते, पुरुषगतौ संस्कार्यद्रव्यस्यैकत्वात् ते एव [illegible] व्रीहयः प्रतिप्रहारमुपकल्प्यन्ते, अतस्तत्र सकृदेव मुष्टौ मन्त्रः । प्रकृते तु संस्कार्यद्रव्यभेदात् सत्यपि निर्वापादि-कर्मैक्ये प्रत्यभ्यासं मन्त्रभेदः । न च निर्वपणलवना-ज्यग्रहणादिषु संस्कार्यभेदेऽपि स्तरणस्य द्वितीयया वेदिसंस्कारार्थत्वात् बर्हिषस्तृतीया च तत्र गुणभूतत्वेन कथं संस्कार्यभेदः । शतपथब्राह्मणे 'बर्हिः स्तृणाति' इति विधौ बर्हिषोऽपि स्तरणसंस्कार्यत्वावगतेः । बर्हिषः 'बर्हिषि हवींष्यासादयति' इति वचनेन हविरासादने उपयुक्त-त्वाच्च । यत्तु 'वेद्यां हवींष्यासादयति' इति वचनम्, तत् वेदेरपि परम्परया हविराधारत्वात् नानुपपन्नम् । न च वेदिबर्हिषोर्विकल्पाशङ्का, 'वेदिरसि बर्हिषे त्वा स्वाहा' इति मन्त्रवर्णेन वेदेः बर्हिर्धारत्वस्य अवगमेन विकल्पाभावकल्पनायाधाराविधानकल्पनानुपपत्तेः । अत एव त्रिधातु पञ्चधातु वा इत्यत्र बर्हिष एव संस्कार्यता । वेदिमिति सप्तम्यर्थे । अस्तु वा संयोगपृथक्त्वात् स्तरणस्य बर्हिःसंस्कारकत्ववत् वेदिसंस्कारकत्वमपि, वेदिबर्हिषोश्च परस्परसंस्कारे परस्परगुणत्वस्यापि सत्त्वात्, विकल्पा-संभवेन 'वेद्यां हवींष्यासादयति' इत्यस्य परम्परासंबन्धा-नुवादकत्वम् । वेदेर्गुणत्वाच्च 'वेदिरसि' इति मन्त्रवर्ण-स्योपपत्तिः । संस्कार्यत्वाच्च 'योषा वै वेदिः तामस्मा-करोति' इति स्तरणार्थवादस्यापि उपपत्तिः । सर्वथा बर्हिषोऽपि संस्कार्यत्वादस्ति स्तरणेऽपि संस्कार्यभेदः । न च प्रत्यभ्यासं संस्कार्यभेदेऽपि सकृत्पठितमन्त्रजन्यस्मृतेर-विच्छेदात् अभ्यासमन्त्रवत् अनावृत्त्यापत्तिः । उक्तमन्त्रेषु सर्वत्र युष्मच्छब्दसंयुक्ताद्विश्रवणेन लिङ्गाद्यादृष्टनाडया अनूद्यमानस्य युष्मदर्थविषयनिर्वापादि–प्रकाशनार्थत्वेन मन्त्रविधानादेः, तादृशस्मृत्या युष्मदर्थविषयीभूत-निर्वापादिविषयसंस्काराजननात् अगत्या मन्त्रावृत्तिरेव । एवं च स्तरणे बर्हिषो गुणत्वेऽपि मन्त्रस्य विशेषणी-भूतयुष्मदर्थभूतधातुप्रकाशनार्थत्वेन विनियोगात् मन्त्रा-वृत्तिरित्यपि शक्यं वक्तुम् ।

मण्डन— 'निर्वापादौ पृथक्त्वम् ।' १५.

शंकर— 'प्रतिमुष्टि च निर्वापे ।' स मन्त्रः । १५.

● स्वापादनिर्देशस्य आत्मन एव कण्डूजनितविच-लितक्षेपनिवृत्तिद्वारा संस्कार्यत्वात् तस्य चैकत्वेन निर्वाप-न्यायानुपपत्तेः । भाट्ट. ११।४।१६.

● निर्वापबर्हिर्लवनवेदिस्तरणाज्यग्रहणेषु प्रतिनिर्वापादि तत्तन्मन्त्रस्यावृत्तिः दर्शपूर्णमासयोः । के. ११।४।१४।४४.

● निर्वापमन्त्रे 'अग्नये जुष्टम्' इत्यत्र सौर्यादिविकृती 'सूर्याय जुष्टम्' 'इन्द्राग्निभ्यां जुष्टम्' इत्यूहः कर्तव्यः, कर्मसमवेतदेवताप्रकाशकत्वात् । वि. ९।१।१३. ● निर्वाप-मन्त्रे ऐन्द्राग्नैकादशकपाले ऐन्द्राग्नपदस्योहः । के. ९।१।१। १–८, ● निर्वापमन्त्रे निर्वेदिणते सदैवतावदोहः । ९।३। ११–८,● निर्वापमन्त्रे 'देवस्य त्वा' इत्यादौ ऐन्द्राग्नादि-विकृतावपि सवितृ–अश्वि–पूषन्पदेषु नोहः किंतु तत्र अविकृत एव मन्त्रः । ९।१।११।३६–३७, ● निर्वाप-मन्त्रे आग्रयणेष्टौ विश्वदेवस्योहः । ९।३।१।१–८.

● निर्वापमन्त्रार्थः । देवस्य सवितुः प्रसवे– देवेन सवित्रा यजमानेन प्रसूते उदिते वा सवितरि । अश्विनो र्बाहुभ्यां परिग्रहमभिप्रेत्य यजमानयोर्दम्पत्योर्बाहुभ्याम् । अश्विनौ हि वै अग्न्याधेये अध्वर्यू, अश्विनं वै वा तज्ज्योतिरग्न्याधेये । तद्बाहू इति स्वौ बाहू स्वरदितौ । देवानामध्वर्यू अश्विनौ. एतौ बाहू इति । पूषण [illegible] यजमानमेव मन्यते पुष्णाते. । भा. ११।११।३७.

● निर्वापमन्त्रार्थः । 'निर्वापेण अग्नये सेवनार्ह यथा भवति तथा त्वां करोमि' इति । सु. ९ १५२६.

* निर्वापमन्त्रन्यायः। निर्वापन्यायः द्रष्टव्यः। के. ११।४।१४. * यदा तु एककाले एव एकानेकाङ्गविषयं कण्डूयनम्, तदा स्मृत्यविच्छेदात् ( मन्त्रस्य ) अनावृत्तिः। न च तदाऽपि लाघवयुक्तत्वात् निर्वापमन्त्रन्यायेन ( ११।४।१४।४७–४८ ) कालद्वयभेदेन आवृत्तिः, अङ्गानामुपयुक्तत्वाभावेन आर्थक्यकार्यत्वात् व्यापदेन तन्निर्देशानुपपत्तेः। भाट्ट. ११।४।१६.

निर्वापमन्त्रस्थोऽग्निशब्दः समवेतवचनो विकृतौ ऊहितव्यः॥ इदमधिकरणं 'ऊहः अग्निशब्दस्य विकृतौ निर्वापमन्त्रे' ( मीको. भागः ३ पृ.१२२५–२६ ) इत्यत्र द्रष्टव्यम्।

* निर्वापवेलायां 'एतस्यै दास्यामि' इत्येतावन्मात्रं संकल्प्य त्यागः केवलः क्रियते न यागः। वा. ३।४।१४। ४१ पृ. ९८३.

* निर्विकल्पकं ज्ञानम्। प्रकारताविशेष्यताऽऽदिविषयतारहितं ज्ञानं निर्विकल्पकम्। तत् विशेषणविशेष्यभावानवगाहिघटघटत्वादिविषयकम्। इन्द्रियसंयोगानन्तरं अविविक्तसामान्यव्यक्तिभागस्य व्यक्तिमात्रगोचरज्ञानस्य भावमानत्वात्। "तत्र प्रत्यक्षम्" 'किञ्चिदिदमिति' इति प्रतीतेः, 'अश्वोऽयम् न तथा पूर्वं प्रतीतः' इति प्रतीतेश्च" इति केचित्। विशिष्टज्ञानरूपसविकल्पकस्य विशेषणज्ञानं विना उत्पत्त्यसंभवात् अनुमानगम्यं इत्यन्ये। विशेष्यविशेषणेन्द्रियसंनिकर्षस्य विशिष्टज्ञानहेतुतया विशेषणज्ञानस्य विशिष्टज्ञाने न हेतुत्वम् इति केचित्। तत् सिद्धं घटत्वनीलपीतादिनानाधर्मविषयकं निर्विकल्पकम्। मणि. पृ. २०–२१. * निर्विकल्पकेन यत् स्वलक्षणं ग्राह्यार्थरूपं प्रतीयते, तत् विकल्पप्रत्ययस्य परिच्छेद्यं न भवति। आलम्बनं तु भवति इति बौद्धाः। ऋजु. पृ. ४०. * निर्विकल्पकस्य भ्रमप्रमोभयबहिर्भूतत्वमेव आकरे व्यक्तम्। अस्तु वा तस्यापि प्रमात्वम्। मणि. पृ. ११.

निर्विमर्शा हि भीरवः इति न्यायः। भीरवः भयशीलाः पुमांसो निर्विमर्शाः निर्विचाराः भवन्ति परिणाममविचार्य कार्यं कुर्वन्ति इति भावः। साहस्री. ७२०.

नहि सामान्यशास्त्रस्य विशेषविषयत्वमिदानीं कल्प्यम् 'निर्विशेषं न सामान्यम्' इति न्यायेन विशेषविषयत्वस्यापि क्लृप्तत्वात्। सोम. १।३।९ पृ. २३.

* निर्व्यापारस्य कर्मत्वायोगात्। सु. पृ. ५५७. * निर्व्यापारस्य प्रयोज्यत्वायोगात्। पृ. ५६३.

* निलीयतेः दर्शनाभावानुकूलक्रिया अर्थः। मणि. पृ. १४०.

* निवर्तना निषेधः प्रतिषेधः इत्येकोऽर्थः। तत्र नञो निवर्तनायां शक्तिरुक्ता तद्भूताधिकरणवार्तिके 'विधायकैरसंयुक्तो नहि नञ् प्रतिषेधकः।' पृ. १०८। 'विधिना युज्यते यत्र न हन्यात् न पिबेदिति। ३१४। तत्राभावार्थता नैव स्वयं पुंसो रुणद्धि हि। ३१५।' इति। अत्र नञो निवर्तनायां शक्तिरुक्ता। नञ्प्रक्रिया तु ( न सुरां पिबेत् इति नञ्विवरणपरे वार्तिके १।३।२।७ पृ. २१२–२१३ ) 'प्रतिषेधविधिपरो हि विधायकः' इत्यत्र 'प्रत्ययार्थविलक्षणशक्तिमेवमनञ्' इत्यन्ते ग्रन्थे ( वा. पृ. २१२।८–१० ) विधायकपदेन लिङ् एव प्रतिषेधार्थता इत्यपि पक्ष उक्तः। वाद. पृ. ७८.

* निवर्तनात्वं भावः मते निवृत्तिजनकव्यापारत्वादि रूपं भिन्नं बोध्यम्। रहस्य. पृ. १७.

निवातस्थितदीपन्यायः। यथा निवातस्थले स्थापितो दीपो निश्चलो भवति, तथा शमप्राप्तं चित्तमपि निश्चलं भवतीत्यर्थः। उक्तं च सांख्यसुधायाम्– 'निर्विकल्पः समाधिः कालानिवातस्थितदीपवत्' इति। श्रीमद्भगवद्गीतायामपि 'यथा दीपो निवातस्थो नेङ्गते सोपमा स्मृता। योगिनो यतचित्तस्य युञ्जतो योगमात्मनः॥' इति ( भगी. ६।१९ )। साहस्री. ६२७.

* निवारणारूपा शब्दभावना 'प्रतिषेधाख्यशब्दभावनानिरूपणम्' इति विन्दौ द्रष्टव्या। के.

निषिद्धाशनवानत्वं वाचनिकमेव, न स्नानः॥ सामिधेन्युत्तरं पठ्यमानानां निषिद्धामपि अर्गलमिन्धनार्थत्वात् संतानविधि. प्रवृत्ता कार्यपरया च तथापि प्रवर्तते। सामिधेनीनां स्वरूपे स्वल्पानन्यानर्थक्यात् अग्निसमिन्धनद्वारा दार्शिकपूर्वसाधनत्वस्य उद्देश्यताऽप-

च्छेदकत्वाच्च । अत एव 'इयं वा इदं सर्वं छन्दस्कृतं चाछन्दस्कृतं च तेन सर्वेणाग्निं स्थापाति' इति श्रुत्या ऋचामनृचां चैकधर्मावच्छिन्नत्वं बोध्यते । तेन यथेषु प्रोक्षणमिव निविन्स्वपि संतानः स्यात् । इति प्राप्ते, कर्मैकनिमित्ताया: प्रवृत्तेः इह अप्रवृत्तेः एकप्रकरणे कार्यावरत्वाभावात् 'सामिधेनीभिरिष्ट्वा निविद्भिरुपतिष्ठेत्' इति शर्वमेदअस्मात्, मुख्यत्वे वा वृहदादिभ्यश्छन्दस्- गुणभेदेन रथंतरबृहतोरिव स्तुतिवैलक्षण्येन धर्मभेदात्, 'ताशा एतस्यानि समस्याभरयेत् अथ चस्वार्येव चत्वारि' इत्येवं प्रतिनियतनिर्देशेन धर्मभेदविधानाच्च न निविदां संतानः । संकर्ष. ४।२।४.

* निविदां सामिधेन्युत्तरं पठ्यमानानां संतानो न कार्यः । संकर्ष. ४।२।४.

* निवीतं आत्मार्थातिथ्यादिमनुष्यविषये कर्मणि । के. ३।४।१.

§ निवीतमिति मनुष्यधर्मः, शब्दस्य तत्प्र- धानत्वात् ।३।४।१।१॥

'निवीतं मनुष्याणाम्' इति दर्शपूर्णमासप्रकरणगतं वाक्यम् । 'निवीतं इति' निवीतं मनुष्याणां इति मनुष्य- धर्मः स्यात् । शब्दस्य तत्प्रकाशकस्य तत्प्रधानत्वात् मनुष्यप्रधानत्वात् । सूत्रदशोपवीतास्वकरय वा वस्त्रास्वकस्य वा निवीतं कण्ठसंबिन्नतया धारणं मनुष्याणां कर्मणि उपकारकं विधीयते । इति पूर्वः पक्षः ।

अपदेशो वा,ऽर्थस्य विद्यमानत्वात् । २ ॥

'निवीतं मनुष्याणाम्' इति मनुष्यधर्मत्वेन विधि- इति पूर्वपक्ष सूत्रेण प्राप्त वाशब्देन व्यावर्तयन् सिद्धान्त- माह । अपदेशः ज्ञायमानस्य वचनमिदं अनुवादः, न विधिः । अर्थस्य मनुष्याणां धर्मेषु निवीतस्य विद्य मानत्वात् लोकसिद्धत्वात् ।

विधिस्त्वपूर्वत्वात् स्यात् । ३॥

'निवीतं मनुष्याणाम्' इत्ययं नार्थवादः किन्तु विधिः । अपूर्वत्वात् सत् नियमेन निवीतस्यैवेति नियमो विधीयते । अनुवादः पूर्ववान् भवति, अयं तु न पूर्ववान् । पूर्वं निवीतं न विहितम् । अपूर्वत्वात् विधिः स्यात् इति पुनः पूर्वपक्षः ।

स प्रायात् कर्मधर्मः स्यात् । ४ ॥

'निवीतं मनुष्यधर्मः' अयं विधिर्भवतु, परन्तु न मनुष्यधर्मः, किन्तु कर्मधर्मः स्यात् । प्रायात् । प्रकृत्यैव कर्मप्रायेषु धर्मेषु उच्यमानेषु एतदभिधीयते । तस्मात् विधिः सन् कर्मधर्मः दर्शपूर्णमासधर्मः इति अन्यः पक्षः ।

वाक्यशेषात् । ५ ॥

'निवीतं मनुष्यधर्मः' इत्यस्य वाक्यशेषः आध्वर्यवं इति समाख्या । तस्मात् कर्मधर्मत्वेऽपि अध्वर्युणा निवीतं कर्तव्यम् । आध्वर्यवं इति वाक्यशेषात् । इति अपरः पक्षः ।

तत्प्रकरणे यत्, तत्संयुक्तमविप्रतिषेधात् । ६॥

तत्प्रकरणे तयोः दर्शपूर्णमासयोः प्रकरणे यत् मनुष्य- धर्मत्वेन संभवति अन्वाहार्यकर्मादि, तत्संयुक्तं तेन कर्मणा संयुक्तं निवीतं स्यात् । एवं प्रकरणेन वाक्येन च अवि- प्रतिषेधात् प्रतिषेधाभावात् उपपन्नम् । इति अन्यः पक्षः ।

तत्प्रधाने वा, तुल्यवत्प्रसंख्यानादितरस्य तदर्थ- त्वात् । ७ ॥

'निवीतं मनुष्याणाम्' इति न प्रकरणे निविशते, किन्तु तत्प्रधाने मनुष्यप्रधाने कर्मणि निवीतं स्यात् । तुल्यवत् । यतिः स्वार्थे । तुल्यं प्रसंख्यानात् आम्नानात् । 'उपवीतं देवानाम्' इति दैवे कर्मणि प्रकृते दर्शपूर्ण- मासयोः उपवीतं विदधाति, 'प्राचीनावीतं पितृणाम्' इति पितृप्रधाने कर्मणि प्राचीनावीतं विदधाति, 'निवीतं मनुष्याणाम्' इत्यपि मनुष्यप्रधाने आतिथ्यादौ कर्मणि निवीतं विधास्यति । इतरस्य मनुष्यग्रहणस्य तदर्थत्वात् निवीतसंबन्धार्थत्वात् तेनैव सह एकवाक्यता भविष्यति न प्रकृतेन । तस्मात् प्रकरणं बाधित्वा आतिथ्ये निविशते निवीतम् । 'इतरस्य निवीतवाक्यस्य अतिथिपूजादि- रूपमनुष्यप्रधानकर्मार्थत्वेन पूर्ववाक्यवद्वचनात्' इति कुतू- हलम् । 'इतरस्य प्राचीनावीतस्य उपवीतस्य च तदर्थ- त्वात् पितृदेवप्रधानदेवदेवत्यकर्मार्थत्वात् निवीतस्यापि मनुष्य- देवत्यकर्मार्थत्वं इति पत्नूरिरुद्राचार्यौ । इतरस्य मनुष्या- णामिति पदस्य तदर्थत्वात् प्रकरणादिनिर्देशमनुप-

कर्मप्रधानार्थत्वात् इति सुबोधिनी ।

**अर्थवादो वा, प्रकरणात् । ८ ॥**

वाशब्दः 'निवीतं मनुष्याणाम्' इत्यत्र विधिपक्षं व्यावर्तयति । निवीतवाक्यम् 'उपव्ययते' इत्यस्य विधेः अर्थवादः । प्रकरणात् दार्शपूर्णमासिकोपव्यानविध्यर्थवादत्वे सत्येव प्रकरणानुग्रहात् । अप्रकरणात् इति वा छेदः । अप्रकरणं बुद्धौ अपरिवृत्तिः । आतिथ्यादिकर्मणः अत्र श्रुत्यादिप्रमाणषट्कान्यतमेन बुद्धौ अनारोहात् इत्यर्थः ।

**विधिना चैकवाक्यत्वात् । ९ ॥**

'निवीतं मनुष्याणाम्' इति न विधिः । 'उपव्ययते देवलक्ष्ममेव तत् कुरुते' इत्यनेन विधिना एकवाक्यत्वात् । निवीतं अयोग्यं देवकर्मणि, मनुष्याणां हि तत् । प्राचीनावीतं पितृणाम्, न देवानां कर्मणि । उपवीतं देवकर्मणि योग्यम्, तस्मात् उपव्यातव्यम् । इति वाक्यार्थः । निवीतप्राचीनावीतयोरनुवादः । तस्मात् निवीतवाक्यं उपवीतविधेरर्थवादः इति सिद्धान्तः । के.

* निवीतं केचित् मध्यवेणिकाबन्धं स्मरन्ति केचित् पुनः परिकरबन्धम् । तत्र मध्यवेणिकाबन्धो मुखादुत्थम ▪ प्राप्नोति, परिकरबन्धस्तु सर्वकर्मसु अप्रमत्ताकरत्वात् प्राप्तः । वा. ३।४।१।२. * 'निवीतं मनुष्याणाम्' इत्यत्र प्रतीयमानं निवीतं वासोविषयम्, न तु त्रिवृत्सूत्रविषयम् । वाससस्तु च निवीतं लौकिकत्वेन प्राप्तम् । वि. ३।४।१, * 'निवीतं मनुष्याणां प्राचीनावीतं पितृणामुपवीतं देवानाम्' इदं निवीतं प्राचीनावीतं च उपवीतार्थवादः न तु उत्कृष्य विधिः । ३।४।१, * निवीतं श्येने ऋत्विजां सर्वेषां विहितम् 'निवीता ऋत्विजः प्रचरन्ति' । १०।४।१. * निवीतं हि मनुष्याः प्रायशः स्वार्थं कुर्वन्ति । भा. ३।४।१।२, * 'निवीता ऋत्विजः प्रचरन्ति' इति ऋत्विग्विशेषाभावात्, सर्वेषां च संनिधानात्, सर्वे ऋत्विजो निवीता भवन्ति श्येने । ११।१।३।२६. ▪ निवीतेन उपदिष्टेन अतिदिष्टस्य उपवीतस्य समुच्चयः श्येने । वि. १०।४।१.

▪ निवीताधिकरणम् । दर्शपूर्णमासप्रकरणे श्रुतं निवीतप्राचीनावीतवाक्यं उपवीतविधेरर्थवादः ॥

**निवीतमिति मनुष्यधर्मः, शब्दस्य तत्प्रधानत्वात् । ३।४।१।१॥**

भाष्यम्— दर्शपूर्णमासयोराम्नातम् 'निवीतं मनुष्याणाम्, प्राचीनावीतं पितृणाम्, उपवीतं देवानाम्, उपव्ययते देवलक्ष्ममेव तत् कुरुते' इति । 'निवीतं मनुष्याणाम्' इत्यत्र संदेहः किमयं विधिः, उतार्थवादः इति । यदा विधिः, तदा किमयं पुरुषधर्मः, उत कर्मधर्मः ? अथ यत् प्रकरणे मनुष्याणाम्, तत्र विधिः, उत मनुष्यप्रधाने कर्मणि विधीयते इति । किं प्राप्तम् ? विधिः मनुष्यधर्मश्चेति । यदि विधिः, एवमपूर्वमर्थं विदधत् अर्थवान् भवति, इतरथा अर्थवादमात्रमनर्थकम् । विधिश्चेत् पुरुषधर्मः । 'निवीतं मनुष्याणाम्' इति पुरुषप्रधानो निर्देशः । कथमवगम्यते ? नात्र मनुष्या विधीयन्ते । मनुष्याणां निवीतं विधीयते । न चाविहितमङ्गं भवति । यदि मनुष्या अपि विधीयेरन्, भिद्येत वाक्यं । तस्मान्निवीतं मनुष्याणामुपकारकम् । ननु प्रकरणात् दर्शपूर्णमासयोरुपकारकम्, प्रकरणाद्धि वाक्यं बलवत्तरम् । अपि च गुणभूतेषु मनुष्येषु कारकसंबन्धस्य विवक्षितत्वात् तृतीया भवेत् । षष्ठी चेयं संबन्धलक्षणा । तत्र गुणभूतेषु मनुष्येषु मनुष्यग्रहणमेव कर्तव्यं स्यात् । मनुष्यैरेव यत् क्रियमाणं क्रियेत । मनुष्यप्रधानपक्षे तु कर्तव्यम् ।

वा— स एव (प्रासङ्गिकानन्तरचिन्ताद्वयेन भग्नगतिशङ्कानिरासार्थप्रासङ्गिकत्वात् यः प्रकृतो बुद्धिस्थीकृतः सः 'स एव' इत्युक्तः । शुद्धमनुष्यातिथ्यादिपक्षयोर्वा प्रकरणात् उत्कर्षात् पक्षान्तरेषु च अनुत्कर्षात् उत्कर्षानुत्कर्षेऽप्येव 'स एव' इत्यनेनोक्तम्) श्रुत्यादिमितस्य प्रकरणेन सह विरोधाविरोधविचारः । तत्र 'निवीतं मनुष्याणाम्' इत्यत्रैते पक्षा भवन्ति, किमयं शुद्धमनुष्यधर्मः कर्मयुक्तमनुष्यधर्मः अथवा शुद्धकर्मधर्मः, अथवा प्रकरणे यन्मनुष्यप्रधानं कर्म अन्वाहार्यपचनादि, तस्य धर्मः, उतान्यप्रकरणे या मनुष्यपूजाऽऽतिथ्यात्मिका, तस्यां निवेशः इति । यौ तु विध्यर्थवादपक्षौ, तौ शेषलक्षणे अनौपयिकौ प्रमाणलक्षणविषयत्वात् विधिवन्निगदार्थवादाधिकरणे च निर्णीतत्वादिह नैवोपन्यसनीयौ । यस्तु

भाष्यकारेणोपन्यासः कृतः, स कृत्वाचिन्तान्यायेनेति द्रष्टव्यम्। नहि विधित्वमनभ्युपेत्य मनुष्यधर्मत्वपक्ष उपपद्यते इति। विधिरिति कृत्वा प्रथमं प्रस्तुत्य पश्चाद् लक्षणानुरूपं विचार्य अन्ते पूर्वव्यवस्थितमेव अर्थवादत्व मुपसंहरिष्यति। परेष्वपि अधिकरणेषु एतत्प्रकारमवं योजयितव्यम्। तत्र 'विधिर्वा स्यादपूर्वत्वाद्वादमात्रं ह्यनर्थकम्' इत्यनेनैव तावद्विधिः। अहीनाद्यधिकरणन्यायेन च षष्ठीश्रुत्या मनुष्यधर्मः। तेषां स्वत्वेन तत्प्रतीयते, न मनुष्यास्तदङ्गत्वेन। गुणविभक्तिनिर्देशाभावात्। अर्थादेव च तत्प्राप्तौ सत्यां नैव मनुष्यग्रहणं क्रियेत। कृतं चैतत्। अतोऽपि मनुष्यधर्म इत्यवगम्यताम्।

अपदेशो वाऽर्थस्य विद्यमानत्वात्॥ २॥

भाष्यम्— अपदेश इति ज्ञायमानस्य वचनम्। न एव न विधिः, अनुवाद एव। कुतः? अर्थस्य विद्यमानत्वात्। प्राप्त एवार्थः, यन्निवीतं मनुष्याणाम्। निवीतं हि मनुष्याः प्रायशः स्वार्थं कुर्वन्ति। तस्मादनुवादः।

वा— निवीतं केचित् गलवेष्टिकाबन्धं स्मरन्ति। केचित्पुनः परिकरबन्धम्। तत्र गलवेष्टिकाबन्धो युद्धादन्यत्र न प्राप्नोति। परिकरबन्धस्तु सर्वकर्मसु अन्यप्रकारत्वात् प्राप्त इति तदाश्रयणेनानुवादमाह। स तु किंप्रयोजन इत्युत्तरत्र वक्ष्यते।

विधिस्त्वपूर्वत्वात् स्यात्॥ ३॥

भाष्यम्— विधिरेव भवेत्, तथा प्रयोजनवान्। इतरथा वादमात्रमनर्थकम्। पूर्ववाननुवादो भवति। अयं त्वपूर्वः, यन्निवीतेन नियन्तव्यमिति।

वा— विधिरेवायम्। कुतः? पूर्ववत्त्वात् हि अनुवादो भवेत् अत्यन्तप्राप्तस्यानर्थकः। न चायं अत्यन्तप्राप्तः। तेन विनाऽपि अन्यप्रकारायाः सम्भवात्। कण्ठबन्धः पुनः प्रायेण अप्राप्त एवेत्यस्ति नियमविधेरवकाशः।

स प्रायात् कर्मधर्मः स्यात्॥ ४॥

भाष्यम्— यदुक्तं विधिरिति, एतद् गृह्यते। यत्तु मनुष्यधर्म इति, तन्नानुमन्यामहे। कर्मधर्मोऽयं प्रकरणात्। प्रकृत्यैव हि कर्मप्रायेषु धर्मेषूच्यमानेषु एतदभिधीयते। तस्मात् कर्मधर्मः।

वा— सति विधित्वे कर्मधर्मप्रायप्रदेशाम्नानात् कथं भावार्थत्वात् कर्मधर्मः।

वाक्यशेषत्वात्॥ ५॥

भाष्यम्— निवीतं मनुष्याणामित्यस्य वाक्यशेषः समाख्या, आध्वर्यवमिति। यदि दर्शपूर्णमासयोः शेषः ततोऽध्वर्युणा कर्तव्यम्। तत्र समाख्या अनुग्रहीष्यते।

वा— द्वेधा संभवे तादृशी प्रमाणगतिराश्रयणीया, या प्रमाणान्तरं न बाधते। यजुर्वेदाम्नानाच्च निवीतादेः आध्वर्यवसमाख्योपपन्नं वाक्यम्। तत्र यदि कर्मधर्मोऽयम्, ततः कर्तृविशेषापेक्षायां सत्यां समाख्यया अध्वर्युनियमात् समाख्या अर्थवती भविष्यति। मनुष्यधर्माणां तु न समाख्या नियामिकेति वक्ष्यामः। तत्राऽसौ बाध्येत। इतरथा अनुग्रहीष्यते। तस्मादपि कर्मधर्मः।

तत्प्रकरणे यत्, तत्संयुक्तमविप्रतिषेधात्॥ ६॥

भाष्यम्— उच्यते। प्रकरणात् समाख्यानाच्च कर्मधर्मो विज्ञायते। वाक्यात् मनुष्यधर्मः। तस्माद्बाधमर्हति। नेति ब्रूमः। प्रकरणे एवाभिधीयमानस्य मनुष्यप्रधानता अवकल्पिष्यते। कथम्? यत् दर्शपूर्णमासयोर्मनुष्यप्रधानम्, तत्र निवेक्ष्यते अन्वाहार्यकर्मणि। प्रकरणं चैवमनुग्रहीष्यते, वाक्यं च।

वा— प्रथमं तावत् मनुष्यधर्मत्वकीर्तनेन कर्मधर्मत्वं निराकरोति। तथाहि सूत्रे सूचितः पक्षः परिगृह्यते। श्रुत्या हि प्रकरणसमाख्ये बाधित्वा मनुष्यधर्म एव प्राप्नोति। उच्यते। सर्वानुग्रहार्थमयं पक्षोऽस्तु। मनुष्याणामिति सम्बन्धकर्मव्यतिरेकजनिता षष्ठी न निवीतं गृह्णाति। तदपि न प्रकरणात् अन्वाहार्यदानादि प्रतीयते नान्यत्। अत एव वाक्यार्थः 'यदिह मनुष्याणां कर्म, तत्र निवीतव्यम्' इति।

तत्प्रधाने वा, तुल्यवत्प्रसंख्यानादितरस्य तदर्थत्वात्॥ ७॥

भाष्यम्— नैतदस्ति, प्रकरणे निवेशः इति। मनुष्यप्रधाने कर्मणि निवीतं स्यादातिथ्ये। कुतः? तुल्यवत्प्रसंख्यानात्। तुल्यानि चैतानि प्रसंख्यायन्ते। यत्तावत् 'उपवीतं देवमनुष्याणाम्' इति, तत् प्रकृतयोर्दर्शपूर्णमासयोरुपवीतं विदधाति। यत्, प्राचीनावीतं

पितॄणामिति, तत्, पितृप्रधाने कर्मणि प्राचीनावीतं विदधाति । यदप्येतत्, निवीतं मनुष्याणामिति, तदपि आतिथ्ये निरपेक्षं विदधाति । कथं गम्यते मनुष्यप्रधाने विदधातीति, मनुष्याणामिति षष्ठ्यन्तेन संबन्धात्, मनुष्याणामेव प्राप्नोति, न मनुष्यप्रधाने । उच्यते । मनुष्याणां कल्प्यमाने फलं कल्पनीयम् । मनुष्यप्रधाने पुनः षष्ठी भविष्यति, संबन्धश्चैवमवकल्पिष्यते, फलं चैवं न कल्पनीयम् । तदुक्तम्, तथेषु वाक्यभेदः स्यादिति । न च मनुष्यप्रधानेन सह एकवाक्यता प्राप्तम्, पुनः प्रकरणेन दर्शपूर्णमासाभ्यामेकवाक्यता वा स्यादिति । नहि द्वौ संबन्धौ एकस्मिन् वाक्ये विधीयेते । भिद्येत हि तथा वाक्यम् । इतरस्य मनुष्यग्रहणस्य निवीतसंबन्धार्थत्वात् तेनैव सहैकवाक्यता भविष्यति प्रत्यक्षेण शब्देन । तदेकवाक्यतया चार्थवत्त्वे सति न प्रकृतेनैकवाक्यता अवकल्पते । तस्मात् प्रकरणं बाधित्वा आतिथ्ये निवेक्ष्यते इति ।

वा— प्रकरणरहितमनुष्यप्रधानो वा स्यात् । कुतः ?
'मुख्यश्चेद् प्रकरणं दृश्यतेऽस्मिन्निविधिरये । तस्मात्तत्प्रधाने स्यात् पितृदेवप्रधानवत् ॥' यथैव 'उपवीतं देवानाम्' 'प्राचीनावीतं पितॄणाम्' इति च परस्परनिरपेक्षदेवपितृप्रधानकर्मणोर्विधिः, एवं तद्वदुक्तम् श्रुतेर्मनुष्याणामित्यपि तत्प्रधानकर्म प्रत्येष्यामः । कथं गम्यते इति पृष्टे मनुष्याणामिति षष्ठ्यन्तेन संबन्धात्— इत्येतावति उत्तरे दत्ते मनुष्याणामेव प्राप्नोति इति पुनश्चोदयति । अथवा समस्त एव नैकः प्रश्नः । सत्यमेव प्राप्नोति । फलकल्पनाप्रसङ्गगौरवात्तु परित्यज्यते । तस्मात् नदीतर्पणव्यतिरेकादेव षष्ठी । तत्संबद्धस्य निवीतस्य नार्थवद्फलकल्पना भविष्यति । मनुष्यग्रहणं च तत्प्रधानकर्मप्रतिपत्त्यर्थमिति नानुपात्तसंबन्धापत्तिः । न च अस्मिन् सति प्रकृतैकवाक्यता घटते ।

अर्थवादो वा, प्रकरणात् । ८ ॥

भाष्यम्— नैतदस्ति, विधिः, स च मनुष्यप्रधाने कर्मणीति । मनुष्याणामिति मनुष्यसंबन्धोऽत्र श्रूयते, न मनुष्यप्रधानेन कर्मणा संबन्धः । मनुष्यप्रधाने च सति फलं कल्पनीयम् । आतिथ्यकर्मणा तु अनिर्दिष्टेन अप्रकृतेन अनुमेयेन संबध्येत । तत्र को दोषः ? प्रकरणाद्धि उत्कृष्येत संबध्यमानम् । कथं तर्हि इति चेत् ? अर्थवाद एषः । स प्रकृतं स्तुवन् प्रकरणे संभविष्यति, विधिः सन् उत्कृष्येत । तस्मान्न विधिर्मनुष्यप्रधाने कर्मणीति ।

वा— सर्वथा नात्र एकोऽपि पक्षो निर्दोषः । प्रकरणसंबन्धे वाक्यसंबन्धाभावात्, अध्याहार्यविधिसंबन्धे वाक्यभेदात् प्रकरणस्य च विशेषकत्वानुपपत्तेः आतिथ्यादिसंबन्धोऽपि अत्यन्तनिर्मूल एव । षड्भिरपि श्रुत्यादिभिरसंभवात् मनुष्यसंबन्धेन तदनुमीयते, तच्च न युक्तम्, यस्मात् अपि षष्ठ्याः निवीतपदसंबन्धिव्यतिरेकजनितत्वप्रतीतेः । नहि अनुपात्तसंबन्धिव्यतिरेके ( अनुपात्ताः संबन्धिनो येषां संबन्धव्यतिरेकाणाम्, तैः इति विग्रहः ) विभक्तयः उपपद्यन्ते । तस्मात् मनुष्यार्थमेव प्राप्नोति । तथापि च प्रकरणभङ्गादयाप्यफलकल्पनाप्रसङ्गः । सति च शास्त्रान्तरे न युक्तं तदाश्रयणम् । अस्ति च औदुम्बराधिकरणसिद्धमर्थवादत्वं गतिः ।

विधिना चैकवाक्यत्वात् । ९ ॥

भाष्यम्— इतश्च न विधिः । कुतः ? विधिनैकवाक्यत्वात् 'उपव्ययते देवलक्ष्ममेव तत्कुरुते' इत्येष विधिः । अनेनास्य सह एकवाक्यता भवति । यदीतरोऽपि विधिः स्यात् वाक्यं भिद्येत । नहि विधेर्विधेश्च एकवाक्यता भवति, वचनव्यक्तिभेदात् । तदेकवाक्यतारूपं बाध्येत । किमेकवाक्यतारूपम् ? निवीतं मनुष्याणामिति प्राप्तानुवादः । प्राप्तस्य किमर्थेन पुनर्वचनम् ? उपवीतस्तुत्यर्थेन । कथमुपवीतस्तुतिः ? निवीतमपीदं देवकर्मणि दर्शपूर्णमासयोः, मनुष्याणां हि तत् । तथा प्राचीनावीतं पितॄणाम्, न देवकर्मणि । उपवीतं तु तत्र योग्यम् । तस्मादुपव्यातव्यमिति । यथा यादृशोऽस्य वेषस्तादृशो नटानाम्, यादृशो देवदत्तस्य तादृशो ब्राह्मणानामिति देवदत्तवेषप्रशंसार्थमितरवेषसंकीर्तनम् । एवमिहापि उपव्यानस्तुत्यर्थेन निवीतसंकीर्तनम् । नास्यात्र विधायकः शब्दो निवीतं मनुष्याणां कर्तव्यमिति । आतिथ्यप्रयोगवचनं तस्य कर्तव्यताविधायकमिति चेत्, नैतदेवम् । स्तुत्यर्थेन अर्थवत्त्वे सति न शक्यं कल्प-

सप्रधानकस्य हन्तकारानिध्यादेरपसिद्धिप्रसङ्गात् । अत एव न फलकल्पनाऽपि ' इति तत् वाक्यभेदस्य अभ्युपगमेऽपि उपपादितत्वात्, सनकादिपरत्वस्य तेन च आतिथ्याद्युपस्थितेः अर्थमिनरितत्वाभावेन चतुष्प्रयत्वात्, प्रकरणसमाख्ययोरपि प्रमाणाभावात्, कृत्वाचिन्तात्वेन च सिद्धान्तनियमस्य अनावश्यकत्वात् अस्य पक्षस्य वार्तिककृता क्लिष्टत्वाभिधानाच्च उपेक्षितम् । अतः प्राकरणिकमनुष्यप्रधानकर्माङ्गत्वमेव सिद्धान्तः । वस्तुतस्तु नाय विधिः वाक्यभेदापत्तेः, अपितु उपवीतविधिरेव शेषः प्राचीनावीतवत् । यथा च निवीतप्राचीनावीते स्वस्वप्रधानकर्मरूपेण मनुष्यपितृसंबन्धिनी उदिते, तथा उपवीतमपि देवसंबन्धितया, अतस्तदेव दर्शपूर्णमासयोः प्रशस्तमिति स्तुतिः । अथवा ते तत्तत्र वक्ष्यमाणवचनात् प्राप्यते, अत्र तु देवत्वादुपवीतमेवेति स्तुतिः ।

मण्डन— ' स्तुतिर्निवीत विहितोपवीतेः । '

शंकर— ' निवीतं न विधेयं स्यात् ।' १. 'विधौ नत् प्रधानके । ' २.

● निवीतोपवीतयोः समुच्चयः कर्मणि । के. १०।४।१।१–२ वर्णक १.

● निवीतपादः तृतीयाध्यायस्य चतुर्थः पादः । कु. ३।४।७।८.

● निवीतसंकीर्तनं निवीतवाक्ये उपवीतस्तुत्यर्थम् । के. ३।४।१।८.

● निवृत्तिः निषेधविधिः । सु. पृ. ४, ● निवृत्तिर्वा, कर्मभेदात् । ( ८।२।१४।२४ ) यथा निकृतो यवस्य एव भविष्यति ( न गोदोहनम् ) तथा अत्रापि भवति 'निवृत्तिर्वा' इति । वा. ३।६।१।१० पृ १०१७.

● निवृत्तेः निषेधकार्यायाः प्रवृत्तिपूर्वकत्वनियमः । सु. पृ. १०४१.

● निवेशन. संगमनः इति मन्त्रः गार्हपत्योपस्थाने वचनात् विनियोक्तव्यः, न तु लिङ्गात् इन्द्रोपस्थाने । ऐन्द्रीन्यायः । भा. ३।२।२।३–४.

● निशब्द. गर्गस्य वचसा यथा प्रकर्षेण रक्षं निरस्तं रक्षमित्युच्यते । भा. ३।१।१३।४२.

मी. को. २९९

● निशीष्टिन्यायः । निशिपक्षे अमावास्याकर्मेण प्रयङ्गसिद्धिः ॥

निशियज्ञे प्राकृतस्याप(प्र)वृत्तिः स्यात् प्रत्यक्षशिष्टत्वात् । १२।२।५।१४ ॥

भाष्यम्— इदं श्रूयते 'अग्नये रक्षोघ्नेऽष्टाकपालं निर्वपेत्, यो रक्षोभ्यो बिभीयात् ' इति । पुनरपि तत्रैव ' अमावास्यायां निशि यजेत ' इति । तस्मिन् किं अमावास्यातन्त्रं प्रवर्तते, उत नेति चिन्तायाम्, पक्षः परिगृह्यते, निशियज्ञे प्राकृतस्य अप(प्र)वृत्तिरिति । अस्मिन् निशियज्ञे प्राकृतस्य अमावास्यातन्त्रस्य अप(प्र)वृत्तिः न प्रवर्तते । कुतः ? प्रत्यक्षशिष्टत्वात्, प्रत्यक्षशिष्टा इयमिष्टिः, 'अग्नये रक्षोघ्नेऽष्टाकपालं निर्वपेत्, यो रक्षोभ्यो बिभीयात्' इति । किमतः ? ततः एवं विज्ञायते स्वतन्त्रा इयम् एषा न कस्यचित् कर्मणस्तन्त्रमध्ये । यथा पशुपुरोडाशः 'अग्नीषोमीयस्य वपया प्रचर्य, अग्नीषोमीयं पशुपुरोडाशमेकादशकपालं निर्वपति' इति । यथा च वैष्णवो वैश्वदेवस्य 'यद्यग्नोऽपगृह्णीयात् यच्चास्य आश्लिष्येत, तद् विष्णवे उरुक्रमायावद्येत्' इति । ( अवदानकाले स्रुवः अधोमार्गे यत् अवगृहितं दत्तम् स्यात् यत् किंचित् मध्ये आश्लिष्टं स्यात्, तत् विष्णवे इत्यादि इत्यर्थः ) ननु 'अमावास्यायाम्' इति अमावास्यस्य कर्मणो मध्ये श्रुता, न अमावास्याशब्दः कर्मवचनः, किं तर्हि ? कालवचनः । काले श्रुतिः कर्मणि लक्षणा, श्रुतिश्च लक्षणातो ज्यायसी । न चेत् कस्यचित् कर्मणो मध्ये श्रूयते, कस्य तन्त्रं ग्रहीष्यते । तस्मात् स्वतन्त्रा ।

कालवाक्यभेदाच्च तन्त्रभेदः स्यात् । १५ ॥

भाष्यम्— कालभेदात् वाक्यभेदाच्च । कालभेदस्तावत् अमावास्यायां रात्रौ निशियज्ञः, प्रतिपदि अहनि आमावास्यम् । कालभेदेन वैगुण्यात् नामावास्यातन्त्रं निशियज्ञस्य तन्त्रतामर्हति । कथं तर्हि पशुकाः प्रयाजाः क्रियन्ते पशौ क्रियमाणाः सन्तः, तत्र पुरोडाशस्योपकुर्वन्ति । उच्यते स्यात्. 'न श्रुतस्य गुणानुग्रहार्थेनावृत्तिरस्ति' इति । पुनः अनुत्पन्नप्रमाणत्वात् । तस्मात् अवैगुण्याय स्वतन्त्रं कर्तव्यम् । वाक्यभेदाच्च । भिन्नदेशे

चैते वाक्ये 'अमावास्यायां यजेत' 'अमावास्यायां निशि यजेत' इति। एकं दर्शपूर्णमासप्रकरणे, एकं काम्यासु इष्टिषु। किमतः ? यदि समानदेशे स्याताम्, ततः 'अमावास्यायां यजेत' इति योऽसौ आमावास्ये कर्मणि काल उपात्तः, तस्मिन्नेव च निशियागः चोदित, इति गम्येत। [illegible] अमावास्यातन्त्रमध्ये एव विहितः स्यात्। अथ पुनर्देशभेदे सति यथा 'अमावास्यायां यजेत' इत्युपात्तः कालः, तथैवेयन्येन चोद्यते, एवमिहापि। न च तुल्यकालत्वे प्रसङ्गो भवति यथा नैकृत्याः इष्टयः दर्शपूर्णमासाभ्यां तुल्यकाला अपि सत्यः, न दार्शपौर्णमासिकं तन्त्रमुपजीवन्ति। तस्मात् तन्त्रभेदः।

वेद्युद्धननवत्तु विप्रतिषेधात् तदेव स्यात्॥ १६॥

भाष्यम्— किमेष एवोत्सर्गः, सर्वं तन्त्रं भिन्नम् ? [illegible] तद्धि। वेद्युद्धननं यत्र च स्यात् तदेव यत् दर्शार्थे वेदेरुद्धननं कृतम्, तेन उद्धतायाः पुनरुद्धनने नहि किञ्चित् कार्यमस्ति, केवलं पुनरुक्तं भवेत्। [illegible] च उपेतमनुसृत्य पुनरुपेतुमशक्यम्। उपेयमाने च पिष्टपेषणवत् आकिञ्चित्करं स्यात्। तस्मात् एतदुभयमपि तदेव प्रसज्यते।

तन्त्रमध्ये विधानाद् वा तत्तन्त्रा, सवनीयवत्॥ १७॥

भाष्यम्— तत्तन्त्रा वा निशीष्टिः स्यात्। अमावास्यातन्त्रा इयम्, न स्वतन्त्रा। कुतः ? तन्त्रमध्ये विधानात्। अमावास्यातन्त्रमध्ये इयं विहिता 'अमावास्यायां निशि निर्वपेत्' इति। ननु कालवचनोऽयं अमावास्याशब्दो न कर्मवचन इत्युक्तम्। सत्यं कालवचनः, स तु कालतन्त्रमध्ये। तत्र विधीयमाना तन्मध्ये विहिता भवति सवनीयवत्। तद्यथा सवनीयाः पुरोडाशाः न तावत् पशुकर्म उद्दिश्य विधीयन्ते, अथ च पशुतन्त्रमध्ये विहिता भवन्ति। यस्मिन् स्थाने विहिताः तत् स्थानं पशुतन्त्रमध्ये इति। इयमपि तन्त्रमध्ये पतिता चेत् सवनीयवदेव न स्वतन्त्रा भवितुमर्हति।

वैगुण्यादिध्माबर्हिर्न साधयेदग्न्यन्वाधानं च यदि देवताऽर्थम्॥ १८॥

भाष्यम्— प्रकारः, निवैष एवोत्सर्गः सर्वममावास्यातन्त्रं निशीष्ट्यर्थं साधयतीति, न खलु। इध्माबर्हिर्न साधयेत्। कुतः ? वैगुण्यात्। इध्मः अग्निसमिन्धनार्थः स प्रतिपदि आहृतः अमावास्यायां निशि वर्तमानस्य निशियागस्य अग्निसमिन्धनं न साधयेत्। बर्हिरपि वेदिस्तरणार्थम्। ते यदि प्रसज्येयाताम्, विगुणो निशियागः स्यात्। तस्मात् भेदेन ते कर्तव्ये। अग्न्यन्वाधानं च यदि देवताऽर्थम्। यदि देवतापरिग्रहार्थं अग्न्यन्वाधानम्, तदपि भेदेन कर्तव्यम्। प्राकृतेन अग्न्यन्वाधानेन अमावास्यादेवताः परिगृहीताः, न च रक्षोघ्नोऽग्निः (रक्षोहाऽग्निः)। तत्परिग्रहार्थमपि अग्न्यन्वाधानार्थम्, ततः प्राकृतेनैव चरितार्थत्वात् भेदेन [illegible] कर्तव्यम्। देवतापरिग्रहार्थता वाक्यशेषे श्रूयते 'ममाग्ने वर्चो विहवेष्वस्तु' इति पूर्वमग्निं परिगृह्णाति, देवता एव तत्पूर्वेद्युः परिगृहीताः, श्वोभूते यजते इति।

सोम— सवनीयपशौ सवनीयपुरोडाशाना च एकभौमिकप्रयोगवचनपरिगृहीतत्वात् पाशुकस्य पुरोडाशेषु प्रसङ्गसंभवेऽपि भिन्नप्रयोगवचनग्राह्यनिशीष्टेः न दार्शिकप्रसङ्ग इत्युचितैव संगतिः। ननु आधानानन्तरं यदा पौर्णमास्याः पूर्वमेव अमावास्या प्राप्नोति, तदा तस्यां न दर्शतन्त्रप्रवृत्तिः, दर्शपूर्णमासयोः पूर्णमासोपक्रमत्वेन तत्र दर्शे कर्मानुष्ठानानुपपत्तेः। ततश्च तस्य निशीष्ट्यनुष्ठानसंभवात् निशीष्टिकालस्य अमावास्यातन्त्रनियमः अनुपपन्नः। न च प्रकृत्यारम्भे निमित्तादिवशात् आपतन्त्या विकृतेरपि अननुष्ठानं इत्यत्र प्रमाणमस्ति, येन निशीष्ट्यनुष्ठानं दर्शपूर्णमासोपक्रमात् पूर्वं न संभवेत्, तथा सति सोमात् पूर्वं सांनाय्याग्नीषोमीयस्यप्रकृत्यनुष्ठानाभावादेव तद्विकाराणामननुष्ठाने सति सोमात्पूर्वमेव तेषामनुष्ठानसिद्धेः तत्सिद्ध्यर्थस्य 'सांनाय्याग्नीषोमीयविकारा ऊर्ध्वं सोमात् प्रकृतिवत्' इति षाष्ठमिकाधिकरणस्य (६।४।८।२५) वैयर्थ्यप्रसङ्गात्। इति चेन्न, एवमपि दर्शपूर्णमासोपक्रमानन्तरं यदा निशीष्ट्यनुष्ठानम्, तदा तन्त्रमध्यपातनियमावश्यंभावः। न च एवं एकस्या एव निशीष्टेः दर्शपूर्णमासोपक्रमात् पूर्वं क्रियमाणायाः तन्त्रान्तरम्, तदनन्तरं क्रियमाणाया प्रसङ्गमिति वैरूप्यं स्यात् इति

वाच्यम् । नित्यायाः प्रकृतेः तन्निष्ठाया एव कालस्य नैमित्तिकविकृतिसंनिपाते सति प्रसक्तित्वस्य वक्ष्यमाणत्वेन तत्कालवैरूप्यस्य अदोषत्वात् इत्याहुः ।

चि— ' निशियज्ञे दर्शतन्त्रं नोतान्येव, न दर्शने । तन्त्रमध्ये विधानाद्वा, दस्त्वर्थात् तद्विधानतः ॥ '

भाट्ट— काम्येष्टिकाण्डे ' अग्नये रक्षोघ्ने पुरोडाशमष्टाकपालं निर्वपेत् यो रक्षोभ्यो बिभीयात् ' इति याग विहाय तस्य ' अमावास्यायां निशि यजेत ' इत्यनेन कालो विहितः । कालद्वयविशिष्टप्रयोगविधानाच्च न वाक्यभेदः । तदिह निशीष्टौ दार्शिकं तन्त्रं प्रसज्यते न वेति चिन्तायाम्, पशुपुरोडाशवत् तन्त्रमध्ये पाठाभावान्न प्रसङ्गः । नहि अत्र प्रकरणमस्ति, येन तन्त्रमध्यपाठः शङ्क्येत । नाप्यमावास्याशब्दस्य कर्मवचनत्वाद्दार्शिकतन्त्रमध्यपाठः, तस्य ' अमावास्यायामपराह्णे ' इतिवत् कालवाचित्वेन कर्मलक्षणानुपपत्तेः । न च शब्देन तन्त्रमध्यपाताननुगमेऽपि दर्शप्रयोगस्य नियमेन दिवाऽऽरब्धत्वात् रात्रौ क्रियमाणाया अस्यास्तन्त्रमध्यपाताऽवश्यंभावः, अपराह्णपर्वसंनिपातेऽपि रात्रिकालीनामावास्यायामन्वाधानपूर्वदिने क्रियमाणाया अस्यास्तन्त्रमध्यपातावश्यंभावनियमाभावात् । अतोऽवश्यं साङ्गाया एव प्रयोगविधानात्स्याः प्रसङ्गः । इति प्राप्ते, तन्त्रमध्यपातनियमाभावेऽपि ' सर्वत्र प्रकृतौ विकृतौ वा अङ्गविधिषु अन्यत उपकारालाभे अङ्गानि कुर्यात् ' इत्येवमेव न्यायत्वेन विविक्तस्यात् निशीष्टावपि यदैव तन्त्रमध्यपातस्तदैव प्रसङ्गः । न च एवमपि निशीष्टौ पूर्वकृतान्वाधानादिपदार्थप्रसङ्गेऽपि करिष्यमाणप्रयाजादिजन्योपकारस्य अन्यतः अलाभाद्दर्शे न प्रसङ्गो वैपरीत्यापत्तेरिति वाच्यम् । निशीष्टयर्थं क्रियमाणप्रयाजादिजन्यापूर्वाणां तत्परमापूर्वेणैव तद्ब्राह्मणसर्पणान्ते उत्पत्तेन नाशासंभवाभावेन वैपरीत्यकल्पनाऽनुपपत्तेः । अतो दर्शप्रयोगविधानादवश्यानुष्ठाप्यानां तेषामेवोपजीवनेन निशीष्टिप्रयोगविधिसिद्धत्वेन दर्शब्राह्मणतर्पणान्त एव तत्परमापूर्वोत्पत्तिरनुमन्यते । अतश्च युक्त एव तत्र कालान्वितोऽपि प्रसङ्गः । आवश्यकत्वात्त्वग्निप्रणयनव्रतोपायनयान्वाधानादेरो भवतोऽपि । यानि तु इध्माबर्हिःप्रभृतीनि अवश्यप्रसङ्गानि, तानि त्वावर्तन्त एव ।

ननैवं विकृत्यन्तराणामपि सौर्यादीनां दर्शान्वाधानस्य प्रागेव कृतत्वेन तत्तन्त्रमध्यपातावश्यंभावात् प्रसङ्गापत्तिः, सौर्यादिप्रधानेषु आतिदेशिकस्यापि प्रातःकालस्य सत्त्वेन अङ्गगुणविरोधन्यायेन बाधानुपपत्तेः दर्शान्वाधाने एव तद्वाचनौचित्येन विकृतिकरणोत्तरमेव दर्शपूर्णमासारम्भात् प्रसङ्गानापत्तेः । न च एवमपि यत्र शाकमेधादौ आग्नेय्यैव अग्निप्रणयनं कृतम्, तत्रैतेष्ट्यादौ प्रयाजादिप्रसङ्गापत्तिः, तत्र पूर्वेष्टिप्रयोगस्य समाप्तावपि वचनात् नेष्टिमध्येष्विपि उत्तरेष्टिकरणेऽपि प्रसङ्गानापत्तेः । अत एव तादृशस्थले उत्तरेष्टिषु प्रणयनस्य बाधः एव । व्रतोपायनं तु तत्र सर्वत्र प्रत्येकमेव, इतरथा व्रतविसर्गस्य समन्त्रकस्य विहितस्य सर्वान्ते करणेन आद्येष्टिपरमापूर्वस्यापि सर्वान्ते चोत्पत्तौ प्रयाजादिजन्यापूर्वाणां तत्त्वेन उत्तरेष्टिषु सेवा प्रसङ्गापत्तेः । कल्पसूत्रकारास्तु आदौ व्रतोपायनमन्ते च व्रतविसर्गं कुर्वन्ति ।

मण्डन— ' निशीष्टिर्दर्शतन्त्रा स्यात् सान्निपत्यादिकं विना ।'

शंकर— ' निशीष्टिश्च प्रसङ्गिनी । '

* **निशीष्टयर्थस्य** आतिदेशिकस्य प्रयाजादेः दर्शार्थेन औपदेशिकेन प्रयाजादिना प्रसङ्गसाधः । ( दार्शिकप्रयाजाद्यनुष्ठानात् निशीष्टयर्थप्रयाजाद्यनुष्ठानं पृथक्कर्तव्यमित्यर्थः ) । बालः पृ. १३१.

*निशीष्टिन्यायोऽप्यत्र नास्ति । तत्र हि प्रक्रान्ते दर्शे कतिपयैः पदार्थैः कृते, सति निमित्ते नैमित्तिकीष्टिरापतति । नाऽसौ तन्त्रमध्ये पतत्येव । टुप्. १२।२।१२।१०.

* निशियज्ञस्य गरुदृष्टत्वं तस्य अमावास्यातन्त्रमध्ये प्रसङ्गसिद्धिः निशि क्रियमाणस्य दर्शकर्मतन्त्रमध्यपातित्वात् । ततश्च व्रतोपायन–अग्निप्रणयन–वेदुद्धननादीनां प्रसङ्गः । यानि तु इध्माबर्हिःप्रभृतीनि असंस्कृतप्रसङ्गानि, तानि आवर्तन्ते एव । भाट्ट. १२।२।५.

☞ निशियज्ञे प्राकृतस्याप्रवृत्तिः स्यात्, प्रत्यक्षशिष्टत्वात् । १२।२।५।१४ ॥

' अग्नये रक्षोघ्नेऽष्टाकपालं निर्वपेत् यो रक्षोभ्यो बिभीयात् ' इति ' अमावास्यायां निशि यजेत ' इति च

श्रुतम् । अस्मिन् निशियज्ञे प्राकृतस्य अमावास्यातन्त्रस्य अप्रवृत्तिः प्रवृत्तिर्न स्यात् । प्रत्यक्षशिष्टत्वात् निशियज्ञस्य स्वातन्त्र्येण विधानात् । तस्मात् स्वतन्त्रा निशीष्टिः । इति पूर्वः पक्षः । अपवृत्तिः इति वा पाठः । तत्र अपवृत्तिः निवृत्तिः इत्यर्थात् अप्रवृत्तिः इत्येव तात्पर्यम् । भाष्यपुस्तके तु मूले 'अपवृत्तिः न प्रशस्यते' इति मुद्रितम् । तत्र 'न प्रशस्यते' इत्युक्त्या अप्रवृत्तिः इत्येव पाठः स्पष्टो भवति ।

कालवाक्यभेदाच्च तन्त्रभेदः स्यात् । १५ ॥

कालवाक्यभेदात् अमावास्यातन्त्रात् निशीष्टितन्त्रस्य भेदः स्यात् । कालभेदस्तावत् अमावास्याया रात्रौ निशियज्ञः प्रतिपदि अहनि अमावास्यायागः । वाक्यभेदोऽपि भिन्नदेशे भिन्ने वाक्ये 'अमावास्यायां यजेत' 'अमावास्याया निशि यजेत' इति । तस्मात् तन्त्रभेदः स्यात् ।

वेद्युद्धननव्रतं विप्रतिषेधात् तदेव स्यात् । १६ ॥

यद्यपि अमावास्यायागतन्त्रं निशीष्टितन्त्रं च भिन्नमेव, तथापि वेद्युद्धननं वेद्या उद्धननं व्रतं च तदेव स्यात् । तयोर्न भेदः । पुनः करणे विप्रतिषेधात् । तस्मात् अमावास्याऽर्थे कृतान्यां तान्यां निशीष्टौ प्रवृत्तिसिद्धिः, इतरत्तु सर्वं भिन्नम् । इति पूर्वः पक्षः ।

तन्त्रमध्ये विधानाद्वा तत्तन्त्रा सवनीयवत् । १७ ॥

निशीष्टिः तत्तन्त्रा तस्या अमावास्यायाः तन्त्रमेव तन्त्रं यस्याः सा तत्तन्त्रा स्यात् न स्वतन्त्रा । तन्त्रमध्ये अमावास्यातन्त्रस्य मध्ये निशीष्टेः विधानात् 'अमावास्यायां निशि निर्वपेत्' इति । सवनीयवत् यथा सवनीयाः पुरोडाशाः न पशुधर्मं उद्दिश्य विधीयन्ते, तथापि पशुतन्त्रमध्ये विहिता भवन्ति इति तत्तन्त्रास्ते तद्वत् । तस्मात् निशीष्टिः न पृथक्तन्त्रा । इति सिद्धान्तः ।

वैगुण्यादिध्माबर्हिर्न साधयेदग्न्यन्वाधानं च यदि देवताऽर्थम् । १८ ॥

निशीष्टिः यद्यपि न स्वतन्त्रा किन्तु अमावास्यातन्त्रा, तथापि इध्माबर्हिः न साधयेत् । अमावास्यायागार्थैः प्रतिपदि आहृतः इध्मः अमावास्यायां निशि वर्तमानस्य निशियज्ञस्य अग्निसमिन्धनं न साधयेत् । वेदिस्तरणार्थं बर्हिरप्येवम् । तस्मात्ते भेदेन कर्तव्ये, अन्यथा वैगुण्यात् निशियज्ञस्य वैगुण्यप्रसङ्गात् । अग्न्यन्वाधानं च यदि देवताऽर्थं देवतापरिग्रहार्थं स्यात्, तदा तदपि भेदेनैव कार्यम् । यदि तु अग्न्यन्वाधानं अग्निधारणार्थमेव, ततो न भेदेन कार्यम् । तस्मात् सामान्यतः निशीष्टौ अमावास्यातन्त्रं प्रवर्त्यते । केषुचित्तु अंशेषु इध्माबर्हिरादिषु भेदः इति सिद्धान्तः । के.

• निशियज्ञे सामिधेन्योऽपि सन्ति । संकर्ष. २।४।३.

• निशियज्ञाधिकरणम् । निशीष्टिन्यायः द्रष्टव्यः । के.

• निश्चयश्च 'अयमेव' इति सावधारणोऽनुभवः । ऋजु. पृ. १४. • निश्चयस्य समानप्रकारकस्यैव संशयादिविरोधित्वम् । मणि. पृ. २८.

• निषादस्य धनिकत्वं संभवति । के. ६।१।१३।५२.

• निषादानाम्, कूट (मृगबन्धनयन्त्रम्) इत्यं तेषामेवोपकारकम् । स्वमेव दक्षिणादानाम् । भा. ६।१। १३।५२.

• निषादेष्ट्याम् 'कूटं दक्षिणा' इति विहिते ये पूर्वेण व्यवहरन्ति, तेभ्य एवार्थतत्त्वं शास्त्रा दीयते । के. ६।१।१३।५१.

¶ निषादरथकारयोरपि आर्षेयवरणमस्ति ॥

निषादस्थपते. रथकारस्य च संकरजातित्वेन ऋषिसंततित्वाभावात् नार्षेयवरणम् । इति प्राप्ते, साक्षात् कश्यपतनयस्य त्रैवर्णिकत्वस्याभावात् परम्परा तत्संबन्धे च अविच्छिन्नपारम्परिकतत्तद्वंश्यस्मृतिव्यतिरिक्तप्रमाणाभावात् तस्माच्च तेष्वपि अविशिष्टत्वात् सर्वस्यैव जगतः ऋषिवंश्यतायाः पुराणेषु कथनाच्च स्यादेव तेषामपि आर्षेयवरणम् । संकर्ष. ३।४।६.

• निषादस्थपतिः न त्रैवर्णिकः किन्तु धनिको निषादः । तस्य च तात्कालिकाचार्योपदेशादिना विद्या तेनाच रौद्रयागाधिकारः । के. ६।१।१३।५१–५२.

• निषादस्थपतेरपि आर्षेयवरणम् । सर्वस्यैव जगतः ऋषिवंश्यतायाः पुराणेषु कथनात् । संकर्ष. ३।४।६.

• निषादस्थपतेः रौद्रेष्ट्यामेवाधिकारः, साऽपि लौकिके-

निषादेष्टेश्च गृह्याग्न्यभावादुपेक्षितम्। नहि गृह्यशब्दवाच्यत्वं गृह्योद्दिष्टमिति स्मृत्यस्या अस्यापि गृह्यपदवाच्यत्वम्, अभियुक्तप्रसिद्धया गृह्यपदस्य गृह्यसूत्रोक्तकर्मस्वेव रूढत्वेन योगस्याप्रयोजकत्वात्। इतरथा गृह्यत्वापत्तेः।

मण्डन—'यागं कुर्याल्लौकिकेऽग्नौ निषादः।' ४.

शंकर—'स्थपतीष्टिस्तथैव स्यात्।' तथैव उपनीतिवत् लौकिकेऽग्नौ। ४.

■ निषादस्थपतीष्ट्यादौ आहिताग्नित्वस्य अनतिदेशः। राजन्यादेस्तु कर्तृविशेषणत्वात्, तस्य च प्रकृतौ अग्रहणात् निवृत्तौ अतिदेशः इह एव। भाट्ट. ८।१।४ सू. ८.

■ निषादस्थपतिन्यायः। रौद्रे चरौ निषादजातीयस्य स्थपतेरधिकारः॥

स्थपतिर्निषादः स्याच्छब्दसामर्थ्यात्। ६।१। १३।५१॥

भाष्यम्—'वास्तुमध्ये रौद्रं चरुं निर्वपेत्, यत्र रुद्रः प्रजाः शमयेत्' इत्येतामिष्टिं प्रकृत्य उच्यते 'एतया निषादस्थपतिं याजयेत्' इति। निषादस्थपतिं प्रति संदेहः किं अधिकृतानां अन्यतमः, उत अन्य एवेति। अन्यतमः इति ब्रूमः। स हि समर्थः विद्वत्त्वात् अग्निमत्त्वाच्च। अन्यः अविद्वत्त्वात् अनग्नित्वात् असमर्थः इति। ननु निषादस्थपतिशब्दः तत्र नोपपद्यते। उच्यते। न नोपपद्यते, निषादानां स्थपतिः इति षष्ठीसमासो भविष्यति श्रेष्ठो निषादानाम्। तस्मात् अधिकृताधिकारं प्रत्यक्षमिति। एवं प्राप्ते, ब्रूमः। निषादः एव स्थपतिर्भवितुमर्हति। कस्मात्? शब्दसामर्थ्यात्। निषादं हि निषादशब्दः शक्नोति वदितुं श्रवणेनैव। निषादानां तु स्थपतिं लक्षणया ब्रूयात्। श्रुतिलक्षणाविशये च श्रुतिर्ज्यायसी, न लक्षणा। अथोच्येत, नैष दोषः। निषादशब्दो निषादवचन एव। षष्ठी संबन्धस्य वाचिकेति। तच्च। षष्ठ्यश्रवणात्। नात्र षष्ठीं शृणुमः। आह, लोपसामर्थ्यात् षष्ठ्यर्थोऽवगम्यते इति। सत्यमवगम्यते। न तु लोपेन। केन तर्हि? निषादशब्दलक्षणया। तस्माद् दोषोऽयं प्रत्युक्तम्। समानाधिकरणसमासस्तु बलीयान्। तत्र हि स्वार्थे शब्दो वृत्तो भवति। द्वितीया च विभक्तिः श्रवणेन अभाग्या संबध्यते। तेन द्वितीयानिर्दिष्टो निषादो गम्यते। तत्र षष्ठ्यर्थं कल्पयन् अश्रुतं गृह्णीयात्। तस्मात् निषाद एव स्थपतिः स्यात्।

टुप्—(सिद्धान्तयति—) कर्मधारयोऽयम्, न षष्ठीतत्पुरुषः। (कुतः?) एवं (हि सति) पदद्वयम् (अपि) स्वार्थवृत्तम् (भवति), इतरथा (षष्ठीसमासे) निषादशब्दो लक्षणया स्थपतौ अध्यारोपितः स्यात् (किमिति लक्षणा इत्यत आह—) सामानाधिकरण्यसमासप्रतिपत्त्यर्थम्। (नीलोत्पलसमासेऽपि) उत्पलशब्दस्यापि तदेवाधिकरणम् (प्रतिपाद्यम्) नीलशब्दस्यापि (तदेव) अतः (ऐकाधिकरण्यात् एकार्थीभावलक्षणम्) सामर्थ्यम् (सिध्यति), सामर्थ्याच्च समासः। षष्ठीसमासे च (ऐकाधिकरण्यसिद्ध्यर्थम्) लक्षणा (आश्रयितव्या)। अन्यथा (यदि च निषादशब्देन निषाद एवोच्यते, स्थपतिशब्देन च स्थपतिरेव अर्थान्तरभूत उच्यते, ततः) भिन्नाधिकरणत्वात् सामर्थ्याभावः, सामर्थ्याभावाच्च समासाभावः। तस्मात् (समाससिद्ध्यर्थम्) निषादशब्देन स्थपतिं यावत् गतव्यं इत्येषा लक्षणा। न चात्र षष्ठी विद्यते, अनुपलभ्यमानत्वात्। लुप्ता (षष्ठी विद्यते) इति चेत्, उच्यते। यदि अत्र अश्रवणेन (कारणेन) लोपः (षष्ठ्याः कल्प्यते, ततः) प्रथमादयः (शब्दाः) लुप्ता इति किमिति न कल्प्यते (अश्रवणाविशेषात्)। तस्मात् लोपे नास्ति प्रमाणम्। ननु राजपुरुष इत्यत्रापि राजा चासौ पुरुषश्च इतीदृशो विग्रहः कर्तव्यः। तत्रापि षष्ठी अश्रवणादेव नास्ति। किन्तु स्वस्वामिसंबन्धात् (राजपुरुषयोः, राजशब्दे) षष्ठ्यर्थमध्यारोप्य तदा (षष्ठीसमासवेलायाम्) समासो भवति। राज्ञः पुरुषः इति (विग्रह—) वाक्यं अर्थप्रदर्शनार्थम् (स्वीकरणार्थमिति यावत्)। तस्मात् स्थपतिशब्दे या (द्वितीया—) विभक्तिः, सा इतरत्र (निषादशब्दे) अनुषज्यते (निषादं स्थपतिं इति) सान्निध्यात् (षष्ठ्याः) अश्रवणात्। अथवा समुदायात् (समस्तात् निषादस्थपतिशब्दात्) उत्पन्नत्वात् (द्वितीया विभक्तेः अनुषङ्गेण) उभयत्रापि संबन्धः। ('वस्तु-

चान्यो निषादार्थात् स्थपतिर्लक्षणाभयात् । भवेन्निषाद एवातो स्थपतिः शब्दशक्तितः ॥ ' )

लिङ्गदर्शनाच्च ॥ ५२ ॥

भाष्यम्-- लिङ्गं दृश्यते 'कूटं दक्षिणा' इति निषादस्य द्रव्यं दर्शयति । कूटं हि निषादानामेव उपकारकं नार्यणाम् । एवं स्वमेव तत् निषादानामिति ।

शा-- 'ऐन्द्रं वास्तुमयं चरुं निर्वपेत्' इति प्रकृत्य श्रूयते 'एतया निषादस्थपतिं याजयेत्' इति । तत्र 'पक्षद्वयेऽपि शब्दोऽयं योगादेव प्रवर्तते । तत्र षष्ठीसमासत्वे विदुषः स्यादधिक्रिया ॥ आहिताग्नेश्च, यदि तु कर्मधारय इष्यते । अनाहिताग्नेरप्यस्य प्रसज्येताधिकारिता ॥ तेन षष्ठीसमासोऽयमिति प्राप्तेऽभिधीयते । निषादपदमेवं तु स्थपतौ लक्षणां व्रजेत् ॥ नहि षष्ठी श्रुता, येन तत्संबन्धी विधिर्भवेत् । निषादपदमेवातः षष्ठ्यर्थं लक्षयेदिदम् ॥ कर्मधारयपक्षे तु न काचिदपि लक्षणा । निषाद एव स्थपतिः श्रुत्या प्रतीयते ॥ तेन श्रुतिबलाद्योऽनाहिताग्निश्च सन्नपि । निषाद एव स्थपतिः कर्मण्यत्राधिकारभाक् ॥ '

सोम-- पूर्ववैपरीत्येन प्रत्यवस्थानात् संगतिः । निषादो नाम ब्राह्मणात् शूद्रायामुत्पन्नः । स तु शूद्रधर्मयुक्तः । अत एव आपस्तम्बाचार्यैः 'हविष्कृदाधाव इति शूद्रस्य' इत्यत्र निषाद एव शूद्रशब्देन व्यवहृतः । एवं च शूद्रवाक्यस्य निषिद्धत्वात् अतिक्रान्तनिषेधानामेव याजकत्वं बोध्यम् ।

वि-- 'द्विजः स्थपतिरन्यो वा, द्विजः षष्ठीसमासतः । , कर्मधारयमुख्यत्वान्निषादो वेदमाप्नुयात् ॥ '

भाट्ट-- 'रौद्रं वास्तुमध्ये चरुं निर्वपेत्' इति प्रकृत्य 'एतया निषादस्थपतिं याजयेत्' इति श्रुतम् । तत्र यद्यपि निषादः स्थपतिर्यस्य इति बहुव्रीहौ पदद्वयेऽपि अन्यपदार्थलक्षणा इति स नाभीष्टः । तथापि निषादानां स्थपतिः इति षष्ठीतत्पुरुषे सम्भवात्, विद्याऽऽक्षेपशक्तिकल्पनानिरपेक्षा कर्मधारयाद्गीकारेण [illegible] एवाश्रीयते । न च तत्रापि पूर्वपदे निषादशब्देऽपि लक्षणा, कारकाभावात् । यद्यपि हि नरत्वावयवार्थयोगेनैव उपपत्तौ न समासे विशिष्टार्थशक्तिकल्पना प्रामाणिकी तथापि कर्मधारये अभेदस्येव षष्ठीतत्पुरुषादावपि स्वस्वामिभावादिभेदसंबन्धस्य संसर्गविधयैव भानोपपत्तेः लक्षणायामनुपपत्त्यभावः । न च नैयायिकवत् अस्माकं नामार्थयोरभेदान्वय एव इत्यत्र प्रमाणमस्ति । राजा पुरुषोऽस्ति इत्यादौ सर्वत्र नामार्थस्य विभक्त्यर्थे, तस्य च आख्यातार्थे अन्वयाङ्गीकारेण परस्परान्वयस्य समासातिरिक्ते क्वापि अप्रसक्तत्वात् । अत समासे एव प्रसक्तस्य तस्य संसर्गविधयैव भानोपपत्तेः न लक्षणा । इति प्राप्ते, समानाधिकरणपदस्थले राजा पुरुषोऽस्ति इत्यादौ क्रियाऽन्वयोत्तर पार्ष्ठिकान्वयस्य अभेदसंबन्धेनैवानुभवात् राज्ञः पुरुषोऽस्ति इत्यादौ व्यधिकरणपदस्थले च भेदसंबन्धेनैव अनुभवात् लाघवेन नामप्रयोज्यतदर्थान्वयबोधस्य अभेदविषयकत्वमेव इति नियमकल्पनात् स्वस्वामिभावादिसंबन्धस्य षष्ठीतत्पुरुषादौ संसर्गविधया भानानुपपत्तेः अवश्य पूर्वपदे स्वार्थसंबन्धिलक्षणामङ्गीकृत्य तस्य उत्तरपदार्थे अभेदेनान्वयः इत्यङ्गीकार्यम् । अत एव नामप्रयोज्यनामार्थविशेष्यकनामार्थप्रकारकाभेदसंसर्गकबोधत्वावच्छिन्नं प्रति एकाधिकरणवृत्तित्वातिरिक्तार्थताऽवच्छेदकनामद्वयसमभिव्याहारस्य तद्भिन्ननामद्वयसमभिव्याहारस्य वा हेतुत्वं इत्यपि बोध्यम् । तेन घटपटौ, नीलघटौ इत्यादौ नाभेदबोध इत्यपि बोध्यम् । न चैवं समासे संबन्धिनः अभेदेन अन्वयात् विग्रहे च राज्ञः पुरुष इत्यत्र षष्ठ्यर्थसंबन्धस्य भेदेनान्वयात् वृत्तिवाक्ययोः भिन्नार्थत्वापत्तेः षष्ठीविधानेन इतरनिवृत्त्यनापत्तौ विधानानुपपत्तिः इति वाच्यम् । एकतरबोधे इतरबोधस्य आवश्यकत्वेन अर्थैक्याभिप्रायात् । अतश्च षष्ठीतत्पुरुषे लक्षणाऽऽपत्तेः निषादश्चासौ स्थपतिश्च इति कर्मधारय एवायम् । तेन तत्तद्विषये विद्यामाक्षिप्य अनाहिताग्नेरपि निषादस्यैवाधिकारः । अत एव 'कूटं दक्षिणा स्वं हि तन्निषादानाम्' इति लिङ्गमपि संगच्छते । तत्र च परप्रयुक्तोपजीवित्वात् आहवनीयाद्यनाक्षेपेऽपि 'यत्र क्वचन होष्यन् स्यात् स पञ्चभूसंस्थे-( मूर्ध-) स्वारान् कृत्वा लौकिकाग्निं प्रतिष्ठापयेत्' इति स्मृतिवचनेन अभ्यन्तरप्रकारे होममात्रोद्देशेन

लौकिकाग्निविधानात् तमेव तदुद्देशे स्थापयित्वा तस्मिन् इष्टिः कर्तव्या इति ध्येयम् ।

मण्डन— ' स्थपतिस्तु निषादः स्यात् । '

शंकर— ' स्थपतेश्च निषादस्य । ' अधिक्रिया रौद्रेष्टौ ।

अत्र ' वास्तुमध्ये रौद्रं चरुम् ' इति भाष्यम् । ' ऐन्द्रं वास्तुमयं चरुम् ' इति शा. । ' वास्तुमय वास्तुशाकधौत-प्रकृतिकम् ' इति सोम. । ' वास्तुशाकः वास्तुकं चन्दनबथुआ ( इति उत्तरापथे ) चन्दनबटवा ( इति दक्षिणापथे ) इति अमरटीकायाम् । ' वास्तुमय रौद्रं चरुम् ' इति, ' वास्तुमध्ये निक्षिप्तप्रकृतिकचरु-प्रतिक्षेप-माह ' इति च विस्तरः ।

• चशब्देन समस्तोक्त इत्यत्र निषादस्थपतिन्यायोऽपि कर्मधारयसमासग्रहणे सूचितः । श्रीकर १।३।१५ प्रमू., • निषादस्थपतिन्यायेन शूद्रस्य औपनिषदब्रह्मवाक्य श्रवणाधिकारोऽस्तीत्याशङ्क्य निराकरोति । १।३।३६ प्रमू. • ' ऊष्माण. ' इत्यत्र निषादस्थपतिन्यायेन कल्प्त-दत्ताहारदृष्ट अपरनिमित्तकल्पेन अनातङ्कत्वस्य बाधकत्व-कल्पनादामैव दीर्घनिर्देशः उपपद्यते । भूतिः. पृ १७०, • ननु सूत्राणामपि पुराणश्रवणादिना ज्ञानोत्पत्तेः निषाद-स्थपतिन्यायेन महावाक्यश्रवणाधिकारमभ्यात् । श्रीकर. १।३।३८ प्रमू. • ननु व्रीहिप्रकरणपठितप्रोक्षणादिविधि, द्रावद्व्रीहौ लक्षणाया अनङ्गीकारात्, पश्चात्तु निषादस्थपतिन्यायेन प्रोक्षणादिविशिष्टव्रीहीणां वाक्यान्तरकल्पनया अपूर्वार्थकत्वकल्पन इत्युक्तं तत्र । भाट्ट. ९।१।१, • व्रीह्यादीनां आनर्थक्यपरिहारार्थं प्रोक्षणादिविशिष्टव्रीहीणामेव कल्पितवाक्यान्तरेण यागार्थ-त्वस्य अपूर्वार्थत्वस्यैव वा बोधोपपत्तौ निषादस्थपतिन्यायेन व्रीहिपदे यत्रादिसाधारण्येन अपूर्वसाधन कल्पनाया प्रमाणाभावत् । ९।१।१.

• निषादस्थपतिपदे तत्पुरुषबहुव्रीह्यपेक्षया लक्षणा-ऽभावलाघवेन कर्मधारय अङ्गीकृत । अङ्गीकृत्य च फलमुक्तं अध्ययनमप्युक्त गौरवं इत्याहु । मणि. पृ १५२, • निषादस्थपतिशब्दस्य षष्ठीतत्पुरुषे कृते त्रैवर्णि-कोऽपि संभवति स्थपतिः । कर्मधारये कृते तु निषाद-जातीयो धनिकः यः । तत्पुरुषाच्च कर्मधारयः प्रबलः । तथा च निषादजातीयस्यैव रौद्रयागाधिकारः । के. ६।१।१३।५१–५२.

• निषिद्धस्य प्रतिप्रसवविधिः, यथा ग्रहणे सूतकेऽपि श्राद्धविधिः ' सार्वकर्मपरित्यागो राहोरन्यत्र सूतके ' इति अयं स्मार्तः । श्रौतोऽपि ' न हिंस्यात् सर्वभूतानि ' इति निषिद्धस्य ' अग्नीषोमीयं पशुमालभेत ' ' वायव्यं श्वेतमालभेत ' इति । बाल. पृ. १६.

• निषिद्धाचरणजन्यवैगुण्यपरिहारार्थम् ' भूर्भुवः स्वः स्वाहेत्याहवनीये जुहुयात् ' । वि. १२।१।५.

• निषिद्धद्रव्यस्य प्रतिनिधित्वाभावः । भा. ६।३।६।२०.

• निषेधः अकर्तव्यप्रतिपादकानर्थः । सु पृ. ८, • निषेध । अननुदितनिषेधप्रयोगः । पृ १३८०, • निषेधः अनृतवदनस्य क्रतुशेषः दर्शपूर्णमासयोः । वि ३।४।८. • निषेधः आर्तिलपवागादेः पयोहोमविषयार्थवादः । अग्नि-होत्रे । भा १०।८।४।७. • निषेध. पर्वर्यस्य अनूचान-व्यतिरिक्तकर्तृके अग्निष्टोमप्रथमप्रयोगे एव । वि ५।१।१७. • निषेधाः अनर्थहेतुकर्मणः सकाशात् पुरुषस्य निवृत्ति-करत्वेन पुरुषार्थानुबन्धिनः । मीन्या. • निषेधेन स्वविषये अनिष्टसाधनत्वाक्षेपः क्रियते । भाट्ट. २।४।८ पृ. २१८, • निषेधस्य अन्यार्थाश्रितस्य, अन्यार्थत्वे ' तदह-र्मौनमैथुने वर्जयेत् ' इति दर्शपूर्णमासप्रकरणाधीतो निषेध उदाहरणम् । सु पृ १२१, • निषेधस्यापि विधिवत् वाक्यार्थत्वा अत्र विषय एव, न तु धात्वर्थस्यैव विषयिणी । पृ २०१, • निषेधस्य प्राप्तविषय स्वनियमः । पृ. १०४१, • निषेधस्य प्राप्त्यपेक्षत्वात् दुर्भगया अपि प्राप्ते निषेधेन अन्यन्तप्राप्तयोग्य दशमाधिकरणपूर्वपक्ष-सूत्रे वक्ष्यते ( १०।८।१।१ ) । पृ. १३१८, • निषेधात् फल निषेध्यानिष्टासंयोगः । पृ. २६४, • क्रत्वर्थपुरुषार्थ-त्वशङ्कयोः द्वयोरपि श्रौतस्य निषेधस्य क्रतुवैगुण्यपरिहार-फलकत्वम् । पृ. १३१५. • निषेधेषु त्रैवर्णिकस्याधि-कारः, न तु स्वर्गकामिनः । वि. ६।२।५. • निषेधेषु निवर्तना वाक्यार्थः । मीन्या.

● निषेधातिक्रमे पुरुषस्य प्रत्यवायः । कल्प्यत्वाद् द्रष्टव्यः । के. ६।२।६।१०–२१.

● निषेधानुमितस्य अभुक्तग्रयोगस्य विरुद्धो निवेशः । संकर्ष. ४।३।१९.

● निषेधानुवादः कार्यान्वितप्रमाणम् । वाल. पृ. ८.

● निषेधफलं प्रदर्शनमात्रेणैव संपद्यते न विधिफलवत् कामनादोषयन्वं अपेक्षते । नहि कश्चित् संपत्स्यमर्थं कामयते । वा. ३।४।६।१७.

● निषेधफलविधिः अर्थवादः 'तस्माद् ब्राह्मणाय नावगुरेत' इति निषेधे 'यो ब्राह्मणायावगुरेत् तं शतेन यातयात्' । तृतीये दोषाधिकरणे । वाल. पृ. ५३.

● निषेधविप्यर्थवादो यथा ऐतरेयब्राह्मणे 'हिरण्यकशिपावासीन आचष्टे' इति होतृकर्तृकस्य कार्यस्य 'पुत्रकामा हाप्याख्यापयेरन्' इति च पुत्रार्थस्य शौनःशेपाख्यानविधेः वाक्यशेषे 'नियोक्तार न विविदुः' 'विशसितारं न विविदुः' इति शामित्रकर्तृलाभोक्त्या 'मध्यमं शतं ददत्, अहमेन विशसिष्यामि' इति च लोभात् प्रवृत्तस्य शामित्रे दोषाभिगतेः निन्दया तन्निषेधः कल्प्यते । यद्यपि यात्र 'न हिंस्यात्' इति सामान्यनिषेधः कर्तिना स्वाधिकारिकः परार्थिकारिकेण सामान्यनिषेधेन कर्तृसामान्यतया अविरोधः स्पृष्टताऽपि प्रकाशितः मध्योऽस्ति । अत एव तृतीये (३।७।१३।२८–२९) 'शमिता च शब्दभेदात्' इत्यधिकरणे वार्तिककृता उक्तम् 'अत एवान्विवेदं निन्दति' इति, तथापि विशेषनिषेधः दोषविशेषार्थत्वेन अर्थवादेन इति । वाल. पृ. ५७.

ﷺ निषेध्यवोधाद्विनिषेध्यवाध इति न्यायः । निषेध्यज्ञानान्निषेध्यस्य बाधो भवति, नान्यथेत्यर्थविषयेऽस्य प्रचार इति संभवितये । साहस्री. ८९३.

● निष्कासः नाम आमिक्षाया. पात्रलिप्तः कियांश्चित् भाग. । आक्षीक्षितः ओदनस्य भागस्य (खरपुडी इति भाषायाम्) । के. ● निष्कास. पात्रलग्नः शेष. । सोम. ७।१।४ ● निष्कासः प्राक्पीदस्य उद्वनीयनिर्वापार्थः ज्योतिष्टोमे । भा. ११।२।१६।६९–६८. ● निष्कास. लेपः । 'वारुण्या निष्कासेन तुषैश्चावभृथमवयन्ति' । वारुणी आमिक्षा । वि. ७।१।८. ● निष्कासः वरुणप्रघासावभृथे, अर्थकर्मणा तस्य गुणभूतस्य संयोगो विज्ञायते । भा. ११।२।१५।६५.

ﷺ निष्कासस्यावभृथे तदेकदेशत्वात् पशुवत् प्रदानविप्रकर्षः स्यात् । ११।२।१५।६३॥

वरुणप्रघासेषु 'वारुण्या निष्कासेन तुषैश्च अवभृथमभ्यवयन्ति' इति श्रूयते । वारुणी वरुणदेवताका आमिक्षा, तस्याः निष्कासः पात्रलिप्तो भागः । एतद्वचनोक्तस्य अवभृथे निष्कासस्य प्रदानविप्रकर्षः स्यात् । आवाहनस्थाने आमिक्षाया एको भागः यथाविधिमवमेपसहितः प्रदत्तः । निष्कासरूपस्य तु भागस्य विप्रकर्षेण समिष्टयजुरूर्ध्वं विहारे एव प्रदानं कर्तव्यम् । अवभृथशब्दस्तु भक्त्या अनुवादमात्रम् । निष्कासस्य तस्या आमिक्षाया एव एकदेशत्वात् । पशुवत् ('वपया प्रातःसवने चरन्ति, पुरोडाशेन माध्यंदिने, अङ्गैस्तृतीयसवने' इति पशोरङ्गानां यथा कालतो विप्रकर्षो भवति तद्वत्) इति पूर्व. पक्षः ।

अपनयो वा प्रसिद्धेनाभिसंयोगात् । ६४ ॥

सिद्धान्तमाह । वाशब्दः पूर्वपक्षव्यावृत्त्यर्थः । निष्कासस्य पूर्वस्मात् कर्मण. सकाशात् अपनय. कर्तव्यः । अवभृथाख्ये अपूर्वे एव कर्मणि निष्कासस्य विनियोगः स्यात् । प्रसिद्धेन अवभृथशब्देन निष्कासस्य अभिसंयोगात् संबन्धात्, तादृशसंबन्धस्य वचनेनोक्तत्वात् । तथा च निष्कासादेः न प्रदानविप्रकर्षः किन्तु कर्मान्तरोपदेशोऽयम् ।

प्रतिपत्तिरिति चेत् । ६५ ॥

पूर्वपक्षी शङ्कते । निष्कासस्य आमिक्षाशेषत्वात् उपयुक्तशेषत्वात् अवभृथयागे प्रतिपत्तिः स्यात्, नार्थकर्म इति चेत् ।

न, कर्मसंयोगात् । ६६ ॥

सिद्धान्ती उत्तरमाह, न प्रतिपत्ति. । कुतः ? कर्मसंयोगात् अर्थकर्मणा हि अस्य गुणभूतस्य निष्कासस्य संयोगात् संयोगविज्ञानात् निष्कासेन इति तृतीयासमर्थ्यात् । तस्मात् कर्मान्तरोपदेशः इति सिद्धान्तः । के.

● निष्कासावभृथाधिकरणम् । अवभृथधर्मक-कर्मान्तरस्य० ( मीको. भाग: ७ पृ. ७०३–७०५ ) इत्यत्र द्रष्टव्यम् । के. ११।२।२५।६३–६६.

☒ निष्कासावभृथन्याय: । अवभृथस्य वरुण-प्रधानगतस्य तुषनिष्कासद्रव्यकत्वम् ॥

द्रव्यादेशे तद्द्रव्य: श्रुतिसंयोगात् पुरोडाश-स्त्वनादेशे तत्प्रकृतित्वात् । ७।३।५।१७ ॥

भाष्यम्— वारुणप्राघासिकोऽवभृथ: सौमिकात् अवभृथात् धर्मान् प्राप्नोतीत्युक्तम् । तत्रेदं चिन्त्यते । किं पुरोडाशद्रव्यकोऽसौ, उत तुषनिष्कासद्रव्यक इति । किं प्राप्तम् ? पुरोडाशद्रव्यक इति । कुत: ? नाम्ना पुरोडाश: प्राप्यते । ननु प्रत्यक्षश्रुतं तुषनिष्कासम् । सत्यं प्रत्यक्षश्रुतम्, न तु शक्यते विधातुम् । अवभृथोऽत्र विधीयते 'अवभृथं यन्ति' इति । यदि तुषनिष्कासं अपर विधीयेत, ततो वाक्यं भिद्येत, अवभृथं यन्ति, तच्च तुषनिष्कासेन इति । तुषनिष्कासवचनमिदानीं किमर्थम् ? अनर्थकम्, संबन्धाभावात् । एवं प्राप्ते, ब्रूम: । द्रव्यादेशे तद्द्रव्य: । द्रव्यादेशे एतस्मिन् 'तुष निष्कासेन अवभृथं यन्ति' इति, तद्द्रव्य: स्यात् तुष-निष्कासद्रव्य: । कुत: ? श्रुतिसंयोगात् । तुषनिष्कास प्रत्यक्षश्रुतम्, पुरोडाशस्तु आनुमानिक: अतिदेशेन प्राप्यते । ननु पुरोडाशोऽपि प्रत्यक्षश्रुतो नाम्ना । यद्यपि प्रत्यक्षश्रुत:, सामान्येन तु प्राप्यते । तुषनिष्कास तु विशेषेण । बाध्यते च सामान्यं विशेषेण । अपि च लक्षणया पुरोडाशो गम्यते, श्रुत्या तुषनिष्कासम् । श्रुति-लक्षणयोश्च श्रुतिर्बलीयसी । तस्मात् तुषनिष्कासद्रव्यक: इति । अथ यदुक्तं न संबध्यते अवभृथेन तुषनिष्कासम्, वाक्यभेदप्रसङ्गादिति । तत्र ब्रूम: । यदि अवभृथं विहाय तुषनिष्कासं विधीयेत ततो वाक्यभेद: स्यात् । तुषनिष्कासद्रव्यकोऽपूर्व: अवभृथश्चोद्यते । तथा सगुण-कर्मविधानमविरुद्धम् । अविधीयमाने च तुषनिष्कासे तद्वचनमनर्थकमेव स्यात् । तस्मात् तुषनिष्कासद्रव्यक: । पुरोडाशस्तु अनादेशे तत्प्रकृतित्वात् । यदि अत्र प्रत्यक्ष-श्रुतं न द्रव्यं स्यात् तत: पुरोडाश: तत्प्रकृतित्वात् स्यात् । अत्र तु प्रत्यक्षश्रुतं तुषनिष्कासम्, तस्मान्न पुरोडाश: ।

शा— 'अपूर्वकर्मविधिनाऽनेकेषामपि चोद-नात् । अन्यथा तुषनिष्कासपदानर्थक्यदोषत: ॥ तद्विशिष्टविधिस्तेन पुरोडाशस्य बाधनम् । श्रुत्या हि तुषनिष्कासं विशेषेण च चोद्यते ॥' अवभृथशब्देन तु गौणेन सर्वावभृथधर्मसाधारणेन च पुरोडाशस्य प्राप्ति:, तस्मात्तस्य बाध: ।

सोम— पूर्वोक्तकर्मान्तरप्रसङ्गात् इदम् । तुष-निष्कासशब्दस्य मुख्यत्वात् विशेषविषयत्वेन निरवकाश त्वात्, गौणेन कर्मान्तरे सावकाशेन अवभृथशब्देन प्राप्तस्य पुरोडाशस्य बाधात् न तस्य द्रव्यत्वम् । सूत्रा-र्थस्तु– द्रव्यस्य तुषनिष्कासस्य आदेशे तदेव द्रव्य प्राह्यं श्रुतिसंयोगात् । द्रव्योपदेशाभावे हि सौमिकावभृथप्रकृति-त्वात् तत: पुरोडाशप्राप्ति: इति ।

वि— 'तत्र द्रव्यं पुरोडाशस्तुषनिष्कासकोऽथवा ।, प्राप्तोऽवभृथशब्देन पुरोडाशोऽतिदेशत: ॥ तुषनिष्कास-योरत्र साक्षाच्छ्रुत्युपदेशत: । अतिदेशप्रापितस्य पुरोडाशस्य बाधनम् ॥'

भाट्ट— अतिदेशोऽपि च न सदीयद्रव्यस्य एक-कपालस्य अतिदेश: । औपदेशिकेन विशेषविहितेन च तुषनिष्कासद्रव्येण लाक्षणिकस्य सामान्यविहितस्य अति-देशप्राप्तस्य द्रव्यस्य बाधात् । ( ७।३।४।१२–१६ इत्यत्रैव एतदन्तर्भूतमत्र )।

मण्डन— 'साक्षाच्छ्रुतं द्रव्यमिह मदेयम् ।'

शंकर— 'तद्द्रव्यं न पुरोडाश: ।'

● अनुपयुक्तकाथयागस्य प्रतिपत्तिकर्मत्वेऽपि निष्का-सावभृथाजिनयागन्यायेन इतिकर्तव्यताऽऽकाङ्क्षायां सोमजन्यशागान्तरवद्द्व्येन अतिदेशोपपत्ते: । कौ. ३।२। १६।२८ पृ. २९७.

● निष्कासशब्द: शेषवचन एव, यत् हानादौ एक तद्ग्नेनोच्यते । मा. ११।२।१६।६७.

● निष्केवल्यं शसति इति शस्त्रं प्रधानकर्म न गुण-कर्म । भा. २।१।५।१३–२९.

● निष्क्रय: परकीयस्य द्रव्यस्य मूल्यार्पणेन आत्म-सात्करणम् । के.

* निष्ठान्ते पुनरुक्तिः भावना । वा. ९।१।२।२.

* निष्पक्वे शिरसि प्रक्षेप्तुं ईषद्विलीनं नवनीतम् । वि. ३।४।७.

* निष्प्रयोजनं सप्रयोजनेन बाध्यते यथा निगदेषु उच्चैस्त्वेन 'उपांशु यजुषा' इति प्राप्तमुपांशुत्वम् । बाल. पृ. १३२.

* निष्फलत्वं काम्यस्य अङ्गवैकल्ये । वि. ६।१।२.

नीरक्षीरन्यायः । यत्र तत्त्वातत्त्वविवेचनं तत्रास्य प्रवृत्तिः । यथा जलदुग्धे संमिश्रिते न प्रतीयेते, तथा सत्यं ब्रह्म, मिथ्यं मिथ्याभूतमज्ञानादि, ते च सम्यङ् मिलिते तादात्म्यं प्राप्ते स्तो न प्रतीयेते । यथा संमिश्रिते नीरक्षीरे हि इदं नीरमिदं क्षीरमिति पृथक्कर्तुं केऽपि पक्षिणो विना हंसं न शक्नुवन्ति, तथा चेदं सत्यमिदमसत्यमिति शातु विवेकतः परमहंसं विना न कोऽपि शक्नोति पण्डित इति भावः । उक्तं च 'क्षीरे नाम जगाद नीरमुभयं क्षयोगमभ्यागतं तुभेदं नितरेतरं चिरतरं मन्त्रविभक्तीकृतम् । येनाशेषविशेषदोषनगरीमासेदुषी मेमुषी सोऽयं नीरवता पुनाति भगवो हंसो द्विजातिमणीः ॥' न्यायस्त्री. १२५.

* नीलमुत्पलम् । कथं नाम मतत्वाम नीलपो नीलमुत्पलमिति । उच्यते । गतति न तु श्रुतिलक्षणः, किन्तु वाक्यलक्षणः । उत्पलशब्दाभिधाने तदपेक्षो नीलशब्दः तेनैकवाक्यतामभ्युपगच्छन् अजहत्स्वार्थवृत्तिः उत्पलविशेषाभिधानपरः उत्पलमात्रः संबन्धमनुवैति । भा. १।१।६।१२ पृ. १८८.

नीलेन्दीवरन्यायः । यथा 'नीलेन्दीवरशङ्कया नयनयोर्बन्धूकबुद्ध्याऽधरे पाणौ पद्मधिया मधूककुसुमभ्रान्त्या तथा गण्डयोः । लीयन्ते कबरीषु बान्धवजनव्यामोहजातस्पृहा दुर्वारा मधुपाः कियन्ति तरुणि स्थानानि रक्षिष्यसि ॥' इति । न्यायस्त्री. २०९.

* 'नीलोत्पलदलश्यामाः चरन्त्यग्रवसोरवः । नीलकौशेयसंवीताः प्रनृत्यन्तीव कादम्बाः ॥' पुरुषकृतः पदसंघातोऽयम् । ('रामाः कौशेयसंवीताः कादम्बा इव शोभनाः' इत्यनयोर्थे न्यायरत्नमालायाम्) । भा. १।१। ७।२४ पृ. १५.

* नीलीरोगग्रस्तेन्द्रियस्य चक्षुरक्ष्यैवेति परैर्दृश्यते, परेण तु नीयमानमुपलभ्य न पश्यतीति ज्ञायते । वा. १।३।४।११ पृ. १४५.

* नीवाराः प्रतिनिधिभूताः व्रीहिभिः समानविधानाः । भा. ३।६।१४।३७–३८. * नीवाराः यदा 'इन्द्राय मरुत्वते नैवारमेकादशकपालं निर्वपेत्' इत्यादौ प्रकृतिद्रव्यत्वेनैव विहिताः, तदा सदनकरणमन्त्रे 'व्रीहीणां मेध' इत्यत्र 'नीवाराणां मेध' इत्यूहः कर्तव्यः । नीवाराणां प्रतिनिधित्वे [redacted] नोहः इति नवमेऽधिकरणे वक्ष्यते । के. ९।३।११।१–२. * नीवाराः व्रीहीणां प्रतिनिधिः । वि. ६।३।११. * नीवारैरपि आग्नेयोऽष्टाकपाल इति इयं चोदना संपादयितुं शक्यते । वा. ६।३।४।२५. * नीवारैः (व्रीहिस्थानीयैः) योऽपि यागं कुर्यात् तेनापि चोदितमेव कृतम् । भा. ६।१।१।१२, * नीवाराणां व्रीहीणां च न प्रकृतिविकारभावः । ३।६। १४।३९. * नीवाराणां व्रीहिप्रतिनिधित्वे सदनकरणमन्त्रे व्रीहिशब्दस्यानूहः । वि. ९।३।९, * नीवारेषु जातितो व्रीहिशब्दार्थत्वाभावेऽपि आकारतो व्रीहिशब्दार्थत्वेन प्रोक्षणावघातादिविधयः साक्षादेव नीवारेषु प्रवर्तन्ते । ३।६।१४. * नीवारेषु प्राकृतव्रीहिस्थानापन्नेषु व्रीहिकार्याणामनुष्ठानम् । 'प्राकृतव्रीह्यादिस्थानापन्नेषु' इत्यधिकरणम् । भा. ९।३।१२।३१, * नीवारेषु व्रीहित्वेन परिच्छिन्ना व्रीह्युपक्रमाः सन्ति, लक्षणयैव व्रीहिधर्माः क्रियन्ते । ३।६।१४।१८.

* नीवारादिप्रतिनिधिष्वपि मुख्यधर्मानुष्ठानं दर्शपूर्णमासादौ । के ३।६।१४।३७–३९.

* 'नृणामहत्वबुद्धानामशुद्धिर्नैशिकी स्मृता ।' इयं निमित्ततो वाचनिकी व्यवस्था स्मार्ती । बाल. पृ. ११.

नृपनापितपुत्रन्यायः । यत्र अतिनिन्द्येऽपि स्वकीये अनिरूपवाबुद्धिविषयः तत्रायमवतरतीति । यथा, इयं हि किल लौकिकी गाथा—कस्यचिन्नृपस्य भृत्यो नापित आसीत्, स यदाचित् मानवत्रात सर्वे पुरमध्ये पुत्रीत सुन्दरो बालो मे दर्शनाय स्वयमानेय इति नृपेणाज्ञप्तः, [redacted] तु नापितो राजाज्ञां श्रुत्वा अखिलपुरमन्विष्य दृष्ट्वाऽपि च तत्रतत्रत्यादिरम्यान् बालान् स्वपुत्र-

तुल्याच्च मत्वा तानपहाय स्वसुतमेव उपशान्तानलाङ्गारार्भकवर्णं स्थूलाक्षं कुरूपं हस्वबाहुमकुष्ठं स्थूलतम्बोदरं गजवेश्मनि नीत्वा राज्ञे निवेदयामास राजन् आनीतोऽयं अतिरम्यतमो बालः । दृष्ट्वा च तं कुरूपं नापितपुत्रं राजा उपहासं मयि कृतवानयं नाम इति मत्वा चुकोप, उवाच च– अरे मूर्ख किमिदमिति । नापितश्च कुपितं राजानं मत्वा कृताञ्जलिपुटो भूत्वोवाच, राजेन्द्रमौले ! तव चरणमुपलभे, नायमुपहासः किन्तु मे मनसीत्थमेव निश्चयः– मत्पुत्रसदृशो रम्यस्त्रिलोक्यामपि नास्ति, तथ नगरस्य का वार्तेति । राजा च सत्यमीदृश्येव पामरहृदयोऽयं प्रसन्नचित्तवृत्तिरिति कोपं तत्याजेति । तथा, यथा नापितकुलेऽपि स्वसुते शताधिकगुणाच्छादितस्य सर्वोत्तमत्वधीः तथा केषाञ्चिदाधुनिकपाषण्डमतानुयायिनामदृष्टिया मालोतननुक्रुसंस्कारप्रभुत्वशालित्वप्रमत्वात् कस्मिंश्चिदनिष्टेऽपि मते सर्वोत्तमत्वधीः परिहृत्य च सनातनधौतस्वार्थसीताकोत्तमतामनतीति न्यायसंगतिरिति । साहस्री. ७९.

● नेत्रे संमील्य हसति, मुखं व्यादाय स्वपिति इति अपदेशपाठात् समानकर्तृकत्वमात्रप्रतिपादनं क्त्वाप्रत्ययस्य । सु. पृ. ८६७.

● नेत्रद्वयाञ्जनं शास्त्रमेकपदार्थः । तेन अनेकयजमानके अहीने एकत्र नेत्रद्वयेऽपि अञ्जनं कृत्वा यजमानान्तरे तत् कार्यम् । भाट्ट. ५।२।३.

● नेमाधिकरणम् । विकल्पाधिकरणम् । भा. १।३।५।१०.

● नेमशब्दः अर्धवाची अनार्यप्रसिद्धेरेव । के. १।३।५।१०.

● नेष्टा नाम ऋत्विक् अध्वर्योः पुरुषः । तृतीयवर्गीयोऽयम् । अयं तृतीयी तृतीयांशभाक् चतुर्थो भागः लभते । वि. ३।७।१७.

● नेष्ट्रीया इति समाख्यानात् कर्म ज्ञायते । भा. ३।७।२०।४१.

● नैचाशाखं नाम नगरम् । भा. १।२।४।३१–९.

● नैमित्तिकमतुल्यत्वात्० ( ३।६।१३।३६ ) इति नैमित्तिकाधिकरणसिद्धान्तसूत्रप्रघट्टकेन ' अतुल्यत्वात् ' इत्यनेन द्वित्वस्यापादकं विषयवैलक्षण्यमेव विवक्षितम् । रसायनम्. पृ. १५६.

## सू. नैमित्तिकमतुल्यत्वादसमानविधानं स्यात् । ३।६।१३।३६॥

क्षत्रियस्य वैश्यस्य च अग्निष्टोमे यजमानस्य सोमचमसस्थाने फलचमस एव भवति । ये तु मार्गं क्रयः उपावहरणं अभिषवः इत्यादयः सोमधर्माः, तेषामपि किं फलचमसार्थेषु नैयग्रोधादिफलेष्वपि समानतया विधानम्, उत चोदकेनैव प्राप्तिः इति संदेहे सिद्धान्तसूत्रमिदम् । नैमित्तिकं राजन्यवैश्यनिमित्तेन निर्दिष्टं फलचमसद्रव्यं सोमेन असमानविधानं स्यात् सोमेन सह समानं विधानं यस्य, तादृशं न स्यात् । क्रयादीनां धर्माणां विधानं सोमस्यैव फलचमसस्य साक्षात् न स्यात् । कुतः ? अतुल्यत्वात्, फलचमसस्य सोमेन तुल्यत्वाभावात् सोमो नित्यः, फलचमसो नैमित्तिकः । अतो धर्मा अपि क्रयादयः सोमे नित्याः, फलचमसे तु न तथा किन्तु चोदकेन स्युः । के.

● ननु फलचमसे सोमत्वाभावात् कथमनुष्ठानं संभवतीति । न चैष दोषः, स्थानापत्त्या सोमधर्मलाभात् । वक्ष्यति हि नैमित्तिकमतुल्यत्वादसमानविधानं स्यात् इति । शा. ३।५।२०।५३ पृ. १०२४.

● नैमित्तिकमेव नित्यमपि क्वचित् यत्र संयोगपृथक्त्वं अग्निहोत्रहोमे दधि अग्नीषोमीयपशोर्यूपे खादिरश्च । भा. ४।३।३।५–७.

## सू. नैमित्तिकं–तूत्तरात्वमानन्तर्यात् प्रतीयेत । ९।२।५।२३॥

अग्निष्टोमे ' यज्ञायज्ञा वो अग्नये ' इति ' यद्वोन्या गायति तदुत्तरयोर्गायति ' इति श्रूयते । तत्र योनिभूतायाः ऋचः परस्तात् सन्निहिते एव केचित् द्वे ऋचौ गृहीत्वा जायमाने तृचे साम गेयम्, उत उत्तरग्रन्थगतो यो ग्रन्थः छन्दोगानां प्रसिद्धः, तत्र पठिता ऋक् उत्तरा नाम । एवं च उत्तराग्रन्थे पठितयोर्द्वयोः ऋचोः योनिवत् गेयं इति विचारे सिद्धान्तमाह । नैमित्तिकम् ' यद्योन्यां तदुत्तरयोर्गायति ' इति वचनप्राप्तं उत्तरात्वं आनन्तर्यात् उत्तराग्रन्थपाठेन अव्यवहितयोः आनन्तर्यात् प्रतीयेत । एवं च

'उत्तरयोर्गायति' इति उत्तराशब्दः संख्यावाचकः इति पूर्वपक्षी मन्यते, तन्न। किन्तु उत्तराग्रन्थपठिते योनेः उत्तरभूते एव ऋचौ उत्तराशब्देन प्राप्ते इति सिद्धान्तः।

ऐकार्थ्याच्च तदभ्यासः। २४॥

अग्निष्टोमे 'उत्तरयोर्गायति' इति उत्तराशब्देन उत्तराग्रन्थपठिते एव द्वे ऋचौ प्राप्ते। तादृशी एव च तृचे तस्य रथन्तरादिसाम्नः अभ्यासः तदभ्यासः स्यात्। तृचशब्दस्य ऐकार्थ्यात् एकार्थत्वस्य उपपन्नत्वात्। एकग्रन्थपठिते ऋक्त्रये तृचशब्दः समञ्जसो भवति। न तु अन्यत्रान्यत्र पठितासु तिसृषु ऋक्षु। तस्मात् उत्तराशब्देन उत्तराग्रन्थपठितयोरेव ग्रहणं इति सिद्धान्तः। के.

☒ 'नैमित्तिकं तु प्रकृतौ तद्विकारः संयोगविशेषात्' (३।६।४।१० जै.) इत्यनेन न्यायेन काम्योऽग्निर्नित्यस्य विकारो भविष्यति। भा. १२।३।७।१७.

☒ नैमित्तिकं तु प्रकृतौ तद्विकारः संयोगविशेषात्। ३।६।४।१०॥

पूर्वोक्तस्यापवादस्यापवादोऽयम्। दर्शपूर्णमासप्रकरणे 'गोदोहनेन पशुकामस्य प्रणयेत्' इति, अग्नीषोमीये पशौ यूपं प्रकृत्य 'बैल्वो ब्रह्मवर्चसकामस्य' इति च श्रूयते। नित्याग्निहोत्रार्थं दध्नि आनयनार्थं च यस्मिन् पात्रे गौर्दुह्यते तत् पात्रं गोदोहनं नाम। तत्र गोदोहनं विकल्प्य किं प्रकृतौ निविशते, विकृतौ वा इति संदेहे प्रकृते. चमसान्येन पर्णेन खादिरादिना च निराकाङ्क्षत्वात् अव्यवहितपूर्वेण न्यायेन विकृतौ निवेशः इति उत्सूत्रे पूर्वपक्षे प्राप्ते सिद्धान्तयति सूत्रम्। तुशब्दः अपवादस्यापवादसूचकः। नैमित्तिकं पशुकामेन निमित्तेन निर्वृत्तं गोदोहनं प्रकृतौ दर्शपूर्णमासयोः तद्विकारः चमसविकारः चमसस्य बाधकं स्यात्। संयोगविशेषात् नित्यनैमित्तिकसंयोगभेदात् सामान्यविशेषसंयोगभेदाच्च। चमसो नित्यः, गोदोहनं नैमित्तिकम्। प्रकरणं सामान्यम्, निमित्तं च विशेषः। नैमित्तिकेन नित्यं विशेषेण च सामान्यं बाध्यते। एव यूपे अपि यूपे खादिरपालाशरौहितकाः सामान्येनोक्ताः, बिल्वो विशेषविहितः काम्यत्वान्नैमित्तिकश्च। तस्मात् गोदोहनं विकल्प्य प्रकृतौ एव निविशेते न विकृतौ। के.

● नैमित्तिकं नित्येन बाध्यमानविधानम्। भा. ३।६।१३।३६. ● नैमित्तिकं नित्यात् प्रबलम्। 'अर्थजातविरोध हि नित्यं सर्वे विधीयते। नैमित्तिक तु तद्भाग-विषयत्वाद्विरुध्यते॥' 'नित्य प्रयोगसामान्ये नित्यं सर्वं विधीयते। नैमित्तिकं विशेषे तु तस्मात् तद् बलवत्तरम्॥' वा. ३।६।३।१० पृ. १०३३. ● नैमित्तिकं प्रकृतौ निविशते। भा. ३।६।४।१०.

● नैमित्तिकं वा कर्तृसंयोगाल्लिङ्गस्य तन्निमित्तत्वात्। ३।३।१२।३३॥ वाशब्दः पूर्वपक्षोक्तस्य हेतोः प्रतिज्ञायाश्च व्यावृत्त्यर्थः। नैमित्तिकशब्दः प्रथमप्रयोगनिमित्तत्वसिद्धान्तप्रतिज्ञार्थः। कर्तृसंयोगात् इत्यस्य प्रथमशब्दस्य प्रयोगे एव कर्तृसंयोगोपपत्तेः इत्यर्थः। लिङ्गस्येति यत्तच्छब्दसामानाधिकरण्यरूपस्य लिङ्गस्य इत्यर्थः। तन्निमित्तत्वात् प्रथमप्रयोगनिमित्तकत्वात् इत्यर्थः। (इति सुधासंक्षेपः प्रकृतसूत्रस्य)।

● नैमित्तिकं हि कर्म स्वरूपमात्रे न समवैति, किन्तु यस्मिन् प्रयोगे निमित्तप्रादुर्भावः तस्मिन्नेव प्रयोगे। ततश्च प्रयोगान्तरे क्रियमाणे नास्ति साद्गुण्यम्। सोम. ६।५।१८.

☒ नैमित्तिकानि न नित्यत्वमयुक्तानि॥

नैमित्तिके विकारत्वात् क्रतुप्रधानमन्यत् स्यात्। ४।३।२।४॥

भाष्यम्— अस्ति ज्योतिष्टोमे नैमित्तिकम् 'बार्हद्गिर ब्राह्मणस्य ब्रह्मसाम कुर्यात्, पार्थुरश्मं राजन्यस्य, रायोवाजीयं वैश्यस्य' इति। तथा अग्नौ नैमित्तिकम् 'साहस्रं प्रथमं चिन्वानश्चिन्वीत, द्विसाहस्रं द्वितीयं, त्रिसाहस्रं तृतीयम्' इति। तथा दर्शपूर्णमासयोः श्रूयते 'गोदोहनेन पशुकामस्य प्रणयेत्, कांस्येन ब्रह्मवर्चसकामस्य, मार्त्तिकेन प्रतिष्ठाकामस्य' इत्येतानि नैमित्तिकानि। तेषु संदेहः किमेतान्येव नैमित्तिकानि नित्यार्थे, उत अन्यत् तत्र नित्यार्थे, इति।

किं प्राप्तम्? एतान्येवेति। कुतः? अत्र ब्राह्मणादिभिरवश्यं भवितव्यम्। चोदितानि हि तानि, उपदिष्टानि साधनानि आशाहुरिति। न चैषां सति

निहितानि साधनानि । समीपतश्च नैमित्तिकानि उपदिश्यन्ते । तैः प्रकृतैः संनिहितैरेतानि निराकाङ्क्षीक्रियन्ते इत्येतन्न्याय्यम् । कथम् ? नैमित्तिकं हि संनिहितं वाक्यादवगम्यते, नान्यत् श्रूयते । यावांश्च श्रुतसंयोगे दोषः तावानेव अश्रुतकल्पनायाम् । आह, ननु निमित्तार्थानि तानि प्रकृतानि । उच्यते । नैष दोषः । अन्यार्थमपि प्रकृतमन्येन संबध्यते । यथा शाल्यर्थं कुल्याः प्रणीयन्ते, ताभ्यश्च पानीयं पीयते, उपस्पृश्यते च । एवमिहापि द्रष्टव्यम् । अथवा अन्येनाप्यवान्तरवाक्यम् । यथा गोदोहनेन प्रणयेत्, इति । तदानीमेव गोदोहनेन प्रणयनं प्राप्नोति । न च शक्यं श्रुतमुत्स्रष्टुम् । योऽप्ययं पशुकामस्येति शब्दः, स पशुकामसंबन्धं शक्नुयात् कर्तुम्, नावान्तरवाक्यस्यार्थं निराकर्तुम् । न च श्रूयमाणं विना कारणेन अविवक्षितमिति शक्यं वदितुम् । भवन्ति च द्व्यर्थानि वाक्यानि । यथा श्वेतो धावति, अलम्बुसानां यातेति । तस्मात् नैमित्तिकान्येव नित्यार्थे भवितुमर्हन्तीति । एवं प्राप्ते, ब्रूमः । नैमित्तिके श्रूयमाणे फलार्थमन्यत् स्यादिति । कुतः ? विकारत्वात् । विशेषे श्रुतत्वादित्यर्थः । विशेषे हि तत्र नैमित्तिकं श्रूयते । तदसति तस्मिन् विशेषे, न भवितुमर्हति । यदुक्तमवान्तरवाक्यार्थानीति । नैष दोषः । अवश्य कर्तव्यतां करिष्यन्ते । यत्तु सामान्येन विहितं साधनमिति, सामान्यविहितं भविष्यतीति न दोषः । किं तत् ? अभीवर्तो ब्रह्मसाम, अग्रादशमन्नगतोऽग्निः, वारणं प्रणयनपात्रम् । अथ यदुक्तम्, संनिहितैः प्रकृतैः नैमित्तिकैर्नक्षत्रमादीनि समाप्यन्ते इति । नेति ब्रूमः । नहि बार्हद्गिरादीनां प्रकरणम् । अथोत्येव, प्रकृतैः स्तोत्रादिभिः संबध्यन्ते इति । एतदपि नोपपद्यते । यद्यपि प्रकृतानि नित्यानि स्तोत्रादीनि, तथापि वाक्येन निमित्तसंयोगे श्रूयन्ते बार्हद्गिरादीनि । वाक्यं च प्रकरणाद्बलीयः ।

यदुक्तम्, संनिधानात् वाक्यादवगतोऽयमर्थ इति, नैवंजातीयको वाक्यार्थः सामान्यपदार्थं बाधितुमर्हति । निमित्तसंयोगे हि बार्हद्गिरादीनामयमेवार्थः । तस्मात् उभयत्र अन्यन्नैमित्तिकात् नित्य इति । अथ यदुक्तम्- अवान्तरवाक्येन गोदोहनमपि प्राप्तं न शक्यमुत्स्रष्टुम्, ऋते कारणादविवक्षितं कल्पयितुम् । द्व्यर्थं हि तद्भवतीति । उच्यते । कारणादविवक्षितम् । किं कारणम् ? नहीदं युगपद्भवति, परिपूर्णेन चार्थाभिधानं अवान्तरवाक्येन चेति । कथम् ? प्रणयतीति श्रुते नयतौ निमित्तविभक्तिः स्वरदर्थवत्त्वं श्रुत्वा विदधाति । प्रणयनादिसंबन्धमपि गोदोहनादि श्रुत्या, वाक्येन च । यस्तु फलस्य गोदोहनादेश्च संबन्धः हित्वा श्रुत्यर्थं केवलेन वाक्येन । अथ प्रणयनस्य गोदोहनादिसंबन्धम्, गोदोहनादेश्च फलेन संबन्धं विदधातीत्युच्यते । तत्र । द्व्यर्थाभिधानात् भिद्येत नित्यं वाक्यम् । न चैकस्याप्यम् । यत्तु श्वेतो धावतीत्येवमादि, भवेत्तत्र विशेषानवगमादुभयार्थावगतिः । इह तु गम्यते विशेषः फलनिर्देशात् । इह श्रौतो ह्यन्येन । यदि गोदोहनादेः क्रियासंबन्धो विधास्यते, फलपदं प्रमादो भवेत् । न चाय प्रमादः । न चावान्तरवाक्यार्थे निरुद्धे फलपदसंबन्धोऽवकल्पते । तस्माद् द्व्यर्थं वाक्यम् । गोदोहनादिफलसंबन्ध एवात्राभिधीयते, न नित्यार्थे भवितुमर्हतीति । एवं सर्वत्र ।

टुप्— फलार्थानि चमसादीनि आहृत्य पूर्वः पक्षः । केचित्तु आहुः फलचमसमवालोच्य ( अनादृत्य ) पूर्वपक्षः ( कृत्वाविचार्येत्यर्थः । पूर्वपक्षमाह— ) यद्यपि गोदोहनादीनि फलार्थानि ( श्रुतानि ) तथापि ( संनिहितत्वात् ) विपरिवर्तमानानि, तान्येव ( अनुग्रहेण उपपद्यमानानि ) फलार्थान्यपि । अथवा ( विनैव अनुग्रहेण ) प्रकरणेन गृह्यन्ते । ( विनाऽपि फलानित्यता वचनमपि इत्येव पुनः पूर्वपक्षद्वयमाह— ) 'अथवा गोदोहनेन प्रणयेत्' इति 'गोदोहनेन पशुकामस्य' इति ( च ) वाक्यात् ( उभयस्मात् ) द्वावपि अर्थौ गम्येते फलार्थता पुरुषार्थता च । अथवा पशुकामपदाविवक्षया 'गोदोहनेन प्रणयेत्' इति श्रुत्यनुग्रहेण पूर्वः पक्षः । एवं प्राप्ते, ब्रूमः नैमित्तिके विकारत्वात् इति । यत् यस्मिन् विकारे ( विशेषे इति मुद्रिते पाठः ) श्रूयते, तत् तस्मिन् सत्येव भवितुमर्हति ( नाऽन्यत्र ) अतो विना फलेन न युज्यते । सन्ति च चमसादीनि ( फलादिभिः ) असं-

कादपि ॥ ' वा. ३।६।३।१० पृ. १०३३. * नैमित्तिकादिदं दुर्बलम् । वि. ३।६।३. * नैमित्तिकात् नित्यार्थमन्यत् । भा. ४।३।२।४. * नैमित्तिकस्य काम्येन बाधः वैश्यमाभिधेनीषामदशस्य एकविंशतित्वेन प्रतिष्ठार्थेन । बाल. पृ. १३३. * नैमित्तिकस्य नित्यस्य च न समानविधित्वम् । भा. १।६।१३।२६. * नैमित्तिकस्य निरवकाशतया नित्यबाधकत्वं वक्ष्यते । भाट्ट. ६।५।१ पृ. २८७. * नैमित्तिकस्य फलापेक्षा न भवति । यथा गृहदाहनिमित्तिकाया इष्टेः । यथा वा सत्रसमापननिमित्तकस्य पुष्टामनीयस्य । के. १०।२।१२।८०–४१. * नैमित्तिकानामनित्यार्थत्वम् । वि. ४।३।२. * नैमित्तिकानामपि फलवचनेन पुनर्विधाने काम्यताऽपि । संकर्ष. २।१।१६. * नैमित्तिकानां फलाधीना निमित्ताद्वृत्तौ आवृत्तिः । भा. ६।२।६।१०. * नैमित्तिकानां नित्यप्रयुक्तत्वं नास्ति । यथा ज्योतिष्टोमे ' यदि द्विरं ब्राह्मणस्य ब्रह्मसाम, पार्श्वरश्मं राजन्यस्य, रायोवाजीयं वैश्यस्य ' इति नैमित्तिकमेव । अग्नौ च प्रथमं साहस्रं द्वितीयं द्विषाहस्रं तृतीयं त्रिषाहस्रं चिन्वीतेति नैमित्तिकमेव । दर्शपूर्णमासे च ' गोदोहनेन पशुकामस्य प्रणयेत्, कांस्येन ब्रह्मवर्चसकामस्य, मार्तिकेन प्रतिष्ठाकामस्य ' इति नैमित्तिकमेव । ४।३।२।४. * नैमित्तिकानां पार्थिवादीनां कर्मणां निमित्तानुसारेणानुष्ठानम्, न तत्र पाठक्रमो नियामकः । सोम. ५।३।१२. * नैमित्तिकानां प्रायश्चित्तानां यथानिमित्तं समुच्चयः । के. १२।३।६।१७.

नैमित्तिके [illegible] कार्यत्वात् प्रकृतेः स्यात् तदापत्तेः । १०।२।३०।७०॥

' वायव्यं श्वेतमालभेत भूतिकामः ' इति श्रूयते । अत्र श्वेतगुणकः कश्चिदाकृतिमान् उक्तः, स कः इति विचारे सिद्धान्तमाह । नैमित्तिके गुणनिमित्तके श्वेतशब्दे श्रूयमाणे प्रकृतेः छागात् प्राप्तस्य अजस्यैव पशोः ग्रहणं स्यात् । कार्यत्वात् अजे एव श्वेतगुणस्य संपादयितुं शक्यत्वात् । तदापत्तेः तस्य अजस्यैव श्वेतगुणेन परिच्छेद्यत्वोपपत्तेः । तस्मात् वायव्यः श्वेतः अज एव नान्यः पशुः इति सिद्धान्तः । पूर्वसूत्रे अजभिन्नः पशुरुक्तः अत्र तु अज एवोच्यते इति पूर्वपक्षस्यापेक्षयानन्दः । के.

* ' नैमित्तिके तु कार्यत्वात् प्रकृते स्यात्तदापत्तेः ' इत्यधिकरणे वायव्यादिपशौ उपदिष्टश्वेतगुणस्य प्राकृताजादिजातेश्च समुच्चय उक्तः । बाल. पृ. १७७.

नैमित्तिके तु प्रकृतौ तद्विकारः संप्रयोगविशेषात् । ( ३।६।३।१० ) इति तृतीयाधिकरणवक्ष्यमाणन्यायमाह—( ' पुरुषार्थसमाप्तेः काम्य नित्यस्य बाधकम् ' पुरुषार्थसिद्धयर्थो हि सर्वः प्रयासः इति तदनुगामक वस्तु बलीयो भवति । वा. १।४।११।२१ )। सु. पृ. ४८८.

नैमित्तिके पुनराधाने श्रुतदक्षिणया सामान्यविहितैकादिदक्षिणाया बाधः ॥

अग्न्याधेयस्य नैमित्तिके गुण्यधिकारे दक्षिणादानमधिकं स्यात्, वाक्यसंयोगात् ।१०।३।५।२०॥

भाष्यम्— अस्ति पुनराधानम्, निमित्ते श्रूयते । यस्याग्नयः समानाः पुनरादधीत । ' योऽग्नीनाधाय भाग्यानि पुनरुद्यानि वा चीयेत, स पुनरादधीत ' इति । तत्र श्रूयते ' पुनरुत्स्यूतं वासो दक्षिणा, पुनरुत्सृष्टोऽनड्वान् ' इति । तथा, आधाने दक्षिणा— ' एका देया षड् देया द्वादश देयाश्चतुर्विंशतिर्देयाः शतं देयं सहस्रं देयमपरिमितं देयम् ' इति । तत्र संशयः किं पुनराधानेऽग्न्याधानदक्षिणानामनिवृत्तिः, समुच्चयः, अथाग्न्याधेयदक्षिणानां निवृत्तिरिति । [illegible] प्राप्ते ? अग्न्याधेयस्य नैमित्तिके पुनराधेये दक्षिणादानमधिकं स्यात् । प्राकृतीनामनिवृत्तिः, समुच्चय इति । कुतः ? एकस्मिन् वाक्ये उभय्यो दृश्यन्ते । ' उभयीर्ददाति, आग्न्याधेयिकीश्च पुनराधेयिकीश्च ' इति । तस्मादनिवृत्तिः, समुच्चय इति ।

शिष्टत्वादितरासां यथास्थानम् । ३१ ॥

भाष्यम्— इदं पदोत्तर सूत्रम् । कथं चोदकप्राप्तस्य अन्यस्य समुच्चयो भविष्यति । अथोच्यते । शिष्टत्वादितरासाम्, प्राकृतीनां वचनसामर्थ्यात् यथास्थानं समुच्चयो भविष्यतीति । यत्तु हीदं वचनम्, आग्न्याधेयिकीर्ददाति पुनराधेयिकीर्ददातीति । तत्राप्ययं भावः प्राकृतीनां समुच्चय इति ।

विकारस्त्वप्रकरणे हि काम्यानि ॥ ३२ ॥

भाष्यम्— तुशब्दः पक्षं व्यावर्तयति, न समुच्चयः, विकार इति । कुतः ? काम्यं ह्येतत् पुनराधेयं श्रूयते । तदसति प्राकृते प्रकरणे, आम्नानमनर्थकं स्यात्, न सति । यत्तोऽन्यते वैकृतम्, तद् प्राकृतं बाधते इत्यर्थः । काम्यो वा नैमित्तिको वाऽर्थो नियमार्थं विकृत्य विधीयते । यथा अश्वामये मुद्गौदनभोजनं विधातव्यं चेति, नित्य सन्नशनं भोजनं च विकरोति । प्रत्यक्षं हि वैकृतम् । आनुमानिकं च प्राकृतम् । तस्मात् वैकृतेन बाध्यते । अथ मनुष्यम्, वचनप्रामाण्यात् प्राकृत्यो भविष्यन्तीति । अत्रोच्यते । ता उभयीर्ददातीति नात्र विधिविभक्तिरस्ति । वर्तमानापदेशोऽयम् । प्रमाणान्तरमादाय अयमर्थः प्राप्तिः । उभयीर्दक्षिणा ददाति, आग्न्याधेयिकीः पौनराधेयिकीश्च । आग्न्याधेये आग्न्याधेयिकीः, पुनराधेये पौनराधेयिकीः । तदेतत् भूतानुवादमात्रम् । तस्मात् प्राकृतीनां निवृत्तिरिति ।

टुप्— ( सिद्धान्तमाह— ) पुनरुत्स्यूतोऽनड्वान् इत्येतस्मात् वाक्यात् समुच्चयो न गम्यते, समुच्चयशब्दाभावात् ( तस्मात् बाधः ) । ननु ' ता उभयीर्ददाति ' इति समुच्चयः श्रूयते । उच्यते । अर्थवादोऽयम् ( न विधि ) । ' अप्रकरणे हि काम्यानि ' इत्यत्र सूत्रावयवस्य अयं ( भाष्य— ) अर्थः, तत् ( काम्याम्नानम् ) अनर्थकं प्राकृते प्रकरणे पुनरुत्स्यूताम्नानं यदि भवेत्, ततो न बाधेत आधानदक्षिणाम्, अप्रकरणान्तरत्वात् ( उभयोरपि तुल्यप्रकरणत्वेन बाधासंभवात् ) । असति तु आधानप्रकरणाम्नाने यत् तत्र नैमित्तिकम् ( पुनरुत्स्यूतादि ) विधीयते तत् प्राकृतं नित्यं बाधमानमेव विधीयते काम्याम्नानम् । ( अत्र आनन्दाश्रमीयात् भूयान् भेदः ) ।

प्राकृते च निवृत्तेरुभयत्वं हि श्रूयते ॥ ३३ ॥

भाष्यम्— इतश्च प्राकृतीनां निवृत्तिः । कुतः ? निवृत्तानामदर्शनात्, प्राकृते हि निवृत्तेरिति गम्यते । कथम् ? उभयत्वं हि श्रूयते । यद्वैकृतीर्ददाति दक्षिणा उभय्योऽपि तेन दक्षिणाः प्रत्ता भवन्ति । ननु उभय्योऽपि प्रदीयन्ते, यत उभय्योऽपि प्रत्ता भवन्तीत्याह । आग्न्याधेयिकीः आग्न्याधेये, पुनराधेयिकाः पुनराधेये । तस्मात् प्राकृतीनां निवृत्तिरिति ।

सोम— पूर्वत्र यथा ' द्वादश जुहोति ' इति वचनानुसारेण समुच्चयः, एवमिहापि वचनादेव समुच्चयः इत्युक्तिप्रतेः संगतिः । सूत्रार्थस्तु— अग्न्याधेयस्य नैमित्तिके गुणविकारे पुनराधेयदक्षिणादानम् ' उभयीर्ददाति ' इति वाक्यसमर्पणात् प्राकृतीभ्यः अधिकम्, न तु निवर्तकं इति । ( तस्मात् पुनराधेये पुनराधेयिक्य एव दक्षिणा देयाः । आग्न्याधेयिक्यस्तु प्रथमाधाने एवेति भाष्यादिग्रन्थसिद्धान्तः ) ।

वि— ' एकादिका मधुर्वेयं पुनर्निष्कृत इत्यदः । बाधकं वा, समुच्चेयमुभयीरित्युदीरणात् ॥ ', आधानदक्षिणोपेतमुभयीरित्यनूद्यते । ददातीत्यविधायित्वात् कार्यैक्यात् बाधकं भवेत् ॥ ' ( ' उपदिष्टम् अतिदिष्टस्य बाधकम् ' इत्यधिकरणस्य न्यायः ) ।

भाट्ट— ' भागधेयमग्नीनामाना पुनराधेयीत ' इति श्रुतम् । तथा ' योऽग्नीनाधाय भागधेयानि पुनराणि वा जीयेत, न पुनरादधीत ' इति च । अत्र प्रकरणात् पुनःशब्दश्रवणाच्च नाधानानन्तरम्, अपितु सत्येव पुनःप्रयोगः काम्यो नैमित्तिकश्च । तत्र काम्यवाक्ये दृष्टोपायत्वात् ' अध्वर्युं यजमानो स्वर्गं गच्छतः ' इतिवचनेनोद्देश्यता । नैमित्तिकवाक्ये तु जानिशब्दो हानिपरः जीवेत प्राप्नुयात् इत्यर्थः । अनुषङ्गेण वाक्यद्वयाङ्गीकारेऽपि न दोषः । पुनःप्रयोगान्तरप्रकरणे च ' पुनरुत्स्यूतं वासो दक्षिणा, पुनरुत्सृष्टोऽनड्वान् ' इति श्रुतम् । अत्रापि प्राप्तदक्षिणानुवादेन अनेकविधानानुपपत्तेर्वाक्यभेद इष्ट एव । पुनरुत्स्यूतं धारितं सीवनेन कृतसंधानम्, पुनरुत्सृष्टः भारं धत् पुनर्योगः । अनयोश्च न्यायतो विकल्पे प्राप्ते वचनादिना समुच्चय इति ध्येयम् । वस्तुतस्तु अतिदेशप्राप्तेः पूर्वमेव अनेकविशिष्टदक्षिणाविधानाच्च नाधिदोषः । आधाने च ' एका देया षट् देयाः ' इत्यादिना दक्षिणाऽन्तराम्नातम् । तदिह काम्यनैमित्तिकप्रयोगविशेषपुरस्कारेण विहितया दक्षिणया सामान्यविहितायाः एकादिदक्षिणाया बाधः । न च ' दशभिः क्रीणाति ' इतिवत् ' उभयीर्ददाति

अन्याधेयिकी, पुनराधेयिकीश्च ' इति वचनेन समुच्चयविधानादर्शनः, अस्य पुनरन्यूनादिवाक्यशेषतया तस्तावकत्वेन समुच्चयविधायकत्वे वाक्यभेदात् । न च ' दधति हि देवेभ्यो धारयति ' इतिवत् सिद्धवन्निर्देशान्यथाऽनुपपत्त्यैव विध्यन्तरकल्पना । कथञ्चिदपि प्राप्तिहावे ' यज्ञोपवीती हि देवेभ्यो दोहयति ' इतिवत् कल्पकत्वानुपपत्तेः । अस्ति हि आधेऽन्याधेयप्रयोगे तावत् नैमित्तिकावौ वाऽप्यासां हानोभयोः प्रयोगभेदेन समुच्चय प्राप्ति. । अतस्तादाद्यैव अनुपपत्तेर्विध्यन्तरकल्पनात् भाव एव युक्तः । ' ददामि. क्रीणाति ' इत्यादौ तु नैरमिति विशेषः । अत एव 'यद्देकृतौ दँदाति उभयोरपि तेन दक्षिणाः दत्ता भवन्ति ' इति लिङ्गमप्युपपद्यते ।

मण्डन — ' सन्दक्षिणा नो पुनराधाने । '

शंकर— ' पुनर्निष्कृत एव च । ' रथः दक्षिणा ।

■ नैमित्तिके विकारत्वात् क्रतुप्रधानमन्यत् स्यात् । ४।३।२।४ ॥

दर्शपूर्णमासयोः ' गोदोहनेन पशुकामस्य प्रणयेत् ' ' कांस्येन ब्रह्मवर्चसकामस्य ' इत्यादिना अपां प्रणयनादौ गोदोहनादिपात्रं नैमित्तिकं श्रूयते । किमिदं नैमित्तिकं नित्यार्थेऽपि स्यात्, उत नित्यार्थे अन्यत् इति विचारे इदं नैमित्तिकमेव नित्यार्थे स्यात् इति उत्पन्ने पूर्वपक्षे सिद्धान्तसूत्रमिदम् । नैमित्तिके पश्वादिफलनिमित्तके गोदोहनादौ श्रूयमाणे सति क्रतुप्रधानं कार्यमे नित्यमित्यर्थः, अन्यत् चमसचमसरूपं पात्रं स्यात् । गोदोहनादेर्नैमित्तिकस्य चमसविकारत्वात् । तस्मात् गोदोहनादि कामनानिमित्तकं न नित्यम् । क्रतुप्रधान इत्यत्र क्रतुप्रापणं इति कुतूहले पाठः । स च प्राचीनपुस्तकस्थाक्षरवाचनभेदात् संजातः सन् उपादेयः पाठभेद एव संपन्न. । के.

● नैमित्तिकी विकीर्णो नित्यां विकीर्णो बाधते । अन्या हि नित्याया या भवति । अवकाशमप्राप्नुवाना सैवो बाधते । यदि न बाध्येत अनर्थकं स्यात् वैकृतं विधानम् । भा. १२।२।१३।३३, ● नैमित्तिकी वैश्वानरेष्टिः यद्यने । ' यो वै संवत्सर उख्यमभृत्वा अग्निं चिनुते... वैश्वानरं द्वादशकपालं पुरस्तान्निर्वपेत् ' इति । ५।४।६।१२–१३,

● नैमित्तिकी षष्ठी चितिः प्रतिपत्त्यर्था । ५।४।७।१४–१८.

● नैमित्तिकीनामिष्टीनामनुष्ठाने पाठक्रमो न नियामकः, यथानिमित्तमनुष्ठानम् । वि. ५।३।१२.

● नैमित्तिकाधिकरणं श्रेनाधिकरणं वा । १०।२।३०।६१ । अत्रत्यो न्यायम् ' यत्र साधारणगुणवचनः, तत्र चोदको न बाध्यते ' इति । इदम् ' अंशदाभ्ययोः ' इत्यत्र द्रष्टव्यम् । टुप्. १०।२।२९।६८. (नैमित्तिकमतुल्यत्वात् । ३।६।१३।३६ इदमपि नैमित्तिकाधिकरणं रसायने नयोक्तत्वात् । पृ १५६. ) ।

● नैमित्तिकार्थं नित्यार्थे च दध्यादि । ' दध्ना जुहोति, इन्द्रियकामस्य जुहुयात् ' ' खादिरे बध्नाति, खादिरं वीर्यकामस्य यूपं कुर्वीत ' । संयोगपृथक्त्वन्यायः । भा. ४।३।३।५–७

● नैमित्तिकपक्षशतायथातो दर्शाङ्गः । भा. ६।४। १०।१०–२१.

● नैमित्तिकप्रतिपदोः ' युव दि यः स्वर्पती इति द्वयोर्यजमानयोः प्रतिपदं कुर्यात्, एवे अस्रग्रमिन्दवः इति बहुभ्यो यजमानेभ्यः ' इति ज्योतिष्टोमात् कुण्डपायी उत्कर्षः । भा ३।३।९।१७–१९.

● नैमित्तिकप्रायश्चित्तानां समुच्चयः । वि. १२।१।६.

● नैमित्तिकयागाः ' अग्नये पथिकृते पुरोडाशमष्टाकपालं निर्वपेत्, यो दर्शपूर्णमासयाजी सन् अमावास्यां वा पौर्णमासीं वाऽतिपादयेत् ' इत्यादयः । तत्र पाठक्रमापेक्षैव नास्ति । निमित्तानन्तरं तन्नैमित्तिकं कर्तव्यम् । वि ५।३।१२.

● नैमित्तिकश्राद्धानि नित्यश्राद्धप्रयोगानन्तरभावीनि । रसायनम्. पृ. १५६. ● नैमित्तिकश्राद्धानां ■ अयमर्थः ' निमित्तोपजननात् प्राक् अन्यथा कर्तव्योऽपि क्रतुः, निमित्ते सति अन्यथा कर्तव्यः ' इति । शा. ६।५।१९.

● नैमित्तिकमानदृष्ट्यादेः पदवर्णना । भा. २।६। ४।११–१२ पृ १०३७.

● नैयायिकाः अनुमाननिरूपणस्य जगद्विधेः पुरुषधौरेयसिद्धिः प्रयोजनमिति वदन्ति । जन्यद्रव्यत्वं सयुक्तं सकर्तृकं कार्यत्वात् इत्यनुमानेन तत्सिद्धिरिति ।

अन्याधेयिकीः पुनराधेयिकीश्च ' इति वचनेन समुच्चय-विधानादबाधः, अस्य पुनरुत्स्यूतादिवाक्यशेषतया तत्स्तावकत्वेन समुच्चयविधायकत्वे वाक्यभेदात् । न च ' उपरि हि देवेभ्यो धारयति ' इतिवत् सिद्धवन्निर्देशात्स्यथाऽनुपपत्त्यैव विध्यन्तरकल्पना । कथञ्चिदपि प्राशित्वे ' यज्ञोपवीती हि देवेभ्यो दोहयति ' इतिवत् कल्प्यत्वानुपपत्तेः । अस्ति हि आधेयाग्न्याधेयप्रयोगे तथा नैमित्तिकादौ चान्यासां दानेनोभयोः प्रयोगभेदेन समुच्चयप्राप्तिः । अतस्तादात्म्येव स्तुत्युपपत्तेर्विध्यन्तराकल्पनात् बाध एव युक्तः । ' दशभिः क्रीणाति ' इत्यादौ तु नैनमिति विशेषः । अत एव 'यद्वैकृतीर्ददाति उभयोरपि तेन दक्षिणाः प्रत्ता भवन्ति ' इति लिङ्गमप्युपपद्यते ।

मण्डन — ' प्राग्दक्षिणा नो पुनरादधाने । '

शंकर— ' पुनर्निष्कृत एव च । ' रथः दक्षिणा ।

■ नैमित्तिके विकारत्वात् क्रतुप्रधानमन्यत् स्यात् । ४।३।२।४ ॥

दर्शपूर्णमासयोः ' गोदोहनेन पशुकामस्य प्रणयेत् ' ' कांस्येन ब्रह्मवर्चसकामस्य ' इत्यादिना अपां प्रणयनादौ गोदोहनादिविधानं नैमित्तिकं श्रूयते । किमिदं नैमित्तिकनित्यार्थेऽपि चमसं, उत नित्यार्थे अन्यत् इति विचारे इदं नैमित्तिकमेव नित्यार्थे स्यात् इति तत्सूत्रे पूर्वपक्षे सिद्धान्तसूत्रमिदम् । नैमित्तिके पश्वादिफलनिमित्तके गोदोहनादौ श्रूयमाणे सति क्रतुप्रधानं क्रत्वर्थं नित्यमपां प्रणयनं, अन्यत् चमसरूपं पात्रं स्यात् । गोदोहनादेर्नैमित्तिकस्य चमसविकारत्वात् । तस्मात् गोदोहनादि कामनानिमित्तकं न नित्यम् । क्रतुप्रधान इत्यत्र क्रतुसाधनं इति कुतूहले पाठः । स च प्राचीनपुस्तकस्थाक्षरसाम्येनभेदात् संजातः सन् उत्तरकाले पाठभेद एव संपन्नः । मी. को.

* नैमित्तिकी चिकीर्षा नित्या चिकीर्षा बाधते । नैयायिकानां हि नित्यात्मा सा भवति । अतस्तामबाधयन्ता नैमित्तिकी नेष्यते । यदि न बाध्येत अनर्थकं स्यात् नैमित्तिकविधानम् । मी. ११।२।१२।३२, * नैमित्तिकी वैश्वानरेष्टिः चयने । ' यो वै संवत्सरं उख्यमभृत्वा अग्निं चिनुते... वैश्वानरं द्वादशकपालं पुरस्तान्निर्वपेत् ' इति । ४।४।६।१२–१२,

* नैमित्तिकी षष्ठी चितिः प्रतिष्ठार्था । ४।४।७।१४–१८.

* नैमित्तिकीनामिष्टीनामनुष्ठाने पाठक्रमो न नियामकः, यथानिमित्तमनुष्ठानम् । वि. ५।३।१२.

* नैमित्तिकाधिकरणं श्येनाधिकरणं वा । १०।२। ३०।६९ । अन्यो न्यायस्तु ' यत्र साधारणगुणवचनः, तत्र चोदको न बाध्यते ' इति । इदम् ' अंशवदाभ्ययोः ' इत्यत्र द्रष्टव्यम् । टुप्. १०।२।२९।६८. (नैमित्तिकमतुल्यत्वात् । ३।६।१३।३६ इदमपि नैमित्तिकाधिकरणं रसायने तथोक्तत्वात् । पृ १५६. ) ।

* नैमित्तिकार्थे नित्यार्थे च दध्यादि । ' दध्ना जुहोति, इन्द्रियकामस्य जुहुयात् ' ' खादिरे बध्नाति, खादिरं वीर्यकामस्य यूपं कुर्वीत ' । संयोगपृथक्त्वन्यायः । भा. ४।३।३।५–७

* नैमित्तिकपञ्चशरावयागो दर्शाङ्गः । भा. ६।४। १०।३०–३१.

* नैमित्तिकप्रतिपदोः ' युव हि स्थः स्वर्विदा इति द्वयोर्यजमानयोः प्रतिपदं कुर्यात्, एते असृग्रमिन्दवः इति बहुभ्यो यजमानेभ्यः ' इति ज्योतिष्टोमात् कुलायादौ तत्कर्षः । भा. ३।३।९।१७–१९.

* नैमित्तिकप्रायश्चित्तानां समुच्चयः । वि. १२।३।६.

* नैमित्तिकयागाः ' अग्नये पथिकृते पुरोडाशमष्टाकपालं निर्वपेत्, यो दर्शपूर्णमासयाजी सन् अमावास्यां वा पौर्णमासीं वाऽतिपातयेत् ' इत्यादयः । तत्र पाठक्रमापेक्षैव नास्ति । निमित्तानन्तरं तन्नैमित्तिकं कर्तव्यम् । वि ५।३।१२.

* नैमित्तिकश्राद्धानि नित्यश्राद्धमनुष्ठानोत्तरभावीनि । रसायनम्. पृ. १५६. * नैमित्तिकश्राद्धानां हि अथमर्थः ' निमित्तोपगमनात् प्राक् अन्यथा कर्तव्योऽपि सन्तुः, निमित्ते सति अन्यथा कर्तव्यः ' इति । शा. ६।५।१९.

* नैमित्तिकमात्रदर्शनादि. प्रत्यर्पिता । भा. ३।६। ४।११–१३ पृ १०२७.

* नैयायिकाः अनुमाननिरूपणस्य वर्गान्तिमेन पुरुषधौरेयसिद्धिः प्रयोजनमिति वदन्ति । वन्यकूल्यजन्य द्व्यणुकं सकर्तृकं कार्यत्वात् इत्यनुमानेन तत्सिद्धिरिति ।

मणि. पृ. ४२–४३. * नैयायिकास्तु यत्र शक्यलक्ष्ययोः उभयोरपि प्राधान्यम् 'काकेभ्यो दधि रक्ष्यताम्' इत्यत्र तत्रैव अजहत्स्वार्था लक्षणा इत्याहु.। बाल पृ. १४२. * नैयायिका.। प्रमाया गुण. भ्रमे दोषश्च कारणम्। प्रामाण्यं अप्रामाण्यं च परत. उत्पद्यते एव ज्ञानान्तरेण गृह्यते। अर्थक्रियाविज्ञानेषु अगत्या स्वतः प्रामाण्य ग्रहणं इत्यङ्गीक्रियते। मणि. पृ. १४. * नैयायिकाः प्रमाणयोर्द्वयोर्द्वयोः सामर्थ्यो. एकविषयत्वेन विरोधे अन्योन्यप्रतिबन्धात् प्रमाणद्वयेन एव ज्ञानानुत्पत्तिलक्षणः इति वदन्ति। बाल. पृ. १३४. * नैयायिकाः शक्तिः 'अस्मात् पदात् अयमर्थो बोद्धव्यः इत्याकारिका ईश्वरेच्छा' इति वदन्ति। मणि. पृ ७८, * नैयायिकाः संसर्ग. विशेषणविशेष्यसमभिव्याहारगम्यत्वात् पदार्थ-मर्यादया लभ्यः इति मन्यन्ते। पृ. १७३, * नैयायिकैः प्राचीनैः वायुप्रत्यक्षाभावेऽपि त्वगिन्द्रियस्यैव प्रत्यक्षत्व माङ्गीकृतम्। पृ. १६.

* नैयायिकमते संसर्गो वाक्यार्थ.। बाल पृ ७३.

* 'नैर्ऋतं चरु नष्टानां भूतानाम्' इति राजसूये। नखेषु मुसलोलूखलधर्मः ग्रोक्षण कर्तव्यम्। वि. ९।२।१२. * 'नैर्ऋत चरुं निर्वपेत् कृष्णानां व्रीहीणाम्' इत्यत्र कृष्णवर्णस्य विधि., नानुवादः। भा. ४।२।१०।२५. * नैर्ऋते चरौ 'कृष्णानां व्रीहीणां नखनिर्भिन्नानाम्' इति नखेष्वपि अस्ति प्रोक्षणोद, अपूर्वस्य प्रयोजकत्वात्। वि. ९।१।२. * नैर्ऋतीषु इष्टकासु चयने इष्टकाधर्मा न कर्तव्याः, स्थण्डिलनिर्वर्तकत्वाभावात्। सकर्प. २।१।१। १.

* नैर्ऋतचरुविहितकृष्णव्रीहिसि. आह्वनपत्र-बाधः। भा १०।७।११।६४–७१.

* 'नैवारं चरुमुपदधाति' (अग्निचयने) इत्यस्य स्थण्डिलनिर्वृत्त्यैकार्थ्यकभूतचरूपधानविधानेन निराकाङ्क्ष्य 'बृहस्पतेर्वा एतदन्नं यन्नीवारा.' इत्युपधानरूप-गुणकर्मानन्यविदेवताद्यैवन्यप्रतिपादक–वाक्यशेषानुसारेण यागविधायकत्व नाङ्गीक्रियते संयुक्तत्वार्थशब्देन० (२।३।७।१८) इत्यधिकरणे। परात्मा., ४४।५. * नैवारस्य सप्तदशशरावस्य चरोर्विधि चतुःसंख्यानुवादः मुष्टिलोपश्च। (चतुर्भिः कुडवादिभिः शरावं पूरयित्वा निर्वापः। एव सप्तदशशरावम्) वाजपेये। भा. १०।२। २८।६४–६७.

* नैवारचरोः चितौ उपधानार्थता। चरूपधाना-धिकरणम्। भा. २।३।७।१८. * नैवारचरौ प्रकृतिभूत-नीवारेषु दार्शिकव्रीहिधर्माणां प्रोक्षणादीनामूहः कर्तव्य.। वि. ९।२।१२.

* नैष्ठिकब्रह्मचारिणा अपत्योत्पादनं अनाचारः। वा. १।३।३।७ पृ. २०१.

🏵 नोपसर्जनन्यायः। 'प्रधान यत् प्रकृतं सदेव सर्वनाम परामृशति नोपसर्जनम्' इति नोपसर्जन-न्याय.। परिमल. १।३।१।१ प्रभृ., * ननु नोपसर्जनन्यायो न सर्वनाम्ना परामर्शे प्रवर्तते। 'अथ शब्दानुशासनं केषां शब्दानाम्' इति महाभाष्यदर्शनात्, 'सर्वनाम्नाऽनुसंधिर्वृत्तिच्छन्नस्य' इति वामन-सूत्राच्च इति चेदुच्यते। १।३।१।१ प्रभृ. * उपलक्षणे हि नोपसर्जनन्यायबाधः स्यात्। कल्पतरु. १।३।१।१.

* नौधसं साम 'तं वो दस्म मृतीषह०' इति तृचे गीयते। वि. १।४।१, * नौधसं साम बृहतीपङ्क्तिरूप-ककुभ्यात्मके सूक्ते प्रथमेन तृचात्मके गीयते, तच्च माध्यंदिने पृष्ठस्तोत्रेषु तृतीयम्। ९।२।६ वर्णक २.

🏵 नौनाविकन्यायः। यथा नमोद्वाहोद्वाहकभाव-स्तत्राय प्रवर्तते। न चेद्वाऽस्यपले अन्योन्याश्रयदोषोऽस्य-तावीति। (उद्वाह्या नौः, उद्वाहकः नाविकः। उद्वाह्यत्वा-पेक्षमुद्वाहकत्वम्, उद्वाहकापेक्ष चोद्वाह्यत्वम्.)। साहस्री २१९.

🏵 न्यग्रोधक्षेत्रन्यायः। न्यग्रोधः क्षेत्र इति। भा. ११।१।८।३८। प्रकृतिरिव (सगरोऽस्य) लोके यथा– 'न्यग्रोधफले स्थातव्यम्' इति प्रथमे एव न्यग्रोधेऽवतिष्ठते। टुप्.

🏵 न्यग्रोधबीजन्याय.। स्वल्पमपि सूक्ष्ममपि वस्तु गुणान्वितं यत्र बहुशो विस्तृतं भवेत्तत्रायं प्रवर्तते। यथा न्यग्रोधबीजं स्तोकमपि सुक्षेत्रे उप्तं सत् बहुविस्तीर्णतां याति, तथा प्रकृतेऽपि। साहस्री ९८३.

* न्यग्रोधस्तिभी.– न्यग्रोधादङ्कुरान् न्यग्रोधस्तिभीति या क्षत्रियसोमे फलचमसार्थमाहरन्ति। भा. ३।५।११।४७.

* न्यग्रोधस्तिभिनी । न्यग्रोधमुकुलम् ( नैयग्रोधं फल ) राजन्यवैश्ययोः, सोमस्य स्थाने न्यग्रोधस्तिभिन्यो भक्ष्याः । वि. ३।५।११.

* न्यङ्कुसारिणी बृहती । पादेषु अक्षराणि ८।१२।८।८ उदा० 'ईशानमिद् द्यौ' ( ऋग्वे. १०। १३२।१ ) । के.

* न्यायः आगमविरोधे कार्यक्रमो न भवति । शा. ३।४।४।१२ पृ. ९२८. * न्यायश्च स्मृतितो दुर्बलः । सोम. ९।२।८. * न्यायस्तु क्वचित् क्वचिद्वाध्यते ( क्वचिन्नाध्यते चेत्यर्थः ) । कैमद. ६।३।१०२. * न्यायः नीयते प्राप्यते अनेन इति । कु. १।३। ८।१४ । नीयते इति न्यायः कर्मणि घञ् । 'घञबन्ताः पुंसि' ( लिङ्गानुशासनम् ) इति नित्यपुंल्लिङ्गता । १।३।९।२३. * न्यायः व्याख्याप्रकारः । सु. पृ. १४२६. * गृहीतव्याप्तिको न्यायः । अगृहीतव्याप्तिकश्च दृष्टान्तः इति भेदः । तत्त्वप्रकाशिका शेखर-भूमिटीका । पृ. २२७. * न्यायाः नाम जैमिनिप्रोक्तानि धर्माधर्मनिर्णायकानि अधिकरणानि । वि. प्रस्तावना श्लो. ६. * न्यायाः । सर्वे लौकिका दृष्टान्ताः लौकिक्यः कथाश्च ( दामव्यालकटाद्याः ) न्यायत्वेन उदाहर्तुं शक्यन्ते । संग्रहः. * न्यायेन ( कुशकाशावलम्बनन्यायेन ) समाहितं कैश्चित्, तत्र मन्त्रस्य विध्यन्तराविधेयत्वे अनुमितश्रुत्यादिबोधितत्वेऽपि आम्नानानोच्चारणजन्यदुरितध्वंसप्रयोजकत्वस्य अप्रसक्तेः इति । भूति., पृ. २. * लौकिकेन न्यायेन भावनातः प्राधान्यात् ( कर्तुः ) कारकानभिधानमवगतम्, तदपि अनुगत सूत्रैर्भविष्यति । शा. ३।४।४।१३ पृ. ९२६. * न्यायस्य स्वशब्दप्रमाणतया अर्थापत्तिकल्प्यवचनापेक्षत्वम् । सु. ३।७ पृ. १०. * न्यायरत्न. ऊहः । तल्लक्षणं तु 'प्राकृतस्यानुपतितपदार्थान्तरार्पितः । ऊहः प्रयोगो विकृतावप्रमानतयोदितः ॥' इति माधवीयनयमाले । कार्यमुपकारः । कार्यतः उपकारार्थे इत्यर्थः । बाल. पृ. १२६,

* न्यायगम्यः जात्योः समुच्चयो यथा—सोमक्रये गवाजादीनाम् । 'करणेषु तु विकल्पः स्यात्' ( १२।४।१ ) इति न्यायोऽत्र । द्रव्ययोर्यथा आधाने संभाराणाम्, दर्शपूर्णमासयोश्च परिधीनाम् । 'संख्यायुक्तेषु तु समुच्चयः' ( १२।३।१४ ) इति न्यायोऽत्र । गुणयोर्यथा अरुणयैकहायन्या इत्यत्र आरुण्यस्य एकहायन्यैकत्वयोश्च अन्योन्यनियमात्; 'ऐकार्थ्याद्वियमः स्यात्' ( ३।१।६ ) इत्यरुणान्यायोऽत्र । क्रिययोर्यथा दर्शपूर्णमासयोः प्रयाजानुयाजादीनाम् । 'अङ्गानां तु शब्दभेदात्' ( ११।१।२ ) इति न्यायः । एवं संनिपातिक्रयसमुच्चयः । अत्र 'करणेषु तु०' ( १२।४।१ ) इति न्यायः । एवं नैमित्तिककृच्छ्रप्रायश्चित्तक्रियासमुच्चयः । अत्र 'समुच्चयस्वदोष०' ( १२।३।६ ) इति न्यायः । जातिद्रव्ययोः यथा एकहायनीपिङ्गाक्षीशब्दाभ्यामुक्तस्य द्रव्यस्य गोपदोक्ताया जातेश्च । अत्र अरुणाधिकरणन्यायः । जातिगुणयोः यथा 'अरुणया गवा क्रीणाति' इत्यत्र गोत्वारुण्ययोः । अत्र अरुणाधिकरणन्यायः । जातिक्रिययोर्यथा 'निर्मन्थ्येनेष्टकाः पचन्ति' इत्यत्र मथनक्रियायाः पाकाक्षिप्ताया अग्निजातेः । अत्र अरुणान्याय एव । द्रव्यगुणयोर्यथा एकहायनीपिङ्गाक्षीशब्दोक्तद्रव्यस्य आरुण्यस्य च । अरुणान्यायोऽत्र । द्रव्यक्रिययोर्यथा निर्मन्थ्यशब्दोक्तद्रव्यस्य मथनक्रियायाश्च । अरुणान्याय एवात्र । गुणक्रिययोर्यथा 'लोहितवसना ऋत्विजः प्रचरन्ति' इत्यत्र वसनशब्दोक्तपरिधानक्रियायाः लौहित्यस्य गुणस्य च । अरुणान्याय एव । जातिद्रव्यगुणानां यथा गोत्वजाति-एकहायनीद्रव्य-आरुण्यगुणानाम् । अरुणान्यायः । ( अत्र जातिद्रव्यक्रियाणां जातिगुणक्रियाणां द्रव्यगुणक्रियाणां जातिद्रव्यगुणक्रियाणां चोदाहरणानि ऊह्यानि ) एते न्यायगम्यसमुच्चयभेदाः पञ्चदश ऋग्वर्थजात्यादिविषया उक्ताः । अथ पुरुषार्थजात्यादिविषयाणि पञ्चदशोदाहरणानि उच्यन्ते—( १ ) जात्योः पुरुषार्थयोः न्यायगम्यः समुच्चयो यथा—'तिलैर्व्रीहियवैर्माषैरद्भिर्मूलफलेन वा । दत्तेन मासं प्रीयन्ते विधिवत् पितरो नृणाम् ॥' मनुः ३।२६७ । अत्र व्रीहियवैः इति द्वंद्वोक्तं समुच्चितं जातिद्वयं प्रकृतश्राद्धाङ्गत्व पक्षे विधीयते । एवं मूलफलेनेति । ( २ ) द्रव्ययोर्यथा— 'मध्वोदनेषु संसृष्टे.' 'राजमाषयवोदनेषु' 'दत्तेषु मासं प्रीयन्ते श्राद्धेषु पितरो

नृणाम् ' ( मार्कण्डेयः ) । अत्र द्रव्याणामेव ब्रह्मोपात्तानां प्रकृतभावाभिधानां समुच्चय उक्तः । ( ३ ) गुणयोर्यथा— ' स्निग्धमुष्णं च यो दद्यादग्निष्टोमफलं लभेत् ' इति वायुपुराणे । ( ४ ) क्रिययोर्यथा— ' दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत ' अत्र यजिरूपैकशब्दोपादानात् आग्नेयादीनां साहित्यं फले विवक्षितम् । अत्र न्यायः एकादशाद्यमधिकरणम् । ( ५ ) जातिद्रव्ययोर्यथा— ' ऐक्षवं तथा गव्यं पयः पायसमेव च ' इति पद्मपुराणे । अत्र एकवाक्योपादानं न्यायः । ( ६ ) जातिगुणयोर्यथा— ' खादिरं वीर्यकामस्य यूपं कुर्वीत ' अत्र खादिरत्वं जातिः एकत्वं च गुणः । एकपदोपादानन्यायः । ( ७ ) जातिक्रिययोः उदाहरणं मृग्यम् । ( ८ ) द्रव्यगुणयोः यथा— ' गोदोहनेन पशुकामस्य प्रणयेत् ' इत्यत्र गोदोहनद्रव्यस्य एकत्वगुणस्य च समुच्चयः । एकपदोपादानन्यायोऽत्र । ( ९ ) द्रव्यक्रिययोः उदाहरणं मृग्यम् । ( १० ) गुणक्रिययोः यथा— ' ज्योतिष्टोमेन स्वर्गकामो यजेत ' अत्र यागस्य एकत्वस्य च । एकवाक्योपात्तत्वं न्यायोऽत्र । ( ११–१५ ) इतरोदाहरणानि अन्वेष्याणि । एवं न्यायगम्याः समुच्चयाः त्रिंशत् उक्ताः । पृ. १६६–१७०. ● न्यायगम्यः व्यवस्थितविकल्पः यथा ' क्षुरेणावद्यति, स्वधितिनावद्यति, हस्तेनावद्यति ' इति । अत्र न्यायतो व्यवस्थोक्ता ' अर्थाद्वा कल्पनैकदेशत्वात् ' इत्यत्र । स्मार्ते च ' प्रतिवेदं ब्रह्मचर्यं द्वादशाब्दानि पञ्च वा । ग्रहणान्तिकम् ' इति । अत्र स्मृतिवादे वार्तिककृता उक्तं । ' वेदानधीत्य वेदौ वा वेदं वापि यथाक्रमम् । सामर्थ्याश्रमयोग्यत्वमङ्गीकृत्यैतदुच्यते ॥ ' इति । पृ. १५८. ● न्यायगम्या. विकल्पभेदाः विकल्पशब्दे द्रष्टव्याः । बाल. पृ १५८. ● न्यायगम्याः समुच्चयाः समुच्चयशब्दे द्रष्टव्याः । फे. ( बाल १६८ )

● न्यायनिरूपणात्मिका मीमांसा । बाल. पृ २.

● न्यायपदार्थः क इति चेत् । अत्र ऐतरेयब्राह्मणमुदाह्रियते । ' स होवाच शुनःशेपः (आजीगर्तिः) यः सकृत् पापकं कुर्यात् कुर्यादेनत्ततोऽपरम् । नापागाः शौद्रान्न्यायादसंधेयं त्वया कृतं इति ' । ३३।५।४ । सायणः—शौद्रात् न्यायात् नीचजातिसेवनितः शूद्राचरणात् नापागाः अपगतो न भवसि इति । तथा च न्यायः आचरणम्, रीतिः, पद्धतिः इत्यर्थः । फे. ● न्यायपदार्थः । ' तस्याश्च सर्वगामित्वं तन्न्यायत्वात् प्रतीयते ' इति वार्तिकम् ( १।३।४।८ ) । अत्र सुधा— तस्मिन् सर्वगामित्वे न्यायः युक्तिः यस्याः शङ्कायाः अस्ति सा तन्न्याया तद्भावस्तन्न्यायत्वं इति । पृ. २०७ । एतेन न्यायः युक्तिः इत्यर्थः । मीमांसासूत्रेष्वपि अनेकवारं न्यायशब्दः प्रयुक्तः । तत्र च सर्वत्र युक्तिः इत्येवार्थः प्रतीयते । ● न्यायपदार्थः । न्यायो नाम निर्णयः, निर्णयपत्रं प्राड्विवाकस्य । परार्थानुमानात्मकप्रतिज्ञादिपञ्चकमेव न्यायपदार्थः । स एव च, प्राड्विवाकस्य निर्णयपत्रं नाम । इयांस्तु विशेषः अत्र न्याये शरीरप्रायत्वं सूक्ष्मात्मकत्वं च । निर्णयपत्रे तु शरीरगौरवं स्थूलात्मकत्वं चेति । परंतु न्यायः निर्णयः प्रतिज्ञादिपञ्चकं इति पर्यायाः । रीतिः, प्रकारः इत्ययमपि न्यायशब्दार्थः । फे. ● न्यायपदार्थः ' वृषाकपेः तन्न्यायमेति ' । ऐब्रा. ३०।६।५ । अत्र सायणः—' वृषाकपेः एतन्नामकस्य सूक्तस्य न्यायं प्रकारं एति प्राप्नोति । विग्रहः एवायं तन्न्यायः ' इति । एतेन न्यायः रीतिः, पद्धतिः इत्यर्थः ।

● न्यायप्राप्तबाधकत्वेनोपपद्यस्य वाक्यस्य न श्रौतनिषेधकत्वम् । श्राद्धमयूख, पृ. ७२.

● न्यायविदः 'योगकर्षणप्रत्याहारं तृतीयामाहुः । तत्तु योगिषु मानाभावेन असुन्दरम् । मणि. पृ. २९. ● ' न्यायविद्भिरिदं नोक्तं धर्मादौ बुद्धिमाश्रिते । व्यवहारोऽनुमानादेः कल्प्यते न बहिः स्थिते ॥ ' १६८ ॥ श्लोवा. निरालम्बने.

● न्यायविस्तरस्य धर्मज्ञानोपयोगित्वं मनुनाऽभ्युक्तम् । सु. पृ १३०.

● न्यायव्युत्पादनं अनुष्ठानार्थम् । सु पृ. १५०६.

● न्यायशास्त्रे ( मीमांसायां ) पूर्वपक्षाशङ्कां विना प्रत्युदाहरणानर्थक्यापत्तिः । पृ १५९.

■ ' न्यायसिद्धं न सर्वत्र ' इति न्यायः । ' शापकसिद्धं न सर्वत्र ' इत्यत्र शापकेति न्यायस्याप्युपलक्षणम् । न्यायशापकसिद्धानामपि केषाञ्चित् कथनं

अन्येषामनित्यत्वबोधनाय । प० शेखर. पृ. ३३१ परि० १२५.

* न्यूङ्खाः प्रणवाः । शस्त्रविशेषे तेषां पाठः । तत्र च नैस्वर्यमेव । वि. १।२।८ वर्णकं १. * न्यूङ्खाः शस्त्रेषु मन्त्रविशेषाः । भाट्ट. १।२।७ वर्णक ३ । न्यूङ्खस्वरूपं आश्वलायन आह -- 'द्वितीयं स्वरं ओकारं त्रिमात्रमुदात्तं त्रिः । ७।११।२ ॥ तस्यतस्य चोपरिष्टात् अपरिमितान् पञ्च वा अर्धौकारान् अनुदात्तान् । ३ ॥ उदात्तस्य तु त्रीन् । ४ ॥ अस्यार्थः, प्रथमादेः ऋक्पादस्य द्वितीयं स्वरं ओकारं कुर्यात् त्रिवारम् । प्रत्येकं च ओकारं त्रिमात्रं उदात्तं च कुर्यात् । तस्यतस्य च ओकारस्य उपरिष्टात् अपरिमितान् पाक्षिकपद्धत्या पञ्चैव वा अर्धमात्रिकान् अनुदात्तान् ओकारान् कुर्यात् । परन्तु तत्र उत्तमस्य तृतीयस्य ओकारस्य उपरिष्टात् त्रीनेव अर्धौकारान् अनुदात्तान् कुर्यात् । इति । सोऽयमेतावान् षोडशोकारसमुदायरूपः एको न्यूङ्खः । उदाहरणं च तत्रैव यथा, 'आपो रेवतीः क्षयथा हि वस्वः' इति ऋक्पादः प्रथमः प्रातरनुवाकस्थः । तत्र षडहस्य चतुर्थे अहनि प्रातरनुवाके एवं न्यूङ्खः, "आपोऽऽऽ ओ ओ ओ ओ ओ, ओऽऽऽ ओ ओ ओ ओ ओ, ओऽऽऽ ओ ओ ओ" एतावत् पठित्वा 'रेवतीः क्षयथा हि वस्वः' इति पादशेषं पठेत् इति । अत्र 'आपो' इत्यस्मात् परस्तात् 'रेवतीः' इत्यस्मात् प्राक् यत् पठ्यते स सर्वः न्यूङ्खः नाम । तथा च विशिष्टपद्धत्या पठ्यमानः षोडशसंख्याकोकारसमुदायः न्यूङ्खः । के.

* न्यूनस्य अधिकार्थविषयत्वकल्पने गौणत्वदोषः इत्यत्रोदाहरणम् 'सुग्रीरुपदधाति' 'प्राणभृत उपदधाति' इति । अत्र सुग्र्यादिशब्दवन्त एव मन्त्रा उच्यन्ते इति न्यूनस्य गौण्या असुग्र्यादिशब्दवतामपि मन्त्राणां ग्रहणेन अधिकार्थत्वे गौणत्वं दोषः । स तु अगत्या अङ्गीक्रियते । बाल. पृ. ३, * न्यूनस्य अधिकार्थविषयत्वकल्पने लक्षणा इत्यत्रोदाहरणम् 'सोमेन यजेत' इति । (अत्र सोमशब्दः सोमद्रव्यमात्रवचनः सन् 'सोमवता' इति मत्वर्थमधिकं लक्षयति) । पृ. ३, * न्यूनस्य अधिकार्थविषयत्वकल्पने वाक्यभेदप्रसङ्ग इत्यत्र 'सौर्यं चरुं निर्वपेत् ब्रह्मवर्चसकामः' इत्युदाहरणम् । अत्र हि पूर्वपक्षानुसारेण स्वर्गकामपदाध्याहारे ब्रह्मवर्चसस्य स्वर्गस्य चोभयविधाने वाक्यभेदप्रसङ्गः । पृ. ३.